तत्पूर्णं विष्णोः परं पदं ॥ यत्प्राप्तये समारब्धा वेदाः कांडत्रयात्मका' इति । किं च 'कर्मोपास्तिस्तथाज्ञानमिति कांडत्रयं क्रमात् ॥ तद्रूपाष्टादशाध्यायी गीताकांडत्रयात्मिका ॥ एकमेकेन षट्केन कांडमत्रोपलक्षयेत् ॥' इत्युक्त्वा प्रथमे षट्के कर्मनिष्ठा द्वितीये भक्तिनिष्ठा तृतीये ज्ञाननिष्ठा चोक्ता । ज्ञानकर्मणोरत्यन्तं विरुद्धत्वेन तत्समुच्चयस्यानंगीकारात्प्रथमतृतीययोः कांडत्रये विश्लेषउपासनारूपभगवद्भक्तिनिष्ठा तु मध्यानुगतत्वान्मध्यमेनोक्ता । किं च । उपासनात्मिका भगवद्भक्तिस्त्रिविधा । कर्ममिश्रा शुद्धा ज्ञानमिश्राचेति । तत्राद्या प्रथमे षट्के कर्मत्यागमुखेन विशुद्धत्वंपदार्थो निरूप्यते । द्वितीये षट्के भगवद्भक्तिनिष्ठावर्णनमुखेन भगवान्परमानन्दस्तत्पदार्थो निरूप्यते । तृतीये तु तयोरैक्यं वाक्यार्थः स्फुटं वर्ण्यत इति विशेषमाह । तदपि च न रोचिष्णु तादृशवाक्यस्य तत्रादर्शनात् । सर्वधर्मानिति वाक्ये यच्छरणपदं तत्तु 'शरणं गृहरक्षित्रो' रिति कोशात् तयोरन्यतरवाचकं सत् तादृशेर्थे लाक्षणिकतामापद्यते । इत्यसंगतत्वात् । श्रीधरस्तु—सकललोकवंदितचरणः परमकारुणिको भगवान् श्रीदेवकीनन्दनः तत्वज्ञानविजृंभितशोकमोहविभ्रंशितविवेकतया निजधर्मपरित्यागपरधर्माभिसंधिपरमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोकमोहसागरादुद्धार इत्येतावदुक्त्वा गीतायां च प्रायशोभगवदुक्ताएव श्लोकाः व्यासचरणैस्तु तत्संगत्यर्थं मध्ये मध्ये केचन श्लोका उक्ता इति बोधनाय गीतामाहात्म्यस्थं वाक्यमुक्तवान् । 'गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता' इति ॥ रामानुजाचार्यस्तु—निरतिशयानवधिककल्याणगुणैकतानाऽनंतज्ञानानन्दैकादिस्वरूपादिनिखिलजगदुदयविभवलयलीलान्तनिखिलविशेषणविशिष्टः परब्रह्मभूतः पुरुषोत्तमो नारायणो ब्रह्मादि स्थावरान्तं निखिलं जगत् सृष्ट्वा स्वेन रूपेणावस्थितो भूभारावतारणोपदेशेनास्मदादीनामपि संसारदुःखप्रशमनाय सकलमनुष्यनयनविषयावगतः परापरनिखिलजनसंतापहराणि चेष्टितानि कुर्वन् परमपुरुषार्थलक्षणमोक्षसाधनभूतं वेदान्तोदितम् स्वविषयं ज्ञानकर्मानुगतं भक्तियोगमवतारयामासेति वदन्तः ज्ञानकर्मसमुच्चयांगसहितो भक्तियोगो गीताशास्त्रार्थ इति तदाविर्भावे प्रयोजनं तु भक्तानामस्मदादीनां संसारदुःखशमनमिति च सूचयामासुः । इदं च सिद्धान्तस्यानुगुणं । इह खलु भगवान् पुरुषोत्तमः श्रीकृष्णः सर्वमुक्त्यर्थमवतीर्णः स्वरूपेण भक्तिं दत्त्वा सात्विकादींस्त्रिविधान् भक्तानुद्धरन् सर्वधर्मशून्यस्य कलेः प्रवृत्तिं वीक्ष्याग्रिमाणामुद्धारार्थं भक्तिजननाय स्वस्वरूपमर्जुनाय प्रसंगादुपदिदेश । 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च' इति वक्ष्यमाणवाक्ये वक्तव्येषु चतुर्थाधिकारिषु प्रथमाधिकारद्वयस्याऽर्जुने विद्यमानत्वात् । स उपदेशो भगवज्ज्ञानावतारैर्व्यासचरणैः सप्तश्लोकशतेषूपनिबद्धः । तदर्थसंग्रहस्त्वेवं प्रभुचरणैरुक्तः । 'प्रवृत्तिधर्मं भगवान् ऋषिद्वारा निरूप्यतु । निवृत्तिमिष्टां सुदृढां निःसंदिग्धां हरिर्जगौ ॥ सांख्यं योगो रहस्यं च रहस्यतममेव च । अन्योन्याधिक्यनिर्द्धारो ज्ञानविज्ञानयोरपि ॥ स्वस्वरूपविनिर्द्धारो भजनेतरनिर्णयः । तद्धेतुर्गुणवैषम्यं सर्वशास्त्रविनिर्णयः ॥ इतिगीतार्थनिर्द्धारो यथाभागो वितन्यते । सांख्ययोगौ निरूप्यादौ मोहमुत्सार्य फाल्गुनम् ॥ भक्तिपीयूषपातारं कृतवानिति संग्रह' इति । तत्र प्रथमेऽध्याये धृतराष्ट्रवाक्येन कुत उपक्रम इत्याकांक्षायां गीतातात्पर्यग्रंथे प्रभुचरणैर्विचारितम् । अत्र हि भगवान् स्वतत्त्वं पार्थायोपदिशति । तत्रोपक्रमे धृतराष्ट्रस्य वचनं नोपयुज्यते । अभक्तत्वात् । नापि तत्पुत्रस्य दुर्योधनस्य अत्यन्तबहिर्मुखत्वात् राक्षसावतारत्वाच्च । किंचात्र ब्रह्मविद्योपादिश्यते तत्र च शान्तोऽधिकारी सनत्कुमारनारदसंवादे सोऽहं भगवतः शोचामीति नारदस्य शोकश्रवणादितिवाच्यम् ।

तत्र शोकस्यात्मज्ञानार्थत्वात् । अत्र पापभीत्यादिकथनेन तद्वैलक्षण्यात् । पार्थे आत्मज्ञानार्थित्वस्यादर्शनाच्च । किं च अत्र ह्युपदेष्टा भगवान् सत्यसंकल्पः सचेदर्जुनोद्धारायात्मविद्यामुपदिशेत्तदाऽर्जुनोपि राज्यात्संसाराच्चोपरतो भवेत् । तत्तु न दृश्यते अतः फलव्यभिचारादपि नोपदेशो युक्त इति चेत् । अत्र वदामः । पार्थाहि भगवता स्वीयत्वेन भक्तिमार्गेऽगीकृताः । 'पार्थांस्तु देवो भगवान्मुकुन्दो गृहीतवान्स क्षितिदेवदेवः' इति तृतीयस्कन्धे विदुरवाक्यात् । भगवांश्च भूभारहरणं चिकीर्षुर्युधिष्ठिरेण राजसूयं कारितवान् । राजसूयोत्तरं महायुद्धस्य दर्शनात् । तस्य च भगवदिच्छाविषयत्वं दशमस्कन्धे श्रीमदुद्धवैरुक्तम् । 'प्रायः पाकविपाकेन तव चाभिमतः क्रतुः' इति । किं च युधिष्ठिरादिद्वारा भगवता धर्म उपस्थापनीयः असुरा हंतव्याः । 'यदा यदा हि धर्मस्य' इति वक्ष्यमाणवाक्येन तदर्थमवतारस्य स्वयमेव कथनात् । तच्च युधिष्ठिरस्य राज्ये सति भवति राज्यान्ते नरकमित्युत्सर्गः । एवं सति भ्रातापि भ्रातरं हन्यादिति न्यायेन लोकवद्रिपून्मारयित्वा स्वयं चेद्राज्यं कुर्युस्तदा राज्ये भगवत्संबंधाभावात्तद्भोगे भगवदीयत्वं न भवेत् दुष्टं च फलं भवेदतस्तन्निवृत्त्यर्थं भगवान् पार्थस्य वक्ष्यमाणप्रकारकं विषादमुत्पादितवान् । अत एव पार्थस्य स्वतो युद्धान्निवृत्तिरुक्ता । तेन तेषु लौकिकैरित्यनुभाव उक्तो भवति । अन्यथाक्षत्रियाणामयं धर्म इति वचनाच्छूराणां तेषां युद्धोपस्थितौ वस्तुस्वभावाद्वीररस एवोत्पद्येत धार्त्तराष्ट्रादिवत् । न तु वैराग्यम् । अतः पार्थे तदुत्पत्तौ भगवदीयत्वमेव हेतुरिति निश्चयः अतस्तादृशे भक्तिमार्गस्यैवोपदेष्टव्यत्वात् भक्तिमार्गः निर्णयस्य च लोकवेदसाधारणरीत्या कर्तुमयुक्तत्वं बोधयितुमादौ धृतराष्ट्रतत्पुत्रयोः कथा उक्ताः तथा तदुत्साह उक्तो भवति किं च भगवदीयस्य भगवच्चिकीर्षितकार्योन्मुखी मतिः सुमतिस्तद्विरुद्धा मतिः कुमतिरेव । अन्यथा धर्मशास्त्रादिषु गुर्वादिहननस्य निषिद्धत्वात्तन्निवर्त्तिका मतिः कुमतित्वेन नोच्येत । न चात्र मानाभावः । 'व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या । कुमतिमहरदात्मविद्यया य' इति प्रथमस्कन्धे भीष्मवाक्यात् । एतेन यद्ब्रह्मविद्योपदेशे विषण्णाधिकारबोधनार्थमर्जुनविषादग्रन्थ इति कैश्चिदिष्यते तदपि फल्गुक्तम् । तस्य मुख्यप्रयोजनाभावात् । अत्र भक्तिमार्गमर्यादायाः लोकवेदातीतत्वज्ञापनस्यैव प्रयोजनत्वादिति अत एव समाप्तौ फाल्गुनेन— 'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत । स्थितोस्मि गत संदेहः करिष्ये वचनं तव' इत्युक्तम् । अतोत्र मुख्यतया भक्तेरेवोपदेशः यत्पुनरन्यत्तत्सर्वं तस्यैव शेषभूतमितिदिक् ।

अतः परं वाक्यानि व्याख्यायन्ते । तत्र पुष्टिमर्यादाभक्तिरनुग्रहाद्विविधश्रेयोद्वारेण भवतीति बोधनाय पांडवानां धर्मिष्ठत्वमर्जुनस्य तेभ्योप्युत्कर्षं वदद्भिर्व्यासचरणैरर्जुने भजनोपदेशाधिकारद्वयं वक्तुं प्रथमेध्यायेऽर्जुनस्यार्त्तत्वं प्रतिपाद्यते । भक्तिमार्गीयस्यापि लौकिकाभिनिविष्टचित्ततायां प्रवृत्तिधर्माभिनिविष्टचित्ततायां च भगवत्तत्त्वं भक्तिमार्गतत्त्वं च सहसा नोपदेष्टव्यमिति च बोध्यत इत्युपोद्घातसंगतिः ॥

# प्रथमं षट्कं (कर्मकाण्डं)

॥ अथ प्रथमोऽध्यायः ॥ १ ॥

धृतराष्ट्र उवाच—धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ॥
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

शां० भा०—अत्र च—

आ०टी०—एवं गीताशास्त्रस्य साध्यसाधनभूतनिष्ठाद्वयविषयस्य परापराभिधेयप्रयोजनवतो व्याख्येयत्वं प्रतिपाद्य व्याख्यातुकामः शास्त्रं तदेकदेशस्य प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्य तात्पर्यमाह—**अत्र चेति** । गीताशास्त्रे प्रथमाध्याये प्रथमश्लोके कथासंबन्धप्रदर्शनपरे स्थिते सतीति यावत् । तत्रैषाऽक्षरयोजना—धृतराष्ट्रो हि प्रज्ञाचक्षुर्बाह्यचक्षुरभावाद्बाह्यमर्थं प्रत्यक्षयितुमनीशः सन्नभ्याशवर्तिनं संजयमात्मनो हितोपदेष्टारं पृच्छति—**धर्मक्षेत्र इति** । धर्मस्य तद्बुद्धेश्च क्षेत्रमभिवृद्धिकारणं यदुच्यते कुरुक्षेत्रमिति तत्र समवेताः संगता युयुत्सवो योद्धुकामास्ते च केचिन्मदीया दुर्योधनप्रभृतयः पाण्डवाश्चापरे युधिष्ठिरादयस्ते च सर्वे युद्धभूमौ संगता भूत्वा किं कृतवन्तः ॥ १ ॥

राघ०टी०—श्रीवेदव्यासाय नमः ॥ श्रीलक्ष्मीव्यंकटेशाय नमः ॥

हरिः ॐ ॥ लक्ष्मीनारायणं नत्वा पूर्णबोधादिकान् गुरून्॥कुर्मः श्रीकृष्णगीताया भाष्याद्युक्तार्थसंग्रहम्॥१॥

'स्त्रीशूद्रब्रह्मबंधूनां त्रयी न श्रुतिगोचरा' इति भारतमाख्यानं कृपया मुनिना कृतमिति भागवतोक्त्या वेदार्थज्ञानानधिकारिणां स्त्रीशूद्रादीनां धर्मज्ञानद्वारा मोक्षो भवेदिति भगवान् वेदव्यासः संभवसभारण्यविराटोद्योगभीष्मद्रोणकर्णशल्यगदासौप्तिकशांतिआनुशासनिकाश्वमेधिकमौसलमहाप्रस्थानस्वर्गारोहणभविष्यत्पर्वभेदेनाष्टादशपर्वात्मकं भारतं कृत्वा तत्र भीष्मपर्वणि भारतपारिजातमधुभूतां सर्वभारततात्पर्यार्थसंग्रहभूतां कृष्णार्जुनसंवादरूपां भगवद्गीतामुपनिबबंध । तत्र पूर्वषट्के ज्ञानोपायोक्तिः द्वितीयषट्के तत्साध्यज्ञानस्योक्तिः तृतीयषट्के प्रागुक्तस्य प्रपंचनं क्रियत इति विवेकः । तत्राद्याध्यायो द्वितीये कतिपयश्लोकाश्च कृष्णेनार्जुनबोधने प्रसक्तिसंपादनाय प्रवृत्ताः । तत्रायमर्थः धृतराष्ट्र उवाच । किमित्याह—धर्मेति । धर्मसाधनभूमौ कुरुक्षेत्रे युयुत्सवो युद्धमिच्छंत एव समवेता मिलिताः संतो मामकाः मदीया दुर्योधनादयः पांडवाश्च हे संजय! किमकुर्वत इति शब्दो योज्यः । पांडवानां भगवत्प्रियत्वं सर्वसाक्षिकमप्यजानन् धृतराष्ट्रः स्वपुत्राणां विजयविविदिषया संजयं पप्रच्छेत्यर्थः ॥ १ ॥

रा० भा०—तत्र पाण्डवानां कुरूणां च युद्धे प्रारब्धे स भगवान् पुरुषोत्तमः सर्वेश्वरेश्वरो जगदुपकृतिमर्त्यः आश्रितवात्सल्यविवशः पार्थं रथिनमात्मानं च सारथिं सर्वलोकसाक्षिकं चकार । एवं ज्ञात्वापि सर्वात्मनान्धः यो धृतराष्ट्रः सुयोधनविजयबुभुत्सया संजयं पप्रच्छ ॥ १ ॥

---

१—'धर्मक्षेत्रे कुरुक्षेत्र' इत्याद्यारभ्य 'न योत्स्य इति गोविंदमुक्त्वा तुष्णीं बभूव ह' इत्यन्तिमग्रंथपर्यंतं श्रीभगवान्व्यासचरणैरकृतभाष्यत्वात्केवलमानन्दगिरिकृता टीकैवोपन्यस्ता । तथैवानन्दतीर्थैः (माध्वचरणैः) रप्यकृतभाष्यत्वात्केवलं राघवेन्द्रयतिकृता टीकैव संगृहीता ॥

अ० टी–वैशंपायनस्तु जनमेजयाय कथासंगतिं वक्तुं प्रथमतो धृतराष्ट्रसंवादमाह। तत्र धृतराष्ट्रो बहुधा पाण्डवान् धर्मपरानेवावगत्य बंधलक्षणमधर्मं कथं कृतवन्तइत्यभिप्रेत्य पृच्छति अत्र ह्येवं कथाप्रकारः॥ सजय आगत्य पूर्वं सेनापतिमरणं वक्ति ततो धृतराष्ट्रेन तत्परिदेवने कृते पश्चात्तन्निवृत्तौ सर्वां कथां विस्तारेण वदतीति। तत्र पांडवानां स्वल्पं सैन्यं स्वस्य तु महत् स्वस्य शूराश्च भूयांसस्तेषां सर्वेषामेव पश्यतां तैरुपेक्षितो भीष्मो रणे पतितः उत पांडवैः प्रसह्य मारितः पांडवाश्च तादृशे क्षेत्रे पितामहविज्ञालक्षणमधर्मं कथं कृतवन्त इति ज्ञातुं हे संजय! धर्मक्षेत्रे धर्मोत्पत्तिभूमौ कुरुक्षेत्रे मामकाः मत्पुत्राः पांडवाः पांडुपुत्राश्च युयुत्सवो योद्धुकामाः समवेताः मिलिताः किमकुर्वत किं कृतवंतः। स्वपुत्राणामधर्मपरायणत्वाद्धर्मक्षेत्रेऽप्यधर्ममेव कृतवंतः किंवा धर्ममिति स्वीयानां प्रश्नः पांडवाश्च धर्मपरायणास्तत्र धर्मक्षेत्रे द्रोणादीन् गुरून् कथं मारितवंत इति तेषां प्रश्नः। इदमेव चकारेण द्योतितं यत्तेषां धर्मपरायणत्वं तथा चैकमरणेनैवान्यस्य राज्यप्राप्तिरिति निश्चित्यापि किं कृतवंतइत्यर्थः। संजयस्य वरप्राप्तसर्वज्ञमालक्ष्य संबोधनम् ॥ १ ॥

नी०टी०–ओंनमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः।<br>
प्रणम्य भगवत्पादान् श्रीधरादींश्च सद्गुरून्॥ संप्रदायानुसारेण गीताव्याख्यां समारभे॥ १ ॥<br>
भारते सर्ववेदार्थो भारतार्थश्च कृत्स्नशः॥ गीतायामस्ति तेनेयं सर्वशास्त्रमयी मता॥ २ ॥<br>
कर्मोपास्तिज्ञानभेदैः शास्त्रं कांडत्रयात्मकं॥ अन्ये तूपासनाकांडात्तृतीयो नातिरिच्यते॥ ३ ॥<br>
तदेव ब्रह्म विद्धि त्वं नेदं यत्तदुपासते॥ इति श्रुत्यैव वेद्यस्य ह्युपास्यादन्यतेरिता॥ ४ ॥<br>
इयमष्टादशाध्यायी क्रमात् षट्कत्रिकेण हि॥ कर्मोपास्तिज्ञानकांडत्रितयात्मा निगद्यते॥ ५ ॥

तत्र युद्धोद्यमं श्रुत्वौत्सुक्यादग्रिमं वृत्तांतं बुभुत्सुर्धृतराष्ट्र उवाच–धर्मक्षेत्र इति। तत्र वेदे तेषां कुरुक्षेत्रं देवयजनमासेति कर्मकाण्डप्रसिद्धं कुरुक्षेत्रमन्यत्। अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमित्यविमुक्ताख्यं ब्रह्मप्राप्तिस्थानभूतं कुरुक्षेत्रमन्यत्। ब्रह्मसदनत्वं चास्यात्र हि जंतोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवतीति वाक्यशेषेण व्युत्पादितं एतद्व्यावृत्त्यर्थं धर्मक्षेत्रे इति विशेषणं कुरुदेशांतरगतं हि कुरुक्षेत्रं धर्मक्षेत्रमेव न तु तत् ब्रह्मसदनं प्रवर्ग्यकांडे तस्य धर्मक्षेत्रत्वमात्रश्रवणात् तत्र समवेताः मिलिताः युयुत्सवो योद्धुमिच्छवः पांडवानांपृथग्ग्रहणं तेषु ममत्वाभावसूचनार्थम्॥ १ ॥

## संजय उवाच–दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा॥
## आचार्यमुपसंगम्य राजा वचनमब्रवीत्॥ २॥

आ०टी०–किमस्मदीयं प्रबलं बलं प्रतिलभ्य धीरपुरुषैर्भीष्मादिभिरधिष्ठितं परेषां भयमाविरभूत्, यद्वा पक्षद्वयहिंसानिमित्ताधर्मभयमासीद्येनैते युद्धादुपरमेरन्नित्येवं पुत्रपरवशस्य पुत्रस्नेहाभिनिविष्टस्य धृतराष्ट्रस्य प्रश्ने संजयस्य प्रतिवचनम्—दृष्ट्वेत्यादि। पाण्डवानां भयप्रसङ्गो नास्तीत्येतत्तुशब्देन द्योत्यते। प्रत्युत दुर्योधनस्यैव राज्ञो भयं प्रभूतं प्रादुर्बभूव। पाण्डवानां पाण्डुसुतानां युधिष्ठिरादीनामनीकं सैन्यं धृष्टद्युम्नादिभिरतिधृष्टैर्व्यूहाधिष्ठितं दृष्ट्वा प्रत्यक्षेण प्रतीत्य त्रस्तहृदयो दुर्योधनो राजा तदा तस्यां सङ्ग्रामोद्योगावस्थायामाचार्यं द्रोणनामानमात्मनः शिक्षितारं रक्षितारं च श्लाघयन्नुपसंगम्य तदीयं समीपं विनयेन प्राप्य भयोद्विग्नहृदयत्वेऽपि तेजस्वित्वादेव वचनमर्थसहितं वाक्यमुक्तवानित्यर्थः॥ २॥

राघ० टी०—धृतराष्ट्रप्रश्नस्य संजयः उत्तरमुक्तवानित्याह वैशंपायनो जनमेजयं प्रति संजय उवाचेत्यादिनवभिः श्लोकैः। दुर्योधनकृतव्यापारमाह—दृष्ट्वेत्यादिना। दुर्योधनस्तु राजा तदा युद्धार्थं मीलितसमये व्यूढं व्यूहात्मना रचितं पांडवसैन्यं दृष्ट्वा तु दृष्ट्वैवेति वा तोरन्वयः। द्रोणाचार्यसमीपमागत्य वचनमुवाच॥२॥

रा० भा०—दुर्योधनः स्वयमेव भीमाभिरक्षितं पाण्डवानां बलम् आत्मीयं च भीष्माभिरक्षितं बलमवलोक्यात्मविजये तस्य बलस्य पर्याप्ततामात्मीयस्य बलस्य तद्विजये चापर्याप्ततामाचार्याय निवेद्यान्तरे विषण्णोऽभवत् ॥ २ ॥

अ० टी०—संजयस्तु नायमधर्मो भगवता कर्त्तव्यत्वेन बोधनादितिवक्तुं तदर्थं संगतिमाह—दृष्ट्वेत्याद्यष्टादशश्लोकैः। तत्रैवं धृतराष्ट्रवाक्यं श्रुत्वा संजयः पूर्वपृष्टत्वात्तत्पुत्रकथामेवाह पूर्वं दृष्ट्वा त्विति। राजा दुर्योधनः व्यूढं व्यूहरचनया स्थितं पांडवसैन्यं दृष्ट्वा द्रोणाचार्यमुपसंगम्य निकटे गत्वाऽग्रे वक्ष्यमाणं वचनमब्रवीदुवाच। तदा धर्मयुद्धोपस्थितावित्यर्थः। एतेनापराधित्वेपि धार्तराष्ट्र एव युद्धे प्रथमं प्रवृत्त इति दशभिस्तत्कथाकथनेन बोधितम् ॥ २ ॥

नी०टी०—व्यूढं व्यूहरचनया स्थितं आचार्यं द्रोणं राजा दुर्योधनः। राजाऽब्रवीदित्येवसिद्धे वचनपदेन संक्षिप्तबह्वर्थत्वादिगुणवत्त्वं वाक्यस्य सूच्यते ॥ २ ॥

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ॥**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

आ०टी०—तदेव वचनमुदाहरति—पश्येति। एतामस्मदभ्याशे महापुरुषानपि भवत्प्रमुखानपरिगणय्य भयलेशशून्यामवस्थितां चमूमिमां सेनां पाण्डुपुत्रैर्युधिष्ठिरादिभिरानीतां महतीमनेकाक्षौहिणीसहितामक्षोभ्यां पश्येत्याचार्यं दुर्योधनो नियुङ्क्ते। नियोगद्वारा च तस्मिन्परेषामवज्ञां विज्ञापयन्क्रोधातिरेकमुत्पादयितुमुत्सहते। परकीयसेनाया वैशिष्ट्याभिधानद्वारा परपक्षेऽपि त्वदीयमेव बलमिति सूचयन्नाचार्यस्य तन्निरसनं सुकरमिति मन्वानः सन्नाह—व्यूढामिति। राज्ञो द्रुपदस्य पुत्रस्तव च शिष्यो धृष्टद्युम्नो लोके ख्यातिमुपगतः स्वयं च शस्त्रास्त्रविद्यासंपन्नो महामहिमा तेन व्यूहमापाद्याधिष्ठितामिमां चमूं किमिति न प्रतिपद्यसे किमिति वा मृष्यसीत्यर्थः ॥ ३ ॥

राघ०टी—तद्वचनमेवानुवदति संजयः—पश्यैतामित्यादिना। हे आचार्य ! तव शिष्येण धीमता धृष्टद्युम्नेन व्यूढां पांडुपुत्राणामेतां महतीं चमूं सेनां पश्य ॥ ३ ॥

रा० भा०—॥ ३ ॥

अ० टी०—तद्वाक्यमेवाह—पश्येत्यादिनवभिः। तत्र भीष्मस्याभिषिक्तत्वात्स्वत एवोत्साहः द्रोणस्यौदासीन्यमालक्ष्य प्रोत्साहयति परोत्कर्षवर्णनैः एतां निकटस्थां युधिष्ठिरस्य राज्यत्वाभावादविशेषेण पांडुपुत्राणामित्युक्तम्। हे आचार्य ! यद्यपि त्वमुभयोः समस्तथापि तेषां सेनायाः प्रबलत्वादस्मत्पक्षपातं कुर्वित्यतः संबोधनं पांडुपुत्राणां महतीं स्वभयजनिकां चमूं धीमता व्यूहरचनाकृतिना द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूढां व्यूहरचनया संमार्जितां पश्य। तव शिष्येणेति विशेषणेन स्वस्य भयजनकत्वसामर्थ्यं द्योतितम् तस्य भयाभावः ॥ ३ ॥

नी०टी०—द्रुपदपुत्रेणेति पूर्ववैरसूचनेन क्रोधोद्दीपनार्थं विशेषणम् ॥ ३ ॥

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ॥**
**युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥**
**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ॥**
**पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥**

**आ०टी०**–प्रतिपक्षे पराक्रमभाजो बहवः सन्तीत्यनुपेक्षणीयत्वं परपक्षस्य विवक्षयन्नाह—अन्येऽपि **अत्रेति** । अस्यां हि प्रतिपक्षभूतायां सेनायां शूराः स्वयमभीरवः शस्त्रास्त्रकुशला भीमार्जुनाभ्यां सर्वसंप्रतिपन्नवीर्याभ्यां तुल्या युद्धभूमावुपलभ्यन्ते । तेषां युद्धशौण्डीरं ( र्यं ) विशदीकर्तुं विशिनष्टि—**महेष्वासा इति** । इषुरस्यतेऽस्मिन्निति व्युत्पत्त्या धनुस्तदुच्यते । तच्च महदन्यैरप्रधृष्यं तद्येषां ते राजानस्तथा विवक्ष्यन्ते । तानेव परसेनामध्यमध्यासीनान्परपक्षानुरागिणो राज्ञो विज्ञापयति—**युयुधान** इत्यादिना **सौभद्रो द्रौपदेयाश्चे**त्यन्तेन ॥ ४ ॥ ५ ॥

**राघ०टी०**–अत्र सेनायां महेष्वासाः महाधनुष्काः भीमार्जुनसमाः शूराः संति ते के इत्यत आह–**युयुधान इत्यादिना** । महारथ इति प्रत्येकमन्वेति वीर्यवानिति विशेषणमपि नरपुंगवो मनुष्यश्रेष्ठ इत्यपि त्रयाणां विशेषणम् ॥ ४ ॥ ९ ॥

**रा० भा**–॥ ४ ॥ ९ ॥

**अ० टी०**–एवं सेनां दर्शयित्वा तस्याः प्रबलत्वसूचनाय तत्स्थितान् शूरान् वर्णयति–**अत्रेति** । अत्र अस्यां सेनायां इषवो अस्यंते एभिरितीष्वासाश्चापाः महान्तइष्वासा येषां ते महेष्वासा शूरामहेष्वासा इति पदद्वयेन स्वतः शिक्षातश्च सामर्थ्यं दर्शितम् । युधि संग्रामे भीमार्जुनसमाः शूराः संति । भीमार्जुनावतिबलाविति तत्समत्वेन गणिताः । युधीति पदेनान्यत्र न तत्समा दानादिष्वित्यर्थः । तानेव गणयति युयुधान इत्यादिभिः । युयुधानः सात्यकिः । विराटद्रुपदौ राजानौ धृष्टकेतुप्रभृतयो राजानोऽसंबद्धा अस्मच्छत्रवश्च । वीर्यवानिति प्रत्येकं सर्वेषां विशेषणम् ॥ ४ ॥ ९ ॥

**नी०टी०**–महेष्वासा महांत इष्वासाः धनूंषि येषां ते युयुधानः सात्यकिः द्रुपदश्च महारथ इत्येकः॥४॥ धृष्टकेत्वादयः षट् ॥ ९ ॥

**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ॥**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥**

**आ०टी०**–तेषां सर्वेषामपि महाबलपराक्रमभाक्त्वादनुपेक्ष्यत्वं पुनर्विवक्षति–**सर्व एवेति** ॥ ६ ॥

**राघ०टी०**–महारथत्वं नाम 'एको दशसहस्राणां योधयेद्यस्तु धन्विनाम् ॥ शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृत ' इत्युक्तरूपम् । विक्रांतः पराक्रमवान् सौभद्रोभिमन्युः द्रौपदेयाः द्रौपदीपुत्राः ॥ ६ ॥

**रा० भा०**–॥ ६ ॥

**अ० टी०**–विक्रान्तः अतिपराक्रमी वीर्यवानिति सौभद्रविशेषणम् । द्रौपदेयाः पंच प्रतिविन्ध्यादयः सर्व एव महारथाः महारथलक्षणं च—'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥ अमितान्योधयेद्यस्तु संप्रोक्तोतिरथस्तु सः । रथी चैकेन यो योद्धा तन्न्यूनोर्द्धरथः स्मृतः' इत्यादि ॥ ६ ॥

नी० टी०-युधामन्यूत्तमौजसौ सौभद्रोऽभिमन्युः पंच द्रौपदेयाः प्रतिविंध्यादयश्चेत्यष्टौ। चकारात् पांडवा घटोत्कचादयश्चातिप्रसिद्धा ग्राह्याः सर्वेऽपि महारथा एव तल्लक्षणं तु। 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च स वै प्रोक्तो महारथः॥ अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः। रथस्त्वेकेन योद्धा स्यात्तन्न्यूनोऽर्द्धरथः स्मृतः' इति ॥ ६॥

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम॥**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते॥ ७॥**

आ० टी०-यद्येवं परकीयं बलमतिप्रभूतं प्रतीत्यातिभीतवदभिदधासि हन्त संधिरेव परैरिष्यतामलं विग्रहाग्रहेणेत्याचार्याभिप्रायमाशङ्क्य ब्रवीति—**अस्माकमिति**। तुशब्देनान्तरुत्पन्नमपि स्वकीयं भयं तिरोदधानो धृष्टतामात्मनो द्योतयति। ये खल्वस्मत्पक्षे व्यवस्थिताः सर्वेभ्यः समुत्कर्षजुषस्तान्मयोच्यमानान्निबोध निश्चयेन मद्वचनादवधारयेत्यर्थः। यद्यपि त्वमेव त्रैवर्णिकेषु त्रैविद्यवृद्धेषु प्रधानत्वात्तान्प्रतिपत्तुं प्रभवसि तथाऽपि मदीयसैन्यस्य ये मुख्यास्तानहं ते तुभ्यं संज्ञार्थमसंख्येषु तेषु मध्ये कतिचिन्नामभिर्गृहीत्वा परिशिष्टानुपलक्षयितुं विज्ञापनं करोमि न त्वज्ञातं किंचित्तव ज्ञापयामीति मत्वाऽऽह—**द्विजोत्तमेति**॥ ७॥

राघ० टी०-**अस्माकं त्विति**। पांडवव्यावर्तकस्तुशब्दः अस्माकं संबंधिनो विशिष्टाः बलिष्ठाः मम सैन्यस्य नायकाः नेतारः ये तान्निबोध बुध्यस्व जानीहि। ते तव सम्यग्ज्ञानार्थं तान् ब्रवीमि। द्विजोत्तमेत्याचार्यसंबोधनम्॥ ७॥

रा० भा०-॥ ७॥

अ० टी०-एवं तत्सैनिकानुक्त्वा स्वीयानाह प्रोत्साहनार्थं-**अस्माकमित्यादिभिः**। अस्माकं ये विशिष्टाः महांतस्तान्निबोध बुध्यस्व द्विजोत्तमेति विस्मृतिसंभावनया संबोधनं मम सैन्यस्य नायकाः नेतारः। तान्संज्ञानार्थं मया विशेषेण स्वरूपतो ज्ञायन्ते नवेति ते ब्रवीमि॥ ७॥

नी०टी०-विशिष्टाः श्रेष्ठाः निबोध बुध्यस्व। भौवादिकस्य परस्मैपदिनो बुधेरिदं रूपं संज्ञार्थं अस्मत्पक्षेपि शूराः संतीतिज्ञापनार्थं। परेषु प्राबल्यं दृष्ट्वा तवोत्साहभंगो माभूदित्यर्थः॥ ७॥

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः॥**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च॥ ८॥**

आ० टी०-तानेव स्वसेनानिविष्टान्पुरुषधौरेयानात्मीयभयपरिहारार्थं परिगणयति—**भवानित्यादिना**॥ ८॥

राघ० टी०-तानाह द्वाभ्याम्-**भवानित्यादिना**। समितिंजयो युद्धे जयशीलः। सोमदत्तसुतो भूरिश्रवाः॥ ८॥

रा० भा०-॥ ८॥

अ० टी०-एवं विज्ञाप्य तन्नामान्याह-**भवानिति द्वाभ्याम्**। भवान्द्रोणः सर्वेषामाचार्योऽस्माकं मुख्यः। त्वया कार्यार्थमन्ये प्रेर्याः उभयोर्द्रोणसामर्थ्यमिति वाक्यात् परमबलीति पूर्वं गणितः। भीष्मश्च तथैव मुख्यः। चकारेण क्षत्रियत्वात् शापसामर्थ्याभावमाशंक्य पितामहत्वात् शापसामर्थ्यं ज्ञाप्यते। कर्णस्याप्यग्रेऽर्द्धरथिषु गणनात्स दुःखितो भविष्यतीति सोपि मुख्यत्वेन गणितः। इदमेव चकारेण गृह्यते। कृपाचार्योपि

तथा । एते सर्वेपि समितिंजयाः संग्रामजेतारः भिन्नतया सर्वेषां विशेषणम् । अश्वत्थामा त्वत्पुत्रः विकर्णश्च सौमदत्तिः भूरिश्रवाः । तथेति यथा भवदादयस्तुल्या अप्यस्मत्पक्षपातिनस्तथैव सौमदत्तिरित्यर्थः । यद्वा । तथैवेत्युत्तरत्र योज्यम् ॥ ८ ॥

नी०टी०–विकर्णः स्वभ्राता सौमदत्तिर्भूरिश्रवाः । जयद्रथपदस्थाने तथैव चेति क्वचित्पाठः ॥ ८ ॥

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ॥**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

आ०टी०–द्रोणादिपरिगणनस्य परिशिष्टपरिसंख्यार्थत्वं व्यावर्तयति–**अन्ये चेति** । सर्वेऽपि भवन्तमारभ्य मदीयपृतनायां प्रविष्टाः स्वजीवितादपि मह्यं स्पृहयन्तीत्याह—**मदर्थ इति** । यत्तु तेषां शूरत्वमुक्तं तदिदानीं विशदयति—**नानेति** । नानाविधान्यनेकप्रकाराणि शस्त्राण्यायुधानि प्रहरणानि प्रहरणसाधनानि येषां ते तथा । बहुविधायुधसंपत्तावपि तत्प्रयोगे नैपुण्याभावे तद्वैफल्यमिति चेन्नेत्याह—**सर्वे इति** ॥ ९ ॥

राघ०टी०–शूरा एवेति । मदर्थ एवेति वा अवधारणान्वयः । त्यक्तजीविताः प्राणत्यागे कृतनिश्चया इत्यर्थः । प्रह्रियंते एभिरिति प्रहरणान्यस्त्राणि नानाविधानि शस्त्राणि प्रहरणानि च येषां ते नानाशस्त्रप्रहरणाः युद्धविशारदाः युद्धकुशलाः ॥ ९ ॥

रा० भा०–॥ ९ ॥

अ० टी०–अन्ये चैतादृशा बहवः शूरा मदर्थे मत्कार्यार्थं त्यक्तं जीवितं यैः तादृशा जीविताशां परित्यज्य मत्कार्यं कर्तुं कृतनिश्चया इत्यर्थः । यद्वा आदिकर्मणि क्तः । त्यक्ष्यमाणजीविता इत्यर्थः । नानाशस्त्राणि प्रहरणसाधनानि येषां ते युद्धे विशारदाः अतिनिपुणाः ॥ ९ ॥

नी० टी०–अन्ये शल्यकृतवर्मप्रभृतयः शस्त्राणि विदारकाणि खड्गादीनि प्रहरणानि केवलं प्रहारार्थानि गदादीनि नानाविधानि येषां ते नानाशस्त्रप्रहरणाः ॥ ९ ॥

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ॥**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

आ० टी०–राजा पुनरपि स्वकीयभयाभावे हेत्वन्तरमाचार्यं प्रत्यावेदयति–**अपर्याप्तमिति** । अस्माकं खल्विदमेकादशसंख्याकाक्षौहिणीपरिगणितमपरिमितं बलं भीष्मेण च प्रथितमहामहिम्ना सूक्ष्मबुद्धिना सर्वतो रक्षितं पर्याप्तं परेषां परिभवे समर्थम् । एतेषां पुनस्तदल्पं सप्तसंख्याकाक्षौहिणीपरिमितं बलं भीमेन चपलबुद्धिना कुशलताविकलेन परिपालितमपर्याप्तमस्मानभिभवितुमसमर्थमित्यर्थः । अथवा तदिदमस्माकं बलं भीष्माधिष्ठितमपर्याप्तमपरिमितमधृष्यमक्षोभ्यमेतेषां तु पाण्डवानां बलं भीमेनाभिरक्षितं पर्याप्तं परिमितं सोढुं शक्यमित्यर्थः । अथवा तत्पाण्डवानां बलमपर्याप्तं नालमस्माकमस्मभ्यं भीष्माभिरक्षितं भीष्मोऽभिरक्षितोऽस्मै परबलनिवृत्त्यर्थमिति तदेव तथोच्यते, इदं पुनरस्मदीयं बलमेतेषां पाण्डवानां पर्याप्तं परिभवे समर्थं भीमाभिरक्षितं भीमो दुर्बलहृदयो यस्मादस्मै परबलनिवृत्त्यर्थमभिरक्षितस्तस्मादस्माकं न किंचिदपि भयकारणमस्तीत्यर्थः ॥ १० ॥

राघ० टी०–दुर्लङ्घ्ये बलिष्ठपरिगणनं पांडवविजये मम संदेहोस्ति ततो भवदादयः सर्वे बहुसन्नद्धा भवतेति वक्तुमितिभावेनाह–अपर्याप्तमिति । सेनापतीभूतभीष्माभिरक्षितमस्माकं तत्प्रागुक्तबलिष्ठोपेतं बलमपर्याप्तं पांडवजये न समर्थं प्रतीयते ॥ १० ॥

रा० भा०–॥ १० ॥

अ० टी०—एवं सर्वाननूद्यैतद्रक्षितमप्यस्मद्बलं तद्बलयुद्धाऽसमर्थं मम भातीत्याह—**अपर्याप्तमिति**। भीष्माभिरक्षितमप्यस्माकं बलम् अपर्याप्तं तैः सह योद्धुमसमर्थं भाति। द्रोणः कदाचित्कुप्येदिति भीष्माभिरक्षितमेवोक्तम्। पाण्डवानां च बलमस्माभिर्योद्धुं समर्थं भातीत्याह—**पर्याप्तमिति**। इदं तेषां पाण्डवानां बलं भीमेनाभितः सर्वतो रक्षितं सत् पर्याप्तं समर्थं प्रतिभाति। तुशब्देनापर्याप्तपक्षो निराकृतः। यद्वा। तत्प्रसिद्धमस्माकं बलम् अपर्याप्तम् अत्यधिकम्। किंच भीष्मेणाभितो रक्षितम्। तेषां तु बलं शूरभूयिष्ठमपि पर्याप्तम्। अक्षौहिणीसप्तकमितत्वात्॥ १०॥

नी० टी०—पर्याप्तं पारित आप्तं परिवेष्टितं पांडवसैन्यं हि सप्ताक्षौहिणीमितत्वादल्पं बहुनैकादशाक्षौहिणीमितेनास्मत्सैन्येन वेष्टयितुं शक्यं न तु तदीयेनास्मदीयमित्यर्थः। एवं च पर्याप्तमित्यस्य पारणीयमित्यर्थः॥ १०॥

**अयनेषु च सर्वेषु यथाभागमवस्थिताः॥**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि॥ ११॥**

आ० टी०—स्वकीयबलस्य भीष्माधिष्ठितत्वेन बलिष्ठत्वमुक्त्वा भीष्मशेषत्वेन तदनुगुणत्वं द्रोणादीनां प्रार्थयते—**अयनेष्विति**। कर्तव्यविशेषद्योती चशब्दः। समरसमारम्भसमये योधानां यथाप्रधानं युद्धभूमौ पूर्वापरादिदिग्विभागेनावस्थितिस्थानानि नियम्यन्ते तान्यत्रायनान्युच्यन्ते। सेनापतिश्च सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति तेषु सर्वेषु प्रक्लृप्तं प्रविभागमप्रत्याख्याय भवानश्वत्थामा कर्णश्चेत्येवमादयो भवन्तः सर्वेऽवस्थिताः सन्तो भीष्ममेव सेनापतिं सर्वतो रक्षन्तु। तस्य हि रक्षणे सर्वमस्मदीयं बलं रक्षितं स्यात्परबलनिवृत्त्यर्थत्वेन तस्यास्माभी रक्षितत्वादित्यर्थः॥ ११॥

राघ० टी०—हि यस्मादेवमतो भवंतः सर्व एव सर्वेष्वयनेषु व्यूहप्रवेशमार्गेषु यथाभागमवस्थिताः स्वस्वरणभूमिस्थानेषु दृढमवस्थिताः संतः भीष्ममेवाभिरक्षंतु। अन्यैर्युध्यमानो भीष्मः पृष्ठतोऽरिभिर्यथा न हन्येत तथा रक्षंत्विति द्रोणाचार्यमुक्त्वा विषसाद॥ ११॥

रा० भा०—॥ ११॥

अ० टी०—किं च। भीमेनाभिरक्षितम्। एवं सति किं कर्त्तव्यमित्याकांक्षायामाह—**अयनेषु चेति**। व्यूहप्रवेशमार्गेषु यथाभागं विभक्ताः स्वस्थाने स्थिताः भवन्तः सर्वे एव भीष्ममेवाभितः सर्वतः रक्षन्तु। यतोऽस्माकं बलं भीष्मरक्षितमेव चकारेण व्यूहप्रवेशमार्गात् परस्थानेऽपि स्थितैरिदमपि ज्ञापितम्। एवकारेणास्मदादिरक्षा कार्येति ज्ञापितम्। हीति युक्तत्वम्॥ ११॥

नी० टी०—अयनेषु व्यूहरचनया स्थिते सैन्ये प्रवेशमार्गेषु स्वे स्वे स्थाने स्थिता यूयं मध्यस्थं भीष्ममेवाभिरक्षंतु। अस्य सेनापतेश्चांचल्ये सर्वाऽपि सेना आकुलीभवेत् तत्स्थैर्ये स्थिरा च भवेदतः स एव रक्ष्य इत्यर्थः॥ ११॥

**तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः॥**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान्॥ १२॥**

आ० टी०—तमेवमाचार्यं प्रति संवादं कुर्वन्तं भयाविष्टं राजानं दृष्ट्वा तदभ्यासवर्ती पितामहस्तद्बुद्ध्यनुरोधार्थमित्थं कृतवानित्याह—**तस्येति**। राज्ञो दुर्योधनस्य हर्षं बुद्धिगतमुल्लासविशेषं परपरिभवद्वारा स्वकीयविजयद्वारकं सम्यगुत्पादयन्भयं तदीयमपनिनीषुरुच्चैः सिंहनादं कृत्वा शङ्खमापूरितवान्। किमिति दुर्योधनस्य हर्षमुत्पादयितुं पितामहो यतते कुरुवृद्धत्वात्तस्य कुरुराजत्वापि-

तामहत्वाचास्य दुर्योधनभयापनयार्था प्रवृत्तिरुचिता । तदुपजीवितया तद्वशत्वाच्च तस्य च सिंहनादे शङ्खशब्दे च परेषां हृदयव्यथा संभाव्यते दूरादेवारिनिवहं प्रति भयजननलक्षणप्रतापत्वादित्यर्थः ॥ १२ ॥

राघ० टी०—एवं विषादिनस्तस्य दुर्योधनस्य हर्षं संजनयन् जनयितुं लक्षणहेत्वोः क्रियाया इति हेतौ शत्रंतं प्रतापवान् कुरुवृद्धः पितामहः भीष्मः सिंहनादमुच्चैः विनद्य शंखं दध्मौ । ध्माशब्दे ॥ १२ ॥

रा० भा०—तस्य विषादमालोक्य भीष्मस्तस्य हर्षं जनयितुं सिंहनादं शंखध्मानञ्च कृत्वा शंखभेरीनिनादैश्च विजयाभिशंसिनं घोषं चाकारयत् ॥ १२ ॥

अ० टी०—सेनापतिरेव रक्षणीय इत्येवं स्वबहुमानप्रतिपादकं राजवाक्यं श्रुत्वा राज्ञो हर्षमुपजनयन् भीष्मः स्वबलख्यापकं शंखनादं कृतवानित्याह—तस्येति । तस्य राज्ञः हर्षं सम्यक् प्रकारेण योत्स्यामि इत्यादिरूपेण जनयन् भीष्मस्य भक्तत्वात्स्वपराजयज्ञानेन स्वतो हर्षेण न शंखादिवादनं किन्तु दुर्योधनस्य वाक्यं श्रुत्वा भगवदिच्छां ज्ञात्वा तस्य राज्ञः हर्षजननार्थं तथाकृतवानिति बोधयितुमेवमुक्तम् । कुरुवृद्धः कुरूणां कुरुषु वा वृद्धः । देशकालोचितज्ञानः पितामह इति हर्षजनने हेतुरुक्तः । भीष्मः उच्चैरूर्ध्वमुखं यथा स्यात्तथा महान्तं वा सिंहनादं विनद्य स्वप्रौढिज्ञापकं गर्जनं कृत्वा प्रतिभटः कोपि नास्तीति ज्ञापयन् शंखं दध्मौ वादितवान् । ननु राज्ञा बहुमाने कृतेऽपि राज्ञोऽग्रे तथा विनादं च न कर्त्तव्यं शंखादिवादनं तत्कथं कृतवानित्याशंक्याह—प्रतापवानिति । नादेनैव शत्रुजयः सूच्यते ॥ १२ ॥

नी० टी०—तस्यैवं वदतो दुर्योधनस्य संजयवाक्यमिदं सिंहनादमिति णमुलंतं तेन विनद्येत्यस्यानुप्रयोगः । कषादित्वात् 'समूलकाषं कषतिस्म दैत्यान्' इत्यादिवत् कुरुवृद्धो भीष्मः प्राग्विराटनगरादौ दृष्टप्रभावान् पांडवान्दृष्ट्वा राज्ञो भयं माभूदिति शंखं दध्मौ । हर्षं युद्धोत्साहं जनयन् हेत्वर्थे शतृप्रत्ययः । हर्षजननार्थमित्यर्थः ॥ १२ ॥

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ॥**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥**

आ० टी०—राजाभिप्रायं प्रतीत्य भीष्मप्रवृत्त्यनन्तरं तत्पक्षैस्तैस्तै राजभिः शङ्खादयो वाद्यविशेषा झटिति शब्दवन्तः संपादिताः । स च शङ्खादिप्रयुक्तशब्दस्तुमुलो बहुलं भयं परेषां परिद्योतयन्नासीदित्याह—तत इति ॥ १३ ॥

राघ० टी०—ततः तच्छंखध्मानानंतरं पणवानकगोमुखाः वाद्यविशेषाः सहसैव युगपदेव । तुमुलः सर्वत्र परिपूर्णोऽभवत् ॥ १३ ॥

रा० भा०—॥ १३ ॥

अ० टी०—एवं सेनापतेर्युद्धोत्सवप्रवर्त्तकं शंखध्वनिमाकर्ण्य सर्वेसावधानकरणार्थं वादका दुंदुभ्यादिवादनं कृतवन्त इत्याह—तत इति । सहसा तच्छ्रवण एव शंखाः भेर्यश्च पणवा आनकाः गोमुखाः अभ्यहन्यंत । वादिता इत्यर्थः । एवकारेण तच्छ्रवणादेव वादितवन्तो नतु युद्धोपस्थित्या स्वशौर्याविर्भावेनेति व्यज्यते स शंखादिशब्दस्तुमुलो महानासीत् ॥ १३ ॥

नी० टी०—अभ्यहन्यंत अभिहताः कर्मकर्तरि प्रयोगः ॥ १३ ॥

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ॥**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥**

आ०टी०-एवं दुर्योधनपक्षे प्रवृत्तिमालक्ष्य परिसरवर्तिनौ केशवार्जुनौ श्वेतैर्हयैरतिबलपराक्रमैर्युक्ते महत्यप्रधृष्ये रथे व्यवस्थितावप्राकृतौ शङ्खौ पूरितवन्तावित्याह-ततः श्वेतैर्हयैरिति ॥ १४ ॥

राघ० टी०-ततः तेषां घोषानंतरं श्वेतहयैर्युक्ते श्वेतवर्णाश्वैर्युक्ते स्यंदने रथे पांडवोऽर्जुनः स्थितावेवेत्यन्वयः ॥ १४ ॥

रा० भा०-ततस्तं घोषमाकर्ण्य सर्वेश्वरेश्वरः पार्थसारथी रथी च पाण्डुतनयस्त्रैलोक्यविजयोपकरणभूते महति स्यन्दने स्थितौ त्रैलोक्यं कम्पयन्तौ श्रीमत्पाञ्चजन्यदेवदत्तौ दिव्यौ शंखौ प्रदध्मतुः॥१४॥

अ० टी०-एवं युद्धोत्सवज्ञापकशंखध्वनिश्रवणानन्तरं पांडवसैन्येपि युद्धोत्सवोऽभूदित्याह-तत इति पंचभिः। ततः कौरवप्रवृत्त्यनन्तरं श्वेतैर्हयैः शुभसूचकैरश्वैर्युक्ते परमेश्वरस्य सारथित्वप्रतिपादनाय भगवतोऽश्वानां च वर्णनं नायं भगवद्रथ इति ज्ञापनाय च भगवतोऽश्वानां चित्रवर्णत्वादत्र श्वेतैरिति हयविशेषणं। युद्धप्रवृत्तिज्ञापनार्थं हयैर्युक्त इति। महति अग्निदत्ते भगवत्स्थितियोग्ये गरुडसमे स्यंदने नंदिघोषाख्ये रथे स्थितौ श्रीकृष्णार्जुनौ दिव्यौ शंखौ प्रदध्मतुः वादितवंतौ। माधवपदेन तेषां शीघ्रमेव लक्ष्मीप्राप्तिर्भविष्यति इति व्यंजितम्। पांडवत्वोक्त्या तेषां न्यायत्वमुक्तम्। भगवतः शंखध्वनिः सर्वेषां यथा दर्पघ्नस्तथैवार्जुनस्यापीति चकारेणैवकारेणापि व्यज्यते ॥ १४ ॥

नी० टी०-॥ १४ ॥

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ॥**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥**

आ० टी०-तयोः शङ्खयोर्दिव्यत्वमेवाऽऽवेदयति-पाञ्चजन्यमिति। केशवार्जुनयोर्युद्धाभिमुख्यं दृष्ट्वा संहृष्टः स्वारस्येन समररासिको भीमसेनोऽपि युद्धाभिमुखोऽभूदित्याह-पौण्ड्रमिति ॥ १५ ॥

राघ० टी०-तद्विवृणोति-पांचजन्यमिति। हृषीकेशशब्दार्थ उक्तो गीताभाष्ये एकादशे। हृषीकाणामिंद्रियाणामीशत्वाच्च हृषीकेश इत्यादि। दध्मावित्यन्वयः ॥ १५ ॥

रा० भा०-ततो युधिष्ठिरवृकोदरादयश्च स्वकीयान् शंखान् पृथक् पृथक् प्रदध्मुः ॥ १५ ॥

अ० टी०-श्रीकृष्णादिशंखानां महत्त्वज्ञापनार्थं नामान्याह-पांचजन्यमित्यादिद्वयेन। पांचजन्यं हृषीकेशो वादितवान्। पांचजन्यादीनि तत्तच्छंखानां नामानि शंखमाहात्म्यज्ञापनार्थमुक्तानि। पंचजनदैत्यप्रभवत्वात्पांचजन्यः। देवदत्तमग्निदत्तं। पौंड्रादयोपि तत्तद्गुणविशिष्टास्तत्तदुपाख्यानैरवगन्तव्याः। सर्वेषामिंद्रियप्रवर्त्तकस्य युद्धप्रवृत्तौ सर्वेन्द्रियाणि स्वतएव प्रवर्त्तेरन्निति हृषीकेश इत्युक्तम्। धनंजयः देतदत्तं वादितवान्। धनंजयोऽस्य जये यस्येति वा। पौंड्रं महाशंखं स्वरूपतो गुरुतरं भीमकर्मा भयानककर्मकर्ता वृकोदरो भीमसेनो दध्मौ वादितवान्। 'भक्तिर्ज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिः स्थितिः। योगः प्राणो बलं चैव वृकोदर इति स्मृतः॥ एतद्दशात्मको वायुस्तस्माद्भीमस्तदात्मकः।' इति ॥ १५ ॥

नी० टी०-॥ १५ ॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ॥
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

आ० टी०—एतेषामीदृशीं प्रवृत्तिं प्रतीत्य परिपालनावकाशमासाद्य राज्ञो युधिष्ठिरस्यापि प्रवृत्तिं दर्शयति—अनन्तेति । ज्यायसां भ्रातॄणामनुसरणमावश्यकमिति मत्वा तयोर्यवीयसोर्भ्रात्रोरपि प्रवृत्तिमाह—नकुल इति ॥ १६ ॥

राघ० टी०—युधिष्ठिरः अनंतविजयाख्यं शंखं दध्मौ नकुलः सुघोषाख्यं शंखं सहदेवो मणिपुष्पकाख्यं दध्मतुरित्यन्वयः ॥ १६ ॥

रा० भा०—॥ १६ ॥

अ० टी०—अनंतानां विजयो येन तादृशं राजेतिप्रवृत्तावावश्यकता वादितवान् । कीदृशो राजा कुन्तीपुत्रः कुन्तीपुत्रेति तत्प्रेरितत्वं भगवत्कृपाधिकारित्वं च ज्ञापितम् । युधिष्ठिर इति सार्थकनाम्ना सामर्थ्यं । नकुलः सहदेवश्च सुघोषमणिपुष्पकौ वादयामासतुः ॥ १६ ॥

नी० टी०—॥ १६ ॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ॥
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ॥
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक् पृथक् ॥ १८ ॥

आ० टी०—अन्येषामपि तत्पक्षीयाणां राज्ञामैकमत्यं विज्ञापयन्धृतराष्ट्रस्य दुराशां संजयो व्युदस्यति—काश्यश्चेत्यादिना । परमेष्वासादिविशेषणचतुष्टयं प्रत्येकं संबध्यते ॥ १७ ॥ १८ ॥

राघ० टी०—परमेष्वासो महाधनुष्कः काश्यः महारथः शिखंडी च अपराजितः सात्यकिश्च ॥ १७ ॥ पृथिवीपते हे धृतराष्ट्र! महाबाहुः सौभद्रोभिमन्युश्च शंखमिति समुदायाभिप्रायं स्वस्वशंखान् दध्मुरिति ॥ १८ ॥

रा० भा०—॥ १७ ॥ १८ ॥

अ० टी०—एवं मुख्यानां नामानि तच्छंखानां चोक्त्वा तत्सैनिकानां महतां सर्वेषां नामान्याह—काश्यश्चेति द्वयेन । काश्यः काशिराजः परमेष्वासः परमः श्रेष्ठः इष्वासो धनुर्यस्य । शिखंडी च महारथः शस्त्रशास्त्रप्रवीणः चकारेण परमेष्वासोऽपि । धृष्टद्युम्नादयो गणिताः सर्वे तथा सौभद्रोऽभिमन्युः महाबाहुः परमयुद्धसमर्थः पृथक् पृथक् भिन्नस्थाने स्थिताः । शंखान्दध्मुः । पृथिवीपत इति संबोधनं धृतराष्ट्रस्य सर्वेषां स्वरूपज्ञानार्थम् ॥ १७ ॥ १८ ॥

नी० टी०—॥ १७ ॥ १८ ॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ॥
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥

आ० टी०-तैस्तै राजभिः शङ्खानापूरयद्भिरापादितो महान्घोषस्तुमुलोऽतिभैरवो नभश्चान्तरिक्षं पृथिवीं च भुवनं लोकत्रयं सर्वमेव विशेषेणानुक्रमेण नादयन्नादयुक्तं कुर्वन्धार्तराष्ट्राणां दुर्योधनादीनां हृदयान्यन्तःकरणानि व्यदारयद्विदारितवान् । युज्यते हि तत्प्रेरितशङ्खघोषश्रवणात्त्रैलोक्याक्रोशे तमुपशृण्वतां तेषां हृदयेषु दोधूयमानत्वं तदाह—**स घोष इति** ॥ १९ ॥

राघ० टी०-स घोषस्तुमुलो व्याप्तो भूत्वा नभश्च पृथिवीं च व्यनुनादयंस्तत्र प्रतिध्वनिं जनयन्नेव धार्तराष्ट्राणां त्वत्पुत्राणां हृदयानि व्यदारयत् अद्यैव नष्टं कुरुकुलमिति त्वत्पुत्रा मेनिर इत्यर्थः ॥ १९ ॥

**रा० भा०-स घोषो दुर्योधनप्रमुखानां सर्वेषामेव भवत्पुत्राणां हृदयानि बिभेद अद्यैव नष्टं कुरूणां बलमिति धार्त्तराष्ट्रा मेनिरे । एवं तद्विजयाभिकांक्षिणे धृतराष्ट्राय संजयोऽकथयत् ॥ १९ ॥**

अ० टी०-स शंखध्वनिस्तावकानां भयमुत्पादयामासेत्याह—स इति । स पूर्वोक्तः पांचजन्यादिजन्मा घोषः शब्दः धातराष्ट्राणां हृदयानि विशेषेण दारितवान् नभः आकाशं पृथिवीं विशेषेण अनुनादयन्प्रतिध्वनयन् तथा कृतवान् । चकारद्वयेन नभः पृथिवीं व्यदारयदिति ज्ञापितम् । नभोविदारणं लोकोक्तिः । पृथिवीविदारणन्तु स्पष्टम् । विद्युन्महाशब्देन कूपादिविदारणस्य दर्शनात् । कीदृशः सः तुमुलो महान् । नभश्च पृथिवीं च अनुनादयन् । तुमुलो भूत्वा स घोषः धार्तराष्ट्राणां हृदयानि व्यदारयदिति वा । उत्साहभंगेन हृदये भयं जनयामासेत्यर्थः । एवं पांडवानां धर्मिष्ठत्वभक्तत्वयोर्बोधनार्थमष्टादशभिः संगतिरुक्ता ॥ १९ ॥

नी० टी०-॥ १९ ॥

**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ॥**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥**
**हृषीकेशं तदा वाक्यमिदमाह महीपते ॥**
**अर्जुन उवाच—सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**

आ० टी०-दुर्योधनादीनां धार्तराष्ट्राणामेवं भयप्राप्तिं प्रदर्श्य पार्थादीनां पाण्डवानां तद्वैपरीत्यमिदानीमुदाहरति—**अथेत्यादिना**। भीतिप्रत्युपस्थितेरनन्तरं पलायने प्राप्तेऽपि वैपरीत्याद्व्यवस्थितानप्रचलितानेव परान्प्रत्यक्षेणोपलभ्य हनुमन्तं वानरवरं ध्वजलक्षणत्वेनाऽऽदायावस्थितोऽर्जुनो भगवन्तमाहेति संबन्धः । किमाहेत्यपेक्षायामिदं वक्ष्यमाणं हेतुमद्वचनमित्याह—**वाक्यमिदमिति**। कस्यामवस्थायामिदमुक्तवानिति तत्राऽऽह—**प्रवृत्त इति** । शस्त्राणामिषुप्रासप्रभृतीनां संपातः समुदायस्तस्मिन्प्रवृत्ते प्रयोगाभिमुखे सतीति यावत् । किं कृत्वा भगवन्तं प्रत्युक्तवानिति तदाह—**धनुरिति** । महीपतिशब्देन राजा प्रज्ञाचक्षुः संजयेन संबोध्यते । तदेव गाण्डीवधन्वनो वाक्यमनुक्रामति—**सेनयोरिति** । उभयोरपि सेनयोः संनिहितयोर्मध्ये मदीयं रथं स्थापयेत्यर्जुनेन सारथ्ये सर्वेश्वरो नियुज्यते किं हि भक्तानामशक्यं यद्भगवानपि तन्नियोगमनुतिष्ठति । युक्तं हि भगवतो भक्तपारवश्यम् । अच्युतेतिसंबोधतया भगवतः स्वरूपं न कदाचिदपि प्रच्युतिं प्राप्नोतीत्युच्यते ॥ २० ॥ २१ ॥

राघ० टी०-तत्त्वोपदेशप्रसंगकमर्जुनविषादं वक्तुमेतावानुपोद्घातः प्रवृत्तः एवं दुर्योधनव्यापारं दलद्वयगत व्यापारं चोक्त्वाऽधुना अर्जुनव्यापारमाह—अथेति चतुर्भिः श्लोकैः । अनंतरं कपिध्वजोर्जुनः व्यवस्थितान् युद्धे कृतनिश्चयान् धार्तराष्ट्रान् दृष्ट्वा शस्त्रसंप्राते शस्त्रप्रहरणे प्रवृत्ते वर्तमानसामीप्ये वर्तमानवद्वा प्रवर्तितुमुद्युक्ते सति ॥ २० ॥ तदा शस्त्रसंपातप्राक्काले इदं वक्ष्यमाणं किमाहेत्यतः सार्धश्लोकद्वयेन तद्वाक्यमाह—सेनयोरिति ॥ २१ ॥

**रा० भा०-अथ युयुत्सूनवस्थितान् धार्त्तराष्ट्रान् दृष्ट्वा लंकादहनवानरध्वजः पाण्डुतनयो ज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधिं स्वसंकल्पकृतजगदुदयविभवलयलीलं हृषीकेशं परावरनिखिललो**

कान्तरबाह्यसर्वकरणानां सर्वप्रकारकनियमनेऽवस्थितं समाश्रितवात्सल्यविवशतया स्वसारथ्येऽवस्थितं युयुत्सून् यथावदवेक्षितुं तदीक्षणक्षमे स्थाने रथं स्थापयेत्यचोदयत् ॥ २० ॥ २१ ॥

अ० टी०—एवं कृष्णार्जुनसमागमनार्थं सेनाद्वयेपि युद्धोत्सवमुक्त्वा प्रेरितकृष्णार्जुनयंत्रणेन युद्धमध्ये प्रवृत्तस्य बन्धुनाशदर्शनेन वैराग्यं वक्तुम् अर्जुनस्य सहेतुकं कृष्णप्रेरणमाह—**अथेति चतुर्भिः**। तत्र प्रेरणे प्रथमं हेतुदर्शनमाह। अथ भिन्नक्रमेण भयाभावेन धार्तराष्ट्रान् व्यवस्थितान् विशेषेण अवगता स्थितिर्येषां तादृशान् दृष्ट्वा कपिध्वजोऽर्जुनः कपिध्वज इति शस्त्रलाघवं सूचितम्। शस्त्रसंपाते प्रवृत्ते सति धनुरुद्यम्य पाण्डवः पाण्डोः पुत्रः स्वराज्याप्तिकाम्यया हृषीकेशं तथैवेन्द्रियप्रेरकं तदा तत्समये इदं वाक्यं वक्ष्यमाणमाह। महीपत इति संबोधनं राज्ञां तथैव धर्म इति ज्ञापनार्थं। तद्वाक्यान्येवाह—**सेनयोरित्यादिना**। हे अच्युत ! उभयोः सेनयोर्मध्ये रथं स्थापय ॥ २० ॥ २१ ॥

नी० टी०—व्यवस्थितान् भयोद्विग्नतया वैषम्येणावस्थितान् कपिध्वजपांडवपदाभ्यां भीषणध्वजत्वं शौर्यं च प्रदश्यते ॥ २० ॥ हृषीकेशं सर्वेषामिंद्रियाणां प्रवर्तकत्वेन परचित्ताभिज्ञं (वाक्यमेवाह) न तु कंचिदर्थमिति द्योतनार्थं वाक्यपदं। वाक्यमेवाह सेनयोरिति ॥ २१ ॥

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ॥**
**कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥**

आ० टी०—मध्ये रथं स्थापयेत्युक्तं तदेव रथस्थापनस्थानं निर्धारयति—**यावदिति**। एतान्प्रतिपक्षे प्रतिष्ठितान्। भीष्मद्रोणादीनस्माभिः सार्धं योद्धुमपेक्षावतो यावद्गत्वा निरीक्षितुमहं क्षमः स्यां तावति प्रदेशे रथस्य स्थापनं कर्तव्यमित्यर्थः। किंच प्रवृत्ते युद्धप्रारम्भे बहवो राजानोऽमुष्यां युद्धभूमावुपलभ्यन्ते तेषां मध्ये कैः सह मया योद्धव्यं न हि क्वचिदपि मम गतिप्रतिहतिरस्तीत्याह—**कैर्मयेति** ॥ २२ ॥

राघ०टी०—अस्मिन् रणोद्योगे कैः सह मया योद्धव्यम् ॥ २२ ॥

रा० भा०—॥ २२ ॥

अ० टी०—यावदेतान् योद्धुकामान् अवस्थितान् अवाङ्मुखस्थित्या स्थितान्पलायनपरानहं निरीक्ष्ये। ननु निरीक्षणेन किं स्यादित्यतआह—**कैर्मयेति**। अस्मिन् रणसमुद्यमे यत्र रणप्रवृत्तिं विनैव शंखध्वनिनैव विदारितहृदयाः शुष्कवदनाः प्रतिभटास्तत्र कैः सह मया योद्धव्यमित्याह ॥ २२ ॥

नी०टी०—रथस्थापनप्रयोजनमाह—**यावदिति**। कैः सह मया योद्धव्यं मया सह वा कैर्योद्धव्यमित्युभयत्र सहशब्दसंबंधः। के वा मां जेतुं यतंते मया वा के जेतव्या इत्यालोचनार्थमित्यर्थः ॥ २२ ॥

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ॥**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

आ० टी०—प्रतियोगिनामभावे यथं तव युद्धौत्सुक्यं फलवद्भवेदिति तत्राऽऽह—**योत्स्यमानानिति**। ये केचिदेते राजानो नानादेशेभ्योऽत्र कुरुक्षेत्रे समवेतास्तानहं योत्स्यमानान्परिगृहीतप्रहरणोपायानतितरां संग्रामसमुत्सुकानुपलभे तेन प्रतियोगिनां बाहुल्यमित्यर्थः। तेषामस्माभिः सह पूर्ववैराभावे कथं प्रतियोगित्वं प्रकल्पयते तत्राऽऽह—**धार्तराष्ट्रस्येति**। धृतराष्ट्रपुत्रस्य दुर्योधनस्य दुर्बुद्धेः स्वरक्षणोपायमप्रतिपद्यमानस्य युद्धाय संरम्भं कुर्वतो युद्धे युद्धभूमौ स्थित्वा प्रियं कर्तुमिच्छवो राजानः समागता दृश्यन्ते तेन तेषामौपाधिकमस्मत्प्रतियोगित्वमुपपन्नमित्यर्थः ॥ २३ ॥

राघ० टी०-दुर्बुद्धेर्धार्तराष्ट्रस्य ।प्रियं कर्तुमिच्छंतो यत्र समागतास्तान्योद्धुकामानवस्थितान्योत्स्यमानान् यावद्द्रक्ष्यामि तावदुभयोः सेनयोर्मध्ये मे रथं स्थापयेत्यर्थः ॥ २३ ॥

रा० भा०- ॥ २३ ॥

अ० टी०-अवेक्ष्य इति किं च दुर्बुद्धेः धार्तराष्ट्रस्येति भगवत्प्रतिपक्षत्वेन स्वपराजयमननुसंदधानस्यांधस्य पुत्रस्तस्य प्रियं चिकीर्षवस्तेप्यंधाएव तथाभूता येऽत्र समागताः सम्यक् प्रकारेण युद्धार्थमागतास्तान् योत्स्यमानान् युध्यमानानहम् अवेक्ष्ये तावन्मे रथं सेनयोर्मध्ये स्थापयेति पूर्वेणैव संबंधस्तत्र मध्ये रथस्थापने मम भयं तु नास्त्येव यतस्त्वमच्युतोसि । एवं चतुर्भिर्युद्धोद्यमोप्युक्तः ॥ २३ ॥

नी० टी०-योत्स्यमानान् न तु शांतिकामान् यतो दुर्बुद्धेः प्रियं चिकीर्षति तेन तेषामपि तत्तुल्यत्वं सूचितम् ॥ २३ ॥

**संजय उवाच—एवमुक्तो हृषीकेशो गुडाकेशेन भारत ॥**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥**
**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ॥**
**उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥**

आ० टी०-एवमर्जुनेन प्रेरितो भगवानहिंसारूपं धर्ममाश्रित्य प्रायशो युद्धात्तं निवर्तयिष्यतीति धृतराष्ट्रस्य मनीषां दुदूषयिषुः संजयो राजानं प्रत्युक्तवानित्याह—**संजय इति** । भागवतोऽपि भूभारापहारार्थं प्रवृत्तस्यार्जुनाभिप्रायप्रतिपत्तिद्वारेण स्वाभिसंधिं प्रतिलभमानस्य परोक्तिमनुसृत्य स्वाभिप्रायानुकूलमनुष्ठानमादर्शयति—**एवमिति** । भीष्मद्रोणादीनामन्येषां च राज्ञामन्तिके रथं स्थापयित्वा भगवान्किं कृतवानिति तदाह—**उवाचेति** । एतानभ्यासे वर्तमानान्कुरून्कुरुवंशप्रसूतान्भवद्भिः सार्धं युद्धार्थं संगतान्पश्य । दृष्ट्वा च यैः सहात्र युयुत्सा तवोपावर्तते तैः साकं युद्धं कुरु । नो खल्वेतेषां शस्त्रास्त्रशिक्षावतां महीक्षितामुपेक्षोपपद्यते, सारथ्ये तु न मनः खेदनीयमित्यर्थः ॥ २४ ॥ २५ ॥

राघ० टी-एवं गुडाकेशेन गुडाकायाः निद्रायाः ईशेन जितनिद्रेणार्जुनेनोक्तो हृषीकेशः सर्वेंद्रियप्रेरकः श्रीकृष्णः दलद्वयमध्ये ॥ २४ ॥ भीष्मद्रोणप्रमुखतस्तदभिमुखेन तथा सर्वेषां च महीक्षितां राज्ञां प्रमुखत इति बुद्ध्या विविक्तेनान्वयः । रथं स्थापयित्वा हे पार्थ ! अत्र 'अवृद्धाभ्योनदीमानुषीभ्यस्तन्नामिकाभ्यः' इति पृथाशब्दादपत्यर्थे अण्प्रत्यये पार्थेतिरूपं ध्येयं समवेतान् युद्धार्थं मीलितानेतान् कुरून् पश्येत्युवाचेति ॥२५॥

रा० भा०-स च तेन चोदितस्तत्क्षणादेव भीष्मद्रोणादीनां सर्वेषामेव महीक्षितां पश्यतां यथाचोदितमकरोत् । ईदृशी भवदीयानां विजयस्थितिरिति चावोचत् ॥ २४ ॥ २५ ॥

अ० टी०-एवमर्जुनवाक्यं श्रुत्वोभयोः सेनयोर्मध्ये रथमास्थाप्यार्जुनं प्रत्युवाच भगवान् इत्याह संजयो द्वाभ्यां-एवमुक्त इति द्वयेन । एवं गुडाकेशेन जितनिद्रेणार्जुनेन उक्तो हृषीकेशः उभयोः सेनयोर्मध्ये रथोत्तमं स्थापयित्वाऽर्जुनं प्रत्युवाच हृषीकेशत्वात्तत्प्रेरकः स्वयमेवेति न विमनस्कत्वम् । भीष्मद्रोणौ च परमयुद्धविशारदाविति तत्प्रमुखतः रथं स्थापयित्वा सर्वेषां महीक्षितां राज्ञां च । हे पार्थ ! समवेतान् मिलितान् कुरूनेतान् पश्येत्युवाच ॥ २४ ॥ २५ ॥

नी० टी०-रथोत्तमं स्थापयित्वा उवाचेति द्वयोः संबंधः ॥ २४ ॥ महीक्षितां पृथिवीश्वराणाम् ॥२५॥

**तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ॥**
**आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥**
**श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥**

आ० टी०-एवं स्थिते महानधर्मो हिंसेति विपरीतबुद्ध्या युद्धादुपरिरंसा पार्थस्य संप्रवृत्तेति कथयति—**तत्रेत्यादिना**। सप्तम्या भगवदभ्यनुज्ञाने समरसमारम्भाय संप्रवृत्ते सतीत्येतदुच्यते। सेनयोरुभयोरपि स्थितान्पार्थोऽपश्यदिति संबन्धः। अथशब्द-स्तथाशब्दपर्यायः। श्वशुरा भार्याणां जनयितारः। सुहृदो मित्राणि कृतवर्मप्रभृतयः॥ २६ ॥

राघ० टी०-तत्रेत्यस्य विवरणं-सेनयोरुभयोरपीति। तथेति समुच्चये ॥ २६ ॥

रा० भा०-स तु पार्थो महामनाः परमकारुणिको दीर्घबन्धुः परमधार्मिकः सभ्रातृको भवद्भिरतिघोरैर्मारणैर्जतुगृहादिभिरसकृद्वञ्चितोऽपि परमपुरुषसहायेनात्मना हनिष्यमाणान्भवदीयान्विलोक्य बन्धुस्नेहेन परमया च कृपया धर्मभयेन चातिमात्रखिन्नसर्वगात्रः सर्वथाहं नयोत्स्यामीत्युक्त्वा बन्धुविश्लेषजनितशोकसंविग्नमानसः सशरं चापमुत्सृज्य रथोपरि उपाविशत् ॥ २६ ॥

अ० टी०-एवं भगवदुक्तोऽर्जुनस्तान्दृष्टवानित्याह सार्धेन-तत्रेति। तत्र संग्रामाजिरे उभयोः सेनयोरपि मध्ये स्थितानेतानपश्यत्। पितॄन् पितृव्यान् इत्यर्थः। सखीन् बाल्ये क्रीडायां संमतान् ॥ २६ ॥

नी० टी०-पितॄन् पितृव्यादीन् भूरिश्रवःप्रभृतीन्। पितामहान् भीष्मादीन्। मातुलान् शल्यादीन्। भ्रातॄन् दुर्योधनादीन्। पुत्रान् लक्ष्मणादीन्। पौत्रान् लक्ष्मणादिपुत्रान्। सखीन् अश्वत्थामादीन्। सुहृदः कृतवर्मादीन् ॥ २६ ॥

**तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥**
**कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ॥ २७ ॥**

आ० टी०-सेनाद्वये व्यवस्थितान्यथोक्तान्पितृपितामहादीनालोच्य परमकृपापरवशः सन्नर्जुनो भगवन्तमुक्तवानित्याह—**तानिति**। विषीदन्यथोक्तानां पित्रादीनां हिंसासंरम्भनिबन्धनं विषादमुपतापं कुर्वन्नित्यर्थः॥ २७ ॥

राघ० टी०-तानवस्थितान् सर्वान् बंधून् समीक्ष्यैवेत्येवकारान्वयः। विषीदन् विषादं कुर्वन् विषादो नाम मोहनिमित्तकाच्छोकाद्यन्मनोदौर्बल्यं यस्मिन् सति सर्वव्यापारोपरमो भवति स इति ज्ञेयम्। इदमब्रवीदित्युक्तम् ॥ २७ ॥

रा० भा०-॥ २७ ॥

अ० टी०-सुहृदो मित्राणि तत्पार्श्वेपि स्थित्वा स्वश्रेयो विचारकांस्तान्दृष्ट्वा किं कृतवान् इत्यत आह-तानिति। तान् समीक्ष्य कौन्तेयः विषीदन् इदमग्रे वक्ष्यमाणमब्रवीत्। ननु क्षत्रियाणां युद्धोत्सवं दृष्ट्वोत्साह एवोचितोऽर्जुनस्य कथं विषादो जायते इत्यत आह-**कृपया परयाविष्ट इति**। परया भक्तिरूपया आविष्टः सर्वभूतेषु यः पश्येदित्यादिरूपया। ननु तथासति राज्यापगमे लोकरक्षा न भविष्यतीति। तत्रापि सा मे कथमाविर्भूतेत्यतआह-बंधून् इति। तेपि स्वबांधवा राज्यरक्षणसमर्थाः स्वयं तु भगवच्चरणैकतत्पर इति ॥ २७ ॥

नी० टी०-॥ २७ ॥

**अर्जुन उवाच–दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥ २८ ॥**

आ० टी०–तदेवेदंशब्दवाच्यं वचनमुदाहरति–**दृष्ट्वेति**। आत्मीयं बन्धुवर्गं युद्धेच्छया युद्धभूमावुपस्थितमुपलभ्य शोकप्रवृत्तिं दर्शयति–**सीदन्तीति**। देवांशस्यैवार्जुनस्यानात्मविदः स्वपरदेहेष्वात्मात्मीयाभिमानवतस्तत्प्रियस्य युद्धारम्भे तन्मृत्युप्रसङ्गदर्शनशोको महानासीदित्यर्थः ॥ २८ ॥

राघ० टी०–अर्जुनवाक्यमाह–**दृष्ट्वेममित्यादिना**ऽध्यायसमाप्ति। हे कृष्ण सर्वलोककर्षक! तदुक्तं गीताभाष्ये पंचमेऽध्याये नियमनादिना सकललोककर्षणात् कृष्णः। तच्चोक्तं। 'यतः कर्षसि देवेश नियम्य सकलं जगत् ॥ अतो वदंति मुनयः कृष्णं त्वां ब्रह्मवादिनः' इति च महाकौर्मे इत्युक्तेः। युयुत्सुं योद्धुमिच्छंतं सम्यगवस्थितमिमं बंधुजनं दृष्ट्वा मम गात्राणि हस्ताद्यवयवाः सीदंति विशीर्यंते। षद्ऌ विशरणगत्यवसादनेष्विति धातोः मुखे म्लानता च जायते ॥ २८ ॥

रा० भा०–॥ २८ ॥

अ० टी०–तथाभूतोऽर्जुनो वाक्यान्याह–**दृष्ट्वेममिति**। हे कृष्ण! इमं युयुत्सुं योद्धुकामं समुपस्थितं सम्यक्प्रकारेणोपस्थितमनिवर्तिनं स्वजनं दृष्ट्वा मम गात्राणि सर्वांगानि सीदन्ति विशीर्यन्ते। मुखं च परितः बाह्याभ्यंतरभेदेनेत्यर्थः ॥ २८ ॥

नी० टी०–कृपया स्नेहेन स च स्वजनमिति विशेषणेन प्रदर्श्यते। सीदंति निश्चेष्टानि भवंति ॥ २८ ॥

**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥**
**गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ॥ २९ ॥**

आ० टी०–अङ्गेषु व्यथा मुखे परिशोषश्चेत्युभयं शोकलिङ्गमुक्तं संप्रति वेपथुप्रभृतीनि भीतिलिङ्गान्युपन्यस्यति–**वेपथुश्चेति**। रोमहर्षो रोम्णां गात्रेषु पुलकितत्वम् ॥ २९ ॥

राघ० टी०–शरीरे कंपो रोमांचश्च जायते धनुर्हस्तात्पतति त्वक् च परितप्यत एव ॥ २९ ॥

रा० भा०–॥ २९ ॥

अ० टी०–**वेपथुश्चेति**। एतत्सर्वं भवति। शक्नोमि इति अवस्थातुं न च समर्थोऽस्मीति भावः ॥ २९ ॥

नी० टी०–रोमहर्षो रोमांचः ॥ २९ ॥

**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥**
**निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३० ॥**

आ० टी०–किंचाधैर्यमपि संवृत्तमित्याह–**न चेति**। मोहोऽपि महान्भवतीत्याह–**भ्रमतीवेति**। विपरीतनिमित्तप्रतीतेरपि मोहो भवतीत्याह–**निमित्तानीति**। तानि विपरीतानि निमित्तानि यानि वामनेत्रस्फुरणादीनि ॥ ३० ॥

राघ० टी०–अवस्थातुं च न शक्नोमि मनश्च मे भ्रमतीव विपरीतानि निमित्तानि पश्यामि केशव ब्रह्मरुद्रप्रवर्तक! कश्च ईशश्च केशौ सृष्ट्यादिना प्रवर्तयतीति व्युत्पत्तेः केशपदोपपदात् वृतु वर्तन इत्यतोंतर्णितण्यर्थात्

डप्रत्यये रूपसिद्धेः। उक्तं हि स्थितप्रज्ञस्य का भाषेत्येतद्भाष्ये 'हिरण्यगर्भः कः प्रोक्त ईशः शंकर एव च ॥ सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्' इति ॥ ३० ॥

रा० भा०-॥ ३० ॥

अ० टी०-किं च। हे केशव दुष्टगुणव्याप्तयोरपि मोक्षदायक! विपरीतानि निमित्तानि पश्यामि असमर्थः युद्धं कृत्वा राज्यादिकरणरूपाणि तानि तथाभूतानि सर्वाणि पश्यामि भगवदीयस्य तथात्वमनुचितामिति भावः ॥ ३० ॥

नी० टी०-निमित्तानि लोकक्षयकराणि भूमिकंपादीनि ॥ ३० ॥

**न च श्रेयो नु पश्यामि हत्वा स्वजनमाहवे ॥**
**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥ ३१ ॥**

आ० टी०-युद्धे स्वजनहिंसया फलानुपलम्भादपि तस्मादुपरिरंसा जायत इत्याह—**न चेति**। प्राप्तानां युयुत्सूनां हिंसया विजयो राज्यं सुखानि च लब्धुं शक्यानीति कुतो युद्धादुपरतिरित्याशङ्क्याऽऽह—**न काङ्क्ष इति** ॥ ३१ ॥

राघ० टी०-युद्धे न श्रेयो लभ्यत इत्यत आह-**न चेति**। श्रेयश्च न पश्यामि। आहवे युद्धे। विजयादि फलं च नेच्छामि ॥ ३१ ॥

रा० भा०-॥ ३१ ॥

अ० टी०-तदेवाह-**नचेति**। स्वजनमाहवे संग्रामे हत्वा अनु पश्चात् श्रेयो न पश्यामि श्रेयो भगवत्कृपात्मिकां भक्तिमित्यर्थः। अतएव भगवतोक्तं। 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ॥ न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह' इति ॥ ३१ ॥

नी० टी-०॥ ३१ ॥

**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥**
**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥**

आ० टी०-किमिति राज्यादिकं सर्वाकाङ्क्षितत्वान्न काङ्क्ष्यते तेन हि पुत्रभ्रात्रादीनां स्वास्थ्यमाधातुं शक्यमित्याशङ्क्याऽऽह-**किमिति**। राज्यादीनामाक्षेपे हेतुमाह—**येषामिति** ॥ ३२ ॥ ३३ ॥

राघ० टी०-येषां प्रयोजननिमित्तं राज्याद्यपेक्षितं नोऽस्माकं त इमे बांधवाः प्राणान् धनानि च त्यक्त्वा युद्धेऽवस्थिताः ॥ ३२ ॥ ३३ ॥

रा० भा०-॥ ३२ ॥ ३३ ॥

अ० टी०-तद्विनाहं विजयं राज्यं च न कांक्षे तज्जनितानि सुखान्यपि चकारेण भक्तावपि सुखानि न कांक्षे यतो भगवत्तोषहेतुस्तापएवेतिभावः। पुनर्विस्तरेण तदाकांक्षित्वाभावं प्रपंचयति-**किंनो राज्येनेति**। नः राज्येन किं? भोगैर्वा किं? जीवितेन वा किं? हे गोविंद! त्वां विना एतैर्न किंचित्प्रयोजनमस्माकमिति भावः। गोविंदेतिसंबोधनेन यथा व्रजवासिनां त्वमिन्द्रो भूत्वा सुखभोगं कारितवांस्तथैव भक्तानामु-

चितमिति भावो ज्ञाप्यते ॥ ३२ ॥ ननु तवैकस्य नाकांक्षा तथापि स्वकीयसंबन्धिनां सर्वेषामर्थे शत्रून्मारयित्वा राज्यं स्वकीयं कुर्वित्याशंकायामाह—**येषामर्थ इति**। येषामर्थे नः राज्यमाकांक्षितं भोगाः सुखानि च कांक्षितानि ते सर्व इमे प्राणान् धनानि च त्यक्त्वा युद्धे संग्रामे मरणार्थमवस्थिता इत्यर्थः। तस्मादेतन्मारणेन लौकिकसिद्धिरपि नास्माकमिति भावः ॥ ३३ ॥

नी० टी०—॥ ३२ ॥ ३३ ॥

**आचार्याः पितरः पुत्रास्तथैव च पितामहाः ॥**
**मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥ ३४ ॥**

आ० टी०—तानेव विशिनष्टि—**आचार्या इति**। श्याला भार्याणां भ्रातरो धृष्टद्युम्नप्रभृतयः ॥ ३४ ॥

राघ० टी०—ते के इत्यत आह—**आचार्या इति**। नैवेच्छामीत्येवकारान्वयः ॥ ३४ ॥

रा० भा०—॥ ३४ ॥

अ० टी०—तान् सर्वान्नामभिर्गणयति—**आचार्या इति**। एते राज्यभोगे नियुक्तास्ते त्वत्र मरणार्थमुपस्थितास्तन्मारणानंतरं स्वस्यानपेक्षितत्वात् राज्यभोगसुखादिभिर्न किंचित्कार्यमित्यर्थः ॥ ३४ ॥

नी० टी०—स्याला इति स्यालशब्दो दंत्यादिः। विजामातुरुत वाघास्यालादिति मंत्रवर्णात्। स्याल्लाजानावपतीति वा लाजा लाजतेः स्यं शूर्पं स्यतेरिति यास्कः ॥ ३४ ॥

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५ ॥**

आ० टी०—वध्येष्वपि स्वराज्यपरिपन्थिष्वाततायिषु कृपाबुद्ध्या स्वधर्माद्युद्धात्पूर्वोक्तमोहादिवशात्प्रच्युतिं प्रदर्शयति—**एतानिति**। जिघांसन्तं जिघांसीयादिति न्यायादेतेषां हिंसा न दोषायेत्याशङ्क्याऽऽह—**घ्नतोऽपीति**। पृथिवीप्राप्त्यर्थं हि हननमेतेषामिष्यते न च तत्प्राप्तिः समीहितेति कैमुतिकन्यायेन दर्शयति—**अपीति**। न हि महदपि त्रैलोक्यलक्षणं राज्यं लब्धुं स्वजनहिंसायै मनो मदीयं स्पृहयति पृथिवीप्राप्त्यर्थं पुनर्बन्धुवधं न श्रद्दधामीति किं वक्तव्यमित्यर्थः ॥ ३५ ॥

राघ० टी०—यदि मां युद्धान्निवृत्तमेते हन्युस्तर्हि घ्नतोपि हंतॄनपि नैव हंतुमिच्छामीत्यर्थः। हे मधुनाम दैत्यमर्दन! कैमुत्यन्यायेनाप्याह—**अपीति**। त्रैलोक्यराज्यस्यापि हेतोः एतान् हंतुं नेच्छामि किमुत महीमात्रनिमित्तमिति ॥ ३९ ॥

रा० भा०—॥ ३९ ॥

अ० टी०—ननु त्वत्संबंधिनोपि ये युद्धार्थमुपस्थितास्तांश्चेत्त्वं न मारयिष्यसि तदा त एव त्वां मारयिष्यंतीति चेत्तत्राह—**एतानिति**। हे मधुसूदन! मां घ्नतोपि एतानहं हंतुं नेच्छामि मधुसूदनेति संबोधनेन त्वत्सहायवन्तं मामेते मारयितुमेव न समर्था इति ज्ञाप्यते। त्रैलोक्यराज्यस्यापि हेतोस्तथाकर्तुं नेच्छामि किं पुनः महीकृते तथा करिष्यामि ॥ ३९ ॥

नी० टी०—हंतुं इच्छाऽपि मम न भवति किमुत हंतृत्वमित्यर्थः। महीकृते पृथिव्यर्थे ॥ ३९ ॥

निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ॥
पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥

**आ० टी०**–दुर्योधनादीनां शत्रूणां निग्रहे प्रीतिप्राप्तिसंभवाद्युद्धं कर्तव्यमित्याशङ्क्याऽऽह—**निहत्येति** । यदि पुनरमी दुर्योधनादयो न निगृह्येरन्भवन्तस्तर्हि तैर्निगृहीता दुःखिताः स्युरित्याशङ्क्याऽऽह—**पापमेवेति** । यदीमे दुर्योधनादयो निर्दोषानेवास्मानकस्माद्युद्धभूमौ हन्युः, तदैतानग्निदो गरदश्चेत्यादिलक्षणोपेतानाततायिनो निर्दोषस्वजनहिंसाप्रयुक्तं पापं पूर्वमेव पापिनः समाश्रयेदित्यर्थः । अथवा यद्यप्येते भवन्त्याततायिनस्तथाऽप्येतानतिशोच्यान्दुर्योधनादीन्हिंसित्वा हिंसाकृतं पापमस्मानेवाऽऽश्रयेदतो नास्माभिरेते हन्तव्या इत्यर्थः । अथवा गुरुभ्रातृसुहृत्प्रभृतीनेतान्हत्वा वयमाततायिनः स्याम ततश्चैतान्हत्वा तत्कृतं पापमाततायिनोऽस्मानेव समाश्रयेदिति युद्धादुपरमणमस्माकं श्रेयस्करमित्यर्थः ॥ ३६ ॥

**राघ० टी०**–किं च धार्तराष्ट्रान् निहत्य नोऽस्माकं का प्रीतिः किमैहिकं सुखं न किमपि नापि पारत्रिकं प्रत्युत पारत्रिकदुःखहेतुः पापमेवास्मानाश्रयेत् । न जायत इति जनः अर्दयति संसारमित्यर्दनः जनश्चासावर्दनश्च जनार्दनः तस्य संबुद्धिः उक्तं ह्येवमेव दशमगीताभाष्ये । आततायिनः 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहृत् ॥ क्षेत्रदारापहारी च षडेते ह्याततायिनः ' इत्युक्तलक्षणान् ॥ ३६ ॥

**रा० भा०**–॥ ३६ ॥

**अ० टी०**–हे जनार्दन सर्वाविद्यानाशक ! धार्तराष्ट्रान् ज्ञानदृष्टिरहितानेतान् निहत्य नः का प्रीतिः स्यात् । न कापीत्यर्थः । जनार्दनेति संबोधनेन त्वदीयानामस्माकं तथाकरणमनुचितमिति भावो व्यंजितः ते तु धृतराष्ट्रात्मजा इति त्वां न पश्यन्ति तेन तेषां तथा करणमुचितमिति धार्त्तराष्ट्रेति पदेन व्यंजितम् । यद्वा । अस्मदीयान् धार्त्तराष्ट्रान्निहत्य तव का प्रीतिः स्यात् अत्रायं भावः । लौकिकभावेन ते त्वस्मदीया एव । तन्मारणे नास्माकं तु प्रीतिः स्यात्तदा त्वत्प्रीत्यर्थं हन्तव्याः । अस्माकं यथाकथंचित् त्वं प्रीणनीय इति भावः । ननु ते आततायिन इति 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्त्ता च षडेते ह्याततायिनः ॥ आततायिनमायांतं हन्यादेवाविचारयन् । नाततायिवधे दोषो हंतुर्भवति कश्चन' इत्यादिवाक्यैः प्रीतिर्भवतु मा वा सर्वथैतेऽप्युक्तसर्वदोषसहिता इति हंतव्या एव ते तु स्वपापेनैव हंतव्यास्त्वं निमित्तमात्रं भवेति चेत्तत्राह–**पापमेवाश्रयेदिति** । आततायिन एतान् हत्वा पापमस्मानेवाश्रयेत् । किं च । आततायिमारणे दोषाभावस्तु धर्मशास्त्रविचारेणार्थशास्त्रविचारेण वा निरूपितो न तु भक्तिविचारेण भक्तिमार्गात्तु तयोर्दुर्बलत्वात्तन्मारणेनास्माकं पापमेव भवेत् पापाच्च भगवत्संबंधो न स्यादतएव 'नराणां क्षीणपापानाम्' इति निरूपितम् ॥ ३६ ॥

**नी० टी०**–आततायिनः । 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः ॥ आततायिनमायांतं हन्यादेवाविचारयन् । नाततायिवधे दोषो हंतुर्भवति कश्चन' इति यद्यप्येवं तथापि एतान्हत्वा अस्मान्पापमेव आश्रयेत् । आततायिवधो हि अर्थशास्त्रविहितः । न हिंस्यात्सर्वभूतानीति तु धर्मशास्त्रं तच्च पूर्वस्मात्प्रबलं । यथोक्तं याज्ञवल्क्येन । 'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः ॥ अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः' इति अस्मान्हत्वा एतान् आततायिनः पापमेवाश्रयेदित्यपरा योजना तथा च एत एवास्मद्वधेन नश्यंतु न तु वयमेतेषां वधेन नंक्ष्याम इति भावः ॥ ३६ ॥

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ॥
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥

आ० टी०—फलाभावादनर्थसंभवाच्च परहिंसा न कर्तव्येत्युपसंहरति—**तस्मादिति**। किंच राज्यसुखमुद्दिश्य युद्धमुपक्रम्यते न च स्वजनपरिक्षये सुखमुपपद्यते तेन न कर्तव्यं युद्धमित्याह—**स्वजनं हीति** ॥ ३७ ॥

**राघ० टी०**—तस्मात्सीदंति मम गात्राणीत्यादिनोक्तोपपत्तिबलात् सबांधवान् धार्तराष्ट्रान् हंतुं वयं नार्हाः। 'आततायिनमायांतं हन्यादेवाविचारयन् ॥ नाततायिवधे दोषो हंतुर्भवति कश्चन' इत्युक्तेस्तेषामाततायित्वेन हंतव्यतया प्राप्तत्वेपि तद्धननप्रसक्त्या बंधूनामपि हननप्राप्तेर्न हंतुं वयं योग्या इति भावः। बंधुत्वेप्याततायिसंबंधित्वात्तेपि बंधुजना हंतव्या एवेत्यत आह—**स्वजनं हीति**। स्याम भवेम तद्दर्शनस्पर्शनसंभाषणादेरभावप्राप्तेरिति भावः ॥ ३७ ॥

**रा० भा०**—॥ ३७ ॥

**अ० टी०**—तस्माद्वयं त्वदीयत्वादेतन्मारणानर्हा इत्याह—**तस्मादिति**। तस्माद्वयं स्वबान्धवान्धार्त्तराष्ट्रान् हंतुं नार्हा न योग्या इत्यर्थः। हे माधव! स्वजनं हत्वा कथं सुखिनः स्याम सुखिनो भविष्याम इत्यर्थः। वयमित्युक्त्या भगवतः स्वमध्यपातित्वमुक्तम्। तेनास्माकं त्वत्संग एव सुखरूपस्त्वमेवास्माकं स्वजन इतिज्ञापितम्। तस्मात्स्वजनापराधात् स्वजननाशः स्यादस्माकं च त्वमेव स्वजन इति। त्वत्संबंधाभावे वयं कथं सुखिनो भविष्याम इति व्यंजितम्। माधवेतिसंबोधनेनास्माकं न लक्ष्म्याद्यपेक्षितेति ज्ञापितम् ॥ ३७ ॥

**नी० टी०**—॥ ३७ ॥

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ॥**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥**

आ० टी०—कथं तर्हि परेषां कुलक्षये स्वजनहिंसायां च प्रवृत्तिस्तत्राऽऽह—**यद्यपीति**। लोभोपहतबुद्धित्वात्तेषां कुलक्षयादिप्रयुक्तदोषप्रतीत्यभावात्प्रवृत्तिविस्रम्भः संभवतीत्यर्थः ॥ ३८ ॥

**राघ० टी०**—कुत एवं बुद्ध्या तेऽनिवृत्ता इत्यत आह—**यद्यपीति**। एते दुर्योधनादयो राज्यलोभेनोपहतचेतसो नष्टधर्मज्ञानाः दोषं पातकं च न पश्यंति यद्यपि ॥ ३८ ॥

**रा० भा०**—॥ ३८ ॥

**अ० टी०**—ननु ये स्वजनत्वादिवधदोषमविचार्य प्रवृत्तास्ते निवृत्तमपि त्वां हनिष्यंत्यतस्त्वमप्यविचार्यैवैतान्मारयेत्याशंक्याह—**यद्यप्येतइति द्वाभ्याम्**। लोभेन उपहतं विभ्रंशितं चेतः मनो येषां ते एते धार्त्तराष्ट्राः कुलक्षयकृतं कुलक्षयकरणं दोषं यद्यपि न पश्यंति मित्रद्रोहे च यत्पातकं तन्न पश्यंति तथापि पातकं तु भविष्यत्येवेत्यर्थः ॥ ३८ ॥

**नी० टी०**—॥ ३८ ॥

**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ॥**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥**

आ० टी०—परेषामिवास्माकमपि प्रवृत्तिविस्रम्भः संभवेदिति चेन्नेत्याह—**कथमिति**। कुलक्षये मित्रद्रोहे च दोषं प्रपश्यद्भिरस्माभिस्तद्दोषशब्दितं पापं कथं न ज्ञातव्यं तदज्ञाने तत्परिहारासंभवादतोऽस्मात्पापान्निवृत्त्यर्थं तज्ज्ञानमपेक्षितमिति पापपरिहारार्थिनामस्माकं न युक्ता युद्धे प्रवृत्तिरित्यर्थः ॥ ३९ ॥

राघ० टी०-तथापि हे जनार्दन जननरहितसंसारार्दन ! कुलक्षयकृतं दोषं प्रपश्यद्भिरस्माभिरस्माद्दोषान्निवर्तितुं कथं न ज्ञेयम् ॥ ३९ ॥

रा० भा०-॥ ३९ ॥

अ० टी०-हे जनार्दन अविद्यानाशक ! त्वत्स्वरूपविद्भिः कुलक्षयकृतं दोषं प्रपश्यद्भिरस्माभिर्लोभानुपहतचित्तैरस्मात्पापान्निवर्त्तितुं कथं न ज्ञेयम् । ज्ञेयमेवेत्यर्थः ॥ ३९ ॥

नी० टी०-ननु 'आहूतो न निवर्त्तेत द्यूतादपि रणादपि' इति विजितं क्षत्रियस्येति च युद्धादनिवृत्तिर्हिंसया च वृत्तिः क्षत्त्रियस्येष्टा तत्कथं युद्धान्निवृत्तिमिच्छसीत्याशंक्याह-कथमिति । साहि लोभमूलिका स्मृतिः कुलक्षयदोषविधिना बाध्यते यथा । "औदुंबरीं स्पृष्ट्वोद्गायेत्" इति स्पर्शनविधिना विरुद्धा सती "औदुंबरी सर्वा वेष्टयितव्या" इति सर्ववेष्टनस्मृतिर्बाध्यते लोभमूलकत्वात्तद्वत् । न हि विधिमात्राद्यत्किंचित्कर्त्तव्यं श्येनादीनामधर्मरूपाणामप्यवश्यानुष्ठेयत्वापत्तेः तस्माद्यत्फलतो न दुष्यति तदेव विहितं धर्मरूपमनुष्ठेयं । यथोक्तं । 'फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते ॥ केवलं प्रीतिहेतुत्वात्तद्धर्म इति कथ्यते ' इति । श्येनादिवत्पापानुबंधित्वात् युद्धं त्याज्यमेवेत्यर्थः ॥ ३९ ॥

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ॥**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥**

आ० टी०-कोऽसौ कुलक्षये दोषो यद्दर्शनाद्युष्माकं युद्धादुपरतिरपेक्ष्यते तत्राऽऽह—**कुलेति** । कुलस्य हि क्षये कुलसंबन्धिनश्चिरंतना धर्मास्तत्तदग्निहोत्रादिक्रियासाध्या नाशमुपयान्ति कर्तुरभावादित्यर्थः । धर्मनाशेऽपि किं स्यादिति चेत्तत्राऽऽह—**धर्म इति** । कुलप्रयुक्ते धर्मे कुलनाशादेव नष्टे कुलक्षयकरस्य कुलं परिशिष्टमखिलमपि तदीयो धर्मोऽभिभवत्यधर्मभूयिष्ठं तस्य कुलं भवतीत्यर्थः ॥ ४० ॥

राघ० टी०-कः कुलक्षयकृतो दोष इत्यत आह-कुलक्षय इति।सनातनाः परंपराप्राप्ताः कुलधर्माः क्षत्रियादिकुलधर्माः उतशब्दोऽप्यर्थे अवशिष्टं कृत्स्नमपि कुलमधर्मोभिभवति अधर्माक्रांतं भवति ॥ ४० ॥

रा० भा०-॥ ४० ॥

अ० टी-एवमुक्त्वा कदाचिल्लौकिकस्नेहवशादेव निवृत्तो नतु पापस्वरूपज्ञानादधर्मबुद्ध्येत्याशंक्य कुलक्षयकृतं दोषमनुवदति-कुलक्षय इति पंचभिः । सनातनाः प्राचीनाः परंपराप्राप्ताः कुलधर्माः कुलक्षये कृते जाते वा प्रणश्यंति प्रकर्षेण नश्यंति पुनरुदयाभावः प्रकर्षः । तस्माद्वयं पार्थाः पृथासंबंधेन त्वयांगीकृता इत्यस्माकं परंपरागतो धर्मस्त्वद्भक्तिस्तन्नाशकपापादस्माकं विनिवृत्तिरेवोचितेति भावः । नन्विदानीं धर्मनाशेप्यग्रे प्रल्हादादिवत्कुले कोपि भक्तो भवेच्चेत्तदा धर्मः पुनरुद्भविष्यति तस्माच्छौर्यक्षात्रधर्मानाशकत्वेन युद्धकरणमेवोचितमित्यत आह-धर्मे नष्ट इति । उत कृत्स्नमवशिष्टमपि कुलं धर्मे नष्टे सति अधर्मोभिभवति व्याप्नोतीत्यर्थः ॥ ४० ॥

नी० टी०-प्रणश्यंति अनुष्ठातॄणां वृद्धानामभावात् अवशिष्टं बालादिरूपं वंशं धर्मलोपादधर्मोऽभिभवति ॥ ४० ॥

**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ॥**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥**

**आ० टी०**—कुलक्षयकृतोऽवशिष्टकुलस्याधर्मप्रवणत्वे को दोषः स्यादिति तत्राऽऽह—**अधर्मेति** । पापप्रचुरे कुले प्रसूतानां स्त्रीणां प्रदुष्टत्वे किं दुष्यति तत्राऽऽह—**स्त्रीष्विति** ॥ ४१ ॥

**राघ० टी०**—वार्ष्णेय वृष्णिकुलोद्भव ॥ ४१ ॥

**रा० भा०**—॥ ४१ ॥

**अ० टी०**—तेनाग्रेपि कोपि तथा न भवतीत्याह—**अधर्माभिभवादिति** । अधर्माभिभवादधर्मव्याप्ताः कुलस्त्रियः प्रदुष्यंति व्यभिचारादिदोषयुक्ता भवंतीत्यर्थः । स्त्रीषु दुष्टासु जातासु वर्णसंकरो जायते । वार्ष्णेयेति संबोधनेन सत्कुलोत्पन्नानां तथात्वं कुलेनुचितमितिज्ञापितम् ॥ ४१ ॥

**नी० टी०**—दुष्टासु पुत्रार्थं वर्णांतरमुपासीनासु ॥ ४१ ॥

**संकरो नरकायैव कुलघ्नानां कुलस्य च ॥**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥**

**आ० टी०**—वर्णसंकरस्य दोषपर्यवसायितामादर्शयाति—**संकर इति** । कुलक्षयकराणां दोषान्तरं समुच्चिनोति—**पतन्तीति**- कुलक्षयकृतां पितरो निरयगामिनो भवन्तीत्यत्र हेतुमाह—**लुप्तेति** । पुत्रादीनां कर्तॄणामभावाल्लुप्ता पिण्डस्योदकस्य च क्रिया येषां ते तथा, ततश्च प्रेतत्वपरावृत्तिकारणाभावान्नरकपतनमेवाऽऽवश्यकमापतेदित्यर्थः ॥ ४२ ॥

**राघ० टी०**—**कुलस्य चेति** पुत्रपौत्रसंतानस्य चेत्यर्थः । एषां कुलघ्नानां पितरः लुप्तपिंडा लुप्तोदकक्रियाश्च संतः नरके पतंति ॥ ४२ ॥

**रा० भा०**—॥ ४२ ॥

**अ० टी०**—संकराच्च नरक एव स्यादित्याह—**संकर इति** । संकरः कुलस्य नरकायैव भवति । एवकारेण पापभोगानंतरं नरकोद्धरणाद्यभावो ज्ञापितः । कुलघ्नानामेषां पितरश्च पतन्ति स्वधर्मोपार्जिताजादिलोकेभ्यः । हीति युक्तश्चायमर्थः । यतो लुप्तपिंडोदकक्रियाः लुप्ताः पिंडोदकाः क्रिया येषाम् ॥ ४२ ॥

**नी० टी०**—कथं तर्हि जामदग्न्येन रामेण क्षत्रियेषु हतेषु तत्स्त्रियः पुनःपुनर्ब्राह्मणेभ्यः पुत्रान् जनयामासुरित्युपाख्यायते । कथं वा धृतराष्ट्रादीनां असंकरजत्वमित्याशंक्याह—**पतंतीति** । हिशब्दो वैदिकीं प्रसिद्धिं द्योतयति । सा हि "न शेषो अग्ने अन्यजातमस्ति" इति श्रुतिः । अन्यस्माज्जातं शेषोऽपत्यं नास्तीति तदर्थः । अन्योदर्यो मनसाऽपि न मंतव्यो ममायं पुत्र इति यास्कवचनाच्च । ये यजामह इति शास्त्रात् ये वयं स्मस्ते वयं यजामह इत्यर्थकाद्दश्यमानस्य पित्रादेः संशयग्रस्तत्वादयं मम पितैवेति निश्चयस्य दुःसाध्यत्वात् मंत्रश्च योऽहमस्मि स सन्यजे ब्राह्मणेऽर्थवादश्च । न चैतद्विद्मो ब्राह्मणाः स्मो वयमब्राह्मणा वेति । तस्माद्बीजपतेरेव पिंडादिप्राप्तिर्न तु क्षेत्रपतेरिति लुप्तपिंडोदकक्रियत्वादवश्यं पितॄणां पातो भवति क्षेत्रजपुत्रस्मृतिस्तु इह लोके वंशस्थापनमात्रपरा न तु तेन क्षेत्रपतेः कश्चिदामुष्मिक उपकारोऽस्ति उदाहृतश्रुतिविरोधात् । अयं च संकरोऽस्माभिः स्वयं कृतश्चेदवश्यमस्मान्बाधिष्यत एवेति भावः ॥ ४२ ॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ॥
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥

आ० टी०-कुलक्षयकृतामेतैरुदाहृतैर्दोषैर्वर्णसंकरहेतुभिर्जातिप्रयुक्ता वंशप्रयुक्ताश्च धर्माः सर्वे समुत्साद्यन्ते तेन कुलक्षयकारणाद्युद्धादुपरतिरेव श्रेयसीत्याह—दोषैरिति ॥ ४३ ॥

राघ० टी०-उक्तदोषमुपसंहरति-दोषैरिति द्वाभ्याम् । जातिधर्माः क्षत्त्रियत्वादिजातिप्रयुक्तधर्माः कुलधर्माश्च शाश्वताः परंपराप्राप्ताः ॥ ४३ ॥

रा० भा०-॥ ४३ ॥

अ० टी०-किं च कुलघ्नानां तु नरको भवत्येवात्र किं वाच्यम् । यतस्तत्संबंधात्सर्वत्रैव भूमौ धर्मनाशो भवतीत्याह-दोषैरेतैरिति । दोषैरेतैर्वर्णसंकरकारकैरेतैः कुलघ्नानां दोषैर्जातिधर्माः शाश्वताः कुलधर्मा उत्साद्यन्ते लुप्यंतइत्यर्थः । चकारेणाश्रमादिधर्माश्च परिगृह्यंते ॥ ४३ ॥

नी० टी०-एतदेव विवृणोति द्वाभ्यां-दोषैरिति ॥ ४३ ॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ॥
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥

आ० टी०-किंच जातिधर्मेषु चोत्सन्नेषु तत्तद्धर्मवर्जितानां मनुष्याणामनधिकृतानां नरकपतनध्रौव्यादनर्थकरमिदमेव हेयमित्याह—उत्सन्नेति । यथोक्तानां मनुष्याणां नरकपातस्याऽऽवश्यकत्वे प्रमाणमाह—इत्यनुशुश्रुमेति ॥ ४४ ॥

राघ० टी०-उत्सन्नकुलधर्माणामुत्सन्नजातिधर्माणां चेत्यपि ज्ञेयम् अनुशुश्रुम 'प्रायश्चित्तमकुर्वाणाः पापेषु नियता नराः ॥ अपश्चात्तापिनः कष्टान्निरयान्यांति दारुणान्' इत्यादिविदद्भिः वृद्धैः श्रुतवंतः स ॥ ४४ ॥

रा० भा०-॥ ४४ ॥

अ० टी०-एवं सर्वधर्मलोपात्सर्वेषां नरकलोको भवतीत्याह--उत्सन्नकुलधर्माणामिति । हे जनार्दन ! उत्सन्नकुलधर्माणां मनुष्याणां नियतं नरके वासो भवतीति वयमनुशुश्रुम श्रुतवंत इत्यर्थः । जनार्दनेति संबोधनेन त्वत्संबंधरहितास्तथाभवंति अविद्यासंबंधादिति ज्ञापितम् ॥ ४४ ॥

नी० टी०-॥ ४४ ॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ॥
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥

आ० टी०-राज्यप्राप्तिप्रयुक्तसुखोपभोगलुब्धतया स्वजनहिंसायां प्रवृत्तिरस्माकं गुणदोषविभागविज्ञानवतामातिकष्टेति परिभ्रष्टहृदयः सन्नाह—अहो बतेति ॥ ४५ ॥

राघ०टी०-एवं बंधुवधस्य दोषहेतुत्वाध्यवसायेन संतप्यमानोऽर्जुन आह-अहोबतेति । राज्यसुखलोभेन स्वजनं हंतुं वयमुद्यता इति यत् तदेतन्महत् पापं कर्तुमध्यवसिताः निश्चयवंतो वयमहो बत महत्कष्टमिति॥४५॥

रा० भा०-॥ ४५ ॥

अ० टी०—नन्वेतादृशी बुद्धिश्चेत्तदा पूर्वं कथं युद्धव्यवसायः कृतइत्याशंक्य पूर्वमज्ञानात्कृतमितिपश्चात्तापं करोति—अहोबतेति । बतइति खेदे वयं महत्पापं कर्तुं व्यवसिता अध्यवसायं कृतवन्त इत्यर्थः । पापस्वरूपमेवाह—यद्राज्येति । यद्यस्मात्कारणाद्राज्यसुखलोभेन स्वजनं हन्तुमुद्यता उद्यमं कृतवन्त इत्यर्थः । अहो इत्याश्चर्यम् यतो राज्यसुखं तु स्वजनैः सहैव स्वजनार्थं वा तानेव हंतुमुद्यता इत्याश्चर्यम् ॥ ४५ ॥

नी० टी०—॥ ४५ ॥

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ॥**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥**

आ० टी०—यद्येवं युद्धे विमुखः सन्परपरिभवप्रतीकाररहितो वर्तेथास्तर्हि त्वां शस्त्रपरिग्रहरहितं शत्रुं शस्त्रपाणयो धार्तराष्ट्रा निगृह्णीयुरित्याशङ्कयाऽऽह—यदीति । प्राणत्राणादपि प्रकृष्टो धर्मः प्राणभृतामहिंसेति भावः ॥ ४६ ॥

राघ० टी०—एवं संतप्तः सन् मृतिमेवार्थयमान आह—यदीति । अकृतप्रतीकारमशस्त्रं तूष्णीमासीनं मां यदि शस्त्रपाणयो धार्तराष्ट्राः रणे हन्युस्तर्हि तत् हननं मे क्षेमतरमत्यंतं हितमेव भवेत् । बंधुवधदोषाभावाद्रणे हननेन गतिसंभवाच्चेति भावः ॥ ४६ ॥

रा० भा०—॥ ४६ ॥

अ० टी०—ननु त्वंचेन्न हनिष्यासि तदैते त्वां हनिष्यंत्येवेति चेत्तत्राह—यदिमामिति । धार्त्तराष्ट्रा अंधापत्यानि यदि वा अप्रतीकारम् अकृतप्रतीकारमशस्त्रं शस्त्ररहितं मां शस्त्रपाणयः संतो हन्युः हनिष्यंति तन्मे क्षेमतरं भवेत् । कल्याणरूपं भवेदित्यर्थः । पूर्वकृतव्यवसायप्रायश्चित्तरूपं भवेदित्यर्थः । अजिघांसंतं मां हनिष्यंति चेत्तदा क्षेमरूपं भवेत् तव संनिधौ मरणे च क्षेमतरं भवेत् इति भावः ॥ ४६ ॥

नी० टी०—॥ ४६ ॥

**संजय उवाच—एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ॥**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥ १ ॥**

आ० टी०—यथोक्तमर्जुनस्य वृत्तान्तं संजयो धृतराष्ट्रं राजानं प्रति प्रवेदितवांस्तमेव प्रवेदनप्रकारं दर्शयति—एवमिति । प्रदर्शितेन प्रकारेण भगवन्तं प्रति विज्ञापनं कृत्वा शोकमोहाभ्यां परिभूतमानसः सन्नर्जुनः संख्ये युद्धमध्ये शरेण सहितं गाण्डीवं त्यक्त्वा न योत्स्येऽहमिति ब्रुवन्मध्ये रथस्य संन्यासमेव श्रेयस्करं मत्वोपविष्टवानित्यर्थः ॥ ४७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने प्रथमोऽध्यायः ॥ १ ॥

राघ० टी०–ततः किं जातमिति धृतराष्ट्रहार्दं परिहरति संजय इत्याह–संजय उवाचेति। संख्ये रणे रथोपस्थे रथमध्ये उपाविशत्। कथं शोकेन कंपिताचित्तः सन् सशरं चापं विसृज्येति ॥ ४७ ॥

इतिश्रीमद्भगवद्गीतार्थसंग्रहे राघवेंद्रयतिकृते प्रथमोध्यायः ॥ १ ॥

रा० भा०–॥ ४७ ॥

इति श्रीमद्भगवद्रामानुजाचार्यकृते गीताभाष्ये प्रथमोऽध्यायः ॥ १ ॥

अ० टी०–ततः किं कृतवानित्यपेक्षायां संजय आह। एवमुक्त्वा अर्जुनः संख्ये संग्रामे रथोपस्थे रथोपरि स्थितः भक्त्यंतरायत्वेन युद्धोपक्रान्तिराज्यानाकांक्षणेपि भगवदनुत्तरे भक्तिज्ञानार्थं शोकसंविग्नमानसो भूत्वा सशरं चापं विसृज्य उप समीपे भगवत आविशत् स्थित इत्यर्थः ॥ ४७ ॥

एवमस्मिन्नध्यायेऽर्जुनस्य विषादे लोकशास्त्रातिक्रमो हेतुत्वेनोक्तः। न चार्त्ताधिकारस्याग्रिमाध्यायारंभ एव सिद्धेरस्याध्यायस्य किं प्रयोजनमिति शंक्यं कृपावेशबोधनार्थत्वेन सप्रयोजनत्वात्। अत एव पाद्मे गीतामाहात्म्ये 'तस्मादध्यायमाद्यं यः पठेद्यः संस्मरेत्तथा॥ अभ्यासादस्य न भवेद्भवांभोधि सुदुस्तर' इति फलमुक्तं तस्मादुपोद्घातसंगतिः॥

इति श्रीमद्भगवद्गीताटीकायां गीतामृतरंगिण्यां प्रथमोऽध्यायः ॥ १ ॥

नी०टी०–संख्ये संग्रामे ॥ ४७ ॥

इति श्रीनैलकंठीये भारतभावदीपे भीष्मपर्वप्रकाशे भगवद्गीतासु प्रथमोऽध्यायः ॥ १ ॥

## अथ द्वितीयोऽध्यायः ॥ २ ॥

**संजय उवाच—तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ॥**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥**

**आ० टी०**—अहिंसा परमो धर्मो भिक्षाशनं चेत्येवंलक्षणया बुद्ध्या युद्धवैमुख्यमर्जुनस्य श्रुत्वा स्वपुत्राणां राज्यैश्वर्यमप्रचलितमवधार्य स्वस्थहृदयं धृतराष्ट्रं दृष्ट्वा तस्य दुराशामपनेष्यामीति मनीषया संजयस्तं प्रत्युक्तवानित्याह—**संजय इति** । परमेश्वरेण स्मार्यमाणोऽपि कृत्याकृत्ये सहसा नार्जुनः सस्मार विपर्ययप्रयुक्तस्य शोकस्य दृढतरमोहहेतुत्वात्तथाऽपि तं भगवान्नोपेक्षितवानित्याह—**तं तथेति** । तं प्रकृतं पार्थं तथा स्वजनमरणप्रसङ्गदर्शनेन कृपया करुणयाऽऽविष्टमधिष्ठितमश्रुभिः पूर्णे समाकुले चेक्षणे यस्य तमश्रुव्याप्ततरलाक्षं विषीदन्तं शोचन्तमिदं वक्ष्यमाणं वाक्यं सोपपत्तिकं वचनं मधुनामानमसुरं सूदितवानिति मधुसूदनो भगवानुक्तवान्न तु यथोक्तमर्जुनमुपेक्षितवानित्यर्थः ॥ १ ॥

**राघ० टी०**—ततः किं जातमिति धृतराष्ट्रस्यापेक्षायां संजय उवाच—तं तथेति । उक्तदिशा कृपयाविष्टमेवं विषण्णमर्जुनं भगवानुवाच—कुत इत्यादिद्वाभ्यां श्लोकाभ्याम् ॥ १ ॥

**रा० भा०**—॥ १ ॥

**अ० टी०**—श्रीकृष्णाय नमः ॥ 'शोकसागरसंमग्नं पार्थं स्वीयत्वभावतः । कृष्णः स्वसांख्ययोगाभ्यामुज्जहार दयापरः ॥' पूर्वाध्याये शोकसंविग्नमानसोऽर्जुनः सशरं चापमुत्सृज्योपाविशदित्युक्तम् । ततः किं जातमित्याकांक्षायां संजय आह—तं तथेति । तमर्जुनमाविष्टं स्वस्मिन् अश्रुभिः पूर्णे आकुले ईक्षणे यस्य तं तथा विषीदंतं पूर्वोक्तप्रकारेण खिद्यंतं मधुसूदनः सर्वमारणसमर्थः कृपया इदं वाक्यम् अग्रे उच्यमानमुवाच ॥ १ ॥

**नी० टी०**—अर्जुने युद्धादुपरते मत्पुत्रा निष्कंटकं राज्यं प्राप्स्यंतीत्याशावंतं राजानं प्रति संजय उवाच—तं तथेति । तमर्जुनं तथा । स्वजनं हि कथं हत्वा सुखिनः स्याम माधवेत्युक्तप्रकारेण कृपया स्नेहेन न तु दयया परदुःखप्रहाणेच्छारूपया तस्याः परदौर्बल्यनिश्चयोत्तरभाविन्याः अर्जुने यदि वा नो जयेयुरिति स्वपराजयमाशंकमाने दुर्भणत्वात् । यानेव हत्वा न जिजीविषाम इति स्नेहातिशयसूचकवाक्यशेषविरोधाच्च आविष्टं व्याप्तं विषीदंतं सीदंति मम गात्राणीत्यादिना उक्तरूपं विषादं प्राप्नुवंतं इदं वक्ष्यमाणं वाक्यं वचनीयं उवाच मधुसूदन इति दुष्टहंतृत्वादेवार्जुनं निमित्तीकृत्य त्वत्पुत्रानपि हनिष्यत्येवेति त्वया जयाशा न कार्येति भावः ॥ १ ॥

**श्रीभगवानुवाच—कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ॥**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥**

**आ० टी०**—किं तद्वाक्यमित्यपेक्षायामाह—**श्रीभगवानिति** । कुतो हेतोस्त्वा त्वां सर्वक्षत्रियप्रवरं कश्मलं मलिनं शिष्टगर्हितं युद्धात्पराङ्मुखत्वं विषमे सभयस्थाने समुपस्थितं प्राप्तमनार्यैः शास्त्रार्थमविद्वद्भिर्जुष्टं सेवितमस्वर्ग्यं स्वर्गानर्हं प्रत्यवायकारणमिह चाकीर्तिकरमयशस्करमर्जुननाम्ना प्रख्यातस्य तव नैतद्युक्तमित्यर्थः ॥ २ ॥

**राघ० टी०**—हे अर्जुन ! कुतो हेतोस्त्वा त्वां विषमे संकटे इदं कश्मलमुपस्थितमयं मोहः प्राप्तः । यतः आर्यैरसेवितमस्वर्ग्यं स्वर्गविरोधि अयशस्करं च ॥ २ ॥

रा० भा०-एवमुपविष्टे पार्थे कुतोऽयमस्थाने समुत्थितः शोक इत्याक्षिप्य तमिमं विषमस्थं शोकमविद्वत्सेवितं परलोकविरोधिनमकीर्तिकरम् ॥ २ ॥

अ० टी०-भगवद्वाक्यमेवाह-कुतस्त्वामिति। विषमे असमये अयं युद्धोत्साहसमयो नतु दयाया इत्यस्मिन्समये हे अर्जुन! त्वामिदं कश्मलं कुतः समुपस्थितम् अयं तव मोहः कुतः प्राप्तः। स्वेच्छाज्ञानादस्य कश्मलत्वमुक्तं भगवता। कश्मलं विशिनष्टि विशेषणत्रयेण। अनार्यजुष्टं न विद्यते आर्यत्वं येषु तैः सेवितम्। अस्वर्ग्यं न विद्यते स्वर्गो यस्मात्तेन धर्मप्रतिपक्षतोक्ता। अकीर्त्तिकरं कीर्त्तिनाशकं तेन क्षात्त्रधर्मनाशकत्वेन कुलधर्मप्रतिपक्षकत्वमुक्तम् ॥ २ ॥

नी० टी०-अर्जुनमुद्योजयन् श्रीभगवानुवाच-कुत इति। कश्मलं वैक्लव्यं विषमे युद्धसंकटे अनार्यैर्भीरुभिर्जुष्टं सेवितं न तु त्वादृशैः शूरैः न आर्यैर्जुष्टमिति वा यत्तु आर्यैरजुष्टमिति विग्रहो दर्शितस्तदैक्येऽपि पदव्युत्क्रमदोषादुपेक्ष्यं अत एवास्वर्ग्यमकीर्त्तिकरं च हे अर्जुन स्वच्छस्वभाव! तव नैतद्युक्तमिति भावः ॥ २ ॥

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ॥**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥**

आ० टी०-पुनरपि भगवानर्जुनं प्रत्याह-**क्लैब्यमिति**। क्लैब्यं क्लीबभावमधैर्यं मा स्म गमो मा गा हे पार्थ पृथातनय! न हि त्वयि महेश्वरेणापि कृताहवे प्रख्यातपौरुषे महामहिमन्येतदुपपद्यते क्षुद्रं क्षुद्रत्वकारणं हृदयदौर्बल्यं मनसो दुर्बलत्वमधैर्यं त्यक्त्वोत्तिष्ठ युद्धायोपक्रमं कुरु। हे परंतप! परं शत्रुं तापयतीति तथा संबोध्यते ॥ ३ ॥

राघ० टी०-तस्मात् क्लैब्यं कातर्यं मास्मगमः नैव प्राप्नुहि। हे पार्थ! तत् क्लैब्यं त्वयि नोपपद्यते योग्यं न भवति। क्षुद्रं लाघवकरं हृदयदौर्बल्यं कातर्यं त्यक्त्वोत्तिष्ठ युद्धाय सन्नद्धो भव। हे परंतप! परं शत्रुं तापयतीति शत्रुतापन! द्विषत्परयोस्तापेरिति खशि खित्यनव्ययस्येति मुमागमः ॥ ३ ॥

रा० भा०-अतिक्षुद्रं हृदयदौर्बल्यकृतं परित्यज्य युद्धायोत्तिष्ठेति श्रीकृष्ण उवाच ॥ ३ ॥

अ० टी०-अयं धर्मस्तव नोचित इत्याह। हे पार्थ! क्षत्रियकुलोद्भव! क्लैब्यं नपुंसकधर्मकातर्यं मा स्म गमः मा प्राप्नुहि। एतत् त्वयि न उपपद्यते। क्षुद्रं तुच्छम् अक्षुद्रे न स्यात्। हे परंतप शत्रुतापन! हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ सावधानो भव युद्धायेति शेषः ॥ ३ ॥

नी० टी०-तदेवाह-क्लैब्यमिति। क्लैब्यं निर्वीर्यत्वं न च शक्नोम्यवस्थातुमित्युक्तरूपं मा गाः नैतत् त्वयि महादेवप्रतिभटे युक्तं अतः क्षुद्रं तुच्छं हृदयकृतमेव तव दौर्बल्यं न तु शक्तिसहायाद्यभावकृतं तत्त्यक्त्वा उत्तिष्ठ युद्धाय परंतप शत्रुतापन ॥ ३ ॥

**अर्जुन उवाच-कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ॥**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥**

आ० टी०-एवं भगवता प्रतिबोध्यमानोऽपि शोकाभिभूतचेतस्त्वादप्रतिबुध्यमानः सन्नर्जुनः स्वाभिप्रायमेव प्रकृतं भगवन्तं प्रत्युक्तवान्-**कथमित्यादिना**। भीष्मं पितामहं द्रोणं चाऽऽचार्यं संख्ये रणे हे मधुसूदन! इषुभिः सायकैस्तौ कथं प्रतियोत्स्ये, तौ हि पूजार्हौ कुसुमादिभिरर्चनयोग्यौ, हेऽरिसूदन! सर्वानेवारीनयत्नेन सूदितवानिति भगवानेवं संबोध्यते ॥ ४ ॥

राघ० टी०–पुनः स्नेहकारुण्यतया व्याकुलो भगवदुक्तं हितमजानन् अर्जुन उवाच कथमित्यादिपंचभिः श्लोकैः। हे मधुदैत्यघातक! शत्रुनिबर्हण! संख्ये युद्धे भीष्मं द्रोणं कथमहमिषुभिर्बाणैः प्रतियोत्स्यामि कुतः यतस्तौ पूजार्हौ पूजनीयौ तौ ततइति ॥ ४ ॥

रा० भा०–पुनरपि पार्थः स्नेहकारुण्यधर्माधर्मभयाकुलो भगवदुक्तं हिततममजानन्निदमुवाच। भीष्मद्रोणादिकान्बहुमन्तव्यान् गुरून्कथमहं हनिष्यामि ॥ ४ ॥

अ० टी०–एवमुत्तोलकभगवद्वाक्यं श्रुत्वा अहं कातर्येण युद्धान्नापक्रान्तः किंतु धर्मबुद्ध्येत्यर्जुनो भगवंतं विज्ञापयामास–कथमित्यादिषड्भिः। हे मधुसूदन! मधुदैत्यमारणेन मथुरास्थापनेन भक्तपरिपालक! अहं संख्ये संग्रामे भीष्मं द्रोणं च इषुभिश्शरैः कथं प्रतियोत्स्यामि प्रतिकूलतया योत्स्यामीत्यर्थः। भीष्मस्य भक्तत्वान्मारणमनुचितं द्रोणस्यापि गुरुत्वात्तथेति द्रोणं चेत्यनेन ज्ञापितम्। भीष्मद्रोणौ च पूजार्हौ पूर्वोक्तप्रकारेण। हे अरिसूदन शत्रुमारक! अनेन संबोधनेनैतौ भक्तद्विजौ नतु शत्रू ततः कथं मारणार्थं मां प्रवर्त्तयसीति ज्ञापितम् ॥ ४ ॥

नी० टी०–ननु शत्रवो वा स्वभावदुष्टा वा तापनीयाः न तु बांधवाः साधवश्चेत्यर्जुन उवाच–कथमिति। मधुसूदनारिसूदनेति संबोधयन् तवापि दुष्टानपि शत्रूनेव तापयतः पूजार्हौ अदुष्टौ गुरू च भीष्मद्रोणौ जहीति वक्तुमयुक्तमिति सूचयति समानार्थकमिदं संबोधनद्वयं वक्तुः शोकेन विक्लवत्वान्न पौनरुक्त्यदोषावहमित्यन्ये इषुभिरिति ताभ्यां सहवाचापि योद्धुमशक्यं किमुत बाणैरिति भावः ॥ ४ ॥

## गुरूनहत्वा हि महानुभावाञ्छ्रेयो भोक्तुं भैक्षमपीह लोके ॥
## हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ५ ॥

आ० टी०–राज्ञां धर्मेऽपि युद्धे गुर्वादिवधे वृत्तिमात्रफलत्वं गृहीत्वा पापमारोप्य ब्रूते—गुरूनिति। गुरून्भीष्मद्रोणादीन्भ्रात्रादींश्चात्र प्राप्तानहिंसित्वा महानुभावान्महामाहात्म्याञ्श्रुताध्ययनसंपन्नाञ्श्रेयः प्रशस्यतरं युक्तं भोक्तुमभ्यवहर्तुं भैक्षं भिक्षाणां समूहं भिक्षाशनं नृपादीनां निषिद्धमपीह लोके व्यवहारभूमौ। न हि गुर्वादिहिंसया राज्यभोगोऽपेक्ष्यते। किं च हत्वा गुर्वादीनर्थकामानेव भुञ्जीय न मोक्षमनुभवेयमिहैव भोगो न स्वर्गे। अर्थकामानेव विशिनष्टि—भोगानिति। भुज्यन्त इति भोगास्तान्रुधिरप्रदिग्धाँल्लोहितलिप्तानिवात्यन्तगर्हितानतो भोगान्गुरुवधादिसाध्यान्परित्यज्य भिक्षाशनमेव युक्तमित्यर्थः ॥ ५ ॥

राघ० टी०–ननु चैतदहनने राज्याप्राप्तेर्देहनिर्वाहो न स्यादित्यत आह–गुरूनिति। महानुभावान् भगवद्भक्त्यादिगुणसंपन्नान् द्रोणादिगुरून् अहत्वा इह लोके भैक्ष्यं भिक्षयोपलब्धमन्नं भोक्तुं श्रेयः परं पारत्रिकदुःखाभावादिति भावः। हि यतोतो न योत्स्यामीत्यन्वयः। न केवलं तेषां हनने पारत्रिकदुःखं इहाप्यतिदुःखमित्याह–हत्वेति। अर्थं कामयंत इत्यर्थकामान् गुरून् हत्वा तैर्भुज्यमानान् तानेव भोगान् तद्रुधिरेण प्रदिग्धान् प्रकर्षेण लिप्तान् तदीयासनेष्वेवोपविश्य भुंजीय अनुभवेयं तदेतत्परलोकदुःखादतिशयितमितिभावः ॥ ५ ॥

रा० भा०–कथन्तरां भोगेष्वतिमात्रसक्तांस्तान् हत्वा तैर्भुज्यमानांस्तानेव भोगांस्तद्रुधिरेणोपसिच्य तेष्वासनेषूपविश्य भुञ्जीय ॥ ५ ॥

अ० टी०–गुरूणां मारणाद्भिक्षाटनं श्रेयो न तु तन्मारणेन राज्यभोग इत्याह–गुरूनिति। गुरून्भीष्मद्रोणादीन् अहत्वा इह लोके भैक्षं भिक्षान्नमपि भोक्तुं श्रेयः श्रेयोरूपमित्यर्थः। यतस्ते महानुभावाः। महतो भगवतोऽनुभावका इत्यर्थः। इह लोके तथा भोगेन परलोके सुखं स्यादितीह लोकपदेन ज्ञापितम्। एतेषां

मारणेन तु परलोकएव दुःखं भविष्यतीति न किंत्विह लोक एव नरकादिसमं दुःखं भविष्यतीत्याह—हत्वेति । अर्थकामान् अर्थात्मकान् गुरून् हत्वा तु इहैव रुधिरप्रदिग्धान् रुधिरावलिप्तान् भुंजीय अश्नीयाम् ॥ ५ ॥

नी० टी०—ननु युद्धोद्यतानां गुरूणामपि वधः श्रेयानित्याशंक्याह—गुरूनिति । यद्यपि त्वदुक्तं प्रशस्तमेव तथापि महानुभावान् गुरूनहत्वा भैक्षमेव भोक्तुं श्रेयः प्रशस्ततरं । एवं तर्हि गुरूंस्त्यक्त्वा दुर्योधनादीनेव दुष्टान् जहीत्याशंक्याह—अर्थकामानिति ।धनार्थिनो गुरवोऽवश्यं दुर्योधनसाहाय्यं करिष्यंति तेन तद्वधोऽपि प्रसक्त एवेत्यर्थः । तुशब्दः पक्षांतरोपन्यासार्थः । इहैव न तु परलोके भुंजीयेति संप्रश्ने लिङ् गुरूनहत्वा भैक्षं श्रेयः उत हत्वा भोगसंपादनं श्रेय इति संप्रश्ने स्वयमेवांत्यपक्षे दूषणमाह—रुधिरप्रदिग्धानिति ॥ ५ ॥

**न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ॥**
**यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥**

आ० टी०—क्षत्रियाणां स्वधर्मत्वाद्युद्धमेव श्रेयस्करमित्याशङ्क्याऽऽह—न चैतदिति । एतदपि न जानीमो भैक्ष्ययुद्धयोः कतरन्नोऽस्माकं गरीयः श्रेष्ठं किं भैक्षं हिंसाशून्यत्वादुत युद्धं स्ववृत्तित्वादिति । संदिग्धा च जयस्थितिः । किं साम्यमेवोभयेषां यद्वा वयं जयेमातिशयीमहि यदि वा नोऽस्मान्धार्तराष्ट्रा दुर्योधनादयो जयेयुः । जातोऽपि जयो न फलवान्यतो यान्बन्धून्हत्वा न जिजीविषामो जीवितुं नेच्छामस्त एवावस्थिताः प्रमुखे संमुखे धार्तराष्ट्रा धृतराष्ट्रस्यापत्यानि तस्माद्भैक्षाद्युद्धस्य श्रेष्ठत्वं न सिद्धमित्यर्थः ॥ ६ ॥

राघ० टी०—पापमंगीकृत्य युद्धकरणेपि जयः संदिग्ध एवेत्याह—न चैतदिति । द्वयोर्मध्ये नोस्माकं कतरत् किन्नाम गरीयः अधिकतरं भविष्यतीति न विद्मः । तदेव द्वयमाह । यद्वा एतान् वयं जेष्यामः यदि वा नोस्मान् एते जयेयुः जेष्यंतीति । किं चास्माकं जयोपि पराजय एव फलत इत्याह—यानेवेति । यानेव हत्वा जीवितुं नेच्छामस्त एवैते धार्तराष्ट्राः संमुखेवस्थितास्तस्मात् ॥ ६ ॥

रा० भा०—एवं युद्धमारभ्य निवृत्तव्यापारान् भवतो धार्त्तराष्ट्राः प्रसह्य हन्युरिति चेत् अस्तु तद्वधलब्धविजयादधर्म्यादस्माकं धर्माधर्मावजानद्भिस्तैर्हननमेव गरीय इति मे प्रतिभाति ॥ ६ ॥

अ० टी०—किं च । अधर्मांगीकारेणापि तथाकर्त्तव्यं यद्यस्मज्जय एवेत्यस्माकं हि तज्ज्ञानं निश्चितं स्यादित्याह—न चैतदिति । वयमेतच्च न विद्मः यद्द्वयोर्मध्ये कतरत् नोऽस्माकंगरीयः श्रेष्ठमधिकं भवति यद्वयं तान् जयेम यदि वा एते नोऽस्मान् जयेयुः जेष्यंति अस्मद्विचारेण त्वस्माकं जयादपि तेषामेव जयो गरीयस्त्वेन भातीत्याह—यानेवेति । यान् हत्वा वयं न जिजीविषामो न तु जीवितुमिच्छामस्त एवैते धार्त्तराष्ट्राः पितृव्यजा भ्रातरः । प्रमुखे युद्धार्थमवस्थिताः । अत एतान् हत्वा किं करिष्याम इत्यर्थः ॥ ६ ॥

नी० टी०—एवं तर्हि भैक्षमेव तव श्रेय इत्याशंक्याह—न चैदिति । यद्यप्यक्षत्त्रियस्य भैक्षमेवेष्टं तथापि नः अस्माकं क्षत्त्रियाणां भैक्षभोगयोर्मध्ये कतरत् गरीय इति वयं न विद्मः । ननूक्तं युद्धमेव गरीय इति तत्राह—यद्वेति । यदि वा वयं जयेम शत्रुन् यदि वा नोऽस्मान् शत्रव एव जयेयुः इदमपि न विद्मः अंत्यपक्षे पुनर्मरणमप्रार्थितं भैक्षमेव वाऽऽपद्यत इति भावः । ननु मयि सहाये सति तव जय एव निश्चित इत्यत आह—यानेवेति । इष्टनाशाजयोऽपि पराजयरूप एवेत्यर्थः। यत्तु निश्चितेऽपि भैक्षश्रेयस्त्वे पुनर्युद्ध-

भैक्षयोः कतरत् श्रेय इति संशयो नोचितः अतो नः अस्माकं मध्ये कतरत् सैन्यं गरीय इति व्याख्येयमिति तदसत्। धर्मसंमूढचेता इति वाक्यशेषादुक्तसंशयस्यैवोचितत्वात् सैन्यगरीयस्त्वसंशयेनैव जयसंशयेऽन्यथासिद्धेऽन्यतरसंशयस्य वैयर्थ्यात् विशेषाध्याहारदोषाच्च ॥ ६ ॥

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ॥**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥**

आ० टी०—समधिगतसंसारदोषजातस्यातितरां निर्विण्णस्य मुमुक्षोरुपसन्नस्याऽऽत्मोपदेशसंग्रहणेऽधिकारं सूचयति—**कार्पण्येति**। योऽल्पां स्वल्पामपि स्वक्षतिं न क्षमते स कृपणस्तद्विधत्वादखिलोऽनात्मविदप्राप्तपरमपुरुषार्थतया कृपणो भवति "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः। तस्य भावः कार्पण्यं दैन्यं तेन दोषेणोपहतो दूषितः स्वभावश्चित्तमस्येति विग्रहः। सोऽहं पृच्छाम्यनुयुञ्जे त्वा त्वां धर्मसंमूढचेता धर्मो धारयतीति परं ब्रह्म तस्मिन्संमूढमविवेकतां गतं चेतो यस्य ममेति तथाऽहमुक्तः। किं पृच्छसि, यन्निश्चितमैकान्तिकमनापेक्षिकं श्रेयः स्यान्न रोगनिवृत्तिवदनैकान्तिकमनात्यन्तिकं स्वर्गवदापेक्षिकं वा तन्निःश्रेयसं मे मह्यं ब्रूहि नापुत्रायाशिष्यायेति निषेधान्न प्रवक्तव्यमिति मा मंस्थाः यतः शिष्यस्तेऽहं भवामि। शाध्यनुशाधि मां निःश्रेयसं त्वामहं प्रपन्नोऽस्मि ॥ ७ ॥

राघ० टी०—कार्पण्यदोषेण एतान् हत्वा कथं जीविष्याम इति कृपणतादोषेणाभिभूतशौर्यलक्षणस्वभावः धर्मसंमूढचेताः धर्मे संमूढं संदिग्धं चेतो यस्य स तथोक्तः। तादृशोहं त्वा त्वां पृच्छामि यच्छ्रेयः स्यात् भिक्षाटनयुद्धयोर्मध्ये निश्चितं तत् मे ब्रूहि किं चाहं ते शिष्यः शासनार्हः अतस्त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय ॥ ७ ॥

रा० भा०—इत्युक्त्वा यन्मह्यं श्रेय इति निश्चितं तच्छरणागताय तव शिष्याय मे ब्रूहीत्यतिमात्रकृपणो भगवत्पादाम्बुजमुपससार ॥ ७ ॥

अ० टी०—एवं स्वविचारमुक्त्वा तस्य दोषरूपतां वदन् भगवदाज्ञां करिष्यमाण आह—**कार्पण्यदोषोपहतस्वभाव इति**। कार्पण्यं बंधुमारणानुचितज्ञानरूपं तद्रूपो यो दोषस्तेन उपहतः स्वभावः क्षात्रः शौर्यादिरूपो यस्य तादृशस्त्वां पृच्छामि। ननु उपहतस्वभावस्य विकलस्य किं प्रश्नेनेत्यत आह—**धर्मसंमूढचेता इति**। धर्मे धर्मज्ञानार्थं संमूढं चेतो यस्य सः। एतन्मारणे त्वं प्रसन्नः किं वा अमारणे एतन्मध्येऽन्यद्वा यच्छ्रेयः श्रेयोरूपं त्वत्प्रसादरूपं स्यात्तन्मे निश्चितं ब्रूहि अहं ते शिष्यो नतु मित्रमतस्त्वां प्रपन्नं शरणागतं धर्मजिज्ञासया मां त्वं शाधि शिक्षय ॥ ७ ॥

नी० टी०—उक्तसंशयवानेव पृच्छति-**कार्पण्येति**। कार्पण्यं दीनत्वं स्वभावः शौर्यं तेजो धृतिर्दाक्ष्यमित्यादिना वक्ष्यमाणलक्षणः शेषं स्पष्टम् ॥ ७ ॥

**न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ॥**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाऽऽधिपत्यम् ॥ ८ ॥**

आ० टी०—कुतो निःश्रेयसमेवेच्छसि तत्राऽऽह—**न हीति**। यस्मान्न प्रपश्यामि। किं न पश्यसि। ममापनुद्यादपनयेद्यच्छोकमुच्छोषणं प्रतपनमिन्द्रियाणां तन्न पश्यामि। ननु शत्रून्निहत्य राज्ये प्राप्ते शोकनिवृत्तिस्ते भविष्यति नेत्याह—**अवाप्येति**। अविद्यमानः सपत्नः शत्रुर्यस्य तदृद्धं राज्यं राज्ञः कर्म प्रजारक्षणप्रशासनादि तदिदमस्यां भूमाववाप्यापि शोकापनयकारणं न पश्यामीत्यर्थः। तर्हि देवेन्द्रत्वादिप्राप्त्या शोकापनयस्ते भविष्यति नेत्याह—**सुराणामपीति**। तेषामाधिपत्यमधिपतित्वं स्वाम्यमिन्द्रत्वं ब्रह्मत्वं वा तदवाप्यापि मम शोको नापगच्छेदित्यर्थः ॥ ८ ॥

राघ० टी०—त्वमेव विचार्य यद्युक्तं तत्कुर्वित्याहार्जुनः—नहीति । इंद्रियाणामुच्छोषणमतिशोषकरं मदीयं शोकं यत्कर्मापनुद्यात् अपनयेत् तदहं न प्रपश्यामि राज्यलोभहेतुयुद्धकर्मैव तादृशमित्यत आह—अवाप्येति । यद्यपि भूमौ निष्कंटकं समृद्धं राज्यं प्रपश्यामि । तथा सुराणां देवानामाधिपत्यं च प्राप्स्यामि एवमभीष्टं सर्वमवाप्यापि शोकापनोदनोपायं न प्रपश्यामीत्यर्थः । हत्वार्थकामानित्युक्तदिशा सर्वस्यापि दुःखहेतुत्वादितिभावः ॥ ८ ॥

रा० भा०—॥ ८ ॥

अ० टी०—ननु मित्रत्वाच्छरणागतत्वाच्च यथेच्छा तव भवति तथैव मया कर्त्तव्यमिति चेत्तत्राह—नहीति । भूमौ असपत्नमद्वितीयं शुद्धं सर्वविभूतिमद्राज्यमवाप्य प्राप्यापरत्र सुराणामाधिपत्यमिन्द्रैश्वर्यमपि प्राप्य इन्द्रियाणामुच्छोषणमतिशोषणकरमभिलाषपूरकं किमपि नास्त्यतो यन्मच्छोकमपनुद्यादपनयेत् तदहं न प्रपश्यामि । अतः किं विज्ञापयामीतिभावः । हीति युक्तश्चायमर्थो यतो दुरापूराणीन्द्रियाणि ॥ ८ ॥

नी० टी०—ननु क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतपेति युद्धमेव श्रेय इत्युक्तं किं पुनः पृच्छसीत्यत आह—न हीति । बंधुनाशनिमित्तः शोको राज्यलाभेन स्वर्गाधिपत्यलाभेन वा न निवर्त्तयिष्यत इति ॥ ८ ॥

**संजय उवाच—एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ॥**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥**

आ० टी०—एवमर्जुनेन स्वाभिप्रायं भगवन्तं प्रति प्रकाशितं संजयो राजानमावेदितवानित्याह—संजय इति । एवं प्रागुक्तप्रकारेण भगवन्तं प्रत्युक्त्वा परंतपोऽर्जुनो न योत्स्ये न संप्रहरिष्येऽत्यन्तासह्यशोकप्रसङ्गादिति गोविन्दमुक्त्वा तूष्णीमब्रुवन्बभूव ह किलेत्यर्थः ॥ ९ ॥

राघ० टी०—ततः किमकरोदर्जुन इति धृतराष्ट्राकांक्षां निरासयन्नाह संजयः—एवमुक्त्वेति । हृषीकेशं सर्वेंद्रियप्रेरकं गुडाकेशोजितनिद्रः परंतपः शत्रुतापनः गोविंदं गाः वेदवाचः प्रतिपादकत्वेन लभत इति गोविंदः तम् । हेत्याश्चर्यमाह शौर्यधैर्यादिगुणवतोप्येवं बुद्धिर्जातेति ॥ ९ ॥

रा० भा०—एवमस्थाने समुपस्थितस्नेहकारुण्याभ्यामप्रकृतिं गतं क्षत्रियाणां युद्धं परमं धर्ममप्यधर्मं मन्वानं धर्मबुभुत्सया च शरणागतं पार्थमुद्दिश्यात्मयाथात्म्यज्ञानेन युद्धस्य फलाभिसन्धिरहितस्यात्मप्राप्त्युपायताज्ञानेन च विनास्य मोहो न शाम्यतीति मत्वा भगवता परमपुरुषेणाध्यात्मशास्त्रावतरणं कृतम् । तदुक्तम् 'अस्थाने स्नेहकारुण्यधर्माधर्मधियाकुलम् । पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम्' इति ॥ ९ ॥

अ० टी०—एवमुक्त्वार्जुनः किं कृतवानित्यतआह—एवमुक्त्वेति । गुडाकेशोऽर्जुनः हृषीकेशं तथोन्द्रियप्रेरकमेवमुक्त्वा पूर्वोक्तप्रकारमुक्त्वा गोविंदं भक्तपरिपालकं न योत्स्य इत्युक्त्वा तूष्णीं बभूव । ह इत्याश्चर्ये भगवदुक्तोपि न राज्यस्य स्पृहालुर्जातः परंतपः उत्कृष्टं तपो यस्येति संबोधनं त्वदीयाः श्रीकृष्णसंमुखे जीवितं त्यक्त्वा कृतार्था भविष्यंति इत्यभिप्रायेण । अत एव पार्थास्त्रपूताः पदमापुरस्येति वचनं गीयते ॥ ९ ॥

नी० टी०—युद्धादन्यं कंचित् निवृत्तिरूपं शमोपायं ब्रूहीत्याशयः अत्रार्जुनविषादव्याजेन ब्रह्मविद्याधिकारिविशेषणं भैक्षचर्या इहामुत्रार्थफलभोगविरागश्च दर्शितः ॥ ९ ॥

तमुवाच हृषीकेशः प्रहसन्निव भारत ॥
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

आ० टी०—तमर्जुनं सेनयोर्वाहिन्योरुभयोर्मध्ये विषीदन्तं विषादं कुर्वन्तमतिदुःखितं शोकमोहाभ्यामभिभूतं स्वधर्मात्प्रच्युतप्रायं प्रतीत्य प्रहसन्निवोपहासं कुर्वन्निव तदाश्वासार्थं हे भारत ! भरतान्वयेत्येवं संबोध्य भगवानिदं प्रश्नोत्तरं निःश्रेयसाधिगमसाधनं वचनमूचिवानित्याह—तमुवाचेति ॥ १० ॥

राघ० टी०—ततः किं जातमित्यत आह–तमुवाचेति । हेभारतेति धृतराष्ट्रसंबोधनम् । प्रहसन्निवेति परिहासकरवाक्योक्तिद्योतकत्वे हासस्य सूचनाय इवशब्दः ॥ १० ॥

॥ इति श्रीराघवेंद्रयतिकृतटीका समाप्ता ॥

रा० भा०—तमेवं देहात्मनोर्याथात्म्याज्ञाननिमित्तशोकाविष्टं देहातिरिक्तात्मज्ञाननिमित्तं च धर्मं भाषमाणं परस्परं विरुद्धगुणान्वितमुभयोः सेनयोर्युद्धायोद्युक्तयोर्मध्ये अकस्मान्निरुद्योगं पार्थमालोक्य परमपुरुषः प्रहसन्निवेदमुवाच । परिहासवाक्यं वदन्निवात्मपरमात्मयाथात्म्यतत्प्राप्त्युपायभूतकर्मयोगज्ञानयोगभक्तियोगगोचरम् 'न त्वेवाहं जातु नासम्' इत्यारभ्य 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।' इत्येतदन्तमुवाचेत्यर्थः ॥ १० ॥

अ० टी०—ततो भगवान् किमुत्तरितवानित्याकांक्षायामाह–तमुवाचेति । हृषीकेशः विषीदंतमर्जुनं प्रहसन्निव उभयोः सेनयोर्मध्ये इदं वचोऽग्रे वक्ष्यमाणमुवाच । स्वोक्ताऽकारिष्वपि स्वीयेषु भगवान् पुर्नवदति विश्वासार्थं संबोधने भारतेति ॥ १० ॥

नी० टी०—तमिति । मूढोऽप्ययममूढवद्वदतीति प्रहसन्निव इदं वक्ष्यमाणम् ॥ १० ॥

श्रीभगवानुवाच–अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ॥
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

शां० भा०—'दृष्ट्वा तु पाण्डवानीकम्' इत्यारभ्य 'न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह' इत्येतदन्तः प्राणिनां शोकमोहादिसंसारबीजदोषोद्भवकारणप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः ।

शां० आ०—अतीतसंदर्भस्येत्थमक्षरोत्थमर्थं विवक्षित्वा तस्मिन्नेव वाक्यविभागमवगमयति—दृष्ट्वात्विति । 'धर्मक्षेत्रे कुरुक्षेत्रे' इत्यादिराद्यश्लोकस्तावदेकं वाक्यं शास्त्रस्य कथासंबन्धपरत्वेन पर्यवसानात्, दृष्ट्वेत्यारभ्य यावत्तूष्णीं बभूव हेति तावच्चैकं वाक्यम्, इत आरभ्य 'इदं वचः' इत्येतदन्तो ग्रन्थो भवत्यपरं वाक्यमिति विभागः । नन्वाद्यश्लोकस्य युक्तमेकवाक्यत्वं प्रकृतशास्त्रस्य महाभारतेऽवतारावद्योतित्वादन्तिमस्यापि संभवत्येकवाक्यत्वमर्जुनाश्वासार्थतया प्रवृत्तत्वात्तन्मध्यमस्य तु कथमेकवाक्यत्वमित्याशङ्क्याथैकत्वादित्याह—प्राणिनामिति । शोको मानसस्तापो मोहो विवेकाभावः । आदिशब्दस्तदवान्तरभेदार्थः । स एव संसारस्य दुःखात्मनो बीजभूतो दोषस्तस्योद्भवे कारणमहंकारो ममकारस्तद्धेतुरविद्या च तत्प्रदर्शनार्थत्वेनेति योजना ।

शां० भा०—तथा ह्यर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसंबन्धिबान्धवेष्वहमेषां ममैत इत्येवंप्रत्ययनिमित्तस्नेहविच्छेदादिनिमित्तावात्मनः शोकमोहौ प्रदर्शितौ 'कथं भीष्ममहं संख्ये' इत्यादिना । शोकमोहाभ्यां ह्यभिभूतविवेकविज्ञानः स्वत एव क्षत्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम । परधर्मं च भिक्षाजीवनादिकं कर्तुं प्रववृते ।

**शां० आ०**-संगृहीतमर्थं विवृणोति—**तथाहीति**। राज्यं राज्ञः कर्म परिपालनादि। पूजार्हा गुरवो भीष्मद्रोणादयः। पुत्राः स्वयमुत्पादिताः सौभद्रादयः। संबन्धान्तरमन्तरेण स्नेहगोचरा गुरुपुत्रप्रभृतयो मित्रशब्देनोच्यन्ते। उपकारनिरपेक्षतया स्वयमुपकारिणो त्वदयानुरागभाजो भगवत्प्रमुखाः सुहृदः। स्वजना ज्ञातयो दुर्योधनादयः। संबन्धिनः श्वशुरश्यालप्रभृतयो द्रुपदधृष्टद्युम्नादयः। परम्परया पितृपितामहादिष्वनुरागभाजो राजानो बान्धवास्तेषु यथोक्तं प्रत्ययं निमित्तीकृत्य यः स्नेहो यश्च तैः सह विच्छेदो यच्च तेषामुपघाते पातकं या च लोकगर्हा सर्वं तन्निमित्तं ययोरात्मनः शोकमोहयोस्तावेतौ संसारबीजभूतौ कथमित्यादिना दर्शिताविति अर्थः। कथं पुनरनयोः संसारबीजयोरर्जुने संभावनोपपद्यते न हि प्रथितमहामहिम्नो विवेकविज्ञानवतः स्वधर्मे प्रवृत्तस्य तस्य शोकमोहावनर्थहेतू संभावितावित्याशङ्क्य विवेकतिरस्कारेण तयोर्विहिताकरणप्रतिषिद्धाचरणकारणत्वादनर्थाधायकयोरस्ति तस्मिन्संभावनेत्याह—**शोकमोहाभ्यामिति**। भिक्षया जीवनं प्राणधारणम्। आदिशब्दादशेषकर्मसंन्यासलक्षणं पारिव्राज्यमात्माभिध्यानमित्यादि गृह्यते।

**शां० भा०**-तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वधर्मपरित्यागः प्रतिषिद्धसेवा च स्यात्। स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनःकायादीनां प्रवृत्तिः फलाभिसंधिपूर्विकैव साहंकारा च भवति। तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टजन्मसुखदुःखसंप्राप्तिलक्षणः संसारोऽनुपरतो भवतीत्यतः संसारबीजभूतौ शोकमोहौ। तयोश्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञानान्नान्यतो निवृत्तिरिति तदुपदिदिक्षुः सर्वलोकानुग्रहार्थमर्जुनं निमित्तीकृत्याऽऽह भगवान्वासुदेवः—अशोच्यानित्यादि।

**शां० आ०**-किं चार्जुने दृश्यमानौ शोकमोहौ संसारबीजं शोकमोहत्वादस्मदादिनिष्ठशोकमोहवदित्युपलब्धौ शोकमोहौ प्रत्येकं पक्षीकृत्यानुमातव्यमित्याह—**तथा चेति**। शोकमोहादीत्यादिशब्देन मिथ्याभिमानस्नेहगर्हादयो गृह्यन्ते स्वभावतश्चित्तदोषसामर्थ्यादित्यर्थः। अस्मदादीनामपि स्वधर्मे प्रवृत्तानां विहिताकरणत्वाद्यभावान्न शोकादेः संसारबीजतेति दृष्टान्तस्य साध्यविकलतेति चेत्तत्राऽऽह—**स्वधर्म इति**। कायादीनामित्यादिशब्दादवशिष्टानीन्द्रियाण्यादीयन्ते। फलाभिसंधिस्तद्विषयोऽभिलाषः। कर्तृत्वभोक्तृत्वाभिमानोऽहंकारः। प्रागुक्तप्रकारेण वागादिव्यापारे सति किं सिध्यति तत्राऽऽह—**तत्रेति**। शुभकर्मानुष्ठानेन धर्मोपचयादिष्टं देवादिजन्म ततः सुखप्राप्तिः, अशुभकर्मानुष्ठानेनाधर्मोपचयादनिष्टं तिर्यगादिजन्म ततो दुःखप्राप्तिः, व्यामिश्रकर्मानुष्ठानादुभाभ्यां धर्माधर्माभ्यां मनुष्यजन्म ततः सुखदुःखे भवतः, एवमात्मकः संसारः संततो वर्तत इत्यर्थः। अर्जुनस्यान्येषां च शोकमोहयोः संसारबीजत्वमुपपादितमुपसंहरति—**इत्यत इति**। तदेवं प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्याऽऽत्मज्ञानोत्थनिवर्तनीयशोकमोहाख्यसंसारबीजप्रदर्शनपरत्वं दर्शयित्वा वक्ष्यमाणसंदर्भस्य सहेतुसंसारनिवर्तकसम्यग्ज्ञानोपदेशे तात्पर्यं दर्शयति—**तयोश्चेति**। तद्यथोक्तं ज्ञानमुपदिदिक्षुरुपदेष्टुमिच्छन्भगवानाहेति संबन्धः। सर्वलोकानुग्रहार्थं यथोक्तं ज्ञानं भगवानुपदिदिक्षतीत्ययुक्तमर्जुनं प्रत्येवोपदेशादित्याशङ्क्याऽऽह—**अर्जुनमिति**। न हि तस्यामवस्थायामर्जुनस्य भगवता यथोक्तं ज्ञानमुपदेष्टुमिष्टं किंतु स्वधर्मानुष्ठानाद्बुद्धिशुद्ध्युत्तरकालमित्यभिप्रेत्योक्तम्—**निमित्तीकृत्येति**।

**शां० भा०**-तत्र केचिदाहुः, सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात्कैवल्यं न प्राप्यत एव किं तर्ह्यग्निहोत्रादिश्रौतस्मार्तकर्मसहिताज्ज्ञानात्कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति। ज्ञापकं चाऽऽहुरस्यार्थस्य—'अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि' 'कर्मण्येवाधिकारस्ते' 'कुरु कर्मैव तस्मात्त्वम्' इत्यादि।

**शां० आ०**-सर्वकर्मसंन्यासपूर्वकादात्मज्ञानादेव केवलात्कैवल्यप्राप्तिरिति गीताशास्त्रार्थः स्वाभिप्रेतो व्याख्यातः संप्रति वृत्तिकृतामभिप्रेतं निरसितुमनुवदति—**तत्रेति**। निर्धारितः शास्त्रार्थः सतिसप्तम्या परामृश्यते। तेषामुक्तिमेव विवृण्वन्नादौ सैद्धान्तिकमभ्युपगमं प्रत्यादिशति—**सर्वकर्मेति**। वैदिकेन कर्मणा समुच्चयं व्युदसितुं मात्रपदम्, स्मार्तेन कर्मणा समुच्चयं निरसितुमवधारणम्। अभ्यासंबन्धं धुनीते—**केवलादिति**। नैवेत्येवकारः संबध्यते। केन तर्हि प्रकारेण ज्ञानं कैवल्यप्राप्तिकारणमित्याशङ्क्याऽऽह—**किं तर्हीति**। किं तत्र प्रापकमित्याशङ्क्येदमेव शास्त्रमित्याह—**इति सर्वास्विति**। यथा प्रयाजानुयाजाद्युपकृतमेव दर्शपौर्णमासादि स्वर्गसाधनं तथा श्रौतस्मार्तकर्मोपकृतमेव ब्रह्मज्ञानं कैवल्यं साधयति। विमतं सेतिकर्तव्यताकमेव स्वफलसाधकं करणत्वाद्दर्शपौर्णमासादिवत्। तदेवं ज्ञानकर्मसमुच्चयपरं शास्त्रमित्यर्थः। इतिपदमाहुरित्यनेन पूर्वेण संबध्यते।

पौर्वापर्यपर्यालोचनायां शास्त्रस्य समुच्चयपरत्वं न निर्धारितमित्याशङ्क्याऽऽह—**ज्ञापकं चेति** । न केवलं ज्ञानं मुक्तिहेतुरपि तु समुच्चितामित्यस्यार्थस्य स्वधर्माननुष्ठाने पापप्राप्तिवचनसामर्थ्यलक्षणं लिङ्गं गमकमित्यर्थः । शास्त्रस्य समुच्चयपरत्वे लिङ्गवद्वाक्यमपि प्रमाणमित्याह—**कर्मण्येवेति** । तत्रैव वाक्यान्तरमुदाहरति—**कुरु कर्मेति** ।

**शां० भा०**—हिंसादियुक्तत्वाद्वैदिकं कर्माधर्मायेतीयमप्याशङ्का न कार्या, कथं क्षात्त्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्तक्रूरमपि स्वधर्म इति कृत्वा नाधर्माय, तदकरणे च 'ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि' इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवतीति ।

**शां० आ०**—ननु "न हिंस्यात्सर्वा भूतानि" इत्यादिना प्रतिषिद्धत्वेन हिंसादेरनर्थहेतुत्वावगमात्तदुपेतं वैदिकं कर्माधर्मायेति नानुष्ठातुं शक्यते । तथा च तस्य मोक्षे ज्ञानेन समुच्चयो न सिध्यतीति सांख्यमतमाशङ्क्य परिहरति—**हिंसादीति** । आदिशब्दादुच्छिष्टभक्षणं गृह्यते । यथोक्ताशङ्का न कर्तव्येत्यत्राऽऽकाङ्क्षापूर्वकं हेतुमाह—**कथमित्यादिना** । स्वशब्देन क्षत्रियो विवक्ष्यते । युद्धाकरणे क्षत्रियस्य प्रत्यवायश्रवणात्तस्य तं प्रति नित्यत्वेनावश्यकर्तव्यत्वप्रतीतेर्गुर्वादिहिंसायुक्तमतिक्रूरमपि कर्म नाधर्मायेति हेत्वन्तरमाह—**तदकरणे चेति** । आचार्यादिहिंसायुक्तमतिक्रूरमपि युद्धं नाधर्मायेति ब्रुवता भगवता श्रौतानां हिंसादियुक्तानामपि कर्मणां दूरतो नाधर्मत्वमिति स्पष्टमुपदिष्टं भवति । सामान्यशास्त्रस्य व्यर्थहिंसानिषेधार्थत्वात्क्रतुविषये चोदितहिंसायास्तदविषयत्वात्कुतो वैदिककर्मानुष्ठानानुपपत्तिरित्यर्थः । ज्ञानकर्मसमुच्चयात्कैवल्यसिद्धिरित्युपसंहर्तुमितिशब्दः ।

**शां० भा०**—तदसत्, ज्ञानकर्मनिष्ठयोर्विभागवचनाद्बुद्धिद्वयाश्रययोरशोच्यानित्यादिना भगवता यावत् 'स्वधर्ममपि चावेक्ष्य' इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्त्वनिरूपणं कृतं तत्सांख्यं तद्विषया बुद्धिरात्मनो जन्मादिषड्विक्रियाभावादकर्ताऽऽत्मेति प्रकरणार्थनिरूपणाद्या जायते सा सांख्यबुद्धिः सा येषां ज्ञानिनामुचिता भवति ते सांख्याः ।

**शां० आ०**—यत्तावद्ब्रह्मज्ञानं सेतिकर्तव्यताकं स्वफलसाधकं करणत्वादित्यनुमानं तद्दूषयति—**तदसदिति** । न हि शुक्तिकादिज्ञानमज्ञाननिवृत्तौ स्वफले सहकारि किंचिदपेक्षते, तथा च व्यभिचारादसाधकं करणत्वमित्यर्थः । यत्तु गीताशास्त्रे समुच्चयस्यैव प्रतिपाद्यतेति प्रतिज्ञातं तदपि विभागवचनविरुद्धमित्याह—**ज्ञानेति** । सांख्यबुद्धिर्योगबुद्धिश्चेति बुद्धिद्वयं तत्र सांख्यबुद्ध्याश्रयां ज्ञाननिष्ठां व्याख्यातुं सांख्यशब्दार्थमाह—**अशोच्यानित्यादिनेति** । अशोच्यानित्यादि स्वधर्ममपि चावेक्ष्येत्येतदन्तं वाक्यं यावद्भविष्यति तावता ग्रन्थेन यत्परमार्थभूतमात्मतत्त्वं भगवता निरूपितं तद्यथा सम्यक्ख्यायते प्रकाश्यते सा वैदिकी सम्यग्बुद्धिः संख्या तया प्रकाश्यत्वेन संबन्धि प्रकृतं तत्त्वं सांख्यमित्यर्थः । सांख्यशब्दार्थमुक्त्वा तत्प्रकाशिकां बुद्धिं तद्वतश्च सांख्यान्व्याकरोति—**तद्विषयेति** । तद्विषया बुद्धिः सांख्यबुद्धिरिति संबन्धः । तामेव प्रकटयति—**आत्मन इति** । न जायते म्रियते वेत्यादिप्रकरणार्थनिरूपणद्वारेणाऽऽत्मनः षड्भावविक्रियासंभवात्कूटस्थोऽसाविति या बुद्धिरुत्पद्यते सा सांख्यबुद्धिः, तत्पराः संन्यासिनः सांख्या इत्यर्थः ।

**शां० भा०**—एतस्या बुद्धेर्जन्मनः प्रागात्मनो देहादिव्यतिरिक्तत्वकर्तृत्वभोक्तृत्वाद्यपेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठाननिरूपणलक्षणो योगः, तद्विषया बुद्धिर्योगबुद्धिः । सा येषां कर्मिणामुचिता भवति ते योगिनः ।

**शां० आ०**—संप्रति योगबुद्ध्याश्रयां कर्मनिष्ठां व्याख्यातुकामो योगशब्दार्थमाह—**एतस्या इति** । यथोक्तबुद्ध्युत्पत्तौ विरोधादेवानुष्ठानायोगात्तस्यास्तन्निवर्तकत्वात्पूर्वमेव तदुत्पत्तेरात्मनो देहादिव्यतिरिक्तत्वाद्यपेक्षया धर्माधर्मं निष्कृष्य तेनेश्वराराधनरूपेण कर्मणा पुरुषो मोक्षाय युज्यते योग्यः संपद्यते तेन मोक्षसिद्धये परम्परया साधनीभूतप्रागुक्तधर्मानुष्ठानात्मको योग इत्यर्थः । अथ योगबुद्धिं विभजन्योगिनो विभजते—**तद्विषयेति** ।

**शां० भा०**—तथा च भगवता विभक्ते द्वे बुद्धी निर्दिष्टे—'एषा तेऽभिहितासांख्ये बुद्धिर्योगे त्विमां शृणु' इति । तयोश्च सांख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां सांख्यानां विभक्तां वक्ष्यति—

' पुरा वेदात्मना मया प्रोक्ता ' इति । तथा च योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां विभक्तां वक्ष्यति—'कर्मयोगेन योगिनाम्' इति । एवं सांख्यबुद्धिं योगबुद्धिं चाऽऽश्रित्य द्वे निष्ठे विभक्ते भगवतैवोक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोरेकपुरुषाश्रयत्वासंभवं पश्यता ।

**शां० आ०**—उक्ते बुद्धिद्वये भगवतोऽभिमातिं दर्शयति—**तथा चेति** । सांख्यबुद्ध्याश्रया ज्ञाननिष्ठेत्येतदपि भगवतोऽभिमतमित्याह—**तयोश्चेति** । ज्ञानमेव योगो ज्ञानयोगस्तेन हि ब्रह्मणा युज्यते तादात्म्यमापद्यते तेन संन्यासिनां निष्ठा निश्चयेन स्थितिस्तात्पर्येण परिसमाप्तिस्तां कर्मनिष्ठातो व्यतिरिक्तां निष्ठयोर्मध्ये निष्कृष्य भगवान्वक्ष्यतीति योजना । 'लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन सांख्यानाम्' इत्येतद्वाक्यमुक्तार्थविषयमर्थतोऽनुवदति—**पुरेति** । योगबुद्ध्याश्रया कर्मनिष्ठेत्यत्रापि भगवदनुमतिमादर्शयति—**तथा चेति** । कर्मैव योगः कर्मयोगस्तेन हि बुद्धिशुद्धिद्वारा मोक्षहेतुज्ञानाय पुमान्युज्यते तेन निष्ठां कर्मिणां ज्ञाननिष्ठातो विलक्षणां कर्मयोगेनेत्यादिना वक्ष्यति भगवानिति योजना । निष्ठाद्वयं बुद्धिद्वयाश्रयं भगवता विभज्योक्तमुपसंहरति—**एवमिति** । कया पुनरनुपपत्त्या भगवता निष्ठाद्वयं विभज्योक्तमित्याशङ्क्याऽऽह—**ज्ञानकर्मणोरिति** । कर्म हि कर्तृत्वानेकत्वबुद्ध्याश्रयम्, ज्ञानं पुनरकर्तृत्वैकत्वबुद्ध्याश्रयं तदुभयमित्थं विरुद्धसाधनसाध्यत्वान्नैकावस्थस्यैव पुरुषस्य संभवत्यतो युक्तमेव तयोर्विभागवचनमित्यर्थः ।

**शां० भा०**—यथैतद्विभागवचनं तथैव दर्शितं शातपथीये ब्राह्मणे—"एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति" इति सर्वकर्मसंन्यासं विधाय तच्छेषेण—"किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति । तत्रैव च—"प्राग्दारपरिग्रहात्पुरुष आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनं पुत्रं द्विप्रकारं च वित्तं मानुषं दैवं च, तत्र मानुषं वित्तं कर्मरूपं पितृलोकप्राप्तिसाधनं विद्यां च दैवं वित्तं देवलोकप्राप्तिसाधनं सोऽकामयत" इत्यविद्याकामवत एव सर्वाणि कर्माणि श्रौतादीनि दर्शितानि ।"तेभ्यो व्युत्थाय प्रव्रजन्ति" इति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम् । तदेतद्विभागवचनमुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोः समुच्चयोऽभिप्रेतः स्याद्भगवतः ।

**शां० आ०**—भगवदुक्तविभागवचनस्य मूलत्वेन श्रुतिमुदाहरति—**यथेति** । तत्र ज्ञाननिष्ठाविषयं वाक्यं पठति—**एतमेवेति** । प्रकृतमात्मानं नित्यविज्ञप्तिस्वभावं वेदितुमिच्छन्तस्त्रिविधेऽपि कर्मफले वैतृष्ण्यभाजः सर्वाणि कर्माणि परित्यज्य ज्ञाननिष्ठा भवन्तीति पञ्चमलकारस्वीकारेण संन्यासविधिं विवक्षित्वा तस्यैव विधेः शेषेणार्थवादेन किं प्रजयेत्यादिना मोक्षफलं ज्ञानमुक्तमित्यर्थः । ननु फलभावात्प्रजाक्षेपो नोपपद्यते पुत्रेणैतल्लोकजयस्य वाक्यान्तरसिद्धत्वादित्याशङ्क्य विदुषां प्रजासाध्यमनुष्यलोकस्याऽऽत्मव्यतिरेकेणाभावादात्मनश्चासाध्यत्वादाक्षेपो युक्तिमानिति विवक्षित्वाऽऽह—**येषामिति** । इति ज्ञानं दर्शितमिति शेषः । तस्मिन्नेव ब्राह्मणे कर्मनिष्ठाविषयं वाक्यं दर्शयति—**तत्रैवेति** । प्राकृतत्वमतत्त्वदर्शित्वेनाज्ञत्वं स च ब्रह्मचारी सन्गुरुसमीपे यथाविधि वेदमधीत्यार्थज्ञानार्थं धर्मजिज्ञासां कृत्वा तदुत्तरकालं लोकत्रयप्राप्तिसाधनं पुत्रादित्रयं सोऽकामयत जाया मे स्यादित्यादिना कामितवानिति श्रुतमित्यर्थः । वित्तं विभजते—**द्विप्रकारमिति** । तदेव प्रकारद्वैरूप्यमाह—**मानुषमिति** । मानुषं वित्तं व्याचष्टे—**कर्मरूपमिति** । तस्य फलपर्यवसायित्वमाह—**पितृलोकेति** । दैवं वित्तं विभजते—**विद्यां चेति** । तस्यापि फलनिष्ठत्वमाह—**दैवेति** । कर्मनिष्ठाविषयत्वेनोदाहृतश्रुतेस्तात्पर्यमाह—**अविद्येति** । अज्ञस्य कामनाविशिष्टस्यैव कर्माणि सोऽकामयतेत्यादिना दर्शितानीत्यर्थः । ज्ञाननिष्ठाविषयत्वेन दर्शितश्रुतेरपि तात्पर्यं दर्शयति—**तेभ्य इति** । कर्मसु विरक्तस्यैव संन्यासपूर्विका ज्ञाननिष्ठा प्रागुदाहृतश्रुत्या दर्शितेत्यर्थः । अवस्थाभेदेन ज्ञानकर्मणोर्भिन्नाधिकारत्वस्य श्रुतत्वात्तन्मूलेन भगवतो विभागवचनेन शास्त्रस्य समुच्चयपरत्वं प्रतिज्ञातमपबाधितमिति साधितम् । किंच समुच्चयो ज्ञानस्य श्रौतेन स्मार्तेन वा कर्मणा विवक्ष्यते यदि प्रथमस्तत्राऽऽह—**तदेतदिति** ।

**शां० भा०**—न चार्जुनस्य प्रश्न उपपन्नो भवति 'ज्यायसी चेत्कर्मणस्ते' इत्यादिः ।एकपुरुषानुष्ठेयत्वासंभवं बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव ज्यायसी चेत्कर्मणस्ते मता बुद्धिरिति ।

शां० आ०—समुच्चयेऽभिप्रेते प्रश्नानुपपत्तिं दोषान्तरमाह—न चेति। तामेवानुपपत्तिं प्रकटयति—एकपुरुषेति। यदि समुच्चयः शास्त्रार्थो भगवता विवक्षितस्तदा ज्ञानकर्मणोरेकेन पुरुषेणानुष्ठेयत्वमेव तेनोक्तमर्जुनेन च श्रुतं तत्कथं तदसंभवमनुक्तमश्रुतं च मिथ्यैव श्रोता भगवत्यारोपयेन्न च तदारोपादृते किमिति मां कर्मण्येवातिक्रूरे युद्धलक्षणे नियोजयसीति प्रश्नोऽवकल्पते। तथा च प्रश्नालोचनया प्रष्टृप्रतिवक्त्रोः शास्त्रार्थतया समुच्चयोऽभिप्रेतो न भवतीति प्रतिभातीत्यर्थः। किंच समुच्चयपक्षे कर्मापेक्षया बुद्धेर्ज्यायस्त्वं भगवता पूर्वमनुक्तमर्जुनेन चाश्रुतं कथमसौ तस्मिन्नारोपयितुमर्हति ततश्चानुवादवचनं श्रोतुरनुचितमित्याह—बुद्धेश्चेति।

**शां० भा०—किंच यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्यादर्जुनस्यापि सउक्त एवेति—'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्' इति कथमन्यतरविषय एव प्रश्नः स्यात्। न हि पित्तप्रशमार्थिनो वैद्येन मधुरं शीतं च भोक्तव्यमित्युपदिष्टे तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहीति प्रश्नो भवति।**

शां० आ०—इतश्च समुच्चयः शास्त्रार्थो न भवत्यन्यथा पञ्चमादावर्जुनस्य प्रश्नानुपपत्तेरित्याह—किंचेति। ननु सर्वान्प्रत्युक्तोपि समुच्चये नार्जुनं प्रत्युक्तोऽसाविति तदीयप्रश्नोपपत्तिरित्याशङ्क्याऽऽह—यदीति। एतयोः कर्मतत्त्यागयोरिति यावत्। ननु कर्मापेक्षया कर्मत्यागपूर्वकस्य ज्ञानस्य प्राधान्यात्तस्य श्रेयस्त्वात्तद्विषयप्रश्नोपपत्तिरिति चेन्नेत्याह—न हीति। तथैव समुश्चये पुरुषार्थसाधने भगवता दर्शिते सत्यन्यतरगोचरो न प्रश्नो भवतीति शेषः।

**शां० भा०—अथार्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणानिमित्तः प्रश्नः कल्प्येत, तथाऽपि भगवता प्रश्नानुरूपं प्रतिवचनं देयं, मया बुद्धिकर्मणोः समुच्चय उक्तः किमर्थमित्थं त्वं भ्रान्तोऽसीति। न तु पुनः प्रतिवचनमननुरूपं पृष्टादन्यदेव द्वे निष्ठे मया पुरा प्रोक्ते इति वक्तुं युक्तम्।**

शां० आ०—समुच्चये भगवतोक्तेऽपि तदज्ञानादर्जुनस्य प्रश्नोपपत्तिरिति शङ्कते—अथेति। अज्ञाननिमित्तं प्रश्नमङ्गीकृत्यापि प्रत्याचष्टे—तथाऽपीति। भगवतो भ्रान्त्यभावेन पूर्वापरानुसंधानसंभवादित्यर्थः। प्रश्नानुरूपत्वमेव प्रतिवचनस्य प्रकटयति—मयेति। व्यावर्त्यमंशमादर्शयति—न त्विति। प्रतिवचनस्य प्रश्नाननुरूपत्वमेव स्पष्टयति—पृष्टादिति।

**शां० भा०—नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चयेऽभिप्रेते विभागवचनादि सर्वमुपपन्नम्।**

शां० आ०—श्रौतेन कर्मणा समुच्चयो ज्ञानस्येति पक्षं प्रतिक्षिप्य पक्षान्तरं प्रतिक्षिपति—नापीति। श्रुतिस्मृत्योर्ज्ञानकर्मणोर्विभागवचनमादिशब्दगृहीतं बुद्धेर्ज्यायस्त्वं पञ्चमादौ प्रश्नो भगवत्प्रतिवचनं सर्वमिदं श्रौतेनेव स्मार्तेनापि कर्मणा बुद्धेः समुच्चये विरुद्धं स्यादित्यर्थः।

**शां० भा०—किंच क्षत्रियस्य युद्धं स्मार्तं कर्म स्वधर्म इति जानतस्तत्किं कर्मणि घोरे मां नियोजयसीत्युपालम्भोऽनुपपन्नस्तस्माद्गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणाऽऽत्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः।**

शां० आ०—द्वितीयपक्षासंभवे हेत्वन्तरमाह—किंचेति। समुच्चयपक्षे प्रश्नप्रतिवचनयोरसंभवान्नेदं गीताशास्त्रं तत्परमित्युपसंहरति—तस्मादिति। विशुद्धब्रह्मात्मज्ञानं स्वफलसिद्धौ न सहकारिसापेक्षमज्ञाननिवृत्तिफलत्वाद्रज्ज्वादितत्त्वज्ञानवत्। अथवा बन्धः सहायानपेक्षेण ज्ञानेन निवर्त्यतेऽज्ञानात्मकत्वाद्रज्जुसर्पादिवदिति भावः।

**शां० भा०—यस्य त्वज्ञानाद्रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयमेकमेवेदं सर्वं ब्रह्माकर्तृ चेति, तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं यत्नपूर्वं यथा प्रवृत्तस्तथैव कर्मणि प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते न तत्कर्म येन बुद्धेः समुच्चयः स्यात्।**

शां० आ०—ननु 'कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्' इति वक्ष्यमाणत्वात्कथं गीताशास्त्रे समुच्चयो नास्ति तत्राऽऽह—यस्य त्विति। चोदनासूत्रानुसारेण विधितोऽनुष्ठेयस्य कर्मणो धर्मत्वाद्व्यापारमात्रस्य तथात्वाभावात्तत्त्वविदश्च वर्णाश्रमाभिमानशून्यस्याधिकारप्रतिपत्त्यभावाद्यागादिप्रवृत्तीनामविद्यालेशतो जायमानानां कर्माभासत्वात्कुर्याद्विद्वानित्यादि वाक्यं न समु-

चयप्रापकमिति भावः । वाशब्दश्चार्थे । द्वितीयस्तु विविदिषावाक्यस्थसाधनान्तरसंग्रहार्थः । सांसारिकं ज्ञानं व्यावर्तयति—**परमार्थेति** । तदेवाभिनयति—**एकमिति** । प्रवृत्तिरूपमिति रूपग्रहणमाभासत्वप्रदर्शनार्थं कर्माभाससमुच्चयस्तु यादृच्छिकत्वान्न मोक्षं फलयतीति शेषः ।

**शां० भा०**—यथा भगवतो वासुदेवस्य क्षात्रकर्मचेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये तद्वत्तत्फलाभिसंध्यहंकाराभावस्य तुल्यत्वाद्विदुषः । तत्त्ववित्तु नाहं करोमीति मन्यते न च तत्फलमभिसंधत्ते । यथा च स्वर्गादिकामार्थिनोऽग्निहोत्रादिकामसाधनानुष्ठानायाऽऽहिताग्नेः काम्य एवाग्निहोत्रादौ प्रवृत्तस्य सामिकृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतोऽपि न तत्काम्यमग्निहोत्रादि भवति ।

**शां० आ०**—किंच ज्ञानिनो यागादिप्रवृत्तिर्न ज्ञानेन फले समुच्चीयते फलाभिसंधिविकलप्रवृत्तित्वादहंकारविधुरप्रवृत्तित्वाद्वा भगवत्प्रवृत्तिवदित्याह—**यथेति** । हेतुद्वयस्यासिद्धिमाशङ्क्य परिहरति—**तत्त्वविदिति** । कूटस्थं ब्रह्मैवाहमिति मन्वानो विद्वान्प्रवृत्तिं तत्फलं वा नैव स्वगतत्वेन पश्यति रूपादिवद्दृश्यस्य द्रष्टृधर्मत्वायोगात् । किं तु कार्यकरणसंघातगतत्वेनैव प्रवृत्त्यादि प्रतिपद्यते । ततस्तत्त्वविदो व्याख्यानभिक्षाटनादावहंकारस्य तृप्त्यादिफलाभिसंधेश्चाऽऽभासत्वान्नासिद्धं हेतुद्वयमित्यर्थः । ननु ज्ञानोदयात्प्रागवस्थायामिवोत्तरकालेऽपि प्रतिनियतप्रवृत्त्यादिदर्शनान्न तत्त्वदर्शिनिष्ठप्रवृत्त्यादेराभासत्वमिति तत्राऽऽह—**यथा चेति** । स्वर्गादिरेव काम्यमानत्वात्कामस्तदर्थिनः स्वर्गादिकामस्याग्निहोत्रादेरपेक्षितस्वर्गादिसाधनस्यानुष्ठानार्थमग्निमाधाय व्यवस्थितस्य तस्मिन्नेव काम्ये कर्मणि प्रवृत्तस्यार्धकृते केनापि हेतुना कामे विनष्टे तदेवाग्निहोत्रादि निर्वर्तयतो न तत्काम्यं भवति नित्यकाम्यविभागस्य स्वाभाविकत्वाभावात्कामोपबन्धानुपबन्धकृतत्वात् । तथा विदुषोऽपि विध्यधिकाराभावाद्वा ( या ) गादिप्रवृत्तीनां कर्माभासतेत्यर्थः ।

**शां० भा०**—तथा च दर्शयति भगवान् ' कुर्वन्नपि ' 'न करोति न लिप्यते' इति तत्र तत्र । ' पूर्वैः पूर्वतरं कृतम् ' ' कर्मणैव हि संसिद्धिमास्थिता जनकादयः ' इति तत्तु प्रविभज्य विज्ञेयम् । तत्कथम्, यदि तावत्पूर्वे जनकादयस्तत्त्वविदोऽपि प्रवृत्तकर्माणः स्युस्ते लोकसंग्रहार्थं गुणा गुणेषु वर्तन्त इति ज्ञानेनैव संसिद्धिमास्थिताः, कर्मसंन्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धिमास्थिता न कर्मसंन्यासं कृतवन्त इत्येषोऽर्थः ।

**शां० आ०**—विद्वत्प्रवृत्तीनां कर्माभासत्वमित्यत्र भगवदनुमतिमुपन्यस्यति—**तथा चेति** । विद्वद्व्यापारेऽपि कर्मशब्दप्रयोगदर्शनात्तद्व्यापारस्य कर्माभासत्वानुपपत्तेः समुच्चयसिद्धिरिति तत्राऽऽह—**यच्चेति** । ज्ञानकर्मणोः समुच्चित्यैव संसिद्धिहेतुत्वे प्रतिपन्ने कुतो विभज्यार्थज्ञानमिति पृच्छति—**तत्कथमिति** । तत्र किं जनकादयोऽपि तत्त्वविदः प्रवृत्तकर्माणः स्युराहोस्विदतत्त्वविद इति विकल्प्य प्रथमं प्रत्याह—**यदीति** । तत्त्ववित्त्वे कथं प्रवृत्तकर्मत्वं कर्मणामकिंचित्करत्वादित्याशङ्क्याऽऽह—**ते लोकेति** । तेषामुक्तप्रयोजनार्थमपि न प्रवृत्तिर्युक्ता सर्वत्रोदासीनत्वादित्याशङ्क्याऽऽह—**गुणा इति** । इन्द्रियाणां विषयेषु प्रवृत्तिद्वारा तत्त्वविदां प्रवृत्तकर्मत्वेऽपि ज्ञानेनैव तेषां मुक्तिरित्याह—**ज्ञानेनेति** । उक्तमेवार्थं संक्षिप्य दर्शयति—**कर्मेति** । कर्मणेत्यादौ बाधितानुवृत्त्या प्रवृत्त्याभासो गृह्यते ।

**शां० भा०**—अथ न ते तत्त्वविद ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इति व्याख्येयम् ।

**शां० आ०**—द्वितीयमनुवदति—**अथेति** । तत्र वाक्यार्थं कथयति—**ईश्वरेति** । विभज्य विज्ञेयत्वं वाक्यार्थस्योक्तमुपसंहरति—**इति व्याख्येयमिति** ।

**शां० भा०**—एतमेवार्थं वक्ष्यति भगवान्सत्त्वशुद्धये कर्म कुर्वन्तीति । ' स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्युक्त्वा सिद्धिं प्राप्तस्य च पुनर्ज्ञाननिष्ठां वक्ष्यति ' सिद्धिं प्राप्तो यथा ब्रह्म' इत्यादिना ।

**शां० आ०**—कर्मणां चित्तशुद्धिद्वारा ज्ञानहेतुत्वमित्युक्तेऽर्थे वाक्यशेषं प्रमाणयति—**एतमेवेति**। योगिनः कर्म कुर्वन्तीत्यादि-वाक्यमर्थतोऽनुवदति—**सत्त्वेति** । स्वकर्मणेत्यादौ साक्षादेव मोक्षहेतुत्वं कर्मणां वक्ष्यतीत्याशङ्क्याऽऽह—**स्वकर्मणेति** । स्वकर्मानुष्ठानादीश्वरप्रसादद्वारा ज्ञाननिष्ठायोग्यता लभ्यते । ततो ज्ञाननिष्ठया मुक्तिस्तेन न साक्षात्कर्मणां मुक्तिहेतुतेत्यग्रे स्फुटीभविष्यतीत्यर्थः ।

**शां० भा०**—तस्माद्गीतासु केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिर्न कर्मसमुच्चितादिति निश्चितोऽर्थः। यथा चायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः ।

**शां० आ०**—तत्त्वज्ञानोत्तरकालं कर्मासंभवे फलितमुपसंहरति—**तस्मादिति** । ननु यद्यपि गीताशास्त्रं तत्त्वज्ञानप्रधानमेकं वाक्यं तथाऽपि तन्मध्ये श्रूयमाणं कर्म तदङ्गमङ्गीकर्तव्यं प्रकरणप्रामाण्यादिति समुच्चयसिद्धिस्तत्राऽऽह—**यथा चेति**। अर्थश-ब्देनाऽऽत्मज्ञानमेव केवलं कैवल्यहेतुरिति गृह्यते ।

**शां० भा०**—तत्रैवं धर्मसंमूढचेतसो महति शोकसागरे निमग्नस्यार्जुनस्यान्यत्राऽऽत्मज्ञानादुद्धरणमपश्यन्भगवान्वासुदेवस्ततोऽर्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह—अशोच्यानित्यादि। न शोच्या अशोच्या भीष्मद्रोणादयः सद्वृत्तत्वात्परमार्थरूपेण च नित्यत्वात्, तानशोच्यानन्वशोचोऽनुशोचितवानसि ते म्रियन्ते मन्निमित्तमहं तैर्विना भूतः किं करिष्यामि राजसुखादिनेति । त्वं प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे । तदेतन्मौढ्यं पाण्डित्यं च विरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः । यस्माद्गतासून्गतप्राणान्मृतानगतासूनगतप्राणाञ्जीवतश्च नानुशोचन्ति पण्डिता आत्मज्ञाः पण्डाऽऽत्मविषया बुद्धिर्येषां ते हि पण्डिताः "पाण्डित्यं निर्विद्य" इति श्रुतेः । परमार्थतस्तु नित्यानशोच्याननुशोचस्यतो मूढोऽसीत्यभिप्रायः ॥ ११ ॥

**शां० आ०**—तदेव वचनमुदाहरति—**श्रीभगवानिति** । वृत्तिकृतामभिप्रायं प्रत्याख्याय स्वाभिप्रेतः शास्त्रार्थः समर्थितः संप्रत्यशोच्यानित्यस्मात्प्राक्तनग्रन्थसंदर्भस्य प्रागुक्तं तात्पर्यार्थमनूद्याशोच्यानित्यादेः स्वधर्ममपि चावेक्ष्येत्येतदन्तस्य समुदायस्य तात्पर्यमाह—**तत्रेति** । अत्र हि शास्त्रे त्रीणि काण्डान्यष्टादशसंख्याकानामध्यायानां षट्कत्रितयमुपादाय त्रैविध्यात्, तत्र पूर्वषट्कात्मकं पूर्वकाण्डं त्वंपदार्थं विषयी करोति, मध्यमषट्करूपं मध्यमकाण्डं तत्पदार्थं गोचरयति, अन्तिमषट्कलक्षणमन्तिमं काण्डं पदार्थयोरैक्यं वाक्यार्थमधिकरोति । तज्ज्ञानसाधनानि च तत्र तत्र प्रसङ्गादुपन्यस्यन्ते तज्ज्ञानस्य तदधीनत्वात् । तत्त्वज्ञानमेव केवलं कैवल्यसाधनमिति च सर्वत्राविगीतम् । एवं पूर्वोक्तरीत्या गीताशास्त्रार्थे परिनिश्चिते सतीति यावत् । धर्मे संमूढं कर्तव्याकर्तव्यविवेकविकलं चेतो यस्य तस्य मिथ्याज्ञानवतोऽहंकारममकारवतः शोकाख्यसागरे दुरुत्तारे प्रविश्य क्लिश्यतो ब्रह्मात्मैक्यलक्षणवाक्यार्थज्ञानमात्मज्ञानं तदतिरेकेणोद्धरणासिद्धेस्तमतिभक्तमतिस्निग्धं शोकादुद्धर्तुमिच्छन्भगवान्यथोक्तज्ञानं तमर्जुनमवतारयन्पदार्थपरिशोधने प्रवर्तयन्नादौ त्वंपदार्थं शोधयितुमशोच्यानित्यादि वाक्यमाहेति योजना । यस्याज्ञानं तस्य भ्रमो यस्य भ्रमस्तस्य पदार्थपरिशोधनपूर्वकं सम्यग्ज्ञानं वाक्यादुदेतीति ज्ञानाधिकारिणमभिप्रेत्याऽऽह—**अशोच्यानित्यादीति** । यत्तु कैश्चिदात्मा वा अरे द्रष्टव्य इत्याद्यात्मयाथात्म्यदर्शनविधिवाक्यार्थमनेन श्लोकेन व्याचष्टे स्वयं हरिरित्युक्तं, तदयुक्तं कृतियोग्यतैकार्थसमवेतश्रेयःसाधनताया वा पराभिमतनियोगस्य वा विध्यर्थस्यात्राप्रतीयमानस्य कल्पनाहेत्वभावात् । न च दर्शने पुरुषतन्त्रत्वरहिते विधेययागादिविलक्षणे विधिरुपपद्यते कृत्यान्तर्भूतस्यार्हार्थत्वात्तव्यो न विधिमधिकरोतीत्यभिप्रेत्य व्याचष्टे—**न शोच्या इति** । कथं तेषामशोच्यत्वमित्युक्ते भीष्मादिशब्दवाच्यानां वा शोच्यत्वं तत्पदलक्ष्याणां वेति विकल्प्याऽऽद्यं दूषयति—**सद्वृत्तत्वादिति** । ये भीष्मादिशब्दैरुच्यन्ते ते श्रुतिस्मृत्युदीरिताविगीताचारवत्त्वान्न शोच्यतामश्नुवीरन्नित्यर्थः । द्वितीयं प्रत्याह—**परमार्थेति** । अरजते रजतबुद्धिवदशोच्येषु शोच्यबुद्ध्या भ्रान्तोऽसीत्याह—**तानिति** । अनुशोचनप्रकारमभिनयन्भ्रान्तिमेव प्रकटयति—**ते म्रियन्त इति** । पुत्रभार्यादिप्रयुक्तं सुखमादिशब्देन गृह्यते । इत्यनुशोचितवानसीति संबन्धः । विरुद्धार्थाभिधायित्वेनापि भ्रान्तत्वमर्जुनस्य साधयति—**त्वं प्रज्ञावतामिति** । वचनान्युत्सन्नकुलधर्माणामित्यादीनि । किमेतावता फलितमिति तदाह—**तदेतदिति** । तन्मौढ्यमशोच्येषु शोच्यदृष्टित्वमेतत्पाण्डित्यं बुद्धिमतां वचनभाषित्वमिति यावत् । अर्जुनस्य पूर्वोक्तभ्रान्तिभाक्त्वे निमित्तमात्माज्ञानमित्याह—**यस्मादिति** । ननु सूक्ष्मबुद्धिभाक्त्वमेव पाण्डित्यं न त्वात्मज्ञत्वं हेत्वभावा-

दित्याशङ्क्याऽऽह—**तेहीति**। पाण्डित्यं पण्डितभावमात्मज्ञानं निर्विद्य निश्चयेन लब्ध्वा बाल्येन तिष्ठासेदिति बृहदारण्यकश्रुतिमुक्तार्थमुदाहरति—**पाण्डित्यमिति**। यथोक्तपाण्डित्यराहित्यं कथं ममावगतमित्याशङ्क्य कार्यदर्शनादित्याह—**परमार्थतस्त्विति**। यस्मादित्यस्यापेक्षितं दर्शयति—**अत इति** ॥ ११ ॥

**आ० भा०—तत्र सेनयोर्मध्ये बांधवादिमोहजालसंवृतं विषीदंतमर्जुनं भगवानुवाच। प्रज्ञावादान् स्वमनीषोत्थवचनानि। कथमशोच्याः। गतासून् ॥ ११ ॥**

**आ० ज०**—इदानीं गीताव्याख्यानावसरे प्राप्ते धर्मक्षेत्रइत्यारभ्याशोच्यानन्वशोचस्त्वमित्यतः प्राक्तनस्य ग्रंथस्यातिरोहितार्थत्वात्तात्पर्यमाह—**तत्रेति**। तत्र गीतिकायां कैश्चनश्लोकैरिदमुच्यतइतिशेषः। नन्वत्र धर्मो नापि तत्त्वं प्रतिपाद्यते तत्कुतोस्य गीतायामनुप्रवेशः। मैवं। भगवतोऽर्जुनबोधने प्रसक्तिं दर्शयतोऽस्य ग्रंथस्य तादर्थ्यात्तत्र प्रवेशोपपत्तेः। बांधवादिविषयो मोहो ममैतेऽहमेतेषां। एते च मन्निमितं नंक्ष्यंति। कथमेतैर्विनाऽहं भवेयं। पापं च मे भविष्यति जयश्च संदिग्ध—इत्यादिरूपो मिथ्या प्रत्ययो बांधवादिमोहः तेषु स्नेहो वा। सजालमिव तेन संवृतं तत एव विषीदंतं। विषादोनाम मोहनिमित्ताच्छोकाद्यन्मनोदौर्बल्यं। यस्मिन्सति सर्वव्यापारोपरमो भवति। नन्विदानीमेव कुतोर्जुनस्य मोहसमुत्पत्तिः। न ह्येते बांधवादयः इतिप्राङ्नाज्ञासीत्। येन युद्धाय महांतमुद्योगमकार्षीदित्यत आह—**सेनयोरिति**। महाऽपकारस्मरणेनानुवर्तमानोऽपि कोपो मृदुमनसां बांधवादिष्वंतकाले निवर्तते स्नेहश्चोत्पद्यते ततो मोह इति प्रसिद्धमेवेति भावः। अर्जुनस्य ज्ञानित्वान्मोहजालसंवृतत्वमीषदेवेति मंतव्यं। प्रज्ञावादानित्येतत्प्रज्ञावतां बुद्धिमतां वादान् वचनानीति कश्चिद्व्याख्यातवान्। तदसत्। नहि दृष्ट्वेमं स्वजनमित्याद्यर्जुनवाक्येषु कश्चिद्बुद्धिमद्वादो दृश्यते। नहि बुद्धिमंतो नारायणद्विट्तदनुबंधिनिग्रहमधर्मं वदंति। नच धर्माधर्मविषयत्वमात्रेण बुद्धिमद्वादो भवति। बौद्धादेरपि तत्त्वप्रसंगादित्याशयेनान्यथा व्याचष्टे—**प्रज्ञावादानिति**। स्वस्या एव मनीषाया उत्थितानि नतु शास्त्राचार्योपदेशप्राप्तानि कथमेतल्लभ्यते। उच्यते। प्रज्ञायाः वादाः प्रज्ञावादाः कार्यकारणभावे षष्ठी। नहि स वादोऽस्ति यः प्रज्ञापूर्वो न भवतीति सामर्थ्यात्स्वेतिलभ्यते। सावधारणं चैतत् अब्भक्ष इति यथा। अन्यथा पुनर्वैयर्थ्यादिति। कथमशोच्या इत्यतआहेति शेषः। गतासूनित्यतःपरमितिशब्दः। आसन्नविनाशाः कथमशोच्याइत्यर्थः। ननु प्रागशोच्यत्वानुवादेनान्वशोच इत्येवोक्तं। नत्वशोच्यत्वं। तत्कथमेवमाक्षेपः। मैवं। नहि यथाश्रुतैवाऽत्र वाक्यवृत्तिः। असिद्धस्यानुवादः सिद्धस्य बोधनमित्यापत्तेः। किंतु नत्वशोच्यानन्वशोचस्त्वं तेऽशोच्यास्तस्मात्तान्प्रति न शोकः कार्यः। यांश्च भाषसे ते प्रज्ञावादाः अतो न भाषणीया इति। तथा चाशोच्याः कुतोऽवगंतव्या इति प्रश्नो वा आक्षेपो वा युज्यत एव ॥ ११ ॥

**रा० भा०**—अशोच्यान्प्रत्यनुशोचसि 'पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः।' इत्यादिकान् देहात्मस्वभावप्रज्ञानिमित्तवादांश्च भाषसे देहात्मस्वभावज्ञानवतां नात्र किंचिच्छोकनिमित्तमस्ति गतासून् देहान् अगतासूनात्मनश्च प्रति तयोः स्वभावयाथात्म्यविदो न शोचन्ति। अतस्त्वयि विप्रतिषिद्धमिदमुपलक्ष्यते। यदेतान्हनिष्यामीत्यनुशोचनं यच्च देहातिरिक्तात्मज्ञानकृतं धर्माधर्मभाषणम् अतो देहस्वभावं च न जानासि तदतिरिक्तमात्मानं च नित्यं तत्प्राप्त्युपायभूतं युद्धादिकं धर्मं च इदं च युद्धं फलाभिसंधिरहितमात्मयाथात्म्यावाप्त्युपायभूतम्। आत्मा हि न जन्माधीनसद्भावो न मरणाधीनविनाशश्च। तस्य जन्ममरणयोरभावात्। अतः स न शोकस्थानं देहस्त्वचेतनः परिणामस्वभावस्तस्योत्पत्तिविनाशयोगः स्वाभाविक इति सोऽपि न शोकस्थानमित्यभिप्रायः ॥ ११ ॥

**अ० टी०**—पूर्वं शास्त्रार्थज्ञानेन स्थिरां बुद्धिं कृत्वा भक्त्युपदेशः कर्तव्य इति पूर्वं सर्वशास्त्रोक्तज्ञानमुक्त्वा भक्तिमुपदिशन्नात्मानात्मज्ञानार्थमात्मानात्मज्ञानमाह भगवान्—**अशोच्यानिति**। त्वम् अशोच्यान् शोकानर्हान् अन्वशोचः अनुशोचितवानसि यतस्तेऽसुरावेशिनो भूभारहरणार्थं मे मारणीयाएव नतु ते भक्ताः किं च तेषां शोकं कृत्वा प्रज्ञावादान् प्रज्ञावतां पंडितानां वादान् भाषसे वदसि। तेषां वादानेव वदसि न तु त्वं प्रज्ञावान्। यतस्ते प्रज्ञावंतः पंडिता मदिच्छयैव सर्वं भवतीति ज्ञानवंतः अतः गतासून्

गतप्राणान् परलोके तेषां का गतिर्भविष्यति अगतासून् जीवतः जीवतां तेषां कथं योगक्षेमो भविष्यतीति नानुशोचंति अत एव श्रुतिरप्याह । "एष एव तं साधु कर्म कारयति यमुन्निनीषति एष एव तमसाधु कर्म कारयति यमधोनिनीषति" इति । अतोमत्कृतेऽर्थे कथं शोकः कर्त्तव्यइति भावः ॥ ११ ॥

**नी० टी०**—अर्जुनस्य देहनाशे आत्मनाशधीः स्वधर्मे युद्धे चाधर्मधीरिति मोहद्वयं । तत्राद्यं ब्रह्मविद्यासूत्रभूतैर्विंशत्या श्लोकैरपनिनीषन् श्रीभगवानुवाच—**अशोच्यानन्वशोचस्त्वमिति** । "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" इति श्रुतेर्देहाद्युपाधिनाशेऽप्याकाशवन्नाशरहितत्वेन अशोचनीयान् भीष्मादीनन्वशोचः कथमेते गुरवो मया हंतव्याः कथं वा तैर्विनाऽहं जीविष्यामीति शोकं कृतवानसि एवं मूढोऽपि त्वं प्रज्ञावादान् प्रज्ञावतां देहादन्यमात्मानं जानतां वादान् शब्दान् । नरके नियतं वासः । पतंति पितरो ह्येषामित्यादीन् भाषसे परं न तु प्रज्ञावानसि तत्र हेतुः गतासूनिति गतासून् गतप्राणान्देहान्नानुशोचंति प्रत्युत निर्हरंत्येव एतेन प्राण एवेष्टो न तु देहः । तथा च श्रुतिः । "प्राणो ह पिता प्राणो माता प्राण आचार्यः" इत्यादि । अत एव सप्राणानेतानवगणयंतं नरं पित्रादिहंता त्वमसि धिक्त्वामिति वदंति उत्क्रांतप्राणान् दहंतमपि नैवं वदंतीति लोकवेदप्रसिद्धिः तस्मात् आत्मा देहादन्यः चेतनत्वात् व्यतिरेकेण घटवत् देहो न चेतनः दृश्यत्वात् घटवत् यदि देहश्चेतनः स्यात् मृतेऽपि तत्र चैतन्यमुपलभ्येत तस्माद्देहनाशेनात्मनाशं मन्वानो मूर्ख एवासीत्यर्थः । यत्तु प्रज्ञानां पंडितानां अवादान् वक्तुमयोग्यान् भाषसे इति तार्किकव्याख्यानं तत्र अहोर्थे घञोदुर्लभत्वात् विशेषाध्याहारसापेक्षत्वाच्चोपेक्ष्यम् ॥ ११ ॥

**न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः ॥**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥**

**शां० भा०—कुतस्तेऽशोच्या यतो नित्याः । कथम्—न त्वेव जातु कदाचिदहं नाऽऽसं किं त्वासमेवातीतेषु देहोत्पत्तिविनाशेषु नित्य एवाहमासमित्यभिप्रायः । तथा न त्वं नाऽऽसीः किं त्वासीरेव । तथा नेमे जनाधिपा नाऽऽसन्किं त्वासन्नेव । तथा न चैव न भविष्यामः, किं तु भविष्याम एव सर्वे वयमतोऽस्माद्देहविनाशात्परमुत्तरकालेऽपि त्रिष्वपि कालेषु नित्या आत्मस्वरूपेणेत्यर्थः । देहभेदानुवृत्त्या बहुवचनं नाऽऽत्मभेदाभिप्रायेण ॥ १२ ॥**

**शां० आ०**—नित्यत्वमशोच्यत्वे कारणमिति सूचितं विवेचयितुं प्रश्नपूर्वकं प्रतिजानीते—**कुत इत्यादिना** । नित्यत्वमसिद्धं प्रमाणाभावादिति चोदयाति—**कथमिति** । आत्मा न जायते प्रागभावशून्यत्वान्नरविषाणवदिति परिहरति—**न त्वेवेति** । किंचाऽऽत्मा नित्यो भावत्वे सत्यजातत्वाद्व्यतिरेकेण घटवदित्यनुमानान्तरमाह—**न चैवेति** । यत्तु कैश्चिदात्मयाथात्म्यं जिज्ञासितं भगवानुपादिशति न त्वित्यादिना श्लोकचतुष्टयेनेत्यादिष्टं तदसद्विशेषवचने हेत्वभावात्सर्वत्रैवाऽऽत्मयाथात्म्यप्रतिपादनाविशेषादित्याशयेन । पदच्छेदः पदार्थोक्तिर्वाक्ययोजनेति त्रितयमपि व्याख्यानाङ्गं संपादयाति—**न त्वित्यादिना** । नन्वात्मनो देहोत्पत्तिविनाशयोरुत्पत्तिविनाशप्रसिद्धेरुक्तमनुमानद्वयं प्रसिद्धिविरुद्धतया कालात्ययापदिष्टमिति नेत्याह—**अतीतेष्विति** । चराचरव्यपाश्रयस्तु स्यादिति न्यायेनाऽऽत्मनो जन्मविनाशप्रसिद्धेरौपाधिकजन्मविनाशविषयत्वान्निरुपाधिकस्य तस्य जन्मादिराहित्यमिति भावः । यद्यपि तवेश्वरस्य जन्मराहित्यं तथाऽपि कथं ममेत्याशङ्क्याऽऽह—**तथेति** । तथाऽपि भीष्मादीनां कथं जन्माभावस्तत्राऽऽह—**तथा नेम इति** । द्वितीयमनुमानं प्रपञ्चयन्नुत्तरार्धं व्याचष्टे—**तथेत्यादिना** । ननु देहोत्पत्तिविनाशयोरात्मनो जन्मनाशाभावेऽपि महासर्गमहाप्रलययोस्तस्याग्निविस्फुलिङ्गदृष्टान्तश्रुत्या जन्मविनाशावेष्टव्यावित्याशङ्क्य नाऽऽत्माऽश्रुतेरिति न्यायेन परिहरति—**त्रिष्वपीति** । यावद्विकारं तु विभागो लोकवदिति न्यायेन भिन्नत्वाद्विकारित्वमात्मनामनुमीयते । भिन्नत्वं च बहुवचनप्रयोगप्रमितमित्याशङ्क्याऽऽह—**देहेति** ॥ १२ ॥

**आ० भा०–किमिति ।** न त्वेवाहं ईश्वरनित्यत्वस्याप्रस्तुतत्वाद्दृष्टांतत्वेनाह–नत्वेवेति । यथाऽहं नित्यः सर्ववेदांतेषु प्रसिद्धः एवं त्वमेते जनाधिपाश्च नित्याः ॥ १२ ॥

**आ० ज०–**किमिति कस्मात्कारणात्पंडिताअप्यगतासूनिव गतासूनासन्नविनाशान्नानुशोचंतीतिशेषः । अत्र नित्यत्वादित्युत्तरं । कुतोनित्यत्वमित्यत आहेतिवाक्यं चाध्याहार्यं । नत्वेवाहमित्यतः परमितिशब्दश्च । अर्जुनं निमित्तीकृत्य प्राप्तलोकोपकारार्थं हि भगवतोपदेशः क्रियते । तत्र ये भगवतः कृष्णस्येश्वरत्वं नित्यत्वं च न जानंति तान् प्रति यथाश्रुतैव योजना । दृष्टांतस्तूत्तरत्र भविष्यति । ये तु तज्ज्ञात्वा जीवनित्यत्वमेव न जानंति तान्प्रत्यन्यथा योज्यमित्याह—**ईश्वरेति** । अप्रस्तुतत्वादनाशंकितत्वाद् दृष्टांतत्वेनाह । जीवनित्यतायां साध्यायामीश्वरमिति शेषः । अत एव कृष्णेत्यनुक्त्वेश्वरेत्युक्तं । नन्वीश्वरनित्यत्वं कुतः सिद्धं । पूर्वार्द्धे वाक्यत्रयसद्भावात् । कथंचिद्योजनासंभवेपि उत्तरार्द्धस्यैकवाक्यत्वात्कथं योजनेत्यत आह—**यथेति** । वेदांता उपनिषदः । सिद्धस्यार्थस्य साध्यत्वेन निर्देशो दोषायेति सामर्थ्याद्यथैवंशब्दाध्याहारेण वाक्यभेदेन च योज्यमितिभावः । ननु वेदांतैरीश्वरनित्यत्वं जानंतस्तत्रैवोक्तं जीवनित्यत्वं कथं न जानंति । उच्यते । नित्योनित्यानामितिनिर्धारणसामर्थ्याज्जीवानां नित्यत्वमीश्वरस्य परमनित्यत्वमवगम्य मंदाः प्रतिपद्यन्ते । नित्यत्वं हि विनाशाभावः । नचाभावस्तारतम्यवान् अतईश्वरएव नित्योजीवेषु तूपचार इतितान्प्रत्यनुमानेन जीवनित्यत्वं ईश्वरदृष्टांतेन साध्यते । तत्र नत्वेवाहं जातुनासमिति दृष्टांतेनानादित्वसाधनमनुवदति । नत्वमित्यादिना तस्य पक्षधर्मतामाह—**नचैवेत्यादिना** । दृष्टांते पक्षे च साध्याभिधानमिति अत्र भगवता जीवानां परस्परमीश्वराच्च भेदे प्रतिपादितेपि बहुवचनं शरीरापेक्षया नत्वात्मापेक्षयेतिवदतो भविष्यत्युत्तरम् ॥ १२ ॥

**रा० भा०–**प्रथमं तावदात्मनां स्वभावं शृणु । अहं सर्वेश्वरस्तावदतो वर्तमानात्पूर्वस्मिन्ननादौ काले न नासम् अपि त्वासं त्वन्मुखाश्चैते ईशितव्याः क्षेत्रज्ञा न नासन् अपि त्वासन् । अहंच यूयं च सर्वे वयमतः परमस्मादनन्तरे काले न चैव न भविष्यामः अपि तु भविष्याम एव । यथाहं सर्वेश्वरः परमात्मा नित्य इति नात्र संशयस्तथैव भवन्तः क्षेत्रज्ञा आत्मानोऽपि नित्या एवेति मन्तव्याः । एवं भगवतः सर्वेश्वरादात्मनां परस्परं च भेदः पारमार्थिक इति भगवतैवोक्तमिति प्रतीयते । अज्ञानमोहितं प्रति तन्निवृत्तये पारमार्थिकनित्यत्वोपदेशसमये अहं त्वमिमे सर्वे वयमिति व्यपदेशात् औपाधिकभेदवादे ह्यात्मभेदस्यातात्त्विकत्वेन तत्त्वोपदेशसमये भेदनिर्देशो न संगच्छते भगवदुक्तात्मभेदः स्वाभाविक इति श्रुतिरप्याह । " नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् " इति । नित्यानां बहूनां चेतनानां य एकश्चेतनो नित्यः स कामान् विदधाति इत्यर्थः । अज्ञानकृतभेददृष्टिवादे तु परमपुरुषस्य परमार्थदृष्टेर्निर्विशेषकूटस्थनित्यचैतन्यात्मयाथात्म्यसाक्षात्कारान्निवृत्ताज्ञानतत्कार्यतया अज्ञानकृतभेददर्शनं तन्मूलोपदेशादिव्यवहाराश्च न संगच्छन्ते । अथ परमपुरुषस्याधिगताद्वैतज्ञानस्य बाधितानुवृत्तिरूपमिदं भेदज्ञानं दग्धपटादिवन्न बन्धकमित्युच्येत नैतदुपपद्यते । मरीचिकाजलज्ञानादिकं हि बाधितमनुवर्तमानमपि न जलाहरणादिप्रवृत्तिहेतुः । एवमत्राप्यद्वैतज्ञानेन बाधितं भेदज्ञानमनुवर्तमानमपि मिथ्यार्थविषयत्वनिश्चयान्नोपदेशादिप्रवृत्तिहेतुर्भवति । न चेश्वरस्य पूर्वमज्ञस्य शास्त्राधिगततत्त्वज्ञानतया बाधितानुवृत्तिर्वक्तुं शक्यते । " यः सर्वज्ञः स सर्ववित् " " परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । " ' वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि मां तु वेद न कश्चन ' इति श्रुतिस्मृतिविरोधात् । किंच परमपुरुषश्चेदानींतनगुरुपरम्परा चाद्वितीयात्मास्वरूपनिश्चये सति अनुवर्त्तमानेऽपि भेदज्ञाने स्वनिश्चयानुरूपमद्वितीयमात्मज्ञानं कस्मादुपदिशतीति वक्तव्यम् । प्रतिबिम्बवत्प्रतीयमानेभ्योऽर्जुनादिभ्य इति चेन्नैतदुपपद्यते । न ह्युन्मत्तः कोऽपि मणिकृपाणदर्पणादिषु प्रतीयमानेषु स्वात्मप्रतिबिम्बेषु तेषां स्वात्मनोऽन्यत्वं जानंस्तेभ्यः कमप्यर्थमुपदिशति । बाधितानुवृत्तिरपि तैर्न शक्यते वक्तुम् । बाधकेनाद्वितीयात्मज्ञानेनात्मव्यतिरिक्तभेदज्ञानकारणस्यानादेर्विनष्टत्वात् । द्विचन्द्रज्ञानादौ तु चन्द्रैकत्वज्ञानेन पारमार्थिकतिमिरादिदोषस्य

द्विचन्द्रज्ञानहेतोरविनष्टत्वाद्बाधितानुवृत्तिर्युक्ता । अनुवर्तमानमपि प्रबलप्रमाणबाधितत्वेनाकिंचित्करम् । इह तु भेदज्ञानस्य सविषयस्य सकारणस्यापारमार्थिकत्वेन वस्तुयाथात्म्यज्ञानविनष्टत्वात्कथंचिदपि बाधितानुवृत्तिः संभवति । अतः सर्वेश्वरस्य इदानींतनगुरुपरम्परायाश्च तत्त्वज्ञानमस्ति चेद्भेददर्शनं तत्कार्योपदेशाद्यसंभवः । भेददर्शनमस्तीति चेदज्ञानस्य तद्धेतोः स्थितत्वेनाज्ञानत्वादेव सुतरामुपदेशो न संभवति ! किंच गुरोरद्वितीयात्मविज्ञानादेव ब्रह्माज्ञानस्य सकार्यस्य विनष्टत्वाच्छिष्यं प्रत्युपदेशो निष्प्रयोजनः । गुरुस्तज्ज्ञानं च कल्पितमिति चेत् शिष्यतज्ज्ञानयोरपि कल्पितत्वात्तदप्यनिवर्त्तकम् । कल्पितत्वेऽपि पूर्वविरोधित्वेन निवर्त्तकमिति चेत्तदाचार्यज्ञानेऽपि समानमिति तदेव निवर्त्तकं भवतीत्युपदेशानर्थक्यमेवेति कृतमसमीचीनवादैर्निरस्तैः ॥ १२ ॥

अ० टी०—अशोच्यत्वे अभक्तत्वं हेतुमुक्त्वा पुनरशोच्यत्वे हेत्वंतरमाह—**नत्वेवेति** । अहमेतादृशो यादृशं त्वं द्रक्ष्यसि तादृशो जातु कदाचिदपि नासमिति न किं त्वेवंभूतः । सर्वदैवाऽऽसम् अस्मीत्यर्थः । एतेन स्वस्य नित्यत्वमुक्तं ननु त्वन्नित्यत्वे कथमेते शोकानर्हा इत्यत आह । नत्वमासीः । न च इमे जनाधिपा आसन्निति न किं तु सर्वं मल्लीलारूपत्वान्नित्यमेवेत्यर्थः । तेनासुराणां मरणमपि नित्यमेवेत्यर्थः। तस्मादेते माया एवेति शोकानर्हा इति भावः । नन्वहं युद्धे मरिष्ये चेत्तदा भवच्चरणवियोगो भविष्यत्यधर्माचरणाद्वा तथा भविष्यतीति शोचामीतिचेत्तत्राह—**नचैवेति** । अतःपरं वर्त्तमानकालानन्तरं सर्वे वयं न भविष्याम इति न किंतु भविष्याम एव । एवं सर्वस्य नित्यत्वात्सर्वेऽशोच्या इति त्वं शोकं कर्तुं नार्हसि इति भावः ॥ १२ ॥

नी० टी०—ननु देहादन्योऽपि देहनाशेन नश्यतां कोशकार इव कोशनाशेनेति तत्राह—**न त्वेवाहमिति** । त्वमहमिमे च सर्वे अनादयोऽनंताश्च स्म इत्यर्थः । जातु कदाचित् अहं न आसं इति न अपि तु आसमेव । तथा त्वमपि नासीरिति न अपि त्वासीरेव । इमे जनाधिपाः राजान इत्युपलक्षणं सर्वस्य जंतुजातस्य नासन्निति न अपि त्वासन्नेवेति योजना । अनादित्वादनंताश्चेत्याह—**न चेति** । न भविष्याम इति नैव किंतु सर्वे भविष्याम एव । ननु देहस्यानात्मत्वे कथं तत्पीडयाऽयं पीड्यत इति चेद्यक्षवत्तदभिमानमात्रादिति ब्रूमः । यदा हि यक्षः परशरीरे विशति तदा तत्पीडया देहपतिर्न बाध्यते तस्य तदानीं देहाभिमानाभावात् । यक्षस्तु बाध्यतेऽभिमानसत्वादिति लोके प्रसिद्धं । किं च प्राचीनकर्मव्यतिरेकेण जीवनं नोपपद्यते कृतहानाकृतभ्यागमप्रसंगात् वृक्षादिष्वपि प्राक्कर्मास्तीत्यनुमेयं स्थावरजीविका प्राक्कर्मपूर्विका जीविकात्वात् पाकादिक्रिया पूर्वकास्मदादिजीविकावत् । अपि च क्रियावैचित्र्यात्कार्यवैचित्र्यं दृष्टं घटशरावोदंचनादिषु तद्वदिहापि सुखदुःखादिवैचित्र्यं प्राक्कर्मवैचित्र्यादनुमेयं । तथा सद्योजातस्य गोवत्सस्य स्तनपानादौ प्रवृत्तिर्जंतुमात्रस्य मरणात्रासश्च प्राग्भवीयानुभवजनितसंस्कारजन्यौ भोजनादिप्रवृत्तिश्चोच्छ्वासादिवदित्यतोऽस्ति प्राचीनं कर्म । अपि च कौलिकशास्त्रप्रसिद्धमेतत् यथा देवदत्तः स्वशरीरे कंटकवेधेन खिद्यते एवं शत्रुकृतायां देवदत्तप्रतिमायां कंटकेन विद्धायां देवदत्तो व्यथते । तत्र व्यथाहेतुर्नांतरं धातुवैषम्यं नापि बाह्यं कंटकवेधादि किंतु केवलं प्राक्कर्ममात्रं । एवं च बीजांकुरन्यायेन कर्मतज्जन्यसंस्कारपरंपरयाऽनादिः संसार इति न देहनाशादात्मनाशोऽस्तीति न भीष्मादयः शोचनीयाः । अत्र पूर्वस्मिन् श्लोके आत्मनो देहादन्यत्वमुक्तं गतासून् देहानिति विशेषणेन । अत्र तु सूक्ष्मशरीरविशिष्टस्यात्मनो व्यवहारदृष्ट्या नित्यत्वं साधितमिति भेदः ॥ १२ ॥

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ॥**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥**

**शां० भा०**-तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह—देहिन इति । देहोऽस्यास्तीति देही तस्य देहिनो देहवदात्मनोऽस्मिन्वर्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था यौवनं यूनो भावो मध्यमावस्था जरा वयोहानिर्जीर्णावस्थेत्येतास्तिस्रोऽवस्था अन्योन्यविलक्षणास्तासां प्रथमावस्थानाशे न नाशो द्वितीयावस्थोपजनने नोपजननमात्मनः किं तर्ह्यविक्रियस्यैव द्वितीयतृतीयावस्थाप्राप्तिरात्मनो दृष्टा यथा तथा तद्वदेव देहादन्यो देहान्तरं तस्य प्राप्तिर्देहान्तरप्राप्तिरविक्रियस्यैवाऽऽत्मन इत्यर्थः । धीरो धीमांस्तत्रैवं सति न मुह्यति न मोहमापद्यते ॥ १३ ॥

शां० आ०-ननु पूर्वं देहं विहायापूर्वं देहमुपाददानस्य विक्रियावत्त्वेनोत्पत्तिविनाशवत्त्वविभ्रमः समुद्भवेदिति शङ्कते—**तत्रेति**। अशोच्यत्वप्रतिज्ञायां नित्यत्वे हेतूकृते सतीति यावत् । अवस्थाभेदे सत्यपि वस्तुतो विक्रियाभावादात्मनो नित्यत्वमुपपन्नमित्युत्तरश्लोकेन दृष्टान्तावष्टम्भेन प्रतिपादयतीत्याह—**दृष्टान्तमिति** । न केवलमागमादेवाऽऽत्मनो नित्यत्वं किं त्ववस्थान्तरवज्जन्मान्तरे पूर्वसंस्कारानुवृत्तेश्चेत्याह—**देहिन इति**। देहवत्त्वं तस्मिन्नहंममाभिमानभाक्त्वं, तासामिति निर्धारणे षष्ठी । आत्मनः श्रुतिस्मृत्युपपत्तिभिर्नित्यत्वज्ञानं धीमानित्यत्र धीर्विवक्ष्यते—**एवं सतीति** । तत्त्वतो विक्रियाभावान्नित्यत्वे समधिगते सतीत्यर्थः ॥१३॥

**आ० भा०**-देहिनो भाव एतद्भवति तदेवासिद्धमिति । चेन्न देहिनोस्मिन् । यथा कौमारादिशरीरभेदेपि देही तदीक्षितासिद्धः । एवं देहांतरप्राप्तावपि । ईक्षितृत्वात् । नहि जडस्य शरीरस्य कौमाराद्यनुभवः संभवति । मृतस्यादर्शनात् । मृतस्य वाय्वाद्यपगमादनुभवाभावः । अहं मनुष्यइत्याद्यनुभवाचैतत्सिद्धमितिचेन्न । सत्ये वा विशेषे देहे सुप्त्यादौ ज्ञानादिविशेषादर्शनात् । समश्चाभिमानो मनसि काष्ठादिवच्च । श्रुतेश्च । प्रामाण्यं च प्रत्यक्षादिवत् । न च बौद्धादिवत् । अपौरुषेयत्वात् । न ह्यपौरुषेये पौरुषेयाज्ञानादयः कल्पयितुं शक्याः । विना च कस्यचिद्वाक्यस्यापौरुषेयत्वं न सर्वसमयाभिमतधर्मादिसिद्धिः । यश्च तौ नांगीकुरुते । नासौ समयी । अप्रयोजकत्वात् । मास्तु धर्मो निरूप्यत्वादितिचेन्न । सर्वाभिमतस्य प्रमाणं विना निषेद्धुमशक्यत्वात् । न च सिद्धिरप्रमाणकस्येति चेन्न । सर्वाभिमतेरेव प्रमाणत्वात् । अन्यथा सर्ववाचनिकव्यवहारासिद्धेश्च । न च मया श्रुतमिति तव ज्ञातुं शक्यं । अन्यथा वा प्रत्युत्तरं स्यात् । भ्रांतिर्वा तव स्यात् । सर्वदुःखकारणत्वं वा स्यात् । एको वान्यथा स्यात् । रचितत्वे च धर्मप्रमाणस्य कर्तुरज्ञानादिदोषशंका स्यात् । नचादोषत्वं स्ववाक्यैनैव सिद्ध्यति । न च येनकेनचिदपौरुषेयमित्युक्तमुक्तवाक्यसमं । अनादिकालपरिग्रहसिद्धत्वात् । अतः प्रामाण्यं श्रुतेः अतः कुतर्कैर्धीरस्तत्र न मुह्यति । अथवा जीवनाशं देहनाशं वा अपेक्ष्य शोकः । न जीवनाशं । नित्यत्वादित्याह । न त्वेवेति । नापि देहनाशमित्याह । देहिनइति । यथा कौमारादिदेहहानेन जरादिप्राप्तावशोकएवं जीर्णादिदेहहानेन देहान्तरप्राप्तावपि ॥ १३ ॥

आ० ज०-ननु चात्र किं परिदृश्यमानदेहपक्षीकारेणानुमीयते किंवा तदतिरिक्तदेहिपक्षीकारेण नाद्यः । देहोत्पत्तिनाशयोः प्रत्यक्षसिद्धत्वेन हेतोः स्वरूपासिद्धत्वात्कालात्ययापदिष्टत्वाच्चेति स्फुटत्वान्नोक्तम् । द्वितीये दोषमाह—**देहिनइति** । देहिनो देहवतो देहातिरिक्तस्यात्मनः भावे । सद्भावे एतन्नित्यत्वानुमानं संभवति देहपक्षोक्तदोषाभावात् किं तु देहातिरिक्तात्मसत्त्वमेवासिद्धं । प्रमाणाभावात् । ततश्चाश्रयासिद्धिरिति । अस्तु वा देहातिरिक्तात्मसत्त्वं तथापि नानुमानं संभवतीत्याह—**देहिनइति**। देहिनइत्येकवचनं तंत्रं पूर्वोत्तरदेहेष्वेक एवात्मेत्यस्यार्थस्य भावे एतदनुमानं संभवति । स्वरूपासिद्ध्याद्यभावात् किंनाम तत्पूर्वोत्तरदेहेष्वात्मैक्यमेवासिद्धं प्रमाणाभावात् । तथाच देहोत्पत्तावुत्पत्तिमतस्तद्विनाशे च विनाशवतः कथमनादित्वेन नित्यत्वं साध्यत इति । उभयस्यापि परिहारदर्शनादेवं योज्यं । अर्थद्वयानुगुण्यायैव बहुवचने प्रकृतेप्येकवचनं तथा भाव इतिपुंल्लिंगे प्रकृतेपि

तदेवेति सामान्यग्रहणाय नपुंसकनिर्देशः । नेत्याहेति शेषः । देहिनोस्मिन्नित्यतः परमितिशब्दश्च आक्षेपद्वयपरिहाराय पादत्रयं व्याख्याति—**यथेति** । अत्र देहीति तदीक्षिता सिद्धइतिदेहातिरिक्तात्मसाधनं तदितिकौमारादिपरामर्शः । याजकादित्वात्समासः । द्वितीयांतस्य तृन्नंतेन वा समासः । अस्ति तावत्कौमारादिविषयमीक्षणम् । न चेक्षणमीक्षितारं विना संभवति । सच वक्ष्यमाणात्परिशेषः प्रमाणाद्देही देहातिरिक्तः सिद्धइति अत्र कौमारादिग्रहणमतंत्रं । ज्ञानमात्रेण ज्ञातुः सिद्धेः । देहशब्दश्चेंद्रियादिसहितशरीरवृत्तिः श्लोके च कौमारं यौवनं जरेति विषयेण विषयीक्षणमुपलक्ष्यते । तद्देहिनो देहातिरिक्तस्येत्युक्तं भवति यथेत्यादि समस्तं वाक्यं श्लोके च पादत्रयं देहभेदेप्यात्मैकत्वे साधनम् । कौमारादिमच्छरीरभेदइत्यर्थः । देही एकएवेत्यर्थः—**तदीक्षितेति** । योहं कुमारशरीरवानभूवं स इदानीं युवशरीरवान्वर्तइत्यादिप्रत्यभिज्ञातेत्यर्थः । देहांतरप्राप्तावपीति अनेकदेहप्राप्तावपीत्यर्थः । एकएव देही सिद्ध इति वर्तते । ईक्षितृत्वादितिप्रत्यग्रजातस्य शिशोः आहाराद्यभिलाषेण पूर्वदेहानुसंधानसिद्धेरित्याशयः । एवमात्मनो देहातिरिक्तं देहभेदेप्येकत्वं च प्रसाध्य धीरस्तत्र न मुह्यतीत्युच्यते । तस्य वैयर्थ्यमित्याशंक्य येस्मिन्विषयेऽन्येपि मोहास्ते धीरेण स्वयं निराकार्या इत्येवमर्थत्वान्न वैयर्थ्यमित्याशयवान् तत्प्रदर्शनार्थमुत्तरं प्रकरणमारभते । तत्रेक्षणेन कथं देहातिरिक्तात्मसिद्धिः । ईक्षिताहितेन सिध्यति । स च शरीरप्राणजठरानलेंद्रियमनोविषयसन्निधावीक्षणदर्शनात्तेषामन्यतमः किं न स्यादित्यतः शरीरस्य तावदीक्षणं निषेधति—**नहीति** । अत्रापि कौमारादीत्यतंत्रं । शरीरस्यानुभवो न संभवतीति प्रतिज्ञा । जडस्य शरीरस्येतिहेतुद्वयं । मृतस्यादर्शनादितिदृष्टांतोक्तिः । जडत्वं च भौतिकत्वं विवक्षितमितिं न साध्याविशिष्टता । अप्रयोजकत्वाभिप्रायेण शंकते—**मृतस्येति** । जीवच्छरीरमृतशरीरयोर्भौतिकत्वे शरीरत्वे च समानेपि माभून्मृतशरीरस्येक्षणं । प्राणादिवायूनां जाठरानलस्येंद्रियाणां चापगमात् । जीवतस्तु प्राणादिसन्निधानाद्भविष्यति । को विरोधः माहिभूदेकधर्मोपपन्नानामवांतरकारणवैचित्र्याद्वैचित्र्याभावः । न केवलमिदमाशंकते । किंतु अहं मनुष्यइत्याद्यनुभवादेतद्देहस्येक्षितृत्वं सिद्धं प्रमितं चेत्यर्थः । दूषयति । नेति । न प्राणादिसन्निधानं शरीरस्येक्षितृत्वे प्रयोजकं वाच्यं । सुप्तिमूर्छयोः शरीरप्राणाद्यपगमलक्षणरहिते सत्येव ज्ञानादीनां धर्माणामदर्शनात् । ज्ञानग्रहणमुपलक्षणं । सुखदुःखेच्छाद्वेषप्रयत्नैरप्यात्मा साध्यइतिसूचयितुमादिपदं । मृतादौ ज्ञानाद्यभावश्च तत्कार्यादर्शनात्सिद्धइति दर्शयितुं ज्ञानादिविशेषेत्युक्तं । ज्ञानादीनां विशेषः कार्यमिति । एतेन संघातचैतन्यपक्षः प्राणादिचैतन्यपक्षश्च पराकृतो वेदितव्यः । मनसईक्षितृत्वमतिदेशेन निराचष्टे—**समश्चेति** । मनोविषयईक्षितृत्वाभिमानश्च पूर्वेण समः । सुप्त्यादौ सत्यपि मनसि ज्ञानादर्शनात् । एवंतर्ह्यात्मापि ज्ञाता न स्यादितिचेन्न । तदा तस्य मनसा सन्निकर्षाभावात् । मनसोपि तथास्त्वितिचेत् सिद्धस्तावदात्मा मनसो ज्ञातृत्वे दोषांतरमाह—**काष्ठादिवचेति** । मनो न ज्ञातृज्ञानकरणत्वात् । यद्यस्यां क्रियायां करणं न तत्तत्र कर्तृ यथा पाके काष्ठानि छिदायां कुठारो वा । नचासिद्धो हेतुः । मनसा जानामीत्यनुभवात् । एतेनात्मसन्निकर्षेण मनोज्ञात्रितिनिरस्तं । ननु जन्यज्ञानं मनोनिष्ठमितिसिद्धांतः । तत्कथमेतन्मैवं । मनोनिष्ठस्यापि ज्ञानस्य न मनः कर्तृ किंत्वात्मैव यथावयवविक्लेदलक्षणस्य पाकस्य न तंडुलाः कर्तारः । किंतु देवदत्तइति । एतेनेंद्रियचैतन्यपक्षोपि निरस्तः । चक्षुषा पश्यामीत्यादौ तेषामपि करणत्वप्रतीतेरिति । अतीतादिज्ञानदर्शनाद्विषयचैतन्यपक्षः स्फुटदूषणइति न निराकृतः एवंपरिशेषप्रमाणेन देहातिरिक्तात्मा सिद्धः । तस्य स्वभावादेवाहाराद्यभिलाषोपपत्तेः । प्रत्यभिज्ञानमसिद्धमितिवंदंतं प्रति आत्मनित्यत्वे प्रमाणांतरं चाह—**श्रुतेश्चेति** । अस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोकेइत्यादिश्रुतेश्च देहातिरिक्तो नित्य आत्मा सिद्धः । अतएव न स्वभाववादानवकाशइति।ननु बौद्धचार्वाकादीन् प्रति देहातिरिक्तनित्यात्मसाधनमिदं।नच ते श्रुतेःप्रामाण्यमंगीकुर्वते।तत्कथं श्रुत्युदाहरणमित्यतआह—**प्रामाण्यं चेति** । बौद्धेन तावत्प्रत्यक्षानुमानयोश्चार्वाकेण च प्रत्यक्षस्य प्रामाण्यमंगीकृतं । तत्कुतइति वक्तव्यं।बोधकत्वेनेतिचेत्तर्हि तद्वच्छ्रुतेरप्यंगीक्रियताम् । ननु वाक्यत्वे समेपि केषांचिद्बौद्धादिवाक्यानामप्रामाण्यदर्शनाच्छ्रुतेरपि तदाशंक्यतइत्यतआह—**नचेति** । बुद्धस्येदं बौद्धं । चार्वाको बौद्धमुदाहरति । बौद्धस्त्वन्यादितिद्रष्टव्यं । अप्रामाण्यं श्रुतेः शंकनीयमितिशेषः । तथासति इंद्रियलिंगयोरपि क्वचिदप्रामाण्यदर्शनात् संप्रतिपन्नयोरपि प्रत्यक्षानुमानयोस्तच्छंकाप्रसंगादितिभावः । प्रसक्तापि शंका तत्र निर्दोषत्वेनापनीयतइति चेत्समं प्रकृतेपीत्याह—**अपौरुषेयत्वादिति** । अपौरुषेयत्वेपि दोषित्वं किन्न स्यादित्यतआह—**नहीति** । सामान्योक्तित्वादपौरुषेये । नपुंसकत्वोक्तिः । अन्यथा श्रुतेः प्रकृतत्वात्स्त्रीलिंगं स्यात् । शब्देद्व्यबोधकत्वादयो दोषाः ते च वक्तृपुरुषाश्रिताऽज्ञानादिमूलाः । यस्य तु वक्ता पुरुषएव नास्ति तत्र कथं वक्तृपुरुषाश्रिता ज्ञानादयो दोषमूलत्वेन कल्पयितुं शक्याः—**व्याहतेरिति** । अत्राज्ञानादीनां पौरुषेयत्वोक्तिरुपचारात् । पुरुषशब्दात्तत्कृतवाक्यादिष्वेव ढञः स्मरणात् । ननु श्रुतेरपौरुषेयत्वमेवनास्ति । वाक्यत्त्वात् । लौकिकवाक्यवदितिचेत् किमेवं वदतः किमपि वाक्यमपौरुषेयं नास्तीति मतं उत किंचिदस्तीति । आद्ये दोषमाह—**विनेति** । कस्यचिद्वाक्यस्यापौरुषेयत्वाभावे धर्माधर्मयोरनिश्चयः प्रसज्येत । निश्चायकप्रमाणाभावात् । नच तथास्त्वितिवक्तुं शक्यं । तत्सद्भावस्य सर्वैः समयिभिर्निश्चितत्वादिति । ननु प्रत्यक्षैकप्रमाणवादी यश्चार्वाको धर्माधर्मौ नांगीकुरुते तस्य नेदमनिष्टं । किमप्यपौरुषेयं वाक्यं अनंगीकृत्य वेदापौरुषेयत्वं प्रत्याचक्षाणान्सर्वान्प्रति चायं प्रसंगइत्यतस्तेनापि

धर्मादिकमंगीकार्यैतं प्रसंगं वक्ष्यामइत्याशयेनाह--**यश्चेति**।तौ धर्माधर्मौ।इति प्रसज्येत इतिशेषः। धर्माद्यनंगीकारे कुतस्तच्छास्त्रस्याशास्त्रत्वप्रसंगो येनासौ शास्त्री न स्यादित्यतआह--**अप्रयोजकत्वादिति**। प्रयुज्यते प्रवर्त्यते प्रणेता प्रणयने श्रोता च श्रवणे शास्त्रे याभ्यां ते प्रयोजके विषयप्रयोजने अविद्यमाने प्रयोजके यस्य शास्त्रस्य तत्तथा। अनन्यलभ्यं कमपि पुरुषार्थमधिकृत्य तत्साधनं तथाविधमर्थं प्रतिपादयन्वाक्यसमूहो हि शास्त्रं। अन्यथाऽतिप्रसंगात्। नचातींद्रियस्याभावेऽन्यत्तथानुभूतं शक्यनिरूपणं।अतः शास्त्रत्वसिद्धये विषयादित्वेन धर्मादिकं किमप्यंगीकार्यमितिभावः। शंकते—**मास्त्विति**। मायं न माङ्। अस्त्वित्यव्ययं। धर्मइत्युपलक्षणं। अनिरूप्यत्वात्। तत्प्रमाणाभावेन प्रतिपादयितुमशक्यत्वात्। इदमुक्तं भवति। विषयप्रयोजने हिते भवतः ये प्रमाणेन प्रतिपादयितुं शक्ये ते वाङ्मात्रस्य श्रोतृभिरनादरणात्। नच धर्मादिकं प्रमाणेन प्रतिपादयितुं शक्यं। प्रत्यक्षागोचरत्वात्। अनुमानादेश्च प्रामाण्याभावात्। अतो न शास्त्रस्य विषयत्वादिना धर्मादिकमंगीकर्तुमुचितं। नचैतावता निर्विषयत्वाद्यापत्तिः। यतो धर्माद्यभावो विषयो भविष्यति। प्रयोजनं च श्रोतॄणां धर्माद्यनुष्ठानप्रसक्तक्लेशनिवृत्तिः। धर्मादिसद्भावभ्रमोपरुद्धविषयसुखावाप्तिश्च। प्रणेतुश्च लोकोपकारः। उपकर्तारं च प्रत्युपकुर्वंति लोकाइति निराकरोति—**नेति**। एवं वदता धर्माद्यभावोपि न शास्त्रविषयत्वेन शक्यते वक्तुं। सर्वाभिमतस्य धर्मादेः प्रमाणं विना वाङ्मात्रेण निषेद्धुं नास्तीति प्रतिपादयितुमशक्यत्वात्। घटाद्यभावइव प्रत्यक्षेणैव धर्माद्यभावो निश्चेष्यतइतिचेत्। स्यादेवं। यद्यत्र न काचिद्विप्रतिपत्तिः। यत्र त्वस्तित्वाभिमानस्तत्र पिशाचादाविव प्रत्यक्षानुपलंभः संदेहहेतुरेव भवतिइति। तदिदमुक्तं सर्वाभिमतस्येति। पुनःशंकते—**नचेति**। माभूद्धर्माद्यभावस्य विषयत्वं तत्साधकप्रमाणाभावात्। तथापि धर्मादेर्विषयत्वादिकं न घटते। अप्रामाणिकस्य प्रमित्यनुपपत्त्या साधयितुमशक्यत्वादिति। निराकरोति—**नेति**। अस्ति तावद्धर्मादिविषये सर्वेषामविपालगोपालमस्तित्वाभिमानः। अभिमानो ज्ञानमेव न च तस्य बाधकं किंचित्। धर्माद्यभावप्रतिपादकप्रमाणाभावस्योक्तत्वात्। अतः सर्वाभिमतेरेव धर्मादौ प्रमाणत्वात् तत्करणस्य च प्रमाणत्वात्। धर्मादेः प्रामाणिकत्वसिद्धौ किमनया व्यर्थचिंतया। नच तत्र प्रमाणविशेषोऽशक्यनिरूपणः। आगमस्य तत्सहकारिणोऽनुमानस्य च सत्त्वात्। अतएव नांधपरंपरापि। आगमादेः प्रामाण्यं नास्तीति उक्तमित्यतआह—**अन्यथेति**। यदाऽगमस्यानुमानस्य च न प्रामाण्यं तदा सर्वस्य वाचा निर्वर्त्यस्य व्यवहारस्यासिद्धिः स्यात्। परप्रत्ययनार्थोहि वाग्व्यहारः। स यदि न परं प्रत्यापयेत् व्यर्थो न क्रियेतैवेति। चशब्दः प्रमाणसामान्यसिद्ध्या तद्विशेषसिद्धेः समुच्चये। भवत्वागमप्रामाण्ये वाचनिकव्यवहारासिद्धिः। अनुमानाप्रामाण्ये तु कथमित्यतआह—**नचेति**। त्वदीयं वाक्यं मया श्रूयते इति ज्ञात्वा मांप्रति त्वया वाग्व्यवहारः क्रियतेऽन्यथा वा। द्वितीये निष्फलो न कर्तव्यः स्यात्। नाद्यः। परचित्तवृत्तीनां परस्याप्रत्यक्षत्वेन मया श्रुतमिति तव ज्ञातुमशक्यत्वात्। मदीयं प्रत्युत्तरमेव तज्ज्ञानोपायइत्येव वक्तव्यमितिभावः। अस्त्वेवमित्यतआह—**अन्यथावेति**। वाशब्दोऽवधारणे। प्रत्युत्तरं हि लिंगतया ज्ञापकं। नच तव मतेऽनुमानं प्रमाणं। अतः प्रत्युत्तरमन्यथैवाज्ञापकमेव स्यादिति। ननु लिंगशब्दयोः प्रामाण्यमेव नांगीक्रियते। ज्ञापकत्वमात्रमंगीक्रियतएव। अतः कथं वाचनिकव्यवहारसिद्धिरित्यतआह--**भ्रांतिर्वेति**। ज्ञापकत्वमंगीकृत्य प्रामाण्यानंगीकारे शब्दलिंगाभ्यां जायमानः प्रत्ययस्तव मते भ्रांतिर्वा स्यात्संशयोवा। गत्यंतराभावात्। नच परस्य भ्रांत्याद्यर्थं वचनप्रयोगः। नापि प्रत्युत्तरेण भ्रांतः संदिग्धो वा वाक्यं प्रयुङ्तइतियुक्तम्। अतो वाचनिकव्यवहारसिद्ध्यर्थमागमानुमानप्रामाण्यमंगीकार्यमिति। एवं चार्वाकशास्त्रस्य विषयं निराकृत्य प्रयोजनमपि निराकुर्वन् श्रोतृप्रयोजनं तावन्निराचष्टे—**सर्वेति**। यथा शास्त्रस्य सर्वेषां श्रोतॄणां सुखकारणत्वं। यथा धर्माद्यभावज्ञाने सर्वमर्यादातिक्रमे परस्परहिंसादिना सर्वदुःखकारणत्वं च स्यात्। तथा च समव्ययफलं निष्प्रयोजनमेवेति। इदानीं शास्त्रप्रणेतृप्रयोजनं निराकरोति--**एकोवेति**। धर्मादिज्ञानशून्याः पशुप्राया नोपकारिणमुपकुर्वंति। अपितु सर्वेप्यपकर्तुमलं। तदभावेप्येकोवाऽन्यथाऽपकारकः स्यादितिभावः। तदेवं धर्माद्यनंगीकारे शास्त्रस्य विषयाद्यभावेनाशास्त्रत्वप्रसंगात्सर्वैर्धर्मादिकमंगीकार्यमिति। ननु स्वीकृतं धर्मादिकं पौरुषेयवाक्यात्तन्निश्चय इत्यतआह--**रचितत्वे चेति**। ततश्च न धर्मादिनिश्चयइतिभावः। निर्दोषत्वेन प्रमितोऽसाविति चेत् तस्य निर्दोषत्वं किं तद्वाक्यात्सिद्धं प्रमाणांतरेण वा। न द्वितीयः। तदभावात्। आद्यं दूषयति—**नचेति**। अतिप्रसंगादितिभावः। नच प्रत्यक्षादिना धर्मादिसिद्धिः। अतः सर्वैः किमप्यपौरुषेयं वाक्यमंगीकार्यं। अंगीकृतं च बौद्धादिभिः स्वसमयापौरुषेयत्वं। शौद्धोदनिप्रभृतयः संप्रदायवर्तका इत्युक्तत्वात्। ततः किमितिचेद्वाक्यत्वहेतोस्तत्रानैकांत्यमिति। अस्त्वेवमनुमानस्यान्यतरानैकांत्याच्छ्रुतेरपौरुषेयत्वे बाधकाभावः। तत्साधकं तु किमितिचेत्कर्तुरप्रसिद्धिरपौरुषेयत्वप्रसिद्धिश्चेतिब्रूमः। एवं तर्हि गूढकर्तृकस्य कृतापौरुषेयत्वप्रसिद्धिकस्याप्यपौरुषेयत्वप्रसंग इत्यतआह—**नचेति**। केनचित्कृतमितिशेषः। उक्तवाक्यसमं वेदवदपौरुषेयमित्यर्थः। अनादिकाले यः परिग्रहः प्राक्तनमेवैतदितिज्ञानं तेन विषयीकृतत्वाच्छ्रुतेरितरस्य तदभावादपौरुषेयत्वप्रसिद्धिरेव तत्र भ्रमेतिभावः। अपौरुषेयत्वसिद्धौ सिद्धमर्थमुपसंहरति--**अतइति**। एवं चतुर्थपादोपयुक्तं प्रमेयमुक्त्वातसिदानीं निवेशयति—**अतइति**। यतएवं नैरात्म्यवादिभिरुत्प्रेक्षिताः कुतर्काः। अतस्तैः कुतर्कैर्धीरो धीमांस्तत्र

देहातिरिक्तनित्यात्मसद्भावविषये न मोहमापद्यते । नरके नियतं वासइत्याद्यर्जुनवचनेन तस्य नित्यात्मप्रतिपत्तिसिद्धेः प्रथमपुरुषप्रयोगः । अनेकार्था गीतेतिदर्शयितुं श्लोकद्वयं प्रकारांतरेण व्याचष्टे—**अथवेति** । न जीवनाशमपेक्ष्य शोकः कार्यइतिशेषः । नित्यत्वाज्जीवस्य । अनेन योजनापूर्ववदेवेतिज्ञापयाति । नापीत्यत्रापि पूर्ववच्छेषः । अत्र पूर्वयोजना न संगच्छते । अतोन्यथापादत्रयं व्याख्याति—**यथेति** । जरादिप्राप्तौ देहांतरप्राप्ताविति निमित्तसप्तम्यौ ततश्चायमर्थः । कौमाराद्यवस्थाविशिष्टदेहहाने तावन्नास्ति शोकइतिप्रसिद्धं । तत्कस्य हेतोरितिवाच्यं । जरादिविशिष्टदेहांतरलाभात् । समानलाभे न हानिर्हि समाधीयतइतिचेत् । तर्हि मरणेपि शोको न कार्यः । देहांतरस्य लाभादेव । यदा तु जीर्णलाभेन समीचीनहानेः प्रतिविधानं । तदा तु सुतरां समीचीनलाभेन जीर्णहानेरिति । तत्रावस्थामात्रहानिरत्र त्ववस्थावतोपीत्येतदनुपयुक्तं वैषम्यं । निष्कप्रदानेन पटग्रहणदर्शनादिति भावेनोक्तं—**धीरइति** ॥ १३ ॥

रा० भा०—एकस्मिन्देहे वर्तमानस्य देहिनः कौमारावस्थां विहाय यौवनाद्यवस्थाप्राप्तावात्मनः स्थिरत्वबुद्ध्या यथात्मा नष्ट इति न शोचति देहाद्देहान्तरप्राप्तावपि तथैव स्थिर आत्मेति बुद्धिमान्न शोचति । अत आत्मनां नित्यत्वादात्मनो न शोकस्थानम् एतावदत्र कर्त्तव्यम् आत्मनां नित्यानामेवानादिकर्मवश्यतया तत्तत्कर्मोचितदेहसंस्पृष्टानां तैरेव देहैर्बन्धनिवृत्तये शास्त्रीयं स्ववर्णोचितं युद्धादिकमनभिसंहितफलं कर्म कुर्वतामवर्जनीयतया इंद्रियैरिन्द्रियार्थस्पर्शाः शीतोष्णादिप्रयुक्तसुखदुःखदा भवन्ति ते तु यावच्छास्त्रीयकर्मसमाप्ति क्षन्तव्या इतीममर्थमनन्तरमेवाह ॥ १३ ॥

अ० टी०—ननु वयमेकत्रैव भविष्याम इति सत्यं परं तु पुनरलौकिको देह एतादृश एव भविष्यति नवेति संदेहात् शोचामीत्याकांक्षायामाह—देहिन इति । देहिनो जीवस्य यथास्मिन्देहे कौमारं यौवनं जरा अवस्थात्रयं भवति कालेन तथा भगवदिच्छया भगवदीयस्य देहांतरप्राप्तिरलौकिकद्वितीयदेहप्राप्तिर्भवतीत्यर्थः । धीरो भक्तस्तत्र देहप्राप्त्यर्थं न मुह्यति मोहं न प्राप्नोतीत्यर्थः ॥ १३ ॥

नी० टी०—यद्यप्येवं तथापीष्टदेहवियोगजः शोको भवत्येवेत्याशंक्याह—देहिन इति । देहौ स्थूलसूक्ष्मौ विद्येते अस्य स देही चिदात्मा तस्य यथास्मिन् स्थूलशरीरे कौमाराद्यवस्थासु देहभेदेऽपि एक एवाहं बाल आसमिदानीं वृद्धोऽस्मीत्यभेदप्रत्यभिमानादैक्यं बालादिशरीरेभ्योऽन्यत्त्वं च । व्यावृत्तेभ्योऽनुवृत्तं भिन्नं कुसुमेभ्यः सूत्रमिवेति न्यायात् । एवं देहांतरप्राप्तिरपि स्थूलाच्छरीरादन्येषां लिंगशरीराणां सूक्ष्माणां स्थूलशरीरानुकारिणां प्राप्तिः अयमर्थः । यथा एकमपि स्थूलं शरीरं कौमाराद्यवस्थाभेदादनेकरूपं एवं नित्यमपि लिंगशरीरं प्राणिकर्मभेदात्सुरनरतिर्यगाद्यवस्थाभेदादनेकं भवति । ततश्चोक्तन्यायेन स्थूलादिवत्सूक्ष्मादपि शरीरादात्मा विविक्त एव । एवं च शोकादिधर्मिणो लिंगादपि विभिन्नस्य तव इष्टवियोगजः शोकोऽपि न युक्तः । अत एव तत्र तस्मिन्विषये धीरो न मुह्यति । आभिमानिकौ शोकमोहौ देहद्वयाभिमानत्यागाद्धीरं न बाधेते अतस्त्वमपि धीरो भवेति भावः । पूर्वश्लोकयोर्गतासूनिति वयमिति च बहुवचनं उपाधिभेदाभिप्रायं । अत्र तु देहिन इत्येकवचनं उपधेयचिदात्मैक्याभिप्रायमिति ज्ञेयं तथा च श्रुतिरेकस्यात्मन औपाधिकं भेदमाह । "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनगच्छन् ॥ उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा" इति । क्षेत्रेषु वक्ष्यमाणलक्षणेषु स्थूलसूक्ष्मदेहद्वयात्मकेषु । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इति च एकत्वाच्च विभुत्वमप्यस्य सिद्धं तेन देहादीनामनित्यानामविभूनां च पराभिमतमात्मत्वं प्रत्याख्यातं वेदितव्यम् ॥ १३ ॥

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ॥**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

**शां० भा०**—यद्यप्यात्मविनाशनिमित्तो मोहो न संभवति नित्य आत्मेति विजानतस्तथाऽपि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते सुखवियोगनिमित्तो दुःखसंयोगनिमित्तश्च शोक इत्येतदर्जुनस्य वचनमाशङ्क्याऽऽह—मात्रास्पर्शा इति । मात्रा आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि, मात्राणां स्पर्शाः शब्दादिभिः संयोगास्ते शीतोष्णसुखदुःखदाः शीतमुष्णं सुखं दुःखं च प्रयच्छन्तीति । अथवा स्पृश्यन्त इति स्पर्शा विषयाः शब्दादयः, मात्राश्च स्पर्शाश्च शीतोष्णसुखदुःखदाः शीतं कदाचित्सुखं कदाचिद्दुःखं तथोष्णमप्यनियतरूपं सुखदुःखे पुनर्नियत-रूपे यतो न व्यभिचरतोऽतस्ताभ्यां पृथक्शीतोष्णयोर्ग्रहणम् । यस्मात्ते मात्रास्पर्शादय आगमापा-यिन आगमापायशीलास्तस्मादनित्या अतस्ताञ्शीतोष्णादींस्तितिक्षस्व प्रसहस्व तेषु हर्षं विषादं च मा कार्षीरित्यर्थः ॥ १४ ॥

**शां० आ०**—आत्मनः श्रुत्यादिप्रमिते नित्यत्वे तदुत्पत्तिविनाशप्रयुक्तशोकमोहाभावेऽपि प्रकारान्तरेण शोकमोहौ स्यातामि-त्याशङ्कामनूद्योत्तरत्वेन श्लोकमवतारयति—**यद्यपीत्यादिना** । शीतोष्णयोस्ताभ्यां सुखदुःखयोश्च प्राप्तिं निमित्तीकृत्य यो मोहादिर्दृश्यते तस्यान्वयव्यतिरेकाभ्यां दृश्यमानत्वमाश्रित्य लौकिकविशेषणम् । अशोच्यानित्यत्र यो विद्याधिकारी सूचितस्तस्य " तितिक्षुः समाहितो भूत्वा " इति श्रुतेस्तितिक्षुत्वविशेषणमिहोपदिश्यते । व्याख्येयं पदमुपादाय करणव्युत्पत्त्या तस्येन्द्रियवि-षयत्वं दर्शयति—**मात्रास्पर्शा इत्यादिना** । षष्ठीसमासं दर्शयन्भावव्युत्पत्त्या स्पर्शशब्दार्थमाह—**मात्राणामिति** । तेषामर्थक्रियामादर्शयाति—**ते शीतेति** । संप्रति शब्दद्वयस्य कर्मव्युत्पत्त्या शब्दादिविषयपरत्वमुपेत्य समासान्तरं दर्शयन्विष-याणां कार्यं कथयति—**अथवेति** । ननु शीतोष्णप्रदत्वे सुखदुःखप्रदत्वस्य सिद्धत्वात्किमिति शीतोष्णयोः सुखदुःखाभ्यां पृथग्ग्रहणमिति तत्राऽऽह—**शीतमिति** । विषयेभ्यस्तु पृथक्कथनं तदन्तर्भूतयोरेव तयोः सुखदुःखहेत्वोरानुकूल्यप्रातिकूल्य-योरुपलक्षणार्थम् । अध्यात्मं हि शीतमुष्णं वाऽनुकूलं प्रतिकूलं वा संपाद्य बाह्या विषयाः सुखादि जनयन्ति । ननु विषयेन्द्रिय-संयोगस्याऽऽत्मनि सदा सत्त्वात्तत्प्रयुक्तशीतादेरपि तथात्वात्तन्निमित्तौ हर्षविषादौ तथैव तस्मिन्नापन्नावित्याशङ्क्योत्तरार्धं व्याचष्टे—**यस्मादित्यादिना** । अत्र च कौन्तेय भारतेति संबोधनाभ्यामुभयकुलशुद्धस्यैव विद्याधिकारित्वमित्येतदेव द्योत्यते ॥ १४ ॥

**आ० भा०**—तथापि तद्दर्शनाभावादिना शोकइतिचेन्नेत्याह—मात्रास्पर्शाइति—मीयंतइतिमात्रा विषयाः तेषां स्पर्शाः संबंधास्तएव शीतोष्णसुखदुःखदाः देहे शीतोष्णादिसंबंधाद्धि शीतोष्णाद्यनुभव आत्मनः । ततश्च सुखदुःखे । नह्यात्मनः स्वतो दुःखादिः संभवति । कुतः । आगमापायित्वात् । यद्यात्मनः स्वतः स्युःसुप्तावपि स्युः।अतो यतो मात्रास्पर्शा जाग्रदादावेव ते संति नान्यदेति तदन्वय-व्यतिरेकित्वात्तन्निमित्ताएव नात्मनः स्वतः । आत्मनश्च तैर्विषयविषयीभावादन्यः संबंधो नास्ति । न चागमापायित्वेपि प्रवाहरूपेणापि नित्यत्वमस्ति । सुप्तिप्रलयादावभावादित्याह—अनित्याइति । अत आत्मनो देहाद्यात्मभ्रमएव दुःखकारणं । अतस्तद्विमुक्तस्य बंधुमरणादौ दुःखं न भवति । अतोभिमानं परित्यज्य तान् शीतोष्णादींस्तितिक्षस्व ॥ १४ ॥

**आ० ज०**—प्रकारांतरेण शोकं शंकते—**तथापीति** । यद्यपि बांधवादीनां हानिर्भविष्यतीति धिया न शोको युक्तः । उक्त-विधयाऽस्महानेरभावात् । देहहानावपि प्रतिनिधिलाभात् । तथापि तन्मरणे ममैव सुखहानिर्दुःखावाप्तिश्च भविष्यतीतिधिया मे शोकः समुत्पतितः । कथं । तद्दर्शनाभावादिना । तदितिबांधवादिपरामर्शः । आदिपदेन विकृततद्दर्शनं च गृह्यते । प्रेमास्पदानां हि दर्शनस्पर्शनालापादिकं सुखहेतुः । तेषु मृतेषु तद्दर्शनाद्यभावात्सुखहानिः । तथा तेषां छेदभेदादिदर्शनेन दुःखावाप्तिश्चेति । एतन्निषेधपूर्वकं श्लोकमवतारयति—**नेति** । मीयंते विषया यैरितिमात्रा इंद्रियाणि इतिव्याख्यानमसत् । पुराणादौ मात्राशब्दस्य विषये रूढत्वादित्याशयवान् व्याचष्टे मीयन्तइति । ननु गंधरसरूपस्पर्शशब्दाविषयाः । अतोभिन्नपदत्वे द्वंद्वे वा स्पर्शानां विषयां-

तर्गतानां पुनरुक्तिर्व्यर्थेत्यत आह—**तेषामिति** । विषयाणां । तथाप्यनुपपत्तिः । विषयाणां स्पर्शाभावादित्यतआह—**संबंधाइति** । एवं तर्हि किं षष्ठीसमासपरिग्रहणेन भिन्नपदत्त्वादावपि दोषाभावादित्यतो वाक्यं योजयति—**तएवेति** । तुशब्दार्थएवेति । नहि विषयाणां संबंधानां च पृथगेतत्कार्यं संभवतीति भावः । ननु शीतोष्णशब्दौ विषयविशेषवचनौ तत्कथं विषयसंबंधा विषयविशेषं दद्युः । कथं च साक्षात्सुखदुःखे कश्च प्रतिसंबंधी कस्मै ददतीत्यतआह—**देहइति** । देहशब्देनात्रेंद्रियाणि लक्ष्यंते । अनेन शीतोष्णशब्दौ सकलविषयोपलक्षकौ विषयोक्त्या च तत्साक्षात्कारो लक्ष्यते इति लक्षितलक्षणेयं । अनुभवद्वारैव सुखदुःखदानं । प्रतिसंबंधी देहः । दानं च आत्मनइत्युक्तं भवति । एतेन लौकिकीप्रतीतिरर्जुनेन शंकितानूद्यते । तत्तद्विषयाणां तैस्तैरिंद्रियैर्ये ये संनिकर्षास्तैस्तैस्तत्तद्विषयसाक्षात्कारा भवंति । तत्रेष्टविषयसाक्षात्कारात्सुखं भवति । अनिष्टविषयसाक्षात्काराद्दुःखं भवतीति । भवेदेवं ततः किं प्रकृतशंकायाइत्यतस्तुशब्दात्परया काक्वा सिद्धमर्थमाह—**नहीति** । **स्वत इति** । विषयेंद्रियसन्निकर्षमात्रेण । दुःखादिरिति विषयसाक्षात्कारः सुखदुःखे च । अनेन मात्रास्पर्शाएव केवलाः किं शीतोष्णसुखदुःखदाः । नहि । किन्नामाभिमानसहिताइत्युक्तं भवति । अभिमानो नामात्र विषयेषु शोभनत्वाध्यासनिमित्तस्नेहः । अरित्वादिभ्रमनिमित्तोद्वेषश्च शरीरेंद्रियांतःकरणेषु ममतातिशयहेतुकोऽविवेकइत्यादि । विषयेंद्रियसन्निकर्षाएव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः येनाभिमानोऽधिकः कारणसामग्र्यां निवेश्यतइति शंकापूर्वकमुत्तरपादं व्याचष्टे—**कुत इति** । ननु कथमिदं लभ्यते । यतइत्यध्याहारादितिब्रूमः प्रयोजनांतराभावाद्धेत्वर्थगर्भत्वेन वा । सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतइतिन्यायात् शीतोष्णसुखदुःखदत्वविशिष्टानां मात्रास्पर्शानामिदं विशेषणं भवच्छीतोष्णसुखदुःखदत्वमुपसंक्रामति । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं यत्तस्यागमापायित्वादित्यर्थः । अनेन कथमुक्तशंकापरिहारइत्यतोऽतिप्रसंगमुखेन व्याचष्टे—**यदीति** । मात्रास्पर्शा यदि स्वतः स्वयमेवाभिमानमनपेक्ष्यात्मनः शीतोष्णसुखदुःखदाः स्युः । तर्हि सुप्तावपि स्युः । नहि कारणसामग्री कार्यं व्यभिचरतीत्यर्थः । नच वाच्यं सुप्तौ विषयेंद्रियसंबंधा एव न संतीति । स्पर्शत्वगिंद्रियसंबंधस्यावर्जनीयत्वात् । अतएव शीतोष्णग्रहणं कृतम् । एतेनेंद्रियमनःसन्निकर्षाभावोपि प्रत्युक्तः । नचात्मनः सन्निकर्षाभावः । मनसः कदाप्यात्मवियोगाभावस्य वक्ष्यमाणत्वात् अतिप्रसंगस्य विपर्यये पर्यवसानं वदन्साक्षादर्थं दर्शयति—**अत इति** । अतो मात्रास्पर्शा नात्मनः स्वतः स्वयमेव केवलाः शीतोष्णसुखदुःखदा भवंतीति संबंधः । अत इत्युक्तस्य विवरणं यतस्तन्निमित्ताएवेति । तदित्यभिमानपरामर्शः । तेन निमित्तेन सहिता एव शीतोष्णसुखदुःखदा यत इत्यर्थः । तत्कुत इत्यत उक्तम्—**मात्रेति** । मात्रास्पर्शा जाग्रत्स्वप्नयोरभिमानवतोरेव ते तथाविधाः शीतोष्णसुखदुःखदाः संति संभवंति । नान्यदा अभिमानरहिते सुप्त्यादाविति मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वस्याभिमानान्वयव्यतिरेकानुविधायित्वादित्यर्थः । न चाभिमानहीनेऽपि ज्ञानोत्पत्तिस्तृणादौ दृश्यते । सत्यं । सुखदुःखहेतुभूतज्ञानमत्राधिकृतमित्यदोष इति । इतश्चाभिमान एवात्मन उपप्लव इत्याह—**आत्मनश्चेति** । अत्र तैरितिज्ञानसुखदुःखपरामर्शः । आत्मनो ज्ञानादिभिः संबंधो नास्ति । तेषां मनोवृत्तित्वात् । तथा चान्यगतधर्माः कथमन्यस्य विक्रियाहेतवो विनाभिमानात् । प्रसिद्धं च स्वाभिमतगृहदाहे देवदत्तं दुःखीकरोतीति । ज्ञानादिभिरात्मनः संबंधाभावे कथमुक्तं शीतोष्णाद्यनुभवआत्मन इत्यादीत्यतउक्तम्—**विषयेति** । मनोवृत्तिरूपाणि ज्ञानादीनि विषयभूतानि । आत्मा च विषयी साक्षिचैतन्यस्य तद्विषयत्वात् । एतमेव संबंधमभिप्रेत्यात्मनो ज्ञानमित्यादिव्यवहारः । उपलक्षणं चैतत् । ईश्वराधीनं स्वामित्वमपि ग्राह्यं तादात्म्यसमवायिनिरासे तात्पर्यात् । नन्वभिमानसहितानामेव मात्रास्पर्शानां ज्ञानादिहेतुत्वं न केवलानामित्युपपादितमेतत् । ततो नित्या इति व्यर्थमिति चेन्न । आगमापायित्वस्यैवानेन व्याख्यानात् । व्याख्यानेपि किं प्रयोजनमित्यतआह—**नचेति** । आगमापायिशब्दो द्वयोः प्रयुज्यते । यत्प्रवाहरूपेण नित्यं व्यक्तिरूपेणानित्यं यथा गंगोदकं । तदेकमागमापायीत्युच्यते । यस्य तु प्रवाहोपि छिद्यते । यथा किंशुककुसुमानां तदपरमिति तत्रागमापायिशब्दादुभयप्रतीतौ आगमापायित्वेप्यागमापायिशब्दार्थोपि यत्प्रवाहरूपेण नित्यत्वं तदत्र विवक्षितं नास्ति न भवति । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वे संभवात् । प्रकृतानुपयोगाच्च । किंतु द्वितीयमेव । सुप्त्यादावभावेन संभवादुक्तरीत्या प्रकृतोपयोगाच्च इत्येतदनित्याइत्यनेनाह भगवानित्यर्थः । प्रलयोमूर्छा । आदिपदेनासंप्रज्ञातसमाधेर्ग्रहणम् । नन्वनित्यपदमनेकार्थमेव । सत्यम् । तथापि पुनः प्रयत्नाद्यालोचनादेतत्सिद्धिः । एतदपि विशेषणोपसक्रांतं विशेषणम् । आगामिन्याख्यानमपेक्ष्य भाष्यकृतायमर्थः प्रागुपन्यस्त इतिज्ञेयम् । उक्तमर्थं पिंडीकृत्योपसंहरति—**अतइति** । उक्तप्रकारेण देहादावात्मनो ममैत इत्यादिभ्रम एव भ्रमसहिता एव मात्रास्पर्शा इत्यर्थः । ततः किमित्यतश्चतुर्थपदं व्याख्यातुमुपोद्घातमाह—**अतइति** । तद्विमुक्तस्य भ्रमविमुक्तस्य बंधुमरणादिदुःखं यत्प्राक् शंकितं न हि सामग्रीकार्यमेकदेशेन भवतीति भावः । ततः किमित्यतश्चतुर्थपादं व्याख्याति—**अतइति** । तितिक्षस्व विफलीकुर्वीति भावः । ननु तानितिमात्रास्पर्शानां परामर्शो युक्तः । तत्कथं शीतोष्णादीनित्युक्तम् । मैवम् । शीतोष्णहेतूनां मात्रास्पर्शानामेव तच्छब्देनोपलक्षणात् ॥ १४ ॥

रा० भा०—शब्दस्पर्शरूपरसगन्धाः साश्रयास्तन्मात्रकार्यत्वान्मात्रा इत्युच्यन्ते श्रोत्रादिभिस्तेषां स्पर्शाः शीतोष्णमृदुपरुषादिरूपसुखदुःखदा भवन्ति शीतोष्णशब्दः प्रदर्शनार्थः तान्धैर्येण यावद्युद्धादि शास्त्रीयकर्मसमाप्ति तितिक्षस्व ते चागमापायित्वाद्धैर्यवतां क्षन्तुं योग्याः अनित्याश्चैते बन्धहेतुभूतकर्मनाशे सति आगमापायित्वेनापि निवर्तन्त इत्यर्थः ॥ १४ ॥

अ० टी०—नन्वग्रे देहाप्तिरपि भविष्यति परं किंचित्कालं भवति भोगदुःखासहिष्णुत्वाच्छोचामीति चेत्तत्राह—**मात्रास्पर्शा** इति । हे कौंतेय परमस्निग्ध ! मात्रास्पर्शा इंद्रियवृत्तिविषयसंबंधाः शीतोष्णसुखदुःखदा भवंति । अत्रायमर्थः इन्द्रियवृत्तिस्पृष्टा जलातपादयो शीतोष्णदा भवंति । तथा मित्रसंयोगविप्रयोगादयश्च सुखदुःखदा भवंति । संयोगे स्वस्य सुखं भवति विप्रयोगे च दुःखं तत्रस्थसुखदुःखादिकं न विचारणीयम् । किंतु मित्रसुखविचारेण स्वस्य तत्सहनमेवोत्तममुचितं यतस्ते न स्थिरा इत्याह—**आगमापायिन** इति । आगमापायिनः । आगच्छंत्यपयान्ति च अत एव अनित्याः अतस्तान् तितिक्षस्व सहस्व भारतेति संबोधनात्त्वैतदुचितमिति ज्ञापितम् ॥ १४ ॥

नी० टी०—ननु आत्मनो लिंगशरीरादन्यत्वेऽप्यहं दुःखीत्याद्यनुभवाद्दुःखादिधर्माश्रयत्वं दुर्वारं ततश्च भीष्मादिबंधुवर्गनाशे सति दुःखसंबंधो भवत्येवेत्याशंक्याह—**मात्रास्पर्शा** इति । मीयंते विषया आभिस्ता मात्रा इंद्रियवृत्तयः । यद्वा दश प्रज्ञामात्राः वागादयः दश भूतमात्राः नामादयः कौषीतकिप्रसिद्धा इंद्रियविषयरूपा ग्राह्याः तासां स्पर्शाः परस्परं विषयविषयिभावेन संबंधा इति व्याख्येयं । यद्वा मात्रा प्रमात्रा सह स्पर्शाः विषयेंद्रियसंबंधाः स्पर्शशब्दस्य तद्वाचित्वं स्पर्शान्कृत्वा बहिर्बाह्यानित्यत्र दृष्टं तत्र स्पर्शपदेन तद्वतोर्विषयेंद्रिययोरपि लाभः तेन प्रमातुः प्रमाणद्वारा प्रमेयेण सह संबंधाः सर्वे शीतोष्णादिवदागमापायिन उत्पत्तिविनाशशीला अत एवानित्याश्च तद्वदेव सुखदुःखदाश्च अतस्तान् तितिक्षस्व सहस्व हे कौंतेय! भारतेत्युत्तमवंश्यत्वेन धीरत्वमस्य सूचयति प्रमातृत्वादिरनर्थो हि सुप्तिसमाधिग्रहावेशादिष्वभावाज्जाग्रत्स्वप्नादौ भावाच्च कादाचित्कतया आत्मनि प्रतीयमानोऽपि रज्जूरगादिवन्मिथ्याभूतः सन्नतद्धर्मत्वं भजते । यद्धि यत्राभेदेन कदाचिद्भाति कदाचिन्न तत्तत्राध्यस्तं रज्ज्वामिव सर्पः । प्रमात्रादिश्च प्रतीचि प्रत्यगभेदेन कदाचिद्भाति अतो मिथ्येति निश्चितं तेन प्रतीचि प्रमातृसंबंध एव नास्ति सत्यमिथ्यावस्तुनोर्वास्तवसंबंधायोगात् । प्रमातृधर्माणां दुःखादीनां तु प्रतीचि संबंधो दूरापेत एव । कथं तर्ह्यात्मनि दुःखित्वप्रत्ययः तत्तदुपाधितादात्म्याध्यासादिति ब्रूमः अत एव जाग्रति दृष्टं दुःखं स्वप्ने नानुवर्त्तते । स्वप्नदृष्टं वा जाग्रति न दृश्यते तथा च श्रुतिः । "स यत्तत्र पश्यति पुण्यं च पापं चानन्वागतस्तेन भवत्यसंगो ह्ययं पुरुषः" इति । "कामः संकल्पो विचिकित्सा" इत्यादिश्रुतिरेतत्सर्वं मन एव इति अभेदनिर्देशात्कामादिसर्वविकारोपादानत्वं मनस एवाह तस्मात्स्वप्न इवात्मनि दुःखित्वप्रतीतिर्भ्रांतिरेवेतीष्टवियोगजनितां तां तितिक्षस्वेति भावः ॥ १४ ॥

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ॥**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥**

शां० भा०—शीतोष्णादीन्सहतः किं स्यादिति शृणु—**यं हीति** । यं हि पुरुषं समदुःखसुखं समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथ-

यन्ति न चालयन्ति नित्यात्मदर्शनादेते यथोक्ताः शीतोष्णादयः स नित्यात्मदर्शननिष्ठो द्वंद्वसहिष्णुरमृतत्वायामृतभावाय मोक्षाय कल्पते समर्थो भवति ॥ १५ ॥

शां० आ०—अधिकारिविशेषणं तितिक्षुत्वं नोपयुक्तं केवलस्य तस्य पुमर्थाहेतुत्वादिति शङ्कते—**शीतेति**। विवेकवैराग्यादिसहितं तन्मोक्षहेतुज्ञानद्वारा तदर्थमिति परिहरति—**शृण्विति**। तितिक्षमाणस्य विवक्षितं लाभमुपलम्भयति—**यं हीति**। हर्षविषादरहितमित्यत्र शमादिसाधनसंपन्नत्वमुच्यते। धीमन्तमिति नित्यानित्यविवेकभागित्वम्। एतच्चोभयं वैराग्यादेरुपलक्षणम्। नित्यात्मदर्शनं त्वमर्थज्ञानम्। साधनचतुष्टयवन्तमधिकारिणमनूद्य त्वंपदार्थज्ञानवतस्तस्य मोक्षौपयिकवाक्यार्थज्ञानयोग्यतामाह—**स नित्येति** ॥ १५ ॥

**आ० भा०—अतः प्रयोजनमाह—यंहीति। यमेते मात्रास्पर्शा न व्यथयंति। पुरिशयमेव संतं। शरीरसंबंधाभावे सर्वेषां व्यथाभावात्पुरुषमिति विशेषणम्। कथं न व्यथयंति। समदुःखसुखत्वात् तत्कथं धैर्येण ॥ १५ ॥**

आ० ज०—अतो मात्रासर्शानां विफलीकरणतोभवत्प्रयोजनमाह—**अत इति** दुःखाभावस्य युद्धाकरणेनैव संभवात्किं तत्कृत्वा प्रसक्तदुःखाभावायाभिमानत्यागेनेत्येतदाशंकापरिहारायेतिशेषः। पूर्वश्लोके तितिक्षस्वेतिपदं सहस्वेति कैश्चिद्व्याख्यातम्। तदसत्। तदनुवादे विफलीकरणस्यैव प्रतीतेरितिभावेनाद्यपादं व्याख्याति—**यमिति**। न व्यथयंति न चालयंति न शीतोष्णसुखदुःखलक्षणवैषम्यवंतं कुर्वंतीत्यर्थः। स्त्रीणामप्येवंविधानां मैत्रेयीप्रमुखानाममृतत्वश्रवणात्पुरुषमितिविशेषणमयुक्तमित्यतोऽन्यथा व्याचष्टे—**पुरीति**। शरीरसंबंधिनमेव संतं शरीरदर्शनवंतमित्यर्थः। एतदपि किमर्थं विशेषणमित्यतआह—**शरीरेति**। सुप्त्यादौ सर्वेषां प्राकृतानामप्यभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरित्याशंकानिवृत्त्यर्थमित्यर्थः। ननु यस्य देहादावभिमानो नास्ति तस्य दुःखं सुखं च नास्तीत्युक्तं तस्य कथं समदुःखसुखं धीरामिति विशेषणद्वयम्। अस्य पूर्वकक्ष्यागतत्वादित्याशंक्य तदुपायप्रदर्शनार्थं पूर्वावस्थानुवादोयमिति क्रमेण पृच्छापूर्वकमाशयमाह—**कथमिति**। येनाभिमानत्यागेन मात्रासर्शा न व्यथयंति स कथं केनोपायेन भवतीत्यर्थः। दुःखं यथानुपादेयमपुरुषार्थत्वात् तथा वैषयिकं सुखमप्यमृतत्वविरोधित्वादनुपादेयं यस्य स समदुःखसुखः। एवंभावे च कथं सुखेहेतुषु शोभनाध्यासलक्षणस्तद्विरोधिषु द्वेषलक्षणोभिमानः स्यादितिभावः। तत्समदुःखसुखत्वमेव कथं केनोपायेन भवतीत्यर्थः—**धैर्येणेति**। सुखे दुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः स्तंभकेन प्रयत्नेनेत्यर्थः ॥ १५ ॥

**रा० भा०—तत्क्षान्तिः किमर्थेत्यत आह—यं पुरुषं धैर्ययुक्तमवर्जनीयदुःखं सुखवन्मन्यमानममृतत्वसाधनतया स्ववर्णोचितं युद्धादिकर्मानभिसंहितफलं कुर्वाणं तदन्तर्गताः शस्त्रपातादिमृदुक्रूरस्पर्शा न व्यथयन्ति स एवामृतत्वं साधयति न त्वादृशो दुःखासहिष्णुरित्यर्थः। अतः आत्मनो नित्यत्वादेतावदत्र कर्त्तव्यमित्यर्थः ॥ १५ ॥**

अ० टी०—नन्वेतेषां सहनं किंफलकमित्याकांक्षायामाह—**यं हि न व्यथयंत्येत इति**। हे पुरुषर्षभ पुरुषश्रेष्ठ! स्वतंत्रमोक्षसाधनकारणसमर्थ! यं पुरुषं समदुःखसुखं समे दुःखसुखे वियोगसंयोगौ यस्यैतादृशं धीरं तत्सहनसमर्थमेते मात्रास्पर्शाः न व्यथयंति न पराभवंति। स पुरुषः अमृतत्वाय मोक्षाय कल्पते यद्वा मोक्षभावाय भक्त्यर्थं कल्पते योग्यो भवति। भक्तिप्राप्तियोग्यो भवतीत्यर्थः। समदुःखत्वेन तदिच्छया सर्वमानंदरूपमेवाभाति इति व्यंजितम् ॥ १५ ॥

नी० टी०—तितिक्षाफलं प्रत्यक्षमेवेत्याह—**यं हीति**। एते मात्रास्पर्शाः प्राक् व्याख्यातरीत्या त्रिविधा अपि यं जाग्रति स्वप्नेऽसंप्रज्ञातसमाधौ वा न व्यथयंति स्वास्थ्यान्न प्रच्यावयंति। पुरुषं पूर्षु अष्टासु वसतीति पुरुषस्तं पुरश्च 'कर्मेंद्रियाणि खलु पंच तथापराणि ज्ञानेंद्रियाणि मनआदिचतुष्टयं च ॥ प्राणादिपंचकमथो वियदादिकं च कामश्च कर्म च तमः पुनरष्टमी पूः' इति प्रसिद्धाः। यद्वा स्थूलसूक्ष्मोपाधिमध्ये एव इतरासामंतर्भावादत्र पूरिति तम एव ग्राह्यं तेन कारणोपाधेरप्यात्मनो विविक्तत्वं दर्शितं।

पुरुषर्षभेति त्वमप्येतदनुभवितुं योग्योऽसि सर्वपुरुषश्रेष्ठत्वादिति सूचयति उपाधित्रयत्यागादेव समे दुःखसुखे यस्य तं न हि समाधिस्थस्य सुखाय दुःखाय वा शीतोष्णस्पर्शौ भवत इति युक्तमस्य समदुःखसुखत्वं धीरं ध्यायिनं योगिनं न व्यथयंति सोऽमृतत्वाय मोक्षाय कल्पते योग्यो भवति ॥ १९ ॥

**नासतो विद्यते भावो नाभावो विद्यते सतः ॥**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥**

**शां० भा०**—इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं यस्मात्—नासत इति । नासतोऽविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता । न हि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तु संभवति ।

**शां० आ०**—अधिकारिविशेषणे तितिक्षुत्वे हेत्वन्तरपरत्वेनोत्तरश्लोकमवतारयति—**इतश्चेति** । इतःशब्दार्थमेव स्फुटयति—**यस्मादिति** । यतः शीतादेः शोकादिहेतोरनात्मनो नास्ति वस्तुत्वं वस्तुनश्चाऽऽत्मनो निर्विकारत्वेनैकरूपत्वमतो मुमुक्षोर्विशेषणं तितिक्षुत्वं युक्तमित्याह—**नेत्यादिना** । कार्यस्यासत्त्वेऽपि कारणस्य सत्त्वेनात्यन्तासत्त्वासिद्धिरित्याशङ्क्य विशिनष्टि—**सकारणस्येति** । नासत इत्युपादाय पुनर्नकारानुकर्षणमन्वयार्थम् । असतः शून्यस्यास्तित्वप्रसङ्गाभावादप्रसक्तप्रतिषेधप्रसक्तिरित्याशङ्क्याऽऽह—**न हीति** । विमतमतात्त्विकमप्रामाणिकत्वाद्रज्जुसर्पवत्, न हि धर्मिग्राहकस्य प्रत्यक्षादेस्तत्त्वावेदकं प्रामाण्यं कल्प्यते विषयस्य दुर्निरूपत्वादतोऽनिर्वाच्यं द्वैतमित्यर्थः ।

**शां० भा०**—विकारो हि सः । विकारश्च व्यभिचरति, यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसन् । जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः । मृदादिकारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वम् । तदसत्त्वे च सर्वाभावप्रसङ्ग इति चेत् । न, सर्वत्र बुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति । यद्विषया बुद्धिर्न व्यभिचरति तत्सत्, यद्विषया बुद्धिर्व्यभिचरति तदसदिति सदसद्विभागे बुद्धितन्त्रे स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे ।

**शां० आ०**—कथं पुनरध्यक्षादिविषयस्य शीतोष्णादिद्वैतस्य दुर्निरूपत्वेनानिर्वाच्यत्वं तत्राऽऽह—**विकारो हीति** । ततश्च विमतं मिथ्याऽऽगमापायित्वात्संप्रतिपन्नवदिति फलितमाह—**विकारश्चेति** । वाचारम्भणश्रुतेर्द्वैतमिथ्यात्वेऽनुग्राहकत्वं दर्शयितुं चकारः । किंच कार्यं कारणाद्भिन्नमभिन्नं वेति विकल्प्याऽऽद्यं दूषयति—**यथेति** । निरूप्यमाणमन्तर्बहिश्चेति शेषः । विमतं कारणान्न तत्त्वतो भिद्यते कार्यत्वाद्घटवदित्यर्थः । इतोऽपि कारणाद्भेदेन नास्ति कार्यम् । 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति न्यायादित्याह—**जन्मेति** । यदि कार्यं कारणादिभिन्नं तदा तस्य भेदेनासत्त्वे पूर्वस्मादविशेषः । तादात्म्येनावस्थानं तु न युक्तं तस्यापि कारणव्यतिरेकेणाभावात्कार्यकारणविभागविधुरे वस्तुनि कार्यकारणपरम्पराया विश्रमादित्यभिप्रेत्याऽऽह—**मृदादीति** । कार्यकारणविभागविहीनं वस्त्वेव नास्तीति मन्वानश्चोदयति—**तदसत्त्व इति** । अनुवृत्तव्यावृत्तबुद्धिद्वयदर्शनादनुवृत्ते च व्यावृत्तानां कल्पितत्वादकल्पितं सर्वभेदकल्पनाधिष्ठानमकार्यकारणं वस्तु सिध्यतीति परिहरति—**न सर्वत्रेति** । संप्रति सतो वस्तुत्वे प्रमाणमनुमानमुपन्यस्यति —**यद्विषयेति** । यद्व्यावृत्तेष्वनुवृत्तं तत्परमार्थसत्, यथा सर्पधारादिष्वनुगतो रज्ज्वादेरिदमंशः, विमतं सत्यमव्यभिचारित्वात्संप्रतिपन्नवदित्यर्थः । व्यावृत्तस्य कल्पितत्वे प्रमाणमाह—**यद्विषयेत्यादिना** । यद्व्यावृत्तं तन्मिथ्या यथा सर्पधारादि, विमतं मिथ्या व्यभिचारित्वात्संप्रतिपन्नवदित्यर्थः । इत्यनुमानद्वयमनुसृत्य सतोऽकल्पितत्वमसतश्च कल्पितत्वं स्थितमिति शेषः । ननु नेदमनुमानद्वयमुपपद्यते समस्तद्वैतवैतथ्यवादिनो विभागाभावादनुमानादिव्यवहारानुपपत्तेस्तत्राऽऽह—**सदसदिति** । उक्ते विभागे बुद्धिद्वयाधीने स्थिते सत्यनुमानादिव्यवहारो निर्वहति प्रातिभासिकविभागेन तयोगात्परमार्थस्यैव तद्धेतुत्वे केवलव्यतिरेकाभावादित्यर्थः । कुतः सदसद्विभागस्य बुद्धिद्वयाधीनत्वं बुद्धिविभागस्यापि तदभावात्तत्राऽऽह—**सर्वत्रेति** । व्यवहारभूमिः सप्तम्यर्थः । बुद्धिविभागस्यापि कल्पितस्यैव बोध्यविभागप्रतिभासहेतुतेति

भावः। बुद्धिद्वयमनुरुध्य सदसद्विभागे सतः सामान्यरूपतया विशेषाकाङ्क्षायां सामान्यविशेषौ द्वे वस्तुनी वस्तुभूते स्यातामिति चेन्नेत्याह—**समानाधिकरणे इति**। पदयोः सामानाधिकरण्यं बुद्ध्योरुपचर्यते सोऽयमिति सामानाधिकरण्यवद्घटः सन्नित्यादि सामानाधिकरण्यमेकवस्तुनिष्ठं वस्तुभेदे घटपटयोरिव तदयोगादित्यर्थः।

**शां० भा०—न नीलोत्पलवत्सन्घटः सन्पटः सन्हस्तीति। एवं सर्वत्र। तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति। तथा च दर्शितम्। न तु सद्बुद्धिः। तस्माद्घटादिबुद्धिविषयोऽसन्व्यभिचारात्, न तु सद्बुद्धिविषयोऽव्यभिचारात्। घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेत्। न, पटादावपि सद्बुद्धिदर्शनात्। विशेषणविषयैव सा सद्बुद्धिः। सद्बुद्धिवद्घटबुद्धिरपि घटान्तरे दृश्यत इति चेत्। न, पटादावदर्शनात्।**

**शां० आ०**—नीलमुत्पलमितिवद्धर्मधर्मिविषयतया सामानाधिकरण्यस्य सुवचत्वान्न वस्त्वैक्यविषयत्वमिति चेन्नेत्याह—**न नीलेति**। न हि सामान्यविशेषयोर्भेदेऽभेदे च तद्भावो भेदाभेदौ च विरुद्धावतो जातिव्यक्त्योः सामानाधिकरण्यं नीलोत्पलयोरिव न गौणं किं तु व्यावृत्तमनुवृत्ते कल्पितमित्येकनिष्ठमित्यर्थः। सामान्यविशेषयोरुक्तन्यायं गुणगुण्यादावतिदिशति—**एवमिति**। तुल्यौ हि तत्रापि विकल्पदोषाविति भावः। सामानाधिकरण्यानुपपत्त्या द्वे वस्तुनी सामान्यविशेषाविति पक्षं प्रतिक्षिप्य विशेषा एव वस्तूनीति पक्षं प्रतिक्षिपति—**तयोरिति**। बुद्धिव्यभिचाराद्बोध्यव्यभिचारेऽपि कथं व्यावृत्तानां विशेषाणामवस्तुत्वमित्याशङ्क्याऽऽह—**तथा चेति**। विकारो हि स इत्यादाविति शेषः। न चैकं वस्तु सामान्यविशेषात्मकमेकस्य द्वैरूप्यविरोधादित्यभिप्रेत्य सामान्यमेकमेव वस्तु तद्बुद्धेरव्यभिचाराद्बोध्यस्यापि सतस्तथात्वादित्याह—**न त्विति**। व्यभिचरतीति पूर्वेण संवन्धः। विशेषाणां व्यभिचारित्वे सतश्चाव्यभिचारित्वे फलितमुपसंहरति—**तस्मादिति**। असत्त्वं कल्पितत्वम्। तच्छब्दार्थमेव स्फोरयति—**व्यभिचारादिति**। सद्बुद्धिविषयस्य सतोऽकल्पितत्वे तच्छब्दोपात्तमेव हेतुमाह—**अव्यभिचारादिति**। बुद्धिव्यभिचारद्वारा बोध्यस्यापि व्यभिचारात्तदव्यभिचारित्वहेतोरसिद्धिरिति शङ्कते—**घटे विनष्ट इति**। सद्बुद्धेर्घटबुद्धिवद्घटविषयत्वाभावान्न घटनाशे व्यभिचारोऽस्तीति परिहरति—**न पटादाविति**। सद्बुद्धेरघटविषयत्वे निरालम्बनत्वायोगाद्विषयान्तरं वक्तव्यमित्याशङ्क्याऽऽह—**विशेषणेति**। सतोऽकल्पितत्वहेतोरव्यभिचारित्वस्यासिद्धिमुद्धृत्य विशेषाणां कल्पितत्वहेतोर्व्यभिचारित्वस्यासिद्धिं शङ्कते—**सदिति**। यथा सद्बुद्धिर्घटे नष्टे पटादौ दृष्टत्वादव्यभिचारिणीत्यव्यभिचारः सतो दर्शितस्तथा घटबुद्धिरपि घटे नष्टे घटान्तरे दृष्टेत्यव्यभिचाराद्घटे व्यभिचारासिद्धौ विशेषान्तरेष्वपि कल्पितत्वहेतुर्व्यभिचारो न सिध्यतीत्यर्थः। घटबुद्धेर्घटान्तरे दृष्टत्वेऽपि पटादावदृष्टत्वेन व्यभिचाराद्घटादिविशेषेष्वपि व्यभिचारित्वसिद्धिरित्युत्तरमाह—**न पटादाविति**।

**शां० भा०—सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेत्। न, विशेष्याभावात्। सद्बुद्धिर्विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किंविषया स्यात्, नतु पुनः सद्बुद्धेर्विषयाभावात्। एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति चेत्। नेदमुदकमिति मरीच्यादावन्यतराभावेऽपि सामानाधिकरण्यदर्शनात्। तस्माद्देहादेर्द्वंद्वस्य च सकारणस्यासतो न विद्यते भाव इति।**

**शां० आ०**—विशेषाणामेवं व्यभिचारित्वे सतोऽपि तदुपपत्तेरव्यभिचारित्वहेत्वसिद्धितादवस्थ्यमिति शङ्कते—**सद्बुद्धिरिति**। घटादिनाशदेशे तदुपरक्ताकारेण सत्त्वाभानेऽपि नासत्त्वं घटाद्यभावाधिष्ठानतया भानादित्याह—**न विशेष्येति**। यथा सर्वगता जातिरित्यत्र खण्डमुण्डादिव्यक्त्यभावदेशे गोत्वं व्यञ्जकाभावान्न व्यज्यते न गोत्वाभावात्तथा सत्त्वमपि घटादिनाशे व्यञ्जकाभावान्न भाति न स्वरूपाभावादित्युक्तमेव प्रपञ्चयति—**सदित्यादिना**। सप्रतियोगिकविशेषणव्यभिचारेऽपि स्वरूपाव्यभिचाराद्युक्तं सतः सत्यत्वमिति भावः। द्वयोः सतोरेव विशेषणविशेष्यत्वदर्शनाद्घटसतोरपि विशेषणविशेष्यत्वे द्वयोः सत्त्वध्रौव्याद्घटादिकल्पितत्वानुमानं सामानाधिकरण्यधीबाधितमिति चोदयति—**एकेति**। अनुभवमनुसृत्य बाधितविषयत्वमुक्तानुमानस्य निरस्यति—**नेत्यादिना**। घटादेः सतिं कल्पितत्वानुमानस्य दोषराहित्ये फलितमुपसंहरति—**तस्मादिति**। प्रथमपादव्याख्यानपरिसमाप्तावितिशब्दः। ननु नेदं व्याख्यानं भाष्यकाराभिप्रेतं सर्वद्वैतशून्यत्वविवक्षायां शास्त्रतद्भाष्यविरोधात्केनापि पुनर्दुर्विदग्धेन स्वमनीषिकयोत्प्रेक्षितमेतदिति चेत्, मैवं, किमिदं द्वैतप्रपञ्चस्य शून्यत्वं किं तुच्छत्वं किंवा सद्विलक्षणत्वं, नाऽऽद्योऽनभ्युपगमात्, द्वितीयानभ्युपगमे तु तवैव शास्त्रविरोधो भाष्यविरोधश्च सर्वं हि शास्त्रं तद्भाष्यं च द्वैतस्य सत्यत्वानधिकरणत्वसाधनेनाद्वैतसत्यत्वे पर्यवसितमिति त्रैविद्यवृद्धैस्तत्र तत्र प्रतिष्ठापितम्। तथा च प्रक्षेपाशङ्का संप्रदायपरिचयाभावादिति द्रष्टव्यम्।

**शां० भा०**—तथा सतश्चाऽऽत्मनोऽभावोऽविद्यमानता न विद्यते सर्वत्राव्यभिचारादित्यवोचाम। एवमात्मानात्मनोः सदसतोरुभयोरपि दृष्ट उपलब्धोऽन्तो निर्णयः सत्सदेवासदसदेवेति त्वनयोर्यथोक्तयोस्तत्त्वदर्शिभिः। तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम तदिति तद्भावस्तत्त्वं ब्रह्मणो याथात्म्यं तद्द्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैस्तत्त्वदर्शिभिः। त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादीनि नियतानियतरूपाणि द्वंद्वानि विकारोऽयमसन्नेव मरीचिजलवन्मिथ्याऽवभासत इति मनसि निश्चित्य तितिक्षस्वेत्यभिप्रायः॥ १६ ॥

**शां० आ०**—अनात्मजातस्य कल्पितत्वेनावस्तुत्वप्रतिपादनपरतया प्रथमपादं व्याख्याय द्वितीयपादमात्मनः सर्वकल्पनाधिष्ठानस्याकल्पितत्वेन वस्तुत्वप्रसाधनपरतया व्याकरोति—**तथेति**। नन्वात्मनः सदात्मनो विशेषेषु विनाशिषु तदुपरक्तस्य विनाशः स्यादित्याशङ्क्य विशिष्टनाशेऽपि स्वरूपानाशस्योक्तत्वान्मैवमित्याह—**सर्वत्रेति**। ननु कदाचिदसदेव पुनः सत्त्वमापद्यते प्रागसतो घटस्य जन्मना सत्त्वाभ्युपगमात्, सच्च कदाचिदसत्त्वं प्रतिपद्यते स्थितिकाले सतो घटस्य पुनर्नाशेनासत्त्वाङ्गीकारादेवं सदसतोरव्यवस्थितत्वाविशेषादुभयोरपि हेयत्वमुपादेयत्वं वा तुल्यं स्यादिति तत्राऽऽह—**एवमिति**। तुशब्दो दृष्टशब्देन संबध्यमानो दृष्टिमवधारयति। न हि प्रागसतो घटस्य सत्त्वमसत्त्वे स्थिते सत्त्वप्राप्तिविरोधादसत्त्वनिवृत्तिश्च सत्त्वप्राप्त्या चेत्प्राप्तमितरेतराश्रयत्वमन्तरेणैव सत्त्वापत्तिमसत्त्वनिवृत्तावसत्त्वमनवकाशि भवेत्, एतेन सतोऽसत्त्वापत्तिरपि प्रतिनीतेति भावः। कथं तर्हि सतोऽसत्त्वमसतश्च सत्त्वं प्रतिभातीत्याशङ्क्य तत्त्वदर्शनाभावादित्याह—**तत्त्वेति**। तस्य भावस्तत्त्वम्। न च तच्छब्देन परामर्शयोग्यं किंचिदस्ति प्रकृतं प्रतिनियतमित्याशङ्क्य व्याचष्टे—**तदित्यादिना**। ननु सदसतोरन्यथात्वं केचित्प्रतिपद्यन्ते केचित्तु तयोरुक्तनिर्णयमनुसृत्य तथात्वमेवाधिगच्छन्ति तत्र केषां मतमेषितव्यामिति तत्राऽऽह—**त्वमपीति** ॥ १६ ॥

**आ० भा०**—नित्य आत्मेत्युक्तम्। किमात्मैव नित्य आहोस्विदन्यदपि। अन्यदपि। तत्किमिति आह—नासतइति। असतः कारणस्य सतो ब्रह्मणश्चाभावो न विद्यते। 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम' इति वचनाच्छ्रीविष्णुपुराणे। पृथग्विद्यतइत्यादरार्थः। असतः कारणत्वं च। 'सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः' इति भागवते। "असतः सदजायत" इति च। अव्यक्तेश्च। संप्रदायतश्चैतत्सिद्धमित्याह—उभयोरपीति। अंतो निर्णयः॥ १६ ॥

**आ० ज०**—न त्वेवाहमित्यत्र भगवान्कृष्णोपि यं प्रति पक्षे निक्षिप्तः स आक्षेप्तुं प्रसक्तिं दर्शयाति—**नित्य इति**। उक्तमनादित्वेन हेतुनाऽनुमितम्। ततः किमित्यतआह—**किमिति**। अनादिश्चेत्यपि ग्राह्यम्। आद्ये दृष्टांताभावेन व्याप्तिग्रहासंभवः। द्वितीयस्त्वप्रामाणिकत्वादशक्योपन्यासइतिपूर्वपक्ष्यभिप्रायः। विदिताभिप्रायः सिद्धांती किमृजावन्वये संभवति वक्रेण व्यतिरेकेणेति मन्यमानो द्वितीयपक्षमुपादत्ते—**अन्यदपीति**। उक्ताभिप्रायेण पृच्छति—**तदिति**। इतिशंकायामिति शेषः। दुर्गमार्थत्वात्पूर्वार्धं व्याचष्टे—**असतइति**। कारणस्य प्रकृतेः। अभावः प्रागभावः प्रध्वंसश्च। कुतएतदित्यतो भाष्यकारस्तावत्प्रमाणमाह—**प्रकृतिरिति**। पुरुषः परमात्मा ब्रह्मशब्दोक्तः। अनादित्वेप्येवमागमो ज्ञेयः। ननु असतः सतश्चाभावो न विद्यतइत्येकेनैव वाक्येन द्वयोरभावप्रतिषेधे कर्तुं शक्ये किमेवं पृथक्प्रतिषेधेनेत्यतआह—**पृथगिति विद्यतइति**। वाक्यद्वयग्रहणम्। असतो भावो न विद्यते। सतश्चाभावो न विद्यतइति द्वयोः पृथगभावप्रतिषेध आदरार्थइतियोज्यम्। आदरश्चानुमानव्याप्तिसद्भावे। अतएवानेकदृष्टांतप्रदर्शनम्। ननु सतोब्रह्मणइत्यस्तु। असतः कारणस्येति तु कथमिति अतआह—**असत इति**। असच्छब्दार्थस्य कारणत्वं च भागवते प्रसिद्धमित्यर्थः। असतोसच्छब्दस्य कारणत्वं कारणार्थत्वमिति वा। सदसद्रूपया कार्यकारणरूपया। असतइतिश्रुतेरनेकार्थत्वादत्रोदाहरणम्। कारणस्याव्यक्तेश्च असच्छब्दार्थत्वम्। गत्यर्थस्य सदेः कर्मणि क्विबंतस्य हि सदितिरूपम्। 'असदव्यक्तरूपत्वात्कारणं चापि शब्दितामिम्' इतिवचनात्। अत्रार्थे भगवता प्रमाणमुच्यते—**उभयोरपीति**। तदसत्। अन्यदर्शनस्यान्यान्प्रत्यप्रत्यायकत्वात् इत्याशंक्य दर्शनमूलकः संप्रदायः उपदेशपरंपरारूपो लक्षणयात्र प्रमाणत्वेनोच्यत इत्याह—**संप्रदायतश्चेति**। चशब्दो भाष्यकारोदितप्रमाणसमुच्चये। आगमो ग्रंथनिबद्धं वाक्यं संप्रदायस्तु उपदेशपरंपरामात्रमितिभेदः। एतत्प्रकृतिपुरुषयोरनादिनित्यत्वम्। केचिदपिशब्दस्य भिन्नक्रमत्वमंगीकृत्य तेन सूचितं प्रमाणं प्रागुदाहृतमितिवर्णयंति। नन्वंतो विनाशादिः परिच्छेदो वात तत्त्वदर्शिभिर्दृष्ट इत्युच्यते तत्कथं न विरोध इत्यतआह—**अंतइति**। निर्णयोनादिनित्यत्वावधारणम्। अपव्याख्यानं त्वन्यत्र निराकृतम्॥ १६ ॥

रा० भा०—यत्त्वात्मनां नित्यत्वं देहानां स्वाभाविकं नाशित्वं चाशोकनिमित्तमुक्तम् 'गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः' इति तदुपपादयितुमारभते—नासत इति। असतो देहस्य सद्भावो न विद्यते सतश्चात्मनो नासद्भावः उभयोर्देहात्मनोरुपलभ्यमानयोर्यथोपलब्धितत्त्वदर्शिभिरन्तो दृष्टः निर्णयान्तत्वान्निरूपणस्य निर्णय इहान्तशब्देनोच्यते। देहस्याचिद्वस्तुनोऽसत्त्वमेव स्वरूपम् आत्मनश्चेतनस्य सत्त्वमेव स्वरूपमिति निर्णयो दृष्ट इत्यर्थः। विनाशस्वभावो ह्यसत्त्वम् अविनाशस्वभावश्च सत्त्वम्। यथोक्तं भगवता पराशरेण। 'तस्मान्न विज्ञानमृतेऽस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम्। ज्ञानं यथा सत्यमसत्यमन्यत्' 'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते। तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम्॥ यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै। परिणामादिसंभूतं तद्वस्तु नृप तच्च किम्॥' इति। अत्रापि 'अन्तवन्त इमे देहा' 'अविनाशि तु तद्विद्धि' इति उच्यते। तदेव सत्त्वासत्त्वव्यपदेशहेतुरिति गम्यते। अत्र सत्कार्यवादस्यासङ्गतत्वान्न तत्परोऽयं श्लोकः। देहात्मस्वभावाज्ञानमोहितस्य तन्मोहशान्तये ह्युभयोर्नाशित्वानाशित्वरूपस्वभावविवेक एव वक्तव्यः। स एव 'गतासूनगतासूंश्च नानुशोचन्ति' इति प्रस्तुतः। स एव 'अविनाशि तु तद्विद्धि' 'अन्तवन्त इमे देहा' इत्यनन्तरमुपपाद्यते अतो यथोक्त एवार्थः॥ १६॥

अ० टी०—ननु दुःखादिसहनादेतद्देहनाशएव स्याद्देहनाशेन मोक्षस्तु नापेक्षित एव ततः किं दुःखसहनेनेत्याशंक्याह—नासतइति। असतो लौकिकस्य भावोऽलौकिको न विद्यते सतः अलौकिकस्य भगवत्सत्तात्मकस्य नाभावो नाशो न विद्यते इत्यर्थः। अत्र निदर्शनं गोपिका एकास्त्वंतर्गृहगताः। द्वितीयास्तु भगवद्रासलीलागतास्तदाहुः। उभयोरपिति। तु शब्दः त्वद्दर्शननिवारणार्थः अनयोरुभयोरपि तत्त्वदर्शिभिः भगवद्दर्शनयोग्यैर्भगवदीयैः। अन्तो दृष्टः तत्फलं दृष्टमित्यर्थः। त्वमपि तथाचेदिच्छसि तदा सुखदुःखादि सहस्व। नैतावता भगवद्योग्यदेहादिनाशो भविष्यतीति भावः॥ १६॥

नी० टी०—ननु सुप्तिसमाध्यादौ त्यक्तोपाधेरात्मनः समदुःखसुखत्वेऽपि सोपाधिकदशायां तप्तायःपिंडस्य दग्धृत्वमिव तस्य दुःखित्वं दुर्वारं। उपाधिश्च मूलप्रकृतेर्व्यापिकाया मात्रारूप इति तत्सत्त्वे तु न निर्मूलोच्छेदमर्हत्यतः सोऽमृतत्वाय कल्पत इत्यनुपपन्नमित्याशंक्याह—नासत इति। प्रमात्रादेरागमापायित्वेन कादाचित्कत्वात् रज्जूरगादिवत् असतः भावः सत्ता कालत्रयेऽपि नास्ति। अयमर्थः प्रमात्रादिर्मूलाज्ञानेन चिदात्मनि कल्पितः मूलाज्ञानस्य चात्मज्ञानेन निवृत्तौ कारणाभावान्न पुनः प्रमात्राद्युद्भवोऽस्तीति निष्प्रत्यूहममृतत्वं ज्ञानात्सिद्ध्यतीति। नन्वप्रतीतिमात्रात्प्रमात्रादेर्मिथ्यात्वोपगमे आत्मनोऽपि सुप्त्यादावप्रतीयमानत्वाविशेषान्मिथ्यात्वमस्तु उभयोर्वा सत्यत्वमस्तु इत्याशंक्याह—नाभावो विद्यते सत इति। सद्वस्तुनः अभावोऽसत्त्वं कदाचिदपि न विद्यते सुषुप्त्यादावप्यनुभूतयोः सुखाज्ञानयोः। सुखमहमस्वाप्सं न किंचिदवेदिषमित्युत्थाने परामर्शदर्शनात् तदनुभवमंतरेण तयोः परामर्शासंभवात् अतः सतोऽसत्त्वं नास्ति श्रुतिरपि सुप्तिकैवल्ययोः प्रमात्राद्यभावं दृशो नित्यत्वं चाह। "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्" इति। यदि प्रमात्रादिः सत्यस्तर्हि सतोऽर्थस्य सुषुप्त्यादावदर्शनं सान्निध्याभावाद्वा द्रष्टुर्दृग्लोपाद्वा वक्तव्यं। नाद्यः आत्मनि दृष्टनष्टस्वभावस्यान्यत्र सद्भावकल्पनायोगात्। नांत्यः उदात्ततया श्रुत्यैव तन्निषेधात् तस्मादुभयोरपि सत्यत्वेन मिथ्यात्वेन वा साम्यं दुर्वचं। ननु सत आकाशादेः क्वचिदपि देशे काले चाभावो

यद्यपि नास्ति तथापि सत एव परमाणोर्देशांतरेऽभावोऽस्ति प्रागसतोऽपि घटादेर्भावश्च दृष्टः तत्कथमुच्यते 'नासतो विद्यते भावो नाभावो विद्यते सत' इत्याशंक्य विद्वदनुभवेन निरस्यति—उभयोरपीति । अंतो याथात्म्यं । यथा स्वप्ने नभःकुंभरज्जूरगादयो नित्यत्वानित्यत्वसत्यत्वासत्यत्वादिधर्मोपेततया निश्चिता अपि प्रबोधेन बाध्यंते तद्वज्जाग्रद्दृष्टा अपि ते तत्त्वज्ञानेन बाध्यंते । ननु जाग्रद्वासनावशात् स्वप्नगतनभआदौ नित्यत्वादिनिश्चयो भ्रम इति चेत् अनादिकालप्रवृत्तप्राग्भवीयसंस्कारवशात् जाग्रन्नभआदावपि स भ्रम एवेति तुल्यं । ननु स्वरूपसदेव रजतादिकं शुक्त्यादावध्यस्यते न त्वसत् शशशृंगादिकं गगनादिकं तु त्वद्रीत्या स्वरूपेणासदपि कथमात्मन्यध्यस्यत इति चेन्न अध्यासे हि पूर्वानुभवमात्रमपेक्षते न त्वनुभूतस्य स्वरूपेण सत्त्वमपि दर्पणप्रतिबिंबिते गगनेऽपि नैल्याध्यासदर्शनात् । न च गगने नैल्यं स्वरूपेण सत्यमस्ति अथ चान्यत्राध्यस्यते तस्मात् भ्रमपरंपरायाः संभवात् स्वप्नद्रष्टृभिरिवास्माभिरदृष्टमपि सदसतोर्याथात्म्यं प्रबुद्धैर्द्रष्टुं शक्यमेव तथा च श्रुतयः । "नेह नानाऽस्ति किंचन । अस्तीत्येवोपलब्धव्यः । अतोऽन्यदार्त्तम् " इत्याद्याः अनात्मनोऽसत्त्वं चात्मनश्च सत्त्वं प्रतिपादयंति । एवं सतो ज्ञानेनासतो बाधात्कैवल्यं सिद्ध्यतीति भावः ॥ १६ ॥

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ॥**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥**

**शां० भा०—किं पुनस्तद्यत्सदेव सर्वदैवास्तीति, उच्यते—अविनाशीति । अविनाशि न विनंष्टुं शीलमस्येति । तुशब्दोऽसतो विशेषणार्थः । तद्विद्धि विजानीहि । किं येन सर्वमिदं जगत्ततं व्याप्तं सदाख्येन ब्रह्मणा साकाशमाकाशेनेव घटादयः । विनाशमदर्शनमभावमव्ययस्य न व्येति, उपचयापचयौ न यातीत्यव्ययं तस्याव्ययस्य । नैतत्सदाख्यं ब्रह्म स्वेन रूपेण व्येति व्यभिचरति निरवयवत्वाद्देहादिवत् । नाप्यात्मीयेनाऽऽत्मीयाभावाद्यथा देवदत्तो धनहान्या व्येति न त्वेवं ब्रह्म व्येत्यतोऽव्ययस्यास्य ब्रह्मणो विनाशं न कश्चित्कर्तुमर्हति न कश्चिदात्मानं विनाशयितुं शक्नोतीश्वरोऽपि । आत्मा हि ब्रह्म स्वात्मनि च क्रियाविरोधात् ॥ १७ ॥**

शां० भा०—ननु सदिति सामान्यं स्वरूपं वा, प्रथमे तस्य विशेषसापेक्षतया प्रलयदशायामशेषविशेषविनाशे विनाशः स्यात् । न चाऽऽत्मादयो विशेषास्तदाऽपि सन्तीति वाच्यम्, आत्मातिरिक्तानां विशेषाणां कार्यत्वाङ्गीकारात्प्रलयावस्थायामनवस्थानादात्मनस्तु सामान्यात्मनो धर्मित्वादुक्तदोषात् । द्वितीये तु स्वरूपस्य व्यावृत्तत्वे कल्पितत्वाद्विनाशित्वमनुवृत्तत्वे तस्यैव सामान्यतया प्रागुक्तदोषानुषक्तिरिति मन्वानश्चोदयति—**किं पुनरिति** । सामान्यविशेषभावशून्यमखण्डैकरसं सदेवेत्यादिश्रुतिप्रमितं सर्वविक्रियारहितं वस्तु प्रकृतं सद्विवक्षितमित्युत्तरमाह—**उच्यत इति** । आत्मनः सदात्मनो विनाशराहित्यविज्ञाने सर्वजगद्व्यापकत्वं हेतुमाह—**येनेति** । आत्मनो विनाशाभावे युक्तिमाह—**विनाशमिति** । आत्मनो विनाशमिच्छता स्वतो वा परतो वा नाशस्तस्येष्यते नाऽऽद्य इत्याह—**अविनाशीति** । देहादिद्वैतमसदुच्यते ततः सतो विशेषणं स्वतो नाशराहित्यम् । तस्य द्योतको निपात इत्याह—**तुशब्द इति** । आकाङ्क्षापूर्वकं विशेष्यं दर्शयति—**किमित्यादिना** । विमतमविनाशि व्यापकत्वादाकाशवत्, न हि प्रमितमेवोदाहरणं किं तु प्रसिद्धमपीति भावः । न द्वितीय इत्याह—**विनाशमिति** । न खल्वस्य विनाशं कर्तुं कश्चिदर्हतीति सबन्धः । विनाशस्य सावशेषत्वनिरवशेषत्वाभ्यां द्वैराश्यमाश्रित्य व्याकरोति—**अदर्शनमभावमिति** । न कश्चिदस्याभावं कर्तुं शक्नोतीत्यत्र हेतुमाह—**अव्ययस्येति** । ब्रह्म हि स्वरूपेण व्येति स्वसंबन्धिना वेति विकल्प्याऽऽद्यं दूषयति—**नैतदिति** । न हि निरवयवस्य स्वावयवापचयरूपव्ययः संभवतीत्यत्र वैधर्म्यदृष्टान्तमाह—**देहादिवदिति** । द्वितीयं निरस्यति—**नापीति** । तदेव व्यतिरेकदृष्टान्तेन स्पष्टयति—**यथेति** । द्विविधेऽपि व्ययायोगे

फलितमाह—**अत इति** । किं च ब्रह्म परतो न नश्यत्यात्मत्वाद्घटवदित्याह—**न कश्चिदिति** । आत्मत्वहेतोरासिद्धिमुद्धरति—**आत्मा हीति** । तादात्म्यश्रुतिरत्र हीति हेतू क्रियते । अस्तु तर्हि स्वयमेव ब्रह्माऽऽत्मनो नाशकमुद्बन्धनादिदर्शनान्नेत्याह—**स्वात्मनीति** ॥ १७ ॥

**आ० भा०—किं बहुना यद्देशतोऽनंतं तन्नित्यमेव । वेदाद्यन्यदपीत्याह—अविनाशीति । नापि शापादिना विनाशइत्याह—विनाशमिति । अव्ययं च तत् ॥ १७ ॥**

**आ० ज०**—अविनाशित्विविति श्लोके सर्वगतस्य नित्यत्वमुच्यते तत्प्रकृतानुपयुक्तमित्याशंक्य पूर्वार्धे तावत्प्रकृतोपयोगं सूचयन्व्याचष्टे—**किंबहुनेति** । वाक्यानामुपासनार्थत्वात्संप्रदायस्य च मूलानिश्चयात्प्रकृतिब्रह्मणोश्च स्वरूपस्यैवासिद्धेः । जीवादन्यस्यानादिनित्यस्याभावात्पुनरन्यस्य व्याप्त्यसिद्धिरित्याशंक्य किं बहुना प्रकृत्यादिस्वरूपसाधनेन किं चेदमिदंनित्यमिति बहुना प्रत्येकमुक्तेन यद्देशतोनंतं तन्नित्यमेवेत्येवं संग्राहकसंगृहीतं वेदादिकं जीवादन्यदप्यस्ति तद्व्याप्तिग्रहणस्थलं भविष्यतीत्याह भगवानित्यर्थः । वेदशब्देन वर्णागृह्यंते । आदिपदेनाकाशादयः । एतेषां च प्रत्यभिज्ञानादिना नित्यत्वसिद्धिः । ननु कालावयवाः क्षणादयः सर्वगताअपि न नित्याः । सत्यं । नह्यत्र व्याप्तिरुच्यते । किंतु बहूक्तिपरिहारायोपलक्षणमात्रमिति । तुशब्दार्थएवेति । तथाप्युत्तरार्धः पुनरुक्तइत्यतआह—**नापीति** । पूर्वं स्वाभाविको नाशो निषिद्धः । अविनाशीति ताच्छीलिकप्रत्ययात् । अत्र तु नैमित्तिकः । कश्चित्कर्तुं नार्हतीति वचनात् । प्रागनुक्तस्य वेदादेरव्ययत्वस्य कथमनुवादइति अतआह—**अव्ययमिति** । विधानमेवेदं कैमुत्येन शापादिना विनाशस्याभावं साधयितुमितिभावः ॥ १७ ॥

**रा० भा०—आत्मनस्त्वविनाशित्वं कथमुपपद्यत इत्यत्राह—तदात्मतत्त्वमविनाशीति । विद्धि येनात्मतत्त्वेन चेतनेन तव्द्यतिरिक्तमिदमचेतनतत्त्वं सर्वं ततं व्याप्तं व्यापकत्वेन निरतिशयसूक्ष्मत्वादात्मनो विनाशानर्हस्य तव्द्यतिरिक्तो न कश्चित्पदार्थो विनाशं कर्तुमर्हति तव्द्याप्यतया तस्मात्स्थूलत्वात् नाशकं हि शस्त्रं जलाग्निवाय्वादिकं नाश्यं व्याप्य शिथिलीकरोति । मुद्गरादयोऽपि हि वेगवत्संयोगेन वायुमुत्पाद्य तद्द्वारेण नाशयति अतः आत्मतत्त्वम् अविनाशि ॥ १७ ॥**

**अ० टी०**—नन्वलौकिकत्वाद्देहनाशो मास्तु । परं तत्संबंधिसमर्पितसेवाद्युपयुक्तपदार्थानां नाशः स्यात्तदर्थमुत्कटपापभयं भवतीति शोचामि इति चेत्तत्राह—**अविनाशित्विति** । येन भावात्मकभगवदीयदेहेनेदं सर्वं ततं व्याप्तं सेवादियोग्यं वस्तु तदलौकिकं शरीरम् अविनाशि नाशरहितं विद्धि जानीहि । तुशब्दो नाशसंभावनाव्यावृत्तिं ज्ञापयति । अस्याव्ययस्य स्वरूपस्य विनाशं कश्चित् पापाद्युपाधिजन्यकालादिः कर्तुं नार्हति न समर्थोस्तीत्यर्थः ॥ १७ ॥

**नी० टी०**—यस्याभावो नास्ति तस्य सतः सत्त्वे किं मानमित्याशंक्याह—**अविनाशीति** । तच्छब्देन प्रकृतं सत् परामृश्यते येन सता इदं सर्वं वियदादि ततं व्याप्तं घटः सन्पटः सन्निति सर्वस्य सदभेदानुभवात् । यथा घटो मृत् शरावो मृदिति घटादीनां मृदभेदानुभवान्मृदुपादानकत्वं तद्वत्सर्वस्यापि सदुपादानकत्वं बोध्यं । ननु मृद्वत्सदपि किं विकारवद्भवतीत्यांशक्याह—**अविनाशीति** । तत् सत् अविनाशि विद्धि । अयमर्थः पूर्वावस्थापरित्यागोऽत्र विनाशः मृद्धि पिंडाकारतां त्यक्त्वा घटीभवति अतः सा विनाशशीला विकारधाराश्रयत्वात् ब्रह्म तु न तथा । किं तर्हि रज्जुवत्स्वयमविनश्यदेव कार्याकारं भवति स्वकीये च सत्तास्फुरणे कार्येऽर्पयति अतोऽविनाशि तथा च श्रुतयः । "अजायमानो बहुधा विजायते । जात एव न जायते को न्वेनं जनयेत्पुनः" अजायमानो जन्माख्यं विकारमलभमानोऽपि विजायते वियदादिरूपेणाविर्भवति । तथा लोकदृष्ट्या जातो घटादिः परमार्थदृष्ट्या न जायते परिणाम्युपादानस्याभावात् मृदादेस्तु स्वाप्नमृदादिवत्तुच्छत्वात् अत एनं घटादिं को नु जनयेन्न कोपि । कुतस्तर्हि भासत इति चेत् रज्जू-

रगादिवदिति दत्तोत्तरमेतत्। "तथा प्राणा वै सत्यं तेषामेष सत्यं। तस्य भासा सर्वमिदं विभाति" इति सतः सत्यत्वेन प्राणोपलक्षितस्य प्रपंचस्य सत्यत्वं सतो भानमेव प्रपंचस्य भानमिति तथा च प्रपंचगते सत्तास्फूर्ती सतः सत्त्वे प्रमाणमित्यर्थः। श्रुतिश्च "अन्नेन सोम्य शुंगेनापोमूलमन्विच्छ अद्भिः सोम्य शुंगेन तेजोमूलमन्विच्छ तेजसा सोम्य शुंगेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठा" इति सतो जगदुपादानत्वं कार्यलिंगेन द्रढयति। सतोऽविनाशित्वं च विनाशहेत्वभावादित्याह—विनाशमिति। न व्येति नापक्षीयत इत्यव्ययं। एतेन सर्वविकारशून्यस्य विनाशो नास्तीत्यर्थः। अपक्षयो हि जन्मादिविकारवत एव भवतीति स एवात्र सर्वविकारोपलक्षणतया बोध्यः। न कश्चिदित्यनेन तदन्यस्य विनाशहेतोरभावो दर्शितः। "द्वितीयाद्वै भयं भवति" इति श्रुतेः॥ १७॥

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः॥**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत॥ १८॥**

**शां० भा०**—किं पुनस्तदसद् यत्स्वात्मसत्तां व्यभिचरतीति। उच्यते—अन्तवन्त इति। अन्तवन्तोऽन्तो विनाशो विद्यते येषां तेऽन्तवन्तो यथा मृगतृष्णिकोदकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते स तस्या अन्तस्तथेमे देहाः। स्वप्नमायादेहादिवच्चान्तवन्तो नित्यस्य शरीरिणः शरीरवतोऽनाशिनोऽप्रमेयस्याऽऽत्मनोऽन्तवन्त इत्युक्ता विवेकिभिरित्यर्थः। नित्यस्यानाशिन इति न पुनरुक्तं नित्यत्वस्य द्विविधत्वाल्लोके नाशस्य च। यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट उच्यते विद्यमानोऽप्यन्यथापरिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते। तत्रानाशिनो नित्यस्येति द्विविधेनापि नाशेनासंबन्धोऽस्येत्यर्थः।

**शां० आ०**—सदसतोरनन्तरप्रकृतयोः स्वरूपाव्यभिचारित्वेन परमार्थतया सन्निर्धारितमिदानीमसन्निर्दिधारयिषया पृच्छति—**किं पुनरिति**। असदसदेवेति निर्धारितत्वात्प्रश्नस्य निरवकाशत्वमाशङ्क्य शून्यं व्यावर्त्य विवक्षितमसन्निर्धारयितुं तस्य सावकाशत्वमाह—**यत्स्वात्मेति**। देहादेरनात्मवर्गस्य प्रकृतासच्छब्दविषयतेत्याह—**उच्यत इति**। तेषां स्वातन्त्र्यं व्युदस्यति—**नित्यस्येति**। आकाशादिव्यावृत्त्यर्थं विशिनष्टि—**शरीरिण इति**। परिणामिनित्यत्वं व्यवच्छिनत्ति—**अनाशिन इति**। तस्य प्रत्यक्षाद्यविषयत्वमाह—**अप्रमेयस्येति**। देहादेरवस्तुत्वादात्मनश्चैकरूपत्वाद्युद्धे स्वधर्मे प्रवृत्तस्यापि तव न हिंसादिदोषसंभावनेत्याह—**तस्मादिति**। ननु देहादिषु सद्बुद्धेरनुवृत्तेस्तस्या विच्छेदाभावात्कथमन्तवत्त्वं तेषामिष्यते तत्राऽऽह—**यथेति**। तथेमे देहाः सद्बुद्धिभाजोऽपि प्रमाणतो निरूपणायामवसाने विच्छेदादन्तवन्तो भवन्तीति शेषः। देहत्वादिना च जाग्रद्देहादेरन्तवत्त्वं संप्रतिपन्नवदनुमातुं शक्यमित्याह—**स्वप्नेति**। शरीरादेरन्तवत्त्वेऽपि प्रवाहरूपेणाऽऽत्मनस्तत्संबन्धस्यानन्तवत्त्वमाशङ्क्याऽऽह—**नित्यस्येति**। प्रवाहस्य प्रवाहिव्यतिरेकेणानिरूपणान्न तदात्मना देहाद्यभावे संबन्धसिद्धिरित्यभिसंधायोक्तं—**विवेकिभिरिति**। पदद्वयस्यैकार्थत्वमाशङ्क्य निरस्यति—**नित्यस्येत्यादिना**। नित्यत्वस्य द्वैविध्यसिद्ध्यर्थं नाशद्वैविध्यं प्रतिज्ञातं प्रकटयति—**यथेत्यादिना**। नाशस्य निरवशेषत्वेन सावशेषत्वेन च सिद्धे द्वैविध्ये फलितमाह—**तत्रेति**। विशेषणाभ्यां कूटस्थनित्यत्वमात्मनो विवक्षितमित्यर्थः।

**शां० भा०**—अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनस्तन्मा भूदिति नित्यस्यानाशिन इत्याह—अप्रमेयस्य न प्रमेयस्य प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः। नन्वागमेनाऽऽत्मा परिच्छिद्यते प्रत्यक्षादिना च पूर्वम्। न, आत्मनः स्वतःसिद्धत्वात्। सिद्धे ह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति। न हि पूर्वमित्थमहमित्यात्मानमप्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते। न ह्यात्मा नाम कस्यचिदप्रसिद्धो भवति।

शां० आ०—अन्यतरविशेषणमात्रोपादाने परिणामिनित्यत्वमात्मनः शङ्क्येतेत्यनिष्टापत्तिमाशङ्क्याऽऽह—**अन्यथेति**।औपनिषदत्वविशेषणमाश्रित्याप्रमेयत्वमाक्षिपति—**नन्विति**। इतश्चाऽऽत्मनो नाप्रमेयत्वमित्याह—**प्रत्यक्षादिनेति**। तेन चाऽऽगमप्रवृत्त्यपेक्षया पूर्वावस्थायामात्मैव परिच्छिद्यते तस्मिन्नेवाज्ञातत्वसंभवादज्ञातज्ञापकं प्रमाणमिति च प्रमाणलक्षणादित्यर्थः । एतदप्रमेयमित्यादिश्रुतिमनुसृत्य परिहरति—**नेत्यादिना**। कथं मानमनपेक्ष्याऽऽत्मनः सिद्धत्वमित्याशङ्क्योक्तं विवृणोति—**सिद्धे हीति**। प्रमित्सोः प्रमेयमिति शेषः। तदेव व्यतिरेकमुखेन विशदयति—**न हीति**। आत्मनः सर्वलोकप्रसिद्धत्वाच्च तस्मिन्न प्रमाणमन्वेषणीयमित्याह—**न ह्यात्मेति**।

**शां० भा०**—शास्त्रं त्वन्त्यं प्रमाणमतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रमाणत्वमात्मनि प्रतिपद्यते न त्वज्ञातार्थज्ञापकत्वेन। तथा च श्रुतिः—"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इति। यस्मादेवं नित्योऽविक्रियश्चाऽऽत्मा तस्माद्युध्यस्व युद्धादुपरमं मा कार्षीरित्यर्थः। न ह्यत्र युद्धकर्तव्यता विधीयते। युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धस्तूष्णीमास्ते तस्य कर्तव्यप्रतिबन्धापनयनमात्रं भगवता क्रियते। तस्माद्युध्यस्वेत्यनुवादमात्रं न विधिः ॥ १८ ॥

शां० आ०—प्रत्यक्षादेरनात्मविषयत्वात्तत्र चाज्ञातताया व्यवहारे संभवात्तत्प्रामाण्यस्य च व्यावहारिकत्वाद्विशिष्टे तत्प्रवृत्तावपि केवले तदप्रवृत्तेर्यद्यपि नाऽऽत्मनि तत्प्रामाण्यं तथाऽपि तद्वितश्रुत्या शास्त्रस्य तत्र प्रवृत्तिरवश्यंभाविनीत्याशङ्क्याऽऽह—**शास्त्रं त्विति**। शास्त्रेण प्रत्यग्भूते ब्रह्मणि प्रतिपादिते प्रमात्रादिविभागस्य व्यावृत्तत्वाद्युक्तमस्यान्त्यत्वमपौरुषेयतया निर्दोषत्वाच्चास्य प्रामाण्यमित्यर्थः। तथाऽपि कथमस्य प्रत्यगात्मनि प्रामाण्यं तस्य स्वतःसिद्धत्वेनाविषयत्वादज्ञातज्ञापनायोगादित्याशङ्क्य स्वतो भानेऽपि प्रतीचो मनुष्योऽहं कर्ताऽहमित्यादिना मनुष्यत्वकर्तृत्वादीनामतद्धर्माणामध्यारोपणेनाऽऽत्मनि प्रतीयमानत्वात्तन्मात्रनिवर्तकत्वेनाऽऽत्मनो विषयत्वमनापद्यैव शास्त्रं प्रामाण्यं प्रतिपद्यते सिद्धं तु निवर्तकत्वादिति न्यायादित्याह—**अतद्धर्मेति**। घटादाविव स्फुरणातिशयजनकत्वेन किमित्यात्मनि शास्त्रप्रमाण्यं नेष्टमित्याशङ्क्य जडत्वाजडत्वाभ्यां विशेषादिति मत्वाऽऽह—**न त्विति**। ब्रह्मात्मनो मानापेक्षामन्तरेण स्वतःस्फुरणे प्रमाणमाह—**तथा चेति**। साक्षादन्यापेक्षामन्तरेणापरोक्षादपरोक्षस्फुरणात्मकं यद्ब्रह्म न च तस्याऽऽत्मनोऽर्थान्तरत्वं सर्वाभ्यन्तरत्वेन सर्ववस्तुसारत्वात्तमात्मानं व्याचक्ष्वेति योजना। अप्रमेयत्वेनाविनाशित्वं प्रतिपाद्य फलितं निगमयति—**यस्मादिति**। स्वधर्मनिवृत्तिहेतुनिषेधे तात्पर्यं दर्शयति—**युद्धादिति**। आत्मनो नित्यत्वादिस्वरूपमुपपाद्य युद्धकर्तव्यत्वविधानाज्ज्ञानकर्मसमुच्चयोऽत्र भातीत्याशङ्क्याऽऽह—**न हीति**। युध्यस्वेति वचनात्तत्कर्तव्यत्वविधिरस्तीत्याशङ्क्याऽऽह—**युद्धइति**। कथं तर्हि कथं भीष्ममहमित्याद्यर्जुनस्य युद्धोपरमपरं वचनमिति तत्राऽऽह—**शोकेति**। यदि स्वतो युद्धे प्रवृत्तिस्तर्हि भगवद्वचनस्य का गतिरित्याशङ्क्याऽऽह—**तस्येति**। भगवद्वचनस्य प्रतिबन्धनिवर्तकत्वे सत्यर्जुनप्रवृत्तेः स्वाभाविकत्वे फलितमाह—**तस्मादिति** ॥ १८ ॥

**आ० भा०**—भवतु देहस्यापि कस्यचिन्नित्यत्वमिति। नेत्याह—अंतवंतइति। अस्तु तर्हि दर्पणनाशात्प्रतिबिंबनाशवदात्मनाश इत्यत आह—नित्यस्येति। शरीरिणइति। ईश्वरव्यावृत्तये। नच नैमित्तिकनाश इत्याह—अनाशिन इति। कुतः अप्रमेयेश्वरस्वरूपत्वात्। नह्युपाधिबिंबसान्निध्यनाशे प्रतिबिंबनाशः। सति च प्रदर्शके स्वयमेवात्र प्रदर्शकः। चित्त्वात् नित्यश्चोपाधिः कश्चिदस्ति। प्रतिपत्तौ विमोक्षस्य नित्योपाध्या स्वरूपया चिद्रूपया युतो जीवः केशवप्रतिबिंबकइति भगवद्वचनात् ॥ १८ ॥

आ० ज०—देहानामंतवत्त्वं प्रागुक्तं किमर्थमुच्यतइत्यतआह—**भवत्विति**। आत्मानित्यत्वानुमानस्य प्रतिपक्षं वक्तुं स्वाभिप्रेतस्य हेतोः सिद्धांतिनाप्यभ्युपगतत्वं दृढीकुर्वता पूर्वपक्षिणा देहस्यापि कस्यचिन्नित्यत्वं भवतु किमिति पृष्टेनेत्याहेत्यर्थः। सिद्धार्थतापरिहाराय कस्यचिदित्युक्तम्। नन्वतिप्रसंगोयं कस्मान्न भवति। कस्यचिदिति विशेषणवैयर्थ्यप्रसंगात्। नित्यस्येत्यात्मनित्यत्वं पुनः कस्मादुच्यत इत्यत आह—**अस्त्विति**। एवं देहानित्यत्वं सिद्धांतिनोपि सिद्धं कृत्वा तर्हि प्रतिबिंबस्यात्मन उपाधेर्देहस्य नाशान्नाशोस्तु दर्पणनाशान्मुखप्रतिबिंबस्येवेति पूर्वपक्षिणा प्रतिपक्षेभिहिते तत्प्रतिषेधायेदमाहेत्यर्थः। अनेन तथाप्यात्मा नित्य इतिवाक्यवृत्तिः सूचिता। अनुवादे प्रयोजनाभावात् ये देहा अनित्या न तेषामुपाधित्वम्। यस्योपाधित्वं

नासावनित्य इति भावः। तदिदमुक्तमिम इति । व्यक्तीकरिष्यते चैतत् । ननु शरीरिणो देहाइतिव्यर्थम् । अशरीरस्य देहाभावादित्यतआह—**शरीरिणइति** । नित्यस्य देहा अंतवंतइत्युच्यमाने ईश्वरदेहस्याप्यंतवत्त्वं प्रसज्यते तद्व्यावृत्त्यर्थं शरीरिण इति विशेषणम् । जंतुर्जन्यशरीरिण इत्यभिधानाच्छरीरिशब्दस्य जीवे प्रसिद्धेः । तथाप्यनाशिन इति पुनरुक्तिरिति । अत्र केचित्तत्परिहाराय विनाशिन इतिपाठांतरं कुर्वंति । तदसत् । अंतवंतइत्यनेन पुनरुक्तितादवस्थ्यात् । कथंचित्समाधानेऽन्यत्रापि तत्समम् । किमन्यथापाठेनेत्याशयवानाह—**नचेति** । उपाधिनाशेन नाशाभावेपि उपाधिबिंबसन्निधिनाशान्निमित्तात्प्रतिबिंबस्यात्मनो नाशो भविष्यति । नचासिद्धिः शंक्या । परिछिन्नस्यैव प्रतिबिंबसंभवेन सन्निधिनाशध्रौव्यादिति पुनः प्रतिपक्षिते तत्प्रतिषेधायेदमिति भावः । अप्रमेयस्येत्येतदसंभविविशेषणम् । व्यर्थं चेत्यतस्तन्निवर्त्यामाशंकां दर्शयित्वा व्याचष्टे—**कुत इति** । न हि प्रतिपक्षो वाङ्मात्रेण निषेद्धुं शक्यत इति भावः । अप्रमेयेत्यनेन प्रतिपक्षहेतोरसिद्धिमाचष्टे । नायमात्मा घटादेः कस्यचित्प्रतिबिंबः । किंत्वीश्वरस्य सचाप्रमेयः सर्वगत इति कथं तस्योपाधिसन्निधिनाश इति । ननु कथमिदं लभ्यते अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति प्रसिद्धमेव । न च सर्वगतस्य प्रतिबिंबासंभवः । तदधीनसारूप्यस्य प्रतिबिंबत्वात् । तदिदमुक्तं सरूपत्वादिति । ननु वक्तव्यं सर्वमुक्त्वोपसंहारः क्रियते तत्किमात्मनित्यत्वविषये सर्वशंकोद्धारो जातो येन तस्माद्युद्ध्यस्वेत्युपसंहियत इत्यतो जात इत्याह—**नहीति** । उपाधिबिंबसान्निध्यनाशे प्रदर्शके आदर्शे उपाधौ बिंबे चाविनष्टे सति प्रतिबिंबनाशो नह्यस्ति उपपादितश्चात्र त्रयस्यानाश इति भावः । ननु विनाशिनां देहानामप्युपाधिकत्वात्कोत्रोपाधिरित्यत आह—**स्वयमिति** । उपाध्युपधिमद्भावो विशेषबलेनेति भावः । लोकेऽदृष्टमिदं कथमंगीकार्यमित्यत आह—**चित्त्वादिति** । जडेष्वयावद्वस्तुभावित्वात्सर्वत्र भेदाभेदौ । चित्स्वरूपे तु यावद्वस्तुभावित्वादभेद एवेतिभावः । स्वस्यैवोपाधित्वे मुक्तावात्मानिवृत्तिः स्यात् । उपाधिनिवृत्तिलक्षणत्वान्मुक्तेरित्यतआह—**नित्यइति** । द्विविध उपाधिरात्मनः नित्योऽनित्यश्च । तत्र नित्यस्यावस्थानं अन्यस्य निवृत्तिर्मुक्ताविति कुतएतदित्यत आह—**प्रतिपत्ताविति** । प्राप्तौ सत्यां युतस्तिष्ठतीति शेषः । ननूपाध्येति कथं किप्रत्ययांतस्य पुल्लिंगतानियमात् । तर्हि इषुधिद्वियोः कथम् । प्रयोगदर्शनादपवादः । यथाह । 'लिंगशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति । समंप्रकृतेपि । स्व आत्मा रूपं यस्याः सा स्वरूपा चिद्रूपत्वात् । स्वरूपत्वं स्वरूपत्वान्नित्यत्वम् ॥ १८ ॥

**रा० भा०**—देहानां तु विनाशित्वमेव स्वभाव इत्याह—इह उपचय इत्युपचयरूपा इमे देहा अन्तवन्तः विनाशस्वभावाः उपचयात्मका हि घटादयोऽन्तवन्तो दृष्टाः । नित्यस्य शरीरिणः कर्मफलभोगार्थतया भूतसंघातरूपा देहाः पुण्याः पुण्येनेत्यादिशास्त्रैरुक्ताः कर्मावसानविनाशिनः । आत्मा त्वविनाशी कुतः अप्रमेयत्वात् । न ह्यात्मा प्रमेयतयोपलभ्यते अपि तु प्रमातृतया । तथा च वक्ष्यते । 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।' इति । न चानेकोपचयात्मकश्च आत्मोपलभ्यते । सर्वत्र देहे अहमिदं जानामीति देहादन्यस्य प्रमातृतयैकरूपेणोपलब्धेः । नच देहादेरिव प्रदेशभेदे प्रमातुराकारभेद उपलभ्यते अत एकरूपत्वेनानुपचयात्मकत्वात्प्रमातृत्वाद्व्यापकत्वाच्चात्मा नित्यः । देहस्तूपचयात्मकत्वाच्छरीरिणः कर्मफलभोगार्थत्वादनेकरूपत्वाद्व्याप्यत्वाच्च विनाशी । तस्माद्देहस्य विनाशस्वभावत्वादात्मनो नित्यस्वभावत्वाच्चोभावपि न शोकस्थानमिति शस्त्रपातादिपरुषस्पर्शानवर्जनीयान्स्वगतानन्यगतांश्च धैर्येण अमृतत्वप्राप्तयेऽनभिसंहितफलं युद्धाख्यं कर्मारभस्व ॥ १८ ॥

**अ० टी०**—ननु देहादिनाशः प्रत्यक्षमनुभूयमानः किंरूप इत्याशंकायामाह—**अंतवंत इति** । नित्यस्य जन्ममरणशून्यस्य शरीरिणो जीवस्य जीवभावनाभिलाषप्राप्तमायासंबंधिन इमे देहा लौकिकाः परिदृश्यमानाः भीष्मादीनां सर्वेषां चांतवंतः अंतयुक्ता उक्ता इत्यर्थः । अनाशिनो विनाशहीनस्याप्रमेयस्योपायसहस्रैरपि प्रमातुमयोग्यस्य भगवतः संबंधिनः शरीरिणो जीवस्य भगवदीयस्य देहास्तु नांतवंत इत्यर्थः । सर्वेषामेवांतवत्त्वकथने तु पूर्वोक्तवचनैर्विरोधः स्यात् । अत एव तेषु भिन्नत्वज्ञापनार्थमेव इमइत्युक्तवान्प्रभुः । तस्मादेतेषां मारणेन पापसंभावना नास्तीति युद्धचस्व युद्धं कुर्वित्यर्थः । भारतेति संबोधनमुक्तवचनविश्वासार्थं यतः सत्कुलोत्पन्नस्यैवंभूतभगवद्वाक्ये विश्वासो भवति ॥ १८ ॥

नी० टी०—एवं सत आत्मनो नित्यत्वमसतो देहादेरनित्यत्वं चोक्तमुपसंहरन्नेनं युद्धाभिमुखं करोति—अंतवंत इति। यद्यपि नासतो विद्यते भाव इत्यसतां देहानां कालत्रयेऽपि सत्त्वं नास्तीति परमार्थदृष्ट्योक्तं तथापि तां दृष्टिमप्रतिपद्यमानस्य नरकादिभयमनुरुध्यमानस्य व्यहाराभिप्रायेण नित्यानित्यविभागमभिप्रेत्य देहानामंतवत्त्वमुच्यत इति न दोषः। नित्यत्वं कालापरिच्छेद्यत्वं तच्च व्यवहारे नभसोऽप्यस्तीत्यत–उक्तमनाशिन इति। नाशः अदर्शनं तद्वान् हि आकाशः 'नभ आत्मनि लीयते' इति स्मृतेः अयं तु न तथेत्यनाशी सर्वदैव प्रकाशमान इत्यर्थः। एतदपि न घटादिवद्दृश्यत्वेनेत्याह—अप्रमेयस्येति। तथा च श्रुतिरात्मनोऽप्रमेयत्वमाह। "एतदप्रमेयं ध्रुवम्" इति अप्रमेयमित्यस्याप्रमेयमित्यर्थः। एतच्चात्मनि प्रमाणाप्रसराज्ज्ञेयं तथा च श्रुतिः। "येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयात्" इति प्रसिद्धिस्त्वस्य प्रत्यगात्मत्वादेव। "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वांतर" इति श्रुतेः। उक्तंच। 'प्रमाणमप्रमाणं च प्रमाभासस्तथैव च॥ यत्प्रसादात्प्रसिद्ध्यंति तदसंभावना कुतः' इति तस्माद्युद्ध्यस्व भारत। भीष्मादिदेहानां मिथ्यात्वादनित्यत्वाच्च स्वयमेव नष्टप्रायतया हननान्निवृत्त्या त्वया स्वधर्मो न नाशनीय इति भावः॥ १८॥

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्॥**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥ १९॥**

**शां० भा०—शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं न प्रवर्तकमित्येतस्यार्थस्य साक्षिभूते ऋचावानिनाय भगवान्। यत्तु मन्यसे युद्धे भीष्मादयो मया हन्यन्तेऽहमेव तेषां हन्तेत्येषा बुद्धिर्मृषैव ते। कथम्—य एनमिति। एनं प्रकृतं देहिनं वेत्ति जानाति हन्तारं हननक्रियायाः कर्तारं, यश्चैनमन्यो मन्यते हतं देहहनने हतोऽहमिति हननक्रियाः कर्मभूतं, तावुभौ न विजानीतो न ज्ञातवन्तावविवेकेनाऽऽत्मानमहंप्रत्ययविषयं, हन्ताऽहं हतोऽस्म्यहमिति देहहननेनाऽऽत्मानमहंप्रत्ययविषयं यौ विजानीतस्तावात्मस्वरूपानभिज्ञावित्यर्थः। यस्मान्नायमात्मा हन्ति न हननक्रियायाः कर्ता भवति, न हन्यते न च कर्म भवतीत्यर्थः, अविक्रियत्वात्॥ १९॥**

शां० आ०—अविनाशि तु तद्विद्धीत्यत्र पूर्वार्धेन तत्पदार्थसमर्थनमुत्तरार्धेन निरीश्वरवादस्य परिणामवादस्य वा निराकरणमात्मानि जन्मादिप्रतिभानस्यौपचारिकत्वप्रदर्शनार्थमन्तवन्त इत्यादि वचनमिति केचित्। अस्तु नामायमपि पन्थाः, पूर्वोक्तस्य गीताशास्त्रार्थस्योत्प्रेक्षामात्रमूलत्वं निराकर्तुं मन्त्रद्वयं भगवानानीतवानिति श्लोकद्वयस्य संगतिं दर्शयति—**शोकमोहादीति**। तत्र प्रथममन्त्रस्य संगतिमाह—**यत्त्विति**। प्रत्यक्षनिबन्धनत्वादमुष्या बुद्धेर्मृषात्वमयुक्तमित्याक्षिपति—**कथमिति**। प्रत्यक्षस्याज्ञानप्रसूतत्वेनाऽऽभासत्वात्तत्कृता बुद्धिर्न प्रमेति परिहरति—**य एनमिति**। "हन्ता चेन्मन्यते हन्तुम्" इत्याद्यामृचमर्थतो दर्शयित्वा व्याचष्टे—**य एनं प्रकृतमिति**। हन्तारं हतं वाऽऽत्मानं मन्यमानस्य कथमज्ञानमित्याशङ्क्याऽऽह—**हन्ताऽहमिति**। हन्तृत्वादिज्ञानमज्ञानमित्यत्र हेतुमाह—**यस्मादिति**। आत्मनो हननं प्रति कर्तृत्वकर्मत्वयोरभावे हेतुं दर्शयति—**अविक्रियत्वादिति**॥ १९॥

**आ० भा०—व्यवहारस्तु भ्रांत इत्याह—यएनमिति। कुतः। उक्तहेतुभ्यो नायं हंति न हन्यते। न हि प्रतिबिंबस्य क्रिया। स हि बिंबक्रिययैव क्रियावान्। ध्यायतीवेतिश्रुतेश्च॥ १९॥**

आ० ज०—**यएनमिति**। पुनरात्मनित्यत्वं किमित्युच्यत इति अतो नास्य नित्यत्वप्रतिपादने तात्पर्यम्। किं तु निष्टंकितं चेदात्मनो नित्यत्वं तर्हि का गतिस्तद्धननव्यवहारस्येत्याशंक्य तस्य भ्रांतत्वमनेनोच्यत इत्याह—**व्यवहारस्त्विति**। व्यवहारोत्र ज्ञानम्। तथापि नायं हंति न हन्यते इति पुनरुक्तिरेवेतिचेन्न। ज्ञानानां प्रामाण्यस्य बाधकैकापोह्यत्वात्। कुतो बाधका-

दस्य भ्रांतत्वमित्याशंक्य स्वपक्षसाधकानामेवोक्तहेतूनामेतद्बाधनेपि व्यापारप्रदर्शनार्थत्वादस्येत्याह—**कुत इति** । नन्वत्र हननमेकमेव तत्कथमुभाविति । कथं च नायं हंति न हन्यत इति । अथैकस्या अपि क्रियायाः कारकभेदादेव मुक्तिस्तर्हि करणाधिकरणोक्तिरपि प्रसज्यत इति । उच्यते । आत्मनोनित्यत्वमिवास्वातंत्र्यमपि प्राक्प्रतिपादितम् । यथोक्तं तात्पर्यनिर्णये 'तत्र हननव्यवहारवत्स्वातंत्र्यव्यवहारस्यापि भ्रांतत्वमनेनोच्यत' इति उभावित्याद्युपपद्यते । अतएव भाष्यकारो व्यवहारस्त्विति सामान्येनाह । न तु हननव्यवहार इति निष्कृष्य । ननु नित्यत्वे विंबनित्यत्वादयो हेतव उक्ताः । अस्वातंत्र्ये तु न कोपि । तत्कथमुक्त हेतुभ्य इत्युक्तमिति चेन्न । प्रतिबिंबत्वस्योक्तत्वात् । तस्य कथमस्वातंत्र्ये हेतुत्वमित्यत आह—**नहीति** । क्रियेति वदता हंतारं हंतीति पदद्वयमुपक्षणार्थमितिसूचितम् । ननु प्रतिबिंबस्यापि लोके क्रिया दृश्यते जीवस्य च क्रियाभावे कर्ता शास्त्रार्थवत्त्वादित्यादिविरोध इत्यत आह—**स हीति** । बिंबक्रियया बिंबाधीनक्रियया । तथा च पूर्वं स्वातंत्र्याभावापेक्षया क्रियाप्रतिषेध इति ज्ञातव्यम् । ननूपाधिक्रिययापि प्रतिबिंबे क्रिया भवति । तत्कथमुच्यते बिंबक्रिययैवेति । मैवम् स्वातंत्र्य-प्रतिषेधे तात्पर्यात् । जीवस्य पृथगुपाध्यभावाच्च । जीवस्येश्वराधीनक्रियत्वे श्रुतिं चाह—**ध्यायतीवेति** । ईश्वरो जीवं ध्यायती-त्यर्थः । इव शब्दोल्पार्थे ॥ १९ ॥

**रा० भा०**—एवमुक्तस्वभावमात्मानं प्रतिहन्तारं हननहेतुकमपि यो मन्यते यश्चैनं केनापि हेतुना हतं मन्यते उभौ तौ न विजानीतः । उक्तैर्हेतुभिरस्य नित्यत्वादेवायं हननहेतुर्न भवति अत एव चायमात्मा न हन्यते । हन्तिधातुरध्यात्मकर्मशरीरवियोगकरणवाची । " न हिंस्याद्भूतानि " " ब्राह्मणो न हन्तव्यः" इत्यादीन्यपि शास्त्राण्यविहितशरीरवियोगकरणविषयाणि ॥ १९ ॥

**अ० टी०**—ननु तथापि जीवस्य भगवदंशत्वे कथं हननमत आह—**यएनमिति** । य एनं हन्तारं वेत्ति यश्च एनं हतं मन्यते तावुभावपि न विजानीतः अयं न हंति न वा हन्यते मदिच्छयैव सर्वं भवतीति भावः ॥ १९ ॥

**नी० टी०**—ननु नासतो विद्यते भाव इति न्यायेनासतो मात्रादेर्मिथ्यात्वेन निःस्वरूपत्वात्कर्तृत्वं न संभवति अतः सत एव कर्तृत्वं बंधमोक्षभाक्त्वं च वाच्यं अन्यथांऽतःकरणे बंध आत्मनश्च मोक्ष इति तयोर्वैयधिकरण्यं स्यात् तथा येन सर्वमिदं ततमिति सतो देहाद्युपादानत्वं चोक्तं । तथा च हननक्रियां प्रत्येकस्यैव कर्तृत्वं कर्मत्वं चापतति तच्च विरुद्धं स्वात्मनि स्वव्यापारायोगात् । न हि वह्निर्वह्निं दहतीति युक्तमित्याशंक्याह—**य एनमिति** । यश्च तार्किकादिरेनमात्मानं हंतारं हननक्रियायाः कर्त्तारं मन्यते । यश्च चार्वाकादिरेनं हतं हननक्रियायाः कर्मीभूतं मन्यते तावुभावपि न जानीतः आत्मतत्त्वमिति शेषः । यस्मा-न्नायं हंति न हन्यते । न हि यः कर्त्ता स आत्मा नापि देह आत्मा तयोः प्रागेवानात्मत्वावधारणात् अयं भावः । यथायःपिंडे वह्निसंबंधादेव दग्धृत्वं न तु स्वतः एवं मात्राद्युदयसमनियतं कर्त्तृत्वं मात्रादिधर्म एव नात्मनः । आत्मनि तु कर्त्तृत्वप्रतीतिर्मात्रादिसंबंधादेव अतो मात्रादिविशिष्टस्यैव बंधो न केवलस्य । मोक्षश्च मात्रादिवियोग एवेति न बंधमोक्षयोर्वैयधिकरण्यं । न च मात्रादेर्निःस्वरूपत्वमस्ति सत्त्वासत्त्वा-भ्यामनिर्वचनीयस्य व्यवहारयोग्यस्य ब्रह्मज्ञानैकबाध्यस्य स्वप्नमायागंधर्वनगरादितुल्यस्य तत्स्वरूपस्याभ्यु-पगमात् तस्मान्न कर्त्तृत्वमात्मधर्मः । यथोक्तं । 'आत्मा कर्त्रादिरूपश्चेन्माकांक्षीस्तर्हि मुक्ततां ॥ न हि स्वभावो भावानां व्यावर्त्तेतौष्ण्यवद्रवेः' इति । किं च । कर्त्तृत्वं रागद्वेषादिविकारवत एव संभवति तद्वांश्च दुःखीत्यात्म-नोऽनुभूयमानं साक्षित्वं बाध्येत । यथोक्तं । 'नर्त्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ॥ धीविक्रिया-सहस्राणां साक्ष्यतोऽहमविक्रियः इति । न च सतो देहाद्युपादानत्वेन हननक्रियाकर्मत्वं संभवति विवर्त्तवा-दाभ्युपगमात् । न ह्यध्यस्तस्य धर्मैरधिष्ठाने विकारो दृश्यते । यथोक्तं भाष्ये । 'यत्र यदध्यस्तं सत्तत्कृतेन गुणेन दोषेण वाऽणुमात्रेणापि न संबध्यते' इति विवृतं चैतद्वृद्धैः 'न हि भूमिरूषरवती मृगतृट्जलवाहिनीं

सरितमुद्वहति । मृगवारिपूरपरिपूरवती न नदी तथोषरभुवं स्पृशति' इति । एतेन कर्तृत्वकर्मत्वयोरनात्मधर्मत्वादनात्मनश्चानेकरूपत्वादेकत्रात्मनि तदुभयविरोधोद्भावनमपि निरस्तं वेदितव्यं । एवं चार्वाकतार्किकाभिमतौ देहात्मकत्रात्मिवादौ । "हंता चेन्मन्यते हंतुं हतश्चेन्मन्यते हतं ॥ उभौ तौ न विजानीतो नायं हंति न हन्यते" इति काठकोक्तेन मंत्रेण पूर्वार्धे पाठभेदात्पठितेन परिहृतौ वेदितव्यौ ॥ १९ ॥

**न जायते म्रियते वा कदाचिन्नायं भूत्वाऽभविता वा न भूयः ॥**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥**

**शां० भा०**—कथमविक्रिय आत्मेति द्वितीयो मंत्रः—न जायते नोत्पद्यते जनिलक्षणा वस्तुविक्रिया नाऽऽत्मनो विद्यत इत्यर्थः। न म्रियते वा। वाशब्दश्चार्थे । न म्रियते चेत्यन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते। कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संबध्यते न कदाचिज्जायते न कदाचिन्म्रियत इत्येवम् । यस्मादयमात्मा भूत्वा भवनक्रियामनुभूय पश्चादभविताऽभावं गन्ता न भूयः पुनस्तस्मान्न म्रियते। यो हि भूत्वा न भविता स म्रियत इत्युच्यते लोके। वाशब्दान्नशब्दाच्चायमात्माऽभूत्वा भविता वा देहवन्न भूयः पुनस्तस्मान्न जायते । यो ह्यभूत्वा भविता स जायत इत्युच्यते नैवमात्माऽतो न जायते । यस्मादेवं तस्मादजो यस्मान्न म्रियते तस्मान्नित्यश्च ।

**शां० आ०**—तदेव साधयितुं न जायते म्रियते वा विपश्चिदित्यादिमन्त्रान्तरमवतारयति—**कथमिति** । सर्वविक्रियाराहित्यप्रदर्शनेन हेतुं विशदयन्मन्त्रमेव पठति—**न जायत इति** । जन्ममरणविक्रियाद्वयप्रतिषेधं साधयति—**नायमिति** । अयमात्मा भूत्वा नाभविता, न वाऽभूत्वा भूयो भवितेति योजना । न केवलं विक्रियाद्वयमेवात्र निषिध्यते किंतु सर्वमेव विक्रियाजातमित्याह—**अज इति** । वाच्यमर्थमुक्त्वा विवक्षितमर्थमाह—**जनिलक्षणेति** । विकल्पार्थत्वं व्यावर्तयति—**वेति** । निष्पन्नमर्थं निर्दिशति—**नेत्यादिना** । संबन्धमेवाभिनयति—**न कदाचिदिति** । अन्त्यविक्रियाभावे हेतुत्वेन नायमित्यादि व्याचष्टे—**यस्मादिति** । उक्तमेव व्यनक्ति—**यो हीति** । आत्मनि तु भूत्वा पुनरभवनाभावान्नास्ति मृत्युरित्यर्थः । आत्मनो जन्माभावेऽपि हेतुरिहैव विवक्षित इत्याह—**वाशब्दादिति** । अभूत्वेति च्छेदः । देहवदिति व्यतिरेकोदाहरणम् । उक्तमेवार्थं साधयति—**यो हीति** । जन्माभावे तत्पूर्विकाऽस्तित्वविक्रियाऽपि नाऽऽत्मनोऽस्तीत्याह—**यस्मादिति** । प्राणवियोगात्मनो मृतेरभावे सावशेषनाशाभाववन्निरवशेषनाशाभावोऽपि सिध्यतीत्याह—**यस्मादिति** ।

**शां० भा०**—यद्यप्याद्यन्तयोर्विक्रिययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा भवन्ति तथाऽपि मध्यभाविनीनां विक्रियाणां स्वशब्दैरेव तदर्थैः प्रतिषेधः कर्तव्य इत्यनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यादित्याह—शाश्वत इत्यादिना । शाश्वत इत्यपक्षयलक्षणा विक्रिया प्रतिषिध्यते शश्वद्भवः शाश्वतः । नापक्षीयते स्वरूपेण निरवयवत्वान्निर्गुणत्वाच्च नापि गुणक्षयेणापक्षयः । अपक्षयविपरीताऽपि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते—पुराण इति । यो ह्यवयवागमेनोपचीयते स वर्धतेऽभिनव इति चोच्यते । अयं त्वात्मा निरवयवत्वात्पुराऽपि नव एवेति पुराणो न वर्धत इत्यर्थः । तथा न हन्यते न विपरिणम्यते हन्यमाने विपरिणम्यमानेऽपि शरीरे । हन्तिरत्र विपरिणामार्थो द्रष्टव्योऽपुनरुक्ततायै न विपरिणम्यत इत्यर्थः । अस्मिन्मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते । सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः । यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य संबन्धः ॥ २० ॥

**शां० आ०**—ननु जन्मनाशयोर्निषेधे तदन्तर्गतानां विक्रियान्तराणामपि निषेधसिद्धेस्तन्निषेधार्थं न पृथक्प्रयतितव्यमिति तत्राऽऽह—**यद्यपीति** । स्वशब्दैर्मध्यवर्तिविक्रियानिषेधवाचकैरिति यावत् । आर्थिकेऽपि निषेधे निषेधस्य सिद्धतया शाब्दो निषेधो

न पृथगर्थवानित्याशङ्कयाऽऽह—**अनुक्तानामिति**। नित्यशब्देन शाश्वतशब्दस्य पौनरुक्त्यं परिहरन्व्याकरोति—**शाश्वत इत्यादिना**। अपक्षयो हि स्वरूपेण वा स्याद्गुणापचयतो वेति विकल्प्य क्रमेण दूषयति—**नेत्यादिना**। पुराणपदस्यागतार्थत्वं कथयति—**अपक्षयेति**। तदेव स्फुटयति—**योहीति**। न म्रियते वेत्यनेन चतुर्थपादस्य पौनरुक्त्यमाशङ्कय व्याचष्टे—**तथेत्यादिना**। ननु हिंसार्थो हन्तिः श्रूयते तत्कथं विपरिणामो निषिध्यते तत्राऽऽह—**हन्तिरिति**। हिंसार्थत्वसंभवे किमित्यर्थान्तरं हन्तेरिष्यते तत्राऽऽह—**अपुनरुक्तताया इति**। हिंसार्थत्वे मृतिनिषेधेन पौनरुक्त्यं स्यात्तन्निषेधार्थं विपरिणामार्थत्वमेष्टव्यमित्यर्थः। पूर्वावस्थात्यागेनावस्थान्तरापत्तिर्विपरिणामस्तदर्थश्चेदत्र हन्तिरिष्यते तदा निष्पन्नमर्थमाह—**नेति**। न जायत इत्यादिमन्त्रार्थमुपसंहराति—**अस्मिन्निति**। षण्णां विकाराणामात्मनि प्रतिषेधे फलितमाह—**सर्वेति**। आत्मनः सर्वविक्रियाराहित्येऽपि किमायातमित्याशङ्कयाऽऽह—**यस्मादिति** ॥ २० ॥

**आ० भा०**—अत्र मंत्रवर्णोप्यस्तीत्याह—न जायत इति। "नचेश्वरज्ञानवद्भूत्वा भविता। तद्धि तदैक्षत।" 'देशतः कालतो योसाववस्थातः स्वतोऽन्यतः। अविलुप्तावबोधात्मा' इत्यादिश्रुतिस्मृतिसिद्धम्। कुतः अजादिलक्षणेश्वरसरूपत्वात्। शाश्वतः सदैकरूपः। पुरं देहमणतीति पुराणः। तथापि न हन्यते हन्यमानेपि देहे ॥ २० ॥

**आ० ज०**—तथापि न जायत इति पुनरुक्तमित्याशंक्य नेदं भगवद्वाक्यं किं तूक्तार्थे संमतित्वेन मंत्रवर्णोऽयमुदाहियत इत्याह—**अत्रेति**। ननु जीवः स्वरूपेण भूत्वा देहसंबंधेन भवितैव तत्कथमुच्यते भूत्वा भविता नेतीत्यतोऽन्यथा व्याचष्टे—**नचेति**। जीवो न जायते चेत्तर्हि यथेश्वरज्ञानं वृद्धिहासादिवर्जितं भूत्वैव कयाचिदचिंत्यया शक्त्या भूतमिति व्यवहारालंबनं तथा जीवेपि किंजननव्यवहारस्तन्निमित्तकइति पृच्छायां नेत्यनेनोच्यत इत्यर्थः। नन्वीश्वरज्ञानस्योक्तप्रकारं भूत्वा भवनं कुतः सिद्धम्। येन जीवस्य तथाभावासंभवनायोदाहियत इत्यत आह—**तद्धीति**। तदीश्वरज्ञानस्योक्तप्रकारेण भूत्वा भवनं श्रुतिस्मृतिसिद्धं हीति संबंधः। तदैक्षतेति भवनमुच्यते देवदत्तोऽपश्यदितिवत्—**देशत इति**। वृद्धिहासादिराहित्यम्। नन्वीश्वरवदित्येव कस्मान्नोक्तम्। नैवं शंक्यम्। लोकदर्शनस्याधिकस्य तत्रोत्पादात्। अजो नित्य इति पुनरुक्तमित्याशंक्य तन्निवर्त्यामाशंकामुक्त्वाऽन्यथा व्याचष्टे—**कुत इति**। न जायते म्रियते इत्येतस्मात्कारणादित्यर्थः। अजादीत्यनेनाजो नित्यः शाश्वत इति व्याख्यातम्। शाश्वत इत्येतन्नित्य इत्यनेन गतार्थमित्यन्यथा व्याचष्टे—**शाश्वत इति**। तथा चाजोनित्य इत्याभ्यां बिंबोत्पत्तिनाशानिमित्तो शाश्वत इत्यनेनोपाधिबिंबसन्निधिजनननाशनिमित्तौ जन्मनाशौ न स्त इत्युक्तं भवति। तथाप्यज इत्युक्तत्वात्पुराण इति पुनरुक्तिरिति चेन्न। भूत्वा भविता वा नेत्युक्तम्। तत्कुतः किंनिमित्तश्च तर्हि जननव्यवहार इत्याशंक्य देहांतरप्राप्तिरस्यास्तीत्यनेनोच्यत इत्याह—**पुरमिति**। एवमपि न हन्यत इति पुनरुक्तिरिति चेन्न। यदि पुराणस्तर्हि उपाधिभूतदेहनाशाद्दर्पणनाशात्प्रतिबिंबनाशवदात्मनाशः स्यादित्याशंकात्र पूर्वाभिप्रायेण परिहियत इति भावः नाह—**तथापीति**। पुराणत्वेपि ॥ २० ॥

**रा० भा०**—उक्तैरेव हेतुभिर्नित्यत्वादपरिणामित्वादात्मनो जन्ममरणादयः सर्व एवाचेतनदेहधर्मा न सन्तीत्युच्यते। तत्र न जायते म्रियत इति वर्तमानतया सर्वेषु देहेषु सर्वैरनुभूयमाने जन्ममरणे कदाचिदप्यात्मानं न स्पृशतः। नायं भूत्वा भविता वा न भूयः अयं कल्पादौ भूत्वा भूयः कल्पान्ते च न भविता इति न। केषुचित्प्रजापतिप्रभृतिदेहेष्वागमेनोपलभ्यमानं कल्पादौ जननं कल्पान्ते च मरणमात्मानं न स्पृशतीत्यर्थः। अतः सर्वदेहगत आत्मा अजः अत एव नित्यः शाश्वतः प्रकृतिवदविशदसततपरिणामैरपि नान्वीयते। अतः पुराणः पुरातनोऽपि नवः सर्वदा अपूर्ववदनुभाव्य इत्यर्थः। अतः शरीरे हन्यमानेऽपि न हन्यतेऽयमात्मा ॥ २० ॥

**अ० टी०**—मारणादिसंभावना तु जन्मादिभावे सति भवति तदेव नास्तीत्याह—न जायतइति। जन्माभावो निरूपितः। न वा कदाचिन्म्रियते। अनेन मरणनिषेधो निरूपितः। अयं भूत्वा भूयः न भविता। अत्रायमर्थः। मत्क्रीडनार्थं सृष्टौ येन भावेन पूर्वं यथा विभावितः तथा तेनैव भावेन पुनर्न भविष्यति। तस्माद्यदर्थं मयोत्पादितस्तदेव मत्प्रीत्यर्थं कुर्यादन्यथा जन्मवैयर्थ्यं स्यात्। भूत्वेत्युक्तत्वात् जन्मशंका स्या-

तदर्थमाह—अजः न जायत इत्यर्थः मदंशत्वात्। एवंभूत एवायमित्याह—नित्य इति। किं च। शाश्वतः मयि स्थित एव निरंतरमेकभावात्मकः। किं च पुराणः सर्वदैवमेव मत्सेवार्थं दासरूपः पुराणोपि नव एवेत्यर्थः। यदर्थमेतदुक्तं तदाह—न हन्यत इति। हन्यमाने शरीरे गतोयं जीवस्तस्मिन्हते न हन्यते इत्यर्थः। अयमर्थः हन्यमाने अंतयुक्ते लौकिके देहे प्रविष्ट इत्यर्थः। हन्यमान इत्यनेन तदर्थसृष्टत्वं ज्ञापितम् तस्माद्भगवदिच्छानुरूपकरणान्नातिभ्रमजन्योपि दोषः स्यादिति भावः ॥ २० ॥

**नी० टी०**—नायं हंति न हन्यत इत्युक्तं तत्र न हन्यत इत्येतदुपपादयति तत्रस्थेनैव द्वितीयेन मंत्रेण—**न जायत इति**। अयं आत्मा कदाचित् न जायते अभिनवो नोत्पद्यते। न वा म्रियते निरन्वयो न नश्यति तार्किकाभिमतघटवत्। तत्र क्रमेण हेतुद्वयं अजो नित्य इति अजत्वान्न जायते नित्यत्वाच्च न वा म्रियत इत्यर्थः। अस्तु तर्हि क्षणिकविज्ञानधारारूपः तस्याविज्ञानवादिभिरजत्वनित्यत्वाभ्युपगमादित्याशंक्याह—**भूत्वा भविता वा न भूय इति**। अयमित्यनुवर्तते अयं भूत्वा भूयो भविता न भूयोऽसकृत् भूत्वा भवितेति भवनक्रियाद्वयस्य क्त्वाप्रत्ययोक्तं समानकर्तृत्वं धारैक्याभिप्रायेण भूत्वैव भविता न तु भूत्वा स्थित्वा विनश्यति। तार्किकाणां हि विज्ञानमुत्पत्तिस्थितिनाशक्षणव्यापित्वात्त्रिक्षणावस्थायि। विज्ञानवादिनां तु पूर्वस्य नाशक्षण एवोत्तरस्योत्पत्तिक्षणः स एव तस्य स्थितिक्षणश्चेति क्षणिकत्वाद्विज्ञानानां भवनक्रियाद्वयस्याव्यवधानाद्भूत्वा भवितेत्युक्तं। तादृशोऽप्ययं न यतः शाश्वतः शश्वदेकरूपः योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थाविरे प्रणप्तॄननुभवामीति बाल्यस्थाविरयोरात्मैक्यप्रत्यभिज्ञानात्। न च सादृश्यात्प्रत्यभिज्ञानं सादृश्यग्रहीतुः स्थिरस्याभावात्। यद्वा जन्ममरणहीनोऽपि धर्मांतरविशिष्टः पूर्वं भूत्वा पुनर्धर्मांतरविशिष्टो भविता इत्यपि न भूत्वैव भविता न त्वभूत्वेति योजना। आर्हता हि शरीरपरिमाणमात्मानमभ्युपगच्छंतो नित्यस्यैवात्मनः क्रमेण व्युत्क्रमेण वा मशकमनुजमतंगजशरीरप्राप्तौ परिमाणभेदं मन्यमाना भूतस्यैवात्मनो विशेषणीभूतपरिमाणाभवनादौपचारिकं भवनमभ्युपगच्छंति तदपि न शाश्वतत्वादेव उपचयापचयवतो मध्यमपरिमाणस्य वस्तुनो नित्यत्वायोगात्। अनेनैव सुखदुःखादिधर्मांतरोत्पत्त्याऽऽत्मनो भाक्तं भूत्वा भवनं प्रत्याख्येयं न हि दुःखादिधर्मिणः स्वनाशमंतरेणात्यंतिकदुःखोच्छेदः संभवति घटादौ यावद्रूपनाशादर्शनात्। नन्वजत्वं नित्यत्वं शाश्वतत्वं चाकाशेऽप्यस्ति अत आह—**पुराण इति**। पुरा वियदादिसृष्टेः प्रागपि नव एव एतेन अपक्षयादिधर्मराहित्यान्मुख्यमजत्वादिकं आत्मन एव वियदादेस्त्वमुख्यं तदिति दर्शितं। अत एव शरीरे हन्यमाने न हन्यते। भाष्ये तु 'वाशब्दश्चार्थे न जायते म्रियते चेत्यर्थः' तत्रोपपत्तिः। अयं न भूत्वा अनुत्पद्य न भविता घटादिवदतो न जायते। अथवा न यः पूर्वान्वयित्वं न जायते न वा म्रियत इति यतो भूत्वा अभविता घटवद्विनाशी न अतो न म्रियते इति। शाश्वतः पुराण इत्येताभ्यामुपचयापचयौ निषिध्येते इति न हन्यते न विपरिणम्यत इति च व्याख्यातं। केचिदेवमाहुः न जायते म्रियत इति प्रतिज्ञा। कदाचिदित्यादिना तस्या उपपादनं अज इत्यादिरुपसंहार इति ॥ २० ॥

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ॥**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥**

**शां० भा०**—य एनं वेत्ति हन्तारमित्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवतीति प्रतिज्ञाय 'न जायते' इत्यनेनाविक्रियत्वे हेतुमुक्त्वा प्रतिज्ञातार्थमुपसंहरति—वेदाविनाशिनमिति।

वेद विजानात्यविनाशिनमन्त्यभावविकाररहितं नित्यं विपरिणामरहितं यो वेदेति संबन्धः । एनं पूर्वेण मन्त्रेणोक्तलक्षणमजं जन्मरहितमव्ययमपक्षयरहितं कथं केन प्रकारेण स विद्वान्पुरुषोऽधिकृतो हन्ति हननक्रियां करोति । कथं वा घातयति हन्तारं प्रयोजयति । न कथंचित्कंचिद्धन्ति न कथंचित्कंचिद्घातयतीत्युभयत्राऽऽक्षेप एवार्थः प्रश्नार्थासंभवात् । हेत्वर्थस्य तुल्यत्वाद्विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवतः । हन्तेस्त्वाक्षेप उदाहरणार्थत्वेन । विदुषः कं कर्मासंभवे हेतुविशेषं पश्यन्कर्माण्याक्षिपति भगवान्—कथं स पुरुष इति ।

**शां० आ०**—पूर्वश्लोकार्थस्यैवोत्तरत्रापि प्रतिभानात्पौनरुक्त्यमाशङ्क्य वृत्तानुवादपूर्वकमुत्तरश्लोकमवतारयाति—**यएनमित्यादिना** । कर्तृत्वाद्यभिमानविरोधादद्वैतकूटस्थात्मनिश्चयसामर्थ्यात्प्राप्तं विदुषः संन्यासं विद्यापरिपाकार्थमभ्यनुजानाति—**वेदेति** । पदद्वयस्य पूर्वमेव पौनरुक्त्यपरिहारेऽपि प्रकारान्तरेणापौनरुक्त्यमाह—**अविनाशिनमित्यादिना** । प्रश्नेऽपि संभवति किमिति नञुल्लेखेन व्याख्यायते तत्राऽऽह—**उभयत्रेति** । उत्तरत्र प्रतिवचनादर्शनान्नात्र प्रश्नः संभवतीत्यर्थः । विवक्षितं प्रकरणार्थं निगमयति—**हेत्वर्थस्येति** । अविक्रियत्वं हेत्वर्थस्तस्य विदुषः सर्वकर्मनिषेधे समानत्वादिति यावत् । यदि विदुषः सर्वकर्मनिषेधोऽभिमतस्तर्हि किमिति हन्त्यर्थ एवाऽऽक्षिप्यते तत्राऽऽह—**हन्तेरिति** । उक्तं हेतुमाक्षेप्तुं पृच्छति—**विदुष इति** ।

**शां० भा०**—ननूक्त एवाऽऽत्मनोऽविक्रियत्वं सर्वकर्मासंभवकारणविशेषः, सत्यमुक्तो न तु स कारणविशेषोऽन्यत्वाद्विदुषोऽविक्रियादात्मन इति । न ह्यविक्रियं स्थाणुं विदितवतः कर्म न संभवतीति चेत्, न । विदुष आत्मत्वात् । न देहादिसंघातस्य विद्वत्ता । अतः पारिशेष्यादसंहत आत्मा विद्वानविक्रिय इति तस्य विदुषः कर्मासंभवादाक्षेपो युक्तः कथं स पुरुष इति । यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्याविक्रिय एव सन्बुद्धिवृत्त्यविवेकविज्ञानेनाविद्ययोपलब्धाऽऽत्मा कल्प्यते, एवमेवाऽऽत्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्ययाऽसत्यरूपयैव परमार्थतोऽविक्रिय एवाऽऽत्मा विद्वानुच्यते । विदुषः कर्मासंभववचनाद्यानि कर्माणि शास्त्रेण विधीयन्ते तान्यविदुषो विहितानीति भगवतो निश्चयोऽवगम्यते ।

**शां० आ०**—अभिप्रायमप्रतिपन्नमानो हेतुविशेषं पूर्वोक्तं स्मारयति—**नन्विति** । उक्तमङ्गीकृत्याऽऽक्षिपति—**सत्यमिति** । विदुषो विज्ञानात्मनो ब्रह्मणश्च वेद्यस्य विरुद्धधर्मत्वेन दहनतुहिनवद्भिन्नत्वाद्विदुषः सर्वकर्मत्यागे नासौ कारणविशेषः स्यादित्याह—**अन्यत्वादिति** । अविक्रियादिति च्छेदः । तथाऽपि कूटस्थमविक्रियं ब्रह्म प्रतिपद्यमानस्य कुतो विक्रिया संभवेद्ब्रह्मप्रतिपत्तिविरोधादित्याशङ्क्याऽऽह—**न हीति** । "अयमात्मा ब्रह्म" इत्यादिश्रुत्या समाधत्ते—**न विदुष इति** । किंच विद्वत्ता विशिष्टस्य वा, केवलस्य वा, नाऽऽद्यो विशिष्टस्य विद्वत्तायां विशेषणस्यापि तत्प्रसङ्गान्न च विशेषणीभूतसंघातस्याचेतनत्वाद्विद्वत्ता युक्तेत्याह—**न देहादीति** । द्वितीये तु जीवब्रह्मविभागासिद्धिरित्याह—**असंहत इति** । किंच प्रामाणिकविरुद्धधर्मवत्त्वस्यासिद्धत्वात्प्रातिभासिकस्य च बिम्बप्रतिबिम्बयोरनैकान्त्याद्भेदानुमानायोगाज्जीवब्रह्मणोरभेदसिद्धिरित्यभिप्रेत्य फलितमाह—**इति तस्येति** । नन्वविक्रियस्य ब्रह्मस्वरूपतया सर्वकर्मासंभवे विदुषो विद्वत्ताऽपि कथं संभवति न हि ब्रह्मणोऽविक्रियस्य विद्यालक्षणा विक्रिया स्वीक्रियामर्हति तत्राऽऽह—**यथेति** । अदृष्टेन्द्रियादिसहकृतमन्तःकरणं प्रदीपप्रभावद्विषयपर्यन्तं परिणतं बुद्धिवृत्तिरुच्यते । तत्र प्रतिबिम्बितं चैतन्यमभिव्यञ्जकबुद्धिवृत्त्यविवेकाद्विषयज्ञानमिति व्यवह्रियते । तेनाऽऽत्मोपलब्धा कल्प्यते । तच्चाविद्याप्रयुक्तमिथ्यासंबन्धनिबन्धनम् । तथैवाऽऽध्यासिकसंबन्धेन ब्रह्मात्मैक्याभिव्यञ्जकवाक्योत्थबुद्धिवृत्तिद्वारा विद्वानात्मा व्यपदिश्यते, न च मिथ्यासंबन्धेन पारमार्थिकाविक्रियत्वविहतिरस्तीत्यर्थः । अहं ब्रह्मेति बुद्धिवृत्तेर्मोक्षावस्थायामपि भावादात्मनः सविशेषत्वमाशङ्क्य तस्या यावदुपाधिसत्त्वमेवेत्याह—**असत्येति** । ननु कूटस्थस्याऽऽत्मनो मिथ्याविद्यावत्त्वेऽपि तस्य कर्माधिकारनिवृत्तौ कस्य कर्माणि विधीयन्ते न हि निरधिकाराणां तेषां विधिरित्याशङ्क्याऽऽह—**विदुष इति** ।

**शां० भा०**—ननु विद्याऽप्यविदुष एव विधीयते विदितविद्यस्य पिष्टपेषणवद्विद्याविधानानर्थक्यात् । तत्राविदुषः कर्माणि विधीयन्ते न विदुष इति विशेषो नोपपद्यते । न, अनुष्ठेयस्य भावाभावविशेषोपपत्तेः । अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालमग्निहोत्रादिकर्मानेकसाधनोपसंहारपूर्वकमनुष्ठेयं कर्ताऽहं मम कर्तव्यमित्येवंप्रकारविज्ञानवतोऽविदुषो यथाऽनुष्ठेयं भवति न तु तथा न जायत इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किंचिदनुष्ठेयं भवति । किंतु नाहं कर्ता न भोक्तेत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानादन्यन्नोत्पद्यत इत्येष विशेष उपपद्यते । यः पुनः कर्ताऽहमिति वेत्त्यात्मानं तस्य ममेदं कर्तव्यमित्यवश्यंभाविनी बुद्धिः स्यात्तदपेक्षया सोऽधिक्रियत इति तं प्रति कर्माणि स चाविद्वान्—'उभौ तौ न विजानीतः' इति वचनात् विशेषितस्य च विदुषः कर्माक्षेपवचनात्कथं स पुरुष इति । तस्माद्विशेषितस्याविक्रियात्मदर्शिनो विदुषो मुमुक्षोश्च सर्वकर्मसंन्यास एवाधिकारः । अत एव भगवान्नारायणः सांख्यान्विदुषोऽविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति—'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति । तथा च पुत्रायाऽऽह भगवान्व्यासः—'द्वाविमावथ पन्थानौ' इत्यादि ।

**शां० आ०**—कर्माण्यविदुषो विहितानीति विशेषमाक्षिपति—**नन्विति** । कर्मविधानमविदुषो विदुषश्च विद्याविधानमिति विभागे का हानिरित्याशङ्क्याऽऽह—**विदितेति** । विद्याया विदितत्वं लब्धत्वम् । कर्मविधिरविदुषो विदुषो विद्याविधिरिति विभागासंभवे फलितमाह—**तत्रेति** । धर्मज्ञानानन्तरमनुष्ठेयस्य भावाद्ब्रह्मज्ञानोत्तरकालं च तदभावाद्ब्रह्मज्ञानहीनस्यैव कर्मविधिरिति समाधत्ते—**नानुष्ठेयस्येति** । विशेषोपपत्तिमेव प्रपञ्चयति—**अग्निहोत्रादीति** । ननु देहादिव्यतिरिक्तात्मज्ञानं विना पारलौकिकेषु कर्मसु प्रवृत्तेरनुपपत्तेस्तथाविधज्ञानवता कर्मानुष्ठेयमिति चेत्तत्राऽऽह—**कर्ताऽहमिति** । आत्मनि कर्ता भोक्तेत्येवंविज्ञानवत्त्वेऽपि ब्रह्मज्ञानविहीनत्वेनाविदुषोऽनुष्ठेयं कर्मेत्यर्थः । देहादिव्यतिरेकज्ञानवद्ब्रह्मज्ञानमपि ज्ञानत्वाविशेषात्कर्मप्रवृत्तावुपकरिष्यतीत्याशङ्क्याऽऽह—**न त्विति** । अनुष्ठेयविरोधित्वादविक्रियात्मज्ञानस्येति शेषः । ननु ब्रह्मात्मैकत्वज्ञानादुत्तरकालमपि कर्ताऽहमित्यादिज्ञानोत्पत्तौ कर्मविधिः सावकाशः स्यादिति नेत्याह—**नाहमिति** । कारणाभावादिति शेषः । कर्तृत्वादिज्ञानमन्यदित्युक्तम् । अनुष्ठानाननुष्ठानयोरुक्तविशेषादविदुषोऽनुष्ठानं विदुषो नेत्युपसंहरति—**इत्येष इति** । नन्वात्मविदो न चेदनुष्ठेयं किंचिदस्ति कथं तर्हि विद्वान्यजेतेत्यादिशास्त्रात्तं प्रति कर्माणि विधीयन्ते तत्राऽऽह—**यः पुनरिति** । आत्मनि कर्तृत्वादिज्ञानापेक्षया कर्मस्वधिकृततत्वज्ञाने तथाविधं पुरुषं प्रति कर्माणि विधीयन्ते । स च प्राचीनवचनादविद्वानेवेति निश्चीयते । न खल्वकर्तृत्वादिज्ञानवतस्तद्विपरीतकर्तृत्वादिज्ञानद्वारा कर्मसु प्रवृत्तिरित्यर्थः । कर्मासंभवे ब्रह्मविदो हेत्वन्तरमाह—**विशेषितस्येति** । वेदाविनाशिनमित्यादिनेति शेषः । यद्यपि विदुषो नास्ति कर्म तथाऽपि विविदिषोः स्यादित्याशङ्क्याऽऽह—**तस्मादिति** । विद्यया विरुद्धत्वादिष्यमाणमोक्षप्रतिपक्षत्वाच्च कर्मणामित्यर्थः । यद्यपि मुमुक्षोराश्रमकर्माण्यपेक्षितानि तथाऽपि विद्यातत्फलाभ्यामविरुद्धान्येव तान्यभ्युपगतान्यन्यथा विविदिषासंन्यासविधिविरोधादित्यभिप्रेत्योक्तेऽर्थे भगवतोऽनुमतिमाह—**अत एवेति** । विदुषो विविदिषोश्च संन्यासेऽधिकारोऽविदुषस्तु कर्मणीति विभागस्येष्टत्वादित्यर्थः । अधिकारिभेदेन निष्ठाद्वयं भगवता वेदव्यासेनापि दर्शितमित्याह—**तथा चेति** । अध्ययनविधिना स्वाध्यायपाठे त्रैवर्णिकस्य प्रवृत्त्यनन्तरं तत्र क्रियामार्गो ज्ञानमार्गश्चेति द्वौ मार्गावधिकारिभेदेनाऽऽवेदितावित्यर्थः । आदिशब्दाद्यत्र वेदाः प्रतिष्ठिता इत्यादि गृह्यते ।

**शां० भा०**—तथा च क्रियापथश्चैव पुरस्तात्पश्चात्संन्यासश्चेति । एतमेव विभागं पुनः पुनर्दर्शयिष्यति भगवान् । अतत्त्वविदहंकारविमूढात्मा कर्ताऽहमिति मन्यते, तत्त्ववित्तु, नाहं करोमीति । तथा च सर्वकर्माणि मनसा संन्यस्याऽऽस्त इत्यादि ।

**शां० आ०**—उक्तयोर्मार्गयोस्तुल्यतां परिहर्तुमुदाहरणान्तरमाह—**तथेति** । बुद्धिशुद्धिद्वारा कर्मतत्फलयोर्वैराग्योदयात्पूर्वं कर्ममार्गो विहितो विरक्तस्य पुनः संन्यासपूर्वको ज्ञानमार्गो दर्शितः । स चेतरस्मादतिशयशालीति श्रुतमित्यर्थः । उक्ते विभागे पुनरपि वाक्यशेषानुकूल्यमादर्शयति—**एतमेवेति** । अहंकारविमूढात्मेत्यस्य व्याख्यानम्—**अतत्त्वविदिति** । तत्त्ववित्त्विति

श्लोकमवतार्य तात्पर्यार्थं संगृह्णाति—**नाहमिति** । पूर्वेण क्रियापदेनेतिशब्दः संबध्यते । विरक्तमधिकृत्य वाक्यान्तरं पठति—**तथा चेति** । आदिशब्दस्तस्यैव श्लोकस्य शेषसंग्रहार्थः ।

**शां० भा०**—तत्र केचित्पण्डितंमन्या वदन्ति जन्मादिषड्भावविक्रियारहितोऽविक्रियोऽकर्तैकोऽहमात्मेति न कस्यचिज्ज्ञानमुत्पद्यते यस्मिन्सति सर्वकर्मसंन्यास उपदिश्यते । न, न जायत इत्यादिशास्त्रोपदेशानर्थक्यात् । यथा च शास्त्रोपदेशसामर्थ्याद्धर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसंबन्धिज्ञानं चोत्पद्यते, तथा शास्त्रात्तस्यैवाऽऽत्मनोऽविक्रियत्वाकर्तृत्वैकत्वादिविज्ञानं कस्मान्नोत्पद्यत इति प्रष्टव्यास्ते । करणागोचरत्वादिति चेन्न, मनसैवानुद्रष्टव्यमिति श्रुतेः । शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करणम् । तथा च तदधिगमायानुमान आगमे च सति ज्ञानं नोत्पद्यत इति साहसमेतत् । ज्ञानं चोत्पद्यमानं तद्विपरीतमज्ञानमवश्यं बाधत इत्यभ्युपगन्तव्यम् । तच्चाज्ञानं दर्शितं हन्ताऽहं हतोऽस्मीत्युभौ तौ न विजानीत इति । अत्र चाऽऽत्मनो हननक्रियायाः कर्तृत्वं कर्मत्वं हेतुकर्तृत्वं चाज्ञानकृतं दर्शितम् ।

**शां० आ०**—अविक्रियात्मज्ञानात्कर्मसंन्यासे दर्शिते मीमांसकमतमुत्थापयति—**तत्रेति** । आत्मनो ज्ञानक्रियाशक्त्याधारत्वेनाविक्रियत्वाभावादविक्रियात्मज्ञानं संन्यासकारणीभूतं न संभवतीत्यर्थः । यथोक्तज्ञानाभावो विषयाभावाद्वा मानाभावाद्वेति विकल्प्याऽऽद्यं दूषयति—**नेत्यादिना** । न तावदविक्रियात्माभावो न जायते म्रियते वेत्यादिशास्त्रस्याऽऽप्तवाक्यतया प्रमाणस्यान्तरेण कारणमानर्थक्यायोगादित्यर्थः । द्वितीयं प्रत्याह—**यथा चेति** । पारलौकिककर्मविधिसामर्थ्यसिद्धं विज्ञानमुदाहरति—**कर्तुश्चेति** । कर्मकाण्डादज्ञाते धर्मादौ विज्ञानोत्पत्तिवज्ज्ञानकाण्डादज्ञाते ब्रह्मात्मनि विज्ञानोत्पत्तिरविरुद्धा प्रमाणत्वाविशेषादित्यर्थः । ज्ञानस्य मनःसंयोगजन्यत्वादात्मनश्च श्रुत्या मनोगोचरत्वनिरासान्नाऽऽत्मज्ञाने साधनमस्तीति शङ्कते—**करणेति** । श्रुतिमाश्रित्य परिहरति—**न मनसेति** । तत्त्वमस्यादिवाक्योत्थमनोवृत्त्यैव शास्त्राचार्योपदेशमनुसृत्य द्रष्टव्यं तत्त्वमिति श्रूयते स्वरूपेण स्वप्रकाशमपि ब्रह्मात्मवस्तु वाक्योत्थबुद्धिवृत्त्यभिव्यक्तं सविकल्पकव्यवहारालम्बनं भवतीति मनोगोचरत्वोपचारादसिद्धं करणागोचरत्वमित्यर्थः । कथं तर्हि ब्रह्मात्मनो मनोविषयत्वनिषेधश्रुतिरित्याशङ्क्यासंस्कृतमनोवृत्त्यविषयत्वविषया सेति मन्वानः सन्नाह—**शास्त्रेति** । सत्यपि श्रुत्यादौ तदनुग्राहकाभावान्नास्माकमविक्रियात्मज्ञानमुत्पत्तुमर्हतीत्याशङ्क्याऽऽह—**तथेति** । तस्याविक्रियस्याऽऽत्मनोऽधिगत्यर्थं, विमतो विकारो नाऽऽत्मधर्मो विकारत्वादुभयाभिमतविकारवदित्यनुमाने पूर्वोक्तश्रुतिस्मृतिरूपागमे च सत्येव तस्मिन्नोत्पद्यते ज्ञानमिति वचः साहसमात्रं, सत्येव माने मेयं न भातीतिवदित्यर्थः । ननु यथोक्तं ज्ञानमुत्पन्नमपि हानायोपादानाय वा न भवतीति कुतोऽस्य फलवत्त्वं तत्राऽऽह—**ज्ञानं चेति** । **अवश्यमिति** । प्रकाशप्रवृत्तेस्तमोनिवृत्तिव्यतिरेकेणानुपपत्तिवदात्माज्ञाननिवृत्तिमन्तरेणाऽऽत्मज्ञानोत्पत्तेरनुपपत्तेरित्यर्थः । नन्वज्ञानस्य ज्ञानप्रागभावत्वात्तन्निवृत्तिरेव ज्ञानं न तु तन्निवर्तकमिति कथं पुनर्भगवताऽपि ज्ञानाभावातिरिक्तमज्ञानं दर्शितमित्याशङ्क्याऽऽह—**अत्र चेति** । विमतं ज्ञानाभावो न भवत्युपादानत्वान्मृदादिवदिति भावः ।

**शां० भा०**—तच्च सर्वक्रियास्वपि समानं कर्तृत्वादेरविद्याकृतत्वमविक्रियत्वादात्मनः । विक्रियावान्हि कर्ताऽऽत्मनः कर्मभूतमन्यं प्रयोजयति—कुर्विति । तदेतदविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान्विदुषः कर्माधिकाराभावप्रदर्शनार्थं वेदाविनाशिनं कथं स पुरुष इत्यादिना । क्व पुनर्विदुषोऽधिकार इत्येतदुक्तं पूर्वमेव ज्ञानयोगेन सांख्यानामिति । तथा च सर्वकर्मसंन्यासं वक्ष्यति सर्वकर्माणि मनसेत्यादिना ।

**शां० आ०**—ननु हननक्रियाया न हिंस्यादिति निषिद्धत्वात्तत्कर्तृत्वादेरज्ञानकृतत्वेऽपि विहितक्रियाकर्तृत्वादेर्न तथात्वमिति नेत्याह—**तच्चेति** । न तावदात्मनि कर्तृत्वादि नित्यमसुक्तिप्रसङ्गान्न चानित्यमपि निरुपादानं भावकार्यस्योपादाननियमान्न चानात्मा तदुपादानमात्मनि तत्प्रतिभानान्न चाऽऽत्मैव तदुपादानं कूटस्थस्य तस्याविद्यां विना तदयोगादित्याह—**अविक्रियत्वादिति** । कर्तृत्वाभावेऽपि कारयितृत्वं स्यादित्याशङ्क्याऽऽह—**विक्रियावानिति** । आत्मनि कर्तृत्वादिप्रतिभानस्यानाद्यनिर्वाच्यम-

ज्ञानमुपादानं तन्निवृत्तिश्च तत्त्वज्ञानादित्युक्तम्, इदानीं कर्तृत्वकारयितृत्वयोरविद्याकृतत्वे भगवतोऽनुमतिं दर्शयति—**तदेतदिति** । विदुषो यदि कर्माधिकाराभावो भगवतोऽभिमतस्तर्हि कुत्र तस्य जीवतोऽधिकारः स्यादिति पृच्छति—**क्व पुनरिति**। ज्ञाननिष्ठायामित्युक्तं स्मारयाति—**उक्तमिति** । तदङ्गभूते सर्वकर्मसंन्यासे च तस्याधिकारोऽस्तीत्याह—**तथेति** ।

**शां० भा०—ननु मनसेति वचनान्न वाचिकानां कायिकानां च संन्यास इति चेन्न, सर्वकर्माणीति विशेषितत्वात् । मानसानामेव सर्वकर्मणामिति चेन्न, मनोव्यापारपूर्वकत्वाद्वाक्कायव्यापाराणां मनोव्यापाराभावे तदनुपपत्तेः । शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि वर्जयित्वाऽन्यानि सर्वकर्माणि मनसा संन्यसेदिति चेन्न, नैव कुर्वन्न कारयन्निति विशेषणात् । सर्वकर्मसंन्यासोऽयं भगवतोक्तो मरिष्यतो न जीवत इति चेन्न, नवद्वारे पुरे देह्यास्त इतिविशेषणानुपपत्तेः ।**

**शां० आ०**—वक्ष्यमाणे वाक्ये सर्वकर्मसंन्यासो न प्रतिभाति मानसानामेव कर्मणां विशेषणवशात्त्यागावगमादिति शङ्कते—**नन्विति** । विशेषणान्तरमाश्रित्य दूषयति—**न सर्वेति** । मनसेतिविशेषणान्मानसेष्वेव कर्मसु सर्वशब्दः संकुचितः स्यादिति शङ्कते—**मानसानामिति** । सर्वात्मना मनोव्यापारत्यागे व्यापारान्तराणामनुपपत्तेः सर्वकर्मसंन्यासः सिध्यतीति परिहरति—**नेत्यादिना** । मानसेष्वपि कर्मसु संन्यासे संकोचात्र वागादिव्यापारानुपपत्तिरिति शङ्कते—**शास्त्रीयाणामिति** । **अन्यानीति** । अशास्त्रीयवाक्कायकर्मकारणान्यशास्त्रीयाणि मानसानि तानि च सर्वाणि कर्माणीत्यर्थः । वाक्यशेषमादाय दूषयति—**न नैवेति** । न हि विवेकबुद्ध्या सर्वाणि कर्माण्यशास्त्रीयाणि संन्यस्य तिष्ठतीति युक्तं नैव कुर्वन्नित्यादिविशेषणस्य विवेकबुद्धेश्च त्यागहेतोस्तुल्यत्वादित्यर्थः । भगवदभिमतसर्वकर्मसंन्यासस्यावस्थाविशेषे संकोचं दर्शयन्नाशङ्कते—**मरिष्यत इति** । संन्यासो जीवदवस्थायामेवात्र विवक्षित इत्यत्र लिङ्गं दर्शयन्नुत्तरमाह—**न नवेति** ।

**शां० भा०—न हि सर्वकर्मसंन्यासेन मृतस्य तद्देह आसनं संभवति । अकुर्वतोऽकारयतश्च देहे संन्यस्येति संबन्धो न देह आस्त इति चेन्न, सर्वत्राऽऽत्मनोऽविक्रियत्वावधारणात् । आसनक्रियायाश्चाधिकरणापेक्षत्वात्तदनपेक्षत्वाच्च संन्यासस्य । संपूर्वस्तु न्यासशब्दस्त्यागार्थो न निक्षेपार्थः । तस्माद्गीताशास्त्र आत्मज्ञानवतः संन्यास एवाधिकारो न कर्मणीति तत्र तत्रोपरिष्टादात्मज्ञानप्रकरणे दर्शयिष्यामः ॥ २१ ॥**

**शां० आ०**—अनुपपत्तिमेव स्फोरयति—**न हीति** । अन्वयविशेषान्वाख्यानेन लिङ्गासिद्धिं चोदयति—**अकुर्वत इति** । विवेकवशादशेषाण्यपि कर्माणि देहे यथोक्ते निक्षिप्याकुर्वन्नकारयंश्च विद्वानवतिष्ठते । तथा च देहे कर्माणि संन्यस्याकुर्वतोऽकारयतश्च सुखमासनमितिसंबन्धसंभवाद्विशेषणस्य सति देहे कर्मत्यागविषयत्वाभावाज्जीवतः सर्वकर्मत्यागो नास्तीत्यर्थः । अथवाऽकुर्वत इत्यादि पूर्ववत्रैव संबन्धनीयं, लिङ्गासिद्धिचोद्यं तु देहे संन्यस्येत्यारभ्येत्युन्नेयम् । आत्मनः सर्वत्राविक्रियत्वनिर्धारणाद्देहसंबन्धमन्तरेण कर्तृत्वकारयितृत्वाप्राप्तेरप्राप्तप्रतिषेधप्रसङ्गपरिहारार्थमस्मदुक्त एव संबन्धः साधीयानिति समाधत्ते—**न सर्वत्रेति**। श्रुतिषु स्मृतिषु चेत्यर्थः । किंच संबन्धस्याऽऽकाङ्क्षासंनिधियोग्यताधीनत्वादाकाङ्क्षावशादस्मदभिमतसंबन्धसिद्धिरित्याह—**आसनेति** । भवदिष्टस्तु संबन्धो न सिध्यत्याकाङ्क्षाभावादित्याह—**तदनपेक्षत्वाच्चेति** । संन्यासशब्दस्य निक्षेपार्थत्वात्तस्य चाधिकरणसापेक्षत्वादस्मदिष्टसंबन्धसिद्धिरित्याशङ्क्याऽऽह—**संपूर्वस्त्विति** । अन्यथोपसर्गवैयर्थ्यादित्यर्थः । मनसा विवेकविज्ञानेन सर्वाणि कर्माणि परित्यज्याऽऽस्ते देहे विद्वानित्यस्यैव संबन्धस्य साधुत्वं मत्वोपसंहरति—**तस्मादिति** । सर्वव्यापारोपरमात्मनः संन्यासस्याविक्रियात्मज्ञानाविरोधित्वात्प्रयोजकज्ञानवतो वैधे संन्यासेऽधिकारः सम्यग्ज्ञानवतस्त्ववैधे स्वाभाविके फलात्मनीति विभागमभ्युपेत्योक्तेऽर्थे वाक्यशेषानुगुण्यं दर्शयति—**इति तत्र तत्रेति** ॥ २१ ॥

**आ० भा०—अतो य एवं वेद स कथं घातयति हंति वा । अविनाशिनं नैमित्तिकविनाशरहितम् । नित्यं स्वाभाविकनाशरहितम् । अथवाऽविनाशिनं दोषयोगरहितम् । नित्यं सदाभाविनमिति सर्वत्र विवेकः । दोषयुक्तपुरुषादिषु नष्टशब्दप्रयोगात् ॥ २१ ॥**

**आ० ज०—वेदाविनाशिनमिति** । पुनरात्मनोऽविनाशित्वादिकं किमर्थमुच्यत इत्यतोऽस्य तात्पर्यमाह—**अत इति** । उक्तैः प्रमाणैरेवमविनाशित्वादिरूपं कं घातयति हंति वेत्येवं भावं करोतीत्यर्थः । जीवस्यानित्यत्वादिकं मन्यमानो न जानाती-

त्युक्तम् । इदानीं तु ज्ञानी नैवं मन्यत इत्युच्यतइति। अविनाशिनं नित्यमिति पुनरुक्तिमाशंक्य द्वेधार्थभेदमाह—**अविनाशिनमिति** । नैमित्तिको बिंबनाशादिनिमित्तकः स्वाभाविकः कालकृतः । दोषयोगरहितमित्यनेन मात्रास्पर्शा इत्यत्र यदुक्तमाभिमानिकमेवात्मनोदुःखादिकं न तु स्वगतमिति तस्यानुवादः क्रियते एवंव्याख्यानप्रकारमन्यत्राप्यतिदिशति—**इतीति** । विवेकः शब्दार्थयोः । अविनाशिनं दोषयोगरहितामिति कुतो लभ्यमित्यत आह—**दोषेति** । अनेकार्थत्वाद्धातूनामिति भावः ॥ २१ ॥

**रा० भा०—एवमविनाशित्वेनाजत्वेन व्ययानर्हत्वेन च नित्यमेनमात्मानं यः पुरुषो वेद स पुरुषो देवमनुष्यतिर्यक्स्थावरशरीरावस्थितेष्वात्मसु कमप्यात्मानं कथं घातयति कं वा कथं हन्ति कथं नाशयति कथं वा तत्प्रयोजको भवतीत्यर्थः । एतानात्मनो घातयामि हन्मीत्यनुशोचनमात्मस्वरूपयाथात्म्याज्ञानमूलमेवेत्याभिप्रायः ॥ २१ ॥**

अ० टी०—किं च अस्य मारणादिदोषबुद्धावज्ञानमेव कारणमित्याह—**वेदाविनाशिनमिति** । अविनाशिनं विशेषविकाररहितं नित्यं सदैकरूपमजं जन्मादिरहितं मयैव लीलार्थं तथाकृतम् अव्ययं नाशादिशून्यं यः एवं वेद स पुरुषः कथं केन साधनेन कं स्वयं प्रेरको भूत्वाऽन्येन घातयति न कमपीत्यर्थः । स्वयं च कं हंति न कंचिदित्यर्थः ॥ २१ ॥

नी० टी०—नायं हंतीत्येतदुपपादयति—**वेदेति** । विनष्टुं अदर्शनं गंतुं शीलमस्येति विनाशि रज्जूरगतुल्यमुपाधित्रयं स्थूलसूक्ष्मकारणशरीराख्यं ततोऽन्यं अविनाशिनं अत एव नित्यं नाशहीनं तत्र हेतुः अजं जन्मवान् हि अनित्यः अयं तु अजत्वान्नित्यश्चेत्यर्थः । ननु विनाशिनः स्वकार्यापेक्षया अन्यत्वमजत्वं नित्यत्वं च सांख्याभिमते प्रधाने तार्किकाभिमते नभसि चास्ति अत उक्तं—**अव्ययमिति**। न व्येति पूर्वावस्थां त्यजतीत्यव्ययमपरिणामि प्रधानं तु चलं गुणवृत्तमितिन्यायेन गुणसाम्यावस्थायामपि परिणममाणमेव सर्वदास्तीति तेषामभ्युपगमात् । आकाशस्यापि "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति उत्पत्तिश्रवणादजत्वाभावादेव नाव्ययत्वं तादृशं आत्मानं यो वेद अपरोक्षीकरोति स पुमान् कथं केन प्रकारेण कमन्यं घातयति हननक्रियायां प्रवर्त्तयति कं वा हंति न केनचित्प्रकारेण कमपि घातयति न वा हंतीत्यर्थः। द्वैताभावात् तथाहि श्रुतिर्विद्यावस्थायां सर्वकारकव्यापारं निषेधति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादि अविद्यावस्थायामेव च सर्वकारकव्यवहारं दर्शयति । यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यादि एतेन सर्वकारकोपमर्दिन्या विद्यायाः सर्वकारकसापेक्षैः कर्मभिः सह समुच्चयो निरस्तः परस्परविरुद्धस्वभावत्वेन शीतोष्णयोरिव द्वयोरेककार्यकारित्वस्य रथाश्वन्यायेनासंभवादित्यन्यत्र विस्तरः । मादृशानां ज्ञानिनां व्युत्थानकाले अविद्यालेशानुवृत्त्या घातयितृत्वादेः प्रसक्तावपि विद्यया तस्य बाधितत्वादागामिकर्मणामश्लेषाच्च न दोषः तथा च वक्ष्यते । 'हत्वाऽपि स इमाँल्लोकान्न हंति न निबध्यते' इति ॥ २१ ॥

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ॥**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥**

**शां० भा०—प्रकृतं वक्ष्यामः, तत्राऽऽत्मनोऽविनाशित्वं प्रतिज्ञातं तत्किमिवेत्युच्यते—वासांसीति । वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके विहाय परित्यज्य नवान्यभिनवानि गृह्णात्युपादत्ते नरः पुरुषोऽपराण्यन्यानि तथा तद्वदेव शरीराणि विहाय जीर्णान्यन्यानि संयाति संगच्छति नवानि देहात्मा पुरुषवदविक्रिय एवेत्यर्थः ॥ २२ ॥**

शां० आ०—आत्मनोऽविक्रियत्वेन कर्मासंभवं प्रतिपाद्याविक्रियत्वेहेतुसमर्थनार्थमेवोत्तरग्रन्थमवतारयति—**प्रकृतं त्विति**। किं तत्प्रकृतमिति शङ्कमानं प्रत्याह—**तत्रेति**। अविनाशित्वमित्युपलक्षणमविक्रियत्वमित्यर्थः। तदेव दृष्टान्तेन स्पष्टयितुमुत्तरश्लोकमुत्थापयति—**तदित्यादिना**। आत्मनः स्वतो विक्रियाभावेऽपि पुरातनदेहत्यागे नूतनदेहोपादाने च विक्रियावत्त्वध्रौव्यादविक्रियत्वमसिद्धमिति चेत्तत्राऽऽह—**वासांसीति**। शरीराणि जीर्णानि वयोहानिं गतानि वलीपलितासंगतानीत्यर्थः। वाससां पुरातनानां परित्यागे नवानां चोपादाने त्यागोपादानकर्तृभूतलौकिकपुरुषस्याप्यविकारित्वेनैकरूपत्ववदात्मनो देहत्यागोपादानयोरविरुद्धमविक्रियत्वमिति। वाक्यार्थमाह—**पुरुषवदिति**॥ २२॥

**आ० भा०—देहात्मविवेकानुभवार्थं दृष्टांतमाह—वासांसीति॥ २२॥**

आ० ज०—देहानामुपगमापगमयोरप्येक एवायमात्मेत्येतद्देहिनोऽस्मिन्नित्यत्रैव सदृष्टांतमुक्तमतो वासांसीति व्यर्थोयं श्लोक इत्यत आह—**देहेति**। कौमारादिदेहानामनतिभिन्नत्वान्न तेन देहात्मनोर्विवेको विनाशित्वाविनाशित्वलक्षणः स्पष्टमनुभवारूढो भवतीति भावः। दृष्टांतं पूर्वोक्ताद्विलक्षणमिति शेषः। दृष्टांतमित्युपलक्षणं दार्ष्टांतिकस्यापि कथितत्वात्॥ २२॥

**रा० भा०—यद्यपि नित्यानामात्मनां शरीरविश्लेषमात्रं क्रियते तथापि रमणीयभोगसाधनेषु शरीरेषु नश्यत्सु तद्वियोगरूपं शोकनिमित्तमस्त्येवेत्यत आह—धर्मयुद्धे शरीरं त्यजतां त्यक्तशरीरादधिकतरकल्याणशरीरग्रहणं शास्त्रादवगम्यत इति। जीर्णानि वासांसि विहाय नवानि कल्याणानि वासांसि गृह्णतामिव हर्षनिमित्तमेवात्रोपलभ्यते॥ २२॥**

अ० टी०—ननु भगवत्क्रीडार्थं सृष्टदेहादीनां मारणमपि दोषरूपमतः शोचामीति चेत्तत्राह—**वासांसीति**। यथा जीर्णानि कार्यानुपयुक्तानि वासांसि विहाय नवानि कार्योपयोगीनि अपराणि पूर्वविलक्षणानि नरो गृह्णाति तथा जीर्णानि मत्क्रीडानुपयुक्तानि शरीराणि विहाय नवानि अन्यानि मत्क्रीडार्थं विलक्षणरसोत्पादकानि देही संयाति मदिच्छया प्राप्नोतीत्यर्थः॥ २२॥

नी० टी०—ननु "ब्राह्मणो यजेत, जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इति आत्मानं वयोवर्णादिविशेषणवंतमेवाधिकृत्य कर्मविधयः प्रवर्त्तन्ते तेन नीलादुत्पलमिव देहादन्य आत्माऽवधारयितुं न शक्यत इत्याशंक्याह—**वासांसीति**। दंडी प्रैषानन्वाहेति दंडस्य विशेषणत्वेऽपि न प्रैषानुवक्तृस्वरूपांतर्गतत्वं एवं ब्राह्मणत्वादेरपि न स्वर्गकामस्वरूपांतर्गतत्वमिति वस्त्रदेवदत्तयोरिव जडाजडयोर्देहात्मनोरत्यंतविलक्षणत्वमस्तीति वस्त्रनाशेन देवदत्तनाशं मन्वानस्येव तव देहनाशादात्मनाशं मन्वानस्यात्यंतमौढ्यं स्पष्टमिति भावः। स्पष्टार्थश्च श्लोकः॥ २२॥

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः॥**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥ २३॥**

**शां० भा०—कस्मादविक्रिय एवेति आह—नैनं छिन्दन्तीति। एनं प्रकृतं देहिनं न छिन्दन्ति शस्त्राणि निरवयवत्वान्नावयवविभागं कुर्वन्ति शस्त्राण्यस्यादीनि। तथा नैनं दहति पावकोऽग्निरपि न भस्मी करोति। तथा नैनं क्लेदयन्त्यापः। अपां हि सावयवस्य वस्तुन आर्द्रीभावकरणेनावयवविश्लेषापादने सामर्थ्यं तन्न निरवयव आत्मनि संभवति। तथा स्नेहवद्द्रव्यं स्नेहशोषणेन नाशयति वायुरेनं स्वात्मानं न शोषयति मारुतोऽपि॥ २३॥**

शां० आ०—पृथिव्यादिभूतचतुष्टयप्रयुक्तविक्रियाभाक्त्वादात्मनोऽसिद्धमविक्रियत्वमिति शङ्कते—**कस्मादिति**। यतो न भूतान्यात्मानं गोचरयितुमर्हन्त्यतो युक्तमाकाशवत्तस्याविक्रियत्वमित्याह—**आहेत्यादिना**॥ २३॥

**आ० भा०—स्वतः प्रायो निमित्तैश्चाविनाशिनोपि केनचिन्निमित्तविशेषेण स्यात्ककच्छेदादिवत् इत्यतो विशेषनिमित्तानि निषेधति—नैनमिति ॥ २३ ॥**

**आ० ज०**—नैमित्तिकनाशस्य प्राङ्निरस्तत्वात्किं नैनमिति श्लोकेनेत्यतस्तन्निवर्त्यशंकाप्रदर्शनपूर्वकं तात्पर्यमाह—**स्वत इति**। स्वतः कालतः प्रायो बाहुल्येन शंक्यमाननिमित्तव्यावृत्त्यर्थमेतदव्ययम् । केनचिच्छस्त्रादिना स्याद्विनाश इतिशेषः। असंभावितशंकया न पर्यवसानमित्यतो दृष्टांतमाह—**ककच्छेदादिवदिति** । यथा दक्षस्य प्रजापतेः शिरश्छेदो न स्वतो जातो नापि वीरभद्रस्यायुधेन निमित्तेन किं तु यज्ञपशुभावनाख्येन निमित्तविशेषेण तथेत्यर्थः । इत्यत एवं शंकितत्वात्। विशिष्यंत इति विशेषाः । विशिष्टनिमित्तानि विनाशस्य ॥ २३ ॥

**रा० भा०**—पुनरपि 'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।' इति पूर्वोक्तमविनाशित्वं सुखग्रहणाय व्यञ्जयन् द्रढयति। शस्त्राग्न्यम्बुवायवश्छेदनदहनक्लेदनशोषणान्यात्मानं प्रतिकर्तुं न शक्नुवन्ति। सर्वगतत्वादात्मनः सर्वतत्त्वव्यापकस्वभावतया सर्वेभ्यस्तत्त्वेभ्यः सूक्ष्मत्वादस्य तैर्व्याप्त्यनर्हत्वाद्व्याप्यकर्तव्यत्वाच्च छेदनदहनक्लेदनशोषणानाम् ॥ २३ ॥

**अ० टी०**—तस्मात्त्याज्यदेहस्य दूरीकरणेप्येनमविनाशादिधर्मयुक्तत्वात् शस्त्रादयो न च्छिदंतीत्याह—**नैनं छिदंतीति**। एनं शस्त्राणि न च्छिदंति घनाभावात्। एवं पावकः न दहति शुष्कधर्माभावात्। आप एनं न क्लेदयंति मृदुत्वान्न शिथिलयंति काठिन्यादिराहित्यात्। मारुतः न शोषयति द्रवाभावादित्यर्थः। तस्मात् शस्त्रादिप्रक्षेपेप्यस्य न किमपि भविष्यति इदमपि मत्क्रीडारूपमतोमत्संतोषार्थं युद्धादिकं कर्त्तव्यमितिभावः । एतेषां सर्वेषां तथाकरणे मदिच्छैव हेतुरितिभावः । यतो भगवदिच्छैव सर्वेषां स्वधर्मकरणे शक्तिः। अत एव श्रीभागवते उक्तम् । 'मद्भयाद्वाति वातोयम्' इत्यादि ॥ २३ ॥

**नी० टी०**—कीदृशोऽसौ देहीत्यत आह—**नैनमिति**। एनं शस्त्राणि न च्छिदंति न द्वेधाकुर्वंति अस्थूलत्वात्। तर्हि पार्थिवपरमाणुवत्पाकजरूपाद्याश्रयो भविष्यति इत्याशंक्याह—**नैनं दहति पावक इति**। अनणुत्वात्। आपश्चैनं न क्लेदयंति अस्पर्शत्वात्। स्पर्शवद्धि द्रव्यमद्भिरार्द्रीकर्त्तव्यं न त्वस्पर्शं। न शोषयति मारुतः अस्नेहत्वात्। एतेन अदीर्घमस्थूलमनणु अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगंधवच्च यदिति श्रुतिप्रसिद्धानामदीर्घत्वाशब्दत्वादीनामपि संग्रहो ज्ञेयः ॥ २३ ॥

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ॥**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

**शां० भा०**—यत एवं तस्मात्—अच्छेद्योऽयमिति। यस्मादन्योन्यनाशहेतूनि भूतान्येनमात्मानं नाशयितुं नोत्सहन्ते तस्मान्नित्यो नित्यत्वात्सर्वगतः सर्वगतत्वात्स्थाणुः स्थाणुरिव स्थिर इत्येतत् । स्थिरत्वादचलोऽयमात्माऽतः सनातनश्चिरंतनो न कारणात्कुतश्चिन्निष्पन्नोऽभिनव इत्यर्थः। नैतेषां श्लोकानां पौनरुक्त्यं चोदनीयम्। यत एकेनैव श्लोकेनाऽऽत्मनो नित्यत्वमविक्रियत्वं चोक्तं' न जायते म्रियते वा ' इत्यादिना। तत्र यदेवाऽऽत्मविषयं किंचिदुच्यते तदेतस्माच्छ्लोकार्थान्नातिरिच्यते किंचिच्छब्दतः पुनरुक्तं किंचिदर्थत इति। दुर्बोधत्वादात्मवस्तुनः पुनः पुनः तत्त्वं बुद्धिगोचरतामापन्नं सत्संसारनिवृत्तये स्यादिति ॥ २४ ॥

**शां० आ०**—पृथिव्यादिभूतप्रयुक्तच्छेदनाद्यर्थक्रियाभावे योग्यताभावं कारणमाह—**यत इति** । पूर्वार्धमुत्तरार्धे हेतुत्वेन योजयति—**यस्मादिति** । नित्यत्वादीनामन्योन्यं हेतुहेतुमद्भावं सूचयति—**नित्यत्वादित्यादिना** । न च नित्यत्वं परमाणुषु व्यभिचारादसाधकं सर्वगतत्वस्येति वाच्यं तेषामेवाप्रामाणिकत्वेन व्यभिचारानवताराच्च च सर्वगतत्वेऽपि विक्रियाशक्तिमत्त्वमात्मनोऽस्तीति युक्तं विभुत्वेनाभिमते नभसि तदनुपलम्भान्न च विक्रियाशक्तिमत्त्वे स्थैर्यमास्थातुं शक्यं तथाविधस्य मृदादेरस्थिरत्वदर्शनादित्याशयेनाऽऽह—**स्थिरत्वादिति** । स्वतो नित्यत्वेऽपि कारणान्नाशसंभवादुत्पत्तिरपि संभावितेति कुतश्चिरंतनत्वमित्याशङ्क्याऽऽह—**न कारणादिति** । आत्मनोऽविक्रियत्वस्य न जायते म्रियते वेत्यादिना साधितत्वात्तस्यैव पुनः पुनरभिधाने पुनरुक्तिरित्याशङ्क्याऽऽह—**नैतेषामिति** । अनाशङ्कनीयस्य चोद्यस्य प्रसङ्गं दर्शयति—**यत इति** । अतो वेदाविनाशिनामित्यादौ शङ्क्यते पौनरुक्त्यमिति शेषः । कथं तत्र पौनरुक्त्याशङ्का समुन्मिषति तत्राऽऽह—**तत्रेति** । वेदाविनाशिनमित्यादिश्लोकः सप्तम्या परामृश्यते । श्लोकशब्देन न जायते म्रियते वेत्यादिरुच्यते । नन्विह श्लोके जन्ममरणाद्यभावोऽभिलक्ष्यते, वेदेत्यादौ पुनरपक्षयाद्यभावो विवक्ष्यते तत्र कथमर्थातिरेकाभावमादाय पौनरुक्त्यं चोद्यते तत्राऽऽह—**किंचिदिति** । कथं तर्हि पौनरुक्त्यं न चोदनीयमिति मन्यसे तत्राऽऽह—**दुर्बोधत्वादिति** । पुनः पुनर्विधानभेदेन वस्तु निरूपयतो भगवतोऽभिप्रायमाह—**कथं न्विति** ॥ २४ ॥

**आ० भा०**—वर्तमाननिषेधात्स्यादुत्तरत्रेत्यत आह—अच्छेद्यइति। वर्तमानादर्शनाद्युक्तमयोग्यत्वमिति सूचयति वर्तमानापदेशेन। कुतोऽयोग्यता। नित्यसर्वगतादिविशेषणेश्वरसरूपत्वात् शाश्वतइत्येकरूपत्वमात्रमुक्तम्। स्थाणुशब्देन नैमित्तिकमप्यन्यथात्वं निवारयति नित्यत्वं सर्वगतत्वविशेषणम् अन्यथा पुनरुक्तेः । ऐक्योक्तावप्यनुक्तविशेषणोपादानान्नेश्वरैक्ये पुनरुक्तिः। युक्ताश्च बिंबधर्माः प्रतिबिंबेऽविरोधे। तत्ता च "रूपं रूपं प्रतिरूपो बभूव।" 'आभासएव च' इत्यादिश्रुतिस्मृतिसिद्धा। नचांशत्वविरोधः। तस्यैवांशत्वात्। नचैकरूपतैवांशता। प्रमाणं चोभयविधवचनमेव। नचांशस्य प्रतिबिंबत्वं कल्प्यम्। गाध्यादिष्वंशबाहुरूप्यदृष्टेरितरत्रादृष्टेः। स्थाणुत्वेप्यैक्षतेत्याद्यविरुद्धमीश्वरस्य उभयविधवाक्यात्। अचिंत्यशक्तेश्च। नच माययैकं। त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते। न योगित्वादीश्वरत्वात् 'चित्रं न चैतत् त्वयि कार्यकारणे' इत्याद्यैश्वर्येणैव विरुद्धधर्माविरोधोक्तेः। महातात्पर्याच्च। मोक्षो हि महापुरुषार्थः। तत्रापि मोक्षएवार्थः। 'अंतेषु रेमिरे धीरा न ते मध्येषु रेमिरे ॥ अंतप्राप्तिं सुखं प्राहुर्दुःखमंतरमेतयोः' "पुण्यचितो लोकः क्षीयते" इत्यादि श्रुतिस्मृतिभ्यः। स च विष्णुप्रसादादेव सिद्ध्यति। 'वासुदेवमनाराध्य को मोक्षं समवाप्नुयात् ॥ तुष्टे तु तत्र किमलभ्यमनंतईशे ॥ तत्प्रसादादवाप्नोति परां सिद्धिं न संशयः॥ येषां स एव भगवान्दययेदनंतः सर्वात्मनाऽश्रितपदो यदि निर्व्यलीकम् ॥ ते वै विदंत्यतितरंति च देवमायां नैषां ममाहमितिधीः श्वशृगालभक्ष्ये ॥ तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते ॥ ऋते यदस्मिन्भवईश जीवास्तापत्रयेणोपहता न शर्म ॥ आत्मल्लँभंते ॥ ऋते भवत्प्रसादाद्धि कस्य मोक्षो भवेदिह ॥ तमेवं विद्वान्' इत्यादि श्रुतिस्मृतिभ्यः॥ सचोत्कर्षज्ञानादेव भवति लोकप्रसिद्धेः। लोकप्रसिद्धमविरुद्धमत्राप्यंगीकार्यं। अहल्याजारत्वाद्यपि दोषकृतोपि तेन बहुतरो लेप आसीदित्युत्कर्षमेव वक्ति। बहुनरकफलो ह्यसौ। तस्य न लोम च मीयतइतिश्रुत्यंतराच्च। 'यो मामेवमसंमूढो जानाति पुरुषोत्तमम्' इतितदुक्तेश्च। 'सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः। विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा॥ पुनश्चानंतधा तस्य पुनश्चापि ह्यनंतधा। नैकांशसममाहात्म्याः श्रीशेषब्रह्मशंकराः' इति नारदीये। अन्योत्कर्षऐक्यं च 'तथैव सर्वशास्त्रेषु महाभारतमुत्तमम्। को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्' इत्यादिग्रंथांतरासिद्धोत्कर्षमहाभारतविरुद्धम्। तत्र हि 'नास्ति नारायणसमं न भूतं न भविष्यति। एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम् ॥ यस्य प्रसादजो ब्रह्मा रुद्रश्च

क्रोधसंभवः। नत्वत्समोस्ति' इत्यादिषु साधारणप्रश्नावसरएव महांतमुत्कर्षं विष्णोर्वक्ति। अन्यत्र यत्किंचिदुक्तावप्यसाधारण एवावसरे। तद्धचग्न्यादेरपि वेदादावस्ति। "त्वमग्नइंद्रोऋषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः॥ विश्वस्मादिंद्रउत्तर" इत्यादिषु॥ तद्ग्रंथविरोधाच्च। तथाहि स्कांदे शैवे। 'यदंतरं व्याघ्रहरींद्रयोर्वने यदंतरं मेरुगिरींद्रविंध्ययोः। यदंतरं सूर्यसुरेज्यबिंबयोस्तदंतरं रुद्रमहेंद्रयोरपि॥ यदंतरं सिंहगजेंद्रयोर्वने यदंतरं सूर्यशशांकयोर्दिवि। यदंतरं जाह्नविसूर्यकन्ययोस्तदंतरं ब्रह्मगिरीशयोरपि॥ यदंतरं प्रलयजवारिविप्रुषोर्यदंतरं स्तंबहिरण्यगर्भयोः। स्फुलिंगसंवर्त्तकयोर्यदंतरं तदंतरं विष्णुहिरण्यगर्भयोः॥ अनंतत्वान्महाविष्णोस्तदंतरमनंतकम्। माहात्म्यसूचनार्थाय ह्युदाहरणमीरितम्॥ तत्समोह्यधिको वापि नास्ति कश्चित्कदाचन। एतेन सत्यवाक्येन तमेव प्रविशाम्यहम्' इत्याह। तत्रैव शिवं प्रति मार्कंडेयवचनम्। 'संसारार्णवनिर्मग्नइदानीं मुक्तिमेष्यसि' इत्यादि। पाद्मे शैवे मार्कंडेयकथा प्रबंधे शिवान्निषिध्य विष्णोरेव मुक्तिमाह—'अहं भोगप्रदो वत्स मोक्षदस्तु जनार्दनः' इत्यादि। समब्राह्मविरोधाच्च। वेदश्चेतिहासाद्यविरोधेन योज्यः। यदि विद्यादितिवचनात्। अनिर्णयाच्चेंद्रादिशंकयाऽन्यथा। तत्रापीष्टसिद्धिः। नामवैशेष्यात्। अतोभगवदुत्कर्षएव सर्वागमानां महातात्पर्यम्। तथापि स्वतःप्रामाण्यात्सन्नेवोच्यते। अविरोधात्। न च प्रमाणसिद्धस्य अन्यत्रादृष्ट्यापह्नवो युक्तः। धर्मवैचित्र्यादर्थानाम्। स्वतःप्रामाण्यानंगीकारे मानोक्तादावप्यदोषत्वं च साधयेदित्यतिप्रसंगः। अनन्यापेक्षया च तत्परत्वं सिद्धमागमानाम्। नारायणपरा वेदाः। "सर्वे वेदा यत्पदमामनंति। वासुदेवपरा वेदा" इति। नचैतद्विरुद्धम्। ईश्वरनियमात् अनादौ च तत्सिद्धम्। 'द्रव्यं कर्म च कालश्च' इत्यादौ। प्रयोजकत्वं तु पूर्वोक्तन्यायेन। अतःसिद्धमेतत्। तच्चानन्यापेक्षाचिंत्यशक्तित्वादेव युक्तम्। अतो न मायामयमेकम्॥ अचलत्वं त्वप्रहर्षमनानंदमदुःखमसुखमप्रज्ञमसद्वेत्यादिवत्। क्रियादृष्टेः तपो मे हृदयं साक्षात्तनुर्विद्याक्रियाकृतिरित्याद्युक्तम्। अतश्च न मायामयं सर्वं। ऐश्वर्यादिवाचिभगशब्देनैव संबोधनाच्च "तं त्वा भग" इत्यादौ स्वरूपत्वान्न मायामयत्वं युक्तम्। 'विज्ञानशक्तिरहमासमनंतशक्तेः। मय्यनंतगुणेऽनंते गुणतोनंतविग्रहे। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिवचनात्॥ २४॥

आ० ज०—तर्ह्यच्छेद्योयमित्यादिपुनरुक्तमित्यत आह—**वर्तमानेति**। लटः प्रयोगेन वर्तमानस्यैव च्छेदादेर्निषेधादिदानीं दृश्यमानत्वेनात्मनः प्राग्विनाशाभावेप्युत्तरत्र शस्त्रादिना विनाशः स्यादितिशंकायां च्छेदादियोग्यतैवात्मनो नास्तीति प्रतिपादनायेदमुदितम्। 'अर्हे कृत्यतृचश्च' इतिकृत्यस्यार्हार्थत्वस्मरणादितिभावः। तर्हि तेनैवालं किमाद्येन श्लोकेनेत्यत आह—**वर्तमानेति**। प्रवृत्ते शस्त्रसंपात इति वचनात्प्रसक्तौ सत्यामपि वर्तमानस्य च्छेदादेरदर्शनाच्छेद्याद्ययोग्यत्वमात्मनो युक्तमिति दर्शयति प्रथमश्लोकेन। एवं तर्ह्यौत्तराधर्यप्रसंग इति चेन्न। उपोद्घाताभिप्रायेण भगवतोक्तेऽभिप्रायमजाननस्य शंकामनूद्यावतारस्य कृतत्वात्। स्वाभिप्रायेण तूपोद्घातमुक्त्वा साध्यमाहेत्यवतारः कर्तव्यः। नित्यः सर्वगत इत्यादिकं जीवेऽसंभावितमित्याशंक्य तन्निवर्त्यांशंकाप्रदर्शनपूर्वकं व्याचष्टे—**कुतइति**। वर्तमानच्छेदाद्यदर्शनमात्मनः च्छेदाद्ययोग्यतायां किं निश्चययुक्तिः उत संभावनायुक्तिः नाद्यः कदाचिददृष्टस्यापि पश्चाद्दर्शनात्। द्वितीये तु कुतो योग्यतानिश्चय इति शंकार्थः। नित्यसर्वगतेति भावप्रधानो निर्देशः। ईश्वरस्य तावच्छेदाद्ययोग्यत्वं सिद्धम्। नित्यसर्वगतत्वादिविशेषणवत्त्वात्। नह्येवं भूतस्य छेदादिकं संभवति। अतस्तत्प्रतिबिंबस्यापि जीवस्य तदयोग्यत्वमिति भावः। मंत्रवर्णे शाश्वतइतीश्वरविशेषणमुक्तम्। अत्र स्थाणुरितितयोर्भेदमाह—**शाश्वतइति**। एकरूपत्वमात्रं सामान्येनान्यथात्वाभावः। तस्य सामान्यप्रकरणत्वात्। स्थाणुरित्यस्य नैमित्तिकनिषेधप्रकरणत्वात्। अस्यार्थभेदकथनस्योत्तरत्रोपयोगं वक्ष्यामः। नित्यइतीश्वरविशेषणं प्रतिभाति तदन्यथा व्याचष्टे—**नित्यत्वमिति**। भिन्नपदोक्तमपि विशिष्टस्य विशेषणं विशेषणमुपसंक्रामति। सन्निधानाच्च सर्वगतत्वमितिभावः। द्वयं पृथगीश्वरविशेषणं किं न स्यादित्यतआह—**अन्यथेति**। अजो नित्यइति नित्यत्वमीश्वरस्य प्रागुक्तं। अप्रमेयस्येतिसर्वगतत्वं च।

अतस्ताभ्यां पुनरुक्तेरित्यर्थः । अस्याप्युत्तरत्रोपयोगः । ननु जीवस्येश्वरप्रतिबिंबत्वमत्र बहुवारमुक्तम् । अतः पुनरुक्तिरित्यत आह—**ऐक्योक्ताविति** । जीवस्येश्वरैक्यविषये न पुनरुक्तिदोषः । कुतः ऐक्यमात्रस्य पुनःपुनरुक्तावपि पूर्वपूर्वानुक्तानां तत्र तत्रोपयुक्तानामीश्वरविशेषणानामुत्तरत्रोपादानादिति ऐक्यमत्र गौणं विवक्षितम् । विशेषणभेदाद्विशिष्टभेद इति भावः । ननु एतदपि नास्ति । शाश्वत इत्युक्तस्यैव स्थाणुशब्देन ग्रहणादित्यादिशंकानिरासाय शाश्वत इत्येकरूपत्वमात्रमित्यादिकः प्राचीनो ग्रंथः। ननु प्रतिबिंबत्वं तत्तत्साध्यसिद्धये हेतुत्वेनोक्तम् । नचैकस्यैव हेतोरनेकसाध्यसिद्धयर्थं पुनः पुनरुपन्यासे दोषोऽस्ति । तत्कस्य हेतोः । प्रमेयभेदात् । अतः कथमियं शंकेति । उच्यते । एकत्रोक्तमीश्वरप्रतिबिंबत्वमन्यत्रापि हेतुत्वेन शिष्यैरेव ज्ञायतां किं स्वयं वचनेनेति शंकितुरभिप्रायः । ईश्वरप्रतिबिंबत्वमात्रस्य तत्तद्विशिष्टशंकानिरासासामर्थ्यात् । तत्तदौपयिकविशेषणप्रदर्शनार्थं स्वयमुपादानमितिपरिहाराभिप्रायः । नन्वीश्वरस्य नित्यसर्वगतत्वादिविशेषणवत्त्वादस्त्वच्छेद्यत्वादिकं जीवस्य तु कुतः । तथाविधेश्वरप्रतिबिंबत्वादितिचेन्न । यो यत्प्रतिबिंबः स तद्धर्मेति नियमाभावादित्यत आह—**युक्ताइति** । बिंबधर्माः बिंबसमानधर्माः । योयत्प्रतिबिंबः सोऽसति विरोधे तद्धर्मेति व्याप्तिरभिप्रेतेतिभावः । स्यादिदं व्याख्यानं यदि जीवस्येश्वरप्रतिबिंबता स्यात् । सैव कुतः सिद्धेत्यतआह—**तत्तेति** । ननु जीवस्येश्वरप्रतिबिंबत्वांगीकारेंऽशोनानाव्यपदेशात् ममैवांशो जीवलोकइत्यादिवाक्यसिद्धेन तदंशत्वेन विरोधः स्यात् । प्रतिबिंबो हि बिंबादत्यंताभिन्नइति केषांचिन्मतं अत्यंतभिन्नइत्यपरेषां । अंशस्तु तदेकदेशः । तेन भिन्नाभिन्नः यथा पटांशस्तंतुः पटेन । ततः पक्षद्वयेपि कथं न विरोधइत्यतआह—**नचेति** । जीवस्येश्वरप्रतिबिंबत्वांगीकारेपि न तदंशत्वविरोधः । कुतइत्यतआह—**तस्येति** । प्रतिबिंबत्वस्यैवांशशब्दप्रवृत्तिनिमित्तत्वात् । अयंभावः । अत्यंतभिन्नस्य जीवस्य यदीश्वराधीनतत्साहश्योपेतत्वं तत्प्रतिबिंबत्वमुच्यते । अभेदमतस्य निराकरिष्यमाणत्वात् । तदेव तदंशत्वमितिकुतोविरोधइति । नन्वंशत्वं तदेकदेशत्वं तत्कथमुच्यते प्रतिबिंबत्वमेवांशत्वामिति तत्राह—**नचेति** । अंशतांशशब्दप्रवृत्तिनिमित्तं । न केवलमेकदेशत्वमंशशब्दप्रवृत्तिनिमित्तम् । अपितु प्रतिबिंबतापीतिभावः । अस्तु नामानेकार्थत्वमंशशब्दस्य तथाप्यंशो नानेत्यादौ प्रतिबिंबत्वमेवांशत्वमित्यत्र किंप्रमाणं तदेकदेशत्वं किं न स्यादित्यतआह—**प्रमाणमिति** । जीवस्येश्वरप्रतिबिंबत्वं तदंशत्वं च तावदुच्यते । नच परस्परविरुद्धः शास्त्रार्थौ भवितुं युक्तः । तत्रानेकार्थस्यांशशब्दस्य विरुद्धार्थं परित्यज्यार्थांतरं गृह्यतइत्यर्थापत्तिरेवात्र प्रमाणमितिभावः । स्यादेतत् तथा प्रतिबिंबत्वमेव तत्त्वं अंशशब्दस्यापि तदेव प्रवृत्तिनिमित्तमिति वचनद्वयविरोधशांत्यर्थं कल्प्यते तथैकदेशत्वमेव तत्त्वं प्रतिबिंबशब्दस्यापि तदेव प्रवृत्तिनिमित्तमिति कुतो न कल्प्यम् । वचनद्वयविरोधस्यैवमपि शांतेरित्यतआह—**नचेति** । अंशस्यांशत्वस्यैकदेशत्वस्य प्रतिबिंबत्वं प्रतिबिंबशब्दप्रवृत्तिनिमित्तत्वं न कल्प्यं । कुतइत्यतआह—**गाधीति** । गाध्यादिष्वंशशब्दाभिधेयेषु अंशत्वस्य बाहुरूप्यदृष्टेः । इतरत्र प्रतिबिंबशब्दाभिधेयेषु सूर्यकादिषु प्रतिबिंबत्वस्यानेकरूपत्वादृष्टेः । इदमुक्तंभवति । इंद्रांशो गाधीत्युच्यते । तत्र विशेषएवांशशब्दप्रवृत्तिनिमित्तं भेदाभेदादेः प्रमाणबाधितत्वात् । पटांशस्तंतुरित्यत्रैकदेशत्वं सूर्यांशश्चक्षुरित्यत्रात्यंतभिन्नस्य तदधीनसादृश्यं । एवमंशशब्दोनेकार्थः प्रयोगेषु दृश्यते । तथाचोक्तं ' द्विरूपावंशकौ तस्य ' इत्यादि । नचैवं प्रतिबिंबशब्दस्यानेकं प्रवृत्तिनिमित्तं दृश्यते । तथाच सावकाशस्यांशशब्दस्य निरवकाशेन प्रतिबिंबशब्देन बाधो युक्तो न तु वैपरीत्यमिति । नन्वीश्वरस्य स्थाणुत्वं न युज्यते " तदैक्षत, सोकामयत" इत्यादिकर्तृत्वविरोधादित्यतआह—**स्थाणुत्वेपीति** । कुतइतिचेत् । किं द्वयोः परस्परपरिहारेण वृत्तिदर्शनाद्विरोधश्चोद्यते उत सहादर्शनात् । नाद्यः कर्तृत्वरहितस्य कस्याप्यदर्शनात् । न द्वितीयइत्याह—**उभयेति** । अन्यत्र सहादृष्टं स्थाणुत्वं कर्तृत्वं च कुतो भगवतीत्यतआह—**अचिंत्येति** । मायावादी तु कर्तृत्वस्थाणुत्वयोरेकं कर्तृत्वं मायामयं स्थाणुत्वं तु पारमार्थिकं काल्पनिकपारमार्थिकयोश्च गगने नीलत्वनीरूपत्वयोरिव न विरोधइति विरोधसमाधानं मन्यते तदसदित्याह—**नचेति** । कुतइत्यतआह—**त्वयीति** । ब्रह्मणि ईश्वरइतिसंपूर्णैश्वर्येन योगित्वात् । किंतु ईश्वरत्वात् । कार्यकारणे सकलकार्योत्पादनसामर्थ्योपेते इत्यादीतिक्रियाविशेषणम् । विरुद्धानामन्यत्र सहानवस्थितानां धर्माणां भगवत्यविरोधस्य सहानवस्थानस्योक्तेः । तथा च बादरायणीयं मतमवलंबमानस्यैवं विरोधसमाधानं असांप्रदायिकामितिभावः । इतश्च तदयुक्तमित्याह—**महातात्पर्याच्चेति** । सकलवेदानां परमेश्वरगुणोत्कर्षे महातात्पर्यं । तत्रेक्षितृत्वादीनां मिथ्यात्वकल्पने तद्विरोधः स्यादित्यर्थः । समस्तवेदानां भगवद्गुणोत्कर्षे तात्पर्यमित्येतदेव कुतइतिचेत् । उच्यते यस्य हि शास्त्रस्य यत्प्रयोजनं तत् यस्य ज्ञानाद्भवति स तस्य विषयः इतिनियमः । अन्यथा विषयप्रयोजनयोः संबंधो न स्यात् । तथा च तत्र प्रेक्षावतां प्रवृत्तिर्न भवेत् । वेदस्य च मोक्षः प्रयोजनम् । स च गुणोत्कर्षज्ञानादेव भवतीति तत्रैव तस्य महातात्पर्यं युक्तमिति प्रतिपादयिष्यन् सर्ववेदानां मोक्षः प्रयोजनमित्येवसिद्धं न स्वर्गादेः फलांतरमितिकैश्चिदंगीकृतत्वादित्यतस्तत्तावत्साधयति—**मोक्षइति** । वेदोहि महच्छास्त्रं वेदशास्त्रात्परं नास्तीतिवचनात् । तस्य च महापुरुषार्थेनैव प्रयोजनेन भवितुं युक्तम् । मोक्षश्च महापुरुषार्थः । अतः सएव तस्य प्रयोजनमितिभावः । मोक्षस्य महापुरुषार्थत्वं कुतइत्यतआह—**तत्रापीति** । पुरुषार्थेष्वपि अत्र निर्धारणेन महत्त्वं गम्यते । अंतेषु धर्ममो-

क्षेषु मध्येषु अर्थकामेषु अंतयोरंतरं मध्यम्। नैतावता धर्मो मोक्षसमः। क्षयिफलत्वादित्याह—**पुण्येति**। चितः प्राप्तः। अस्त्वेवं ततः किमित्यतआह—**सचेति**। मोक्षस्य भगवत्प्रसादसाध्यत्वं अन्यसाध्यत्वाभावश्चेति द्वे एते प्रमेये। तत्र यथायोगं वाक्यान्येतानि ज्ञातव्यानि। यदि निर्व्यलीकं छद्मनाविना सर्वात्मना सर्वेण प्रकारेण आश्रितपदो भगवान्येषां दययेद्दयां कुर्यात्। तर्हि येषां श्वशृगालभक्ष्ये देहे ममाहमितिधीर्न भवति ते देवमायां देवस्य महिमानं विदंति अतितरंति च संसारमित्यर्थः। ऋते सत्ये। यद्यस्मात्। ईशेतिसंबुद्धिः। अतस्त्वांघ्रेश्छायाम् आश्रयेमेतिसंबंधः। ज्ञानं प्रसादसाधनमित्यनुपदं वक्ष्यते। अतस्तमेवमित्याद्युदाहरणं। ततोपि किमित्यतआह—**सचेति**। विष्णुप्रसादश्च लोके सत्पुरुषप्रसादो गुणोत्कर्षज्ञानसाध्यः प्रसिद्धः। तद्दृष्टांतेनानुमानादित्यर्थः। नन्वीश्वरस्यानुमानाविषयत्वात्कथं तत्र लोकप्रसिद्धमंगीकार्यं। अन्यथाऽज्ञानादिकमंगीकार्यं स्यादिति अतआह—**लोकेति**। अन्यथा मीमांसारंभानुपपत्तिरितिभावः। नन्विंद्रप्रसादकामोऽहल्यायै जारेतितन्निंदामेव करोति।ततोभग्नव्याप्तिकमिदमनुमानमित्यतआह—**अहल्येति**।अहल्याजारत्वादिप्रतिपादकं वाक्यमप्यु त्कर्षमेव वक्ति। कथं दोषकृतोपि ते यस्तत्फलं बहुतरो लेपः स नासीदित्यस्यार्थस्य अनेन व्यंजनादित्यर्थः। कुतएतत्। अत्यंतालौकिककल्पनादेवं कल्पनस्य ज्यायस्त्वात्। तत्फलं बहुतरो लेपइत्येतत्कुतइत्यत आह—**बहीति**। असौ परनारीधर्षणदोषः। हीति सकलधर्मशास्त्रप्रसिद्धिं द्योतयति स लेपस्तस्य नासीदित्येतत्कुतइत्यतआह—**तस्येति**। अहल्याधर्षणेन तस्येंद्रस्य लोमापि न क्षीयतेइत्यर्थः। भगवत्प्रसादस्तद्गुणोत्कर्षज्ञानसाध्यइत्येतन्न केवलमनुमानात्सिद्धं किं तर्हि तद्वचनाच्चेत्याह—**यइति**। अत्र स सर्वविदित्यादिश्रुत्या प्रसादोऽवगम्यते। तदेवं भगवद्गुणोत्कर्षे महातात्पर्यं सर्वागमानामिति प्रमितम्। ननु ब्रह्मरुद्रादीनां सर्वोत्कृष्टत्वप्रसिद्धेर्विष्णोः सर्वोत्कर्षएव नास्ति कुतस्तत्र सर्वागमानां महातात्पर्यमिति चेत् न। तत्प्रसिद्धेर्भ्रांतित्वात्। तत्कुतइत्यतआह—**सत्यमिति**। सत्यं वक्ष्यमाणम्। तस्य लेशस्येति सर्वत्र संबध्यते। ननु पुराणविरोधाल्लौकिकी प्रसिद्धिरस्तु भ्रांतिः पुराणेष्वेवान्येषां सर्वोत्कर्षो भगवदैक्यं च उच्यते। तत्कथम्। नहि पुराणस्य पुराणं बाधकम्। साम्यादित्यतआह—**अन्येति**। अन्योत्कर्षऐक्यं च पुराणेषु प्रतीतमपि महाभारतविरुद्धमतो न ग्राह्यमित्यर्थः। अत्रैक्यं प्रसंगादुक्तम्। महाभारतस्य पुराणबाधकत्वं कुतइत्यतउक्तम्—**तथैवेति**। इत्यादिना ग्रंथांतरेण सिद्धः प्रमितउत्कर्षः सर्वशास्त्रोत्तमत्वं यस्य तत्तथोक्तम्। कथं महाभारतविरुद्धत्वमित्यतआह—**तत्रहीति**। तत्र महाभारते इत्यादिषु वाक्येषु। वक्ति भगवान्व्यासः इतोऽपि महाभारतस्य पुराणबाधकत्वं युक्तमित्युक्तम्—**साधारणेति**। कः सर्वोत्कृष्टइत्यादिसाधारणप्रश्नरूपेऽवसरे विष्णुप्रशंसामनुपक्रम्य स्वरूपकथनावसर इतियावत्। पुराणेऽप्येवमेवान्योत्कर्षाद्युक्तौ साम्यमेवेत्यतआह—**अन्यत्रेति**। अन्यत्र पुराणे यत्किंचिदुक्तावप्यन्योत्कर्षाद्युक्तावप्यसाधारण एवावसरे तत्स्तुतिप्रसंगे तदुक्तमितिशेषः। असाधारणावसरोक्तमपि रुद्रादेरुत्कृष्टत्वादि कुतोदुर्बलमित्यतआह—**तद्धीति**। यत्स्तुतिप्रस्तावोक्तं सर्वोत्कृष्टत्वं वेदादावग्न्यादेरप्यस्ति। तस्यापि ग्राह्यत्वं स्यादित्यर्थः। इतश्च न पुराणोक्तं रुद्रादेरुत्कृष्टत्वं ग्राह्यमित्याह—**तद्ग्रंथेति**। तद्ग्रंथः शैवपुराणम्। तत्कथमित्यतआह—**तथाहीति**। तद्ग्रंथेत्युक्तप्रदर्शनाय शैवइत्युक्तम्। 'ङ्यापोः संज्ञाछंदसोर्बहुलम्' इतिजान्हवीतिन्हस्वः। तत्रैव स्कांदएव। शिवान्मुक्तिं निषिध्य। इतश्च न पुराणोक्तं शिवादेरुत्कृष्टत्वे ग्राह्यमित्याह—**समेति**। समं शैववैष्णवपक्षयोः। नाहं नच शिवोऽन्येचेत्यादितद्वचनम्। अस्तु लौकिकीप्रसिद्धिर्भ्रांतिः पुराणं च विप्रलंभमूलं व्यामोहनार्थम्। तथापि विश्वाधिकोरुद्र इत्यादिवेदविरोध इत्यतआह—**वेदश्चेति**। संकुचितावर्थो व्याख्यातव्यः कुतइत्यतआह—**यदीति**। इतिहासाद्यननुरुध्य यथाश्रुतवेदव्याख्यानेऽनिष्टमाह—**अनिर्णयाच्चेति**। न केवलं विश्वाधिकइत्यादिवेदो विष्णोः सर्वोत्कर्षस्याविरोधी किंतु प्रत्युत तत्र वेदेऽस्मदिष्टस्य विष्णोः सर्वोत्कर्षस्य सिद्धिरपीत्याह—**तत्रापीति**। कुतइत्यतआह—**नामेति**। विष्णोर्नामभिर्विशेष्याद्विशिष्टत्वाद्रुद्रादिसर्वनामवत्त्वादित्यर्थः। महातात्पर्याच्चेत्यादिनोक्तमर्थमुपसंहरति—**अतइति**।अप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्चेत्यर्थः। अस्त्वेवं तथाऽपीक्षितृत्वादेर्न मायामयत्वे तद्विरोधः। गुणोत्कर्षस्य सत्त्वे हि स स्यात्। नच वेदतात्पर्यविषयत्वमात्रेण सत्यता। मोक्षापेक्षयेश्वरं प्रसादयितुमुक्तस्य राजाद्युत्कर्षस्येवासत्त्वसंभवात्। संवादाभावेन सत्यत्वनिश्चयायोगादित्यतआह—**तथापीति**। फलापेक्षया प्रसादयितुं प्रतिपादितत्वेपि स्वतः प्रामाण्यात् संवादमनपेक्ष्य ज्ञानग्राहकेणैव प्रामाण्यस्य निश्चितत्वात्। नहि प्रामाण्यनिश्चये विषयासत्त्वशंका संभवति। एवं सति बौद्धाद्यागमविषयस्यापि सत्त्वं स्यादितिचेत् न।प्रसक्तस्यापि तत्प्रामाण्यग्रहणस्य बलवद्विरोधेनोपोदितत्वात्। नच तथाप्रकृतेपीत्याह—**अविरोधादिति**। नन्वन्यत्र पुरुषे सर्वोत्कर्षस्यादर्शनात्तद्दृष्टांतेनेश्वरेपि तदभावस्य साधयितुं शक्यत्वात्। अनुमानविरोधोऽस्तीत्यतआह—**नचेति**। कालातीतमनुमानमितिभावः। प्रमाणविरुद्धस्याप्यनुमानत्वेऽतिप्रसंगं सूचयति—**धर्मेति**। धर्मवैचित्र्यं धर्मवैचित्र्यम्। एवमनुमानेऽर्थानां धर्मवैचित्र्यं न स्यादितिभावः। यद्वाऽनेन ग्रंथेनासंभावनाविरोधं परिहर्तुं संभावनां दर्शयति। भवेदेवं यदि स्वतएव प्रामाण्यग्रहः स्यात्। तदनंगीकारे किमुत्तरमित्यतआह—**स्वतइति**। संवादाधीनः प्रामाण्यग्रहइत्यंगीकारे तु प्रामाण्यनिश्चयाय संवादकमानोक्तौ तस्याप्यदोषत्वं प्रामाण्यमन्यसंवादेन साधयेदित्यनवस्थालक्षणेतिप्रसंगइत्यर्थः। इतोपि न वेदतात्पर्यगोचरस्य भगवद्गुणोत्कर्षस्यासत्त्वं शंकनीयमित्याह—**अनन्येति**। प्रयोजनानपेक्षयाचेत्यर्थः। तर्हि तत्परत्वमेव न सिद्ध्येत्। प्रयोजन-

पर्यालोचनया हि तत्प्राक्साधितमित्यतआह—**सिद्धमिति**। कथमित्यतआह—**नारायणेति**। प्रयोजनापेक्षयाभगवद्गुणोत्कर्षपरत्वपक्षे प्रयोजनेन तत्साधनं कृतम्। प्रयोजनानपेक्षापक्षे त्वागमैरेव तत्सिद्धम्। पक्षद्वयं च सर्वे वेदास्तु देवार्थाइत्यादिवक्ष्यमाणप्रमाणसिद्धम्। एकस्यैव वाक्यस्य प्रयोजनसापेक्षत्वमनपेक्षत्वं च विरुद्धमित्यत आह—**नचेति**। प्रतिपत्तृभेदादिति भावः। ननु जडस्य वेदस्यैतान्प्रति एवंप्रतिपादयिष्याम्येतान्प्रत्येवमिति कथं चेतनवत्प्रवृत्तिरित्यत आह—**ईश्वरेति**। अनादिर्वेद इत्युक्तम्। तत्र कथमीश्वरस्य नियमनमित्यत आह—**अनादौ चेति**। अनादिपदार्थविषये नियामकत्वमन्यत्राद्दष्टं कथमीश्वरस्येत्यत आह—**प्रयोजकत्वं चेति**। अनादेर्नियोजकत्वमीश्वरस्याचिंत्यशक्त्या युक्तम्। अनन्यापेक्षया चेत्यादिनोक्तमुपसंहरति—**अतइति**। तथा च पक्षद्वयेपि महातात्पर्यविरोधान्नेश्वरस्येक्षितृत्वादिकं मायामयमितिभावः। अप्रामाणिकं च तन्मायामयत्वं। तथा हि। किं स्थाणुत्वे ईक्षितृत्वान्यथानुपपत्त्यैतत्कल्प्यते उत प्रमाणांतरात्। नाद्यः। अन्यथैवोपपत्तेरुक्तत्वादित्याह—**तच्चेति**। स्थाणोरपीक्षितृत्वम् अनन्यापेक्षा स्वतंत्रा। न द्वितीयः। तदर्शनादिति भावेनोपसंहरति—**अतइति**। प्रकृतमनुसरन्नचल इत्येतत्पदं यदन्यैः परिस्पंदरहित इति व्याख्यातम्। तदसदितिभावेनाह—**अचलत्वमिति**। इत्यादिवद्व्याख्येयमितिशेषः। सत्यज्ञानानंदस्वरूपं ब्रह्माभ्युपगच्छता यथैतानि वाक्यानि व्याख्यायंते लौकिकसत्तादिरहितामिति तथाचलइत्येतदपि लौकिकक्रियाप्रतिषेधपरं व्याख्येयम्। सर्वथा परिस्पंदाभावार्थत्वेऽप्रहर्षमित्यादेरपि सर्वथाऽनानंदत्वादिकमर्थः स्यात्। अविशेषादिति भावः। ननु विषमोयमुपन्यासः। विज्ञानमानंदं ब्रह्म सत्यं ज्ञानमित्यादिभिरानंदरूपत्वादेः प्रमितत्वेन तथाव्याख्यानोपपत्तेरिति चेत्। समं प्रकृतेपीत्याह—**क्रियेति**। कुतः क्रियादृष्टिरित्यतआह—**तप इति**। तप आलोचनं। विज्ञानमानंदमित्यादीनि निरवकाशानि क्रियावाक्यानि सावकाशानि सर्वस्य ब्रह्मधर्मस्य मायामयत्वात् अतः पुनर्वैषम्यमित्यत आह—**अतश्चेति**। अतएवमहातात्पर्यविरोधादेव इतश्च नेश्वरधर्माणां मायामयत्वमित्याह—**ऐश्वर्यादिति**। संबोधनादीश्वरस्य अर्शआद्यजंतोयंशब्द इत्येवकारेण व्यवच्छिनत्ति। नियामकाभावेनाश्रुतप्रत्ययकल्पनायोगात्। एवं संबोधने तत्स्वरूपत्वमेवैश्वर्यादीनां स्यान्नत्वमायामयत्वमित्यत आह—**स्वरूपत्वादिति**। अनंतत्वस्वाभाविकत्वादिवचनाच्च नेश्वरशक्त्यादीनां मायामयत्वम्। मायामयस्यानंतत्वाद्यनुपपत्तेरित्याह—**विज्ञानेति**॥ २४॥

**रा० भा०—अत आत्मा नित्यः स्थाणुरचलोऽयं सनातनः स्थिरस्वभावोऽप्रकम्प्यः पुरातनश्च ॥ २४ ॥**

**अ० टी०**—एते च्छेदनादिधर्मयुक्ता अपि मदिच्छां विना तन्न कुर्वंति मदिच्छयैव च त्याज्यदेहादिषु तथा कुर्वंत्यतस्त्वमप्येतेष्वच्छेद्यादिधर्मान् ज्ञात्वा प्रवृत्तो भवेत्युक्त्वाऽच्छेद्यत्वादिधर्मानाह—**अच्छेद्य इति**। अच्छेद्यादिधर्मवानयमित्यर्थः। अच्छेद्यादिधर्मवत्त्वे कारणमाह—नित्यः अविनाशी सर्वगतः व्यापकः स्थाणुः स्थिरस्वभावः। अचलः सर्वदैकरूपः सनातनः अनादिः ॥ २४ ॥

**नी० टी०**—कुतो हेतोरस्य शस्त्रादीनि च्छेदादीन्न कुर्वंतीत्याशंक्य तस्य च्छेदाद्ययोग्यत्वादित्याह—**अच्छेद्योऽयमिति**। अत्राच्छेद्यत्वादौ पूर्वोक्तान्येव अस्थूलत्वादीनि कारणानि ज्ञेयानि। एवमच्छेद्यत्वादिना स्थूलादीनभावरूपान् गुणानुक्त्वा भावरूपानपि गुणानाह—**नित्य इति**। सर्वैर्विशेषणैरखंडैकरसस्यैव वस्तुनो लक्ष्यत्वात् नित्यत्वादिभिरुत्पाद्यत्वादिकं निराक्रियते। यतो नित्यः अतो घटवदनुत्पाद्यः। यतः सर्वगतः अतो ग्रामवदप्राप्यः। यतः स्थाणुः पूर्वरूपापरित्यागेन स्थिरस्वभावः अतः क्षीरादिवदविकार्यः। अचलः यथा दर्पणः स्वतः स्वाच्छ्यादप्रच्युतोऽपि मलरूपेणावरणेन स्वाच्छ्यात्प्रच्याव्यते एवं स्वयं स्थाणुरपि अन्यसंयोगाच्चांचल्यमश्नुवीत स च दोषापकर्षणलक्षणं संस्कारमपेक्षते। अयं तु अचलत्वान्न तथा॥एवं च उत्पत्त्याप्तिविकृतिसंस्कृतिरूपं चतुर्विधं क्रियाफलमात्मनि न संभवतीत्युक्तं तत्र हेतुः सनातन इति सना इत्यव्ययं नैरंतर्ये तच्च देशतः कालतो वस्तुतश्च परिच्छेदराहित्यं। परमते परमाणूनां कालतः परिच्छेदाभावेऽपि देशतः परिच्छेदोस्ति आकाशस्य तदुभयाभावेऽपि वस्तुतः परिच्छेदोऽस्ति सोऽपि त्रिविधः सजातीयविजातीयस्वगतभेदरूपः। यथा। 'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः। वृक्षांतरात्सजातीयो विजा-

तीयः शिलादितः ।' ततश्च सना नैरंतर्येण त्रिविधपरिच्छेदराहित्येन भवति अस्तीति सनातनोऽखंडैकरसो यस्मात्तस्मान्नोत्पत्त्याद्याश्रय इत्यर्थः ॥ २४ ॥

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ॥**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥**

**शां० भा०**—किं च—अव्यक्तोऽयमिति। अव्यक्तः सर्वकरणाविषयत्वान्न व्यज्यत इत्यव्यक्तोऽयमात्मा। अत एवाचिन्त्योऽयम्। यद्धीन्द्रियगोचरं वस्तु तच्चिन्ताविषयत्वमापद्यतेऽयं त्वात्माऽनिन्द्रियगोचरत्वादचिन्त्यः। अविकार्योऽयम्। यथा क्षीरं दध्यातञ्चनादिना विकारि न तथाऽयमात्मा। निरवयवत्वाच्चाविक्रियः। न हि निरवयवं किंचिद्विक्रियात्मकं दृष्टम्। अविक्रियत्वादविकार्योऽयमात्मोच्यते। तस्मादेवं यथोक्तप्रकारेणैनमात्मानं विदित्वा त्वं नानुशोचितुमर्हसि हन्ताऽहमेषां मयेमे हन्यन्त इति ॥ २५ ॥

**शां० आ०**—त्वंपदार्थपरिशोधनस्य प्रकृतत्वात्तत्रैव हेत्वन्तरमाह—**किंचेति**। आत्मनो नित्यत्वादिलक्षणस्य तथैव प्रथा किमिति न भवति तत्राऽऽह—**अव्यक्त इति**। मा तर्हि प्रत्यक्षत्वं भूदनुमेयत्वं तु तस्य किं न स्यादित्याशङ्क्याऽऽह—**अत एवेति**। तदेव प्रपञ्चयति—**यद्धीति**। अतीन्द्रियत्वेऽपि सामान्यतो दृष्टविषयत्वं भविष्यतीत्याशङ्क्य कूटस्थेनाऽऽत्मना व्याप्तिलिङ्गाभावान्मैवमित्याह—**अविकार्य इति**। अविकार्यत्वे व्यतिरेकदृष्टान्तमाह—**यथेति**। किं चाऽऽत्मा न विक्रियते निरवयवद्रव्यत्वाद्घटादिवदिति व्यतिरेक्यनुमानमाह—**निरवयत्वाच्चेति**। निरवयवत्वेऽपि विक्रियावत्त्वे का क्षतिरित्याशङ्क्याऽऽह—**न हीति**। सावयवस्यैव विक्रियावत्त्वदर्शनाद्विक्रियावत्त्वे निरवयवत्वानुपपत्तिरित्यर्थः। यद्धि सावयवं सक्रियं क्षीरादि तद्दध्यादिना विकारमापद्यते न चाऽऽत्मनः श्रुतिप्रमितनिरवयवत्वस्य सावयवत्वमतोऽविक्रियत्वान्नायं विकार्यो भवितुमलमिति फलितमाह—**अविक्रियत्वादिति**। आत्मयाथात्म्योपदेशमशोच्यानन्वशोचस्त्वमित्युपक्रम्य व्याख्यातमुपसंहरति—**तस्मादिति**। अव्यक्तत्वाचिन्त्यत्वाविकार्यत्वनित्यत्वसर्वगतत्वादिरूपो यस्मादात्मा निर्धारितस्तस्मात्तथैव ज्ञातुमुचितस्तज्ज्ञानस्य फलवत्त्वादित्यर्थः। प्रतिषेध्यमनुशोकमेवाभिनयति—**हन्ताऽहमिति** ॥ २५ ॥

**आ० भा०**—अतएवाव्यक्तादिरूपः ॥ २५ ॥

**आ० ज०**—ननु ज्ञानिभिर्भगवान् दृश्यते चिंत्यते च तत्कथमुच्यतेऽव्यक्तोयमचिंत्योयमिति तत्राह—**अतएवेति**। अचिंत्यशक्तित्वादेव। यथोक्तं 'अतोऽनंते न तथाहि लिंगम्' इति ॥ २५ ॥

**रा० भा०**—छेदनादियोग्यानि वस्तूनि यैः प्रमाणैर्व्यज्यन्ते तैरयमात्मा न व्यज्यते इत्यव्यक्तः। अतः छेद्यादिविजातीयः। अचिन्त्यश्च सर्ववस्तुविजातीयत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमपि नार्हः। अतश्चाविकार्यः विकारानर्हः। तस्मादुक्तलक्षणमेनमात्मानं विदित्वा तत्कृते नानुशोचितुमर्हसि ॥ २५ ॥

**अ० टी०**—अव्यक्तो लौकिकेंद्रियाग्राह्यः। अचिंत्यो मनसोऽप्यगम्यः। अविकार्यो विकाररहितः कर्मभिर्वाऽविकार्यः अयं सर्वत्र व्यापकत्वेन प्रत्यक्षतयोक्तः उच्यते वेदैस्तद्रूपश्चेत्यर्थः। यदर्थमेतदुक्तं तदाह—**तस्मादिति**। तस्मादेनं पूर्वोक्तधर्मवंतं विदित्वा अनुशोचितुं नार्हसि ॥ २५ ॥

**नी० टी०**—एवं ज्ञेयं वस्तूक्तं तच्च तत्राध्यस्तदेहत्रयनिरासेन अपरोक्षीकर्तव्यमित्याह—**अव्यक्तोऽयमिति**। व्यक्तं स्थूलशरीरं प्रत्यक्षगम्यं तदन्योऽयं प्रत्यगात्मा। तथा अचिंत्योऽयं चिंत्यं चिंतायोग्यं रूपादिप्रकाशकार्येणानुमेयं चक्षुरादिसमुदायात्मकं लिंगशरीरं अप्रत्यक्षं ततोऽप्यन्योऽयं। तथा अविकार्योऽयं

विकारं स्थूलसूक्ष्मकार्यभावेनावस्थानमर्हतीति विकार्यं त्रिगुणात्मकं मूलाज्ञानं कारणशरीरं सुप्तोत्थितस्य न किंचिदवेदिषमिति परामर्शदर्शनादहं न जानामीत्यनुभवाच्च साक्ष्येकगम्यं ततोऽप्यन्योऽयं। उच्यते व्यक्तादिनिषेधमुखेन न तु शृंगग्राहिकयाऽयमेवंविध इति विधिमुखेनोच्यते। यस्मादेवमयमुच्यते तस्मादेनं विदित्वा नानुशोचितुमर्हसि। "तरति शोकमात्मवित्" इति श्रुतेरात्मविद्भूत्वा बंधुवियोगजं शोकं माकार्षीरित्यर्थः। उक्तं चात्मनोऽवस्थात्रयातीतत्वं। 'स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया॥ न निद्रां नैव च स्वप्नं तुर्ये पश्यंति निश्चिताः' इति ॥ २५ ॥

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्॥**
**तथाऽपि त्वं महाबाहो नैवं शोचितुमर्हसि॥ २६॥**

**शां० भा०—आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते—अथ चैनमिति। अथ चेत्यभ्युपगमार्थः। एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्तिं जातो जात इति मन्यसे। तथा प्रति तद्विनाशं नित्यं वा मन्यसे मृतं मृतो मृत इति। तथाऽपि तथाभाविन्यप्यात्मनि त्वं महाबाहो! नैवं शोचितुमर्हसि जन्मवतो जन्मनाशवतो नाशश्चेत्येताववश्यंभाविनाविति॥ २६॥**

**शां० आ०—**आत्मनो नित्यत्वस्य प्रागेव सिद्धत्वादुत्तरश्लोकानुपपत्तिरित्याशङ्क्याऽऽह—**आत्मन इति**। अनित्यत्वमिति च्छेदः। शाक्यानां लोकायतानां वा मतमिदमा परामृश्यते। श्रोतुरर्जुनस्य पूर्वोक्तमात्मयाथात्म्यं श्रुत्वापि तस्मिन्निर्धारणासिद्धेर्द्वयोर्मतयोरन्यतरमताभ्युपगमः शङ्कितस्तदर्थो निपातद्वयप्रयोग इत्याह—**अथ चेति**। प्रकृतस्याऽऽत्मनो नित्यत्वादिलक्षणस्य पुनः पुनर्जातत्वाभिमानो मानाभावादसंभवीत्याशङ्क्याऽऽह—**लोकेति**। नित्यजातत्वाभिनिवेशे पौनःपुन्येन मृतत्वाभिनिवेशो व्याहतः स्यादित्याशङ्क्याऽऽह—**तथेति**। परकीयमतमनुभावितमभ्युपेत्य 'अहो बत महत्पापं कर्तुं व्यवसिता वयम्' इत्यादेस्तदीयशोकस्य निरवकाशत्वमित्याह—**तथाऽपीति**। एवामित्यर्जुनस्य दृश्यमानमनुशोकप्रकारं दर्शयित्वा तस्य कर्तुमयोग्यत्वे हेतुमाह—**जन्मवत इति**। जन्मवतो नाशो नाशवतश्च जन्मेत्येतावश्यंभाविनौ मिथो व्याप्ताविति योजना॥ २६॥

**आ० भा०—अस्त्वेवमात्मनो नित्यत्वं। तथापि देहसंयोगवियोगात्मकजनिमृती स्तएवेत्यत आह—अथचेति॥ २६॥**

**आ० ज०—**ननु सर्वशंकोद्धारेणात्मनित्यत्वं प्रतिपाद्य तस्मादेवमित्युपसंहृतं तत्किमथ चेति पुनरुच्यतइत्यतोंगीकृत्यात्मानित्यत्वं प्रकारांतरेण शोकशंकेयमित्याशयेनाह—**अस्त्वेवमिति**। युद्धे च मृतिर्नियता जनिमृतिनिमित्तं च दुःखं मदीयानां भविष्यतीति ममैव शोक इति शंकाशेषः। अनेन पूर्वार्धोपि व्याख्यातः। अतएव देहसंयोगवियोगात्मकजनिमृती इत्युक्तम्। अन्यदेहसंयोगवियोगावित्येव वा जनिमृती इत्येव वा ब्रूयात् स्तएवेत्यनेन नित्यशब्दोवधारणार्थइत्युक्तं भवति। अस्त्वेवमात्मनो नित्यत्वमिति वदता आत्मनो नित्यत्वमभ्युपगम्येदमुच्यतइतिमायावादिनो व्याख्यानं निरस्तं भवति। ध्रुवं जन्म मृतस्य चेत्युत्तरवाक्यविरोधात् अव्यक्तादीनीत्यनेनापि विरोधात्॥ २६॥

**रा० भा०—अथ नित्यजातं नित्यमृतं देहमेवैनमात्मानं मनुषे न देहातिरिक्तमुक्तलक्षणं तथापि एवमतिमात्रं शोचितुं नार्हसि। परिणामस्वभावस्य देहस्योत्पत्तिविनाशयोरवर्जनीयत्वात्॥ २६॥**

**अ० टी०—**एवं विद्वत्सिद्धान्तमुक्त्वाऽविद्वत्सिद्धान्तेनापि शोकं कर्तुं नार्हसीत्याह—**अथ चेति**। अथ च पक्षांतरेण। एनं नित्यजातं तत्तद्देहेन सह जातं तस्मिन्मृते मृतं वा मन्यसे तथापि त्वं एनं शोचितुं नार्हसि। यतस्त्वं महाबाहुः। अत्रायमर्थः। नित्यस्यास्य जन्ममरणज्ञानं तु देहाध्यासेनैव भवति। तथासति स्वबाहुबलादिनाशः क्व॥ २६॥

नी० टी०—एवं तत्त्वदृष्ट्या शोकोनोचित इत्युक्तं इदानीं प्राकृतजनदृष्ट्याऽपि शोको नोचित इत्याह—अथ चेति । नित्यं नियमेन जातं नित्यजातमिति चार्वाकपक्षः । नित्यं सर्वदा जातमिति क्षणिकविज्ञानवादिपक्षः । नित्यश्चासौ अपूर्वदेहेंद्रियसंबंधाजातश्चेति तार्किकादिपक्षः । एवं नित्यं वा मन्यसे मृतमित्यपि योज्यं पक्षत्रयेऽपि शोको न युक्तः । महाबाहो इति युद्धार्थमुत्साहयति ॥ २६ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

शां० भा०—तथा च सति—जातस्येति । जातस्य हि लब्धजन्मनो ध्रुवोऽव्यभिचारी मृत्युर्मरणं ध्रुवं जन्म मृतस्य च तस्मादपरिहार्योऽयं जन्ममरणलक्षणोऽर्थस्तस्मिन्नपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

शां० आ०—तयोरवश्यंभावित्वे सत्यनुशोकस्याकर्तव्यत्वे हेत्वन्तरमाह—तथा चेति ॥ २७ ॥

आ० भा०—कुतोऽशोकः । नियतत्वादित्याह—जातस्येति ॥ २७ ॥

आ० ज०—अनेनैवाभिप्रायेणैतदेकवाक्यतयोत्तरं श्लोकद्वयं क्रमेणावतारयति—कुतइति । शंकामनूद्य तथापि न शोचितुमर्हसीत्युक्तम् । तत्र को हेतुरित्यर्थः ॥ २७ ॥

रा० भा०—उत्पन्नस्य विनाशो ध्रुवः अवर्जनीय उपलभ्यते । तथा विनष्टस्यापि जन्मावर्जनीयम् । कथमिदमुपलभ्यते विनष्टस्योत्पत्तिरिति । सत एवोत्पत्त्युपलब्धेः । असतश्चानुपलब्धेः । उत्पत्तिविनाशादयः सतो द्रव्यस्यावस्थाविशेषाः । तन्तुप्रभृतीनि द्रव्याणि सन्त्येव रचनाविशेषयुक्तानि पटादीन्युच्यन्ते । असत्कार्यवादिनोऽप्येतावदेवोपलभ्यन्ते । नहि तत्र तन्तुसंस्थानविशेषातिरेकेण द्रव्यान्तरं प्रतीयते । कारकव्यापारनामान्तरभजनव्यवहारविशेषाणामेतावतैवोपपत्तेः । नच द्रव्यान्तरकल्पना युक्ता । अत उत्पत्तिविनाशादयः सतो द्रव्यस्यावस्थाविशेषाः उत्पत्त्याख्यामवस्थामुपयातस्य द्रव्यस्य तद्विरोध्यवस्थान्तरप्राप्तिर्विनाश इत्युच्यते । मृद्द्रव्यस्य पिण्डत्वघटत्वकपालत्वचूर्णत्वादिवत्परिणामिद्रव्यस्य परिणामपरम्परा अवर्जनीया । तत्र पूर्वावस्थस्य द्रव्यस्योत्तरावस्थाप्राप्तिर्विनाशः । सैव तदवस्थस्योत्पत्तिः । एवमुत्पत्तिविनाशाख्यपरिणामपरम्परा परिणामिनो द्रव्यस्यापरिहार्येति न तत्र शोचितुमर्हसि ॥ २७ ॥

अ० टी०—ननु स्वसमानाभावान्निर्बले तु शोकः कर्तव्य एवेति चेत्तत्राह—जातस्येति । जातस्य देहस्य मृत्युर्ध्रुवः । मृतस्य ध्रुवं जन्म भवतीत्यर्थः । अत्रायमर्थः । जातस्य गृहीतजन्मनो येन मृत्युर्निर्मितस्तस्य तेनैव मृत्युर्ध्रुवः निश्चितस्तस्माद्येषां मृत्युस्त्वयैव निर्मितः स च तथैव भविष्यति । तस्माद्यद्यथा ईश्वरनिर्मितं तत्तथैव भविष्यतीत्यपरिहार्ये सर्वथाभाव्येर्थे त्वं न शोचितुं योग्योसीत्यर्थः । हीति युक्तोयमर्थः । ईश्वरकृतं कोन्यथा कर्तुं समर्थः ॥ २७ ॥

नी० टी०—शोचितुं नार्हसीत्युक्तं तत्र हेतुमाह—जातस्येति । ध्रुवोऽपरिहार्यः मृत्युर्मरणं अपरिहार्ये अर्थे मरणाख्ये त्वदुद्योगं विनापि अवश्यंभाविनि विषये न त्वं शोचितुमर्हसि वक्ष्यति च । मयैवैते निहताः पूर्वमेवेति ॥ २७ ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

**शां० भा०**—कार्यकरणसंघातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्तुं यतः—अव्यक्तादीनीति । अव्यक्तादीन्यव्यक्तमदर्शनमनुपलब्धिरादिर्येषां भूतानां पुत्रमित्रादिकार्यकरणसंघातात्मकानां तान्यव्यक्तादीनि भूतानि प्रागुत्पत्तेः । उत्पन्नानि च प्राङ्मरणाद्व्यक्तमध्यानि । अव्यक्तनिधनान्येव पुनरव्यक्तमदर्शनं निधनं मरणं येषां तान्यव्यक्तनिधनानि । मरणादूर्ध्वमप्यव्यक्ततामेव प्रतिपद्यन्त इत्यर्थः । तथा चोक्तम्—"अदर्शनादापतितः पुनश्चादर्शनं गतः । नासौ तव न तस्य त्वं वृथा का परिदेवना" इति । तत्र का परिदेवना को वा प्रलापोऽदृष्टदृष्टप्रनष्टभ्रान्तिभूतेषु भूतेष्वित्यर्थः ॥ २८ ॥

**शां० आ०**—आत्मानमुद्दिश्यानुशोकस्य कर्तुमयोग्यत्वेऽपि भूतसंघातात्मकानि भूतान्युद्दिश्य तस्य कर्तव्यत्वमाशङ्क्याऽऽह—**कार्येति** । समनन्तरश्लोकस्तत्र हेतुरित्याह—**यत इति** । चाक्षुषदर्शनमात्रव्यावृत्तिं व्यावर्तयति—**अनुपलब्धिरिति** । नहि यथोक्तसंघातरूपाणि भूतानि पूर्वमुत्पत्तेरुपलभ्यन्ते तेन तानि तथा व्यपदेशभाञ्जि भवन्तीत्यर्थः । किं तन्मध्यं यदेषां व्यक्तमिष्यते तदाह—**उत्पन्नानीति** । उत्पत्तेरूर्ध्वं मरणाच्च पूर्वं व्यावहारिकं सत्त्वं मध्यमेषां व्यक्तमिति तथोच्यते । जन्मानुसारित्वं विलयस्य युक्तमिति मत्वा तात्पर्यार्थमाह—**मरणादिति** । उक्तेऽर्थे पौराणिकसंमतिमाह—**तथा चेति** । तत्रेत्यस्यार्थमाह—**अदृष्टेति** । पूर्वमदृष्टानि सन्ति पुनर्दृष्टानि तान्येव पुनर्नष्टानि तदेवं भ्रान्तिविषयतया घटीयन्त्रवच्चक्रीभूतेषु भूतेषु शोकनिमित्तस्य प्रलापस्य नावकाशोऽस्तीत्यर्थः ॥ २८ ॥

**आ० भा०**—तदेव स्पष्टयति—अव्यक्तादीनीति ॥ २८ ॥

**आ० ज०**—स्पष्टनं च जन्ममरणस्वरूपनिरूपणेन ॥ २८ ॥

**रा० भा०**—सतो द्रव्यस्य पूर्वावस्थाविरोध्यवस्थान्तरप्राप्तिदर्शनेन योऽल्पीयान् शोकः सोऽपि मनुष्यादिभूतेषु न संभवतीत्याह—मनुष्यादिभूतानि सन्त्येव । द्रव्याण्यनुपलब्धपूर्वावस्थान्युपलब्धमनुष्यत्वादिमध्यमावस्थान्यनुपलब्धोत्तरावस्थानि स्वेषु स्वभावेषु वर्त्तन्त इति न तत्र परिदेवनानिमित्तमस्ति ॥ २८ ॥

**अ० टी०**—नन्वीश्वरोत्पादितानां देहानां स्वस्य नाशकरणमनुचितमित्याशंक्य देहानामुत्पत्तिस्थितिप्रलयविचारेणापि शोकाभावमाह—**अव्यक्तादीनीति** । अव्यक्तम् अक्षरमादिरुत्पत्तिर्येषां तानि अव्यक्तादीनि भूतानि शरीराणि । व्यक्तं जगत् तदेव मध्यं स्थितिरूपमुत्पत्तिलययोर्मध्यं येषां तानि । अव्यक्ते अक्षरएव निधनं लयो येषां तानि तथा । तत्र तेषु का परिदेवना का चिन्तेत्यर्थः । अत्रायमर्थः । यत उत्पत्तिस्तत्रैव नाशे शोकः स्वस्याऽनुचित इत्यर्थः । स्वस्यापि तन्मारणानन्तरं न नरकादिसंभावना यत-उत्पत्तिस्थल एव स्वस्यापि नाशो भविष्यति ॥ २८ ॥

**नी० टी०**—अस्त्वात्मनोऽशोच्यत्वं तथापि इष्टदेहविनाशजः शोको भवत्येवेत्याशंक्य सकारणस्य देहादेर्मिथ्यात्वं साधयति—**अव्यक्तादीनीति** । भूतानि वियदादीनि तद्विकारभूतानि जरायुजादीनि च न व्यक्तमव्यक्तमज्ञानं आदिर्येषां तथाविधानि । व्यक्तः स्पष्टः मध्यः उत्पत्तिमारभ्यमरणात्प्रागवस्था येषां । अव्यक्ते एव निधनं लयो येषामिति । अयमर्थः रज्जूरगादिकारणमज्ञानं न रज्जुवत् उरगवद्वा व्यक्तमस्ति । परीक्ष्यमाणं च न दृष्टिपथमवतरति । अतस्तदव्यक्तं तत उत्पन्नः सर्पस्तत्रैव लीयते न रज्ज्वां । एवं आत्मनि

कल्पितानां भूतानां आदिरंतश्चाव्यक्तमेव तेन ' आदावंते च यन्नास्ति वर्त्तमानेऽपि तत्तथा ' इति न्यायेन मध्ये भासमानान्यपि तानि रज्जूरगवत् असंत्येव एवंविधे तत्र तस्मिन्विषये का परिदेवना को वा विलापः । न हि मरुमरीचिकाह्रदो नष्ट इति कश्चित्तत्त्ववित् विलपति । अत एव भूतानां रज्जूरगादीनामिव प्रतीति समकालिकीं सृष्टिमभिप्रेत्य कौषीतकिब्राह्मणे स्वापप्रबोधयोर्जगल्लयोदयौ पठ्येते । स यदा स्वपिति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रबुध्यतेऽथैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठंते प्राणेभ्यो देवा देवेभ्यो लोका इति प्राणाश्चक्षुरादींद्रियाणि । देवास्तदनुग्राहकाः सूर्यादयः । लोकाः रूपादयः । नन्विहान्यत्र च आत्मैव सर्वभूतानां लयोदयस्थानमित्युच्यते नान्यत् । तत्कथमेतेषामव्यक्तं लयोदयस्थानमित्युच्यते सत्यं अज्ञानाश्रयत्वाद्ब्रह्मणि तथात्वव्यपदेशो न वस्तुगत्या न हि अपरिणामिनः कूटस्थस्य मृद्वत्कार्यप्रविलयोदयस्थानत्वं संभवति यथोक्तं । 'अस्य द्वैतेंद्रजालस्य यदुपादानकारणं ॥ अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते' इति ॥ २८ ॥

**आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ॥**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९ ॥**

**शां० भा०—दुर्विज्ञेयोऽयं प्रकृत आत्मा किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते । कथं दुर्विज्ञेयोऽयमात्मेत्याह—आश्चर्यवदिति । आश्चर्यवदाश्चर्यमदृष्टमद्भुतमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवदाश्चर्यमिवैवमात्मानं पश्यति कश्चित् । आश्चर्यवदेनं वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति । श्रुत्वा दृष्ट्वोक्त्वाऽप्येनं वेद न चैव कश्चित् । अथ वा योऽयमात्मानं पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेव भवति । अतो दुर्बोध आत्मेत्यभिप्रायः ॥ २९ ॥**

**शां० आ०**—अर्जुनं प्रत्युपालम्भं दर्शयित्वा प्रकृतस्याऽऽत्मनो दुर्विज्ञेयत्वात्तं प्रत्युपालम्भो न संभवतीति मन्वानः सन्नाह—**दुर्विज्ञेय इति** । तथा चाऽऽत्माज्ञाननिमित्तविभ्रमस्य साधारणत्वादसाधारणोपालम्भस्य निरवकाशतेत्याह—**किं त्वामेवेति** । अहंप्रत्ययवेद्यत्वादात्मनो दुर्विज्ञेयत्वमसिद्धमिति शङ्कते—**कथमिति** । विशिष्टस्याऽऽत्मनोऽहंप्रत्ययदृष्टत्वेपि केवलस्य तदभावादस्ति दुर्विज्ञेयतेति श्लोकमवतारयति—**आहेति** । आश्चर्यवदित्याद्येन पादेनाऽऽत्मविषयदर्शनस्य दुर्लभत्वं दर्शयता द्रष्टुर्दौर्लभ्यमुच्यते । द्वितीयेन तद्विषयवदनस्य दुर्लभत्वोक्त्या तदुपदेष्टुस्तथात्वं कथ्यते । तृतीयेन तदीयश्रवणस्य दुर्लभत्वद्वारा श्रोतुर्विरलता विवक्षिता । श्रवणदर्शनोक्तीनां भावेऽपि तद्विषयसाक्षात्कारस्यात्यन्तायासलभ्यत्वं चतुर्थेनाभिप्रेतमिति विभागः । आत्मगोचरदर्शनादिदुर्लभत्वद्वारा दुर्बोधत्वमात्मनः साधयति—**आश्चर्यवदिति** । संप्रत्यात्मनि द्रष्टुर्वक्तुः श्रोतुः साक्षात्कर्तुश्च दुर्लभत्वाभिधानेन तदीयं दुर्बोधत्वं कथयति—**अथवेति** । व्याख्यानद्वयेऽपि फलितमाह—**अत इति** ॥ २९ ॥

**आ० भा०—देहयोगवियोगस्य नियतत्वादात्मनश्चेश्वरसरूपत्वात्सर्वथानाशान्न शोकः कार्य इत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति—आश्चर्यवदिति । दुर्लभत्वेनेत्यर्थः । तद्ध्याश्चर्यं लोके । दुर्लभोपीश्वरसरूपत्वात्सूक्ष्मत्वाच्चात्मनस्तद्द्रष्टा ॥ २९ ॥**

**आ० ज०**—आश्चर्यवदिति श्लोकस्य न प्रकृतसंगतिर्दृश्यते तदुत्तरश्च पुनरुक्तइत्यतआह—**देहयोगेति** । द्वंद्वैकवद्भावोयम् सर्वथेतिविविनाशाभावादिभिः सर्वैः प्रकारैरित्युपसंहर्तुमुत्तरेण श्लोकेन । ईश्वरसरूपत्वेपि कथमनाश इत्याशंकापरिहारहेतुत्वादुपसंहर्तुमित्युक्तम् । अप्रमेयस्येत्यादिना प्रागुक्तत्वात्पुनरिति । एवं यः कश्चित्पश्यति स आश्चर्यवदित्याद्युक्त्वा चतुर्थपादेन तदुपपादनं

क्रियते तं व्याचष्टे—**दुर्लभत्वेनेति**। दुर्लभत्वमाश्चर्यशब्दप्रवृत्तौ निमित्तमित्यर्थः तत्कथमित्यत आह—**तद्धीति**। आश्चर्यमनित्ये इत्यादिस्मृतिं हिशब्देन सूचयति। सर्वेषामात्मद्रष्टृत्वात्कथमात्मद्रष्टा दुर्लभोपि येनाश्चर्यमुच्यत इत्यत आह—**दुर्लभोपीति**। ईश्वरसरूपत्वादिनाऽस्मद्रष्टा दुर्लभइति भावः। अनेन आश्चर्य एवाश्चर्यवदित्युच्यत इत्युक्तं भवति। यत्प्रतिबिंबस्य जीवस्य द्रष्टापि दुर्लभः। किं तत्सामर्थ्यं वर्णनीयमितीश्वरसामर्थ्यदर्शनम् देहयोगवियोगस्येत्यादिना देहीनित्यमिति श्लोको व्याख्यातः। स्वधर्ममित्यादयः श्लोका अतिरोहितार्थत्वान्न व्याख्याताः। एवमुत्तरत्रापि ॥ २९ ॥

**रा० भा०**—एवं शरीरात्मवादेऽपि नास्ति शोकनिमित्तमित्युक्त्वा शरीरातिरिक्त आश्चर्यस्वरूप आत्मनि द्रष्टा वक्ता श्रोता श्रवणायत्तात्मनिश्चयश्च दुर्लभ इत्याह—एवमुक्तस्वभावं स्वेतरसमस्तवस्तुविसजातीयतया आश्चर्यवदवस्थितमनन्तेषु जन्तुषु महता तपसा क्षीणपाप उचितपुण्यः कश्चित् पश्यति तथाविधः कश्चित्परस्मै वदति एवं कश्चिदेव शृणोति श्रुत्वाऽप्येनं यथावदवस्थितं तत्त्वतो न कश्चिद्वेद। चकाराद्द्रष्टृवक्तृश्रोतृष्वपि तत्त्वतो दर्शनं तत्त्वतो वचनं तत्त्वतः श्रवणं दुर्लभमित्युक्तं भवति ॥ २९ ॥

**अ० टी०**—नन्वेवं चेत्तदा विद्वांसः पापकर्मणा नरकसंभावनया कथं शोचंतीत्याशंक्याह—**आश्चर्यवदिति**। एनं कश्चिदाश्चर्यवत् पश्यति शास्त्रार्थज्ञानान्नित्यमव्यक्तादिरूपं जानन् जन्मादिभावदर्शनादाश्चर्यवन्मायाकृतैन्द्रजालवत्पश्यतीत्यर्थः। एतेषां जन्मादिभावास्तु मदिच्छया मत्क्रीडार्थका इति आश्चर्यवदित्युक्तम्। तथैव च मन्मायया मोहितः कश्चिदाश्चर्यवद्वदति। अन्यान् बोधयतीत्यर्थः। अन्यश्च श्रोता स्वतो ज्ञानरहितः। आश्चर्यवत् शृणोति श्रुत्वाप्येनं यथार्थमिदमित्युक्त्वा न वेद वै निश्चयेनैतत्त्रितयेषु कोपि न वेद न ज्ञातवानतोऽज्ञानात्तेपि शोचंतीति भावः ॥ २९ ॥

**नी० टी०**—ननु वज्रपंजरतुल्यस्य सर्वप्रमाणसिद्धस्य वियदादिप्रपंचस्य कथं रज्जूरगादिवदज्ञानप्रभवत्वेनात्यंततुच्छत्वमुच्यते। कथं वा कर्मज्ञानकांडापेक्षितमात्मनो यज्ञादिकर्तृत्वं श्रवणादिकर्तृत्वं चापह्नूयत इत्याशंक्याह—**आश्चर्यवदिति**। कश्चित् ज्ञातात्मतत्त्व एनमतीतानंतरश्लोकोक्तं भूतग्राममाश्चर्यवत् आश्चर्यमद्भुतं स्वप्नमायेंद्रजालादिकं तेन तुल्यं आश्चर्यवत् तथाभूतं पश्यति। तथा कश्चिदेनं आश्चर्यवद्वदति सत्त्वेन असत्त्वेन वा निर्वक्तुमशक्यमपि अनिर्वचनीयेनैव लोकाप्रसिद्धेन रूपेणोपपादयति। तथाहि रज्जूरगवत्प्रपंचः संश्चेत् "नेह नानाऽस्ति किंचन" इति श्रुत्या न बाध्येत।असंश्चेन्न प्रतीयेत तस्मादनिर्वचनीयोऽयमिति। तदिदं सर्वव्यवहारास्पदस्यापि प्रपंचस्य मिथ्यात्वोपपादनमत्याश्चर्यमित्यर्थः। तथा एनं प्रपंचमन्य आश्चर्यवत्शृणोति। इमे लोका इमे देवा इमे वेदा इदं सर्वं यदयमात्मेति प्रत्यक्षेणानात्मतया उपलभ्यमानस्यापि प्रपंचस्य यत् प्रत्यगभिन्नत्वेन श्रवणं तदत्यंतमाश्चर्यं। न हीयं श्रुतिर्यजमानः प्रस्तर इत्यादिवदुपचरितार्था प्रपंचस्यात्मनः पृथक्त्वे। आत्मनो वा अरे दर्शनेन श्रवणेन मत्याविज्ञानेनेदं सर्वं विदितं भवतीत्येकविज्ञानात्सर्वविज्ञानप्रतिज्ञोपरोधापत्तेः। न च प्रतिज्ञाऽप्यौपचारिकी प्रदेशांतरे श्रुतस्य यथा सौम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टांतस्योपरोधापत्तेः। तस्मात्प्रतिज्ञादृष्टांतनिगमनानामेकवाक्यत्वात् न प्रपंचस्यात्मान्यत्वं। तच्च भेदग्राहिप्रत्यक्षविरोधादाश्चर्यमिव शृणोति। तथा कश्चिदेनं प्रपंचं प्रत्यगनन्यत्वेन श्रुत्वा अपिशब्दात् उक्त्वा स्वप्नादिदृष्टांतैरुपपाद्य दृष्ट्वा ध्यानेन च साक्षात्कृत्वाऽपि तत्त्वतो न वेद न जानाति तथाहि। प्राप्ताऽपि प्रज्ञा तीव्रविक्षेपवतः परिहीयत इति वक्ष्यति तस्मादात्मैक्यात्संभवत्येव प्रपंचस्य रज्जूरगादितुल्यत्वेन तुच्छत्वं। यद्वा एनं आत्मानं कर्तृत्वभोक्तृत्वदुःखित्वानित्यत्वजडत्वसंगित्वपरिच्छिन्नत्वादिधर्मवत्तया प्रसिद्धमपि तत्त्वमसीत्यागमोत्थया ब्रह्माकारांतःकरण-

वृत्त्या ब्रह्मविद्याख्यया अकर्त्तारमभोक्तारमानंदघनं सत्यचिद्रूपमसंगमनंतमपरोक्षीकरोतीति महदाश्चर्यं । यत् पश्यति तदाश्चर्यवदिति क्रियाविशेषणं वा अद्वियकमपि दर्शनमविद्यां स्वात्मानं च कतकरजोवन्निवर्त्तयतीति । यद्वा यः पश्यति स आश्चर्यवदिति कर्तृविशेषणं यत एक एव विद्वान् समाधिव्युत्थानयोः परस्परविरुद्धमात्मनो ब्रह्मभावं जीवभावं च यावदारब्धकर्मक्षयमनुभवतीति तथा वाङ्मनसातीतमप्यात्मानं यद्वाचा वदति तदप्याश्चर्यं । अगृहीतसंगतिकेनापि शब्देन यथा सुप्तः प्रबोध्यते तद्वत् । यथोक्तं वार्तिके । 'अगृहीत्वैव संबंधमभिधानाभिधेययोः । हित्वा निद्रां प्रबुध्यंते सुषुप्ते बोधिताः परैः ॥ जाग्रद्वन्न यतः शब्दं सुषुप्ते वेत्ति कश्चन । ध्वस्तेऽतो ज्ञानतो ज्ञाने ब्रह्मास्मीति भवेत्फलं ॥ अविद्याघातिनः शब्दाद्याहंब्रह्मेति धीर्भवेत् । नश्यत्यविद्यया सार्द्धं हत्वारोगमिवौषधम्' इति । तथा यः शृणोति सोऽपि आश्चर्यवत् अतिदुर्लभ इत्यर्थः । "श्रवणायापि बहुभिर्यो न लभ्यः" इति श्रुतेः । शृण्वंतोऽपि बहवो यन्नविद्युरिति श्रुतिद्वितीयपदार्थं संगृह्णाति श्रुत्वाऽप्येनमिति आश्चर्यो वक्ता कुशलोस्य लब्धा आश्चर्यो ज्ञाता कुशलेनानुशिष्ट इति उत्तरार्द्धस्तु श्लोकपूर्वार्द्धेन संगृहीत इति ज्ञेयं दुर्विज्ञेयोऽयमात्मातस्त्वं तज्ज्ञानार्थं यतस्वेति भावः ॥ २९ ॥

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ॥**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥**

**शां० भा०—अथेदानीं प्रकरणार्थमुपसंहरन्ब्रूते—देहीति । सर्वस्य प्राणिजातस्य देहे वध्यमानेऽप्ययं देही न वध्यो यस्मात्तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥३०॥**

**शां० आ०**—श्लोकान्तरमुत्थापयति—**अथेति** । आत्मनो दुर्ज्ञानत्वप्रदर्शनानन्तरमिति यावत् । वस्तुवृत्तापेक्षया शोकमोहयोरकर्तव्यत्वं प्रकरणार्थः । देहे वध्यमानेऽपि देहिनो वध्यत्वाभावे फलितमाह—**तस्मादिति** । हेतुविभागं विभजते—**सर्वस्येति** । फलितप्रदर्शनपरं श्लोकार्धं व्याचष्टे—**तस्माद्भीष्मादीनीति** ॥ ३० ॥

**आ० भा०—॥ ३० ॥**

**आ० ज०**—॥ ३० ॥

**रा० भा०—सर्वस्य देवादिदेहिनो देहे वध्यमानेऽप्ययं देही नित्यमवध्य इति मन्तव्यः । तस्मात् सर्वाणि देवादिस्थावरान्तानि भूतानि विषमाकाराण्यप्युक्तेन स्वभावेन स्वरूपतः समानानि नित्यानि च । देहगतं तु वैषम्यम् अनित्यत्वं च ततो देवादीनि सर्वाणि भूतानि उद्दिश्य न शोचितुमर्हसि न केवलं भीष्मादीन्प्रति ॥ ३० ॥**

अ० टी०—पूर्वोक्तमुपसंहरन् शोकाभावमुपदिशति—देहीति । देही सर्वस्य देहे अवध्यस्तस्मात्सर्वाणि भूतानि जातदेहानि नतु देही जायत इति त्वं शोचितुं नार्हसि । भारतेति संबोधनात्तथाज्ञानभवत्वं बोध्यते ॥ ३० ॥

नी० टी०—प्रकृतमर्थमुपसंहरति—देहीति । सर्वाणि भूतानि कथने । दीना अल्पबला बलवत्तरेण मया हंतव्याः कथमेषां पुत्रादय एतैर्विना जीविष्यंति कथं वाहं भीष्मादिभिर्गुरुभिर्विना जीविष्यामीति शोचितुं नार्हसीत्यर्थः ॥ ३० ॥

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ॥**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३१ ॥**

**शां० भा०**—इह परमार्थतत्त्वापेक्षायां शोको मोहो वा न संभवतीत्युक्तं, न केवलं परमार्थतत्त्वापेक्षायामेव किं तु—स्वधर्ममिति। स्वधर्ममपि स्वो धर्मः क्षत्त्रियस्य युद्धं तमप्यवेक्ष्य त्वं न विकम्पितुं प्रचलितुं नार्हसि स्वाभाविकाद्धर्मादात्मस्वाभाव्यादित्यभिप्रायः। तच्च युद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थं चेति धर्मादनपेतं परं धर्म्यं तस्माद्धर्म्याद्युद्धाच्छ्रेयोऽन्यत्क्षत्त्रियस्य न विद्यते हि यस्मात् ॥ ३१ ॥

**शां० आ०**—श्लोकान्तरमवतारयन्वृत्तं कीर्तयति—**इहेति**। पूर्वश्लोकः सप्तम्यर्थः। यत्पारमार्थिकं तत्त्वं तदपेक्षायामेव केवलं शोकमोहयोरसंभवो न भवति किं तु स्वधर्ममपि चावेक्ष्येति संबन्धः। स्वकीयं क्षात्रं धर्ममनुसंधाय ततश्चलनं परिहर्तव्यमित्यर्थः। यद्धि क्षत्रियस्य धर्मादनपेतं श्रेयःसाधनं तदेव मयाऽनुवर्तितव्यमित्याशङ्क्याऽऽह—**धर्म्यादिति**। जातिप्रयुक्तं स्वाभाविकं धर्ममेव विशिनष्टि—**क्षत्रियस्येति**। पुनर्नकारोपादानमन्वयार्थम्। प्रचलितुमयोग्यत्वे प्रतियोगिनं दर्शयति—**स्वाभाविकादिति**। स्वाभाविकत्वमशास्त्रीयत्वमिति शङ्कां वारयितुं तात्पर्यमाह—**आत्मेति**। आत्मनः स्वस्यार्जुनस्य स्वाभाव्यं क्षत्रियस्वभावप्रयुक्तं वर्णाश्रमोचितं कर्म तस्मादित्यर्थः। धर्मार्थं प्रजापरिपालनार्थं च प्रयतमानस्य युद्धादुपरिरंसा श्रद्धातव्येत्याशङ्क्याऽऽह—**तच्चेति**। ततोपि श्रेयस्करं किंचिदनुष्ठातुं युद्धादुपरतिरुचितेत्याशङ्क्याऽऽह—**तस्मादिति**। तस्मादयुद्धात्प्रचलनमनुचितामिति शेषः ॥ ३१ ॥

**आ० भा०**—॥ ३१ ॥

**आ० ज०**—॥ ३१ ॥

**रा० भा०**—अपि चेदं प्रारब्धं युद्धं प्राणिमारणमपि अग्नीषोमीयादिवत्स्वधर्ममवेक्ष्य न विकम्पितुमर्हसि धर्म्यात् न्यायतः प्रवृत्ताव युद्धादन्यन्न हि क्षत्त्रियस्य श्रेयो विद्यते। 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्त्रं कर्म स्वभावजम् ॥' इति हि वक्ष्यते। अग्नीषोमीयादिषु च न हिंसा पशोर्निहीनतरच्छागादिदेहपरित्यागपूर्वककल्याणदेहस्वर्गादिप्रापकत्वश्रुतेः। संज्ञपनस्य "न वा उ वेतन्म्रियसे न रिष्यासि देवाँ इदेषि पथिभिः सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधातु" इति हि श्रूयते। इह च युद्धे मृतानां कल्याणतरदेहादिप्राप्तिरुक्ता वासांसि जीर्णानीत्यादिना। अतश्चिकित्सककर्मातुरस्यैवाय रक्षणमेवाग्नीषोमीयादिषु संज्ञपनम् ॥ ३१ ॥

**अ० टी०**—एवमात्मस्वरूपज्ञानेन शोको न कर्त्तव्य इत्युक्त्वा स्वधर्मादपि मा शुच इत्याह—**स्वधर्ममपीति**। स्वधर्मं क्षात्रमवेक्ष्य विकम्पितुं नार्हसि यतः क्षत्रियाणामयमेवोत्तमो धर्म इत्याह—**धर्म्यादिति**। धर्म्याद्युद्धादन्यत् क्षत्रियस्य श्रेयो न विद्यते। क्षत्रियाणां परलोकादिकं त्वनेनैव भवति ॥ ३१ ॥

**नी० टी०**—अर्जुनस्य अनात्मनि देहे आत्मधीरूपो मोहो निवारितः। इदानीं स्वधर्मे युद्धे अधर्मधीरूपं मोहं निवारयति—**स्वधर्ममपीत्यादिना**। युद्धं क्षत्रियस्य स्वो धर्मः तमवेक्ष्यापि विकंपितुं चलितुं नार्हसि हि यस्मात् धर्म्यात् धर्मादनपेताद्युद्धादन्यत् क्षत्रियस्य श्रेयः प्रशस्ततरं नास्ति ॥ ३१ ॥

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ॥**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥**

**शां० भा०**—कुतश्च तद्युद्धं कर्तव्यमिति । उच्यते—यदृच्छयेति । यदृच्छया चाप्रार्थितयोपपन्नमागतं स्वर्गद्वारमपावृतमुद्घाटितं ये तदीदृशं युद्धं लभन्ते क्षत्रियाः । हे पार्थ ! किं न सुखिनस्ते ३२

**शां० आ०**—युद्धस्य गुर्वाद्यनेकप्राणिहिंसात्मकस्याहिंसाशास्त्रविरोधान्नास्ति कर्तव्यतेति शङ्कते—**कुतश्चेति** । अग्नीषोमीयहिंसावद्युद्धमपि क्षत्रियस्य विहितत्वादनुष्ठेयं सामान्यशास्त्रतो विशेषशास्त्रस्य बलीयस्त्वादित्याह—**उच्यत इति** । तथाऽपि युद्धे प्रवृत्तानामैहिकामुष्मिकस्थायिसुखाभावादुपरतिरेव ततो युक्ता प्रतिभातीत्याशङ्क्याऽऽह—**यदृच्छयेति** । चिरेण चिरतरेण च यागाद्यनुष्ठायिनः स्वर्गादिभाजो भवन्ति युध्यमानास्तु क्षत्रिया बहिर्मुखताविहीनाः सहसैव स्वर्गादिसुखभोक्तारस्तेन तव कर्तव्यमेव युद्धमिति व्याख्यानेन स्फुटयति—**यदृच्छयेत्यादिना** । इहामुत्र च भाविसुखवतामेव क्षत्रियाणां स्वधर्मभूतयुद्धसिद्धेस्तादर्थ्येनोत्थानं शोकमोहौ हित्वा कर्तव्यमित्यर्थः ॥ ३२ ॥

**आ० भा०**—॥ ३२ ॥

**आ० ज०**—॥ ३२ ॥

**रा० भा०**—अयत्नतोपनतमिदं निरतिशयसुखोपायभूतं निर्विघ्नमीदृशं युद्धं सुखिनः पुण्यवन्तः क्षत्रिया लभन्ते ॥ ३२ ॥

**अ० टी०**—तस्मादेतादृशं भाग्यवन्त एव लभन्त इत्याह—**यदृच्छयेति** । यदृच्छया भगवदिच्छया उपपन्नम् अपावृतमुद्घाटितकपाटस्वर्गद्वारम् ईदृशं युद्धं क्षत्रियाः सुखिनो भाग्यवन्तो लभन्ते प्राप्नुवंति एतादृशयुद्धाप्तौ भाग्यवत्त्वं भगवदिच्छयानुरूपत्वाद्भगवत्सन्निधित्वाच्चेति भावः ॥ ३२ ॥

**नी० टी०**—किंच यदृच्छया अप्रार्थितमप्युपपन्नमुपस्थितं स्वर्गद्वारमपावृतमुद्घाटितं ये क्षत्रिया लभंते ते सुखिनो धन्या भवंतीति संबंधः ॥ ३२ ॥

**अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ॥**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥**

**शां० भा०**—एवं कर्तव्यताप्राप्तमपि—अथ चेत्त्वमिमं धर्म्यं धर्मादनपेतं सङ्ग्रामं युद्धं न करिष्यसि चेत्ततस्तदकरणात्स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा केवलं पापमवाप्स्यसि ॥ ३३ ॥

**शां० भा०**—स्वधर्मस्य युद्धस्य श्रद्धया करणे स्वर्गादिमहाफलप्राप्तिं प्रदर्श्य तदकरणे प्रत्यवायप्राप्तिं प्रदर्शयन्नुत्तरश्लोकगताथशब्दार्थं कथयति—**एवमिति** । विहितत्वं फलवत्त्वमित्यनेन प्रकारेणेत्यर्थः । अन्वयार्थं पुनश्चेदित्यनूद्यते । महादेवादीत्यादिशब्देन महेन्द्रादयो गृह्यन्ते ॥ ३३ ॥

**आ० भा०**—॥ ३३ ॥

**आ० ज०**—॥ ३३ ॥

**रा० भा०**—अथ क्षत्रियस्य स्वधर्मभूतमिममारब्धं संग्रामं मोहादज्ञानान्न करिष्यसि चेत्ततः प्रारब्धस्य धर्मस्याकरणात् स्वधर्मफलं निरतिशयसुखं विजयेन निरतिशयां कीर्तिं च हित्वा पापं निरतिशयमवाप्स्यसि ॥ ३३ ॥

**अ० टी०**—एवं स्वधर्मावेक्षणेन मदुक्तसंग्रामाऽकरणे तव बाधकं स्यादित्याह—**अथ चेदिति** । अथ स्वधर्मावेक्षणानन्तरमपि इमं मदग्रे धर्म्यं मदाज्ञारूपं संग्रामं चेन्न करिष्यसि तदा स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसीत्यर्थः ॥ ३३ ॥

**नी० टी०**—युद्धत्यागे इष्टनाशोऽनिष्टप्राप्तिश्च भवतीत्याह—**अथ चेदिति** ॥ ३३ ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ॥
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥

**शां० भा०**—न केवलं स्वधर्मकीर्तिपरित्यागः—अकीर्तिं चापि भूतानि कथयिष्यन्ति ते तवाव्ययां दीर्घकालाम्। धर्मात्मा शूर इत्येवमादिभिर्गुणैः संभावितस्य चाकीर्तिर्मरणादतिरिच्यते। संभावितस्य चाकीर्तेर्वरं मरणमित्यर्थः ॥ ३४ ॥

**शां० आ०**—युद्धाकरणे क्षत्रियस्य प्रत्यवायमामुष्मिकमापाद्य शिष्टगर्हालक्षणं दीर्घकालभाविनमैहिकमपि प्रत्यवायं प्रतिलम्भयति—**न केवलमिति**। युद्धे स्वमरणसंदेहात्तत्परिहारार्थमकीर्तिरपि सोढव्याऽऽत्मसंरक्षणस्य श्रेयस्करत्वादित्याशङ्क्याऽऽह—**धर्मात्मेति**। मान्यानामकीर्तिर्भवति मरणादपि दुःसहेति तात्पर्यार्थमाह—**संभावितस्येति** ॥ ३४ ॥

**आ० भा०**—॥ ३४ ॥

**आ० ज०**—॥ ३४ ॥

**रा० भा०**—न केवलं निरतिशयसुखकीर्तिहानिमात्रं पार्थो युद्धे प्रारब्धे पलायित इत्यव्ययां सर्वदेशकालव्यापिनीमकीर्तिं च समर्थान्यसमर्थानि सर्वाणि भूतानि कथयिष्यन्ति ततः किमिति चेत् शौर्यवीर्यपराक्रमादिभिः सर्वसंभावितस्य तद्विपर्ययजा ह्यकीर्तिर्मरणादतिरिच्यते। एवंविधाया अकीर्तेर्मरणमेव तव श्रेय इत्यर्थः ॥ ३४ ॥

**अ० टी०**—किं च। पापात्परलोकनाश एव भविष्यतीति न किं त्विह लोकेऽप्यपकीर्तिर्भविष्यतीत्याह—**अकीर्तिं चापीति**। भूतानि अपि ते अकीर्तिमव्ययां सदानुवर्त्तमानां कथयिष्यंति। भूतानीति नपुंसकलिंगकथनेन तथा कथनायोग्या अपि कथयिष्यंतीति व्यञ्जितम्। नन्वकीर्तिकथनेन किं स्यादित्यत आह—**संभावितस्येति**। संभावितस्य युद्धादौ अकीर्तिः मरणात् अतिरिच्यते अधिका भवतीत्यर्थः॥३४॥

**नी० टी०**—अव्ययां दीर्घकालाम् ॥ ३४ ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ॥
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥

**शां० भा०**—किंच—भयादिति। भयात्कर्णादिभ्यो रणाद्युद्धादुपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथा दुर्योधनप्रभृतयः। येषां च त्वं दुर्योधनादीनां बहुमतो बहुभिर्गुणैर्युक्त इत्येवं बहुमतो भूत्वा पुनर्यास्यसि लाघवं लघुभावम् ॥ ३५ ॥

**शां० आ०**—इतश्च त्वया युद्धं कर्तव्यमित्याह—**किंचेति**। प्राणिषु कृपया नाहं युद्धं करिष्यामीत्याशङ्क्याऽऽह—**भयादिति**। महारथानेव विशिनष्टि—**येषां चेति**। दुर्योधनादिभिस्तवोपहास्यतानिरसनार्थं सङ्ग्रामे प्रवृत्तिरवश्यंभाविनीत्यर्थः ॥ ३५ ॥

**आ० भा०**—॥ ३५ ॥

**आ० ज०**—॥ ३५ ॥

**रा० भा०**—बन्धुस्नेहात्कारुण्याच्च युद्धान्निवृत्तस्य शूरस्य ममाकीर्तिः कथमागमिष्यतीत्यत्राह—येषां कर्णदुर्योधनादीनां महारथानामितः पूर्वं त्वं शूरो वैरीति बहुमतो भूत्वा इदानीं युद्धे समुपस्थिते निवृत्तव्यापारतया लाघवं सुग्रहतां यास्यसि। ते महारथास्त्वां भयाद्युद्धादुपरतं मंस्यन्ते शूराणां हि वैरिणां शत्रुभयादृते बन्धुस्नेहादिना युद्धादुपरतिर्नोपपद्यते ॥ ३५ ॥

अ० टी०—ननु पूर्वं ये दृष्टमत्पौरुषास्ते तु न तथा कथयिष्यंति किंत्वज्ञा एव तेषां कथनेपि किं स्यादित्यतआह—**भयादिति** । ये महारथास्ते त्वां रणाद्भयादुपरतं निवृत्तं मंस्यंते । ननु मम भयाभावात्तेषां माननेपि किं भविष्यतीत्यत आह—**येषां च त्वमिति सार्द्धेन** । त्वं येषां बहुमतः संभावितगुण आसीत्तादृशो भूत्वा लाघवं यास्यसि ॥ ३५ ॥

नी० टी०—अकीर्तिमेवाह—**भयादिति** । त्वं बहुमतो भूत्वा स्वत एव अतिश्लाघ्यवृत्तः सन् लाघवं लघुभावं कातर्याख्यं येषां पुरतो यास्यसि ते महारथास्त्वां भयाद्रणादुपरतं मंस्यंत इति योजना ॥ ३५ ॥

## अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ॥
## निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥

**शां० भा०—किंच—अवाच्यवादानिति । अवाच्यवादानवक्तव्यवादांश्च बहूननेकप्रकारान्वदिष्यन्ति तवाहिताः शत्रवो निन्दन्तः कुत्सयन्तस्तव त्वदीयं सामर्थ्यं निवातकवचादियुद्धनिमित्तम् । तस्मात्ततो निन्दाप्राप्तेर्दुःखाद्दुःखतरं नु किम् । ततः कष्टतरं दुःखं नास्तीत्यर्थः ॥ ३६ ॥**

शां० आ०—इतश्च मा त्वं युद्धादुपरमं कार्षीरित्याह—**किंचेति** । ननु भीष्मद्रोणादिवधप्रयुक्तं कष्टतरं दुःखमसहमानो युद्धान्निवृत्तः स्वसामर्थ्यनिन्दनादि शत्रुकृतं सोढुं शक्ष्यामीत्याशङ्क्याऽऽह—**तत इति** ॥ ३६ ॥

**आ० भा०—॥ ३६ ॥**

आ० ज०—॥ ३६ ॥

**रा० भा०—किंच शूराणामस्माकं सन्निधौ कथमयं पार्थः क्षणमपि स्थातुं शक्नुयादस्मत्संनिधानादन्यत्र ह्यस्य सामर्थ्यमिति तव सामर्थ्यं निन्दन्तः शूराणामग्रे अवाच्यवादांश्च बहून्वादिष्यंति तव शत्रवो धार्त्तराष्ट्राः ततोऽधिकतरं दुःखं किं तव एवंविधावाच्यश्रवणान्मरणमेव श्रेय इति त्वमेव मन्यसे ॥ ३६ ॥**

अ० टी०—किं च । तव सामर्थ्यं निंदन्तस्तवाऽहिताः शत्रवः बहून् अवाच्यवादान् कथनायायोग्यानि वाक्यानि वदिष्यंति । नु इति निश्चयेन ततो दुःखतरं किं । न किमपीत्यर्थः ॥ ३६ ॥

नी० टी०—किं च अवाच्यवादान् वक्तुमयोग्यान् शब्दान्षंढतिलोऽर्जुन इत्यादीन् सामर्थ्यं निंदंतः धिगस्य शौर्यं यो भीष्मादिभयात् पलायित इति इदं वचनं मरणादप्यधिकं दुःखं इतोऽन्यद्दुःखतरमधिकं दुःखं किं न किमपीत्यर्थः ॥ ३६ ॥

## हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ॥
## तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥

**शां० भा०—युद्धे पुनः क्रियमाणे कर्णादिभिः—हतो वेति । हतो वा प्राप्स्यसि स्वर्गं हतः सन्स्वर्गं प्राप्स्यसि जित्वा वा कर्णादीञ्शूरान्भोक्ष्यसे महीम् । उभयथाऽपि तव लाभ एवेत्यभिप्रायः । यत एवं तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयो जेष्यामि शत्रून्मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः ॥ ३७ ॥**

शां० आ०—तर्हि युद्धे गुर्वादिवधवशान्मध्यस्थनिन्दा ततो निवृत्तौ शत्रुनिन्देत्युभयतः पाशारज्जुरित्याशङ्क्याऽऽह—**युद्धे पुनरिति**। जये पराजये च लाभध्रौव्याद्युद्धार्थमुत्थानमावश्यकमित्याह—**तस्मादिति**। न हि परिशुद्धकुलस्य क्षत्रियस्य युद्धायोद्युक्तस्य तस्मादुपरमः साधीयानित्याह—**कौन्तेयेति**। जये पराजये चेत्येतदुभयथेत्युच्यते। जयादिनियमाभावेऽपि लाभनियमे फलितमाह—**यत इति**। कृतनिश्चयत्वमेव विशदयति—**जेष्यामीति**॥ ३७॥

**आ० भा०—॥ ३७॥**

आ० ज०—॥ ३७॥

**रा० भा०—अतः शूरस्य आत्मना परेषां हननमात्मनो वा परैर्हननमुभयमपि श्रेयसे भवतीत्याह—धर्मयुद्धे परैर्हतश्चेत्तत एव परमनिःश्रेयसं प्राप्स्यसि। परान्वा हत्वा अकण्टकं राज्यं भोक्ष्यसे। अनभिसंहितफलस्य युद्धाख्यस्य धर्मस्य परमनिःश्रेयसोपायत्वात्तच्च परमनिःश्रेयसं प्राप्स्यसि तस्माद्युद्धायोद्योगः परमपुरुषार्थलक्षणमोक्षसाधनमिति निश्चित्य तदर्थमुत्तिष्ठ। कुन्तीपुत्रस्य तवैतदेव युक्तमित्यभिप्रायः॥ ३७॥**

अ० टी०—ननु युद्धे मरणसंभावनायां दुःखसंभावनायां च किमपकीर्त्यादिनेति चेत्तत्राह—**हतो वेति**। वा विकल्पेन हननसंभावनाभावात्। कदाचिद्धतश्चेत्तदा स्वर्गं प्राप्स्यसि जित्वा वा दुःखादिसंभवेपि महीं भोक्ष्यसे तदा दुःखनिवृत्तिर्भविष्यतीति भावः। तस्माद्युद्धाय कृतनिश्चयः सन्नुत्तिष्ठ उपस्थितो भवेत्यर्थः॥ ३७॥

नी० टी०—यद्वा जयेम यदि वा नो जयेयुरित्युक्तं तत्राह—**हतो वेति**। रणे स्थितस्य स्वर्गो वा राज्यं वा सिद्धमस्तीति पक्षद्वयमपि हितावहमित्यर्थः॥ ३७॥

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ॥**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥ ३८॥**

**शां० भा०—तत्र युद्धं स्वधर्म इत्येवं युध्यमानस्योपदेशमिमं शृणु—सुखदुःखे इति। सुखदुःखे समे तुल्ये कृत्वा रागद्वेषावकृत्वेत्येतत्। तथा लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व। नैवं युद्धं कुर्वन्पापमवाप्स्यसीत्येष उपदेशः प्रासङ्गिकः॥ ३८॥**

शां० आ०—पापभीरुतया युद्धाय निश्चयं कृत्वा नोत्थातुं शक्नोमीत्याशङ्क्याऽऽह—**तत्रेति**। युद्धस्य स्वधर्मतया कर्तव्यत्वे सतीति यावत्। सुहृज्जीवनमरणादिनिमित्तयोः सुखदुःखयोः समताकरणं कथमिति तत्राऽऽह—**रागद्वेषाविति**। लाभः शत्रुकोषादिप्राप्तिरलाभस्तद्विपर्ययः। नाध्येन युद्धेनापरिभूतेन परस्य परिभवो जयस्तद्विपर्ययस्त्वजयस्तयोर्लाभालाभयोर्जयाजययोश्च समताकरणं समानमेव रागद्वेषावकृत्वेत्येतद्दर्शयितुं तथेत्युक्तम्। यथोक्तोपदेशवशात्परमार्थदर्शनप्रकरणे युद्धकर्तव्यतोक्तेः समुच्चयपरत्वं शास्त्रस्य प्राप्तमित्याशङ्क्याऽऽह—**एष इति**। क्षत्रियस्य तव धर्मभूतयुद्धकर्तव्यतानुवादप्रसङ्गागतत्वादस्योपदेशस्य नानेन मिषेण समुच्चयः सिध्यतीत्यर्थः॥ ३८॥

**आ० भा०—॥ ३८॥**

आ० ज०—॥ ३८॥

**रा० भा०—मुमुक्षोर्युद्धानुष्ठानप्रकारमाह—एवं देहातिरिक्तमस्पृष्टसमस्तदेहस्वभावं नित्यमात्मानं ज्ञात्वा युद्धे चावर्जनीयशस्त्रपातादिनिमित्तसुखदुःखार्थलाभालाभजयपराजयेष्वविकृतबुद्धिः स्वर्गादिफलाभिसंधिरहितः केवलकार्यबुद्ध्या युद्धमारभस्व एवं कुर्वाणो न पापमवाप्स्यसि। पापं दुःखरूपं संसारं नावाप्स्यसि। संसारबन्धान्मोक्ष्यस इत्यर्थः॥ ३८॥**

अ० टी०—मया पूर्वं पापसंभावना कृता तत्र का गतिरित्याशंक्याह—सुखदुःखे इति । सुखदुःखे देहस्य लाभालाभौ राज्यस्य जयाजयौ यशसः । समौ कृत्वा हर्षविषादरहितः सन् ततस्तदनंतरं मदाज्ञाविचारेण युद्धाय युज्यस्व युक्तो भव । एवंकृते पापं नावाप्स्यसीत्यर्थः ॥ ३८ ॥

नी० टी०—स्वधर्मस्य युद्धस्याकरणे धर्मकीर्त्योर्नाशः पापावाप्तिश्चाथ चेदिति श्लोकेन भगवता यद्यप्युक्ता तथापि युद्धस्य अर्जुनाभिमते काम्यत्वपक्षे । 'अहो बत महत्पापं कर्तुं व्यवसिता वयं ॥ यद्राज्यसुखलोभेन हंतुं स्वजनमुद्यताः ' इति तत्करणे पापप्रसक्तिरस्ति तां निवारयितुं सिद्ध्यसिद्ध्योः समत्वलक्षणं योगमाह—सुखदुःखे इति । समे कृत्वा सुखदुःखयोस्तद्धेत्वोः राज्यलाभालाभयोस्तद्धेत्वोश्च जयाजययोः रागद्वेषावकृत्वेत्यर्थः । केवलं स्वधर्मोऽयमिति मत्वा युद्धाय युज्यस्व घटस्व एवं कुर्वंस्त्वं पापं नावाप्स्यसि । यस्तु राज्यलोभेन युद्धं करोति तस्यास्त्येव पापमिति भावः । कथं तर्हि स्वधर्मत्वेनानुष्ठितेऽपि युद्धे हतो वा प्राप्स्यसि स्वर्गमित्यादिफलस्मरणं आनुषंगिकमिति ब्रूमः । तथा चापस्तंबः । 'तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गंध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते न धर्महानिर्भवति' इति आम्रनिदर्शनेन प्रतिपादयति ॥ ३८ ॥

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ॥**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥**

**शां० भा०—शोकमोहापनयनाय लौकिको न्यायः स्वधर्ममपि चावेक्ष्येत्याद्यैः श्लोकैरुक्तो न तु तात्पर्येण । परमार्थदर्शनं त्विह प्रकृतं तच्चोक्तमुपसंह्रियत एषा तेऽभिहितेति शास्त्रविषयविभागप्रदर्शनाय । इह हि दर्शिते पुनः शास्त्रविषयविभाग उपरिष्टाज्ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्तीत्यत आह—एषा त इति । एषा ते तुभ्यमभिहितोक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षाच्छोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम् । योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वंद्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे चेमामनन्तरमेवोच्यमानां बुद्धिं शृणु । तां बुद्धिं स्तौति प्ररोचनार्थं बुद्ध्या यया योगविषयया युक्तो हे पार्थ ! कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धस्तं प्रहास्यसीश्वरप्रसादनिमित्तज्ञानप्राप्तेरित्यभिप्रायः ॥ ३९ ॥**

शां० आ०—ननु स्वधर्ममपि चावेक्ष्येत्यादिश्लोकैर्न्यायावष्टम्भेन शोकमोहापनयनस्य तात्पर्येणोक्तत्वात्तस्मिन्नुपसंहर्तव्ये किमिति परमार्थदर्शनमुपसंह्रियते तत्राऽऽह—**शोकेति** । स्वधर्ममपीत्यादिभिरतीतैः श्लोकैः शोकमोहयोः स्वजनमरणगुर्वादिवधशङ्कानिमित्तयोः सम्यग्ज्ञानप्रतिबन्धकयोरपनयार्थं वर्णाश्रमकृतं धर्ममनुतिष्ठतः स्वर्गादि सिध्यति नान्यथेत्यन्वयव्यतिरेकात्मको लोकप्रसिद्धो न्यायो यद्यपि दर्शितस्तथाऽपि नासौ तात्पर्येणोक्त इत्यर्थः । किं तर्हि तात्पर्येणोक्तं तदाह—**परमार्थेति** । न त्वेवाहं जातु नाऽऽसमित्यादि सप्तम्या परामृश्यते । उक्तं—' न जायते म्रियते वा ' इत्यादिनोपपादितमित्यर्थः । उपसंहारप्रयोजनमाह—**शास्त्रेति** । तस्य वस्तुद्वारा विषयो निष्ठाद्वयं तस्य विभक्तस्य तेनैव विभागेन प्रदर्शनार्थं परमार्थदर्शनोपसंहार इत्यर्थः । ननु किमित्यत्र शास्त्रस्य विषयविभागः प्रदर्श्यत उत्तरत्रैव तद्विभागप्रवृत्तिप्रतिपत्त्योः संभवादिति तत्राऽऽह—**इह हीति** । शास्त्रप्रवृत्तेः श्रोतृप्रतिपत्तेश्च सौकर्यार्थमादौ विषयविभागसूचनमित्यर्थः । उपसंहारस्य फलवत्त्वमेवमुक्त्वा तमेवोपसंहारमवतारयति—**अत आहेति** । परमार्थतत्त्वविषयां ज्ञाननिष्ठामुक्तामुपसंहृत्य वक्ष्यमाणां संगृह्णाति—**योगे त्विति** । तामेव बुद्धिं विशिष्टफलवत्त्वेनाभिष्टौति—**बुद्ध्येति** । तत्रोपसंहारभागं विभजते—**एषेत्यादिना** । बुद्धिशब्दस्यान्तःकरणविषयत्वं व्यावर्तयति—**ज्ञानमिति** । तस्य सहकारिनिरपेक्षस्य विशिष्टं फलवत्त्वमाचष्टे—**साक्षादिति** । शोकमोहौ रागद्वेषौ कर्तृत्वं भोक्तृत्वमित्या-

दिरनर्थः संसारस्तस्य हेतुर्दोषः स्वाज्ञानं तस्य निवृत्तौ निरपेक्षं कारणं ज्ञानमज्ञाननिवृत्तौ ज्ञानस्यान्वयव्यतिरेकसमधिगतसाधनत्वादित्यर्थः। योगे त्विमामित्यादि व्याकुर्वन्योगशब्दस्य प्रकृते चित्तवृत्तिनिरोधविषयत्वं व्यवच्छिनत्ति—**तत्प्राप्तीति**। प्रकृतं मुक्त्युपयुक्तं ज्ञानं तत्पदेन परामृश्यते। ज्ञानोदयोपायमेव प्रकटयति—**निःसङ्गतयेति**। फलाभिसंधिवैधुर्यं निःसङ्गत्वम्। बुद्धिस्तुतिप्रयोजनमाह—**प्ररोचनार्थमिति**। अभिष्टुता हि बुद्धिः श्रद्धातव्या सत्यनुष्ठातारमधिकरोति तेन स्तुतिरर्थवतीत्यर्थः। कर्मानुष्ठानविषयबुद्ध्या कर्मबन्धस्य कुतो निवृत्तिर्न हि तत्त्वज्ञानमन्तरेण समूलं कर्म हातुं शक्यमित्याशङ्क्याऽऽह—**ईश्वरेति**॥ ३९॥

**आ० भा०—सांख्यं ज्ञानम्। 'शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते' इति भगवद्वचनाद्व्यासस्मृतौ। योगउपायः 'दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये' इतिप्रयोगाद्भागवते। नेतरौ सांख्ययोगौ उपादेयत्वेन विवक्षितौ। कुत्रचित्सामस्त्येन। कर्मयोगइत्यादिप्रयोगाच्च। निंदितत्वाच्चेतरयोर्मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पंचरात्रस्तुत्या वेदानां त्वेकार्थत्वान्न विरोधः। पार्थक्यं तु सांख्याद्यपेक्षया युक्तम्। तत्रैव चित्रशिखंडिशास्त्रे पंचरात्रमूले वेदैक्योक्तेश्च एवमेव सर्वत्र सांख्ययोगशब्दः उपादेयवाचको वर्णनीयः। युक्तेश्च ज्ञानं पूर्वं जैवमुक्तम्। उपायश्च वक्ष्यते। बुध्यतेऽनयेतिबुद्धिः। सांख्यविषयो यया वाचा बुध्यते सा वागभिहितेत्यर्थः॥ ३९॥**

**आ० ज०—**पूर्वप्रकरणोपसंहारपूर्वकं तत्संगतत्वेनोत्तरप्रकरणारंभप्रतिज्ञार्थमेषा तेभिहितेत्युक्तम्। तत्र सांख्ययोगशब्दौ कापिलपातंजलशास्त्रवचनाविति प्रतीतिनिरासाय व्याचष्टे—**सांख्यमिति**। प्रतीतार्थावेव कुतो न स्यातामित्यतआह—**नेतराविति**। इतरौ शास्त्रलक्षणौ। कुत्रचिदागमे एतौ तूपादेयौ। बुद्ध्या युक्त इत्यादिवचनात्। अतो न तावत्र विवक्षिताविति वाक्यशेषः। प्रकृतिपुरुषविवेकादेस्तदुक्तस्योपादेयत्वात्कथमेतदित्यत उक्तम्—**सामस्त्येनेति**। एकदेशस्योपादेयतया तदुपादेयत्वे सौगतादेरपि तत्प्रसंग इति भावः। इतोपि न योगः पातंजलशास्त्रमित्याह—**कर्मेति**। अस्मिन्नेव योगे कर्मयोगो विशिष्यत इत्यादिप्रयोगाच्च। न हि शास्त्रे कर्मयोगशब्दोऽस्तीति। न केवलमुपादेयत्वाभावान्नेतरौ विवक्षितौ किंत्वित्यत आह—**निंदितत्वादिति**। कथं निंदितत्वमित्यत आह—**भिन्नेति**। 'सांख्यं योगः पाशुपतं वेदारण्यकमेव च। ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा' इतिसांख्यादीनां विरुद्धमतत्वमुक्त्वा 'पंचरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्। ज्ञानेष्वेतेषु राजेंद्र सर्वेष्वेतद्विशिष्यते' इति पंचरात्रस्तुत्या विरुद्धानामेकस्तुतिरपरनिंदां गमयतीति प्रसिद्धमेवेति भावः। एवं तर्हि वेदारण्यकस्यापि निंदा स्यादित्यत आह—**वेदानां त्विति**। एकार्थत्वात्पंचरात्रेण। ज्ञानान्येतानि भिन्नानीति पार्थक्योक्तेः कथमेकार्थत्वमित्यत आह—**पार्थक्यं त्विति**। युक्तमित्यनेन तेषामेव प्रकृतत्वादित्यभिप्रैति तथा चाद्यवाक्ये वेदारण्यकपदेन पंचरात्रमुत्तरवाक्ये च पंचरात्रपदेन वेदारण्यकमुपलक्ष्यतइति भावः। वेदपंचरात्रयोरेकार्थत्वं कुतइतिचेत् उदाहृतमोक्षधर्मवाक्यार्थोन्यथानुपपत्त्या तावत्। अपरं प्रमाणमाह—**तत्रैवेति**। मोक्षधर्मएव 'ये हि ते यतयः ख्याताः सप्तचित्रशिखंडिनः। तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्॥ वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ' इत्यादिना चित्रशिखंडिशास्त्रस्य वेदैक्योक्तेश्च असंगतमेतदित्यतआह—**पंचरात्रेति**। पंचरात्रमूलकस्येत्यर्थः। एतच्च वैखानससंहितोपक्रमएव प्रसिद्धम्। अतएतद्व्याख्यानं ज्ञानयोगेन सांख्यानां सांख्ययोगौ पृथग्बाला इत्यादावप्यतिदिशति—**एवमेवेति**। शब्दइतिजात्यभिप्रायमेकवचनं। इतोप्यत्र सांख्ययोगशब्दौ ज्ञानोपायवाचिनावित्याह—**युक्तेश्चेति**। तामेव युक्तिं दर्शयति—**ज्ञानमिति**। अत्रोक्तवक्ष्यमाणयोरर्थयोः सांख्ययोगशब्दौ प्रयुक्तावुक्तवक्ष्यमाणार्थौ ज्ञानोपायावेवोति तदर्थावेतौ युक्ताविति—**जैवं ज्ञानमिति**। जीवस्य तत्त्वमित्यर्थः। यद्यपीश्वरतत्त्वं चोक्तं तथापि तादर्थ्येनेत्यदोषः। ननु बुद्धिर्ज्ञानं तदुत्पायत एव न त्वत्राभिहितं नापि श्राव्यते। तत्कथमुच्यते सांख्ये बुद्धिरभिहिता योगे त्विमां शृण्विति तत्राह—**बुध्यत इति**। वागिति शेषः। ननु सांख्यं न वाचोधिकरणं तत्कथं सप्तमी किमर्थं च प्रसिद्धवाक्शब्दपरित्यागेनाप्रसिद्धबुद्धिशब्दोपादानमित्यत आह—**सांख्येति**। सांख्यं चासौ विषयश्च अनेन विषयसप्तमीयमित्याह। नाविशदं वाङ्मात्रमुक्तं किं तु तव बोधो यथोत्पद्यते तथेत्यप्रसिद्धपदोपादानप्रयोजनमित्युक्तं भवति॥ ३९॥

**रा० भा०—एवमात्मयाथात्म्यज्ञानमुपदिश्य तत्पूर्वकं मोक्षसाधनभूतं कर्मयोगं वक्तुमारभते। सांख्या बुद्धिः बुद्ध्यावधारणीयमात्मतत्त्वं सांख्यं ज्ञातव्यम्। आत्मतत्त्वे तज्ज्ञानाय या बुद्धिरभिधेया नत्वेवाहमित्यारभ्य तस्मात्सर्वाणि भूतानीत्यन्तेन सैषाऽभिहिता। आत्मज्ञानपूर्वकमोक्षसाधन-**

भूतकर्मानुष्ठाने यो बुद्धियोगो वक्तव्यः स इह योगशब्देनोच्यते । 'दूरेण ह्यवरं कर्म बुद्धियोगात्' ॥ इति हि वक्ष्यते । तत्र योगे या बुद्धिर्वक्तव्या तामिमामभिधीयमानां शृणु । यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि । कर्मणा बन्धः संसारबन्ध इत्यर्थः ॥ ३९ ॥

अ० टी०—एवं सांख्यमात्मज्ञानात्मकमुपदिश्योपसंहरति—एषेति । एषा पूर्वोक्ता ते तव सांख्ये आत्मानात्मप्रकाशके बुद्धिः करणार्थमभिहिता । सांख्यस्य भगवतो विप्रयोगरसात्मककुंडलरूपत्वात्तत्र भगवदात्मकात्मज्ञानेन न स्वास्थ्यं भवति तस्मादात्मज्ञानबुद्धिरभिहिता उक्तेत्यर्थः । तज्ज्ञानार्थमेव एतच्छ्रवणेपि चेत्तव न ज्ञानं जातं तदा कर्मयोगेन मोहो निवर्तिष्यत इति कर्मयोगं शृण्वित्याह—योग इति । योगे तु इमां बुद्धिं शृणु यया बुद्ध्या युक्तः सन् पार्थ मद्भक्तवर कर्मबन्धं कृतकर्मपापं प्रहास्यसि त्यक्ष्यसीत्यर्थः । त्यागे प्रकर्षः पुनस्तद्भावानुदयः ॥ ३९ ॥

नी० टी०—एवमर्जुनस्य पूर्वोक्तौ द्वावपि मोहावपनीतौ तत्र कं घातयति हंति कमिति कर्तृत्वकारयितृत्वयोरात्मन्यसंभव उक्तः । ततो युद्धाय युज्यस्वेति नियोगश्चोक्तः । न ह्यकर्तुराकाशवत्सर्वगतस्य नियोज्यत्वं संभवतीति परस्परव्याहतमेतदितीमामाशंकां अधिकारिभेदेनोभयं व्यवस्थापयन् परिहरति—एषा ते इति । एषा ते तुभ्यं अभिहिता अशोच्यानन्वशोचस्त्वमित्यादिना स्वधर्ममपि चावेक्ष्येत्यतः प्राक्तनेन संदर्भेण उक्ता । सांख्ये सम्यक् ख्यायते प्रकथ्यते वस्तुतत्त्वमनयेति संख्या उपनिषत् तत्र विदिते सांख्ये औपनिषदे ब्रह्मणि विषये बुद्धिर्ज्ञानं संसारनिवर्त्तकं एषा ते सांख्ये बुद्धिरभिहितेति संबंधः । योगे 'सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते' इति वक्ष्यमाणलक्षणे विषये तुशब्दः पूर्ववैलक्षण्यद्योतनार्थः । वक्ष्यति च ज्ञानकर्मनिष्ठयोर्विभिन्नाधिकारिकत्वं । 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ॥ ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति एतेन ज्ञानकर्मणोः समुच्चयशंकाऽप्यपास्ता । इमां स्वधर्ममपि चावेक्ष्येत्यादिनाऽनंतरग्रंथेनोक्तामपि विस्तरेणाभिधीयमानां शृणु इमामेव बुद्धिं स्तौति सार्धेन—बुद्ध्येत्यादिना । ननु कर्मबंधप्रहाणमात्मज्ञानेनैव श्रूयते । "तपसैवात्मपदं विदित्वा न लिप्यते कर्मणा पापकेन" इति श्रुतेः । कर्मयोगस्तु कर्मबंधं दृढीकरिष्यत्येवेति कथमुच्यते कर्मबंधं प्रहास्यसीति चेत् श्रुतिबलादिति ब्रूमः । तथा हि । "ईशावास्यमिदं सर्वं यत्किंचिज्जगत्यां जगत् ॥ तेन त्यक्तेन भुंजीथा मा गृधः कस्य स्विद्धनं । कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इति श्रुतिरीश्वरेणेदं सर्वं स्तंभितमस्तीति न कश्चित्किंचित्स्वेच्छया कर्तुं प्रभवति । अतः सर्वत्र ममताहीनः सन् भोक्तृत्वकर्तृत्वाभिमानत्यागेनैव भोगान् भुंक्ष्व कर्माणि च कुरु । एवं कुर्वति त्वयि कर्मलेपो नास्ति इतोऽन्यदुपायांतरं च नास्तीति वदति । तस्मात् कनककार्ष्णायसादिवत् केनचिद्विशेषरूपेणोपेतं कर्मैव सजायतीयोच्छेदनिमित्तं भविष्यतीति युक्तमुक्तं कर्मयोगेनापि कर्मबंधं प्रहास्यसीति ॥ ३९ ॥

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ॥**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥**

शां० भा०—किंचान्यत्—नेहाभीति । नेह मोक्षमार्गे कर्मयोगेऽभिक्रमनाशोऽभिक्रमणमभिक्रमः प्रारम्भस्तस्य नाशो नास्ति । यथा कृष्यादेर्योगविषये प्रारम्भस्य नानैकान्तिकफलत्वमित्यर्थः ।

किं च नापि चिकित्सावत्प्रत्यवायो विद्यते। किं तु भवति। स्वल्पमप्यस्य योगधर्मस्यानुष्ठितं त्रायते रक्षति महतः संसारभयाज्जन्ममरणादिलक्षणात् ॥ ४० ॥

**शां० आ०**—ननु कर्मानुष्ठानस्यानैकान्तिकफलत्वेनाकिंचित्करत्वादनेकानर्थकलुषितत्वेन दोषवत्त्वाच्च योगबुद्धिरपि न श्रद्धेयेति तत्राऽऽह—**किंचेति**। अन्यच्च किंचिदुच्यते कर्मानुष्ठानस्याऽऽवश्यकत्वे कारणमिति यावत्। कर्मणा सह समाधेरनुष्ठातुमशक्यत्वादनेकान्तरायसंभवात्तत्फलस्य च साक्षात्कारस्य दीर्घकालाभ्याससाध्यस्यैकस्मिञ्जन्मन्यसंभवादर्थाद्योगी भ्रश्येतानर्थे च निपतेदित्याशङ्क्याऽऽह—**नेहेति**। प्रतीकत्वेनोपात्तस्य नकारस्य पुनरन्वयानुगुणत्वेन नास्तीत्यनुवादः। यत्तु कर्मानुष्ठानस्यानैकान्तिकफलत्वेनाकिंचित्करत्वमुक्तं तद्दूषयति—**यथेति**। कृषिवाणिज्यादेरारम्भस्यानियतं फलं संभावनामात्रोपनीतत्वान्न तथा कर्मणि वैदिके प्रारम्भस्य फलमनियतं युज्यते शास्त्रविरोधादित्यर्थः। यत्तूक्तमनेकानर्थकलुषितत्वेन दोषवदनुष्ठानमिति तत्राऽऽह—**किंचेति**। इतोऽपि कर्मानुष्ठानमावश्यकमिति प्रतिज्ञाय हेत्वन्तरमपि स्फुटयति—**नापीति**। चिकित्सायां हि क्रियमाणायां व्याध्यतिरेको वा मरणं वा प्रत्यवायोऽपि संभाव्यते कर्मपरिपाकस्य दुर्विवेकत्वान्न तथा कर्मानुष्ठाने दोषोऽस्ति विहितत्वादित्यर्थः। संप्रति कर्मानुष्ठानस्य फलं पृच्छति—**किं त्विति**। उत्तरार्धं व्याकुर्वन्विवक्षितं फलं कथयति—**स्वल्पमपीति**। सम्यग्ज्ञानोत्पादनद्वारेण रक्षणं विवक्षितम्—'सर्वपापेषु सक्तोऽपि ध्यायन्निमिषमच्युतम्। यतिस्तपस्वी भवति पङ्क्तिपावनपावनः' इति स्मृतेरित्यर्थः ॥ ४० ॥

**आ० भा०**—॥ ४० ॥

आ० ज०—॥ ४० ॥

**रा० भा०**—वक्ष्यमाणबुद्धियुक्तस्य कर्मणो माहात्म्यमाह—इह कर्मयोगे नाभिक्रमनाशोऽस्ति। अभिक्रम आरम्भः नाशः फलसाधनभावनाशः। आरब्धस्यासमाप्तस्य विच्छिन्नस्यापि न निष्फलत्वम्। आरब्धस्य विच्छेदे प्रत्यवायोऽपि न विद्यते। अस्य कर्मयोगाख्यस्य स्वधर्मस्य स्वल्पांशोऽपि महतो भयात्संसारभयात्त्रायते अयमर्थः। 'पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।' इत्युत्तरत्र प्रपञ्चयिष्यते। अन्यानि हि लौकिकानि वैदिकानि च साधनानि विच्छिन्नानि न हि फलप्रसवाय भवन्ति प्रत्यवायाय च भवन्ति ॥ ४० ॥

**अ० टी०**—ननु कर्मणां बाहुल्यात्कालादिसाध्यत्वाच्च कृतानां पूर्णत्वाभावाद्वैकल्यं प्रत्युताङ्गवैगुण्यादिना प्रत्यवायादिसंभावना भवेदिति कथं बन्धो न भविष्यतीतिचेदित्याशंक्यार्जुनस्य भगवत्कुंडलात्मकसंयोगरूपयोगस्वरूपाज्ञानात्तज्ज्ञानार्थं तत्स्वरूपमाह—**नेहाभिक्रमनाश इति**। भगवन्मार्गे भगवदर्थं भगवदाज्ञारूपेण कर्त्तव्यत्वं कर्मणां न तु फलसाधकत्वेन तस्मान्न पूर्वोक्तदोषसंभावनात्र। तदेवाह। इह मदाज्ञात्वेन क्रियमाणस्य कर्मणोऽभिक्रमनाशः प्रारब्धः कर्मनाशो नास्ति निष्फलत्वं न भवतीत्यर्थः। प्रत्यवायश्च न विद्यते। यतोऽस्य धर्मस्य स्वल्पमपि कृतं महतो भयात् त्रायते रक्षति। अत्रायं भावः। अन्यत्र कृतकर्मसाफल्यार्थं साङ्गत्वाय च भगवत्स्मरणं बोध्यते यस्य स्मृत्येत्यादिना तत्र साक्षाद्भगवदर्थं कृतानां कर्मणां कथं वैफल्यं भवेत् ॥ ४० ॥

**नी० टी०**—एतदेवोपपादयति—**नेहेति**। इह कर्मबंधप्रहाणार्थे कर्मयोगेऽनुष्ठीयमाने अभिक्रम्यते व्याप्यतइत्यभिक्रमः कर्मारंभः कर्मैव वा तस्य नाशो नास्ति अन्यत्तु फलं दत्त्वा नश्यति न त्विदमिष्टफलस्याजननात्। नन्वेतस्यापि काम्यांतःपातितया नित्याकरणजनितः प्रत्यवाय उत्पाद्यैव सकृदनुष्ठितस्य बंधप्रहाणप्रत्यवायपरिहाराख्यफलद्वयहेतुत्वायोगादित्याशंक्याह—**प्रत्यवायो न विद्यत इति**। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुत्या संयोगपृथक्त्वन्यायेन "दक्षेंद्रिय-

कामस्य जुहुयात्'' इत्यनेन नित्यस्य दध्नो वीर्यार्थत्वमिव नित्यानामपि कर्मणां विविदिषार्थत्वं विनियोगबला-त्सिद्ध्यति । ततश्च काम्येनैव प्रयोगेण नित्यस्यापि सिद्धेर्न नित्याकरणनिमित्तो वाऽकाम्यत्वात्सर्वांगानु-पसंहारनिमित्तो वा प्रत्यवायो विद्यते नित्यानामेव विनियोगात् । नित्येषु च यथाशक्त्युपबंधस्यानुज्ञानात् वार्त्तिके तु काम्यानामप्यत्र विनियोगो दृष्टः । यथा ' वेदानुवचनादीनामैकात्म्यज्ञानजन्मने । तमेतमिति वाक्येन नित्यानां वक्ष्यते विधिः ॥ यद्वा विविदिषार्थत्वं काम्यानामपि कर्मणां । तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः' इति । अस्मिन्पक्षे काम्यानामपि तुल्यफलत्वात् नित्यवद्यथाशक्त्युपबंधो भविष्यतीति न सर्वांगानुपसंहारजनितः प्रत्यवायो विद्यते स्वल्पमपि अस्य योगधर्मस्यानुष्ठितं अनुपभुक्त-बीजकल्पं । ' जन्मजन्मांतराभ्यस्तं दानमध्ययनं तपः ॥ तेनैवाभ्यासयोगेन तच्चैवाभ्यसते पुनः' इति स्मृतेरुत्तरोत्तरसंस्काराधानद्वारा स्वसजातीयवृद्धेर्निमित्तं सत्कामादिदोषक्षपणद्वारा महतो भयात्संसारात्त्रायते। तस्मात्सांख्यानधिकारिणा कर्मयोग एवानुष्ठेय इति भावः ॥ ४० ॥

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ॥**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥**

**शां० भा०—येयं सांख्ये बुद्धिरुक्ता योगे च वक्ष्यमाणलक्षणा सा—व्यवसायेति । व्यव-सायात्मिका निश्चयस्वभावैकैव बुद्धिरितरविपरीतबुद्धिशाखाभेदस्य बाधिका सम्यक्प्रमाणजनितत्वा-दिह श्रेयोमार्गे हे कुरुनन्दन ! याः पुनरितरा बुद्धयो यासां शाखाभेदप्रचारवशादनन्तोऽपारोऽनुप-रतः संसारो नित्यप्रततो विस्तीर्णो भवति, प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्चोपरतास्वनन्तभेद-बुद्धिषु संसारोऽप्युपरमते। ता बुद्धयो बहुशाखा बह्व्यः शाखा यासां ता बहुशाखा बहुभेदा इत्येतत् । प्रतिशाखाभेदेन ह्यनन्ताश्च बुद्धयः केषामव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानामित्यर्थः॥४१॥**

**शां० आ०—**ननु बुद्धिद्वयातिरिक्तानि बुद्ध्यन्तराण्यपि काणादादिशास्त्रप्रसिद्धानि विद्यन्ते तथा च कथं बुद्धिद्वयमेव भगवतोपदिष्टमिति तत्राऽऽह—**येयमिति** । सैवैका प्रमाणभूता बुद्धिरित्याह—**व्यवसायात्मिकेति** । बुद्ध्यन्तराण्यविवेक-मूलान्यप्रमाणानीत्याह—**बहुशाखा हीति** । व्यवसायात्मिकाया बुद्धेः श्रेयोमार्गे प्रवृत्ताया विवक्षितं फलमाह—**इतरेति** प्रकृतबुद्धिद्वयापेक्षयेतरा विपरीताश्चाप्रमाणजनिताः स्वकपोलकल्पिता या बुद्धयस्तासां शाखाभेदः संसारहेतुस्तस्य बाधिकेति यावत् । तत्र हेतुः—**सम्यगिति** । निर्दोषवेदवाक्यसमुत्थत्वादुक्तमुपायोपेयभूतं बुद्धिद्वयं साक्षात्पारम्पर्याभ्यां संसारहेतुबाधक-मित्यर्थः । उत्तरार्धं व्याचष्टे—**याः पुनरिति** । प्रकृतबुद्धिद्वयापेक्षयाऽर्थान्तरत्वमितरत्वम् । तासामनर्थहेतुत्वं दर्शयति—**यासा मिति** । अप्रामाणिकबुद्धीनां प्रसक्तानुप्रसक्त्या जायमानानामतीव बुद्धिपरिणामविशेषाः शाखाभेदास्तेषां प्रचारः प्रवृत्तिस्तद्वशा दित्येतत् । अनन्तत्वं सम्यग्ज्ञानमन्तरेण निवृत्तिविरहितत्वम् । अपारत्वं कार्यस्यैव सतो वस्तुभूतकारणविरहितत्वम् । अनुपरतत्वं स्फोरयति—**नित्येति** । कथं तर्हि तन्निवृत्त्या पुरुषार्थपरिसमाप्तिस्तत्राऽऽह—**प्रमाणेति** । अन्वयव्यतिरेकाख्येनानुमानेनाऽऽगमेन च पदार्थपरिशोधनपरिनिष्पन्ना विवेकात्मिका या बुद्धिस्तां निमित्तीकृत्य समुत्पन्नसम्यग्बोधानुरोधात्प्रकृता विपरीतबुद्धयो व्यावर्तन्ते । तास्वसंख्यातासु व्यावृत्तासु सतीषु निरालम्बनतया संसारोऽपि स्थातुमशक्नुवन्नुपरतो भवतीत्यर्थः । याः पुन-रित्युपक्रान्तास्तत्त्वज्ञानापनोद्याः संसारास्पदभूता विपरीतबुद्धीरनुक्रामति—**ता बुद्धय इति** । बुद्धीनां वृक्षस्येव कुतो बहुशा-खित्वं तत्राऽऽह—**बहुभेदा इत्येतदिति** । एकैकां बुद्धिं प्रति शाखाभेदोऽवान्तरविशेषस्तेन बुद्धीनामसंख्यात्वं प्रख्यातमि-त्याह—**प्रतिशाखेति** । बुद्धीनामानन्त्यप्रसिद्धिप्रद्योतनार्थो हिशब्दः । सम्यग्ज्ञानवतां यथोक्तबुद्धिभेदभाक्त्वमप्रसिद्धमित्याशङ्क्य प्रत्याह—**केषामित्यादिना** ॥ ४१ ॥

**आ० भा०—योगइमां बुद्धिं शृण्वित्युक्तम् । बह्व्यो हि बुद्धयो मतभेदात् । तत्कथमेकत्र निष्ठां करोमीत्यतआह—व्यवसायात्मिकेति। सम्यग्युक्तिनिर्णीतानां मतानामैक्यमेवेत्यर्थः ॥४१॥**

आ० ग०—ननु व्यवसायात्मिकेति श्लोकेन प्रतिज्ञातो योग उच्यते। नापि बुद्ध्या युक्तइत्यादिवत्प्रशंसा तत्किमर्थोयमित्यत आह—**योग इति**। ज्ञानोपायविषयामिमां वक्ष्यमाणां वाचं शृणु श्रुत्वा तत्र निष्ठां कुर्वित्युक्तमित्यर्थः। श्रवणमात्रस्य विधिना विनाऽसंभवात्। बह्व्यो हि बुद्धयो ज्ञानोपायविषया वाचः परस्परविरुद्धाः संति। कथं। मतभेदात् एकमतमवलंबमानाः किंचिज्ज्ञानसाधनमाचक्षते। अपरं मतमाश्रितास्तत्प्रतिषेधेनान्यदाहुः। तत्र चेदमेव तत्त्वं नेदमितिविनिगमकं नास्ति। तत्तस्मात्कथमेकत्र त्वदीयायामेव वाचि निष्ठां विश्वासं करोमि। ननु सर्वाण्यपि मतानि व्यवसायात्मकान्येव स्वे स्वेऽर्थे सर्वेषां संदेहाभावात्। अतः कथमुच्यते व्यवसायात्मिका अव्यवसायिनां बुद्धयइतितत्राह—**सम्यगिति**। युक्तिरिति प्रमाणसामान्यमुच्यते। प्रमाणत्वेन निर्णीतत्वमेवात्र व्यवसायशब्दार्थो न निश्चयमात्रमित्यर्थः। प्रामाणिकमेव मतं ग्राह्यं तत्र न कदाचिद्विप्रतिपत्तिः यतस्तत्रैकत्र निष्ठाभावः। अप्रामाणिकेषु विद्यमानापि विप्रतिपत्तिः किं करिष्यतीति भावः॥ ४१॥

**रा० भा०—काम्यकर्मविषयाया बुद्धेर्मोक्षसाधनभूतकर्मविषयां बुद्धिं विशिनष्टि। इह शास्त्रीये सर्वस्मिन्कर्मणि व्यवसायात्मिका बुद्धिरेका। मुमुक्षुणाऽनुष्ठेये कर्मणि बुद्धिर्व्यवसायात्मिका बुद्धिः। व्यवसायो निश्चयः। सा हि बुद्धिरात्मयाथात्म्यनिश्चयपूर्विका। काम्यकर्मविषया तु बुद्धिरव्यवसायात्मिका। तत्र हि कामाधिकारे देहादतिरिक्तात्मास्तित्वमात्रमपेक्षितम्। नात्मस्वरूपयाथात्म्यनिश्चयः। स्वरूपयाथात्म्यनिश्चयेऽपि स्वर्गादिफलार्थित्वतत्साधनानुष्ठानतत्फलानुभवानां संभवादविरोधाच्च। सेयं व्यवसायात्मिका बुद्धिरेकफलसाधनविषयतयैका। एकस्मै मोक्षफलाय हि मुमुक्षोः सर्वाणि कर्माणि विधीयन्ते। अतः शास्त्रार्थस्यैकत्वात् सर्वकर्मविषया बुद्धिरेकैव यथैकफलसाधनतयाग्नेयादीनां षण्णां सेतिकर्तव्यताकानामेकशास्त्रार्थतया तद्विषया बुद्धिरेका तद्वदित्यर्थः। अव्यवसायिनां तु स्वर्गपुत्रपश्वन्नादिफलसाधनकर्माधिकृतानां बुद्धयः फलानन्त्यादनन्ताः। तत्रापि बहुशाखाः एकस्मै फलाय चोदितेऽपि दर्शपूर्णमासादौ कर्मणि आयुराशास्ते सुप्रजास्त्वमाशास्त इत्याद्यवगतावान्तरफलभेदेन बहुशाखात्वं च विद्यते। अतोऽव्यवसायिनां बुद्धयोऽनन्ता बहुशाखाश्च। एतदुक्तं भवति। नित्येषु नैमित्तिकेषु कर्मसु प्रधानफलान्यवान्तरफलानि च यानि श्रूयमाणानि तानि सर्वाणि परित्यज्य मोक्षैकफलतया सर्वाणि कर्माण्येकशास्त्रार्थतयानुष्ठेयानि काम्यानि च स्ववर्णाश्रमोचितानि तत्तत्फलानि परित्यज्य मोक्षफलसाधनतया नित्यनैमित्तिकैरेकीकृत्य यथाबलमनुष्ठेयानीति॥ ४१॥**

अ० टी०—किं च। फलार्थं कर्मकर्तॄणामनेकत्र बुद्धिर्भवति मदाज्ञात्वेन कर्तॄणां मन्निष्ठत्वेनैकैव बुद्धिरिति भ्रमान्न वैपरीत्यशंकेत्याह—**व्यवसायात्मिका इति** हे कुरुनंदन सत्कुलोत्पन्न! इह भक्तिमार्गे व्यवसायात्मिका भगवदाज्ञयैव करिष्यामीति रूपैकैव भवति। अव्यवसायिनां बहिर्मुखानामनिश्चितहृदयानां बुद्धयोऽनंताश्च भवंति। फलार्थं बहुशाखाश्च भवंति। तत्र सांगत्वाभावात्प्रत्यवायादिसंभावना स्यादेव भक्तानां तु सांगत्वान्नैव वैफल्यप्रत्यवायादिसंभावना। अत एव भगवद्वाक्यम् 'मत्कर्म कुर्वतां पुंसां काललोपो भवेद्यदि॥ तत्कर्म तस्य कुर्वंति तिस्रः कोट्यो महर्षयः' इति॥ ४१॥

नी० टी०—नन्वेवं सांख्ययोगयोर्महाभयात्त्राणहेतुत्वं तुल्यं चेत्कोऽनयोर्विशेष इत्याशंक्य सांख्यानां पातशंका नास्ति योगिनां तु यावद्विदेहकैवल्यं पातशंकाऽस्तीत्याह—**व्यवसायात्मिकेति**। व्यवसायस्तत्त्वनिश्चयस्तदात्मिका तदाकारा बुद्धिरंतःकरणवृत्तिः अहं ब्रह्मास्मीति वाक्यजन्या ब्रह्माकारांतःकरणवृत्तिर्ब्रह्मविद्याभिधाना समस्तवृत्त्यंतरबाधेन सम्यगभ्युदिता एका एकैव। "सकृद्विभातो ह्येष ब्रह्मलोकः" इति श्रुतेः ब्रह्मैव लोको ब्रह्मलोक इह ब्रह्मैव न हि सकृतज्ज्ञाते ब्रह्मणि ज्ञातव्यं कर्त्तव्यं वा किंचिदवशि-

च्यते कृतकृत्यत्वाद्ब्रह्मविदोऽतोऽस्य पातशंका नास्ति । अव्यवसायिनामज्ञानिनां तु बुद्धयोऽनंताः ताश्च प्रत्येकं बहुशाखा इति इदमेव मम श्रेय इति निश्चयस्य दुर्लभत्वात्कदाचिदश्रेयस्यपि श्रेयोबुद्धौ सत्यां पातशंकास्तीति महांस्तयोर्विशेष इति भावः ॥ ४१ ॥

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ॥**
**वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥ ४२ ॥**

**शां० भा०—**येषां व्यवसायात्मिका बुद्धिर्नास्ति ते—यामिति । यामिमां वक्ष्यमाणां पुष्पितां पुष्पितवृक्ष इव शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति । केऽविपश्चितोऽल्पमेधसोऽविवेकिन इत्यर्थः । वेदवादरता बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रता हे पार्थ ! नान्यत्स्वर्गप्राप्त्यादिफलसाधनेभ्यः कर्मभ्योऽस्तीत्येवंवादिनो वदनशीलाः ॥ ४२ ॥

**शां० आ०—**यदि सांख्ययोगरूपैकैव प्रमाणभूता बुद्धिस्तर्हि सैव सर्वेषां चित्ते किमिति स्थिरा न भवति तत्राऽऽह—**येषामिति** । ते यामिमां वाचं प्रवदन्ति तयाऽपहृतचेतसां कामिनां कामवशान्निश्चयात्मिका बुद्धिर्न प्रायः स्थिरा भवतीत्याह—**ते यामिति** । इमामित्यध्ययनविध्युपात्तत्वेन प्रसिद्धत्वं कर्मकाण्डरूपाया वाचो विवक्ष्यते । वक्ष्यमाणत्वं क्रियाविशेषबहुलामित्यादौ द्रष्टव्यम् । किंशुको हि पुष्पशाली शोभमानोऽनुभूयते न पुरुषभोग्यफलभागी लक्ष्यते । तथेयमपि कर्मकाण्डात्मिका श्रूयमाणदशायां रमणीया वागुपलभ्यते साध्यसाधनसंबन्धप्रतिभानान्न त्वेषा निरतिशयफलभागिनी भवति कर्मानुष्ठानफलस्यानित्यत्वादिति मत्वाऽऽह—**पुष्पितामिति** । वाक्यत्वेन लक्ष्यतेऽर्थवत्त्वप्रतिभानाद्वस्तुतस्तु न वाक्यमर्थाभासत्वादित्याह—**वाक्यलक्षणामिति** । प्रवक्तॄणां वेदवाक्यतात्पर्यपरिज्ञानाभावं सूचयति—**अविपश्चित इति** । वेदवादा वेदवाक्यानि तानि च बहूनामर्थवादानां फलानां साधनानां च विधिशेषाणां प्रकाशकानि तेषु रतिरासक्तिस्तन्निष्ठत्वं तद्वत्त्वमपि तेषां विशेषणमित्याह—**वेदवादेति** । कर्मकाण्डनिष्ठत्वफलं कथयति—**नान्यदिति** । ईश्वरो वा मोक्षो वा नास्तीत्येवं वदन्तो नास्तिकाः सन्तः सम्यग्ज्ञानवन्तो न भवन्तीत्यर्थः ॥ ४२ ॥

**आ० भा०—**स्युरवैदिकानि मतानि अव्यवसायात्मकानि । नतु वैदिकानि । तेऽपि हि केचित्कर्माणि स्वर्गादिफलान्येवाहुरित्यतआह—यामिमामिति । यामाहुस्तयेत्यन्वयः । मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां वाचं प्रवदंति । वेदवादरताः । कर्मादिवाचकवेदवादरताः । वेदैर्यन्मुखत उच्यते तत्रैव रताः । नान्यदस्तीतिवादिनः । परोक्षविषयावेदाः । “ परोक्षप्रिया इव हि देवाः ॥ ” ‘ मां विधत्तेऽभिधत्ते माम् ’ इत्यादिभिः पारोक्ष्येण प्रायो भगवंतं वदंति ॥ ४२ ॥

**आ० ज०—**यामिमामितिश्लोकस्य प्रकृतोपयोगादर्शनात्संगतिमाह—**स्युरिति** । न तु वैदिकान्यप्यव्यवसायात्मकानि । ततः किं प्रकृतइत्यत उक्तम्—**तेऽपीति** । व्यवसायात्मकं मतं वैदिकमतमवलंबमाना अपि केचित् वैदिकानि सर्वाण्येव कर्माणि स्वर्गादिफलान्याहुः । भवांस्तु काम्यान्येव स्वर्गादिफलकानि निष्कामानीश्वरार्पणबुद्ध्याऽनुष्ठितानि तु ज्ञानार्थानीत्यभिप्रैति । तथाच त्वद्वचने निष्ठाऽनुपपत्तिस्तदवस्थेति भावः—**आह** । तेषां वैदिकाभासप्रदर्शनाय निंदामिति शेषः । भोगैश्वर्यगतेरपि प्रकृतत्वात्तयेतितत्परामर्शभ्रांतिं वारयति—**यामिति** । अन्यथा यच्छब्दः साकांक्षोऽनन्वितः स्यादिति भावः । वाचः पुष्पितत्वं कथमित्यत आह—**मोक्षेति** । अत्यल्पत्वेनोपमा । वेदवादरता इत्येतत्कथं निंदावचनमित्यत आह—**वेदेति** । कथमेतस्मात्पदाल्लभ्यते कथं चैषाऽपि निंदेत्यत आह—**वेदैरिति** । वादशब्दोऽत्रापाततः प्रतिपादने वर्तते । वक्ष्यते चात्राभिधानम् । आपाततः प्रतिपाद्यं च कर्मादि सावधारणं चैतत् । अब्भक्षो वायुभक्षइति यथेत्यर्थः । सावधारणत्वं कुतइतिचेत् उत्तरपदबलादिति तानि पठति—**नान्यदिति** । आपाततः प्रतीतार्थादन्यस्य सद्भावे भवेदेषां निंदा । कोऽसौ कुतश्चेत्यत आह—**परोक्षेति** । क्वचित्प्रकटवचनादिवेत्युक्तम् । अतएवप्रायइत्याह—**देवावेदाभिमानिनः** । तत्प्रकारसूचनार्थं मां विधत्तइत्याद्युदाहृतम् । वदंति वेदाः ॥ ४२ ॥

रा० भा०—अथ काम्यकर्माधिकृतान्निन्दति । यामिमां पुष्पितां पुष्पमात्रफलामापातरमणीयां वाचमविपश्चितोऽल्पज्ञा भोगैश्वर्यगतिं प्रति वर्त्तमानां प्रवदन्ति वेदवादरताः वेदेषु ये स्वर्गादिफलवादास्तेषु सक्ताः नान्यदस्तीति वादिनः तत्सङ्गातिरेकेण स्वर्गादेरधिकं फलं नान्यदस्तीति वदन्तः ॥ ४२ ॥

अ० टी०—नन्वेवं फलोत्तमतां ज्ञात्वा सर्व एवमेव व्यवसात्मिकां बुद्धिं कथं न कुर्वन्तीत्याशंक्याह—यामिमामिति त्रयेण । ये इमां पुष्पितां यां वाचं फलादिरहितां कुत्सितपुष्पयुक्तलतावद्दूरदृष्टरम्यां प्रवदन्ति प्रकर्षेण फलरूपतया वदंति तेषां व्यवसायात्मिका बुद्धिर्न विधीयते नोत्पद्यत इत्यर्थः । ननु तेपि शास्त्रोक्तज्ञानवन्तः कथं तथा वदंतीत्याकांक्षायामाह—अविपश्चित इति । मूर्खाः अज्ञाना इत्यर्थः। तेषां मूढत्वं विशेषणैः प्रकटयति । वेदवादरता इति वेदोक्तफलककर्मकरणमेवोचितं न तु निष्कामतया ते तथा । अत एव नान्यदस्तीति वादिनः वेदोक्तव्यतिरिक्तं कर्मफलं नास्तीति वदनशीलाः ॥ ४२ ॥

नी० टी०—उत्तरार्धमेव विवृणोति—यामिमामित्यादिना । यां पुष्पितां पुष्पितद्रुमवद्दूरतो रमणीयां वाचं । " अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति अपाम सोमममृता अभूम " इत्येवंरूपां प्रवदंति अविपश्चितः अव्यवसायिनो मूढाः यतो वेदवादरताः वेदांतर्गतेषु अर्थवादेषु । " यस्य पर्णमयी जुहूर्भवति न पापꣳश्लोकꣳशृणोति " इत्येवमादिषु रताः बद्धश्रद्धाः अत एव कर्मणोऽन्यत् आत्मज्ञानं तत्फलं मोक्षश्च नास्तीति वादिनो वदनशीलाः ॥ ४२ ॥

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ॥**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

**शां० भा०—ते च—कामात्मान इति । कामात्मानः कामस्वभावाः कामपरा इत्यर्थः । स्वर्गपराः स्वर्गः परः पुरुषार्थो येषां ते स्वर्गपराः स्वर्गप्रधाना जन्मकर्मफलप्रदां कर्मणः फलं कर्मफलं जन्मैव कर्मफलं जन्मकर्मफलं तत्प्रददातीति जन्मकर्मफलप्रदा तां वाचं प्रवदन्तीत्यनुषज्यते । क्रियाविशेषबहुलां क्रियाणां विशेषाः क्रियाविशेषास्ते बहुला यस्यां वाचि तां स्वर्गपशुपुत्राद्यर्था यया वाचा बाहुल्येन प्रकाश्यन्ते । भोगैश्वर्यगतिं प्रति भोगश्चैश्वर्यं च भोगैश्वर्ये तयोर्गतिः प्राप्तिर्भोगैश्वर्यगतिस्तां प्रति साधनभूता ये क्रियाविशेषास्तद्बहुलां तां वाचं प्रवदन्तो मूढाः संसारे परिवर्तन्त इत्यभिप्रायः ॥ ४३ ॥**

शां० आ०—प्रकृतान्प्रवक्तॄनविवेकिनो व्यवसायात्मकबुद्धिभाक्त्वासंभवसिद्ध्यर्थं विधान्तरेण विशिनष्टि—ते चेति । तेषां संसारपरिवर्तनपरिदर्शनार्थं प्रस्तुतां वाचमेव विशिनष्टि—जन्मेति । ननु पुंसां कामस्वभावत्वमयुक्तं चेतनस्येच्छावतस्तदात्मत्वानुपपत्तेरिति तत्राऽऽह—कामपरा इति । तत्परत्वं तत्तत्फलार्थित्वेन तत्तदुपायेषु कर्मस्वेव प्रवृत्ततया कर्मसंन्यासपूर्वकाज्ज्ञानाद्बहिर्मुखत्वम् । ननु कर्मनिष्ठानामपि परमपुरुषार्थापेक्षया मोक्षोपाये ज्ञाने भवत्याभिमुख्यमिति नेत्याह—स्वर्गेति । तत्परत्वं तस्मिन्नेवाऽऽसक्ततया तदतिरिक्तपुरुषार्थराहित्यनिश्चयवत्त्वम् । उच्चावचमध्यमदेहप्रभेदग्रहणं जन्म । वाचो यथोक्तफलप्रदत्वमप्रामाणिकमित्याशङ्कयानुष्ठानद्वारा तदुपपत्तिरित्याह—क्रियेति । क्रियाणामनुष्ठानानां यागदानादीनां विशेषा देशकालाधिकारिप्रयुक्ताः सत्राहीनैकाहलक्षणास्ते खल्वस्यां वाचि प्राचुर्येण प्रतिभान्तीत्यर्थः । कथं यथोक्तायां वाचि क्रियाविशेषाणां बाहुल्येनावस्थानमित्याशङ्क्य प्रकाश्यत्वेनेत्येतद्विशदयति—स्वर्गेति । तथाऽपि तेषां मोक्षोपायत्वोपपत्तेस्तन्निष्ठानां मोक्षाभिमुख्यं भविष्यति नेत्याह—भोगेति । यथोक्तां वाचमभिवदतां पर्यवसानं दर्शयति—तद्बहुलामिति ॥ ४३ ॥

**आ० भा०**—भोगैश्वर्यगतिं तत्प्राप्तिंप्रति । तत्प्राप्तिफला एव वेदा इति वदंतीत्यर्थः ॥ ४३ ॥

**आ० ज०**—गतिशब्दस्यावगतिरप्यर्थः प्रतीयेतेत्यतआह—**भोगेति** । अन्यथाऽसदनुवादप्रसंगादितिभावः । एषाऽपि कथं निंदेत्यतआह—**तत्प्राप्तीति** । मोक्षं वेदफलं न मन्यंतइत्यर्थः ॥ ४३ ॥

**रा० भा०**—कामात्मानः कामप्रवणमनसः स्वर्गपराः स्वर्गपरायणाः स्वर्गादिफलावसानेषु नर जन्मकर्माख्यफलप्रदां क्रियाविशेषबहुलां तत्त्वज्ञानराहिततया क्रियाविशेषप्रचुरां तेषां भोगैश्वर्यगतिं प्रति वर्तमानां यामिमां वाचं ये प्रवदन्तीति संबन्धः ॥ ४३ ॥

**अ० टी०**—ननु तेषां तथा कथनं किं प्रयोजनकमित्याकांक्षायामाह—**कामात्मान इति** । कामना-व्याप्तरूपाः । ननु कथं कामनायां तुच्छफले प्रवर्त्तन्त इत्याशंक्याह—**स्वर्गपरा इति** । स्वर्ग एव परो मोक्षरूपं येषां तेषां । स्वर्गस्य तथाज्ञानार्थं पूर्ववाचं विशिनष्टि । जन्मकर्मफलप्रदाम् । जन्म उत्तमयोनौ तत्रोत्तमं कर्म तथोत्तमफलं च तानि प्रकर्षेण ददाति तां तथा । भोगैश्वर्यगतिं भौगैश्वर्यप्राप्तिं प्रति क्रिया-विशेषा बहुला यस्यां तां तथा फलरूपां वदन्ति ॥ ४३ ॥

**नी० टी०**—तथा भोगश्च ऐश्वर्यं च तयोर्गतिः प्राप्तिस्तां प्रति तदर्थमित्यर्थः । कामात्मानः कामग्रस्त-चित्ताः अत एव स्वर्गपराः कीदृशीं भोगैश्वर्यगतिं जन्मकर्मफलप्रदां । प्राप्तभोगैश्वर्यो हि पुरुषस्तद्वासना-वासितः पुनर्भोगैश्वर्यप्राप्तये जन्म लभते तदर्थं कर्माणि च कुरुते फलं च ततो भोगादिकं प्राप्नोतीति चक्रमनिशमावर्त्तते तेन निष्ठातश्च्युतो भवतीत्यर्थः । किं च क्रियाविशेषेण बहुलां यथा यथा वित्तव्यया-यासाद्याधिक्यं तथा तथा भोगैश्वर्यप्राप्तेरप्याधिक्यमित्यर्थः । एतेनात्यंतायाससाध्येष्वपि कर्मसु फललोभा-त्सज्जंत इत्युक्तं । भाष्ये भोगैश्वर्यगतिं प्रति साधनभूताः ये क्रियाविशेषा अग्निहोत्रादयः तद्बहुलां जन्मरूपं यत् कर्मफलं तत्प्रदां च वाचमेवेति व्याख्यातम् ॥ ४३ ॥

**भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ॥**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥**

**शां० भा०**—तेषां च—भोगेति । भोगैश्वर्यप्रसक्तानां भोगः कर्तव्यमैश्वर्यं चेति भोगैश्वर्य-योरेव प्रणयवतां तदात्मभूतानां तया क्रियाविशेषबहुलया वाचाऽपहृतचेतसामाच्छादितविवेकप्र-ज्ञानां व्यवसायात्मिका सांख्ये योगे वा बुद्धिः समाधौ समाधीयतेऽस्मिन्पुरुषोपभोगाय सर्वमिति समाधिरन्तःकरणं बुद्धिस्तस्मिन्समाधौ न विधीयते न भवतीत्यर्थः ॥ ४४ ॥

**शां० आ०**—ननु कर्मकाण्डनिष्ठानां कर्मानुष्ठायिनामपि बुद्धिशुद्धिद्वारेणान्तःकरणे साध्यसाधनभूतबुद्धिद्वयसमुदायसंभवा-दतो मोक्षो भविष्यति, नेत्याह—**तेषां चेति** । तदात्मभूतानां तयोरेव भोगैश्वर्ययोरात्मकर्तव्यत्वेनाऽऽरोपितयोरभिनिविष्टे चेतसि तादात्म्याध्यासवतां वहिर्मुखानामित्यर्थः । तथाऽपि शास्त्रानुसारिण्या विवेकप्रज्ञया व्यवसायात्मिका बुद्धिस्तेषा-मुदेष्यतीत्याशङ्क्याऽऽह—**तयेति** । ननु समाधिः संप्रज्ञातासंप्रज्ञातभेदेन द्विधोच्यते तत्र बुद्धिद्वयविधिरप्रसक्तः सन्कथं निषिध्यते तत्राऽऽह—**समाधीयत इति** ॥ ४४ ॥

**आ० भा०**—तेषां सम्यग्युक्तिनिर्णयात्मिका बुद्धिः समाधौ समाध्यर्थेन विधीयते । सम्यग्नि-र्णीतार्थानामीश्वरे मनःसमाधानं सम्यग्भवति । तद्धि मोक्षसाधनम् । उक्तं चैतदन्यत्र । 'न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् । स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानु-मितं स्वयं स्यात्' ॥ ४४ ॥

आ० ज०—तयापहृतेत्यादेरप्रतीतिनिरासायार्थमाह—तेषामिति। तेषां बुद्धिर्मनोवृत्तिर्व्यवसायात्मिका सम्यग्युक्तिनिर्णयात्मिका न भवति। ततएवेश्वरे सम्यक्समाधानार्थं न विधीयतइत्यर्थः। सम्यग्युक्तिनिर्णयात्मकत्वाभावे कुतः समाध्यभाव इत्यतआह—सम्यगिति। अनेन समाधिशब्दार्थोऽपि विवृतो भवति। किमीश्वरे मनःसमाधानेन येन तदभावे निंदा स्यादित्यतआह—तद्धीति। मोक्षाभावश्च महानिंदेति वक्ष्यति। सम्यङ्निर्णीतार्थानामित्युक्तम्। न केवलमानुभाविकं किंतु पुराणेप्युक्तमित्याह—उक्तंचेति। वरीयसीः वरीयस्यः। सुपांसुलुगित्यादिना जसः पूर्वसवर्णः वाचो वेदवाचः। स्वप्ने निरुक्तया स्वप्नप्रतीतार्थदृष्टांतेन हेयानुमितं हेयत्वेनानुमितम् इदमेव हि सम्यङ्निर्णीतार्थत्वम्। यद्धेयोपादेयविवेकेन हेयहानमुपादेयोपादानं च। तद्धि मोक्षसाधनमित्येतत्तु श्रुत्यादिप्रसिद्धमेव॥ ४४॥

रा० भा०—तेषां भोगैश्वर्यप्रसक्तानां तया वाचा भोगैश्वर्यविषययाऽपहृतात्मज्ञानानां यथोदिता व्यवसायात्मिका बुद्धिः समाधौ मनसि न विधीयते नोत्पद्यते। समाधीयतेऽस्मिन्नात्मज्ञानमिति समाधिर्मनः। तेषां मनस्यात्मयाथात्म्यनिश्चयज्ञानपूर्वकमोक्षसाधनभूतकर्मविषया बुद्धिः कदाचिदपि नोत्पद्यत इत्यर्थः। अतः काम्येषु कर्मसु मुमुक्षुणा न सङ्गः कर्तव्यः॥ ४४॥

अ० टी०—ततो भोगैश्वर्यप्रसक्तानां तेषां तया वाचा अपहृतचित्तानां समाधौ वैयग्र्यभावेन भगवच्चिंतने तथा बुद्धिर्न भवतीत्यर्थः॥ ४४॥

नी० टी०—भोगेति। तया पुष्पितया वाचा अपहृतचेतसां पुंसां बुद्धिः समाधौ समाध्यनुष्ठानकाले व्यवसायात्मिका व्यवसायो ज्ञानं तदात्मिका शुद्धचिन्मात्राकारा न विधीयते न भवति कर्मकर्तरि लकारः। विरक्तस्य हि बुद्धिः समाधौ चिन्मात्राकारा भवति न तु भोगाद्यासक्तस्येति स्पष्टमेव। भाष्ये तु समाधौ अंतःकरणे व्यवसायात्मिका बुद्धिर्न भवतीति व्याख्यातं। यद्वा समाध्यनुष्ठानार्थमेव निश्चयात्मिका तेषां बुद्धिर्न भवतीति व्याख्येयम्॥ ४४॥

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन॥**
**निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥ ४५॥**

शां० भा०—य एवं विवेकबुद्धिरहितास्तेषां कामात्मनाम्—त्रैगुण्येति। त्रैगुण्यविषयास्त्रैगुण्यं संसारो विषयः प्रकाशयितव्यो येषां ते वेदास्त्रैगुण्यविषयास्त्वं तु निस्त्रैगुण्यो भवार्जुन निष्कामो भवेत्यर्थः। निर्द्वंद्वः सुखदुःखहेतू सप्रतिपक्षौ पदार्थौ द्वंद्वशब्दवाच्यौ ततो निर्गतो निर्द्वंद्वो भव। त्वं नित्यसत्त्वस्थः सदासत्त्वगुणाश्रितो भव। तथा निर्योगक्षेमोऽनुपात्तस्योपादानं योगः, उपात्तस्य रक्षणं क्षेमः, योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करेत्यतो निर्योगक्षेमो भव। आत्मवानप्रमत्तश्च भव। एष तवोपदेशः स्वधर्ममनुतिष्ठतः॥ ४५॥

शां० आ०—अविवेकिनामपि वेदाभ्यासवतां विवेकबुद्धिरुदेष्यतीत्याशङ्क्याऽऽह—य एवमिति। तर्हि वेदार्थतया कामात्मता प्रशस्तेत्याशङ्क्याऽऽह—निस्त्रैगुण्य इति। भवेति पदं निर्द्वंद्वादिविशेषणेष्वपि प्रत्येकं संबध्यते। त्रयाणां सत्त्वादीनां गुणानां पुण्यपापव्यामिश्रकर्मतत्फलसंबन्धलक्षणः समाहारस्त्रैगुण्यमित्यङ्गीकृत्य व्याचष्टे—संसार इति। वेदशब्देनात्र कर्मकाण्डमेव गृह्यते। तदभ्यासवतां तदर्थानुष्ठानद्वारा संसारध्रौव्यान्न विवेकावसरोऽस्तीत्यर्थः। तर्हि संसारपरिवर्जनार्थं विवेकसिद्ध्ये किं कर्तव्यमित्याशङ्क्याऽऽह—त्वं त्विति। कथं निस्त्रैगुण्यो भवेति गुणत्रयराहित्यं विधीयते नित्यसत्त्वस्थो भवेतिवाक्यशेषविरोधादित्याशङ्क्याऽऽह—निष्काम इति। सप्रतिपक्षत्वं परस्परविरोधित्वम्। पदार्थौ शीतोष्णादिलक्षणौ। निष्कामत्वे द्वंद्वान्निर्गतत्वं शीतोष्णादिसहिष्णुत्वं हेतुमुक्त्वा तत्रापि हेत्वपेक्षायां सदा सत्त्वगुणाश्रितत्वं हेतुमाह—नित्येति। योगक्षेमव्यापृतचेतसो रजस्तमोभ्यामस्पृष्टे सत्त्वमात्रे समाश्रितत्वमशक्यमित्याशङ्क्याऽऽह—तथेति। योगक्षेमयोर्जीवनहेतुतया पुरुषार्थसाधनत्वान्निर्योगक्षेमो

भवेति कुतो विधिरित्याशङ्क्याऽऽह—**योगेति**। योगक्षेमप्रधानत्वं सर्वस्य स्वारसिकामिति ततो निर्गमनमशक्यमित्याशङ्क्याऽऽह—**आत्मवानिति**। अप्रमादो मनसो विषयपारवश्यशून्यत्वम्। अथ यथोक्तोपदेशस्य मुमुक्षुविषयत्वादर्जुनस्य मुमुक्षुत्वमिह विवक्षितमिति नेत्याह—**एष इति** ॥ ४५ ॥

**आ० भा०**—तां योगबुद्धिमाह—त्रैगुण्यविषयाइत्यादिनेतरदपोह्य वेदानां परोक्षार्थत्वात्त्रिगुण संबंधिस्वर्गादिप्रतितोऽर्थइव भाति । परोक्षवादोवेदोयमितिह्युक्तम्। अतःप्रातीतिकेऽर्थे भ्रांतिं मा कुर्वित्यर्थः। 'वादो विषयकृत्वं च मुखतावंचनं स्मृतम्' इत्यभिधानम्। नतु वेदपक्षो निषिध्यते। 'वेदे रामायणे चैव पुराणे भारते तथा॥ आदावंते च मध्ये च विष्णुः सर्वत्र गीयते॥' सर्वे वेदा यत्पदम्॥ 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनोरुचिरेव च॥ वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः।' इति वेदानां सर्वात्मना विष्णुपरत्वोक्तेस्तद्विहितस्य तद्विरुद्धस्य च धर्माधर्मोक्तेश्च ॥ ४५ ॥

**आ० ज०**—यथैषा चतुःश्लोकी न प्रतिज्ञातं योगमाह—तथा त्रैगुण्येत्येतदपीतिप्रतीतिनिरासायाह—**तामिति**। प्रतिज्ञाताम्। आदिग्रहणेनाषष्ठसमाप्तेरितिसूचयति। सप्तमोपक्रमे पुनः प्रतिज्ञानात्। तर्हि प्रतिज्ञानंतरमेव कुतो नावोचदितिमंदाशंकानिरासायोक्तम्—**इतरदिति**। स्वोक्तौ निष्ठाभावे कारणमेवमपोह्येदानीं प्रतिज्ञातमाह। अन्यथा तत्प्रतिबंधेनास्यानवसरादिति भावः। अथवा वक्ष्यमाणानां वाक्यानां द्वेधावृत्तिमनेनाचष्टे। कैश्चिद्वाक्यैरितरयोगविरुद्धमपोह्य कैश्चिद्योगमाहेति। यद्वा वहूनि मे व्यतीतानि इत्यादि प्रासंगिकं विहायान्यद्योगविषयं ज्ञातव्यमित्यर्थः। तथा च वक्ष्यति साधनं प्राधान्येनोक्तमिति। वेदास्त्रैगुण्यविषयास्त्वं तु निस्त्रैगुण्यो भवेत्यनेन वेदपरित्यागो विधीयते इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे—**वेदानामिति**। त्रिगुणसंबधीत्यनेन तस्येदमित्यर्थे तद्धितोऽयम्। विचित्रा हि तद्धितगतिरितिवचनादितिसूचयति। संबंधिकार्यम्। प्रतीतितः आपाततः प्रतीतितः। अर्थः प्रतिपाद्यं प्रयोजनं च। वेदानां परोक्षार्थत्वं कुतइत्यतआह—**परोक्षेति**। यतएव भवति अतः प्राप्तिसद्भावात्प्रसक्तां भ्रांतिं माकार्षीः। कथमेतदनेन लभ्यते इत्यतआह—**वादइति**। वेदवादरता इत्यत्राप्येतदेव चाभिधानम् प्रतीतएवार्थोस्तु इत्यतआह—**नत्विति**। पक्षः परमसिद्धांतः। उत्तानार्थो वेदो निषिध्यत एव। योगविरोधित्वादित्यतः पक्ष इत्युक्तम्। कुतइत्यत आह—**वेदइति**। धर्ममूलं धर्मज्ञप्तेः कारणम्। तद्विदां वेदविदां मन्वादीनाम् स्मृतिग्रन्थः। शीलं मनोगतिः। आचारो धर्मबुद्ध्यानुष्ठानम्। आत्मनः मनसो रुचिः। विकल्पविषये प्रणिहितो विहितः। तद्विपर्ययः प्रतिषिद्धः विवक्षितयोगविरोधे हि वेदे सिद्धांतो निषेध्यः स्यात्। नचैवं प्रत्युत तदनुगुण एवेति भावः। धर्मशब्दोऽत्र निवृत्तिधर्मपरः ॥ ४५ ॥

**रा० भा०**—एवमत्यन्ताल्पफलानि पुनर्जन्मप्रसवानि कर्माणि मातापितृसहस्रेभ्योऽपि वत्सलतरतयात्मोपजीवने प्रवृत्ता वेदाः किमर्थं वदन्ति कथं वा वेदोदितानि त्याज्यतयोच्यन्ते इत्यत्राह—त्रयो गुणास्त्रैगुण्यं सत्त्वरजस्तमांसि। सत्त्वरजस्तमःप्रचुराः पुरुषास्त्रैगुण्यशब्देनोच्यन्ते तद्विषया वेदाः तमःप्रचुराणां रजःप्रचुराणां सत्त्वप्रचुराणां च वत्सलतरतयैव हितमवबोधयन्ति वेदाः। यद्येषां स्वगुणानुगुण्येन स्वर्गादिसाधनमेव हितं नावबोधयन्ति। तदैव ते रजस्तमःप्रचुरतया सात्त्विकफलमोक्षविमुखाः स्वापेक्षितफलसाधनमजानन्तः कामप्रावण्यविवशा अनुपायेषु उपायभ्रान्त्या प्रविष्टाः प्रणष्टा भवेयुः। अतस्त्रैगुण्यविषया वेदास्त्वं तु निस्त्रैगुण्यो भव। इदानीं सत्त्वप्रचुरस्त्वं तदेव वर्धय नान्योन्यसंकीर्णगुणत्रयप्रचुरो भव। न तत्प्राचुर्यं वर्धयेत्यर्थः। निर्द्वन्द्वः निर्गतसकलसांसारिकस्वभावः। नित्यसत्त्वस्थः गुणद्वयरहितः नित्यप्रवृद्धसत्त्वस्थो भव। कथमिति चेत् निर्योगक्षेमः आत्मस्वरूपतत्प्राप्त्युपायबहिर्भूतानामर्थानां योगप्राप्तानां च क्षेमं परिपालनं परित्यज्यात्मवान् भव। आत्मस्वरूपान्वेषणपरो भव। अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य परिरक्षणं क्षेमः। एवं वर्तमानस्य ते रजस्तमःप्रचुरता नश्यति सत्त्वं च वर्धते ॥ ४५ ॥

अ० टी०—ननु तेत्वज्ञाः वेदोक्तविषये प्रवर्तंते परं स्वर्गादीनां फलाभावे वेदः कथं बोधयतीत्याशंक्याह—**त्रैगुण्यविषया वेदा इति**। त्रैगुण्याः त्रिगुणसृष्टौ सृष्टा ये जीवास्तद्विषयास्तदर्थं स्वर्गादिफलककर्मबोधका वेदाः। न तु गुणातीतसाक्षाद्भगवत्क्रीडौपयिकभगवदीयसृष्ट्यन्तर्गतभगवद्भक्तविषया इत्यर्थः। भगवल्लीलासृष्टिस्तु निर्गुणा अतएव अन्यैव काचित्सा सृष्टिर्विधातुर्व्यतिरेकिणी इत्यादि श्रीवराहवचनं। गुणातीतपुरुषोत्तमस्वरूपं तु वेदाद्यविषयमेव। अतएव श्रुतिराह "नेतिनेति, यतो वाचो निवर्त्तन्ते" इत्यादि। यस्माद्वेदास्त्रिगुणविषयास्तस्मात् त्वं निस्त्रैगुण्यो भक्तो भवेत्यर्थः। निस्त्रिगुणस्य भावुको भवेति भावः। यद्वा। वेदास्त्रैगुण्यविषयाः त्रिगुणात्मकस्वरूपफलप्रतिपादका न तु साक्षाद्भगवत्संबन्धप्रतिपादकाः। अतस्तथा बोधयन्तीत्यर्थः। ननुऽवेदास्त्रिगुणविषयाश्चेत्तदाऽस्माकमज्ञानानां का गतिरित्याशंक्याह—**निस्त्रैगुण्य इति**। गुणातीतमद्धर्मैकपरो भवेति भावः। केन साधनेन तथात्वं भवेदित्याशंकायामाह—**निर्द्वन्द्व इति**। निर्गतानि द्वन्द्वानि सुखदुःखाहंममेत्यादीनि तद्रहितो भव। सर्वं त्यक्त्वा भक्तिपरो भव। तथात्वमपि कथमित्याकांक्षायामाह—**नित्यसत्त्वस्थ इति**। नित्यं सत्त्वं यस्मात्तस्मिन् गुणातीते स्थितो भव किंच—**निर्योगक्षेम इति**। साधनासाध्यपरमाऽप्तवस्त्वभिलाषो योगः। स्वेच्छा प्राप्तवस्तुन्याऽऽप्तज्ञानेन स्वीकारो क्षेमस्तद्रहित आत्मवान् आत्मज्ञानवान् भवेत्यर्थः॥ ४९॥

**नी० टी०**—कस्य तर्हि समाधौ बुद्धिर्भवतीत्यत आह—**त्रैगुण्येति**। त्रैगुण्यं गुणत्रयकार्यमूर्ध्वमध्याधोगतिरूपं संसरणं तदेव प्रकाश्यत्वेन विषयो येषां तादृशाः कर्मकांडपरा वेदाः। त्वं तु निस्त्रैगुण्यो भव उर्ध्वगतावपि विरक्तो भवेत्यर्थः। वक्ष्यति च तत्तद्गुणप्रधानं गतित्रयं ऊर्ध्वं गच्छंति सत्वस्था इति। दिव्येभ्योपि विषयेभ्यो विरक्तः समाधावधिक्रियत इति भावः। किंलक्षणोऽसौ निस्त्रैगुण्य इत्यत आह-**निर्द्वंद्व इति**। सुखदुःखे मानापमानौ शत्रुमित्रे शीतोष्णे इत्यादीनि द्वंद्वानि सप्रतिपक्षपदार्थरूपाणि तेभ्यो निर्गतो निर्द्वंद्वः सर्वत्र समबुद्धिरित्यर्थः। ननु बाधमानमुष्णादिकं कथं शीतादिवत् क्षंतुं शक्यमत आह—**नित्यसत्वस्थ इति**। नित्यं सर्वदा सत्वं धैर्यं सत्वगुणो वा तदाश्रितो भूत्वा धीरो हि सर्वं सोढुं शक्तः। सात्विको वा प्रारब्धकर्मोपस्थापितमिदं दुःखमपरिहार्यं किमु तप्ततयेति जानन् सर्वं सोढुं शक्नोत्येव। नन्वत्यंतदुःसहं क्षुधादिदुःखं कथं निस्त्रैगुण्येन सर्वथाप्रवृत्तिशून्येन सोढुं शक्यमत आह—**निर्योगक्षेम इति**। अप्राप्तस्य प्राप्तिर्योगः प्राप्तसंरक्षणं क्षेमः एतद्द्वयमपि प्रारब्धकर्माधीनमिति ततोऽपि निर्गत इत्यर्थः। तत्र हेतुः यत आत्मवान् जितचित्तः। स हि सर्वास्वप्यापत्स्वनाकुलो नित्यतृप्ततया निरुद्यमश्च भवतीति त्वमप्येतादृशो निस्त्रैगुण्यो भवेत्यर्थः॥ ४९॥

**यावानर्थ उदपाने सर्वतःसंप्लुतोदके॥**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥ ४६॥**

**शां० भा०**—सर्वेषु वेदोक्तेषु कर्मसु यान्यनन्तानि फलानि तानि नापेक्ष्यन्ते चेत्किमर्थं तानीश्वरायेत्यनुष्ठीयन्त इति, उच्यते शृणु—यावानिति। यथा लोके कूपतडागाद्यनेकस्मिन्नुदपाने परिच्छिन्नोदके यावान्यावत्परिमाणः स्नानपानादिरर्थः फलं प्रयोजनं स सर्वोऽर्थः सर्वतःसंप्लुतोदके तावानेव संपद्यते तत्रान्तर्भवतीत्यर्थः। एवं तावांस्तावत्परिमाण एव संपद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु योऽर्थो यत्कर्मफलम्। सोऽर्थो ब्राह्मणस्य संन्यासिनः परमार्थतत्त्वं विजानतो योऽर्थो

**विज्ञानफलं सर्वतःसंप्लुतोदकस्थानीयं तस्मिंस्तावानेव संपद्यते तत्रैवान्तर्भवतीत्यर्थः। "सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद' इति श्रुतेः। 'सर्वं कर्माखिलम्' इति च वक्ष्यति। तस्मात्प्राग्ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतडागाद्यर्थस्थानीयमपि कर्म कर्तव्यम् ॥ ४६ ॥**

**शां० आ०**—ईश्वरार्पणधिया स्वधर्मानुष्ठानेऽपि फलकामनाभावाद्वैफल्यं योगमार्गस्येति मन्वानः शङ्कते—**सर्वेष्विति**। कर्ममार्गस्य फलवत्त्वं प्रतिजानीते—**उच्यत इति**। किं तत्फलमित्युक्ते तद्विषयं श्लोकमवतारयति—**शृण्विति**। यथोदपाने कूपादौ परिच्छिन्नोदके स्नानाचमनादिर्योऽर्थो यावानुत्पद्यते स तावानपरिच्छिन्ने सर्वतः संप्लुतोदके समुद्रेऽन्तर्भवति परिच्छिन्नोदकानामपरिच्छिन्नोदकांशत्वात्, तथा सर्वेषु वेदोक्तेषु कर्मसु यावानर्थो विषयविशेषोपरक्तः सुखविशेषो जायते स तावानात्मविदः स्वरूपभूते सुखेऽन्तर्भवति परिच्छिन्नानन्दानामपरिच्छिन्नानन्दान्तर्भावाभ्युपगमात् "एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः। तथा चापरिच्छिन्नात्मानन्दप्राप्तिपर्यवसायिनो योगमार्गस्य नास्ति वैफल्यमित्याह—**यावानिति**। उक्तमर्थमक्षरयोजनया प्रकटयति—**यथेति**। उदकं पीयतेऽस्मिन्निति व्युत्पत्त्या कूपादिपरिच्छिन्नोदकविषयत्वमुदपानशब्दस्य दर्शयति—**कूपेति**। कूपादिगतस्याभिधेयस्य समुद्रेऽन्तर्भावासंभवात्कथमिदमित्थमित्याशङ्क्यार्थब्दस्य प्रयोजनविषयत्वं व्युत्पादयति—**फलमिति**। यत्फल्गुत्वेन लीयते तत्फलमित्युच्यते तत्कथं तडागादिकृतं स्नानपानादि तथेत्याशङ्क्य तस्याल्पीयसो नाशोपपत्तेरित्याह—**प्रयोजनमिति**। तडागादिप्रयुक्तप्रयोजनस्य समुद्रनिमित्तप्रयोजनमात्रत्वमयुक्तमन्यस्यान्यात्मत्वानुपपत्तेरित्याशङ्क्याऽऽह—**तत्रेति**। घटाकाशादेरिव महाकाशे परिच्छिन्नोदककार्यस्यापरिच्छिन्नोदककार्येऽन्तर्भावः संभवति तत्प्राप्तावितरापेक्षाभावादित्यर्थः। पूर्वार्धे दृष्टान्तभूतमेवं व्याख्याय दार्ष्टान्तिकमुत्तरार्धं व्याकरोति—**एवमित्यादिना**। कर्मसु योऽर्थ इत्युक्तं व्यनक्ति—**यत्कर्मफलमिति**। सोऽर्थो विजानतो ब्राह्मणस्य योऽर्थस्तावानेव संपद्यत इति संबन्धः। तदेव स्पष्टयति—**विज्ञानेति**। तस्मिन्नन्तर्भवन्निति शेषः। सर्वं कर्मफलं ज्ञानफलेऽन्तर्भवतीत्यत्र प्रमाणमाह—**सर्वमिति**। यत्किमपि प्रजाः साधु कर्म कुर्वन्ति तत्सर्वं स पुरुषोऽभिसमेति प्राप्नोति यः पुरुषस्तद्वेद विजानाति यद्वस्तु स रैक्वो वेद तद्वेद्यमिति श्रुतेरर्थः। कर्मफलस्य सगुणज्ञानफलेऽन्तर्भावः संवर्गविद्यायां श्रूयते कथमेतावता निर्गुणज्ञानफले कर्मफलान्तर्भावः संभवतीत्याशङ्क्याऽऽह—**सर्वमिति**। तर्हि ज्ञाननिष्ठैव कर्तव्या तावतैव कर्मफलस्य लब्धतया कर्मानुष्ठानानपेक्षणादित्याशङ्क्याऽऽह—**तस्मादिति**। योगमार्गस्य निष्फलत्वाभावस्तच्छब्दार्थः ॥ ४६ ॥

**आ० भा०—तथापि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्यमेवेत्यतआह—यावानर्थ इति। यथा यावानर्थः प्रयोजनमुदपाने कूपे भवति। तावान्सर्वतः संप्लुतोदकेऽतर्भवत्येव एवं सर्वेषु वेदेषु यत्फलं तद्विजानतोऽपि ज्ञानिनो ब्राह्मणस्य फलेऽतर्भवति। ब्रह्म अणतीति ब्राह्मणोऽपरोक्षज्ञानी। स हि ब्रह्म गच्छति। विजानतइति ज्ञानफलत्वं तस्य दर्शयति ॥ ४६ ॥**

**आ० ज०**—योगोपदेशप्रसंगे ज्ञानफलकथनस्य क उपयोगइत्यत आह—**तथाऽपीति**। यामिमामित्यत्र काम्यकर्मिणां निंदा कृता निस्त्रैगुण्यो भवेति च तत्त्यागो विहितः। तत्र प्रष्टव्यम्। किन्निमित्तमेतदिति। ननूक्तं काम्यकर्मिणां समाध्यभावेन ज्ञानाभावान्मोक्षो न भवतीति। अत्रेदमुच्यते। यद्यपि ज्ञानफलं काम्यकर्मिणां न भवति तथाऽपि तन्निंदादिकं नोपपद्यते। कुतः काम्यकर्मिणां फलं स्वर्गादिकं ज्ञानिनां न भवति इति ज्ञानकर्मणोः साम्यमेवेति योगानुष्ठाननियमाक्षेपे सत्याहेत्यर्थः। केचिदस्य श्लोकस्य कर्ममात्रत्यागे तात्पर्यमाहुः। अपरे तु यत्कर्मसमुच्चितं ज्ञानं मोक्षसाधनं तत्कर्मपर एव वेदभागोऽधिगंतव्यः। न तु समस्तवेदाभ्यासेनायुः समापनीयामिति तन्निरासाय व्याचष्टे—**यथेति**। सामर्थ्याद्यथैवंशब्दयोरध्याहारः। यावांस्तावानित्येतयोरावृत्तिश्च—**सर्वेषु वेदेष्विति**। तदुक्तकाम्यकर्मिणामित्यर्थः। ब्राह्मणस्येति न क्षत्रियादिव्यावृत्तिः शंक्येति भावेनाह—**ब्रह्मेति**। वर्णविपर्ययोनिरुक्तत्वात् एवं तर्हि ब्राह्मणशब्दो मुक्तवाचीति स्यात्। न च मुक्तस्य फलमस्तीत्यत आह—**अपरोक्षेति**। तदुपपादयति—**सहीति**। तर्हि विजानत इति पुनरुक्तिरितिचेन्न। तस्य परोक्षज्ञानिवाचित्वात्। उभयग्रहणमनुपपन्नमित्यत आह—**विजानतइति**। तस्यापरोक्षज्ञानस्य परोक्षज्ञानिनः कर्मिणश्चान्योन्यफलाभावः तथापि ज्ञानिनः फलं महासमुद्रोदकमिव महत्त्वात्। कर्मिणां फलं तु कूपोदकमिवात्यंताल्पम्। अतस्तयोर्न साम्यम्। तथा चाल्पास्थिरकर्मनिंदया महानंत फलज्ञानसाधने योगे प्रेरणं युक्तमेवेति भावः। अपव्याख्यानं तूक्तवक्ष्यमाणन्यायनिरस्तम् ॥ ४६ ॥

रा० भा०—नच वेदोदितं सर्वं सर्वस्योपादेयं यथा सर्वार्थपरिकल्पिते सर्वतः संप्लुतोदके उदपाने पिपासोर्यावानर्थः यावदेव पानीयं प्रयोजनं तावदेव तेनोपादीयते न सर्वम् । एवं सर्वेषु वेदेषु ब्राह्मणस्य विजानतः वैदिकस्य मुमुक्षोर्यदेव मोक्षसाधनं तदेवोपादेयं नान्यत् ॥ ४६ ॥

अ० टी०—नन्वेवं वेदोक्ताकरणे कथं फलसिद्धिः स्यादित्याशंकायामाह—यावानिति । उदपाने उदकं पीयतेऽस्मिन्नित्युदपानं जलपात्रं तस्मिन् यावानर्थः । सर्वतः संप्लुतोदके तडागे च भवति परं तत्र जलाहरणपात्ररक्षणादिक्लेशोऽधिकः । तथा यावानर्थो वेदोक्तकर्मफलं वेदेषु भवति । तावान् विजानतो ब्रह्मस्वरूपविदुषो ब्राह्मणस्य ब्रह्मैकनिष्ठस्य भवतीत्यर्थः । नैवं च श्रुतिविरोधः । अतएव श्रुतिराह " आनंदं ब्रह्मणो विद्वान् । तमेव विदित्वाऽतिमृत्युमेति " ॥ ४६ ॥

नी० टी०—नन्वात्मवत्त्वं चित्तशुद्धौ सत्यामेव भवति सा च सकलवेदोक्तकर्मानुष्ठानसाध्या अतो निस्त्रैगुण्यत्वं दुर्लभमित्याशंक्याह—यावानिति । सर्वतः संप्लुतोदके महति उदपाने जलाशये पुरुषस्य यावान् अर्थो यावत् स्नानपानादिकं प्रयोजनं घटमात्रजलनिर्वर्त्यं भवति न कृत्स्नजलाशयव्ययनिर्वर्त्यं तावानेवार्थो विजानतो व्युत्पन्नचित्तस्य ब्राह्मणस्य ब्रह्मबुभूषोः सर्वेषु वेदेषु वेदैकदेशोपनिषच्छ्रवणमात्रनिर्वर्त्यो भवति न कृत्स्नवेदार्थानुष्ठानं स्वसिद्ध्यर्थमपेक्षते एकेन जन्मना कृत्स्नवेदार्थानुष्ठानासंभवात् । ऐहिकेन जन्मांतरीयेण वा जपादिना चित्तशुद्धौ सत्यामुपनिषच्छ्रवणान्निस्त्रैगुण्यता संभवतीति भावः । वृद्धास्तु सर्वतः संप्लुतोदकस्थानीये आत्मज्ञाने पुरुषस्य तावानर्थः कृत्स्नोऽपि भवति यावान् अनेककूपरूपोदपानस्थानीयेषु सकलवेदोक्तकर्मस्वनुष्ठितेषु भवति ब्रह्मानंदे क्षुद्रानंदानामंतर्भावात् । तथा च श्रुतिर्ज्ञाने सर्वकर्मफलांतर्भावं दर्शयति । यथा "कृतायाविजितायाधरेयाः संयंत्येवमेवैनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वंति यस्तद्वेद यत्स वेद" इति वक्ष्यति च । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति । गंगातुल्यज्ञानोदयात्प्रागेव कूपोपमानि कर्माणि कर्तव्यानीति भाव इति व्याचख्युः । अस्मिन्पक्षे पूर्वार्धे अनेकस्मिन् यथा तथा भवतीति पदचतुष्टयाध्याहारः यावान् तावान् पदयोरनुषगश्च दार्ष्टांतिके द्रष्टव्यः ॥ ४६ ॥

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ॥**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥**

शां० भा०—तव च—कर्मणीति । कर्मण्येवाधिकारो न ज्ञाननिष्ठायां ते तव । तत्र च कर्म कुर्वतो मा फलेष्वधिकारोऽस्तु कर्मफलतृष्णा मा भूत्कदाचन कस्यांचिदप्यवस्थायामित्यर्थः । यदा कर्मफले तृष्णा ते स्यात्तदा कर्मफलप्राप्तेर्हेतुः स्याः, एवं मा कर्मफलहेतुर्भूः । यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव जन्मनो हेतुर्भवेत् । यदि कर्मफलं नेष्यते किं कर्मणा दुःखरूपेणेति मा ते तव सङ्गोऽस्त्वकर्मण्यकरणे प्रीतिर्मा भूत् ॥ ४७ ॥

शां० आ०—तर्हि परम्परया पुरुषार्थसाधनं योगमार्गं परित्यज्य साक्षादेव पुरुषार्थकारणमात्मज्ञानं तदर्थमुपदेष्टव्यं तस्मै हि स्पृहयति मनो मदीयमित्याशङ्क्याऽऽह—तव चेति । तर्हि तत्फलाभिलाष्यपि स्यामिति नेत्याह—मा फलेष्विति । पूर्वोक्तमवार्थं प्रपञ्चयति—मा कर्मेति । फलाभिसंध्यसंभवे कर्माकरणमेव श्रद्दध्यामित्याशङ्क्याऽऽह—मा त इति । ज्ञानानाधिकारिणोऽपि कर्मत्यागप्रसक्तिं निवारयति—कर्मण्येवेति । कर्मण्येवेत्येवकारार्थमाह—न ज्ञानेति । न हि तत्राब्राह्मणस्यापरिपक्वकषायस्य मुख्योऽधिकारः सिध्यतीत्यर्थः । फलैस्तर्हि बन्धो दुर्वारः स्यादित्याशङ्क्याऽऽह—तत्रेति । कर्मण्येवाधिकारे सतीति सप्तम्यर्थः । फलेष्वधिकाराभावं स्फोरयति—कर्मेति । कर्मानुष्ठानात्प्रागूर्ध्वं तत्काले चेत्येतत्कदाचनेति विवक्षितमित्याह—कस्यां-

**चिदिति**। फलाभिसंधाने दोषमाह—**यदेति**। एवं कर्मफलतृष्णाद्वारेणेत्यर्थः। कर्मफलहेतुत्वं विवृणोति—**यदा हीति**। तर्हि विफलं क्लेशात्मकं कर्म न कर्तव्यामिति शङ्कामनुभाष्य दूषयति—**यदीत्यादिना**। अकर्मणि ते सङ्गो मा भूदित्युक्तमेव स्पष्टयति—**अकरण इति** ॥ ४७ ॥

**आ० भा०**—कामात्मनां निंदा कृता। कथमेषां स्वर्गकामो यजेतेत्यादौ कामस्यापि विहितत्वादित्यतआह—कर्मण्येवेति। तइत्युपलक्षणार्थम्। तव ज्ञानिनोऽपि न फलकामकर्तव्यता किम्वन्येषाम्। नत्वस्ति केषांचिन्न तेऽस्तीति। स हि ज्ञानी नरांश इंद्रश्च। मोहादिस्त्वभिभवादेः। यदि तेषां शुद्धसत्त्वानां न स्याज्ज्ञानं क्वान्येषाम्। उपदेशादेश्च सिद्धं ज्ञानं तेषाम्। पार्थार्ष्टिषेणेत्यादिज्ञानिगणनाच्च। कामनिषेध एवात्र। फलानि ह्यस्वातंत्र्येण भवंति। नहि कर्मफलानि कर्माभावे यत्नतो भवंति। भवंति च काम्यकर्मिणो विपर्ययत्नेऽप्यविरोधे अतः कर्माकरणएव प्रत्यवायो न तु ज्ञानादिना वाऽकामनया फलाप्राप्तौ। अतः कर्मण्येवाधिकारः। अतस्तदेव कार्यम्। न तु कामेन ज्ञानादिनिषेधेन वा फलप्राप्तिः ! कामवचनानां तु तात्पर्यं भगवतैवोक्तम्। रोचनार्थं फलश्रुतिः। यथा भैषज्यरोचनमिति भागवते। अतएव कामी यजेतेत्यर्थः। नतु कामी भूत्वेत्यर्थः। निष्कामं ज्ञानपूर्वं चेतिवचनात् वक्ष्यमाणेभ्यश्च। "वसंतेवसंते ज्योतिषा यजेते" इत्यादिभ्यश्च॥ अतो मा कर्मफलहेतुर्भूः। कर्मफलं तत्कृतौ हेतुर्यस्य स कर्मफलहेतुः स मा भूः तर्हि न करोमीत्यतआह—मा त इति। कर्माकरणे स्नेहो मास्त्वित्यर्थः। अन्यफलाभावेऽपि मत्प्रसादाख्यफलभावात्। इच्छा च तस्य युक्ता। 'वृणीमहे ते परितोषणाय' इति महदाचारात् अनिंदनाद्विशेषतइतरनिंदनाच्च। सामान्यं विशेषो बाधतइति च प्रसिद्धम्। सर्वानानय नैकं मैत्रमित्यादौ। अतो नैकात्म्यतां मे स्पृहयंति केचित् भक्तिमन्विच्छंतः। ब्रह्मजिज्ञासा। विज्ञाय प्रज्ञां। द्रष्टव्यइत्यादिवचनेभ्यः। स्वार्थसेवकं प्रति न तथा स्नेहः॥ किंददामीत्युक्ते सेवादियाचकं प्रति बहुतरस्नेहइतिलोकन्यायाच्च भक्तिज्ञानादिकार्येति सिद्धम् ॥४७॥

**आ० ज०**—ज्ञानिनः कर्माभावमुक्त्वा इदानीमज्ञानिनः कर्मोच्यतइत्यन्यथा व्याख्याननिरासायाह—**कामात्मनामिति**। येषां कर्मिणां सकामतया कर्म कुर्वतां या निंदा कृता यामिमामित्यादिना सा न युक्तेत्यर्थः। कुतः। स्वर्गकामो यजेतेत्यादौ यजनवत्स्वर्गकामस्यापि विहितत्वान्नहि विहितं कुर्वतां निंद्यत्वम्। तथात्वे यजनस्यापि निंद्यत्वप्रसंगादिति वदन्विशिष्टविधित्वं मन्यते पूर्वपक्षी। तइत्येतदर्जुनमात्रविषयमित्यन्यथा प्रतीतिनिरासायाह—**त इति**। सर्ववर्णाश्रमोपलक्षणमर्थः प्रयोजनमस्येति तथोक्तम्। वक्त्रर्यायत्ते शब्दप्रयोगे वाचकमेव प्रयुज्यतां किं लक्षणयेत्यत आह—**तवेति**। फलकामः कर्तव्यो यस्यासौ तथोक्तस्तस्य भावस्तत्ता। फलकामस्य कर्तव्यता तव कर्तुरिति वा। कृतोपि फलकामो ज्ञानिनो नात्यंतबाधकः। तत्प्रतिबंधनीयस्य ज्ञानस्याप्तत्वात् मोक्षस्य च नियतत्वात्। तथाऽपि मोक्षविलंबहेतुत्वात्तस्यापि न कर्तव्यः किम्वन्येषामज्ञानिनामिति प्रदर्शनायोपलक्षकपदप्रयोगइति भावः। ननु कर्मण्येवाधिकारो मा फलेष्विति द्वयमुक्तम्। तत्कथं न फलकामकर्तव्यतेत्येकस्यैव ग्रहणम्। उच्यते। फलकामकर्तव्यतानिषेधस्यैवात्र प्राधान्यात्कर्मण्यधिकार इति तदनुवादः। तथाऽपि न फलकामाधिकारइति वक्तव्यम्। मैवम्। अधिकाराभावाभावयोः कर्तव्यत्वाकर्तव्यत्वसमर्थनार्थमुक्तत्वेन साध्यस्यैवोपादानात्। तथा च वक्ष्यति। तइत्युपलक्षणार्थमित्युक्तस्य व्यावर्त्यमाह—**नत्विति**। केषांचित्फलकामकर्तव्यतास्ति केवलं तेनास्तीत्यर्थस्तु नेत्यर्थः। कामान्यः कामयतइत्यादौ सर्वेषां निषेधादिति भावः। नन्वर्जुनस्य ज्ञानित्वे स्यादिदं तदेव कुत इत्यत आह—**सहीति**। हिशब्दसूचितां प्रमाणसिद्धिमेव दर्शयति—**नरांशइति**। कथं तर्हि यज्ज्ञात्वा न पुनर्मोहमित्यर्जुनस्य मोह उच्यते कथं च प्रश्नकरणमित्यत आह—**मोहादिरिति**। बलवता प्रारब्धकर्मादिना ज्ञानस्याभिभवान्मोहः। विशेषज्ञानाद्यर्थः प्रश्न इत्यर्थः। नन्विंद्रादीनामेव कुतोज्ञानित्वमित्यतआह—**यदीति**। सत्त्वं हि ज्ञानकारणम्। सत्त्वात्संजायते ज्ञानमितिवचनात्। देवाश्च शुद्धसत्त्वाः अतःकारणसद्भावाद्युक्तं तेषां ज्ञानम्। अन्यथा न कस्यापि स्यात्। इतश्चेंद्रादयो ज्ञानिन इत्यतआह—**उपदेशेति**। 'एतदु हैवेंद्रो विश्वामित्राय प्रोवाच' इत्यादिरुपदेशः। आदिपदेन प्रजापतौ ब्रह्मचर्यं। अर्जुनस्य ज्ञानित्वे प्रमाणांतरमाह—**पार्थेति**। ज्ञानिषु गणनात्। एतेनापव्याख्यानमपि निरस्तम्। नन्वत्र माफलेष्विति फलविषयो निषेधः कृतः तत्कथमुक्तं फलकामेतितत्राह—**कामेति**। फलशब्देन तद्विषयं काममुपलक्ष्य तद्विषयो निषेधोऽत्र क्रियते न फलविषयइत्यर्थः। कुतो लक्षणाश्रयणमित्यतआह—**फलानीति**। यत्र हि

पुरुषस्य कर्तुमकर्तुं वा स्वातंत्र्यं तत्रैव निषेधो नान्यत्र प्रसक्तेरभावात्। नच फलेषु स्वातंत्र्यमस्ति अतो मुख्ये बाधकाल्लक्षणाश्रयणमित्यर्थः। कथमस्वातंत्र्यमित्यतः करणे तावदाह—**नहीति**। अकरणेऽपि तदाह—**भवंति चेति**। चोऽवधारणे। अविरोधे ब्रह्मदर्शनादि तत्तद्विरोध्यभावे। तदनेन तइतिफलेष्विति च पदद्वयं व्याख्यातम्। स्यादेतत्। स्वर्गकामो यजेतेत्यादौ स्वर्गादिकामनाविशिष्टं यजनादिकं कर्म कार्यतयोच्यते। अतो न कामात्मनां निंदोचितेतिशंकायां किमेतत्कर्मण्येवाधिकारइत्याद्यसंगतमुच्यते। यश्च कर्मवत्कामनायाअपि कार्यतां मन्यते। कुतस्तस्यं फलकामनायामधिकाराभावः सिद्धः। फलेष्वितिलाक्षणिकशब्दप्रयोगे च किं प्रयोजनमित्याशंक्य पूर्वार्धं व्याचष्टे—**अतइति**। अतइत्यस्य वक्ष्यमाणेन भूत्वेत्यतः परेणेत्यर्थइत्यनेनान्वयः। अतउक्तन्यायेन पदद्वयस्य लाक्षणिकत्वे सतीत्यर्थः। श्लोकार्थः संपद्यतइतिशेषः। तत्र तावत्कर्मण्येवाधिकारः सर्ववर्णाश्रमिणां न फलकामनायामित्युक्तेऽर्थद्वये हेतुद्वयमाह—**कर्माकरणइति**। कुर्वन्नेवेह कर्माणीत्युक्त्वा एवं त्वयि "नान्यथेतोस्ति न कर्म लिप्यते नरे" इत्युक्तत्वात्। कर्माकरणएव प्रत्यवायोऽनिष्टप्राप्तीष्टानवाप्तिलक्षणः। नत्वकामनया प्रत्यवायः प्रमाणाभावात्। ननु कामाभावे तत्तत्फलानवाप्तेः कथं प्रत्यवायाभावइत्यतउक्तम्—**फलाप्राप्ताविति**। काम्यकर्मफलाप्राप्तावपि न प्रत्यवायइत्येतदुपपादनायोक्तम्। **ज्ञानादिनावेति**। वाशब्दउपमायाम्। यथाज्ञानादिना साधनेन मोक्षं गच्छतः स्वर्गाद्यलाभो न खेदहेतुः महाफललाभेऽल्पफलहानेरकिंचित्करत्वात्। तथाऽकामनया फलाप्राप्तावपि न खेदः। निष्कामेन कर्मणा महाफलस्य ज्ञानादेर्लाभादिति भावः ततः किमित्यतउक्तस्य हेतुद्वयस्य गीतोक्तं साध्यद्वयमाह—**अतइति**। ननु फलकामनायामिति च वक्तव्यम्। यतएवं कर्माकरणे प्रत्यवायोऽतः कर्मण्येवाधिकारः। यतः कामाकरणेन प्रत्यवायोऽतो न कामेऽधिकारइत्यर्थः। ततः किं प्रकृतइत्यतः परमसाध्यद्वयमाह—**अतइति**। यतः कर्मण्येवाधिकारोतस्तदेव कार्यं विधिविषयइत्यर्थः। यतः कामेनाधिकारोऽतः कामेन फलप्राप्तिः फलप्राप्तये कामइति यावत्। न कार्यः। तत्र दृष्टांतः। **ज्ञानादिनिषेधेन वेति**। अत्रापि वाशब्द उपमायाम्। यथा प्रेक्षावता ज्ञानादिकं परित्यज्य फलप्राप्तिर्न क्रियते तथेत्यर्थः। पूर्वोक्तएवाभिप्रायः यदि कर्मैव विधिविषयो न कामः। तर्हि स्वर्गकामो यजेतेत्यादिवाक्यानां किं तात्पर्यमित्यआह—**कामेति**। अनादिविषयवासनावासितान्तःकरणा न सहसा ज्ञानसाधने कर्माणि प्रवर्तितुं शक्यंते। अतस्तेषां कर्मण्यभिरुचिजननार्थं स्वर्गकामइत्यादिश्रुतिः प्रवृत्ता। कर्मणि प्रवृत्तांस्तु शनैः कामं त्याजयिष्यामीत्यभिप्रायवती यथा फलेन प्रलोभ्य बालानां भैषज्यरोचनं क्रियते तथेत्यर्थः। अस्त्वेवं तात्पर्यं योजना तु कथमित्यत आह—**अतइति**। यत एवं न्यायेन कर्मणएव कार्यत्वं न कामस्येतिप्राप्तमतः कामी यजेतेत्येवश्रुत्यर्थः। कामानुवादेन यजनं विधीयत इतियावत्। एवशब्दव्यावर्त्यतमाह—**नत्विति**। कामविशिष्टयजनविधानं तु नेत्यर्थः। एतदुक्तं भवति। विशिष्टविधानशंकायां नेदं विशिष्टविधानं किंतु कामानुवादेन यजनस्यैवेति परमसाध्यमत्राध्याहार्यम्। तत्कुतइत्यपेक्षायां कर्मणएव कार्यत्वात्कामस्य तदभावादिति वा हेतुवचनं चोपस्कर्तव्यम्। तदपि कुतइत्यपेक्षायां कर्मण्येवाधिकारो न फलकामइति गीतोक्तयोर्हेत्वोरुपस्थानम्। तदपि कुतइत्यपेक्षायां कर्मकामाकरणाकरणयोः प्रत्यवायाभावाभावयोर्हेत्वोरध्याहारः। एतदुपपादनाय लाक्षणिकफलशब्दोपादानमिति। भास्करस्त्वाह। नित्यनैमित्तिकाम्येव कर्माणि मुमुक्षुणा निष्कामतया कर्तव्यानि नतु ज्योतिष्टोमादीनि कामाधिकारे विहितानि। तेषां निष्कामतया करणे प्रमाणाभावादतोऽसदिदं व्याख्यानमिति तत्राह—**निष्काममिति**। यज्ञादिकमेव प्रक्रम्य तस्य निष्कामतयाऽनुष्ठानवचनाद्युक्तमिदं व्याख्यानम्। एतान्यपि तु कर्माणि संगं त्यक्त्वेत्यादिवक्ष्यमाणवचनेभ्यश्च। नचैतानि नित्यनैमित्तिकविषयाणि तत्र कामप्रसक्त्यभावेन तत्प्रतिषेधानुपपत्तेः। किंच नित्यनैमित्तिकातिरिक्तस्य ज्योतिर्नामकयज्ञस्य फलकामनया विनाऽविधानाच्च। ज्योतिष्टोमस्यैवायं गुणविधानायानुवादइति तु न संमतम्। आदिपदेन विश्वजिता यजेतेत्यादेर्ग्रहणम्। तत्रापि स्वर्गकामपदाध्याहारो निर्णीतइति चेत्सत्यम्। कामिनां तु तथा स्ववचनेनानुक्तौ कारणमिहोक्तमिति। ननु पूर्वार्धेनैव शंकायानिरस्तत्वात्किमुत्तरार्धेनेत्यतः क्रमेण पादद्वयोपयोगमाह—**अतइति**। फलकामस्याकर्तव्यत्वात्कर्मफलहेतुत्वमप्रसक्तं किंमितिप्रतिषिध्यतइत्यतआह—**कर्मेति**। शाकपार्थिवादित्वात्तत्कातिपदलोपोऽत्रेतिभावः। **तर्हीति**। यदि फलं नाकांक्ष्यमित्यर्थः। न करोमि स्वयं क्लेशरूपत्वादितिभावः। अकर्मपदस्य निषिद्धेऽपि प्रवृत्तेः संगशब्दस्य चानेकार्थत्वात्प्रकृतोपयुक्ततया व्याचष्टे—**कर्मेति**। सोपपत्तिकमाक्षिप्ते कथमिदमुत्तरमित्यतो भगवदभिप्रायमाह—**अन्येति**। प्रसादशब्देन भक्तिज्ञानादिकमप्युपलक्ष्यते। एवं तर्हि भगवत्प्रसादादीच्छया कर्म कर्तव्यमित्युक्तं स्यात्। नच तद्युक्तम्। कामस्य निंदितत्वात्। अन्यथा स्वर्गादिकामनाया अपि प्रसंगात्। अतो नेदं भगवदभिप्रायवर्णनं युक्तमित्यआह—**इच्छाचेति**। ते तव परितोषणाय सकलं कर्म वृणीमहइति महदाचारेण भगवत्परितोषणस्य कर्तव्यतावगमात्। ननु तदकर्तव्यतायामपि कामनांनिंदावचनं प्रमाणमस्तीत्युक्तमित्यतआह—**अनिंदनादिति**। यथा महदाचारो विशेषविषयो न तथा कामनिंदावचनं किंतु सामान्यविषयमेव। अतो महदाचारेण बाध्यतइतिभावः। तर्हि तद्वत्स्वर्गादिकामनापि कार्येति यदुक्तं तत्राह—**विशेषतइति**। चशब्देन प्रमाणाभावं समुच्चिनोति। अस्त्वाचारो विशेषविषयः। कामनिंदावचनं तु सामान्यविषयम्। तथापि कुतो बाध्यबाधकभावइत्यतआह—**सामान्यमिति**। सामान्यविशेषशब्दौ तद्विषयप्रमाणपरौ। चशब्दाद्विरोधे सति। उक्तं च प्रमाण

उपसंहरन्प्रमाणांतराण्यप्यत्राह—अतइति । एकात्मतां सायुज्यम् ।अस्यैव शेषो भक्तिमन्विच्छंतइति । ननु न ब्रह्मजिज्ञासाशब्दो ज्ञानेच्छापरः । किंतु विचारस्योपलक्षकः । सत्यम् । तथापि तत्पूर्वको विचारो लक्ष्यते । अन्यथा संबंधाभावात् । लोकसिद्ध-न्यायात् । लोकसिद्धव्याप्तिकानुमानात् ॥ ४७ ॥

रा० भा०—अतः सत्त्वस्थस्य मुमुक्षोरेतावदेवोपादेयमित्याह—नित्ये नैमित्तिके काम्ये च केनचित्फलविशेषेण संबन्धितया श्रूयमाणे कर्मणि नित्यसत्त्वस्थस्य मुमुक्षोस्ते कर्ममात्रेऽधिकारः । तत्संबन्धितयावगतेषु फलेषु न कदाचिदप्यधिकारः । फलस्य बन्धरूपत्वात्फलरहितस्य केवलस्य मदाराधनरूपस्य मोक्षहेतुत्वाच्च । मा च कर्मफलयोर्हेतुर्भूः । त्वयाऽनुष्ठीयमानेऽपि कर्मणि नित्यसत्त्वस्थस्य मुमुक्षोस्तवाकर्तृत्वमप्यनुसन्धेयम् । फलस्यापि क्षुन्निवृत्त्यादेर्न त्वं हेतुरित्यनुसन्धेयम् । तदुभयं गुणेषु वा सर्वेश्वरे मयि वाऽनुसन्धेयमित्युत्तरत्र वक्ष्यते । एवमनुसन्धाय कर्म कुरु । अकर्मण्यननुष्ठाने न योत्स्यामीति यत् त्वयाऽभिहितं न तत्र ते सङ्गोऽस्तु । उक्तेन प्रकारेण युद्धादिकर्मण्येव सङ्गोऽस्त्वित्यर्थः ॥ ४७ ॥

अ० टी०—नन्वेवं चेत्तर्हि किमिति कर्मकरणोपदेश इत्याशंक्याह—कर्मण्येवाधिकारस्त इति । ते तव स्वपराहंममज्ञानयुक्तस्य कर्मण्येव अधिकारः । अस्तीतिशेषः । अत्रायं भावः । यावत्पर्यन्तं स्वपरेति ज्ञानं तावन्न कर्मत्यागः । अत एव 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता' इत्याद्युक्तं श्रीभागवते । ननु तर्हि पूर्वोक्तबाध इतिचेत्तत्राह—मा फलेषु इति । फलेषु तदुक्तेषु अधिकारो मनसि कामो मास्तु । कदाचनेति साधनदशायामपि । ननु कृतं कर्म कामाभावे स्वफलं करिष्यत्येवाज्ञानादपि भक्षणे विषवन्मृत्युमित्यत आह—मा कर्मफलहेतुरिति । त्वं कर्मफलहेतुः कर्मफलभोगभोग्यदेहयुक्तो मा भूः । न भविष्यसीत्यर्थः । मदाज्ञयेति भावः । किं च । ते अकर्मणि सकामकर्त्तरि संगः संबंधो मास्तु । एवं वरमेव ददामीतिभावः ॥ ४७ ॥

नी० टी०—ननु ममाप्यौपनिषदात्मज्ञानार्थिनः शम एवेष्टस्तत्कथं मां युद्धचस्वेति प्रेरयसीत्याशंक्याह—कर्मण्येवेति । कर्मण्येवाधिकारो न ज्ञाननिष्ठायां मा फलेषु संगोऽस्त्वित्यपकृष्यते कर्मफलं स्वर्गपश्वादिहेतुः कर्मसु प्रवर्त्तकं यस्य तादृशो माभूः अकर्मणि कर्माकरणेऽपि तव संगो माऽस्तु ॥ ४७ ॥

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ॥**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥**

शां० भा०—यदि कर्मफलप्रयुक्तेन न कर्तव्यं कर्म कथं तर्हि कर्तव्यमित्युच्यते—योगस्थ इति । योगस्थः सन्कुरु कर्माणि केवलमीश्वरार्थं तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वा धनंजय । फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिस्तद्विपर्ययजाऽसिद्धिस्तयोः सिद्ध्यसिद्ध्योरपि समस्तुल्यो भूत्वा कुरु कर्माणि । कोऽसौ योगो यत्रस्थः कुर्वित्युक्तमिदमेव तत्सिद्ध्यसिद्ध्योः समत्वं योग उच्यते ॥ ४८ ॥

शां० आ०—आसक्तिरकरणे न युक्ता चेत्तर्हि क्लेशात्मकं कर्म किमुद्दिश्य कर्तव्यमित्याशङ्कामनूद्य श्लोकान्तरमवतारयति—यदीत्यादिना । वक्ष्यमाणयोगमुद्दिश्य तन्निष्ठो भूत्वा कर्माणि क्लेशात्मकान्यपि विहितत्वादनुतिष्ठेत्याह—योगस्थः सन्निति । कर्मानुष्ठानस्योद्देश्यं दर्शयति—केवलमिति । फलान्तरापेक्षामन्तरेणेश्वरार्थं तत्प्रसादनार्थमनुष्ठानमित्यर्थः । तर्हीश्वरसंतोषोऽभिलाषगोचरीभूतो भविष्यति नेत्याह—तत्रापीति । ईश्वरप्रसादनार्थे कर्मानुष्ठाने स्थितेऽपीत्यर्थः । सङ्गं त्यक्त्वा कुर्वीति

पूर्वेण संबन्धः । आकाङ्क्षितं पूरयित्वा सिद्धिशब्दार्थमाह—**फलेति** । तद्विपर्ययजा सत्त्वाशुद्धिजन्याऽज्ञानप्राप्तिलक्षणेति यावत् । कर्माण्यनुतिष्ठतो योगमुद्दिश्य शेषतया प्रकृतमाकाङ्क्षापूर्वकं प्रकटयति—**कोऽसावित्यादिना** ॥ ४८ ॥

**आ० भा०—पूर्वश्लोकोक्तं स्पष्टयति—योगस्थइति । योगस्थः उपायस्थः । संगं फलस्नेहम् त्यक्त्वा । ततएव सिद्ध्यसिद्ध्योः समोभूत्वा । स एव च मयोक्तो योगः ॥ ४८ ॥**

**आ० ज०—**कर्मण्येवेत्यनेन योगस्थइत्यस्य गतार्थतापरिहारार्थमाह—**पूर्वेति** । निष्कामनादिविशिष्टानि कर्माण्येव योगः । अतो योगस्थ इत्यनेनैव लब्धं पुनः कुरु कर्माणीति किमर्थमुच्यतइत्यतआह—**योगस्थइति** । ज्ञानोपायमनुतिष्ठन्नित्यर्थः । कर्मसंबंधं त्यक्त्वा कर्माणि कुर्वित्येतद्व्याहृतामित्यतआह—**संगमिति** । ईश्वरो मे प्रसीदतु इत्यभिसंधिमपि त्यक्त्वेतिव्याख्यानं पूर्वेणैव निरस्तम् । ततएवेति परामर्शसौकर्याय त्यक्त्वेत्यनुवादः कृतः । संगंत्यक्त्वा सिद्ध्यसिद्ध्योः समो भूत्वेति द्वयमुक्त्वा समत्वं योगउच्यतइति एकस्यैव ग्रहणमयुक्तम् । तथासति संगत्यागस्यायोगत्वप्रसंगादित्यतआह—**ततइति** । संगत्यागादेव । एतयोः कार्यकारणाभावात्कार्ये गृहीते कारणमर्थाद्गृहीतमितिभावः । ननु समत्वयोगयोर्भेदः केन शंकितः येन समत्वं योग उच्यत इति तयोरैक्यमुच्यतइत्यतआह—**सएवेति** । योगस्थइत्युक्ते कोयोग इत्यपेक्षायां भगवता संगं त्यक्त्वा सिद्ध्यसिद्ध्योः समो भूत्वेति योगो व्याख्यातः । मंदास्तु पृथगेवैते विशेषेण कल्पयिष्यंतीति तदनुजिघृक्षया इदमुदितमितिभावः । सएव यत्समत्वमितिशेषः । योगैकदेशे योगशब्दः ॥ ४८ ॥

**रा० भा०—एतदेव स्पष्टीकरोति—राज्यबन्धुप्रभृतिषु सङ्गं त्यक्त्वा युद्धादीनि कर्माणि योगस्थः कुरु । तदन्तर्भूतविजयादिसिद्ध्यसिद्ध्योः समो भूत्वा कुरु । तदिदं सिद्ध्यसिद्ध्योः समत्वम् । योगस्थ इत्यत्र योगशब्देनोच्यते । योगः सिद्ध्यसिद्ध्योः समत्वरूपं चित्तसमाधानम् ॥ ४८ ॥**

**अ० टी०**—नन्वेवमेव चेत्तर्हि किं कर्मकरणेनेत्याशंक्याह—**योगस्थ इति** । योगस्थः भगवदेकपरचित्तो भूत्वा संगं त्यक्त्वा पूर्वोक्तानां कर्माणि कुरु । मदाज्ञारूपाणि कुर्वित्यर्थः । सिद्ध्यसिद्ध्योः समो भूत्वा सिद्धिस्तत्फलाप्तिरसिद्धिः फलविपरीतफलं तत्र समो भूत्वा । ननु समत्वे सति किं स्यादत आह—**समत्वं योग उच्यत इति** । तत्र समत्वमेव योगः । भगवदाज्ञया कर्त्तव्यत्वेन तत्फलाफले समता स्यात् सा च भगवत्परत्वज्ञापिकेति योगरूपत्वम् । यद्वा । योगस्थः भगवत्संयोगे स्थितः कर्माणि तत्रोपयुक्तानि कुरु संगं त्यक्त्वा सर्वत्यागं कृत्वेतिभावः । धनंजयेति संबोधनेन स्वविभूतिरूपत्वात्स्वसंयोगयोग्यता बोधिता किं च । सिद्ध्यसिद्ध्योः । सिद्धिः सर्वदा योगः असिद्धिर्विप्रयोगस्तत्र समो भूत्वा संयोगानन्तरभाविविप्रयोगानंतरभाविपरमसुखज्ञानेच्छाजनितानंदभरभगवद्दत्तविप्रयोगे वैमनस्यमविचार्य तथा कुरु । तत्र समत्वे योग उच्यते । तद्रसज्ञैरिति शेषः । मया वा भगवद्दत्तविप्रयोगस्यापि परमानन्दरूपत्वात्तद्दत्तत्वेन योगरूपतेति भावः । संयोगानंतरजत्वात्तन्मध्यपातित्वादपि तथा तत्साधकत्वेनापि तथा ॥ ४८ ॥

**नी० टी०**—एतदेव विवृणोति–**योगस्थ इति** । योगस्थः सन् संगं फलतृष्णां कर्तृत्वाभिमानं च त्यक्त्वा कर्माणि ज्ञानार्थं कुरु हे धनंजय सिद्ध्यसिद्ध्योः कर्मफलस्य विविदिषादेः सिद्धावसिद्धौ वा समो हर्षविषादशून्यो भूत्वा कर्माणि कुर्विति संबंधः । इदमेव सिद्ध्यसिद्ध्योः समत्वं योग इत्युच्यते ॥ ४८ ॥

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ॥**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

**शां० भा०—यत्पुनः समत्वबुद्धियुक्तमीश्वराराधनार्थं कर्मैतस्मात्कर्मणः—दूरेणेति । दूरेणातिविप्रकर्षेण ह्यवरं निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात्समत्वबुद्धियुक्तात्कर्मणो जन्ममरणा-**

दिहेतुत्वाद्धनंजय । यत एवं योगविषयायां बुद्धौ तत्परिपाकजायां वा सांख्यबुद्धौ शरणमाश्रयमभयप्राप्तिकारणमन्विच्छ प्रार्थयस्व परमार्थज्ञानशरणो भवेत्यर्थः । यतोऽवरं कर्म कुर्वाणाः कृपणा दीनाः फलहेतवः फलतृष्णाप्रयुक्ताः सन्तः " यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः " इति श्रुतेः ॥ ४९ ॥

**शां० आ०**—किमिति योगस्थेन तत्त्वज्ञानमुद्दिश्य कर्म कर्तव्यं फलाभिलाषेणापि तदनुष्ठानस्य सुलभत्वादित्याशङ्क्य यथोक्तयोगयुक्तं कर्म स्तुवन्ननन्तरश्लोकमुत्थापयति—**यत्पुनरिति** । अवरं कर्म बुद्धिसंबन्धविधुरमिति शेषः । बुद्धियुक्तस्य बुद्धियोगाधीनं प्रकर्षं सूचयति—**बुद्धीति** । बुद्धिसंबन्धासंबन्धाभ्यां कर्मणि प्रकर्षनिकर्षयोर्भावे करणीयं नियच्छति—**बुद्धाविति** । यत्तु फलेच्छयाऽपि कर्मानुष्ठानं सुकरमिति तत्राऽऽह—**कृपणेति** । निकृष्टं कर्मैव विशिनष्टि—**फलार्थिनेति** । कस्मात्प्रतियोगिनः सकाशादिदं निकृष्टमित्याशङ्क्य प्रतीकमुपादाय व्याचष्टे—**बुद्धीत्यादिना** । फलाभिलाषेण क्रियमाणस्य कर्मणो निकृष्टत्वे हेतुमाह—**जन्मेति** । समत्वबुद्धियुक्तात्कर्मणस्तद्धीनस्य कर्मणो जन्मादिहेतुत्वेन निकृष्टत्वे फलितमाह—**यत इति** । योगविषया बुद्धिः समत्वबुद्धिः । बुद्धिशब्दस्यार्थान्तरमाह—**तत्परिपाकेति** । तच्छब्देन समत्वबुद्धिसमन्वितं कर्म गृह्यते । तस्य परिपाकस्तत्फलभूता बुद्धिशुद्धिः । शरणशब्दस्य पर्यायं गृहीत्वा विवक्षितमर्थमाह—**अभयेति** । सप्तमीमविवक्षित्वा द्वितीयं पक्षं गृहीत्वा वाक्यार्थमाह—**परमार्थेति** । तथाविधज्ञानशरणत्वे हेतुमाह—**यत इति** । फलहेतुत्वं विवृणोति—**फलेति** । तेन परमार्थज्ञानशरणतैव युक्तेति शेषः । परमार्थज्ञानबहिर्मुखानां कृपणत्वे श्रुतिं प्रमाणयति—**यो वा इति** । अस्थूलादिविशेषणमेतदित्युच्यते ॥ ४९ ॥

**आ० भा०**—इतश्च योगाय युज्यस्वेत्यतआह—**दूरेणेति** । बुद्धियोगाज्ज्ञानलक्षणादुपायात् । दूरेणातीव । अतो बुद्धौ शरणं ज्ञाने स्थितिम् । फलं कर्म कृतौ हेतुर्येषां ते फलहेतवः ॥ ४९ ॥

**आ० ज०**—ननु योगोपदेशमुपक्रम्य कर्मणो बुद्धियोगादवरत्वं किमर्थमुच्यतइत्यतआह—**इतश्चेति** । युज्यस्व प्रयतस्व । यावानर्थइतिकर्मफलस्य ज्ञानफलापेक्षायाऽल्पत्वाद्योगाय युज्यस्वेत्युक्तम् । अत्र तु तत्रैव हेत्वंतरमुच्यते । बुद्धियोगादितिषष्ठीसमासप्रतिनिरासायाह—**बुद्धीति** । लक्षणशब्दः स्वरूपार्थः पुरुषार्थसंबंधिना कर्मणा सह निर्देशे तथाभूतस्य ज्ञानस्यैव ग्रहणं युक्तमितिभावः । उपायात्पुरुषार्थस्य । दूरशब्दो विप्रकर्षवाची तस्यात्र कथमन्वयइत्यतआह—**दूरेणेति** । उक्तं कर्मणो ज्ञानादतीवावरत्वम् इदानीमुपपादनीयं तद्विहाय किमिदं तृतीयपादेनोच्यते इत्यतः साध्यनिर्देशोयमिति सूचयन्व्याचष्टे—**अतइति** । ज्ञाने स्थितिं तदुपाययोगानुष्ठानलक्षणाम् । फलहेतूनां कृपणत्ववर्णनमनुपयुक्तमित्यतआह—**फलमिति** ॥ ४९ ॥

**रा० भा०**—किमर्थमिदमसकृदुच्यते इत्यत आह—योऽयं प्रधानफलत्यागविषयोऽवान्तरफलसिद्ध्यसिद्ध्योः समत्वविषयश्च बुद्धियोगस्तद्युक्तात्कर्मणः इतरत्कर्म दूरेणान्तरं महदेतत् द्वयोरुत्कर्षापकर्षरूपं वैरूप्यम् उक्तबुद्धियोगयुक्तं कर्म निखिलं सांसारिकं दुःखं विनिवर्त्य परमपुरुषार्थलक्षणं च मोक्षं प्रापयति । इतरदपरिमितदुःखरूपं संसारमिति । अतः कर्मणि क्रियमाणे उक्तायां बुद्धौ शरणमन्विच्छ शरणं वासस्थानं तस्यामेव बुद्धौ वर्तस्वेत्यर्थः । कृपणाः फलहेतवः फलसङ्गादिना कर्म कुर्वाणाः कृपणाः संसारिणो भवेयुः ॥ ४९ ॥

**अ० टी०**—नन्वेवं चेत्तदा कथं न तत्र सर्वप्रवृत्तिरित्याशंक्याह—**दूरेणेति** । धनंजय मद्विभूतिरूप ! तथा कर्मायोग्यबुद्धियोगात् दूरेण कृतं कर्म फलाद्यर्थकृतं ननु मदाज्ञारूपत्वेन तदवरमपकृष्टमित्यर्थः । हीति युक्तोयमर्थः । भगवदाज्ञाव्यतिरिक्तत्वेन फलेच्छया कृतकर्मणो नीचत्वमेव । तस्मात्तदपकृष्टानां प्राकृतानामेव योग्यं नोत्कृष्टानां मदंशानामिति धनंजयसंबोधनेन ज्ञापितं तेनात्राधिकाराभावान्न सर्वेषां प्रवृत्तिरितिभावः । यस्मात्ते नीचाः सात्त्विकाधिकाररहितानां चाप्रवृत्तिस्त्वं च मदंशत्वात् बुद्धियोगयोग्य इति बुद्धियोगाय यतस्वेत्याह—**बुद्धाविति** । बुद्धौ बुद्धियोगनिमित्तमीश्वरं शरणमन्विच्छ अनुतिष्ठ ।

ननु सकामकर्त्तारोपीश्वरशरणमिच्छन्तीत्यत्र को विशेष इत्याशंक्याह—कृपणा इति । फलहेतवः सकामाः । कृपणा लुब्धा दीना इत्यर्थः । नहि लुब्धैरहं प्राप्तः । अत एव श्रुतौ ब्रह्मभूतस्यैव ब्रह्मप्राप्तिर्निरूपिता "ब्रह्मैव सन् ब्रह्माप्नोति" ॥ ४९ ॥

नी० टी०—इममेव बुद्धियोगं स्तौति—दूरेणेति । कर्म फलकामेन क्रियमाणं बुद्धियोगात् पूर्वोक्तान्निष्कामात्कर्मणः दूरेण हि प्रसिद्धं अवरं अत्यंतनिकृष्टं अतो बुद्धौ योगरूपायां तत्फलभूतायां सांख्यरूपायां वा तन्निमित्तं शरणं रक्षितारं आश्रयं वा ईश्वरं अन्विच्छ प्रार्थयस्व तत्प्रीत्यर्थं कर्माणि कुर्वित्यर्थः। यतः फलहेतवः फलमेव हेतुः प्रवर्त्तकं येषां तादृशाः फलतृष्णावंतः कृपणा दीना भवंति । "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः ॥ ४९ ॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ॥
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥

**शां० भा०—समत्वबुद्धियुक्तः सन्स्वधर्ममनुतिष्ठन्यत्फलं प्राप्नोति तच्छृणु—बुद्धीति । बुद्धियुक्तः समत्वविषयया बुद्ध्या युक्तो बुद्धियुक्तो जहाति परित्यजतीहास्मिँल्लोक उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यतस्तस्मात्समत्वबुद्धियोगाय युज्यस्व घटस्व । योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिरीश्वरार्पितचेतस्तया तत्कौशलं कुशलभावः । तद्धि कौशलं यद्बन्धस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्तन्ते । तस्मात्समत्वबुद्धियुक्तो भव त्वम् ॥ ५० ॥**

शां० आ०—पूर्वोक्तसमत्वबुद्धियुक्तस्य स्वधर्मानुष्ठाने प्रवृत्तस्य किं स्यादित्याशङ्क्याऽऽह—**समत्वेति** । बुद्धियुक्तः स्वधर्माख्यं कर्मानुतिष्ठन्निति शेषः । बुद्धियोगस्य फलवत्त्वे फलितमाह—**तस्मादिति** । पूर्वार्धं व्याचष्टे—**बुद्धीत्यादिना** । ननु समत्वबुद्धिमात्रान्न पुण्यपापनिवृत्तिर्युक्ता परमार्थदर्शनवतस्तन्निवृत्तिप्रसिद्धेरिति तत्राऽऽह—**सत्त्वेति** । उत्तरार्धं व्याचष्टे—**तस्मादिति** । स्वधर्ममनुतिष्ठतो यथोक्तयोगार्थं किमर्थं मनो योजनीयमित्याशङ्क्याऽऽह—**योगो हीति** । तर्हि यथोक्तयोगसामर्थ्यादेव दर्शितफलसिद्धेरनास्था स्वधर्मानुष्ठाने प्राप्तेत्याशङ्क्याऽऽह—**स्वधर्माख्येष्विति** । ईश्वरार्पितचेतस्तया कर्मसु वर्तमानस्यानुष्ठाननिष्ठस्य या यथोक्ता बुद्धिस्तत्तेषु कौशलमिति योजना । कर्मणां बन्धस्वभावत्वात्तदनुष्ठाने बन्धानुबन्धः स्यादित्याशङ्क्य कौशलमेव विशदयति—**तद्धीति** । समत्वबुद्धेरेवंफलत्वे स्थिते फलितमुपसंहरति—**तस्मादिति** ॥ ५० ॥

आ० भा०—ज्ञानफलमाह—बुद्धियुक्तइति । सुकृतमप्यप्रियम् मानुष्यादिफलम् जहाति न बृहत्फलमुपासनादिनिमित्तम् । "न हास्य कर्म क्षीयते । अविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यंतवदेवास्य तद्भवति" इत्यादिश्रुतिभ्यः अतः कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्र उभयक्षयश्रुतिरप्यनिष्टविषया नहीष्टपुण्यक्षये किंचित्प्रयोजनम् । न चेष्टनाशो ज्ञानिनो युक्तः इष्टाश्च केचिद्विषयाः । "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठंति । प्रजापतेः सभां वेश्म प्रपद्ये । यशोहं भवानि ब्राह्मणानाम् । स्त्रीभिर्वा यानैर्वा । अस्माद्ध्येवात्मानो यद्यत्कामयते तत्तत्सृजते । कामान्नीकामरूप्यनुसंचरन स एकधा भवति" इत्यादिश्रुतिभ्यः । बहुत्वेप्यात्मसुखस्य पुनरिष्टत्वात्कर्मसुखेन विरोधः अनुभवशक्तिश्चेश्वरप्रसादात् । श्रुतेश्च । नच शरीरपातात् पूर्वमेव । स तत्र पर्येति । एतमानंदमयमात्मानमुसंक्रम्येत्याद्युत्तरत्र श्रवणात् । न चैकीभूतएव ब्रह्मणा सः । 'मग्नस्य हि परेऽज्ञाने किन्न दुःखतरं भवेत्' इत्यादिनिंदनान्मोक्षधर्मे । परिहारे पृथग्भोगाभि-

धानाच्च । शुकादीनां पृथग्दृष्टेश्च जगद्व्यापारवर्जमित्यैश्वर्यमर्यादोक्तेश्च 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता' इति च । उपाधिनाशे नाशाच्च प्रतिबिंबस्य । न चैकीभूतस्य पृथग्ज्ञाने मानं पश्यामः । आसं दुःखानासमिति ज्ञानविरोधाच्चेश्वरस्य । अनेन रूपेणेति च । भेदाभावात् । न च प्रतिबिंबस्य बिंबैक्यं लोके पश्यामः । उपाधिनाशे मानं वा । मग्नस्य हि परेऽज्ञानइतिदुःखात्मकत्वोक्तेश्च यावदात्मभावित्वादित्युपाधिनित्यताभिधानाच्च अतोनन्यवचनं प्रतीयमानमप्यौपचारिकम् दृष्टाश्च ते भगवतोभिन्ना नारदेन । प्रतिशाखं च सएकधेत्यादिषु भेदेन प्रतीयंते । विरोधे तु युक्तिमतामेव बलवत्त्वम् । युक्तयश्चात्रोक्ता मग्नस्य हीत्यादयः । अतो जले जलैकीभाववदेकीभावः। उक्तं च—यथोदकं शुद्धे शुद्धं । यथा नद्यइत्यादौ । तत्राप्यन्योन्यात्मत्वे वृद्ध्यसंभवः । अस्ति चेषत्समुद्रेऽपि द्वारि । महत्त्वादन्यत्रादृष्टिः ता एवोपाददौ तस्य स ऋषिः शंसितव्रतइतिमहाकौर्मे । समर्थानां भेदज्ञानाच्च । 'नैव तत्प्राप्नुवंत्येते ब्रह्मेशानादयः सुराः । यत्ते पदं ते कैवल्यम् । इतिनिषेधाच्च नारदीये । सविचारश्च निर्णयः कृतो मोक्षधर्मेषु बलवांश्च सविचारो निर्णयो वाक्यमात्रात् । अतो यत्र नान्यत्पश्यतीत्याद्यपि तदधीनसत्तादिवाचि । अन्यथा कथमैश्वर्यादि स्यात् । न च तन्मायामयमित्युक्तम् । अन्यथा कथं तत्रैव सएकधेत्यादि ब्रूयात् । न च न ह वै सशरीरस्येत्यादिविरोधः । वैलक्षण्यात्तच्छरीराणाम् । अभौतिकानि हिं तानि नित्योपाधिविनिर्मितानि ईश्वरशक्त्या । तथाचोक्तम् 'शरीरं जायते तेषां षोडश्या कलयैव हि' इति नारायणरामकल्पे । वदंति च लौकिकाद्वैलक्षण्येऽभावशब्दमप्रहर्षमनानंदं सुखदुःखबाह्यइत्यादिषु । निरुक्त्यभावाच्च न तानि शरीराणि । तथा हि श्रुतिः । "अशरीतोङ्क्तच्छरीरमभवत् ।" नहि तानि शीर्णानि भवंति 'सर्गेऽपि नोपजायंते प्रलये न व्यथंति च' इतिवचनात् । साम्यात्प्रयोगः प्रयोगाच्च । 'अनिंद्रिया अनाहारा अनिष्पंदाः सुगंधिनः ॥ देहेंद्रियासुहीनानां वैकुंठपुरवासिनाम्' इत्यादिदृष्टदेहेष्वेव । नचैषाऽन्या गौणी मुक्तिः । बहुनात्र किमुक्तेन यावच्छ्वेतं न गच्छति ॥ योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः' इत्यादित्यपुराणे । तदन्यमुक्तिनिषेधात् । ये त्वत्रैव भगवंतं विशंति तेऽपि पश्चात्तत्रैव यांति । योग्यत्वं चात्र विवक्षितम् । युधिष्ठिरप्रश्ने इतरनिंदनाच्च । सायुज्यं च ग्रहवत् । तदुक्तेश्च । 'भुंजते पुरुषं प्राप्य यथा देवग्रहादयः । तथा मुक्तावुत्तमायां बाह्यान्भोगांस्तु भुंजते' इति नारायणाष्टाक्षरकल्पे । अतोऽनिष्टस्यैव वियोगः सोऽस्त्येव सर्वात्मना । अदुःखम् । सर्वदुःखविवर्जिताः अशोकमहिमम् । यत्र गत्वा न शोचतीत्यादिभ्यः विशेषवचनाभावाच्च । येषां त्वीषद्दृश्यते न सायुज्यं प्राप्ताः । सामीप्याद्येव तेषाम् अतः प्रारब्धकर्मशेषभावात् । तद्भुक्त्वा सायुज्यं गच्छंति । तच्चोक्तम् । 'संकर्षणादयः सर्वे स्वाधिकारादनंतरम् । प्रविशंति परं देवं विष्णुं नास्त्यत्र संशयः इतिव्यासयोगे । अतोऽनिष्टस्य सर्वात्मना वियोगः । 'परब्रह्मत्वमिच्छामि परब्रह्मञ्जनार्दन' इत्यादिना ब्रह्मादिभिरपि प्रार्थितत्वात् । 'न मोक्षसदृशं किंचित् अधिकं वा सुखं क्वचित् । ऋते वैष्णवमानंदं वाङ्मनोगोचरं महत्' इत्यादेश्च । ब्रह्मादिपदादप्यधिकं सुखं मोक्षइति सिद्धम् । अतो योगाय युज्यस्व । ज्ञानोपायाय । तद्धि कर्मकौशलम् ॥ ५० ॥

आ० ज०—बुद्धियुक्तः प्रेक्षावान् काम्यं सुकृतं दुष्कृतं च जह्यादितियोगस्वरूपनिरूपणपरतां निराकर्तुमाह—**ज्ञानेति**। कथं कर्मणो ज्ञानादतीवावरत्वमित्यतः काम्यकर्मिणः कृपणाः दीनाः इमं लोकं हीनतरं वा विशंतीतयुक्तम् । तथापि कथं दूरेणावरमित्यपेक्षायां कर्मफलाद्विलक्षणं ज्ञानफलमाहेत्यर्थः । **प्रतीतार्थे**ऽनुपपत्तिं तूत्तरत्र दर्शयिष्यति । अत्र दुष्कृतवत्सुकृतस्यापि सर्वात्मना हान प्रतीयते तत्संकोचेन व्याचष्टे—**सुकृतमिति** । अप्रियसुकृतं कीदृशमित्यतआह—**मानुष्येति** । व्यावर्त्यमाह—**नेति** । बृहत्प्राङ्मुक्तेर्ज्ञानादिगुणवृद्धिलक्षणं तदनंतरं चानंदवृद्धिरूपं फलं यस्य तत् बृहत्फलं तथाभूतं सुकृतमेव नास्तिकारणाभावादित्यतआह—

**उपासनेति** । आदिपदेन निवृत्तं कर्म कुतः संकोचइत्यतआह—**न हास्येति** । यजते ददाति तप्यतेऽनेनेतिशेषः । अत्रा- विदित्वेतिविशेषणाज्ज्ञानिनः सुकृताक्षयः प्रतीयते उत्तरत्र वाऽस्याः श्रुतेरुपयोगः । ननु नास्त्यकृतः कृतेनेत्यादिश्रवणात्सत्प्रतिपक्षा एताः श्रुतयइत्यतआह—**अतइति** । विशेषश्रुतेर्बलवत्त्वादिति भावः । श्रुतिः श्रवणम् । 'क्षीयंते चास्य कर्माणि' इतिज्ञा- निनोपि कर्मक्षयः प्रतीयत इतिचेन्न । निरवकाशश्रुतिविरोधेनास्य दुष्कृताविषयत्वात् । तदा विद्वान्पुण्यपापे विधूयेति ज्ञानिनोऽपि उभयक्षयश्रुतिरस्तीत्यतआह—**उभयेति** । उक्तैव युक्तिः । युक्तिविरुद्धं च ज्ञानिनः सर्वसुकृतहानम् । तथा हि । उपासनादिज- नितं ज्ञानिनः किमिष्टमुतानिष्टम् । आद्ये किं तदिच्छया क्षीयते उत ज्ञानस्वभावात् । आद्यं दूषयति—**नहीति** । येन ज्ञानी तत्क्षयमिच्छेत इतिशेषः । द्वितीयं निराकरोति—**नचेति** । ज्ञानस्यापुरुषार्थताप्रसंगादितिभावः । नांत्यः अनिष्टत्वे कारणाभा- वात् । निष्फलत्वादनिष्टमित्यतआह—**इष्टाश्चेति** । केचिदित्यलौकिकाः । मुक्तावलौकिकाविषया इष्टा भवंति तत्प्राप्तिः सुकृत- फलमिति भावः । मुक्तो विषयानिच्छतीत्येतत्कुतइत्यतआह—**स यदीति** । यशो यशस्वी । ब्राह्मणानां सकाशात् । मुक्तो यद्यत्कामयते तत्कर्मास्मात्परमात्मनः सृजते । इष्टविषयप्राप्तिः सुकृतफलमित्येतदपि अनया श्रुत्योच्यते । उपास- नादिकमेव ज्ञानी करोति । कृतेन वा सुकृतं न जायते इत्येदप्यनया निराकृतम् । ननु मुक्तः किमर्थं विषयानिच्छेत् । न तावत्सु- खार्थम् । ज्ञानेनावरणरूपाविद्यानिवृत्तौ आत्मनः स्वरूपसुखस्य व्यक्तत्वात् । पृथक्सुखस्यानंगीकारात् । नापि दुःखनिवृत्त्यर्थम् । अविद्यानिवृत्त्यैव तत्सिद्धेरिति । मैवम् । नाविद्यैवात्मस्वरूपावरणम् किंत्वीश्वरेच्छापि । तथा च वक्ष्यति । तथा च ज्ञानेनाविद्यायां निवृत्तायामशेषानिष्टनिवृत्तिर्भवति । स्वरूपसुखं च बहुतरं व्यज्यते । ननु सर्वम् । ज्ञानोत्तरमनुष्ठितेन निवृत्तकर्मणा प्रसन्नः परमे- श्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोति । अत्र च भाष्यकृतैव तत्र तत्र प्रमाणान्यु- क्तानि । अनेनैवाभिप्रायेण श्रुत्यादिषु मुक्तेर्ज्ञानमात्रसाध्यत्वं ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यते । न तु ज्ञानमात्रसाध्यं यत्स्वरूपसुखं तदेव बहुतरमास्ति । अतः कर्मसाध्यविषयभोगाभिव्यंग्यसुखांगीकारः किमर्थमित्यतआह—**बहुत्वेपीति** । कर्मसुखेंऽ- गीकृतइतिशेषः । शरीरेंद्रियरहितस्य मुक्तस्य कथं विषयानुभवे शक्तिरित्यतआह—**अनुभवेति** । तदुक्तं । ब्राह्मेण जैमिनिरिति । किं च कामरूप्यनुसंचरन्नित्यादिलीलाविग्रहग्रहणश्रुतेश्च मुक्तस्य विषयानुभवो युज्यतइत्याह—**श्रुतेश्चेति** । ननु यदेतदुदाहृतासु श्रुतिषु विषयेच्छादिकं श्रूयते तच्चरमशरीरपातात्पूर्वकालीनं किन्न स्यादित्यतआह—**नचेति** । अस्माच्छरीरादुत्थाय स तत्र पर्येति अस्माल्लोकात्प्रेत्य एतमानंदमयमात्मानामित्याद्युत्तरत्र श्रवणात् । इत्यादीतिक्रियाविशेषणम् । अद्वैतवादिनस्त्वाहुः । ब्रह्मैकमेव तत्त्वम् । तदेवोपाधिभेदभिन्नं जीवभावं प्रतिपद्यते । गगनमिव घटाद्युपाधिभिन्नं घटाकाशादित्वम् । तत्र यस्य जीवस्य ज्ञानमुत्पन्नम् स ब्रह्मणैकीभवति । घटनाशे घटाकाशइव महाकाशेनेति । तत्रैके जीवब्रह्मभेदस्योपाधेश्च मिथ्यात्वं मन्यंते । अन्ये च सत्यत्वम् । यदा च स ज्ञानी ब्रह्मणैकीभूतः तदा सकलस्य क्रियाकारकलक्षणफलभेदस्य प्रविलयात्कुतो विषयभोगो यदर्थं सुकृतस्यावस्थानमिति तद्दूषयति—**नचेति** । एवशब्देन भेदाभेदौ निराकरोति । 'परमात्मानमासाद्य तद्भूता यतयोऽमलाः । अमृतत्वाय कल्पंते न निवर्तंति चाभिभोः' इतिभीष्मेण तस्मिन्भूतास्तद्भूताइत्यभिप्रायेणोक्ते मुक्तास्ते ब्रह्मैव भूताइत्यर्थांतरमाशंक्य युधिष्ठिरेण आजन्ममरणं वा ते स्मरंत्युत न वाऽनघेति विकल्प्य पृष्टम् । यदि ज्ञानिनो मुक्तौ ब्रह्मणै- कीभवंति तदैवं वाच्यम् । किं ते संसारानुभूतं दुःखं स्मरंति उत नेति । आद्यस्य दूषणमुक्तम् । 'मोक्षे दोषो महानेषः प्राप्य सिद्धिं गतान् ऋषीन् । यदि तत्रैव विज्ञाने वर्तंते यतयः परे ॥' पूर्वं सिद्धिं गतानृषीन्प्राप्य परेऽपि यतयो यदि तत्र मुक्तौ विज्ञाने विज्ञानेन प्रागनुभूतदुःखस्मरणेन युक्ता वर्तंते तर्हि मोक्षे महानेषः प्रसिद्धो दोषइति । दोषं च भाष्यकारः स्फुटीकरिष्यति । द्वितीयोऽपि दूषितः—**मग्नस्येति** । पूर्वानुभूतस्मरणाद्यभावे परेऽज्ञाने मग्नस्य चेतनस्य दुःखतरं दुःखातिशयो न भवेत्किं भवेदेव । तदेवं मोक्षधर्मेऽस्य पक्षस्य निंदितत्वान्न ज्ञानी ब्रह्मणैकीभूतइत्यर्थः । ननु पूर्वपक्षस्थेन युधिष्ठिरेण निंदितत्वेऽपि कथं भिष्मेणोक्तमसत्स्यात् । परिहारे तदुक्तदोषस्योद्धारसंभवादित्यतआह—**परिहारइति** । न मयैतदुक्तं किंतु त्वमन्यथा गृहीत्वा दूषितवानसीत्याशयेन परिहारे भीष्मेण परमात्मनः पृथक्त्वेन मुक्तानां भोगाभिधानाच्च न ज्ञानी ब्रह्मणैकीभूतइत्यर्थः । तथा हि भीष्मवचनम् । 'तथाऽपि तत्त्वं परमं शृणु सम्यङ्मयेरितम् । इंद्रियाणि च बुध्यन्ते स्वदेहं देहिनो नृप ॥ करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः' इति ॥ यद्यपीदं दुर्बोधं तथाऽपि स्वः स्वरूपभूतो देहो यस्य तं स्वदेहं परमात्मानं मुक्तमन्यान्देहान्विषयांश्च मुक्तस्य इंद्रियाणि बुध्यंते । किं तानि कर्तॄणि नेत्याह— **करणानीति** । कस्तर्हि पूर्वार्धस्यार्थ इत्यत उक्तम्—**सूक्ष्मइति** । इतश्च न ज्ञानिनो ब्रह्मैक्यमित्याह—**शुकादीनामिति** । अनेन वाक्यत्रयेण मुक्तानां ब्रह्मभेदे क्रमेण प्रत्यक्षानुमानागमा उपन्यस्ताः । तत्र प्रत्यक्षं न बाधकम् । शुकादयो यद्यपि ज्ञानिनस्तथापीदानीमविनष्टोपाधित्वात्तन्निमित्तभेदवत्तया दृश्यंते । प्रारब्धकर्मक्षयादुपाधिनाशे ब्रह्मैव संवृता (भूताः) न पृथक् द्रक्ष्यंत इत्यत आह—**उपाधिनाशइति** । जीवास्तावद्ब्रह्मणः प्रतिबिंबा इतिसमर्थितम् । तत्र यदि तदीयस्यो- पाधेर्नाशोऽङ्गीक्रियते तदा तेषां नाशः प्रसज्यते । दर्पणाद्युपाधिनाशे मुखादिप्रतिबिंबस्य नाशदर्शनादित्यर्थः ।

यच्चोक्तम् । शुकादयोऽविनष्टोपाधित्वाद्ब्रह्मणः पृथक् दृश्यंतइति तदसदित्याह—**नचेति** । वस्तुत एकीभूतस्योपाधिनापि पृथक् ज्ञाने न मानं पश्यामः । गगनादिदृष्टांतस्यासंमतत्वात् सत्योपाधिभेदमतस्य चेदं दूषणम् । किंचोपाधिक एव जीवब्रह्मणोर्भेदः वास्तवं त्वैक्यमिति वदन्प्रष्टव्यः । किं ब्रह्मनिर्दुःखं स्वरूपमेवानुसंधत्ते न जीवगतं दुःखं तत्तु जीव एवानुसंधत्तइति पक्षः उत तदपीति । आद्यं दूषयति—**नचैकीभूतस्येति** । हस्तपादाद्युपाधिभेदेपि भोक्तुरेकत्वदर्शनादिति भावः । द्वितीयं निराकरोति—**आसमिति** । लङत्र सर्वकालोपलक्षणार्थः । जीवरूपेण दुःख्यासं स्वरूपेण तु नेति व्यवस्थयाऽनुसंधानान्न विरोधइत्यत आह—**अनेनेति** । इति च युक्तमितिशेषः । कुतइत्यत आह—**भेदेति** । उपाधेरभेदकत्वस्योक्तत्वादितिभावः । अपरे तु ब्रह्मणैक्यमापन्नस्य मुक्तस्य पूर्वदुःखानुस्मरणमस्ति न वा । नेतिपक्षे मग्नस्य हीत्युक्तो दोषः । आद्ये किमसौ पृथक् स्मरति उत ब्रह्मात्मक एव । प्रथमस्य दूषणं न चैकीभूतस्येति द्वितीयस्यासमित्यादीति व्याचक्षते । अनेन मोक्षे दोषो महानेष इत्युक्तो दोषः प्रदर्शितो भवति । ननूपाधिनाशे नाशाच्च प्रतिबिंबस्येति यदुक्तं तदसत् । भेदे हि बिंबप्रतिबिंबयोरेतत्स्यात् । न चैवं किंतु बिंबमेव प्रतिबिंबं तदेवेदमिति प्रत्यभिज्ञानात् । 'नैक्षेतोद्यंतमादित्यं नास्तं यांतं कदाच न । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्' इतिस्मृतावुद्यदादाविव वारिस्थप्रतिबिंबेऽपि आदित्यशब्दप्रयोगदर्शनात् । भेदस्तु दर्पणाद्युपाधिकृतः । तथा चोपाधिनाशे भेद एव नश्यति प्रतिबिंबस्य कुतो नाशः।एवं जीवस्यापीत्याशंक्य प्रत्यभिज्ञानं तावदसिद्धमित्याह—**नचेति** । न पश्यामो न प्रत्यभिजानीमः प्रत्युत प्रत्यग्भावादिना तयोर्भेदमेव पश्याम इति चार्थः । यच्चोक्तम् । जीवब्रह्मणोर्बिंबप्रतिबिंबयोरौपाधिको भेदइति तन्नास्माकमनिष्टम् । किं तु परस्यैव । जीवोपाधिनाशे प्रमाणाभावेन नित्यत्वात्तन्निमित्तस्यापि भेदस्य मुक्तौ स्थितेरित्याशयवानाह—**उपाधिनाशइति** । न पश्याम इत्यनुवर्तते । न केवलमुपाधिनाशे प्रमाणाभावः किंतु तन्नाशांगीकारे बाधकमस्तीत्याह—**मग्नस्येति** । उपाध्यभावे स्मरणादिविलोपात् । न केवलमेतावत् उपाधिनित्यत्वे प्रमाणं चास्तीत्याह—**यावदिति** । अस्तु तर्हि उदाहृतस्मृतिवाक्यं बिंबप्रतिबिंबयोरैक्ये प्रमाणमित्यतआह—**अतइति** । प्रत्यक्षेण भेदस्य प्रतीयमानत्वात्प्रतीयमानमपीत्यनेन प्रत्यभिज्ञायमिव वचनस्वरूपेऽपि न विवादोस्तीत्याह—वारिस्थमिति । न परस्य मुख्यं संभवतीत्यनौपचारिकैः सह पाठेऽपि बाधकवशादौपचारिकत्वं ब्रह्मज्ञानेन वा मुक्तिरित्यादौ दृष्टमिति । एवं शुकादीनामित्युक्तं प्रत्यक्षमुपपादितम् । अधुनाऽऽस्तांतावदुपपादनसापेक्षं प्रत्यक्षं तन्निरपेक्षं चास्तीत्याह—**दृष्टाश्चेति** । ते निवृत्तसकलकर्माणो मुक्ताः एतच्च मोक्षधर्मे स्पष्टमुक्तम् । प्राङ्मुक्तेश्वरभेदे स्मृतिरुदाहृता । श्रुतिं चोदाहरति—**प्रतिशास्त्रमिति** । ननु भेदइवाभेदेपि परेऽव्यये सर्वएकीभवंति इत्यादिवाक्यानि संति तत्कथं निर्णयइत्यतः सामान्यन्यायं तावदाह—**विरोधेत्विति** । बलवद्विरोधेन दुर्बलं बाध्यते इतिभावः । ततः किं प्रकृतइत्यतआह—**युक्तयइति** । अत्र भेदपक्ष उपलक्षणमेतत् । प्रत्यक्षानुकूल्यं च भेदवाक्यानां प्राबल्याय ग्राह्यम् । तर्ह्येकीभवंतीत्यस्य का गतिरित्यतआह—**अतइति** । उभयत्रैकीभाववादेन तद्वादिवाक्यं गृह्यते । स्थानैक्यविषयमैक्यवाक्यमित्यर्थः । इयं च रूढलक्षणेति न प्रयोजनमन्वेषणीयमिति दृष्टांतोक्तिः । न केवलमियं गतिर्न्यायप्राप्ता किं तु श्रौती चेत्याह—**उक्तं चेति** । उदकेऽप्यैक्यादसंमतो दृष्टांत इत्यतआह—**तत्रापीति** । नास्त्येव समुद्रे वृद्धिरनुपलंभादित्यतआह—**अस्तीति** । समुद्रेपि वृद्धिरितिशेषः । अनुपलंभस्यासिद्धिमाह—**द्वारीति** । नदीनां द्वारि दृश्यते चेतिशेषः । अन्यत्र कुतो न दृश्यते इत्यत आह—**महत्त्वादिति** । सामुद्रस्योदकस्य महत्त्वात् । न केवलं वृद्धिलिंगादनुमानादुदकभेदः सिद्धः किंतर्हि प्रत्यक्षादपीत्याह—**ताइति** । या इंद्रकमंडलोरादाय स्वकमंडलूदके क्षिप्तास्ताएवापस्तस्येंद्रस्य ददौ वसिष्ठ इति महाकौर्मवचनात्समर्थानां वसिष्ठादीनां जले भेददर्शनाच्च । भेदादर्शने विभज्य कथं दद्यादिति । इतश्च मुक्तभेदवाक्यमेव प्रबलम् । अभेदनिषेधात्मकत्वादित्याह—**नैवेति** । कैवल्यं सर्वोत्तमत्वम् । इतोऽपि भेदपक्षो बलवानिति वक्तुमाह—**सइति** । पूर्वोत्तरपक्षबलाबलचिंताविचारः । निर्णयो जीवेशभेदावधारणम् । बहवः पुरुषा ब्रह्मन्नित्यादिनेति शेषः । न हि भिन्नयोर्मुक्तावभेदः संभवतीति भावः । ततः किमित्यत आह—**बलवानिति** । निर्णयश्चेतिसंबंधः । वाक्यमात्रादेकीभवंतीत्यादेः । कथं तर्हि यत्रेत्यादिभूमलक्षणमुच्यते इत्यत आह—**अत इति** । सविचारनिर्णयविरोधादेव । विद्यमानस्याप्यन्यस्य भगवदधीनसत्तादित्ववाचि । इतश्चैवमित्याह—**अन्यथेति** । यद्यन्यदेव न स्यात्तर्हि कथमीश्वरस्य सर्वेश्वरत्वसार्वज्ञादिकं श्रुत्यादिसिद्धं स्यात् । मायामयमेव तच्छ्रुत्यादावुच्यते इत्यत आह—**नचेति** । बाधकांतरमाह—**अन्यथेति** । यदि भूमा द्वितीयः स्यात् कथंतर्हि तज्ज्ञानान्मुक्तस्य स एकधेत्यादिभेदेनावस्थानं श्रुतिर्ब्रूयात् । न तद्भूमज्ञानफलम् । किंतु सगुणविद्योपासनफलमित्यत उक्तम्—**तत्रैवेति** । भूमप्रकरण एव । ननु नारदेन श्वेतद्वीपे भगवतो भिन्ना दृष्टास्ते मुक्ता एव न भवंति । सशरीरत्वात् । सशरीराणामपि मुक्तत्वांगीकारे न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीत्यादिश्रुतिविरोधइत्यत आह—**नचेति** । कुतोनेत्यत आह—**वैलक्षण्यादिति** । किं तदस्मदादिशरीरेभ्यस्तेषां वैलक्षण्यमित्यत आह—**अभौतिकानीति** । अजडानीत्यर्थः । तर्हि किमात्मकानीत्यत आह—**नित्योपाधीति** । विकारित्वाद्विनाशः स्यादित्यत उक्तम्—**ईश्वरशक्त्येति** । कुतएतदित्यत आह—**तथाचेति** । नित्योपाधिरेव षोडशीकला ।

एतदुक्तं भवति । यच्छ्रुतौ सशरीरस्य दुःखानपहतिवचनम् । तत्कर्माधीनजडशरीराभिप्रायम् । श्वेतद्वीपे नारदेन दृष्टानि तु शरीराणि चिन्मयानि जडान्यपि न कर्माधीनानि अतो न दुःखकारणानि । तथा च न तेषां शरीराणामपि मुक्तत्वे श्रुतिविरोधइति । यदि मुक्ताः सशरीरास्तर्हि कथं तेषु "अशरीरं वा वसंतं न प्रियाप्रिये स्पृशतः" इति शरीराभाववचनमित्यत आह—**वदंतिचेति** । लौकिकाद्वैलक्षण्ये सति तद्वदत्रापीतिशेषः । इतश्चाशरीरत्वोक्तिर्युक्तेत्याह—**निरुक्तीति** । निरुक्तिलभ्यार्थस्य तत्राभावादित्यर्थः । काऽसौ निरुक्तिरित्यतः प्रक्रियासंपादनगौरवपरिहाराय श्रुतिमेव तत्परां दर्शयति—**तथाहीति** । अशारि शीर्णंभवदितिहेतोस्तच्छरीरशब्दमभवदित्यर्थः । कथं निरुक्तिलभ्योऽर्थस्तेषु नास्तीत्यतआह—**नहीति** । एवं तर्हि कथं तेषु शरीरं जायते तेषामिति शरीरशब्दप्रयोग इत्यतआह—**साम्यादिति** । अस्मदादिशरीरैः करचरणादिमत्त्वसाम्याद्गौण इत्यर्थः । कुतोऽयमशरीरशब्दस्याभिप्रायः । सर्वथा विग्रहराहित्यमेव किन्न स्यादित्यत आह—**प्रयोगाच्चेति** । नारदादिभिर्दृष्टदेहेष्वेव मुक्तेष्वेतद्वाक्यद्वये देहाभावप्रयोगादन्यथाऽनुपपत्त्याऽयमर्थः सिद्धः । न केवलं संभवमात्रेणेतिचार्थः । इत्यादीतिक्रियाविशेषणम् । प्रयोगादित्यनेन संबध्यते । संतु नारदेन दृष्टाः श्वेतद्वीपवासिनो मुक्ताः । तथाऽपि नास्माकं प्रत्यक्षविरोधः । एतेषां श्वेतद्वीपप्राप्तिरूपा निर्गुणमुक्तेरन्या गौणी मुक्तिः । निर्गुणायामेव मुक्तौ वयमैक्यं ब्रूम इत्यतआह—**नचेति** । श्वेतद्वीपप्राप्तिव्यतिरिक्तमुक्तिनिषेधादियमेव मुक्तिरित्यर्थः । ननु शिशुपालादयः श्वेतद्वीपगमनेन विनैवात्र भगवंतं प्रविश्य मुच्यंते तत्कथमेतदित्यतआह—**येत्विति** । ते न तदा मुच्यंते इति शेषः । तर्हि कदेत्यत आह—**तेऽपीति** । ततो मुच्यंत इति शेषः । ननु केचिदत्रैव मुच्यंत इत्याद्युक्त्वा महाज्ञाना गच्छंति क्षीरसागरमिति महायोग्यतावतामेव श्वेतद्वीपगमनोक्तेः कथमयं नियम इत्यत आह—**योग्यत्वमिति** । अत्र निवास इति शेषः । अस्ति सर्वेषां श्वेतद्वीपप्राप्तिः । महाज्ञानत्वलक्षणं योग्यत्वं त्वत्र निवासे विवक्षितमित्यर्थः । नन्विदं वाक्यं श्वेतद्वीपप्राप्तिं विना गुणमुक्तिर्नास्तीत्येतत्परम् । निर्गुणमुक्तिस्त्वन्याऽस्तीत्यत आह—**युधिष्ठिरेति** । सायुज्यं तावत्प्रसिद्धम् सैव निर्गुणमुक्तिः । तत्रात्मनो ब्रह्मणैकत्वमित्यत आह—**सायुज्यं चेति** । यथा ग्रहस्य पुरुषांतरं प्रविश्य भोगः तथा मुक्तस्येश्वरं प्रविश्य भोगएव सायुज्यं न त्वैक्यमित्यर्थः । कुत एतत् । सायुज्यशब्दसामर्थ्यादागमवाक्याच्चेत्याह—**तदुक्तेश्चेति** । उत्तमायां मुक्तौ सायुज्यलक्षणायामीश्वरं प्रविश्येति शेषः । ईश्वरानंदव्युदासाय—**बाह्यानिति** । बाह्येष्वपि विभागो वचनांतरादवसेयः । सुकृतमप्यप्रियमित्यादिनोक्तमर्थमुपसंहरति—**अत इति** । यथा सुकृतत्यागे संकोचस्तथाऽनिष्टत्यागेऽप्यस्ति किमिति जिज्ञासायामाह—**सइति** । प्राचुर्याभिप्रायाण्येतानि वचनानि किन्न स्युरित्यत आह—**विशेषेति** । संकर्षणादयः समष्टिजीवास्तावन्मुक्ताः । तेषां च बललक्ष्मणादिरूपेषु दुःखं दृश्यते तदेव विशेषप्रमाणमित्यत आह—**येषामिति** । न सायुज्यं प्राप्ताः । न मुक्ता इत्यर्थः । सायुज्ययोग्यानां तदभावे मुक्त्यभावात् । तेषां मुक्तत्वोक्तेस्तर्हि का गतिरित्यत आह—**सामीप्यादीति** । मुक्तत्वोक्तौ बीजमिति शेषः । कुतस्ते न मुक्ता इत्यतआह—**अत इति** । दुःखदर्शनात्तद्धेतुभूतप्रारब्धकर्मभावान्न मुक्ताः । कदा तर्हि मुच्यन्ते इत्यत आह—**तदिति** । अत्रागमसंमतिमाह—**तच्चोक्तमिति** । सोऽस्त्येवेत्याद्युक्तमुपसंहरति—**अत इति** । तत्किमनिष्टनिवृत्तिमात्रं मुक्तिरित्यतोऽनुमानागमाभ्यां परमसुखं चेत्याह—**परब्रह्मत्वमिति** । मुक्तत्वं ब्रह्मादिभिर्दुःखहीनैरपि मोक्षे सक्तिरस्तुत्यर्थमेतदिति न ब्रह्मण एकांतित्वविरोधः । समासांतविधेरनित्यत्वाद्वाङ्मनोगोचरमित्युक्तम् । महदित्येतत्सुखमित्यनेन संबध्यते । ब्रह्मादिपदादप्यधिकतमामिति । ब्रह्मणो ब्रह्मपदादप्यधिकं शेषस्य शेषपदादप्यधिकमित्यादि ज्ञेयम् । एवं ज्ञानफलप्रदर्शनत्वेन पूर्वार्धो व्याख्यातः । उक्तविधया योगस्वरूपनिरूपणपरः किन्न स्यादित्यतोऽस्मदुक्तार्थे तृतीयपादसंगतेरन्यथा तदसंगतेरित्यभिप्रेत्य तं पठति—**अत इति** । न दूरस्थहेतुपरामर्शोऽयमितिज्ञापयितुं तस्मादिति पठितव्येऽत इत्युक्तम् । ज्ञानस्य महाफलत्वाद्योगाय—**युज्यस्वेति** । कथं हेतुहेतुमद्भाव इत्यतो योगायेत्येतद्व्याचष्टे—**ज्ञानेति** । 'ननु समत्वं योग उच्यत' इति योगो व्याख्यातः । 'योगः कर्मसु कौशलम्' इति पुनर्व्याख्यायते इत्यतस्स्तुतिरियं योगस्य क्रियत इतिभावेनाह—**तद्धीति** । तद्योग इति शेषः ॥ ५० ॥

**रा० भा०**—बुद्धियोगयुक्तस्तु कर्म कुर्वाण उभे सुकृतदुष्कृते अनादिकालसंचिते अनन्ते बन्धहेतुभूते जहाति । तस्मादुक्ताय बुद्धियोगाय युज्यस्व । योगः कर्मसु कौशलं कर्मसु क्रियमाणेष्वयं बुद्धियोगः कौशलम् अतिसामर्थ्यम् अतिसामर्थ्यसाध्यमित्यर्थः ॥ ५० ॥

**अ० टी०**—नन्वेवं बुद्धौ किं स्यादित्याशंक्याह—**बुद्धियुक्त इति** । बुद्ध्यायुक्त इहैव उभे सुकृतदुष्कृते जहाति । अयमर्थः । मयि बुद्ध्या युक्त इह अस्मिन्नेव जन्मनि सुकृतफलं स्वर्गादि दुष्कृतफलं नरकं तत्साधने सुकृतदुष्कृते त्यजति । सुकृतमुत्तमफलार्थं करोमि । दुष्कृतं भ्रमाजातं तत्फलभोगो मम भविष्यतीति न विचारयति । किंतु । यथा ईश्वरः प्रेरयति तथा करोमीति करोति तेन भक्तसाधनत्वं भवती-

त्यर्थः। यस्माद्बुद्ध्याहं प्रसन्नः सन् भक्तिं ददामि तस्मात्त्वं योगाय म इति शेषः। युज्यस्व यत्नं कुरु। ननु योगोपि कृतिसाध्यत्वात्कर्म एवेति। पूर्वोक्तमध्यपातित्वात् किं योगेनेत्यतआह—योग इति। कर्मसु कौशलम्। चातुर्यं योग इत्यर्थः। मन्निष्ठत्वान्मद्दर्शनार्थं मनःस्थिरीकरणसाधकत्वाच्चातुर्यम्। साक्षाद्भक्त्यधिकारफलानि वा। मदाज्ञया कर्मकरणं योगः। एतदेव कर्मसु चातुर्यं यत्कृत्वापि भक्तिसाधने प्रवेशनीयं तादृशो योग उत्तम इतीदानीं तदधिकाराभावात्तथोपदिशति। अन्यथा कर्मस्विति पदं व्यर्थं स्यात्॥ ५०॥

नी० टी०—किं च—बुद्धीति। बुद्धियुक्तः समत्वबुद्धियुक्तो योगाय समत्वबुद्धियोगाय युज्यस्व घटस्व योगः सिद्ध्यसिद्ध्योः समत्वबुद्धिः कर्मसु बंधकेष्वपि कौशलं बंधनिवर्त्तकत्वसंपादनं। ननु बुद्धियुक्तः कर्मभिर्दुष्कृतं त्यजतु। "धर्मेण पापमपनुदति" इति श्रुतेः। सुकृतं तु सजातियत्वात्तैर्दुष्परिहरमिति कथमुभे सुकृतदुष्कृते जहातीत्युच्यते। सत्वशुद्धिज्ञानोत्पत्तिद्वारेति प्राञ्चः। अर्वाञ्चस्तु दुष्कृतत्यागमुक्तरीत्याऽभ्युपेत्य फलत्यागात् सुकृतत्यागोऽपि कर्मयोगिनो भवति दुष्कृतफलवन्मोक्षप्रतिबंधकतत्फलस्यानुत्पादात्। यत्तु आपस्तंबोक्ताम्रवृक्षनिदर्शनेन नांतरीयकं सुकृतफलमुक्तं न तत्फलत्वेनोपपद्यते नांतरीयकत्वादेव तस्मात्फलद्वारा मोक्षप्रतिबंधके क्रियमाणे एव सुकृतदुष्कृते कर्मयोगी जहाति ज्ञानी तु संचिते अपि ते जहातीति तयोर्विशेष इत्याहुः॥ ५०॥

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः॥**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्॥ ५१॥**

**शां० भा०—यस्मात्—कर्मजमिति। कर्मजं फलं त्यक्त्वेति व्यवहितेन संबन्धः। इष्टानिष्टदेहप्राप्तिः कर्मजं फलं कर्मभ्यो जातं बुद्धियुक्ताः समत्वबुद्धियुक्ता हि यस्मात्फलं त्यक्त्वा परित्यज्य मनीषिणो ज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ता जन्मैव बन्धो जन्मबन्धस्तेन विनिर्मुक्ता जीवन्त एव जन्मबन्धविनिर्मुक्ताः सन्तः पदं परमं विष्णोर्मोक्षाख्यं गच्छन्त्यनामयं सर्वोपद्रवरहितमित्यर्थः। अथ वा बुद्धियोगाद्धनंजयेत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतः संप्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धिजनिता बुद्धिर्दर्शिता साक्षात्सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात्॥ ५१॥**

शां० आ०—समत्वबुद्धियुक्तस्य सुकृतदुष्कृततत्फलपरित्यागेऽपि कथं मोक्षः स्यादित्याशङ्क्याऽऽह—**यस्मादिति**। समत्वबुद्ध्या यस्मात्कर्मानुष्ठीयमानं दुरितादि त्याजयति तस्मात्परम्परयाऽसौ मुक्तिहेतुरित्यर्थः। मनीषिणो हि ज्ञानातिशयवन्तो बुद्धियुक्ताः सन्तः स्वधर्माख्यं कर्मानुतिष्ठन्तस्ततो जातं फलं देहप्रभेदं हित्वा जन्मलक्षणाद्बन्धाद्विनिर्मुक्ता वैष्णवं पदं सर्वसंसारस्पर्शशून्यं प्राप्नुवन्तीति श्लोकोक्तमर्थं श्लोकयोजनया दर्शयति—**कर्मजमित्यादिना**। इष्टो देहो देवादिलक्षणोऽनिष्टो देहस्तिर्यगादिलक्षणस्तत्प्राप्तिरेव कर्मणो जातं फलं तद्यथोक्तबुद्धियुक्ता ज्ञानिनो भूत्वा तद्बलादेव परित्यज्य बन्धविनिर्मोकपूर्वकं जीवन्मुक्ताः सन्तो विदेहकैवल्यभाजो भवन्तीत्यर्थः। बुद्धियोगादित्यादौ बुद्धिशब्दस्य समत्वबुद्धिरर्थो व्याख्यातः संप्रति परम्परां परिहृत्य सुकृतदुष्कृतप्रहाणहेतुत्वस्य समत्वबुद्धावसिद्धेर्बुद्धिशब्दस्य योग्यमर्थान्तरं कथयति—**अथ वेति**। अनवच्छिन्नवस्तुगोचरत्वेनानवच्छिन्नत्वं तस्याः सूचयन्बुद्ध्यन्तराद्विशेषं दर्शयति—**सर्वत इति**। असाधारणं निमित्तं तस्या निर्दिशति—**कर्मेति**। यथोक्तबुद्धेर्बुद्धिशब्दार्थत्वे हेतुमाह—**साक्षादिति**। जन्मबन्धविनिर्मोकादिरादिशब्दार्थः। यस्मिन्कर्मणि क्रियमाणे परमार्थदर्शनलक्षणा बुद्धिरुद्देश्यतया युज्यते तस्मात्कर्मणः सकाशादितरत्कर्म तथाविधोद्देश्यभूतबुद्धिसंबन्धविधुरमातिशयेन निष्कृष्यते। अतश्च परमार्थबुद्धिमुद्देश्यत्वेनाऽऽश्रित्य कर्मानुष्ठातव्यं परिच्छिन्नं फलान्तरमुद्दिश्य तदनुष्ठाने कार्पण्यप्रसङ्गात्, किंच परमार्थबुद्धिमुद्देश्यामाश्रित्य कर्मानुतिष्ठन्नन्तःकरणशुद्धिद्वारा परमार्थदर्शनसिद्धौ जीवत्येव देहे सुकृतादि हित्वा मोक्षमधिगच्छति। तथा च परमार्थदर्शनलक्षणयोगार्थं मनो धारयितव्यम्। योगशब्दितं हि परमार्थदर्शनमुद्देश्यतया कर्मस्वनुतिष्ठतो नैपुण्यमिष्यते। यदि च परमार्थदर्शनमुद्दिश्य तद्युक्ताः सन्तः समारभेरन्कर्माणि तदा तदनुष्ठानजनितबुद्धिशुद्ध्या ज्ञानिनो भूत्वा कर्मजं फलं परित्यज्य निर्मुक्तबन्धना मुक्तिभाजो भवन्तीत्येवमस्मिन्पक्षे श्लोकत्रयाक्षराणि व्याख्यातव्यानि॥ ५१॥

**आ० भा०**—तदुपायमाह—कर्मजमिति । कर्मजं फलं त्यक्त्वाऽकामनयेश्वराय समर्प्य बुद्धियुक्ताः सम्यक् ज्ञानिनो भूत्वा पदं गच्छंति । स योगः कर्मज्ञानसाधनम् । तन्मोक्षसाधनमिति भावः ॥५१॥

**आ० ज०**—ननु कर्मजमितिश्लोकः पूर्वोक्तान्न विशिष्यत इत्यत आह—**तदिति** । तस्य ज्ञानस्य उपायं योगं तज्ज्ञानमुपायो यस्य तं मोक्षं चाह—विवृणोतीत्यर्थः । व्यवहितत्वादन्वयमाह—कर्मजं फलं त्यक्त्वा । अप्राप्तस्य फलस्य कथं त्याग इत्यतो व्याचष्टे—**अकामनयेति** । प्रकृत्यादिभ्य उपसंख्यानात्तृतीया । एतत्प्रागुक्तमित्यतः प्रकारांतरेण व्याचष्टे—**ईश्वरायेति** । बुद्धियुक्ता मनीषिण इति पौनरुक्त्यपरिहारायाह—**बुद्धीति** । सम्यग्ज्ञानिन इति शास्त्रजनिततत्त्वज्ञानिनः अनेन मनीषिण इत्यपरोक्षज्ञानिन इति सूचितम् । प्रशंसायां मत्वर्थीयविधानात् । नन्विदमेकं वाक्यं कथं वाक्यार्थद्वयस्य विवरणम् । मोक्षस्वरूपविवरणेऽपि योगो न सम्यग्विवृतः । अंगिनः कर्मण एवानभिधानात् । अंगानां च संकल्पत्यागादीनामित्यत आह—**स इति** । समस्तांगसंग्रहाय योगग्रहणम् । तज्ज्ञानं यद्यपि योजनावशादिदमेकं वाक्यं तथाप्यर्थद्वयवशाद्द्वे वेदितव्ये । योगश्च कर्मजं फलं त्यक्त्वेत्यनेन समग्रो लक्षित इतिभावः ॥ ५१ ॥

**रा० भा०**—बुद्धियोगयुक्ताः कर्मजं फलं त्यक्त्वा कर्म कुर्वन्तस्तस्मात् जन्मबन्धविनिर्मुक्ताः अनामयं पदं गच्छन्ति । हि प्रसिद्धमेतत्सर्वासूपनिषत्स्वित्यर्थः ॥ ५१ ॥

**अ० टी०**—ननु कर्मणां स्वतन्त्रफलकत्वं, भक्तेः कथं साधनतेत्याशंक्याह—कर्मजमिति । मनीषिणः शास्त्रार्थज्ञातारः । बुद्धियुक्ता बुद्धिर्युक्ता येषां तादृशत्वं च भक्तिप्रयत्नवत्त्वेन ते हि निश्चयेन कर्मजं फलं त्यक्त्वा जन्मबन्धविनिर्मुक्ताः सन्तोऽनामयं पदं भक्तिरूपं गच्छन्तीत्यर्थः । अन्यत्र रोगादिकं भवति । नतु भक्तौ भगवच्चरणरूपायाम् । अत एव श्रीभागवते मृत्युभयाभावत्वं भगवच्चरणे निरूपितम् । मर्त्य इत्यारभ्य मृत्युरस्मादपैतीत्यन्तेन श्लोकेन देवकीस्तुतौ ॥ ५१ ॥

**नी० टी०**—एतदेवाह—**कर्मजमिति** । बुद्धियुक्ताः समत्वबुद्धियुक्ताः क्रियमाणकर्मजं फलं त्यक्त्वा मनीषिणो मनोनिग्रहसमर्था भूत्वा जन्मरूपेण बंधेन मुक्ताः संतोऽनामयं निरुपद्रवं पदं मोक्षाख्यं गच्छंति ॥ ५१ ॥

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्याति ॥**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

**शां० भा०**—योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्यत इत्युच्यते—यदेति । यदा यस्मिन्काले ते तव मोहकलिलं मोहात्मकमविवेकरूपं कालुष्यं येनाऽऽत्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्तते तत्तव बुद्धिर्व्यतितरिष्यति व्यतिक्रमिष्यति शुद्धिभावमापत्स्यत इत्यर्थः । तदा तस्मिन्काले गन्तासि प्राप्स्यसि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च तदा श्रोतव्यं श्रुतं च निष्फलं प्रतिपद्यत इत्यभिप्रायः ॥ ५२ ॥

**शां० आ०**—यथोक्तबुद्धिप्राप्तिकालं प्रश्नपूर्वकं प्रकटयाति—**योगेति** । श्रुतं श्रोतव्यं दृष्टं द्रष्टव्यमित्यादौ फलाभिलाषप्रतिबन्धान्नोक्ता बुद्धिरुदेष्यतीत्याशङ्कयाऽऽह—**यदेति** । विवेकपरिपाकावस्था कालशब्देनोच्यते । कालुष्यस्य दोषपर्यवसायित्वं दर्शयन्विशिनष्टि—**येनेति** । तदनर्थरूपं कालुष्यं तवेत्यन्वयार्थं पुनर्वचनम् । बुद्धिशुद्धिफलस्य विवेकस्य प्राप्त्या वैराग्यप्राप्तिं दर्शयति—**तदेति** । अध्यात्मशास्त्रातिरिक्तं शास्त्रं श्रोतव्यादिशब्देन गृह्यते । उक्तं वैराग्यमेव स्फोरयति—**श्रोतव्यमिति** । यथोक्तविवेकासिद्धौ सर्वस्मिन्ननात्मविषये नैष्फल्यं प्रतिभातीत्यर्थः ॥ ५२ ॥

**आ० भा०**—कियत्पर्यंतमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीत्याह—यदेति । निर्वेदं नितरां लाभम् । प्रयोगात् । तस्माद्ब्राह्मणः पांडित्यं निर्विंद्येत्यादि । न हि तत्र वैराग्यमुपपद्यते ।

तथा सति पांडित्यादिति स्यात् । न च ज्ञानिनां भगवन्महिमादिश्रवणे विरक्तिर्भवति । 'आत्मारामा हि मुनयो निर्ग्रंथा अप्युरुक्रमे । कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' इति वचनात् अनुष्ठानाच्च शुकादीनाम् । नच तेषां फलं सुखं नास्ति । तस्यैव महत्सुखत्वात् । तेषाम् 'या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ माभूत्किम्वंतकासि लुलितात्पततां विमानात्' इत्यादिवचनात् । तेषामप्युपासनादिफलस्य साधितत्वात् । तारतम्याधिगतेश्च । तथाहि । यदि तारतम्यं न स्यात् 'नात्यंतिकं विगणयंत्यपि ते प्रसादं । नैकात्मतां मे स्पृहयंति केचित् । एकत्वमप्युत दीयमानं न गृह्णन्ति' इतिमुक्तिमभ्यनिच्छतामपि मोक्षएव फलम् । तमिच्छतामपि भवति सुप्रतीकादीनाम् । कथमनिच्छतां स्तुतिरुपपन्ना स्यात् । वचनाच्च । 'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिंगभेदने' इति । 'योगिनां भिन्नलिंगानामाविर्भूतस्वरूपिणाम् ॥ प्राप्तानां परमानंदं तारतम्यं सदैव हि' इति । 'न त्वामतिशयिष्यंति मुक्तावपि कदाचन ॥ मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि' इति च साम्यवचनं तु प्राचुर्यविषयम् । दुःखाभावविषयं च । तथाचोक्तम् । 'दुःखाभावः परानंदो लिंगभेदः समो मतः ॥ तथाऽपि परमानंदो ज्ञानभेदात्तु भिद्यते' इतिनारायणाष्टाक्षरकल्पे अतो न वैराग्यं श्रुतादावत्र विवक्षितम् । नच संकोचे मानं किंचिद्विद्यमान इतरत्र प्रयोगे महद्भिः श्रवणीयस्य श्रुतस्य च वेदादेः फलं प्राप्स्यसीत्यर्थः ॥ ५२ ॥

आ० ज०—यदात इति श्लोके योगसंबंधि न किमप्युच्यत इत्यतस्तत्संगतिमाह—**कियदिति** । एवं फलकामनादिवर्जितानीश्वराराधनरूपाणीत्याकांक्षायामाहेत्यर्थः । नन्वियमाकांक्षैवानुपपन्ना । योगे हि ज्ञानफलसाधनतयोपदिष्टः । साधनं च साध्यप्राप्तिपर्यंतमनुष्ठेयमिति प्रसिद्धमेव । नियतपूर्वक्षणवृत्ति कारणमिति हि तल्लक्षणम् । उच्यते । योगो हि न साक्षाज्ज्ञानसाधनम् । किं तु श्रवणादिकमेव । प्रमितेः प्रमाणफलत्वात् । योगात्त्वदृष्टद्वारा सत्वशुद्धिमुत्पाद्य श्रवणादीनामुपकरोति उपकारस्य च द्वयी गतिर्दृष्टा । अतो युक्तैवेयमाकांक्षेति । तथाऽपि जिज्ञासुनेति वक्तव्यम् । सत्यम् । मोक्षसाधनज्ञानार्थिनेत्येतावतोऽर्थस्य ग्रहणाय मुमुक्षुणेत्युक्तं । निर्वेदं वैराग्यमित्यन्यथाप्रतीतिनिरासायाह—**निर्वेदमिति** । ननु निःपूर्वो विदिर्वैराग्ये रूढः । तत्कुतो लाभार्थतेत्यत आह—**प्रयोगादिति** । अस्यामपि श्रुतौ वैराग्यार्थता किं न स्यादित्यत आह—**न हीति** । कुतो नोपपद्यतइत्यत आह—**तथासतीति** । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति कात्यायनवचनात्पांडित्यस्य विरामार्थधातुयोगबलेनापादानत्वप्राप्तौ अपादाने पंचमी स्यात् न द्वितीयेत्यर्थः । इदमत्राभिप्रेतम् । निरुपसर्गः सत्तार्थस्यैव विदेरर्थं बाधित्वा तं वैराग्यार्थं व्यवस्थापयति । निर्विद्यत इति कर्तरि प्रयोगदर्शनात् । लाभार्थस्य विदेरर्थं विशिनष्ट्येव केवलम् । निर्विंदति निर्विंदत इति वैराग्ये तत्प्रयोगादर्शनादिति । अथवाऽस्तु सर्वत्र निरो धात्वर्थबाधकत्वम् । विशेषकत्वमपि क्वचित् किं न स्यात् । व्याददातीत्यादावुभयदर्शनादिति । न केवलं गीतायां प्रयोगाल्लाभार्थता । किं तु वैराग्यार्थतानुपपत्तेश्चेत्याह—**न चेति** । अनेनांतःकरणस्य मोहकलिलातिक्रमो नाम ज्ञानप्राप्तिरिति सूचितं भवति । आदिपदेन तदुपयुक्तं गृह्यते । कुतो न भवतीत्यत आह—**आत्मारामा इति** । भक्तिं श्रवणादिलक्षणाम् । कस्य वा महतीमेतां आत्मारामः समभ्यसदित्यस्योत्तरत्वात् अनुष्ठानाच्च श्रवणादेरिति शेषः । ननु शुकादीनां श्रवणाद्यनुष्ठानेऽपि फलं नास्ति तत्फलस्य ज्ञानस्य प्राप्तत्वात् फलाभावानुसंधानमेव चात्र वैराग्यशब्देनाभिप्रेतम् । यथाऽऽह मायावादी । तदा श्रोतव्यं श्रुतं च निष्फलं प्रतिपद्यत इत्यभिप्राय इति । अनुष्ठानं तु लोकसंग्रहार्थं संस्काराद्वेत्यत आह—**न चेति** । कुतो नेत्यत आह—**तस्यैवेति** । तस्यैव श्रवणादेरेव स्थान्यादेशोक्तिव्यत्ययेन । द्वंद्वेऽल्पाच्तरस्य परनिपातेन च 'आन्महतः समानाधिकरणजातीययोः' इत्यस्य विधेरनित्यत्वज्ञापनान्महत्तत्वाद्विकुर्वाणादित्यादिप्रयोगदर्शनाच्च । महासुखत्वादितियुक्तम् । तथाऽपि श्रवणादिकमेव कथं सुखम् । उत्तरक्षण एवमहासुखोदयादैक्योपचार इत्यदोषः । तिष्ठतु तावत्कालांतरभावि महत्फलमित्येवशब्दः । नन्वस्मदादीनां श्रवणोत्तरक्षणे सुखं नोत्पद्यत इति अत आह—**तेषामिति** । रसिकानामित्यर्थः । न हि पितृजीवनादिवार्ताश्रवणेनान्येषामिव न पुत्रस्यापि सुखेनोत्पत्तव्यामिति । अस्तु संभावना निश्चयस्तु कुत इत्यत आह—**येति** । भवतो भवज्जनानां च स्वमहिमन्याविर्भूतस्वरूपे आब्रह्मण्यल्पमुक्ते । न केवलं तात्कालिकं सुखं तत्फलं । किं तु

मुक्तावानंदवृद्धिश्चेत्याह—**तेषामिति**। ज्ञानिनामपि ज्ञानोत्तरस्याप्यनुष्ठानस्य यदि फलं स्यात्तर्ह्यनुष्ठानस्यैकाविध्यानियमासंभवात्स्व-गैवदपवर्गेपि तारतम्यं प्रसज्येत । नच तद्युक्तमप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्चेत्यतोनेदमनिष्टमितिभावेनाह—**तारतम्येति** । प्रमाणविरोधाभावाच्चेति चार्थः । कुतः प्रमाणान्मुक्ततारतम्याधिगतिरित्यतोर्थापत्तिं तावदाह—**तथाहीति** । यदि मुक्तानां तार-तम्यं न स्यात् । तदामुक्तिमप्यनिच्छतामेकांतिनां मोक्षमात्रफलं तं मोक्षमिच्छतामपि सुप्रतीकादीनां मोक्षो भवतीत्यंगीकार्यं स्यात् । तथा च नात्यंतिकमितिमोक्षमनिच्छतां स्तुतिः कथमुपपन्ना स्यात् । निमित्ताभावात् । अतः स्तुत्यन्यथानुपपत्त्येच्छतां मुक्तेरनि-च्छतां मुक्तिरधिकेतिगम्यतेत्यर्थः आत्यंतिकं मुक्तिहेतुम् । एकात्मतां सायुज्यम् एकत्वमपि तदेव । आगमाच्च तारतम्याधि-गतिरित्याह—**वचनाच्चेति** । आविर्भूतस्वरूपिणामिति कर्मधारयादतिशयार्थे इनिः । अनेन जीवन्मुक्तावैश्वर्यतारतम्येनार्थापत्ते-रन्यथोपपत्तिः परिहृतालिंगभेदने भिन्नलिंगानामित्याद्युक्तेः । परमं साम्यमुपैतीत्यादिवचनविरुद्धं मुक्ततारतम्यमित्यतआह—**साम्येति** । प्राचुर्यं पूर्णत्वं । कुतएतत् । उक्तप्रमाणविरोधात् । विशेषवचनाच्चेत्याह—**तथाचेति** । यद्यपि परानंदोलंबुद्धिगोचर-त्वमात्रेण समस्तथापि नच ज्ञानिनामित्यादिनोक्तमर्थमुपसंहरति—**अतइति** । अस्तु तर्हि भगवन्महिमादिव्यतिरिक्तश्रुतादौ वैराग्यमत्र विवक्षितमित्यतआह—**नचेति** । निर्वेदशब्दस्य वैराग्यार्थकत्वे निश्चिते तद्बलाच्छ्रोतव्यादिशब्दस्यार्थसंकोचः क्रियेतापि । इतरत्र नितरां लाभे तस्य प्रयोगे विद्यमाने निर्मूलं संकोचकल्पनमित्यर्थः । ननु लाभार्थतायामप्यसच्छास्त्रादिव्युदासाय संकोचः कार्यएवेत्याह—**महद्भिरिति** । अयोग्यतयैव तन्निरासः प्रकरणाद्वेतिभावः ॥ ५२ ॥

**रा० भा०—उक्तप्रकारेण कर्मणि वर्तमानस्य तया वृत्त्या निर्धूतकल्मषस्य ते बुद्धिर्यदा मोहकलिलम् अत्यल्पफलसङ्गहेतुभूतं मोहरूपं कलुषं व्यतितरिष्यति । तदास्मत्त इतः पूर्वं त्याज्य-तया श्रुतस्य फलादेरितः पश्चात् श्रोतव्यस्य च कृते स्वयमेव निर्वेदं गन्तासि गमिष्यसि ॥ ५२ ॥**

अ० टी०—ननु तत्प्राप्तिः कदा स्यादित्यत आह—**यदा त इति** । ते बुद्धिर्यदा मोहकलिलं मोहगहनं लौकिकेषु देहादिषु विशेषेणाऽतितरिष्यति तदा निर्वेदं मोक्षं गमिष्यसि । श्रोतव्यस्य अग्रे प्रोच्यमानस्य शास्त्रतो वा श्रुतस्य च निर्वेदं तदैव गन्तासि । यद्वा । च पुनः । श्रुतस्य पूर्वोक्तसांख्यादेः यदा ते बुद्धिर्मोहकलिलं विशेषेण अतितरिष्यति तदा श्रोतव्यस्य भक्तिमार्गस्य निर्वेदं गन्तासि । अत्रायं भावः । यावत्पर्यन्तं कर्मादिमार्गेषु मोहस्तावद्भक्तिमार्गफलं न भवति । तस्यानन्यसाध्यत्वात् अत एवाग्रे तथैवोपदेष्टव्यः । अधुनाऽधिकाराभावान्नोपदिश्यते अधिकारसंपत्त्यर्थं च सूचितः ॥ ५२ ॥

नी० टी०—कदा मनीषिणो भवंतीत्यत आह—**यदेति** । ते तव मोह इष्टानिष्टवियोगसंयोगजपरि-तापजन्यं वैचित्त्यं तदेव कलिलमिव कलिलं कालुष्यं बुद्धिगतं बुद्धिर्व्यतितरिष्यति व्यतिक्रमिष्यति बुद्धिः प्रसन्ना भविष्यति तदा श्रोतव्यस्य शास्त्रभागस्य श्रुतस्य च निर्वेदं वैराग्यं गंताऽसि अयं भावः । मलि-नानां बुद्धावसकृद्गृहीतस्यापि शास्त्रार्थस्यास्फुरणात् श्रोतव्यं श्रुतं च वृथैव तद्वत् शुद्धायामपि बुद्धौ सद्यः शास्त्रार्थस्फुरणात्तयोर्वैयर्थ्यमित्युभयथाऽपि तत्र निर्वेद उचितः । प्रसन्ना च बुद्धिर्निग्रहीतुं योग्या भवतीति श्रवणादिकं त्यक्त्वा ध्याननिष्ठ एव भवेदिति ॥ ५२ ॥

## श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ॥
## समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

**शां० भा०—मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थ योगमवाप्स्यामीति चेत्तच्छृणु—श्रुतिविप्रतिपन्नेति । श्रुतिविप्रतिपन्नाऽनेकसाध्यसाधनसंबन्धप्रका-शनश्रुतिभिः श्रवणैर्विप्रतिपन्ना नानाप्रतिपन्ना श्रुतिविप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिर्यदा यस्मिन्काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती समाधौ समाधीयते**

चित्तमस्मिन्निति समाधिरात्मा तस्मिन्नात्मनीत्येतत् । अचला तत्रापि विकल्पवर्जितेत्येतत् । बुद्धिरन्तःकरणं तदा तस्मिन्काले योगमवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥ ५३ ॥

शां० आ०—बुद्धिशुद्धिविवेकवैराग्यसिद्धावपि पूर्वोक्तबुद्धिप्राप्तिकालो दर्शितो न भवतीति शङ्कते—**मोहेति** । प्रागुक्तविवेकादियुक्तबुद्धेरात्मनि स्थैर्यावस्थायां प्रकृतबुद्धिसिद्धिरित्याह—**तच्छृणिवति** । पृष्टं कालविशेषाख्यं वस्तु तच्छब्देन गृह्यते । बुद्धेः श्रुतिविप्रतिपन्नत्वं विशदयति—**अनेकेति** । नानाप्रतिपन्नत्वमेव संक्षिपति—**विक्षिप्तेति** । उक्तं हेतुद्वयमनुरुध्य वैराग्यपरिपाकावस्था कालशब्दार्थः, नैश्चल्यं विक्षेपराहित्यम्, अचलत्वं विकल्पशून्यत्वं, विक्षेपो विपर्ययः, विकल्पः संशय इति विवेकः ॥ ५३ ॥

**आ० भा०—तदेव स्पष्टयति । श्रुतिविप्रतिपन्नेति । पूर्वं श्रुतिभिर्वेदैर्विप्रतिपन्ना विरुद्धा सती यदा वेदार्थानुकूलेन तत्त्वनिश्चयेन विपरीतवाग्भिरपि निश्चला भवति ततश्च समाधावचला । ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानंदमग्नत्वात् । तदा योगमवाप्स्यसि उपायसिद्धो भवसीत्यर्थः ॥ ५३ ॥**

आ० ज०—ननूत्तरश्लोकेपि योगानुष्ठानविधिरेवोच्यतेऽतः पुनरुक्तिदोष इत्यतआह—**तदेवेति** । किं तन्मोहकलिलं कीदृशं च तदतितरणमित्याकांक्षायां पुंसामधममध्यमोत्तमावस्थादिप्रदर्शनेन पूर्वश्लोकोक्तमेव योगानुष्ठानावधिमनेन स्पष्टं करोतीत्यर्थः । नन्वत्र श्रुतिविप्रतिपन्नेति श्रवणादितो वैराग्यमुच्यते । यथाह भास्करः । वस्त्वंतरश्रवणाद्विरक्तेति । ततः पूर्वत्रापि वैराग्यमर्थः स्यात् । निश्चलाचलेति च पुनरुक्तिश्च । योगावाप्तेरुत्तरा चेयमवस्था तत्कथमुच्यते । तदा योगमवाप्स्यसीतिशंकायां श्लोकं व्याचष्टे—**पूर्वमिति** । पूर्वावस्थायाः सामर्थ्यलब्धं वैलक्षण्यं दर्शयितुमुक्तम्—**वेदार्थेति** । चलनप्रसक्तिं दर्शयति—**विपरीतेति** । असच्छास्त्रैरित्यर्थः । अनेन परोक्षज्ञानकाष्ठा दर्शिता । परोक्षतत्त्वनिश्चयानुवृत्तिव्युदासायोक्तम्—**ब्रह्मेति** । अत्रापि चलनप्रसक्तिमाह—**भेरीति** । एतत्कथमित्यतआह—**परमेति** । परमानंदे उपायसिद्धो भवसीत्यर्थः । एतेनापरोक्षज्ञानकाष्ठा दर्शिता । उपायेन सिद्धः प्राप्तफलः । योगशब्देन तत्फलमुपलक्ष्यतइतिभावः । श्लोकद्वयेप्येतदवस्थाप्राप्तिर्योगानुष्ठानावधिरिति तात्पर्यम् ॥ ५३ ॥

**रा० भा०—योगे त्विमां शृण्वित्यादिनोक्तस्यात्मयाथात्म्यज्ञानपूर्वकस्य बुद्धिविशेषसंस्कृतकर्मानुष्ठानस्य लक्षणभूतं योगाख्यं फलमाह । श्रुतिश्रवणमस्मत्तः श्रवणेन विशेषतः प्रतिपन्ना सकलेतरविसजातीयनित्यनिरतिशयसूक्ष्मतत्त्वविषया स्वयमचला एकरूपा बुद्धिरसङ्गकर्मानुष्ठानेन विमलीकृते मनसि यदा निश्चला स्थास्यति तदा योगमात्मावलोकनमवाप्स्यसि । एतदुक्तं भवति । शास्त्रजन्यात्मज्ञानपूर्वककर्मयोगः स्थितप्रज्ञताख्यज्ञाननिष्ठामापादयति । ज्ञाननिष्ठारूपा स्थितप्रज्ञता तु योगाख्यमात्मावलोकनं साधयतीति ॥ ५३ ॥**

अ० टी०—एतदेव द्रढयति—**श्रुतिविप्रतिपन्नेति** । श्रुतिविप्रतिपन्ना नानाविधधर्मश्रवणेच्छारहिता निश्चला श्रुतैरपि तैर्धर्मैश्चालनायोग्या यदा ते बुद्धिर्भविष्यति समाधौ मच्चिन्तनसमये अचला स्वतो दृढा स्थास्यति तदा योगं मत्सान्निध्यरूपमवाप्स्यसि प्राप्स्यसीत्यर्थः ॥ ५३ ॥

नी० टी०—ननु बुद्धिप्रसादोऽपि केन लिंगेन ज्ञेय इत्यत आह—**श्रुतीति** । श्रुतिभिर्नानाविधशास्त्रश्रवणैर्विप्रतिपन्ना आत्मा नित्योऽनित्यो वा नित्योऽपि कर्ताऽकर्त्ता वा अकर्त्ताऽप्येकोऽनेको वेत्येवमादिसंशयग्रस्ता सती यदा असंभावनाविपरीतभावनानिरासपूर्वकं श्रुतितात्पर्यविषयीभूते ब्रह्माद्वैते निश्चला पुनः कुतर्कैरनास्कंदनीया निर्विचिकित्साऽपरोक्षनिश्चयवती भूत्वा समाधौ निर्विकल्पके प्रत्यगात्मनि अचला लयविक्षेपशून्या स्थास्यति स्थिरा भविष्यति तदा योगं विवेकप्रज्ञां प्राप्स्यसि । निश्चलसमाधिलाभ एव बुद्धिप्रसादलिंगमिति भावः ॥ ५३ ॥

**अर्जुन उवाच—स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ॥**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥**

**शां० भा०—**प्रश्नबीजं प्रतिलभ्यार्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया—स्थितप्रज्ञस्येति । स्थिता प्रतिष्ठिताऽहमस्मि परं ब्रह्मेति प्रज्ञा यस्य स स्थितप्रज्ञस्तस्य का भाषा किं भाषणं वचनं कथमसौ परैर्भाष्यते समाधिस्तस्य समाधौ स्थितस्य केशव । स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत । किमासीत व्रजेत किम् । आसनं व्रजनं वा तस्य कथमित्यर्थः । स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छति ॥ ५४ ॥

**शां० आ०—**विवेकद्वारा जाता प्रज्ञा प्रागुक्ता बुद्धिः समाधिस्तत्रैव निष्ठा संन्यासिनो ज्ञाननिष्ठा तत्प्राप्तिवचनं प्रश्नबीजं पृच्छतोऽर्जुनस्याभिप्रायमाह—**लब्धेति** । लब्धा समाधावात्मनि समाधानेन वा प्रज्ञा परमार्थदर्शनलक्षणा येन तस्येति यावत् । ननु तस्य भाषा तत्तत्कार्यानुरोधिनी भविष्यति किमित्यसौ जिज्ञास्यते तत्राऽऽह—**कथमिति** । ज्ञाननिष्ठस्य लक्षणविवक्षया प्रश्नमवतार्य तन्निष्ठासाधनबुभुत्सया विशिनष्टि—**समाधिस्थस्येति** । तस्यैवार्थक्रियां पृच्छति—**स्थितधीरिति** ॥ ५४ ॥

**आ० भा०—**स्थिता प्रज्ञा ज्ञानं यस्य स स्थितप्रज्ञः । भाष्यतेऽनयेति भाषा लक्षणमित्यर्थः । उक्तं लक्षणमनुवदति । लक्षणांतरं पृच्छामीति ज्ञापयितुं समाधिस्थस्येति । कं ब्रह्माणं ईशं रुद्रं च वर्तयतीतिकेशवः । तथाहि निरुक्तिः कृता हरिवंशेषु कैलासयात्रायाम् 'हिरण्यगर्भः कः प्रोक्त ईशः शंकर एव च । सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्' इति वचनांतराच्च । किमासीत किं प्रत्यासीत । नचार्जुनो न जानाति तल्लक्षणादिकम् । 'जानंति पूर्वराजानो देवर्षयस्तथैव च । तथापि धर्मान्पृच्छंति वार्तायै गुह्यवित्तये ॥ न ते गुह्याः प्रतीयंते पुराणेष्वल्पबुद्धिनाम्' इति वचनात् ॥ ५४ ॥

**आ० ज०—**ज्ञानिनि प्रकृते लब्धावसरोऽर्जुनः पृच्छतीति प्रसंगतः स्पष्टं ह्यनुक्त्वा प्रज्ञाशब्दस्य बुद्धिमात्रार्थत्वप्रतीतिनिरासाय स्थितप्रज्ञशब्दार्थमाह—**स्थितेति** । प्रतिष्ठां प्राप्ता । ज्ञानमपरोक्षम् । किं प्रभाषेतेत्यतः का भाषेत्यस्यार्थांतरमाह—**भाष्यत इति** । ज्ञानीति व्यवह्रियत इत्यर्थः । **भाषेति** । भाषाशब्दस्य स्त्रीलिंगत्वादनयेत्युक्तम् । व्यवहारकारणानामनेकत्वात्कस्यायं प्रश्नऽइति न ज्ञायतेऽत आह—**लक्षणमिति** । सास्नादिमत्त्वं लक्षणं दृष्ट्वा हि गौरिति व्यवह्रियते । ज्ञानिमात्रव्युदासाय समाधिस्थस्येति विशेषणमिति प्रतीयते—**समाधिकुर्वत इति** । यथाऽह संकरः । लब्धसमाधिप्रज्ञस्य लक्षणत्वबुभुत्सया अर्जुन उवाचेति तदसदिति भावेनाह—**उक्तमिति** । ज्ञानिसामान्यलक्षणविषयएवायं प्रश्नः । किमर्थं तर्हि समाधिस्थस्येत्युक्तमिति चेत्समाधावचलाबुद्धिरित्यनेनोक्तं ज्ञानिसामान्यलक्षणमनेनानुवदतीति ब्रूमः । न हि इदं न लक्षणं ज्ञानिमात्रनिष्ठधर्मत्वात् । किमर्थोऽनुवाद इतिचेत् । तज्ज्ञानं ममेति ज्ञापनीयमिति वदामः । एतज्ज्ञापने किं प्रयोजनमितिचेत् । लक्षणांतरं पृच्छामीति ज्ञापयितुम् । अन्यथासिद्धप्रश्नोऽयमित्युपेक्ष्यः प्रसज्येतेति भावः । लक्षणांतरप्रश्नस्य चेदं प्रयोजनं । अयावल्लक्ष्यभावित्वान्न तत्सम्यग्व्यवहारोपयोगि । यावल्लक्ष्यभावि तु सार्वत्रिकव्यवहारोपयोगि ज्ञास्यामीति । अत एव प्रसिद्धलक्षणपदपरित्यागेनाप्रसिद्धभाषापदोपादानमिति । कश्चाश्चेशश्च केशाःब्रह्मविष्णुमहेश्वराः ते यस्यावयवभूताः स केशवः परमात्मेति भास्करो निरुक्तवानेतच्छ्रुत्वा वचनं केशवस्येत्यत्र तदसदिति भावेनाह—**कमिति** । कुत इयं निरुक्तिरित्यत आह—**तथाहीति** । 'को ब्रह्मेतिसमाख्याते ईशोऽहं सर्वदेहिषु । आवां तवांगे संभूतौ ततः केशवनामवान्'इति हरिवंशवचनं वचनांतराच्चेयमेव निरुक्तिः स्वीकार्येत्याह—**हिरण्यगर्भ इति** । अत इति लभ्यते । तेनैवशब्दस्यान्वयः । हिरण्यगर्भ एव न त्वन्यः प्रजापतिः । शंकर एव नत्वन्यः सर्म्ड इति वा । अनेन केशयोः कर्मणोरुपपदयोरंतर्वर्तिण्यर्थाद्वृतु वर्तन इत्यस्माद्धातोर्डोऽन्यत्रापि दृश्यत इति डप्रत्यय इत्युक्तं भवति । आसेरकर्मकत्वात्कथं कर्मप्रश्न इत्यत आह—**किमासीतेति** । अध्याहृतप्रतियोगनिमित्तात् द्वितीया न कर्मणीत्यर्थः । प्रश्नकरणादर्जुनस्याज्ञत्वं प्रतीतं तन्निवारयति—**नचेति** । तल्लक्षणादिकम् । ज्ञानिलक्षणं तत्प्रवृत्त्यनुपपत्तिसमाधानं च । प्रश्नस्यान्यथोपपत्तेरिति भावः । कुत इत्यत आह—**जानंतीति** । समासांतो विधिरनित्यः अतः पूर्वराजान इति साधु । देवर्षयश्च तथैव जानंत्येव धर्मानित्युपलक्षणम् । वार्तायै गुरोरात्मनां च ख्यात्यै । लोकस्य गुह्यार्थवित्तये । एतेषां प्रश्नकरणं लोकानां कथं गुह्यार्थवित्तये भवतीत्यतो

व्यतिरेकमुखेनोपपादयति—**न त इति**। 'छंदस्युभयथा' इत्यतोल्पबुद्धीनामिति दीर्घत्वाभावः। गुह्यास्तेऽर्थाः पुराणादिषु प्रश्नोत्तरोपनिबंधनेन विनोक्तिमात्रेणाल्पबुद्धीनां व्यक्तं न प्रकाशते। न च प्रश्नाकरणे तदुपनिबंधनं संभवतीति भावः। एतेन मोहादिस्वाभिभवादेरित्येतत्प्रपंचितं भवति॥ ५४॥

**रा० भा०**—एवमुक्ते पार्थो निःसङ्गकर्मानुष्ठानरूपकर्मयोगसाध्यस्थितप्रज्ञताया योगसाधनभूतायाः स्वरूपं स्थितप्रज्ञस्यानुष्ठानप्रकारं च पृच्छति। समाधिस्थस्य स्थितप्रज्ञस्य का भाषा को वाचकशब्दः। तस्य स्वरूपं कीदृशमित्यर्थः। स्थितप्रज्ञः किं च भाषणादिकं करोति॥ ५४॥

**अ० टी०**—एतदुक्त्वा भगवांस्तूष्णीं स्थितस्तदार्जुनस्तादृग्बुद्धिज्ञानार्थं पृच्छति—**स्थितप्रज्ञस्येति**। स्थितप्रज्ञस्य निश्चलबुद्धेः का भाषा। का परिभाषेत्यर्थः। कया परिभाषया स ज्ञेयः। हे केशव दुष्टगुणव्याप्तयोरपि मोक्षदायक! मम मोक्षार्थं याथातथ्येन कथयेति भावः। समाधिस्थस्य च का भाषा तदपि कथय। स्थितधीः किं प्रभाषेत। श्रोतव्यं चेन्न किंचित्तदा किं ब्रूयादित्यर्थः। स्वोच्चरितवाक्यस्यापि श्रवणसंभवात्। किमासीत। कथमुपतिष्ठेत्। किं व्रजेत कथं गच्छेदित्यर्थः॥ ५४॥

**नी० टी०**—लब्धसमाधेः स्थितप्रज्ञापरनाम्नो लक्षणानि बुभुत्सुरर्जुन उवाच—**स्थितप्रज्ञस्येति**। स्थिता प्रत्यगात्मनि प्रतिष्ठिता प्रज्ञा यस्य तस्य स्थितप्रज्ञस्य समाधिस्थस्य समाधौ स्थितस्य का भाषा भाषणं वचनं कथमसौ परैर्भाष्यते इत्येकः प्रश्नः। स्थितधीः स्थितप्रज्ञः अर्थाद्व्युत्थितः सन् किं प्रभाषेत कथं वदति। कथमास्ते। कथं वा व्रजति विषयान्भुंक्ते। इति प्रश्नत्रयम्॥ ५४॥

**श्रीभगवानुवाच—प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्॥**
**आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥ ५५॥**

**शां० भा०**—यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तो यश्च कर्मयोगेन तयोः स्थितप्रज्ञस्य प्रजहातीत्यारभ्याध्यायपरिसमाप्तिपर्यन्तं स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते। सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते यत्नसाध्यत्वात्। यानि यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि—श्रीभगवानुवाच प्रजहातीति। प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन्काले सर्वान्समस्तान्कामानिच्छाभेदान्हे पार्थ! मनोगतान्मनसि प्रविष्टान्हृदि प्रविष्टान्। सर्वकामपरित्यागे तुष्टिकारणाभावाच्छरीरधारणनिमित्तशेषे च सत्युन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्तेत्यत उच्यते—आत्मन्येव प्रत्यगात्मस्वरूप एवाऽऽत्मना स्वेनैव बाह्यलाभनिरपेक्षस्तुष्टः परमार्थदर्शनामृतरसलाभेनान्यस्मादलंप्रत्ययवान्स्थितप्रज्ञः स्थिता प्रतिष्ठिताऽऽत्मानात्मविवेकजा प्रज्ञा यस्य स स्थितप्रज्ञो विद्वांस्तदोच्यते। त्यक्तपुत्रवित्तलोकैषणः संन्यास्यात्माराम आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः॥ ५५॥

**शां० आ०**—प्रतिवचनमवतारयितुं पातनिकां करोति—**यो हीति**। हिशब्देन कर्मसंन्यासकारणीभूतविरागतासंपत्तिः सूच्यते, आदितो ब्रह्मचर्यावस्थायामिति यावत्, ज्ञानमेव योगो ब्रह्मभावप्रापकत्वात्तस्मिन्निष्ठा परिसमाप्तिस्तस्यामित्यर्थः, कर्मैव योगस्तेन कर्माण्यसंन्यस्य तन्निष्ठायामेव प्रवृत्त इति शेषः। ननु कथमेकेन वाक्येनार्थद्वयमुपदिश्यते द्वैयर्थ्ये वाक्यभेदान्न च लक्षणमेव साधनं कृतार्थलक्षणस्य तत्स्वरूपत्वेन फलत्वे साधनत्वानुपपत्तेरिति तत्राऽऽह—**सर्वत्रैवेति**। यद्यपि कृतार्थस्य ज्ञानिनो ज्ञानलक्षणं तद्रूपेण फलत्वान्न साधनत्वमधिगच्छति तथाऽपि जिज्ञासोस्तदेव प्रयत्नसाध्यतया साधनं संपद्यते लक्षणं चात्र ज्ञानसामर्थ्यलब्धमनूद्यते न विधीयते विदुषो विधिनिषेधागोचरत्वात्तेन जिज्ञासोः साधनानुष्ठानाय लक्षणानुवादादेकस्मिन्नेव साधनानुष्ठाने

तात्पर्यमित्यर्थः । उक्तेऽर्थे भगवद्वाक्यमुत्थापयति—**यानीति** । लक्षणानि च ज्ञानसामर्थ्यलभ्यान्ययत्नसाध्यानीति शेषः । स्थितप्रज्ञस्य का भाषेति प्रथमप्रश्नस्योत्तरमाह—**प्रजहातीति** । कामत्यागस्य प्रकर्षो वासनाराहित्यम् । कामानामात्मनिष्ठत्वं कैश्चिदिष्यते तदयुक्तं तेषां मनोनिष्ठत्वश्रुतेरित्याशयवानाह—**मनोगतानिति** । आत्मन्येवाऽऽत्मनेत्याद्युत्तरभागनिरस्यं चोद्यमनुवदति—**सर्वकामेति** । तर्हि प्रवर्तकाभावाद्विदुषः सर्वप्रवृत्तेरुपशान्तिरिति नेत्याह—**शरीरेति** । उन्मादवानुन्मत्तो विवेकविरहितबुद्धिभ्रमभागी प्रकर्षेण मदमनुभवन्विद्यमानमपि विवेकं निरस्यन्भ्रान्तवद्व्यवहरन्प्रमत्त इति विभागः । उत्तरार्धमवतार्य व्याकरोति—**उच्यत इति** । आत्मन्येवेत्येवकारस्याऽऽत्मनेत्यत्रापि संबंधं द्योतयति—**स्वेनैवेति** । बाह्यलाभनिरपेक्षत्वेन तुष्टिमेव स्पष्टयति—**परमार्थेति** । स्थितप्रज्ञपदं विभजते—**स्थितेति** । प्रज्ञाप्रतिबन्धकसर्वकामविगमावस्था तदेति निर्दिश्यते । उक्तमेव प्रपञ्चयति—**त्यक्तेति** । आत्मानं जिज्ञासमानो वैराग्यद्वारा सर्वैषणात्यागात्मकं संन्यासमासाद्य श्रवणाद्यावृत्त्या तज्ज्ञानं प्राप्य तस्मिन्नेवाऽऽसक्त्या विषयवैमुख्येन तत्फलभूतां परितुष्टिं तत्रैव प्रतिलभमानः स्थितप्रज्ञव्यपदेशभागित्यर्थः॥ ५५ ॥

**आ० भा०—गमनादिप्रवृत्तिर्नात्यभिसंधिपूर्विका मात्रादिप्रवृत्तिवदिति या निशेत्यादिना दर्शयिष्यल्लँक्षणं प्रथमत आह—एवं परमानंदतृप्तः किमर्थमेवं प्रवृत्तिं करोतीति प्रश्नाभिप्रायः । प्रारब्धकर्मणेषत्तिरोहितब्रह्मणः वासनया प्रायोऽल्पाभिसंधिप्रवृत्तिः संभवतीत्याशयवान् परिहरति । प्रायः सर्वान्कामान्प्रजहाति । शुकादीनामपीषद्दर्शनात् । 'त्वत्पादभक्तिमिच्छंति ज्ञानिनस्तत्त्वदर्शिनः' इत्युक्तेस्तामिच्छंति । यदा त्विंद्रादीनामाग्रहो दृश्यते तदाऽभिभूतं तेषां तच्चोक्तम् । 'अधिकारिकपुंसां तु बृहत्कर्मत्वकारणात् । उद्भवाभिभवौ ज्ञाने ततोऽन्येभ्यो विलक्षणा' इति । अतएव वैलक्षण्यादनधिकारिणामाग्रहादिचेदस्ति न ते ज्ञानिनइत्यवगंतव्यम् । न चात्र समाधिं कुर्वतो लक्षणमुच्यते । यः सर्वत्रानभिस्नेह इत्यादिस्नेहनिषेधात् । नहि समाधिं कुर्वतस्तस्य शुभाशुभप्राप्तिरस्ति । असंप्रज्ञातसमाधेः संप्रज्ञाते त्वविरोधस्तथापि न तत्रैवेति नियमः । 'कामादयो न जायंते ह्यपि विक्षिप्तचेतसाम् । ज्ञानिनां ज्ञाननिर्धूतमलानां देवसंश्रयात्' इति च स्मृतेः । मनोगता हि कामाः । अतस्तत्रैव तद्विरुद्धज्ञानोत्पत्तौ युक्तं हानं तेषामिति दर्शयति—मनोगतानिति । विरोधश्चोच्यते । रसोऽप्यस्य परं दृष्ट्वा निवर्ततइति । नचैतददृष्ट्या अपलपनीयम् । पुरुषवैशेष्यात् । आत्मना परमात्मना । परमात्मन्येव स्थितः सन् । आत्माख्ये तस्मिन्स्थितस्य तत्प्रसादादेव तुष्टिर्भवति । 'विषयांस्तु परित्यज्य रामे स्थितिमतस्ततः । देवाद्भवति वै तुष्टिर्नान्यथा तु कथंचन' इति नारायणरामकल्पे । अतो नात्मा जीवः ॥ ५५ ॥**

**आ० ज०**—लक्षणप्रश्नस्यैवोत्तरं प्रतीयते न तु स्थितधीरित्यादेरित्यतस्तदुत्तरस्थानं दर्शयन्ननंतरप्रकरणार्थं दर्शयति—**गमनादीति** । अभिसंधिः प्रयोजनोद्देशः । ईषदभिसंधिसूचनायातिशब्दः । प्रवृत्तिमात्रमिहाभिप्रेतं न भाषणादिकमेवेति ज्ञापनाय भाषणादीति नोक्तम् । व्यवहाराय लक्षणप्रश्नो घटते । प्रवृत्त्युद्देशप्रश्नस्तु व्यर्थ एव । न च शक्यः प्रतिवक्तुम् । अनेकेषां प्रवृत्त्युद्देश्यस्यैकरूपस्याभावादित्यभिप्रायेण भगवतोपेक्षितोऽसाविति किं न स्यात्किं तदुत्तरस्थानप्रदर्शनेन । अन्यथाऽल्पमप्युद्देश्यं वक्तव्यमित्यत आह—**एवमिति** । एवं भेरीताडनादावपि । अचलेत्युक्तप्रकारेण परमानंदतृप्तश्चेत्किमर्थं प्रवृत्तिं करोति न कुर्यात् । करोति च तस्मादुक्तमसदित्युक्ताक्षेपएवात्राभिप्रेतप्रश्नस्तु मुखत एव । अतो नोपेक्षामर्हतीतिभावः । एतच्चार्जुनस्य प्रेक्षावत्त्वाद्गम्यते । एवं चेद्गमनादिप्रवृत्तिरित्युक्तः परिहारो न पूर्णः । प्रवृत्तिकारणानुक्तेरित्यत आह—**प्रारब्धकर्मणेति** । ईषत्तिरोहितं ब्रह्म यस्यासौ तथोक्तः परिहरति द्वितीयं प्रश्नम् या निशेत्यादाविति शेषः । ननु सर्वकामप्रहाणं ज्ञानिलक्षणत्वेनोच्यते । तत्कथमल्पाभिसंध्यंगीकार इत्यत आह—**प्राय इति** । कुतः सर्वशब्दसंकोच इत्यत आह—**शुकादीनामिति** । विरुद्धकामस्येति शेषः । तच्च प्रवृत्तिलिंगेनागमाच्च ज्ञातव्यम् । अनुकूलकामस्तु सर्वथास्त्येवातोऽपि संकोच इत्यत आह—**त्वत्पादेति** । तां भक्तिम् । उपलक्षणमेतत् । प्रायेण विरुद्धकामत्यागो ज्ञानिनो लक्षणं चेदिंद्रादीनां ज्ञानित्वं न स्यात् । बहुतरविरुद्धकामदर्शनात् । तथाभूता अपि चेज्ज्ञानिनस्तर्हि देवदत्तादयोऽपि किं न स्युरित्यत आह—**यदेति** । आग्रहो विरुद्धकामाभिनिवेशः । एतत्प्रमाणेन स्थापयति—**तच्चोक्तमिति** । आधिकारिका इतिपुरुषविशेषसंज्ञा । 'प्रजापाश्च तथा देवा' इत्यादिवचनात् । देवदत्तादिप्रतिबंदीं मोचयति—**अत एवेति** । एतदागमोक्तादेव । आदिपदेन विरुद्धक्रोधादिग्रहणम् । अनेन कामशब्दाः क्रोधादीनामुप-

लक्षणार्थं इतिसूचितं भवति । ननु समाधिं कुर्वतो ज्ञानिनो लक्षणमेतदिति व्याक्रियताम् । तथा सति प्रश्नवाक्यस्थं समाधिस्थस्येतिपदं समंजसं स्यात् । सर्वशब्दश्चासंकुचितार्थः स्यात् । इंद्रादिविषयाक्षेपाप्रसक्तिश्चेत्यत आह—**न चेति** । समाधिं कुर्वतः स्नेहनिषेधोऽनुगुण एवेत्यत आह—**नहीति** । नात्र स्नेहनिषेधमात्रमुच्यते । किंतु तत्तत्प्राप्य शुभाशुभमिति शुभाशुभार्थप्राप्तिपूर्वकम् । न च तत्प्राप्तिः समाधिं कुर्वतो ज्ञानिनोऽस्ति कुत इत्यत उक्तम्—**असंप्रज्ञातेति** । असंप्रज्ञातः समाधिर्यस्यासौ तथोक्तः । बाह्यार्थानुसंधानं यत्र नास्ति सोऽसंप्रज्ञातसमाधिः । इतरः संप्रज्ञातसमाधिरिति योगशास्त्रे प्रसिद्धिः । तथा च लक्षणमसंभवि प्रसज्जेत । सावकाशेभ्यो बहुभ्यो निरवकाशस्यैकस्य बलवत्त्वमिति भावः । एवं तर्हि संप्रज्ञातसमाधिस्थस्यैतल्लक्षणमस्तु तत्रोक्तदोषाभावादित्यत आह—**संप्रज्ञाते त्विति** । यद्यपि संप्रज्ञातसमाधौ शभाशुभप्रतीतिसंभवेनासंभवित्वं नाम लक्षणविरोधो नास्ति । तथापि कामादिहानं समाधिस्थ एव पुंसि इति नियमो नास्ति । असमाधिस्थेऽपि ज्ञानिनि विद्यमानत्वात् तथाचातिव्याप्तिः स्यादित्यर्थः । असमाधिस्थेऽपि ज्ञानिनि कामाद्यभावः कुत इत्यत आह—**कामादय इति** । तदर्थं सर्वथेतिविशेषणप्रक्षेपेपि पुरुषविशेषेऽतिव्याप्तिपरिहारो दुर्घट एव । न चास्मन्मतेऽप्यव्याप्तिदोषः । असंप्रज्ञातसमाधिस्थव्यातिरिक्तविषयत्वात् । संभवतस्तु तद्विषयत्वादिति । कामानां मनोगतत्वाद्व्यर्थं विशेषणमित्यतो नेदं विशेषणं किं तु सर्वकामत्यागस्यासंभवित्वमाशंक्य तदुपपादनाय युक्तिरियमुक्तेत्याह—**मनोगता इति** । तत्रैव मनस्येव । कामज्ञानयोर्विरोधः कुत इत्यत आह—**विरोधश्चेति** । रसो राग इति वक्ष्यति । ननु सर्वकामप्रहाणमस्मदादिषु न दृष्टम् । तद्दृष्टांतेन ज्ञानिष्वपि तदभावानुमानादसंभवित्वं लक्षणस्येत्यत आह—**न चेति** । कुत उदाहृतप्रमाणविरोधात् । प्रमाणविरुद्धार्थानुमाने पंडितमूर्खादिपुरुषवैचित्र्यापलापप्रसंगादित्याह—**पुरुषेति** । आत्मन्यात्मनेति पदद्वयेन जीवएवात्रोच्यत इति कश्चित् । तृतीयांतेन मनइत्यपरः तदुभयमसदिति भावेनाह—**आत्मनेति** । स्थितः सन्निति शेषोक्तिः । वाक्यार्थं वदन्स्वव्याख्यानोपपत्तौ परव्याख्यानानुपपत्तौ च युक्तिमाह—**आत्माख्य इति** । तस्मिँस्थितस्य तदेकाग्रचित्तस्य अत्र त्यक्तविषयस्यापि तुष्टिरुच्यते । सा च परमात्मपरिग्रहे संभवति । नान्यथेत्यर्थः । कुत इत्यत आह—**विषयानिति** । ततः किंमित्यत आह—**अत इति** ॥ ५५ ॥

**रा० भा०—वृत्तिविशेषकथनेन स्वरूपमप्युक्तं भवतीति वृत्तिविशेष उच्यते । आत्मन्येवात्मना मनसात्मैकावलम्बनेन तुष्टः तेन तोषेण तद्व्यतिरिक्तान् सर्वान् मनोगतान् कामान् यदा प्रकर्षेण जहाति तदाऽयं स्थितप्रज्ञ इत्युच्यते ज्ञाननिष्ठा काष्ठेयम् ॥ ५५ ॥**

अ० टी०—भगवान् पृष्टस्य स्थितप्रज्ञस्य परिभाषामाह—**प्रजहातीति** । हे पार्थ मद्वाक्यश्रवणयोग्य ! पृथायाः स्वभक्तायाः पुत्रत्वात् स्ववाक्यश्रवणयोग्यत्वे तथा संबोधितवान् । यदा मनोगतान् स्वमनसि स्थितान्न तु भगवदिच्छया कृपया च प्राप्तव्यान् । भक्त्यादिरूपान् सर्वान् कामान् प्रजहाति प्रकर्षेण त्यजति । स्मरणाभावः प्रकर्षः । ननु कामत्यागे किं फलमित्याशंक्याह—**आत्मन्येवेति** । आत्मन्येव स्वात्मस्वरूपभूते भवति । आत्मना स्वस्यैव जीवात्मस्वरूपेण स्वयमेव तदैक्यस्फूर्त्या तुष्ट इत्यर्थः । अयं भावः । कामाः स्वसंतोषदा भवन्तीति तदर्थयत्नेन तत्पूर्त्या तोषः स च लौकिक एवातस्तत्त्यागे चात्मस्फूर्त्या लौकिकसंतोषो भवत्यात्मगामीतिफलम् । यदैतादृशः स्यात्तदा स्थितप्रज्ञो निश्चलबुद्धिः स उच्यते कथ्यत इति ॥ ५५ ॥

नी० टी०—एतेषां क्रमेणोत्तराण्याह भगवान्—**प्रजहातीत्यादिना** । अत्र यान्येव कृतार्थलक्षणानि तानि ज्ञानसाधनानीति मत्वा उपदिश्यंते स्थितप्रज्ञलक्षणानि तेषामकृतार्थेषु यत्नसाध्यत्वात् कृतार्थेषु स्वाभाविकत्वात् यथोक्तं । 'उत्पन्नात्मप्रबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ॥ भवंत्ययत्नतस्तस्य न तु साधकरूपिणः' इति यदाऽयं योगी सर्वान् स्थूलसूक्ष्मकारणशरीरभोग्यान् कामान् काम्यमानान्विषयान् प्रकर्षेण समूलं जहाति त्यजति कीदृशान् कामान् मनोगतान् मनस्येव संकल्पविकल्पात्मके स्थितान् न तु बहिः । यथोक्तमक्षपादाचार्यैः । दोषनिमित्तं रूपादयो विषयाः संकल्पकृता इति तत्र स्थूलानां कामानां त्याग एकांतसेवनमात्राद्भवतीति स स्थवीयानेव । विलीनकरणग्रामस्य समनस्कस्य जाग्रद्वासनामयाः स्वप्ने ये कामाः स्फुरंति तेषामपि त्यागो भगवद्ध्यानादिरूपसद्वासनाभ्यासबलेन भवति । ये तूपसंहृतकरणस्य संप्रज्ञातसमाधिकाले दिव्याः कामाः

संकल्पमात्रोपनता दहरविद्यादिषु प्रसिद्धास्तेषामपि त्यागोऽसंप्रज्ञातसमाध्यभ्यासबलेन भवति एवं त्रिविधान् कामान् त्यक्त्वा आत्मन्येवाखंडैकरसे आत्मना स्वेनैव स्वरूपानंदेन तुष्टो बाह्यविषयनिरपेक्षो यदा भवति तदाऽयं स्थितप्रज्ञ इत्युच्यते ॥ ५५ ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ॥
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥

**शां० भा०—**किंच—दुःखेष्विति। दुःखेष्वाध्यात्मिकादिषु प्राप्तेषु नोद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयमनुद्विग्नमनाः। तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य नाग्निरिवेन्धनाद्याधाने सुखान्यनु विवर्धते स विगतस्पृहः। वीतरागभयक्रोधो रागश्च भयं च क्रोधश्च वीता विगता यस्मात्स वीतरागभयक्रोधः स्थितधीः स्थितप्रज्ञो मुनिः संन्यासी तदोच्यते ॥ ५६ ॥

**शां० आ०—**लक्षणभेदानुवादद्वारा विविदिषोरेव कर्तव्यान्तरमुपदिशति—**किंचेति**। ज्वरशिरोरोगादिकृतानि दुःखान्याध्यात्मिकानि। आदिशब्देनाऽऽधिभौतिकानि व्याघ्रसर्पादिप्रयुक्तान्याधिदैविकानि चातिवातवर्षादिनिमित्तानि दुःखानि गृह्यन्ते। तेषूपलब्धेष्वपि नोद्विग्नं मनो यस्य स तथेति संबन्धः। नोद्विग्नमित्येतद्याचष्टे—**न प्रक्षुभितमिति**। दुःखानामुक्तानां प्राप्तौ परिहाराक्षमस्य तदनुभवपरिभावितं दुःखमुद्वेगस्तेन सहितं मनो यस्य न भवति स तथेत्याह—**दुःखप्राप्ताविति**। मनो यस्य नोद्विग्नमिति पूर्वेण संबन्धः। सुखान्यपि दुःखवत्त्रिविधानीति मत्वा तथेत्युक्तम्। तेषु प्राप्तेषु सत्सु तेभ्यो विगता स्पृहा तृष्णा यस्य स विगतस्पृह इति योजना। अज्ञस्य हि प्राप्तानि सुखान्यनु विवर्धते तृष्णा, विदुषस्तु नैवमित्यत्र वैधर्म्यदृष्टान्तमाह—**नाग्निरिवेति**। यथा हि दाह्यस्येन्धनादेरभ्याधाने वह्निरनुविवर्धते तथाऽज्ञस्य सुखान्युपनतान्यनु विवर्धमानाऽपि तृष्णा विदुषो न तान्यनु विवर्धते। न हि वह्निरदाह्यमुपनतमपि दग्धुं विवृद्धिमधिगच्छति तेन जिज्ञासुना सुखदुःखयोस्तृष्णोद्वेगौ न कर्तव्यावित्यर्थः। रागादयश्च तेन कर्तव्या न भवन्तीत्याह—**वीतेति**। अनुभूताभिनिवेशो विषयेषु रञ्जनात्मकस्तृष्णाभेदो रागः, परेणापकृतस्य गात्रनेत्रादिविकारकारणं भयं, क्रोधस्तु परवशीकृत्याऽऽत्मानं स्वपरापकारप्रवृत्तिहेतुर्बुद्धिवृत्तिविशेषः। मनुत इति मुनिरात्मविदित्यङ्गीकृत्याऽऽह—**संन्यासीति**। सुखादिविषयतृष्णादे रागादेश्चाभावावस्था तदेत्युच्यते ॥ ५६ ॥

**आ० भा०—**तदेव स्पष्टयति उत्तरैस्त्रिभिः श्लोकैः। एतान्येव ज्ञानोपायानि तच्चोक्तम्—'तद्वै जिज्ञासुभिः साध्यं ज्ञानिना यत्तु लक्षणम्' इति। शोभनाध्यासो रागः। 'रसोरागस्तथा रक्तिः शोभनाध्यासइष्यते' इत्यभिधानम् ॥ ५६ ॥

**आ० ज०—**ननु लक्षणस्यैवानेनैवोक्तत्वात्किं दुःखेष्वित्यादिनेत्यत आह—**तदेवेति**। उक्तं लक्षणमेव। स्पष्टनं च कामशब्दोपलक्षितदोषांतरत्यागकथनादिनेति ज्ञेयम्। ननु कामत्यागादीनि ज्ञानसाधनतयोच्यंतेऽमानित्वमित्यादौ। ततो ज्ञानिलक्षणस्य जिज्ञासावतिव्याप्तिरित्यत आह—**एतानीति**। उप समीपेऽयः फललाभो येषां तान्युपायानि साधनानि। सत्यमेतत्। तथापि जिज्ञासौ प्रयत्नसाध्यानि। ज्ञानिनि तु स्वभावसिद्धानीत्यदोष इति भावः। अत्र प्रमाणमाह—**तच्चोक्तमिति**। समुच्चयवादित्वाह यानीह स्थितप्रज्ञलक्षणान्युच्यंते तान्येवापवर्गसाधनानीति तद्वैइत्यनेन दूषयति। ज्ञानसाधनान्येव नापवर्गसाधनानि। यथोक्तम्। 'कामकारेण चैके' इति आनंदवृद्ध्यर्थता त्वंगीकृतैव। योगे त्विमां शृण्वित्युक्त्वा कथमिदं योगादन्यदुच्यत इत्यतो वेदमुदितमिति। विगतस्पृहमित्यनेनैव वीतराग इत्येतद्गतार्थमित्यत आह—**शोभनेति**। अशोभनेषु विषयेषु शोभनत्वभ्रांतिः। रसो रागो रक्तिः इत्येतैः काम उच्यते। तथा शोभनाध्यास उच्यते। इत्यर्थः ॥ ५६ ॥

**रा० भा०—**अनन्तरं ज्ञाननिष्ठस्य ततोऽर्वाचीना अदूरविप्रकृष्टावस्थोच्यते। प्रियविश्लेषादिदुःखनिमित्तेषूपस्थितेष्वनुद्विग्नमनाः न दुःखी भवति। सुखेषु विगतस्पृहः प्रियेषु सन्निहितेष्वपि निःस्पृहः वीतरागभयक्रोधः अनागतेषु स्पृहा रागस्तद्रहितः। प्रियविश्लेषाप्रियागमनहेतुदर्शननिमित्तं दुःखं भयं तद्रहितः प्रियविश्लेषाप्रियागमनहेतुभूतचेतनान्तरगतः दुःखहेतुः स्वमनोविकारः क्रोधस्तद्रहितः। एवंभूतो मुनिः आत्ममननशीलः स्थितधीरित्युच्यते ॥ ५६ ॥

अ० टी०—किंच । दुःखेषु अनुद्विग्नं मनो यस्य सुखेषु च विगता स्पृहा इच्छा यस्य तादृशो मुनिः मननधर्मयुक्तः स्थितधीः स्थितप्रज्ञ उच्यते । ननु दुःखानुद्वेगे सुखस्पृहाभावे च किं स्यादत आह—वीतरागभयक्रोध इति । विगता रागभयक्रोधा यस्मात्तादृशः स्यात् । एतदेव फलम् । इयं परिभाषा स्थितप्रज्ञस्येतिभावः ॥ ५६ ॥

नी० टी०—दुःखेषु शस्त्रपातादिषु दुःखसाधनेषु प्राप्तेष्वपि अनुद्विग्नमना अचंचलमनाः । वक्ष्यति च 'यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते' इति सुखेषु सुखसाधनेषु स्रक्चंदनादिषु प्राप्तेष्वपि विगतस्पृहो निवृत्तिकत्वाद्भवति अत एव वीताः रागभयक्रोधा यस्मात् स तथा न हि तस्यामवस्थायां रागादयो दुःखादयो वा संभवंति एवंविधः समाधिस्थः स्थितधीः स्थितप्रज्ञ उच्यते ॥ ५६ ॥

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ॥**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥**

शां० भा०—किंच—यः सर्वत्रेति । यो मुनिः सर्वत्र देहजीवितादिष्वप्यनभिस्नेहोऽभिस्नेहवर्जितस्तत्तत्प्राप्य शुभाशुभं तत्तच्छुभमशुभं वा लब्ध्वा नाभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यत्यशुभं च प्राप्य न द्वेष्टीत्यर्थः । तस्यैवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति ॥

शां० आ०—लक्षणभेदानुवादद्वारा विविदिषोरेव कर्तव्यान्तरमुपदिशति—किंचेति । विवेकवतो विविदिषोर्विवेकजन्या प्रज्ञा कथं प्रतिष्ठां प्रतिपद्यतामित्याशङ्क्याऽऽह—यः सर्वत्रेति । ननु देहजीवितादौ स्पृहा शुभाशुभप्राप्तौ हर्षविषादौ विदुषो विविदिषोश्चावर्जनीयाविति प्रज्ञास्थैर्यासिद्धिस्तत्राऽऽह—यो मुनिरिति । तत्तदिति शोभनवत्त्वेनाशोभनवत्त्वेन वा प्रसिद्धत्वं प्रतिनिर्दिश्यते । तदेव विभजते—शुभमिति । विषयेष्वभिष्वङ्गाभावः शुभादिप्राप्तौ हर्षाद्यभावश्च प्रज्ञास्थैर्ये कारणमित्याह—तस्येति ॥ ५७ ॥

आ० भा०—सर्वत्रानभिस्नेहत्वाच्छुभाशुभं प्राप्य नाभिनंदति न द्वेष्टि ॥ ५७ ॥

आ० ज०—वीतरागभयक्रोध इत्युक्तत्वान्न द्वेष्टीति पुनरुक्तिरित्यत आह—सर्वत्रेति । सकारणकद्वेषवर्जितत्वमत्रोच्यत इत्यर्थः ॥ ५७ ॥

रा० भा०—ततोऽर्वाचीनदशा प्रोच्यते । यः सर्वत्र प्रियेष्वनभिस्नेहः उदासीनः प्रियसंश्लेषविश्लेषरूपं शुभाशुभं प्राप्याभिनन्दनद्वेषरहितः सोऽपि स्थितप्रज्ञः ॥ ५७ ॥

अ० टी०—कथं भाषेतेत्यस्योत्तरमाह—यः सर्वत्रेति । यः सर्वत्र संसारे । अनभिस्नेहः स्नेहरहितस्तत्तच्छुभमशुभं च प्राप्य नाभिनन्दति न द्वेष्टि शुभं लौकिकानुकूलं प्राप्य न प्रशंसति । अशुभं तत्प्रतिकूलमवाप्य न द्वेष्टि न विपरीतं वदति तस्य प्रज्ञा प्रतिष्ठिता सर्वोत्तमेत्यर्थः । अयमर्थः । यः सुहृदामनुकूलतयाऽभिनन्दनं करोति । तस्य सर्वत्र भगवदीयत्वे वैषम्यं स्यात् । प्रतिकूलकर्तृषु तद्धर्मस्फूर्त्या तं निन्दति भगवत्कृतिर्विस्मृता स्यात् । अतः सर्वत्र भगवन्मयत्वं ज्ञात्वा शुभाशुभविवेकरहितः शुभमेव भाषते स उत्तम इत्यर्थः ॥ ५७ ॥

नी० टी०—स्थितधीः किं प्रभाषेतेत्यस्योत्तरमाह—यः सर्वत्रेति । सर्वेषु धनदारदेहजीवनादिषु अनभिस्नेहः अभिस्नेहवान्हि धनदारादिषु विकलेषु सकलेषु वाऽहमेव विकलः सकलोऽस्मीति दैन्यदर्पोपेतः पूर्वापरानुसंधानरहितो जल्पति अयं तु न तथेति भावः । तथा शुभं प्राप्य नाभिनंदति संतुष्टो भूत्वा प्रशु-

प्रापयितारं न प्रशंसति। तथा अशुभं प्राप्य न द्वेष्टि दुःखी भूत्वा अशुभप्रापयितारं न निंदति यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ॥
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

शां० भा०—किंच—यदा संहरत इति। यदा संहरते सम्यगुपसंहरते चायं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मोऽङ्गानीव सर्वशो यथा कूर्मो भयात्स्वान्यङ्गान्युपसंहरति सर्वत एवं ज्ञाननिष्ठ इन्द्रियाणीन्द्रियार्थेभ्यः सर्वविषयेभ्य उपसंहरते। तस्य प्रज्ञा प्रतिष्ठितेत्युक्तार्थं वाक्यम् ॥ ५८ ॥

शां० आ०—जिज्ञासोरेव कर्तव्यान्तरं सूचयति—किंचेति। इन्द्रियाणां विषयेभ्यो वैमुख्यस्य प्रज्ञास्थैर्यकारणत्वादादौ जिज्ञासुना तदनुष्ठेयमित्याह—यदेति। मुमुक्षुणा मोक्षहेतुं प्रज्ञां प्रार्थयमानेन सर्वेभ्यो विषयेभ्यः सर्वाणीन्द्रियाणि विमुखानि कर्तव्यानीति श्लोकव्याख्यानेन कथयति—यदेत्यादिना। उपसंहारः स्ववशत्वापादनं तस्य च सम्यक्त्वमतिदृढत्वम्। अयमिति प्रकृतस्थितप्रज्ञग्रहणं व्यावर्तयति—ज्ञाननिष्ठायामिति। इन्द्रियोपसंहारस्य प्रलयरूपत्वं व्यावर्त्य संकोचात्मकत्वं दृष्टान्तेन दर्शयति—कूर्म इति। दृष्टान्तं व्याकरोति—यथेति। दार्ष्टान्तिके योजयञ्ज्ञाननिष्ठपदं तत्र प्रवर्तयति—एवमिति। इन्द्रियाणां विषयेभ्यो वैमुख्यकरणं प्रज्ञास्थैर्यहेतुरित्युक्तमुपसंहरति—तस्येति ॥ ५८ ॥

आ० भा०—॥ ५८ ॥

आ० ज०—॥ ५८ ॥

रा० भा०—ततोऽर्वाचीनदशा प्रोच्यते—यदेन्द्रियाणि इन्द्रियार्थान् स्प्रष्टुमुद्युक्तानि तदैव कूर्मोऽङ्गानीवेन्द्रियार्थेभ्यः सर्वशः प्रतिसंहृत्य मन आत्मन्येव स्थापयति सोऽपि स्थितप्रज्ञः॥ ५८ ॥

अ० टी०—कथं तिष्ठेदित्यत्रोत्तरमाह—यदा संहरत इति। यदा अयं सर्वशः सर्वत्र इन्द्रियार्थेभ्यः इन्द्रियभोग्येभ्यः इन्द्रियाणि संहरते तस्य प्रज्ञा प्रतिष्ठिता भवतीत्यर्थः। अत्र दृष्टान्तमाह—कूर्मोऽङ्गानीवेति। यथा कूर्मः करचरणाद्यङ्गानि स्वभावादपकर्षति। कूर्मदृष्टान्तेन भोग्यदर्शनात् स्वत एवेन्द्रियनिवृत्तिः स्वभावतः स्यात्। तथा संहरणं कर्त्तव्यं नित्यमिन्द्रियनियमं कुर्वंस्तिष्ठेदित्यर्थः ॥ ५८ ॥

नी० टी०—किमासीतेत्यस्योत्तरमाह—यदेति। इंद्रियार्थेभ्यः शब्दादिविषयेभ्यः प्रारब्धकर्मवशेन व्युत्थितोऽपि योगी द्वैतदर्शनादुद्विग्नः सन् निरोधसंस्कारप्राबल्यात् प्रीत्या समाधिमनुतिष्ठन्नेवास्ते इत्यर्थः। शेषं स्पष्टम् ॥ ५८ ॥

विषया विनिवर्तन्ते निराहारस्य देहिनः ॥
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥

शां० भा०—तत्र विषयाननाहरत आतुरस्यापीन्द्रियाणि निवर्तन्ते कूर्माङ्गानीव संह्रियन्ते न तु तद्विषयो रागः, स कथं संह्रियत इति। उच्यते—विषया इति। यद्यपि विषयोपलक्षितानि विषयशब्दवाच्यानीन्द्रियाण्यथ वा विषया एव निराहारस्यानाह्रियमाणविषयस्य कष्टे तपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते देहिनो देहवतो रसवर्जं रसो रागो विषयेषु यस्तं वर्जयित्वा। रसशब्दो रागे प्रसिद्धः स्वरसेन प्रवृत्तो रसिको रसज्ञ इत्यादिदर्शनात्। सोऽपि रसो रञ्जनरूपः सूक्ष्मोऽस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वोपलभ्याहमेव तदिति वर्तमानस्य निवर्तते निर्बीजं विषयविज्ञानं संपद्यत

इत्यर्थः। नासति सम्यग्दर्शने रसस्योच्छेदः। तस्मात्सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः॥ ५९॥

**शां० आ०**—इन्द्रियाणां विषयेभ्यो वैमुख्येऽपि तद्विषयरागानुवृत्तौ कथं प्रज्ञालाभः स्यादिति शङ्कते—**तत्रेति**। व्यवहारभूमिः सप्तम्यर्थः। विषयाननाहरतस्तदुपभोगविमुखस्येत्यर्थः। रागश्चेन्नोपसंह्रियते न तर्हि प्रज्ञालाभः संभवति रागस्य तत्परिपन्थित्वादिति मत्वाऽऽह—**स कथमिति**। रागनिवृत्त्युपायमुपदिशन्नुत्तरमाह—**उच्यत इति**। विषयोपभोगपराङ्मुखस्य कुतो विषयपरावृत्तिस्तत्परावृत्तिश्चाप्रस्तुतेत्याशङ्क्याऽऽह—**यद्यपीति**। निराहारस्येत्यस्य व्याख्यानमनाह्रियमाणविषयस्येति। यो हि विषयप्रवणो न भवति तस्याऽऽत्यन्तिके तपसि क्लेशात्मके व्यवस्थितस्य विद्याहीनस्यापीन्द्रियाणि विषयेभ्यः सकाशाद्यद्यपि संह्रियन्ते तथाऽपि रागोऽवशिष्यते। स च तत्त्वज्ञानादुच्छियत इत्यर्थः। रसशब्दस्य माधुर्यादिषड्विधरसविषयत्वं निषेधति—**रसशब्द इति**। वृद्धप्रयोगमन्तरेण कथं प्रसिद्धिरित्याशङ्क्याऽऽह—**स्वरसेनेति**। स्वेच्छयेति यावत्। रसिकः स्वेच्छावशवर्ती रसज्ञो विवक्षितापेक्षितज्ञातेत्यर्थः। कथं तर्हि तस्य निवृत्तिस्तत्राऽऽह—**सोऽपीति**। दृष्टिमेवोपलब्धिपर्यायां स्पष्टयति—**अहमेवेति**। रागापगमे सिद्धमर्थमाह—**निर्बीजमिति**। ननु सम्यग्ज्ञानमन्तरेण रागो नापगच्छतीति चेत्तदपगमादृते रागवतः सम्यग्ज्ञानोदयायोगादितरेतराश्रयतेति नेत्याह—**नासतीति**। इंद्रियाणां विषयपारवश्ये विवेकद्वारा परिहृते स्थूलो रागो व्यावर्तते। ततश्च सम्यग्ज्ञानोत्पत्त्या सूक्ष्मस्यापि रागस्य सर्वात्मना निवृत्त्युपपत्तेर्नेतरेतराश्रयतेत्यर्थः। प्रज्ञास्थैर्यस्य सफलत्वे स्थिते फलितमाह—**तस्मादिति**॥ ५९॥

**आ० भा०**—न चैतल्लक्षणं ज्ञानमयत्नतो भवतीत्याहोत्तरश्लोकैः। निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति। इतरविषयाकांक्षाभावो वा। रसाकांक्षादिर्न निवर्तते सतु अपरोक्षज्ञानादेव निवर्तत इत्याह—विषया इति। 'इंद्रियाणि जयंत्याशु निराहारा मनीषिणः। वर्जयित्वा तु रसनमसौ रस्ये हि वर्धते' इति वचनाद्भागवते। रसशब्दस्य रागवाचित्वाच्च॥ ५९॥

**आ० ज०**—विषया विनिवर्तंत इत्यादिश्लोकत्रयांऽतेपि तस्य प्रज्ञा प्रतिष्ठितेत्युक्तत्वादिदमपि लक्षणविवरणमिति भ्रांतिः स्यात्तन्निरासार्थमाह—**नचेति**। एतल्लक्षणं यस्माद्भवति तदेतल्लक्षणम्। अयत्नतोऽल्पयत्नतः। अनुदरा कन्येति यथा। यद्येवं लक्षणकं ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत्साधयाति। कामाद्युपद्रवपरिहारार्थम्। किं दंदह्यमानशिरा इव बंभ्रमीति। अतो नास्त्येवेदं ज्ञानिषु लक्षणमित्याशंकापरिहारार्थमिति शेषः। त्रिभिरित्यनुवर्तते ज्ञानस्याल्पप्रयत्नासाध्यत्वमत्र न प्रतीयत इत्याशंक्योपोद्घातप्रक्रियेंद्रियजयस्य तावन्महाप्रयत्नसाध्यत्वमाद्येन श्लोकेनोच्यत इति भावेन तं व्याचष्टे—**निराहारत्वेनेति**। एतेन रसवर्जमित्येतदंतस्य वाक्यस्यार्थ उक्तः। एवशब्देन रसवर्जमित्येतद्व्याचष्टे। तथा हि। निराहारस्य देहिनः तेन निराहारत्वेनेति यावत्। विषया रूपादयः। तद्भोगसामर्थ्यानींद्रियाण्यनेनोपलक्ष्यंते तानि विनिवर्तंते। रसवर्जं रसो रागः तं वर्जयित्वा विषयाभिलाषश्चैतसिको निराहारत्वेन न निवर्तत इति। अस्यैवार्थांतरमाह—**इतरेति**। आकांक्षाशब्देन भोगशक्तयोपि लक्ष्यंते। रसवर्जमित्यस्यार्थो रसाकांक्षादिरिति। ततश्चेयं योजना निराहारत्वेन रसादितरे विषयाः तद्भोगशक्तयः तदाकांक्षाश्चेति यावत् विनिवर्तंते वर्जयित्वा मनसो रसविषयाकांक्षा रसनेंद्रियस्य तद्भोगशक्तिश्च न निवर्तत इति रसोऽपीत्यस्यार्थमाह—**सत्विति**। आद्येऽर्थे सरसः सर्वविषयविषयो रागः। द्वितीये सरसः तद्भोगशक्तिः तदाकांक्षा च। उक्तमर्थं श्लोकारूढं करोति—**इत्याहेति**। द्वितीयार्थे प्रमाणमाह—**इंद्रियाणीति**। जयंति भोगशक्तिक्षयेण च रागक्षयेण च। असौ रसना तु रस्ये विषये। प्रकारद्वयेन च वर्धते। आद्यमर्थमुपपादयति—**रसेति**। उक्तं युक्तमित्युभयत्र शेषः। रसशब्दस्य रागवाचित्वं उक्ताभिधानादवगंतव्यम्। अचेतने चेतनवदुपचाराद्रसः परं दृष्ट्वा निवर्तते इति युक्तम्। अयमर्थसंग्रहः। यदा बाह्येंद्रियाणि विषयैः संनिकृष्यंते तदा तद्द्वारा मनस्तत्र प्रवर्तते प्रवृत्ते च मनसि रागो भवति। तत आत्मनः क्षोभ इति एवं इंद्रियाणामविजयः। यो हि यं व्याकुलं करोति स तेन जित इत्युच्यते यदा तु बाह्येंद्रियाणि विषयसन्निधानेऽपि न तैः संनिकृष्यंते। संनिकृष्टान्यपि न मनस्तदाऽभिमुखेनाहरंति। आहृतेऽपि मनसि न विषयरागो जायते। तदानात्मनः क्षोभो भवतीत्येष इंद्रियजयः सोऽयं संग्रहेण द्वेधा। बाह्येंद्रियाणां शक्तिक्षयान्मनसो रागक्षयाच्च। एतत् द्वयं च पुरुषभेदेनोक्तप्रकारद्वयेन निराहारत्वब्रह्मसाक्षात्काराभ्यां भवतीत्येवमिंद्रियजयस्य महाप्रयत्नसाध्यत्वमिति॥ ५९॥

**रा० भा०**—एवं चतुर्विधा ज्ञाननिष्ठा पूर्वपूर्वोत्तरोत्तरत्र निष्पाद्या। इदानीं ज्ञाननिष्ठाया दुष्प्रापतां तत्प्राप्त्युपायं चाह—इन्द्रियाणामाहारो विषयाः निराहारस्य विषयेभ्यः प्रत्याहृतेन्द्रि-

यस्य देहिनो विषयाः विनिवर्तमाना रसवर्जं विनिवर्तन्ते । रसो रागः विषयरागो न निवर्तत इत्यर्थः । रागोऽप्यात्मस्वरूपं विषयेभ्यः परं सुखतरं दृष्ट्वा विनिवर्तते ॥ ५९ ॥

अ० टी०—ननु इन्द्रियाणामन्नाद्यभावेनेन्द्रियविषयेषु प्रवृत्तिः कथं । कथं न तेषामपि स्थितप्रज्ञतेत्याशंक्याह—**विषया इति** । निराहारस्य देहिनो विषया विनिवर्तन्ते तत्सत्यमित्यर्थः । परंतु । रसवर्जं रसोनाम तदनुभवार्थाभिलाषस्तद्वर्जं तद्गृहीतमित्यर्थः । देहिन इति पदेन तेषां देहाध्यासोपि न निवर्त्तत इति ज्ञापितम् । अस्य स्थितप्रज्ञस्य रसोपि तदभिलाषोपि परमुत्कृष्टं भगवदीयरसं दृष्ट्वा निवर्त्तते । एतावद्वैलक्षण्यमिति भावः ॥ ५९ ॥

नी० टी०—ननु विषयेभ्य इंद्रियाणां निवृत्तिश्चेत् स्थितप्रज्ञताहेतुस्तर्हि सुप्तिमूर्च्छालयग्रहावेशादावपि साऽस्तीति सर्वोऽपि स्थितप्रज्ञ एवेत्याशंक्याह—**विषया इति** । सत्यं देहिनो देहाभिमानवता मूढस्य सुप्त्यादौ निराहारस्य इंद्रियैर्विषयाननाहरतोऽभुंजानस्य विषया विनिवर्तंत एव तथापि रसवर्जं रसो रागस्तद्वर्जं निवर्त्तन्ते तदाऽपि सूक्ष्मरूपेण रागोऽस्ति रागमूलस्यात्माज्ञानस्यादाहान्नासौ स्थितप्रज्ञ इत्यर्थः । अस्यैव पुनः परं दृष्ट्वा आत्मानं साक्षात्कृत्य निराहारस्य शब्दादीनगृह्णतो रसोऽपि निवर्त्तते मूलाज्ञानदाहादित्यस्ति सुप्तादेः समाधिस्थस्य च महान् विशेष इति भावः । प्राञ्चस्तु रोगिणः काष्ठतपस्विनो वा मूढस्यापि विषयाननाहरतो रसवर्जं विषया विनिवर्तन्ते तस्यैव परं दृष्ट्वा स्थितस्य रसोऽपि निवर्त्तते इति व्याचख्युः॥५९॥

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ॥**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥**

**शां० भा०—सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षताऽऽदाविन्द्रियाणि स्ववशे स्थापयितव्यानि यस्मात्तदनवस्थापने दोषमाह—यतत इति । यततः प्रयत्नं कुर्वतोऽपि हि यस्मात्कौन्तेय पुरुषस्य विपश्चितो मेधाविनोऽपीति व्यवहितेन संबन्धः । इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्त्याकुली कुर्वन्ति । आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनो यतस्तस्मात् ॥ ६० ॥**

शां० आ०—श्लोकान्तरमवतारयति—**सम्यग्दर्शनेति** । मनसः स्ववशत्वादेव प्रज्ञास्थैर्यसंभवे किमर्थमिन्द्रियाणां स्ववशत्वापादनमित्याशङ्क्याऽऽह—**यस्मादिति** । ननु विवेकवतो विषयदोषदर्शिनो विषयेभ्यः स्वयमेवेन्द्रियाणि व्यावर्तन्ते किं तत्र प्रज्ञास्थैर्यं चिकीर्षता कर्तव्यमिति तत्राऽऽह—**यततो हीति** । विषयेषु भूयो भूयो दोषदर्शनमेव प्रयत्नः । हिशब्दस्य यस्मादर्थस्य समासौ संबन्धं वक्ष्यति । अपिशब्दस्य प्रयत्नं कुर्वतोऽपीति संबन्धं गृहीत्वा संबन्धान्तरमाह—**पुरुषस्येति** । प्रमथनशीलत्वं प्रकटयाति—**विषयेति** । विक्षोभस्याऽऽकुलीकरणस्य फलमाह—**आकुलीकृत्येति** । प्रकाशमेवेत्युक्तं विशदयति—**पश्यत इति** । विपश्चितो विदुषोऽपि प्रकाशमेव प्रकाशशब्दितविवेकाख्यविज्ञानेन युक्तमेव मनो हरन्तीन्द्रियाणीति संबन्धः । हिशब्दार्थमनूद्य तस्मादिन्द्रियाणि स्ववशे स्थापयितव्यानीति पूर्वेण संबन्धमभिसंधायाऽऽह—**यतस्तस्मादिति** ॥ ६० ॥

**आ० भा०—अपरोक्षज्ञानरहितज्ञानिनोऽपि साधारणयत्नवतोऽपि मनोहरंतींद्रियाणि । पुरुषस्य शरीराभिमानिनः । को दोषस्ततः प्रमाथीनि प्रमथनशीलानि पुरुषस्य ॥ ६० ॥**

आ० ज०—ननु यत्नज्ञानाभ्यामिंद्रियजयमुक्त्वा यततोऽपीति तद्विरुद्धं कथमुच्यत इति चेन्न । इंद्रियजयार्थं किं निराहारत्वलक्षणेन महाप्रयत्नेन प्रत्याहारादिना साधारणेन प्रयत्नेन तत्संभवात् । तथा किमपरोक्षज्ञानेन नित्यानित्यविवेकज्ञानेनापि तदुपपत्तेरित्याशंक्य तन्निषेधोऽत्र क्रियत इत्याशयवान्व्याचष्टे—**अपरोक्षेति** । ज्ञानस्य प्राधान्यसूचनाय विपश्चितोऽपीत्येतत्पश्चादुक्तमपि अपरोक्षेत्यादौ व्याख्यातम् । यततोऽपीत्यस्यार्थः—**साधारणेति** । हरंति विषयसन्निकृष्टानि तदभिमुखं कृत्वा

तद्रागीकुर्वंतीत्यर्थः । पुरुषस्येति व्यर्थं स्त्रीणामप्येवंभावादित्यत आह—**पुरुषस्येति** । एतच्चोक्तोपपादनार्थम् । प्रमाथीनीत्यस्य प्रयोजनं वक्तुमाह—**को दोष इति** । एतावताऽमनस्तदविजयः कथमित्याशयः । मनोत्हृतवंति पुरुषस्य क्षोभणशीलानीति न तेन विजितानीतिभावः । पुरुषस्येत्यनेनोभयत्रास्यान्वयं दर्शयति ॥ ६० ॥

**रा० भा०**—आत्मदर्शनेन विना विषयरागो न निवर्तते । अनिवृत्ते विषयरागे विपश्चितो यतमानस्यापि पुरुषस्येन्द्रियाणि प्रमाथीनि बलवन्ति मनः प्रसह्य हरन्ति । एवमिन्द्रियजय आत्मदर्शनाधीनः आत्मदर्शनमिन्द्रियजयाधीनमिति ज्ञाननिष्ठा दुष्प्राप्या ॥ ६० ॥

**अ० टी०**—ननु इन्द्रियसंयमनं सर्वेषां कर्तुमुचितं स्थितप्रज्ञे को विशेषइति चेत्तत्राह—**यतत इति द्वाभ्यां** । हे कौन्तेय ! विपश्चितः शास्त्रार्थविदः पुरुषस्य यततोपि यत्नं कुर्वाणस्यापि प्रमाथीनि प्रकर्षेण मथनशीलानि इन्द्रियाणि प्रसभं बलात्कारेण मनो हरन्ति ॥ ६० ॥

**नी० टी०**—किंच सुप्तादेरिंद्रियाणि श्रांत्या स्वयमेव लीयंते समाहितेन तु तानि कूर्मेणांगानीव स्वेच्छया संह्रियंते एतच्चात्यंतायाससाध्यमित्याह—**यतत इति** । विपश्चितः शास्त्राचार्योपदेशवतो यततोऽपि समाधिसिद्ध्यर्थं यतमानस्यापि पुरुषस्य इंद्रियाणि कर्तॄणि मनः प्रतीचि स्थिरीक्रियमाणं कर्मीभूतं हरंति विषयप्रवणं कुर्वन्ति यतः प्रमाथीनि यथा बहवश्चोरा वने एकं पुरुषं प्रमथ्य तस्य वित्तं हरंति एवमिंद्रियाणि यततो मनो हरंति यतः प्रसभमतिशयेन प्रमथनशीलानि ॥ ६० ॥

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ॥**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

**शां० भा०**—तानीति । तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितः सन्नासीत । मत्परोऽहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्परो नान्योऽहं तस्मादित्यासीतेत्यर्थः । एवमासीनस्य यतेर्वशे हि यस्येन्द्रियाणि वर्तन्तेऽभ्यासबलात्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

**शां० आ०**—इन्द्रियाणां स्ववशत्वसंपादनानन्तरं कर्तव्यमर्थमाह—**तानीति** । एवमासीनस्य किं स्यादिति तदाह—**वशे हीति** । समाहितस्य विक्षेपविकलस्य कथमासनमित्यपेक्षायामाह—**मत्पर इति** । परापरभेदशङ्कामपाकृत्याऽऽसनमेव स्फोरयति—**नान्योऽहमिति** । उत्तरार्धं व्याकरोति—**एवमिति** । हिशब्दार्थं स्फुटयति—**अभ्यासेति** । परस्मादात्मनो नाहमन्योऽस्मीति प्रागुक्तानुसंधानस्याऽऽदरेण नैरन्तर्यदीर्घकालानुष्ठानसामर्थ्यादित्यर्थः । अथवा विषयेषु दोषदर्शनाभ्याससामर्थ्यादिन्द्रियाणि संयतानीत्यर्थः ॥ ६१ ॥

**आ० भा०**—तर्ह्यशक्यान्येवेत्यत आह—तानीति । बहुयत्नतः शक्यानि । अतो यत्नं कुर्यादित्याशयः । युक्तो मयि मनोयोगयुक्तः अहमेव परः सर्वस्मादुत्कृष्टो यस्य स मत्परः । फलमाह—वशेहीति ॥ ६१ ॥

**आ० ज०**—उपोद्घातस्य साध्ये वक्तव्ये तानि सर्वाणीति किमुच्यत इत्यतोऽन्तरापतितां शंकां निवर्तयितुमेतदिति भावेनाह—**तर्हीति** । यदि साधारणविवेकज्ञानाभ्यां न जीयंते इत्यर्थः । अशक्यान्येव जेतुमिति शेषः । निराहारस्य देहावस्थानासंभवात् ब्रह्मापरोक्षज्ञानस्य चेंद्रियजयसाध्यतयाऽभिप्रेतत्वेनेतरेतराश्रयप्रसंगादितिभावः । तथा च तज्जयस्य ज्ञानसाधनत्वं यद्विवक्षितं तन्न संभवतीति शंकाशेषः इंद्रियसंयमोऽशक्य एवेति शंकायां तानि सर्वाणि संयम्यासीतेतिकिमेतदुच्यत इत्यत आह—**बहुयत्नेति** । यत्नं बहुमिति शेषः । यद्यपि तज्जयेन परोक्तं साधनं अस्मदुक्तं वा शक्यं तथापि तत्प्रतिनिधिना महाप्रयत्नेन जय्यानीत्यर्थः । एतदप्युपोद्घातत्वेनैवोक्तमिति ज्ञातव्यम् युक्त इति । नैतद्युजिरो रूपम् येन प्रतिसंबंध्याकांक्षायां तदनुक्तिदोषः स्यात् किं तु समाध्यर्थस्य युजेरिति भावेनाह—**युक्त इति** । मत्पर इत्युत्तरत्र श्रवणान्मयीत्युक्तम् । मत्पर इत्यद्वैतज्ञानं इत्यन्यैर्व्याख्यातं तन्नाक्षरानुसारीत्याशयवान्व्याचष्टे—**अहमेवेति** । भगवानेव सर्वस्मादुत्कृष्ट इति ज्ञात्वा तस्मिन्नेव

निरंतरं मनसो योजनं इंद्रियजये परं साधनमिति भावः। निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति मंतव्यम्। यदर्थमयमुपोद्घात उक्तः तत्प्रदर्शनपरतयोत्तरार्धतात्पर्यमाह—**फलमिति**। यद्येवं ततः किमित्याशंकायां इंद्रियजयस्य ज्ञानं फलमाहेत्यर्थः। यतएवं ज्ञानं महायाससाध्येंद्रियजयफलं अतएवायासभीरुर्जनो न तत्साधयति न तु ज्ञानस्योक्तलक्षणत्वाभावादिति श्लोकत्रयतात्पर्यार्थः॥ ६१॥

**रा० भा०**—सर्वस्य दोषस्य परिजिहीर्षया विषयानुरागयुक्ततया दुर्जयानीन्द्रियाणि संयम्य चेतसः शुभाश्रयभूते मयि मनोऽवस्थाप्य समाहित आसीत। मनसि मद्विषये सति निर्दग्धाशेषकल्मषतया निर्मलीकृतं विषयानुरागरहितं मन इन्द्रियाणि स्ववशानि करोति। ततो वश्येन्द्रियं मन आत्मदर्शनाय प्रभवति। उक्तं च। "यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः। तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्॥" इति। तदाह। "वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता" इति॥ ६१॥

**अ० टी०**—अतस्तानि सर्वाणि संयम्य स्ववशगानि कृत्वा मत्परः अहमेव परो यस्य तादृशः युक्तः मयि युक्तः आसीत। एवं यो मत्परस्तस्य प्रज्ञा प्रतिष्ठिता। यस्य प्रज्ञा प्रतिष्ठिता तस्येन्द्रियाणि वशे भवन्ति। नान्यस्येत्यर्थः। प्रमाथित्वादितिभावः। अत एव पूर्वार्द्धे विपश्चितामपि तदसामर्थ्यमुक्तम्॥ ६१॥

**नी० टी०**—यद्यप्येवं तथाऽपि तानि नियंतव्यान्येवान्यथा स्थितप्रज्ञत्वस्यैवासिद्धेरित्याह—**तानीति**। संयम्य वशीकृत्य युक्तः संनद्धो मत्पर अहमेव सर्वेषां प्रत्यगात्मा परः स्त्र्यादिभ्यो बाह्येभ्यो देहेंद्रियादिभ्य आंतरेभ्यश्च उत्कृष्टः प्रियतमो यस्य स मत्परः सन्नासीत हि यस्मात् वशे आज्ञायां शेषं स्पष्टम्॥ ६१॥

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते॥**
**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते॥ ६२॥**

**शां० भा०**—अथेदानीं पराभविष्यतः सर्वानर्थमूलमिदमुच्यते—ध्यायत इति। ध्यायतश्चिन्तयतो विषयाञ्शब्दादिविषयविशेषानालोचयतः पुंसः पुरुषस्य सङ्ग आसक्तिः प्रीतिस्तेषु विषयेषूपजायते। सङ्गात्प्रीतेः संजायते समुत्पद्यते कामस्तृष्णा। कामात्कुतश्चित्प्रतिहतात्क्रोधोऽभिजायते॥ ६२॥

**शां० आ०**—समनन्तरश्लोकद्वयतात्पर्यमाह—**अथेति**। पुरुषार्थोपायोपदेशानन्तर्यमथशब्दार्थः। तन्निष्ठत्वराहित्यावस्थां दर्शयति—**इदानीमिति**। पराभविष्यतो महान्तमनर्थं गमिष्यतो विवेकविज्ञानाविहीनस्येति यावत्। सर्वानर्थमूलं विषयाभिध्यानं तस्य तथात्वमनुभवसिद्धमिति वक्तुमिदमित्युक्तम्। विषयेषु विशेषत्वमारोपितरमणीयत्वम्। प्रीतिरासक्तिरिति साधारणासक्तिमात्रं गृह्यते। तृष्णेत्युद्रिक्तासक्तिरुक्ता। प्रतिबन्धेन प्रणाशेन वा प्रतिहतिः॥ ६२॥

**आ० भा०**—रागादिदोषकारणमाह परिहाराय श्लोकद्वयेन। संमोहः अधर्मेच्छा। तथा हि मोहशब्दार्थउक्त उपगीतासु। मोहसंज्ञितम् अधर्मलक्षणं चैव नियतं पापकर्मस्विति। तथाचान्यत्र संमोहोऽधर्मकामितेति। स्मृतिविभ्रमः प्रतिषेधादिस्मृतिनाशः। बुद्धिनाशः सर्वात्मना दोषबुद्धिनाशः। विनश्यति नरकाद्यनर्थं प्राप्नोति। तथा ह्युक्तम् 'अधर्मकामिनः शास्त्रे विस्मृतिर्जायते यदा। दोषादृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यते' इति॥ ६२॥

**आ० ज०**—ध्यायत इत्यादिना प्रकृतानुपयुक्तं किमेतदुच्यत इत्यत आह—**रागादीति**। रागादिदोषस्य कारणं रागादिदोषकारणम्। तथा रागादिदोषः कारणं यस्य तद्रागादिदोषकारणं परिहाराय रागादिदोषस्य इदमुक्तं भवति। मत्परोयुक्त आसीतेतींद्रियजयस्य परमसाधनमुक्तम्। रागद्वेषपरिहारोऽप्यपरं साधनमिति वक्ष्यति तत्र स एव कथं स्यादित्या

( कांक्षायां ) शंकायां उपोद्घातप्रक्रिययेदमुच्यत इति । संमोहोमूर्च्छाऽत्र न संगच्छत इत्यतोऽन्यथा व्याचष्टे—**संमोह इति** । अकार्येच्छा अधर्मेच्छा । कुत इत्यत आह—**तथा हीति** । संशब्दस्तु तस्यैव विशेषक इति भावः । अदृष्टरूपाधर्मविषयम् । तद्धेतुषु पापकर्मसु च नियतं कामनं मोहसंज्ञितमित्यर्थः । स्पष्टं चात्र प्रमाणमाह—**तथा चेति** । यत्किंचिद्विषयस्य स्मृतिविभ्रमस्य प्रकृतानुपयोगात्सम्यग्व्याचष्टे—**स्मृतिविभ्रम इति** । विभ्रमोऽनवस्थानं नाश इतियावत् । चेतनस्य कथं बुद्धिनाश इत्यत आह—**बुद्धिनाश इति** । स्मृतिविभ्रम एवायमित्यतः सर्वात्मनेत्युक्तम् नित्यआत्मेत्युक्तम् तत्कथं विनश्यतीत्यत आह—**विनश्यतीति** । उक्तार्थे प्रमाणमाह—**तथा हीति** । तदा दोषादृष्टेः एतदुक्तं भवति । रागद्वेषयोः परंपरया नरकाद्यनर्थप्राप्तिः कार्यमिति ज्ञानेन तत्परिजिहीर्षायां विषयध्यानपरंपरया तत्कारणमिति ज्ञानेन तदकारणात्तयोरनुत्पादो भवतीति ॥ ६२ ॥

**रा० भा०**—अनिरस्तविषयानुरागस्य हि मय्यनिवेशितमनसः इन्द्रियाणि संयम्यावस्थितस्यापि अनादिपापवासनया विषयध्यानमवर्जनीयं स्यात् । ध्यायतो विषयान्पुंसः पुनरपि सङ्गोऽतिप्रवृद्धो जायते । सङ्गात्संजायते कामः कामो नाम सङ्गस्य विपाकदशा । पुरुषो यां दशामापन्नो विषयानभुक्त्वा स्थातुं न शक्नोति स कामः । कामात् क्रोधोऽभिजायते कामे वर्तमाने विषये चासन्निहिते सन्निहितान्पुरुषान् प्रति एभिरस्मदिष्टं विहतमिति क्रोधो भवति ॥ ६२ ॥

**अ० टी०**—अथ कथं व्रजेतेत्यत्रोत्तरमाह—**ध्यायत इति** । विषयान् ध्यायतः पुंसस्तेषु संग आसक्तिः स्यात् । आसक्त्या किं स्यादित्यत आह—**संगादिति** । संगात्कामः संजायते । कामाच्च क्रोधोऽभिजायते । अभितः सर्वतः तदयोग्येष्वपीत्यर्थः ॥ ६२ ॥

**नी० टी०**—"यदा पंचावतिष्ठंते ज्ञानानि मनसा सह ॥ बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्" इति श्रुतौ इंद्रियमनोबुद्धीनां निग्रहे परमपदप्राप्तिरित्युक्तं तत्र उपसंहृतकरणस्य बाह्यान् शब्दादीनगृह्णतो मनोमात्रेणावस्थितस्य योगिनो मनसोऽनिग्रहे किं स्यादित्याह—**ध्यायत इति** । द्वाभ्यां विषयान् शब्दादीन् ध्यायतश्चिंतयतः पुंसः पुरुषस्य तेषु शब्दादिषु संगः संबंधो जायते । बाह्यार्थेभ्यो निगृहीतान्यपि इंद्रियाणि मनोदोषात्पुनर्बाह्यार्थान् गृह्णंतीत्यर्थः । ततः संगात्कामस्तस्मिन्विषयेऽभिलाषः संजायते । कामात्कुतश्चिद्धेतोः प्रतिहतादभिज्वलनात्मा क्रोधोऽभिजायते ॥ ६२ ॥

**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ॥**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥**

**शां० भा०**—क्रोधाद्भवति संमोहोऽविवेकः कार्याकार्यविषयः । क्रुद्धो हि संमूढः सन्गुरुमप्याक्रोशति । संमोहात्स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्याद्विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तावनुत्पत्तिः । ततः स्मृतिभ्रंशाद्बुद्धेर्नाशः । कार्याकार्यविषयविवेकायोग्यताऽन्तःकरणस्य बुद्धेर्नाश उच्यते । बुद्धिनाशात्प्रणश्यति । तावदेव हि पुरुषो यावदन्तःकरणं तदीयं कार्याकार्यविषयविवेकयोग्यं तदयोग्यत्वे नष्ट एव पुरुषो भवत्यतस्तस्यान्तःकरणस्य बुद्धेर्नाशात्प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थः ॥ ६३ ॥

**शां० आ०**—क्रोधस्य संमोहहेतुत्वमनुभवेन द्रढयति—**क्रुद्धो हीति** । आक्रोशत्यधिक्षिपति तदयोग्यत्वमपेरर्थः । संमोहकार्यं कथयति—**संमोहादिति** । स्मृतेर्निमित्तनिवेदनद्वारा स्वरूपं निरूपयति—**शास्त्रेति** । क्षणिकत्वादेव तस्याः स्वतो नाशसंभवान्न संमोहाधीनत्वं तस्येत्याशङ्क्याऽऽह—**स्मृतीति** । स्मृतिभ्रंशेऽपि कथं बुद्धिनाशः स्वरूपतः सिध्यति तत्राऽऽह—**कार्येति** । ननु पुरुषस्य नित्यसिद्धस्य बुद्धिनाशेऽपि प्रणाशो न कल्पते तत्राऽऽह—**तावदेवेति** । कार्याकार्यविवेचनयोग्यान्तःकरणाभावे सतोऽपि पुरुषस्य करभवदपगततत्त्वविवेकविवक्षया नष्टत्वव्यपदेशः । तदेतदाह—**पुरुषार्थेति** ॥ ६३ ॥

आ० भा०—॥ ६३ ॥

आ० ज०—॥ ६३ ॥

रा० भा०—क्रोधाद्भवति संमोहः संमोहः कृत्याकृत्यविवेकशून्यता तया सर्वं करोति। ततश्च प्रारब्धे इन्द्रियजयादिके प्रयत्ने स्मृतिभ्रंशो भवति। स्मृतिभ्रंशाद्बुद्धिनाशः आत्मज्ञाने यो व्यवसायः कृतस्तस्य नाशः स्यात्। बुद्धिनाशात् पुनरपि संसारे निमग्नो नष्टो भवति ॥ ६३ ॥

अ० टी०—क्रोधाच्च संमोहः। सम्यक्प्रकारेण मोहो विवेकराहित्यं संमोहात्स्मृतेर्भगवत्स्मरणस्य विभ्रमः विशेषेण भ्रमः। भगवत्स्मरणानन्तरमनुस्मरणभ्रमे विशेषः। स्मृतिभ्रंशात्पूर्वोक्तबुद्धिनाशः स्यात् बुद्धिनाशात्प्रणश्यति। पुनस्तत्साधनप्रवृत्तिराहित्यं नाशे प्रकर्षः। विषयध्यानसंगराहितो व्रजेति भावः॥ ६३॥

नी० टी०—ततः क्रोधात् संमोहः कार्याकार्यविवेकाभावो भवति। ततः स्मृतिविभ्रमः शास्त्रार्थानुसंधानस्य विभ्रंशरूपं चलनं भवति। स्मृतिभ्रंशात् बुद्धिनाशः शास्त्रार्थस्य निश्चितस्यापि तिरोधानं भवति। तस्मिंश्च शास्त्रजे परोक्षज्ञानेऽपि नष्टे पुरुषो नश्यति पुरुषार्थायोग्यो भवति यो हि तादृशः स नष्ट एवेति लोके वदंति ॥ ६३ ॥

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ॥**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

शां० भा०—सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानमथेदानीं मोक्षकारणमिदमुच्यते—रागद्वेषेति। रागद्वेषवियुक्तै रागश्च द्वेषश्च रागद्वेषौ। तत्पुरःसरा हीन्द्रियाणां प्रवृत्तिः स्वाभाविकी। तत्र यो मुमुक्षुर्भवति स ताभ्यां वियुक्तैः श्रोत्रादिभिरिन्द्रियैर्विषयानवर्जनीयांश्चरन्नुपलभमान आत्मवश्यैरात्मनो वश्यानि वशीभूतानि तैरात्मवश्यैर्विधेयात्मेच्छातो विधेय आत्माऽन्तःकरणं यस्य सोऽयं प्रसादमधिगच्छति। प्रसादः प्रसन्नता स्वास्थ्यम् ॥ ६४ ॥

शां० आ०—विषयाणां स्मरणमपि चेदनर्थकारणं सुतरां तर्हि भोगस्तेन जीवनार्थं भुञ्जानो विषयाननर्थं कथं न प्रतिपद्यत इत्याशङ्क्य वृत्तानुवादपूर्वकमुत्तरश्लोकतात्पर्यमाह—**सर्वानर्थस्येति**। अनर्थमूलकथनानन्तर्यमथशब्दार्थः। परिहर्तव्ये निर्णीते तत्परिहारोपायजिज्ञासां दर्शयति—**इदानीमिति**। रागद्वेषपूर्विका प्रवृत्तिरित्यत्रानुभवदर्शनार्थो हिशब्दः, शास्त्रीयप्रवृत्तिव्यासेधार्थं स्वाभाविकीत्युक्तम्। तत्रेत्यधिकृतानधिकृत्य प्रयोगः। अवर्जनीयानशनपानादीन्देहस्थितिहेतूनिति यावत्। इन्द्रियाणां विषयेषु प्रवृत्तिश्चेन्नियमानुपपत्त्या वर्जनीयेष्वपि सा स्यादित्याशङ्क्याऽऽह—**आत्मेति**। अन्तःकरणाधीनत्वेऽपीन्द्रियाणां तदनियमात्तेषामपि नियमानुपपत्तिरित्याशङ्क्याऽऽह—**विधेयात्मेति** ॥ ६४ ॥

आ० भा०—इंद्रियजयफलमाहोत्तराभ्यां श्लोकाभ्याम्। विषयाननुभवन्नपि विधेयआत्मा यस्य स जितात्मेत्यर्थः। प्रसादम् मनःप्रसादम् ॥ ६४ ॥

आ० ज०—रागद्वेषेतिश्लोकद्वयस्य तात्पर्यमाह—**इंद्रियेति**। इंद्रियजयश्च तत्फलं चेंद्रियजयफलं इंद्रियजयस्य फलमिंद्रियजयफलम् अस्त्वेवं रागद्वेषपरिहारः। ततः किमित्याकांक्षायां रागद्वेषपरिहारस्येंद्रियजयाख्यं फलमाह—**इंद्रियजयेन किं भवति**। वशे हि यस्येंद्रियाणीति ज्ञानं भवतीत्युक्तमितिचेत्सत्यम्। तत्किं साक्षादिंद्रियजयफलमुत व्यवहितमित्याकांक्षायां इंद्रियजयस्य फलं ज्ञानं यथा भवति तथाऽहेत्यर्थः। रागद्वेषपरिहारवद्विषयचरणस्यापि इंद्रियजयसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह—**विषयानिति**। निराहारत्वमिंद्रियजये कारणं तच्चाशक्यमतः कथमिंद्रियजय इत्याशंक्य देहधारणामात्रोपयुक्तविषयानुभवो न दोषायेति तदभ्युपगममात्रमनेन क्रियत इति भावः। इंद्रियजयवाचकं पदमत्र न श्रूयत इति अतस्तद्व्याचष्टे। **विधेय इति**। स विधेयात्मेति शेषः। किमनेनापीत्यत आह—**जितात्मेति**। अनेन पादत्रयेण रागद्वेषपरिहारस्येंद्रियजयाख्यं फलमुक्तम्। यद्यप्यनुवादोऽयं प्रतीयते। तथाप्यप्राप्तत्वादन्यथा वाक्यवृत्तिः। तथाहि। य उक्तविधया त्यक्तरागद्वेष

सरागद्वेषवियुक्तैरस्ताभ्यामप्रयुक्तैः केवलशरीरधारणार्थं विषयांश्चरति स विधेयात्मा भवति तत एव बाह्येंद्रियाण्यपि तस्य वश्यानि भवंतीति । अत एव क्रमेण वाक्यद्वयस्य पृथक् तात्पर्यं नोक्तम् । द्वितीयाकांक्षोत्तरत्वेनेंद्रियजयस्य ज्ञानं व्यवहितफलमिति दर्शयितुं साक्षात्फलमुक्तम् । विधेयात्मा । प्रसादमधिगच्छतीति । तत्र प्रसादो नामात्मधर्म इति प्रतीयते तन्निवृत्त्यर्थमाह— **प्रसादमिति** । प्रसन्नचेतस इति वक्ष्यमाणत्वादिति भावः ॥ ६४ ॥

**रा० भा०—उक्तेन प्रकारेण मयि सर्वेश्वरे चेतसः शुभाश्रयभूते न्यस्तमना निर्दग्धाशेषकल्मषतया रागद्वेषवियुक्तैरात्मवश्यैरिन्द्रियैर्विषयांश्चरन् विषयांस्तिरस्कृत्य वर्तमानो विधेयात्मा विधेयमनाः प्रसादमधिगच्छति । निर्मलान्तःकरणो भवतीत्यर्थः ॥ ६४ ॥**

**अ० टी०—**समाधिस्थस्योत्तरमाह—**रागद्वेषवियुक्तैरिति** । तुशब्दः पूर्वनिरूपणं व्यावर्त्तयति । विधेयात्मा विधेयो वशवर्त्ती आत्मा भगवान् यस्य तादृशो रागद्वेषादियुक्तैरात्मवश्यैः स्ववशैः भगवद्वश्यैर्वा इंद्रियैः विषयान् भोगान् भगवदिच्छया प्राप्तान् उपयोगं कुर्वन् प्रसादं भगवत्प्रसादमधिगच्छति । अत्रायं भावः । भगवदिच्छया रसज्ञानार्थं स्वस्वरूपरसदानेच्छया प्राप्तान् भोगान् आत्मवश्यैर्भगवद्रसाभिलाषिभिस्तद्रसदानार्थं तद्दत्तान् ज्ञात्वा यावत् कार्यसिद्धिं भुञ्जतो भगवान् प्रसादं करोति । अत एव श्रीभागवते बाध्यमानोपीत्यारभ्य विषयैर्नाभिभूयत इत्यन्तेन तथैवोक्तम् ॥ ६४ ॥

**नी० टी०—**ननु विषयानध्यायतोऽपि योगिनो व्युत्थाने प्रमाणस्वाभाव्यादिंद्रियाणां विषयेषु संगो दुष्परिहरस्ततश्चोक्तरीत्या तस्यापि नाशप्रसक्तिरित्याशंक्याह—**रागद्वेषेति** । विधेयात्मा किंकरीकृतमनास्तु आत्मवश्यैर्मनोऽधीनैरिंद्रियैः स्वामिनश्चित्तस्य किंकरीकृतस्य कामक्रोधहीनत्वात्स्वयमपि रागद्वेषवियुक्तैः विषयान् पथि पतिततृणादीनीवानास्थया चरन् पश्यन्नपि पुमान् तत्र कामाद्यनुदयात् प्रसादं संकल्पविकल्पपंकलेपप्रक्षालनेन मनसः स्वाच्छयं अधिगच्छति । मनसः स्वाच्छयमेव प्रत्यगात्मनः स्वाच्छयं तस्य तद्गुणसारत्वात् । अजितमनस्कमिव जितमनस्कं विषयसंगो न बाधतेऽतो मनोजयोऽवश्यं कर्त्तव्य इत्यर्थः ॥ ६४ ॥

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ॥**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥**

**शां० भा०—प्रसादे सति किं स्यादित्युच्यते—प्रसाद इति । प्रसादे सर्वदुःखानामाध्यात्मिकादीनां हानिर्विनाशोऽस्य यतेरुपजायते । किंच प्रसन्नचेतसः स्वस्थान्तःकरणस्य हि यस्मादाशु शीघ्रं बुद्धिः पर्यवतिष्ठत आकाशमिव परि समन्तादवतिष्ठत आत्मस्वरूपेणैव निश्चली भवतीत्यर्थः । एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता यतस्तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तः समाचरेदिति वाक्यार्थः ॥ ६५ ॥**

**शां० आ०—**तथाऽपि नानाविधदुःखाभिभूतत्वान्न स्वास्थ्यमास्थातुं शक्यमित्याशयेन पृच्छति—**प्रसाद इति** । श्लोकार्धेनोत्तरमाह—**उच्यत इति** । सर्वदुःखहान्या बुद्धिस्वास्थ्येऽपि प्रकृतं प्रज्ञास्थैर्यं कथं सिद्धमित्याशङ्क्याऽऽह—**प्रसन्नेति** । बुद्धिप्रसादस्यैव फलान्तरमाह—**किंचेति** । तस्माद्बुद्धिप्रसादार्थं प्रयतितव्यामिति शेषः । श्लोकद्वयस्याक्षरोत्थमर्थमुक्त्वा तात्पर्यार्थमुपसंहरति—**एवमिति** । युक्तः समाहितो विषयपारवश्यशून्यः सन्निति यावत् ॥ ६५ ॥

**आ० भा०—कथं प्रसादमात्रेण सर्वदुःखहानिः । प्रसन्नचेतसो हि बुद्धिः पर्यवतिष्ठति ब्रह्मापरोक्ष्येण सम्यक्स्थितिं करोति । प्रसादो नाम स्वतःप्राप्तो विषयागतिः ॥ ६५ ॥**

**आ० ज०—**प्रसादे सति किं स्यादित्यत उक्तम्—**प्रसाद इति** । तदाक्षिपति—**कथमिति** । तरति शोकमात्मविदित्यादिविरोधादिति भावः । किं च प्रसादे सति ज्ञानं भवतीति वा व्यवधानांतरं वा वक्तव्यं तत्रोक्तम् । सर्वदुःखहानिश्चा-

वक्तव्यैवोक्तेति चाक्षेपशेषः । एतत्परिहारत्वेनोत्तरार्धं व्याख्याति—**प्रसन्नेति** । एतेन प्रसादस्य फलद्वयमुच्यत इत्यपि प्रतीतिर्निरस्ता भवति । प्रसादे सति ब्रह्मापरोक्षज्ञानं भवति । तच्च व्यवधानेनेति भविष्यति । ततो भवति सर्वदुःखहानिः प्रसादफलतयोक्तेति न वक्तव्यानुक्तिः । नाप्यवक्तव्योक्तिः । बुद्धियुक्त इति श्लोके सुकृतदुष्कृतहानं ज्ञानफलमित्युक्तम्, तदयुक्तम् । अपुरुषार्थत्वादित्याशंकां परिहर्तुं प्रसंगादिदमुक्तमिति । ननु यस्यानायासेनाभिलषितविषयोपनतिस्तस्य मनोऽव्याकुलं प्रसन्नमित्युच्यते । ततः कथं प्रसादस्येंद्रियजयफलत्वं ज्ञानसाधनत्वं चोच्यत इत्यत आह—**प्रसाद इति** । अत्र विवक्षितेति शेषः । स्वतोऽपि प्रयत्नं विनाऽपि विषयागतिर्विषयान्प्रत्यप्रवृत्तिः ॥ ६५ ॥

**रा० भा०**—अस्य पुरुषस्य मनसः प्रसादे सति प्रकृतिसंसर्गप्रयुक्तसर्वदुःखानां हानिरुपजायते । प्रसन्नचेतसः आत्मावलोकनविरोधिदोषरहितमनसः । तदानीमेव हि विविक्तात्मविषया बुद्धिर्मयि पर्यवतिष्ठते अतो मनःप्रसादे सर्वदुःखानां हानिर्भवत्येव ॥ ६५ ॥

**अ० टी०**—प्रसादे किं स्यादित्याशंक्याह—**प्रसाद इति** । प्रसादे जाते सति अस्य तदनुगृहीतस्य सर्वदुःखानां हानिः नाशः स्यात् । सर्वपदेनालौकिकविप्रयोगादीनामपि नाशो ज्ञापितस्तेन संयुक्त एव नित्यं तिष्ठेदिति भावो व्यंजितः । सर्वदुःखहानौ सत्यां किं स्यादत आह—**प्रसन्नचेतस इति** । दुःखहानौ प्रसन्नं चेतो यस्य तादृशो भवति । ततस्तस्य अनु शीघ्रमेव बुद्धिः पर्यवतिष्ठते । मयीति शेषः ॥ ६५ ॥

**नी० टी०**—किंच चित्तस्य प्रसादे हि अस्य पुंसः सर्वदुःखानां काममूलकानां कामाभावात् हानिः परिहारो जायते कामानुदये हेतुमाह—**प्रसन्नेति** । हि यस्मात् प्रसन्नचेतसः पुंसो बुद्धिर्ब्रह्मात्मैक्यनिश्चय आशु शीघ्रं पर्यवतिष्ठते सुदृढो भवति तस्मिंश्च सति प्राप्याभावान्न कामोदय इत्यर्थः ॥ ६५ ॥

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ॥**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥**

**शां० भा०**—सेयं प्रसन्नता स्तूयते—नास्तीति । नास्ति न विद्यते न भवतीत्यर्थः । बुद्धिरात्मस्वरूपाविषयाऽयुक्तस्यासमाहितान्तःकरणस्य । न चास्त्ययुक्तस्य भावनाऽऽत्मज्ञानाभिनिवेशः । तथा न चास्त्यभावयत आत्मज्ञानाभिनिवेशमकुर्वतः शान्तिरुपशमः । अशान्तस्य कुतः सुखम्, इन्द्रियाणां हि विषयसेवातृष्णातो निवृत्तिर्या तत्सुखं न विषयविषया तृष्णा, दुःखमेव हि सा, न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युपपद्यत इत्यर्थः ॥ ६६ ॥

**शां० आ०**—किं पुनः सत्त्वशुद्ध्यैव यथोक्तबुद्धिः सिध्यति नेत्याह—**सेयमिति** । असमाहितस्यापि बुद्धिमात्रमुत्पद्यमानं प्रतिभातीत्याशङ्क्य विशिनष्टि—**आत्मस्वरूपेति** । नहि विक्षिप्तचित्तस्याऽऽत्मस्वरूपविषया बुद्धिरुदेतुमर्हतीत्यत्र हेतुमाह—**न चेति** । आत्मज्ञाने शब्दादापाततो जाते स्मृतिसंतानकरणं साक्षात्कारार्थमभिनिवेशो भावनेति चोच्यते । न चासौ विक्षिप्तबुद्धेः सिध्यतीति हेत्वर्थं विवक्षित्वाऽऽह—**आत्मज्ञानेति** । भावनाद्वारा साक्षात्काराभावेऽपि का क्षतिरित्याशङ्क्याऽऽह—**तथेति** । असमाहितस्य भावनाभाववदिति यावत् । आत्मन्यापाततो ज्ञाते श्रवणाद्यावृत्तिरूपां स्मृतिमनातन्वानस्यापरोक्षबुद्ध्यभावे नानर्थनिवृत्तिः सिध्यतीत्याह—**उपशम इति** । अनिवृत्तानर्थस्य परमानन्दसागराद्विभक्तस्य संसारवारिधौ निमग्नस्य सुखाविर्भावो न संभवतीत्याह—**अशान्तस्येति** । तस्यापि विषयसेवातो वैषयिकं सुखं संभवतीत्याशङ्क्याऽऽह—**इन्द्रियाणां हीति** । तृष्णाक्षयस्य शास्त्रप्रसिद्धमानुभविकं च सुखत्वमिति वक्तुं हिशब्दः । विषयसेवातृष्णयाऽपि विषयोपभोगद्वारा सुखमुपलब्धमित्याशङ्क्याऽऽह—**दुःखमेवेति** । तत्रापि हिशब्दोऽनुभवावद्योती । तदेव स्पष्टयति—**नेत्यादिना** ॥ ६६ ॥

**आ० भा०**—प्रसादाभावे दोषमाहोत्तराभ्यां श्लोकाभ्याम्—न हि प्रसादाभावे युक्तिश्चित्तनिरोधः । अयुक्तस्य च बुद्धिः सम्यग्ज्ञानं च नास्ति । तदेवोपपादति—न चायुक्तस्येति । शांतिर्मुक्तिः 'शांतिर्मोक्षोऽथ निर्वाणम्' इत्यभिधानात् ॥ ६६ ॥

आ० ज०—वक्तव्यस्योक्तत्वान्नास्ति बुद्धिरित्यादिकं किमर्थमित्यत आह—**प्रसादेति** । श्रवणमननाभ्यामुपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेन यदर्थमिंद्रियजयोऽपेक्षित इत्याशंक्येति शेषः । नन्वत्र प्रसादाभाव इदं स्यादिति नोच्यते ततः । कथमेतदुक्तमित्यतः प्रकरणप्राप्तमध्याहरति—**नहीति** । ननु प्रसादरहिता अनुमिमते इत्यत आह—**चित्तेति** । एकाग्रतेत्यर्थः । एवमध्याहारे सति नास्तिबुद्धिरित्येतत्संबध्यत इति भावेनाह—**अयुक्तस्येति** । ज्ञानमात्रं प्रकृतानुपयुक्तमयुक्तं चेत्यत आह—**सम्यगिति** । ब्रह्मापरोक्षज्ञानमित्यर्थः । एतावताप्रसादाभावे दोषउक्तस्तत्किमर्थं न चायुक्तस्येत्येतदित्यत आह—**तदेवेति** । ध्यानेनैव ज्ञानोत्पादात्कथं नास्ति बुद्धिरयुक्तस्येत्याशंक्येति शेषः । भावनाध्यानं । अत एव न चाभावयतो ज्ञानम् । न चाज्ञानिनः शांतिरितियोज्यम् । ननु शांतिः प्रसादः तस्य ज्ञानसाधनत्वेनोक्तत्वात्कथं ज्ञानोत्तरत्वमुच्यत इत्यत आह—**शांतिरिति** । एतच्च न केवलं मुक्तौ सर्वदुःखहानिः किं तु संसारिभिरलभ्यं परमं सुखं चेति ज्ञापयितुं प्रसंगादुक्तम् । एतदेवावेक्ष्य भाष्यकृता ब्रह्मादिपदादित्याद्युक्तम् ॥ ६६ ॥

**रा० भा०—मयि संन्यस्तमनोरहितस्य स्वयत्नेनेन्द्रियदमने प्रवृत्तस्य कदाचिदपि विविक्तात्मविषया बुद्धिर्न सेत्स्यति । अत एव तस्य तद्भावना च न संभवति । विविक्तात्मानमभावयतो विषयस्पृहाशान्तिर्न भवति । अशान्तस्य विषयस्पृहायुक्तस्य कुतो नित्यनिरतिशयसुखप्राप्तिः ॥ ६६ ॥**

अ० टी०—ननु समाधिस्थस्यापि स्थितप्रज्ञतैवोक्ता तदा को विशेष इत्यत आह—**नास्ति बुद्धिरिति** । अयुक्तस्य मयि योगरहितस्य बुद्धिरेव नास्ति । अयमर्थः । बुद्ध्यनन्तरं चेन्मयि योगो न जातस्तदा सा स्थितप्रज्ञैव न । तस्मात्समाधिस्थभगवत्संयोगाभावे स्थितप्रज्ञाप्यकिंचित्करीत्यर्थः । ननु समाधिस्थयोगेनापि किं फलमित्याशंक्याह—**न चेति** । अयुक्तस्य भगवत्संबन्धरहितस्य भावना भगवद्भसौपयिकदेहाभिलाषो न च भवति । ननु भावनामात्रेणापि किमत आह—**न चेति** । अभावयतः भावनामकुर्वतः शान्तिर्भगवद्भसौपयिकदेहावाप्तिर्न च भवति । तादृग्देहिनः साक्षादानन्दानुभवो न भवतीत्याह—**अशांतस्येति** । अशांतस्य तादृग्देहाप्त्या तापरहितस्य सुखं साक्षात्संबन्धात्मकभजनानन्दानुभवः कुतः स्यादित्यर्थः ॥ ६६ ॥

नी० टी०—समनस्कानामिंद्रियाणामनिग्रहे दोष उक्तः बुद्धेरपर्यवस्थाने को दोष इत्यत आह—**नास्तीति** । अयुक्तस्य श्रवणमननयोरनासक्तस्य बुद्धिर्ब्रह्मात्मैक्यनिश्चयो नास्ति प्रमाणविषयासंभावनायाः प्रमेयविषयासंभावनायाश्चानिरासात् । तथा अयुक्तस्यासमाहितमनसो भावना ब्रह्माकारांतःकरणवृत्तिप्रवाहो नास्ति मनसश्चांचल्येन बुद्धेरपि चांचल्यात् । अभावयतो ध्यानमकुर्वतः शांतिः सर्वदुःखोपरमश्च नास्ति चेतसोऽनवस्थितत्वेन दुःखावश्यंभावात् । अशांतस्यानुपरतसर्वदुःखस्य सुखं प्रत्यगद्वयानंदात्मकं कुतो न कुतश्चित् दुःखित्वादेव । आद्यमयुक्तस्येति पदं युजिर्योगे इत्यस्य रूपं । द्वितीयं युजसमाधावित्यस्य तस्माद्बुद्धेः पर्यवस्थानमावश्यकम् ॥ ६६ ॥

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ॥**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

**शां० भा०—अयुक्तस्य कस्माद्बुद्धिर्नास्तीत्युच्यते—इन्द्रियाणामिति । इन्द्रियाणां हि यस्माचरतां स्वस्वविषयेषु प्रवर्तमानानां यन्मनोऽनुविधीयतेऽनुप्रवर्तते तदिन्द्रियविषयविकल्पने प्रवृत्तं मनोऽस्य यतेर्हरति प्रज्ञामात्मानात्मविवेकजां नाशयति । कथं, वायुर्नावमिवाम्भस्युदके जिगमिषतां मार्गादुद्धृत्योन्मार्गे यथा वायुर्नावं प्रवर्तयत्येवमात्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां करोति । यततो ह्यपीत्युपन्यस्तस्यार्थस्यानेकधोपपत्तिमुक्त्वा तं चार्थमुपपाद्योपसंहरति ॥ ६७ ॥**

**शां० आ०**—आकाङ्क्षाद्वारा श्लोकान्तरमुत्थापयति—**अयुक्तस्येति** । विक्षिप्तचेतसो भावनाभावे साक्षात्कारलक्षणा बुद्धिर्न भवतीति हेत्वन्तरेण साधयति—**इन्द्रियाणामिति** । यत्पदोपात्तं मनस्तत्पदेनापि गृह्यते । इन्द्रियाणां श्रोत्रादीनां विषयाः शब्दादयस्तेषां विकल्पनं मिथो विभज्य ग्रहणं तेनेति यावत् । दृष्टान्तं व्याकरोति—**उदक इति** । करोति यस्मात्तस्मादयुक्तस्य नोत्पद्यते बुद्धिरिति योजना । यततो हीत्यादिश्लोकाभ्यामुक्तस्यैवार्थस्य प्रकृतश्लोकाभ्यामपि कथ्यमानत्वादस्ति पुनरुक्तिरित्याशङ्क्य परिहरति—**यततो हीत्यादिना** । ध्यायतो विषयानित्यादिनोपपत्तिवचनमुन्नेयम् ॥ ६७ ॥

**आ० भा०**—कथमयुक्तस्य भावना न भवतीत्याह—इंद्रियाणामिति। अनुविधीयते क्रियते। नन्वीश्वरेणेंद्रियाणामनु बुद्धिर्ज्ञानमिति वक्ष्यमाणत्वात् । प्रज्ञां ज्ञानम् उत्पत्स्यदपि निवारयतीत्यर्थः । उत्पन्नस्याप्यभिभवो भवति ॥ ६७ ॥

**आ० ज०**—एकेनैव श्लोकेन प्रमेयस्य समुदितत्वात् श्लोकाभ्यामिति किमर्थमुक्तमत आह—**कथमिति** । कृतश्रवणमननस्य ध्यानोपपत्तेरिति भावः । न भवतीत्याशंक्येति शेषः । अनुविधानं सदृशभवनं तदत्रासंगतं कर्ता चात्र जीव इति प्रतीयतेऽत आह—**अनुविधीयत इति** । विपूर्वो दधातिः करोत्यर्थे वर्तते कर्ता चात्रेश्वर एवेत्यर्थः । अत्रानुः पृष्ठभावित्वार्थो न लक्षणाद्यर्थ इति कर्मप्रवचनीयो न भवति । नन्वितिसंप्रतिपत्तिरुक्ता सा कुत इत्यत आह—**बुद्धिरिति** । ग्रहणशक्तिः प्रज्ञा । तद्ग्रहणमत्रायुक्तमित्यत आह—**प्रज्ञामिति** । परोक्षनिश्चयं यस्य प्रज्ञानं नोत्पन्नं तस्य युक्त्यभावः किं करिष्यति । विद्यमानस्य हि हरणमत आह—**उत्पत्स्यदिति** । तर्ह्युत्पन्नपरोक्षज्ञानस्य युक्त्यभावोऽकिंचित्कर इत्यत आह—**उत्पन्नस्यापीति** । चित्तनिरोधरहितश्रवणमनने अपि न ध्यानोपयोगिनी तत्त्वनिश्चयवेदार्थनियमौ कुरुत इति भावः ॥ ६७ ॥

**रा० भा०**—पुनरप्युक्तेन प्रकारेणेंद्रियनियमनमकुर्वतोऽनर्थमाह—इन्द्रियाणां विषयेषु चरतां विषयेषु वर्तमानानां वर्तनमनु यन्मनोऽनुविधीयते पुरुषेणानुवर्त्यते तन्मनोऽस्य विविक्तात्मप्रवणां प्रज्ञां हरति विषयप्रवणतां करोतीत्यर्थः। यथाऽम्भसि नीयमानां नावं प्रतिकूलो वायुः प्रसह्य हरति॥६७॥

**अ० टी०**—ननु भावनायामास्थितचेतसोऽपीन्द्रियनिग्रहः किमर्थं स तु साधनदशापन्नस्यैव संभवति । भावनायुक्तस्य तु सिद्धत्वादेव न प्रयोजनं ज्ञानिन इवेत्याशंक्याह—**इन्द्रियाणामिति** । चरतां लौकिकेषु स्वेच्छया विहरतामिन्द्रियाणां यस्येन्द्रियस्य संगे मनः अनु विधीयते तत्संगे गच्छति तत् तदेव इन्द्रियस्य पुरुषस्य प्रज्ञां भावनात्मिकां हरति तत्र दृष्टान्तमाह—**वायुर्नावमिति** । अम्भसि जले नावं तारणसाधिकां वायुरिव । यथा प्रबलो वायुरनवस्थितकर्णधारयुक्तां नावं मज्जयति तथेति भावः ॥ ६७ ॥

**नी० टी०**—तदभावे दोषमाह—**इद्रियाणां हीति** । हि यस्मादिंद्रियाणां चरतां स्वस्वविषये प्रवर्त्तमानानां कर्मणि षष्ठी यत् रागादिकलुषितं मनः तान्यनुलक्षीकृत्य विधीयते प्रवर्त्यते कर्मकर्त्तरि लकारः प्रवर्त्तत इत्यर्थः तत् इंद्रियानुसारि मनोऽस्य साधकस्य प्रज्ञामात्मतत्त्वविषयां बुद्धिं हरति तस्या मनोनुसारित्वात् दृष्टांतः स्पष्टार्थः अन्ये तु इंद्रियाणां मध्ये यदिंद्रियमनुलक्षीकृत्य मनः प्रवर्त्तते तदिंद्रियमस्य साधकस्य मनसो वा प्रज्ञां हरतीति योजयंति आत्मविषयां प्रज्ञां हृत्वा मनोविषयविषयां करोतीति भाष्यमत्यालोचनीयम् ॥ ६७ ॥

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ॥**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥**

**शां० भा०**—इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्—तस्माद्यस्य यतेर्हे महाबाहो निगृहीतानि सर्वशः सर्वप्रकारैर्मानसादिभेदैरिन्द्रियार्थेभ्यः शब्दादिभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥६८॥

**शां० आ०**—तच्छब्दापेक्षितार्थोक्तिद्वारा श्लोकमवतारयति—**इन्द्रियाणामिति** । असमाहितेन मनसा यस्मादनुविधीयमानानीन्द्रियाणि प्रसह्य प्रज्ञामपहरन्ति तस्मादिति योजना ॥ ६८ ॥

**आ० भा०**—तस्मात्सर्वात्मना निगृहीतेंद्रियएव ज्ञानीति निगमयति। तस्मादिति ॥ ६८ ॥

**आ० ज०**—अत्र परमं प्रमेयं ज्ञानिलक्षणं प्रकृतं तस्यासंभवपरिहाराय ज्ञानस्य महाप्रयत्नसाध्येंद्रियनिग्रहसाध्यत्वं च तत्र कस्यायमुपसंहार इति न ज्ञायतेऽत आह—**तस्मादिति**। ज्ञानी जायत इति शेषः। यत एवं निगृहीतेंद्रियस्यैव प्रसादःप्रसादवत एव युक्तिः युक्तिमत एव श्रवणमननाभ्यां तत्त्वज्ञानं तत्त्वज्ञानवत एवापरोक्षज्ञानसाधनं ध्यानं नान्यथा तस्मादित्यर्थः ॥ ६८ ॥

**रा० भा०**—तस्मादुक्तेन प्रकारेण शुभाश्रये मयि निविष्टमनसो यस्येन्द्रियाणीन्द्रियार्थेभ्यः सर्वशो निगृहीतानि तस्यैवात्मनि प्रज्ञा प्रतिष्ठिता भवति ॥ ६८ ॥

**अ० टी०**—तस्मात्सर्वथेन्द्रियनिग्रहकर्तुरेव प्रज्ञा प्रतिष्ठिता भवतीत्याह—**तस्मादिति**। यस्मादिन्द्रियनिग्रहाभावे प्रज्ञा नश्यति तस्मात् यस्य इन्द्रियार्थेभ्यो विषयेभ्य इन्द्रियाणि निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता भवतीत्यर्थः। महाबाहो इति संबोधनेन तथा करणसामर्थ्यं ज्ञापितम् ॥ ६८ ॥

**नी० टी०**—यततो ह्यपीत्यत्रोपक्रांतमर्थं बहुधा उपपाद्य उपसंहरति—**तस्मादिति**। यस्मादिंद्रियाधीनं मनो मनोनुगा च प्रज्ञा तस्मात् हे महाबाहो! यस्य यतेरिंद्रियाणि सर्वशः सर्वप्रकारेण स्वकारणेन मनसा सहितानीति यावत् इंद्रियार्थेभ्यः शब्दादिभ्यो निगृहीतानि भवंति तस्य प्रज्ञा प्रतिष्ठितेति विद्धि ॥ ६८ ॥

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ॥**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

**शां० भा०**—योऽयं लौकिको वैदिकश्च व्यवहारः स उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्याविद्याकार्यत्वादविद्यानिवृत्तौ निवर्तते। अविद्यायाश्च विद्याविरोधान्निवृत्तिरित्येतमर्थं स्फुटीकुर्वन्नाह—या निशेति। या निशा रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वात्सर्वेषां भूतानां सर्वभूतानाम्। किं तत्परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः। यथा नक्तंचराणामहरेव सदन्येषां निशा भवति तद्वन्नक्तंचरस्थानोयानामज्ञानां सर्वभूतानां निशेव निशा परमार्थतत्त्वमगोचरत्वादतद्बुद्धीनाम्। तस्यां परमार्थतत्त्वलक्षणायामज्ञाननिद्रायाः प्रबुद्धो जागर्ति संमयी संयमवाञ्जितेन्द्रियो योगीत्यर्थः।

**शां० आ०**—आत्मविदः स्थितप्रज्ञस्य सर्वकर्मपरित्यागेऽधिकारस्तद्विपरीतस्याज्ञस्य कर्मणीत्येतस्मिन्नर्थे समनन्तरश्लोकमवतारयति—**योऽयमिति**। अविद्यानिवृत्तौ सर्वकर्मनिवृत्तिश्चेत्तन्निवृत्तिरेव कथमित्याशङ्क्याऽऽह—**अविद्यायाश्चेति**। स्फुटीकुर्वन्बाह्याभ्यन्तरकरणानां पराक्प्रत्यक्प्रवृत्तिवत्तथाविधदर्शने च मिथो विरुध्येते पराग्दर्शनस्यानाद्यात्मावरणाविद्याकार्यत्वादात्मदर्शनस्य च तन्निवर्तकत्वात्ततश्चाऽऽत्मदर्शनार्थमिन्द्रियाण्यर्थेभ्यो निगृह्णीयादित्याहेति योजना। सर्वप्राणिनां निशा पदार्थाविवेककरीत्यत्र हेतुमाह—**तमःस्वभावत्वादिति**। सर्वप्राणिसाधारणीं प्रसिद्धां निशां दर्शयित्वा तामेव प्रकृतानुगुणत्वेन प्रश्नपूर्वकं विशदयति—**किं तदित्यादिना**। स्थितप्रज्ञविषयस्य परमार्थतत्त्वस्य प्रकाशैकस्वभावस्य कथमज्ञान्प्रति निशात्वमित्याशङ्क्याऽऽह—**यथेति**। तत्र हेतुमाह—**अगोचरत्वादिति**। अतद्बुद्धीनां परमार्थतत्त्वातिरिक्तद्वैतप्रपञ्चप्रवृत्तबुद्धीनामप्रतिपन्नत्वात्परमार्थतत्त्वं निशेवाविदुषामित्यर्थः। तस्यामित्यादि व्याचष्टे—**तस्यामिति**। निशावदुक्तायामवस्थायामिति यावत्। योगीति ज्ञानी कथ्यते।

**शां० भा०**—यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिशायां प्रसुप्तान्येव भूतानि जाग्रतीत्युच्यते यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः सा निशाऽविद्यारूपत्वात्परमार्थतत्त्वं पश्यतो मुनेः। अतः कर्माण्यविद्यावस्थायामेव चोद्यन्ते न विद्यावस्थायाम्। विद्यायां हि सत्यामुदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छत्यविद्या। प्राग्विद्योत्पत्तेरविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते। नाप्रमाणबुद्ध्या गृह्यमाणायाः कर्महेतुत्वोपपत्तिः। प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्मेति हि कर्मणि कर्ता प्रवर्तते नाविद्यामात्रमिदं सर्वं निशेवेति।

**शां० आ०**—द्वितीयार्धं विभजते—**यस्यामिति**। प्रसुप्तानां जागरणं विरुद्धमित्याशङ्क्याऽऽह—**प्रसुप्ता इवेति**। परमार्थतत्त्वमनुभवतो निवृत्ताविद्यस्य संन्यासिनो द्वैतावस्था निशेत्यत्र हेतुमाह—**अविद्यारूपत्वादिति**। परमार्थावस्था निशेवाविदुषां विदुषां तु द्वैतावस्था तथेति स्थिते फलितमाह—**अत इति**। अविद्यावस्थायामेव क्रियाकारकफलभेदप्रतिभानादित्यर्थः। विद्योदयेऽपि तत्प्रतिभानाविशेषात्पूर्ववमिव कर्माणि विधीयेरन्नित्याशङ्क्याऽऽह—**विद्यायामिति**। अविद्यानिवृत्तौ बाधितानुवृत्त्या विभागभानेऽपि नास्ति कर्मविधिर्विभागाभिनिवेशाभावादित्यर्थः। अविद्यावस्थायामेव कर्माणीत्युक्तं व्यक्ती करोति—**प्रागिति**। विद्योदयात्पूर्वं बाधकाभावादबाधिताऽविद्या क्रियादिभेदमापद्य प्रमाणानुरूपया बुद्ध्या ग्राह्यतां प्राप्य कर्महेतुर्भवति क्रियादिभेदाभिमानस्य तद्धेतुत्वादित्यर्थः। न विद्यावस्थायामित्युक्तं प्रपञ्चयति—**नाप्रमाणेति**। उत्पन्नायां च विद्यायामविद्याया निवृत्तत्वात्क्रियादिभेदभानमप्रमाणमिति बुद्धिरुत्पद्यते तया गृह्यमाणा यथोक्तविभागभागिन्यप्यविद्या न कर्महेतुत्वं प्रतिपद्यते बाधितत्वेनाऽऽभासतया तद्धेतुत्वायोगादित्यर्थः। विद्याविद्याविभागेनोक्तमेव विशेषं विवृणोति—**प्रमाणभूतेनेति**। यथोक्तेन वेदेन कामनादिमतो मम कर्म विहितं तेन मया तत्कर्तव्यमिति मन्वानः सन्कर्मण्यज्ञोऽधिक्रियते तंप्रति साधनविशेषवादिनो वेदस्य प्रवर्तकत्वादित्यर्थः। सर्वमिदमविद्यामात्रं द्वैतं निशेवेति मन्वानस्तु न प्रवर्तते कर्मणीति व्यावर्त्यमाह—**नाविद्येति**।

**शां० भा०**—यस्य पुनर्निशेवाविद्यामात्रमिदं सर्वं भेदजातमिति ज्ञानं तस्याऽऽत्मज्ञस्य सर्वकर्मसंन्यास एवाधिकारो न प्रवृत्तौ। तथा च दर्शयिष्यति—'तद्बुद्धयस्तदात्मानः' इत्यादिना ज्ञाननिष्ठायामेव तस्याधिकारम्। तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिरिति चेत्, न स्वात्मविषयत्वादात्मज्ञानस्य। न ह्यात्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षताऽऽत्मत्वादेव तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य। न ह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति। प्रमातृत्वं ह्यात्मनो निवर्तयत्यन्त्यं प्रमाणम्। निवर्तयदेव चाप्रमाणी भवति स्वप्नकालप्रमाणमिव प्रबोधे। लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात्प्रमाणस्य। तस्मान्नाऽऽत्मविदः कर्मण्यधिकार इति सिद्धम्॥६९॥

**शां० आ०**—विदुषो न कर्मण्यधिकारश्चेत्तस्याधिकारस्तर्हि कुत्रेत्याशङ्क्याऽऽह—**यस्येति**। तस्याऽऽत्मज्ञस्य फलभूतसंन्यासाधिकारे वाक्यशेषं प्रमाणयति—**तथा चेति**। प्रवर्तकं प्रमाणं विधिस्तदभावे कर्मस्विव विदुषो ज्ञाननिष्ठायामपि प्रवृत्त्यनुपपत्तेराश्रयणीयो ज्ञानवतोऽपि विधिरिति शङ्कते—**तत्रापीति**। किमात्मज्ञानं विधिमपेक्षते किं वाऽऽत्मा नाऽऽद्यस्तस्य स्वरूपविषयस्य यथाप्रमाणप्रमेयमुत्पत्तेर्विध्यनपेक्षत्वादित्याह—**न स्वात्मेति**। न द्वितीय इत्याह—**न हीति**। प्रवर्तकप्रमाणशब्दितस्य विधेः साध्यविषयत्वादात्मनश्चासाध्यत्वादिति हेतुमाह—**आत्मत्वादेवेति**। आत्मतज्ज्ञानयोर्विध्यनपेक्षत्वेऽपि ज्ञानिनो मानमेयव्यवहारप्रतिनियमार्थं विध्यपेक्षा स्यादित्याशङ्क्याऽऽह—**तदन्तत्वाच्चेति**। सर्वेषां प्रमाणानां प्रामाण्यस्याऽऽत्मज्ञानोदयावसानत्वात्तस्मिन्नुत्पन्ने व्यवहारस्य निरवकाशत्वान्न तत्प्रतिनियमाय ज्ञानिनो विधिरित्यर्थः। उक्तमेव व्यक्तीकरोति—**न हीति**। धर्माधिगमवदात्माधिगमेऽपि किमिति यथोक्तो व्यवहारो न भवतीत्याशङ्क्याऽऽह—**प्रमातृत्वं हीति**। तन्निवृत्तौ कथमद्वैतज्ञानस्य प्रामाण्यमित्याशङ्क्याऽऽह—**निवर्तयदेवेति**। प्रमातृत्वं निवर्तयदद्वैतज्ञानं स्वनिवृत्तेर्न प्रमाणमित्यत्र दृष्टान्तमाह—**स्वप्नेति**। आत्मज्ञानस्य विध्यनपेक्षत्वे हेत्वन्तरमाह—**लोके चेति**। व्यवहारभूमौ हि प्रमाणस्य वस्तुनिश्चयफलपर्यन्तत्वे सति प्रवर्तकविधिसापेक्षत्वानुपलम्भादद्वैतज्ञानमपि प्रमाणत्वान्न विधिमपेक्षते रज्ज्वादिज्ञानवदित्यर्थः। आत्मज्ञानवतस्तन्निष्ठाया विधिमन्तरेण ज्ञानमाहात्म्येनैव सिद्धत्वात्तस्य कर्मसंन्यासेऽधिकारो न कर्मणीत्युपसंहरति—**तस्मादिति**॥ ६९॥

**आ० भा०**—उक्तं लक्षणं पिंडीकृत्याह—**या निशेति**। या सर्वभूतानां निशा परमेश्वरस्वरूपलक्षणा। यस्यां सुप्तानीव न किंचिज्जानंति। तस्यामिंद्रियसंयुक्तो ज्ञानी जागर्ति। सम्यगापरोक्ष्येण पश्यति परमात्मानमित्यर्थः। यस्यां विषयलक्षणायां भूतानि जाग्रति तस्यां निशायामिव सुप्तः प्रायो न जानाति। मत्तादिवद्भ्रमनादिप्रवृत्तिः। तदुक्तम्। 'देहं तु तत्र चरमम्' देहोऽपि दैववशगः' इतिश्लोकाभ्याम्। मननयुक्तो मुनिः। पश्यत इत्यस्य साधनमाह॥ ६९॥

**आ० ज०**—ज्ञानिनः सर्वकर्मत्यागप्रतिपादनार्थोय या निशेत्ययं श्लोक इति कश्चित्। तत्र तत्प्रतिपादकाक्षराश्रवणात्प्रमाणविरोधाच्चेत्याशयेन तत्प्रतिपाद्यमाह—**उक्तलक्षणमिति**। चतुःश्लोक्या विक्षिप्योक्तम्। नन्वत्रोक्तं किमपि न प्रतीयत इत्यत आह—**येति**। परमेश्वरस्वरूपस्य निशासाम्यमुपपादयति—**यस्यामिति**। विषयत्वमधिकरणत्वं चाविवक्षित्वा

कारकत्वमात्रविवक्षया साम्यमिदमुक्तम् । संयमीत्यस्याक्षरार्थं इंद्रियेति प्रकरणलभ्योऽर्थो ज्ञानीति । उत्तरार्धार्थमाह—**यस्यामिति** । अत्रापि पूर्ववत्साम्यम् । यदि न किंचित्पश्यति कथं तर्हि तस्य गमनादिप्रवृत्तिरित्यत आह—**मत्तादिवदिति** । कुत एतदित्यत आह—**तदुक्तमिति** । मुनेरित्युक्तत्वाच्चतुर्थाश्रमिण एव ज्ञानमिति व्याख्यानमसदिति भावेनाह—**मननयुक्त इति** । याज्ञवल्क्यादीनामयतीनामपि ज्ञानश्रवणादिति भावः । मननस्य प्राङ्निवृत्तत्वात्पश्यतोमुनेरिति कथमित्यत आह—**पश्यत इति** । दर्शनसाधनत्वेन मननमिहोक्तं न तु तत्समकालीनतयेत्यर्थः । एतच्च प्राङ्मननादेः स्पष्टदर्शनसाधनत्वानुक्तेः प्रसंगादिहोक्तम् । ननु स्थितधीः किं प्रभाषेतेत्याद्यु ( देरु ) त्तरमयं श्लोक इति प्रागुक्तं तत्कथमिदानीं लक्षणपरतया व्याख्यातः । अन्यपरादपि तल्लाभ इत्याशयेनेतिब्रूमः । अन्यथा प्रभाषेत इत्यादेरुत्तरमाहेत्यत्रैवावेक्ष्यत् । किं तत्र स्थानप्रदर्शनादिनेति ॥६९॥

**रा० भा०**—एवं नियतेन्द्रियस्य प्रसन्नमनसः सिद्धिमाह—या आत्मविषया बुद्धिः सर्वभूतानां निशा निशेवाप्रकाशिका । तस्यामात्मविषयायां बुद्धाविन्द्रियसंयमी प्रसन्नमना जागर्ति । आत्मानमवलोकयन्नास्त इत्यर्थः । यस्यां शब्दादिविषयायां बुद्धौ सर्वाणि भूतानि जाग्रति प्रबुद्धानि भवन्ति सा शब्दादिविषया बुद्धिरात्मानं पश्यतो मुनेर्निशेवाप्रकाशिका भवति ॥ ६९ ॥

**अ० टी०**—नन्वेतादृशेन्द्रियनिग्रहकृत् किंलक्षण इत्यपेक्षायामाह—**या निशेति**। सर्वभूतानां या निशा रात्रौ निद्रायामिव विषयसुखेषु सर्वेषां या निशा सुखावाप्तिः । नितरां शं सुखं यस्यामिति निशा । तस्यां संयमी इंद्रियनिग्रहकर्त्ता जागर्ति न सुखमवाप्नोतीत्यर्थः।यस्यां निशायां भूतनि जाग्रति न सुखं प्राप्नुवन्ति सा भगवत्सुखं पश्यतो मननशीलस्य निशा सुखाप्तिः।तत्सुखस्य कथनायोग्यत्वान्मुनेरिति विशेषणमुक्तम्॥६९॥

**नी० टी०**—यदा पंचावतिष्ठंत इत्युदाहृतश्रुतेस्तामाहुः परमां गतिमित्येतं चतुर्थं पादं व्याचष्टे—**या निशेति** । सर्वेषां भूतानामज्ञानां या निशेव निशा यस्यां मध्यंदिने उलूका इवानंधा अप्यंधा एव सर्वे प्राणिनो भवंति तस्यां तस्मिन्प्रत्यग्ज्योतिषि संयमी इंद्रियमनोबुद्धीनां निग्रहणशीलो योगी जागर्त्ति इंद्रियादीनां दृक्शक्तिलोपेऽप्यनुपरतदृक्शक्तिरेवास्ते । तथा च श्रुतिः ।"न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्"इति । यस्यामविद्याख्यायां निशायां क्रियाकारकादिद्वैतस्वप्नप्रवर्तिकायां सर्वाणि भूतानि जाग्रति निशीथे उलूका इव स्वस्वव्यापारे प्रवर्त्तंते सा अविद्या पश्यतो मुनेः आत्मदर्शनवतो योगिनः प्रारब्धकर्मणा विदेहकैवल्यप्रतिबंधात् लेशतोऽनुवर्त्तमाना व्युत्थानकाले व्यवहरतोऽस्य गाढांधकारवती निशेव क्लेशकरी भवति अतिसुकुमारा हि योगिनो बाह्यव्यवहारादुद्विजंते नरा इव गाढांधकारे संचारात् । यथोक्तं योगभाष्ये । अक्षिमात्रकल्पो हि विद्वानत्यल्पदुःखलेशेनाप्युद्विजत इति । अत्र वार्तिकानि। 'कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते ॥ शुद्धे वस्तुनि सिद्धे च कारकव्यापृतिस्तथा ॥ काकोलूकनिशेवायं संसारोऽज्ञात्मवेदिनोः ॥ या निशा सर्वभूतानामित्यवोचत्स्वयं हरिः' इति । 'बुद्धतत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् ॥ बुद्धतत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवत्' इति तदेवं किमासीतेत्यस्योत्तरं यदा संहरते चायमित्यादिना एतदंतेन ग्रंथेन स्थितप्रज्ञः सदा समाधिमनुतिष्ठन् परमां गतिं प्राप्यास्त इत्युक्तम् ॥ ६९ ॥

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ॥**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी॥७०॥**

**शां० भा०**—विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिर्न त्वसंन्यासिनः कामकामिन इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन्नाह—आपूर्येति । आपूर्यमाणमद्भिरचलप्रतिष्ठमचलतया प्रतिष्ठाऽवस्थितिर्यस्य तमचलप्रतिष्ठं समुद्रमापः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्तद्वत्कामा विषयसंनिधावपि सर्वत इच्छाविशेषा यं पुरुषं समुद्रमिवाऽऽपोऽविकुर्वन्तः प्रविशन्ति सर्वे

आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति स शान्तिं मोक्षमाप्नोति नेतरः कामकामी काम्यन्त इति कामा विषयास्तान्कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः ॥ ७० ॥

**शां० आ०**—नन्वसंन्यासिनाऽपि विद्यावतां विद्याफलस्य मोक्षस्य लब्धुं शक्यत्वात्किमिति विदुषः संन्यासो नियम्यते तत्राऽऽह—**विदुष इति**। आपातज्ञानवतो विवेकवैराग्यादिविशिष्टस्यैषणाभ्यः सर्वाभ्यो व्युत्थितस्य श्रवणादिद्वारा समुत्पन्नसाक्षात्कारवतो मुख्यस्य संन्यासिनो मोक्षो नान्यस्य विषयतृष्णापरिभूतस्येत्येतद्दृष्टान्तेन प्रतिपादयितुमिच्छन्रागद्वेषवियुक्तैस्त्वितिश्लोकोक्तमेवार्थं पुनराहेति योजना। अद्भिः समुद्रस्य समन्तात्पूर्यमाणत्वे वृद्धिह्रासवती तदीया स्थितिरापतेदित्याशङ्क्याऽऽह—**अचलेति**। न हि समुद्रस्योदकात्मकं प्रतिनियतं रूपं कदाचिदपि वर्धते ह्रसते वा तेन तदीया स्थितिरेकरूपैवेत्यर्थः। तत्तन्नादेयाश्चेदापः समुद्रान्तर्गच्छन्ति तर्हि तस्य विक्रियावत्त्वादप्रतिष्ठा स्यादित्याशङ्क्याऽऽह—**स्वात्मस्थमिति**। इच्छाविशेषा विषयाणामसंनिधौ विदुषि निर्विकारेऽप्रविशन्तोऽपि संनिधाने तस्मिन्प्रविशन्तो विकारमापादयेयुरित्याशङ्क्याऽऽह—**विषयेति**। प्रवेशं विशदयति—**सर्व इति**। "योऽकाम" इत्यादिश्रुतेर्विषयविमुखस्य निष्कामस्य मोक्षो न कामकामुकस्येत्याह—**स शान्तिमिति** ॥ ७० ॥

**आ० भा०**—तेन विषयानुभवप्रकारमाह—आपूर्यमाणमिति। यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति। नोत्सेकं प्राप्नोति। नच प्रयत्नं करोति। नचाभावे शुष्यति। न हि समुद्रः सरित्प्रवेशाप्रवेशनिमित्तौ वृद्धिशोषौ बहुतरौ प्राप्नोति प्रयत्नं वा करोति स मुक्तिं प्राप्नोतीत्यर्थः ॥ ७० ॥

**आ० ज०**—पृष्टस्य समस्तस्योत्तरमुक्तं तत्किमापूर्यमाणमित्यनेनेत्यतआह—**तेनेति**। क्रियमाणेत्युपस्कर्तव्यम्। नित्यसापेक्षत्वादसामर्थ्याभावः। बाह्यानुसंधानरहितस्य युज्येतापि कथंचिद्गमनादिकं विषयानुभवस्तु दृश्यमानः कथं स्यात्। तस्य नियतसाधनसाध्यस्यानुसंधानेन विनाऽनुदयादित्याशंकापरिहारार्थमिति शेषः। तद्वत्कामा यं प्रविशंतीति संक्षेपेणोक्तं तद्विवृणोति—**य इति**। कामशब्दस्यार्थो विषयैरिति। अन्यथा विहाय कामानित्युक्तविरोधात्। अचलप्रतिष्ठत्वस्यैव व्याख्यानं नोत्सेकामित्यादि। कुत एषोऽर्थ इत्यतः समुद्रदृष्टांतोपादानसामर्थ्यादिति भावेनाह—**नहीति**। स शांतिमाप्नोति इत्यस्यार्थमाह—**स इति**। ज्ञानिप्रशंसार्थमेतत्। एतत्दृष्ट्वा केचिज्ज्ञानिन एव मुक्तिरित्यनेनाहेत्याहुः। तदसद्गतार्थत्वात् ॥ ७० ॥

**रा० भा०**—यथात्मनैवापूर्यमाणमेकरूपं समुद्रं नादेया आपः प्रविशन्ति आसामपां प्रवेशेऽप्यप्रवेशे वा समुद्रो न कश्चनविशेषमापद्यते। एवं सर्वे कामाः शब्दादिविषया यं संयमिनं प्रविशन्ति इन्द्रियगोचरतां यान्ति स शान्तिमाप्नोति। शब्दादिष्विन्द्रियगोचरतामापन्नेष्वनापन्नेषु च स्वात्मावलोकनतृप्त्यैव यो न विकारमाप्नोति स एव शान्तिमाप्नोतीत्यर्थः। न कामकामी यः शब्दादिभिर्विक्रियते स कदाचिदपि शान्तिमाप्नोति ॥ ७० ॥

**अ० टी०**—ननु लौकिकविषयाणां दर्शनाद्यभावात्कथं प्राप्तिरित्यत आह—**आपूर्यमाणमिति**। नानानदीभिः आपूर्यमाणमपि अचलप्रतिष्ठं वर्द्धनादिविकाररहितं समुद्रं यद्वदापः प्रविशन्ति तद्वदनेकस्त्रीभिः कामरसे प्रवर्त्यमानं यं भगवत्कामाः सर्वे स्वमनोरथाः स्वार्थं प्रविशन्तीति यो जानाति स शान्तिं कामानां शांतिं परमसुखमाप्नोति। अत एव श्रीभागवते 'मनोरथान्तं श्रुतयो यथा ययुः' इत्युक्तं। न कामकामी यस्तु लौकिककामभोगशीलः स न प्राप्नोतीत्यर्थः। यद्वा। यं सर्वे कामाः पूर्वोक्तप्रकारेण प्रविशन्ति तं। योऽदृष्ट्वापि कामयते तदर्थं वा स शांतिं परमानंदमाप्नोति नतु स्वार्थं कामाभिलाषीति भावः ॥ ७० ॥

**नी० टी०**—ननु प्रजहाति यदा कामान् इंद्रियाणींद्रियार्थेभ्यो निगृहीतानीत्यादिनाऽसकृद्विषयाणां प्रहाणं तेभ्यश्च इंद्रियादीनां प्रत्याहरणमुक्तं तेन तेषामात्मनः पृथक्सत्त्वमस्तीति सिद्धं। न च नेह नानास्ति किंचनेत्यादिश्रुत्या तेषां बाधान्न तदस्तीति वाच्यं इहेति प्रतीच्येव तन्निषेधात्। न हि इह भूतले घटो नास्तीत्युक्ते घटस्य स्वरूपं निषिध्यते किंतु तस्य भूतलसंबंधमात्रं तस्मात्कामानां पृथक्सत्त्वमस्त्यतो नाद्वै-

तसिद्धिरित्याशंक्य सदृष्टांतं परिहरति—आपूर्यमाणमिति । प्रविशंतीभिरद्भिरापूर्यमाणमप्यचलप्रतिष्ठमनुद्रिक्तं वृद्धिहीनत्वात् । एवं निर्गच्छंतीभिरद्भी रिच्यमानमप्यचलप्रतिष्ठमरिक्तं ह्रासहीनत्वादित्यपि बोध्यं । एवंविधं समुद्रं यद्वत् आत्मप्रभवा आपः प्रविशंति तद्वत् यं पुरुषं कामैरापूर्यमाणं हीयमानं वा अचलप्रतिष्ठं निर्विकारं वृद्धिह्रासहीनत्वात् आत्मप्रभवाः सर्वे कामाः प्रविशंति स एव शांतिं मोक्षमात्यंतिकं दुःखोपरमं प्राप्नोति न तु कामकामी विषयार्थी । अयंभावः । कूटस्थादात्मनः सर्वस्योत्पत्तिस्तत्रैव च लय इति सर्वश्रुतिस्मृतिप्रसिद्धं तेन कामानां प्रहाणं तेभ्यश्चेंद्रियाणां प्रत्याहरणं स्मर्यमाणं न तेषां परमार्थतः पृथक्सत्त्वं साधयति बहुप्रमाणविरोधात् । किं तु पामरप्रसिद्धं पृथक्सत्त्वमभिप्रेत्य प्रहाणादिकमुक्तं प्रविलापनं त्वेवमेव व्याख्येयं । यथा "अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्" इत्यादौ निर्वपतिना याग उच्यते न तु श्रौतार्थमात्रं तद्वदिहापि ज्ञेयं । नेह नानास्तीत्यपीह परिदृश्यमाने प्रपंचे आत्मातिरिक्तं नाना किमपि नास्तीत्येवं परतया व्याख्येयं । तथाच । आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वं खल्विदं ब्रह्मेत्यादयः श्रुतिवादाः संगच्छंते आत्मनि कल्पितस्यास्य तत्रैव निषेधेनान्यत्र सत्त्वानुपपत्तेर्न कामानां पृथक्सत्त्वमस्तीति युक्त एव समुद्रदृष्टांतः । यत्तु समुद्रात्पृथग्गंगायाः सत्त्वमस्तीति तन्न कार्ये कारणसत्तातिरिक्तसत्ताया अभावात् वाचारंभणं विकारो नामधेयमिति कार्यस्य वागालंबनमात्रत्वश्रवणादित्यन्यत्र विस्तरः ॥ ७० ॥

**विहाय कामान्यः सर्वान्पुमांश्चरति निस्पृहः ॥**
**निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥**

**शां० भा०—यस्मादेवं तस्मात्—विहायेति । विहाय परित्यज्य कामान्यः संन्यासी पुमान्सर्वानशेषतः कार्त्स्न्येन चरति जीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थः । निस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य स निस्पृहः सन्निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदमित्यभिनिवेशवर्जितः, निरहंकारो विद्यावत्त्वादिनिमित्तात्मसंभावनारहित इत्यर्थः । स एवंभूतः स्थितप्रज्ञो ब्रह्मविच्छान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्यामधिगच्छति प्राप्नोति ब्रह्मभूतो भवतीत्यर्थः ॥ ७१ ॥**

**शां० आ०**—यदि गृहस्थेनापि मनसा समस्ताभिमानं हित्वा कूटस्थं ब्रह्माऽऽत्मानं परिभावयता ब्रह्मनिर्वाणमाप्यते प्राप्तं तर्हि मौण्ड्यादिविडम्बनमेवेत्याशङ्क्याऽऽह—**यस्मादिति** । शब्दादिविषयप्रवणस्य तत्तदिच्छाभेदभागिनो न मुक्तिरिति व्यतिरेकस्य सिद्धत्वात्पूर्वोक्तमन्वयं निगमयितुमनन्तरवाक्यमित्यर्थः । अशेषविषयत्यागे जीवनमपि कथमित्याशङ्क्याऽऽह—**जीवनेति** । संभवद्रागद्वेषादिके देशे निवासव्यावृत्त्यर्थं चरतीत्येतद्व्याचष्टे—**पर्यटतीति** । विहाय कामानित्यनेन पुनरुक्तिं परिहरति—**शरीरेति** । निस्पृहत्वमुक्त्वा निर्ममत्वं पुनर्वदन्कथं पुनरुक्तिमार्थिकीं न पश्यतीत्याशङ्क्याऽऽह—**शरीरजीवनेति** । सत्यहंकारे ममकारस्याऽऽवश्यकत्वान्निरहंकारत्वं व्याकरोति—**विद्यावत्त्वादीति** । स शान्तिमाप्नोतीत्युक्तमुपसंहरति—**स एवंभूत इति** । संन्यासिनो मोक्षमपेक्षमाणस्य सर्वकामपरित्यागादीनि श्लोकोक्तानि विशेषणानि यत्नसाध्यानि तत्संपत्तिफलं तु कैवल्यमित्यर्थः ॥ ७१ ॥

**आ० भा०—एतदेव प्रपंचयति—विहायेति । कामान् विषयान् निस्पृहतया विहाय यश्चरति भक्षयति भक्षयामीत्यहंकारममकारवर्जितश्च स हि पुमान् । स एव च मुक्तिमधिगच्छतीत्यर्थः ॥ ७१ ॥**

**आ० ज०**—विहायेत्यनेनाप्ययमेवार्थ उच्यतेऽतः पुनरुक्तिरित्यत आह—**एतदेवेति** । यद्यत्र कामा इच्छाविशेषास्तर्हि निस्पृह इति पुनरुक्तिः । यदि काम्यंत इति विषयास्तदा चरतिर्यदि भक्षणार्थस्तदा व्याघातः । अथ गत्यर्थस्तदा व्यर्थ इत्यतो व्याचष्टे—**कामानिति** । निर्ममो निरहंकार इत्येतदसंभवपरिहाराय व्याचष्टे—**भक्षयामीति** । कर्तृत्वाभिमान एवाहंकारः स्वामित्वाभिमान एव ममता नत्वहंप्रत्ययादिमात्रमिति भावः । स हि पुमान् अन्यः पशुरित्यर्थः । कुत इत्यत आह—**स एवेति** । स पुमानित्यनेनैवान्वयसमाप्तिं वदता ज्ञानिन एवमुक्तिरित्येषोऽर्थो नात्र प्रतिपाद्यतइति दर्शितम् ॥ जीव्यावृत्त्यभावश्च ॥ ७१ ॥

**शां० भा०—**काम्यन्त इति कामाः । शब्दादयो विषयाः यः पुमान् शब्दादीन् सर्वान् विषयान् विहाय तत्र निःस्पृहः ममतारहितश्च अनात्मनि देहे आत्माभिमानरहितश्चरति स आत्मानं दृष्ट्वा शान्तिमधिगच्छति ॥ ७१ ॥

**अ० टी०—**यतो लौकिककामाभिलाषी न शान्तिं प्राप्नोत्यतस्तां त्यजेदित्याह—**विहायेति** । यो दुर्लभः पुमान् भगवद्भावनैकयोग्यः सर्वान् कामान् विहाय निःस्पृहः भगवदेकपरश्चरति । सर्वत्र वैकल्येन परिभ्रमति निर्ममो देहादिषु निरहंकारो भवति स शान्तिमधिगच्छति प्राप्नोति ॥ ७१ ॥

**नी० टी०—**प्रासंगिकीमाशंकां परिहृत्य व्रजेत किमित्यस्य प्रश्नस्योत्तरमाह—**विहायेति** । पूर्वोक्तान् त्रिविधान् कामान् विहाय यश्चरति विषयान्भुंक्ते निस्पृहश्च यतो निर्ममः ममतावान् हि इदं मम भूयादित्यन्यधनाद्यर्थं स्पृहां करोति निर्ममोऽपि कुतः यतो निरहंकारः न ह्यहंकारशून्यस्य सुहृयादौ ममता दृष्टा तस्मादहंकारप्रविलयात् शांतिं मोक्षं प्राप्नोति । अत्र यः सर्वत्रानभिस्नेह इति सर्वत्र यच्छब्ददर्शनात् साधनविधिपर एवायं ग्रंथः अन्यथा स्थितप्रज्ञस्य प्रकृततत्वात्तदनुवादार्थो यच्छब्दोऽनर्थकः प्राप्नोति लोकेऽपि हि परस्वभावकथने स एवं करोतीति तच्छब्द एव प्रयुज्यते न तु यच्छब्दः । विधौ तु य एवं करोति स इदं प्राप्नोतीति द्वयोरपि प्रयोगो दृश्यते लक्षणकथनार्थत्वेऽपि तत्र तात्पर्याभावाद्विधावेव पर्यवस्यतीति दिक् ७१

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ॥**
**स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

**शां० भा०—**सैषा ज्ञाननिष्ठा स्तूयते—एषा ब्राह्मीति । एषा यथोक्ता ब्राह्मी ब्रह्मणि भवेयं स्थितिः सर्वं कर्म संन्यस्य ब्रह्मरूपेणैवावस्थानमित्येतत् । हे पार्थ ! नैनां स्थितिं प्राप्य लब्ध्वा न विमुह्यति न मोहं प्राप्नोति । स्थित्वाऽस्यां स्थितौ ब्राह्मयां यथोक्तायामन्तकालेऽप्यन्ते वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षमृच्छति गच्छति किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणमृच्छतीति ॥ ७२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये द्वितीयोऽध्यायः ॥ २ ॥

**शां० आ०—**तत्र तत्र संक्षेपविस्तराभ्यां प्रदर्शितां ज्ञाननिष्ठामधिकारिप्रवृत्त्यर्थत्वेन स्तोतुमुत्तरश्लोकमवतारयति—**सैषेति** । गृहस्थः संन्यासीत्युभावपि चेन्मुक्तिभागिनौ किं तर्हि कष्टेन सर्वथैव संन्यासेनेत्याशङ्क्य संन्यासिव्यतिरिक्तानामन्तरायसंभवादपेक्षितः संन्यासो मुमुक्षोरित्याह—**एषेति** । स्थितिमेव व्याचष्टे—**सर्वमिति** । न विमुह्यतीति पुनर्नञोऽनुकर्षणमन्वयार्थम् । संन्यासिनो विमोहाभावेऽपि गृहस्थो धनहान्यादिनिमित्तं प्रायेण विमुह्यति विचित्तः सन्परमार्थविवेकरहितो भवतीत्यर्थः । यथोक्ता ब्राह्मी स्थितिः सर्वकर्मसंन्यासपूर्विका ब्रह्मनिष्ठा, तस्यां स्थित्वा तामिमामायुषश्चतुर्थेऽपि भागे कृत्वेत्यर्थः । अपिशब्दसूचितं कैमुतिकन्यायमाह—**किमु वक्तव्यमिति** । तदेवं तत्त्वंपदार्थौ तदैक्यं वाक्यार्थस्तज्ज्ञानादेकाकिनो मुक्तिस्तदुपायश्चेत्येतेषामैकत्र श्लोके प्राधान्येन प्रदर्शितमिति निष्ठाद्वयमुपायोपेयभूतमध्यायेन सिद्धम् ॥ ७२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने द्वितीयोऽध्यायः ॥ २ ॥

आ० भा०—उपसंहरति—एषेति । ब्राह्मी स्थितिः ब्रह्मविषया स्थितिः । लक्षणम् । अंतकालेऽप्यस्यां स्थित्वैव ब्रह्म गच्छति अन्यथा जन्मान्तरं प्राप्नोति । यं यं वापीतिवक्ष्यमाणत्वात् । ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरांतरं युक्तम् भोगेन त्वितरइतिह्युक्तम् । संति हि बहुशरीरफलानि कर्माणि कानिचित् । 'सप्तजन्मनि विप्रः स्यात्' इत्यादेः । दृष्टेश्च ज्ञानिनामपि बहुशरीरप्राप्तेः । तथा ह्युक्तम् । 'स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रुद्रपदं गतः । सांकर्षणं ततो मुक्तिमगाद्विष्णुप्रसादतः' इति गारुडे । 'महादेव परे जन्मनि तव मुक्तिर्निरूप्यते' इति नारदीये । निश्चितफलं च ज्ञानं तस्य तावदेव चिरम् ॥ "यदुचनार्चिषमेवाभिसंभवति" इत्यादिश्रुतिभ्यः । न च कायव्यूहापेक्षा । तद्यथैषीकातूलम् । तद्यथा पुष्करपलाशे । ज्ञानाग्निः सर्वकर्माणि इत्यादिवचनेभ्यः । प्रारब्धे त्वविरोधः। प्रमाणाभावाच्च । न च तच्छास्त्रं प्रमाणम् । 'अक्षपादकणादानां सांख्ययोगजटाभृताम् । मतमालंब्य ये वेदं दूषयंत्यल्पचेतसः' इति निंदावचनात् । यत्र तु स्तुतिस्तत्र शिवभक्तानां स्तुतिपरत्वमेव न सत्यत्वम् । न हि तेषामपीतरग्रंथविरुद्धार्थे प्रामाण्यम् तथाह्युक्तम् । 'एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु' इति वाराहे । 'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः । चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः ॥दधीचाद्याः पुराणानि तच्छास्त्रसमयेन तु । चक्रुर्वेदैश्च ब्राह्माणि वैष्णवा विष्णुचोदिताः ॥ पंचरात्रं भारतं च मूलरामायणं तथा । तथा पुराणं भागवतं विष्णुर्वेद इतीरितः । अतः शैवपुराणानि योज्यान्यन्याविरोधतः' इति नारदीये ॥ अतो ज्ञानिनां भवत्येव मुक्तिः । भीष्मादीनां तु तत्क्षणे मुक्त्यभावः । स्मरंस्त्यजतीति वर्तमानव्यपदेशो हि कृतः । तच्चोक्तम् । 'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा । विष्णुमाया तदा तेषां मनो बाह्यं करोति हि' इति गारुडे ॥ न चान्येषां तदा स्मृतिर्भवति ॥ 'बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिम् । भजंति तत्स्मृतिं त्वंते देवो याति न चान्यथा' इति ब्रह्मवैवर्ते । निर्वाणमशरीरम् । 'कायो बाणं शरीरं च' इत्यभिधानात् । एतद्बाणमवष्टभ्येति प्रयोगाच्च । निर्वाणशब्दप्रतिपादनमनिंद्रियाइत्यादिवत् । कथमन्यथा सर्वपुराणादिप्रसिद्धाऽकृतिर्भगवत उपपद्यते । न चान्यद्भगवत उत्तमं ब्रह्म । 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति भागवते । 'भगवंतं परं ब्रह्म । परं ब्रह्मन्जनार्दन । परमं यो महद्ब्रह्म । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । योसावतींद्रियग्राह्यः । नास्ति नारायणसमं न भूतं न भविष्यति । न त्वत्समोस्त्यभ्यधिकः कुतोन्यः' इत्यादिभ्यः । न च तस्य ब्रह्मणोऽशरीरत्वादेतत्कल्प्यम् । तस्यापि शरीरश्रवणात् 'आनंदरूपममृतम् । सुवर्णज्योतिः । दहरोऽस्मिन्नंतर आकाश' इत्यादिषु । यदि रूपं न स्यात् । आनंदमित्येव स्यात् । नत्वानंदरूपमिति । कथं सुवर्णरूपत्वं स्यादरूपस्य । कथं दहरत्वम् । दहरस्थश्च केचित्स्वदेहेत्यादौ रूपवानुच्यते । "सहस्रशीर्षा पुरुषः । रुक्मवर्णं कर्तारं । आदित्यवर्णं तमसः परस्तात् । सर्वतः पाणिपादं तत् । विश्वतश्चक्षुरुत विश्वतोमुख" इत्यादिवचनात् । विश्वरूपाध्यायादेश्च रूपवानवसीयते । अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानंदयशश्रीशक्त्यादिमांश्च भगवान् । "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । यः सर्वज्ञः । आनंदं ब्रह्मणः । एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति । अनादिमध्यांतमनंवीर्यसहस्रलक्षामितकांतिकांतम् । मय्यनंतगुणेऽनंते गुणतोऽनंतविग्रहे । विज्ञानशक्तिरहमासमनंतशक्तेः । तुर्यं तत्सर्वदृक् सदा । आत्मानमन्यं च स वेद विद्वान् । अन्यत्तमो मुकुंदात्को नाम

लोके भगवत्पदार्थः। ऐश्वर्यस्य समग्रस्य। अतीव परिपूर्णं ते सुखं ज्ञानं च सौभगम्। यच्चात्ययुक्तं स्वर्तुं वाशक्तः कर्तुमतः परः" इत्यादिभ्यः॥ "तानि सर्वाण्यन्योन्यानन्यरूपाणि। विज्ञानमानंदं ब्रह्म। आनंदो ब्रह्मेति व्यजानात्। सत्यं ज्ञानमनंतं ब्रह्म। यस्य ज्ञानमयं तपः। समा भग प्रविश स्वाहा। न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसंभवा। नयोगित्वादीश्वरत्वात्सत्यरूपोच्युतो विभुः॥ सदेहः सुखगंधश्च ज्ञानभाः सत्पराक्रमः। ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः" इति पैंगिले। 'देहोऽयं मे सदानंदो नायं प्रकृतिनिर्मितः। परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम्॥' इत्यादि ब्रह्मवैवर्ते। तदेव लीलया चासौ परिच्छिन्नादिरूपेण दर्शयति मायया। 'न च गर्भेवसद्देव्या न चापि वसुदेवतः। न चापि राघवाज्जातो न चापि जमदग्नितः॥ नित्यानंदोऽव्ययोप्येवं क्रीडतेऽमोघदर्शनः' इति च पाद्मे। 'न वै स आत्माऽऽत्मवतामधीश्वरो भुङ्क्ते हि दुःखं भगवान्वासुदेवः। स्वर्गादेरीशिताऽजः परमसुखनिधिर्बोधरूपोऽथ बोधं लोकानां दर्शयन्यो मुनिसुतहृतात्मप्रियार्थे जगाम। स ब्रह्मवंद्यचरणो जनमोहनाय स्त्रीसंगिनामिति रतिं प्रथयंश्चचार। पूर्तेरचिंत्यवीर्यो यो यश्च दाशरथिः स्वयं। रुद्रवाक्यमृतं कर्तुमजितो जितवत्स्थितः॥ योऽजितो विजितो भक्त्या गांगेयं न जघान ह। न चांबां ग्राहयामास करुणः कोऽपरस्ततः' इत्यादिभ्यश्च स्कांदे। न तत्र संसारधर्मा निरूप्याः यत्र च परावरभेदोऽवगम्यते। तत्राज्ञबुद्धिमपेक्ष्यावरत्वं विश्वरूपमपेक्ष्य अन्यत्र॥ तच्चोक्तम् 'परिपूर्णानि रूपाणि समान्यखिलरूपतः। तथाऽप्यपेक्ष्य मंदानां दृष्टिं त्वामृषयोऽपि हि॥ परावरं वदंत्येव ह्यभक्तानां विमोहनम्' इति गारुडे। न चात्र किंचिदुपचारादिति वाच्यम् अचिंत्यशक्तेः। पदार्थवैचित्र्याच्चेत्युक्तम्। 'रामकृष्णादिरूपाणि परिपूर्णानि सर्वदा। न चाणुमात्रं भिन्नानि तथाऽप्यस्मान्विमोहसि' इत्यादेश्च नारदीये। तस्मात्सर्वदा सर्वरूपेष्वपरिगणितानंतगुणगणं नित्यानिरस्ताशेषदोषं च नारायणाख्यं परं ब्रह्मापरोक्षज्ञान्यृच्छतीति च सिद्धम्॥ ७२॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये द्वितीयोऽध्यायः समाप्तः॥ २॥

आ० ज०—ज्ञानी स्तूयते एषेत्यनेनेत्यसत्। प्रथमवाक्ये तददर्शनादिति भावेनाह—**उपसंहरतीति**। प्रकरणं समापयतीत्यर्थः। ब्रह्मधर्मभूतेति प्रतीतिनिरासायाह—**ब्राह्मीति**। स्थितिर्नोक्ता कथमेवमुच्यत इत्यत आह—**लक्षणमिति**। ब्रह्मविषयज्ञानवतो लक्षणमुक्तमित्यर्थः। किं प्रभाषेतेत्यादिप्रश्नपरिहारस्यार्थादुक्तत्वादनुपसंहारः। अंतकाले चरमे वयस्यपि यः परिव्रज्यास्यां स्थितौ तिष्ठति सोऽपि ब्रह्माप्नोतीति किमु ब्रह्मचर्यादेव प्रव्रज्येतिव्याख्यानमसत्। अप्रकृतत्वादित्याशयवान्व्याचष्टे—**अंतकालेऽपीति**। ज्ञानिनो ब्रह्मप्राप्तिरुक्ता सा किं तद्देहपातानंतरमेवोतान्यथेत्यपेक्षायामिदमुच्यते। कुतोऽस्यार्थस्य भगवदभिप्रेतत्वमित्यत आह—**यं यमिति**। ननु ज्ञानमेव मोक्षसाधनम्। कारणपौष्कल्ये च कार्यं भवत्येव अतःकथं ज्ञानिनः शरीरांतरप्राप्तिरित्यत आह—**ज्ञानिनामिति**। प्रारब्धकर्म सामग्र्याः प्रतिबंधकं तदेवांतकाले ब्रह्मानुसंधानं प्रतिबध्नातीति भावः। ननु ज्ञानादेव सर्वं कर्म क्षीणमित्यत आह—**भोगेनेति**। अस्तु प्रारब्धकर्मणो भोगेनैव क्षयः। स च ज्ञानं यच्छरीरे जातं तत्रैवाभूत्। अतः कथं शरीरांतरारंभ इत्यत आह—**संति हीति**। तानि कथमेकेनैव शरीरेण भुज्येरन्निति शेषः। सप्तजन्मनीति द्विगुः। इतश्चैवमित्याह—**दृष्टेश्चेति**। बह्वित्यनेकोपलक्षणम्। कथं ज्ञानिनां बहुशरीरप्राप्तिर्दृश्यत इत्यत आह—**तथाहीति**। ननु ज्ञानिनोऽपि यदि शरीरांतरप्राप्तिस्तर्हि गर्भवासादिभिर्दुःखैर्लुप्तशक्तिकं ज्ञानं न मोक्षाय पर्याप्तं स्यादित्यत आह—**निश्चितेति**। तस्य ज्ञानिनस्तावदेव चिरं तावानेव विलंबो यावन्न विमोक्ष्ये विमोक्ष्यते प्रारब्धकर्मणा। अवसिते कर्माणि ब्रह्म संपत्स्यत इत्यर्थः। अवसितकर्मणि ज्ञानिनि विषये यदि पुत्रादयः शव्यं कर्म कुर्वंति यदु च न यदि वा न कुर्वंति। सर्वथाऽर्चिषमभिसंभवति प्राप्नोत्येवेत्यर्थः। तदिदमुक्तं नैनां प्राप्य विमुह्यतीति। पाशुपतवैशेषिकादयस्त्वाहुः। अनियतकालविपाकान्यपि कर्माणि ज्ञानी योगसामर्थ्यात्समाहृत्यानेकशरीरफलान्यपि कायव्यूहनिर्माणेन क्षपयित्वा प्रव्रज्यते तत्कुतोऽस्य देहांतरमिति तत्राह—**न चेति**। ज्ञानिनः कर्मक्षयार्थमिति शेषः। तथा हि। अप्रारब्धकर्मक्षयार्थं वा सा स्यात् प्रारब्धकर्मक्षयार्थं वा। नाद्यः। तेषां ज्ञानेनैव क्षीणत्वात् इति भावेनाह—**तद्यथेति**। द्वितीये तु यः कश्चिज्ज्ञानी तथा करोति

सर्वो वा । आद्ये संप्रतिपत्तिमुत्तरमाह—**प्रारब्धे त्विति**। द्वितीयासंभवे हेतुमाह—**प्रमाणेति**। चशब्दात्प्रागुदाहृतप्रमाणविरोधाच्च । पाशुपतादिशास्त्रेषु तथोक्तत्वात्कथं प्रमाणाभाव इत्यत आह—**न चेति**। तच्छिष्या अपि तच्छब्देनोच्यंते इति बहुवचनम्। ‘ उमापतिः पशुपतिः श्रीकंठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ’ इत्यादौ तत्स्तुतिरपि दृश्यते इत्यत आह—**यत्रेति**। वैष्णवशास्त्रोक्तप्रकारेण शिवभक्तानां लक्षणयेति शेषः । सत्यत्वं । तदुक्तार्थस्येति शेषः उक्तनिंदाविरोधादिति भावः । तर्हि शैवपुराणानि कायव्यूहनिर्माणनियमादौ प्रमाणानीत्यत आह—**न हीति**। तेषामितिबुद्धिस्थशैवपुराणपरामर्शः इतरग्रंथा उदाहृतगारुडादयः । शैवपुराणानां गारुडादिवैष्णवग्रंथानां च को विशेषो येन बाध्यबाधकभावइत्याशंक्य दुर्जनव्यामोहार्थं प्रणितपाशुपतादिशास्त्राणां व्यामोहनार्थत्वे तावत्प्रमाणमाह—**तथाहीति**। कारयेति स्वार्थे णिच् । अतथ्यानि । सर्वथाप्यविद्यमानानि वितथ्यानि व्यधिकरणानि च तेषु दर्शयस्व प्रकाशं प्रसिद्धम् । इदानीं तन्मूलत्वं शैवपुराणानां इतरेषां पंचरात्रादिमूलत्वमित्यत्र प्रमाणमाह—**कुत्सितानीति**। तच्छास्त्रसमयेन । तच्छास्त्रसिद्धांतमनुसृत्य वेदैरिति वेदानामापाततः प्रतीतिमनुसृत्य भागवतं भगवद्विषयम् उक्तमुपसंहरति—**अत इति**। ज्ञानिनां मुक्तिर्भवतीत्येव न तु तद्देहपातानंतरमिति नियम इत्युपसंहारार्थः । ननु भीष्मादयो ज्ञानिनोंतकालेऽस्यां ब्राह्मयां स्थितौ स्थिताश्च न मुक्ताश्च तत्कथमेतदुक्तमित्यत आह—**भीष्मादीनामिति**। साक्षाद्देहत्यागक्षणे युक्त्या परमेश्वरे मनोयोगेन भाव्यमित्येतत्कुत इत्यत आह—**स्मरन्निति**। ननु तत्क्षणे युक्त्या मुक्तिश्चेदज्ञानिनामपि तत्संभवेन मुक्तिरित्यत आह—**न चेति**। भक्तिज्ञानेति द्वंद्वैकवद्भावः । भक्तिसहितं ज्ञानं भक्तिज्ञानमिति वा । ब्रह्मनिर्वाणं ब्रह्मस्वरूपानंदमिति व्याख्यानं सर्वप्रमाणविरुद्धमित्याशयवान्निर्वाणमिति भिन्नं पदं व्याचष्टे—**निर्वाणमिति**। कथमेतदित्यत आह—**काय इति**। कार्यब्रह्मव्यावृत्त्यर्थमेतत् । अनेन ब्रह्मणो निराकारत्वं प्राप्तं तत्प्रतिषेधार्थमाह—**निर्वाणेति**। प्रतिपादनं व्याख्यानं इत्यादिवत् इत्यादेरिव प्राकृतादिविग्रहराहित्यार्थत्वेनेत्यर्थः । किमनेन व्याख्यानेन निराकारमेव ब्रह्म किं न भवेदित्यत आह—**कथमिति**। भगवतो विष्णोः साकारत्वेऽपि ब्रह्मणो निराकारत्वमेव न च भगवानेव ब्रह्म तस्य तदुत्तमत्वेन ततोऽन्यत्वात् । अतो न पुराणादिविरोध इत्यत आह—**न चेति**। महत्ब्रह्मेत्येतानि वाक्यानि भगवतो ब्रह्मत्वप्रतिपादकानि । यस्मादित्यादीनि तस्यैव सर्वोत्तमत्वेन तदुत्तमाभावप्रतिपादकानि । इंद्रियग्राह्यमतिक्रांतस्तदुत्तमः । सर्वमेव योगींद्रियग्राह्यम् । उत्तमाधमभावेन ब्रह्मेश्वरयोर्भेदो माभूत् । ब्रह्मशरीरं ईश्वरस्तु सविग्रह इत्यतो भेदोस्तु अभेदस्यापि सत्वाद्ब्रह्मशब्दोपपत्तिरित्यत आह—**न चेति**। तस्य पराभिमतस्य एतद्भगवतोऽन्यत्वम् । कुत इत्यत आह—**तस्यापीति**। दहरोऽस्मिन्नंतराकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यमित्यंतं वाक्यं इह विवक्षितम् । इत्यादिषु ब्रह्मविद्यात्वेन संमतष्विति शेषः । कथमत्र श्रवणमित्यत आह—**यदीति**। रूपं विग्रहः । विज्ञानमानंदं ब्रह्मेत्यानंदशब्दस्य नपुंसकत्वदर्शनात्तथोपादानम् । ज्योतिःशब्दो भावस्वरूपस्य वाचकः । अत उक्तं सुवर्णरूपत्वमिति । दहरत्वं दहरस्थत्वम् । दहरस्थत्वं कथं अविग्रहस्यानुपपन्नमित्यत आह—**दहरस्थश्चेति**। एवमुपपत्तिसापेक्षाणि वाक्यान्युदाहृत्य स्पष्टान्युदाहरति—**सहस्रशीर्षेति**। अवसीयते परमात्मा । प्राग्भगवतोऽन्यस्योत्तमत्वं वाक्यविरुद्धमित्युक्तम् । इदानीं व्याहतं च तदिति भावेनाह—**अतिपरिपूर्णतमेति**। अत्यादिशब्दैर्निरतिशयत्वं द्योत्यते । ऐश्वर्यं वशित्वम् । श्रीः कांतिः । परमेश्वरे भगवच्छब्दस्यौपचारिकत्वपरिहारायैषां गुणानां सद्भावे प्रमाणान्याह—**परेति**। आनंदं ब्रह्मण इत्यत्र यतो वाच इति पूर्ववाक्यमभिप्रेतम् । अमितशब्दात्परश्चंद्रशब्दोऽध्याहार्यः द्रष्टृपुरुषभेदात्त्रिविधोक्तिः ऐश्वर्याद्यनंतगुणत्वे मयीति प्रमाणम् । संख्यापरिमाणाभ्यां गुणनामानंत्यमनेनोच्यते । शक्तेः परत्वं प्रागुक्तं तदस्पष्टमित्यतो—**विज्ञानेति**। ज्ञानस्यापरोक्षरूपताप्रतिपादनाय—**तुर्यमिति**। ईश्वरो नात्मानं वेत्ति कर्तृकर्मभावविरोधादित्येतन्निरासाय—**आत्मानमिति**। ईश्वरे भगवच्छब्दस्यौपचारिकत्वासंभवं दर्शयितुं तदन्यस्य तच्छब्दार्थतानिरासायान्यतम इति । अन्य एवान्यतमः भगवच्छब्दस्यायमर्थ इत्यत्रैश्वर्येति प्रमाणम् । अत्र षण्णामित्युपलक्षणम् । षाड्गुण्ये सर्वगुणांतर्भावो वा । तद्वान् भगवानिति सिद्धमेव । भगवत्वात्स एव सर्वोत्तम इति । समग्रार्थो वेति—**अतीवेति**। यदन्येन करिष्यामीति स्मर्तुं बुद्धिस्थीकर्तुं वा युक्तं तत्त्वं कर्तुं शक्तः । मतुपा ज्ञानादीनां भगवताभेदः प्रतीतः षण्णामित्यादिना परस्परं च तथाऽकृतिर्भगवत इत्युक्त्या कृतेस्तन्निरासार्थमाह—**तानीति**। तत्र प्रमाणान्याह—**विज्ञानमिति**। तप आलोचनक्रिया । ज्ञानमयं ज्ञानात्मकमिति । धर्माणां परस्परमभेदोक्तिः । प्राकृतेति ङीबभावश्छांदसः अणन्भ्यामन्यो वा प्रत्ययः। मांसमेदोस्थिभिः संभवो यस्याः सा तथोक्ता । एतच्च न योगित्वात्किं त्वीश्वरत्वात् । अत एव विभुः निर्दोषगुणात्मकविग्रहादच्युतः । ज्ञानज्ञान इत्यादेरतिशयितज्ञानादिरित्यर्थः । तेन निर्दोषत्वादिना । भगवद्रूपस्यैवंभावे कथं परिच्छिन्नत्वगर्भवासादिसंसारिधर्माश्च तत्र दृश्यंत इत्यत आह—**तदेवेति**। किमर्थमित्यत उक्तम्—**लीलयेति**। मायया मोहकशक्त्या । अत्र प्रमाणमाह—**न चेति**। देव्या देवक्याः एवं गर्भवासादि प्रदर्शनेन । मोघं दर्शनं यस्मिन्विषये स तथा । आत्मवतां भागवतानां । आत्मा निरुपाधिक प्रिय इति यावत् । मुनिसुतो रावणः ब्रह्मवाक्यवत् रुद्रवाक्यमप्यतुलं प्रत्यस्तीत्यतो रुद्रवाक्यमित्युक्तम् । करुणःकरुणावान् अर्शआदित्वादच् । तदेवेत्याद्युक्तमुपसंहरति—**न तत्रेति**। अत इत्युपस्कर्तव्यम् । यद्येवं तर्हि

विश्वरूपं परं तदपेक्षयाकृष्णादिरूपाण्यपराणीति कथं ग्रंथेपूच्यत इत्यत आह—**यत्र चेति**। यत्र ग्रंथे। तत्र विश्वरूपमपेक्ष्यान्यत्र कृष्णादावपरत्वमज्ञबुद्धिमपेक्ष्योक्तं ज्ञातव्यमित्यर्थः। कुत एतदित्यत आह—**तच्चेति**। अखिलरूपतोऽखिलधर्मैः विमोहनं कर्तुम्। नन्वयमुपचारो वा स्तुतिर्वा किं न स्यादित्यत आह—**न चेति**। असंभवे ह्येषा कल्पना। अचिंत्यशक्त्या चैकस्यैवानेकपरिमाणत्वादिकं संभवति। अन्यत्रादर्शनेनत्वपलापेऽतिप्रसंग इत्यर्थः। अत्रैव प्रमाणमाह—**कृष्णेति**। विमोहसि विमोहयसि। श्लोकार्थ मुपसंहरति—**तस्मादिति** ॥ ७२ ॥

इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां
जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वितीयोऽध्यायः ॥ २ ॥

**रा० भा०—**एषा नित्यात्मज्ञानपूर्विकाऽसङ्गकर्मणि स्थितिः स्थितधीलक्षणा ब्राह्मी ब्रह्मप्रापिका। ईदृशीं कर्मस्थितिं प्राप्य न विमुह्यति न पुनः संसारमाप्नोति। अस्यां स्थित्यामन्तिमेऽपि वयसि स्थित्वा ब्रह्म निर्वाणमृच्छति निर्वाणमयं ब्रह्म गच्छति सुखैकतानमात्मानमाप्नोतीत्यर्थः। एवमात्मयाथात्म्यं युद्धाख्यस्य च कर्मणस्तत्प्राप्तिसाधनतामजानतः शरीरात्मज्ञानेन मोहितस्य तेन च मोहेन युद्धान्निवृत्तस्य तन्मोहशान्तये नित्यात्मविषया सांख्यबुद्धिस्तत्पूर्विका चासङ्गकर्मानुष्ठानरूपकर्मयोगविषया बुद्धिः स्थितप्रज्ञता योगसाधनभूता द्वितीयेऽध्याये प्रोक्ता। तदुक्तं 'नित्यात्मासङ्गकर्मेहागोचरा सांख्ययोगधीः। द्वितीये स्थितधीलक्ष्या प्रोक्ता तन्मोहशान्तये' इति ॥ ७२ ॥

**इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये सांख्ययोगो नाम द्वितीयोऽध्यायः॥२॥**

**अ० टी०—**उपसंहरति—**एषेति**। एषा ब्राह्मी ब्रह्मनिष्ठस्य स्थितिः। एनां प्राप्य न विमुह्यति मोहं न प्राप्नोति। अन्तकाले क्षणमप्यस्यां स्थित्वा ब्रह्मनिर्वाणं पुरुषोत्तममुक्तिं प्राप्नोति। गीतायाश्चोपनिषद्रूपत्वादत्र ब्रह्मपदं पुरुषोत्तमवाचकमेव आजन्मस्थितौ तु किं वक्तव्यमितिभावः ॥ ७२ ॥

इति श्रीमद्भगवद्गीताटीकायां गीतामृततरंगिण्यां द्वितीयोऽध्यायः ॥ २ ॥

**नी० टी०—**प्रतिपादितां कर्मयोगप्राप्यां सांख्ययोगनिष्ठां फलेन स्तुवन्नुपसंहरति—**एषेति**। एषा स्थितप्रज्ञलक्षणप्रसंगात् कथिता ब्राह्मी ब्रह्मशब्देनात्र ब्रह्मविदुच्यते। "ब्रह्मविद्ब्रह्मैव भवति" इति श्रुतेः तस्येयं ब्राह्मी स्थितिर्निष्ठा एनां निष्ठां प्राप्य नरो न विमुह्यति पुनर्मोहं न प्राप्नोति। अस्यामंतकालेऽपि स्थित्वेति सकृज्जातापीयं फलवती न तूपासनावच्चिराभ्याससापेक्षेत्युक्तं। ब्रह्म ऋच्छति प्राप्नोति किं लोकांतरवत् गतिप्राप्यं ब्रह्म नेत्याह निर्वाणमिति निर्गतं वानं गमनं यस्मिन्प्राप्ये ब्रह्मणि तन्निर्वाणं तथा च श्रुतिः। "न तस्य प्राणा उत्क्रामंत्यत्रैव समवनीयंते ब्रह्मैव सन् ब्रह्माप्येति" इति गतिमंतरेण प्राणरूपोपाधिप्रविलयमात्रात् घटाकाशस्य महाकाशत्वप्राप्तिवत् जीवस्य ब्रह्मप्राप्तिमाह अंतकालेऽपीत्यपि शब्दात् यो ब्रह्मचर्यादारभ्यात्र तिष्ठति स ब्रह्मनिर्वाणं कैमुतिकन्यायेन प्राप्नोतीति गम्यते। अस्याध्यायस्यार्थः संगृहीतो मधुसूदनश्रीपादैः 'ज्ञानं तत्साधनं कर्म सत्त्वशुद्धिश्च तत्फलं ॥ तत्फलं ज्ञाननिष्ठैवेत्यध्यायेऽस्मिन् प्रकीर्त्तितम्' ॥ ७२ ॥

इति श्रीमत्पदवाक्य० मर्या० चतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोर्नीलकंठस्य कृतौ भार०
भगवद्गीताप्रकाशे द्वितीयोऽध्यायः ॥ २ ॥

( श्लोकानामादितः समष्टयङ्काः—११९ )

## ॥ अथ तृतीयोऽध्यायः ॥ ३ ॥

**अर्जुन उवाच—ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ॥**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥**

**शां० भा०**—शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे सांख्ये बुद्धिर्योगे बुद्धिरिति च । तत्र प्रजहाति यदा कामानित्यारभ्याऽऽध्यायपरिसमाप्तेः सांख्यबुद्ध्याश्रितानां संन्यासं कर्तव्यमुक्त्वा तेषां तन्निष्ठतयैव च कृतार्थतोक्ता—एषा ब्राह्मी स्थितिरिति । अर्जुनाय च 'कर्मण्येवाधिकारस्ते' 'मा ते सङ्गोऽस्त्वकर्मणि' इति कर्मैव कर्तव्यमुक्तवान्योगबुद्धिमाश्रित्य, न तत एव श्रेयःप्राप्तिमुक्तवान् ।

**शां० आ०**—पूर्वोत्तराध्याययोः संबन्धं वक्तुं पूर्वस्मिन्नध्याये वृत्तमर्थं संक्षिप्यानुवदति—**शास्त्रस्येति** । गीताशास्त्रप्रारम्भापेक्षितं हेतुफलभूतं बुद्धिद्वयं भगवतोपदिष्टमित्यर्थः । प्रष्टुरर्जुनस्याभिप्रायं निर्देष्टुं प्रवृत्तमर्थान्तरमनुवदति—**तत्रेति** । अध्यायो बुद्धिद्वयनिर्धारणं वा सप्तम्यर्थः । पारमार्थिके तत्त्वे यज्ज्ञानं तन्निष्ठानामशेषकामत्यागिनां कामयुक्तानां कर्मिणामपि प्रतिपत्तिकर्मवत्त्यागं कर्तव्यत्वेन भगवानुक्तवानित्यर्थः । तथाऽपि मोक्षसाधने विकल्पसमुच्चययोरन्यतरस्य विवक्षितत्वबुद्ध्या समनन्तरप्रश्नप्रवृत्तिरित्याशङ्क्याऽऽह—**उक्तेति** । अर्जुनस्य मनसि व्याकुलत्वं प्रश्नबीजं दर्शयितुमुक्तमर्थान्तरमनुभाषते—**अर्जुनाय चेति** । सांख्यबुद्धिमाश्रित्य कर्मत्यागमुक्त्वा पुनस्तस्यैव कर्तव्यत्वं कथं मिथो विरुद्धं ब्रवीतीत्याशङ्क्याऽऽह—**योगेति** । यथा सांख्यबुद्धिमाश्रितानां संन्यासद्वारा तन्निष्ठानां कृतार्थतोक्ता तथा योगबुद्धिमाश्रित्य कर्म कुर्वतोऽपि कृतार्थत्वमुक्तमित्याशङ्क्याऽऽह—**न तत एवेति** । दूरेण ह्यवरं कर्म बुद्धियोगादिति दर्शनादिति शेषः ।

**शां० भा०**—तदेतदालक्ष्य पर्याकुलीभूतबुद्धिरर्जुन उवाच । कथं भक्ताय श्रेयोर्थिने यत्साक्षाच्छ्रेयःसाधनं सांख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारम्पर्येणाप्यनैकान्तिकश्रेयःप्राप्तिफले । नियुञ्ज्यादिति युक्तः पर्याकुलीभावोऽर्जुनस्य । तदनुरूपश्च प्रश्नो ज्यायसी चेदित्यादिः प्रश्नापाकरणवाक्यं च भगवतोक्तं यथोक्तविभागविषये शास्त्रे ।

**शां० आ०**—बुद्धिव्याकुलत्वं प्रश्नबीजं प्रतिलभ्य प्रश्नं करोतीत्याह—**तदेतदिति** । साक्षादेव श्रेयःसाधनं ज्ञानमन्येभ्यो दर्शितं तदित्युच्यते, तद्विपरीतं कर्म स्वस्यानुष्ठेयत्वेनोक्तमेतादिति निर्दिश्यते, भगवदुक्तेऽर्थे संदिह्यमानस्य निर्णयाकाङ्क्षया प्रश्नप्रवृत्तेरस्ति पूर्वोत्तराध्याययोरुत्थाप्योत्थापकलक्षणा संगतिरित्यर्थः । अर्जुनस्य प्रश्ननिमित्तं पर्याकुलत्वं प्रपञ्चयति—**कथमित्यादिना** । यद्धि साक्षादेव श्रेयःसाधनं सांख्यशब्दितपरमार्थतत्त्वविषयबुद्धौ निष्ठारूपं तदन्यस्मै श्रेयोर्थिने भक्ताय श्रावयित्वा मां पुनरभक्तमश्रेयोर्थिनमिव कर्मणि पूर्वोक्तविपरीते कथं भगवान्नियोक्तुमर्हतीत्यर्जुनस्य पर्याकुलीभावो युक्त इति संबन्धः । ज्ञाननिष्ठातो वैपरीत्यं स्फोरयितुं कर्म विशिनष्टि—**दृष्टेति** । युद्धे हि क्षत्रकर्मणि दृष्टानेकानर्थो गुरुभ्रातृहिंसादिस्तेन संबद्धे बुद्धिशुद्धिद्वाराऽपि वर्तमाने जन्मन्येव फलमित्यनियते मम भक्तस्य श्रेयोर्थिनो नियोगो भगवतो युक्तो न भवतीति शेषः । यथोक्तं निमित्तं प्रश्नस्य युक्तं तदनुगुणत्वात्तस्येति द्योतकमाह—**तदनुरूपश्चेति** । ज्ञाननिष्ठानां कृतार्थता कर्मनिष्ठानां तु न तथेत्युक्तविभागभागि शास्त्रमित्यत्र लोकेऽस्मिन्नित्यादिवाक्यस्यापि द्योतकत्वं दर्शयति—**प्रश्नेति** ।

**शां० भा०**—केचित्त्वर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः प्रतिवचनं वर्णयन्ति, यथा चाऽऽत्मना संबन्धग्रन्थे गीतार्थो निरूपितस्तत्प्रतिकूलं चेह पुनः प्रश्नप्रतिवचनयोरर्थं निरूपयन्ति । कथं तत्र संबन्धग्रन्थे तावत्सर्वेषामाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निरूपितोऽर्थ इत्युक्तं पुनर्विशेषितं च यावज्जीवश्रुतिचोदितानि कर्माणि परित्यज्य केवलादेव ज्ञानान्मोक्षः प्राप्यत इत्येतदेकान्तेनैव प्रतिषिद्धमितीह त्वाश्रमविकल्पं दर्शयता यावज्जीवश्रुतिचोदितानामेव कर्मणां परित्याग उक्तः, तत्कथमीदृशं विरुद्धमर्थमर्जुनाय ब्रूयाद्भगवान्, श्रोता वा कथं विरुद्धमर्थमवधारयेत् ।

**शा० आ०**—साक्षादेव श्रेयःसाधनमन्येभ्यो भगवतोक्तं न तु मह्यमिति मत्वाऽऽकुलीभूतः सन्पृच्छतीति स्वाभिप्रायेण संबन्धमुक्त्वा वृत्तिकाराभिप्रायं दूषयति—**केचित्त्विति** । ज्ञानकर्मणोः समुच्चयमवधारयितुं प्रश्नाङ्गीकारे समुच्चयावधारणेनैव प्रतिवचनमुचितं न च तथा भगवता प्रतिवचनमुक्तं तथा च प्रश्नस्य समुच्चयविषयत्वोपगमात्प्रत्युक्तेश्चासमुच्चयविषयत्वात्तयोर्मिथो विरोधो वृत्तिकारमते स्यादित्यर्थः । किंच केवलं प्रश्नप्रतिवचनयोरेव परमते परस्परविरोधो न भवत्यपि तु परेषां स्वग्रन्थेऽपि पूर्वापरविरोधोऽस्तीत्याह—**यथा चेति** । आत्मना वृत्तिकारैरिति यावत् । संबन्धग्रन्थो गीताशास्त्रारम्भोपोद्घातः । इहेति तृतीयाध्यायारम्भं परामृशति । तदेव विवृण्वन्नाकाङ्क्षामाह—**कथमिति** । पूर्वापरविरोधं स्फोरयितुं संबन्धग्रन्थोक्तमनुवदति—**तत्रेति** । परकीया वृत्तिः सप्तम्या समुल्लिख्यते, संबन्धग्रन्थे तावदयमर्थ उक्त इति संबन्धः । तमेवार्थं विशदयति—**सर्वेषामिति** । सर्वकर्मसंन्यासपूर्वकज्ञानादेव केवलात्कैवल्यमित्यस्मिन्नर्थे शास्त्रस्य पर्यवसानान्न समुच्चयो विवक्षितस्तत्रेत्याशङ्क्याऽऽह—**पुनरिति** । उक्तगीतार्थो वृत्तिकारैरेव कर्मत्यागायोगेन विशेषितत्वान्नाविवक्षितोऽलं भवितुमुत्सहते तथा च श्रौतानि कर्माणि त्यक्त्वा ज्ञानादेव केवलान्मुक्तिर्भवतीत्येतन्मतं नियमेनैव यावज्जीवश्रुतिभिर्विप्रतिषिद्धत्वान्नाभ्युपगन्तुमुचितमित्यर्थः । तथाऽपि कथं मिथो विरोधधीरित्याशङ्क्याऽऽह—**इह त्विति** । प्रथमतो हि संबन्धग्रन्थे समुच्चयो गीताप्रतिपाद्यत्वेन वृत्तिकृता प्रतिज्ञातः श्रौतकर्मपरित्यागश्च श्रुतिविरोधादेव न संभवतीत्युक्तं तृतीयाध्यायारम्भे पुनः संन्यासिनां ज्ञाननिष्ठा कर्मिणां कर्मनिष्ठेत्याश्रमविभागमभिदधता पूर्वप्रतिषिद्धकर्मत्यागाभ्युपगमान्मिथो विरोधो दर्शितः स्यादित्यर्थः । ननु यथा भगवता प्रतिपादितं तथैव वृत्तिकृता व्याख्यातमिति न तस्यापराधोऽस्तीत्याशङ्क्याऽऽह—**तत्कथमिति** । न हीह भगवान्विरुद्धमर्थमभिधत्ते सर्वज्ञस्य परमाप्तस्य विरुद्धार्थवादित्वायोगात्किंतु तदभिप्रायापरिज्ञानादेव व्याख्यातुर्विरुद्धार्थवादितेत्यर्थः । भगवतो विरुद्धार्थवादित्वाभावेऽपि श्रोतुर्विरुद्धार्थप्रतिपत्तिं प्रतीत्य व्याचक्षाणो वृत्तिकारो नापराध्यतीत्याशङ्क्याऽऽह—**श्रोता वेति** । अर्जुनो हि श्रोता सोऽपि बुद्धिपूर्वकारी भगवदुक्तमेवावधारयन्न विरुद्धमर्थमवधारयितुमर्हति तथा च परस्यैव विरुद्धार्थवादितेत्यर्थः ।

**शां० भा०—तत्रैतत्स्याद्गृहस्थानामेव श्रौतकर्मपरित्यागेन केवलादेव ज्ञानान्मोक्षः प्रतिषिध्यते न त्वाश्रमान्तराणामित्येतदपि पूर्वोत्तरविरुद्धमेव। कथं, सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चितोऽर्थ इति प्रतिज्ञायेह कथं तद्विरुद्धं केवलादेव ज्ञानान्मोक्षं ब्रूयादाश्रमान्तरणाम् । अथ मतं श्रौतकर्मापेक्षयैतद्वचनं केवलादेव ज्ञानाच्छ्रौतकर्मरहिताद्गृहस्थानां मोक्षः प्रतिषिध्यत इति ।**

**शां० आ०**—विरोधं परिहरन्नाशङ्कते—**तत्रेति** । संबन्धग्रन्थे हि वृत्तिकारस्यैतदभिप्रेतं गृहस्थानामेव सतां परिपक्वज्ञानमन्तरण यावज्जीवश्रुतिचोदिताग्निहोत्रादित्यागेन केवलादेवाऽऽपातिकादात्मज्ञानान्मोक्षमपेक्षमाणानां यावज्जीवादिशास्त्रैरसौ निषिध्यते न तु स्वरूपेणैव कर्मत्यागो ज्ञानान्मोक्षो वा निषेद्धुमिष्यते । तृतीये पुनरध्याये कर्मत्यागिनां गृहस्थेभ्यो व्यतिरिक्तानामेव केवलादात्मज्ञानान्मोक्षो विवक्ष्यतेऽतो भिन्नविषयत्वान्निषेधाभ्यनुज्ञानयोर्न विरोधाशङ्केत्यर्थः। विधान्तरेण विरोधं दर्शयन्नुत्तरमाह—**एतदपीति।** विरोधमेवाऽऽकाङ्क्षाद्वारा साधयति—**कथमित्यादिना** । श्रौतं कर्म गृहस्थानामवश्यमनुष्ठेयमित्यनेनाभिप्रायेण तेषां केवलादात्मज्ञानान्मोक्षो निषिध्यते न तु गृहस्थानां ज्ञानमात्रायत्तं मोक्षं प्रतिषिध्यान्येषां केवलज्ञानाधीनो मोक्षो विवक्ष्यत आश्रमान्तराणामपि स्मार्तेन कर्मणा समुच्चयाभ्युपगमादिति चोदयति—**अथेति** । एतत्परामृष्टं वचनमेवाभिनयति—**केवलादिति** ।

**शां० भा०—तत्र गृहस्थानां विद्यमानमपि स्मार्तं कर्माविद्यमानवदुपेक्ष्य ज्ञानादेव केवलादित्युच्यत इति । एतदपि विरुद्धम् । कथं, गृहस्थस्यैव स्मार्तकर्मणा समुच्चिताज्ज्ञानान्मोक्षः प्रतिषिध्यते न त्वाश्रमान्तराणामिति कथं विवेकिभिः शक्यमवधारयितुम् ।**

**शां० आ०**—ननु गृहस्थानां श्रौतकर्मराहित्येऽपि सति स्मार्ते कर्मणि कुतो ज्ञानस्य केवलत्वं लभ्यते येन निषेधोक्तिरर्थवती तत्राऽऽह—**तत्रेति** । प्रकृतवचनमेव सप्तम्यर्थः । प्रधानं हि श्रौतं कर्म तद्राहित्ये सति स्मार्तस्य कर्मणः सतोऽप्यसद्भावमभिप्रेत्य ज्ञानस्य केवलत्वमुक्तमिति युक्ता निषेधोक्तिरित्यर्थः । गृहस्थानामेव श्रौतकर्मसमुच्चयो नान्येषाम्, अन्येषां तु स्मार्तेनेति पक्षपाते हेत्वभावं मन्वानः सन्परिहरति—**एतदपीति** । तमेव हेत्वभावं प्रश्नद्वारा विवृणोति—**कथमित्यादिना** । गृहस्थानां श्रौतस्मार्तकर्मसमुच्चितं ज्ञानं मुक्तिहेतुरित्यभ्युपगमात्केवलस्मार्तकर्मसमुच्चितात्ततो न मुक्तिरिति निषेधो युज्यते, ऊर्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चिताज्ज्ञानान्मुक्तिरिति विभागे नास्ति हेतुरित्यर्थः ।

**शां० भा०—किंच यदि मोक्षसाधनत्वेन स्मार्तानि कर्माण्यूर्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापीष्यतां स्मार्तैरेव समुच्चयो न श्रौतैः । अथ श्रौतैः स्मार्तैश्च गृहस्थस्यैव समुच्चयो मोक्षायो**

र्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चिताज्ज्ञानान्मोक्ष इति । तत्रैवं सति गृहस्थस्याऽऽयासबाहुल्याच्छ्रौतं स्मार्तं च बहुदुःखरूपं कर्म शिरस्यारोपितं स्यात् ।

**शां० आ०**—पक्षपाते कारणं नास्तीत्युक्त्वा पक्षपातपरित्यागे कारणमस्तीत्याह—**किंचेति** । गृहस्थानामपि ब्रह्मज्ञानं स्मार्तैरेव कर्मभिः समुच्चितं मोक्षसाधनं ब्रह्मज्ञानत्वादूर्ध्वरेतःसु व्यवस्थितब्रह्मज्ञानवदिति पक्षपातत्यागे हेतुं स्फुटयति—**यदीत्यादिना** । यदि गृहस्थानां ब्रह्मज्ञानं स्मार्तैरेव कर्मभिः समुच्चितं मोक्षहेतुरिति विवक्षितं तदा तान्प्रति यावज्जीवश्रुतिर्विरुध्येत, यदि स्मार्तैरपि कर्मभिः समुच्चितं तदीयं ज्ञानं मोक्षसाधनं विवक्ष्यते तदा सिद्धसाध्यतेति प्रागुक्तमभिप्रेत्य चोदयति—**अथेति** । आश्रमान्तराणां तर्हि केवलादेव ज्ञानान्मुक्तिरिति प्रागुक्तविरोधतादवस्थ्यमित्याशङ्क्याऽऽह—**ऊर्ध्वरेतसां त्विति** । यथोक्ते विभागे गार्हस्थ्यं क्लेशात्मकं कर्मबाहुल्यादनुपादेयमापद्येतेति दूषयति—**तत्रेति** ।

**शां० भा०**—अथ गृहस्थस्यैवाऽऽयासबाहुल्यकारणान्मोक्षः स्यान्नाऽऽश्रमान्तराणां श्रौतनित्यकर्मरहितत्वादिति । तदप्यसत्, सर्वोपनिषत्स्वितिहासपुराणयोगशास्त्रेषु च ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसंन्यासविधानादाश्रमविकल्पसमुच्चयविधानाच्च श्रुतिस्मृत्योः ।

**शां० आ०**—साधनभूयस्त्वे फलभूयस्त्वमिति न्यायमाश्रित्य शङ्कते—**अथेति** । क्लेशबाहुल्योपेतं श्रौतं स्मार्तं च बहु कर्म तस्यानुष्ठानाद्गृहस्थस्य मोक्षः स्यादेवेत्यर्थः । एवकारनिरस्यं दर्शयति—**नाऽऽश्रमान्तराणामिति** । तेषां नास्ति मुक्तिरित्यत्र यावज्जीवादिश्रुतिविहितावश्यानुष्ठेयकर्मराहित्यं हेतुं सूचयति—**श्रौतेति** । शास्त्रविरोधिन्यायस्य निरवकाशत्वमभिप्रेत्य दूषयति—**तदपीति** । ऐकाश्रम्यस्मृत्या गार्हस्थ्यस्यैव प्राधान्यादनधिकृतान्धादिविषयं कर्मसंन्यासविधानमित्याशङ्क्याऽऽह—**ज्ञानाङ्गत्वेनेति** । न खल्वनधिकृतानामन्धादीनां संन्यासः श्रवणाद्यावृत्तिद्वारा ज्ञानाङ्गं भवितुमलं तेषां श्रवणाद्यभ्यासासामर्थ्यादतः श्रुत्यादिना विरोधे नास्ति गार्हस्थ्यस्य प्राधान्यमित्यर्थः । तस्य प्राधान्याभावे हेत्वन्तरमाह—**आश्रमेति** । "ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा" इति श्रुतौ तस्याऽऽश्रमविकल्पमेके ब्रुवत इति यमिच्छेत्तमावसेदित्यादिस्मृतौ चाऽऽश्रमाणां समुच्चयेन विकल्पेन चाऽऽश्रमान्तरमिच्छन्तं प्रतिविधानान्न गार्हस्थ्यस्य प्रधानत्वमित्यर्थः ।

**शां० भा०**—सिद्धस्तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयः न मुमुक्षोः सर्वकर्मसंन्यासविधानात् । "व्युत्थायाथ भिक्षाचर्यं चरन्ति । तस्मात्संन्यासमेषां तपसामतिरिक्तमाहुः । न्यास एवात्यरेचयत्" इति । "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" इति च । "ब्रह्मचर्यादेव प्रव्रजेत्" इत्याद्याः । 'त्यज धर्ममधर्मं च उभे सत्यानृते त्यज । उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज' 'संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः' इति बृहस्पतिः । 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः' इति शुकानुशासनम् । इहापि सर्वकर्माणि मनसा संन्यस्येत्यादि । मोक्षस्य चाकार्यत्वान्मुमुक्षोः कर्मानर्थक्यम् ।

**शां० आ०**—यदि सर्वेषामाश्रमाणां श्रुतिस्मृतिमूलत्वं तर्हि तत्तदाश्रमविहितकर्मणां ज्ञानेन समुच्चयः सिध्यतीति शङ्कते—**सिद्धस्तर्हीति** । यद्यपि ज्ञानोत्पत्तावाश्रमकर्मणां साधनत्वं तथाऽपि ज्ञानमुत्पन्नं नैव फले सहकारित्वेन तान्यपेक्षतेऽन्यथा संन्यासविध्यनुपपत्तेरिति दूषयति—**न मुमुक्षोरिति** । संन्यासविधानमेवानुक्रामति—**व्युत्थायेत्यादिना** । एषणाभ्यो वैमुख्येनोत्थानं तत्परित्यागः । आश्रमसंपत्त्यनन्तरं तत्र विहितधर्मकलापानुष्ठानमपि कर्तव्यमित्याह—**अथेति** । प्रागुक्तानां सत्यादीनामल्पफलत्वान्न्यासस्य च ज्ञानद्वारा मोक्षफलत्वादित्याह—**तस्मादिति** । अतिरिक्तमतिशयवन्तं महाफलमिति यावत् । प्रकृतकर्मभ्यः सकाशान्न्यास एवातिशयवानासीदित्युक्तेऽर्थे वाक्यान्तरं पठति—**न्यास एवेति** । लोकत्रयहेतुं साधनत्रयं परित्यज्य संसाराद्विरक्ताः संन्यासपूर्वकादात्मज्ञानादेव प्राप्तवन्तो मोक्षमित्याह—**न कर्मणेति** । सति वैराग्ये नास्ति क्रमापेक्षा सत्यां सामग्र्यां कार्याक्षेपानुपपत्तेरित्याह—**ब्रह्मचर्यादेवेति** । इत्याद्याः सर्वकर्मसंन्यासविधायिन्यः श्रुतयो भवन्तीति शेषः । आत्मानमेव लोकमिच्छन्तः प्रव्रजन्तीत्यादिवाक्यसंग्रहार्थमादिपदम् । तत्रैव स्मृतीरुदाहरति—**त्यजेति** । धर्माधर्मयोः सत्यानृतयोश्च संसारारम्भकत्वान्मुमुक्षुणा तत्त्यागे प्रयतितव्यमित्यर्थः । त्यक्तृत्वाभिमानस्यापि तत्त्वतः स्वरूपसंबन्धाभावात्त्याज्यत्वम-

विशिष्टमित्याह—**येनेति**। अनुभवानुसारेण प्रमातृताप्रमुखस्य संसारस्य दुःखफलत्वमालक्ष्य मोक्षहेतुसम्यग्ज्ञानसिद्धये ब्रह्मचर्यादेव पारिव्राज्यमनुष्ठेयमित्युत्पत्तिविधिमुपन्यस्यति—**संसारमिति**। तत्त्वज्ञानमुद्दिश्य ब्रह्मचर्यादेव कर्मसंन्याससामग्रीमभिदधानो विनियोगविधिं सूचयति—**परमिति**। ज्ञानकर्मणोरसमुच्चयार्थं फलविभागं कथयति—**कर्मणेति**। उक्तं फलविभागमनूद्य ज्ञाननिष्ठानां कर्मसंन्यासस्य कर्तव्यत्वमाह—**तस्मादिति**। वाक्यशेषेऽपि सर्वकर्मसंन्यासो विवक्षितोऽस्तीत्याह—**इहापीति**। ज्ञानार्थिनो मुमुक्षोः संन्यासविध्यनुपपत्तिबाधितं समुच्चयवचनमित्युक्तमिदानीं मोक्षस्वभावालोचनयाऽपि समुच्चयवचनमनुचितमित्याह—**मोक्षस्य चेति**।

**शां० भा०**—नित्यानि प्रत्यवायपरिहारार्थमनुष्ठेयानीति चेत्, न, असंन्यासिविषयत्वात्प्रत्यवायप्राप्तेः। न ह्यग्निकार्याद्यकरणात्संन्यासिनः प्रत्यवायः कल्पयितुं शक्यो यथा ब्रह्मचारिणामसंन्यासिनामपि कर्मिणाम्। न तावन्नित्यानां कर्मणामभावादेव भावरूपस्य प्रत्यवायस्योत्पत्तिः कल्पयितुं शक्या कथमसतः सज्जायेतेत्यसतः सज्जन्मासंभवश्रुतेः।

**शां० आ०**—" अकुर्वन्विहितं कर्म निन्दितं च समाचरन्। प्रसजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति " इति स्मृतेर्मुमुक्षुणाऽपि प्रत्यवायनिवृत्तये कर्तव्यं नित्यं कर्मेति शङ्कते—**नित्यानीति**। यो यस्मिन्कर्मण्यधिकृतस्तस्य तदकरणात्प्रत्यवायो भवति न तु कर्मानधिकारिणः संन्यासिनस्तदकरणात्प्रत्यवायः संभवतीति दूषयति—**नासंन्यासीति**। तदेव स्पष्टयति—**न हीति**। समिद्धोमाध्ययनाद्यकरणात्प्रत्यवायः संन्यासिनो नास्तीत्यर्थः। तत्र व्यतिरेकोदाहरणमाह—**यथेति**। अकरणात्प्रत्यवायोत्पत्तिमभ्युपेत्योक्तं संप्रति प्रतिषिद्धकरणादेव प्रत्यवायो न त्वकरणादभावाद्भावोत्पत्तेर्लोकवेदविरुद्धत्वादित्याह—**न तावदिति**।

**शां० भा०**—यदि विहिताकरणादसंभाव्यमपि प्रत्यवायं ब्रूयाद्वेदस्तदाऽनर्थकरो वेदोऽप्रमाणमित्युक्तं स्यात्, विहितस्य करणाकरणयोर्दुःखमात्रफलत्वात्। तथा च कारकं शास्त्रं न ज्ञापकमित्यनुपपन्नार्थं कल्पितं स्यात्। न चैतदिष्टम्। तस्मान्न संन्यासिनां कर्माण्यतो ज्ञानकर्मणोः समुच्चयानुपपत्तिः। 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिः' इत्यर्जुनस्य प्रश्नानुपपत्तेश्च।

**शां० आ०**—ननु नित्यकर्मविधायी वेदस्तदकरणात्प्रत्यवायो भवतीति ब्रवीति तत्कथमकरणात्प्रत्यवायो न भवतीति श्रुतिमाश्रित्योच्यते श्रुत्यन्तरविरोधादिति तत्राऽऽह—**यदीति**। विहितस्याकरणे सत्यनर्थप्राप्तेर्न नित्यकर्मविधायी वेदोऽनर्थकरत्वेनाप्रमाणमित्याशङ्क्याऽऽह—**विहितस्येति**। न विहितस्य करणे पितृलोकप्राप्तिलक्षणं फलं भवतेष्यते धूमादिना नयनपीडादि दुःखं तु प्रत्यक्षमेवाकरणे च प्रत्यवायोत्पत्तिरुभयथाऽपि पुरुषस्यानर्थकरो वेदोऽप्रमाणमेव स्यादित्यर्थः। नन्वभावस्यापि भावोत्पादनसामर्थ्यं वेदः संपादयिष्यति तथा च विहिताकरणप्रत्यवायपरिहारो विहितकरणे फलिष्यतीति नेत्याह—**तथा चेति**। लोकप्रसिद्धपदार्थशक्त्याश्रयणेन शास्त्रप्रवृत्त्यङ्गीकारादपूर्वशक्त्याधानायोगाज्ज्ञापकमेव शास्त्रमित्यर्थः। कारकत्वे च तस्याप्रामाण्यमप्रत्यूहं स्यादित्याह—**कारकमिति**। भवतु शास्त्रस्याप्रामाण्यमित्याशङ्क्यापौरुषेयतयाऽशेषदोषानागन्धितत्वान्मैवमित्याह—**न चेति**। अनिर्वाच्यानुपलम्भस्य संवेदनमभावज्ञाने कारणं समीहितसाधनज्ञानं तु चरणन्यासादिप्रवृत्तिकारणमित्यङ्गीकृत्योपसंहरति—**तस्मादिति**। अकरणात्प्रत्यवायोत्पत्त्यसंभवस्तच्छब्दार्थः। संन्यासिनां ज्ञाननिष्ठानां कर्मसंन्यासित्वादेव कर्मासंभवे फलितमाह—**अत इति**। समुच्चयानुपपत्तौ हेत्वन्तरमाह—**ज्यायसीति**।

**शां० भा०**—यदि हि भगवता द्वितीयेऽध्याये ज्ञानं कर्म च समुच्चयेन त्वयाऽनुष्ठेयमित्युक्तं स्यात्ततोऽर्जुनस्य प्रश्नोऽनुपपन्नो ज्यायसी चेत्कर्मणस्ते मता बुद्धिरिति। अर्जुनाय चेदबुद्धिकर्मणी त्वयाऽनुष्ठेये इत्युक्ते या कर्मणो ज्यायसी बुद्धिः साऽप्युक्तैवेति 'तत्किं कर्मणि घोरे मां नियोजयसि केशव' इति प्रश्नो न कथंचनोपपद्यते। न चार्जुनस्यैव ज्यायसी बुद्धिर्नानुष्ठेयेति भगवतोक्तं पूर्वमिति कल्पयितुं युक्तं येन ज्यायसी चेदिति प्रश्नः स्यात्।

**शां० आ०**—प्रश्नानुपपत्तिमेव प्रपञ्चयति—**यदि हीति**। समुच्चयोपदेशे प्रश्नैकदेशानुपपत्तेश्च न तदुपदेशोपपत्तिरित्याह—**अर्जुनायेति**। 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' इत्यर्जुनं प्रत्युपदेशात्तं प्रति ज्यायसी बुद्धिर्नोक्तेति युक्तं तत्किमित्याद्यु-

पालम्भवचनमित्याशङ्क्याऽऽह—**न चेति**। येन कल्पनेन ज्यायसी चेदित्यारभ्य तत्किं कर्मणीत्युपालम्भात्मा प्रश्नः स्यात्तथा न युक्तं कल्पयितुम् 'एषा तेऽभिहिता सांख्ये बुद्धिः' इति वचनविरोधादिति योजना।

**शां० भा०**—यदि पुनरेकस्य पुरुषस्य ज्ञानकर्मणोर्विरोधाद्युगपदनुष्ठानं न संभवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्वमुक्तं स्यात्ततोऽयं प्रश्न उपपन्नो ज्यायसी चेदित्यादिः। अविवेकतः प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन भगवतः प्रतिवचनं नोपपद्यते। न चाज्ञाननिमित्तं भगवत्प्रतिवचनं कल्प्यम्। अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचनदर्शनाज्ज्ञानकर्मणोः समुच्चयानुपपत्तिः। तस्मात्केवलादेव ज्ञानान्मोक्ष इत्येषोऽर्थो निश्चितो गीतासु सर्वोपनिषत्सु च। ज्ञानकर्मणोरेकं वद निश्चित्येति चैकविषयैव प्रार्थनाऽनुपपन्नोभयोः समुच्चयसंभवे। कुरु कर्मैव तस्मात्त्वमिति च ज्ञाननिष्ठासंभवमर्जुनस्यावधारणेन दर्शयिष्यति।

**शां० आ०**—कस्मिन्पक्षे तर्हि प्रश्नस्योपपत्तिरित्याशङ्क्याऽऽह—**यदीति**। भगवदुक्तेऽर्थे प्रष्टुर्विवेकाभावात्प्रश्नः स्यादित्याशङ्क्य पूर्वोक्तमेवाधिकविवक्षया स्मारयति—**अविवेकत इति**। भगवतोऽपि प्रतिवचनमज्ञाननिमित्तं प्रश्नानुरूपत्वादित्याशङ्क्याधिकं दर्शयति—**न चेति**। भगवतः सर्वज्ञत्वप्रसिद्धिविरोधादज्ञानाधीनप्रतिवचनायोगादित्यर्थः। इतश्च समुच्चयः शास्त्रार्थो न भवतीत्याह—**अस्माच्चेति**। कस्तर्हि शास्त्रार्थो विवक्षितस्तत्राऽऽह—**केवलादिति**। ज्ञानकर्मणोः समुच्चयानुपपत्तौ कारणान्तरमाह—**ज्ञानेति**। वाक्यशेषवशादपि समुच्चयस्याशास्त्रार्थतेत्याह—**कुरु कर्मैवेति**।

**शां० भा०**—ज्यायसी श्रेयसी चेद्यदि कर्मणः सकाशात्ते तव मताऽभिप्रेता बुद्धिर्ज्ञानं हे जनार्दन! यदि बुद्धिकर्मणी समुच्चिते इष्टे तदैकं श्रेयःसाधनमिति कर्मणो ज्यायसी बुद्धिरिति कर्मणोऽतिरिक्तकरणं बुद्धेरनुपपन्नमर्जुनेन कृतं स्यान्न हि तदेव तस्मात्फलतोऽतिरिक्तं स्यात्। तथा कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिरश्रेयस्करं च कर्म कुर्विति मां प्रतिपादयति तत्किं नु कारणमिति भगवत उपालम्भमिव कुर्वंस्तत्किं कस्मात्कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशवेति च यदाह तच्च नोपपद्यते। अथ स्मार्तेनैव कर्मणा समुच्चयः सर्वेषां भगवतोक्तोऽर्जुनेन चावधारितश्चेत्तत्किं कर्मणि घोरे मां नियोजयसीत्यादि कथं युक्तं वचनम्॥ १॥

**शां० आ०**—प्राथमिकेन संबन्धग्रन्थेन समस्तशास्त्रार्थसंग्राहकेण तद्विवरणात्मनोऽस्य संदर्भस्य नास्ति पौनरुक्त्यमिति मत्वा प्रतिपदं व्याख्यातुं प्रश्नैकदेशं समुत्थापयति—**ज्यायसी चेदिति**। वेदाश्चेत्प्रमाणमितिवच्चेदित्यस्य निश्चयार्थत्वं व्यावर्तयति—**यदीति**। बुद्धिशब्दस्यान्तःकरणविषयत्वं व्यवच्छिनत्ति—**ज्ञानमिति**। पूर्वार्धस्याक्षरयोजनां कृत्वा समुच्चयाभावे तात्पर्यमाह—**यदीति**। इष्टे भगवतेति शेषः। एकं ज्ञानं कर्म च समुच्चितमिति यावत्। ज्ञानकर्मणोरभीष्टे समुच्चये समुच्चितस्य श्रेयःसाधनस्यैकत्वात्कर्मणः सकाशाज्ज्ञानस्य पृथक्करणमयुक्तमित्यर्थः। एकमपि साधनं फलतोऽतिरिक्तं किं न स्यादित्याशङ्क्याऽऽह—**न हीति**। न च केवलात्कर्मणो ज्ञानस्य केवलस्य फलतोऽतिरिक्तत्वं विवक्षित्वा पृथक्करणं समुच्चयपक्षे प्रत्येकं श्रेयःसाधनत्वानभ्युपगमादिति भावः। पूर्वार्धस्येवोत्तरार्धस्यापि समुच्चयपक्षे तुल्याऽनुपपत्तिरित्याह—**तथेति**। दूरेण ह्यवरं कर्मेत्यत्र कर्मणः सकाशाद्बुद्धिः श्रेयस्करी भगवतोक्ता कर्म च बुद्धेः सकाशादश्रेयस्करमुक्तं तथापि तदेव कर्म कर्मण्येवाधिकारस्ते मा फलेष्विति स्निग्धं भक्तं च मां प्रति कुर्विति भगवान्प्रतिपादयति तत्र कारणानुपलम्भादयुक्तमतिक्रूरे कर्मणि भगवतो मन्नियोजनमिति यदर्जुनो ब्रवीति तच्च समुच्चयपक्षेऽनुपपन्नं स्यादित्यर्थः। यत्तु वृत्तिकारैरुक्तं श्रौतेन स्मार्तेन च कर्मणा समुच्चयो गृहस्थानां श्रेयःसाधनमितरेषां स्मार्तेनैवेति भगवतोक्तमर्जुनेन च निर्धारितमिति तदेतदनुवदति—**अथेति**। तत्रापि तत्किमित्याद्युपालम्भवचनमनुपपन्नं कर्ममात्रे समुच्चयवादिनो भगवतो नियोजनाभावादिति दूषयति—**तत्किमिति**॥१॥

**आ० भा०**—श्रीमद्दशप्रमतिगुरुभ्यो नमः॥ आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र। ज्ञानसाधनत्वेनाकर्म विनिंद्य कर्म विधीयत उत्तराध्याये। कर्मणो ज्ञानमत्युक्तममित्यभिहितं भगवता दूरेण ह्यवरं कर्मेत्यादौ—एवं चेत्किमिति कर्मणि घोरे युद्धाख्ये नियोजयसि निवृत्तधर्मान्विनेत्याह—**ज्यायसीति**। कर्मणः सकाशाद्बुद्धिर्ज्यायसी चेत्तव मता तत् तर्हि॥ १॥

**आ० ज०**—श्रीवेंकटेशाय नमः ॥ पूर्वोत्तराध्यायेभ्योऽस्य भेदं स्वस्मिन्नेकतां च दर्शयन्नेतदध्यायप्रतिपाद्यमर्थं पूर्वाध्यायार्थसंगतत्वेन विवक्षुस्तत्प्रतिपाद्यं तावदाह—**आत्मेति** । जीवेश्वरस्वरूपम् सांख्याख्यमित्यर्थः । ज्ञानसाधनमात्मज्ञानसाधनं योगाख्यं पूर्वत्र पूर्वस्मिन्नध्याये न चैवं द्वितीयस्याध्यायस्यैक्यानुपपत्तिः । साधनस्यैव प्राचुर्यात् प्रचुरेण च व्यपदेशात् । तथा च सप्तमादौ वक्ष्यति साधनं प्राधान्येनोक्तमतीतैरध्यायैरिति । आत्मस्वरूपमित्यादि तु प्रकरणभेदप्रदर्शनायोक्तमिति । एतत्संगतत्वेन तृतीयाध्यायार्थमाह—**ज्ञानेति** । योगो द्विविधः कर्मसमाधिभेदात् तत्र तावज्ज्ञानसाधनत्वेन कर्म विधीयते । कर्तव्यमेवेति ज्ञाप्यते कैश्चनवाक्यैरकर्म कर्माकरणं विनिंद्यास्मिन्नध्याये । अकर्मनिंदापि कर्मविध्यर्थेत्येकार्थता । तथाऽपि प्रकरणभेदार्थमेवमुक्तम् । ज्ञानसाधनत्वेनेति वदता मोक्षसाधनता निरस्ता । तेन प्रश्नप्रतिवचनाप्यव्याख्यानमप्यपहस्तितम् । आनंदवृद्ध्यर्थता त्वनुज्ञायत एव बीजं प्रदर्शयन्प्रश्नवाक्यतात्पर्यमाह—**कर्मण इति** । आदिपदेन कृपणाः फलहेतव इत्यादेर्ग्रहणम् । घोरे रागद्वेषाद्युपेते अत्रोभयत्र कर्मशब्देन काम्यं कर्माभिप्रेतम् । निवृत्तधर्मान्निष्कामधर्मान् यत्याश्रमविहितांश्छमदमादीन् अत्र कर्मणि किमिति नियोजयसीत्येकः प्रश्नः घोर इति द्वितीय इत्यवधेयम् इदमुक्तं भवति आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च कर्माणि काम्यान्येव फलश्रवणात् सर्वे एते पुण्यलोका भवंतीत्यादि । तथाऽत्रापि ‘ हतो वा प्राप्स्यसि स्वर्गम् ’ इत्यादि चतुर्थाश्रमविहितानि शमादीन्यकाम्यानि । फलाश्रवणात् । शांतो दांत इत्युपक्रम्यात्मानं पश्येदिति ज्ञानार्थत्वश्रवणाच्च । ज्ञानं च काम्यात्कर्मणोऽत्युत्तममित्यभिहितम् । ततश्च काम्ये कर्मणि युद्धे युद्ध्यस्व भारतेति नियोजनमयुक्तं किंतु चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेति नियोक्तव्यम् । ननु युद्धमपि कर्मबंधं प्रहास्यसीत्युक्तत्वाज्ज्ञानार्थं भवतीति मतम् तदा व्यामिश्रेण वाक्येन बुद्धिमोहनमिवापद्यत । अथैवं मतम् युद्धादीनि कर्माणि काम्यान्यकाम्यानि च तत्र यः सकामस्तंप्रति हतो वेत्याद्युक्तम् यः पुनर्ज्ञानार्थिनमुद्दिश्य कर्मण्येवाधिकार इत्युक्तम् तत्र का व्यामिश्रतेति तथाऽपि शुद्धेषु निवृत्तिलक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिकेषु नियोजनमयुक्तमेव । तत्र मनोविक्षेपाभावादत्र तद्भावादिति किं च कामक्रोधादीनां नरकफलत्वमुक्तम् युद्धे च कामादयोऽवर्जनीयाः ततोऽपि तत्र नियोजनमयुक्तं । नन्वस्योत्तरं सुखदुःखे समे कृत्वेत्युक्तम् सत्यं तथाऽपि रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्स्वशक्यानुष्ठाने युद्धे नियोजनमयुक्तमेवेति प्रथमश्लोके पदानां व्यवहितत्वादन्वयं दर्शयन्किंचिद्व्याचष्टे—**कर्मण इति** । षष्ठी भ्रांतिनिरासाय सकाशादित्युक्तम् बुद्धिरात्मज्ञानम् ज्यायसी प्रशस्ततरा ॥ १ ॥

**रा० भा०**—तदेव मुमुक्षुभिः परमप्राप्यतया वेदान्तोदितनिरस्तनिखिलाविद्यादिदोषगन्धानवधिकातिशयासंख्येयकल्याणगुणगणपरब्रह्मपुरुषोत्तमप्राप्त्युपायभूतवेदनोपासनध्यानादिशब्दवाच्यतदैकान्तिकात्यन्तिकभक्तियोगं वक्तुं तदङ्गभूतं य आत्मापहतपाप्मेत्यादिप्रजापतिवाक्योदितं प्राप्तुरात्मनो याथात्म्यदर्शनं तन्नित्यता ज्ञानपूर्वकासङ्गकर्मनिष्पाद्यज्ञानयोगसाध्यमुक्तं प्रजापतिवाक्ये हि दहरवाक्योदितपरविद्याशेषतया प्राप्तुरात्मनः स्वरूपदर्शनं यस्तमात्मानमनुविद्य विजानातीत्युक्त्वा जागरितस्वप्नसुषुप्त्यतीतं प्रत्यगात्मस्वरूपमशरीरं प्रतिपाद्य “ एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ” इति दहरविद्याफलेनोपसंहृतम् । अत्राप्यध्यात्मयोगाधिगमेन “देवं मत्वा धीरो हर्षशोकौ जहाति” इत्येवमादिषु देवं मत्वेति विधीयमानपरविद्याङ्गतयाऽध्यात्मयोगाधिगमेनेति प्रत्यगात्मज्ञानमपि विधाय “न जायते न म्रियते वा विपश्चित्” इत्यादिना प्रत्यगात्मस्वरूपं विशोध्य “अणोरणीयान्” इत्यारभ्य “महान्तं विभुमात्मानं मत्वा धीरो न शोचति” “नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्” इत्यादिभिः परस्वरूपं तदुपासनमुपासनस्य च भक्तिरूपतां प्रतिपाद्य “विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम् ॥” इति पराविद्याफलेनोपसंहृतम् । अतःपरमध्यायचतुष्टयेनेदमेव प्राप्तुः प्रत्यगात्मनो दर्शनं समाधनं प्रपञ्च्यते । यदि कर्मणो बुद्धिरेव ज्यायसीति ते मता किमर्थं तर्हि घोरे कर्मणि मां नियोजयसि एतदुक्तं भवति ज्ञाननिष्ठैवात्मावलोकनसाधनं कर्मनिष्ठा तु तस्याः निष्पादिका आत्मावलोकनसाधनभूता च ज्ञाननिष्ठा सकलेन्द्रियमनसां शब्दादिविषयव्यापारोपरतिनिष्पाद्येत्यभिहिता इन्द्रियव्यापारो-

परतिनिष्पाद्यमात्मावलोकनं चेत्तिसाधयिषितं सकलकर्मनिवृत्तिपूर्वकज्ञाननिष्ठायामेवाहं नियोजयितव्यः किमर्थं घोरं कर्मणि सर्वेन्द्रियव्यापाररूपे आत्मावलोकनविरोधिनि कर्मणि मां नियोजयसीति ॥ १ ॥

अ० टी०—श्रीकृष्णाय नमः ॥ 'योगसांख्यब्रह्मभावकर्माद्याः प्रश्नवाक्यतः । ससंशयोऽब्रवीत्कृष्णं भक्तिप्राप्तीच्छुरर्जुनः ॥' एवं पूर्वाध्याये भगवता बुद्धियोगस्य कर्मण उत्तमत्वमुक्तमिति कर्मोपदेशः किमाशय इति संशयाविष्टोऽर्जुन उवाच—ज्यायसीचेदिति । हे जनार्दन सर्वाविद्यानाशक ते कर्मणः सकाशाद् बुद्धिश्चेज्ज्यायसी श्रेष्ठा मता संमता तदा मां घोरे अकरणप्रत्यवाये किंचिदपि कर्मलोपादिविफले कर्मणि किमिति नियोजयसि प्रवर्त्तयसि केशवेतिसंबोधनेन दुष्टगुणव्याप्तयोरपि मोक्षदातृत्वात्तथा कर्म कारयित्वापि चेन्मोक्षं दातुमिच्छसि तदा कर्त्तव्यमेवेति भावो व्यञ्जितः ॥ १ ॥

नी० टी०—पूर्वस्मिन्नध्याये 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति द्वे बुद्धी प्रदर्श्य 'व्यवसायात्मिका बुद्धिः' इति श्लोकेन सांख्यनिष्ठावतां पातशंका नास्ति कर्मयोगनिष्ठावतां तु साऽस्तीत्युक्त्वा 'यावानर्थ उदपाने' इति सांख्यनिष्ठायां सर्वकर्मफलांतर्भावश्रवणात्तामेव प्रशमात्मिकां स्वाशयानुकूलां मन्वानोऽर्जुन उवाच ज्यायसीति हेजनार्दन कर्मणो निष्कामकर्मयोगापेक्षया बुद्धिः सांख्यनिष्ठालक्षणं ज्ञानं ज्यायसी प्रशस्ततरा चेत्ते तव मता तर्त्तिहं मां भैक्ष्यवृत्त्याऽपि तुष्यंतं घोरे बंधुवधाख्ये कर्मणि किं कुतो हेतोर्नियोजयसि पुनः पुनर्युध्यस्वेति वदन् ॥ १ ॥

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ॥**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥**

**शां० भा०—किं च—व्यामिश्रेणेति । व्यामिश्रेणेव यद्यपि विविक्ताभिधायी भगवांस्तथाऽपि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति । तेन मम बुद्धिं मोहयसीव । मम बुद्धिव्यामोहापनयाय हि प्रवृत्तस्त्वं तु कथं मोहयस्यतो ब्रवीमि बुद्धिं मोहयसीव मे ममेति । त्वं तु भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासंभवं यदि मन्यसे तत्रैवं सति तत्तयोरेकं बुद्धिं कर्म वेदमेवार्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपमिति निश्चित्य वद ब्रूहि । येन ज्ञानेन कर्मणा वाऽन्यतरेण श्रेयोऽहमाप्नुयां प्राप्नुयाम् । यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवतोक्तं स्यात्तत्कथं तयोरेकं वदेत्येकविषयैवार्जुनस्य शुश्रूषा स्यात् । न हि भगवतोक्तमन्यतरदेव ज्ञानकर्मणोर्वक्ष्यामि नैव द्वयमिति । येनोभयप्राप्त्यसंभवमात्मनो मन्यमान एकमेव प्रार्थयेत् ॥ २ ॥**

शां० आ०—इतश्च प्रश्नः समुच्चयानुसारी न भवतीत्याह—**किंचेति** । भगवतो विविक्तार्थवादित्वादयुक्तं व्यामिश्रेणेत्यादिवचनमित्याशङ्क्याऽऽह—**यद्यपीति** । यदि भगवद्वचनं संकीर्णमिव ते भाति तर्हि तेन त्वदीयबुद्धिव्यामोहनमेव तस्य विवक्षितमिति किमिति मोहयसीवेत्युच्यते तत्राऽऽह—**ममेति** । ज्ञानकर्मणी मिथो विरोधाद्युगपदेकपुरुषाननुष्ठेयतया भिन्नकर्तृके कथ्येते तथा च तयोरन्यतरस्मिन्नेव त्वं नियुक्तो न तु ते बुद्धिव्यामोहनमभिमतमिति भगवतो मतमनुवदति—**त्वं त्विति** । तदेकमित्यादिश्लोकार्धेनोत्तरमाह—**तत्रेति** । उक्तं भागवतं मतं सप्तम्या परामृश्यते । एवमित्युक्तप्रकारोक्तिः । एकमित्युक्तमेव स्फुटयति—**बुद्धिमिति** । निश्चयप्रकारं प्रकटयति—**इदमिति** । योग्यत्वं स्पष्टयति—**बुद्धीति** । अस्य क्षत्रियस्य सतोऽन्तःकरणस्य देहशक्तेः समरसमारम्भावस्थायाश्चेदमेव ज्ञानं कर्म वाऽनुगुणमिति निर्धार्य ब्रूहीत्यर्थः । निश्चित्यान्यतरोक्तौ तेन श्रोतुः श्रेयोवाप्तिं फलमाह—**येनेति** । तदेकमित्यादिवाक्यस्याक्षरोत्थमर्थमुक्त्वा समुच्चयस्य शास्त्रार्थत्वाभावे तात्पर्यमाह—**यदि हीति** । गुणभूतमपीत्यादिना प्रधानभूतमपि वेति विवक्षितम् । ननूभयप्राप्त्यसंभवमात्मनो मन्यमानस्यार्जुनस्यान्यतरविषया

शुश्रूषा भविष्यति नेत्याह—**न हीति**। यथोक्तभगवद्वचनाभावे द्वयप्राप्त्यसंभवबुद्ध्या नान्यतरप्रार्थना संभवतीत्याह—**येनेति**। न हि तथाविधं भगवद्वचनं भवतेष्टं भगवतः समुच्चयवादित्वाङ्गीकारादतस्तदभावादुक्तबुद्ध्या न युक्ताऽन्यतरप्रार्थनेत्यर्थः ॥ २ ॥

**आ० भा०**—॥ २ ॥

**आ० ज०**—॥ २ ॥

**रा० भा०**—अतो व्यामिश्रवाक्येन मां मोहयसीवेति मे प्रतिभाति तथा ह्यात्मावलोकन-साधनभूतायाः सर्वेन्द्रियव्यापारोपरतिरूपाया ज्ञाननिष्ठायास्तद्विपर्ययरूपं कर्मसाधनं तदेव कुर्विति वाक्यं विरुद्धं व्यामिश्रमेव तस्मादेकममिश्ररूपं वाक्यं वद येन वाक्येनाहमनुष्ठेयरूपं निश्चित्यात्मनः श्रेयः प्राप्नुयाम् ॥ २ ॥

**अ० टी०**—किं च। स्पष्टतया बोधाभावान्मे बुद्धिर्मोहमवाप्नोतीति यथाऽहं त्वां प्राप्नोमि तत्तथा स्पष्टमाज्ञापयेत्याह—**व्यामिश्रेणेवेति**। व्यामिश्रेणेव वाक्येन क्वचित्कर्म प्रशंससि क्वचिज्ज्ञानमिति रूप-संदेहोत्पादकेन वाक्येन मे बुद्धिं मोहयसीव। भगवद्वाक्यं तु व्यामिश्रं न भवति परंतु जीवैर्न बुध्यत इति इवेत्यनेन ज्ञापितं। मोहयसीत्यत्रापि इवेतिपदेन भगवत्सन्निधौ मोहोऽनुचित इति ज्ञापितं। तस्मात्कारणा-द्यथा मम बुद्धिमोहोऽपगच्छति तथा एकं श्रेयोरूपं कल्याणरूपं भक्तिप्रतिपादकं वाक्यं निश्चित्य मयि दानेच्छां कृत्वा वद येनाऽहं त्वामाप्नुयां प्राप्नोमीत्यर्थः। पूर्वोक्तव्यामिश्रवाक्यमध्ये नैकस्यापि श्रेयोरूपत्वं मोहकत्वात्। सर्वथा भगवत्प्रापकश्रेयोरूपत्वं भक्तेरेव। अत एव श्रीभागवते—तस्मान्मद्भक्तियुक्तस्येत्यारभ्य श्रेयोभवेदिहेत्यन्तं सर्वेषां न श्रेयोरूपत्वमुक्तम्। अतः पूर्वोक्तमध्ये एकं निश्चित्य वदेति व्याख्यानं न साधु ॥ २ ॥

**नी० टी०**—ननु तव ज्ञाननिष्ठायामनधिकारात् कर्मैव कुर्विति त्वां ब्रवीमीत्याशंक्याह—**व्यामिश्रे-णेति**। व्यामिश्रेण अविविक्तेन इवशब्दो विविक्तेऽपि बुद्धिदोषात् अविविक्ततां गृह्णामीति सूचयति। तेन वाक्येन 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति क्वचिद्वेदनिष्ठां त्याजयसि। कर्मण्येवाधिकारस्ते इति तामेव च ग्राहयसि। तथा 'निर्द्वंद्वो नित्यसत्वस्थो निर्योगक्षेमआत्मवान्' भवेति निवृत्तिमार्गमुपदिशसि। 'धर्म्याद्धि युद्धात् श्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इति प्रवृत्तिमप्युपदिशसि। न ह्येकेन मया युगपदुभयं स्थितिगतिवदनुष्ठातुं शक्यमतो मे मम बुद्धिं मोहयसीव वस्तुतस्तु मम मोहं नाशयितुं प्रवृत्तोऽसीति इव शब्दे-नोच्यते। तत्तयोर्मध्ये यदेकं प्रधानं मद्योग्यं तत् निश्चित्य वद येनानुष्ठितेनाहं श्रेयः कल्याणमाप्नुयाम् ॥२॥

**श्रीभगवानुवाच—लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ॥**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

**शां० भा०**—प्रश्नानुरूपमेव प्रतिवचनम्—श्रीभगवानुवाच—**लोकेऽस्मिन्निति**। लोकेऽस्मि-ञ्शास्त्रानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिरनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता मया सर्वज्ञेनेश्वरेण हेऽनघापाप। तत्र का सा द्विविधा निष्ठेत्याह—तत्र ज्ञानयोगेन ज्ञानमेव योगस्तेन सांख्यानामात्मा-नात्मविषयविवेकज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंस-परिव्राजकानां ब्रह्मण्येवावस्थितानां निष्ठा प्रोक्ता, कर्मयोगेन कर्मैव योगः कर्मयोगस्तेन

कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्तेत्यर्थः । यदि चैकेन पुरुषेणैकस्मै पुरुषार्थाय ज्ञानं कर्म च समुच्चित्यानुष्ठेयं भगवतेष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तं कथमिहार्जुनायोपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात् । यदि पुनरर्जुनो ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यत्यन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामीति मतं भगवतः कल्प्येत तदा रागद्वेषवानप्रमाणभूतो भगवान्कल्पितः स्यात् । तच्चायुक्तम् । तस्मात्कयाऽपि युक्त्या न समुच्चयो ज्ञानकर्मणोः । यदर्जुनेनोक्तं कर्मणो ज्यायस्त्वं बुद्धेस्तच्च स्थितमनिराकरणात् । तस्याश्च ज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वं भिन्नपुरुषानुष्ठेयत्ववचनाच्च भगवत एवमेवानुमतमिति गम्यते ॥ ३ ॥

**शां० आ०**—समुच्चयविरोधितया प्रश्नं व्याख्याय तद्विरोधित्वेनैव प्रतिवचनमुत्थापयति—**प्रश्नेति** । येयं व्यवहारभूमिरुपलभ्यते तत्र ये त्रैवर्णिका ज्ञानं कर्म वा शास्त्रीयमनुष्ठातुमधिक्रियन्ते तेषां द्वयी स्थितिर्मया प्रोक्तेति पूर्वार्धं योजयति—**लोकेऽस्मिन्निति** । स्थितिमेव व्याकरोति—**अनुष्ठेयेति** । पूर्वं प्रवचनप्रसङ्गं प्रदर्शयन्प्रवक्तारं विशिनष्टि—**सर्गादाविति** । प्रवचनस्यायथार्थत्वशङ्कां वारयति—**सर्वज्ञेनेति** । अर्जुनस्य भगवदुपदेशयोग्यत्वं सूचयति—**अनघेति** । निर्धारणार्थे तत्रेति सप्तमी । ज्ञानं परमार्थवस्तुविषयं तदेव योगशब्दितं युज्यतेऽनेन ब्रह्मणेति व्युत्पत्तेस्तेन । निष्ठेत्यनुवर्तते । उक्तज्ञानोपायमुपादिदिक्षुः सांख्यशब्दार्थमाह—**आत्मेति** । तेषामेव कर्मनिष्ठत्वं व्यावर्तयति—**ब्रह्मचर्येति** । तेषां जपादिपारवश्येन श्रवणादिपराङ्मुखत्वं पराकरोति—**वेदान्तेति** । उक्तविशेषणवतां मुख्यसंन्यासित्वेन फलावस्थत्वं दर्शयति—**परमहंसेति** । कर्म वर्णाश्रमविहितं धर्माख्यं तदेव युज्यतेऽनेनाभ्युदयेनेति योगस्तेन निष्ठा कर्मिणां प्रोक्तेत्यनुषङ्गं दर्शयन्नाह—**कर्मैवेत्यादिना** । एवं प्रतिवचनवाक्यस्थान्यक्षराणि व्याख्याय तस्यैव तात्पर्यार्थं कथयति—**यदि चेति** । इष्टस्यापि दुर्बोधत्वमाशङ्क्याऽऽह—**उक्तमिति** । ज्ञानस्यापि मूलविकलतया विभ्रमत्वमाशङ्क्याऽऽह—**वेदेष्विति** । तस्याशिष्यत्वबुद्ध्याऽन्यथाकथनमित्याशङ्क्याऽऽह—**उपसन्नायेति** । तथाऽपि तस्मिन्नौदासीन्यादन्यथोक्तिरित्याशङ्क्याऽऽह—**प्रियायेति** । ब्रवीति च भिन्नपुरुषकर्तृकं निष्ठाद्वयं तेन समुच्चयो भगवदभीष्टः शास्त्रार्थो न भवतीति शेषः । नन्वर्जुनस्य प्रेक्षापूर्वकारित्वाज्ज्ञानकर्मश्रवणानन्तरमुभयनिर्देशानुपपत्त्या समुच्चयानुष्ठानं संपत्स्यते तद्व्यतिरिक्तानां तु ज्ञानकर्मणोर्भिन्नपुरुषानुष्ठेयत्वं श्रुत्वा प्रत्येकं तदनुष्ठानं भविष्यतीति भगवतो मतं कल्प्यते तस्यार्जुनेऽनुरागातिरेकादितरेषु च तदभावादिति तत्राऽऽह—**यदि पुनरिति** । अप्रमाणभूतत्वमनाप्तत्वम् । न च भगवतो रागादिमत्त्वेनानाप्तत्वं युक्तं ' समं सर्वेषु भूतेषु तिष्ठन्तम् ' इत्यादिविरोधादित्याह—**तच्चेति** । निष्ठाद्वयस्य भिन्नपुरुषानुष्ठेयत्वनिर्देशफलमुपसंहरति—**तस्मादिति** । किमिति भगवता बुद्धेर्ज्यायस्त्वं ज्यायसी चेदित्यत्रोक्तमुपेक्षितमिति तत्राऽऽह—**यदर्जुनेनेति** । किंच ज्ञाननिष्ठायां संन्यासिनामेवाधिकारो भगवतोऽभिप्रेतोऽन्यथा तदीयविभागवचनविरोधादिति विभागवचनसामर्थ्यसिद्धमर्थमाह—**तस्याश्चेति** ॥ ३ ॥

**आ० भा०**—ज्यायस्त्वेऽपि बुद्धेराधिकारिकत्वात्त्वं कर्मण्यधिकृतइति तत्र नियोक्ष्यामीत्याशयवान्भगवानाह—**लोक इति** । द्विविधा अपि जनाः संति गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत् । तस्था एव ज्ञाननिष्ठाश्च जनकादिवत् । मद्धर्मस्था एवेत्यर्थः । सांख्यानां ज्ञानिनां सनकादीनाम् । योगिनामुपायिनां जनकादीनाम् । ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसंग्रहार्थत्वाच्च ये कर्मयोग्या भवंति तेऽपि योगिनः । निष्ठा स्थितिः । त्वं तु जनकादिवत्सकर्मैव ज्ञानयोग्यः । न तु सनकादिवत्तत्त्यागेनेत्यर्थः । संति हीश्वरेच्छयैव कर्मकृतः प्रियव्रतादयोऽपि ज्ञानिन एव तथा ह्युक्तम् । ईश्वरेच्छयाविनिवेशितकर्माधिकार इति ॥ ३ ॥

**आ० ज०**—एवं चेत्प्रश्नस्तर्हि कथं परिहारवाक्यं संगच्छते तत्र निष्ठाद्वैविध्यकथनादित्यतस्तदभिप्रायं वदन्नवतारयति—**जायस्त्वेपीति** । बुद्धिः काम्यकर्मणो ज्यायसीति यदुक्तं तत्तथैव तथाऽपि त्वां तत्र वैकल्पिके युद्धादिकर्मणि प्रेरयामि कुतः आधिकारिकत्वात् त्वं कर्मण्यपि विक्षेपकारिण्यपि वैकल्पिकेऽधिकृत इति कृत्वा अयमत्रोत्तरक्रमः । आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च न शुद्धकाम्यानि किं तु कर्तुरिच्छया स्वर्गाद्यर्थानि ज्ञानाद्यर्थानि च भवंति । अतो बुद्धेः काम्यकर्मणो जायस्त्वेऽपि युद्धस्य बुद्ध्यर्थत्वसंभवात्तत्र नियोगो नानुपपन्नः । यतिधर्मान्विना किमेतेन नियोगेनेतिचेत् अनधिकारिणामेव यत्याश्रमस्वीकाराधिकारो नाधिकारिकाणाम् । तैर्गृहस्थाद्याश्रममपरित्यज्यैव तद्विहितानि कर्माणि निष्कामतयाऽनुष्ठेयानीतीश्वरानियमात् तव चाधिकारिकत्वादिति । स्वरायंतोपसृष्टाचेति कात्यायनवचनमनित्यम् । अत एव न पाणिनिरभाणीत् । अयमाशयः श्लोकारकथं लभ्यते

इत्यतो व्याचष्टे—द्विविधा अपीति। निष्ठा द्विविधेति व्याख्याने क्रमेणैकस्यैव पुरुषस्य तत्संभवान्नोक्तोभिप्रायो लभ्यत इत्येवं व्याख्यातम् न केवलमेकविधाः सांख्या एवेत्यपेरर्थः। द्वैविद्ध्यमेव सोदाहरणमाह—गृहस्थादिति। यत्याश्रमपरिग्रहेणेत्यपि ग्राह्यम्। ज्ञाननिष्ठाः यत्याश्रमविहितैरेव कर्मभिर्ज्ञानसाधनैर्युक्ताः सनकादिभिस्तुल्यं वर्तंत इति सनकादिवत्। एवं जनकादिवदित्यपि। तत्स्था एव गृहस्थाद्याश्रमस्था एव तद्धर्मैर्युद्धादिभिर्ज्ञानसाधनैर्युक्ताः द्विविधा अपि जनाः संतीत्युक्ते कर्ममार्गस्था ज्ञानमार्गस्थाश्चेति द्वैविद्ध्यं प्रतीयते। तन्निवृत्त्यर्थमाह—मद्धर्मेति। ज्ञानमार्गस्था एव ततश्च मद्धर्मस्था एव जना द्विविधा अपि संतीत्यन्वयः। तत्कथमित्याकांक्षायामुत्तरं वाक्यद्वयम्। सांख्यानां योगिनामिति पदद्वयमन्यथाप्रतीतिनिरासाय व्याचष्टे—सांख्यानामिति। सम्यक् ख्यातिर्ज्ञानं संख्या तत्र भवाः सांख्याः तेषां ज्ञानिनां ज्ञाननिष्ठानामित्यर्थः। ननु जनकादयोऽपि ज्ञाननिष्ठास्तत्कथं योगिन इत्यत आह—ज्ञाननिष्ठाअपीति। कर्मयोग्याः गृहस्थादिकर्मयोग्याः। सांख्ययोगशब्दौ प्रसिद्धार्थौ किं न स्यातामित्यतो मुक्तिवचनादिति भावेनाह—निष्ठेति। स्थितिः स्वरूपेणेति शेषः। अस्त्वेवं श्लोकार्थस्तथाप्याधिकारिकत्वादित्यादिकम्। अत्र न श्रूयत इत्यतोऽध्याहृत्याह—त्वं त्विति। सकर्मा गृहस्थादिकर्मवान्। भवेदिदं व्याख्यानं यदि ते जनाः प्रमिताः स्युर्येषाम्। ज्ञाननिष्ठानामपि गृहस्थादिकर्मस्वेवाधिकारो न यत्याश्रमकर्मसु। जनकादयस्तु यत्याश्रमं नानुष्ठितवंत इत्येव प्रमितम्। न तु तत्रानधिकार इति तत्राह—संति हीति। विनिवेशितः कर्माधिकारो गृहस्थकर्माधिकारो यस्मिन्स तथोक्तः। प्रियव्रतो हि यत्याश्रमं स्वीचिकीर्षुराधिकारिकत्वयुक्त्या हिरण्यगर्भेण निवारित इत्यनेनोच्यते॥ ३॥

रा० भा०—पुरोक्तं न सम्यगवधृतं त्वया पुराऽप्यस्मिन् लोके विचित्राधिकारिसंपूर्णे द्विविधा निष्ठा ज्ञानकर्मविषया यथाधिकारमसंकीर्णैव मयोक्ता न हि सर्वो लौकिकः पुरुषः संजातमोक्षाभिलाषस्तदानीमेव ज्ञानयोगाधिकारे प्रभवति अपि त्वनभिसंहितफलेन केवलपरमपुरुषाराधनरूपेणानुष्ठितेन कर्मणा विध्वस्तमनोमलो व्याकुलेन्द्रियो ज्ञाननिष्ठायामधिकरोति। 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥' इति परमपुरुषाराधनैकवेषता कर्मणां वक्ष्यते इहापि कर्मण्येवाधिकारस्त इत्यादिनानभिसंहितफलं कर्मानुष्ठेयं विधाय तेन विषयव्याकुलतारूपमोहादुत्तीर्णबुद्धेः प्रजहाति यदा कामानित्यादिना ज्ञानयोग उदितः। अतः सांख्यानामेव ज्ञानयोगेन स्थितिरुक्ता योगिनां तु कर्मयोगेन। संख्या बुद्धिस्तद्युक्ताः सांख्याः आत्मैकविषयया बुद्ध्या युक्ताः सांख्याः अतदर्हाः कर्मयोगाधिकारिणो योगिनः विषयव्याकुलबुद्धियुक्तानां कर्मयोगाधिकारः अव्याकुलबुद्धीनां तु ज्ञानयोगाधिकार उक्त इति न किंचिदिह विरुद्धं नापि व्यामिश्रमभिहितम्॥ ३॥

अ० टी०—एवमर्जुनस्य मोहापगमार्थं प्रश्नोत्तरमाह कृष्णः—लोकेस्मिन्निति। हे अनघ निष्पाप मद्वाक्यश्रवणयोग्य मया अस्मिँल्लोके प्रवृत्तिनिष्ठे द्विविधा निष्ठा पुरा पूर्वं तवाग्रे भक्त्यधिकारसिद्ध्यर्थं प्रोक्ता न तु त्वदर्थमिति भावः। द्विविधत्वमेव स्पष्टयति—ज्ञानयोगेनेति। सांख्यानां ज्ञानयोगेन सांख्यानां सर्वत्र भगवदात्मज्ञानवतां ज्ञानयोगेन ब्रह्मनिष्ठोक्ता। योगिनां योगेन भगवदुपासकानां कर्मयोगेन ब्रह्मनिष्ठोक्ता। तयोः स्वरूपज्ञानार्थं निष्ठाद्वयमुक्तं नतु त्वदर्थमित्यर्थः॥ ३॥

नी० टी०—अत्रोत्तरं श्रीभगवानुवाच—लोकेऽस्मिन्निति। पुरा पूर्वाध्याये मया निष्ठा एकैव प्रोक्ता परंतु सा द्विविधा द्विप्रकारा एकस्या एव ब्रह्मनिष्ठायाः प्रकारद्वयमुक्तमधिकारिभेदेन न तु ब्रह्मप्राप्तये परस्परनिरपेक्षमार्गद्वयमुक्तमिति भावः। हेऽनघ विशुद्धांतःकरण मद्वचनस्यार्थं सम्यगालोचयेत्यर्थः। तदेव प्रकारद्वयमाह—ज्ञानयोगेनेति। सांख्यानां प्रकृतिपुरुषयोर्विविक्तत्वं जानतामात्मानात्मविवेकज्ञानवतां ज्ञानार्थं युज्यते इति ज्ञानयोगः ज्ञानोपायो वेदांतश्रवणमनननिदिध्यासनात्मकस्तेन ज्ञानयोगेन ब्रह्मणि निष्ठां परिसमाप्तिं सांख्याः प्राप्नुवंतीत्यर्थः। योगिनां सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यत इत्युक्तलक्षणयोगवतां कर्मयोगेन संध्योपासनादिनिर्विकल्पसमाध्यनुष्ठानांतमिह कर्मयोग

पदार्थः तेन योगिनो ब्रह्मनिष्ठां प्राप्नुवंतीत्यर्थः । अयं भावः । इह जन्मनि जन्मांतरे वा ईश्वरप्रीत्यर्थमनुष्ठितैः कर्मभिर्विशुद्धसत्वो विवेकवैराग्यशमादिषट्कोपेतो मुमुक्षुः प्रत्यक्प्रवणचित्तः श्रवणमननाभ्यामेव कृतकृत्यो भवति । स चेत् श्रवणादेः प्रागसमाहितचित्तस्तर्हि निदिध्यासनमस्यापेक्षितं अत एव "सहकार्यंतरविधिः पक्षेण" इति सूत्रकृता निदिध्यासनस्य पाक्षिकत्वमुक्तं सोऽयं सांख्यमार्गः । तथा सर्वाणि कर्माणि परमगुरावर्पयन् श्रवणमननात्मकं विचारमंतरेणैव केवलं श्रद्धामात्रात् प्रतीचो निर्विशेषब्रह्मरूपत्वं गुरुवाक्यतो निश्चित्यासंभावनादिदोषरहित आचार्यान्निर्गुणब्रह्मोपास्तिप्रकारमधिगम्य कर्मच्छिद्रेषु समाध्यभ्यासं कुर्वन्निष्कलंप्रत्यगात्मस्वरूपं साक्षात्करोति सोऽयं योगमार्गः तेन ऊहापोहकौशलं येषामस्ति ते सांख्याः । येषां तन्नास्ति ते योगिन इति अत इयं द्विप्रकारा निष्ठा न तु द्वे निष्ठे इति भ्रमितव्यं यथोक्तं वसिष्ठेन । 'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव । योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणं ॥ असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः । प्रकारौ द्वौ ततो देवो जगाद परमः शिवः' इति । चित्तादर्शनोपलक्षितस्य ब्रह्मसाक्षात्कारस्य द्वौ क्रमौ चित्तादेर्मिथ्यात्वपक्षे ज्ञानमेव यथा रज्जूरगादिसम्यगवेक्षणेनैव नश्यति तद्वत् । तस्य सत्यत्वपक्षे योग एव यथा सत्य उरगो मंत्रादिना निरुद्धप्रचारः स्वयमेव नश्यति तद्वच्चित्तमपि योगेन निरुद्ध्यमानं नश्यति तस्य निरन्वयोच्छेदस्तु प्रारब्धकर्मांते पक्षद्वयेऽपि तुल्य इति ॥ ३ ॥

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ॥**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

**शां० भा०—मां च बन्धकारणे कर्मण्येव नियोजयसीति विषण्णमनसमर्जुनं कर्म नाऽऽरभ इत्येवं मन्वानमालक्ष्याऽऽह भगवान्—न कर्मणामनारम्भादिति । अथ वा ज्ञानकर्मनिष्ठयोः परस्परविरोधादेकेन पुरुषेण युगपदनुष्ठातुमशक्यत्वे सतीतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं न स्वातन्त्र्येण, ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुरन्यानपेक्षेत्येतमर्थं प्रदर्शयिष्यन्नाह भगवान्—न कर्मणामनारम्भादप्रारम्भात्कर्मणां क्रियाणां यज्ञादीनामिह जन्मनि जन्मान्तरे वाऽनुष्ठितानामुपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनां 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि' इत्यादिस्मरणादनारम्भादननुष्ठानान्नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैवावस्थानमिति यावत्, पुरुषो नाश्नुते न प्राप्नोतीत्यर्थः ।**

**शां० आ०**—तर्हि विभागवचनानुरोधादर्जुनस्यापि संन्यासपूर्विकायां ज्ञाननिष्ठायामेवाधिकारो भविष्यति नेत्याह—**मां चेति** । बुद्धेर्ज्यायस्त्वमुपेत्यापीति चकारार्थः । अर्जुनमालक्ष्य भगवानाहेति संबन्धः । अन्तरेणापि कर्माणि श्रवणादिभिर्ज्ञानावाप्तिर्भविष्यतीति परबुद्धिमनुरुध्य विशिनष्टि—**कर्मेति** । विभागवचनवशादसमुच्चयश्चेदुभयोरपि ज्ञानकर्मणोः स्वातन्त्र्येण पुरुषार्थहेतुत्वमन्यथा कर्मवज्ज्ञानमपि न स्वातन्त्र्येण पुरुषार्थं साधयेदित्याशङ्क्य संबन्धान्तरमाह—**अथ वेति** । तर्हि ज्ञाननिष्ठाऽपि कर्मनिष्ठावन्निष्ठात्वाविशेषान्न स्वातन्त्र्येण पुरुषार्थहेतुरिति समुच्चयसिद्धिरित्याशङ्क्याऽऽह—**ज्ञाननिष्ठा त्विति** । न हि रज्जुतत्त्वज्ञानमुत्पन्नं फलसिद्धौ सहकारिसापेक्षमालक्ष्यते । तथेदमपि चोत्पन्नं मोक्षाय नान्यदपेक्षते तदाह—**अन्येति** । "यस्य चैतत्कर्म" इति श्रुताविव कर्मशब्दस्य क्रियमाणवस्तुविषयत्वमाशङ्क्य व्याचष्टे—**क्रियाणामिति** । ताश्च नित्यनैमित्तिकत्वेन विभजते—**यज्ञादीनामिति** । अस्मिन्नेव जन्मन्यनुष्ठितानां कर्मणां बुद्धिशुद्धिद्वारा ज्ञानकारणत्वे ब्रह्मचारिणां कुतो ज्ञानोत्पत्तिर्जन्मान्तरकृतानां वा कर्मणां तथात्वे गृहस्थानामैहिकानि कर्माणि न ज्ञानहेतवः स्युरित्याशङ्क्यानियमं दर्शयति—

इहेति। नेमानि सत्त्वशुद्धिकारणान्युपात्तदुरितप्रतिबन्धादित्याशङ्क्याऽऽह—**उपात्तेति**। तर्हि तावतैव कृतार्थानां कुतो ज्ञाननिष्ठाहेतुत्वं तत्राऽऽह—**तत्कारणत्वेनेति**। कर्मणां चित्तशुद्धिद्वारा ज्ञानहेतुत्वे मानमाह—**ज्ञानमिति**। अनारम्भशब्दस्योपक्रमविपरीतविषयत्वं व्यावर्तयति—**अननुष्ठानादिति**। निष्कर्मणः संन्यासिनः कर्म ज्ञानं नैष्कर्म्यमिति व्याचष्टे—**निष्कर्मेति**। कर्माभावावस्थां व्यवच्छिनत्ति—**ज्ञानयोगेनेति**। तस्याः साधनपक्षपातित्वं व्यावर्तयति—**निष्क्रियेति**।

**शां० भा०**—कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति वचनात्तद्विपर्ययात्तेषामारम्भान्नैष्कर्म्यमश्नुत इति गम्यते। कस्मात्पुनः कारणात्कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति। उच्यते, कर्मारम्भस्यैव नैष्कर्म्योपायत्वात्। न ह्युपायमन्तरेणोपेयप्राप्तिरस्ति। कर्मयोगोपायत्वं च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य श्रुताविह च प्रतिपादनात्। श्रुतौ तावत्प्रकृतस्याऽऽत्मलोकस्य वेद्यस्य वेदनोपायत्वेन "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितम्। इहापि च—'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः। योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इत्यादि प्रतिपादयिष्यति। ननु च—'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति लोके च कर्मणामनारम्भान्नैष्कर्म्यमिति प्रसिद्धतरमतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेणेति प्राप्तमत आह—न च संन्यसनादेवेति। नापि संन्यसनादेव केवलात्कर्मपरित्यागमात्रादेव ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति न प्राप्नोति ॥ ४ ॥

**शां० आ०**—कर्मानुष्ठानोपायलब्धा ज्ञाननिष्ठा स्वतन्त्रा पुमर्थहेतुरितिप्रकृतार्थसमर्थनार्थं व्यतिरेकवचनस्यान्वये पर्यवसानं मत्वा व्याचष्टे—**कर्मणामिति**। तद्विपर्ययमेव व्याचष्टे—**तेषामिति**। उक्तेऽर्थे हेतुं पृच्छति—**कस्मादिति**। जिज्ञासितं हेतुमाह—**उच्यत इति**। उपायत्वेऽपि तदभावे कुतो नैष्कर्म्यासिद्धिरित्याशङ्क्याऽऽह—**न हीति**। ज्ञानयोगं प्रति कर्मयोगस्योपायत्वे श्रुतिस्मृती प्रमाणयति—**कर्मयोगेति**। श्रौतमुपायोपेयत्वप्रतिपादनं प्रकटयति—**श्रुताविति**। यत्तु गीताशास्त्रे कर्मयोगस्य ज्ञानयोगं प्रत्युपायत्वोपपादनं तदिदानीमुदाहरति—**इहापि चेति**। न कर्मणामित्यादिना पूर्वार्धं व्याख्यायोत्तरार्धं व्याख्यातुमाशङ्कयति—**नन्विति**। आदिशब्देन "शान्तो दान्त उपरतस्तितिक्षुः" "संन्यासयोगाद्यतयः शुद्धसत्त्वाः" इत्यादि गृह्यते। तत्रैव लोकप्रसिद्धिमनुकूलयति—**लोके चेति**। प्रसिद्धतरम्—"यतो यतो निवर्तते ततस्ततो विमुच्यते। निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि" इत्यादिदर्शनादिति शेषः। लौकिकवैदिकप्रसिद्धिभ्यां सिद्धमर्थमाह—**अतश्चेति**। तत्रोत्तरत्वेनोत्तरार्धमवतार्य व्याकरोति—**अत आहेत्यादिना**। एवकारार्थमाह—**केवलादिति**। तदेव स्पष्टयति—**कर्मेति**। उक्तमेव नञमनुकृष्य क्रियापदेन संगतिं दर्शयति—**न प्राप्नोतीति** ॥ ४ ॥

**आ० भा०**—इतश्च नियोक्ष्यामीत्याह। न कर्मणामिति। कर्मणां युद्धादीनामनारंभेण नैष्कर्म्यं निष्कर्मतां काम्यकर्मपरित्यागेन प्राप्यत इति मोक्षं नाश्नुते। ज्ञानमेव तत्साधनं न तु कर्माकरणमित्यर्थः। कुतः। पुरुषत्वात्। सर्वदा स्थूलेन सूक्ष्मेण वा पूरेण युक्तो ननु जीवः। यदि कर्माकरणेन मुक्तिः स्यात् स्थावराणाम्। न चाकरणे कर्माभावान्मुक्तिर्भवति प्रतिजन्मकृतानामनंतकर्मणां भावात्। न च सर्वाणि भुक्तानि एकस्मिंश्छरीरे बहूनि हि कर्माणि करोति। तानि चैकैकानि बहुजन्मफलानि कानिचित् तत्र चैकैकानि कर्माणि भुंजन्प्राप्नोत्येव शेषेण मानुष्यम्। ततश्च बहुशरीरफलकर्माणीत्यसमाप्तिः। तच्चोक्तम्। 'जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु। स्त्री वाप्यनूनदशकं देहं मानुषमार्जते। चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः। अतोऽवित्वा परं देवं मोक्षाशा का महामुने' इति ब्राह्मे। यदि सादिः स्यात्संसारः पूर्वकर्माभावादतत्प्राप्तिः। अबंधकत्वं त्वकामेनैव भवति। तच्च वक्ष्यते अनिष्टमिष्टमिति। ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः। 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते। निवृत्तं सेवमानस्तु ब्रह्माभ्येति

सनातनम्' इति मानवे। अतस्तत्साम्यादकरणेऽपि भवतीत्यत आह—न चेति। संन्यासः काम्यकर्मपरित्यागः। काम्यानां कर्मणामिति वक्ष्यमाणत्वात्। अकामकर्मणामंतःकरणशुद्ध्या ज्ञानान्मोक्षो भवति। तच्चोक्तं 'कर्मभिः शुद्धसत्वस्य वैराग्यं जायते हृदि' इति भागवते। विरक्तानामेव च ज्ञानमुक्तम् 'न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन्॥ स्वप्ने निरुक्त्या गृहमेधसौख्यं न यस्य हेयानुमितं स्वयं स्यात्' इति। न तु फलाभावात् कर्माभावात् अतो न कर्मत्याग एव मोक्षसाधनम्। यत्याश्रमस्तु प्रायत्यार्थो भगवत्तोषणार्थश्च। अप्रयतत्वमेव हि प्रायो गृहस्थादीनाम् इतरकर्मोद्योगात्। अप्रयतानां च न ज्ञानम् तथा हि श्रुतिः "नाशांतो नासमाहित" इति। महांश्च यत्याश्रमे भगवतस्तोषः। तथा ह्याह 'यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषिणीम्' इति नारायणाष्टाक्षरकल्पे। आधिकारिकास्तु तथा एव प्रायत्ये समर्थाः। स एव च महान्भगवतस्तोषः। तच्चोक्तम् 'देवादीनामादिराज्ञां महोद्योगेऽपि भोगिनः॥ विष्णोश्चलति तद्योगोत्यतीव हरितोषणम्' इति पाद्मे॥ ४॥

आ० ज०—न कर्मणामिति। मोक्षस्य कर्मसाध्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह—**इतश्चेति**। स्ववर्णाश्रमोचिते युद्धादाविति शेषः। प्रागाधिकारिकत्वात्त्वया कर्म कर्तव्यमित्युक्तम् इदानीं कोऽपरो हेतुरुच्यत इत्यतो व्याचष्टे—**कर्मणामिति**। अयमभिप्रायः। कर्माणि न कार्याणीति वदन्प्रष्टव्यः। किं ज्ञानं न मोक्षसाधनम् अपि तु कर्माकरणमेवेति मत्वा कर्माणि त्यज्यंते उत ज्ञानं मोक्षसाधनं भवत्येव किं तु 'कर्मणा बध्यते जंतुः' इत्यादेः। कर्माणि तत्प्रतिबंधकानीति मत्वा आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रमाश्रित्येदमुच्यते अथ वा क्रिया कारकफलरूपस्य संसारस्य कर्मैव बीजम्। अकरणे च बीजाभावात्संसारो न भविष्यतीति युक्तिमाश्रित्य आद्यस्येदं दूषणम् न कर्मणामिति। नैष्कर्म्यशब्दस्यान्यथापि व्याख्यानान्नाद्य इत्यर्थः। ततः किमित्यत आह—**ज्ञानमेवेति**। उक्तमाक्षिप्य समाधत्ते—**कुत इति**। नैष्कर्म्यशब्दस्यान्यार्थतामंगीकृत्य कर्माकरणस्य मोक्षसाधनत्वनिराकरणे को हेतुरित्यर्थः। कथमस्य हेतुत्वमित्यतो व्याचष्टे—**सर्वदेति**। प्रलयेऽपि संभवार्थं स्थूलेन सूक्ष्मेण वेत्युक्तम्। तथाऽपि कथं हेतुत्वमित्यत आह—**यदीति**। स्यादित्यस्य पूर्वोत्तराभ्यां संबंधः। स्थावराणामित्यनधिकृतोपलक्षणम्। ततश्चानादौ संसारेऽनधिकृतदेहस्य संभवेन मुक्तिप्रसंगादधुनापि दृश्यमानस्य पुरुषत्वं न स्यादिति भावः। द्वितीयनिरासेऽप्यस्यैवार्थस्य तात्पर्यमाह—**नचेति**। कर्माभावात् संसारबीजाभावात्। अत्र नैष्कर्म्यमिति मुक्तिनामैव न तु परप्रमाणानुवादः। कुतो न भवतीत्यतोऽत्रापि पुरुषत्वादिति हेतुमभिप्रेत्याह—**प्रतीति**। जन्मनिजन्मनि कृतानामित्यर्थः। पुरुषत्वेनानादौ संसारेऽधिकृतानंतजन्मसंभवात्तत्र कृतानामनंतकर्मणां भावात्किमद्याकरणमात्रेण भवतीत्यर्थः। ननु पूर्वपूर्वशरीरकृतानि कर्माण्युत्तरोत्तरशरीरे भुक्तानि तत्कुतोऽनंतकर्मणां भावइत्यत आह—**नचेति**। कुतो नेत्यत आह—**एकस्मिन्निति**। हिशब्दो हेतौ बहून्यपि भुज्यतां को दोष इत्यत आह—**तानि च**। कानिचिदितिसंबंधः एकैकानीति प्रत्येकमित्यर्थः। ननु तथाविधान्यप्यनधिकृतजन्मभिर्भुक्तानीत्यत आह—**तत्र चेति**। तेषु कर्मसु भुंजन्भुंजानः। शेषेण कर्मशेषेण। मानुष्ये चाकरणमसंभावितमित्याह—**ततश्चेति**। असमाप्तिर्भोगेन कर्मणामिति शेषः। संभावनामात्रेणेयमुक्तं न तु प्रमितमित्यत आह—**तच्चोक्तमिति**। चतुर्दशवर्षात्। अनूनो दशको यस्येति विग्रहः। ह्रस्वदीर्घव्यत्ययेन चतुर्दशोर्ध्वजीविनीति स्त्रिया विशेषणम्। संसारश्चेति कर्मणामनंतत्वोपपादनम्। अतो भोगेन क्षयासंभवात्। अवित्वा अविदित्वा पुरुषशब्देनानादिदेहसंबंध उक्तः सोऽसिद्ध इत्यत आह—**यदीति**। अतत्प्राप्तिराकस्मिकस्य संसारस्याप्राप्तिः स्यात् अतः पुरुषत्वं सिद्धमिति। ननु संतु प्राग्भवीयान्यनंतकर्माणि तथाऽपि बंधकानि कथं प्रेक्षावता क्रियेरन्। न ह्यनंतानि पापानि प्राक्तनानि संतीत्येतावताऽघक्रियंत इत्यत आह—**अबंधकत्वं त्विति**। कर्मणां बंधहेतुत्वं त्वकामनादिनैव भवति। न त्वकरणेन प्रत्यवायस्यैव प्राप्तेरित्यर्थः। अकामेनाबंधकत्वं भगवत्संमतमिति भावेनाह—**तच्चेति**। संकरस्त्वकरणमसन्न संतं प्रत्यवायं जनयाति। कथं "असतः सज्जायेत" इति श्रुतेरित्यवादीत्। तद्भास्करः प्रत्येषधीत्। द्रव्यविषया श्रुतिः। गुणस्त्वसतोऽपि जायत इति। उभावपि स्थूलदृश्वानौ न ह्यकरणमसत्। तथा सति करणप्रसंगात् किं त्वभावः स च भाववत्तत्त्वमेवेति कथमकारणम्। गुणं प्रति कारणत्वे च द्रव्यकारणत्वं कुतो न भवेत्। ननु चात्रोपादानत्वस्य विवक्षितत्वादकारणस्य चाभावरूपतयासत्वेऽप्यत्र विवक्षितापादनत्वानुपपत्तेर्न प्रत्यवायजनकत्वमित्यभिप्रायइत्यत आह—**नहीति**। नह्यत्रोपादानत्वं विवक्षितं। किं तु निमित्तत्वमेवेत्युक्तम्। न च संन्यसनादेवेति पुनरुक्तम्। अत्रापि कर्मसंन्यसनस्य मोक्षसाधनत्वोक्तेरित्यत आह—**नन्विति**। निष्कामं ज्ञानपूर्वं चेति मानवे

वाक्ये तावन्निष्कामकर्मणा मोक्षः स्मृतः। स चोपपत्त्यंतरादर्शनान्निष्कामकर्मणः फलाभावादित्येव तत्रोपपत्तिरंगीकार्या यत एवं फलाभावस्यैव प्राधान्यम्। अतोऽकरणेऽपि फलाभावस्य साम्यान्मोक्षो भवत्येव। यत्प्राक्भवीयकर्मफलयुक्तम् निष्कामकरणपक्षेऽपि तत्समानम्। न च विनिगमने कारणाभावः। आयासाभावस्य सत्वात्। न च प्रत्यवायप्राप्तिः अमुमुक्षुविषयत्वसंभवात्। अतो न कर्माणि करोमीति भावः। अनेन कथमस्य परिहार इत्यत आह—**संन्यास इति।** तेन च निष्कामकर्मकरणमुपलक्ष्यत इति भावः। निष्कामकर्मकरणान्मोक्षं न प्राप्नोतीति। अतो न तत् प्रतिबंदीग्रहणं युक्तमित्यनेनोक्तम्। तथा च स्मृतिविरोध इत्यतः स्मृतेरभिप्रायमाह—**अकामेति।** सकाशादिति शेषः पुंसामिति वा। अकामकर्मभिरंतःकरणशुद्धिद्वारा ज्ञानं जायत इत्येतत्कुत इत्यत आह—**तच्चोक्तमिति।** नन्वत्र वैराग्यं जायत इत्युच्यते न तु ज्ञानमिति तत्राह—**विरक्तानामेवेति।** प्रागपि वैराग्यद्वारेत्यभिमतमिति भावः। तथाऽपि कथं विरोधपरिहारः। गीतायामकामकर्मणां मोक्षसाधनत्वाभावावधारणादित्यतस्तदभिप्रायमाह—**न त्विति।** फलाभावोपपत्तिकं कर्मणां मोक्षसाधनत्वं निषिद्ध्यते न तु सर्वथाऽपीत्यर्थः। प्रतिबंदीं मोचयति—**कर्माभावादिति।** अतः कर्माभावान्न मोक्षइत्यर्थः। श्लोकतात्पर्यमुपसंहरति—**अत इति।** ननु यत्याश्रमो मोक्षसाधनत्वेन श्रुत्यादिप्रसिद्धः तत्र चेयमेवोपपत्तिः। यत्तद्धर्माणां फलाभावः अतस्तत्साम्यादकरणेऽपि मोक्षो भवतीत्येतच्छंकानिरासार्थं चोक्तम्। न च संन्यसनादेवेति। एवं तर्हि श्रुत्यादिविरोध इत्यत आह—**यत्याश्रमस्त्विति।** प्रायत्यं प्रयतत्वमीश्वरे मनःसमाधानम्। यतेर्द्वारद्वयेन मोक्षसाधनत्वं श्रुत्यादेरभिप्रेतम्। फलाभावोपपत्तिकं तु गीतायां निवारितमतो न विरोध इति भावः। आश्रमांतरेऽपि प्रायत्यसंभवात्किं तदर्थं यत्याश्रमेणेत्यत आह—**अप्रयतत्वमेवेति।** इतरकर्मसु यजनादिषु। प्रायत्यं कथं मोक्षसाधनमित्यतो व्यतिरेकमुखेनोपपादयति। अप्रयतानां चेति। "प्रज्ञानेनैनमाप्नुयात्" इति श्रुतिशेषः। अशांतोऽभगवन्निष्ठः। असमाहितस्तत्र चित्तसमाधानरहितः। भगवत्तोषणस्याश्रमांतरेऽपि संभवात्किं यत्याश्रमेणेत्यत आह—**महांश्चेति।** तुरीयं परमहंसाख्यम्। वाक्यशेषेणान्वयः। यत्याश्रम एव चेत्प्रायत्यं महान्भगवतस्तोषश्च तर्हि तद्रहितानामाधिकारिकाण तदुभयाभावप्रसंग इत्यत आह—**आधिकारिकास्त्विति।** तत्स्था अधिकारस्थाः स एव अधिकारएव। तुष्यत्यनेनेतितोषः। समासांतविधेरनित्यत्वादादिराज्ञामित्युक्तम्। यथोक्तम् महाभाष्ये शुच्यांपि तटाकानीति॥ ४॥

**रा० भा०—सर्वस्य लौकिकस्य पुरुषस्य मोक्षेच्छायां संजातायां सहसैव ज्ञानयोगो दुष्कर इत्याह। न शास्त्रीयाणां कर्मणामनारम्भादेव पुरुषो नैष्कर्म्यं ज्ञाननिष्ठामाप्नोति सर्वेन्द्रियव्यापाराख्यकर्मोपरतिपूर्विकां ज्ञाननिष्ठां न प्राप्नोतीत्यर्थः। न चारब्धस्य शास्त्रीयस्य कर्मणस्त्यागात् यतोऽनभिसंहितफलस्य परमपुरुषाराधनमेवास्य कर्मणः सिद्धिरतस्तेन विना तां न प्राप्नोति अनभिसंहितफलैः कर्मभिरनाराधितगोविन्दैरविनष्टानादिकालप्रवृत्तानन्तपापसंचयैरव्याकुलेन्द्रियतापूर्विकात्मनिष्ठा दुःसंपाद्या॥ ४॥**

अ० टी०—नन्वेवं चेत्तदा मां प्रति कर्मकरणं किमाशयेनाज्ञप्तमित्यत आह—**न कर्मणामिति।** कर्मणामनारम्भादकरणान्नैष्कर्म्यं कर्मादिरहितभावं भक्तिरूपं नाश्नुते न प्राप्नोतीत्यर्थः। अत्रायंभावः। कर्मस्वरूपज्ञानाभावे त्यागे न कोऽपि पुरुषार्थः सिध्येत् तस्माद्धेयत्वज्ञानार्थं तत्करणम्। अत एवारम्भ एवोक्तो न त्वाद्यं तत्करणमुक्तं। स्वरूपाज्ञाने केवलं न भवतीत्याह—**नचेति।** संन्यसनादेव स्वरूपाज्ञानात् केवलत्यागेन सिद्धिं त्यागफलं न च समधिगच्छति सम्यक् न प्राप्नोतीत्यर्थः॥ ४॥

नी० टी०—अनयोः प्रकारयोरंगांगिभावमाह—**न कर्मणामिति।** कर्मणां यज्ञादीनामनारंभादननुष्ठानात् नैष्कर्म्यं ज्ञाननिष्ठां नाश्नुते न प्राप्नोति। विविदिषंति यज्ञेनेति श्रुत्या यज्ञादीनां विद्यांगत्वेन विधानात्। ननु सन्प्रत्ययप्राधान्यात्कर्मणां विविदिषांगत्वमत्र गम्यते। तेन विविदिषायां यज्ञादिना सिद्धायाम् "एतमेव प्रव्राजिनो लोकमिच्छंतः प्रव्रजंति" इति श्रुतेः प्रव्रज्यारूपमेव नैष्कर्म्यमिह ज्ञाननिष्ठासाधनं ग्राह्यं। न ज्ञानं नैष्कर्म्यसिद्धिं परमामित्यादाविवात्र तद्ग्राहकस्य परमत्वविशेषणस्याभावात्। ननु कर्मयोगजनितचित्तशुद्ध्यभावे केवलात्संन्यासात् सिद्धिं समधिगच्छतीति योजनायां विप्रकृष्टयोर्ज्ञानकर्मणोः समुच्चयासंभवस्या-

भीष्टस्य सिद्धेः किमिति नैष्कर्म्यशब्देन निष्ठा गृह्यत इति चेत्सत्यं गुणैः कर्म कार्यत इति वाक्यशेषा-
न्नैर्गुण्यहेतुकं मुख्यं ज्ञानमेवेह नैष्कर्म्यपदार्थो न तु प्रव्रज्या। विविदिषंति यज्ञेनेत्यत्रापि जिगमिषत्य-
श्वेन जिघांसत्यसिनेत्यादाविव तृतीयांतस्य धात्वर्थेनैवान्वयादश्वादीनां गमनादाविव यज्ञादीनां वेदन
एवान्वयो ज्ञेयः । एतमेवेति श्रुतिस्तु विविदिषासंन्यासाभिप्रायेण प्रवृत्ता । "एतं वै तमात्मानं विदित्वा
ब्राह्मणाः पुत्रैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंति" इति ज्ञानपरिपाकार्थस्य जीवन्मुक्ति
सुखार्थस्य वा याज्ञवल्क्यादिभिरनुष्ठितस्य विद्वत्संन्यासस्यापि शास्त्रे दर्शनात्। असंन्यासिनो ज्ञानमेव
नोत्पद्यत इति प्राचामाग्रहो विक्षेपककर्मत्यागरूपसंन्यासविषयो न तु काषायपरिधानमात्रविषयः ।
गर्गीव्याधवासिष्ठादीनामतथाविधानामपि ज्ञानोत्पत्त्यवगमादित्यास्तां तावत्। कर्मभिरशोधितचित्तस्य मंदबुद्धेः
रागद्वेषादिग्रस्तस्यात्मानात्मविवेकद्वारा चित्तरोधद्वारा वा नैष्कर्म्यप्राप्तिर्नास्तीति पूर्वार्द्धार्थः । नन्वभयं
सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेदिति केवलात्कर्मसंन्यासादपि नैष्कर्म्यसिद्धिः स्मर्यते तत्कथमुच्यते न
कर्मणामनारंभान्नैष्कर्म्यमस्तीति तत्राह—**न चेति**। कर्मजचित्तशुद्ध्यभावे कृतादपि संन्यासान्न मोक्षसिद्धिः ।
उदाहृतस्मृतिस्तु चित्तशुद्धिपूर्वकसंन्यासाभिप्राया । न हि रागादिग्रस्तः सर्वभूतेभ्यः सर्वात्मनाऽभयं
दातुमीष्टेऽतो युक्तमुक्तं न च संन्यासनादेवेति ॥ ४ ॥

## न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥
## कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

**शां० भा०**—कस्मात्पुनः कारणात्कर्मसंन्यासमात्रादेव ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणां
पुरुषो नाधिगच्छतीति हेत्वाकाङ्क्षायामाह—न हीति । न हि यस्मात्क्षणमपि कालं जातु कदा-
चित्कश्चित्तिष्ठत्यकर्मकृत्सन् । कस्मात्कार्यते हि यस्मादवश एव कर्म सर्वः प्राणी प्रकृतिजैः
प्रकृतितो जातैः सत्त्वरजस्तमोभिर्गुणैः । अज्ञ इति वाक्यशेषो यतो वक्ष्यति—'गुणैर्यो न विचा-
ल्यते' इति । सांख्यानां पृथक्करणादज्ञानामेव हि कर्मयोगो न ज्ञानिनाम् । ज्ञानिनां तु गुणैरचाल्य-
मानानां स्वतश्चलनाभावात्कर्मयोगो नोपपद्यते । तथा च व्याख्यातं वेदाविनाशिनमित्यत्र ॥ ५ ॥

**शां० आ०**—उक्तेऽर्थे बुभुत्सितं हेतुं वक्तुमुत्तरश्लोकमुत्थापयति—**कस्मादिति**। कस्मान्न कर्मसंन्यासादेव सिद्धिम-
धिगच्छतीति पूर्वेण संबन्धः । कदाचित्क्षणमात्रमपि न कश्चिदकर्मकृत्तिष्ठतीत्यत्र हेतुत्वेनोत्तरार्धं व्याचष्टे—**कस्मादिति**।
सर्वशब्दाज्ज्ञानवानपि गुणैरवशः सन्कर्म कार्यते ततश्च ज्ञानवतः संन्यासवचनमनवकाशं स्यादित्याशङ्क्याऽऽह—**अज्ञ इतीति**।
तमेव वाक्यशेषं वाक्यशेषावष्टम्भेन स्पष्टयति—**यत इति** । आत्मज्ञानवतो गुणैरविचाल्यतया गुणातीतत्ववचनादज्ञस्यैव
सत्त्वादिगुणैरिच्छाभेदेन कार्यकरणसंघातं प्रवर्तयितुमशक्तस्याजितकार्यकरणसंघातस्य क्रियासु प्रवर्तमानत्वमित्यर्थः । ज्ञानयोगेने-
त्यादिनोक्तन्यायाच्च वाक्यशेषोपपत्तिरित्याह—**सांख्यानामिति**। ज्ञानिनां गुणप्रयुक्तचलनाभावेऽपि स्वाभाविकचलनबलात्कर्म-
योगो भविष्यतीत्याशङ्क्याऽऽह—**ज्ञानिनां त्विति** । प्रत्यगात्मनि स्वारसिकचलनासंभवे प्रागुक्तं न्यायं स्मारयति—
**तथा चेति** ॥ ५ ॥

**आ० भा०**—न तु कर्माणि सर्वात्मना त्यक्तुं शक्यानीत्याह—न हीति ॥ ५ ॥

**आ० ज०**—ज्ञानरहितात्कर्मत्यागरूपाच्चाश्रमात्सिद्धिं न समधिगच्छतीति किल पूर्वमुक्तम् । तत्र हेत्वाकांक्षायां न हि
कश्चिदित्युच्यत इति व्याख्यानमसदिति भावेन श्लोकतात्पर्यमाह—**न त्विति**। न ह्यत्र ज्ञानस्यावश्यकत्वे किंचिदुच्यते । नापि
यज्ञादिकर्माकरणस्यासंभवोऽभिधीयते येन प्रकृतसंगतिः स्यात् किं तु शरीरयात्राद्यर्थानां कर्मणामपरिहार्यत्वम् । अतो नेदं
व्याख्यानं अपि तर्हि 'कर्मणा बध्यते जंतुः' इति स्मृतिमाश्रित्य यस्तृतीयः पक्षस्तमाशंक्य यज्ञार्थादिति स्मृतेरर्थसंकोचं वक्ष्यति ।

तत्र कुतः स्मृतेरर्थसंकोच इत्याकांक्षा स्यात्। तामपाकर्तुमुपोद्घातन्यायेन कर्मशब्दस्तावदसंकुचितार्थः परेणाप्यंगीकर्तुमशक्य इति प्रतिपादयितुं कर्माणि सर्वात्मना त्यक्तुं नैव शक्यानीत्यनेनाहेति भावः ॥ ५ ॥

**रा० भा०**—एतदेवोपपादयति न ह्यस्मिन् लोके वर्तमानः पुरुषः कश्चित्कदाचिदपि कर्माकुर्वाणस्तिष्ठति न किंचित्करोमीति व्यवसितोऽपि सर्वः पुरुषः प्रकृतिसमुद्भवैः सत्त्वरजस्तमोभिः प्राक्तनकर्मानुगुणं प्रवृद्धैर्गुणैः स्वोचितं कर्म प्रत्यवशः कार्यते प्रवर्त्यते अत उक्तलक्षणेन कर्मयोगेन प्राचीनं पापसंचयं नाशयित्वा गुणांश्च सत्वादीन् वशे कृत्वा निर्मलान्तःकरणेन संपाद्यो ज्ञानयोगः ॥ ५ ॥

**अ० टी०**—अज्ञात्वा कर्मकरणे तत्त्यागोपि न भवति ज्ञात्वाऽज्ञात्वा वा कर्म तु करोत्येवेत्याह—**न हीति**। कश्चित् जातु कदाचित् क्षणमपि अकर्मकृत् कर्माण्यकुर्वन्न तिष्ठति। कुत इत्य आह—सर्वः प्रकृतिजैर्गुणः सात्त्विकादिभिः कर्म कार्यते कर्मणि प्रवर्तते। तत्र कारणमाह—**ह्यवश इति**। हीति निश्चयेन अवशः न मद्वशो भक्त इत्यर्थः। अतस्तदारम्भात् स्वरूपज्ञानानन्तरं प्राकृतकार्यतां तेषु ज्ञात्वा मद्वशो भूत्वा त्यजेदिति भावः ॥ ५ ॥

**नी० टी०**—एतदेव प्रपंचयति—**न हीति**। अवशः कर्मजशुद्ध्यभावादजितचित्तः कश्चिदपि जातु कदाचित् समाधिकालेऽपि क्षणमपि अकर्मकृत् कर्माणि दुर्मनोरथादीनि अकुर्वन् हि प्रसिद्धं न तिष्ठति। हि यस्मात् सर्वोऽपि लोकः प्रकृतिजैर्गुणैः सत्त्वरजस्तमोभिः स्वभावप्रभवैः रागद्वेषादिभिर्वा कर्म कायिकं वाचिकं मानसिकं वा कार्यतेऽवश्यं तत्र प्रवर्त्यते ॥ ५ ॥

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ॥**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥**

**शां० भा०**—यस्त्वनात्मज्ञश्चोदितं कर्म नाऽऽरभत इति तदसदेवेत्याह—**कर्मेन्द्रियाणीति**। कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य य आस्ते तिष्ठति मनसा स्मरंश्चिन्तयन्निन्द्रियार्थान्विषयान्विमूढात्मा विमूढान्तःकरणो मिथ्याचारो मृषाचारः पापाचारः स उच्यते ॥ ६ ॥

**शां० आ०**—आत्मवदनात्मज्ञस्यापि तर्हि कर्माकुर्वतो न प्रत्यवायः शरीरेन्द्रियसंघातं नियन्तुमसमर्थस्य मूर्खस्यापि संन्याससंभवादित्याशङ्क्याऽऽह—**यस्त्विति**। तस्य चोदिताकरणं तच्छब्देन परामृश्यते। **तदसदिति**। मिथ्याचारत्वादिति भावः। मिथ्याचारतामेव वर्णयति—**कर्मेन्द्रियाणीति** ॥ ६ ॥

**आ० भा०**—तथापि शक्तितः त्यागः कार्य इत्याह। कर्मेद्रियाणीति ॥ ६ ॥

**आ० ज०**—तथाऽपि कर्मेंद्रियाणित्यसंगतम्। तृतीयपक्षस्थेन मनसेंद्रियार्थस्मरणस्यानुक्तत्त्वादित्यत आह—**तथापीति**। यद्यपि शरीरयात्राद्यर्थानि कर्माणि त्यक्तुमशक्यानि। तथाऽपि शक्तितः शक्यत्वाद्यज्ञादिकर्मणां त्यागः कार्यः। एतदुक्तं भवति। नाशक्यविषये शास्त्रप्रवृत्तिरित्यतस्तदतिरिक्तकर्मार्थः स्मृतौ कर्मशब्दो भविष्यतीति। एतच्छंकापरिहारः श्लोकेन दृश्यते। द्वितीयश्लोकश्च व्यर्थ इत्यतआह—**मन एवेति**। मन एव बंधमोक्षयोः प्रयोजकं न कर्मकरणाकरणे। अतस्तन्निग्रह एव कार्यो न कर्मत्याग इति। ज्ञापयितुमित्यर्थः। अनिगृहीतत्वे मनसो बंधापेक्षयाऽऽद्योऽन्वयो द्वितीयोव्यतिरेकः। मोक्षापेक्षया तु व्यत्यास इति। एतेन स्मरणस्य मानसत्वव्यभिचारान्मनसेति। व्यर्थमित्यपि परास्तम्। कर्मयोगेन योगिनामित्यत्र कर्मयोगशब्दस्य गृहस्थादिकर्मविषयत्वेन प्रकृतत्वादत्रापि तद्विषयत्वप्रतीतिः स्यात्। तन्निरासार्थमाह—**कर्मयोगमिति**। गृहस्थकर्मैव वनस्थकर्मैव ब्रह्मचारिकर्मैवेति नियमो न विवक्षित इत्यर्थः। संन्यासादीत्यादिपदेन यो नियम्यते तद्व्यतिरिक्तग्रहणं। कर्मयोगशब्दस्य

सामान्यवाचित्वाच्च । पूर्वं ज्ञानयोगेन सांख्यानामिति यत्याश्रमकर्मणः पृथगुक्तत्वात्सामान्यशब्दोऽपि विशेषो व्यवस्थापितः । न चात्र तथाविधं किंचिदस्तीति भावः ॥ ६ ॥

**रा० भा०**—अन्यथा ज्ञानयोगाय प्रवृत्तोऽपि मिथ्याचारो भवतीत्याह । अविनष्टपापतया अजितबाह्यान्तःकरण आत्मज्ञानाय प्रवृत्तो विषयप्रवणतयाऽऽत्मनि विमुखीकृतमनाः विषयानेव स्मरन् य आस्ते अन्यथा संकल्प्यान्यथा चरतीति स मिथ्याचार उच्यते आत्मज्ञानायोद्युक्तो विपरीतो विनष्टो भवतीत्यर्थः ॥ ६ ॥

**अ० टी०**—अज्ञानात्कर्मत्यागी दाम्भिको न त्यागफलमाप्नोतीत्याह—**कर्मेन्द्रियाणीति** । कर्मेन्द्रियाणि हस्तपादादीनि संयम्य निरुध्य । मनसा इन्द्रियार्थान् विषयान् स्मरन् य आस्ते तिष्ठति भगवद्ध्यानदशापन्न इव लोकज्ञापनार्थं स विमूढात्मा मिथ्याचारः मिथ्याचरतीति दाम्भिक उच्यत इत्यर्थः ॥ ६ ॥

**नी० टी०**—ननु संन्यासपूर्वकं ध्यानेनैव चित्तशुद्धिमपि संपादयिष्यामि किं कर्मभिरित्याशंक्याह—**कर्मेंद्रियाणीति** । यो विमूढात्मा रागाद्याक्रांतचित्तः कर्मेंद्रियाणि वागादीनि संमम्य निगृह्य आस्ते एकांते ध्यानापदेशेनोपविशति स मिथ्याचारः तस्य तदासननियमनादिकमाचरणं मिथ्या अलीकमेव निष्फलत्वात् तत्र हेतुः इंद्रियार्थान्मनसा स्मरन्निति यतः इंद्रियार्थान् शब्दादीन् श्रोत्रादिभिर्गृह्णाति मनसा च स्मराति अतो मिथ्याचारः स विषयांश्चिंतयन्योगनिष्ठामात्मनो लोकेऽभिव्यनक्त्यतः कपटीत्यर्थः । तस्मात्कर्मव्यतिरिक्तश्चित्तशुद्ध्यपायो नास्तीति भावः ॥ ६ ॥

**यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन ॥**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

**शां० भा०**—यस्त्विति । यस्तु पुनः कर्मण्यधिकृतोऽज्ञो बुद्धीन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन कर्मेन्द्रियैर्वाक्पाण्यादिभिः । किमारभत इत्याह—कर्मयोगमसक्तः सन्स विशिष्यत इतरस्मान्मिथ्याचारात् ॥ ७ ॥

**शां० आ०**—अनात्मज्ञस्य चोदितमकुर्वतो जाग्रतो विषयान्तरदर्शनध्रौव्यान्मिथ्याचारत्वेन प्रत्यवायित्वमुक्त्वा विहितमनुतिष्ठतस्तस्यैव फलाभिलाषविकलस्य सदाचारत्वेन वैशिष्ट्यमाचष्टे—**यस्त्विन्द्रियाणीति** । विहितमनुतिष्ठतो मूर्खात्कर्म त्यजतो वैशिष्ट्यमक्षरयोजनया स्पष्टयति—**यस्तु पुनरिति** ॥ ७ ॥

**आ० भा०**—मन एव प्रयोजकमिति दर्शयितुम् अन्वयव्यतिरेकावाह । मनसा स्मरन् मनसा नियम्येति । कर्मयोगं स्ववर्णाश्रमोचितं । न तु गृहस्थकर्मैवेति नियमः । संन्यासादिविधानात् सामान्यवचनाच्च ॥ ७ ॥

**आ० ज०**—॥ ७ ॥

**रा० भा०**—अतः पूर्वाभ्यस्तविषयसजातीये शास्त्रीये कर्मणीन्द्रियाण्यात्मावलोकनप्रवृत्तेन मनसा नियम्य तैः स्वत एव कर्मप्रवणैरिन्द्रियैरसङ्गपूर्वकं यः कर्मयोगमारभते सोऽसंभाव्यमानप्रमादत्वेन ज्ञाननिष्ठादपि पुरुषाद्विशिष्यते ॥ ७ ॥

अ० टी०—स्वरूपज्ञानेन त्यागी उत्तमस्तत्त्यागस्वरूपं तस्योत्तमत्वमाह—**यस्त्विति** । तुशब्दो लौकिकार्थनिग्रहपक्षं व्यावर्तयति । य इन्द्रियाणि मनसा नियम्य मनसा मदर्थे नियमे स्थापयित्वा कर्मेन्द्रियैर्वाक्चक्षुर्हस्तादिभिः कर्मणां कृतीनां योगं मया सह योगमसक्तः स्वसुखाभिलाषाभावेन मत्सुखार्थमेवारभते स विशिष्यते विशिष्टो भवति उत्तमो भवतीत्यर्थः ॥ ७ ॥

नी० टी०—यस्तु पूर्वस्मान्मिथ्याचाराद्विलक्षणः पुरुषधौरेय इंद्रियाणि मनसा सह नियम्य रागद्वेषवियुक्तानि कृत्वा कर्मेंद्रियैः कर्मयोगं आरभते हे अर्जुन सः कर्मफले स्वर्गादावैहिके वा शब्दादावसक्तोऽनासक्तोऽतो विशिष्यते पूर्वस्मादधिको भवतीत्यर्थः ॥ ७ ॥

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ॥
शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥

**शां० भा०**—यत एवमतः—**नियतमिति** । नियतं नित्यं यो यस्मिन्कर्मण्यधिकृतः फलाय चाश्रुतं तन्नियतं कर्म तत्कुरु त्वं हेऽर्जुन । यतः कर्म ज्यायोऽधिकतरं फलतो हि यस्मादकर्मणोऽकरणादनारम्भात् । कथं शरीरयात्रा शरीरस्थितिरपि च ते तव न प्रसिध्येत्प्रसिद्धिं न गच्छेदकर्मणोऽकरणात् । अतो दृष्टः कर्माकर्मणोर्विशेषो लोके ॥ ८ ॥

शां० आ०—कर्मानुष्ठायिनो वैशिष्ट्यमुपदिष्टमनूद्य तदनुष्ठानमधिकृतेन कर्तव्यमिति निगमयति—**यत इति** । उक्तमेव हेतुं भगवदनुमतिकथनेन स्फुटयति—**कर्मेति** । इतश्च त्वया कर्तव्यं कर्मेत्याह—**शरीरेति** । तन्नियतं तस्याधिकृतस्येति संबन्धः । स्वर्गादिफले दर्शपूर्णमासादावाधिकृतस्य तदपि नित्यं स्यादित्याशङ्क्य विशिनष्टि—**फलायेति** । नित्यं कर्म नियमेन कर्तव्यमित्यत्र हेतुमाह—**यत इति** । हिशब्दोपात्तमुक्तमेव हेतुमनुवदति—**यस्मादिति** । करणस्याकरणाज्ज्यायस्त्वं प्रश्नपूर्वकं प्रकटयति—**कथमित्यादिना** । सत्येव कर्मणि देहादिचेष्टाद्वारा शरीरं स्थातुं पारयाति तदभावे जीवनमेव दुर्लभं भवेदिति फलितमाह—**अत इति** ॥ ८ ॥

**आ० भा०**—अतो नियतं वर्णाश्रमोचितं कर्म कुरु ॥ ८ ॥

आ० ज०—उत्तरश्लोकपर्यालोचनया चैवमेवेति भावेन संगतिं सूचयन्व्याचष्टे—**अत इति** । अतःशब्दपरामृश्यं कर्मज्याय इत्यादिनैवोच्यते ॥ ८ ॥

**रा० भा०**—नियतं व्याप्तं प्रकृतिसंसृष्टेन हि व्याप्तं कर्म प्रकृतिसंसृष्टत्वमनादिवासनया नियतत्वेन सुशकत्वादसंभावितप्रमादत्वाच्च कर्मणः कर्मैव कुरु अकर्मणो ज्ञाननिष्ठाया अपि कर्मैव ज्यायः नैष्कर्म्यं पुरुषोऽश्नुत इति प्रक्रमात् । अकर्मशब्देन ज्ञाननिष्ठैवोच्यते ज्ञाननिष्ठाधिकारिणोऽप्यनभ्यस्तपूर्वतया ह्यनियतत्वेन दुःशकत्वात् सप्रमादत्वाच्च ज्ञाननिष्ठायाः कर्मनिष्ठैव ज्यायसी कर्मणि क्रियमाणे चात्मयाथात्म्यज्ञानेनात्मनोऽकर्तृत्वानुसंधानमनन्तरमेव वक्ष्यते अत आत्मज्ञानस्यापि कर्मयोगान्तर्गतत्वात्स एव ज्यायानित्यर्थः । कर्मणो ज्ञाननिष्ठाया ज्यायस्त्ववचनं ज्ञाननिष्ठायामधिकारे सत्येवोपपद्यते । यदि सर्वं कर्म परित्यज्य केवलं ज्ञाननिष्ठायामधिकरोषि तर्ह्यकर्मणस्ते ज्ञाननिष्ठास्य ज्ञाननिष्ठोपकारिणी शरीरयात्राऽपि न सिद्ध्यति यावत्साधनसमाप्ति शरीरधारणं चावश्यं कार्यं न्यायार्जितधनेन महायज्ञादिकं कृत्वा तच्छिष्टाशनेनैव शरीरधारणं कार्यम् । "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ।" इत्यादिश्रुतेः । 'भुञ्जते ते त्वघं पापाः' इति च वक्ष्यते । अतो

ज्ञाननिष्ठस्यापि कर्माकुर्वतो देहयात्रा न सेत्स्यति यतो ज्ञाननिष्ठस्यापि ध्रियमाणशरीरस्य यावत्साधनसमाप्ति महायज्ञादिनित्यनैमित्तिककर्मावश्यं कार्यम् । यतश्च कर्मयोगेऽप्यात्मनोऽकर्तृत्वभावनयात्मयाथात्म्यानुसन्धानमन्तर्भूतं यतश्च प्रकृतिसंसृष्टस्य कर्मयोगः सुशकोऽप्रमादश्च अतो ज्ञाननिष्ठायोग्यस्यापि ज्ञानयोगात् कर्मयोगो ज्यायान् तस्मात् त्वं कर्मयोगमेव कुर्वित्यभिप्रायः ॥ ८ ॥

अ० टी०—यस्माल्लौकिकफलोत्पत्त्यर्थं कर्तुर्न फलमलौकिकं मदर्थं कर्म कर्तुरुत्तमं फलमतस्त्वं मदर्थं नियतं कर्म कुर्वित्याह—**नियतमिति** । त्वं नियतं नित्यं मत्सेवादिरूपं कर्म कुरु । पूर्वोक्तन्यायेन मदर्थं वा । यतोऽकर्मणः कर्मत्यागकर्तुर्ज्ञानवतः सकाशात् कर्म मत्सेवादिरूपं ज्यायः अधिकतरं । किं च । ते मदर्थं मत्क्रीडार्थं गृहीतशरीरकार्यम् । अकर्मणः सेवादिरहितज्ञानमार्गे प्रपन्नस्य प्रकर्षेण न सिध्येत् न सेत्स्यतीत्यर्थः । ज्ञानमार्गेऽपि ज्ञानप्राप्तिपर्यन्तं शरीराऽपेक्षास्ति तदनन्तरं तु नापेक्षा भक्तिमार्गवदक्षण्वतां फलमिदमितिन्यायेन । तस्मात्सर्वात्मना सेन्द्रियशरीरकार्यसिद्धौ प्रकर्ष इति भावः । अत एव वियोगक्लेशादिरससिद्ध्यर्थं शरीरपदमुक्तम् ॥ ८ ॥

नी० टी०—नीयतमिति यस्मादेवं तस्मात्त्वं संध्योपासनादिकर्मैव कुरु । यद्वा नियतं नियमेन त्वं कर्म नित्यकाम्यसाधारणं यत्पापनिवर्त्तकस्वभावं तत्तदेव कुरु हि यस्मात् अकर्मणः सकलकर्मेंद्रियनिग्रहेण तदकरणात् चित्तजयशून्यात्कर्मैव ज्यायः प्रशस्ततरं । अपि च ते तव क्षत्रियस्य अकर्मणः सत्यामपि चित्तशुद्धौ सर्वकर्मत्यागिनः शरीरयात्रा देहव्यवहारो न प्रसिद्ध्येत् भैक्ष्यचर्यायामनधिकारात् । ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंतीति संन्यासविधायके वाक्ये राजा राजसूयेन स्वाराज्यकामो यजेतेत्यत्र राजपदवद्ब्राह्मणपदस्य विवक्षितस्यार्थत्वात् चत्वार आश्रमा ब्राह्मणस्य त्रयो राजन्यस्य द्वौ वैश्यस्येति स्मृतेश्च । अन्यत्राप्युक्तं पारिव्राज्यं प्रकृत्य 'मुखजानामयं धर्मो वैष्णवं लिंगधारणं ॥ बाहुजातोरुजातानां नायं धर्मो विधीयते' इति ॥ ८ ॥

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ॥**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

**शां० भा०—यच्च मन्यसे बन्धार्थत्वात्कर्म न कर्तव्यमिति तदप्यसत्, कथम्—यज्ञार्थादिति । "यज्ञो वै विष्णुः" इति श्रुतेर्यज्ञ ईश्वरस्तदर्थं यत्क्रियते तद्यज्ञार्थं कर्म, तस्मात्कर्मणोऽन्यत्रान्येन कर्मणा लोकोऽयमधिकृतः कर्मकृत्कर्मबन्धनः कर्म बन्धनं यस्य सोऽयं कर्मबन्धनो लोको न तु यज्ञार्थादतस्तदर्थं यज्ञार्थं कर्म कौन्तेय मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन्समाचर निर्वर्तय ॥ ९ ॥**

शां० आ०—कर्मणा बध्यते जन्तुरिति स्मृतेर्बन्धार्थं कर्म तन्न श्रेयोर्थिना कर्तव्यमित्याशङ्कामनूद्य दूषयति—**यच्चेत्यादिना**। कर्माधिकृतस्य तदकरणमयुक्तमिति प्रतिज्ञातं प्रश्नपूर्वकं विवृणोति—**कथमित्यादिना** । फलाभिसंधिमन्तरेण यज्ञार्थं कर्म कुर्वाणस्य बन्धाभावात्तादर्थ्येन कर्म कर्तव्यमित्याह—**तदर्थमिति** । यज्ञार्थं कर्मेत्ययुक्तं न हि कर्मार्थमेव कर्मेत्याशङ्क्य व्याचष्टे—**यज्ञो वै विष्णुरिति** । कथं तर्हि कर्मणा बध्यते जन्तुरिति स्मृतिस्तत्राऽऽह—**तस्मादिति** । ईश्वरार्पणबुद्ध्या कृतस्य कर्मणो बन्धार्थत्वाभावे फलितमाह—**अत इति** ॥ ९ ॥

**आ० भा०—कर्मणा बध्यते जंतुरिति कर्म बंधकं स्मृतमित्यत आह—यज्ञार्थादिति । कर्म बंधनं यस्य लोकस्य स कर्मबंधनः । यज्ञो विष्णुः । यज्ञार्थं संगरहितं कर्म न बंधकमित्यर्थः । मुक्तसंग**

इति विशेषणात्। "कामान्यः कामयते" इति श्रुतेश्च। अनिष्टमिष्टमिति वक्ष्यमाणत्वाच्च। एतान्यपि तु कर्माणीति च। तस्मान्नेष्टियाजुकः स्यादिति च। विशेषवचनत्वे समेऽपि विशेषणं परिशिष्यते॥९॥

**आ० ज०**—इदानीं तृतीयं पक्षमाशंक्य तत्परिहाराय श्लोकमवतारयति—**कर्मणेति**। बंधकं मोक्षस्य प्रतिबंधकं अतो न करोमीति शेषः। तत्पुरुषत्वभ्रांतिनिरासायाह—**कर्मेति**। तत्पुरुषत्वेऽसंगतिः स्यादिति भावः। यज्ञशब्दस्य यागार्थत्वप्रतीतिमपाकर्तुमाह—**यज्ञ इति**। अवैष्णवयागस्यापि बंधकत्वादितिभावः। तदर्थमित्युत्तरवाक्यस्यासंगतिपरिहारायार्थोत्सिद्धं पूर्ववाक्यार्थमाह—**यज्ञार्थमिति**। संगरहितमित्यनुक्तं कस्मादुक्तमित्यत आह—**मुक्तेति**। इष्टियाजुकः फलेच्छया यष्टा। ननु कर्मणा बध्यते जंतुरित्यपि विशेषवचनम्। अविद्यादीनामनेकेषां बंधकत्वेनाविद्यादिभिरिति सामान्यस्यानुपात्तत्वात्। गीतावाक्यं कर्म न बंधकमितीदमपि विशेषवचनं तत्कथं तत्परिहारायावतार्य व्याख्यातमित्यत आह—**विशेषेति**। यद्यप्युक्तविधया द्वयोर्विशेषवचनत्वं समं तथाऽपि गीतावाक्ये यज्ञार्थादित्यादिविशेषणमुच्यतेऽतस्तदपेक्षया तत्सामान्यवचनमेव। अतो युक्तमेतद्व्याख्यानमिति भावः। अयमत्र प्रत्युत्तरक्रमः कर्मणा बध्यत इतिवाक्यमाश्रित्य न युद्धादिकर्मत्यागः कार्यः। तस्यावैष्णवकाम्यकर्मविषयत्वात् कुतः संकोच इति चेत् परेणापि परिस्पंदमात्रस्य त्यक्तुमशक्यत्वेनासंकुचितार्थतायाः स्वीकर्तुमशक्यत्वात्। तर्ह्यत एव बाधकाच्छरीरयात्रार्थकर्मव्यतिरिक्तविषयत्वं कल्प्यत इति चेत् न वैयर्थ्यात्। एवमपि मनोव्यापारस्याल्पकत्वेन प्रतिबंधकाभावो न सिध्यति। तस्यैवान्वयव्यतिरेकाभ्यां प्रयोजकत्वावधारणात् बाधकात्संकोचमंगीकुर्वतां चायमपि संकोचोऽगीकार्यः। विधानसामर्थ्याद्युद्धादीनामपि तत्तद्वर्णाश्रमोचितत्वात्। न च विधानस्यामुमुक्षुविषयत्वम् कल्पकाभावात्। नचेदमेव वाक्यं कल्पकम्। तस्यावैष्णवादिकर्मत्यागेन चरितार्थत्वात्। धर्मिपरित्यागाद्धर्ममात्रपरित्यागस्य ज्यायस्त्वात्। अतो न कर्मस्वरूपं त्याज्यमिति॥ ९॥

**रा० भा०**—एवं तर्हि द्रव्यार्जनादिकर्मणोऽहङ्कारममकारादिसर्वेन्द्रियव्याकुलतागर्भत्वेनास्य पुरुषस्य कर्मवासनया बन्धनं भविष्यतीत्यत्राह। यज्ञादिशास्त्रीयकर्मशेषभूताद् द्रव्यार्जनादेः कर्मणोऽन्यत्रात्मीयप्रयोजनशेषभूते कर्मणि क्रियमाणेऽयं लोकः कर्मबन्धनो भवति अतस्त्वं यज्ञाद्यर्थं द्रव्यार्जनादिकं कर्म समाचर तत्र आत्मप्रयोजनसाधनतया यः सङ्गस्तस्मात्सङ्गान्मुक्तः सन् समाचर। एवं मुक्तसङ्गेन यज्ञाद्यर्थतया कर्मणि क्रियमाणे यज्ञादिभिः कर्मभिराराधितः परमपुरुषोऽस्यानादिकालप्रवृत्तकर्मवासनां समुच्छिद्याव्याकुलात्मावलोकनं ददातीत्यर्थः॥ ९॥

**अ० टी०**—नन्वेवं चेत्तदा कर्माकरणं पूर्वं कथमुक्तमित्याशंक्याह—**यज्ञार्थादिति**। अन्यत्र मत्सेवातोऽन्यत्र कर्ममार्गे कर्मबन्धनः कर्मनिबन्धनोऽयं लोकः। कर्मणो यज्ञार्थादित्युक्त्वा कर्म कार्यमित्याहुस्ततस्तत्कर्म न मत्फलकमिति मया बन्धकत्वात्तत्त्याग उक्तः। यतस्तत्कर्मबन्धकमतस्तत्त्यक्त्वा कर्म कुर्वित्याह—**तदर्थमिति**। तदर्थं यज्ञार्थं मुक्तसंगः सन् कर्म मत्सेवारूपं समाचार सम्यक्प्रकारेण कुरु॥९॥

**नी० टी०**—ननु कर्मणा बध्यते जंतुरिति कर्मणां बंधकत्वस्मृतेः कथं मुमुक्षुं मां तत्र नियोजयसीत्याशंक्याह—**यज्ञार्थादिति**। यज्ञः परमेश्वराराधनं। यज देवपूजायामिति धात्वर्थानुगमात् तदर्थं "यज्ञो वै विष्णुः" इति श्रुतेर्विष्णुर्वा तदाराधनार्थं यत्कर्म ततोऽन्यत्र कर्मणि स्वर्गाद्यर्थे प्रवृत्तोऽयं लोकः कर्मबंधनः कर्मणा बध्यते नत्वीश्वराराधनार्थेन अतस्तदर्थं ईश्वराराधनार्थं कर्म वर्णाश्रमोचितं हे कौंतेय मुक्तसंगः फलाभिलाषशून्यः सन् समाचर सम्यक्कुरु॥ ९॥

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः॥**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥ १०॥**

**शां० भा०**—इतश्चाधिकृतेन कर्म कर्तव्यम्—सहेति । सहयज्ञा यज्ञसहिताः प्रजास्त्रयो वर्णास्ताः सृष्ट्वोत्पाद्य पुरा सर्गादावुवाचोक्तवान्प्रजापतिः प्रजानां स्रष्टा, अनेन यज्ञेन प्रसविष्यध्वं प्रसवो वृद्धिरुत्पत्तिस्तां कुरुध्वम् । एष यज्ञो वो युष्माकमस्तु भवत्विष्टकामधुगिष्टानभिप्रेतान्कामान्फलविशेषान्दोग्धीतीष्टकामधुक् ॥ १० ॥

शां० आ०—नित्यस्य कर्मणो नैमित्तिकसहितस्याधिकृतेन कर्तव्यत्वे हेत्वन्तरपरत्वेनानन्तरश्लोकमवतारयाति—**इतश्चेति** । कथं पुनरनेन यज्ञेन वृद्धिरस्माभिः शक्या कर्तुमित्याशङ्क्याऽऽह—**एष इति** ॥ १० ॥

**आ० भा०**—अत्रार्थवादमाह—सहयज्ञा इति ॥ १० ॥

आ० ज०—सहयज्ञा इत्यादेर्न प्रकृते संगतिर्दृश्यते अत आह—**अत्रेति** । वर्णाश्रमोचितस्य कर्मणः सर्वथा कर्तव्यत्वे स्तुतिर्निंदा परकृतिः पुराकल्पोऽर्थवादः ॥ १० ॥

**रा० भा०**—यज्ञशिष्टेनैव सर्वपुरुषार्थसाधननिष्ठानां शरीरधारणकर्तव्यताम् अयज्ञशिष्टेन शरीरधारणं कुर्वतां दोषमाह । "पतिं विश्वस्येत्यादि" श्रुतेर्निरुपाधिकः प्रजापतिशब्दः सर्वेश्वरं विश्वस्रष्टारं विश्वात्मानं परायणं नारायणमाह । पुरा सर्गकाले स भगवान् प्रजापतिरनादिकालप्रवृत्ताचित्संसर्गविवशाः उपसंहृतनामरूपविभागाः स्वस्मिन् प्रलीनाः सकलपुरुषार्थानर्हाश्चेतनेतरकल्पाः प्रजाः समीक्ष्य परमकारुणिकः तदुज्जिजीवयिषयाराधनभूतयज्ञनिर्वृतये यज्ञैः सह ताः सृष्ट्वैवमुवाच अनेन यज्ञेन प्रसविष्यध्वम् आत्मनो वृद्धिं कुरुध्वम् एष वो यज्ञः परमपुरुषार्थलक्षणमोक्षाख्यस्य कामस्य तदनुगुणानां कामानां प्रपूरयिता भवत्वित्यर्थः ॥ १० ॥

अ० टी०—ननु तादृशं कर्म त्याज्यमेव चेत्त्वन्मतं तदा केनोक्तं कथमाचरति लोक इत्याशङ्क्यैतत्कर्मप्रवृत्तिपरं मदाज्ञया प्रवृत्तिप्रवर्त्तकब्रह्मणोक्तं लोकः समाचरतीत्याह—**सहयज्ञा इति** । प्रजापतिः ब्रह्मा सहयज्ञाः प्रजाः सृष्ट्वा प्रवृत्तिधर्मसहिताः प्रजाः सृष्ट्वा पुरा मदवतारात् पूर्वमुवाच । मत्प्रादुर्भावानन्तरं तु मया भक्तिरेवोक्तेति ज्ञापनाय पुरेत्युक्तं । तद्वाक्यमेवाह—**अनेनेति** । अनेन यज्ञेन प्रसविष्यध्वं प्रकर्षेण वृद्धिं प्राप्स्यथ । किंच । एष यज्ञः वो युष्माकम् इष्टकामधुक् अभीष्टफलदोऽस्तु भगवदाज्ञया ब्रह्मवाक्यं न मृषा भवतीति वरमेव दत्तवान् ॥ १० ॥

**नी० टी०**—एतदेवार्थवादेन द्रढयति सहेति यज्ञैः सहेति सहयज्ञाः । वोपसर्जनस्येति पक्षे सादेशाभावः । कर्माधिकृता इति यावत् प्रजास्त्रैवर्णिकाः अनेन यज्ञेन प्रसविष्यध्वं प्रसवो वृद्धिस्तां लभध्वं एष यज्ञो वो युष्माकमिष्टकामधुक् इष्टार्थपूरकोऽस्तु ॥ १० ॥

## देवान्भावयतानेन ते देवा भावयन्तु वः ॥
## परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

**शां० भा०**—कथम्—देवानिति । देवानिन्द्रादीन्भावयत वर्धयतानेन यज्ञेन ते देवा भावयन्त्वाप्याययन्तु वृष्ट्यादिना वो युष्मानेवं परस्परमन्योन्यं भावयन्तः श्रेयः परमपि ज्ञानप्राप्तिक्रमेणावाप्स्यथ स्वर्गं वा परं श्रेयोऽवाप्स्यथ ॥ ११ ॥

शां० आ०—कथं पुनरभीष्टफलविशेषहेतुत्वं यज्ञस्य विज्ञायते न हि देवताप्रसादादृते स्वर्गादिरभ्युदयो लभ्यते नापि सम्यग्दर्शनमन्तरेण निःश्रेयसं सेद्धुं पारयतीति शङ्कते—**कथमिति** । तत्र श्लोकेनोत्तरमाह—**देवानिति** । मुमुक्षुत्वबुभुक्षुत्वविभागेन श्रेयसि विकल्पः ॥ ११ ॥

आ० भा०—॥ ११ ॥

आ० ज०— ॥ ११ ॥

रा० भा०—कथं अनेन देवताऽराधनभूतेन देवान्मच्छरीरभूतान्मदात्मकानाराधयता 'अहं हि सर्वयज्ञानां भोक्ता' इति वक्ष्यते यज्ञेनाराधितास्ते देवा मदात्मकाः स्वाराधनापेक्षितान्नपानाद्यैर्युष्मान् पुष्णन्तु एवं परस्परं भावयन्तः परं श्रेयो मोक्षाख्यमवाप्स्यथ ॥ ११ ॥

अ० टी०—ननु कर्मणा जगतः कथमभीष्टमित्याशङ्क्याह—देवानिति । अनेन यज्ञेन देवान् तत्तत्कर्माधिष्ठातॄन् भावयत संवर्द्धयत। ते देवा वो युष्मान् भावयन्तु संवर्द्धयन्तु । अत्रायमर्थः । हविर्भागैस्तेषु यूयं देवत्वं वर्द्धयन्तु ते च भवत्सु तत्कर्मसाधनानि वर्द्धयन्तु । एवं परस्परं भावयन्तः संवर्धयन्तो यूयं देवाश्च श्रेयः स्वाभीष्टम् अवाप्स्यथ ॥ ११ ॥

नी० टी०—इष्टार्थपूरकत्वमेवाह—देवानिति। भावयत तर्पयत अनेन देवतापूजात्मकेन यज्ञेन वः युष्मान् भावयंतु वृष्ट्यादिदानेन परस्परं भावयन्तो देवाश्च यूयं च श्रेयः परं प्राप्स्यथ ॥ ११ ॥

**इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ॥**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥**

शां० भा०—किंच—इष्टान्भोगानिति । इष्टानभिप्रेतान्भोगान्हि वो युष्मभ्यं देवा दास्यन्ते वितरिष्यन्ति स्त्रीपशुपुत्रादीन्यज्ञभाविता यज्ञैर्वर्धितास्तोषिता इत्यर्थः । तैर्देवैर्दत्तान्भोगानप्रदायादत्वाऽऽनृण्यमकृत्वेत्यर्थः, एभ्यो देवेभ्यो यो भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव स देवादिस्वापहारी ॥ १२ ॥

शां० आ०—इतश्चाधिकृतेन कर्म कर्तव्यमित्याह—किंचेति । कथमस्माभिर्भाविताः सन्तो देवा भावयिष्यन्त्यस्मानिति तदाह—इष्टानिति । यज्ञानुष्ठानेन पूर्वोक्तरीत्या स्वर्गापवर्गयोर्भावेऽपि कथं स्त्रीपशुपुत्रादिसिद्धिरित्याशङ्क्य पूर्वार्धं व्याकरोति—इष्टानभिप्रेतानिति । पश्वादिभिश्च यज्ञानुष्ठानद्वारा भोगो निर्वर्तनीयोऽन्यथा प्रत्यवायप्रसङ्गादित्युत्तरार्धं व्याचष्टे—तैरिति । आनृण्यमकृत्वेत्ययमर्थः—देवानामृषीणां पितॄणां च यज्ञेन ब्रह्मचर्येण प्रजया च संतोषमनापाद्य स्वकीयं कार्यकरणसंघातमेव पोष्टुं भुञ्जानस्तस्करो भवतीति ॥ १२ ॥

आ० भा०—॥ १२ ॥

आ० ज०—॥ १२ ॥

रा० भा०—यज्ञभाविताः यज्ञेनाराधिताः मदात्मका देवा इष्टान् भोगान् वो दास्यन्ते परमपुरुषार्थलक्षणं मोक्षं साधयतां ये इष्टा भोगास्तान् पूर्वपूर्वयज्ञभाविता देवा दास्यन्ते उत्तरोत्तराराधनापेक्षितान् सर्वान् भोगान् वो दास्यन्तीत्यर्थः । स्वाराधनार्थतया तैर्दत्तान् भोगांस्तेभ्यो न प्रदाय यो भुङ्क्ते चोर एव सः चौर्यं हि नाम अन्यदीये तत्प्रयोजनायैव परिक्लृप्ते वस्तुनि स्वकीयताबुद्धिं कृत्वा तेन स्वात्मपोषणम् अतोऽस्य न परमपुरुषार्थानर्हतामात्रमपि तु निरयगामित्वं च भविष्यतीत्यभिप्रायः ॥ १२ ॥

अ० टी०—ननु श्रेयसोऽनेकरूपत्वात्किंलक्षणा श्रेयःप्राप्तिर्भविष्यतीत्याह—इष्टानिति । वो युष्मभ्यं यज्ञभाविता देवाइष्टान् भोगान् वृष्ट्यादिकरणेनान्नादीन् दास्यन्ते । यद्वा वो युष्मभ्यम् इष्टान् यदेवेष्टं

भवतां । भगवत्सेवौपयिकबलाद्यर्थकान्नादिसंपत्त्यर्थं वृष्ट्यादिकं करिष्यन्तीत्यर्थः । ननु तैरेवान्नं देयं चेत्तदा तेभ्यः किमस्य यागकरणेनेत्यत आह—**तैरिति** । तैर्दत्तान् अन्नादीन् । एभ्यस्तद्दातृभ्योऽप्रदाय अदत्त्वा यो भुंक्ते भोगं करोति स स्तेन एव चोर एवेत्यर्थः ॥ १२ ॥

**नी० टी०**—किं च इष्टान् पुत्रपश्वादीन् वः युष्मभ्यं एभ्यो देवेभ्यस्तद्दत्तानेव व्रीहिपश्वाज्यादीन् अप्रदाय अदत्त्वा देवतोद्देशेन द्रव्यत्यागात्मकं यागं नित्यनैमित्तिकरूपं वैश्वदेवाग्निहोत्रजातेष्ट्यादिरूपमकृत्वेत्यर्थः । अदत्त्वा यो भुंक्ते स स्तेन एव ॥ १२ ॥

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

**शां० भा०**—ये पुनः—यज्ञेति । देवयज्ञादीन्निर्वर्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः सर्वपापैश्चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्चान्यैः । ये त्वात्मंभरयो भुञ्जते ते त्वघं पापं स्वयमपि पापा ये पचन्ति पाकं निर्वर्तयन्त्यात्मकारणादात्महेतोः ॥ १३ ॥

**शां० आ०**—देवादिभ्यः संविभागमकृत्वा भुञ्जानानां प्रत्यवायित्वमुक्त्वा तदन्येषां सर्वदोषराहित्यं दर्शयति—**ये पुनरिति** । यज्ञशिष्टाशिनो ये पुनस्ते तादृशाः सन्तः सर्वकिल्बिषैर्मुच्यन्त इति योजना । तैर्दत्तानित्यादिनोक्तं निगमयति—**भुञ्जत इति** । देवयज्ञादीनित्यादिशब्देन पितृयज्ञो मनुष्ययज्ञो भूतयज्ञो ब्रह्मयज्ञश्चेति चत्वारो यज्ञा गृह्यन्ते । चुल्लीशब्देन पिठरधारणाद्यर्थक्रियां कुर्वन्तो विन्यासविशेषवन्तस्त्रयो ग्रावाणो विवक्ष्यन्ते । आदिशब्देन कण्डनी पेषणी मार्जन्युदकुम्भश्चेत्येते हिंसाहेतवो गृहीताः । तान्येतानि पञ्च प्राणिनां सूना स्थानानि हिंसाकारणानि तत्प्रयुक्तैः सर्वैरपि बुद्ध्यबुद्धिपूर्वकैर्दुरितैर्मुच्यन्त इति संबन्धः । प्रमादो विचारव्यतिरेकेणाबुद्धिपूर्वकमुपनतं पादपातादिकर्म तेन प्राणिनां हिंसा संभाव्यते । आदिशब्देनाशुचिसंस्पर्शादि गृहीतं तदुत्थैश्च पापैर्महायज्ञकारिणो मुच्यन्ते । उक्तं हि—'कण्डनं पेषणं चुल्ली उदककुम्भश्च मार्जनी । पञ्च सूना गृहस्थस्य पञ्चयज्ञात्प्रणश्यति' इति । 'पञ्च सूना गृहस्थस्य चुल्ली पेषण्यवस्करः । कण्डनी चैव कुम्भश्च वध्यन्ते यास्तु वाहयन्' इति च । अस्यायमर्थः—या यथोक्ताः पञ्चसंख्याका गृहस्थस्य सूनास्ता यो वाहयन्नापादयन्वर्तते तेन प्राणिनो बुद्धिपूर्वकमबुद्धिपूर्वकं च वध्यन्ते तत्प्रयुक्तं सर्वमपि पापं महायज्ञानुष्ठानात्प्रणश्यतीति । महायज्ञानुष्ठानस्तुत्यर्थं तदनुष्ठानविमुखान्निन्दन्ति—**ये त्विति** । आत्मंभरित्वमेव स्फोरयति—**ये पचन्तीति** । स्वदेहेन्द्रियपोषणार्थमेव पाकं कुर्वतां देवयज्ञादिपराङ्मुखानां पापभूयस्त्वं दर्शयति—**भुञ्जत इति** । पाठक्रमस्त्वर्थक्रमादपबाधनीयः ॥ १३ ॥

**आ० भा०**—॥ १३ ॥

**आ० ज०**—॥ १३ ॥

**रा० भा०**—तदेव विवृणोति । इन्द्राद्यात्मनावस्थितपरमपुरुषाराधनार्थतयैव द्रव्याण्युपादाय विमुच्य तैर्यथावस्थितं परमपुरुषमाराध्य तच्छिष्टाशनेन ये शरीरयात्रां कुर्वते ते त्वनादिकालोपचितकिल्बिषैः उपार्जितैः किल्बिषैः आत्मयाथात्म्यावलोकनविरोधिभिः सर्वैर्विमुच्यन्ते ये तु परमपुरुषेणेन्द्राद्यात्मना स्वाराधनाय दत्तानामात्मार्थतयोपादाय विपच्याश्नन्ति ते पापात्मानोऽघमेव भुञ्जते अघपरिणामित्वादघमित्युच्यते आत्मावलोकनविमुखाः नरकायैव पच्यन्ते ॥ १३ ॥

**अ० टी०**—ननु पूर्वं यजनव्यतिरेकेण यथा दत्तं तथैवाऽग्रेपि दास्यन्त एवातः किं यजनेनेत्यत आह—**यज्ञशिष्टाशिन इति** । सन्तः पूर्वदत्तस्वरूपाभिज्ञाः यज्ञशिष्टाशिनो भूत्वा सर्वकिल्बिषैर्मुच्यन्ते ।

अत्रायं भावः। वृष्ट्यादिना पूर्वमन्नादिरसोत्पत्तिस्तु भगवद्भोगार्थं तेन स्वभोगकरणं पापरूपमतो ये सन्तो भक्तास्तदुत्पत्तिप्रयोजनज्ञातारो भगवदर्थं पाकादिकं कृत्वा भगवते तत्सर्वं समर्प्य तदुपभुक्तावशिष्टभोजिनस्ते सर्वपापैः सेवाप्रतिबन्धरूपैर्मुच्यन्ते। ये तु पापाः पापरूपा आत्मकारणात् पचन्ति पाकादिक्रियां कुर्वन्ति ते तु अघं पापमेव भुञ्जते ॥ १३ ॥

**नी० टी०**—ये तु यज्ञशिष्टाशिनः वैश्वदेवादिशेषान्नभोजनशीलाः संतः ते ऋणापाकरणात् मुच्यंते सर्वकिल्बिषैः प्रमादकृतैर्विहिताकरणनिमित्तैः पंचसूनानिमित्तैर्वा। येत्वात्मकारणात् स्वार्थमेव पचंति न तु पंचमहायज्ञार्थं ते पापाः स्वयं पापरूपा एव संतः पापमेव भुंजते। तथा च स्मृतिः। 'कंडनी पेषणी चुल्ली उदकुंभी च मार्जनी ॥ पंच सूना गृहस्थस्य ताभिः स्वर्गं न विंदति' इति पंचसूनाकृतं पापं पंचयज्ञैर्व्यपोहतीति च। श्रुतिश्च। "इदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्त्तते मिश्रं ह्येतदिति" मंत्रवर्णोऽपि। "मोघमन्नं विंदते अप्रचेताः। सत्यं ब्रवीमि वध इत्स तस्य ॥ नार्यमणं पुष्यति नो सखायं। केवलाघो भवति केवलादी" इति ॥ १३ ॥

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ॥**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

**शां० भा०**—इतश्चाधिकृतेन कर्म कर्तव्यम्। जगच्चक्रप्रवृत्तिहेतुर्हि कर्म। कथमिति। उच्यते—अन्नाद्भवन्तीति। अन्नाद्भुक्ताल्लोहितरेतःपरिणतात्प्रत्यक्षं भवन्ति जायन्ते भूतानि, पर्जन्याद्वृष्टेरन्नस्य संभवोऽन्नसंभवः, यज्ञाद्भवति पर्जन्यः—'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मृतेः। यज्ञोऽपूर्वं स च यज्ञः कर्मसमुद्भव ऋत्विग्यजमानयोश्च व्यापारः कर्म ततः समुद्भवो यस्य यज्ञस्यापूर्वस्य स यज्ञः कर्मसमुद्भवः॥१४॥

**शां० आ०**—देवयज्ञादिकं कर्माधिकृतेन कर्तव्यमित्यत्र हेत्वन्तरमितःशब्दोपात्तमेव दर्शयति—**जगदिति**। ननु भुक्तमन्नं रेतोलोहितपरिणतिक्रमेण प्रजारूपेण जायते तच्चान्नं वृष्टिसंभवं प्रत्यक्षदृष्टं तत्कथं कर्मणो जगच्चक्रप्रवर्तकत्वमिति शङ्कते—**कथमिति**। पारम्पर्येण कर्मणस्तद्धेतुत्वं साधयति—**उच्यत इति**। उक्तेऽर्थे स्मृत्यन्तरं संवादयति—**अग्नाविति**। तत्र हि देवताभिध्यानपूर्वकं तदुद्देशेन प्रहिताऽऽहुतिरपूर्वतां गता रश्मिद्वारेणाऽऽदित्यमारुह्य वृष्ट्यात्मना पृथिवीं प्राप्य व्रीहियवाद्यन्नभावमापद्य संस्कृतोपभुक्ता शुक्रशोणितरूपेण परिणता प्रजाभावं प्राप्नोतीत्यर्थः। यज्ञः कर्मसमुद्भव इत्ययुक्तं स्वस्यैव स्वोद्भवे कारणत्वायोगादित्याशङ्क्याऽऽह—**ऋत्विगिति**। द्रव्यदेवतयोः संग्राहकश्चकारः ॥ १४ ॥

**आ० भा०**—हेत्वंतरमाह—अन्नादिति। यज्ञः पर्जन्यान्नत्वात्तत्कारणमुच्यते पूर्वयज्ञविवक्षायां तस्य चक्रप्रवेशो न भवति तद्व्यापाद्यं कर्मविधयो न तु साम्यमात्रेणेदानीं कार्यम्। मेघचक्राभिमानी पर्जन्यः तच्च यज्ञाद्भवति। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति स्मृतेश्च। उभयवचनाच्चादित्यात्समुद्राच्चाविरोधः। अतश्च यज्ञात्पर्जन्योद्भवः संभवति। यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागः। कर्मेतरक्रिया ॥ १४ ॥

**आ० ज०**—अन्नादित्यादेः संगतिमाह—**हेत्वंतरमिति**। अत्रेत्यनुवर्तते अत्र पर्जन्यो मेघ आदित्यश्च विवक्षितौ तत्रादित्यस्य पूर्वसिद्धस्य कथं यज्ञाद्भवति पर्जन्यइति यज्ञः कारणत्वेनोच्यत इत्यत आह—**यज्ञ इति**। यद्यपि यज्ञो देवतामुद्दिश्य द्रव्यपरित्याग इति वक्ष्यति तथाप्यत्र परित्यज्यमानं द्रव्यं गृह्यते तस्य पर्जन्यान्नत्वात्पर्जन्योपभोग्यत्वात् उपभुक्तेन च तस्य बलाद्युपचयाद्यज्ञस्तस्य पर्जन्यस्य कारणमुच्यते। ननु पर्जन्यो देवतात्मा यज्ञेन पर्जन्यत्वं प्राप्तः स यज्ञो विवक्षितोऽत्रास्तु

तथा सति यज्ञात्पर्जन्योद्भवो मुख्य एव संपत्स्यत इति । नेत्याह—**पूर्वेति** । तस्य पर्जन्यपदप्राप्तिहेतोः । यज्ञस्येतिशेषः । ननु तदा चक्रं प्रवृत्तमेव अतः कथं पूर्वयज्ञस्य चक्राप्रवेश इत्यत आह—**तद्धीति** । तच्चक्रमापाद्यं ह्यत्र विवक्षितम् । न तु प्रागापादितं कुतः कर्मविधये ह्येतदुच्यते यदि विहितं कर्म करिष्यसि तर्हि जगच्चक्रप्रवृत्तिर्भविष्यति अन्यथा तद्विघातोऽतस्त्वया कर्म कर्तव्यं कर्मविध्युपयोगिता चापाद्यस्यैव न त्वापादितस्य । आपाद्ये च यज्ञव्यक्तिविशेषस्य पर्जन्यपदप्राप्तिहेतोर्न प्रवेश इत्यर्थः । प्राक् पर्जन्येन कर्म कृतं तेन च यज्ञादिद्वारा चक्रं प्रवृत्तम् अतस्त्वयाऽपि कर्म कर्तव्यमित्येवं प्रागापादितचक्रोक्तिरपि कर्मविध्युपयोगिनी भवतीति चेत् मैवम् । अत इति कोऽर्थः । त्वत्कर्मणाऽपि चक्रप्रवृत्तिसंभवादिति वा कर्मत्वादिति वा । नाद्यः । इदानींतनपुरुषकर्मजेन यज्ञेन पर्जन्योत्पत्त्यसंभवेन चक्राप्रवृत्तेः । नहि सर्वेऽपि कर्मकारिणः पर्जन्यत्वं प्राप्नुवंति । द्वितीयं दूषयति—**न त्विति** । फलरहितेन कर्मत्वसामान्येनेदानीं कर्म कार्यं न भवति स्वयं क्लेशरूपत्वादिति । प्रकारांतरेणापि यज्ञाद्भवति पर्जन्य इत्येतद्दर्शयितुमाह—**मेघेति** । चक्रं समूहः । ततः किमित्यत आह—**तच्चेति** । मेघचक्रम् । कुत इत्यतआह—**अन्नाविति** । ननु स्वकीयमुदकं नय इति समुद्राद्वृष्टिरुच्यते अतआदित्याद्वृष्ट्यंगीकारे तद्विरोधः स्यादित्यत आह—**उभयेति** । वृष्ट्यंगीकारादितिशेषः । वार्षिका मेघा इह वृष्टिशब्देनोच्यन्ते । ततोऽपि किमित्यत आह—**अतश्चेति** प्राक्पर्जन्यस्य भवनं गौणमंगीकृत्य व्याख्यातम् इदानीं त्वभिमन्यमानगतस्य भवनस्याभिमानिनि लक्षणामाश्रित्येति भेदः । यद्वा अभिमानिगतस्य पर्जन्यशब्दस्य अभिमन्यमाने लक्षणामाश्रित्य द्वितीयं व्याख्यानं तात्पर्यनिर्णये तु मेघसंततौ पर्जन्यशब्दो योगिकोंगीकृतः । ननु यज्ञः कर्मात्मकस्तत्कथमुच्यते यज्ञः कर्मसमुद्भव इति तत्राह—**यज्ञ इति** । इतरक्रिया यज्ञांगभूता । अपूर्वांगीकारे रूढित्यागेन लक्षणाश्रयणं स्यात् ॥ १४ ॥

**रा० भा०—पुनरपि लोकदृष्ट्या शास्त्रदृष्ट्या च सर्वस्य यज्ञमूलत्वं दर्शयित्वा यज्ञानुवर्तनस्यावश्यकार्यतामननुवर्तने च दोषमाह । अन्नात्सर्वाणि भूतानि भवन्ति पर्जन्यादन्नसंभव इति सर्वलोकसाक्षिकं यज्ञात्पर्जन्यो भवतीति च शास्त्रेणावगम्यते 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इत्यादिना यज्ञश्च द्रव्यार्जनादिकर्तृपुरुषव्यापाररूपकर्मसमुद्भवः ॥ १४ ॥**

**अ० टी०**—ननु रसरूपस्य भगवतोऽन्नादेव केवलात् कथं भोगः सेत्स्यतीत्यत आह—**अन्नादिति** । अन्नाद्भूतानि सजीवशरीराणि भवन्ति तैर्भगवद्भोगः सम्यक् सिद्ध्यति । नन्वन्नादेव भूतोत्पत्तिश्चेत्तदा वृष्ट्यादेः किं प्रयोजनमित्यत आह—**पर्जन्यादिति** । पर्जन्यादन्नस्य संभव उत्पत्तिर्भवतीत्यर्थः । ननु पर्जन्यश्चेदन्नोत्पादकस्तदा किं यज्ञेनेत्यत आह—**यज्ञादिति** । यज्ञाद्भगवदर्थात् पर्जन्यो भवति । ननु भगदात्मकत्वमेव यज्ञस्य चेत्तदाऽन्यदेवाद्यर्थं कर्मकरणोपदेशः कथमित्यत आह—**यज्ञ इति** । यज्ञात्मकभगवद्रूपं कर्मणा सम्यगुपपद्यते अयमर्थः । भगवदंशत्वेन भगवद्विभूतित्वेन कर्मकरणाद्यज्ञात्मकभगवत्प्राकट्यमित्यर्थः ॥ १४ ॥

**नी० टी०**—जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म कर्त्तव्यमित्याह—**अन्नादिति** । अन्नाद्रेतोरूपेण परिणतात् भूतानि प्राणिशरीराणि भवंति अन्नं च पर्जन्यात् एतत्प्रसिद्धमेव यज्ञाद्भवति पर्जन्यः । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति स्मृतेः । यज्ञो देवताराधनजो धर्मः कर्मभ्यो यागहोमदानादिभ्यः समुद्भवतीति कर्मसमुद्भवः ॥ १४ ॥

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ॥**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

**शां० भा०—तच्च—कर्मेति । कर्म ब्रह्मोद्भवं ब्रह्म वेदः स उद्भवः कारणं यस्य तत्कर्म ब्रह्मोद्भवं विद्धि जानीहि, ब्रह्म पुनर्वेदाख्यमक्षरसमुद्भवम्, अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तदक्षरस-**

मुद्भवं ब्रह्म वेद इत्यर्थः। यस्मात्साक्षात्परमात्माख्यादक्षरात्पुरुषनिश्वासवत्समुद्भूतं ब्रह्म तस्मात्सर्वार्थप्रकाशकत्वात्सर्वगतम्। सर्वगतमपि सन्नित्यं सदा यज्ञविधिप्रधानत्वाद्यज्ञे प्रतिष्ठितम्॥१५॥

**शां० आ०**—यदपूर्वहेतुत्वेन कर्मोक्तं तत्किं चैत्यवन्दनादि किंवाऽग्निहोत्रादीति संदिहानं प्रत्याह—**कर्मेति**। किमिति कर्मणो ब्रह्मोद्भवत्वमुच्यते सर्वस्य तदुद्भवत्वाविशेषादित्याशङ्क्याऽऽह—**ब्रह्म वेद इति**। ब्रह्म तर्हि वेदाख्यमनादिनिधनमिति तत्राऽऽह—**ब्रह्म पुनरिति**। अक्षरात्मनो वेदस्य पुनरक्षरेभ्यः सकाशादेव समुद्भवो न संभवतीत्याशङ्क्याऽऽह—**अक्षरमिति**। ब्रह्मेत्यक्षरमेवोक्तं तत्कथं तस्मादेवोद्भवतीत्याशङ्क्य ब्रह्मशब्दार्थमुक्तमेव स्मारयति—**वेद इति**। ननु ब्रह्मशब्दितस्य वेदस्यापि पौरुषेयत्वात्प्रामाण्यसंदेहात्कथं तदुक्तमग्निहोत्रादिकं कर्म निर्धारयितुं शक्यते तत्राऽऽहं—**यस्मादिति**। कथं तर्हि तस्य यज्ञे प्रतिष्ठितत्वं सर्वगतत्वेन विशेषायोगादित्याशङ्क्याऽऽह—**सर्वगतमपीति** ॥ १५ ॥

**आ० भा०**—कर्म ब्रह्मणो जायते "एष ह्येव साधु कर्म कारयति" बुद्धिर्ज्ञानमित्यादिभ्यः। न च मुख्ये संभाव्यमाने पारंपर्येणोपचारिकं कल्प्यम्। न च जडानां स्वतः प्रवृत्तिः संभवति "एतस्य वा अक्षरस्य" इति सर्वनियमनश्रुतेश्च। द्रव्यं कर्म च कालश्चेत्यादेश्च। अचिंत्यशक्तिश्चोक्ता। जीवस्य च प्रतिबिंबस्य बिंबपूर्वैव चेष्टा न कर्तृत्वमित्यादिनिषेधाच्च। अक्षराणि प्रसिद्धानि तेभ्यो ह्यभिव्यज्यते परं ब्रह्म। अन्यथाऽनादिनिधनमचिंत्यं परिपूर्णमपि ब्रह्म को जानाति। न च रूढिं विना योगांगीकारो युक्तः। परामर्शाच्च तस्मात्सर्वगतं ब्रह्मेति। नह्येकशब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते। "तानि चाक्षराणि नित्यानि वाचा विरूपनित्यया। वृष्णे चोदस्व सुष्टुतिम्" 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा॥ अत एव च नित्यत्वम्' इत्यादिश्रुतिस्मृतिभगवद्वचनेभ्यः। दोषश्चोक्तः सकर्तृत्वे। न चाबुद्धिपूर्वमुत्पन्नानि। तत्प्रमाणाभावात्। निःश्वसितशब्दस्त्वक्लेशाभिप्रायो नाबुद्धिपूर्वाभिप्रायः। सोऽकामयतेत्यादेश्च। इष्टं हुतमित्यादिरूपप्रपंचेन सहाभिधानाच्च। महातात्पर्यविरोधाच्च। तच्चोक्तं पुरस्तात्। न ह्यस्वातंत्र्येण चोत्पत्तिकर्तुः प्राधान्यम्। अस्वातंत्र्यं च तदमतिपूर्वकत्वेन भवति। यथा रोगादीनां पुरुषस्य तज्जत्वेऽपि उत्पत्तिवचनान्यभिव्यक्त्यर्थानि अभिमानिदेवताविषयाणि च। नित्येत्युक्त्वोत्सृष्टेति वचनात्। अभिव्यंजके कर्तृवचनं चास्ति। 'कृत्स्नं शतपथं चक्रे' इति कथमादित्यस्थावेदास्तेनैव क्रियंते। वचनमात्राच्च निर्णयात्मकशारीरकोक्तं बलवत् शास्त्रम् योनिर्यस्य तत् शास्त्रयोनित्वम्। जन्माद्यस्येत्युक्ते प्रमाणं हि तत्रापेक्षितम् न तु तस्य जातत्वं वेदकारणत्वं वा नहि वेदकारणत्वं जगत्कारणत्वे हेतुः। न हि विचित्रजगत्स्रष्टुर्वेदसृष्टिरशक्या सृज्यत्वे। न च सर्वज्ञत्वे यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा सर्वज्ञः तस्माद्वेदप्रमाणकत्वमेवात्र विवक्षितम् अतो नित्यान्यक्षराणि यत एवं परंपरया यज्ञाभिव्यंग्यं ब्रह्म तस्मात्तन्नित्यं यज्ञे प्रतिष्ठितम्॥ १५॥

**आ० ज०**—कर्म ब्रह्मोद्भवं ब्रह्मणा वेदेन प्रकाश्यमिति परेषां व्याख्यानमसादिति भावेनाह—**कर्मेति**। ब्रह्मणः परब्रह्मणः। कुत इत्यत आह—**एष हीति**। अपव्याख्यानं प्रत्याख्याति—**नचेति**। उद्भवशब्दस्य मुख्येऽभिधेये जन्मनि संभाव्यमाने सत्यौपचारिकं प्रकाशनमर्थतया न कल्प्यम्। तथा ब्रह्मशब्दस्य मुख्येऽभिधेये परब्रह्मणि संभाव्यमाने सत्यौपचारिकममुख्यं वेदाख्यं ब्रह्म शब्दार्थतया न कल्प्यम् किं चैवं व्याचक्षणेनापि वेदस्य कर्मप्रकाशकत्वमंतर्यामिद्वारा परंपरयांऽगीकार्यम्। तथा चांततोऽपि परब्रह्मण्यंगीकार्ये शब्दत एव प्राप्तस्य तस्य परित्यागोऽनुपपन्नः। ननु वेदः स्वयमेव कर्मप्रकाशक इति किं परब्रह्मणा अतो न परंपरेत्यत आह—**न चेति**। न केवलं जडत्वाद्वेदस्यान्याधीनत्वं किं त्वागमाद्विष्ण्वधीनत्वं च प्रसिद्धमित्याह—**एतस्येति**। विष्णोरिति शेषः। ननु शब्दस्यार्थप्रकाशनं स्वभावो न त्वागंतुको व्यापारः यथाग्नेरौष्ण्यम्। ततो जडत्वेऽपि न परापेक्षेत्यतः स्वभावस्यापि भगवदधीनत्वे प्रमाणमाह—**द्रव्यमिति**। प्रमाणसिद्धमपि स्वभावनियमनं विष्णोरसंभावितमित्यत आह—**अचिंत्येति**। यदि जडस्य न स्वतः प्रवृत्तिस्तर्हि अभिमानिदेवताद्वाराऽस्तु। तथा च नांततोऽपि परब्रह्मांगीकार इत्यत आह—**जीवस्य चेति**। ततश्चाधिक्येन

परंपरेति भावः। न केवलं प्रतिबिंबत्वाज्जीवस्य स्वतःप्रवृत्त्यभावः किं त्वागमाच्चेत्याह—**नेति**। ब्रह्माक्षरसमुद्भवमित्यत्र ब्रह्म वेदोऽक्षरात्परब्रह्मणो जायत इति परेषां व्याख्यानमसदिति भावेनाह—**अक्षराणीति**। प्रसिद्धान्यकारादीनि नियतानुपूर्वीविशिष्टानि वेद इति यावत्। ननु समुद्भवशब्दस्य मुख्यार्थांगीकारे किं बाधकं येनाभिव्यज्यत इत्यमुख्योऽर्थः स्वीक्रियते किं च प्रमाणांतरेणापि ब्रह्माभिव्यक्तिसंभवात्तेभ्य इति किमर्थमुक्तमित्यत आह—**अन्यथेति**। व्यक्त्यर्थत्वानंगीकारेऽनादिनिधनं ब्रह्म कथं जायतेइति शेषः। तथा वेदस्य तदभिव्यंजकत्वानंगीकारे परिपूर्णत्वादचिन्त्यं ब्रह्म को जानाति। वाक्यार्थद्वयसमुच्चयेऽपिशब्दः समुद्भवशब्दस्य मुख्यार्थताभावात्परोक्तोर्थः किं न स्यादित्यत आह—**नचेति**। ब्रह्मशब्दो हि परब्रह्मणि रूढः वेदे तु बृहत्वयोगेन प्रवृत्तः। तथाऽक्षरशब्दो वर्णेषु रूढः परब्रह्मणि त्वक्षरणयोगेन प्रवृत्तः। तथा चान्यथा व्याकुर्वता रूढिं परित्यज्य योगोंऽगीकृतः स्यात् तच्च न्यायबाह्यमित्यर्थः। इतश्च ब्रह्मशब्दः प्ररब्रह्मवाचीत्याह—**परामर्शाच्चेति**। उत्तरवाक्ये ब्रह्मशब्देन परब्रह्मणः परामर्शाच्च पूर्ववाक्यस्थो ब्रह्मशब्दः परब्रह्मार्थो ज्ञायते। तथा चाक्षरशब्दोऽप्यर्थाद्विदवचनो भविष्यतीति शेषः। प्रागक्षरशब्दोक्तं परं ब्रह्मेदानीं ब्रह्मशब्देन परामृश्यते अतः पूर्वोक्तो ब्रह्मशब्दो वेदार्थएवेत्यत आह—**न हीति**। एकस्मिन्नेव प्रकरण इति शेषः। "अन्नात्पुरुषः। स वा एव पुरुषोऽन्नरसमयः" इत्यादिव्यावृत्त्यर्थं भेदश्रुतिं विनेत्युक्तम्। श्रुतिशब्दश्च प्रमाणोपलक्षणार्थः।अत्रापि सर्वगतमिति विशेषणमस्तीति चेत् न वर्णानामपि सर्वगतत्वात्। विकारत्वान्नेति चेत् न अनंतरमेव निराकरणात्। इदं च भास्करं प्रत्यभिहितम्। मायावादिना तु प्राग्ब्रह्मशब्दोक्तस्य वेदस्यैवायं परामर्श इत्यंगीकृतत्वात् यदप्यन्यथा व्याख्याने समुद्भवशब्दस्य मुख्यार्थतालाभ इत्यभिप्रेतं तदपि दुराशामात्रमित्याह—**तानि चेति**। यान्यस्माभिः प्रसिद्धानि व्याख्यातानि अनेनाभिधानादिबलाद्ब्रह्माक्षरशब्दौ द्वावप्युभयत्र योगरूढाविति प्रत्यवस्थानमपि परास्तम्। परामर्शस्य वर्णनित्यत्वस्य चापरिहार्यत्वात्। न केवलं श्रुत्यादिभ्यो वेदस्य नित्यत्वं किं तर्हि विपक्षे बाधकाच्चेत्याह—**दोषश्चेति**। रचितत्वे च धर्मप्रमाणस्येत्यत्र। ननु वेदाक्षराणि ब्रह्मणो बुद्धिपूर्वमुत्पन्नानि। अतो न विपर्ययादि मूलत्वशंकेत्यत आह—**न चेति**। "निश्वसितमेतद्यदृग्वेदो यजुर्वेद"इति श्रुतिर्वेदानां ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नत्वे प्रमाणमितिचेत्किमयं निश्वसितशब्दोऽबुद्धिपूर्वमुत्पन्नत्वस्य वाचकः।उत निश्वसितमिव निश्वसितमिवार्थश्चाबुद्धिपूर्वमुत्पन्नत्त्वमिति गौण्या वृत्त्या तदभिप्रायः। नाद्यः प्रमाणाभावात्। द्वितीयं दूषयति—**निश्वसितेति**। अक्लेशेन निःसरणस्यापीवार्थस्य संभवेन निश्वसितशब्दस्य तदभिप्रायतोपपत्तौ नाबुद्धिपूर्वोत्पत्त्यभिप्रायत्वनिश्चय इत्यर्थः। न च परस्येवास्माकमपि निश्चयायोग इति भावेनाह—**स इति**। "सोऽकामयत स इदं सर्वमसृजत" इति ब्रह्मणः सर्वस्य सृष्टेरिच्छापूर्वकत्वमुच्यते इच्छा च बुद्ध्याऽविनाभूता। अतो न किं चिद्ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नमिति। ननु निश्वसितमेतदिति श्रुतिर्नाम प्रपंचस्याबुद्धिपूर्वमुत्पत्तिं वक्ति। सोऽकामयतेति च रूपप्रपंचस्येच्छापूर्वमित्यतो न विरोध इत्यत आह—**इष्टमिति**। एवं सति निश्वसितमिति श्रुताविष्टं हुतमाशितं पायितमयं च लोकः परश्चलोक इति नामप्रपंचस्य रूपप्रपंचेन सहाभिधानात्। रूपप्रपंचस्यापि निश्वसितशब्देनाबुद्धिपूर्वोत्पन्नत्वप्राप्तौ सोऽकामयतेति श्रुतिर्निर्विषयैवापद्येतेति भावः। इतोऽपि नाबुद्धिपूर्वा ब्रह्मणः सृष्टिरित्याह—**महातात्पर्येति**। परब्रह्मणः सर्वोत्तमत्वे यत्सर्ववेदानां महातात्पर्यं तद्विरोधाच्चेत्यर्थः। तदेव कुत इत्यत आह—**तच्चेति**। उक्तं साधितम्। कथं तद्विरोध इत्यत आह—**न हीति**। प्राधान्यं सर्वोत्तमत्वम्। अस्वातंत्र्येणोत्पत्तिकर्तृत्वस्य प्राधान्यविरोधित्वेऽपि अबुद्धिपूर्वमुत्पादकत्वस्य किमायातमित्यत आह—**अस्वातंत्र्यं चेति**। कार्यस्य पुरुषमतिपूर्वकत्वाभावे तत्र तस्य पुरुषस्यास्वातंत्र्यं भवति तत्र दृष्टांतमाह—**यथेति**। रोगादीनां पुरुषजत्वेऽपि बुद्धिपूर्वकत्वाभावात्। तत्र पुरुषस्यास्वातंत्र्यं तथेत्यर्थः। ततश्चाबुद्धिपूर्वमुत्पादकत्वादस्वातंत्र्यम्। अस्वातंत्र्याच्चाप्राधान्यं प्रसज्येतेति तथा च महातात्पर्यविरोध इत्युक्तं भवति। साक्षात्प्रसंगसंभवेऽपि व्युत्पादनार्थमेवमुक्तम्। ननु वेदनित्यत्ववत्तदुत्पत्तावप्यृचः सामानि जज्ञिर इत्यादिवचनानि संति तत्कथं निर्णय इत्यतो विपक्षे बाधकोपेतानां नित्यत्ववाक्यानां प्राबल्यादुत्पत्तिवचनान्यन्यथाव्याख्येयानीत्याह—**उत्पत्तीति**। उत्पत्तिवाचीशब्दोऽभिव्यक्तौ क्व दृष्ट इत्यत आह—**नित्येति**। अनादिनिधनतया नित्या न तूपचारेणेतिं मुख्यं नित्यत्वमुक्त्वा पुनरुत्सृष्टेत्युच्यते तत्र गत्यंतराभावाद्व्यक्तिरेव ग्राह्येत्यर्थः। अन्यत्रापि प्रयोगं दर्शयति अभिव्यंजक इति शतपथाभिव्यंजकतया निश्चिते याज्ञवल्क्ये कर्तृशब्दोऽस्तीत्यर्थः। याज्ञवल्क्यः शतपथस्य कर्तैव किं न स्यादित्यत आह—**कथमिति**। प्रागादित्ये स्थिताः। ततो याज्ञवल्क्येनाधीता इत्येतत्प्रमितमित्यर्थः। इतोऽपि नित्यत्वपक्ष एव बलवानित्याह—**वचनेति**। ऋचः सामानीत्यादिकं वचनमात्रम् अत एव च नित्यत्वमितिशारीरकोक्तं वाक्यं निर्णयात्मकम् वचनं च वृत्त्यंतरेणापि संभवतीति न तूपचारितो वाक्यार्थावधारणात्मको निर्णयः। अतस्तस्मादिदं बलवदित्यर्थः। ननु शारीरके शास्त्रयोनित्वादिति ब्रह्मणो वेदकारणत्वमुच्यत इत्यत आह—**शास्त्रमिति**। ननु तत्पुरुषं परित्यज्य कुतो बहुव्रीहिरंगीक्रियते।तथात्वे च ब्रह्मणो वेदाज्ज्ञातत्वं प्रसज्येत इत्यत आह—**जन्मादीति**। लक्षणप्रमाणाभ्यां हि वस्तुनिर्णयः। तत्र जन्माद्यस्येति सूत्रेण लक्षणेऽभिहिते कुतः प्रमाणादेवं प्रतिपत्तव्यमिति ब्रह्मणो जगज्जन्मादिकारणत्वे प्रमाणाकांक्षा स्यान्न तु तस्य वेदाज्ज्ञातत्वं वेदकारणत्वं वाऽकांक्षितम् आकांक्षादिवशाच्च वाक्यार्थोऽवसेयः। ततोयोनिशब्दं प्रमाणवाचिनमंगीकृत्य बहुव्रीहिरेवायं प्रतिपत्तव्यो न तु तत्पुरुषः वेदकारणत्वं च जगत्कारणत्वेनात्रो-

च्यते अतो नाना कांक्षिताभिधानमेतदित्यत आह—**न हीति**। अन्वयाभावात् एकदेशकारणत्वेन समुदायकारणत्वानुमानेऽतिप्रसंगाच्चेति हेरर्थः। माभूदयं निश्चयहेतुः। तथाप्यशक्यस्रष्टेर्वेदस्य कर्तुर्ब्रह्मणो जगत्स्रष्टिकर्तृत्वं संभवतीतिसंभावनाहेतुरयं स्यादित्यत आह—**न हीति**। संभावना ह्यधिकेनाल्पस्य भवति यथा सहस्रेण शतस्य नच समुदायस्रष्टेस्तदेकदेशसृष्टिरधिकेति भावः। सृज्यत्वे वेदस्य कार्यत्वपक्ष इत्यर्थः। जगत्कारणत्त्वोक्त्या ब्रह्मणः सर्वज्ञत्वं प्रतीतं तत्स्फुटीकर्तुं तत्र वेदकारणत्वं हेतुरनेनोच्यते। अतो नासंगतिरित्यतआह—**न चेति**। वेदकारणत्वं हेतुरित्यनुवर्तते। अबुद्धिपूर्वमुत्पन्नत्वांगीकारादिति भावः। किं च यदि जगदेकदेशस्य वेदस्य स्रष्टा परमेश्वरः सर्वज्ञः सिद्ध्येत् तर्ह्यंतर्भावितस्य वेदस्य जगतः स्रष्टा सुतरां सर्वज्ञः सिद्ध्येदेव तथा चार्थादपि जन्मादिसूत्रेणैव सार्वज्ञस्य स्फुटं प्रतीतत्त्वात् पुनर्हेत्वाकांक्षाभावेनासंगतिस्तदवस्थेति भावेनाह—**यदीति**। सूत्रार्थमुपसंहरति—**तस्मादिति**। ब्रह्मण इति शेषः। तानि चेत्यादिनोक्तमुपसंहरति—**अत इति**। तथा च न समुद्भवशब्दस्य मुख्यार्थत्वलाभाय ब्रह्माक्षरशब्दार्थव्यत्ययः कार्य इति। तस्मादितिपरामर्शविषया प्रतीतेस्तं दर्शयन्वाक्यं व्याख्याति। **यत इति**। प्रतिष्ठितमित्युच्यत इति शेषः॥ १५॥

**रा० भा०**—कर्म ब्रह्मोद्भवं अत्र च ब्रह्मशब्दनिर्दिष्टं प्रकृतिपरिणामरूपशरीरं तदेतद्ब्रह्म नामरूपमन्नं च जायते इति ब्रह्मशब्देन प्रकृतिर्निर्दिष्टा इहापि 'मम योनिर्महद्ब्रह्म' इति वक्ष्यते अतः कर्म ब्रह्मोद्भवमिति प्रकृतिपरिणामरूपशरीरोद्भवं कर्मेत्युक्तं भवति ब्रह्माक्षरसमुद्भवमित्यत्राक्षरशब्दनिर्दिष्टो जीवात्मा अन्नपानादिना तृप्ताक्षराधिष्ठितं शरीरं कर्मणे प्रभवति कर्मसाधनभूतं शरीरमक्षरसमुद्भवं तस्मात्सर्वगतं ब्रह्म सर्वाधिकारिगतं शरीरं नित्यं यज्ञे प्रतिष्ठितं यज्ञमूलमित्यर्थः॥१५॥

**अ० टी०**—ननु देवानां विभूतिरूपत्वेऽपि साक्षात्पुरुषोत्तमभजनाभावादनुचितमेवेत्याशंक्याह—**कर्मेति**। कर्म ब्रह्मोद्भवं ब्रह्मणः सकाशादुद्भवं प्रकटं जानीहि। अत्रायं भावः। वेदात्कर्मोत्पत्तिः सच ब्रह्मनिश्वासस्तेन तथा। ब्रह्मणः पुरुषोत्तमत्वज्ञापनार्थं विशिनष्टि अक्षरसमुद्भवमिति तद्ब्रह्म अक्षरसमुद्भवम्। अक्षरस्य समुद्भवो यस्मात्तादृशम्। अक्षरस्य पुरुषोत्तमचरणात्मकत्वात्तथा तस्मात्कारणात्सर्वगतं सर्वव्यापकं सर्वरूपं नित्यं यद्ब्रह्म तदेव यज्ञे प्रतिष्ठितं तेन न पूर्वोक्तदोषसंभावनेतिभावः॥ १५॥

**नी० टी०**—कर्म ब्रह्मोद्भवं वेदोद्भवं वेद एव धर्मे प्रमाणं न तु पाखंडादिप्रणीतागमः ब्रह्म वेदोऽपि अक्षरसमुद्भवं। "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः" इत्यादिश्रुतेः। साक्षात्परमेश्वरादेवोत्पन्नोऽतो न तत्र भ्रमविप्रलंभकत्वादिदोषाक्रांतपाखंडादिवाक्यवदप्रामाण्यशंकाऽस्तीति भावः। यस्मादेवं तस्मात्सर्वस्मिन् देशे काले च वर्तमानं ब्रह्म वेदः एतेन वेदस्य नित्यत्वं शब्दस्य विभुत्वं च दर्शितं नित्यं नियमेन यज्ञे प्रतिष्ठितं तात्पर्येण पर्यवसन्नम्॥ १५॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः॥
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥ १६॥

**शां० भा०**—एवमिति। एवमित्थमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं नानुवर्तयतीह लोके यः कर्मण्यधिकृतः सन्नघायुरघं पापमायुर्जीवनं यस्य सोऽघायुः पापजीवन इति यावत्, इन्द्रियाराम इन्द्रियैराराम आरमणमाक्रीडा विषयेषु यस्य स इन्द्रियारामो मोघं वृथा हे पार्थ स जीवति। तस्मादज्ञेनाधिकृतेन कर्तव्यमेव कर्मेति प्रकरणार्थः। प्रागात्मज्ञाननिष्ठायोग्यताप्राप्तेस्तादर्थ्येन कर्मयोगानुष्ठानमधिकृतेनानात्मज्ञेन कर्तव्यमेवेत्येतत् 'न कर्मणामनारम्भात्' इत्यत आरभ्य 'शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः' इत्येवमन्तेन प्रतिपाद्य 'यज्ञार्थात्कर्मणोऽन्यत्र' इत्यादिना 'मोघं पार्थ स

जीवति' इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकमधिकृतस्यानात्मविदः कर्मानुष्ठाने बहुकारणमुक्तं तदकरणे च दोषसंकीर्तनं कृतम् ॥ १६ ॥

**शां० आ०**—अधिकृतेनाध्ययनादिद्वारा जगच्चक्रमनुवर्तनीयमन्यथेश्वराज्ञातिलङ्घिनस्तस्य प्रत्यवायः स्यादित्याह—**एवमिति**। न कर्मणामनारम्भादित्यादिनोक्तमुपसंहरति—**तस्मादिति**। जगच्चक्रस्य प्रागुक्तप्रकारेणाननुवर्तने वृथा जीवनमघसाधनं यस्मात्तस्माज्जीवता नियतं कर्म कर्तव्यमित्यर्थः। यद्यधिकृतेन कर्तव्यमेव कर्म तर्हि किमित्यज्ञेनेति विशेष्यते ज्ञाननिष्ठेनापि तत्कर्तव्यमेवाधिकृतत्वाविशेषादित्याशङ्क्य पूर्वोक्तमनुवदति—**प्रागिति**। न हि ज्ञानकर्मणोर्विरोधाज्ज्ञाननिष्ठेन कर्म कर्तुं शक्यते तथा चानात्मज्ञेनैव चित्तशुद्ध्यादिपरम्परया ज्ञानार्थं कर्मानुष्ठेयमिति प्रतिपादितमित्यर्थः। तर्हि यज्ञार्थादित्यादि किमर्थं न हि तत्र ज्ञाननिष्ठा प्रतिपाद्यते कर्मनिष्ठा तु पूर्वमेवोक्तत्वान्नात्र वक्तव्येत्याशङ्क्य वृत्तमर्थान्तरमनुद्रवति—**प्रतिपाद्येति**। प्रासङ्गिकमज्ञस्य कर्मकर्तव्यतोक्तिप्रसङ्गागतमिति यावत्। बहुकारणमीश्वरप्रसादो देवताप्रीतिश्चेत्यादि। दोषसंकीर्तनं तैर्दत्तानप्रदायेत्यादि॥ १६॥

**आ० भा०**—तानि चाक्षराणि भूताभिव्यंग्यानीति चक्रम्। तदेतज्जगच्चक्रं यो नानुवर्तयति स ताद्विनाशकत्वादघायुः पापनिमित्तमेव यस्यायुः सोऽघायुः ॥ १६ ॥

**आ० ज०**—नन्वत्र कार्यकारणपरंपरैवोक्ता न चक्रं तत्कथं उच्यते एवं प्रवर्तितं चक्रमिति तत्राह—**तानि चेति**। तानि वेदाख्यानि चक्रप्रवृत्तौ कथमघायुष्ट्वादिकमित्यतो व्याचष्टे—**तदेतदिति**। आयुषोऽघत्वाभावात्कथमघायुरित्यत आह—**पापेति**। तादर्थ्यात्ताच्छब्द्यमित्यर्थः ॥ १६ ॥

**रा० भा०**—एवं परमपुरुषेण प्रवर्तितमिदं चक्रम् अन्नाद्भवन्ति भूतानीत्यत्र भूतशब्दनिर्दिष्टानि सजीवानि शरीराणि पर्जन्यादन्नं यज्ञात्पर्जन्यः यज्ञश्च कर्तृव्यापारानुरूपात् कर्मणः कर्म च सजीवात् शरीरात् सजीवं शरीरं च पुनरन्नादित्यन्योन्यकार्यकारणभावेन चक्रवत्परिवर्तमानमिह साधने वर्तमानो यः कर्मयोगाधिकारी ज्ञानकर्मयोगाधिकारी वा नानुवर्तयति न प्रवर्तयति स यज्ञशिष्टेन देहधारणमकुर्वन् सोऽघायुर्भवति अघारम्भायैवास्यायुरघपरिणतं वा उभयरूपं वा सोऽघायुः। अत एवेन्द्रियारामो भवति नात्मारामः इन्द्रियाण्येवास्योद्यानानि भवन्ति यज्ञशिष्टवर्द्धितदेहमनस्त्वेनोद्रिक्तरजस्तमस्क आत्मावलोकनविमुखतया विषयभोगैकरतिर्भवति अतो ज्ञानयोगादौ यतमानोऽपि निष्फलप्रयत्नतया मोघं पार्थ स जीवति ॥ १६ ॥

**अ० टी०**—एवं भगवदात्मकं कर्म यो न करोति तस्य व्यर्थं जीवनमित्याह—**एवमिति**। एवं प्रकारेण प्रवर्तितं चक्रं स्वतःप्रवृत्तं मदिच्छया मत्क्रीडार्थं प्रवृत्तं यो नानुवर्तयति नानुतिष्ठति सः अघायुः पापायुः पापमेवायुर्यस्य तादृशः। इन्द्रियारामः इन्द्रियेष्वेव इन्द्रियार्थं वा आरमति न तु मदर्थं मयि वा अतो मोघं व्यर्थं स जीवति। पार्थेति संबोधनात्सस्वभक्तत्वात्तव तथा ज्ञानमनुचितमिति ज्ञापितम् ॥ १६ ॥

**नी० टी०**—भवत्वेवं ततः किं फलितमित्यत आह—**एवमिति**। भूतानामादौ वेदाधिगमस्ततः कर्मानुष्ठानं ततो देवानां तृप्तिस्ततो वृष्टिस्ततोऽन्नं ततो भूतानि तेषां वेदाधिगम इत्येवंरूपं चक्रमिव चक्रं निरंतरमावर्त्तमानं जगद्यात्रानिर्वाहकं नानुवर्त्तयति नानुतिष्ठति सः अघायुः पापजीवनः इंद्रियारामो न तु धर्मारामः आत्मारामो वा मोघं व्यर्थं दंशमशकादिवत् जीवति यस्त्वेतदनुवर्त्तयति स जगदुपकारको धन्य इति भावः। तथा च श्रुतिः। "अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत् पितृभ्यो निपृणाति यत्प्रजामिच्छति तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विंदति तेन पशूनां यदस्य गृहेषु श्वापदा वयांस्यापिपीलिकाभ्य उपजीवंति तेन तेषां लोक इति" ॥ १६ ॥

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ॥
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

**शां० भा०**—एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयमाहोस्वित्पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्यामनात्मविदा ज्ञानयोगेनैव निष्ठामात्मविद्भिः सांख्यैरनुष्ठेयामप्राप्तेनैवेत्येवमर्थमर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकमतिपत्त्यर्थमेतं वै तमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तो ब्राह्मणा मिथ्याज्ञानवद्भिरवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति, न तेषामात्मज्ञाननिष्ठाव्यतिरेकेणान्यत्कार्यमस्तीत्येवं श्रुत्यर्थमिह गीताशास्त्रे प्रतिपिपादयिषितमाविष्कुर्वन्नाह भगवान्—यस्त्विति । यस्तु सांख्य आत्मज्ञाननिष्ठ आत्मरतिरात्मन्येव रतिर्न विषयेषु यस्य स आत्मरतिरेव स्याद्भवेदात्मतृप्तश्चाऽऽत्मनैव तृप्तो नान्नरसादिना मानवो मनुष्यः संन्यास्यात्मन्येव च संतुष्टः । संतोषो हि बाह्यार्थलाभे सर्वस्य भवति तमनपेक्ष्याऽऽत्मन्येव च संतुष्टः सर्वतो वीततृष्ण इत्येतत् । य ईदृश आत्मवित्तस्य कार्यं करणीयं न विद्यते नास्तीत्यर्थः ॥ १७ ॥

**शां० आ०**—वृत्तमर्थमेवं विभज्यानूद्यानन्तरश्लोकमाशङ्कोत्तरत्वेनावतारयति—**एवमिति** । अर्जुनस्य प्रश्नमित्येवमर्थमाशङ्क्याऽऽह भगवानिति संबन्धः । नन्वेषाऽऽशङ्का नावकाशमासादयत्यनात्मज्ञेन कर्तव्यं कर्मेति बहुशो विशेषितत्वादित्याशङ्क्याऽऽह—**स्वयमेवेति** । किमर्थं श्रुत्यर्थं स्वयमेव भगवानत्र प्रतिपादयतीत्याशङ्क्याऽऽह—**शास्त्रार्थस्येति** । गीताशास्त्रस्य ससंन्यासं ज्ञानमेव मुक्तिसाधनमर्थो नार्थान्तरमिति विवेकार्थमिह श्रुत्यर्थं कीर्तयतीत्यर्थः । तमेव श्रुत्यर्थं संक्षिपति—**एतमिति** । सिद्धं चेदात्मवेदनमनर्थकं तर्हि व्युत्थानादीत्याशङ्क्याऽऽपातिकविज्ञानफलमाह—**निवृत्तेति** । ब्राह्मणग्रहणं तेषामेव व्युत्थाने मुख्यमधिकारित्वमितिज्ञापनार्थम् क्लेशात्मकत्वादेषणानां ताभ्यो व्युत्थानं सर्वेषां स्वाभाविकत्वादविधित्सितमित्याशङ्क्याऽऽह—**मिथ्येति** । भिक्षाचर्यं चरन्तीति वचनं व्युत्थानविरुद्धमित्याशङ्क्याऽऽह—**शरीरेति** । तर्हि तद्वदेव तेषामग्निहोत्राद्यपि कर्तव्यमापद्येतेत्याशङ्क्य व्युत्थायिनामाश्रमधर्मवदग्निहोत्रादेरनुष्ठापकाभावान्मैवमित्याह—**न तेषामिति** । यथोक्तं श्रुत्यर्थमस्मिन्गीताशास्त्रे पौर्वापर्येण पर्यालोच्यमाने प्रतिपादयितुमिष्टं प्रकटीकुर्वन्कर्तव्यमेव कर्म जीवतेति नियमे ' ज्ञानयोगेन सांख्यानाम् ' इति कथमुक्तमितिपरिचोद्यपरिहारमुपदर्शयतीत्याह—**इत्येवमिति** । आत्मनिष्ठस्य विषयसङ्गराहित्यं दृष्टं तदनात्मज्ञेन जिज्ञासुना कर्तव्यमिति मत्वाऽऽह—**यस्तु सांख्य इति** । किंचाऽऽत्मज्ञस्य ज्ञानेनाऽऽत्मनैव परितृप्तत्वान्नान्नपानादिना साध्या तृप्तिरिष्टा तेन विद्यार्थिना संन्यासिनाऽपि नान्नरसादावासक्तिर्युक्ता कर्तुमित्याह—**आत्मतृप्त इति** । किंचाऽऽत्मविदः सर्वतो वैतृष्ण्यं दृष्टं तदनात्मविदा विद्यार्थिना कर्तव्यमित्याह—**आत्मन्येवेति** । रतितृप्तिसंतोषाणां मोदप्रमोदानन्दवदवान्तरभेदः, अथवा रतिर्विषयासक्तिः, तृप्तिर्विषयविशेषसंपर्कजं सुखं, संतोषोऽभीष्टविषयमात्रलाभाधीनं सुखसामान्यमिति भेदः । नन्वात्मरतेरात्मतृप्तस्याऽऽत्मन्येव संतुष्टस्यापि किंचित्कर्तव्यं मुक्तये भविष्यतीति नेत्याह—**य ईदृश इति** ॥ १७ ॥

**आ० भा०**—तर्ह्यतीव मनःसमाधानमपि न कार्यमित्यत आह—यस्त्विति । रमणं परदर्शनादि निमित्तं सुखम् । तृप्तिरन्यत्रालंबुद्धिः । संतोषस्तज्जनकं सुखम् । 'संतोषस्तृप्तिकारणम्' इत्यभिधानात् । परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः । अन्यत्र सर्वात्मनालंबुद्धिः । महच्च तत्सुखं च तेनैवान्यत्रालंबुद्धिरिति दर्शयति । आत्मन्येव च संतुष्ट इति । तत्स्थ एव सन्संतुष्ट इत्यर्थः । नान्यत्किमपि संतोषकारणमित्यवधारणम् आत्मना तृप्तः । न ह्यात्मन्यलंबुद्धिर्युक्ता । तद्वाचित्वं च वयं तु न वितृप्याम उत्तमश्लोकविक्रमैरितिप्रयोगात्सिद्धम् । अध्याहारस्त्वगतिका गतिः । आत्मरतिरेवेत्यवधारणादसंप्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यते । स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते । यद्वा स्वधर्मो मम तुष्ट्यर्थः सा हि सर्वैरपेक्षितेति वचनाच्च पंचरात्रे । अन्यदाऽन्यरतिरपीषत्सर्वस्य भवति ।

**न च तत्रालंबुद्धिमात्रमुक्तम्। आत्मतृप्त इति पृथगभिधानात्। कर्तृशब्दः कालावच्छेदेऽपि चायं प्रसिद्धः यो भुङ्क्ते स तु न ब्रूयादित्यादौ। अतोऽसंप्रज्ञातसमाधावेवैतत्। मानवइति ज्ञानिन एवा-संप्रज्ञातसमाधिर्भवतीति दर्शयति । मनु अवबोधन इति धातोः । परमात्मरतिश्चात्र विवक्षिता। विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हीति वचनात्॥ १७॥**

**आ० ज०**—एवमज्ञानिनः कर्म कर्तव्यमित्युक्तम्। इदानीं ज्ञानिनः कर्तव्याभावमाहेति परव्याख्यानमसदिति भावेन संगति-माह—**तर्हीति**। यद्येवं कर्माकरणे हानिस्तत्करणे च लाभस्तर्हीत्यर्थः। परमेश्वरेऽतीव मनःसमाधानमसंप्रज्ञातसमाधिरित्यर्थः। न कार्यं प्रसज्येतेति शेषः। तत्र कर्मलोपस्यावश्यंभावादिति भावः। अत्र रतितृप्तिसंतोषशब्दांस्तावद्व्याचष्टे—**रमणमिति**। परेति स्वरूपकथनं न शब्दार्थांतर्भूतम्। तथा च पंचमेऽभिधानं वक्ष्यते। तथात्वे जीवनिराकरणं च व्यर्थं स्यात् यद्दर्शनादिनिमित्तं सुखं ततोऽन्यत्र। तज्जनकं तृप्तेर्जनकं। तृप्तिकारणं सुखमितिशेषः। इदानीमात्मशब्दस्य जीवविषयत्वप्रतीतिनिरासार्थमात्मरतिरितिसमस्तं पदं व्याख्याति—**परमात्मेति**। प्राप्त आत्मरतिरिति शेषः। अनेनात्मनि रतिर्यस्येति विग्रहः सूचितः। आत्मनो रतिर्यस्येति वा। एवमुत्तरावप्यात्मशब्दौ परमात्मार्थौ ज्ञातव्यौ न चैवं सति तृप्तशब्दस्य परमात्मनोऽन्यत्रालंबुद्धिरर्थः स्यात्। ततश्चेदं न वक्तव्यम्। आत्मरतिरेवेत्यवधारणेनान्यरतिनिरासेन पौनरुक्त्यप्रसंगादित्यत आह—**अन्यत्रेति**। अलंबुद्धित्वं प्राप्तस्तृप्तशब्देनोक्त इति शेषः। अलंबुद्धिरिति पाठे तृप्तशब्दार्थ इति शेषः। अवधारणेनैवान्यत्र रत्यभावे लब्धेऽपि सर्वात्मनाऽन्यत्रालंबुद्धिं वक्तुं तृप्त इति पुनर्वचन-म्। अवधारणस्यान्यत्वालंबुद्धिमात्रद्योतनेन चरितार्थस्य सर्वात्मनेत्यत्राप्रवृत्तेरिति भावः। ननु संतुष्ट इत्यनेनालंबुद्धिजनकं सुखं प्राप्त इत्युच्यत इत्युक्तम् तत्किं विषयजन्यम् उतात्मरत्याख्यम्। नाद्यः विरोधात्। न द्वितीयः तस्यात्मरतिशब्देनोक्ततया पुनरुक्तिप्रसंगात्। कथं च तस्यान्यत्रालंबुद्धिजनकत्वमित्यत आह—**महच्चेति**। चशब्दो हेतौ। तदात्मरत्याख्यं प्रागुक्तमेव सुखं पुनरन्यत्रालंबुद्धि-कारणत्वेनोच्यतेऽतो न दोषः तस्य च महत्त्वं संशब्देनोक्तमतस्तत्कारणत्वं चोपपन्नमित्यर्थः। आत्मरतिः संतोषशब्देन गृह्यते चेत् पुनरात्मनीति व्यर्थमित्यत आह—**तत्स्थएवेति**। संतोषाख्यात्मरतिः केनास्य जातेत्यपेक्षायामसंप्रज्ञातसमाधिलक्षणया परमात्मनि स्थित्येति ज्ञापयितुं आत्मनीत्युक्तमित्यर्थः।अवधारणस्य प्रयोजनमाह—**नान्यदिति**। अन्यदसंप्रज्ञातसमाधिरूपात्तत्स्थत्वात् एतेना-त्मरतिरेवेत्यवधारणेनास्य पुनरुक्तता परिहृता नन्वात्मतृप्त इति कोऽयं समास इत्यत आह—**आत्मनेति**। न केवलमात्मरत्याख्येन सुखेन किं तु प्रसन्नेन परमात्मनैवेत्यर्थः। पंचमीसमासः कथं न स्यादिति चेत् न। असामर्थ्यात्। अन्यत्रेत्यनेन ह्यस्य सामर्थ्यं न तु तृप्तशब्दार्थेन। तृप्तशब्दार्थ एवान्यत्रार्थांतर्भूतोऽस्तीति चेत् न तस्य प्रकरणलब्धस्य तदंतर्भावाभावात्। अन्यथा वयं तु न वितृ-प्याम इत्यत्र ततोऽन्यत्वालंबुद्धिं न प्राप्नुम इत्यर्थप्रसंगात्। अस्तु तर्हि सप्तमीसमास इति नेत्याह—**न हीति**। पूर्वविशेषणविरोधात् प्रमाणांतरविरोधाच्चेति भावः। स्यादयं दोषो यदि तृप्तशब्दस्यालंबुद्धिवाचित्वं स्यात्तदेव कुत इत्यत आह—**तद्वाचित्वं चेति**। नन्वत्र तृप्तिशब्दः प्रीत्यर्थः। नचैवं सत्यर्थानुपपत्तिः। उत्तमश्लोकविक्रमैः श्रूयमाणैर्निमित्तैरन्यत्र प्रीतिं न प्राप्नुम इत्यध्याहारे-णोपपत्तेरित्यत आह—**अध्याहारस्त्विति**। गत्यंतररहितागमनिका। अध्याहारो ह्यश्रुतशब्दकल्पनम्। तच्च कल्पकसद्भावे न दोषोऽन्यथा तु दोष एव। कल्पकं च गत्यंतरराहित्यम्। अन्यथाऽनुपपत्तिरिति यावत्। अलत्वलंबुद्ध्यर्थत्वे गृहीते विनाऽप्यध्या-हारेण वाक्यार्थोपपत्तेरयुक्तोऽसाविति भावः। षष्ठीसमासस्तु पूरणगुणसुहितार्थेति प्रतिषिद्धः। अपव्याख्यानम् निराचष्टे—**आत्म-रतिरेवेति**। न ज्ञानिमात्रस्येत्येवार्थः। इतोऽपि न ज्ञानिमात्रस्य कार्याभाव इत्याह—**स्थितप्रज्ञस्यापीति**। स्वधर्मः कार्यं इति संबंधः। आत्मरतिरेवेत्यवधारणेऽपि कुतो न ज्ञानिमात्रविषयमेतदित्यत आह—**अन्यदेति**। अवधारणेन ह्यनात्मरतिर्व्यावर्त्यते। असंप्रज्ञातसमाधिकालादन्यदा सर्वस्य ज्ञानिनोऽपीषदन्यरतिर्भवतीत्युपपादितम्। अतोऽसंप्रज्ञातसमाधिस्थव्यतिरिक्तानां ज्ञानिनाम-प्यवधारणेन व्यावर्तितत्वान्न तद्विषयमेतदिति भावः। ननु ज्ञानिनामन्यरतौ विद्यमानायामपि तत्रालंबुद्धिरप्यस्तीत्यात्मरतिरेवेत्य-वधारणमुपपद्यत इत्यत आह—**न चेति**। तत्र श्लोके तत्र कार्याभावे प्रयोजकत्वेनात्मनोऽन्यत्रालंबुद्धिमात्रमल्पालंबुद्धिः। रति-सहचरितालंबुद्धिरिति यावत्। नोक्ता किं तर्हि सर्वात्मनाऽलंबुद्धिः। कुत इत्यत आह—**आत्मेति**। अवधारणेनान्यत्रालंबुद्धौ लब्धा-यामपि यत्पृथगात्मतृप्त इत्यभिधत्ते तेन सर्वात्मनाऽलंबुद्धिरवधारणेनाभिप्रेतेति ज्ञायत इति प्रागुक्तम्। अतो ज्ञानिमात्रे नेदमुप-पद्यत इत्यर्थः। यस्त्वात्मरतिरेवेत्येतदसंप्रज्ञातसमाधिस्थ एव संभवि। तथाऽपि यत्पतति तद्बुवितिवध एवंविध कदाचित्तस्य सर्वदा कार्यं न विद्यत इत्येवं। व्याख्याने ज्ञानिमात्रस्य कार्याभावः सेत्स्यति। न ह्यत्र यदैवं तदेति कालावच्छेदकशब्दोऽस्ति। आत्मरतिरितिसमासस्तु रतेः कर्तारमेवाचष्ट इत्यत आह—**कर्तृशब्द इति**। अयं च यदा तदेति रहितोऽपीत्यर्थः। आदिग्रहणेन यो दारान्परिगृह्णाति स गृहीत्यादेः परिग्रहः। अयं भावः। तस्य कार्यं न विद्यत इत्युक्तेऽतिप्रसक्तौ सत्यामन्यव्यावर्तकं यस्त्वा-त्मरतिरेव स्यादित्यनेनोक्तम्। व्यावर्तकं च द्विविधं भवति। विशेषमुपलक्षणं चेति। तत्र व्यवच्छेद्यसमानकालं विशेषणम् यथा

सिद्धांत्युदाहृतं भोजनम् अन्यथा तूपलक्षणं यथा पूर्वपक्ष्युदाहृतं पतनम् तत्र विशेषणं मुख्यम्। विशेषज्ञानहेतुत्वात्। अन्यदमुख्यं वैपरीत्यात् 'मुख्यामुख्ययोश्च मुख्ये कार्यसंप्रत्ययः।' न चात्र विशेषणत्वग्रहणे बाधकमस्ति। येनोपलक्षणमेतदिति प्रतीम इति। कर्तृशब्द इत्युक्तस्य फलमाह—**अत इति**। एतत्कार्यराहित्यम्। समाधावेवेत्युक्त्या समानकालतां सूचयति। न च संप्रज्ञातसमाधिस्थस्य कार्याभावे व्याख्यायमाने कदाचिदपरोक्षज्ञानरहितस्याप्यसंप्रज्ञातसमाधिसंभवात्कार्याभावप्रसंग इति चेत् न। अपरोक्षज्ञानिन एवासंप्रज्ञातसमाधिर्भवति नान्यस्येत्यस्यार्थस्य मानव इति पदेन भगवतैव दर्शितत्वादित्याह—**मानव इति**। मानव इति कथं ज्ञानिनो वाचकमित्यत आह—**मन्विति**। धातोर्व्याख्यानादिति शेषः अस्माद्धातोर्भावे उप्रत्ययः। ततो मनुरवबोधोऽस्यास्तीत्यस्मिन्नर्थे मनोरयमाश्रय इत्यर्थेवाऽण्प्रत्ययः। यद्वा धातोरेवाण्प्रत्ययः। मनुष्य इति व्याख्यायामृष्यादिव्यावृत्तिर्वैयर्थ्यं चापद्येत। आत्मशब्दस्याप्यन्यथा व्याख्यां निराकरोति—**परमात्मेति**। चशब्दोऽवधारणे। न स्वात्मरतिरित्यर्थः। तस्यैवेत्यवधारणादिति ॥ १७ ॥

**रा० भा०**—असाधनायत्तात्मदर्शनस्य मुक्तस्यैव महायज्ञादिवर्णाश्रमोचितकर्मानारम्भ इत्याह—यस्तु ज्ञानयोगकर्मयोगसाधननिरपेक्षः स्वत एवात्मरतिरात्माभिमुखः आत्मनैव तृप्तो नान्नपानादिभिरात्मव्यतिरिक्तैः आत्मन्येव सन्तुष्टो नोद्यानस्रक्चन्दनगीतवादित्रनृत्यादौ धारणपोषणभोग्यादिकं सर्वमात्मैव यस्य तस्यात्मदर्शनाय कर्तव्यं न विद्यते स्वत एव सर्वदा दृष्टात्मस्वरूपत्वात्॥ १७॥

**अ० टी०**—नन्वेवं चेत्तदा सर्वे एव त्वद्भक्ताः कथं न कुर्वन्तीत्यत आह द्वयेन—**यस्त्वात्मरतिरेवेति**। यस्तु आत्मरतिरेव आत्मनि मय्येव रतिर्यस्य तादृशः स्यात्। यश्च आत्मतृप्तश्च भगवदानन्देन तृप्तः सुखितः। आत्मन्येव भगवत्येव संतुष्टः। स्वभोगापेक्षारहितः। तस्य कार्यं कर्त्तव्यं न विद्यते नास्तीत्यर्थः॥ १७॥

**नी० टी०**—एवमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्त्तितमज्ञैरधिकृतैरनुवर्तितव्यमित्युक्तं अस्याननुवर्त्तने च महान् प्रत्यवाय उक्तः स ब्रह्मविदमपि स्पृशेदिति संभावितामाशंकां परिहरति—**यस्त्विति**। आत्मन्येव रतिः प्रीतिर्यस्य न तु स्त्र्यादौ स तथा। नन्वात्मनि प्रीतिः प्राणिमात्रस्यानौपाधिकी अस्ति प्रत्युत तदर्थत्वेनैव स्त्र्यादिष्वपि प्रीतिर्भवतीत्यत उक्तं आत्मतृप्त इति आत्मनैव परमानंदरूपेण तृप्तो न मिष्टान्नादिना। ननु मंदाग्निरपि स्त्र्यादौ न रमते नापि मिष्टान्नेन तृप्यति अत उक्तं आत्मन्येव च संतुष्ट इति मंदाग्निर्हि धातुवृद्धिं जाठरोद्दीपनं च कामयमान औषधाद्यर्थमितस्ततो धावति न त्वात्मन्येव तुष्यति विद्वांस्तु रतितृप्तितुष्टीरात्मनैवानुभवति। न स्त्र्यन्नधनादिभिरिति तस्य कार्यं कर्त्तव्यं किमपि नास्ति क्रियाप्राप्यस्य कस्यचिदप्यर्थस्याभावात् ॥ १७ ॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ॥**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

**शां० भा०**—किंच—**नैवेति**। नैव तस्य परमात्मरतेः कृतेन कर्मणाऽर्थः प्रयोजनमस्ति। अस्तु तर्ह्यकृतेनाकरणेन प्रत्यवायाख्योऽनर्थो नाकृतेनेह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूप आत्महानिलक्षणो वा नैवास्ति। न चास्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चिदर्थव्यपाश्रयः प्रयोजननिमित्तक्रियासाध्यो व्यपाश्रयो व्यपाश्रयणम्। कंचिद्भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थोऽस्ति। येन तदर्था क्रियाऽनुष्ठेया स्यात्। न त्वमेतस्मिन्सर्वतःसंप्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे ॥ १८ ॥

**शां० आ०**—इतश्चाऽऽत्मविदो न किंचित्कर्तव्यमित्याह—**किंचेति**। अभ्युदयनिःश्रेयसयोरन्यतरत्प्रयोजनं कृतेन सुकृतेनाऽऽत्मविदो भविष्यतीत्याशङ्क्याऽऽह—**नैवेति**। प्रत्यवायनिवृत्तये स्वरूपप्रच्युतिप्रत्याख्यानाय वा कर्म स्यादित्याशङ्क्याऽऽ-

ह—**नेत्यादिना**। ब्रह्मादिषु स्थावरान्तेषु भूतेषु कंचिद्भूतविशेषमाश्रित्य कश्चिदर्थो विदुषः साध्यो भविष्यति तदर्थं तेन कर्तव्यं कर्मेत्याशङ्क्याऽऽह—**न चेति**। तत्राऽऽद्यं पादमादत्ते—**नैवेति**। तं व्याचष्टे—**तस्येति**। आत्मविदः स्वर्गाद्यभ्युदयानार्थित्वं निःश्रेयसस्य प्राप्तत्वान्न कृतं कर्मार्थवदित्यर्थः।आत्मविदा चेत्कर्म न क्रियते तर्हि तेनाकृतेन तस्यानर्थो भविष्यतीति तत्प्रत्याख्यानार्थं तस्य कर्तव्यं कर्मेति शङ्कते—**तर्हीति**। द्वितीयपादेनोत्तरमाह—**नेत्यादिना**। अतो न तन्निवृत्त्यर्थं कृतमर्थवदिति शेषः। द्वितीयं भागं विभजते—**न चास्येति**। व्यपाश्रयणमालम्बनं नेति संबन्धः। पदार्थमुक्त्वा वाक्यार्थमाह—**कंचिदिति**। भूतविशेषस्याऽऽश्रितस्यापि क्रियाद्वारा प्रयोजनप्रसवहेतुत्वमिति मत्वाऽऽह—**येनेति**। तर्हि मयाऽपि यथोक्तं तत्त्वज्ञानमाश्रित्य त्याज्यमेव कर्मेत्यर्जुनस्य मतमाशङ्क्याऽऽह—**न त्वमिति**॥ १८॥

**आ० भा०—तस्य कर्मकाले वक्तव्योऽहमिति कंचित्प्रत्युक्त्वा तत्कृतावात्मरत्यधिकः समो वार्थो नास्ति। न च संध्याद्यकृतौ कश्चिद्दोषोऽस्ति। न चैतदपहाय सर्वभूतेषु कश्चित्प्रयोजनाश्रयः। अर्थो येन दर्शनादिना भवति सोऽर्थव्यपाश्रयः। ज्ञानमात्रेण यद्यपि प्रत्यवायो न भवति। तदर्जुनस्यापि सममिति न तस्य कर्मोपदेशोपयोग्ये तद्भवति। ईषत्प्रारब्धानर्थसूचकं च तद्भवति। महच्चेद्वृत्रहत्यादिवत्॥ १८॥**

**आ० ज०**—यदीयं कार्याभावोक्तिर्न ज्ञानिमात्रस्य किंत्वसंप्रज्ञातसमाधिस्थस्यैव। तर्हि नैव तस्य कृतेनार्थ इत्युत्तरं वाक्यं न संबध्यते असंप्रज्ञातसमाधेः करणस्यैवाभावेन तत्प्रयोजनाभावकथनस्यैवायोगात् ज्ञानिनस्तु करणसंभवेन तत्प्रयोजनप्रतिषेधोपपत्तिरिति चेन्न। तर्ह्यतीव मनःसमाधानमपि न कार्यमित्याक्षेपस्य तस्य कार्यं न विद्यत इत्युत्तरं कस्मादुक्तं कर्मकृतिकाले त्वयाऽहमुद्बोधनीय इति कंचित्प्रत्युक्त्वा समाहितस्तेन योगशास्त्रादितोपायैरुद्बोधितः कर्म करोतीति कुतोनोक्तमित्याशंकानिरासायेदमेवमुच्यत इत्यभिप्रेत्य व्याचष्टे—**तस्येति**। तस्यासंप्रज्ञातसमाधिस्थस्यार्थो नास्तीति संबंधः। उक्त्वोद्बुद्धस्येति शेषः। एवं तर्हि तस्यैवमहत्सुखत्वादित्याद्युक्तिविरोध इत्यत उक्तम्—**आत्मेति**। समो वाऽऽत्मरत्या। समप्रतिषेधः कैमुत्यार्थः। न तु समव्ययफलं कर्मानुष्ठीयते। नन्वत्र कश्चनेत्यस्य विशेष्याकांक्षायां संनिधानादर्थ इति संबध्यते। तथा चेदमयुक्तम्। न हि कर्माकरणेऽर्थप्राप्तिरस्ति येन प्रतिषेधः संगच्छते। अर्थसंनिधानादपि योग्यताया बलवत्त्वात्कश्चन दोष इत्यध्याह्रियते। तथाऽप्यश्वमेधाद्यकृतौ प्रत्यवायाप्राप्तेः प्रतिषेधोऽसंगत एवेत्यतो नाकृतेनेत्येतत् व्याचष्टे—**न चेति**। माभूद्यज्ञादिकरणार्थमुत्थानं नित्यनैमित्तिकाकरणे प्रत्यवप्राप्तेस्तदर्थं तु स्यादित्याशंकानिरासार्थमेतत्। संध्येति तत्कालेऽनुष्ठेयं कर्मोच्यते माभूदल्पस्य यज्ञादेरनुष्ठाने प्रयोजनाभावः संध्याद्यकृतौ प्रत्यवायश्च। तथाऽपि गुरुदेवतादिपूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामेव अतस्तत्सन्निधिप्राप्तावुत्थानमावश्यकमेवेत्याशंकानिरासार्थं न चास्येत्युक्तं तदयुक्तम्। उक्तविरोधादेवेत्यतो व्याचष्टे—**न चैतदिति**। एतदसंप्रज्ञातसमाधानम् अपहायोत्थितस्येति शेषः। अपहायेत्यनेन गुर्वादिपूजाया अपि आधिक्यं निषेधति आधिक्यस्यैव पूर्वत्यागोपयोगित्वात्। सर्वभूतेषु गुर्वादिषु नन्वर्थव्यपाश्रयो नामार्थप्राप्तिः तथा च सर्वभूतेभ्यइति स्यादित्यत आह—**अर्थ इति**। अनेनार्थस्य व्यपाश्रयः प्राप्तिर्येन दर्शनादिना व्यापारेण भवतीति व्यधिकरणो बहुव्रीहिरयमित्युक्तं भवति। तथा च दर्शनादेर्विषया गुर्वादय इति सप्तम्युपपत्तिः। अनेनानर्थव्यपाश्रयोऽप्युपलक्ष्यते। स्यादेतत्। किमनेनायासेन ज्ञानिमात्रविषयमेतत्किं न स्यात् ज्ञानमात्रेण प्रत्यवायाभावात्तत्राप्यस्यार्थस्य संभवात्। अवधारणादेश्चोपचरितार्थत्वसंभवादित्यत आह—**ज्ञानेति**। तज्ज्ञानमात्रम्। इतिशब्दो हेतौ। एतत्कार्याभाववचनं प्रत्युत विरोधीति हृदयम्। प्रत्यवायो न भवतीत्यंगीकृत्योक्तम्। वस्तुतस्तु ज्ञानिनोऽप्यस्ति। प्रतिषिद्धकर्मकरणादिनाऽनिष्टप्राप्तिरित्याह—**ईषदिति**। सूचिते च तदैव चित्तखेदः। उपलक्षणं चैतत् मुक्तावानंदन्हास इत्यपि द्रष्टव्यम्। (पुनश्च) मुक्तावानंदन्हास इति श्रीनिवासतीर्थः। उपलक्षणमिति कृष्णाचार्यटिप्पणी। तथा विहितकरणेनानंदवृद्धिरपीति॥ १८॥

**रा० भा०—अत एव तस्यात्मदर्शनाय कृतेन तत्साधनेन नार्थः न किंचित् प्रयोजनम् अकृतेनात्मदर्शनसाधनेन न कश्चिदनर्थः। असाधनायत्तात्मदर्शनत्वात् स्वत एवात्मव्यतिरिक्तसकलाचिद्वस्तुविमुखस्यास्य सर्वेषु प्रकृतिपरिणामविशेषेषु आकाशादिषु भूतेषु सकार्येषु न कश्चित्प्रयोजनतया साधनतया वा व्यपाश्रयः यतस्तद्विमुखीकरणाय साधनारम्भः स हि मुक्त एव॥ १८॥**

अ० टी०—तस्य तादृशस्य भक्तस्य कृतेनापि कर्मणा अर्थः प्रयोजनं पुण्यादिरूपं नास्तीत्यर्थः। अकृतेन च कश्चन प्रत्यवायपापादिकं च नास्तीत्यर्थः। अस्य भक्तस्य सर्वभूतेषु देवादिषु अर्थार्थे मोक्ष भक्त्याद्यर्थं च व्यपाश्रय आश्रयो नास्तीत्यर्थः ॥ १८ ॥

नी० टी०—एतदेवाह—**नैवेति**। तस्यात्मरतेः कृतेन कर्मणा अर्थः प्रयोजनं नास्ति स्वर्गादौ लिप्साभावात् मोक्षस्य चाक्रियासाध्यत्वात्। "नास्त्यकृतः कृतेन" इति श्रुतेः अकृतो मोक्षः कृतेन कर्मणा नास्तीति श्रुत्यर्थः। अकृतेन विरुद्धकर्मणाऽपि अर्थो नरकादिरस्य नास्ति। अत्र कृताकृतशब्दौ मित्रामित्रपदवत् परस्परविरुद्धार्थवाचितया पुण्यपापवचनौ ये तु अकृतेनेति भावे निष्ठा नित्याकरणात् गर्हितत्वरूपो वा प्रत्यवायप्राप्तिरूपो वा कश्चनार्थो विदुषो नास्तीति व्याचक्षते तेषामप्यभावात् भावोत्पत्तेरनभ्युपगमान्नित्यानां काले यदन्यदविहितं क्रियते तत एव प्रत्यवायोत्पादो वक्तव्य इति घट्टकुट्यां प्रभातवृत्तांत आपद्यते। अत्रोपपत्तिमाह—**न चेति**। चो हेतौ यस्मात् आत्मरतेः सर्वभूतेषु चेतनाचेतनेषु उत्तममध्यमाधमेषु कश्चिदपि अर्थव्यपाश्रयः सुखभोगात्मकप्रयोजनाभिसंबंधो नास्ति आत्मरतित्वादेव निष्कामत्वाद्विदुषः पुण्यपापफलसंबंधो नास्तीत्यर्थः ॥ १८ ॥

**तस्मादसक्तः सततं कार्यं कर्म समाचर ॥**
**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

**शां० भा०**—यत एवम्—तस्मादिति। तस्मादसक्तः सङ्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय। असक्तो हि यस्मात्समाचरन्नीश्वरार्थं कर्म कुर्वन्परं मोक्षमाप्नोति पुरुषः सत्त्वशुद्धिद्वारेणेत्यर्थः ॥ १९ ॥

**शां० आ०**—सम्यग्ज्ञाननिष्ठत्वाभावे कर्मानुष्ठानमावश्यकमित्याह—**यत इति**। तस्माज्ज्ञाननिष्ठाराहित्यादिति यावत्। मोक्षमेवापेक्षमाणस्य कथं कर्मणि फलान्तरवति नियोगः स्यादित्याशङ्क्याऽऽह—**असक्तो हीति** ॥ १९ ॥

**आ० भा०**—यतोऽसंप्रज्ञातसमाधेरेव कार्याभावः। तस्मात्कर्म समाचर ॥ १९ ॥

**आ० ज०**—तस्मादसक्त इति परामर्शविषयो न प्रतीयतेऽतस्तं दर्शयन् व्याख्याति—**यत इति**। त्वं चेदानीं असंप्रज्ञातसमाधिर्न भवतीति शेषः। कर्मणोऽवश्यकर्तव्यत्वेऽसंप्रज्ञातसमाधिविलोपप्रसंगान्नेदमवश्यं कर्तव्यमित्यतोऽहमपि न कुर्यामिति परिचोदनायामसंप्रज्ञातसमाधिस्थविलोपप्रतिबंदीं मोचयितुं तस्य वैलक्षण्यमुक्त्वा तत्फलमिदमुच्यत इति नासंगतिः ॥ १९ ॥

**रा० भा०**—यस्मादसाधनायत्तात्मदर्शनस्यैव साधनाप्रवृत्तिः यस्माच्च साधने प्रवृत्तस्यापि सुशकत्वादप्रमादत्वात्तदन्तर्गतात्मयाथात्म्यानुसन्धानत्वाच्च ज्ञानयोगिनोऽपि देहयात्रायाः कर्मानुवृत्त्यपेक्षत्वाच्च कर्मयोग एवात्मदर्शननिवृत्तौ श्रेयान् तस्मादसङ्गपूर्वकं कार्यमित्येव सततं यावदात्मप्राप्ति कर्मैव समाचर असक्तः कार्यमिति वक्ष्यमाणकर्तत्वानुसंधानपूर्वकं च कर्मानुचरन् पुरुषः कर्मयोगेनव परमाप्नोत्यात्मानं प्राप्नोतीत्यर्थः ॥ १९ ॥

अ० टी०—यतो भक्तानां कर्मादिकरणे अकरणे वा न कोपि पुरुषार्थो हानिर्वाऽस्त्यतस्त्वमपि मदाज्ञारूपत्वेनावश्यकर्त्तव्यत्वात्कर्म कुर्वित्याह—**तस्मादिति**। यस्माद्भगवद्भक्तानां कर्मकरणे न फलम् अकरणे च न प्रत्यवायस्तस्मात्त्वमसक्तोऽनासक्तः सन् सततं कार्यं नित्यकर्म समाचर कुरु। नन्वनासक्ते-

नापि कृतं कर्म बाधकं भवत्येवेति चेदत आह—**असक्तइति** । पुरुषः पुरुषांशो भोक्ताधिकारी हीति निश्चयेन असक्तो न तु कापट्येन कर्म आचरन् परं मोक्षं प्राप्नोतीत्यर्थः ॥ १९ ॥

**नी० टी०**—यस्मान्निष्कामस्य कर्मलेपो नास्ति तस्मात्त्वमपि असक्तः फलासक्तिशून्यः सततं सर्वदा कार्यं अवश्यकर्त्तव्यं कर्म नित्यनैमित्तिकं समाचर हि यस्मात् असक्तः कर्माचरन् परं मोक्षं सत्त्वशुद्धिद्वारेणाप्नोति ॥ १९ ॥

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥**
**लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥**

**शां० भा०**—यस्माच्च—कर्मणैवेति । कर्मणैव हि यस्मात्पूर्वे क्षत्त्रिया विद्वांसः संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ता जनकादयो जनकाश्वपतिप्रभृतयः । यदि ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थं प्रारब्धकर्मत्वात्कर्मणा सहैवासंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः । अथाप्राप्तसम्यग्दर्शना जनकादयस्तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकः । अथ मन्यसे पूर्वैरपि जनकादिभिरप्यजानद्भिरेव कर्तव्यं कर्म कृतं तावता नावश्यमन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति तथाऽपि प्रारब्धकर्मायत्तस्त्वं लोकसंग्रहमेवापि लोकस्योन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहस्तमेवापि प्रयोजनं संपश्यन्कर्तुमर्हसि ॥ २० ॥

**शां० भा०**—यद्यपि जितेन्द्रियोऽपि विवेकी श्रवणादिभिरजस्रं ब्रह्मणि निष्ठातुं शक्नोति तथाऽपि क्षत्रियेण त्वया विहितं कर्म न त्याज्यमित्याह—**यस्माच्चेति** । तस्मात्त्वमपि कर्म कर्तुमर्हसीति संबन्धः । इतोऽपि त्वया विहितं कर्म कर्तव्यमित्याह—**लोकेति** । पूर्वार्धं विभजते—**कर्मणैवेति** । कथं जनकादीनां कर्मणा संसिद्धिप्राप्तिरुच्यते कर्मत्यजां हि सम्यग्दर्शनवतां प्रसिद्धा संसिद्धिरिति । तत्र किं जनकादयोऽपि प्राप्तसम्यग्दर्शनाः स्युरुताप्राप्तसम्यग्दर्शना भवेयुरिति विकल्प्य प्रथमं प्रत्याह—**यदीति** । लोकसंग्रहार्थं कर्मणा सहैव संसिद्धिमास्थिता इति संबन्धः । कर्मणा सहैवेत्येतद्व्याकरोति—**असंन्यस्यैव कर्मेति**। तत्र हेतुमाह—**प्रारब्धेति** । जनकादीनां सत्यपि ज्ञानित्वे प्रारब्धकर्मवशात्कर्मापरित्यज्यैव लोकसंग्रहार्थं प्रवर्तमानानां ज्ञानमाहात्म्यादुपपन्ना संसिद्धिरित्यर्थः । द्वितीयमनूद्य पूर्वार्धेनैवोत्तरमाह—**अथेत्यादिना** । द्वितीयार्धव्यावर्त्यामाशङ्कामुत्थापयति—**अथेति** । अज्ञेनाकृतार्थेन कर्तव्यं कर्मेत्येतावता ज्ञानवता कृतकृत्येन न तत्कर्तव्यमित्युक्तमङ्गी करोति—**तथाऽपीति** । तर्हि मयाऽपि ज्ञानवता कृतार्थेन कर्म न कर्तव्यमित्याशङ्क्यार्जुनस्य कर्तव्यमेव कर्मेत्युत्तरार्धव्याख्यानेन कथयति—**प्रारब्धेति** ॥ २० ॥

**आ० भा०**—आचारोऽप्यस्तीत्याह—कर्मणैवेति । कर्मणा सह कर्म कुर्वंत एवेत्यर्थः । कर्म कृत्वैव ततो ज्ञानं प्राप्य वा । न तु ज्ञानं विना । प्रसिद्धं हि तेषाम् ज्ञानित्वं भारतादिषु । "तमेवं विद्वानमृत इह भवति" इत्यादिश्रुतिभ्यश्च । अत्रापि कर्मणां ज्ञानसाधनत्वोक्तेश्च बुद्धियुक्ता इति । गत्यंतरं च नान्यः पंथा इत्यस्य नास्ति इतरेषां ज्ञानद्वाराऽप्यविरोधः । यत्र च तीर्थाद्येवमुक्तिसाधनमुच्यते 'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ॥ अथ वा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ' इत्यादौ । तत्र पापादिमुक्तिः स्तुतिपरता च । तत्रापि हि कुत्रचिद्ब्रह्मज्ञानसाधनत्वमेवोच्यते अन्यथा मुक्तिं निषिध्य ब्रह्मज्ञानंविना मुक्तिर्न कथंचिदपीष्यते । प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव हीत्यादौ । न च तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्तं ज्ञाननियमं घ्नंति । यथा कंचिद्दक्षं भृत्यं प्रत्युक्तान्ययमेव हि राजा किंराज्ञेत्यादीनि । यथाह भगवान् 'यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च ।

स्तावकान्येव तानि स्युरज्ञानां मोहकानि वा ॥ भवेन्मोक्षस्तु मदृष्टेर्नान्यथा तु कथंचन' इति नारदीये। अतोऽपरोक्षज्ञानादेव मोक्षः। कर्म तु तत्साधनमेव ॥ २० ॥

**आ० ज०**—कर्मण एव मुक्तिसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय कर्मणैव हीत्यस्य तात्पर्यं तावदाह—**आचारोऽपीति।** विहितस्य कर्मणः कर्तव्यतायां प्रमाणमिति शेषः। अपिः पूर्वोक्तहेतुसमुच्चये। कर्मण एव मोक्षकारणत्वं तृतीययोच्यत इतिप्रतीतिनिरासाय व्याचष्टे—**कर्मणेति**। नन्वेवं सहयोगे तृतीयायां व्याख्यायमानायां जनकादयः कर्मणा सहैव मुक्तिमास्थिता इति वाक्यार्थः स्यात्। न चायं युक्तः पुत्रेणसहैवागतः पितेत्यत्र यथा पुत्रस्याप्यागमनान्वयः प्रतीयते तथा कर्मणोऽपि मुक्तिमास्थितत्वस्य प्रसंगादित्यतआह—**कर्मेति**। यद्यपि श्रूयमाणक्रियायां सहयोगो नोपपद्यते। तथाऽप्यध्याहृतावांतरक्रियायामुपपद्यत एव। ततश्च यथा सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यत्र दशभिः पुत्रैः सहैव वर्तमानाऽप्येकैव भारं वहतीत्यर्थस्तथाऽत्रापि कर्मणा सहैव वर्तमानाः कर्म कुर्वंत एवेत्यर्थ उपपद्यत इति भावः। द्विधाऽपि सहयोगमभिप्रेत्य समासविधौ पाणिनिरविशेषमभाणीत् तेन सहेति तुल्ययोग इति। कर्मसाहित्यं च मुक्तावानंदवृद्ध्यर्थमिति ज्ञातव्यम्। उपपदविभक्तेः कारकविभाक्तिर्बलीयसी चेत्। सत्यम्। वक्ष्यमाणबाधात्तत्परिग्रहोपपत्तेः अस्तु वा करणे तृतीया तथाऽपि लांगलेन वयं जीवाम इतिवत्पारंपर्येण कर्मणो मुक्तौ कारणत्वमित्याह—**कर्मेति**। सिद्धिमास्थिताइति वेत्यर्थः। सिद्धिशब्दो ज्ञानार्थो वेत्यस्याप्युपलक्षणमेतत्। यथा प्रतीतार्थः किं न स्यादित्यत आह—**न त्विति**। ज्ञानं विना केवलेन कर्मणा जनकादयः सिद्धिं गता इत्यर्थस्तु नेत्यर्थः। **प्रसिद्धं हीति।** हिशब्दो हेतौ। अस्तु तेषां ज्ञानित्वं मुक्तौ तु कर्मैव कारणमित्यत आह—**तमेवमिति।** अत्रापि गीतायामपि कर्मजं बुद्धियुक्ता हीत्यादावित्यर्थः। प्राग्ज्ञानात् ज्ञानसाधनं पश्चान्मुक्तिसाधनमिति समुच्चयवादिनां मतं नतु केवलकर्मवादिनाम्। न चात्र प्रमाणमप्यस्ति। ननु यथा मोक्षस्य ज्ञानसाध्यत्वे तमेवमित्याद्यागमाः संति। तथा कर्मसाध्यत्वेऽप्यपामसोममित्यादयो विद्यंते तत्कथं निर्णय इत्यतः सावकाशत्वनिरवकाशत्वबलादित्याह—**गत्यंतरंचेति।** ज्ञानद्वारेति व्याख्यानेऽपीत्यर्थः। ननु कर्मवाक्यान्यपि ब्रह्मज्ञानेन वेत्यादीनि निरवकाशानि संति। तत्र ब्रह्मज्ञानसमानकक्ष्यतया तीर्थस्नानादेरुक्तत्वेनोक्तव्याख्यानायोगात् अतः पुनरनिर्णय एवेत्याशंक्य तेषामपि सावकाशत्वमाह—**यत्रेति**। **तीर्थादीति।** तत्स्नानादीत्यर्थः। पापादिमुक्तिर्मुक्तिशब्दार्थ इत्यर्थः। न च सर्वत्र मुक्तिशब्द एवास्ति। संसारमुक्तिरित्यादेरपि संभवात्। अतोगत्यंतरमप्याह—**स्तुतीति।** प्रशस्तत्वोपलक्षणेत्यर्थः। प्रशस्तत्वसादृश्येन गौणी वा। दुष्टजनव्यामोहनार्थत्वस्याप्युपलक्षणमेतत्। कुत एतत्कल्प्यत इत्यतआह—**तत्रापीति।** यत्र तीर्थस्नानादिकं मुक्तिसाधनमुच्यते तत्रैव प्रस्तावे साधनत्वं तीर्थस्नानादीनाम्। अन्यथा ज्ञानं विना या मुक्तिर्यन्मुक्तिसाधनत्वं वाक्यताविशेषाद्ब्रह्मज्ञानेन वेत्यादिभिरेव ब्रह्मज्ञानं विनेत्यादीनां बाधः किं न स्यादित्यत आह—**न चेति।** असाधारणसाधारणप्रसंगोक्तत्वादिनेति भावः। अत्र दृष्टांतमाह—**यथेति।** इत्यादीनि नायं राजा किं तु भृत्य एवेत्यादीनि तत्प्रस्तावेऽप्युक्तानि न निघ्नंतीति शेषः। आगमसिद्धा चेयं व्यवस्थेत्याह—**यथेति।** मद्दृष्टेरित्येतदर्थप्रतिपत्त्यर्थं भगवानित्युक्तम्। तीर्थादिवाक्यानीति तीर्थस्नानक्षेत्रवासादीनां मोक्षसाधनत्ववाक्यानीत्यर्थः। कर्मेतियज्ञादेर्ग्रहणम्। आदिपदेन ध्यानादेः संग्रहः। पूर्ववदर्थः। अज्ञानां सम्यग्ज्ञानायोग्यानाम्। उपसंहरति—**अत इति** ॥ २० ॥

**रा० भा०**—यतो ज्ञानयोगाधिकारिणोऽपि कर्मयोग एवात्मदर्शने श्रेयान् अत एव हि जनकादयो राजर्षयो ज्ञानिनामग्रेसराः कर्मयोगेनैव संसिद्धिमास्थिताः आत्मानं प्राप्तवन्तः। एवं प्रथमं मुमुक्षोर्ज्ञानयोगानर्हतया कर्मयोगाधिकारिणः कर्मयोग एव कार्य इत्युक्त्वा ज्ञानयोगाधिकारिणोऽपि ज्ञानयोगात्कर्मयोग एव श्रेयानिति सहेतुकमुक्तम् इदानीं विशिष्टतया व्यपदेश्यस्य सर्वथा कर्मयोग एव कार्य इत्युच्यते लोकसंग्रहं पश्यन्नपि कर्मैव कर्तुमर्हसि ॥ २० ॥

**अ० टी०**—एवमनासक्ताः कर्मकर्त्तारो मोक्षं प्राप्ता इत्याह—**कर्मणैवेति।** हीति निश्चयेन कर्मणा अनासक्तकर्मणा जनकादयः संसिद्धिं मुक्तिम् आस्थिताः प्राप्तवन्तः। जनकादयस्तु न साक्षात्त्वां प्रपन्ना इत्यनासक्त्यापि तेषां करणं युक्तं। न तु मम त्वां प्रपन्नस्योचितमित्याशङ्क्याह—**लोकसंग्रहमिति।** लोकसंग्रहमपि संपश्यन् कर्तुमेवार्हसि। अत्रायं भावः। यद्यपि मद्भक्तस्य नावश्यकं तथापि मदाज्ञया लोकसंग्रहार्थं कर्तुमेवार्हसि न तु तज्जनितसिद्ध्याद्यर्थम्। अयमेवार्थ एवकारेण विविच्यते ॥ २० ॥

नी० टी०—अत्र शिष्टाचारं प्रमाणयति—कर्मणेति। कर्मणैव सह संसिद्धिं श्रवणादिसाध्यां ज्ञाननिष्ठां गंतुं आस्थिताः प्रवृत्ताः जनकादयस्त्वादृशाः क्षत्रियाः न तु संन्यासेन। ननु शुद्धचित्तस्य मम नास्ति कर्मापेक्षेत्याशंक्याह—लोकेति। लोकस्य संग्रहः स्वधर्मे प्रवर्त्तनं। ननु स्वप्रयोजनाभावेऽपि केवलं लोकसंग्रहार्थं चेत्कर्म कर्त्तव्यं तदा विदुषां ब्राह्मणानामपि संन्यासो न स्यात् यतीनेव संन्यासधर्मान् ग्राहयितुं तेषां संन्यास इति चेत् अर्जुनेऽपि न तद्दंडवारितमस्ति। ननु क्षत्रियस्य संन्यासेऽधिकारो नास्तीति चेत् लिंगधारणेऽधिकाराभावेऽपि भरतऋषभादिवद्विक्षेपकर्मत्यागमात्रेऽधिकारात्। वार्त्तिके। 'सर्वाधिकारविच्छेदि ज्ञानं चेदभ्युपेयते॥ कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात्' इति विद्वत्संन्यासे क्षत्रियादेरपि अधिकारस्य साधितत्वात् अतो लोकसंग्रहो न मुख्यं कर्म प्रयोजनमिति चेत्सत्यं। न मे पार्थास्ति कर्त्तव्यमिति स्वदृष्टांतेनाधिकारिकत्वादर्जुन एवैवं नियोज्यते न क्षत्रियमात्रमिति तुष्यतु भवान्॥ २०॥

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः॥**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥ २१॥**

**शां० भा०—लोकसंग्रहं कः कर्तुमर्हति कथंचेत्युच्यते—यद्यदिति। यद्यत्कर्माऽऽचरति येषु येषु श्रेष्ठः प्रधानस्तत्तदेव कर्माऽऽचरतीतरोऽन्यो जनस्तदनुगतः। किंच स श्रेष्ठो यत्प्रमाणं कुरुते लौकिकं वैदिकं वा लोकस्तदनुवर्तते तदेव प्रमाणी करोतीत्यर्थः॥ २१॥**

शां० आ०—ज्ञानवता कृतार्थेन लोकसंग्रहार्थमपि न प्रवर्तितव्यमित्याशङ्कामुत्थाप्य परिहरति—लोकेत्यादिना। श्रुताध्ययनसंपन्नत्वेनाभिमतो यद्विहितं प्रतिषिद्धं वा कर्मानुतिष्ठति तत्तदेव प्राकृतो जनोऽनुवर्तते। तेन विद्यावताऽपि लोकमर्यादास्थापनार्थं विहितं कर्तव्यमित्यर्थः। श्रेष्ठानुसारित्वमितरेषामाचारे दर्शयित्वा प्रतिपत्तावपि दर्शयति—किंचेति॥ २१॥

**आ० भा०—स यद्वाक्यादिकं प्रमाणीकुरुते। यदुक्तप्रकारेण तिष्ठतीत्यर्थः॥ २१॥**

आ० ज०—स यत्प्रमाणं कुरुते इत्यत्र यच्छब्देन प्रमाणमप्रमाणं वा विवक्षितम्। आद्ये प्रमाणं कुरुत इत्ययुक्तम्। स्थितस्य करणाभावात्। द्वितीयेऽप्येवमेव अशक्यत्वादित्यत आह—स इति। प्रमाणमेव सत् यद्वाक्यादिकं लोकेन प्रमाणतयाऽनवगतम्। तत्प्रमाणतया ज्ञापयतीत्यर्थः। यद्वैकमेवेदं पदं यत्प्रमाणकं लौकिकं वैदिकं वा कर्म कुरुत इत्यनेनाभिप्रायेण तात्पर्यमाह—यदुक्तेति॥ २१॥

**रा० भा०—श्रेष्ठः कृत्स्नशास्त्रज्ञातृतयानुष्ठातृतया च प्रथितो यद्यदाचरति तत्तदेवाकृत्स्नविज्ञोऽप्याचरति अनुष्ठीयमानमपि कर्म श्रेष्ठो यत्प्रमाणं यदङ्गयुक्तमनुतिष्ठति तदङ्गयुक्तमेवाकृत्स्नविल्लोकोऽनुतिष्ठति अतो लोकरक्षार्थं शिष्टतया प्रथितेन श्रेष्ठेन स्ववर्णाश्रमोचितं कर्म सकलं सर्वदाऽनुष्ठेयम् अन्यथा लोकनाशजनितं पापं ज्ञानयोगादप्येनं प्रच्यावयेत॥ २१॥**

अ० टी०—ननु लोकसंग्रहोपि भक्तानामनुचित एवेत्यत आह—यद्यदिति। श्रेष्ठो मद्भक्तो यद्यदाचरति तदेवेतरो जन आचरति। स मद्भक्तो यदेव प्रमाणं कुरुते लोकस्तदेवानुवर्तते प्रमाणत्वेनाङ्गीकुरुते। अयं भावः। भक्तानां लोकसंग्रहो मदाज्ञया कर्त्तव्यः। यतस्तदाचरणं दृष्ट्वा लोकोऽपि तथैव कुर्यात् तत्स्वरूपाज्ञानेऽपि तदाऽनधिकारित्वात्फलं तु न स्यादेव फलदाने च मदिच्छा न। यतो भक्तिः परमकृपया कस्मैचिदेव दीयते न सर्वेभ्यः। सर्वेभ्यो दाने सृष्टिरेवोच्छिद्येत। अतस्तद्गोपनेन सृष्टिप्रवृत्त्यर्थं बाह्यतः कापट्येन कर्म कर्तव्यमिति भावः॥ २१॥

नी० टी०—॥ २१ ॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ॥
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

शां० भा०—यद्यत्र ते लोकसंग्रहकर्तव्यतायां विप्रतिपत्तिस्तर्हि मां किं न पश्यसि—न म इति। न मे मम पार्थ नास्ति न विद्यते कर्तव्यं त्रिष्वपि लोकेषु किंचन किंचिदपि। कस्मान्नानवाप्तमप्राप्तमवाप्तव्यं प्रापणीयं तथाऽपि वर्त एव च कर्मण्यहम् ॥ २२ ॥

शां० आ०—कृतार्थस्यापि लोकसंग्रहार्थं विहितं कर्म कर्तव्यमित्युक्त्वा तत्रैव भगवन्तमुदाहरणत्वेनोपन्यस्यति—**यदीत्यादिना**। अप्राप्तस्य प्राप्तये तवापि कर्तव्यसंभवान्न किंचिदपि विद्यते कर्तव्यमिति कथमुक्तमित्याशङ्क्याऽऽह—**नानवाप्तमिति**। प्रतीकमुपादाय व्याख्यानद्वारा विद्यावतोऽपि कर्मप्रवृत्तिं संभावयति—**नेत्यादिना**। अन्वयार्थं पुनर्नञोऽनुवादः। भगवतो नास्ति कर्तव्यमित्येतदाकाङ्क्षाद्वारा स्फोरयति—**कस्मादित्यादिना**। प्रयोजनाभावे त्वयाऽपि नानुष्ठेयं कर्मेत्याशङ्क्य लोकसंग्रहार्थं ममापि कर्मानुष्ठानमिति मत्वाऽऽह—**तथाऽपीति** ॥ २२ ॥

आ० भा०—॥ २२ ॥

आ० ज०—॥ २२ ॥

रा० भा०—न मे सर्वेश्वरस्यावाप्तसमस्तकामस्य सर्वज्ञस्य सत्यसंकल्पस्य त्रिषु लोकेषु देवमनुष्यादिरूपेण स्वच्छन्दतो वर्तमानस्य किंचिदपि कर्तव्यमस्ति यतोऽनवाप्तं कर्मणावाप्तव्यं न किंचिदप्यस्ति अथापि लोकरक्षार्थं कर्मण्येव वर्ते ॥ २२ ॥

अ० टी०—मयापि तथैव क्रियत इत्याह—**न मे पार्थेति**। हे पार्थ परमानुगृहीत! मे त्रिषु लोकेषु किञ्चन कर्त्तव्यं नास्ति न वा अनवाप्तम् अवाप्तव्यं प्राप्तव्यं तथापि लोकसंग्रहार्थमहं कर्माणि वर्त्ते कर्म करोमीत्यर्थः ॥ २२ ॥

नी० टी०—कर्मणि वर्ते एव अहं कर्म करोम्येवेत्यर्थः ॥ २२ ॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ॥
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥

शां० भा०—यदि पुनरहं न वर्तेय जातु कदाचित्कर्मण्यतन्द्रितोऽनलसः सन्मम श्रेष्ठस्य सतो वर्त्म मार्गमनुवर्तन्ते मनुष्या हे पार्थ सर्वशः सर्वप्रकारैः ॥ २३ ॥

शां० आ०—लोकसंग्रहोऽपि न ते कर्तव्यो विफलत्वादित्याशङ्क्याऽऽह—**यदि हीति** ॥ २३ ॥

आ० भा०—॥ २३ ॥

आ० ज०—॥ २३ ॥

रा० भा०—अहं सर्वेश्वरः सत्यसंकल्पः स्वसंकल्पकृतजगदुदयविभवलयलीलः स्वच्छन्दतो जगदुपकृतये मर्त्यो जातोऽपि मनुष्येषु शिष्टजनाग्रेसरवसुदेवगृहेऽवतीर्णस्तत्कुलोचिते कर्मण्यतन्द्रितः

सर्वदा यदि न वर्तेय मम शिष्टजनाग्रेसरवसुदेवसूनोर्वर्त्माकृत्स्नविदः शिष्टाः सर्वप्रकारेणायमेव धर्म इत्यनुवर्तन्ते ते च स्वकर्तव्याननुष्ठानेनाकरणे प्रत्यवायेन चात्मानमनुपलभ्य निरयगामिनो भवेयुः२३

अ० टी०—ननु त्वदकरणे किं स्यादित्यत आह—यदीति। अहं जातु कदाचिदपि कर्मणि अतन्द्रितो निरालस्यः सन् न वर्त्तेय न प्रवृत्तो भवामि तदा मनुष्याः सर्वशः मम वर्त्म भक्तिमार्गमनुवर्त्तन्त इत्यर्थः। अतस्तेषां ततो निवृत्त्यर्थं कर्ममार्गप्रवृत्त्यर्थं कर्म करोमीतिभावः ॥ २३ ॥

नी० टी०—यद्यहं कर्मणि न वर्त्तेय तर्हि मनुष्याः ममैव वर्त्मानुवर्त्तते अनुवर्त्तेरन् कर्म न कुर्वीरन्नित्यर्थः। अतंद्रितोऽनलसः सर्वशः सर्वप्रकारैः ॥ २३ ॥

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

**शां० भा०**—तथा च को दोष इत्याह—उदिति। उत्सीदेयुर्विनश्येयुरिमे सर्वे लोका लोकस्थितिनिमित्तस्य कर्मणोऽभावात्, न कुर्यां कर्म चेदहम्, किंच संकरस्य च कर्ता स्याम्। तेन कारणेनोपहन्यामिमाः प्रजाः प्रजानामनुग्रहाय प्रवृत्त उपहतिमुपहननं कुर्यामित्यर्थः। ममेश्वरस्याननुरूपमापद्येत ॥ २४ ॥

**शां० आ०**—श्रेष्ठस्य तव मार्गानुवर्तित्वं मनुष्याणामुचितमेवेत्याशङ्क्य दूषयति—**तथा चेत्यादिना**। ईश्वरस्य कर्मण्यप्रवृत्तौ तदनुवर्तिनामपि कर्मानुपपत्तेरिति हेतुमाह—**लोकस्थितीति**। इतश्चेश्वरेण कर्म कर्तव्यमित्याह—**किंचेति**। यदि कर्म न कुर्यामिति शेषः। संकरकरणस्य कार्यं कथयति—**तेनेति**। प्रजोपहतिः परिप्राप्यते चेत्किं तया तव स्यादिति तत्राऽऽह—**प्रजानामिति** ॥ २४ ॥

**आ० भा०**—॥ २४ ॥

**आ० ज०**—॥ २४ ॥

**रा० भा०**—अहं कुलोचितं कर्म न चेत्कुर्याम् एवमेव सर्वे शिष्टलोका मदाचारायत्तधर्मनिश्चया अकरणादेवोत्सीदेयुः नष्टा भवेयुः शास्त्रीयाचाराणामपालनात्सर्वेषां शिष्टानां संकरस्य च कर्ता स्याम् अत एवेमाः प्रजा उपहन्याम् एवमेव त्वमपि शिष्टजनाग्रेसरपाण्डुतनयो युधिष्ठिरानुजोऽर्जुनः सन् शिष्टतया यदि ज्ञाननिष्ठायामधिकरोषि ततस्त्वदाचारानुवर्तिनोऽकृत्स्नविदः शिष्टाश्च मुमुक्षवः स्वाधिकारमजानन्तः कर्मनिष्ठायामनधिकुर्वन्तो विनश्येयुः अतो व्यपदेश्येन विदुषा कर्मैव कर्तव्यम् ॥ २४ ॥

अ० टी०—ननु तथा तत्करणं किं प्रयोजनकमित्यत आह—उत्सीदेयुरिति। अहं चेत्कर्म न कुर्यां तदा इमे लोका उत्सीदेयुः। अत्रायं भावः। सर्वेषां भक्तिप्रवृत्तौ सत्यां भगवत्साक्षात्कारो मुक्तिर्वा स्यात्तदा इमे मन्वादयो लोकाः सृष्ट्यभावादुच्छिन्ना भवेयुः। अत एव भगवता वृषभध्वजे आज्ञप्तं पाद्मे। 'त्वं च रुद्र महाबाहो' इत्यारभ्य 'सृष्टिरेषोत्तरोत्तरा'इत्यन्तं। च पुनरिमाः प्रजा उपहन्यां तदाऽहमेव संकरस्य नरकसाधनस्य कर्त्ता स्यां भवामि। अयमर्थः। मदाज्ञया ब्रह्मादयः प्रजाः सृजन्ति ताश्चेदहमुपहन्यां तदननुकूलो भवामि। तदा संकरस्य क्लिष्टस्य कर्त्ता स्यां प्रजानां च मदिच्छाव्यतिरेकेण भक्तिस्वरूपाज्ञाने सति प्रवृत्तौ संकरत्वं स्यात् फलाभावे भक्तिफलव्यभिचारोऽपि स्यात् तदापि तत्कर्त्ताऽहमेव स्याम् ॥२४॥

नी० टी०—ततश्च किमित्यत आह—**उत्सीदेयुरिति**। यद्यदाचरतीत्यादेरपरा योजना न केवलं लोकसंग्रहं पश्यन् कर्त्तुमर्हसि अपि तु श्रेष्ठाचारत्वादपीत्याह—**यद्यदिति**। तथा च मम श्रेष्ठस्य यादृश आचारस्तादृश एव मदनुवर्त्तिना त्वयाऽनुष्ठेयः न स्वातंत्र्येणान्य इत्यर्थः। कीदृशस्तवाचारो यो मयाऽनुवर्त्तनीय इत्याकांक्षायां न मे पार्थेत्यादिभिस्त्रिभिः श्लोकैस्तत्प्रदर्शनमिति मधुसूदनश्रीपादाः॥ २४॥

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत॥**
**कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्॥ २५॥**

**शां० भा०—यदि पुनरहमिव त्वं कृतार्थबुद्धिरात्मविदन्यो वा तस्याप्यात्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्य इति—सक्ता इति। सक्ताः कर्मण्यस्य कर्मणः फलं मम भविष्यतीति केचिदविद्वांसो यथा कुर्वन्ति भारत, कुर्याद्विद्वानात्मवित्तथाऽसक्तः सन्। तद्वत्किमर्थं करोति तच्छृणु चिकीर्षुः कर्तुमिच्छुर्लोकसंग्रहम्॥ २५॥**

शां० आ०—त्वामनाचरन्तमनुवर्ततां सर्वेषां को दोषः स्यादित्यपेक्षायामीश्वरस्य कृतार्थतया कर्मानुष्ठानाभावे तदनुवर्तिनामपि तदभावादेव स्थितिहेत्वभावात्पृथिव्यादिभूतानां विनाशप्रसङ्गाद्वर्णाश्रमधर्मव्यवस्थानुपपत्तेश्चाधिकृतानां प्राणभृतां पापोपहतत्वप्रसङ्गात्परानुग्रहार्थं प्रवृत्तिरीश्वरस्येत्युक्तं संप्रति लोकसंग्रहाय कर्म कुर्वाणस्य कर्तृत्वाभिमानेन ज्ञानाभिभवं प्राप्ते प्रत्याह—**यदि पुनरिति**। कृतार्थबुद्धित्वे हेतुमाह—**आत्मविदिति**। यथावदात्मानमवगच्छन्कर्तृत्वाद्यभिमानाभावात्कृतार्थो भवत्येवेत्यर्थः। अर्जुनादन्यत्रापि ज्ञानवति कृतार्थबुद्धित्वं कर्तव्यत्वाद्यभिमानहीने तुल्यमित्याह—**अन्यो वेति**। तस्य तर्हि कर्मानुष्ठानमफलत्वादनवकाशमित्याशङ्क्याऽऽह—**तस्यापीति**। कर्तव्य इत्यात्मविदाऽपि परानुग्रहाय कर्तव्यमेव कर्मेत्याहेति शेषः। दृष्टान्तदार्ष्टान्तिकरूपं श्लोकं व्याकरोति—**सक्ता इत्यादिना**। असक्तः सन्कर्तृत्वाभिमानं फलाभिसंधिं वाऽकुर्वन्निति यावत्॥ २५॥

**आ० भा०—॥ २५॥**

आ० ज०—॥ २५॥

**रा० भा०—अविद्वांसः आत्मन्यकृत्स्नविदः कर्मणि सक्ताः कर्मण्यवर्जनीयसंबन्धाः आत्मन्यकृत्स्नवित्तया तदभ्यासरूपज्ञानयोगेऽनधिकृताः कर्मयोगाधिकारिणः कर्मयोगमेव यथात्मदर्शनाय कुर्वते तथाऽऽत्मनि कृत्स्नवित्तया कर्मण्यसक्तो ज्ञानयोगाधिकारयोग्योऽपि व्यपदेश्यः शिष्टो लोकरक्षणार्थं स्वाचारेण शिष्टलोकानां धर्मनिश्चयं चिकीर्षुः कर्मयोगमेव कुर्यात्॥ २५॥**

अ० टी०—अतस्तत्स्वरूपज्ञानेन लोकसंग्रहार्थं कर्मस्वनासक्तं कर्म कुर्यादित्याह—**सक्ताइति**। यथा अविद्वांसो मूर्खाः कर्मणि सक्तास्तत्फलाभिलाषिणो विषयादीन् न त्यक्तुं समर्थाः कर्म कुर्वन्ति तथा विद्वान् पण्डितो मत्स्वरूपज्ञो लोकसंग्रहं चिकीर्षुः कर्तुमिच्छुरसक्तस्तत्रासक्तिरहितो मदाज्ञया कुर्यादित्यर्थः॥२५॥

नी० टी०—यदि मादृश एव त्वं कृतार्थोऽसि तथापि परानुग्रहार्थं कर्माणि कुर्वित्याह—**सक्ता इति**। कर्मणि कर्मफले कुर्वंति कर्माणीति शेषः। असक्त इति च्छेदः॥ २५॥

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्॥**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्॥ २६॥**

**शां० भा०**—एवं लोकसंग्रहं चिकीर्षोर्न ममाऽऽत्मविदः कर्तव्यमस्त्यन्यस्य वा लोकसंग्रहं मुक्त्वा ततस्तस्याऽऽत्मविद इदमुपदिश्यते—नेति। बुद्धेर्भेदो बुद्धिभेदो मयेदं कर्तव्यं भोक्तव्यं चास्य कर्मणः फलमितिनिश्चितरूपाया बुद्धेर्भेदनं चालनं बुद्धिभेदस्तं न जनयेन्नोत्पादयेदज्ञानामविवेकिनां कर्मसङ्गिनां कर्मण्यासक्तानामासङ्गवताम्। किं तु कुर्याज्जोषयेत्कारयेत्सर्वकर्माणि विद्वान्स्वयं तदेवाविदुषां कर्म युक्तोऽभियुक्तः समाचरन् ॥ २६ ॥

**शां० आ०**—वृत्तमनूद्योत्तरश्लोकमवतारयति—**एवमिति**। कर्तव्यं कर्मेति शेषः। पूर्वार्धमेवं व्याख्यायोत्तरार्धं प्रश्नपूर्वकमवतार्य व्याचष्टे—**किंतु कुर्यादिति**। सर्वकर्माणि कारयेत्तेषु प्रीतिं कुर्वन्निति शेषः। कथं कारयेदित्याकाङ्क्षायामाह—**तदेवेति** ॥ २६ ॥

**आ० भा०**—॥ २६ ॥

आ० ज०—॥ २६ ॥

**रा० भा०**—अज्ञानात्मन्यकृत्स्नवित्तया ज्ञानयोगोपादानाशक्तानां मुमुक्षूणां कर्मसङ्गिनामनादिकर्मवासनया कर्मण्येव नियतत्वेन कर्मयोगाधिकारिणां कर्मयोगादन्यथात्मावलोकनमस्तीति न बुद्धिभेदं जनयेत् किं तर्हि आत्मनि कृत्स्नवित्तया ज्ञानयोगशक्तोऽपि पूर्वोक्तरीत्या कर्मयोग एव ज्ञानयोगनिरपेक्ष आत्मावलोकनसाधनमिति बुद्ध्या युक्तः कर्मैवाचरन् सर्वकर्मस्वकृत्स्नविदां प्रीतिं जनयेत् ॥ २६ ॥

**अ० टी०**—ननु लोकसंग्रहार्थमेव चेत्कर्म कर्त्तव्यं तदा यथाकथंचित्कर्त्तव्यं यथा तेऽज्ञानेन कुर्वन्ति तथा करणं किं प्रयोजनकमित्याकाङ्क्षायामाह—**न बुद्धिभेदं जनयेदिति**। कर्मसंगिनां बुद्धिभेदं न जनयेत्। तथाकरणे तेषां भ्रमो भवेत् भ्रमे सति कर्म न कुर्युरेव। ननु कर्मणा चित्तशुद्धौ सत्यां कथं भ्रम इत्यत आह—**अज्ञानामिति**। न हि अज्ञाश्चित्तशुद्ध्यर्थं कर्म कुर्वन्ति किंतु कर्मैवेश्वरं मन्यमानाः फलरूपेणान्यं पण्डितं कर्म कुर्वाणं वीक्ष्य कुर्वन्ति अत एव कर्मसङ्गिनामित्युक्तं न तु कर्मिणां। विद्वान् युक्तो मां हृदि स्थाप्य मद्युक्तः स्वयं समाचरन् सम्यगाचरन् मत्सेवादि कुर्वन् अन्येषां वृत्त्यर्थं सदा कर्माणि अन्यान् अज्ञान् जोषयेत् कर्म कारयेदित्यर्थः ॥ २६ ॥

**नो० टी०**—विद्वान् अज्ञानां कर्मस्वासक्तानां बुद्धिभेदं बुद्धेश्चालनं न जनयेत् नोत्पादयेत् किंतु तान् सर्वाणि कर्माणि जोषयेत्सेवयेत् कथं युक्त आदृतो भूत्वा समाचरन् ॥ २६ ॥

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥**
**अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥ २७ ॥**

**शां० भा०**—अविद्वानज्ञः कथं कर्मसु सज्जत इत्याह—प्रकृतेरिति। प्रकृतेः प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृतेर्गुणैर्विकारैः कार्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैरहंकारविमूढात्मा कार्यकरणसंघातात्मप्रत्ययोऽहंकारस्तेन विविधं नानाविधं मूढ आत्माऽन्तःकरणं यस्य सोऽयं कार्यकरणधर्मा कार्यकरणाभिमान्यविद्यया कर्माण्यात्मनि मन्यमानस्तत्तत्कर्मणामहं कर्तेति मन्यते ॥ २७ ॥

**शां० आ०**—अज्ञानां कर्मसङ्गिनामित्युक्तं तेनोत्तरश्लोकस्य संगतिमाह—**अविद्वानिति**। कर्तृत्वमात्मनोऽवास्तवमित्यभ्युपगमाद्विद्वान्कथं कुर्वन्नेव तस्याभावं पश्यतीत्याशङ्क्याऽऽह—**प्रकृतेरिति**। कर्मस्वविदुषः सक्तिप्रकारं प्रकटयन्व्याकरोति—**प्रकृतेरित्यादिना**। प्रधानशब्देन मायाशक्तिरुच्यते। अविद्ययेत्युभयतः संबध्यते॥ २७॥

**आ० भा०**—विद्वदविदुषोः कर्मभेदमाह—प्रकृतेरिति। प्रकृतेर्गुणैरिंद्रियादिभिः प्रकृतिमपेक्ष्य गुणभूतानि हि तानि तत्संबंधीनि च। न हि प्रतिबिंबस्य क्रिया॥ २७॥

**आ० ज०**—प्रकृतेः क्रियमाणानीतिश्लोकद्वयस्यास्फुटत्वात्तात्पर्यमाह—**विद्वदिति**। यथायोगं संबंधो न यथाक्रमं। कर्मभेदं कर्मवैलक्षण्यमाह प्रपंचयतीत्यर्थः। सक्ताः कर्मणीत्यादिनोक्तत्वात् व्यवहितत्वादन्वयं दर्शयन् गुणशब्दस्यानेकार्थत्वात् विवक्षितमर्थमाह—**प्रकृतेरिति**। आदिपदेन शरीरमनसोर्ग्रहणम्। कथमिंद्रियादीनां द्रव्याणां प्रकृतिगुणत्वमित्यतआह—**प्रकृतिमिति**। गुणभूतान्यप्रधानानि। प्रकारांतरेण व्याचष्टे—**तदिति**। प्रकृतिकार्याणि चेत्यर्थः। गुणशब्दः कार्यार्थ इत्युक्तं भवति। ननु जीवस्यापि कर्तृत्वादहंकारविमूढात्मा कर्ताऽहमितिमन्यत इति कथमुच्यत इत्यत आह—**न हीति**। स्वातंत्र्येणेतिशेषः॥ २७॥

**रा० भा०**—अथ कर्मयोगमनुतिष्ठतो विदुषोऽविदुषश्च विशेषं प्रदर्शयन् कर्मयोगापेक्षितमात्मनोऽकर्तृत्वानुसन्धानप्रकारमुपदिशति। प्रकृतेर्गुणैस्सत्त्वादिभिः स्वानुरूपं क्रियमाणानि कर्माणि प्रति अहंकारविमूढात्माहं कर्तेति मन्यते अहंकारेण विमूढ आत्मा यस्यासावहंकारविमूढात्मा अहंकारो नामानहमर्थे प्रकृतावहमित्यभिमानस्तेनाज्ञातात्मस्वरूपो गुणकर्मस्वहं कर्तेति मन्यते इत्यर्थः॥२७॥

**अ० टी०**—ननु विद्वानपि चेत्तथा कुर्यात्तदाऽविदुषःसकाशात् को भेदस्तज्ज्ञानस्य च क्वोपयोगः संपूर्णे काले कर्मव्यावृत्त्या सेवाद्यऽनवसरादित्यतोऽविदुषो विदुषश्च भेदमाह—**प्रकृतेरिति**। अहंकारेण विमूढात्मा अविद्वान् सर्वशः प्रकृतेर्गुणैरिन्द्रियैः क्रियमाणानि कर्माणि अहमेव कर्तेति मन्यते न तु भगवदिच्छाम्। तानि च भगवाँल्लोकव्यामोहार्थं कारयति॥ २७॥

**नी० टी०**—अविद्वान् कथं कर्मसु सज्जत इत्यत आह—**प्रकृतेरिति**। प्रकृतेः पारमेश्वर्याः सत्त्वरजस्तमोगुणात्मिकाया "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति श्रुतिप्रसिद्धायाः शक्तेर्गुणैः कार्यकारणसंघातात्मकैः क्रियमाणानि कर्माणि अहंकारेण स्वस्मिन्नध्यस्तेन विमूढः तदीयान् कर्तृत्वादीनात्मधर्मत्वेन पश्यन् आत्मनश्च असंगानंदसंविद्रूपतामपश्यन् आत्मा अहंकारेण विमूढश्चासावात्मा चेति विग्रहः अहं कर्माणि कर्मणां कर्तेति मन्यते कर्त्रध्यासेन। कर्ताऽहमिति तृन्प्रत्ययस्तेन "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति षष्ठीनिषेधः अन्यथा तृच्प्रत्यये कर्मणां कर्त्ताहमिति षष्ठ्या भाव्यम्॥ २७॥

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः॥
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते॥ २८॥

**शां० भा०**—यः पुनर्विद्वान्—तत्त्वविदिति। तत्त्ववित्तु महाबाहो कस्य तत्त्ववित् गुणकर्मविभागयोर्गुणविभागस्य कर्मविभागस्य च तत्त्वविदित्यर्थः। गुणाः करणात्मका गुणेषु विषयात्मकेषु वर्तन्ते नाऽऽत्मेति मत्वा न सज्जते सक्तिं न करोति॥ २८॥

**शां० आ०**—अज्ञस्य कर्मसु सक्तिमुक्त्वा विदुषस्तदभावमभिदधाति—**यः पुनरिति**। तत्त्वं याथार्थ्यं वेत्तीति व्युत्पत्त्या तत्त्वविदिति तुशब्देनाज्ञाद्विशिष्टे निर्दिष्टे प्रश्नपूर्वकं द्वितीयपादमवतार्य व्याचष्टे—**कस्येत्यादिना**। गुणानामेव गुणेषु वर्तमानत्वमयुक्तं निर्गुणत्वात्तेषामित्याशङ्क्य विभजते—**गुणा इति**। कार्यकरणानामेव विषयेषु प्रवृत्तिरात्मनस्तु कूटस्थत्वान्नैवमिति ज्ञात्वा तत्त्ववित्कर्मसु दृढतरं कर्तृत्वाभिमानं न करोतीत्यर्थः॥ २८॥

**आ० भा०—**कर्मभेदस्य गुणभेदस्य च तत्त्ववित्। गुणा इंद्रियादीनि गुणेषु विषयेषु ॥२८॥

**आ० ज०—**गुणानां कर्मणां चान्योन्यं यो विभागस्तस्मिन्वक्तव्ये एकवचनेनालं कथं द्विवचनं केन वाऽस्यान्वय इति शंका-विभागशब्दस्यार्थं वदन्परिहरति—**कर्मेति**। जीवेश्वरप्रकृतिलक्षणसंबंधिभेदात्कर्मणामिंद्रियादीनां च भेदोऽत्र विवक्षितो ग्रंथांतरादवगंतव्यः। गुणागुणेष्वितिपदद्वयस्य विवक्षितमर्थमाह—**गुणाइति** ॥ २८ ॥

**रा० भा०—**गुणकर्मविभागयोः सत्त्वादिगुणविभागे तत्तत्कर्मविभागे च तत्त्ववित् गुणाः सत्त्वादयः स्वगुणेषु स्वेषु कार्येषु वर्तन्त इति मत्वा गुणकर्मस्वहं कर्तेति न सज्जते ॥ २८ ॥

**अ० टी०—**एवमविदुषः स्वरूपमुक्त्वा विद्वत्स्वरूपमाह—**तत्त्वविदिति**। हे महाबाहो! ज्ञात्वा क्रियाकरणसमर्थ! क्रियावान् गुणकर्मविभागयोस्तत्त्ववित् गुणा गुणेषु वर्तन्त इति मत्वा कर्मसु न सज्जते। अत्रायं भावः। गुणास्तु भगवता सात्त्विकादिभावभिन्नविचित्रस्वरसभोगार्थं प्रकटीकृताः। अत एव व्रजविलासिनीषु सात्त्विकादिगुणा निरूपिताः श्रीभागवते । कर्म तु लोकसंग्रहार्थं कार्यते। तथा चैतद्विभागतत्त्ववित् गुणा जीवस्था गुणेषु भगवद्गुणेषु वर्त्तन्ते प्रभुः स्वरसभोगार्थं गुणभावैस्तदुपयोगिकर्माणि कारयति अन्यानि कर्माणि तु लोकार्थं कारयतीति मत्वा मूढवदेवाहमेव कर्ता तत्फलं मम भविष्यतीति न सजत इति भावः ॥ २८ ॥

**नी० टी०—**एवं सक्तस्य कर्माचरणं प्रदर्श्यासक्तस्य तत्प्रदर्शयति—**तत्त्वविदिति**। गुणकर्मविभागयोः गुणविभागस्य कर्मविभागस्य च तत्त्वविदिति भाष्यं नाहं गुणात्मक इति गुणेभ्य आत्मनो विभागः नाहं कर्मात्मक इति कर्मभ्यश्चात्मनो विभागः। तयोर्गुणकर्मविभागयोस्तत्त्वं वेत्तीति श्रीधरः। मधुसूदनस्तु गुणाः देहेंद्रियांतःकरणानि अहंकारास्पदानि कर्माणि च तेषां व्यापारभूतानि ममकारास्पदानि गुणकर्मेति द्वंद्वैकवद्भावः विभज्यते सर्वेषां जडानां भासकत्वेन पृथक् भवतीति विभागः स्वप्रकाशज्ञानरूपोऽसंग आत्मा गुणकर्म च विभागश्चेति द्वंद्वः तयोर्जडाजडयोस्तत्त्वं यो वेत्ति सः गुणाः करणात्मकाः गुणेषु विषयेषु वर्त्तते इति मत्वा न सज्जते कर्त्तृत्वाभिनिवेशं न करोतीत्यर्थः। गुणविभागस्य कर्मविभागस्य च तत्त्वविदिति पक्षे गुणकर्मणोरित्येव सिद्धे विभागपदं व्यर्थमिति। यद्वा यस्तत्त्ववित् स गुणाः गुणेषु वर्त्तंत इति मत्वा गुणविभागे कर्मविभागे च न सज्जते इति योजना गुणानां सत्त्वरजस्तमसां विभागो बुद्ध्यहंकारज्ञानेंद्रियकर्मेंद्रियविषयरूपेण विभज्यावस्थानं तस्मिन्न सज्जते इदमहमिति न मन्यते। तथाहि। शरीरे गौरेऽहं गौरोऽस्मि हस्ताभ्यामात्ते मयेदमात्तमिति चक्षुषा दृष्टे मयेदं दृष्टमिति अहंकारेणाभिमते ममेदमित्यभिमन्यते। बुद्धौ विक्रियमाणायामहं सुखीति च सर्वेषु बुद्ध्यादिषु विभज्य गृह्यमाणेष्वपि प्रत्येकं प्रत्यक्त्वमध्यस्याहमिदमिति ममेदं कर्मेति च मन्यते एतेन कर्मविभागोऽप्यावश्यकत्वेन व्याख्यातः। अन्यथा चिदात्मन्येव आदानादिकर्तृत्वं दुःखादिमत्त्वं चापतति अयं च कर्मविभागः श्रुत्यापि दर्शितः। "अंधो मणिमविंदत् तमनंगुलिरावयत् अग्रीवः प्रत्यमुंचत् तमजिह्वो असश्चत" इति। अंधः स्वयंप्रकाशहीनोऽपि चक्षुरादिर्मणिं रूपादिकं विषयमविंदत्प्रकाशयति। अनंगुलिः काष्ठलोष्ठादिवत् जडत्वात् स्वयं कर्म कर्तुमशक्तोऽपि पाण्यादिः आवयत् आसीव्यत् विषयं उपादत्ते। अग्रीवः छिन्नशिरस्कवन्निर्जीवोऽहंकारस्तं प्रत्यमुंचत् ग्रीवायां धारयति मयेदं लब्धमिति मन्यते। अजिह्वो धीधातुः जडत्वात्स्वयं स्वगतसुखदुःखयोः पट इव स्वगतरूपादेः प्रकाशने असमर्थोऽपि अहं सुखी दुःखीति चानुभवति। तथा च आत्मानात्मनोर्याथात्म्यज्ञो व्यावृत्तेष्वहंकारादिषु तत्कर्मसु चाभिमानादिषु कुसुमेषु सूत्रमिवानुवर्त्तमानमात्मानं तेभ्यः पृथक्भूतं जानन् गुणा धीचक्षुरादयो

गुणेषु दुःखरूपादिषु वर्त्तते न त्वात्मेति मत्वा न सज्जतेऽहमेव हस्तादिसंघातरूपो ममैवेदमादानादिकं कर्मेति न सक्तो भवतीत्यर्थः ॥ २८ ॥

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ॥
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ २९ ॥

**शां० भा०**—ये पुनः—प्रकृतेरिति। प्रकृतेर्गुणैः सम्यङ्मूढाः संमोहिताः सन्तः सज्जन्ते गुणानां कर्मसु गुणकर्मसु वयं कर्म कुर्मः फलायेति, तान्कर्मसङ्गिनोऽकृत्स्नविदः कर्मफलमात्रदर्शिनो मन्दान्मन्दप्रज्ञान्कृत्स्नविदात्मवित्स्वयं न विचालयेद्बुद्धिभेदकरणमेव चालनं तन्न कुर्यादित्यर्थः ॥ २९ ॥

**शां० आ०**—विद्वानविद्वानित्युभावपि प्रकृत्य विद्वानविदुषो बुद्धिभेदं न कुर्यादित्युपसंहरति—**ये पुनरिति**। प्रकृतेरुक्तगुणैर्देहादिभिर्विकारैः संमूढास्तानेवाऽऽत्मत्वेन मन्यमाना ये ते गुणानां तेषामेव देहादिनां कर्मसु व्यापारेषु सज्जन्ते सक्तिं दृढतरामात्मीयबुद्धिं कुर्वन्तीत्याह—**प्रकृतेरित्यादिना**। तेषामनात्मविदां स्वयमात्मविद्बुद्धिभेदं नाऽऽपादयेदित्याह—**तानित्यादिना** ॥ २९॥

**आ० भा०**—प्रकृतेर्गुणेषु इंद्रियादिषु संमूढाः। इंद्रियाद्यभिमानाद्धीविषयादिषु संगः। गुणकर्मसु विषयेषु कर्मसु च 'शब्दाद्या इंद्रियाद्याश्च सत्वाद्याश्च शुभानि च ॥ अप्रधानानि च गुणा निगद्यंते निरुक्तिगैः' इत्यभिधानात्। सत्वाद्यंगीकारे गुणा गुणेष्वित्ययुक्तं स्यात् ॥ २९ ॥

**आ० ज०**—प्रकृतेर्गुणसंमूढा इत्यत्र गुणशब्दस्य विवक्षितमर्थं वदन् विग्रहं दर्शयति—**प्रकृतेरिति**। नित्यसापेक्षत्वाद्गुणशब्दस्य नासामर्थ्यमिति प्रदर्शनाय प्रकृतेरित्यनुवादः। देवदत्तस्य गुरुकुलमिति यथा। प्रकृतेर्गुणसंमूढत्वात् सज्जंते गुणकर्मस्विति हेतुहेतुमद्भावोऽत्र विवक्षितः अन्यथा वैयर्थ्यापत्तेस्तमुपपादयति—**इंद्रियादीति**। अभिमानो ममैवैतानि स्वातंत्र्येण करणानीति भ्रमः विषयादीत्युक्त्या गुणशब्दोऽत्र विषयार्थ इति दर्शयति। आदिशब्देन कर्मग्रहणम्। विषयेषु संगः स्नेहादिः कर्मसु स्वातंत्र्यभ्रमः। गुणानां कर्मस्विति केनचिद्व्याख्यातं तदसदिति भावेन द्वंद्वोऽयमिति दर्शयति—**गुणेति**। द्वंद्वपरिग्रहेऽधिकार्थलाभात्। अनेन विषयादीत्येतदपि समर्थितं भवति। गुणशब्दस्योक्तानेकार्थत्वं कुत इत्यत आह—**शब्दाद्या इति**। निरुच्यत इतिनिरुक्तिः शब्दार्थः निरुक्तिं गच्छंत्यवगच्छंतीति निरुक्तिगाः। अस्तु गुणशब्दस्यानेकेष्वर्थेषु शक्तिस्तथापि विवक्षात्रैकस्यैवार्थस्य युक्ता। अन्यथा नह्येकशब्देनेत्युक्तविरोधात्। शब्दो हि यमर्थमादौ स्मारितवान् स एवार्थो बुद्धौ संनिहितः पुनरुच्चारितेन स्मारयितुं युक्तः तथा चात्र सर्वत्र सत्वादय एव ग्राह्याः। तद्ग्रहणे शब्दादीनामपि तदात्मकानां ग्रहणसंभवादित्यत आह—**सत्वादीति**। कर्तृत्वाधारत्वयोरेकत्र विरोधादिति भावः। तदात्मकानामिंद्रियादीनामुपलक्षणे सति वृथा प्रयासः। अनयैवानुपपत्त्याऽनेकार्थग्रहणोपपत्तेः ॥ २९ ॥

**रा० भा०**—अकृत्स्नविदः स्वात्मदर्शनाय प्रवृत्ताः प्रकृतिसंसृष्टतया प्रकृतेर्गुणैर्यथावस्थितात्मनि संमूढाः गुणकर्मक्रियास्वेव सज्जन्ते न तद्विविक्तात्मस्वरूपे अतस्ते ज्ञानयोगाय न प्रभवन्तीति कर्मयोग एव तेषामधिकारः एवंभूतांस्तान् मन्दानकृत्स्नविदः कृत्स्नवित्स्वयं ज्ञानयोगावस्थाने न विचालयेत् ते किल मन्दाः श्रेष्ठजनाचारानुवर्तिनः कर्मयोगादुत्थितमेनं दृष्ट्वा कर्मयोगात् प्रचलितमनसो भवेयुः अतः श्रेष्ठः स्वयमपि कर्मयोगे तिष्ठन्नात्मयाथात्म्यज्ञानेनात्मनोऽकर्तृत्वमनुसन्दधानः कर्मयोग एवात्मावलोकने निरपेक्षसाधनमिति दर्शयित्वा तानकृत्स्नविदो मन्दान् जोषयेदित्यर्थः। ज्ञानयोगाधिकारिणोऽपि ज्ञानयोगादस्यैव कर्मयोगस्य ज्यायस्त्वं पूर्वमेवोक्तम् अतो व्यपदेश्यो लोकसंग्रहाय कर्मैव कुर्यात् प्रकृतिविविक्तात्मस्वभावनिरूपणेन गुणेषु कर्तृत्वमारोप्य कर्मानुष्ठानप्रकार उक्तः गुणेषु कर्तृत्वानुसंधानं चेदमेव आत्मनो न स्वरूपप्रयुक्तमिदं कर्तृत्वमपि तु गुणसंबन्धकृतमिति प्राप्ताप्राप्तविवेकेन गुणकृतमित्यनुसंधानम् ॥ २९ ॥

अ० टी०—ननु ते अज्ञात्वा तथा कुर्वन्तीति तान् शिक्षयेन्न तु पुनस्तथैव प्रेरयेदित्यत आह—**प्रकृतेरिति** । प्रकृतेर्गुणैः संमूढाः कर्मफलाभिलाषिणो गुणकर्मसु देहधर्मेषु फलार्थं सजन्ते आसक्ता भवन्ति यतोऽकृत्स्नविदः भगवत्प्राप्तिरूपम् अशेषफलरूपं न जानन्ति । कर्मफलं लौकिकसुखं फलरूपं जानन्तीत्यर्थः । यतस्ते तत्रासक्तास्तेन ततो न मनो भगवति संविशेदतस्तान् मन्दान् मूर्खान् भूयः फलासक्तचित्तान् । कृत्स्नवित् भगवत्प्राप्तिरूपाशेषानन्दवित् न विचालयेत् भगवन्मार्गे न प्रेरयेत् । ततोपि वा न चालयेत् । दुष्टसंगात् स्वस्यान्यथाभावं नयेदितिभावः ॥ २९ ॥

नी० टी०—एवं सक्तासक्तयोः कर्माणि विभज्य सक्तकर्मानुवादपूर्वकं न बुद्धिभेदं जनयेदज्ञानामित्युपक्रांतमुपसंहरति—**प्रकृतेरिति** । गुणैरहंकारादिभिः स्वस्मिन्नध्यस्तैः संमूढाः एकीभावेन अभेदाध्यासेन मूढास्तु प्रकृतेः प्रकृतिसंबंधिषु गुणेषु देहादिषु कर्मसु गमनादिषु च सज्जंते अहमयं ब्राह्मणो ममैवेदं यज्ञादिकं कर्मेति सज्जंते सक्ता भवंति तान् मूढत्वात् अकृत्स्नविदः आत्मज्ञानहीनान् आत्मविद्धि कृत्स्नवित् । "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" इति श्रुतेः । मंदान् शास्त्रार्थग्रहणासमर्थान् कृत्स्नवित् आत्मविन्न विचालयेत् कर्मनिष्ठातो न प्रच्यावयेत् तेषामुभयभ्रष्टत्वापत्तेः प्रकृतेर्गुणैः संमूढाः गुणानां कर्मसु सज्जंत इति प्राचां योजना ॥ २९ ॥

**मयि सर्वाणि कर्माणि संन्यास्याध्यात्मचेतसा ॥**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

**शां० भा०—कथं पुनः कर्मण्यधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्तव्यमित्युच्यते—मयीति । मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्माणि संन्यस्य निक्षिप्याध्यात्मचेतसा विवेकबुद्ध्याऽहं कर्तेश्वराय भृत्यवत्करोमीत्यनया बुद्ध्या । किंच निराशीस्त्यक्ताशीर्निर्ममो ममभावश्च निर्गतो यस्य तव स त्वं निर्ममो भूत्वा युध्यस्व विगतज्वरो विगतसंतापो विगतशोकः सन्नित्यर्थः ॥ ३० ॥**

शां० आ०—यद्यपि कर्मण्यज्ञोऽधिक्रियते तथाऽपि मोक्षमाणेन तेन कर्म त्यक्तव्यं मोक्षस्य कर्मासाध्यत्वान्न तु तेन कर्म कर्तुं शक्यं कर्मणः स्वापेक्षितविरोधित्वादिति शङ्कते—**कथमिति** । श्लोकेनोत्तरमाह—**उच्यत इति** । यथोक्ते परस्मिन्नात्मनि सर्वकर्मणां समर्पणे कारणमाह—**अध्यात्मेति** । विवेकबुद्धिमेव व्याकरोति—**अहमिति** । दर्शितरीत्या कर्मसु प्रवृत्तस्य कर्तव्यान्तरमाह—**किंचेति** । त्यक्ताशीः फलप्रार्थनाहीनः सन्नित्यर्थः । निर्ममो भूत्वा पुत्रभ्रात्रादिष्विति शेषः । ननु युद्धे नियोगो नोपपद्यते पुत्रभ्रात्रादिहिंसात्मनस्तस्य संतापहेतोर्नियोगविषयत्वायोगादिति तत्राऽऽह—**विगतेति** ॥ ३० ॥

**आ० भा०—अतः सर्वाणि कर्माणि मय्येव संन्यस्य भ्रांत्या जीवेऽध्यारोपितानि मय्येव विसृज्य भगवानेव सर्वाणि कर्माणि करोतीति मत्पूजेति च । आत्मानं मामधिकृत्य यच्चेतस्तदध्यात्मचेतः । संन्यासस्तु भगवान्करोतीति । निर्ममत्वं नाहं करोमीति ॥ ३० ॥**

आ० ज०—मयि सर्वाणीत्यस्य संगतिं दर्शयति—**अत इति** । यतो विद्वत्कमैवंविधं त्वं च विद्वानस्यतः । ननु संन्यासो विसर्गः स च स्वकीयस्य भवति न च जीवस्य कर्माणि संतीत्युक्तं तत्कथं तेषां विसर्गो विधीयत इत्यत आह—**भ्रांत्येति** । कर्मणां परमेश्वरे संन्यासो नाम तदात्मकत्वविज्ञानमिति कश्चित् । तदसत् अशाब्दत्वात् । प्रमाणविरुद्धत्वाच्चेति भावेन स्वपक्षे तदभिप्रायमाह—**भगवानिति** । इति ज्ञात्वेति शेषः । प्रकारांतरं चाह—**मदिति** । इति समर्पणं च कर्मणां मयि संन्यास इति शेषः । कर्माणि परमेश्वरात्मकत्वं प्रतिपद्यंते तत्प्राप्तये कल्प्यंत इत्यध्यात्मचेतसेति व्याख्यानमशाब्दमिति भावेन व्याचष्टे—**आत्मानमिति** । अनेनाव्ययीभावगर्भः कर्मधारय इत्युक्तं भवति । अस्य निराशीरित्यनेनान्वयः । परमात्मलाभेन निराशीराशारहित

इति उक्तं भवति । ननु निर्ममत्वं न मम कर्माणि संतीति ज्ञानम् । तच्च मयि सर्वाणि कर्माणि सन्यस्येत्यनेन गतार्थमतोद्वयोर्भेदमाह—**संन्यासस्त्विति** । उभयत्रेतिशब्दात्परं ज्ञानमिति शेषः ॥ ३० ॥

**रा० भा०**—इदानीमात्मनां परमपुरुषशरीरतया तन्नियाम्यत्वस्वरूपनिरूपणेन भगवति पुरुषोत्तमे सर्वात्मभूते गुणकृतं च कर्तृत्वमारोप्य कर्मकर्तव्यतोच्यते । मयि सर्वेश्वरे सर्वभूतान्तरात्मभूते सर्वाणि कर्माणि अध्यात्मचेतसा संन्यस्य निराशीर्निर्ममो विगतज्वरो युद्धादिकं सर्वं चोदितं कर्म कुरुष्व आत्मनि यच्चेतस्तदध्यात्मचेतः आत्मस्वरूपविषयेण श्रुतिशतसिद्धेन ज्ञानेनेत्यर्थः । "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा । अन्तःप्रविष्टं कर्तारमेतं य आत्मनि तिष्ठन्नात्मनोन्तरोयमात्मानं वेद । यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति । सत आत्मान्तर्याम्यमृत" इत्येवमाद्याः श्रुतयः परमपुरुषप्रवर्त्यं तच्छरीरभूतमेनमात्मानं परमपुरुषं च प्रवर्तयितारमाचक्षते स्मृतयश्च 'प्रशासितारं सर्वेषाम्' इत्याद्याः 'सर्वस्य चाहं हृदि संनिविष्टः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' इति वक्ष्यते । अतो मच्छरीरतया मत्प्रवर्त्यात्मस्वरूपानुसन्धानेन सर्वाणि कर्माणि मयैव क्रियमाणानीति मयि परमपुरुषे संन्यस्य तानि च केवलं मदाराधनानीति कृत्वा तत्फले निराशीस्तत एव तत्र कर्मणि ममतारहितो भूत्वा विगतज्वरो युद्धादिकं कुरुष्व स्वकीयेनात्मना कर्त्रा स्वकीयैरेव करणैः स्वाराधनैकप्रयोजनाय परमपुरुषः सर्वेश्वरः सर्वशेषी स्वयमेव स्वकर्माणि कारयति इत्यनुसंधाय कर्मसु ममतारहितः प्राचीनेनानादिकालप्रवृत्तानन्तपापसंचयेन कथमहं भविष्यामीत्येवंभूतान्तर्ज्वरनिर्मुक्तः परमपुरुष एव कर्मभिराराधितो बन्धान् मोचयतीति स्मरन् सुखेन कर्मयोगमेव कुरुष्वेत्यर्थः । "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं विश्वस्य" इत्यादिश्रुतिसिद्धं हि सर्वेश्वरत्वं सर्वशेषित्वं च ईश्वरत्वं नियन्तृत्वं शेषित्वं पतित्वम् ॥ ३० ॥

**अ० टी०**—ननु तेषां कर्मकारणार्थं स्वस्य कर्मकरणे यावत्कालो गच्छति तावत्कालव्यर्थीभावाऽपराधः स्वस्य स्यादित्यत आह—**मयि सर्वाणीति** । मयि संन्यस्य आधिदैविकभावेन सर्वं त्यक्त्वाऽध्यात्मचेतसा अध्यात्मभावेन मदाज्ञारूपेण सर्वाणि कर्माणि कुर्वित्यर्थः । मदाज्ञया करणे कालव्यर्थता न भविष्यतीति भावः । सर्वपदेन लौकिककार्याण्यपि कुर्वित्यर्थः । लौकिककर्मकरणमेवाह—**निराशीरिति** । निराशीः युद्धजस्वर्गादिफलानभीप्सुः निर्ममः राज्यादिप्राप्तभावरहितः स्वीयेषु परेषु च भ्रातृगुर्वादिबुद्धिरहितो विगतज्वरो लौकिकतापरहितो मदाज्ञया युद्धचस्व युद्धं कुर्वित्यर्थः । त्वामुद्दिश्य तु क्षात्रं कर्म युद्धरूपं मयोच्यते न तु पूर्वोक्तमन्यत्कर्म । अतो युद्धमेव कुर्वित्यर्थः ॥ ३० ॥

**नी० टी०**—**मयीति** । त्वं तु अज्ञो मुमुक्षुश्च मयि सर्वान्तर्यामिणि सर्वाणि कर्माणि संन्यस्य समर्प्य अध्यात्मचेतसा आत्मानमधिकृत्य प्रवृत्तं शास्त्रं अध्यात्मं तत्र प्रवणेन चेतसा शाकपार्थिवादिवन्मध्यमपदलोपी समासः आत्मानात्मविवेकवतेत्यर्थः । ईश्वरप्रेरितोऽहं करोमीत्यनया बुद्धया निराशीः फलमनिच्छन् निर्ममो लब्धे ममत्वाभिमानशून्यश्च भूत्वा युद्धयस्व विगतज्वरो विशोकः सन् ॥ ३० ॥

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ॥**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥**

शां० भा०—यदेतन्मतं कर्म कर्तव्यमिति सप्रमाणमुक्तं तत्तथा—ये म इति । ये मे मदीयमिदं मतमनुतिष्ठन्त्यनुवर्तन्ते मानवा मनुष्याः श्रद्धावन्तः श्रद्दधाना अनसूयन्तोऽसूयां च मयि गुरौ वासुदेवेऽकुर्वन्तो मुच्यन्ते तेऽप्येवंभूताः कर्मभिर्धर्माधर्माख्यैः ॥ ३१ ॥

शां० भा०—प्रकृतं भगवतो मतमुक्तप्रकारमनुसृत्यैवानुतिष्ठतां क्रममुक्तिफलं कथयति—यदेतदिति । शास्त्राचार्योपदिष्टेऽदृष्टार्थे विश्वासवत्त्वं श्रद्धावत्त्वं, गुणेषु दोषाविष्करणमसूया, अपिर्यथोक्ताया मुक्तेरमुख्यत्वद्योतनार्थः ॥ ३१ ॥

आ० भा०—फलमाह ये म इति । ये त्वेवं निवृत्तकर्मिणः तेऽपि मुच्यंते ज्ञानद्वारा किम्वपरोक्षज्ञानिनः । न तु साधनांतरमुच्यते । 'निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये । अपरोक्षेशदृष्टिस्तु मुक्तौ किंचिन्न मार्गते ॥ सर्वं तदंतराधाय मुक्तये साधनं भवेत् । न किंचिदंतराधाय निर्वाणायापरोक्षदृग्' इति ह्युक्तं नारायणाष्टाक्षरकल्पे । अत एव समुच्चयनियमो निराकृतः ॥ ३१ ॥

आ० ज०—अन्यथा प्रतीतिं निराकर्तुं तावदुत्तरश्लोकद्वयप्रतिपाद्यमाह—फलमिति । केचिद्विद्वांसः कुर्वंतीत्येतावता मया कार्यं न वेत्याशंक्य स्वोक्तकरणाकरणयोः फलमाहेत्यर्थः । मुच्यंते तेऽपि कर्मभिरित्यपिशब्देन ज्ञानमिव निवृत्तं कर्मापि मोक्षसाधनमुच्यत इत्यन्यथा प्रतीतिनिरासाय व्याचष्टे—ये त्विति । कैमुत्यद्योतनार्थोऽपिशब्दो न समुच्चयार्थ इत्यर्थः । प्रासंगिकं चैतत् । समुच्चये यद्यपिशब्दः स च द्वेधा ज्ञानमिव कर्मापि पृथक्साधनं ज्ञानकर्मसमुच्चयएवेति । तत्राद्यपक्षं निराकरोति—न त्विति । निष्कामत्वादिनाऽनुष्ठितानि यज्ञादीनि निवृत्तानि । आदिपदेन नित्यनैमित्तिकानां ग्रहणम् । अपरोक्षा च सा ईशदृष्टिश्च तादर्थ्ये चतुर्थी मुक्तौ मुक्तिसाधने किंचित्सहकारि कर्मापि मुक्तिसाधनमुच्यत इत्यत उक्तम्—सर्वमिति । तत्सर्वं निवृत्तादिकम् । अंतरा मध्ये ज्ञानमाधाय मुक्तये मुक्तेः । अहल्यायै जारेति यथा । साक्षात्साधनत्वेन श्रुतमपि कर्म यथा व्यवहितं जातं किमपि ज्ञानं तथा नेत्युक्तम्—न किंचिदिति । द्वितीयमपि प्रकारमतिदेशेन निराचष्टे—अत एवेति अपरोक्षेशदृष्टिस्तु मुक्तौ किंचिन्नमार्गत इत्युक्तत्वादेवेत्यर्थः ॥ ३१ ॥

रा० भा०—अयमेव साक्षादुपनिषत्सारभूतोऽर्थ इत्याह—ये मानवाः आत्मनिष्ठशास्त्राधिकारिणः अयमेव शास्त्रार्थ इत्येतन्मतं निश्चित्य तथाऽनुतिष्ठन्ति ये चाननुतिष्ठन्तोऽपि अस्मिन् शास्त्रार्थे श्रद्दधाना भवन्ति ये चाश्रद्दधानाः अप्येवं शास्त्रार्थो न संभवतीति नाभ्यसूयन्ति अस्मिन् महागुणे शास्त्रार्थे दोषदर्शिनो न भवन्तीत्यर्थः । ते सर्वे बन्धहेतुभिरनादिकालप्रारब्धैः कर्मभिर्मुच्यन्ते तेऽपि कर्मभिरित्यपिशब्दादेषां पृथक्करणम् इदानीमननुतिष्ठन्तोऽपि अस्मिन् शास्त्रार्थे श्रद्दधाना अनभ्यसूयवश्च श्रद्धया चानसूयया च क्षीणपापा अचिरेणममेव शास्त्रार्थमनुष्ठाय मुच्यन्त इत्यर्थः ॥ ३१ ॥

अ० टी०—अर्जुनार्थं चेद्भगवतोक्तं स्यात्तदार्जुनस्य तत्रैवासक्तिः स्यात्तदाऽग्रे पुष्टिरूपसर्वत्यागोपदेशोऽनुपपन्नः स्यात् । अर्जुनस्याप्यन्यत्रानधिकाराद्भगवदुक्तेषु धर्मेष्वपि न प्रवृत्तिः । स्वयोग्योपदेशार्थं पुनः पुनः प्रश्नानेव कृतवान् । ननु तदर्थं नोक्तं चेत्किमर्थं । तदर्जुनद्वारा सकलसन्मार्गप्रवृत्त्यर्थमुक्तं । तदेवाह । परं योऽन्योप्येवं कुर्यात्तस्यापि कर्मजो बन्धो न स्यादित्याहुः—ये मे मतमिति । ये मानवाः सद्धर्मोत्पन्ना मे मतमिदं पूर्वोक्तं श्रद्धावन्तो मदुक्तत्वादनसूयन्तोऽसहिष्णुताहीनाअनुतिष्ठन्ति तेऽपि कर्मभिस्तज्जन्यफलभोगैर्मुच्यन्ते । मदाज्ञया कृतत्वान्मदुक्तिविश्वासतोऽन्यकर्माण्यपि मोक्षसाधकान्येव भवन्तीत्यर्थः ॥ ३१ ॥

नी० टी०—ये म इति। येऽन्येऽपि त्वादृशाः मे मम मतं असक्त्या कर्मानुष्ठानं अनुतिष्ठंति अनुवर्त्तंते मानवाः श्रद्धावंतः अनसूयंतः अत्र दोषमपश्यंतः तेऽपि स्वकर्मभिर्धर्माधर्माख्यैः मुच्यंते ॥ ३१ ॥

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ॥**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥**

शां० भा०—ये त्विति । ये तु तद्विपरिता एतन्मम मतमभ्यसूयन्तो नानुतिष्ठन्ति नानुवर्तन्ते मे मतं सर्वेषु ज्ञानेषु विविधं मूढास्ते, सर्वज्ञानविमूढांस्तान्विद्धि नष्टान्नाशं गतानचेतसोऽविवेकिनः॥३२॥

शां० आ०—भगवन्मताननुवर्तिनां प्रत्यवायित्वं प्रत्याययति—ये त्विति । तद्विपरीतत्वं भगवन्मतानुवर्तिभ्यो वैपरीत्यं तदेव दर्शयति—एतदित्यादिना । अभ्यसूयन्तस्तत्रासन्तमपि दोषमुद्भावयन्त इत्यर्थः, सर्वज्ञानानि सगुणनिर्गुणविषयाणि, प्रमाणप्रमेयप्रयोजनविभागतो विविधत्वम् ॥ ३२ ॥

आ० भा०—॥ ३२ ॥

आ० ज०—॥ ३२ ॥

रा० भा०—भगवदभिमतमौपनिषदमर्थमननुतिष्ठतामश्रद्दधानानामभ्यसूयतां च दोषमाह—ये त्वेतत्सर्वमात्मवस्तु मच्छरीरतया मदाधारं मच्छेषभूतं मदेकमवर्त्यमिति ये मतं नानुतिष्ठन्ति नैवमनुसंधाय सर्वाणि कर्माणि कुर्वते ये च न श्रद्दधते ये चाभ्यसूयन्तो वर्तन्ते तान् सर्वेषु ज्ञानेषु विशेषेण मूढांस्तत एव नष्टानचेतसो विद्धि चेतः कार्यं हि वस्तुयाथात्म्यनिश्चयः । तदभावादचेतसः विपरीतज्ञानाः सर्वत्र विमूढाश्च ॥ ३२ ॥

अ० टी०—ये मदाज्ञारूपत्वं विहाय कर्मैव फलसाधकं फलरूपमिति ज्ञात्वा कुर्वन्ति ते नश्यन्तीत्याहुः—ये त्वेतदिति । ये तु एतन्मम मतम् अभ्यसूयन्तः कौटिल्येन जानन्तो नानुतिष्ठन्ति तान् सर्वज्ञानविमूढान् अचेतसः शून्यहृदयान् नष्टान् नाशं प्राप्तान् विद्धि जानीहि । मदाज्ञातिरेकं कर्मकर्त्तारो न श्यन्तीतिभावः ॥ ३२ ॥

नी० टी०—विपक्षे दोषमाह—ये त्विति। सर्वशब्द ईश्वरवाची। सर्वं समाप्नोषि ततोसि सर्व इति निर्वचनात् तस्य ज्ञाने विषये विशेषेण मूढान् पारोक्ष्येणापि ते ईश्वरमजानंतो देहमात्रनिष्ठास्तान् नष्टान् स्वर्गापवर्गभ्रष्टान् अचेतसः विवेकशून्यान् ॥ ३२ ॥

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ॥**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

शां० भा०—कस्मात्पुनः कारणात्त्वदीयं मतं नानुतिष्ठन्ति परधर्माननुतिष्ठन्ति स्वधर्मं च नानुवर्तन्ते, त्वत्प्रतिकूलाः कथं न बिभ्यति त्वच्छासनातिक्रमदोषात्, तत्राऽऽह—सदृशमिति । सदृशमनुरूपं चेष्टते कस्याः स्वस्याः स्वकीयायाः प्रकृतेः, प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः सा प्रकृतिस्तस्याः सदृशमेव सर्वो जन्तुर्ज्ञानवानपि किं पुनर्मूर्खः । तस्मात्प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति मम वाऽन्यस्य वा ॥ ३३ ॥

**शां० आ०**—भगवन्मतानुवर्तनमन्तरेण परधर्मानुष्ठाने स्वधर्माननुष्ठाने च कारणं पृच्छति—**कस्मादिति** । भगवत्प्रतिकूलत्वमेव तत्र कारणमित्याशङ्क्याऽऽह—**त्वत्प्रतिकूला इति** । राजानुशासनातिक्रमे दोषदर्शनाद्भगवदनुशासनातिक्रमेऽपि दोषसंभवात्प्रतिकूलत्वं भयकारणमित्यर्थः । उत्तरत्वेन श्लोकमवतारयति—**सदृशमिति** ( तत्राऽऽहेति ) । सर्वस्य प्राणिवर्गस्य प्रकृतिवशवर्तित्वे कैमुतिकन्यायं सूचयति—**ज्ञानवानपीति** । सर्वाण्यपि भूतान्यनिच्छन्त्यपि प्रकृतिसदृशीं चेष्टां गच्छन्तीति निगमयति—**प्रकृतिमिति** । भूतानां प्रकृत्यधीनत्वेऽपि प्रकृतिर्भगवता निग्राह्येत्याशङ्क्याऽऽह—**निग्रह इति** । का पुनरियं प्रकृतिर्यदनुसारिणी भूतानां चेष्टेति पृच्छति—**प्रकृतिर्नामेति** । भगवदभिप्रेतां प्रकृतिं प्रकटयति—**पूर्वेति** । आदिशब्देन ज्ञानेच्छादि संगृह्यते । यथोक्तः संस्कारः स्वसत्तया प्रवर्तकश्चेत्प्रलयेऽपि प्रवृत्तिः स्यादित्याशङ्क्य विशिनष्टि—**वर्तमानेति** । सर्वो जन्तुरित्ययुक्तं विवेकिप्रवृत्तेरतथात्वादित्याशङ्क्य पश्वादिभिश्चाविशेषादिति न्यायमनुसरन्नाह—**ज्ञानवानिति** । ज्ञानवतामज्ञानवतां च प्रकृत्यधीनत्वाविशेषे फलितमाह—**तस्मादिति** । प्रकृतिं यान्ति प्रकृतिसदृशीं चेष्टां गच्छन्त्यनिच्छन्त्यपि सर्वाणि भूतानीत्यर्थः । प्रकृतेर्भगवता तत्तुल्येन वा केनचिन्निग्रहमाशङ्क्यावतारितचतुर्थपादस्यार्थापेक्षितं पूरयति—**मम वेति**॥ ३३॥

**आ० भा०**—एवं चेत्किमिति ते मतं नानुतिष्ठंति लोका इत्यत आह—**सदृशमिति** । प्रकृतिः पूर्वसंस्कारः ॥ ३३ ॥

**आ० ज०**—सदृशमिति श्लोकस्य संगतिर्न प्रतीयतेऽतस्तामाह—**एवं चेदिति** । यदि त्वन्मतानुष्ठाने मोक्षोऽन्यथानाश इत्यर्थः । मूलप्रकृतेरेकत्वात्कथं स्वस्या इति प्रातिस्विकत्वमुच्यत इत्यत आह—**प्रकृतिरिति** । तत्कार्यौ रागद्वेषौ उपलक्ष्येते ॥ ३३ ॥

**रा० भा०**—एवं प्रकृतिसंसर्गिणस्तद्गुणोद्रेककृतं कर्तृत्वं तच्च परमपुरुषायत्तमित्यनुसन्धाय कर्मयोगयोग्येन ज्ञानयोगयोग्येन च कर्मयोगस्य सुशकत्वादप्रमादत्वादन्तर्गतात्मज्ञानतया निरपेक्षत्वादितरस्य दुःशकत्वात्सप्रमादत्वाच्छरीरधारणाद्यर्थतया कर्मापेक्षत्वात्कर्मयोग एव कर्तव्यः व्यपदेश्यस्य तु विशेषतः स एव कर्तव्य इति चोक्तम् अतः परमध्यायशेषेण ज्ञानयोगस्य दुःशकतया सप्रमादतोच्यते प्रकृतिविविक्तमीदृशमात्मस्वरूपं तदेव सर्वदानुसंधेयमिति च शास्त्राणि प्रतिपादयन्तीति ज्ञानवानपि स्वस्याः प्रकृतेः प्राचीनवासनायाः सदृशं प्राकृतविषयेष्वेव चेष्टते कुतः प्रकृतिं यान्ति भूतानि अचित्संसृष्टा जन्तवोऽनादिकालप्रवृत्तवासनामेव यान्ति तानि वासनानुयायीनि भूतानि शास्त्रकृतो निग्रहः किं करिष्यति ॥ ३३ ॥

**अ० टी०**—ननु त्वन्मतं विहाय नाशसाधने कथमनुवर्त्तन्त इत्याशंक्याहुः—**सदृशमिति** । ज्ञानवानपि नरः स्वस्याः प्रकृतेः सदृशं चेष्टते करोति । अत्रायं भावः । प्रकृत्यंशो जीवो न भगवदुक्ते प्रवर्तते तदंशत्वात् । अत एव स्मर्यते 'यो यदंशः स तं भजेत्' । माया तु भगवद्दत्तसामर्थ्येन ज्ञानवतोऽपि मोहयति । अत एव मार्कण्डेयपुराणे 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥ बलादाकृष्य मोहाय महामाया प्रयच्छति' इत्युक्तम् । ननु सत्सङ्गेन श्रीमद्वाक्येन वा कथं न ते यजन्ति तत्राहुः । भूतानि प्रकृतिं स्वाधिष्ठानमेव यान्ति । एतदर्थमेव नपुंसकत्वमुक्तं । निग्रहः सत्सङ्गादीनां किं करिष्यति । अकिंचित्करेष्वित्यर्थः ॥ ३३ ॥

**नी० टी०**—ननु ते चेत्तव मतं नानुतिष्ठंति तर्हि कथं तवांतर्यामित्वमित्यत आह—**सदृशमिति** । स्वस्याः प्रकृतेः स्वकीयस्य प्राग्भवीयधर्माधर्मसंस्कारस्य सदृशमनुरूपं ज्ञानवानपि चेष्टते किमु मूर्खः । पश्वादिभिश्चाविशेषादितिन्यायात् तस्मात्प्रकृतिं यांति अनुसरंति भूतानि प्राणिनस्तत्र मम वाऽन्यस्य वा निग्रहः किं करिष्यति न किमपि अहमपि पूर्वकर्मापेक्षयैव तान् प्रवर्त्तयामीति भावः ॥ ३३ ॥

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ॥
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

**शां० भा०**—यदि सर्वो जन्तुरात्मनः प्रकृतिसदृशमेव चेष्टते न च प्रकृतिशून्यः कश्चिदस्ति ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्ताविदमुच्यते—इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्यार्थे सर्वेन्द्रियाणामर्थे शब्दादिविषय इष्टे रागोऽनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थे रागद्वेषाववश्यंभाविनौ । तत्रायं पुरुषकारस्य शास्त्रार्थस्य च विषय उच्यते । शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नाऽऽगच्छेत् । या हि पुरुषस्य प्रकृतिः । सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति । यदा पुना रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशः । तस्मात्तयो रागद्वेषयोर्वशं न गच्छेत् । यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्तारौ तस्कराविवेत्यर्थः ॥ ३४ ॥

**शां० आ०**—सर्वस्य भूतवर्गस्य प्रकृतिवशवर्तित्वे लौकिकवैदिकपुरुषकारविषयाभावाद्विधिनिषेधानर्थक्यमिति शङ्कते—**यदीति** । ननु यस्य न प्रकृतिरस्ति तस्य पुरुषकारसंभवादर्थवत्त्वं तद्विषये विधिनिषेधयोर्भविष्यति नेत्याह—**न चेति** । शङ्कितं दोषं श्लोकेन परिहरति—**इदमित्यादिना** । वीप्सायाः सर्वकरणगोचरत्वं दर्शयति—**सर्वेति** । प्रत्यर्थं रागद्वेषयोरव्यवस्थया प्राप्तौ प्रत्यादिशति—**इष्ट इति** । प्रतिविषयं विभागेन तयोरन्यतरस्याऽऽवश्यकत्वेऽपि पुरुषकारविषयाभावप्रयुक्त्या प्रागुक्तं दूषणं कथं समाधेयमित्याशङ्क्याऽऽह—**तत्रेति** । तयोरित्याद्यवतारितं भागं विभजते—**शास्त्रार्थ इति** । प्रकृतिवशत्वाज्जन्तोर्नैव नियोज्यत्वमित्याशङ्क्याऽऽह—**या हीति** । रागद्वेषद्वारा प्रकृतिवशवर्तित्वे स्वधर्मत्यागादि दुर्वारमित्युक्तमिदानीं विवेकविज्ञानेन रागादिनिवारणे शास्त्रीयदृष्ट्या प्रकृतिपारवश्यं परिहर्तुं शक्यमित्याह—**यदेति** । मिथ्याज्ञाननिबन्धनौ हि रागद्वेषौ तत्प्रतिपक्षत्वं विवेकविज्ञानस्य मिथ्याज्ञानविरोधित्वादवधेयम् । रागद्वेषयोर्मूलनिवृत्त्या निवृत्तौ प्रतिबन्धध्वंसे कार्यसिद्धिमभिसंधायोक्तम्—**तदेति** । एवकारस्यान्ययोगव्यवच्छेदकत्वं दर्शयति—**नेति** । पूर्वोक्तं नियोगमुपसंहरति—**तस्मादिति** । तत्र हेतुमाह—**यत इति** । हिशब्दोपात्तो हेतुर्यत इति प्रकटितः स च पूर्वेण तच्छब्देन संबन्धनीयः । पुरुषपरिपन्थित्वमेव तयोः सोदाहरणं स्फोरयति—**श्रेयोमार्गस्येति** ॥ ३४ ॥

**आ० भा०**—तथाऽपि शक्तितो निग्रहः कार्यः । निग्रहात्सद्यः प्रयोजनाभावेऽपि भवत्येवातिप्रयत्नत इत्याशयवानाह—**इंद्रियस्येति** । तथाह्युक्तम् । ' संस्कारो बलवानेष ब्रह्माद्या अपि तद्वशाः । तथाऽपि सोऽन्यथाकर्तुं शक्यतेऽतिप्रयत्नतः' इति ॥ ३४ ॥

**आ० ज०**—इंद्रियस्येत्यस्य संगतिमाह—**तथापीति** । एवं तर्हि मयि सर्वाणि कर्माणीतिविधानं फलकथनं च व्यर्थमित्याशंक्येतिभावः यद्यपि प्रकृतिं यांति भूतानीति निग्रहोऽकिंचित्करस्तथापि व्याहतमेतदुच्यत इत्यत उक्तम्—**निग्रहादिति** । निग्रहादित्याद्याशयवांस्तथापीत्याद्याहेति योजना । अत्रागमसंमतिमाह—**तथाहीति** ॥ ३४ ॥

**रा० भा०**—प्रकृत्यनुयायित्वप्रकारमाह—श्रोत्रादिज्ञानेन्द्रियस्यार्थे शब्दादौ वागादिकर्मेन्द्रियस्य चार्थे वचनादौ प्राचीनवासनाजनिततदनुबुभूषारूपो रागो वर्जनीयो व्यवस्थितः तदनुभवे प्रतिहते वा वर्जनीयो यो द्वेषो व्यवस्थितः तावेव ज्ञानयोगाय यतमानं नियमितसर्वेन्द्रियं स्ववशे कृत्वा प्रसह्य स्वकार्येषु नियोजयतः ततश्चायमात्मस्वरूपानुभवाविमुखो विनष्टो भवति तयोर्न वशमागच्छेत् ज्ञानयोगारम्भेण रागद्वेषवशमागम्य न विनश्येत् तौ रागद्वेषौ ह्यस्य दुर्जयौ शत्रू आत्मज्ञानाभ्यासं वारयतः ॥ ३४ ॥

**अ० टी०**—ननु प्रकृतेर्भगवद्दत्तसामर्थ्यान्निग्रहादीनामसाधकत्वे पुरुषस्य जीवानां कथं फलसिद्धिरित्यतआहुः—**इन्द्रियस्येन्द्रियस्यार्थे इति**। इन्द्रियस्य इन्द्रियाणां जात्यभिप्रायेणैकवचनम्। इन्द्रियस्यार्थे रूपादौ रागद्वेषौ व्यवस्थितौ नियतभाव्यौ। इष्टे रागोऽनिष्टे द्वेषः। अवश्यमेतौ भाविनौ। तयोरिष्टानिष्टयो रागद्वेषयोर्वा वशं नागच्छेत्। यतस्तावस्य परिपन्थिनौ द्वेषिणौ मार्गविच्छेदकौ। अत्रायमर्थः। मायायाः स्वीयान्तानां तत्सम्बधिनां च मोहनसामर्थ्यं भगवता दत्तमतः पुरुषांशो जीव इन्द्रियादिवशं नागच्छेत्तदा मोहो न भवेत्। मायायाः स्वसंबन्धिमोहकसामर्थ्यज्ञापनायैव पूर्वं भूतानीति नपुंसकलिङ्गमुक्तम्। अत्रोपदेशे चास्येत्यनेन पुँल्लिङ्गमुक्तं विषयादिसंगस्य मोहरूपत्वादेव श्रीभागवते। 'न तथास्य भवेन्मोहो बन्धश्चात्मप्रसंगतः॥ योषित्संगाद्यथा पुंसो यथा तत्संगिसंगतः' इत्युक्तम्॥ ३४॥

**नी० टी०**—एवं तर्हि पुरुषस्य स्वातंत्र्याभावाद्विधिनिषेधशास्त्रं व्यर्थमित्याशंक्याह—**इंद्रियस्येति**। इंद्रियस्येंद्रियस्येति द्विवर्चनं वीप्सायां प्रतींद्रियं स्वेस्वेऽर्थे शब्दादौ वचनादौ च विषये रागद्वेषौ अनुकूले रागः प्रतिकूले द्वेषश्च व्यवस्थितौ नित्यसंबद्धौ तत्र तयोर्वशं नागच्छेदिति शास्त्रस्याभ्यनुज्ञा पुरुषस्य च तदनुष्ठाने स्वातंत्र्यमस्ति हि यतः तौ रागद्वेषावेवास्य प्राणिनः परिपंथिनौ विरोधिनौ दृष्टद्वारेण प्रवर्त्तकत्वात् न तु प्रकृत्यनुसारी ईश्वरोऽस्य परिपंथी तस्य वैषम्यादिदोषापत्तेः अयं भावः। यथा ह्यस्तनेन स्वाज्ञोल्लंघनजेनापराधेन कुपितो राजाऽपराधिनं हि निगडादौ निग्रहीतुं स्वीयान् भटान् प्रवर्त्तयति स एवाद्यतनेन दानमानेन प्रसादित एनं तेषामेव भटानामाधिपत्ये नियुंक्ते। एवं पूर्वकर्मानुसारी ईश्वरो रागादिद्वारा पुरुषं बाधमानोऽपि विधिप्रतिषेधशास्त्रानुसारिणा तेनैव भक्तिध्यानप्रणिधानेनावर्जितः एनं रागादिजये नियुंक्ते तस्माद्विधिप्रतिषेधशास्त्रस्य नानर्थक्यं पुरुषस्य स्वातंत्र्यसत्त्वात् नापीश्वरे वैषम्यादिकं प्राणिकर्मायत्तत्वादिति॥ ३४॥

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्॥**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥ ३५॥**

**शां० भा०—तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमप्यन्यथा परधर्मोऽपि धर्मत्वादनुष्ठेय एवेति तदसत्—श्रेयानिति। श्रेयान्प्रशस्यतरः स्वो धर्मः स्वधर्मो विगुणोऽपि विगतगुणोऽप्यनुष्ठीयमानः परधर्मात्स्वनुष्ठितात्साद्गुण्येन संपादितादपि, स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः परधर्मे स्थितस्य जीवितात्, कस्मात्परधर्मो भयावहः नरकादिलक्षणं भयमावहति यतः॥ ३५॥**

**शां० आ०**—रागद्वेषयोः श्रेयोमार्गप्रतिपक्षत्वं प्रकटयितुं परमतोपन्यासद्वारा समनन्तरश्लोकमवतारयति—**तत्रेत्यादिना**। व्यवहारभूमिः सप्तम्यर्थः। शास्त्रार्थस्यान्यथा प्रतिपत्तिमेव प्रत्याययति—**परधर्मोऽपीति**। स्वधर्मवदित्यपेरर्थः। अनुमानं दूषयन्नुत्तरत्वेन श्लोकमुत्थापयति—**तदसदिति**। क्षत्रधर्मांद्युद्धादुरनुष्ठानात्परिव्राड्धर्मस्य भिक्षाशनादिलक्षणस्य स्वनुष्ठेयतयाऽपि कर्तव्यत्वं प्राप्तमित्याशङ्क्य व्याचष्टे—**श्रेयानिति**। उक्तेऽर्थे प्रश्नपूर्वकं हेतुमाह—**कस्मादित्यादिना**। स्वधर्ममवधूय परधर्ममनुतिष्ठतः स्वधर्मातिक्रमकृतदोषस्य दुष्परिहरत्वान्न तत्त्यागः साधीयानित्यर्थः॥ ३५॥

**आ० भा०—तथाप्युग्रं युद्धकर्मेत्यत आह—श्रेयानिति॥ ३५॥**

**आ० ज०**—श्रेयानित्यस्य संगतिमाह—**तथाऽपीति**। ज्यायसी चेत्यत्र द्वावाक्षेपावर्जुनेन कृतौ। तत्राद्यो लोकेऽस्मिन्नित्यादिना परिहृतः। इदानीं युद्ध्यस्व विगतज्वरः। तयोर्न वशमागच्छेदित्युक्त्या स्मारितं द्वितीयमाक्षेपमाशंक्य परिहरतीत्यर्थः। यद्यपि कर्म कर्तव्यं तथाऽपि उग्रमवर्जनीयरागद्वेषं न कुर्यामिति शेषः॥ ३५॥

रा० भा०—अतः सुशकतया स्वधर्मभूतः कर्मयोगो विगुणोऽप्यप्रमादगर्भः प्रकृतिसंसृष्टस्य दुःशकतया परधर्मभूतज्ञानयोगात्सगुणादपि किंचित्कालमनुष्ठितात्सप्रमादाच्छ्रेयान् स्वेनैवोपादातुं योग्यतया स्वधर्मभूते कर्मणि वर्तमानस्यैकस्मिन् जन्मन्यप्राप्तफलतया निधनमपि श्रेयः अनन्तरायहततयानन्तरजन्मन्यप्यव्याकुलकर्मयोगारम्भसंभवात् प्रकृतिसंसृष्टस्य स्वेनैवोपादातुमशक्यतया परधर्मभूतो ज्ञानयोगः प्रमादगर्भतया भयावहः ॥ ३५ ॥

अ० टी०—ननु सर्वप्रकारेण भवदुक्तधर्मस्य कठिनत्वेन कथं सिद्धिरित्याशङ्क्याहुः—**श्रेयानिति**। स्वधर्मो भगवद्धर्मः विगुणः अङ्गादिभावरहितः परधर्मात् मोहकधर्मात् स्वनुष्ठितात् सुष्ठुप्रकारेणानुष्ठितात् संपादितात् श्रेयान् उत्तमः। यतः पूर्वं विगुणोऽपि भगवद्धर्मो मरणसमये भगवत्स्मारकत्वेनोपयुक्तो भवति तस्मात् स्वधर्मे सति निधनं मरणं श्रेयः मोक्षप्रापकमित्यर्थः। परधर्मो मरणसमये पूर्वानुष्ठितः स्वविषयस्मारको भवत्येव, स तत्क्षणे यमदूतादिदर्शकत्वेनाऽग्रे च नरकादियातनायां तत्साधकत्वेन च भयावहः। भयकर्तेत्यर्थः ॥ ३५ ॥

नी० टी०—यस्मादेवं तस्मात् श्रेयान् प्रशस्ततरः स्वधर्मः स्वस्य वर्णाश्रमानुरूप्येण ईश्वरेण विहितत्वात् विगुणो हिंसादिमिश्रोऽपि किंचिदंगहीनोऽपि परधर्मात् हिंसादिदोषरहितपरधर्मापेक्षया स्वनुष्ठितात् सर्वांगोपसंहारेण सम्यगनुष्ठितादपि स एव श्रेयान् स्वधर्मे युद्धादौ निधनं मरणमपि श्रेयः विहितत्वात् परस्य धर्मो भैक्षचर्यादिर्भयावहः क्षत्रियस्य तव निषिद्धत्वात्। तस्मात्स्वतंत्रेण त्वया स्वधर्म एवानुष्ठेय इति भावः ॥ ३५ ॥

**अर्जुन उवाच—अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ॥**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥**

शां० भा०—यद्यप्यनर्थमूलं ध्यायतो विषयान्पुंसो रागद्वेषौ ह्यस्य परिपन्थिनाविति चोक्तं विक्षिप्तमनवधारितं च तदुक्तं तत्संक्षिप्तं निश्चितं चेदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच ज्ञाते हि तस्मिंस्तदुच्छेदाय यत्नं कुर्यामिति—अथेति। अथ केन हेतुभूतेन प्रयुक्तः सन्राज्ञेव भृत्योऽयं पापं कर्म चरत्याचरति पूरुषः स्वयमनिच्छन्नपि हे वार्ष्णेय वृष्णिकुलप्रसूत बलादिव नियोजितो राज्ञेवेत्युक्तो दृष्टान्तः ॥ ३६ ॥

शां० आ०—प्रागेवानर्थमूलस्योक्तत्वात्पुनस्तज्जिज्ञासया प्रश्नानुपपत्तिरित्याशङ्क्याऽऽह—**यद्यपीति**। विक्षिप्तं विविधेषु प्रदेशेषु क्षिप्तं दर्शितमिति यावत, अनवधारितमनेकत्रोक्तत्वादनेकधाऽविवेककामादिभिर्विकल्पितत्वादित्यर्थः। नन्वनर्थमूलं परिहर्तव्यं तत्किमिति ज्ञातुमिष्यते तत्राऽऽह—**ज्ञाते हीति**। कुर्यामिति तज्ज्ञानमर्थवदिति शेषः। वाक्यारम्भार्थत्वमथशब्दस्य गृहीत्वा प्रश्नवाक्यं व्याकरोति—**अथेत्यादिना**। अनिच्छतोऽपि बलादेव दुश्चरितप्रेरितत्वे दृष्टान्तमाचष्टे—**राज्ञेवेति**। विनियोज्यत्वस्येच्छासापेक्षत्वात्तदभावे तदसिद्धिमाशङ्क्य प्रागुक्तं स्मारयति—**राज्ञेवेत्युक्त इति** ॥ ३६ ॥

आ० भा०—बहवः कर्मकारणाः संति। क्रोधादयः कामश्च। तत्र को बलवानितिपृच्छति—अथेति। अथेत्यर्थान्तरम्। तयोर्न वशमागच्छेदिति प्रश्नप्रापकम् ॥ ३६ ॥

आ० ज०—अथ केनेत्यर्जुनप्रश्नोऽनुपपन्नः। तौ ह्यस्य परिपंथिनाविति रागद्वेषयोः परिपंथित्वस्योक्तत्वात् न हि पापप्रयोजकत्वात्। अन्यद्रागादेः पुरुषपरिपंथित्वमित्यतः प्रश्नाभिप्रायमाह—**बहव इति**। कारणशब्दः करोतर्ण्यंतात्करणे ल्युडंतः स च त्रिलिंगः। अयमनुमान इति भाष्ये प्रयोगात् अथ वा "ण्यासश्रंथोयुच्" इति करणे युच्। अयं च स्त्रीलिंगः। बहव इत्यपि स्त्रीलिंग

एव । "वोतो गुणवचनात्" इति विकल्पविधानात् । कर्मेति पापं विवक्षितम् द्वयोरेवोक्तत्वात् कथं बहव इत्यनुवाद इत्यत आह—**क्रोधादय इति** । पूर्वं भगवता द्वेषशब्देन मदमत्सरादयोऽप्युपलक्षिताः । अरिषड्वर्गप्रसिद्धेः । तदेतद्विदित्वैवमनुवदतीति भावः । रागशब्देन कामः द्वेषशब्देन क्रोधादयश्च त्वयोक्ता इत्यर्थः । अस्य प्रश्नस्य प्रकृते क उपयोग इत्यत आह—**अथेति** । नास्य प्रकृतेन हेतुहेतुमद्भावादिलक्षणासंगतिरिति स्वयमेव सूचितमित्यर्थः । अथेति शब्देनार्थांतरमेतदिति सूच्यते । तर्ह्यसंगतं न प्रष्टव्यमित्यतः संगत्यंतराभावेऽपि प्रासंगिकी संगतिरस्तीत्याशयवान् प्रसंगं दर्शयति—**तयोरिति** । अत्रापि यो बलवांस्तं प्रति महांतं प्रयत्नं करिष्यामीति भावेन प्रश्नो युक्त एवेति भावः ॥ ३६ ॥

**रा० भा०**—अथायं ज्ञानयोगाय प्रवृत्तः पुरुषः स्वयं विषयाननुभवितुमनिच्छन्नपि केन प्रयुक्तो विषयानुभवरूपं पापं बलान्नियोजित इवाचरति ॥ ३६ ॥

**अ० टी०**—अथ पुरुषांशानामधिष्ठाता तु भगवान् स चैवमुपदिशति । माया केषांचन मोहयितुं प्रोक्ता तदा केनचिन्नियुक्तः सन्नयं पापाचरणे प्रवर्तत इत्यर्जुनो जिज्ञासुर्विज्ञापयति । अर्जुन उवाच—**अथ केनेति** । अयं पुरुषः पुरुषसंबन्धित्वादनिच्छन्नपि हे वार्ष्णेय ! भक्तिधर्मप्रवृत्त्यर्थं सत्कुलाविर्भूत । बलान्नियोजित इव अधिष्ठात्रा प्रेरित इव केन प्रयुक्तः पापं चरति पापगतियुक्तो भवति । तत्फलभोगं च करोति ॥ ३६ ॥

**नी० टी०**—ईश्वरो धर्माधर्मौ रागद्वेषौ वा पुरुषस्य प्रवर्त्तकौ भवत इत्यात्मनोऽस्वातंत्र्यं मन्वानोऽर्जुन उवाच—**अथ केनेति** । केन ईश्वरादीनामन्यतमेनान्येन वा प्रयुक्तः प्रवर्तितः सन्नयं पुरुषः पापमनिष्टं चरति करोति अनिच्छन्नित्यनेन रागद्वेषयोः प्रवर्त्तकत्वं निरस्तं सति हि रागे इच्छा भवति अत इच्छाया अभावाद्रागाभावः रागस्याप्रवर्त्तकत्वे तन्मूलभूतसंस्कारहेत्वोर्धर्माधर्मयोरप्रवर्त्तकत्वं ततश्च तत्सापेक्षस्य ईश्वरस्यापीति सर्वेषामाक्षेपः तस्मान्मुख्यं प्रवर्त्तकं यत्तद्वाच्यमित्यर्थः । बलादिव नियोजितः विष्टिगृहीत इवेत्यर्थः ॥ ३६ ॥

## श्रीभगवानुवाच—काम एष क्रोध एष रजोगुणसमुद्भवः ॥
## महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

**शां० भा०**—शृणु त्वं तं वैरिणं सर्वानर्थकरं यं त्वं पृच्छसि—'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ॥ वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना' । ऐश्वर्यादिषट्कं यस्मिन्वासुदेवे नित्यमप्रतिबद्धत्वेन सामस्त्येन च वर्तते । 'उत्पत्तिं प्रलयं चैव भूतानामगतिं गतिम् ॥ वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' । उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो वाच्यो भगवानिति । काम इति । काम एष सर्वलोकशत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनां स एष कामः प्रतिहतः केनचित्क्रोधत्वेन परिणमते । अतः क्रोधोऽप्येष एव । रजोगुणसमुद्भवो रजश्च तद्गुणश्च स रजोगुणः स समुद्भवो यस्य स कामो रजोगुणसमुद्भवो रजोगुणस्य वा समुद्भवः । कामो ह्युद्भूतो रजः प्रवर्तयन्पुरुषं प्रवर्तयति । तृष्णया ह्यहंकारित इति दुःखितानां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते । महाशनो महदशनमस्येति महाशनोऽत एव महापाप्मा । कामेन हि प्रेरितो जन्तुः पापं करोति । अतो विद्ध्येनं काममिह संसारे वैरिणम् ॥ ३७ ॥

**शां० आ०**—संप्रति प्रतिवचनं प्रस्तौति—**शृण्विति** । तस्य वैरित्वं स्फोरयति—**सर्वेति** । अप्रस्तुतं किमिति प्रस्तूयते तत्राऽऽह—**यं त्वमिति** । भगवच्छब्दार्थं निर्धारयितुं पौराणिकं वचनमुदाहरति—**ऐश्वर्यस्येति** । समग्रस्येत्येतत्प्रत्येकं विशेषणैः संबध्यते । अथशब्दस्तथाशब्दपर्यायः समुच्चयार्थः । मोक्षशब्देन तदुपायो ज्ञानं विवक्ष्यते । उदाहृतवचसस्तात्पर्यमाह—

**ऐश्वर्यादीति।** स वाच्यो भगवानिति संबन्धः। तत्रैव पौराणिकं वाक्यान्तरं पठति—**उत्पत्तिमिति।** भूतानामिति प्रत्येकमुत्पत्त्यादिभिः संबध्यते। कारणार्थौ चोत्पत्तिप्रलयशब्दौ क्रियामात्रस्य पुरुषान्तरगोचत्वसंभवात्। आगतिर्गतिश्चेत्यागामिन्यौ संपदापदौ सूच्येते। वाक्यान्तरस्यापि तात्पर्यमाह—**उत्पत्त्यादीति।** वेत्तीत्युक्तः साक्षात्कारो विज्ञानमित्युच्यते। समग्रैश्वर्यादिसंपत्तिसमुच्चयार्थश्चकारः। उक्तलक्षणो भगवान्किमुक्तवानिति तदाह—**काम इति।** कामस्य सर्वलोकशत्रुत्वं विशदयति—**यन्निमित्तेति।** तथाऽपि कथं तस्यैव क्रोधत्वं तदाह—**स एष इति।** कामक्रोधयोरवहेयत्वद्योतनार्थं कारणं कथयति—**रजोगुणेति।** कारणद्वारा कामादेरवहेयत्वमुक्त्वा कार्यद्वाराऽपि तस्य हेयत्वं सूचयति—**रजोगुणस्येति।** कामस्य पुरुषप्रवर्तकत्वमेव न रजोगुणजनकत्वमित्याशङ्क्याऽऽह—**कामो हीति।** तत्रैवानुभवानुसारिणीं लोकप्रसिद्धिं प्रमाणयति—**तृष्णया हीति।** तस्य योग्यायोग्यविभागमन्तरेण बहुविषयत्वं दर्शयति—**महाशन इति।** बहुविषयत्वप्रयुक्तं कार्यं निर्दिशति—**अत इति।** सर्वविषयत्वेऽपि कुतोऽस्य पापत्वमित्याशङ्क्याह—**कामेनेति।** कामस्योक्तविशेषणवत्त्वे फलितमाह—**अत इति** ॥ ३७ ॥

**आ० भा०**—यस्तु बलवान्प्रवर्तकः स एष कामः। क्रोधोऽप्येष एव तज्जन्यत्वात्। कामात्क्रोधोऽभिजायत इति ह्युक्तम्। यत्रापि गुरुनिंदादिनिमित्तः क्रोधः तत्रापि भक्तिनिमित्ताऽनिंदा कामनिमित्त एव। ये त्वन्यथा वदंति ते संकरान्न सूक्ष्मं जानंति। उक्तं च। 'ऋते कामं न कोपाद्या जायंते च कथं च न' इति। महाशनः महद्धि कामभोग्यम्। महाब्रह्महत्यादिकारणत्वात् महापाप्मा। सर्वपुरुषार्थविरोधित्वाद्वैरी ॥ ३७ ॥

**आ० ज०**—बलवद्विषयश्चेत् प्रश्नः तर्हि परिहारो न संगच्छत इत्यतः परिहारं व्याचष्टे—**यस्त्विति।** प्रवर्तकः पापेषु पुरुषस्त्वया पृष्ट इति शेषः। एवं योजनायां क्रोधस्यापि कामसाम्यं स्यात् तथा चोत्तरत्र कामस्यैवानुवृत्तिर्विरुद्ध्येतेत्यतः क्रोध एष इत्येतदन्यथा व्याचष्टे—**क्रोधोऽपीति।** किं काम एव मुख्यया वृत्त्यैवमुच्यते नेति ब्रूमः किं तूपचारेणेतिभावेनाह—**तदिति।** तदेव कुत इत्यत आह—**कामादिति।** नायमस्ति नियमः। यदा गुरुनिंदादिश्रवणे निंदकाय क्रुद्ध्यति तदा कामाभावेऽपि क्रोधोदयदर्शनादित्यत आह—**यत्रापीति।** भक्तिनिमित्तश्चासावनिंदाकामश्चेति विग्रहः। संगात्संजायते काम इत्येतद्दर्शयितुं भक्तिनिमित्तेत्युक्तम्। काम एव केनचित्प्रतिहतः क्रोधत्वेन परिणमत इति परेषां व्याख्यानं दूषयति—**ये त्विति।** एकांतःकरणोपादानत्वलक्षणादानंतर्यलक्षणाच्च संकरात्सूक्ष्मं कामक्रोधयोरत्यंतभेदम्। न हि गुणोगुणस्योपादानं किं तु निमित्तमेव प्रागन्वये प्रमाणमुक्तमिदानीं व्यतिरेकेऽप्याह—**उक्तं चेति।** महाशन इति कामे दुर्घटत्वाद्गौणमित्याह—**महाशन इति।** भोग्यं विषयः। यस्मात्कामभोग्यं महत्तस्मादसौ महाशन इत्यर्थः। काम एष इति पापकारणत्वेनोक्त्वा कथं महापाप्मेत्युच्यत इत्यतो न कर्मधारयोऽयम् किं तु महान्पाप्मा यस्मादिति बहुव्रीहिरिति भावेनाह—**महाब्रह्मेति।** महच्छब्दात्परतः पापशब्दोऽध्याहार्यः। वधादिकर्तृत्वाभावात्कथं वैरित्वमित्यत आह—**सर्वेति।** सर्वः संपूर्णः पुरुषार्थो मोक्षः ॥ ३७ ॥

**रा० भा०**—अस्योद्भवाभिभवरूपेण वर्तमानगुणमयप्रतिसंसृष्टस्य प्रारब्धज्ञानयोगस्य रजोगुणसमुद्भवः प्राचीनवासनाजनितः शब्दादिविषयोऽयं कामो महाशनः सर्वविषयेष्वेनमाकर्षति एप एव प्रतिहतगतिः प्रतिहननहेतुभूतचेतनान्प्रति क्रोधरूपेण परिणतो महापाप्मा परहिंसादिषु प्रवर्तयति एनं रजोगुणसमुद्भवं सहजं ज्ञानयोगविरोधिनं वैरिणं विद्धि ॥ ३७ ॥

**अ० टी०**—एतत्प्रश्नोत्तरमाह भगवान्। प्रपञ्चवैचित्र्यार्थप्रकटितत्रिगुणमध्यस्थविक्षिप्तकरणैकस्वभावरजोगुणात्मकभगवदंशमोहितस्तत्र प्रवर्त्तते तस्मात्तद्गुणकृतविक्षेपकर्माणि तत्स्वरूपज्ञानपूर्वकं त्यजेदित्याह—**कामएष इति।** एष इति लौकिकः कामः। रजोगुणसमुद्भवः रजोगुणादुत्पत्तिर्यस्य सः। सर्वेषां द्वेषी शत्रुः। एष एव कामोऽवस्थान्तरापन्नः क्रोधो भवति सोऽपि रजोगुणसमुद्भवः। स महाशनो दुरापूरः। अत एव श्रीभागवते उक्तम्। 'न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते'। किं पुनर्महापाप्मा महापापरूपो भगवद्भजनप्रतिबन्धकः। इह संसारे देहग्रहणानन्तरमेनं वैरिणं विद्धि। इहेतिपदादेतद्देहावसाने सति अलौकिकेऽयमेव कार्याय भविष्यतीति भावः ॥ ३७ ॥

नी० टी०—अत्रोत्तरं "काममय एवायं पुरुष" इत्यादिश्रुतिसिद्धं भगवानुवाच—काम एष इति। एष प्रसिद्धः कामः। "सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीय" इति श्रुतेरिदं मे भूयादिदं मे भूयादिति तीव्राभिलाषहेतुभूतश्चेतसोऽनवस्थितत्वापादको वृत्तिविशेषः स च चेतोरूप एव। कामः संकल्प इत्युपक्रम्यैतत्सर्वं मन इत्युपसंहारात् स एष कामः केनचिन्निमित्तेन प्रतिहतः क्रोधरूपेण परिणमतेऽतः क्रोधोभिज्वलनात्माऽप्येष एव तमेनमिह शरीरेऽतः स्थितं वैरिणं विद्धि कुतो वैरी यतः रजोगुणसमुद्भवः रजो रंजनात्मकः प्राकृतो गुणस्तस्य गुणौ कार्यभूतौ तृष्णासंगौ तावेव उद्भवो यस्य सः रजःकार्यत्वात् दुःखैकफलोऽयमतो वैरी। यद्वा रजोगुणस्य लोभप्रवृत्त्यादिलक्षणस्य समुद्भवो यस्मात्। ननु विषयाभिलाषात्मकः कामो विषयार्पणेन शाम्यति विषयस्य दौर्लभ्यनिश्चये स्वत एव वा निवर्त्तते अंध इव रूपदर्शनाभिलाषादित्याशंक्याह महाशनो महापाप्मेति महत् दातुमपारणीयं अशनमस्य स तथा। यथोक्तं। 'न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति। 'यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्' इति। तथा महापाप्मा अत्युग्रः स हि सहस्रशः प्रबोधितोऽपि न निवर्त्तते तद्वदयमपि दुश्चिकित्स्यः महाशनत्वान्नायं वैरी दानसाध्यः नापि सामभेदसाध्यः अत्युग्रत्वात् अतो हंतव्य एवेति ॥ ३७ ॥

**धूमेनाऽऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ॥**
**यथोल्बेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

**शां० भा०**—कथं वैरीति दृष्टान्तैः प्रत्याययति—धूमेनेति। धूमेन सहजेनाऽऽव्रियते वह्निः प्रकाशात्मकोऽप्रकाशात्मकेन यथा वाऽऽदर्शो मलेन च यथोल्बेन गर्भवेष्टनेन जरायुणाऽऽवृत आच्छादितो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

शां० आ०—उत्तरश्लोकमवतारयति—**कथमिति**। अनेकदृष्टान्तोपादानं प्रतिपत्तिसौकर्यार्थम्। सहजस्य धूमस्य प्रकाशात्मकवह्निं प्रत्यावरकत्वसिध्यर्थं विशिनष्टि—**अप्रकाशात्मकेनेति** ॥ ३८ ॥

**आ० भा०**—कथं विरोधी सः। इदमनेनावृतम्। यथा धूमेनाग्निरावृतः प्रकाशरूपोऽप्यन्येषां सम्यग्दर्शनाय। तथा परमात्मा। यथाऽऽदर्शो मलेनावृतोऽन्याभिव्यक्तिहेतुर्न भवति तथांतःकरणं परमात्मादेर्व्यक्तिहेतुर्न भवति कामेनावृतम्। यथोल्बेनावृतस्य बद्धो भवति गर्भस्तथा कामेनावृतो जीवः ॥ ३८ ॥

आ० ज०—ननु प्रश्नस्योत्तरं जातं किमुत्तरेणेत्यतः श्लोकद्वयस्य संगतिमाह—**कथमिति**। स कामः कथं मोक्षस्य विरोधीति जिज्ञासायामाह—**धूमेनेत्यादिनेति** शेषः। विवक्षितार्थस्यास्फुटत्वात् व्याख्याति—**इदमिति**। ईश्वरांतःकरणजीवलक्षणं वस्तुत्रयं। केन किमिवेत्याकांक्षायामाद्यं पादत्रयं व्याचष्टे—**यथेति**। परमात्मा कामेनावृतः स्वयं सर्वज्ञोऽप्यन्यैर्न ज्ञायत इति शेषः। अन्यस्य मुखादेः। परमात्मादेरित्यादिपदेन जीवो गृह्यते। बंधापेक्षयाऽऽवरणस्य समानकर्तृकत्वम्। बद्धः संकुचितो व्यापाराक्षम इति यावत्। उल्बो गर्भवेष्टनम्। कामेनावृतो जीवो नेश्वरादिज्ञाने क्षम इत्यर्थः ॥ ३८ ॥

**रा० भा०**—यथा धूमेन वह्निराव्रियते यथा चादर्शो मलेन यथा चोल्बेन वृतो गर्भस्तथा तेन कामेनेदं जन्तुजातमावृतम् ॥ ३८ ॥

अ० टी०—यतोयं वैरी ततोऽस्य ज्ञानमावर्त्तयति तेन मोहो भवतीत्याह त्रयेण—**धूमेनेति**। यथा धूमेन वह्निरात्रियते मलेन आदर्श आत्रियते उल्बेन गर्भावेष्टनेन गर्भ आवृतः तथा तेन कामेन इदं ज्ञानमावृतम्। अत्र दृष्टान्तेषु वह्न्यादित्रयनिरूपणस्यायं भावः। पूर्वदृष्टान्तेन भगवत्तापात्मकं ज्ञानं व्यज्यते द्वितीयेन सेवायोग्यस्वस्वरूपप्रातिरूपं ज्ञानं व्यज्यते। तृतीयेन बीजभावोत्पत्त्यात्मकज्ञानं व्यज्यते॥ ३८॥

नी० टी०—अस्य वैरित्वमेव विवृणोति—**धूमेनेत्यादिना**। उल्बेन गर्भवेष्टनेन जरायुणा तेन कामेन इदं वक्ष्यमाणं ज्ञानमावृतं आवरणीयस्य त्रैविध्यात्तदनुगुणं दृष्टांतत्रयं ज्ञेयम्॥ ३८॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा॥**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च॥ ३९॥**

**शां० भा०—किं पुनस्तदिदंशब्दवाच्यं यत्कामेनाऽऽवृतमित्युच्यते—आवृतमिति। आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा। ज्ञानी हि जानात्यनेनाहमनर्थे प्रयुक्तः पूर्वमेवेति। दुःखी च भवति नित्यमेव। अतोऽसौ ज्ञानिनो नित्यवैरी न तु मूर्खस्य। स हि कामं तृष्णाकाले मित्रमिव पश्यंस्तत्कार्ये दुःखे प्राप्ते जानाति तृष्णयाऽहं दुःखित्वमापादित इति न पूर्वमेवातो ज्ञानिन एव नित्यवैरी। किंरूपेण कामरूपेण काम इच्छैव रूपमस्येति कामरूपस्तेन दुष्पूरेण दुःखेन पूरणमस्येति दुष्पूरस्तेनानलेन नास्यालं पर्याप्तिर्विद्यत इत्यनलस्तेन॥ ३९॥**

शां० आ०—सामान्यतो निर्दिष्टं विशेषतो निर्देष्टुमाकाङ्क्षापूर्वकमनन्तरश्लोकमवतारयति—**किं पुनरिति**। कामस्य ज्ञानं प्रत्यावरणत्वसिद्ध्यर्थं ज्ञानिनो नित्यवैरिणेत्यादिविशेषणम्। प्रतीकमादाय व्याकरोति—**आवृतमित्यादिना**। ज्ञानिनं प्रति वैरित्वेऽपि नित्यवैरित्वं कामस्य कथमित्याशङ्क्याऽऽह—**ज्ञानी हीति**। अनर्थप्राप्तिमन्तरेण कामस्य प्रसङ्गावस्था पूर्वमेवेत्युच्यते, अतःशब्देन कामप्रसक्तिरेव परामृश्यते, नित्यमेवेत्युत्पत्त्यवस्था कार्यावस्था च कामस्य कथ्यते। ननु सर्वस्यापि कामात्मता न प्रशस्तेति कामो नित्यवैरी भवति ततः कुतो ज्ञानिविशेषणमित्याशङ्क्याऽऽह—**न त्विति**। अज्ञस्य नासौ नित्यवैरीत्येतदुपपादयति—**स हीति**। कार्यप्राप्तिप्रागवस्था पूर्वमित्युक्ता। अज्ञं प्रति वैरित्वे सत्यपि कामस्य नित्यवैरित्वाभावे फलितमाह—**अत इति**। स्वरूपतो नित्यवैरित्वाविशेषेऽपि ज्ञानाज्ञानाभ्यामवान्तरभेदसिद्धिरित्यर्थः। आकाङ्क्षाद्वारा प्रकृतं वैरिणमेव स्फोरयति—**किंरूपेणेत्यादिना**॥ ३९॥

**आ० भा०—शास्त्रतो जातमपि ज्ञानं परमात्मा परोक्ष्याय न प्रकाशते। कामेनावृतं ज्ञानिनोऽपि किं स्वल्पज्ञानिनः। कामरूपेण कामाख्येन नित्यवैरिणा दुःपूरेण। दुःखेन हि कामः पूर्यते। न हींद्रादिपदं सुखेन लभ्यते। यद्यपींद्रादिपदं प्राप्तं पुनर्ब्रह्मादिपदमिच्छतीत्यलं बुद्धिर्नास्तीत्यनलः। उक्तं च। 'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा॥ आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामकः' इति॥ ३९॥**

आ० ज०—एवं ज्ञेयज्ञानकरणज्ञातृप्रतिबंधकत्वोक्त्या ज्ञानप्रतिबंधकत्वमुक्तम्। आवृतं ज्ञानमित्यनेन पुनः किमुच्यत इत्यत आह—**शास्त्रत इति**। पूर्वं ज्ञानोत्पत्तिबंधकत्वमुक्तं इदानीं तु कथंचिज्जातमपि ज्ञानं न स्वकार्याय प्रभवतीत्युच्यते। अतो न पुनरुक्तिदोष इति भावः। कामकारेण चैक इति वचनात्। अपरोक्षज्ञानस्य मोक्षसाधनेन केनापि प्रतिबंध इत्यतउक्तम् शास्त्रत इति। परमात्मा पारोक्ष्यायेति च। न प्रकाशते न प्रभवति। ज्ञानिन इतिव्यर्थम्। ज्ञानस्य ज्ञानिसंबंधाव्यभिचारादित्यत आह—**ज्ञानिनोऽपीति**। शास्त्रजनितज्ञानवतोऽपि अल्पज्ञानिनो गुरूपदेशमात्रजनितज्ञानवतः। अपरे तु ज्ञानिनो नित्यवैरिणा न मूर्खस्य ज्ञानी हि विनाशयिष्यामि काममिति यतते। मूर्खस्तु तमनुवर्तत इति वर्णयंति। तदनेनैव निरस्तम् अपकारित्वं खल्वत्र वैरित्वं विवक्षितं तच्च ज्ञान्यपेक्षया मूर्खेऽधिकं न हि मूर्खस्तं नानुसंधत्त इत्येतावता तन्नास्ति। इच्छानुरूपं रूपं यस्यासौ कामरूप इत्युच्यते। न चैतत्कामेंऽतःकरणधर्मे संभवतीत्यत आह—**कामेति**। रूप्यतेऽनेनेति रूपमाख्यात्र विवक्षितेत्यर्थः। तर्हि विशेषणपद-

मिदं जातं किमस्य विशेष्यमित्यत आह—**नित्येति**। यो न पूरयितुं शक्यः। सदुःपूरः। कामस्तु विषयसंपादनेन पूरयितुं शक्यः। कथं दुःपूर इत्यतोऽन्यथा व्याचष्टे—**दुष्पूरेणेति**। न नञर्थे दुःशब्दः किं तु कृच्छ्रार्थ इत्यर्थः। तदुपपादयति—**न हीति**। कामविषयोपलक्षणमेतत्। ननु प्रज्वलनात्मकत्वात्क्रोधोऽनलोयुक्तः। कामस्तु कथमनल इत्यतः सोपपत्तिकमन्यथा व्याचष्टे—**यद्यपीति**। इदमपि प्राप्तादधिकस्योपलक्षणम्। श्लोकद्वयार्थे प्रमाणसंमतिमाह—**उक्तं चेति**। कामकः कुत्सितकामो ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमः। तथा बुद्धेरंतःकरणस्यादर्शस्य मलम्। अथ जीवस्य गर्भस्योल्ब इति सर्वत्र गूढोपमा एतेनेदमित्युक्तस्य विवरणं द्वितीयश्लोक इति व्याख्यानमपाकृतं भवति ॥ ३९ ॥

**रा० भा०**—आवरणप्रकारमाह।अस्य जन्तोर्ज्ञानिनो ज्ञानस्वभावस्यात्मविषयं ज्ञानम् एतेन कामकारेण विषयव्यामोहजेन नित्यवैरिणावृतं दुष्पूरेण प्राप्त्यनर्हविषयेणानलेन च पर्याप्तिरहितेन ॥ ३९॥

**अ० टी०**—हे कौन्तेय ! मूलतो भक्त ! मदुपदेशयोग्य ! ज्ञानिनो मदंशत्वेन स्वस्वरूपज्ञानवतो नित्यवैरिणा तेन कामेन ज्ञानमावृतं च पुनरनलेन रसपाचकेनोदरस्थेन तेनापि कामवृद्धिर्भवतीति कामरूपेण ज्ञानमावृतं कीदृशेनानलेन दुरापूरेण दुःखेन पूरणं यस्य सः। अत एव 'जितं सर्वं जिते रसे' इति वचनं। कामस्यैव वा विशेषम् ॥ ३९ ॥

**नी० टी०**—आवृतमिति। ज्ञानं अंतःकरणसत्त्वं। "ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेः एतेन कामेन रजोगुणात्मकेन आवृतं ज्ञानिनः अंतःकरणविशिष्टस्य प्रमातुर्नित्यवैरिणा कामरूपेण दुष्पूरेण पुरयितुमयोग्येन। अयं हि पूर्यमाणोऽनर्थानेव प्रसवेत् अनलेन अथापि पूर्यते चेत् अनलः नास्त्यलं पर्याप्तिर्यस्य स तथा तेनानलेन न ह्यनलः काष्ठैस्तर्पयितुं शक्यः किंतु वर्धत एव तद्वदयमपीत्यर्थः। अयंभावः। अंतःकरणसत्वं हि वह्निवत् प्रकाशात्मकं तत्सहजेन कामेन वह्निरिव धूमेनावृतं चेत् प्रमातारमनर्थे पातयाति अन्यथा तदेव स्वभावशुद्धत्वात् विवेकवैराग्योपगं भूत्वा तमुद्धरेत् अतोऽयं कामो ज्ञानिनो नित्यवैरीति ॥ ३९ ॥

## इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ॥
## एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥

**शां० भा०**—किमधिष्ठानः पुनः कामो ज्ञानस्याऽऽवरणत्वेन वैरी सर्वस्येत्यपेक्षायामाह ज्ञाते हि शत्रोरधिष्ठाने सुखेन शत्रुनिबर्हणं कर्तुं शक्यत इति—इन्द्रियाणीति। इन्द्रियाणि मनो बुद्धिश्चास्य कामस्याधिष्ठानमाश्रय उच्यते। एतैरिन्द्रियादिभिराश्रयैर्विमोहयति विविधं मोहयत्येष कामो ज्ञानमावृत्याऽऽच्छाद्य देहिनं शरीरिणम् ॥ ४० ॥

**शां० आ०**—कामस्य निराश्रयस्य कार्यकारकत्वाभावं मत्वा प्रश्नपूर्वकमाश्रयं दर्शयति—**किमधिष्ठान इति**। कामस्य नित्यवैरित्वेन परिजिहीर्षितस्य किमित्यधिष्ठानं ज्ञाप्यते तत्राऽऽह—**ज्ञाते हीति**। इन्द्रियादीनां कामाधिष्ठानत्वं प्रकटयाति—**एतैरिति**। नन्वेताभिरिति वक्तव्ये कथमेतैरित्युच्यते तत्राऽऽह—**इन्द्रियादिभिरिति** ॥ ४० ॥

**आ० भा०**—वधार्थं शत्रोरधिष्ठानमाह—इंद्रियाणीति। एतैर्ज्ञानमावृत्त्य बुद्ध्यादिभिर्हि विषयगैर्ज्ञानमावृतं भवति। हताधिष्ठानो हि शत्रुर्नश्यति ॥ ४० ॥

**आ० ज०**—इंद्रियाणीत्यादिकमपृष्टं किमर्थमुच्यत इत्यत आह—**वधार्थमिति**। एतदर्थमेव ह्यर्जुनेन बलवान्पृष्टः क्रियाद्वयश्रवणात् कां प्रतींद्रियादीनां करणत्वमिति न प्रतीयते। संनिधानाद्विमोहनं प्रतीत्यन्यथा च प्रतीयतेऽत आह—**एतैरिति**। तदुपपादयति—**बुद्ध्यादिभिरिति**। इंद्रियादित्वेनोक्तानामपि बुद्ध्यादित्वेन ग्रहणं प्राधान्यज्ञापनार्थम्। तस्मात्त्वमितींद्रियाणां निग्रहः कामहननायोपदिश्यते तदुपपादयति—**हतेति**। नश्यति नाशयितुं शक्यो भवति ॥ ४० ॥

**रा० भा०**—कैरुपकरणैरयं कामः आत्मानमनुतिष्ठतीत्यत्राह । अधितिष्ठत्येभिरयं कामः आत्मानमिति इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानम् एतैरिन्द्रियमनोबुद्धिभिः कामाधिष्ठानभूतैर्विषयप्रवणैर्देहिनं प्रकृतिसंसृष्टं ज्ञानमावृत्य विमोहयति विविधं मोहयति आत्मज्ञानविमुखं विषयानुभवपरं करोतीत्यर्थः ॥ ४० ॥

**अ० टी०**—स कामः कुत्र तिष्ठतीति जिज्ञासार्थमाहुः—**इन्द्रियाणीति** । इन्द्रियाणि श्रोत्रादीनि मनोऽन्तःकरणं बुद्धिर्ज्ञानमस्य कामस्याधिष्ठानं स्थानमुच्यते कथ्यते । एतैः करणभूतैर्ज्ञानमावृत्य एष कामः देहिनं विशेषेण मोहयति । स्वयं तु मोहयत्येव पुनरेतैः स्वाश्रयभूतैः सहितोऽधिकं मोहयतीत्युपसर्गेण व्यज्यते ॥ ४० ॥

**नी० टी०**—किंच—**इंद्रियाणीति**। अयमर्थः इंद्रियमनोबुद्धयो हि कामेनाधिष्ठिता बाह्यार्थप्रवणा भवंति तैश्च तथाभूतैरयं कामो ज्ञानं चिदाकाशरूपमादर्शतलप्रख्यं यत्र योगिनो व्यवहितं विप्रकृष्टमतीतमनागतं वा पश्यंति । यथोक्तमाचार्यैः । 'विश्वं दर्पणदृश्यमाननगरीतुल्यं निजांतर्गतं पश्यंत्यात्मनि' इति निजांतर्गतं शरीरांतर्गतं आत्मनि हार्दाकाशाख्ये ब्रह्मणि तत् मलेनादर्शमिवावृत्य देहिनं देहाभिमानिनं विशेषेण मोहयति विशब्दात् देहाभिमानशून्यं योगिनमपि व्युत्थानावस्थायां किंचिन्मोहयतीति गम्यत इति अक्षरयोजना स्पष्टा ॥ ४० ॥

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ॥
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१ ॥**

**शां० भा०**—यत एवम्—तस्मादिति । तस्मात्त्वमिन्द्रियाण्यादौ पूर्वं नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं प्रजहिहि परित्यज, एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रत आचार्यतश्चाऽऽत्मादीनामवबोधः, विज्ञानं विशेषतस्तदनुभवस्तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनं प्रजहिह्यात्मनः परित्यजेत्यर्थः ॥ ४१ ॥

**शां० आ०**—तेषां कामाश्रयत्वे सिद्धे साश्रयस्य तस्य परिहर्तव्यत्वमाह—**यत इति** । तस्मादिन्द्रियादीनामाश्रयत्वादिति यावत्, पूर्वं कामनिरोधात्प्रागवस्थायामित्यर्थः । तेषु नियमितेषु मनोबुद्ध्योर्नियमः सिध्यति तत्प्रवृत्तेरितरप्रवृत्तिव्यतिरेकेणाफलत्वादिति भावः । पापमूलतया कामस्य तच्छब्दवाच्यत्वमुन्नेयम् । कामस्य परित्याज्यत्वे वैरित्वं हेतुं साधयाति—**ज्ञानेति** । ज्ञानविज्ञानशब्दयोरर्थभेदमावेदयाति—**ज्ञानमित्यादिना** ॥ ४१ ॥

**आ० भा०**— ॥ ४१ ॥

**आ० ज०**—॥ ४१ ॥

**रा० भा०**—यस्मात्सर्वेन्द्रियव्यापारोपरतिरूपे ज्ञानयोगे प्रवृत्तस्यायं कामरूपशत्रुर्विषयाभिमुख्यकरणेनात्मनि वैमुख्यं करोति तस्मात् प्रकृतिसंसृष्टतयेन्द्रियव्यापारप्रवणस्त्वमादौ मोक्षोपायारम्भसमय एवेन्द्रियव्यापाररूपे कर्मयोगे इन्द्रियाणि नियम्यैनं ज्ञानविज्ञाननाशनम् आत्मस्वरूपविषयस्य ज्ञानस्य तद्विवेकविषयस्य च नाशनं पाप्मानं कामरूपं वैरिणं प्रजहि नाशय ॥ ४१ ॥

**अ० टी०**—एतैरङ्गभूतैः स मोहयति शत्रुस्तमेतन्निरोधेन जहीत्याह—**तस्मादिति** । यस्मादिन्द्रियैरयं मोहयति तस्मादादौ त्वम् इन्द्रियाणि तद्विषयेभ्यो नियम्य स्ववशे स्थापयित्वा हे भरतर्षभ एतन्नि-

यमनसमर्थ ! ज्ञानविज्ञाननाशनं शास्त्रीयं भक्तिरूपं ज्ञानं, विज्ञानं स्वरूपानुभवस्तयोर्नाशकर्त्तारं पाप्मानं पापरूपमेनमिदानीमपि मत्स्वरूपानुभवे विघ्नकर्त्तारं प्रजहि प्रकर्षेण जहि त्यज ॥ ४१ ॥

नी० टी०—तस्मादिति । यस्मादिंद्रियाण्यस्याधिष्ठानं सामंतस्येव गिरिदुर्गादिकं तस्मात्तान्येव नियम्य वशीकृत्य एनं कामं हि निश्चयेन प्रजहि प्रकर्षेण नाशय । गिरिदुर्गादीन् स्वायत्तीकृत्येव तत्स्थं सामंतं घ्नंति राजानस्तद्वत् हंतव्यत्वे हेतुः पाप्मानमत्युग्रं तत्रापि हेतुः ज्ञानविज्ञाननाशनमिति ज्ञानस्य शास्त्राचार्योपदेशजस्य परोक्षस्य विज्ञानस्य निदिध्यासनपरिपाकजस्यापरोक्षस्य च नाशनम् ॥ ४१॥

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ॥**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥**

**शां० भा०—इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहीत्युक्तं तत्र किमाश्रयः कामं जह्यादित्युच्यते—इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तरस्थत्वव्यापित्वाद्यपेक्ष्य पराणि प्रकृष्टान्याहुः पण्डिताः । तथेन्द्रियेभ्यः परं मनः संकल्पविकल्पात्मकम् । तथा मनसस्तु परा बुद्धिर्निश्चयात्मिका । तथा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरो यं देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तं स बुद्धेर्द्रष्टा परमात्मा॥४२॥**

शां० आ०—पूर्वोक्तमनूद्य कामत्यागस्य दुष्करत्वं मन्वानो रसोऽप्यस्येत्यत्रोक्तमेव स्पष्टीकर्तुं प्रश्नपूर्वकं श्लोकान्तरमवतारयति—**इन्द्रियाणीत्यादिना** । पञ्चेति ज्ञानेन्द्रियवत्कर्मेन्द्रियाण्यपि वागादीनि गृह्यन्ते । किमपेक्षया तेषां परत्वं तत्राऽऽह—**देहमिति** । तथाऽपि केन प्रकारेण परत्वं तदाह—**सौक्ष्म्येति** । आदिशब्देन कारणत्वादि गृह्यते । इन्द्रियापेक्षया सूक्ष्मत्वादिना मनसः स्वरूपोक्तिपूर्वकं परत्वं कथयति—**तथेति** । मनसि दर्शितं न्यायं बुद्धावतिदिशति—**तथा मनसस्त्विति** । यो बुद्धेरित्यादि व्याचष्टे—**तथेत्यादिना** । आत्मनो यथोक्तविशेषणस्याप्रकृतत्वमाशङ्क्याऽऽह—**यं देहिनमिति** ॥ ४२ ॥

**आ० भा०—शत्रुहनने आयुधरूपं ज्ञानं वक्तुं ज्ञेयमाह—इंद्रियाणीति । असंगज्ञानासिमादाय तरातिपारमिति ह्युक्तम् । शरीरादिंद्रियाणि पराणि उत्कृष्टानि । न केवलं बुद्धेःपरःश्रुत्युक्तप्रकारेणाव्यक्तादपि "अव्यक्तात्पुरुषः परः"इति हि श्रुतिः । न च तत्र तत्रोक्तैकदेशज्ञानमात्रेण भवति मुक्तिः । सार्वत्रिकगुणोपसंहारो हि भगवता गुणोपसंहारपादेऽभिहितः । आनंदादयः प्रधानस्येत्यादिना । तथाचान्यत्र 'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि । सर्वत्र ये गुणाः प्रोक्ताः संप्रदायगताश्च ये ॥ सर्वैस्तैः सह विज्ञाय ये पश्यंति परं हरिम् । तेषामेव भवेन्मुक्तिर्नान्यथा तु कथंचन"इति गारुडे । तस्मादव्यक्तादपि परत्वेन ज्ञेयः । न चात्र जीवउच्यते । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तत्वात् 'अविज्ञाय परं मत्तो जयः कामस्य वै कुतः' इति च । अतः परमात्मज्ञानमेवात्र विवक्षितम् । आत्मानं मनः । आत्मना बुद्ध्या ॥ ४२ ॥**

आ० ज०—इंद्रियाणि पराणीत्यस्य पूर्वेण संगतिर्न दृश्यते अत आह—**शत्रुहनन इति** । एवं बुद्धेः परमित्यनेन वक्तुम् । ज्ञानस्यात्रायुधत्वे प्रमाणमाह—**असंगेति** । असंगं वैराग्यसहितम् । तराति पारं पारमतितर "छंदसि परेऽपि"इति वचनात् । परत्वस्यावधिसापेक्षत्वात्कस्मादिंद्रियाणि पराणीत्यत आह—**शरीरादिति** । संनिधानादिति भावः । किं परतत्वमन्यत्वं नेत्याह—**उत्कृष्टानीति** । यो बुद्धेः परतस्तु स इति परमात्मोच्यते तस्य बुद्धेः परत्वे महतात्मना साम्यं स्यादत आह—**न केवलमिति** । काऽसौ श्रुतिर्यद्बलादध्याहार इत्यत आह—**अव्यक्तादिति** । अस्तु भगवानव्यक्तादपि कामादिजयार्थं बुद्धेः परत्वेनैव ज्ञातेनालं किं प्रमाणांतरसिद्धयाहारेणेत्यत आह—**न चेति** । कामादिजयो हि मुक्तिद्वारं न च मुक्तिरेकदेशज्ञानमात्रेण भवति । कुत

इत्यत आह—**सार्वत्रिकेति** । तस्यान्यथाव्याख्यानेऽपि स्पष्टं प्रमाणमाह—**तथा चेति** । सर्वत्रैवेति संबंधः । वेदाद्युक्ता अपि भगवत्संप्रदायागतास्तै सह तैः सहितम् । न च तत्रेत्युक्तमुपसंहरति—**तस्मादिति** । मायावादी तु यो बुद्धेः परतस्तु स इत्यनेन जीव उच्यत इत्याह तन्निराकरोति—**न चेति** । कुत इतिचेत् । एवं बुद्धेः परमित्येतज्ज्ञानस्य कामविनाशसाधनत्वोक्तेः । तस्याश्च भगवत्परिग्रहे घटनादन्यथाऽघटनादिति भावेनोभयत्र प्रमाणमाह—**रसोऽपीति** । न चात्रेत्युक्तमुपसंहरति—**अत इति** । भास्करस्तु कामोऽत्रोच्यत इत्याह तदतीव मंदं "कामः संकल्पः" इत्यादिश्रुतेः तस्य मनोधर्मस्य तत्परत्वानुपपत्तेः । पक्षद्वयेऽपींद्रियाणि पराणीत्यादिना तारतम्योक्तेर्न प्रयोजनमस्तीति । 'संस्तभ्यात्मानमात्मना' इत्यस्य जीवात्मानं परमात्मनैकीकृत्येतिव्याख्यानं शब्दबाह्यमित्याशयवानात्मशब्दद्वयं व्याख्याति—**आत्मानमिति** ॥ ४२ ॥

**रा० भा०—ज्ञानविरोधिषु प्रधानमाह । ज्ञानविरोधे प्रधानानीन्द्रियाण्याहुः यत इन्द्रियेषु विषयव्यापृतेष्वात्मनि ज्ञानं न प्रवर्तते इन्द्रियेभ्यः परं मनः इन्द्रियेषूपरतेष्वपि मनसि विषयप्रवणे आत्मज्ञानं न भवति मनसस्तु परा बुद्धिः मनसि विषयान्तरविमुखेऽपि विपरीताध्यवसायप्रवृत्तायां बुद्धौ नात्मज्ञानं प्रवर्तते सर्वेषु बुद्धिपर्यन्तेषूपरतेष्वपीच्छापर्यायः कामो रजःसमुद्भवो वर्तते चेत्स एवैतानीन्द्रियादीन्यपि स्वविषयेषु वर्तयित्वात्मज्ञानं निरुणद्धि तदिदमुच्यते यो बुद्धेः परतस्तु स इति बुद्धेरपि यः परः स काम इत्यर्थः ॥ ४२ ॥**

**अ० टी०**—नन्विन्द्रियादीनां भगवत्स्वरूपादिविषयानुभावकानां नियमने किं फलमित्यतआह—**इन्द्रियाणीति** । इन्द्रियाणि 'अक्षण्वतां फलम्' इतिन्यायेन भगवत्स्वरूपदर्शनादिविषयानुभावकत्वेन परण्युत्कृष्टान्याहुः । भक्ता इति शेषः । मनसोऽन्यत्र स्थितेन्द्रियैः संयुक्तं भगवत्स्वरूपं न फलरूपं मारणीचदैत्यादिभिरिवेतीन्द्रियेभ्यः परमुत्कृष्टं मन आहुः मनोऽपि कामनाद्यशुद्धया बुद्ध्या हतं सन्न फलं साधयत्यत आहुः मनसस्तु सकाशाद्बुद्धिः परा उत्कृष्टेत्यर्थः । अत्रायं भावः । भगवान् लौकिकदेहेन्द्रियादिभिर्नानुभाव्यः । किंत्वविकृतालौकिकभावात्मकात्मस्वरूपेण अतः स आत्मैवोत्तम इति भावः ॥ ४२ ॥

**नी० टी०**—न केवलं बाह्येंद्रियजयेनैव कृतार्थत्वं किंतु मनोबुद्ध्योरपि जयः कर्तव्यः कामस्य समूलोच्छेदाय त्रिप्राकारदुर्गस्थस्य सामंतस्येवाभ्यंतरप्राकारद्वयजयेन । अतो मनोबुद्ध्योर्जयार्थं योगं दर्शयति—**इंद्रियाणीति** । अत्र परत्वं सूक्ष्मत्वेन कारणत्वेन वा बोद्धव्यम् । इंद्रियाणि चक्षुरादीनि पराणि स्वविषयेभ्यः पृथिव्यादिस्वाश्रयसहितेभ्यो गंधादिभ्यो वित्तपुत्रशरीरेभ्यश्च तेषां तत्कारणत्वात् तथा च कौषीतकिनः समामनंति ब्राह्मणे । "प्राणेभ्यो देवा देवेभ्यो लोका इति" व्युच्चरंतीत्यनुषज्यते प्राणेभ्य इंद्रियेभ्यो देवास्तदधिष्ठात्र्यो देवता उत्पद्यंते देवेभ्यश्च लोका भूतभौतिका उत्पद्यंत इति श्रुत्यर्थः । इंद्रियेभ्यः परं मनः "मनसा ह्येव पश्यति मनसा शृणोति" इति श्रुतेरिंद्रियाणां मनोविकारत्वात् । तेन बाह्यार्थेभ्य इंद्रियाण्याकृष्य मनसि प्रविलापनीयानीति दर्शितं । केवलं परत्वमात्रप्रतिपादने प्रयोजनाभावात् । मनसस्तु परा बुद्धिः । "तस्माद्वा एतस्मान्मनोमयात् अन्योऽतरआत्मा विज्ञानमयः" इति श्रुतेः मनसः प्रविलापनं तत्कारणे बुद्धौ कर्त्तव्यमित्यर्थः । समष्टिबुद्धेरप्यत्रैवांतर्भावः यो बुद्धेः परतस्तु सः यस्तु तुशब्दो भास्यवर्गात् बुद्ध्यादेर्भासकस्य ज्ञानस्य वैलक्षण्यं गमयति यो बुद्धेरपि परतः स ज्ञानपदाभिधेयः कामेन उल्बेन गर्भ इव आवृत इति व्यवहितेन संबंधः । तथा च श्रुतिः । "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ॥ ज्ञानमात्मनि महति तद्यच्छेच्छांत आत्मनि" इति एतदुक्तं भवति वागादिबाह्येंद्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत । मनोऽपि विषयविकल्पाभिमुखं ज्ञानात्मशब्दोदितायां बुद्धौ धारयेत् तामपि महत्यात्मनि समष्टिबुद्धौ धारयेत् तत् तं महांतमात्मानं शांते निष्कले परस्मिन् ज्योतिषि प्रत्यगात्मनि धारयेदिति ॥ ४२ ॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना ॥
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगोनाम तृतीयोऽध्यायः ॥ ३ ॥

**शां० भा०**—एवमिति। एवं बुद्धेः परमात्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक्स्तम्भनं कृत्वा स्वेनैवाऽऽत्मना संस्कृतेन मनसा सम्यक्समाधायेत्यर्थः। जह्येनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेनाऽऽसद आसादनं प्राप्तिर्यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये कर्मप्रशंसायोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

**शां० आ०**—इन्द्रियादिसमाधानपूर्वकमात्मज्ञानात्कामजयो भवतीत्युपसंहरति—**एवमित्यादिना**। संस्कृतं मनो मनःसमाधाने हेतुरिति सूचयति—**संस्तभ्येति**। प्रकृतं शत्रुमेव विशिनष्टि—**कामरूपमिति**। तस्य दुरासदत्वे हेतुमाह—**दुर्विज्ञेयेति**। अनेकविशेषोऽतादृशो महाशनत्वादिस्तदनेनोपायभूता कर्मनिष्ठा प्राधान्येनोक्ता, उपेया तु ज्ञाननिष्ठा गुणत्वेनेति विवेक्तव्यम् ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने तृतीयोऽध्यायः ॥ ३ ॥

**आ० भा०**—॥ ४३ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

**आ० ज०**—॥ ४३ ॥

इति श्रीमदानंदतीर्थभगवत्पादविरचितगीताभाष्यस्य टीकायां प्रमेयदीपिकायां तृतीयोऽध्यायः समाप्तः ॥३॥

**रा० भा०**—एवं बुद्धेरपि परं कामं ज्ञानविरोधिनं बुद्ध्याऽत्मानं मनः आत्मना बुद्ध्या कर्मयोगेऽवस्थाप्यैनं कामरूपं दुरासदं शत्रुं जहि नाशयेति ॥ ४३ ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमद्गीताभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

**अ० टी०**—यत आत्मा उत्तमस्तस्मात्तमुत्तमं ज्ञात्वा लौकिकं कामं त्यजेत् तेन फलसिद्धिरित्याहुः—**एवमिति**। एवं मदुक्तप्रकारेण बुद्धेः परम् आत्मानं परमुत्कृष्टं बुद्ध्वा आत्मनाऽविकृतस्वरूपेणात्मानम् अविकृतस्वरूपं मनः संस्तभ्य समाधाय स्ववशीकृत्य। हे महाबाहो तन्निराकरणसमर्थ! कामरूपं शत्रुम् एवंभावनाशकं दुरासदम् एवंभूतात्मस्वरूपज्ञानातिरिक्ताऽनाश्यं जहि त्यजेत्यर्थः ॥ ३ ॥

"कृतानां कर्मणां योगो यथा संभवतीश्वरे ॥ श्रीकृष्णेन तथाचायं कर्मयोगो निरूपितः ॥१॥"

इति श्रीभगवद्गीताटीकायां गीतामृततरङ्गिण्यां तृतीयोऽध्यायः ॥ ३ ॥

**नी० टी०**—योगफलमाह—**एवमिति**। आत्मानं मनः हार्दाकाशेऽपि तत्स्थान्नित्यान् कामान् कामयानं श्रूयते हि दहरविद्यायां हार्दाकाशं प्रकृत्य। "यच्चास्येहास्ति यच्च नास्ति सर्वं तदत्र गत्वा विंदत इति तत्र

त्यानां कामानां सत्त्वं तेषां च सत्यत्वं। त इमे सत्याः कामाः'' इति श्रुतेः। आत्मानं मनः आत्मना मनसैव बुद्ध्यैव वा संस्तभ्य निर्वृत्तिकं कृत्वा बुद्धेः परं परमात्मानं बुद्ध्वा समूलघातं कामरूपं शत्रुं शातयितारं जहि नाशय हे महाबाहो इति संबोधयंस्तन्नाशे तव सामर्थ्यमस्तीति दर्शयति अयमर्थः। यावत्काममूलस्याज्ञानस्योच्छेद आत्मतत्त्वज्ञानेन क्रियते तावत्पर्यन्तं कामस्य निर्मूलोच्छेदो न भवतीति बुद्धेः परं बुद्ध्वा कामो नाशनीयः तस्मिंश्च नष्टे संसारानर्थोच्छेदो भवतीति। दुरासदं परबोधं विना दुःखेनापि नाशयितुमशक्यं। 'उपायः कर्मनिष्ठाऽत्र प्राधान्येनोपसंहृता॥ उपेया ज्ञाननिष्ठा तु तद्गुणत्वेन कीर्त्तिता'॥४३॥

इति नैलकंठीये भारतभावदीपे तृतीयोऽध्यायः॥ ३॥

( श्लोकानामादितः समष्ट्यङ्काः—१६२ )

---

## अथ चतुर्थोऽध्यायः॥ ४॥

---

**श्रीभगवानुवाच—इमं विवस्वते योगं प्रोक्तवानहमव्ययम्॥**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत॥ १॥**

**शां० भा०—योऽयं योगोऽध्यायद्वयेनोक्तो ज्ञाननिष्ठालक्षणः ससंन्यासः कर्मयोगोपायो यस्मिन्वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च, गीतासु च सर्वास्वयमेव योगो विवक्षितो भगवताऽतः परिसमाप्तं वेदार्थं मन्वानस्तं वंशकथनेन स्तौति श्रीभगवान्—इममध्यायद्वयेनोक्तं योगं विवस्वत आदित्याय सर्गादौ प्रोक्तवानहं जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय। तेन योगबलेन युक्ताः समर्था भवन्ति ब्रह्म परिरक्षितुम्। ब्रह्मक्षत्त्रे परिपालिते जगत्परिपालयितुमलम्। अव्ययमव्ययफलत्वात्। न ह्यस्य सम्यग्दर्शननिष्ठालक्षणस्य मोक्षाख्यं फलं व्येति। स च विवस्वान्मनवे प्राह मनुरिक्ष्वाकवे स्वपुत्रायाऽऽदिराजायाब्रवीत्॥ १॥**

**शां० आ०**—पूर्वाभ्यामध्यायाभ्यां निष्ठाद्वयात्मनो योगस्य गीतत्वाद्वेदार्थस्य च समाप्तत्वाद्वक्तव्यशेषाभावादुक्तयोगस्य कृत्रिमत्वशङ्कानिवृत्तये वंशकथनपूर्विकां स्तुतिं भगवानुक्तवानित्याह—**श्रीभगवानिति**। तदेतद्भगवद्वचनं वृत्तानुवादद्वारेण प्रस्तौति—**योऽयमिति**। उक्तमेव योगं विभज्यानुवदति—**ज्ञानेति**। संन्यासेनेतिकर्तव्यतया सहितस्य ज्ञानात्मनो योगस्य कर्माख्यो योगो हेतुरतश्चोपायोपेयभूतं निष्ठाद्वयं प्रतिष्ठापितमित्यर्थः। उक्ते योगद्वये प्रमाणमुपन्यस्यति—**यस्मिन्निति**। अथवा ज्ञानयोगस्य कर्मयोगोपायत्वमेव स्फुटयति—**यस्मिन्निति**। प्रवृत्त्या लक्ष्यते ज्ञायते कर्मयोगो निवृत्त्या च लक्ष्यते ज्ञानयोग इति विभागः। यद्यपि पूर्वस्मिन्नध्यायद्वये यथोक्तनिष्ठाद्वयं व्याख्यातं तथाऽपि विवक्ष्यमाणाध्यायेषु वक्तव्यान्तरमस्तीत्याशङ्क्याऽऽह—**गीतासु चेति**। कथं तर्हि समनन्तराध्यायस्य प्रवृत्तिरत आह—**अत इति**। वंशकथनं संप्रदायोपन्यासः संप्रदायोपदेशश्च कृत्रिमत्वशङ्कानिवृत्त्या योगस्तुतौ पर्यवस्यति। गुरुशिष्यपरम्परोपन्यासमेवानुक्रामति—**इममिति**। इममित्यस्य संनिहितं विषयं दर्शयति—**अध्यायेति**। योगं ज्ञाननिष्ठालक्षणं कर्मयोगोपायलभ्यमित्यर्थः। स्वयमकृतार्थानां प्रयोजनव्यग्राणां परार्थप्रवृत्त्यसंभवाद्भगवतस्तथाविधप्रवृत्तिदर्शनात्कृतार्थता कल्पनीयेत्याह—**विवस्वत इति**। अव्ययवेदमूलत्वादव्ययत्वं योगस्य गमयितव्यं किमिति भगवता कृतार्थेनापि योगप्रवचनं कृतमिति तदाह—**जगदिति**। कथं यथोक्तेन योगेन क्षत्रियाणां बलाधानं तदाह—**तेनेति**। युक्ताः क्षत्रिया इति शेषः। ब्रह्मशब्देन ब्राह्मणत्वजातिरुच्यते। यद्यपि योगप्रवचनेन क्षत्रं रक्षितं तेन च ब्राह्मणत्वं तथाऽपि कथं रक्षणीयं जगदशेषं रक्षितमित्याशङ्क्याऽऽह—**ब्रह्मेति**। ताभ्यां हि कर्मफलभूतं जगदनुष्ठानद्वारा रक्षितुं शक्यमित्यर्थः। योगस्याव्ययत्वे हेत्वन्तरमाह—**अव्ययफलत्वादिति**। ननु कर्मफलवदुक्तयोगफलस्यापि साध्यत्वेन क्षयिष्णुत्वमनुमीयते नेत्याह—

न हीति। अपुनरावृत्तिश्रुतिहतमनुमानं न प्रमाणी भवतीति भावः। भगवता विवस्वते प्रोक्तो योगस्तत्रैव पर्यवस्यतीत्याशङ्क्याऽऽह—स चेति। स्वपुत्रायेत्युभयत्र संबध्यते। आदिराजायेतीक्ष्वाकोः सूर्यवंशप्रवर्तकत्वेन वैशिष्ट्यमुच्यते ॥ १ ॥

आ० भा०—श्रीमदमलबोधाय नमः ॥ हरिः ॐ ॥ ॥ बुद्धेःपरस्य माहात्म्यं कर्मभेदो ज्ञानमाहात्म्यं चोच्यतेऽस्मिन्नध्याये। पूर्वानुष्ठितश्चायं धर्म इत्याह—इममिति ॥ १ ॥

आ० ज०—ॐ उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तरात्मकोऽयमध्यायइति पूर्वसंगताध्यायार्थस्थितौ इह प्रकरणभेदप्रतिपादनार्थमाह—बुद्धेरिति। एवं ज्ञात्वेत्यतः प्राक्तनेन ग्रंथेन बुद्धेः परस्य विष्णोर्माहात्म्यमुच्यते। आद्यस्य प्रकरणस्य पूर्वेण संगतिं सूचयितुं बुद्धेः परस्येत्युक्तम्। श्रेयानित्यतः पूर्वेण कर्मभेदः। निवृत्तस्य कर्मणोऽन्यस्माद्भेदः। निवृत्त एव कर्मण्युपासनायज्ञादिरूपेण वा भेदः। ज्ञानमाहात्म्यं शेषेणेति। इमं विवस्वते योगमित्युपदेशपरंपराकथनं प्रकृतानुपयुक्तमित्यतस्तत्तात्पर्यमाह—पूर्वेति। पूर्वैरनुष्ठितः। ये मे मतमित्युक्तेन हेतुना सहास्य समुच्चयार्थश्चशब्दः। अयं धर्मो मयि सर्वाणीत्यनेनोक्तः। योगशब्दोऽप्यनेन व्याख्यातः। न केवलमुपदेशपरंपराऽत्रोच्यते। किं तु तेषामनुष्ठानमप्युपलक्ष्यते। तच्चेतोऽपि त्वयाऽनुष्ठेयमिति प्रतिपादनार्थमिति भावः। कर्मणैव हि संसिद्धिमित्यनेनैतद्गतार्थमिति चेन्न। गृहस्थकर्म त्वया न त्याज्यमित्यस्योपपादनायाचारस्य तत्रोक्तत्वात् अत्र तु निवृत्तधर्मानुष्ठाने सदाचारस्योच्यमानत्वात्। अत एव तत्राचारइत्येवोक्तमिह त्वयं धर्म इति। लोकेऽस्मिन्द्विविधेत्यत्रोक्तस्य कर्मणैवेत्युदाहरणमुक्तमिति तत्रापि न दोषः ॥ १ ॥

रा० भा०—तृतीयेऽध्याये प्रकृतिसंसृष्टस्य मुमुक्षोः सहसा ज्ञानयोगेऽनधिकारात्कर्मयोग एव कार्यः ज्ञानयोगाधिकारिणोऽप्यकर्तृत्वानुसंधानपूर्वकं कर्मयोग एव श्रेयानिति सहेतुकमुक्तं विशिष्टतया व्यपदेश्यस्य तु विशेषतः कर्मयोग एव कार्य इति चोक्तम्। चतुर्थे त्विदानीमस्यैव कर्मयोगस्य निखिलजगदुद्धरणाय मन्वन्तरादावेवोपदिष्टतया कर्तव्यतां द्रढयित्वा अन्तर्गतज्ञानतयाऽस्यैव ज्ञानयोगाकारतां प्रदर्श्य कर्मयोगस्वरूपं तद्भेदाः कर्मयोगे ज्ञानांशस्यैव प्राधान्यं चोच्यते। प्रसङ्गाच्च भगवदवतारयाथात्म्यमुच्यते। योऽयं तवोदितो योगः स केवलं युद्धप्रोत्साहनायेदानीमुदित इति न मन्तव्यम्। मन्वन्तरादावेव निखिलजगदुद्धरणाय परमपुरुषार्थलक्षणमोक्षसाधनतयेमं योगमहमेव विवस्वते प्रोक्तवान्। विवस्वांश्च मनवे मनुरिक्ष्वाकवे इति ॥ १ ॥

अ० टी०—श्रीकृष्णाय नमः ॥ 'कर्मसंन्यासयोगस्य स्वस्मिन् योगो यथा भवेत् ॥ तदर्थं कृपया कृष्णः कौन्तेयं प्रत्युवाच ह ॥ १ ॥' कर्मसन्न्यासनिरूपणप्रश्नोद्गमार्थं पूर्वानुवादमाह—इममिति त्रयेण। अहम् इमं योगं पूर्वोक्तम् अव्ययं सफलं मत्संबन्धजनकत्वात् विवस्वते प्रोक्तवान्। लोकानुग्रहार्थं सोऽपि लोक एतत्प्राकट्यार्थं मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

नी० टी०—अध्यायद्वयोक्तेऽर्थे प्रामाण्यशंका माभूदिति विद्यावंशसंप्रदायमात्मनश्च भ्रमविप्रलंभकत्वादिनिरासायेश्वरत्वं सर्वज्ञत्वं च दर्शयति—इममित्यादिना। इमं सांख्ययोगं कर्मयोगरूपोपायसहितं। ससंन्यासमिति भाष्यं इमं संध्योपासनादिनिर्विकल्पकसमाध्यनुष्ठानांतं कर्मयोगं ज्ञाननिष्ठोपसर्जनं पारिव्राज्यानधिकारिणां राज्ञामेव योग्यं विवस्वते सूर्याय मंडलाभिमानिने सर्वेषां क्षत्रियाणामादिभूतायाहमादित्यांतर्यामी "अथ यएषोंऽतरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथाकप्यासं पुंडरीकमेवमक्षिणी तस्योदिति नाम" इत्यादिश्रुतिप्रसिद्धः प्रोक्तवान् पुरा अव्ययं अविच्छिन्नसंप्रदायं तेनानादित्वमपि मनवे स्वपुत्राय विवस्वान् प्राह इक्ष्वाकवे मनुः स्वपुत्रायाब्रवीत् ॥ १॥

**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ॥**
**स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥**

**शां० भा०**—एवमिति। एवं क्षत्रियपरम्पराप्राप्तमिमं राजर्षयो राजानश्च त ऋषयश्च राजर्षयो विदुरिमं योगम्। स योगः कालेनेह महता दीर्घेण नष्टो विच्छिन्नसंप्रदायः संवृत्तो हे परंतप, आत्मनो विपक्षभूताः पर उच्यन्ते ताञ्शौर्यतेजोगभस्तिभिर्भानुरिव तापयतीति परंतपः शत्रुतापन इत्यर्थः॥ २॥

**शां० आ०**—यथोक्ते योगे परम्परागते विशिष्टजनसंमतिमुदाहरति—**एवमिति**। तस्य कथं संप्रति वक्तव्यत्वं तदाह—**स कालेनेति**। पूर्वार्धं व्याकरोति—**एवमित्यादिना**। ऐश्वर्यसंपत्ती राजत्वं येषां तेषामेव सूक्ष्मार्थनिरीक्षणक्षमत्वमृषित्वम्। इहेति भगवतोऽर्जुनेन सह संव्यवहारकालो गृह्यते। परंतपेति संबोधनं विभजते—**आत्मन इति**॥ २॥

**आ० भा०**—॥ २॥

**आ०ज०**—॥ २॥

**रा० भा०**—एवं संप्रदायपरम्परया प्राप्तमिमं योगं पूर्वे राजर्षयो विदुः। स महता कालेन तत्तच्छ्रोतृबुद्धिमान्द्याद्विनष्टप्रायोऽभूत्॥ २॥

**अ० टी०**—एवं परंपराप्रातं मत्परंपरयाऽऽप्तमिमं योगं राजर्षयः राज्यादिकं परित्यज्य मदर्थैकप्रयोजनवन्तो विदुः। ननु परंपरागतं चेदिदानीं केनापि कथं न ज्ञायत इत्याशङ्क्याहुः—**स कालेनेति**। स योगो महता कालेन प्रमाणादिनिरासकेन महता मदिच्छारूपेण तद्व्यवधानादनवतारदशायां दर्शकाभावान्नष्टः। परंतपेति संबोधनेन तवोत्कृष्टतापसं क्लेशेनाहं दर्शयामीति ज्ञापितम्॥ २॥

**नी० टी०**—**एवमिति**। एवं परंपराप्राप्तमिक्ष्वाकोर्निमिनाभागादिक्रमेण राजर्षयः जनकाजातशत्रुकैकेयप्रभृतयो राजानः ऋषयश्च सनकवसिष्ठाद्याः सूक्ष्मार्थदर्शिनस्ते राजान एव ऋषय इति वा अविदुर्ज्ञातवंतः। "सिजभ्यस्तविदिभ्यश्च" इति लङो झेर्जुस्। नष्टः अदर्शनं गतः॥ २॥

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः॥**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम्॥ ३॥**

**शां० भा०**—दुर्बलानजितेन्द्रियान्प्राप्य नष्टं योगमिममुपलभ्य लोकं चापुरुषार्थसंबन्धिनम्—स एवायमिति। स एवायं मया ते तुभ्यमद्येदानीं योगः प्रोक्तः पुरातनः, भक्तोऽसि मे सखा चासीति। रहस्यं हि यस्मादेतदुत्तमं योगो ज्ञानमित्यर्थः॥ ३॥

**शां० आ०**—किमिति वर्तमाने काले प्रकृतो योगः संप्रदायरहितोऽभूदित्याशङ्क्याधिकार्यभावादित्याह—**दुर्बलानिति**। तदेव दौर्बल्यं प्रकृतोपयोगित्वेन व्याकरोति—**अजितेन्द्रियानिति**। यद्यपि कामक्रोधादिप्रधानान्पुरुषान्प्रतिलभ्य कामक्रोधादिभिरभिभूयमानो योगो नष्टो विच्छिन्नसंप्रदायः संजातस्तथाऽपि योगादृते पुरुषार्थो लोकस्य लभ्यते चेत्किमनेन योगोपदेशेनेत्याशङ्क्य यथोक्तयोगाभावे परमपुरुषार्थाप्राप्तेर्मैवमित्याह—**लोकं चेति**। पूर्वो योगो विच्छिन्नसंप्रदायोऽधुना त्वन्यो योगो मदर्थमुच्यते भगवतेत्याशङ्क्याऽऽह—**स एवेति**। कस्मादन्यस्मै यस्मै कस्मैचित्पुरातनो योगो नोक्तो भगवतेत्याशङ्क्याऽऽह—**भक्तोऽसीति**। उक्तमधिकारिणं प्रति योगस्य वक्तव्यत्वे हेतुमाह—**रहस्यं हीति**। अनादिवेदमूलत्वाद्योगस्य पुरातनत्वम्। भक्तिः शरणबुद्ध्या प्रीतिस्तया युक्तो निजरूपमपेक्ष्य भक्तो विवक्षितः। समानवयाः स्निग्धः सहायः सखेत्युच्यते। एतदिति कथं योगो विशेष्यते तत्राऽऽह—**ज्ञानमिति**॥ ३॥

**आ० भा०**—॥ ३॥

आ० ज०—॥ ३ ॥

रा० भा०—स एवायमस्खलितस्वरूपः पुरातनो योगः सख्येनातिमात्रभक्त्या च मामेव प्रपन्नाय ते मया प्रोक्तः सपरिकरः सविस्तरमुक्त इत्यर्थः। मदन्येन केनापि ज्ञातुं वक्तुं वा न शक्यम्। यत इदं वेदान्तोदितमुत्तमं रहस्यं ज्ञानम् ॥ ३ ॥

अ० टी०—स एवं पुरातनो योगोऽयमिति प्रत्यक्षं मत्संबन्धजनकस्ते तुभ्यं प्रोक्तः प्रकर्षेण मत्प्रीत्यात्मकफलयुक्त उक्तः। ननु योग एव फलसाधकश्चेद्भक्तिरस्मदादिभिः किमर्थं कर्तव्येत्याशङ्क्याह—भक्तोऽसीति। त्वं भक्तोऽसि सखा चासीति मे मदीयं रहस्यम् एतदुत्तमं कर्मयोगादुत्तमं हीति निश्चयेन ॥ ३॥

नी० टी०—स इति। अद्य संप्रदायविच्छेदे सति भक्तः शरणागतः सखा प्रीतिविषयः रहस्यं गोप्यं अभक्तादिभ्यो न देयं अन्यथा निर्वीर्या विद्या भवेदित्यर्थः। तथा च मंत्रवर्णः। "विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ॥ असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथास्याम्" इति ॥ ३ ॥

**अर्जुन उवाच—अपरं भवतो जन्म परं जन्म विवस्वतः ॥**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

शां० भा०—भगवता विप्रतिषिद्धमुक्तमिति मा भूत्कस्यचिद्बुद्धिरिति परिहारार्थं चोद्यमिव कुर्वन्—अपरमिति। अपरमर्वाग्वसुदेवगृहे भवतो जन्म परं पूर्वं सर्गादौ जन्मोत्पत्तिर्विवस्वत आदित्यस्य तत्कथमेतद्विजानीयामविरुद्धार्थतया यस्त्वमेवाऽऽदौ प्रोक्तवानिमं योगं स एव त्वमिदानीं मह्यं प्रोक्तवानसीति ॥ ४ ॥

शां० आ०—भगवति लोकस्यानीश्वरत्वशङ्कां निवर्तयितुं चोद्यमुद्भावयति—**भगवतेति**। परिहारार्थं भगवतो मनुष्यवदवस्थितस्यानीश्वरत्वमुपेत्य तद्वचने शङ्कितविप्रतिषेधस्येति शेषः। भगवतो निजरूपमुपेत्य नेदं चोद्यं किंतु लीलाविग्रहं गृहीत्वेति वक्तुं चोद्यमिवेत्युक्तम्। एतच्छब्दार्थमेव स्फुटयति—**यस्त्वमिति** ॥ ४ ॥

आ० भा०—मयि सर्वाणीत्युक्तम्। तन्माहात्म्यमादितो ज्ञातुं पृच्छति—अपरमिति ॥ ४ ॥

आ० ज०—ननु न त्वेवाहमित्यादिना सर्वप्रकारेणोत्पत्तिविनाशराहित्यमुक्तं भगवतः तत्श्रुत्वा कथमपरमिति पृच्छतीत्यत आह—**मयीति**। तन्माहात्म्यमित्युपलक्षणं। आदितः प्रमितिकारणतः। मयि सर्वाणीत्यत्र परमेश्वरस्य माहात्म्यं पूज्यत्वादिलक्षणमुक्तम्। अर्जुनस्य पूजकत्वादिकम्। तमिममीश्वरजीवयोः पूज्यपूजकत्वादिना भगवतांगीकृतं भेदं प्रमाणेन ज्ञातुमेवं पृच्छतीत्यर्थः ॥ ४ ॥

रा० भा०—अस्मिन् प्रसङ्गे भगवदवतारयाथात्म्यं यथावत् ज्ञातुमर्जुन उवाच। कालसंख्यायाः अपरमस्मज्जन्मसमकालं हि भवतो जन्म विवस्वतश्च कालसंख्यया परमष्टाविंशतिचतुर्युगसंख्यातं त्वमेवादौ प्रोक्तवानिति कथमेतदसम्भावनीयं विशेषेण यथार्थं जानीयाम्। ननु जन्मान्तरेणापि वक्तुं शक्यं जन्मान्तरकृतस्य महतां स्मृतिश्च युज्यते। इति नात्र कश्चिद्विरोधः। न चासौ वक्तारमेनं वसुदेवतनयं सर्वेश्वरं न जानाति य एवं वक्ष्यति 'परं ब्रह्म परं धाम पवित्रं परमं भवान्। पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा। असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥' इति युधिष्ठिरराजसूयादिषु भीष्मादिभ्यश्चासकृत् श्रुतम्। 'कृष्ण एव हि लोकानामुत्पत्तिप्रभवाप्ययः। कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्' इत्येवमादिषु

कृष्णस्य हि कृते कृष्णस्य शेषभूतमिदं कृत्स्नं जगदित्यर्थः । अत्रोच्यते जानात्येवायं भगवन्तं वसुदेवतनयं पार्थः । जानतोऽप्यजानत इव पृच्छतोऽयमाशयः । निखिलहेयप्रत्यनीककल्याणैकतानस्य सर्वेश्वरस्य सर्वज्ञस्य सत्यसंकल्पस्य चावाप्तसमस्तकामस्य कर्मपरवशादेव मनुष्यादिसजातीयं जन्म किमिन्द्रजालवत् मिथ्या किंवा सत्यं सत्यत्वे च कथं जन्मप्रकारः किमात्मकोऽयं देहः कश्च जन्महेतुः कदा च जन्म किमर्थं वा जन्मेति परिहारप्रकारेण प्रश्नार्थो विज्ञायते ॥ ४ ॥

अ० टी०—एवं श्रुत्वाऽर्जुनो भगवतोऽलौकिकस्वरूपत्वाद्विवस्वतो लौकिकत्वात् किमर्थं भक्तिं विहाय कर्मयोगं भगवानुक्तवानिति जिज्ञासया पृच्छति—**अपरमिति** । भवतो जन्म प्राकट्यमपरं न विद्यते परमुत्कृष्टं पूर्वं वा यस्मात्तादृशं । विवस्वतो जन्म परमुत्कृष्टं पश्चाज्जातं वा इतिहेतोस्त्वमादौ तस्मै योगं कथं किमभिप्रायेण प्रोक्तवानेतदहं विजानीयां जानामि तथा वदेति भावः ॥ ४ ॥

नी० टी०—भगवद्देहस्य वसुदेवादुत्पत्तिं मन्वानोऽर्जुन उवाच—**अपरमिति** । अपरं अर्वाक्कालिकं परं बहुकालिकं विजानीयां । यद्यपि शब्दादयमर्थो ज्ञातस्तथाऽपि विरुद्धस्य वाक्यस्याबोधकत्वात् कथमेतद्विजानीयामित्युक्तं पदयोजना स्पष्टा ॥ ४ ॥

**श्रीभगवानुवाच—बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ॥**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥**

**शां० भा०**—या वासुदेवेऽनीश्वरासर्वज्ञाशङ्का मूर्खाणां तां परिहरञ्श्रीभगवानुवाच यदर्थो ह्यर्जुनस्य प्रश्नः—बहूनीति । बहूनि मे मम व्यतीतान्यतिक्रान्तानि जन्मानि तव च हेऽर्जुन तान्यहं वेद जाने सर्वाणि न त्वं वेत्थ जानीषे धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात् । अहं पुनर्नित्यशुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाहं हे परंतप ॥ ५ ॥

शां० आ०—भगवत्यज्ञानान्मनुष्यत्वशङ्कां वारयितुं प्रतिवचनमवतारयति—**या वासुदेव इति** । अन्यथाप्रश्ने कथमाशङ्कान्तरं परिहर्तुं भगवद्वचनमित्याशङ्क्य प्रश्नप्रतिवचनयोरेकार्थत्वमाह—**यदर्थो हीति** । यस्य शङ्कितस्य विरोधस्य परिहारार्थो यस्य प्रश्नस्तमेव परिहारं वक्तुं भगवद्वचनमित्यर्थः । अतीतानेकजन्मवत्त्वं ममैव नासाधारणं किंतु सर्वप्राणिसाधारणमित्याह—**तव चेति** । तानि प्रमाणाभावान्न प्रतिभान्तीत्याशङ्क्याऽऽह—**तानीति** । ईश्वरस्यानावृतज्ञानत्वादित्यर्थः । किमिति तर्हि तानि मम न प्रतीयन्ते तवाऽऽवृतज्ञानत्वादित्याह—**न त्वमिति** । परान्परिकल्प्य तत्परिहारार्थं प्रवृत्तत्वात्तव ज्ञानावरणं विज्ञेयमित्याह—**परंतपेति** । अर्जुनस्य भगवता सहातीतानेकजन्मवत्त्वे तुल्येऽपि ज्ञानवैषम्ये हेतुमाह—**धर्मेति** । आदिशब्देन रागलोभादयो गृह्यन्ते । ईश्वरस्यातीतानागतवर्तमानसर्वार्थविषयज्ञानवत्त्वे हेतुमाह—**अहमिति** ॥ ५ ॥

**आ० भा०**—॥ ५ ॥

आ० ज०—अत एव ज्ञाताशयो भगवांस्तव च न त्वं वेत्सीति परिहरति । अन्यथाऽनुपयुक्तम् तन्न वक्तव्यमेव ॥ ५ ॥

**रा० भा०**—अनेन जन्मनः सत्यत्वमुक्तं बहूनि मे व्यतीतानि जन्मानीति वचनात् तव चेति दृष्टान्ततयोपादानाच्च ॥ ५ ॥

अ० टी०—अत्रोत्तरमाह भगवान्—**बहूनीति** । मे जन्मानि बहूनि सन्ति कीदृशानि अव्यतीतानि नित्यानीत्यर्थः । हे अर्जुन ! तव च जन्मानि बहूनि व्यतीतानि तानि सर्वाणि तव जन्मान्यहं वेद जानामि यतो यदर्थं यत्रयत्रोत्पादितोऽसि । हे परंतप उत्कृष्टतपोबलयुक्त ! तानि मदीयानि त्वं न वेत्थ । न जानासि । परंतपेति संबोधनेन तपोबलेन न भगवान् ज्ञायते किन्तु तत्कृपयैवेति भावः ॥ ५ ॥

**नी० टी०**—स्वदेहस्याजत्वं साधयितुं स्वस्य सर्वज्ञत्वं तावदाह—**बहूनीति**। स्पष्टार्थः श्लोकः ॥ ५ ॥

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ॥**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥**

**शां० भा०**—कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावेऽपि जन्मेत्युच्यते—अजोऽपीति। अजोऽपि जन्मरहितोऽपि संस्तथाऽव्ययात्माऽक्षीणज्ञानशक्तिस्वभावोऽपि संस्तथा भूतानां ब्रह्मादिस्तम्बपर्यन्तानामीश्वरईशनशीलोऽपि स प्रकृतिं स्वां मम वैष्णवीं मायां त्रिगुणात्मिकां यस्या वशे सर्वं जगद्वर्तते यया मोहितं सत्स्वमात्मानं वासुदेवं न जानाति तां प्रकृतिं स्वामधिष्ठाय वशीकृत्य संभवामि देहवानिव भवामि जात इवाऽऽत्ममाययाऽऽत्मनो मायया न परमार्थतो लोकवत् ॥ ६ ॥

**शां० आ०**—ईश्वरस्य कारणाभावाज्जन्मैवायुक्तमतीतानेकजन्मवत्त्वं तु दूरोत्सारितमिति शङ्कते—**कथमिति**। वस्तुतो जन्माभावेऽपि मायावशाज्जन्म संभवतीत्युत्तरमाह—**उच्यत इति**। पारमार्थिकजन्मायोगे कारणं पूर्वार्धेनानूद्य प्रातिभासिकजन्मसंभवे कारणमाह—**प्रकृतिमिति**। प्रकृतिशब्दस्य स्वरूपविषयत्वं प्रत्यादेष्टुमात्ममाययेत्युक्तम्। वस्तुतो जन्माभावे कारणानुवादभागं विवृणोति—**अजोऽपीत्यादिना**। प्रातिभासिकजन्मसंभवे कारणकथनपरमुत्तरार्धं विभजते—**प्रकृतिमित्यादिना**। प्रकृतिशब्दस्य स्वरूपशब्दपर्यायत्वं वारयति—**मायामिति**। तस्याः स्वातन्त्र्यं निराकृत्य भगवदधीनत्वमाह—**ममेति**। तस्याश्चाधिकरणद्वारेणानवच्छिन्नत्वं सूचयति—**वैष्णवीमिति**। मायाशब्दस्यापि प्रज्ञानामसु पाठाद्विज्ञानशक्तिविषयत्वमाशङ्क्याऽऽह—**त्रिगुणात्मिकामिति**। तस्यां कार्यलिङ्गकमनुमानं सूचयति—**यस्या इति**। जगतो मायावशवर्तित्वमेव स्फुटयति—**ययेति**। यथा लोके कश्चिज्जातो देहवानालक्ष्यत एवमहमपि मायामाश्रित्य तया स्ववशया संभवामि जन्मव्यवहारमनुभवामि तेन मायामयमीश्वरस्य जन्मेत्याह—**तां प्रकृतिमित्यादिना**। संभवामीत्युक्तमेव विभजते—**देहवानिति**। अस्मदादेरिव तवापि परमार्थत्वाभिमानो जन्मादिविषये स्यादित्याशङ्क्य प्रागुक्तस्वरूपपरिज्ञानवत्त्वादीश्वरस्य मैवमित्याह—**न परमार्थत इति**। आवृतज्ञानवतो लोकस्य जन्मादिविषये परमार्थत्वाभिमानः संभवतीत्याह—**लोकवदिति** ॥ ६ ॥

**आ० भा०**—न तर्ह्यनादिर्भवानित्यत आह—अजोऽपीति। अव्ययः। आत्मा देहोऽपीत्यव्ययात्मा। 'अनंतं विश्वतो मुखम्' इतिरूपविशेषणमुत्तरत्र। एतन्नानाऽवताराणां निधानं बीजमव्ययमिति च जगृहइति तु व्यक्तिः। युक्तयस्तूक्ताः। आत्माऽनादित्वं तु सर्वसमम्। कथमनादिनित्यस्य जनिः। प्रकृतिं स्वामधिष्ठाय प्रकृत्या जातेषु वसुदेवादिषु तथैव तेषां जात इव प्रतीये इत्यर्थः। न तु स्वतंत्रामधिष्ठायेत्याह—स्वामिति। द्रव्यं कर्म चेति ह्युक्तम्। सा हि तत्रोक्ता। ततः सर्वस्रष्टेः आत्ममायया आत्मज्ञानेन प्रकृतेः पृथगभिधानात्। केतुश्चित्तिश्चित्तं मतिः क्रतुर्मनीषा मायेति ह्यभिधानम्। सृष्टिकारणया तेषां शरीरादि सृष्ट्वा विमोहिकया। अजातएव जातइव प्रतीये वा। उक्तं च 'महदादेश्च मातायाश्रीर्भूमिरिति कल्पिता। विमोहिका च दुर्गाख्या ताभिर्विष्णुरजोऽपि हि॥ जातवत्प्रथते ह्यात्मचिद्बलान्मूढचेतसाम्' इति ईश्वरः ईशेभ्योऽपि वरः तच्चोक्तम्। 'ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् ॥ वरोऽतईश्वराख्याते मुख्या नान्यस्य कस्यचित्' इति ब्रह्मवैवर्ते। समर्थ ईशइत्युक्तः तद्वरत्वात्त्वमीश्वर इति च ॥ ६ ॥

**आ० ज०**—प्रश्नस्य परिहृतत्वात्। अजोऽपीति किमर्थमित्यत आह—**न तर्हीति**। यदि जन्मानि व्यतीतानि तर्हीत्यर्थः। अनादिर्देहतोऽपि उपलक्षणं चैतत्। मरणरहितः सर्वभूतानां ईश्वरश्चेत्यपि द्रष्टव्यम् तथा चोक्तविरोध इति भावः। ननु देहतोऽप्यनादित्वादेराक्षेपेऽजत्वादिमात्रं कथमुच्यत इत्यतोऽव्ययात्मेत्येतावतादेहतोऽप्यविनाशमाचष्टे। तत्साहचर्यादजोऽपीत्येतदपि तथैव व्याख्येयमिति भावेनाह—**अव्यय इति**। अपिपदात्परं अस्येत्यध्याहार्यम्। स्यादेवं व्याख्यानं यदि भगवद्विग्रहस्याप्यव्ययत्वं गीताचार्याभिमतं स्यात् तदेव कुत इत्यत आह—**अनंतमिति**। इति च रूपविशेषणमिति वर्तते। एवं तर्हि

कथं तत्रैव जगृहे पौरुषं रूपमितिग्रहणमुच्यते। गृहीतस्य च त्यागो नियत एवेत्यत आह—**जगृह इति**। व्यक्तिरित्युच्यत इति शेषः। कुत एवं कल्प्यत इत्यत आह—**युक्तयइति**। युज्यत एभिरिति युक्तयः प्रमाणानि असंभावनापरिहारार्था अचिन्त्यशक्तिलाद्या युक्तयो वा। उक्ता द्वितीये। अस्तु भगवद्विग्रहस्याप्यव्ययत्वम्। अत्र तु स्वरूपस्यैवोच्यत इति किं न स्यादित्यत आह—**आत्मेति**। आत्मनः स्वरूपस्य देहस्याप्यव्ययत्वोपपादनेनाजत्वमपि साहचर्यात्तस्यैवेति योऽभिप्रायस्तं प्रकटयितुमव्ययत्वमुपक्रम्यानादित्वमित्युक्तम्। सर्वसमं जीवानामप्यस्ति अतस्तद्विषयो नाक्षेपः परिहारो वा संभवतीति भावः। आत्मशब्दोऽप्यन्यथा व्यर्थः। अस्मत्पक्षे स्वरूपदेहयोरुपादानार्थः। अत एव देहोऽपीत्युक्तम्। एवं तर्हि प्रकृतिं स्वामधिष्ठायेति कथमुक्तमित्यतस्तदन्यथा व्याख्यातुमाह—**कथमिति**। स्वरूपतो देहतश्चानादिनित्यस्य संभवामीति जनिः कथमुच्यते व्याहतत्वादित्यत आहेति शेषः। अधिष्ठायेत्यतः परमितिशब्दश्चाकथमनेन परिहार इत्यतो व्याचष्टे—**प्रकृत्येति**। वसुदेवादिषु प्रादुर्भूतत्वादिति शेषः। अनेन जन्मभ्रांतेर्निमित्तमुक्तम्। यथोक्तं स्त्रीपुंप्रसंगादित्यादि। भ्रांतेरुपादानमाह—**तथैवेति**। तमोरूपया यदि मातापितृसंबंधोऽङ्गीकृतस्तर्हि तन्निमित्तं दुःखादिकमपि प्रसज्यत इत्याशंकानिरासाय स्वामितिपदं व्याख्याति—**न त्विति**। प्रकृतेर्भगवदधीनत्वं कुत इत्यत आह—**द्रव्यमिति**। अत्र वाक्ये प्रकृतिर्न श्रूयत इत्यत आह—**साहीति**। द्रव्यपदेनेति शेषः। तस्याप्रकृतिवाचित्वं कुत इत्यत आह—**तत इति**। सर्वसृष्टिकारणानि ह्यत्र निर्दिश्यन्ते। तच्च प्रकृतेरेव संभवति। न पृथिव्यादेरित्यर्थः। आत्ममाययाऽस्माविधयेति प्रतीतिनिरासायाह—**आत्मेति**। कुतो हेतोरेवं जीवविलक्षणं ते जन्मेत्याशंकानिरासार्थमेतत्। अन्यथाप्रतीतिरप्यनेन परिहृता। सर्वज्ञस्याविद्याऽयोगात्। प्रकृतिरत्र माया किं न स्यादित्यत आह—**प्रकृतेरिति**। मायाशब्दस्य ज्ञानवाचित्वं कुत इत्यतआह—**केतुरिति**। इतिप्रज्ञायाः नामधेयानीति वाक्यशेषात्। प्राक् प्रकृतिं स्वामधिष्ठायेत्यनेनैव भ्रमनिमित्तत्वमुपादानत्वं च प्रकृतेरुक्तमिति मायाशब्दो न प्रकृतिवाची पुनरुक्तिप्रसंगादित्युक्तं इदानीं तस्य निमित्तमात्रपरत्वे मायाशब्दस्य प्रकृत्यर्थतायामपि न दोषः। उपादानप्रतिपादनार्थत्वादिति भावेनाह—**सृष्टीति**। प्रकृत्येति शेषः। तेषां वसुदेवादीनां सृष्ट्वा तत्र प्रादुर्भूतः विमोहिकया मायाख्यया। अत्रागमसंमतिमाह—**उक्तं चेति**। आत्मचिद्बलादजात एवानन्वीशनशीलानामपि ब्रह्मादीनामुत्पत्तिमरणदर्शनेन विरोधाभावादीश्वरोऽपि संभवामीति कथमुच्यतेऽतः "स्थेशभासपिसकसोवरच्" इत्येतद्विहायान्यथा व्याचष्टे—**ईश्वर इति**। कुत एतदित्यत आह—**ईशेभ्य इति**। एतदागमबलादेव समासाकारलोपाववगन्तव्यौ। अजत्वादेः संभवेन शाब्दो व्याघातोऽस्य तु व्याप्येति ज्ञापनाय क्रममुल्लंघ्य व्याख्यातम्॥ ६॥

**रा० भा०**—आत्मनोऽवतारप्रकारं देहयाथात्म्यं जन्महेतुं चाह। अजत्वाव्ययत्वसर्वेश्वरत्वादिसर्वपारमैश्वर्यप्रकारमजहन्नेव स्वां प्रकृतिमधिष्ठायात्ममायया संभवामि। प्रकृतिः स्वभावः स्वमेव स्वभावमधिष्ठाय स्वेनैव रूपेण स्वेच्छया संभवामीत्यर्थः। स्वरूपं तु "आदित्यवर्णं तमसः परस्तात्। क्षयं तमस्य रजसः पराके। य एषोन्तरादित्ये हिरण्मयः पुरुषस्तस्मिन्नयं पुरुषो मनोमयोऽमृतो हिरण्मयः। सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः महारजतं वासः" इत्यादिश्रुतिसिद्धम्। आत्ममायया आत्मीयया मायया। मायावयुनं ज्ञानमिति ज्ञानपर्यायोऽत्र मायाशब्दः। तथा चाभियुक्तप्रयोगः 'मायया सततं वेत्ति प्राणिनां च शुभाशुभम्' इति। आत्मीयेन ज्ञानेनात्मसंकल्पेनेत्यर्थः। अतोऽपहतपाप्मत्वादिसमस्तकल्याणगुणात्मकत्वं सर्वमैश्वरं स्वभावमजहदेव स्वमेव रूपं देवमनुष्यादिसजातीयसंस्थानं कुर्वन्नात्मसंकल्पेन देवादिरूपः संभवामि तदिदमाह "अजायमानो बहुधाभिजायते" इति श्रुतिः। इतरपुरुषसाधारणं जन्माकुर्वन्देवादिरूपेण स्वसंकल्पेनोक्तप्रक्रियया जायत इत्यर्थः। 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन। तान्यहं वेद सर्वाणि। तदात्मानं सृजाम्यहम्। जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः' इति पूर्वापराविरोधाच्च॥ ६॥

**अ० टी०**—ज्ञानार्थमेवाह—अजोपीति। अहं भूतानामव्ययात्माऽपि सन् विनाशरहितात्मरूपः सन्नपि ईश्वरोऽपि सन् सर्वकरणसमर्थोऽपि सन् स्वां प्रकृतिं त्रिगुणात्मिकामधिष्ठाय अजजीवरूपेण संभवामि आत्ममायया अन्तरङ्गया अजीवरूपेण अव्ययात्मा लीलायोग्यदेहेन संभवामि। अत्रायं भावः। यत्र धर्म

रक्षार्थमाविर्भवामि तत्सामयिकजीवेषु कर्मयोगादिजीवेषु लीलार्थप्रकटीकृतस्वरूपेण रसात्मकभक्तिमेव कथयामि ॥ ६ ॥

नी० टी०—किं तर्हि योगिनां सर्वज्ञत्वप्रसिद्धेस्त्वं जातिस्मरो जीवोसीत्याशंक्याह—अज इति। देहान्निष्कृष्टस्याजत्वाव्ययत्वे न त्वेवाहं जातु नासमित्यत्र साधिते इह तु देहविशिष्टस्यैव ते उच्येते ईश्वरोऽपीत्यनेन देहान्निष्कृष्टस्यास्मदादेरपीश्वरत्वं तत्त्वमस्यहंब्रह्मास्मीत्यादिश्रुतिप्रसिद्धमतो देहविशिष्टस्यैवाजत्वनित्यत्वे दृढीक्रियेतेऽन्यथाऽनीश्वरत्वप्रसंगात्। न ह्यादित्यांतर्यामिणः परमेश्वरस्य हिरण्यश्मश्रुत्वादिविशिष्टो देहो जन्मव्ययवानिति वक्तुं शक्यं अकर्मजत्वात् कर्मफलस्य हि पराकाष्ठा हैरण्यगर्भशरीरप्राप्तिः। न च "पुरुषो ह वै नारायणोऽकामयत अत्यतिष्ठेयं सर्वाणि भूतानि अहमेवेदं सर्वं स्यामिति स एतं पुरुषमेधं पंचरात्रं यज्ञक्रतुमपश्यत्" इत्यादिना शतपथे नारायणाख्यस्य परमात्मनः। "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥ स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशांगुलम्" इति। "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति च पुरुषसूक्तप्रतिपाद्यस्य सर्वाणि भूतान्यतिक्रम्य स्थितस्येश्वरस्यापि शरीरं पंचरात्राख्यकर्मविशेषफलमिति श्रूयते इति वाच्यं। तत्र नारायणशब्देन हिरण्यगर्भस्यैव विवक्षितत्वात्। न परमेश्वरस्य हि पूर्णकामस्य सर्वानतिक्रम्य स्थितस्य पुनरत्यतिष्ठेयं सर्वाणि भूतानीति कामना भवति। ननु परमेश्वरेऽपि कामना दृष्टा। "सोऽकामयत बहुस्यां प्रजायेयेति" इति चेत् श्लाघनीयप्रज्ञो देवानांप्रियो यत "आप्तकामस्य का स्पृहा" इति श्रुतेः "लोकवत्तु लीलाकैवल्यम्" इति न्यायाच्च निस्पृहस्य लीलयैव ब्रह्मांडकोटीः सृजतो भगवतो राजगोपालस्य कर्म किंकरेण कर्मणा सार्वात्म्यं प्रार्थयता साम्यमापादयति। तस्मान्न कर्मफलं भगवतः शरीरं अत एव न भौतिकं विराट्सूत्रात्मातिरिक्तस्य भौतिकस्याभावात्। तस्माद्युक्तमजोऽपि सन्निति। ननु तर्हि भगवच्छरीरस्य किमुपादानमविद्येति चेन्न परमेश्वरे तदभावात्। जीवाविद्याचेन्न शुक्तिरजतादेरिव तुच्छत्वापत्तेः। चिन्मात्रं चेन्न चितः साकारत्वायोगात् तथात्वे वा तस्यातींद्रियत्वापत्तिः। तस्मात्किमालंबो भगवद्देहो देवकीगर्भप्रवेशजननबाल्यकौमारपौगंडयौवनादिप्रतीतिविषय इति चेत् शृणु प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममाययेति अयमर्थः। जीवात्मानो हि अनात्मभूतां प्रकृतिं तेजोबन्नात्मिकां पंचभूतात्मिकां वा अधिष्ठाय संभवंति जन्मादीँल्लभंते अहं तु स्वां प्रत्यगनन्यां प्रकृतिं प्रत्यक्चैतन्यमेवेत्यर्थः। तदेवाधिष्ठाय न तूपादानांतरं आत्ममायया स्वीयमायया संभवामि यथा कश्चिन्मायावी स्वयं स्वस्थानादप्रच्युतस्वभावोऽप्यदृश्यो भूत्वा स्थूलसूक्ष्मभूतान्यनुपादायैव केवलया मायया द्वितीयं मायाविनं स्वसदृशमेव सूत्रमार्गेण गगनमारोहंतं सृजति। एवमहं कूटस्थचिन्मात्रोग्राह्यः स्वमायया चिन्मयमात्मनः शरीरं सृजामि तस्य बाल्याद्यवस्थाश्च सूत्रारोहणवद्दर्शयामि एतावांस्तु विशेषः। लौकिकमायावी मायामुपसंहरन् द्वितीयं मायाविनमप्युपसंहरति। अहं तु तामनुपसंहरन् स्वविग्रहमपि नोपसंहरामीति। एवं हि सति हिरण्यश्मश्रुत्वादिलक्षणविग्रहयोगिनश्चैतन्यस्य "अंतस्तद्धर्मोपदेशात्" इत्यादिन्यायसिद्धं वियदाद्युपादानत्वलक्षणं सर्वेश्वरत्वं युज्यते नान्यथेति तस्मात्सिद्धं परमेश्वरस्य मायामयं शरीरं नित्यमित्येकेनैव देहेन विवस्वंतमुपदिश्य त्वामप्युपदिशामीति। अन्यत्रापि नित्यैव सा जगन्मूर्त्तिरिति सावधारणं प्रतिज्ञायते। 'देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा॥ उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते' इति नित्याया अप्याविर्भावापेक्षया सूर्यस्येव बाल्यादिकमुत्पत्त्याद्युपगम्यते। भाष्ये तु स्वां प्रकृतिं वैष्णवीं त्रिगुणात्मिकां मायां अधिष्ठाय वशीकृत्य आत्ममायया संभवामि देहवान् जात इवात्मनो मायया न परमार्थतो लोकवदिति व्याख्यातम्॥ ६ ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ॥
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७ ॥

**शां० भा०**—तच्च जन्म कदा किमर्थं चेत्युच्यते—यदेति । यदा यदा हि धर्मस्य ग्लानिर्हानिर्वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य भवति भारत, अभ्युत्थानमुद्भवोऽधर्मस्य तदाऽऽत्मानं सृजाम्यहं मायया ॥ ७ ॥

**शां० आ०**—यदीश्वरस्य मायानिबन्धनं जन्मेत्युक्तं तस्य प्रश्नपूर्वकं कालं कथयाति—**तच्चेत्यादिना** । चातुर्वर्ण्ये चातुराश्रम्ये च यथावदनुष्ठीयमाने नास्ति धर्महानिरिति मन्वानो विशिनष्टि—**वर्णेति** । वर्णैराश्रमैस्तदाचारैश्च लक्ष्यते ज्ञायते धर्मस्तस्येति यावत् । धर्महानौ समस्तपुरुषार्थभङ्गो भवतीत्यभिप्रेत्याऽऽह—**प्राणिनामिति** । न च यथोक्तस्य धर्मस्य हानिं सोढुं शक्तो भवानित्याह—**भारतेति** । न केवलं प्राणिनां धर्महानिरेव भगवतो मायाविग्रहस्य परिग्रहे हेतुरपि तु तेषामधर्मप्रवृत्तिरपीत्याह—**अभ्युत्थानमिति** । यदा यदेति पूर्वेण संबन्धः ॥ ७ ॥

**आ० भा०**—॥ ७ ॥

**आ० ज०**—॥ ७ ॥

**रा० भा०**—जन्मकालमाह । न कालनियमोऽस्मत्संभवस्य । यदा यदा हि धर्मस्य वेदेनोदितस्य चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयास्थितस्य कर्तव्यस्य ग्लानिर्भवति । यदा यदा च तद्विपर्ययस्याधर्मस्याभ्युत्थानं तदाऽहमेव स्वसंकल्पेनोक्तप्रकारेणात्मानं सृजामि ॥ ७ ॥

**अ० टी०**—एतदेव प्रकटयति—यदायदेति । हे भारत ! यदायदा धर्मस्य मद्भक्त्यादिरूपस्य ग्लानिः संकोचो भवति । अधर्मस्य ज्ञानादिनाशकस्याभ्युत्थानमुत्पत्तिर्भवति । हीति निश्चयेन तदा आत्मानं लीलोपयोग्याञ्जीवान् ज्ञानोपयोग्याँश्चाहं सृजामि । भारतेति संबोधनाद्यथेदानीं धर्मरक्षार्थं त्वं सृष्टोऽसीति ज्ञाप्यते । आत्मानमित्यत्रैकवचनं मुख्यात्माभिप्रायेण वा ॥ ७ ॥

**नी० टी०**—कदा संभवसीत्यपेक्षायामाह—यदेति । ग्लानिर्ह्रासः अभ्युत्थानं वृद्धिः ॥ ७ ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

**शां० भा०**—किमर्थम्—परित्राणायेति । परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानां विनाशाय च दुष्कृतां पापकारिणाम् । किंच धर्मसंस्थापनार्थाय धर्मस्य सम्यक्स्थापनं तदर्थं संभवामि युगे युगे प्रतियुगम् ॥ ८ ॥

**शां० आ०**—यथोक्ते काले कृतकृत्यस्य भगवतो मायाकृते जन्मनि प्रश्नपूर्वकं प्रयोजनमाह—**किमर्थमित्यादिना** । यथा साधूनां रक्षणमसाधूनां निग्रहश्च भगवदवतारफलं तथा फलान्तरमपि तस्यास्तीत्याह—**किंचेति** । धर्मे हि स्थापिते जगदेव स्थापितं भवत्यन्यथा भिन्नमर्यादं जगदसंगतमापद्येतेत्यर्थः ॥ ८ ॥

**आ० भा०**—न जन्मनैव परित्राणादिकार्यमिति नियमः । तथापि लीलया स्वभावेन च यथेष्टचारी । तथाह्युक्तम् । 'देवस्यैष स्वभावोऽयम् । लोकवत्तु लीलाकैवल्यम् । क्रीडतो बालकस्येव चेष्टां

तस्य निशामय ॥ अरिभयादिव स्वयं पुराद्व्यवात्सीद्यदनंतवीर्यः ॥ पूर्णोऽयमस्यात्र न किंचिदाप्यं तथाऽपि सर्वः कुरुते प्रवृत्तिः ॥ अतोविरुद्धेषु इमं वदंति परावरज्ञा मुनयः प्रशांताः' इत्यादि ऋग्वेदखिलेषु ॥ ८ ॥

आ० ज०—परित्राणाय साधूनामिति साधुपरित्राणादिकं भगवदवतारस्य प्रयोजनमुक्तम् । तत्र किं जन्मनैव परित्राणादिकं कार्यमिति नियम इत्यपेक्षायामाह—**नेति** । जन्मना विनाऽपि कर्तुं समर्थत्वादिति भावः । तर्हि किमर्थं जन्मेत्यत आह—**तथाऽपीति** । यथेष्टचारी इच्छयैव तथा चरति । तथेच्छैव किमर्थेत्यत उक्तम्—**लीलयेति** । लीलाप्यालस्यपरिहारायर्थो न भवतीत्यत उक्तम्—**स्वभावेन चेति** । अत्रैव प्रमाणान्याह—**तथा हीति** । अयमेष इयमिच्छा । अत्र प्रवृत्तिषु विरुद्धेषु लोकविपरीतेच्छुम् ॥ ८ ॥

**रा० भा०**—पुनर्जन्मनः प्रयोजनमाह । साधव उक्तलक्षणधर्मशीला वैष्णवाग्रेसराः मत्समाश्रयणे प्रवृत्ता मन्नामकर्मस्वरूपाणामवाङ्मनसगोचरतया मद्दर्शनादृते स्वात्मधारणपोषणादिसुखमलभमाना अणुमात्रकालमपि कल्पसहस्रं मन्वानाः प्रशिथिलसर्वगात्रा भवेयुरिति मत्स्वरूपचेष्टितावलोकनालापादिदानेन तेषां परित्राणाय तद्विपरीतानां विनाशाय च क्षीणस्य वैदिकधर्मस्य मदाराधनरूपस्याराध्यस्वरूपप्रदर्शनेन तस्य स्थापनाय च देवमनुष्यादिरूपेण युगे युगे संभवामि । कृतत्रेतादियुगे विशेषनियमोऽपि नास्तीत्यर्थः ॥ ८ ॥

**अ० टी०**—एवं धर्मार्थं जीवान् सृष्ट्वा तेषां रक्षणार्थं चाहं प्रकटो भवामीत्याहुः—**परित्राणायेति** । साधूनां भक्तानां परित्राणाय दुष्कृतां धर्मप्रतिपक्षिणां नाशाय धर्मसंस्थापनाय ज्ञानकर्माऽऽश्रमादिरूपस्य सम्यक्प्रकारेण स्थापनाय युगे युगे संभवामीति । सम्यक्प्रकारेण भवामि प्रकटो भवामि न जीववद्भवामि॥८॥

**नी० टी०**—किमर्थमात्मानं मायया सृजसीत्यत आह—**परित्राणायेति** । दुष्कृतां दुष्टं कर्म कुर्वतां पापिनां संभवामि आविर्भवामि ॥ ८ ॥

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ॥**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥**

**शां० भा०**—तत्—**जन्मेति** । जन्म मायारूपं, कर्म च साधुपरित्राणादि, मे मम दिव्यमप्राकृतमैश्वरमेवं यथोक्तं यो वेत्ति तत्त्वतस्तत्त्वेन यथावत्त्यक्त्वा देहमिमं पुनर्जन्म पुनरुत्पत्तिं नैति न प्राप्नोति मामेत्यागच्छति स मुच्यते हेऽर्जुन ॥ ९ ॥

**शां० आ०**—मायामयमीश्वरस्य जन्म न वास्तवं तस्यैव च जगत्परिपालनं कर्म नान्यस्येति जानतः श्रेयोवाप्तिं दर्शयन्विपक्षे प्रत्यवायं सूचयति—**तज्जन्मेत्यादिना** । यथोक्तं मायामयं कल्पितमिति यावत्, वेदनस्य यथावत्त्वं वेद्यस्य जन्मादेरुक्तरूपानतिवर्तित्वम् । यदि पुनर्भगवतो वास्तवं जन्म साधुजनपरिपालनादि चान्यस्यैव कर्म क्षत्रियस्येति विवक्ष्येत तदा तत्त्वापरिज्ञानप्रयुक्तो जन्मादिः संसारो दुर्वारः स्यादिति भावः ॥ ९ ॥

**आ० भा०**—पृथङ्मुक्त्युक्ति हि सर्वज्ञानिनियमदर्शनार्थम् । नतु तावन्मात्रेण मुक्तिरित्युक्तम् । 'वेदाद्युक्तं तु सर्वं यो ज्ञात्वोपास्ते सदा हि मां ॥ तस्यैव दर्शनपथं यामि नान्यस्य कस्यचित्'इत्युक्तेश्च महाकौर्मे । अत्रोक्तस्यैतज्ज्ञात्वैव जन्मनैतीतिगतिः । इतरवाक्यानां नान्या गतिः । नान्यस्य कस्यचिदिति विशेषणात् तत्त्वत इति विशेषणाच्च सर्वं ज्ञानमापतति । यत्रैवं भवति तत्र तत्त्वत इति

विशेषणेन विरोधः । उक्तं च 'एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः ॥ न समर्थो महेंद्रोऽपि तस्मात्सर्वत्र जिज्ञसेत्'इति स्कांदे ॥ ९ ॥

**आ० ज०**—जन्म कर्म चेति।भगवजन्मादिज्ञानमात्रेण मुक्तिरुच्यत इति प्रतीतिनिरासायाह—**पृथगिति**।एकदेशज्ञानेनेत्यर्थः । दर्शनार्थमुपलक्षणार्थम् । यथा प्रतीत एवार्थः किं न स्यादित्यत आह—**न त्विति**। उक्तं तृतीये । प्रमाणांतरं चाह—**वेदादीति**। वाक्यत्वाविशेषादेतस्य गीताबाधकत्वं कुत इत्यतः सावकाशत्वनिरवकाशत्वाभ्यामित्याह—**अत्रेति** । अयोगव्यवच्छेदमात्रपरत्वमित्यर्थः । एतच्च पूर्वोक्तादर्थांतरमिति ज्ञेयम् । इतरवाक्यान्यधिकारिविशेषापेक्षया सावकाशानीति कुतो नान्यागतिरित्यत आह—**नेति** । विशेषणात् । पक्षांतरव्यवच्छेदात् । इतोऽप्यत्र सर्वज्ञानमंगीकार्यमित्याह—**तत्त्वत इति** । आपततीत्यनेनार्थापत्तिमभिप्रैति । एतमेव न्यायमन्यत्राप्यातिदिशति—**यत्रेति** । एवं भवति सर्वज्ञाने प्रमितेऽप्येकदेशज्ञानोक्तिर्भवति। तत्त्वतो ज्ञानं कथं सार्वज्ञतामाक्षिपतीत्यत आह—**उक्तं चेति** । जिज्ञसेत् जिज्ञासेत । अन्यत्रापि 'एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः' इति । सर्वत्र सार्वज्ञं यथाशक्ति विवक्षितमित्यवधेयम् ॥ ९ ॥

**रा० भा०**—एवं कर्ममूलभूतहेयत्रिगुणप्रकृतिसंसर्गरूपजन्मरहितस्य सर्वेश्वरत्वसर्वज्ञत्वसत्यसंकल्पत्वादिसमस्तकल्याणगुणोपेतस्य साधुपरित्राणमत्समाश्रयणैकप्रयोजनं दिव्यमप्राकृतं मदसाधारणं मम जन्म चेष्टितं च तत्त्वतो यो वेत्ति स वर्तमानं देहं परित्यज्य पुनर्जन्म नैति मामेव प्राप्नोति मदीयदिव्यजन्मचेष्टितयाथात्म्यविज्ञानेन विध्वस्तसमस्तमत्समाश्रयणविरोधिपाप्मा अस्मिन्नेव जन्मनि यथोदितप्रकारेण मामाश्रित्य मदेकप्रियो मदेकचित्तो मामेव प्राप्नोति ॥ ९ ॥

**अ० टी०**—तदेव विवृण्वन्ति—**जन्म कर्म चेति**। मे जन्म प्राकटचं कर्म क्रिया दिव्यं क्रीडात्मकम् । अहं लीलार्थं प्रकटो भवामीत्यर्थः । लीलायां क्रियमाणायां कालीयदमनादिरूपकर्मभिः साधूनां भक्तानां रक्षा भवतीति भावः । यतो मत्प्राकट्यं क्रीडार्थं तत एवं यो वेत्ति स तत्त्वतो देहं त्यक्त्वा लीलायां सेवार्थसृष्टदेहेन सेवां कृत्वा तदसामर्थ्ये देहं त्यक्त्वा हे अर्जुन ! पुनर्जन्म लौकिकं पूर्ववन्नैति न प्राप्नोति । मामेति मां प्राप्नोति । प्रकर्षेणाप्नोति अलौकिकदेहेन लीलायामिति भावः । अत एव मामित्युक्तं न तु मत्पदं मद्भावं वा एतादृशस्य दुर्लभत्वात्स इत्येकवचनमुक्तम् ॥ ९ ॥

**नी० टी०**—जन्म मायामयं कर्म साधुत्राणं दिव्यं अप्राकृतं यो वेत्ति स त्यक्त्वा देहं पुनः जन्म न प्राप्नोति किंतु मामेति मामेव प्राप्नोति । एतेन भगवतो जन्मानि कर्माणि च भगवत्प्रीतिकामेन गेयानीति दर्शितम् ॥ ९ ॥

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ॥**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

**शां० भा०**—नैष मोक्षमार्ग इदानीं प्रवृत्तः किं तर्हि पूर्वमपि—वीतरागेति। वीतरागभयक्रोधा रागश्च भयं च क्रोधश्च वीता विगता येभ्यस्ते वीतरागभयक्रोधा मन्मया ब्रह्मविद ईश्वराभेददर्शिनो मामेव परमेश्वरमुपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः । बहवोऽनेके ज्ञानतपसा ज्ञानमेव च परमात्मविषयं तपस्तेन ज्ञानतपसा पूताः परां शुद्धिं गताः सन्तो मद्भावमीश्वरभावं मोक्षमागताः समनुप्राप्ताः । इतरतपोनिरपेक्षज्ञाननिष्ठा इत्यस्य लिङ्गं ज्ञानतपसेति विशेषणम् ॥ १० ॥

**शां० आ०**—संप्रति प्रस्तुतमोक्षमार्गस्य नूतनत्वेनाव्यवस्थितत्वमाशङ्क्य परिहरति—**नैष इति** । मन्मयत्वस्य मद्भावगमनेनापौनरुक्त्यं दर्शयति—**ब्रह्मविद इति** । आत्मनो भिन्नत्वेन भिन्नाभिन्नत्वेन वा ब्रह्मणि वेदनं व्यावर्तयति—**ईश्वरेति** । अ-

भेददर्शनेन समुच्चित्य कर्मानुष्ठानं प्रत्याचष्टे—**मामेवेति**। तदुपाश्रयत्वमेव विशदयति—**केवलेति**। मामुपाश्रिता इति केवलज्ञाननिष्ठत्वमुक्त्वा ज्ञानतपसा पूता इति किमर्थं पुनरुच्यते तत्राऽऽह—**इतरेति** ॥ १० ॥

**आ० भा०—संति च तथा मुक्ता इत्याह—वीतरागेति। मन्मयाः मत्प्रचुराः सर्वत्र मां विना न किंचित्पश्यंतीत्यर्थः ॥ १० ॥**

आ० ज०—किं चोत्तरश्लोकेऽधिकानुवादान्नात्रैतावन्मात्रं विवक्षितमिति भावेन तात्पर्यमाह—**संति चेति**। तथोक्तज्ञानेन आह—**श्रद्धोत्पादनार्थमितिशेषः**। मन्मया मदात्मका इति प्रतीतिनिरासार्थमाह—**मन्मया इति**। सर्वेषां भगवान्प्रचुरः को विशेषो ज्ञानिनामित्यत आह—**सर्वत्रेति**। सर्वेषु पदार्थेषु किंचित्सत्तादिकम्। मदायत्तमेव सर्वं पश्यंतीत्यर्थः॥१०॥

**रा० भा०—तदाह। मदीयजन्मकर्म तत्त्वज्ञानाख्येन तपसा पूता बहव एवं संवृत्ताः। तथा च श्रुतिः। "तस्य धीराः परिजानन्ति योनिम्" इति। धीराः धीमतामग्रेसरा एव तस्य जन्मप्रकारं जानन्तीत्यर्थः ॥ १० ॥**

अ० टी०—एवं भक्तानां स्वप्राप्तिं स्वप्राकट्यस्वरूपज्ञानेनोक्त्वा ज्ञानेन द्वितीयायां स्वप्राप्तिस्वरूपमाहुः—**वीतरागेति**। बहवो ज्ञानतपसा ज्ञानयुक्तेन तपसा पूताः सन्तोमामुपाश्रिताः। उपसमीपे आगताः। आश्रयणमात्रमेव कृतवन्तो न तु सेवादिकं तादृशा मन्मया मद्रूपं सर्वत्र ज्ञानरूपेण पश्यन्तस्तत्रैव लीना भूत्वा आगताः प्राप्तजन्मानो मद्भावं मोक्षं प्राप्नुवन्ति। कीदृशा वीतरागभयक्रोधा ज्ञानप्रतिपक्षरहिताः॥ १०॥

नी० टी०—एतस्यापि भगवत्प्राप्तेर्द्वारमाह—**वीतेति**। रागो विषयेषु प्रीतिः भयं स्वोच्छेदाशंका क्रोधः स्वपरपीडाहेतुरभिज्वलनं ते त्रयो वीताः येभ्यस्ते वीतरागभयक्रोधाः अत एव मन्मयाः मदेकप्रधानाः। किं जारिणी यथा जारमपि भर्त्तारं चाश्रिता योगक्षेमार्थं तद्वन्नेत्याह मामुपाश्रिताः ज्ञानतपसा ज्ञानमयं तप आलोचनं मम जन्मकर्मणोः स्वरूपस्य च निरंतरं चिंतनं । "यस्य ज्ञानमयं तपः" इति श्रुतिप्रसिद्धं ज्ञानतपः तेन पूताः संतो मद्भावं मत्तादात्म्यं प्राप्ता इत्यर्थः ॥ १० ॥

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

**शां० भा०—तव तर्हि रागद्वेषौ स्तः, येन केभ्यश्चिदेवाऽऽत्मभावं प्रयच्छसि न सर्वेभ्य इत्युच्यते—ये यथेति। ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते तांस्तथैव तत्फलदानेन भजाम्यनुगृह्णाम्यहमित्येतत्। तेषां मोक्षं प्रत्यनर्थित्वात्। न ह्येकस्य मुमुक्षुत्वं फलार्थित्वं च युगपत्संभवति। अतो ये फलार्थिनस्तान्फलप्रदानेन । ये यथोक्तकारिणस्त्वफलार्थिनो मुमुक्षवश्च ताञ्ज्ञानप्रदानेन, ये ज्ञानिनः संन्यासिनो मुमुक्षवश्च तान्मोक्षप्रदानेन, तथाऽऽर्तानार्तिहरणेनेत्येवं यथा प्रपद्यन्ते ये तांस्तथैव भजामीत्यर्थः। न पुना रागद्वेषनिमित्तं मोहनिमित्तं वा कंचिद्भजामि। सर्वथाऽपि सर्वावस्थस्य ममेश्वरस्य वर्त्म मार्गमनुवर्तन्ते मनुष्याः। यत्फलार्थितया यस्मिन्कर्मण्यधिकृता ये प्रयतन्ते ते मनुष्या उच्यन्ते हे पार्थ सर्वशः सर्वप्रकारैः ॥ ११ ॥**

शां० आ०—ईश्वरः सर्वेभ्यो मोक्षं प्रयच्छति चेत्प्रागुक्तविशेषणवैयर्थ्यं यदि तु केभ्यश्चिदेव मोक्षं प्रयच्छेत्तर्हि तस्य रागादिमत्त्वादनीश्वरत्वापत्तिरिति शङ्कते—**तव तर्हीति**। ये मुमुक्षवस्तेभ्यो मोक्षमीश्वरो ज्ञानसंपादनद्वारा प्रयच्छति फलान्तरार्थिभ्यस्तु तत्तदुपायानुष्ठानेन तदेव ददातीति नास्य रागद्वेषाविति परिहरति—**उच्यत इति**। मुमुक्षूणामीश्वरानुसारित्वेऽपि फलान्त-

रार्थिनां कुतस्तदनुसारित्वमित्याशङ्क्य फलमत उपपत्तेरिति न्यायेन तत्तत्फलस्येश्वरायत्तत्वात्तदनुवर्तित्वमावश्यकमित्याह—**ममेति**। भगवद्वचनभागिनां सर्वेषामेव कैवल्यमेकरूपं किमिति नानुगृह्यते तत्राऽऽह—**तेषामिति**। अभ्युदयनिःश्रेयसार्थित्वं प्रार्थनावैचित्र्यादेकस्यैव किं न स्यादित्याशङ्क्यापर्यायेण तदनुपपत्तिं साधयति—**न हीति**। मुमुक्षूणां फलार्थिनां च विभागे स्थिते सत्यनुग्रहविभागं फलितमाह—**अत इति**। फलप्रदानेनानुगृह्णामीति संबन्धः। नित्यनैमित्तिककर्मानुष्ठायिनामेव फलार्थित्वाभावे सति च मुमुक्षुत्वे कथं तेष्वनुग्रहः स्यादिति तत्राऽऽह–**ये यथोक्तेति**। ज्ञानप्रदानेन भजामीत्युत्तरत्र संबन्धः। सन्ति केचित्त्यक्तसर्वकर्माणो ज्ञानिनो मोक्षमेवापेक्षमाणास्तेष्वनुग्रहप्रकारं प्रकटयति—**ये ज्ञानिन इति**। केचिदार्ताः सन्तो ज्ञानादिसाधनान्तररहिता भगवन्तमेवाऽऽर्तिमपहर्तुमनुवर्तन्ते तेषु भगवतोऽनुग्रहविशेषं दर्शयति—**तथेति**। पूर्वोधव्याख्यानमुपसंहरति—**इत्येवमिति**। भगवतोऽनुग्रहे निमित्तान्तरं निवारयति—**न पुनरिति**। फलार्थित्वे मुमुक्षुत्वे च जन्तूनां भगवदनुसरणमावश्यकमित्युत्तरार्धं विभजते—**सर्वथाऽपीति**। सर्वावस्थत्वं तेन तेनाऽऽत्मना परस्यैवेश्वरस्यावस्थानं, मार्गो ज्ञानकर्मलक्षणः। मनुष्यग्रहणादितरेषामीश्वरमार्गानुवर्तित्वपर्युदासः स्यादित्याशङ्क्याऽऽह—**यत्फलेति**। सर्वप्रकारैर्मम मार्गमनुवर्तन्त इति पूर्वेण संबन्धः ॥ ११ ॥

**आ० भा०—न च मद्भजनमात्रेण मुक्तिर्भवत्यन्यदेवतारूपेण तथापि सर्वेषामानुरूप्येण फलं ददामीत्याह—ये यथेति। सेवयामि फलदानेन न तु गुणभावेन। कथमयं विशेष इत्यत आह—मम वर्त्मेति। अन्यदेवता यजंतोऽपि ममवर्त्मैवानुवर्तंते। सर्वकर्मकर्तृत्वात् भोक्तृत्वाच्च मम। येऽप्यन्यदेवताभक्ता इति वक्ष्यति "यो देवानां नामधा एक एव" इति हि श्रुतिः भगवानेव च तत्राभिधीयते। अजस्यनाभावध्येकमर्पितमिति तल्लिंगात् ॥ ११ ॥**

**आ० ज०**—ये यथेतिवाक्यं न प्रकृतेन साक्षात् संगतम्। अतस्तत्संगमयितुं मध्ये शंकांतरं निराकरोति—**न चेति**। मामुपासिता मद्भावमागता इत्युक्त्याऽन्यदेवतादिरूपेण मद्भजनमात्रेण त्रैविद्यानामपि मुक्तिर्भवतीति नाशंकनीयमित्यर्थः। विष्णुं सामान्यतः सर्वोत्तमं ज्ञात्वाऽन्यदेवताः पितॄंश्चेष्ट्वांऽते विष्णौ समर्पणमन्यदेवतादिरूपेण भगवद्भजनम्। उपपत्तिं तूत्तरत्र वक्ष्यामीति भगवतोऽभिप्रायः। तत्किं त्रैविद्यानां त्वद्भजनं निरर्थकमेवेत्यत आह—**तथापीति**। यद्यपि न मुक्तिं ददामि तथापि तदभिप्रेतं स्वर्गादिकं ददामीति शेषः। एवं तर्हि ज्ञानिभ्यो मुक्तिं त्रैविद्येभ्योऽल्पं फलं ददद्विषमो भगवान्स्यादित्याशंकानिरासार्थत्वेनोत्तरवाक्यं संगमयन्नाह—**सर्वेषामिति**। अनुरूपेण सेवानुसारेण सर्वेषां ज्ञानिनां त्रैविद्यानां चेति चतुर्थ्यर्थे षष्ठी। तथैव भजामीत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे—**सेवयामीति**। बहुलमेतन्निदर्शनमिति वचनात्स्वार्थे णिच्। मम वर्त्मेत्यस्य संगत्यप्रतीतेस्तामाह—**कथमिति**। यः फलतारतम्यहेतुरयं। ज्ञानिभ्यस्त्रैविद्यानां सेवायां विशेषः कथं किंप्रकार इत्यर्थः। कथमनेनैतच्छंकापरिहार इत्यतो व्याचष्टे—**अन्येति**। न केवलं ज्ञानिनः किंत्वन्यदेवता यजंतोऽपि त्रैविद्याइति यावत्। किं तत्सर्वेषां त्वद्वर्त्मानुवर्तनमित्यत आह—**सर्वेति**। भोक्तृत्वाद्धविरादीनाम्। एतत् द्वयमेव भगवद्वर्त्मानुवर्तनम्। तथा व्यवहारे निमित्तत्वात्पंचमी। इदमुक्तं भवति। अहमेव सर्वयज्ञानां भोक्ता च प्रेरकश्च। तदेतज्ज्ञात्वा भागवता निष्कामा मामेव यजंते। त्रैविद्यास्त्वेतत्तत्त्वतोऽजानानाः कर्मणां सिद्धिं कांक्षंतोऽन्यदेवता यजंते। एवं सेवाविशेषाद्युक्तं फलतारतम्यमिति। कुत इदं भगवतोऽभिप्रेतमित्यत आह—**येऽपीति**। अनेन श्लोकद्वयमुपात्तम्। तत्र च स्पष्टमेषोऽर्थः प्रतीयते। नन्विंद्रादिनामवद्भिर्मंत्रैः दत्तं हविरादिकं कथं भगवान् भुङ्क्ते। भगवतः सर्वनामत्वेन मंत्राणां तत्परत्वादिति भावेनाह—**य इति**। ननु विश्वकर्मैवमुच्यत इत्यत आह—**भगवानेवेति**। तत्र चेति संबंधः। अनेन भगवतः सर्वयज्ञादिभोक्तृत्वे बाधकं परिहृतम् ॥ ११ ॥

**रा० भा०—न केवलं देवमनुष्यादिरूपेणावतीर्य मत्समाश्रयणापेक्षाणां परित्राणं करोमि। अपि तु मत्समाश्रयणापेक्षा यथा येन प्रकारेण स्वापेक्षानुरूपं मां संकल्प्य प्रपद्यन्ते समाश्रयन्ते तान्प्रति तथैव तन्मनीषितप्रकारेण भजामि मां दर्शयामि। किमत्र बहुना सर्वे मनुष्याः मदनुवर्तनैकमनोरथा मम वर्त्म मत्स्वभावं सर्वं योगिनां वाङ्मनसागोचरमपि स्वकीयैः चक्षुरादिकरणैः सर्वशः स्वापेक्षितैः सर्वप्रकारैरनुभूयानुवर्तन्ते ॥ ११ ॥**

अ० टी०—ननु त्वत्संगता एवैके लीलायां संबन्धं प्राप्नुवन्ति एके मुक्तिं तत्र किं कारणमित्याशङ्क्याहुः—**ये यथा मामिति**। हे पार्थ! ये मां यथा येन प्रकारेण यदिच्छया वा प्रपद्यन्ते प्रपन्ना भव

न्ति अहं तांस्तथैव भजामि तत्फलरूपेण वशो भवामि । अत्रायमर्थः । यौ तु साक्षान्मत्प्राप्त्यर्थं च भक्तिज्ञानमार्गावुक्तौ तत्र यस्योत्तमत्वज्ञानेन यत्र रुचिः स्यात्तस्य तद्दाने तन्मनोरथो न स्यात् । दुःखं स्यात्तदाममात्मत्वं भज्येताऽतस्तथा करोमि । य इत्युक्त्या मर्यादामार्गीयज्ञानोपयोग्यजीवानामपि स्नेहभजने पुष्टिमर्यादायां मत्प्राप्तिरूपं फलं ददामीति व्यज्यते । पार्थेति संबोधनेन मूलतो भक्तेऽपि त्वय्येवं प्रश्नयोग्ये त्वत्प्रश्नानुसारेणोत्तरं प्रयच्छामीति त्वयैवानुभूयत इति ध्वन्यते । किंच । ये मनुष्या मम वर्त्म मदुक्तमार्गं पुष्टिमार्गमनुवर्तन्ते मदुक्तप्रकारेण अनु पश्चाद्वर्तन्ते तान् सर्वप्रकारैरहं भजामि व्रजरीत्येति भावः ॥ ११ ॥

**नी० टी०**—ननु साध्वसाध्वोस्त्राणविनाशौ कुर्वतस्तव वैषम्यनैर्घृण्ये स्तोऽतः किं तवास्मदादितुल्यस्य जन्मकर्मस्वरूपाणां चिंतनेनेत्याशंक्याह—**ये यथेति**। ये मनुष्याः मां सर्वशरीरस्थं यथा येन प्रकारेण शत्रुत्वेन मित्रत्वेन वा प्रपद्यंते प्राप्नुवंति तांस्तेनैव प्रकारेणाहमपि भजामि अनुसरामि । ये तु मम वर्त्म भक्तिध्यानप्रणिधानात्मकमनुवर्त्तते तान् ममात्मभूतांस्तथैव सर्वशः सर्वैः प्रकारैरनुवर्त्तेऽहमिति योजना । ततश्च मद्बिंबभूते प्राणिजाते यथा यः प्रीतिं द्वेषं वा करोति तस्मिन्मत्प्रतिबिंबभूतेऽहमपि तथैव प्रीतिं द्वेषं च करोमि । बिंबपूजापरिभवौ प्रतिबिंबे एव संक्रामतोऽतो न मम वैषम्यनैर्घृण्ये स्तः । तस्मात् श्रेयोर्थिना सर्वस्य कल्याणायैव यतितव्यमिति भावः । भाष्ये तु ये यथा येन प्रकारेण येन प्रयोजनेन आर्ता जिज्ञासवोऽर्थार्थिनो ज्ञानिनो वा प्रतिपद्यंते तांस्तथैव पीडापरिहारेण ज्ञानदानेन अर्थदानेन मोक्षदानेन वाऽनुगृह्णामि । सर्वथा ते ममैव वर्त्मानुवर्त्तंत इति अन्यदेवताभक्ता इति चैतद्व्याचक्ष्यते ॥ ११ ॥

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ॥**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

**शां० भा०—यदि तवेश्वरस्य रागादिदोषाभावात्सर्वप्राणिष्वनुजिघृक्षायां तुल्यायां सर्वफलप्रदानसमर्थे च त्वयि सति वासुदेवः सर्वमिति ज्ञानेनैव मुमुक्षवः सन्तः कस्मात्त्वामेव सर्वे न प्रतिपद्यन्त इति शृणु तत्र कारणम्—काङ्क्षन्त इति । काङ्क्षन्तोऽभीप्सन्तः कर्मणां सिद्धिं फलनिष्पत्तिं प्रार्थयन्तो यजन्त इहास्मिँल्लोके देवता इन्द्राग्न्याद्याः "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्" इति श्रुतेः । तेषां हि भिन्नदेवतायाजिनां फलाकाङ्क्षिणां क्षिप्रं शीघ्रं यस्मान्मानुषे लोके, मनुष्यलोके हि शास्त्राधिकारः । क्षिप्रं हि मानुषे लोक इति विशेषणादन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान् । मानुषे लोके वर्णाश्रमादिकर्माणीति शेषः, तेषां वर्णाश्रमाद्यधिकारिकर्मणां फलसिद्धिः क्षिप्रं भवति कर्मजा कर्मणो जाता ॥ १२ ॥**

**शां० आ०**—अनुग्राह्याणां ज्ञानकर्मानुरोधेन भगवता तथ्वनुग्रहविधानात्तस्य रागद्वेषौ यदि न भवतस्तर्हि तस्य रागाद्यभावादेव सर्वेषु प्राणिष्वनुग्रहेच्छा तुल्या प्राप्ता, न च तस्यां सत्यामेव फलस्याल्पीयसः संपादने सामर्थ्यं न तु भगवतो महतो मोक्षाख्यस्य फलस्य प्रदाने शक्तिरिति प्रयुक्तमप्रतिहतज्ञानेच्छाक्रियाशक्तिमतस्तव सर्वफलप्रदानसामर्थ्यात्तथा च यथोक्तानुजिघृक्षायां सत्यां त्वयि च यथोक्तसामर्थ्यवति सर्वे फल्गुफलादभ्युदयाद्विमुखा मोक्षमेवापेक्षमाणा ज्ञानेन त्वामेव किमिति न प्रतिपद्येरन्निति चोदयति—**यदीति** । मोक्षापेक्षाभावात्तदुपायभूतज्ञानादपि वैमुख्याद्भगवत्प्राप्त्यभावे हेतुमभिदधानः समाधत्ते—**शृण्विति** । कर्मफलसिद्धिमिच्छता किमिति मानुषे लोके देवतापूजनमिष्यते तत्राऽऽह—**क्षिप्रं हीति**। कर्मफलसंपत्त्यर्थिनां यष्टृयष्टव्यविभागदर्शिनां तद्दर्शने कारणमात्माज्ञानमित्यत्र बृहदारण्यकश्रुतिमुदाहरति—**अथेति** । अविद्याप्रकरणोपक्रमार्थमथेत्युक्तम् । उपानं भदर्दशनमित्यनूद्य कारणमात्माज्ञानं तत्रेति दर्शयति—**नेति** । यथाऽस्मदादीनां हलवहनादिना पशुरुपकरोत्य-

वमज्ञो देवादीनां यागादिभिरुपकरोतीत्याह—**यथेति**। किमिति ते फलाकाङ्क्षिणो भिन्नदेवतायाजिनो ज्ञानमार्गं नापेक्षन्ते तत्रोत्तरार्धमुत्तरत्वेन योजयति—**तेषामित्यादिना**। यस्माद्यथोक्तानामधिकारिणां कर्मप्रयुक्तं फलं लोकविशेषे झटिति सिध्यति तस्मात्तेषां मोक्षमार्गादस्ति वैमुख्यमित्यर्थः। मानुषलोकविशेषणं किमर्थमित्याशङ्क्याऽऽह—**मनुष्यलोके हीति**। लोकान्तरेषु तर्हि कर्मफलसिद्धिर्नास्तीत्याशङ्क्य क्षिप्रविशेषणस्य तात्पर्यमाह—**क्षिप्रमिति**। क्वचित्कर्मफलसिद्धिरविलम्बेन भवत्यन्यत्र तु विलम्बेनेति विभागे को हेतुरित्याशङ्क्य सामग्रीभावाभावाभ्यामित्याह—**मानुष इति**। मनुष्यलोके कर्मफलसिद्धेः शैघ्र्यात्तदभिमुखानां ज्ञानमार्गवैमुख्यं प्रायिकमित्युपसंहरति—**तेषामिति**॥ १२॥

**आ० भा०**—कुतो मम वर्त्मानुवर्तते क्षिप्रं हि अतएव हि फलप्राप्तिः। "तस्मात्ते धनसनयः" इति श्रुतिः॥ १२॥

**आ० ज०**—साधकं तु प्रमाणं पृच्छति—**कुत इति**। मम वर्त्मानुवर्तत इति यत्सर्वयज्ञादिभोक्तृत्वमुक्तम्। तत्कुतः प्रमाणाज्ज्ञायत इत्यर्थः। सर्वकर्तृत्वं तु जीवानामस्वातंत्र्यदर्शनात्सिद्धम्। इत्यत आहेति शेषः। हीत्यतः परमितिशब्दश्च। किमनेन प्रमाणमुक्तमित्यत आह—**अतएव हीति**। कर्मजा सिद्धिः फलप्राप्तिस्तावत् क्षिप्रं प्रत्यक्षोपलभ्याऽस्ति। सा चात एव कर्मणां भगवताभुक्तत्वादेव हि युज्यते। नान्यथेत्यर्थः। इंद्रादिभ्योऽपि फलप्राप्त्युपपत्तेरुपक्षीणार्थापत्तिरित्यतश्चाह—**अत एव हीति**। भगवतएव। अत्र हीति सूचितं प्रमाणमाह—**तस्मादिति**। धनसनयो धनलाभवंतः॥ १२॥

**रा० भा०**—इदानीं प्रासङ्गिकं परिसमाप्य प्रकृतस्य कर्मयोगस्य ज्ञानाकारताप्रकारं वक्तुं तथाविधकर्मयोगाधिकारिणो दुर्लभत्वमाह। सर्व एव पुरुषाः कर्मणां फलं काङ्क्षमाणा इन्द्रादिदेवताः यथाशास्त्रं यजन्ते आराधयन्ति। नतु कश्चिदनभिसंहितफलः इन्द्रादिदेवतात्मभूतं सर्वयज्ञानां भोक्तारं मां यजते। कुत एतत् यतः क्षिप्रमस्मिन्नेव मानुषे लोके कर्मजा पुत्रपश्वन्नाद्या सिद्धिर्भवति। मनुष्यलोकशब्दः स्वर्गादिलोकप्रदर्शनार्थः। सर्व एव हि लौकिकाः पुरुषाः अक्षीणानादिकालप्रवृत्तानन्तपापसंचयया अविवेकिनः क्षिप्रफलाभिकाङ्क्षिणः पुत्रपश्वन्नाद्यस्वर्गाद्यर्थतया सर्वाणि कर्माणीन्द्रादिदेवताराधनमात्राणि कुर्वते। नतु कश्चित्संसारोद्विग्नहृदयो मुमुक्षुरुक्तलक्षणं कर्मयोगं मदाराधनभूतमारभत इत्यर्थः॥ १२॥

**अ० टी०**—नन्वेवं चेत्तदा कथं न सर्वे त्वामेव सेवन्त इत्याशङ्क्याहुः—**काङ्क्षन्त इति**। इह अस्मिन्नेव जन्मनि सिद्धिं काङ्क्षन्तो ये वाञ्छन्ति तादृशाः सन्तः कर्मणां देवताः कर्माधिष्ठातार इन्द्रादयस्तान् यजन्ते। यतः क्षिप्रं शीघ्रं मानुषे लोके अस्मिन्नेव जन्मनि कर्मजा सिद्धिर्भवति। न मत्प्राप्तिः। हीति युक्तत्वाय तथा चायमर्थः। पुरुषोत्तमसंबन्धो न लौकिकदेहप्राप्यः किंत्वलौकिकस्वरूपप्राप्यः। तत्स्वरूपं च लौकिकदेहेन सेवायां क्रियमाणायां प्रेमोत्पत्त्या परीक्षासिद्ध्यनन्तरं तापे जाते तदनुभवार्थत्यागानन्तरमेतद्देहनिवृत्त्यनन्तरं भवति। तत्रापि परीक्षासिद्धौ परमतापे सति तदनुभवः स्यात्। सोऽपि क्लेशानन्दानुभवात्मकः। एतत्सर्वं व्रजे प्रसिद्धं कालीय अन्तर्गतभगवदन्तर्ध्यानं पुनः प्राकट्यरमणवनगमनश्रीमदुद्धवप्रसंगादिभिः। अन्यदेवानां तु जीववदंशरूपत्वादत्रैव मनुष्यलोके शीघ्रं तदर्थकृतकर्मसिद्धिर्भवति। अतोऽत्रैव शीघ्रं फलाभिलाषिणस्तत्र प्रवर्तन्ते। न मद्भजने। तत्र प्रवृत्तौ तेषां तत्सिद्धिर्भवति। देवानां मत्स्वरूपत्वादत्रैव लौकिकदेहेन लौकिकफलसिद्धिर्युक्तैवेति ज्ञापनाय हीति॥ १२॥

**नी० टी०**—**काङ्क्षन्त इति**। हि यस्मात् मानुषे लोके कर्मसिद्धिः काम्यकर्मफलं पुत्रपश्वादिकं क्षिप्रं भवति न तु निष्कामकर्मजा चित्तशुद्धिः। अतो ये कर्मणां सिद्धिं फलं इहैव क्षिप्रं कांक्षंतः कांक्षमाणाः देवताः इंद्रादीन् यजंते तेऽपि ममैव वर्त्मानुवर्त्तंत इति पूर्वेणान्वयः। वक्ष्यति च येऽप्यन्यदेवताभक्ता इत्यादि॥ १२॥

अ० टी०—किं च । यो निष्कामो मदाज्ञात्वेन कर्म करोति स मद्भक्तानां च मे मत इत्याह—यस्येति । यस्य सर्वे समारम्भाः सर्वकर्मणां सम्यक् मदाज्ञात्वेन आरम्भाः कामसंकल्पवर्जिताः । कामः फलं संकल्पस्तादिच्छा एतदुभयरहिताः । तं ज्ञानाग्निना दग्धकर्माणं ज्ञानाग्निना दग्धानि कर्माणि यस्य तादृशं दग्धत्वादग्रे तद्भोगवृक्षोत्पत्तिबीजभावरहितं बुधाः भक्ताः पण्डितं शास्त्रोक्तसर्वस्वरूपज्ञमाहुः वदन्ति ॥ १९ ॥

नी० टी०—अविदुषां कर्मण्यकर्मभावनां द्रढयितुं विदुषां कर्मदर्शनं स्तौति यस्य सर्वे समारंभा इत्यादिभिः षड्भिः यस्य विदुषः सर्वे समारभ्यंत इति समारंभाः कर्माणि कामेन फलेच्छया संकल्पेन अहमिदं करोमीत्यभिमानेन च वर्जिताः तं ज्ञानाग्निना कर्मादावकर्मादिदर्शनेन दग्धानि अंकुरीभावाच्च्यावितानि कर्माणि शुभाशुभानि येन तं पंडितं बुधा आहुः ॥ १९ ॥

**त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः ॥**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥**

**शां० भा०—यस्त्वकर्मादिदर्शी सोऽकर्मादिदर्शनादेव निष्कर्मा संन्यासी जीवनमात्रार्थचेष्टः सन्कर्मणि न प्रवर्तते यद्यपि प्राग्विवेकतः प्रवृत्तः । यस्तु प्रारब्धकर्मा सन्नुत्तरकालमुत्पन्नात्मसम्यग्दर्शनः स्यात्स कर्मणि प्रयोजनमपश्यन्ससाधनं कर्म परित्यजत्येव । स कुतश्चिन्निमित्तात्कर्मपरित्यागासंभवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावाल्लोकसंग्रहार्थं पूर्ववत्कर्मणि प्रवृत्तोऽपि नैव किंचित्करोति ज्ञानाग्निदग्धकर्मत्वात्तदीयं कर्माकर्मैव संपद्यत इत्येतमर्थं दर्शयिष्यन्नाह—त्यक्त्वेति । त्यक्त्वा कर्मस्वभिमानं फलासङ्गं च यथोक्तेन ज्ञानेन नित्यतृप्तो निराकाङ्क्षो विषयेष्वित्यर्थः । निराश्रय आश्रयरहितः । आश्रयो नाम यदाश्रित्य पुरुषार्थं सिसाधयिषति । दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थः । विदुषा क्रियमाणं कर्म परमार्थतोऽकर्मैव तस्य निष्क्रियात्मदर्शनसंपन्नत्वात् । तेनैवंभूतेन प्रयोजनाभावात्ससाधनं कर्म परित्यक्तव्यमेवेति प्राप्ते ततो निर्गमासंभवाल्लोकसंग्रहचिकीर्षया शिष्टविगर्हणापरिजिहीर्षया वा पूर्ववत्कर्मण्यभिप्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वान्नैव किंचित्करोति सः ॥ २० ॥**

शां० आ०—विवेकात्पूर्वं कर्मणि प्रवृत्तावपि सति विवेके तत्र न प्रवृत्तिरित्याशङ्क्याङ्गीकरोति—**यस्त्विति** । विवेकात्पूर्वमभिनिवेशेन प्रवृत्तस्य विवेकानन्तरमभिनिवेशाभावात्प्रवृत्त्यसंभवेऽपि जीवनमात्रमुद्दिश्य प्रवृत्त्याभासः संभवतीत्यर्थः । सत्यपि विवेके तत्त्वसाक्षात्कारानुदयात्कर्मणि प्रवृत्तस्य कथं तत्त्यागः स्यादित्याशङ्क्याऽऽह—**यस्तु प्रारब्धेति** । त्यक्त्वेत्यादिसमनन्तरश्लोकमवतारयितुं भूमिकां कृत्वा तदवतारणप्रकारं दर्शयति—**स कुतश्चिदिति** । लोकसंग्रहादि निमित्तं विवक्षितम् । कर्मपरित्यागासंभवे सति तस्मिन्प्रवृत्तोऽपि नैव करोति किंचिदिति संबन्धः । कर्मणि प्रवृत्तो न करोति कर्मेति कथमुच्यते तत्राऽऽह—**स्वप्रयोजनाभावादिति** । कथं तर्हि कर्मणि प्रवर्तते तत्राऽऽह—**लोकेति** । प्रवृत्तेरर्थक्रियाकारित्वाभावं पश्वादिभिश्चाविशेषादिति न्यायेन व्यावर्तयति—**पूर्ववदिति** । कथं तर्हि विवेकिनामविवेकिनां च विशेषः स्यादित्याशङ्क्य कर्मादौ सङ्गासङ्गाभ्यामित्याह—**कर्मणीति** । उक्तेऽर्थे समनन्तरश्लोकमवतारयति—**ज्ञानाग्नीति** । एतमर्थं दर्शयिष्यन्निमं श्लोकमाहेति योजना । यथोक्तं ज्ञानं कूटस्थात्मदर्शनं तेन स्वरूपभूतं सुखं साक्षादनुभूय कर्मणि तत्फले च सङ्गमपास्य विषयेषु निरपेक्षश्चेष्टते विद्वानित्याह—**त्यक्त्वेत्यादिना** । इष्टसाधनसापेक्षस्य कुतो निरपेक्षत्वमित्याशङ्क्य विशिनष्टि—**निराश्रय इति** । यदाश्रित्येति यच्छब्देन फलसाधनमुच्यते । आश्रयरहित इत्यस्यार्थं स्पष्टयति—**दृष्टेति** । तेन ज्ञानवता पुरुषेणैवंभूतेन त्यक्त्वा कर्मफलसङ्गमित्यादिना विशेषितेनेत्यर्थः । ततः ससाधनात्कर्मणः सकाशादिति यावत् । निर्गमासंभवे हेतुमाह—**लोकेत्यादिना** । पूर्ववज्ज्ञानोदयात्प्रागवस्थायामिवेत्यर्थः । अभिप्रवृत्तोऽपि लोकदृष्ट्येति शेषः । नैव करोति किंचिदिति स्वदृष्ट्येति द्रष्टव्यम् ॥ २० ॥

आ० भा०—न च कामसंकल्पाभावेनालम्। असंगं स्नेहं च त्यक्त्वा ज्ञानस्वरूपमाह—पुनर्नित्यतृप्त इति। नित्यतृप्तनिराश्रयेश्वरसरूपोऽस्मीति तथाविधः॥ २०॥

आ० ज०—यस्य सर्वे समारंभाः कामसंकल्पवर्जिता इत्यनेन यदुक्तं तदेव त्यक्त्वा कर्मफलासंगमित्यनेनोच्यते। संकल्पो हि कर्मासंगः कामश्च फलासंग इत्यतः संगतिपूर्वमन्यथा व्याचष्टे—न चेति। नैतावता कर्मस्वरूपं संपूर्णमित्यर्थः। किं तर्हि। त्यध्याहारः। ननु नित्यतृप्तो निराश्रय इति साध्योऽर्थः कथं साधने निवेश्यत इत्यत आह—ज्ञानेति। कर्मण्यकर्मेत्यपेक्षया—पुनरिति। मिथ्याज्ञानमेतदित्यतोऽभिप्रायमाह—नित्येति। इति हेतोरहमपि तथाविधः किं त्वविद्यया तथा न प्रतीयत इति जानान्नित्यर्थः॥ २०॥

रा० भा०—एतदेव विवृणोति। कर्मफलासङ्गं त्यक्त्वा नित्यतृप्तो नित्ये स्वात्मन्येव तृप्तः निराश्रयः अस्थिरप्रकृतावाश्रयबुद्धिरहितो यः कर्माणि करोति। स कर्मण्याभिमुख्येन प्रवृत्तोऽपि नैव किंचित्कर्म करोति कर्मापदेशेन ज्ञानाभ्यासमेव करोतीत्यर्थः॥ २०॥

अ० टी०—ननु फलेच्छारहितस्त्वत्सेवां विहाय किमिति कर्म करोतीत्याशङ्क्याह—त्यक्त्वेति। यो नित्यतृप्तो मन्निष्ठया नित्यं तृप्तः पूर्णः कर्मफलासंगं त्यक्त्वा कर्मफलेच्छासक्तिं त्यक्त्वा निराश्रयः कर्मजनिताऽदृष्टाद्याश्रयरहितः कर्मणि मदाज्ञात्वेन अभिप्रवृत्तः सोऽपि नैव किंचित्करोति। मदाज्ञारूपत्वात्तस्य तत्कर्म मोक्षे स्वफलभोगादिना बन्धकं न भवतीत्यर्थः॥ २०॥

नी० टी०—ननु प्रायश्चित्तेनेव ज्ञानाग्निना पूर्वकर्मदाहेपि क्रियमाणं तत्फलाय भवेदित्यत आह—त्यक्त्वेति। आत्मलाभेन नित्यतृप्तत्वात् फलासंगं त्यक्त्वा निराश्रयत्वात् अहंकाराद्याश्रयेण हि कर्म क्रियते निराश्रयो निरहंकारो यस्मात् ततः कर्मसंगं अहं करोमीत्यभिमानं च त्यक्त्वा कर्मणि लौकिके वैदिके वा अभितः सर्वांगोपसंहारेण प्रवृत्तोऽपि स नैव किंचित्करोति अतोऽस्य क्रियमाणमपि कर्म न फलाय प्रभवतीत्यर्थः॥ २०॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः॥
शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम्॥ २१॥

शां० भा०—यः पुनः पूर्वोक्तविपरीतः प्रागेव कर्मारम्भाद्ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये संजातात्मदर्शनः स दृष्टादृष्टेष्टविषयाशीर्विवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनमपश्यन्ससाधनं कर्म संन्यस्य शरीरयात्रामात्रचेष्टो यतिर्ज्ञाननिष्ठो मुच्यत इत्येतमर्थं दर्शयितुमाह—निरिति। निराशीर्निर्गता आशिषो यस्मात्स निराशीः, यतचित्तात्मा चित्तमन्तःकरणमात्मा बाह्यः कार्यकरणसंघातस्तावुभावपि यतौ संयतौ येन स यतचित्तात्मा, त्यक्तसर्वपरिग्रहस्त्यक्तः सर्वः परिग्रहो येन स त्यक्तसर्वपरिग्रहः, शारीरं शरीरस्थितिमात्रप्रयोजनं केवलं तत्राप्यभिमानवर्जितं कर्म कुर्वन्नाऽऽप्नोति न प्राप्नोति किल्बिषमनिष्टरूपं पापं धर्मं च। धर्मोऽपि मुमुक्षोः किल्बिषमेव बन्धापादकत्वात्। किंच शारीरं केवलं कर्मेत्यत्र किं शरीरनिर्वर्त्यं शारीरं कर्माभिप्रेतमाहोस्विच्छरीरस्थितिमात्रप्रयोजनं शारीरं कर्मेति। किंचातो यदि शरीरनिर्वर्त्यं शारीरं कर्म यदि वा शरीरस्थितिमात्रप्रयोजनं शारीरमिति। उच्यते—यदा शरीरनिर्वर्त्यं कर्म शारीरमभिप्रेतं स्यात्तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कुर्वन्नाऽऽप्नोति किल्बिषमिति ब्रुवतो विरुद्धाभिधानं प्रसज्येत।

**शां० आ०**—सत्यपि विक्षेपके कर्मणि कूटस्थात्मानुसंधानस्य सिद्धे कैवल्यहेतुत्वे विक्षेपाभावे सुतरां तस्य तद्धेतुत्वसिद्धिरित्यभिप्रेत्याऽऽह—**यः पुनरिति** । पूर्वोक्तविपरीतत्वं लोकसंग्रहादिनिरपेक्षत्वम् । तदेव वैपरीत्यं स्फोरयति—**प्रागेवेति** । ससाधनसर्वकर्मसंन्यासे शरीरस्थितिरपि कथमित्याशङ्क्याऽऽह—**शरीरेति** । तर्हि तथाविधचेष्टानिविष्टचेतस्तया सम्यग्ज्ञानबहिर्मुखस्य कुतो मुक्तिरित्याशङ्क्य यथोपदिष्टचेष्टायामनादरान्नैवमित्याह—**ज्ञाननिष्ठ इति** । इति दर्शयितुमिमं श्लोकमाहेति पूर्ववत् । आशिषः प्रार्थनाभेदास्तृष्णाविशेषाः । आशिषां विदुषो निर्गतत्वे हेतुमाह—**यतेति** । चित्तवदात्मनः संयमनं कथमित्याशङ्क्याऽऽह—**आत्मा बाह्य इति** । द्वयोः संयमने सति सिद्धमर्थमाह—**त्यक्तेति** । सर्वपरिग्रहपरित्यागे देहस्थितिरपि दुःस्था स्यादित्याशङ्क्याऽऽह—**शारीरमिति** । मात्रशब्देन पौनरुक्त्यादनर्थकं केवलपदमित्याशङ्क्याऽऽह—**तत्रापीति** । शारीरं केवलमित्यादौ शारीरपदार्थं स्फुटीकर्तुमुभयथा संभावनया विकल्पयति—**शारीरमिति** । शरीरनिर्वर्त्यं शारीरमित्यस्मिन्पक्षे किं दूषणं शरीरस्थित्यर्थं शारीरमित्यस्मिन्वा पक्षे किं फलमिति पूर्ववादी पृच्छति—**किंचात इति** । शरीरनिर्वर्त्यं शारीरमित्यस्मिन्पक्षे सिद्धान्ती दूषणमाह—**उच्यत इति** । शरीरेण यन्निर्वर्त्यं तत्किं प्रतिषिद्धं विहितं वा, प्रथमे विरोधः स्यादित्याह—**यदेति** । प्रतिषिद्धाचरणेऽपि नानिष्टप्राप्तिरित्युक्ते प्रतिषेधशास्त्रविरोधः स्यादित्यर्थः ।

**शां० भा०—शास्त्रीयं च कर्म दृष्टादृष्टप्रयोजनं शरीरेण कुर्वन्नाऽऽप्नोति किल्बिषमित्यपि ब्रुवतोऽप्राप्तप्रतिषेधप्रसङ्गः । शारीरं कर्म कुर्वन्निति विशेषणात्केवलशब्दप्रयोगाच्च वाङ्मनसनिर्वर्त्यं कर्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन्प्राप्नोति किल्बिषमित्युक्तं स्यात् । तत्रापि वाङ्मनसाभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धमापद्येत । प्रतिषिद्धसेवापक्षेऽपि भूतार्थानुवादमात्रमनर्थकं स्यात् । यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्माभिप्रेतं भवेत्तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधगम्यं शरीरवाङ्मनसनिर्वर्त्यमन्यदकुर्वंस्तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगादहं करोमीत्यभिमानवर्जितः शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्वन्नाऽऽप्नोति किल्बिषम् । एवंभूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसंभवात्किल्बिषं संसारं नाऽऽप्नोति ज्ञानाग्निदग्धसर्वकर्मत्वादप्रतिबन्धेन मुच्यत एवेति पूर्वोक्तसम्यग्दर्शनफलानुवाद एवैषः । एवं शारीरं केवलं कर्मेत्यस्यार्थस्य परिग्रहे निरवद्यं भवति ॥ २१ ॥**

**शां० आ०**—द्वितीये विहितकरणे सत्यनिष्टप्राप्त्यभावादप्राप्तप्रतिषेधः स्यादित्याह—**शास्त्रीयं चेति** । दृष्टप्रयोजनं कारीर्यादिकं कर्मादृष्टप्रयोजनं स्वर्गसाधनं ज्योतिष्टोमादिकं कर्मेति विभागः । शरीरनिर्वर्त्यं कर्म शारीरमभिमतमिति पक्षे दूषणान्तरमाह—**शारीरमिति** । वाचा मनसा वा कर्मणोऽनुष्ठाने संन्यासिनो भवत्येव किल्बिषप्राप्तिरित्याशङ्क्याऽऽह—**तत्रापीति** । वाङ्मनसाभ्यां विहितानुष्ठाने वा प्रतिषिद्धकरणे वा किल्बिषप्राप्तिः संन्यासिनः स्यादिति विकल्प्याऽऽद्ये जपध्यानविधिविरोधः स्यादित्युक्त्वा द्वितीयं दूषयति—**प्रतिषिद्धेति** । शरीरनिर्वर्त्यं कर्म शारीरमिति पक्षमेवं प्रतिक्षिप्य द्वितीयपक्षे लाभं दर्शयति—**यदा त्विति** । अन्यद्देहस्थितिप्रयोजनात्कर्मणः सकाशादिति शेषः । तत्रापि विदुषः स्वदृष्ट्या न प्रवृत्तिरिति सूचयति—**लोकेति** । विद्वानुक्तया रीत्या वर्तमानो नाऽऽप्नोति किल्बिषमित्यत्र विवक्षितमर्थमाह—**एवंभूतस्येति** । विधिनिषेधगम्यं कर्म देहस्थितिहेतुव्यतिरिक्तमकुर्वत इत्यर्थः । शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषमित्यस्योक्तेन प्रकारेण परिग्रहे शारीरं केवलमिति विशेषणद्वयं निर्दोषं सिध्यतीति फलितमाह—**एवमिति**॥ २१ ॥

**आ० भा०—कामादित्यागोपायमाह—निराशीरिति । यतचित्तात्मा भूत्वा निराशीरित्यर्थः । आत्मा मनः परिग्रहत्यागोऽनभिमानम् । नैव किंचित्करोतीत्यस्याभिप्रायमाह—नाप्नोति किल्बिषमिति ॥ २१ ॥**

**आ० ज०**—कामादिवर्जितत्वमेव निराशीरित्यनेनोच्यत इत्यत आह—**कामेति** । आदिपदेन संकल्पादिपरिग्रहः । कथमित्यतो योजयति—**यतेति** । निराशीः त्यक्तसर्वपरिग्रहश्च भवतीति शेषः । सेंद्रियं शरीरमात्मेत्यसत् अंतःकरणवृत्तेः नियमेनैवैतन्नियमसिद्धेरिति भावेनाह—**आत्मेति** । ननु परिग्रहो देहादिस्तत्त्यागः कथं साधकस्येत्यत आह—**परिग्रहेति** । **अनभिमानमिति** । स्थितिरित्यादिक्रियाविशेषणम् । अर्थाभावेऽव्ययीभावो वाऽयम् । अभिमानाभाव इत्यर्थः । पूर्वश्लोके कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोतीति कर्मणां मिथ्यात्वज्ञानादिति व्याख्यानमसत् । अत्र श्लोके अन्यथा तदभिप्रायस्य वर्णितत्वादिति भावेनाह—**नैवेति** । गौण्या वृत्त्यैतदभिप्रायकथनमवधेयम् ॥ २१ ॥

रा० भा०—पुनरपि कर्मणो ज्ञानाकारतैव विशोध्यते । निराशीः निर्गतफलाभिसन्धिः यतचित्तात्मा यतचित्तमनाः त्यक्तसर्वपरिग्रहः आत्मैकप्रयोजनतया प्रकृतिप्राकृतवस्तुनि ममतारहितो यावज्जीवं केवलं शारीरमेव कर्म कुर्वन्किल्बिषं संसारं नाप्नोति । ज्ञाननिष्ठाव्यवधानरहितकेवलकर्मयोगेनैवंरूपेणात्मानं पश्यतीत्यर्थः ॥ २१ ॥

अ० टी०—नन्वेवमपि कर्मादिमन्त्वेपूत्कृष्टबुद्ध्या कर्म बन्धकं भवेदेवेति चेत्तत्राह—निराशीरिति। निराशीः निस्पृहः । यतचित्तात्मा वशीकृतेन्द्रियदेहः । त्यक्तसर्वपरिग्रहः त्यक्तः सर्वपरिग्रहः पशुपुत्रादिर्येन । सर्वशब्देन दैहिकोऽपि सुखरूप उच्यते । एतादृशः सन् केवलशारीरं कर्म कुर्वन् ब्राह्मणादिदेहत्वात् फलाभावेन मलमूत्रादिशारीरकर्मवद्भगवन्नामादिग्रहणं शुद्धयर्थं कुर्वन् किल्बिषं बन्धं नाप्नोति ॥२१॥

नी० टी०—नन्वेतस्माद्गौणात्कर्मकरणादकरणं मुख्यमेव तद्वरमित्याशंक्य गृहस्थस्य तत्प्रत्यवायावहमिति व्यतिरेकमुखेनाह—निराशीरिति। यो निष्परिग्रहः स्त्र्यादिपरिग्रहरहितः संन्यासी स चेन्निराशीर्योगैश्वर्यमप्यनिच्छन् यतं चित्तं बुद्धिः आत्मा च देहेंद्रियसंघातो येन स यतचित्तात्मा । समाधिकाले निरुद्धबाह्याभ्यंतरवृत्तिरित्यर्थः । स व्युत्थानकाले शारीरं शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादि तदपि केवलं कर्तृत्वाभिमानशून्यं पराध्यारोपितकर्तृत्वेन कुर्वन्नपि किल्बिषं यावज्जीवमग्निहोत्रं जुहुयादिति यावज्जीवाधिकारचोदिताग्निहोत्राद्यकरणजं प्रत्यवायं नाप्नोति विधितस्तेषां त्यागात् यस्तु सपरिग्रहः स निराशीरपि यतचित्तात्माऽपि केवलमपि शारीरं कर्म कुर्वन् विहिताकरणात्किल्बिषं प्राप्नोत्येवेत्यर्थः ॥ २१ ॥

**यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः ॥**
**समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ २२ ॥**

शां० भा०—त्यक्तसर्वपरिग्रहस्य यतेरन्नादेः शरीरस्थितिहेतोः परिग्रहस्याभावाद्याचनादिना शरीरस्थितौ कर्तव्यतायां प्राप्तायाम् 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' इत्यादिना वचनेनानुज्ञातं यतेः शरीरस्थितिहेतोरन्नादेः प्राप्तिद्वारमाविष्कुर्वन्नाह—यदृच्छेति । यदृच्छालाभसंतुष्टोऽप्रार्थितोपनतो लाभो यदृच्छालाभस्तेन संतुष्टः संजातालंप्रत्ययो द्वंद्वातीतो द्वंद्वैः शीतोष्णादिभिर्हन्यमानोऽप्यविषण्णचित्तो द्वंद्वातीत उच्यते । विमत्सरो विगतमत्सरो निर्वैरबुद्धिः समस्तुल्यो यदृच्छालाभस्य सिद्धावसिद्धौ च । य एवंभूतो यतिरन्नादेः शरीरस्थितिहेतोर्लाभालाभयोः समो हर्षविषादवर्जितः कर्मादावकर्मादिदर्शी यथाभूतात्मदर्शननिष्ठः शरीरस्थितिमात्रप्रयोजने भिक्षाटनादिकर्मणि शरीरादिनिर्वर्त्ये नैव किंचित्करोम्यहं 'गुणा गुणेषु वर्तन्ते' इत्येवं सदा संपरिचक्षाण आत्मनः कर्तृत्वाभावं पश्यन्नेव किंचिद्भिक्षाटनादिकं कर्म करोति । लोकव्यवहारसामान्यदर्शनेन तु लौकिकैरारोपितकर्तृत्वे भिक्षाटनादौ कर्मणि कर्ता भवति । स्वानुभवेन तु शास्त्रप्रमाणादिजनितेनाकर्तैव । स एवं पराध्यारोपितकर्तृत्वं शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकं कर्म कृत्वाऽपि न निबध्यते बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निना दग्धत्वादित्युक्तानुवाद एवैषः ॥ २२ ॥

शां० आ०—पूर्वश्लोकेन संगतिं दर्शयन्नुत्तरश्लोकमुत्थापयाति—त्यक्तेति । अन्नादेरित्यादिशब्देन पादुकाच्छादनादि गृह्यते। याचनादिनेत्यादिपदेन सेवाकृष्याद्युपादीयते । भिक्षाटनार्थमुद्योगात्प्राक्काले केनापि योग्येन निवेदितं भैक्षमयाचितम् । अभिशस्तं पतितं च वर्जयित्वा संकल्पमन्तरेण पञ्चभ्यः सप्तभ्यो वा गृहेभ्यः समानीतं भैक्षमसंक्लृप्तम् । सिद्धमन्नं भक्तजनैः

स्वसमीपमुपनीतमुपपन्नम् । यदृच्छया स्वकीयप्रयत्नव्यतिरेकेणेति यावत् । आदिशब्देन—'माधुकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ॥ तात्कालिकोपपन्नं च भैक्षं पञ्चविधं स्मृतम् ' इत्यादि गृह्यते । आविष्कुर्वन्निदं वाक्यमाहेति योजनीयम् । परोत्कर्षामर्षपूर्विका स्वस्योत्कर्षाभिवाञ्छा विगता यस्मादिति व्युत्पत्तिमाश्रित्य विवक्षितमर्थमाह—**निर्वैरेति** । संक्षेपतो दर्शितमर्थं विशदयति—**य एवंभूत इति** । तथाऽपि प्रकृतस्य यतेर्भिक्षाटनादौ कर्तृत्वं प्रतिभाति तदभावे भिक्षाटनाद्यभावेन जीवनाभावप्रसङ्गादित्याशङ्क्याऽऽह—**लोकेति** । लौकिकैरविवेकिभिः सह व्यवहारस्य स्नानाचमनभोजनादिलक्षणस्य विदुष्यपि सामान्येन दर्शनात्तदनुसारेण लौकिकैरध्यारोपितकर्तृत्वभाक्त्वाद्विद्वानपि लोकदृष्ट्या भिक्षाटनादौ कर्तृत्वमनुभवतीत्यर्थः । कथं तर्हि तस्याकर्तृत्वं तत्राऽऽह—**स्वानुभवेनेति** । यदृच्छेत्यादिपादत्रयं व्याख्याय कृत्वाऽपीत्यादिचतुर्थपादं व्याचष्टे—**स एवमिति** । भिक्षाटनादिना प्रातिभासिकेन कर्मणा विदुषो बद्धत्वाभावेऽपि कर्मान्तरेण निबद्धत्वं भविष्यतीत्याशङ्क्याऽऽह—**बन्धेति** । ज्ञानाग्निदग्धत्वादित्येवं शारीरं केवलमित्यादावुक्तस्यायमनुवाद इति योजना । यथोक्तस्य कर्मणो मुक्त्या सहाविरोधाभ्युपगमसूचनार्थोऽपिशब्दः ॥ २२ ॥

**आ० भा०—यतचित्तात्मनो लक्षणमाह—यदृच्छालाभेति । कथं द्वंद्वातीतत्वमिति आह—समः सिद्धाविति ॥ २२ ॥**

आ० ज०—कामादिवर्जने यदृच्छालाभसंतुष्टत्वादिकमर्थात्सिद्धम् तात्किमर्थमुच्यत इत्यत आह—**यतेति** । द्वंद्वातीत इत्युक्तमेव समः सिद्धावसिद्धौ चेत्यनेनोच्यत इत्यत आह—**कथमिति** । किं प्रकारकमित्यर्थः । इति जिज्ञासायामिति शेषः । व्याख्यानव्याख्येयत्वेन न पुनरुक्तिदोष इत्यर्थः ॥ २२ ॥

**रा० भा०—यदृच्छोपनतशरीरधारणहेतुवस्तुसंतुष्टः द्वन्द्वातीतः यावत्साधनसमाप्त्यवर्जनीयशीतोष्णादिसहः विमत्सरः अनिष्टोपनिपातहेतुभूतस्वकर्मनिरूपणेन परेषु विगतमत्सरः समः सिद्धावसिद्धौ च युद्धादिकर्मसु जयादिसिद्ध्यसिद्ध्योः समचित्तः कर्मैव कृत्वापि ज्ञाननिष्ठां विनापि न निबद्ध्यते न संसारं प्रतिपद्यते ॥ २२ ॥**

अ० टी०—अथ उत्कृष्टज्ञानेऽपि फलेच्छारहितं कर्म न बन्धकमित्याह—**यदृच्छेति** । यदृच्छालाभसंतुष्टः भगवदिच्छालाभसंतुष्टः द्वन्द्वातीतः सुखदुःखसमः विमत्सरः दुष्टवचनजक्षोभादिरहितः सिद्धौ यथोक्तकर्मसिद्धौ फलोन्मुखत्वादानन्दरहितः । च पुनः असिद्धौ फलोन्मुखत्वाद्दुःखरहितः समः कर्म कृत्वाऽपि तेन कर्मणा न निबद्ध्यते ॥ २२ ॥

नी० टी०—ननु सपरिग्रहः कुटुंबभरणव्यग्रतया कथं वित्तव्ययायाससाध्यान्यग्निहोत्रादीन्यनुतिष्ठेदित्याशंक्याह—**यदृच्छेति** । यदृच्छया अप्रार्थितोपनतो लाभो यदृच्छालाभस्तेन संतुष्टः । तथाहि । ऋतामृताभ्यां जीवनं ब्राह्मणस्य विधाय व्याख्यातं । 'ऋतमुंछशिलं प्रोक्तममृतं स्यादयाचितम्' इति द्वंद्वातीतः बहुलाभेऽलाभे वा सुखदुःखाद्यतीतः विमत्सरः परस्य लाभं दृष्ट्वा संतापहीनः समः यदृच्छालाभेनैवेष्टिपशुचातुर्मास्यादेर्नित्यकर्मणः सिद्धौ असिद्धौ वा समो निर्विकार एवंभूत इष्ट्यादीनि कृत्वाऽपि तत्फलेन स्वर्गादिना न निबध्यते । अपिशब्दात्तज्जेन प्रत्यवायेन न निबध्यते बंधहेतोः कर्मणस्तत्त्वज्ञानेनैव दाहात् । तथा च स्मृतिः । 'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ॥ श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते' इति । भाष्ये त्वयं श्लोकः संन्यासिपरत्वेनैव व्याख्यातः ॥ २२ ॥

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ॥
यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

**शां० भा०—त्यक्त्वा कर्मफलासङ्गमित्यनेन श्लोकेन यः प्रारब्धकर्मा सन्यदा निष्क्रियब्रह्मात्मदर्शनसंपन्नः स्यात्तदा तस्याऽऽत्मनः कर्तृकर्मप्रयोजनाभावदर्शिनः कर्मपरित्यागे प्राप्ते कुतश्चिन्नि-**

मित्तात्तदसंभवे सति पूर्ववत्तस्मिन्कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति स इति कर्माभावः प्रदर्शितः । यस्यैवं कर्माभावो दर्शितस्तस्यैव—गतसङ्गस्य सर्वतो निवृत्तासक्तेर्मुक्तस्य निवृत्तधर्माधर्मादिबन्धनस्य ज्ञानावस्थितचेतसो ज्ञान एवावस्थितं चेतो यस्य सोऽयं ज्ञानावस्थितचेतास्तस्य यज्ञाय यज्ञनिर्वृत्त्यर्थमाचरतो निर्वर्तयतः कर्म समग्रं सहाग्रेण फलेन वर्तत इति समग्रं कर्म तत्समग्रं प्रविलीयते विनश्यतीत्यर्थः ॥ २३ ॥

**शां० आ०**—गतसङ्गस्येत्यादिश्लोकस्य व्यवहितेन संबन्धं वक्तुं वृत्तं कीर्तयति—**त्यक्त्वेति** । अनेन श्लोकेन 'नैव किंचित्करोति सः' इत्यत्र कर्माभावः प्रदर्शित इति संबन्धः। कस्य कर्माभावप्रदर्शनमित्याशङ्क्याऽऽह—**यः प्रारब्धेति** । प्रारब्धकर्मा सन्योऽवतिष्ठते तस्य कर्माभावः प्रदर्शितश्चेद्विरोधः स्यादित्याशङ्क्यावस्थाविशेषे तत्प्रदर्शनान्मैवमित्याह—**यदेति** । ननु ज्ञानवतः क्रियाकारकफलाभावदर्शिनः कर्मपरित्यागध्रौव्यात्कर्माभाववचनमप्राप्तप्रतिषेधः स्यादित्याशङ्क्याऽऽह—**आत्मन इति** । लोकसंग्रहादिनिमित्तं प्रागेवोक्तम् । अविद्यावस्थायामिवेति पूर्ववदित्युक्तम् । एवं वृत्तमनूद्योत्तरश्लोकमवतारयति—**यस्येति** । यथोक्तस्यापि विद्यावतो मुक्तस्य भगवत्प्रीत्यर्थं कर्मानुष्ठानोपलम्भात्ततो बन्धारम्भः संभाव्येतेत्याशङ्क्याऽऽह—**यज्ञायेति** । धर्माधर्मादीत्यादिशब्देन रागद्वेषादिसंग्रहः, तस्य बन्धनत्वं करणव्युत्पत्त्या प्रतिपत्तव्यम् । यज्ञनिर्वृत्त्यर्थं यज्ञशब्दितस्य भगवतो विष्णोर्नारायणस्य प्रीतिसंपत्त्यर्थमिति यावत् । ज्ञानमेव वाञ्छतो ज्ञानस्य प्रतिबन्धकं कर्म परिशङ्कितं परिहरति—**कर्मेति** । समग्रेत्यङ्गीकृत्य व्याचष्टे—**सहेत्यादिना** ॥ २३ ॥

**आ० भा०**—उपसंहरति—गतसंगस्येति । गतसंगस्य फलस्नेहरहितस्य मुक्तस्य शरीराद्यनभिमानिनः । ज्ञानावस्थितचेतसः । परमेश्वरज्ञानिनः ॥ २३ ॥

**आ० ज०**—यदुक्तं कामादिवर्जनं तदेव गतसंगस्येत्यनेनोच्यते । त्यक्तसर्वपरिग्रह इत्येतन्मुक्तस्येत्यनेन कर्मणीति नित्यतृप्त इति च ज्ञानावस्थितचेतस इत्यनेन । अतः पुनरुक्तिरित्यत आह—**उपसंहरतीति** । विक्षिप्तं पिंडीकरोतीत्यर्थः । गतसंगस्येति विषयसापेक्षम् । अतस्तत्प्रदर्शनेन व्याख्याति—**गतेति** । मुक्तस्यैतत्साधके घटयाति—**मुक्तस्येति** । अनेनाभिमानान्मुक्तस्येति वा मुक्तसदृशस्येति वा व्याख्यातं भवति । ज्ञानस्य विषयसापेक्षत्वात् तं प्रदर्शयन् व्याचष्टे—**ज्ञानेति** । आत्मज्ञानस्याप्युपलक्षणमेतत् ॥ २३ ॥

**रा० भा०**—आत्मविषयज्ञानावस्थितमनस्तेन विगततदितरसङ्गस्य तत एव निखिलपरिग्रहविमुक्तस्योक्तलक्षणयज्ञादिकर्मनिवृत्तये वर्तमानस्य पुरुषस्य बन्धहेतुभूतं प्राचीनं कर्म समग्रं प्रविलीयते निःशेषं क्षीयते ॥ २३ ॥

**अ० टी०**—ननु कृतं कर्म फलभोगाभावे कथं नश्यतीत्याशङ्कायामाह—**गतसंगस्येति** । गतसंगस्य त्यक्तलौकिकपरिग्रहादेः मुक्तस्य कर्मफलैर्मुक्तस्य ज्ञानावस्थितचेतसः ज्ञानेन भगवति सुस्थिराचित्तस्य यज्ञाय विष्णवे भगवदर्पणबुद्ध्या कर्म आचारतः कुर्वतः समग्रं फलसहितं कर्म प्रविलीयते ईश्वरप्रातिरूपे लीनं भवतीत्यर्थः । यद्वा यज्ञाय लोकशिक्षणार्थं मदाज्ञयाऽग्रे यज्ञप्रवृत्त्यर्थमाचरतः समग्रं सफलं कर्म प्रविलीयते । यज्ञप्रवृत्तावेव लीनं भवतीत्यर्थः ॥ २३ ॥

**नी० टी०**—त्यक्त्वा कर्मफलासंगमित्यादिना श्लोकत्रयेण विद्वान् कर्माणि कुर्वन्नपि न करोति अतो न लिप्यते लेपाभावाच्च न बध्यत इत्युक्तं । तत्किं कर्मणां फलदानशक्तिप्रतिबंधो वा ज्ञानेन क्रियते उत निरन्वयोच्छेद एवेत्याशंक्याद्ये मुक्तस्यापि पुनः संसारप्रसक्तिं पश्यन् द्वितीयमभ्युपगच्छति—**गतसंगस्येति**। यतो विद्वान् गतसंगः कर्तृत्वाभिमानशून्योऽतो न करोतीत्युक्तं । यतो मुक्तः फलकामनामुक्तः अतो न लिप्यत

इत्युक्तं यतो यज्ञायैव यज्ञेश्वरप्रीत्यर्थमेवाचरति न फलांतरार्थं प्राप्याभावात् अतस्तामेवोत्पाद्य कृतार्थैः कर्मभिर्न बध्यत इत्युक्तं। यतोऽयं ज्ञाने सम्यग्दर्शनेऽवस्थितचेताः प्रतिष्ठितप्रज्ञः अत ईश्वरप्रीतिफलस्य ज्ञाननिष्ठाप्राप्तिरूपस्यापि प्रागेव लाभात् अस्य गतसंगस्य मुक्तस्य यज्ञाय कर्माचरतो ज्ञानावस्थितस्य सर्वं कर्म क्रियमाणादिकं सर्वप्रकारेण निष्प्रयोजनं सत्समग्रं अग्रेण फलेन वासनया वा सह समग्रं प्रकर्षेण निरन्वयं विलीयते नश्यत्यतो न कदाचिदपि प्रादुर्भवति। अयं च क्रियमाणकर्मप्रलयो विद्वद्दृष्ट्यैव स्वाभाविकस्य तेषां फलजननसामर्थ्यस्य वह्न्यौष्ण्ययवदप्रत्याख्येयत्वात्। अत एव ज्ञानेन पूर्वकर्मणां दाह उत्तरेषामश्लेषश्च श्रूयते न तूत्तरेषामपि दाहः। "तद्यथैषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति। "तं विदित्वा न कर्मणा लिप्यते पापकेन" इति च। "तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषंतः पापकृत्याम्" इति। विदुषो धनस्येव कर्मणामप्यन्यत्र गमनदर्शनान्न तेषां वस्तुवृत्त्या प्रलयोऽस्तीति ध्येयम् ॥ २३ ॥

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

**शां० भा०—कस्मात्पुनः कारणात्क्रियमाणं कर्म स्वकार्यारम्भमकुर्वत्समग्रं प्रविलीयत इत्युच्यते यतः—ब्रह्मेति। ब्रह्मार्पणं येन करणेन ब्रह्मविद्धविरग्नावर्पयति तद्ब्रह्मैवेति पश्यति तस्याऽऽत्मव्यतिरेकेणाभावं पश्यति यथा शुक्तिकायां रजताभावं पश्यति तदुच्यते ब्रह्मैवार्पणमिति। यथा यद्रजतं तच्छुक्तिकैवेति। ब्रह्म, अर्पणमित्यसमस्ते पदे।**

शां० आ०—'नाभुक्तं क्षीयते कर्म' इति स्मृतिमाश्रित्य शङ्कते—**कस्मादिति**। समस्तस्य क्रियाकारकफलात्मकस्य द्वैतस्य ब्रह्ममात्रत्वेन बाधितत्वाद्ब्रह्मविदो ब्रह्ममात्रस्य कर्म प्रविलीयते सर्वमिति युक्तमित्याह—**उच्यत इति**। ब्रह्मविदो ब्रह्मैव सर्वं क्रियाकारकफलजातं द्वैतमित्यत्र हेतुत्वेनानन्तरश्लोकमवतारयति—**यत इति**। अर्पणशब्दस्य करणविषयत्वं दर्शयन्नर्पणं ब्रह्मेति पदद्वयपक्षे सामानाधिकरण्यं साधयति—**येनेति**। यद्रजतं सा शुक्तिरितिवद्बाधायामिदं सामानाधिकरण्यमित्याह—**तस्येति**। तत्र दृष्टान्तमाह—**यथेति**। उक्तेऽर्थे पदद्वयमवतारयाति—**तदुच्यत इति**। उक्तमेवार्थं स्पष्टयाति—**यथा यदिति**। समासशङ्कां व्यावर्तयाति—**ब्रह्मेति**।

**शां० भा०—यदर्पणबुद्ध्या गृह्यते लोके तदस्य ब्रह्मविदो ब्रह्मैवेत्यर्थः। ब्रह्म हविस्तथा यद्धविर्बुद्ध्या गृह्यमाणं तद्ब्रह्मैवास्य। तथा ब्रह्माग्नाविति समस्तं पदम्। अग्निरपि ब्रह्मैव यत्र हूयते ब्रह्मणा कर्त्रा ब्रह्मैव कर्तेत्यर्थः। यत्तेन हुतं हवनक्रिया तद्ब्रह्मैव। यत्तेन गन्तव्यं फलं तदपि ब्रह्मैव। ब्रह्मकर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म तस्मिन्समाधिर्यस्य स ब्रह्मकर्मसमाधिस्तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यम्। एवं लोकसंग्रहं चिकीर्षुणाऽपि क्रियमाणं कर्म परमार्थतोऽकर्म ब्रह्मबुद्ध्युपमृदितत्वात्। एवं सति निवृत्तकर्मणोऽपि सर्वकर्मसंन्यासिनः सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसंपादनं ज्ञानस्य सुतरामुपपद्यते यदर्पणाद्यधियज्ञे प्रसिद्धं तदस्याध्यात्मं ब्रह्मैव परमार्थदर्शिन इति। अन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात्। तस्माद्ब्रह्मैवेदं सर्वमित्यभिजानतो विदुषः सर्वकर्माभावः। कारकबुद्ध्यभावाच्च। नहि कारकबुद्धिरहितं यज्ञाख्यं कर्म दृष्टम्। सर्वमेवाग्निहोत्रादिकं कर्म शब्दसमर्पितदेवताविशेषसंप्रदानादिकारकबुद्धिमत्कर्त्रभिमानफलाभिसंधिमच्च दृष्टं नोपमृदितक्रियाकारकफलभेदबुद्धिमत्कर्तृत्वाभिमानफलाभिसंधिरहितं वा। इदं तु ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धि कर्मातोऽकर्मैव तत्।**

**शां० आ०**—पदद्वयपक्षे विवक्षितमर्थं कथयति—**यदर्पणेति**। ब्रह्म हविरिति पदद्वयमवतार्य व्याचष्टे—**ब्रह्मेत्यादिना।** यदर्पणबुद्ध्या गृह्यते तद्ब्रह्मविदो ब्रह्मैवेति यथोक्तं तथेहापीत्याह—**तथेति**। अस्येति षष्ठी ब्रह्मविदमधिकरोति। पूर्ववदसमासमाशङ्क्य व्यावर्तयन्पदान्तरमवतार्य व्याकरोति—**तथेति**। प्रागुक्तासमासवदिति व्यतिरेकः । तत्र विवक्षितमर्थमाह—**अग्नि-रपीति**। ब्रह्मणेति पदस्याभिमतमर्थमाह—**ब्रह्मणेति**। कर्त्रा हूयत इति संबन्धः। कर्ता ब्रह्मणः सकाशाद्व्यतिरिक्तो नास्तीत्येतदभिप्रेतमित्याह—**ब्रह्मैवेति**। हुतमित्यस्य विवक्षितमर्थमाह—**यत्तेनेति**। ब्रह्मैव तेनेत्यादिभागं विभजते—**ब्रह्मैवेत्यादिना।** ब्रह्मकर्मेत्याद्यवतार्य व्याकरोति—**ब्रह्मेति** । कर्मत्वं ब्रह्मणो ज्ञेयत्वात्प्राप्यत्वाच्च प्रतिपत्तव्यम् । एवं ब्रह्मार्पणमन्त्रस्याक्षरार्थमुक्त्वा तात्पर्यमाह—**एवमिति** । निवृत्तकर्माणं संन्यासिनं प्रति कथमस्य मन्त्रस्य प्रवृत्तिरित्याशङ्क्याऽऽह—**निवृत्तेति।** यथा बाह्ययज्ञानुष्ठानासमर्थस्याज्ञस्य संकल्पात्मकयज्ञो दृष्टस्तथा ज्ञानस्य यज्ञत्वसंपादनं स्तुत्यर्थं सुतरामुपपद्यते तेन स्तुतिलाभात्कल्पनायाः स्वाधीनत्वाच्चेत्यर्थः। ज्ञानस्य यज्ञत्वसंपादनमभिनयति—**यदर्पणादिति**। केन प्रमाणेनात्र यज्ञत्वसंपादनमवगतमित्याशङ्क्यार्पणादीनां विशेषतो ब्रह्मत्वाभिधानानुपपत्त्येत्याह—**अन्यथेति**। ज्ञानस्य यज्ञत्वे संपादिते फलितमाह—**तस्मादि-ति**। आत्मैवेदं सर्वमित्यात्मव्यतिरेकेण सर्वस्यावस्तुत्वं प्रतिपद्यमानस्य कर्माभावे हेत्वन्तरमाह—**कारकेति**। कारकबुद्धेस्तेष्वभिमानस्याभावेऽपि किमिति कर्म न स्यादित्याशङ्क्याऽऽह—**न हीति** । उक्तमेवान्वयव्यतिरेकाभ्यां द्रढयति—**सर्वमेवेति।** इन्द्रायेत्यादिना शब्देन समर्पितो देवताविशेषः संप्रदानकारकमादिशब्दाद्व्रीह्यादिकरणकारकं तद्विषयबुद्धिमत्कर्ताऽस्मीत्यभिमानपूर्वकं भोक्ष्ये फलमस्येति फलाभिसंधिमच्च कर्म दृष्टमिति योजना। अन्वयमुक्त्वा व्यतिरेकमाह—**नेत्यादिना**। उपमृदिता क्रियादिभेदविषया बुद्धिर्यस्य तत्कर्म तथा कर्तृत्वाभिमानपूर्वको भोक्ष्ये फलमस्येति योऽभिसंधिस्तेन रहितं च न कर्म दृष्टमित्यन्वयः। तथाऽपि ब्रह्मविदो भासमानकर्माभावे किमायातमित्याशङ्क्याऽऽह—**इदमिति**। यदिदं ब्रह्मविदो दृश्यमानं कर्म तदहमस्मि ब्रह्मेति बुद्ध्या निराकृतकारकादिभेदविषयबुद्धिमदतश्च कर्मैव न भवति तत्त्वज्ञाने सति व्यापकं कारकादि व्यावर्तमानं व्याप्य कर्मापि व्यावर्तयति तत्त्वविदः शरीरादिचेष्टा कर्माभासः कर्मव्यापकरहितत्वात्सुषुप्तचेष्टावदित्यर्थः।

**शां० भा०**—तथा च दर्शितं 'कर्मण्यकर्म यः पश्येत्' 'कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः' 'गुणा गुणेषु वर्तन्ते' 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यादिभिः। तथा च दर्शयंस्तत्र तत्र क्रियाकारकफलभेदबुद्ध्युपमर्दं करोति। दृष्टा च काम्याग्निहोत्रादौ कामोपमर्देन काम्याग्निहोत्रादिहानिः । तथा मतिपूर्वकामतिपूर्वकादीनां कर्मणां कार्यविशेषस्याऽऽरम्भकत्वं दृष्टम्। तथेहापि ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धेर्बाह्यचेष्टामात्रेण कर्मापि विदुषोऽकर्म संपद्यते। अत उक्तं समग्रं प्रविलीयत इति। अत्र केचिदाहुर्यद्ब्रह्म तदर्पणादीनि। ब्रह्मैव किलार्पणादिना पञ्चविधेन कारकात्मना व्यवस्थितं सत्तदेव कर्म करोति। तत्र नार्पणादिबुद्धिर्निवर्त्यते किंत्वर्पणादिषु ब्रह्मबुद्धिराधीयते। यथा प्रतिमादौ विष्ण्वादिबुद्धिर्यथा वा नामादौ ब्रह्मबुद्धिरिति। सत्यमेवमपि स्याद्यदि ज्ञानयज्ञस्तुत्यर्थं प्रकरणं न स्यात्। अत्र तु सम्यग्दर्शनं ज्ञानयज्ञशब्दितमनेकान्यज्ञशब्दितान्क्रियाविशेषानुपन्यस्य 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः' इति ज्ञानं स्तौति। अत्र च समर्थमिदं वचनं ब्रह्मार्पणमित्यादि ज्ञानस्य यज्ञत्वसंपादनेऽन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात्। ये त्वर्पणादिषु प्रतिमायां विष्णुदृष्टिवद्ब्रह्मदृष्टिः क्षिप्यते नामादिष्विव चेति ब्रुवते न तेषां ब्रह्मविद्योक्तेह विवक्षिता स्यादर्पणादिविषयत्वाज्ज्ञानस्य। न च दृष्टिसंपादनज्ञानेन मोक्षफलं प्राप्यते 'ब्रह्मैव तेन गन्तव्यम्' इति चोच्यते। विरुद्धं च सम्यग्दर्शनमन्तरेण मोक्षफलं प्राप्यत इति । प्रकृतविरोधश्च । सम्यग्दर्शनं च प्रकृतं 'कर्मण्यकर्म यः पश्येत्' इत्यत्रान्ते च सम्यग्दर्शनं तस्यैवोपसंहारात् । 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः' 'ज्ञानं लब्ध्वा परां शान्तिम्' इत्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन्नुपक्षीणोऽध्यायः। तत्राकस्मादर्पणादौ ब्रह्मदृष्टिरप्रकरणे प्रतिमायामिव विष्णुदृष्टिरुच्यत इत्यनुपपन्नम्। तस्माद्यथाव्याख्यातार्थ एवायं श्लोकः ॥ २४ ॥

शा० आ०—ज्ञानवतो दृश्यमानं कर्माकर्मैवेत्यत्र भगवदनुमतिमाह—**तथा चेति** । ब्रह्मविदो दृष्टं कर्म नास्तीत्युक्तेऽपि तत्कारणानुपमर्दात्पुनर्भविष्यतीत्याशङ्क्याऽऽह—**तथा च दर्शयन्निति** । अविद्वानिव विद्वानपि कर्मणि प्रवर्तमानो दृश्यते तथाऽपि तस्य कर्माकर्मैवेत्यत्र दृष्टान्तमाह—**दृष्टा चेति** । विद्वत्कर्मापि कर्मत्वाविशेषादितरकर्मवत्फलारम्भकमित्यपि शङ्का न युक्तेत्याह—**तथेति** । इदं कर्मैवं कर्तव्यमस्य च फलं भोक्तव्यमिति मतिस्तत्पूर्वकाण्यतत्पूर्वकाणि च कर्माणि तेषामवान्तरभेदसंग्रहार्थमादिपदम् । दार्ष्टान्तिकमाह—**तथेति** । सप्तम्या विद्वत्प्रकरणं परामृष्टं षष्ठ्यौ समानाधिकरणे । उक्तेऽर्थे पूर्ववाक्यमनुकूलयति—**अत इति** । ब्रह्मार्पणमन्त्रस्य व्याख्यानमुक्त्वा स्वयूथ्यव्याख्यानमनुवदति—**अत्रेति** । प्रसिद्धोद्देशेनाप्रसिद्धविधानस्य न्याय्यत्वादप्रसिद्धोद्देशेन प्रसिद्धविधानं कथमित्याशङ्क्याऽऽह—**ब्रह्मैवेति** । किलेत्यस्मिन्व्याख्याने सिद्धान्तिनोऽसंप्रतिपत्तिं सूचयति । कर्तृकर्मकरणसंप्रदानाधिकरणरूपेण पञ्चविधेन ब्रह्मैव व्यवस्थितं कर्म करोतीत्यङ्गीकारात्तदप्रसिद्ध्यभावात्तदनुवादेनार्पणादिष्वविरुद्धस्तद्दृष्टिविधिरित्यर्थः । दृष्टिविधिपक्षे सिद्धान्ताद्विशेषं दर्शयति—**तत्रेति** । अर्पणादिषु कर्तव्यां ब्रह्मबुद्धिं दृष्टान्ताभ्यां स्पष्टयति—**यथेत्यादिना** । दृष्टिविधाने विधेयदृष्टेर्मानसक्रियात्वेन सम्यग्ज्ञानत्वाभावात्प्रकरणभङ्गः स्यादित्यभिप्रेत्य परिहरति—**सत्यमेवमिति** । विधित्सितदृष्टिस्तुतिपरमेव प्रकरणं न ज्ञानस्तुतिपरमित्याशङ्क्य प्रकरणपर्यालोचनया ज्ञानस्तुतिरेवात्र प्रतिभातीति प्रतिपादयति—**अत्र त्विति** । किंच ब्रह्मार्पणमन्त्रस्यापि सम्यग्ज्ञानस्तुतौ सामर्थ्यं प्रतिभातीत्याह—**अत्र चेति** । नन्वर्पणादिषु ब्रह्मदृष्टिं कुर्वतामपि ब्रह्मविद्यैवात्र विवक्षितेति पक्षभेदासिद्धिरिति चेत्तत्राऽऽह—**ये त्विति** । यथा ब्रह्मदृष्ट्या नामादिकमुपास्यं तथाऽर्पणादिषु ब्रह्मदृष्टिकरणे सत्यर्पणादिकमेव प्राधान्येन ज्ञेयमिति ब्रह्मविद्या यथोक्तेन वाक्येन विवक्षिता न स्यादित्यर्थः । किंच ब्रह्मैव तेन गन्तव्यमिति ब्रह्मप्राप्तिफलाभिधानादपि दृष्टिविधानमश्लिष्टमित्याह—**न चेति** । न चार्पणाद्यालम्बना दृष्टिर्ब्रह्म प्रापयत्यप्रतीकालम्बनान्नयतीतिन्यायविरोधादिति भावः । दृष्टिविधानेऽपि नियोगबलादेव स्वर्गवददृष्टो मोक्षो भविष्यतीत्याशङ्क्याऽऽह—**विरुद्धं चेति** । ज्ञानादेव कैवल्यमुक्त्वा मार्गान्तरापवादिन्या श्रुत्या विरुद्धं मोक्षस्याविद्यानिवृत्तिलक्षणस्य दृष्टस्य नैयोगिकत्ववचनमित्यर्थः । दृष्टिनियोगान्मोक्षो भवतीत्येतत्प्रकरणविरुद्धं चेत्याह—**प्रकृतेति** । तदेव प्रपञ्चयति—**सम्यग्दर्शनं चेति** । अन्ते च सम्यग्दर्शनं प्रकृतमिति संबन्धः । तत्र हेतुः—**तस्यैवेति** । सम्यग्ज्ञानेनोपक्रम्य तेनैवोपसंहारेऽपि मध्ये किंचिदन्यदुक्तमिति प्रकरणस्यातद्विषयत्वमित्याशङ्क्याऽऽह—**श्रेयानीति** । प्रकरणे सम्यग्ज्ञानविषये सत्यनुपपन्नो दर्शनविधिरिति फलितमाह—**तत्रेति** । ब्रह्मार्पणमन्त्रे परकीयव्याख्यानासंभवे स्वकीयव्याख्यानं व्यवस्थितमित्युपसंहरति—**तस्मादिति** ॥ २४ ॥

**आ० भा०—ज्ञानावस्थितचेतस्त्वं स्पष्टयति—ब्रह्मार्पणमिति । सर्वमेतद्ब्रह्मेत्युच्यते । तदधीनसत्ताप्रवृत्तिमत्त्वात् न तु तत्स्वरूपत्वात् । उक्तं हि । 'त्वदधीनं यतः सर्वमतः सर्वो भवानिति ॥ वदंति मुनयः सर्वे न तु सर्वस्वरूपतः' इति पाद्मे । सर्वं तत्प्रज्ञानेत्रमिति च एतं ह्येव बह्वृचा इत्यादि च । समाधिना सह ब्रह्मैव कर्म ॥ २४ ॥**

आ० ज०—ननु कर्मस्वरूपं प्रतिज्ञाय संक्षेपविस्तराभ्यां प्रतिपाद्योपसंहृतं किमिदं ब्रह्मार्पणमित्यनेनोच्यत इत्यत आह—**ज्ञानावस्थितेति** । एतेन इति यो जानातीत्यध्याहारोऽत्र सूचितो भवति । अत्रार्पणादेः ब्रह्मस्वरूपत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह—**सर्वमिति** । कुत एतदित्यत आह—**उक्तं हीति** । सर्वस्य भगवदधीनत्वे प्रमाणमाह—**सर्वमिति** । प्रज्ञा ब्रह्म नेत्रं नेतृ यस्य तत्तथोक्तम् । एतं हीत्यनेन सर्वान्तर्यामित्वमुच्यते ब्रह्मकर्म ब्रह्मविषयः समाधिर्यस्यासौ तथोक्त इति व्याख्यानं प्रक्रमविरुद्धमिति भावेनान्यथा व्याख्याति—**समाधिनेति** । समाधिरपि ब्रह्मेत्यर्थः ॥ २४ ॥

**रा० भा०—प्रकृतिवियुक्तात्मस्वरूपानुसंधानयुक्ततया कर्मणो ज्ञानाकारत्वमुक्तम् । इदानीं सर्वस्य सपरिकरस्य कर्मणः परब्रह्मभूतपरमपुरुषात्मकत्वानुसंधानयुक्ततया ज्ञानाकारत्वमाह । हविर्विशेष्यते अर्प्यतेऽनेनेत्यर्पणं स्रुगादि तद्ब्रह्मकार्यत्वाद्ब्रह्म ब्रह्म यस्य हविषोऽर्पणं तद्ब्रह्मार्पणं ब्रह्म हविः स्वयं च ब्रह्मभूतं ब्रह्माग्नौ ब्रह्मभूतेऽग्नौ ब्रह्मणा कर्त्रा हुतम् इति सर्वं कर्म ब्रह्मात्मकत्वाद्ब्रह्ममयमिति यः समाधत्ते स ब्रह्मकर्मसमाधिः । तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यं ब्रह्मात्मकतया ब्रह्मभूतमात्मस्वरूपं गन्तव्यं मुमुक्षूणां क्रियमाणं कर्म परब्रह्मात्मकमेवेत्यनुसन्धानयुक्ततया ज्ञानाकारं साक्षादात्मावलोकनसाधनं न ज्ञाननिष्ठाव्यवधानेनेत्यर्थः ॥ २५ ॥**

अ० टी०—ननु ब्रह्मैव सन् ब्रह्माप्नोति सर्वं खल्विदं ब्रह्मेति ब्रह्मात्मकत्वं सर्वस्याह । कस्य कर्मणो ब्रह्मात्मकत्वमाह—**ब्रह्मार्पणमिति** । अर्पणम् अर्प्यते हूयतेऽनेन तदर्पणम् सामग्रीस्रुक्स्रुवादिकं ब्रह्म हविः घृतादिकं ब्रह्म । ब्रह्माग्नौ ब्रह्मात्मकोऽग्निस्तस्मिन्ब्रह्मणा कर्त्रा हुतम् । एवं प्रकारेण कर्म ब्रह्म अतः समाधिना समाध्यवस्थया तेन ब्रह्मात्मकेन कर्मणा ब्रह्मैव गन्तव्यं प्राप्तव्यम् । अतो ब्रह्मात्मकत्वात्तत्र लीयत इत्यर्थः । अत एव श्रुतिरपि "सर्वं खल्विदं ब्रह्म" इति ब्रह्मात्मकत्वं सर्वस्याह ॥ २४ ॥

नी० टी०—कुतो विदुषां कर्माणि प्रविलीयंत इत्याशंक्याह—**ब्रह्मार्पणमिति** । यतस्ते विद्वांसः सविकल्पसमाधौ सर्वं जगत्प्रत्यक्चितिशक्तिनिर्मितं पश्यंति । तथा च श्रुतिः । किं कारणमित्युपक्रम्य कालः स्वभाव इति कालादीनि लोकदृष्ट्याऽनेकानि कारणान्युपक्षिप्य कारणं निर्णीयते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामिति समाधिना दर्शयति । तथा च समाधिना सर्वस्य ब्रह्मणि कल्पितत्वं पश्यतां तेषां यदर्पणं अर्पणसाधनं मंत्रजुह्वादि तत् ब्रह्मैव । एवशब्दः सर्वत्रानुषंजनीयः यदर्पणीयं हविस्तदपि ब्रह्मैव । यत् हुतं हवनक्रियाहुतं तर्पितं देवब्राह्मणादि वा तदपि ब्रह्मैव । यत् अग्नौ हुतं तदपि ब्रह्मण्येव हुतं अत्र ब्रह्मणीति पदमध्याहर्तव्यं । यत् यजमानेन हुतं तद्ब्रह्मणैव हुतं । यत्तेन कर्मणा गंतव्यं प्राप्तव्यं फलं तदपि ब्रह्मैव । किं बहुना । यत्किंचित्तस्य कर्म शयनासनादिकं तत्सर्वं ब्रह्मैव तत्र कारणं समाधिना समाधिजेनात्मसाक्षात्कारेण । यतः सर्वमस्य ब्रह्मात्मकं ब्रह्म च प्रत्यगनन्यत् अतः प्रदेयस्य फलस्याभावात् कर्माणि प्रविलीयंते दाह्याभावाद्दहन इवेति भावः । यत्तु कर्मणि तदंगेषु च नामादिष्विव ब्रह्मदृष्टिरत्र विधीयत इति व्याख्यानं तत् उपक्रमादिविरोधात् । ब्रह्मविद्यायाः प्रकृतत्वाच्चासंगतमिति भाष्ये एव निरस्तं । या हि ब्रह्म विदां कर्मांगेषु तात्विकी ब्रह्मदृष्टिः कीर्त्तिता सा स्थितप्रज्ञलक्षणवद्ब्रह्मविदामनुष्ठानायैव फलतो भवतीति न तत्र तस्यास्तात्पर्यं वर्णनीयमिति दिक् ॥ २४ ॥

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ॥**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

**शां० भा०**—तत्राधुना सम्यग्दर्शनस्य यज्ञत्वं संपाद्य तत्स्तुत्यर्थमन्येऽपि यज्ञा उपक्षिप्यन्ते—**दैवमेवेत्यादिना** । दैवमेव देवा इज्यन्ते येन यज्ञेनासौ दैवो यज्ञस्तमेवापरे यज्ञं योगिनः कर्मिणः पर्युपासते कुर्वन्तीत्यर्थः । ब्रह्माग्नौ "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" "यत्साक्षादपरोक्षाद्ब्रह्म" "य आत्मा सर्वान्तरः" इत्यादिवचनोक्तमशनायादिसर्वसंसारधर्मवर्जितं नेति नेतीति निरस्ताशेषविशेषं ब्रह्मशब्देनोच्यते । ब्रह्म च तदग्निश्च स होमाधिकरणत्वविवक्षया ब्रह्माग्निस्तस्मिन्ब्रह्माग्नावपरेऽन्ये ब्रह्मविदो यज्ञं यज्ञशब्दवाच्य आत्माऽऽत्मनामसु यज्ञशब्दस्य पाठात्तमात्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्तसर्वोपाधिधर्मकमाहुतिरूपं यज्ञेनैवाऽऽत्मनैवोक्तलक्षणेनोपजुह्वति प्रक्षिपन्ति । सोपाधिकस्याऽऽत्मनो निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन्होमस्तं कुर्वन्ति ब्रह्मात्मैकत्वदर्शनानिष्ठाः संन्यासिन इत्यर्थः । सोऽयं सम्यग्दर्शनलक्षणो यज्ञो दैवयज्ञादिषु यज्ञेषूपक्षिप्यते ब्रह्मार्पणमित्यादि श्लोकैः 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप' इत्यादिना स्तुत्यर्थम् ॥ २५ ॥

**शां० आ०**—ज्ञानस्य यज्ञत्वं संपाद्य पूर्वश्लोके स्थिते सत्यधुना तस्यैव ज्ञानस्य स्तुत्यर्थं यज्ञान्तरनिर्देशार्थमुत्तरग्रन्थप्रवृत्तिरित्याह—**तत्रेति** । सर्वस्य श्रेयःसाधनस्य मुख्यगौणवृत्तिभ्यां यज्ञत्वं दर्शयन्नादौ यज्ञद्वयमादर्शयति—**दैवमेवेत्यादिना** । दैवमेवेति प्रती-

कमादाय दैवयज्ञं व्याचष्टे—**देवा इति**। सम्यग्ज्ञानाख्यं यज्ञं विभजते—**ब्रह्माग्नाविति**। तत्र ब्रह्मशब्दार्थं श्रुत्यवष्टम्भेन स्पष्टयति—**सत्यमिति**। यदजडमनृतविपरीतमपरिच्छिन्नं ब्रह्म तस्य परमानन्दत्वेन परमपुरुषार्थत्वमाह—**विज्ञानमिति**। तस्य ज्ञानाधिकरणत्वेन ज्ञानत्वमौपचारिकमित्याशङ्क्याऽऽह—**यत्साक्षादिति**। जीवब्रह्मविभागे कथमपरिच्छिन्नत्वमित्याशङ्क्य विशिनष्टि—**य आत्मेति**। परस्यैवाऽऽत्मत्वं सर्वस्माद्देहादेरव्याकृतादान्तरत्वेन साधयति—**सर्वान्तर इति**। विधिमुखं सर्वमेवोपनिषद्वाक्यं ब्रह्मविषयमादिशब्दार्थः। निषेधमुखं ब्रह्मविषयमुपनिषद्वाक्यमशेषमेवार्थतो निबध्नाति—**अशनायेति**। ब्रह्मण्यग्निशब्दप्रयोगे निमित्तमाह—**स होमेति**। बुद्ध्यारूढतया सर्वस्य दाहकत्वाद्विलयस्य वा हेतुत्वादिति द्रष्टव्यम्। यज्ञशब्दस्याऽऽत्मनि त्वंपदार्थे प्रयोगे हेतुमाह—**आत्मनामस्विति**। आधाराधेयभावेन वास्तवभेदं ब्रह्मात्मनोर्व्यावर्तयति—**परमार्थत इति**। कथं तर्हि होमो न हि तस्यैव तत्र होमः संभवतीत्याशङ्क्याऽऽह—**बुद्ध्यादीति**। उपाधिसंयोगफलं कथयति—**अध्यस्तेति**। उपाध्यध्यासद्वारा तद्धर्माध्यासे प्राप्तमर्थं निर्दिशति—**आहुतीति**। इत्थंभूतलक्षणां तृतीयामेव व्याकरोति—**उक्तेति**। अशनायादिसर्वसंसारधर्मवर्जितेन निर्विशेषेण स्वरूपेणेति यावत्। आत्मनो ब्रह्मणि होममेव प्रकटयति—**सोपाधिकस्येति**। अपर इत्यस्यार्थं स्फोरयति—**ब्रह्मेति**। उक्तस्य ज्ञानयज्ञस्य दैवयज्ञादिषु ब्रह्मार्पणमित्यादिश्लोकैरुपक्षिप्यमाणत्वं दर्शयति—**सोऽयमिति**। उपक्षेपप्रयोजनमाह—**श्रेयानिति** ॥ २५ ॥

**आ० भा०**—यज्ञभेदानाह–दैवमित्यादिना । दैवं भगवंतम् । स एव तेषां यज्ञः । भगवदुपासनं यज्ञमिति क्रियाविशेषणम् । नान्यत्तेषामस्ति यतीनां केषांचित् । "यज्ञं भगवंतम् । यज्ञेन यज्ञम् । यज्ञोविष्णुर्देवता" इत्यादिश्रुतिः । यज्ञेन प्रसिद्धेनैव यज्ञं प्रति जुह्वतीति सर्वत्र समम् । तं यज्ञमित्यादौ । उक्तं च । 'विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना । अयजन्मानसे यज्ञे पितरं प्रपितामहः' इति ॥ २५ ॥

**आ० ज०**—उत्तरप्रकरणप्रतिपाद्यं बुद्ध्यारोहार्थमाह—**यज्ञेति**। सामान्यतः कर्मस्वरूपमुक्तम्। तच्च यज्ञादिभेदभिन्नम्। तत्र नायं लोकोऽस्तीति वक्ष्यति तदनुपपन्नम्। यत्याद्याश्रमविलोपप्रसंगादित्याद्याशंकानिरासार्थमिति शेषः। तत्र दैवं देवविषयमिति व्याख्यानमसत्। द्रव्ययज्ञा इत्यस्य पुनरुक्तत्वादिति भावेनाह—**दैवमिति**। एवं तर्हि केचित् भगवंतमुपासत इत्युक्तं स्यात्। तथा च नेयं यज्ञोक्तिरित्यत आह—**स एवेति**। स इति परामृष्टं दर्शयति—**भगवदिति**। भगवदुपासनस्य यज्ञत्वमिह कथं लभ्यतइत्यत आह—**यज्ञमिति**। भगवदित्यादिकं क्रियाविशेषणत्वप्रदर्शनार्थमेकमेव वाक्यम्। साधनं परित्यज्य धात्वर्थमात्रस्य विशेषणं क्रियाविशेषणम्। अवधारणार्थं दर्शयति—**नान्यदिति**। अन्यद्भगवदुपासनात्। अनेन एव शब्दो भिन्नक्रम इत्युक्तं भवति। दैवमेवोपासते नान्यदिति तु प्रकृतासंगतम्। केषांचित्परमहंसानाम्। अन्येषां बाह्यकर्मणोऽपि भावात्। यद्वा केषांचिदित्यस्यैव व्याख्यानं यतीनामिति। ब्रह्माग्नावित्यस्यात्मानमात्मनैव मनसा वा ब्रह्मणैकीभावयंतीति व्याख्यानमसदिति भावेन यज्ञमित्येतद्व्याचष्टे—**यज्ञमिति**। भगवतो यज्ञशब्दार्थत्वं कुत इत्यतआह—**यज्ञेनेति**। यज्ञेनेत्यस्यार्थमाह—**यज्ञेनेति**। एवशब्देनापव्याख्यानं निराकरोति। एवं चेद्यज्ञमित्यस्य कथमन्वयइत्यत आह—**यज्ञमिति**। एतव्द्याख्यानमन्यत्रातिदिशति—**इति सर्वत्रेति**। अतिप्रसंगनिवारणाय सर्वत्रेत्युक्तं विवृणोति—**तमिति**। एवं तद्यग्रतो जातं तं पुरुषं यज्ञं भगवंतं प्रति बर्हिषि प्रौक्षन्नित्यर्थः स्यात्। स च निर्मूल इत्यतआह—उक्तं चेति ॥ २५ ॥

**रा० भा०**—एवं कर्मणो ज्ञानाकारतां प्रतिपाद्य कर्मयोगभेदानाह। दैवं देवार्चनरूपं यज्ञमपरे कर्मयोगिनः पर्युपासते सेवन्ते। तत्रैव निष्ठां कुर्वन्तीत्यर्थः। अपरे ब्रह्माग्नौ यज्ञं यज्ञेनैवोपजुह्वति। यज्ञं यज्ञरूपं ब्रह्मात्मकम् आज्यादिद्रव्यं यज्ञेन यज्ञसाधनभूतेन स्रुगादिना जुह्वति। अत्र यज्ञशब्दो हविःस्रुगादियज्ञसाधने वर्तते। ब्रह्मार्पणं ब्रह्महविरिति न्यायेन यागहोमयोर्निष्ठां कुर्वन्ति ॥ २५ ॥

**अ० टी०**—ननु ब्रह्मात्मकत्वे सति ज्ञानाज्ञानकृतं कर्म कथं न ब्रह्मणि लीयतेऽग्निस्पर्शे दाहवदित्याशङ्क्य सजातीयप्रचयसंवलित एवाग्निर्दाहसमर्थो न तु विस्फुलिङ्गात्मक इति सर्वत्र ब्रह्मात्मकज्ञानाभावे तज्ज्ञानानुरूपमेवागाधजलानिमग्नस्य ग्रहणसामर्थ्यं पूर्वघटवत् फलं भवतीत्याह—**दैवमित्यादिषड्भिः**। अपरे

योगिनः यत्किंचित्स्वरूपज्ञानेन कर्मफलेच्छया कर्मकर्त्तारः । यज्ञं कर्म दैवमेव ज्ञात्वा पर्युपासते परितः सर्वभावेन कुर्वन्ति । तेषां लौकिकदेहेन साधनात्मकभगवत्सेवायां सुखरूपं फलं भवतीत्यर्थः। अपरे तत्त्वज्ञानानुसारिणो ब्रह्माग्नौ अग्निं ब्रह्मस्वरूपं ज्ञात्वा तस्मिन् यज्ञं यज्ञात्मकं विष्णुं यज्ञेनैव यज्ञात्मकविष्णुरूपेण हविषा उपजुह्वति । होमं कुर्वन्ति ॥ २९ ॥

**नी० टी०**—एवं सम्यग्दर्शनस्य यज्ञत्वं संपाद्य तत्स्तुत्यर्थं यज्ञान्तराण्युपक्षिपति—**दैवमेवेत्यादिना**। दैवं देवताप्रधानमेव दर्शपूर्णमासादियज्ञं नान्यं एके योगिनः कर्मयोगिनः पर्युपासते । अपरे तु ब्रह्मैव सत्यज्ञानानंतानंदात्मकमखंडैकरसं वस्तु तदेव ज्ञातं सत् सर्वकर्मदग्धृत्वादग्निरिवाग्निर्ब्रह्माग्निस्तत्र यज्ञं जीवं यज्ञशब्दस्यात्मनामसुपाठात् सोपाधिं यज्ञेनैव आत्मनैव निरुपाधिकेन रूपेण जुह्वति घटाकाशमिव महाकाशे उपाधिप्रहाणेन प्रविलापयंति सोऽयं ज्ञानयज्ञो मुख्यः ॥ २९ ॥

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ॥**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**

**शां० भा०**—श्रोत्रादीनीति । श्रोत्रादीनीन्द्रियाण्यन्ये योगिनः संयमाग्निषु प्रतीन्द्रियं संयमो भिद्यत इति बहुवचनम्, संयमा एवाग्नयस्तेषु जुह्वतीन्द्रियसंयममेव कुर्वन्तीत्यर्थः । 'शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति' इन्द्रियाण्येवाग्नयस्तेष्विन्द्रियाग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥ २६ ॥

**शां० आ०**—संप्रति यज्ञद्वयमुपन्यस्यति—**श्रोत्रादीनीति**। बाह्यानां करणानां मनसि संयमस्यैकत्वात्कथं संयमाग्निष्विति बहुवचनमित्याशङ्कयाऽऽह—**प्रतीन्द्रियमिति**। संयमानां प्रत्याहाराधिकरणत्वेन व्यवस्थितानां मनोरूपाणां होमाधारत्वादग्नित्वं व्यपदिशति—**संयमा इति**। विषयेभ्योऽन्तर्बाह्यानीन्द्रियाणि प्रत्याहरन्तीति संयमयज्ञं संक्षिप्य दर्शयति—**इन्द्रियेति**। श्रोत्रादीन्द्रियाग्निषु शब्दादिविषयहोमस्य तत्तदिन्द्रियैस्तत्तद्विषयोपभोगलक्षणस्य सर्वसाधारणत्वमाशङ्क्य प्रतिषिद्धान्वर्जयित्वा रागद्वेषरहितो भूत्वा प्राप्तान्विषयानुपभुञ्जते तैस्तैरिन्द्रियैरिति विवक्षितं होमं विशदयति—**श्रोत्रादिभिरिति** ॥ २६ ॥

**आ० भा०**—॥ २६ ॥

**आ० ज०**—॥ २६ ॥

**रा० भा०**—अन्ये श्रोत्रादीनामिन्द्रियाणां संयमने प्रयतन्ते । शब्दादीन् विषयान् अन्ये योगिनः इन्द्रियाणां शब्दादिविषयप्रवणतानिवारणे प्रयतन्ते ॥ २६ ॥

**अ० टी०**—अन्ये योगिनः श्रोत्रादीनीन्द्रियाणि संयमाग्निषु जुह्वति । अयमर्थः योगेन मत्प्राप्तीच्छया प्राप्तिप्रतिबन्धकानींद्रियाणि निरोधात्मकक्लेशाग्नौ भस्मीकुर्वन्ति। अन्ये भक्तियुतयोगिनः शब्दादीन् विषयान् मत्कथाश्रवणादिरूपान् इन्द्रियाग्निषु भगवत्साक्षात्कारसाधकतयाऽऽत्मभावेनेन्द्रियेषु जुह्वति ॥ २६ ॥

**नी० टी०**—यज्ञान्तरमाह—**श्रोत्रादीनीति**। तत्र कंचित् बाह्यमाभ्यंतरं वा विशेषमुपादाय तत्र चेतसो नियमनं क्रियते। ते च संयमाः अनेकविषयत्वादनेके पृथक्फलाश्च तथा च योगसूत्रकृता प्रोक्तं । "भुवनज्ञानं सूर्यसंयमात् चंद्रे ताराव्यूहज्ञानं कंठकूपे क्षुत्पिपासानिवृत्तिः" इत्यादि । त एवाग्नय इंद्रियेंधनसंहारहेतुत्वात् तेषु संयमाग्निषु श्रोत्रादीनि जुह्वति प्रक्षिपंति। तत्र श्रोत्रं अनाहते ध्वनौ संनियम्य हंसोपनिषदुक्तरीत्या घंटानादादीन् दशनादाननुभवंति । न हि तत्र सन्नियते चेतसि शब्दांतरग्रहणं तदा भवति सोऽयं श्रोत्रस्य

संयमाग्नौ होमो बोध्यः । एवमन्यत्रापि तद्द्वारा च निष्कलं तत्त्वं प्रतिपद्यंते । तथाऽन्ये विषयेभ्यः प्रत्याहृतकरणाः धारणाध्यानसमाध्यात्मकं मनसः संयमं एकत्र मूलाधाराद्यन्यतमचक्रे कर्तुमशक्ताः समनस्केंद्रियेषु विषयवियोगाद्दग्धेंधनानलवत्स्वयं विलीनेषु येषां समाधिबुद्धिस्तैरिंद्रियेषु विषया एवोपसंहृता न त्विंद्रियादीनि मनआदिषु पूर्वोक्तरीत्या उपसंहृतानि तानेतानिंद्रियचिंतकान् प्रकृत्योक्तं वायवीये । 'दशमन्वंतराणीह तिष्ठंतींद्रियचिंतकाः" इति ॥ २६ ॥

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ॥**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

**शां० भा०—किंच—सर्वाणीति। सर्वाणीन्द्रियकर्माणीन्द्रियाणां कर्माणीन्द्रियकर्माणि तथा प्राणकर्माणि प्राणो वायुराध्यात्मिकस्तत्कर्माण्याकुञ्चनप्रसारणादीनि तानि चापर आत्मसंयमयोगाग्नावात्मनि संयम आत्मसंयमः सएव योगाग्निस्तस्मिन्नात्मसंयमयोगाग्नौ जुह्वति प्रक्षिपन्ति ज्ञानदीपिते स्नेहेनेव प्रदीपिते विवेकविज्ञानेनोज्ज्वलभावमापादिते प्रविलापयन्तीत्यर्थः ॥ २७ ॥**

शां० आ०—यज्ञांतरं कथयति—**किंचेति** । इन्द्रियाणां कर्माणि श्रवणवदनादीनि । आत्मनि संयमो धारणाध्यानसमाधिलक्षणः । सर्वमपि व्यापारं निरुध्याऽऽत्मनि चित्तसमाधानं कुर्वन्तीत्याह—**विवेकेति** । ॥ २७ ॥

**आ० भा०—आत्मसंयमाख्योपायाग्नौ ॥ २७ ॥**

आ० ज०—आत्मसंयमेत्येतद्दुर्गमार्थत्वाद्व्याख्याति—**आत्मेति** । आत्मनो मनसः । आत्मसंयमाख्योऽयमुपायः स एवाग्निः ॥ २७ ॥

**रा० भा०—अन्ये ज्ञानदीपिते मनःसंयमयोगाग्नौ सर्वाणीन्द्रियकर्माणि प्राणकर्माणि च जुह्वति । मनसा इन्द्रियप्राणानां कर्मप्रवणतानिवारणे प्रयतन्ते इत्यर्थः ॥ २७ ॥**

अ० टी०—अपरे योगिनः सर्वाणि इन्द्रियकर्माणि इन्द्रियकृत्यान् । अकृत्वैव च पुनः प्राणकर्माणि पंचप्राणकृत्यान् क्षुत्पिपासादिना भोजनपानादीनकृत्वैव ज्ञानदीपिते ज्ञानेन मत्स्वरूपाभितापोन्मुखीकृते आत्मनो मत्प्राप्त्यर्थं यः संयमो नियमन स एवाग्निः सर्वस्यापि स्वकरणरूपस्तस्मिन् जुह्वति ॥ २७ ॥

नी० टी०—इतो विशिष्टं योगान्तरमाह—**सर्वाणीति** । इंद्रियाणां कर्माणि शब्दादिग्रहणानि । प्राणकर्माणि आकुंचनप्रसारणश्वासप्रश्वासादीनि । अपरे योगिनः आत्मनि बुद्धौ संयमः स एव योगोग्निश्च तस्मिन् ज्ञानेन देहेंद्रियप्राणमनोव्यतिरिक्तात्मज्ञानेन दीपिते प्रकाशिते जुह्वति प्रविलापयंति । इंद्रिययोगिनां हि सुप्ताविव प्राणोनुपसंहृत एवास्ते तत्सहचरस्य मनसोऽनुपसंहारात् । बुद्धियोगिनां तु मनसोऽप्युपसंहारात्तदायत्तस्य प्राणस्याप्युपसंहारो भवतीति विशेषः । एतेषामपि बुद्धौ बोद्धव्याभावात्पूर्ववल्लीनायां समाधिबुद्धिरस्ति न त्वेतैर्बुद्धेरन्यत्वेन आत्मा ज्ञातो नापि तस्मिन् बुद्धिरुपसंहृता अत एवैतान् प्रकृत्योक्तं वायवीये । 'बौद्धा दशसहस्राणि तिष्ठंति विगतज्वराः' इति बौद्धा बुद्धौ लीनाः दशसहस्राणि मन्वंतराणीत्यनुषंगात् २७॥

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ॥**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥**

**शां० भा०**—द्रव्येति । द्रव्ययज्ञास्तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या कुर्वन्ति ये ते द्रव्ययज्ञाः, तपोयज्ञा ये तपस्विनस्ते तपोयज्ञाः, योगयज्ञाः प्राणायामप्रत्याहारादिलक्षणो योगो यज्ञो येषां ते योगयज्ञास्तथाऽपरे स्वाध्यायज्ञानयज्ञाश्च स्वाध्यायो यथाविधि ऋगाद्यभ्यासो यज्ञो येषां ते स्वाध्याययज्ञा ज्ञानयज्ञा ज्ञानं शास्त्रार्थपरिज्ञानं यज्ञो येषां ते ज्ञानयज्ञाश्च यतयो यतनशीलाः संशितव्रताः सम्यक्शितानि तनूकृतानि तीक्ष्णीकृतानि व्रतानि येषां ते संशितव्रताः ॥ २८ ॥

**शां० आ०**—यज्ञषट्कमवतारयति—**द्रव्येति**। तत्र द्रव्ययज्ञान्पुरुषानुपादाय विभजते—**तीर्थेष्विति**। तपस्विनो यज्ञबुद्ध्या तपोऽनुतिष्ठन्तो नियमवन्त इत्यर्थः। प्रत्याहारादीत्यादिशब्देन यमनियमासनध्यानधारणासमाधयो गृह्यन्ते, यथाविधि प्राङ्मुखत्वपवित्रपाणित्वाद्यङ्गविधिमनतिक्रम्येति यावत्, व्रतानां तीक्ष्णीकरणमतिदृढत्वम् ॥ २८ ॥

**आ० भा०**—द्रव्यं जुहतीति द्रव्ययज्ञाः। तपः परमेश्वरार्पणबुद्ध्या तत्र जुहतीति तपोयज्ञा इत्यादि । इदं तपो हविस्तद्ब्रह्माग्नौ जुहोमि । तत्पूजार्थमिति होमः। तदर्पणमेव होमबुद्धिः ॥ २८ ॥

**आ० ज०**—ननु द्रव्यं यज्ञो न भवति तत्कथं बहुव्रीहिः। तत्पुरुषत्वे च कथं पुरुषसामानाधिकरण्यमित्यत आह—**द्रव्यमिति**। अनेन नायं यज्ञशब्दो भावार्थः। किंतु कर्त्रर्थः तथा च द्रव्यस्य यज्ञा याजका इत्यर्थइत्युक्तं भवति । एतदाशंकापरिहारायैव तपोयज्ञाइत्येतदप्येवं व्याचष्टे—**तप इति**। तत्र परमेश्वरे योगयज्ञा इत्यादिकमप्येवमेव व्याख्येयमिति दर्शयति—**इत्यादीति**। तपसो होमः कथमित्यतआह—**इदमिति**। तपश्चरणमेव तपोयज्ञत्वं किं न स्यादित्यत आह—**तदर्पण एवेति**। अनेनैव प्रकारेण यज्ञत्वसंपादनं नान्यथेत्यर्थः ॥ २८ ॥

**रा० भा०**—केचित्कर्मयोगिनो द्रव्ययज्ञाः न्यायतो द्रव्याण्यादाय देवार्चने प्रयतन्ते केचिच्च दानेषु केचिच्च यागेषु केचिच्च होमेषु एते सर्वे द्रव्ययज्ञाः केचित्तपोयज्ञाः कृच्छ्रचान्द्रायणोपवासादिषु निष्ठां कुर्वन्ति योगयज्ञाश्चापरे पुण्यतीर्थे पुण्यस्थानप्राप्तिषु निष्ठां कुर्वन्ति। इह योगशब्दः कर्मनिष्ठाभेदप्रकरणात्तद्विषयः केचित्स्वाध्यायपराः स्वाध्यायाभ्यासपराः केचित्तदर्थज्ञानाभ्यासपराः यतयो यतनशीलाः शंसितव्रताः दृढसंकल्पाः ॥ २८ ॥

**अ० टी०**—द्रव्ययज्ञाः यज्ञनिष्क्रयद्रव्यदातारः। तपोयज्ञाः साधनाद्यभावेन यज्ञजमत्प्रीत्युत्पादनार्थं तप एव यज्ञबुद्ध्या कुर्वन्ति। योगयज्ञाः पूर्वोक्तवत् मत्प्रीत्यर्थं यज्ञबुद्ध्या अष्टाङ्गयोगकर्तारः। अपरे तथा पूर्वोक्तप्रकारेण स्वाध्यायं वेदाध्ययनमेव यज्ञबुद्ध्या कर्तारः । च पुनः। ज्ञानमेव यज्ञत्वेन ज्ञातारः। ते कीदृशाः यतयः सर्वपरित्यागिनः। पुनः कीदृशाः संशितव्रताः सूक्ष्मीकृतकर्माणो भगवत्स्मरणमात्रैकपराः॥२८॥

**नी० टी०**—एवं यज्ञपंचकं श्लोकत्रयेणोक्तं अथैकेनैव श्लोकेन पंचयज्ञानाह—**द्रव्येति**। द्रव्यसाध्याः वापीकूपारामाः तीर्थे बहिर्वेदिकादानं श्रौतयज्ञानां प्रागेव ग्रहणात् त एव यज्ञा येषां ते द्रव्ययज्ञाः। तथा तपः कृच्छ्रचांद्रायणमासोपवासादि तदेव यज्ञस्थानीयं येषां ते तपोयज्ञाः । तथा योगयज्ञाः संगफलत्यागपूर्वकं संध्योपासनादिनिर्विकल्पसमाध्यंतानां कर्मणामनुष्ठानं तृतीयाध्यायोक्तं योगः स एव यज्ञो येषां ते योगयज्ञाः । यद्वा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपोऽष्टांगोपेतो योगश्चित्तवृत्तिनिरोध इति सूत्रितो योग एव यज्ञो येषां त इति । तथा स्वाध्याययज्ञाः नित्यं वेदाध्ययनरतास्ते स्वाध्याययज्ञाः ज्ञानं स्वाध्यायार्थस्य पूर्वोत्तरमीमांसाविचारः स एव यज्ञो येषां स्वाध्याययज्ञा ज्ञानयज्ञाश्चेति स्वाध्यायज्ञानयज्ञा इति समासः। यतयो यतनशीलाः संशितव्रताः सम्यक् शितं तीक्ष्णं व्रतं अहिंसादिकं येषां ते इति सर्वेषां विशेषणम् ॥ २८ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ॥
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥

**शां० भा०**—किंच—अपान इति । अपानेऽपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिं पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणेऽपानं तथाऽपरे जुह्वति रेचकाख्यं च प्राणायामं कुर्वन्तीत्येतत्, प्राणापानगती मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिस्तद्विपर्ययेणाधोगमनमपानस्य ते प्राणापानगती एते रुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः ॥ २९ ॥

**शां० आ०**—प्राणायामाख्यं यज्ञमुदाहरति—**किंचेति** । प्राणायामपरायणाः सन्तो रेचकं पूरकं च कृत्वा कुम्भकं कुर्वन्तीत्याह—**प्राणेति** ॥ २९ ॥

**आ० भा०**—अपरे प्राणायामपरायणाः प्राणमपाने जुह्वति अपानं च प्राणे । कुंभकस्था एवं भवतीत्यर्थः ॥ २९ ॥

**आ० ज०**—अपाने जुह्वतीत्येतत् पूरकरेचककुंभकपरतया केचिद्व्याचक्षते तदसत् । अध्याहारादिप्रसंगात् । पूरकरेचकयोः कुंभकार्थत्वेन पृथक्प्राणायामत्वाभावाचेति भावेन कुंभकमात्रपरतया योजयति—**अपर इति** । परायणा इत्यतः परं प्राणापानगती रुद्ध्वेति द्रष्टव्यम् । अभिप्रायमाह—**कुंभकस्था एवेति** । एवशब्देनापव्याख्यानं व्यावर्तयति ॥ २९ ॥

**रा० भा०**—अपरे कर्मयोगिनः प्राणायामेषु निष्ठां कुर्वन्ति । ते च त्रिविधाः पूरकरेचककुम्भकभेदेन अपाने जुह्वति प्राणमिति पूरकः । प्राणेऽपानमिति रेचकः । प्राणापानगती रुद्ध्वा प्राणानपानेषु जुह्वतीति कुम्भकः । प्राणायामपरेषु त्रिष्वप्यनुषज्यते ॥ २९ ॥

**अ० टी०**—अपरे योगिनः अपानेऽधःस्थे प्राणम् ऊर्ध्वस्थं पूरकविधिना जुह्वति । तथा अपरे रेचकविधिना अपानं प्राणे । कुम्भकविधिना प्राणापानयोर्गतिनिरोधं कृत्वा प्राणायामपराः ईश्वरचिन्तननिष्ठा भवन्ति ॥ २९ ॥

**नी० टी०**—एकादशं यज्ञमाह—**अपाने इति** । अपरे अपाने अपानवृत्तौ जुह्वति प्रक्षिपंति प्राणं प्राणवृत्तिं पूरकाख्यं प्राणायामं कुर्वंतीत्यर्थः । तथा प्राणे च अपानं प्रक्षिपंति रेचकाख्यं प्राणायामं कुर्वंतीत्यर्थः । प्राणापानगती रुद्ध्वा मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिः तद्विपर्ययेणाधोगमनमपानस्य गतिः । ते प्राणापानगती एते निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुंभकाख्यं प्राणायामं कुर्वंतीत्यर्थः ॥ २९ ॥

अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ॥
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

**शां० भा०**—किंच—अपर इति । अपरे नियताहारा नियतः परिमित आहारो येषां ते नियताहाराः सन्तः प्राणान्वायुभेदान्प्राणेष्वेव जुह्वति । यस्य यस्य वायोर्जयः क्रियत इतरान्वायुभेदांस्तस्मिंस्तस्मिञ्जुह्वति ते तत्र प्रविष्टा इव भवन्ति । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषा यज्ञैर्यथोक्तैः क्षपितो नाशितः कल्मषो येषां ते यज्ञक्षपितकल्मषाः ॥ ३० ॥

दुःखमाप्तुमयोगतः' इत्यादिना चाऽऽत्मज्ञानाङ्गत्वेन कर्मयोगस्य विधानात्, 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्यनेन चोत्पन्नसम्यग्दर्शनस्य कर्मयोगाभाववचनात्। 'शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम्' इति च शरीरस्थितिकारणातिरिक्तस्य कर्मणो निवारणात् 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यनेन च शरीरस्थितिमात्रप्रयुक्तेष्वपि दर्शनश्रवणादिकर्मस्वात्मयाथात्म्यविदः करोमीति प्रत्ययस्य समाहितचेतस्तया सदाऽकर्तव्यत्वोपदेशादात्मतत्त्वविदः सम्यग्दर्शनविरुद्धो मिथ्याज्ञानहेतुकः कर्मयोगः स्वप्नेऽपि न संभावयितुं शक्यते यस्मात्तस्मादनात्मवित्कर्तृकयोरेव संन्यासकर्मयोगयोर्निःश्रेयसकरत्ववचनं तदीयाच्च कर्मसंन्यासात्पूर्वोक्तात्मवित्कर्तृकसर्वकर्मसंन्यासविलक्षणात्सत्येव कर्तृत्वविज्ञाने कर्मैकदेशविषयाद्यमनियमादिसहितत्वेन च दुरनुष्ठेयत्वात्सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाभिधानमित्येवं प्रतिवचनवाक्यार्थनिरूपणेनापि पूर्वोक्तः प्रष्टुरभिप्रायो निश्चीयत इति स्थितम्।

**शां० आ०**—आत्मस्वरूपनिरूपणप्रदेशेषु संन्यासप्रतिपादनादात्मविदः संन्यासो विवक्षितश्चेत्तर्हि कर्मयोगोऽपि तस्य कस्मान्न भवति प्रकरणाविशेषादिति शङ्कते—**ननु चेति**। आत्मविद्याप्रकरणे कर्मयोगप्रतिपादनमुदाहरति—**तद्यथेति**। प्रकरणादात्मविदोऽपि कर्मयोगस्य संभवे फलितमाह—**अतश्चेति**। आत्मज्ञानोपायत्वेनापि प्रकरणपाठसिद्धौ ज्ञानादूर्ध्वं न्यायविरुद्धं कर्म कल्पयितुमशक्यमिति परिहरति—**अत्रोच्यत इति**। सम्यग्ज्ञानमिथ्याज्ञानयोस्तत्कार्ययोश्च भ्रमनिवृत्तिभ्रमसद्भावयोर्मिथो विरोधात्कर्तृत्वादिभ्रममूलं कर्म सम्यग्ज्ञानादूर्ध्वं न संभवतीत्यर्थः। आत्मज्ञस्य कर्मयोगासंभवे हेत्वन्तरमाह—**ज्ञानयोगेनेति**। इतश्चाऽऽत्मविदो ज्ञानादूर्ध्वं कर्मयोगो न युक्तिमानित्याह—**कृतकृत्यत्वेनेति**। ज्ञानवतो नास्ति कर्मेत्यत्र कारणान्तरमाह—**तस्येति**। तर्हि ज्ञानवता कर्मयोगस्य हेयत्ववज्जिज्ञासुनाऽपि तस्य त्याज्यत्वं ज्ञानप्राप्त्या तस्यापि पुरुषार्थसिद्धेरित्याशङ्क्य जिज्ञासोरस्ति कर्मयोगापेक्षेत्याह—**न कर्मणामिति**। स्वरूपोपकार्यङ्गमन्तरेणाङ्गिस्वरूपानिष्पत्तेर्ज्ञानार्थिना कर्मयोगस्य शुद्ध्यादिद्वारा ज्ञानहेतोरादेयत्वमित्यर्थः। तर्हि ज्ञानवताऽपि ज्ञानफलोपकारित्वेन कर्मयोगो मृग्यतामित्याशङ्क्याऽऽह—**योगारूढस्येति**। उत्पन्नसम्यग्ज्ञानस्य कर्माभावे शरीरस्थितिहेतोरपि कर्मणोऽसंभवान्न तस्य शरीरस्थितिरस्तदस्थितौ च कुतो जीवन्मुक्तिस्तदभावे च कस्योपदेष्टृत्वमुपदेशाभावे च कुतो ज्ञानोदयः स्यादित्याशङ्क्याऽऽह—**शारीरमिति**। विदुषोऽपि शरीरस्थितिरास्थिता चेत्तन्मात्रप्रयुक्तेषु दर्शनश्रवणादिषु कर्तृत्वाभिमानोऽपि स्यादित्याशङ्क्याऽऽह—**नैवेति**। तत्त्वविदित्यनेन च समाहितचेतस्तया करोमीति प्रत्ययस्य सदैवाकर्तव्यत्वोपदेशादिति संबन्धः। यत्तु विदुषः शरीरस्थितिनिमित्तकर्माभ्यनुज्ञाने तस्मिन्कर्तृत्वाभिमानोऽपि स्यादिति तत्राऽऽह—**शरीरेति**। आत्मयाथात्म्यविदस्तेष्वपि नाहं करोमीति प्रत्ययस्य नैव किंचित्करोमीत्यादावकर्तृत्वोपदेशान्न कर्तृत्वाभिमानसंभावनेत्यर्थः। यथोक्तोपदेशानुसंधानाभावे विदुषोऽपि करोमीतिस्वाभाविकप्रत्ययद्वारा कर्मयोगः स्यादित्याशङ्क्याऽऽह—**आत्मतत्त्वेति**। यद्यपि विद्वान्यथोक्तमुपदेशं कदाचिन्नानुसंधत्ते तथाऽपि तत्त्वविद्याविरोधान्मिथ्याज्ञानं तन्निमित्तं कर्म वा तस्य संभावयितुमशक्यमित्यर्थः। आत्मवित्कर्तृकयोः संन्यासकर्मयोगयोरयोगात्तयोर्निःश्रेयसकरत्वमन्यतरस्य विशिष्टत्वमित्येतद्युक्तमिति सिद्धत्वाद्द्वितीयं पक्षमङ्गी करोति—**यस्मादित्यादिना**। तदीयाच्च कर्मसंन्यासात्कर्मयोगस्य विशिष्टत्वाभिधानमिति संबन्धः। ननु कर्मयोगेन शुद्धबुद्धेः संन्यासो जायमानस्तस्मादुत्कृष्यते कथं तस्मात्कर्मयोगस्योत्कृष्टत्ववाचोयुक्तिर्युक्तेति तत्राऽऽह—**पूर्वोक्तेति**। वैलक्षण्यमेव स्पष्टयति—**सत्येवेति**। स्वाश्रमविहितश्रवणादौ कर्तृत्वविज्ञाने सत्येव पूर्वाश्रमोपात्तकर्मैकदेशविषयसंन्यासात्कर्मयोगस्य श्रेयस्त्ववचनं 'नैतादृशं ब्राह्मणस्यास्ति वित्तम्' इत्यादिस्मृतिविरुद्धमित्याशङ्क्याऽऽह—**यमनियमादीति**। 'आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम्। प्रीतिः प्रसादो माधुर्यमक्रोधश्च यमा दश' 'दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ। व्रतोपवासौ मौनं च स्नानं च नियमा दश' इत्युक्तैर्यमनियमैरन्यैश्चाऽऽश्रमधर्मैर्विशिष्टत्वेनानुष्ठातुमशक्यत्वादुक्तसंन्यासात्कर्मयोगस्य विशिष्टत्वोक्तिर्युक्तेत्यर्थः। न हि कश्चिदिति न्यायेन कर्मयोगस्येतरापेक्षया सुकरत्वाच्च तस्य विशिष्टत्ववचनं श्लिष्टमित्याह—**सुकरत्वेन चेति**। प्रतिवचनवाक्यार्थालोचनात्सिद्धमर्थमुपसंहरति—**इत्येवमिति**। संन्यासकर्मयोगयोर्मिथो विरुद्धयोः समुच्चित्यानुष्ठातुमशक्ययोरन्यतरस्य कर्तव्यत्वे प्रशस्यतरस्य तद्भावात्तद्भावस्य चानिर्धारितत्वात्तन्निर्दिधारयिषया प्रश्नः स्यादिति प्रश्नवाक्यार्थपर्यालोचनया प्रष्टुरभिप्रायो यथा पूर्वमुपदिष्टस्तथा प्रतिवचनार्थनिरूपणेनापि तस्य निश्चितत्वात्प्रश्नोपपत्तिः सिद्धेत्यर्थः।

**शां० भा०**—'ज्यायसी चेत्कर्मणस्ते' इत्यत्र ज्ञानकर्मणोः सहासंभवे यच्छ्रेय एतयोस्तन्मे ब्रूहीत्येवं पृष्टोऽर्जुनेन भगवान्सांख्यानां संन्यासिनां ज्ञानयोगेन निष्ठा पुनः कर्मयोगेन योगिनां

निष्ठा प्रोक्तेति निर्णयं चकार । न च संन्यसनादेव केवलात्सिद्धिं समधिगच्छतीति वचनाज्ज्ञान-सहितस्य सिद्धिसाधनत्वमिष्टं कर्मयोगस्य च विधानात् । ज्ञानरहितः संन्यासः श्रेयान्किं वा कर्म-योगः श्रेयानित्येतयोर्विशेषबुभुत्सया—संन्यासं परित्यागं कर्मणां शास्त्रीयाणामनुष्ठानविशेषाणां शंससि कथयसीत्येतत् । पुनर्योगं च तेषामेवानुष्ठानमवश्यकर्तव्यत्वं शंससि । अतो मे कतरच्छ्रेय इति संशयः किं कर्मानुष्ठानं श्रेयः किंवा तद्धानमिति प्रशस्यतरं चानुष्ठेयमतश्च यच्छ्रेयः प्रशस्यतर-मेतयोः कर्मसंन्यासकर्मानुष्ठानयोर्यदनुष्ठानाच्छ्रेयोवाप्तिर्मम स्यादिति मन्यसे तदेकमन्यतरत्सहैक-पुरुषानुष्ठेयत्वासंभवान्मे ब्रूहि सुनिश्चितमभिप्रेतं तवेति ॥ १ ॥

**शां० आ०**—ननु तृतीये यथोक्तप्रश्नस्य भगवता निर्णीतत्वान्नात्र प्रश्नप्रतिवचनयोः सावकाशत्वमित्याशङ्क्य विस्तरेणोक्तमेव संबन्धं पुनः संक्षेपतो दर्शयति—**ज्यायसी चेदिति** । सांख्ययोगयोर्भिन्नपुरुषानुष्ठेयत्वेन निर्णीतत्वान्न पुनः प्रश्नयोग्यत्वमित्यर्थः । इतोऽपि न तयोः प्रश्नविषयत्वमित्याह—**न चेति** । एवकारविशेषणाज्ज्ञानसहितसंन्यासस्य सिद्धिसाधनत्वं भगवतोऽभिमतं 'छित्त्वैनं संशयं योगमातिष्ठ' इति च कर्मयोगस्य विधानात्तस्यापि सिद्धिसाधनत्वमिष्टं ततश्च निर्णीतत्वान्न प्रश्नस्तद्विषयः सिध्यतीत्यर्थः । केनाभिप्रायेण तर्हि प्रश्नः स्यादित्याशङ्क्य ज्ञानरहितसंन्यासात्कर्मयोगस्य प्रशस्यतरत्वबुभुत्सयेत्याह—**ज्ञानरहित इति** । प्रष्टुरभिप्रायमेवं प्रदर्श्य प्रश्नोपपत्तिमुक्त्वा प्रश्नमुत्थापयति—**संन्यासमिति** । तर्हि द्वयं त्वयाऽनुष्ठेयमित्याशङ्क्य तदशक्तेरुक्तत्वात्प्रशस्यतरस्यानुष्ठानार्थं तदिदमिति निश्चित्य वक्तव्यमित्याह—**यच्छ्रेय इति** । काम्यानां प्रतिषिद्धानां च कर्मणां परित्यागो मयोच्यते न सर्वेषामित्याशङ्क्य कर्मण्यकर्मेत्यादौ विशेषादर्शनान्मैवमित्याह—**शास्त्रीयाणामिति** । अस्तु तर्हि शास्त्रीयाशास्त्रीययोरशेषयोरपि कर्मणोस्त्यागो नेत्याह—**पुनरिति** । तर्हि कर्मत्यागस्तद्योगश्चेत्युभयमाहर्तव्यमित्याशङ्क्य विरोधान्मैवमित्यभिप्रेत्याऽऽह—**अत इति** । द्वयोरेकेनानुष्ठानायोगस्योक्तत्वात्कर्तव्यत्वोक्तेश्च संशयो जायते तमेव संशयं विशदयति—**किं कर्मेति** । प्रशस्यतरबुभुत्सा किमर्थेत्याशङ्क्याऽऽह—**प्रशस्यतरं चेति** । तस्यैवानुष्ठेयत्वे प्रश्नस्य सावकाशत्वमाह—**अतश्चेति**। तदेव प्रशस्यतरं विशिनष्टि—**यदनुष्ठानादिति** । तदेकमन्यतरन्मे ब्रूहीति संबन्धः । उभयोरुक्तत्वे सति किमित्येकं वक्तव्यमिति नियुज्यते तत्राऽऽह—**सहेति** । कर्मतत्त्यागयोर्मिथो विरोधादित्यर्थः ॥ १ ॥

**आ० भा०**—तृतीयाध्यायोक्तमेव कर्मयोगं प्रपंचयत्यनेनाध्यायेन । यदृच्छालाभसंतुष्ट इत्यादिसंन्यासं कुरु कर्मैवेत्यादि कर्मयोगं च । नियमनादिना सकललोककर्षणात्कृष्णः । तच्चोक्तम् । 'यतः कर्षसि देवेश नियम्य सकलं जगत् । अतो वदंति मुनयः कृष्णं त्वां ब्रह्मवादिनः' इति महाकौर्मे । संन्यासशब्दार्थं भगवानेव वक्ष्यति । अयं प्रश्नाशयः । यदि संन्यासः श्रेयोऽधिकः स्यात् । तर्हि संन्यासस्येषद्विरोधि युद्धमिति ॥ १ ॥

**आ० ज०**—पूर्वसंगतत्वेनैतदध्यायप्रतिपादनमर्थमाह—**तृतीयेति** । कर्मयोगो नाम कर्माणि कृत्वा तेषां ब्रह्मात्मकत्वज्ञानमिति कश्चित् । तद्व्यावर्तयितुमेवशब्दः । फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहितकर्मानुष्ठानमेव कर्मयोगोऽत्र प्रपंच्यते । तस्यैव पूर्वमुक्तत्वान्नान्यस्तस्याप्रकृतत्वात् । द्व्यंशश्चायं कर्मयोगः । कामादिवर्जनमीश्वरार्पणबुद्ध्या कर्मानुष्ठानं चेति । तत्राद्यं संन्यासशब्दोक्तम् । द्वितीयमुपचारेण कर्मयोगशब्दोक्तम् । तदभिप्रायेण योगसंन्यासयोर्लक्षणं स्पष्टयतीत्यन्यत्रोक्तमिति—**संन्यासमित्यादिना** । कुत्रोक्तमर्जुनोऽनुवदतीत्यत आह—**यदृच्छेति** । कर्मयोगमितिवदता कर्मणामित्येतद्योगशब्देन संबध्यत इत्युक्तं भवति । तथा च कर्मणां संन्यासं त्यागमिति व्याख्यानमसदिति सूचितम् । शंससीत्यनेनान्वयः । चतुर्थाध्यायोक्तस्यार्थस्यैतदध्यायोत्थानबीजत्वात्तृतीयाध्यायार्थप्रपंचनात्मकस्याप्यस्य चतुर्थानंतर्यं युक्तमित्यप्यनेन ज्ञापितम् कृष्णशब्दो वर्णविशेषमात्रवचन इतिप्रतीतिनिरासायाह—**नियमनादिनेति** । नित्यनैमित्तिककाम्यनिषिद्धरूपसर्वकर्मत्यागः संन्यासशब्दार्थ इति व्याख्यानं दूषयति—**संन्यासेति** । ज्ञेयः स नित्यसंन्यासीति संन्यासशब्दस्य भगवतैवान्यथा व्याख्यातत्वात् तद्विरुद्धं परव्याख्यानमित्यर्थः । यदि सर्वकर्मपरित्यागो न संन्यासशब्दार्थः किंतु द्वेषादिवर्जनमेव तर्हि तस्य योगेन विरोधाभावात्संन्यासयोगयोर्विरोधाभिप्रायेण श्रेयः प्रश्नोऽनुपपन्नः स्यादित्यत आह—**अयमिति** । अत्र श्रेय इति यथास्थितं गीतापदमनूद्य संन्यासपदानुगुण्येनाधिक इति व्याख्यातम् । नन्वेतत् घोर इति चोदितं श्रेयानिति च परिहृतं च । सत्यम् । अतएवात्रेषदित्युक्तमिति । अतस्तत्त्यक्त्वा संन्यास एव कर्तव्ये किं वैगुण्यमंगीकृत्यापि विधीयते युद्धमित्याशयशेषः ॥ १ ॥

**रा० भा०**—चतुर्थेऽध्याये कर्मयोगस्य ज्ञानाकारतापूर्वकस्वरूपभेदो ज्ञानांशस्य च प्राधान्यमुक्तं ज्ञानयोगाधिकारिणोऽपि कर्मयोगस्यान्तर्गतात्मज्ञानत्वादप्रमादत्वात्सुकरत्वान्निरपेक्षत्वाज्ज्यायस्त्वं तृतीय एवोक्तम् । इदानीं कर्मयोगस्यात्मप्राप्तिसाधनत्वे ज्ञाननिष्ठायाः शैघ्र्यात्कर्मयोगान्तर्गताकर्तृत्वानुसंधानप्रकारं च प्रतिपाद्य तन्मूलं ज्ञानं च परिशोध्यते । कर्मणां संन्यासं ज्ञानयोगं पुनः कर्मयोगं च शंससि । एतदुक्तं भवति । द्वितीयेऽध्याये मुमुक्षोः प्रथमं कर्मयोग एव कार्यः कर्मयोगेन मृदितान्तःकरणकषायस्य ज्ञानयोगेनात्मदर्शनं कार्यमिति प्रतिपाद्य पुनस्तृतीयचतुर्थयोर्ज्ञानयोगाधिकारदशामापन्नस्यापि कर्मनिष्ठैव ज्यायसो सैव ज्ञाननिष्ठानिरपेक्षात्मप्राप्त्यैकसाधनमिति कर्मनिष्ठां प्रशंससीति तत्रैव तयोर्ज्ञानयोगकर्मयोगयोरात्मप्राप्तिसाधनभावे यदेकं सौकर्याच्छैघ्र्याच्च श्रेयः श्रेष्ठमिति सुनिश्चितं तन्मे ब्रूहि ॥ १ ॥

**अ० टी०**—श्रीकृष्णाय नमः ॥ 'संन्यासं कर्मयोगं च श्रीकृष्णोक्तं धनञ्जयः ॥ श्रुत्वा संशयमापन्नः पुनः प्रश्नं चकार ह ॥ १ ॥' अर्जुन उवाच—**संन्यासमिति** । हे कृष्ण सदानन्द ! आनन्दैकदानयोग्य ! कर्मणां संन्यासं त्यागं 'न मां कर्माणि' इत्यारभ्य 'कृत्वाऽपि न निबध्यत' इत्यन्तं शंससि पुनर्योगमातिष्ठेत्यनेन योगं च शंससि । एतयोरुभयोर्मध्ये एकं सुनिश्चितं निर्धारितं ब्रूहि । च पुनरेतयोरुभयोः सकाशोदकमन्यद् यच्छ्रेयः श्रेयोरूपं भक्तिरूपं भवेत् तन्मे मम त्वदीयस्य सुनिश्चितं संशयरहितं ब्रूहि ॥ १ ॥

**नी० टी०**—तृतीयेऽध्याये 'लोकेऽस्मिन् द्विविधा निष्ठा' इति विभिन्नाधिकारिकं निष्ठाद्वयं प्रस्तुत्य 'न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुत' इत्यादिना कर्मनिष्ठाया ज्ञाननिष्ठांगत्वेन भूयसा निर्बंधेनानुष्ठेयत्वमुक्तं । कर्मण्येवाधिकारस्त इत्यादिना चतुर्थे तूत्पन्नसम्यग्दर्शनैः कृतमपि कर्माकृतमेव भवति ज्ञानेन कर्तृत्वादिबाधात् अतस्तैर्वृथाचेष्टावत्कर्म वा कर्त्तव्यं संन्यासो वा कर्त्तव्य इत्यनास्थया प्रोक्तं । अथेदानीं पंचमषष्ठयोरज्ञानिना ज्ञानार्थिना वैराग्योत्पत्तेः प्राक्कर्मैवानुष्ठेयं । संपन्ने तु वैराग्ये दृष्टविक्षेपनिवृत्त्यर्थं कर्मसंन्यासं कृत्वा ज्ञानोत्पत्त्यर्थं योगोऽनुष्ठेय इत्युच्यते । तत्र चतुर्थे त्यक्तसर्वपरिग्रह इति संन्यासो योगमातिष्ठेति कर्मयोगश्चैकं मां प्रति विहितः । न चैतयोः स्थितिगतिवद्युगपदेकेन मयाऽनुष्ठानं कर्त्तुं शक्यते परस्परविरुद्धत्वादिति मन्वानोऽर्जुन उवाच—**संन्यासमिति**। हेकृष्ण पापकर्षण मे मह्यं ज्ञानार्थिने संन्यासं कर्मयोगं चेति द्वयं परस्परविरुद्धं कथं शंससि कथयसि पुनरित्यनेन प्रागपि त्वया वेदकर्त्रा इदं द्वयं विहितमस्तीति गम्यते तथा च श्रुतिस्मृती भवतः। "एवमेव प्रवाजिनो लोकमिच्छंतः प्रव्रजंति।" 'संसारमेवं निःसारं दृष्ट्वा सारदिदृक्षया ॥ प्रव्रजंत्यकृतोद्वाहाः परं वैराग्यमास्थिताः' इति च । तथा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेन" इति। 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इति च ब्राह्मी ब्रह्मदर्शनयोग्या अत एतयोः श्रुतिविहितत्वेन प्रशस्तयोर्मध्ये एकं श्रेयः प्रशस्ततरं यत्तन्मे सुनिश्चितं ब्रूहीति प्रश्नः ॥ १ ॥

**श्रीभगवानुवाच—संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ॥**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥**

**शां० भा०**—स्वाभिप्रायमाचक्षाणो निर्णयाय—संन्यासः कर्मणां परित्यागः कर्मयोगश्च तेषामनुष्ठानं तावुभावपि निःश्रेयसकरौ निःश्रेयसं मोक्षं कुर्वाते ज्ञानोत्पत्तिहेतुत्वेनोभौ यद्यपि

निःश्रेयसकरौ तथाऽपि तयोऽस्तु निःश्रेयसहेत्वोः कर्मसंन्यासात्केवलात्कर्मयोगो विशिष्यत इति कर्मयोगं स्तौति ॥ २ ॥

**शां० आ०**—प्रश्नमेवमुत्थाप्य प्रतिवचनमुत्थापयति—**स्वाभिप्रायमिति**। निर्णयाय तद्वारेण परस्य संशयनिवृत्त्यर्थमित्यर्थः। एवं प्रश्ने प्रवृत्ते कर्मयोगस्य सौकर्यमभिप्रेत्य प्रशस्यतरत्वमभिधित्सुर्भगवान्प्रतिवचनं किमुक्तवानित्याशङ्क्याऽऽह—**संन्यास इति**। उभयोरपि तुल्यत्वशङ्कां वारयति—**तयोस्त्विति**। कथं तर्हि तयोरेव मोक्षोपायत्वं विवक्ष्यते तत्राऽऽह—**ज्ञानोत्पत्तीति**। तर्हि द्वयोरपि प्रशस्यत्वमप्रशस्यत्वं वा तुल्यमित्याशङ्क्याऽऽह—**उभाविति**। ज्ञानसहायस्य कर्मसंन्यासस्य कर्मयोगापेक्षया विशिष्टत्वविवक्षया विशिनष्टि—**केवलादिति** ॥ २ ॥

**आ० भा०**—नायं संन्यासो यत्याश्रमः। 'द्वंद्वत्यागात्तु संन्यासान्मत्पूजैव गरीयसी' इतिवचनात्। तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयदिति च। 'संन्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः। न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ॥ तद्भक्तोऽपि हि यद्गच्छेत्तद्गृहस्थो न धार्मिकः। मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते ॥ यदाधिकारो भवति ब्रह्मचार्यपि प्रव्रजेत्' इति नारदीये "ब्रह्मचर्यादेव प्रव्रजेत् यदहरेव विरजेत्" इति च 'संन्यासे तु तुरीये वै प्रीतिर्मम महीयसी॥ येषामत्राधिकारो न तेषां कर्मेति निश्चयः' इत्यादेश्च ब्राह्मे। अतो नात्राश्रमः संन्यासउक्तः ॥ २ ॥

**आ० ज०**—संन्यासमिति प्रश्नवाक्ये संन्यास इति परिहारवाक्ये च संन्यासयोगशब्दौ यतिगृहस्थाश्रमविषयावेव। तयोः सर्वकर्मत्यागात्तदनुष्ठानरूपत्वात्। ज्ञेय इति वचनं तु न संन्यासशब्दव्याख्यानपरम्। किं तु यो द्वेषादिवर्जितो गृही सोऽपि संन्यासी ज्ञातव्य इति स्तुतिपरमेवेत्यत आह—**नायमिति**। अयं परिहारवाक्यस्थः। प्रश्नवाक्यस्थस्य तात्पर्यनिर्णये तथाभ्युपगमात्। योगश्च न गृहस्थाश्रम इत्यपि द्रष्टव्यम्। कुतो नेति चेत्। अत्र तयोस्त्विति संन्यासात्कर्मयोगस्य विशिष्टत्ववचनात्। तस्य चास्मत्पक्ष एव संभवादन्यत्रासंभवादिति भावः। कुतो भवत्पक्षे संभव इत्यत आह—**द्वंद्वेति**। मत्पूजा मदर्पणबुद्ध्या कर्मानुष्ठानम् आश्रमार्थत्वे कुतोसंभव इत्यत आह—**तानीति**। तान्याधानादीनि अत्यरेचयत्। अत्यरिच्यत इतिवचनादिति वर्तते। न्यस्यतेऽस्मिन्सर्वमिति ब्रह्मैव न्यास इति कश्चित्। तदसत्। तपोऽपेक्षयोत्तमत्वाभिधानस्यासंगतत्वात्। उपायोपेयभावेन संगतिरिति चेत् तर्हि तत्सिद्धौ लोकत एवोत्तमत्वसिद्धेरभिधानवैयर्थ्यात्। गृहस्थाश्रमाद्यत्याश्रमस्योत्तमत्वमयुक्तम्। गृहस्थाश्रमो हि सर्वधर्मोपपन्नस्तत्समर्थे मध्यमे वयसि अनुष्ठेयो महाफलश्च यत्याश्रमस्तु निष्क्रियश्चरमे वयसि गृहस्थधर्मानधिकृतैरंधपंग्वादिभिरनुष्ठेयोऽल्पफलश्चेति केचित् तन्निरासार्थमाह—**संन्यासस्त्विति**। काम्यकर्मरहितत्वात् निष्क्रियाख्योऽपि सधर्मकः न केवलं सधर्मकः किं तु न तस्माद्यत्याश्रमानुष्ठेयाद्यतिभक्त्यापि यत्फलं प्राप्नुयान्न तत्सर्वैर्गृहस्थधर्मैरित्यर्थः। ब्रह्मचर्यादेव ब्रह्मचर्यं विसृज्यैव विरजेत् विरक्तो भवेत् "तदहरेव प्रव्रजेत्" इति श्रुतिशेषः। कर्मेत्याश्रमांतरम्। यदुक्तं नायमित्यादि तदुपसंहरति—**अत इति**। अत्र परिहारवाक्ये ॥ २ ॥

**रा० भा०**—संन्यासः ज्ञानयोगः कर्मयोगश्च ज्ञानयोगशक्तस्याप्युभौ निरपेक्षौ निःश्रेयसकरौ तयोस्तु कर्मसंन्यासाज्ज्ञानयोगात् कर्मयोग एव विशिष्यते ॥ २ ॥

**श्र० टी०**—भगवानेतत्प्रश्नोत्तरमाह कृपया—**संन्यास इति**। संन्यासः कर्मणां त्यागः कर्मयोगः कर्मानुष्ठानमेतावुभौ निःश्रेयसकरौ मोक्षापादकौ तयोरपि कर्मसंन्यासात् केवलं कर्मत्यागात्, मदाज्ञया फलानभिलाषेण मदर्पणधिया कर्मयोगः कर्मानुष्ठानं विशिष्यते उत्तममित्यर्थः ॥ २ ॥

**नी० टी०**—अस्योत्तरं भगवानुवाच—**संन्यास इति**। निःश्रेयसकरौ ज्ञानोत्पत्तिहेतुतया। तथापि कर्मसंन्यासादविरक्तकृतात्कर्मयोग एव विशिष्यते चित्तशुद्धिद्वारा वैराग्यादिहेतुत्वात् ॥ २ ॥

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ॥**
**निर्द्वंद्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥**

**शां० भा०**—कस्मादित्याह—ज्ञेय इति। ज्ञेयो ज्ञातव्यः स कर्मयोगी नित्यसंन्यासीति यो न द्वेष्टि किंचिन्न काङ्क्षति दुःखसुखे तत्साधने चैवंविधो यः कर्माणि वर्तमानोऽपि स नित्यसंन्यासीति ज्ञातव्य इत्यर्थः। निर्द्वंद्वो द्वंद्ववर्जितो हि यस्मान्महाबाहो सुखं बन्धादनायासेन प्रमुच्यते ॥३॥

**शां० आ०**—कर्म हि बन्धकारणं प्रसिद्धं तत्कथं निःश्रेयसकरं स्यादिति शङ्कते—**कस्मादिति**। अकर्त्रात्मविज्ञानात्प्रागपि सर्वदाऽसौ संन्यासी ज्ञेयो यो रागद्वेषौ क्वचिदपि न करोतीत्याह—**इत्याहेति**। यथाऽननुष्ठीयमानानि कर्माणि संन्यासिनं न बध्नन्ति कृतानि च वैराग्येन्द्रियसंयमादिना निवर्तन्ते तथैवानभिसंहितफलानि नित्यनैमित्तिकानि योगिनमपि न बध्नन्ति निवर्तयन्ति च संचितं दुरितमित्यभिप्रेत्याऽऽह—**निर्द्वंद्वो हीति**। कर्मयोगिनो नित्यसंन्यासित्वज्ञानमन्यथाज्ञानत्वान्मिथ्याज्ञानमित्याशङ्क्याऽऽह—**एवंविध इति**। कर्मिणोऽपि रागद्वेषाभावेन संन्यासित्वं ज्ञातुमुचितमित्यर्थः। रागद्वेषरहितस्यानायासेन बन्धप्रध्वंससिद्धेश्च युक्तं तस्य संन्यासित्वमित्याह—**निर्द्वंद्व इति** ॥ ३ ॥

**आ० भा०**—संन्यासशब्दार्थमाह—ज्ञेयइति। संन्यासस्य निःश्रेयसकरत्वं ज्ञापयितुं तच्छब्दार्थं स्मारयति—ज्ञेयइति ॥ ३ ॥

**आ० ज०**—ज्ञेय इत्यस्यापव्याख्यानं दूषयन् तात्पर्यमाह—**संन्यासेति**। अर्थांतरस्याप्रतीतोरीति भावः। ननु यदृच्छालाभसंतुष्ट इत्यादिनोक्तं कामादिपरित्यागं संन्यासकर्मणामित्यनूद्यार्जुनस्य प्रश्न इत्युक्तम्। ततश्च जानात्येवासौ संन्यासशब्दार्थमिति न तं प्रति स वक्तव्यः। तथा च पूर्वपक्ष्युत्प्रेक्षित एवास्यार्थ इत्यत आह—**संन्यासस्येति**। संन्यासः कर्मयोगश्च निःश्रेयसकरावुभाविति यत्संन्यासस्य निःश्रेयसकरत्वमुक्तं तदुपपादयितुं ज्ञातमपि संन्यासशब्दार्थं स्मारयत्यनेन द्वेषादिवर्जनं हि संन्यासः। तस्य च निःश्रेयसकरत्वं श्रुत्यादिप्रसिद्धमेवेति। अतः संन्यासशब्दार्थकथन एव तात्पर्याभावान्नानुपपत्तिरित्यर्थः। ज्ञापकं चास्यार्थस्यास्तीत्याह—**ज्ञेय इतीति**। ज्ञेयः स्मर्तव्य इत्यनेनोक्तमित्यर्थः। योगस्य तु निःश्रेयसकरत्वमुत्तरवाक्य एव सेत्स्यति ॥ ३ ॥

**रा० भा०**—कुत इत्यत आह। यः कर्मयोगी तदन्तर्गत आत्मानुभवतृप्तः तद्व्यतिरिक्तं किमपि न काङ्क्षति तत एव किमपि न द्वेष्टि तत एव द्वन्द्वसहश्च स नित्यसंन्यासी नित्यज्ञाननिष्ठ इति ज्ञेयः स हि सुकरकर्मयोगनिष्ठतया सुखं बन्धात्प्रमुच्यते ॥ ३ ॥

**अ० टी०**—अथ श्रेयोरूपप्रश्नोत्तरमाह सर्वत्यागरूपम्—ज्ञेय इति। यः संन्यासी सर्वत्यागवान् सर्वं त्यक्त्वैतयोर्मध्ये नैकं कमपि द्वेष्टि नचैकं कमप्याकाङ्क्षति स नित्यं ज्ञेयो ज्ञातुं योग्यः। मदीयत्वेनेति शेषः। हे महाबाहो! सर्वकरणसमर्थ! हि निश्चयेन निर्द्वन्द्वः कर्म संन्यासयोगयोर्मदाज्ञातिरेकेण भिन्नज्ञानरहितो बन्धात् तत्फलजात्सुखं प्रमुच्यते। मोक्षे प्रकर्षो मदाज्ञाकरणेऽहं प्रसन्नो भवामीति भावः ॥ ३ ॥

**नी० टी०**—ननु प्रत्यक्षः कर्मयोगिनां विक्षेपः संन्यासिनां तु स नास्तीति कथमुच्यते कर्मयोगो विशिष्यत इत्याशंक्याह—ज्ञेय इति। यो रागद्वेषरहितः स कर्मसु स्वरूपतस्त्यक्तेष्वत्यक्तेषु वा नित्यं संन्यास्येव। एतेन साधनभूतयोः सांख्ययोगयो रागद्वेषराहित्यकृतं साम्यमुक्तं। फलभूतयोस्तु सर्वविकल्पराहित्यरूपसाम्यमनंतरश्लोकाभ्यामुच्यते। तथापि चित्तस्वाभाव्यात्कदाचित्संन्यासिनो रागोदये पाताशंकास्ति नेतरस्येति स एव श्रेयानिति भावः। यद्यप्येवं तथाऽपि हि प्रसिद्धं निर्द्वंद्वो द्वंद्वं सत्यानृतयोरात्मानात्मनोर्मिथुनं परस्पराध्यासस्तद्रहितः सांख्यो रागाद्युदयहेतोरज्ञानस्यात्यंतोच्छेदात् सुखं कर्मकरणायासं विनाऽपि बंधात् संसारात् केवलज्ञानेनैव मुच्यते न कर्माण्यपेक्षते। यद्वा निर्द्वंद्वो "द्वंद्वं वै मिथुनं तस्माद्द्वंद्वान्मिथुनं प्रजायते" इति श्रुतेर्द्वंद्वं स्त्रीपुंसयोर्मिथुनं तद्रहितः स्त्र्यादित्यागी संन्यासी अनायासेन मुच्यते रागादिजयस्योभयत्र तुल्यत्वात् अत्र च कुटुंबभरणवैयग्र्याभावात्सुखं मुच्यत इत्यर्थः ॥ ३ ॥

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ॥**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

**शां० भा०**—संन्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेययोर्विरुद्धयोः फलेऽपि विरोधो युक्तो न तूभयोर्निःश्रेयसकरत्वमेवेति प्राप्त इदमुच्यते—सांख्ययोगाविति । सांख्ययोगौ पृथग्विरुद्धभिन्नफलौ बालाः प्रवदन्ति न पण्डिताः । पण्डितास्तु ज्ञानिन एकं फलमविरुद्धमिच्छन्ति । कथमेकमपि सांख्ययोगयोः सम्यगास्थितः सम्यगनुष्ठितवानित्यर्थः । उभयोर्विन्दते फलमुभयोस्तदेव हि निःश्रेयसं फलमतो न फले विरोधोऽस्ति । ननु संन्यासकर्मयोगशब्देन प्रस्तुत्य सांख्ययोगयोः फलैकत्वं कथमिहाप्रकृतं ब्रवीति । नैष दोषो यद्यप्यर्जुनेन संन्यासं कर्मयोगं च केवलमभिप्रेत्य प्रश्नः कृतो भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतं च विशेषं संयोज्य शब्दान्तरवाच्यतया प्रतिवचनं ददौ सांख्ययोगाविति । तावेव संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगशब्दवाच्याविति भगवतो मतमतो नाप्रकृतप्रक्रियेति ॥ ४ ॥

**शां० आ०**—यदुक्तं संन्यासकर्मयोगयोर्निःश्रेयसकरत्वं तदाक्षिपति—**संन्यासेति** । तत्रोत्तरत्वेनोत्तरश्लोकमवतारयति—**इति प्राप्त इति** । विवेकिनस्तर्हि कथं वदन्तीत्याकाङ्क्षायामाह—**एकमिति** । संख्यामात्मसमीक्षामर्हतीति सांख्यः संन्यासो योगस्तु कर्मयोगस्तावुभावपि पृथगित्यस्यार्थमाह—**विरुद्धेति** । शास्त्रार्थे विवेकशून्यत्वं बालत्वम् । उत्तरार्धमवतारयितुं भूमिकां करोति —**पण्डितास्त्विति** । ज्ञानिनो योगिनश्चेति शेषः । द्वयोरविरुद्धफलत्वमेव प्रश्नपूर्वकं प्रकटयति—**कथमित्यादिना** । एकं साधनमनुष्ठितवतो द्वयोरपि फलं भवतीति विरुद्धमित्याशङ्कयाऽऽह—**उभयोरिति** । सांख्ययोगयोः संन्यासकर्मानुष्ठानयोस्तत्त्वज्ञानद्वारा निःश्रेयसफलत्वान्न विरुद्धफलत्वशङ्केत्यर्थः । सांख्ययोगयोरेकफलत्ववचनं प्रकरणाननुगुणमिति शङ्कते—**नन्विति** । अप्रकृतत्वमसिद्धमिति परिहरति—**नैष दोष इति** । संन्यासं कर्मणामित्यादिना संन्यासं कर्मयोगं चाङ्गीकृत्य प्रश्ने संन्यासः कर्मयोगश्चेत्यादिना तथैव प्रतिवचने कथं सांख्ययोगयोरेकफलत्वमप्रकृतं न भवतीत्युच्यते तत्राऽऽह—**यद्यपीति** । प्रतिवचनमपि तदनुरूपमेव भगवता निरूपितमिति विशेषानुपपत्तिरित्याशङ्कयाऽऽह—**भगवांस्त्विति** । तदपरित्यागेनेत्यत्र तत्पदेन प्रष्ट्रा प्रति निर्दिष्टौ कर्मसंन्यासकर्मयोगावुच्येते । सांख्ययोगाविति शब्दान्तरवाच्यतया तयोरेव संन्यासकर्मयोगयोरत्यागेन स्वाभिप्रेतं च विशेषं संयोज्य भगवान्प्रतिवचनं ददाविति योजना । यदुक्तं स्वाभिप्रेतं च विशेषं संयोज्येति तदेतद्व्यक्ती करोति—**तावेवेति** । समबुद्धित्वादीत्यादिशब्देन ज्ञानोपायभूतः शमादिरादीयते प्रकृतयोरेव संन्यासकर्मयोगयोरुपादाने फलितमाह—**अत इति** । सांख्ययोगावित्यादिश्लोकव्याख्यानसमाप्तिरितिशब्दार्थः ॥ ४ ॥

**आ० भा०**—संन्यासो हि ज्ञानांतरंगत्वेनोक्तः न तस्य तत्त्वग्रहणायेत्यादौ । अतः कथं सोऽवमइत्यतआह—सांख्ययोगाविति । उभयोरप्यंतरंगत्वेनाविरोधः । "अग्निमुग्धो ह वै धूमतांतः स्वं लोकं न प्रत्यभिजानाति । मा वः पदव्यः पितरस्मदास्थिता या यज्ञशालासनधूमवर्त्मनाम्" इत्यादि काम्यकर्मविषयमिति भावः । ये त्वन्यथा वदंति ते बालाः ॥ ४ ॥

**आ० ज०**—संन्यासं गृहीत्वा योगं त्वक्ष्यामीत्याशयेन द्वयोः श्रेयसि पृष्टे द्वावपि निःश्रेयसकरौ तत्रापि संन्यासाद्योगोविशिष्टोऽतो न युद्धं त्वया त्याज्यमिति परिहारो जातः किमर्थमिदानीं सांख्ययोगावित्युच्यत इत्यत आह—**संन्यासो हीति** । हिशब्दो हेतौ । ज्ञानांतरंगत्वेन ज्ञानोत्पत्तावत्यावश्यकत्वेन न तस्येत्यत्र विषयवैराग्याभावे ज्ञानानुत्पत्तिवचनेन तत एव तदुत्पत्तिरिति लभ्यते । एवं कर्मयोगस्तु ज्ञानविरोधित्वेनोक्त अग्निमुग्ध इत्यादावित्यपि ग्राह्यम् । अवमो योगात् । अनेन योगस्य निःश्रेयसकरत्वमप्याक्षिप्तम् । ननु सांख्यं ज्ञानं योगः कर्म तयोः कथमत्र पृथक्त्वाभाव उच्यते कथं चानेनोक्ताक्षेपपरिहार इत्यत आह—**उभयोरपीति** । न केवलं संन्यासस्य किं तु योगस्यापीत्युभयोरपि ज्ञानांतरंगत्वान्नोक्तो विरोध इत्यर्थः । अनेन सांख्ययोगौ पृथक्साध्यसाधनभावहीनाविति न पंडिता मन्यंतइत्येवं व्याख्यातं भवति । ननु श्रुतिपुराणाभ्यां कर्मणो ज्ञानविरोधित्वमुच्यत इत्युक्तम् । अतः कथमेवमभिधीयत इत्यत आह—**अग्नीति** । अग्न्युपलक्षिते कर्मणि मुग्धः श्रेयस्करमिति भ्रांतः । धूमतांतो होमधूमेन

तांतो ग्लानः । धूमता धूमादित्वमेवांतःपर्यवसानमस्येति वा । स्वं लोकं स्वीयमाश्रयं परमात्मानम् । यज्ञशालासनेन धूमोपलक्षितमागवतां वः पदव्योऽस्मदाश्रितामित्यर्थः । नन्वकाम्यमपि नित्यं नैमित्तिकं च कर्म प्रत्यवायपरिहारार्थमेव न ज्ञानांतरंगमिति विद्वांस एव मन्यंत इत्यत आह—**ये त्विति** । वाला अविवेकिनः ॥ ४ ॥

**रा० भा०—ज्ञानयोगकर्मयोगयोरात्मप्राप्तिसाधनभावेऽन्योन्यनैरपेक्ष्यमाह—ज्ञानयोगकर्मयोगौ फलभेदात् पृथग्भूतौ ये प्रवदन्ति ते बालाः अनिष्पन्नज्ञानाः न पण्डिताः नतु कृत्स्नविदः कर्मयोगो ज्ञानयोगमेव साधयति ज्ञानयोगस्त्वात्मावलोकनं साधयतीति तयोः फलभेदेन पृथक्त्वं वदन्तो न पण्डिता इत्यर्थः । उभयोरात्मावलोकनैकफलयोरेकफलत्वेनैकमप्यास्थितस्तदेव फलं लभते ॥ ४ ॥**

**अ० टी०**—उभयोर्हेयोपादेयज्ञानिनो मत्स्वरूपाद्भिन्नज्ञानिनश्च मूर्खाइत्याह—**सांख्ययोगाविति** । सांख्ययोगौ पृथक् भिन्नतयाऽनुष्ठेयाननुष्ठेयत्वेन मताविति बाला मूर्खाः प्रवदन्ति न पण्डिताः । ज्ञानिन इत्यर्थः । अयं भावः सांख्ययोगौ मत्कुण्डलात्मकौ तत्र हेयोपादेयज्ञानं मत्कुण्डलयोर्भेदात्मकत्वाद् भिन्नज्ञानं चाज्ञानमेवेति भावः । यतस्तथा ज्ञानमज्ञानमतः सम्यगास्थितो मत्स्वरूपपरो मदाज्ञया कुर्वन्नुभयोरप्येकं फलं मत्प्रसादरूपं विन्दते प्राप्नोतीत्यर्थः ॥ ४ ॥

**नी० टी०**—नन्वेकत्र पाताशंका एकत्र कर्मश्रमस्तदनयोः पथोः कतरः श्रेयानित्याशंक्य द्वयोरपि फलतः साम्यमित्याह—**सांख्ययोगाविति** । सांख्यं समित्येकीभावे इति यास्कः एकीभावेनात्मानन्यत्वेन ख्यायते प्रकाश्यते वस्तुस्वरूपमनयेति संख्या स्थूलसूक्ष्मकारणप्रपंचस्य निर्विकल्पे प्रत्यगात्मनि प्रविलापनेनोदिता चेतोवृत्तिस्तत्साधनभूतोऽयं सांख्यः संन्यासः । स च दारादिबुद्ध्यंतानां पदार्थानामात्मन्येकीभावेन न्यसनं त्यागः प्रविलापनं । तथा योगोप्यग्निहोत्रसंध्योपासनादिनिर्विकल्पसमाध्यंतमनुष्ठानं । तत्र मुख्यस्य योगस्य लक्षणं "योगश्चित्तवृत्तिनिरोधः" इति । वृत्तयश्च "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति पंच । तत्र "प्रत्यक्षानुमानागमाः प्रमाणानि" । तेषु प्रत्यक्षमिंद्रियं तजा वृत्तिः शुक्त्यादिविषयं याथार्थ्येन ज्ञानं । विपर्ययस्तु तत्रैव रजतादिविषयं भ्रांतिरूपं ज्ञानं । संशयोऽपि इयं शुक्तिर्वा रजतं वेति अनिर्धारितान्यतरकोटिकं ज्ञानं स विपर्यय एवांतर्भवति । विकल्पस्तु शब्दज्ञानानुपाती वस्तुशून्यः । यथा पुरुषस्य चैतन्यं वंध्यापुत्र इति । नहि पुरुषचैतन्यतत्संबंधानां पृथक्त्वमस्ति किंतु चैतन्यमेव हि शब्दत्रयेणोच्यते । नापि वंध्यासुतस्य स्वरूपमस्त्यथापि शब्देनाभिलप्यते सोऽयं विकल्पः शब्दज्ञानानुपाती वस्तुशून्यः । एकस्मिन्ननेकबुद्धिरसति च सद्बुद्धिरिति । निद्रास्मृती लोकप्रसिद्धे । एतासां निरोधेऽपि निर्विकल्पः प्रत्यगात्मैवावशिष्यते । तावेतौ फलभूतौ सांख्ययोगौ । साधनभूतौ तावेव संन्यासकर्मयोगाख्यौ । तत्रांत्ययोः साम्यं ज्ञेयः स नित्यसंन्यासीत्यनेन सूचितं । आद्ययोस्त्वैक्यमत्रोच्यते आस्थितः अनुतिष्ठन् फलं निर्विकल्पात्मनाऽवस्थितिरूपम् ॥ ४ ॥

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥**

**शां० भा०—एकस्यापि सम्यगनुष्ठानात्कथमुभयोः फलं विन्दत इत्युच्यते—यदिति । यत्सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिः प्राप्यते स्थानं मोक्षाख्यं तद्योगैरपि ज्ञानप्राप्त्युपायत्वेनेश्वरे समर्प्य कर्माण्यात्मनः फलमभिसंधायानुतिष्ठन्ति ये ते योगिनस्तैरपि परमार्थज्ञानसंन्यासप्राप्तिद्वारेण गम्यत इत्यभिप्रायोऽत एकं सांख्यं योगं च यः पश्यति फलैकत्वात्स सम्यक्पश्यतीत्यर्थः ॥ ५ ॥**

**शां० आ०**—प्रश्नपूर्वकं श्लोकान्तरमवतारयति—**एकस्यापीति**। केचिदेव तयोरेकफलत्वं पश्यन्तीत्याशङ्क्य तेषामेव सम्यग्दर्शित्वं नेतरेषामित्याह—**एकमिति**। तिष्ठत्यस्मिन्न च्यवते पुनरिति व्युत्पत्तिमाश्रित्याऽऽह—**मोक्षाख्यमिति**। योगशब्दार्थमाह—**ज्ञानप्राप्तीति**। ये हि जिज्ञासवः सर्वाणि कर्माणि भगवत्प्रीत्यर्थत्वेन तेषां फलाभिलाषमकृत्वा ज्ञानप्राप्तौ बुद्धिशुद्धिद्वारेणोपायत्वेनानुतिष्ठन्ति तेऽत्र योगा विवक्ष्यन्ते। अच्प्रत्ययस्य मत्वर्थत्वं गृहीत्वोक्तं योगिन इति। सर्वोऽपि द्वैतप्रपञ्चो न वस्तुभूतो मायाविलासत्वादात्मा त्वविक्रियोऽद्वितीयो वस्तु सन्निति प्रयोजकज्ञानं परमार्थज्ञानं तत्पूर्वकसंन्यासद्वारेण कर्मिभिरपि तदेव स्थानं प्राप्यमित्येकफलत्वं संन्यासकर्मयोगयोरविरुद्धमित्याह—**तैरपीति**। फलैकत्वे फलितमाह—**अत इति**॥ ५॥

**आ० भा०**—एकमपीत्यस्याभिप्रायमाह—**यत्सांख्यैरिति**। योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इत्यर्थः॥ ५॥

**आ० ज०**—योगस्य ज्ञानसाधनत्वे प्रमिते भवेदेतत्तदेव कथमित्यत उक्तमेकमपीति तदनुपपन्नम्। उभयोर्मध्ये सम्यगेकमप्यास्थितः फलं विंदत इति योजनायां द्वयोः साफल्यमात्रमुच्यते। एकमपि सम्यगास्थितः उभयोः फलं विंदत इति पक्षे तु द्वयं किंचित्फलं प्रति स्वतंत्रं साधनमुच्यते। पक्षद्वयेऽपि न प्रकृतोपयोग इत्यत आह—**एकमपीति**। एवमनुपयोगेऽपि भगवानेव स्ववाक्याभिप्रायमाह। स ग्राह्य इत्यर्थः। अनेनापि योगस्य ज्ञानसाधनत्वे किं प्रमाणमुक्तामित्यतो व्याचष्टे—**योगिभिरपीति**। "तरति शोकमात्मवित्" इत्यादिना यज्ज्ञानफलमोक्षाख्यं प्रमितं तत्तावद्योगिभिरपि प्राप्यत इत्युच्यते अपाम सोममित्यादिना। तत्र विचार्यम्। किं द्वयमपि स्वतंत्रं मुक्तिसाधनम् उत समुचितम् अथवैकं साक्षान्मोक्षसाधनम्। अपरं तत्साधनत्वेनेति न प्रथमद्वितीयौ। नान्यः पंथा इत्यादिविरोधात्। तृतीयेऽपि चिंत्यं किं कस्य साधनमिति। तत्र न तावज्ज्ञानं कर्मसाधनत्वेन मोक्षहेतुः। न किंचिदंतराधयेत्यादिविरोधात्। अतः परिशेषाद्योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इति सिद्ध्यति। तथा च योगस्य ज्ञानसाधनत्वं सिद्धमित्यर्थः। अत्र योगिभिरिति वदता योगशब्दो धर्मिणामुपलक्षकोऽर्शआद्यजंतो वेति सूचितम्॥ ५॥

**रा० भा०**—एतदेव विवृणोति—सांख्यैर्ज्ञाननिष्ठैर्यदात्मावलोकनरूपफलं प्राप्यते तदेव कर्मयोगनिष्ठैरपि प्राप्यते एवमेकफलत्वेनैकं वैकल्पिकं सांख्यं योगं च यः पश्यति स पश्यति स एव पण्डित इत्यर्थः॥ ५॥

**अ० टी०**—एकफलत्वमेव विवेचयति—**यत्सांख्यैरिति**। यत्स्थानं मत्सामीप्यं सांख्यैः सांख्यनिष्ठैः प्राप्यते तत्स्थानं योगैरपि योगानुष्ठातृभिरपि गम्यते प्राप्यते। तथाचायं भावः। उभयोः कुण्डलरूपत्वाद्यथास्थितस्वरूपज्ञानेनोभयनिष्ठानामपि भगवन्मुखसामीप्यमेव भविष्यति यतस्तयोरेकमेव स्थानमतोयः सांख्यं योगं चैकं कुण्डलात्मकं पश्यति स मां पश्यतीत्यर्थः॥ ५॥

**नी० टी०**—योगैर्योगिभिः अर्शआद्यच्प्रत्ययांतोऽयं योगशब्दः स्थानं मोक्षाख्यं एकमभिन्नं स्पष्टा योजना श्लोकद्वयस्य॥ ५॥

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः॥**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति॥ ६॥**

**शां० भा०**—एवं तर्हि योगात्संन्यास एव विशिष्यते। कथं तर्हीदमुक्तं तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यत इति। शृणु तत्र कारणम्। त्वया पृष्टं केवलं कर्मसंन्यासं कर्मयोगं चाभिप्रेत्य तयोरन्यतरः कः श्रेयान्। तदनुरूपं प्रतिवचनं मयोक्तं कर्मसंन्यासात्कर्मयोगो विशिष्यत इति ज्ञानमनपेक्ष्य। ज्ञानापेक्षस्तु संन्यासः सांख्यमिति मयाऽभिप्रेतः। परमार्थयोगश्च स एव। यस्तु कर्मयोगो वैदिकः स तादर्थ्याद्योगः संन्यास इति चोपचर्यते। कथं तादर्थ्यमित्युच्यते—संन्यासस्तु पारमार्थिको दुःखमाप्तुं प्राप्तुमयोगतो योगेन विना। योगयुक्तो वैदिकेन कर्मयोगेनेश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तो मुनिर्मननादीश्वरस्वरूपस्य मुनिर्ब्रह्म परमात्मज्ञानलक्षणत्वात्प्रकृतः

संन्यासो ब्रह्मोच्यते "न्यास इति ब्रह्मा ब्रह्मा हि परः" इति श्रुतेः। ब्रह्म परमार्थसंन्यासं परमात्मज्ञाननिष्ठालक्षणं न चिरेण क्षिप्रमेवाधिगच्छति प्राप्नोत्यतो मयोक्तं कर्मयोगो विशिष्यत इति ॥ ६ ॥

**शां० आ०**—यदि यथोक्तज्ञानपूर्वकसंन्यासद्वारा कर्मिणामपि श्रेयोवाप्तिरिष्टा तर्हि संन्यासस्यैव श्रेयस्त्वं प्राप्तमिति चोदयति—**एवं तर्हीति**। संन्यासस्य श्रेष्ठत्वे कर्मयोगस्य प्रशस्ततत्ववचनमनुचितमित्याह—**कथं तर्हीति**। पूर्वोक्तमेवाभिप्रायं स्मारयन्परिहरति—**शृण्विति**। कर्मयोगस्य विशिष्टत्ववचनं तत्रेति परामृष्टम्। तदेव कारणं कथयति—**त्वयेत्यादिना**। केवलं विज्ञानरहितमिति यावत्। तयोरन्यतरः कः श्रेयानितीतिशब्दोऽध्याहर्तव्यः। त्वदीयं प्रश्नमनुसृत्य तदनुगुणं प्रतिवचनं ज्ञानमनपेक्ष्य तद्रहितात्केवलादेव संन्यासाद्योगस्य विशिष्टत्वमिति मयोक्तमित्याह—**तदनुरूपमिति**। ज्ञानापेक्षः संन्यासस्तर्हि कीदृगित्याशङ्क्याऽऽह—**ज्ञानेति**। तर्हि कर्मयोगे कथं योगशब्दः संन्यासशब्दो वा प्रयुज्यते तत्राऽऽह—**यस्त्विति**। तादर्थ्यात्परमार्थज्ञानशेषत्वादिति यावत्। तदेव तादर्थ्यं प्रश्नपूर्वकं प्रसाधयति—**कथमित्यादिना**। कर्मानुष्ठानाभावे बुद्धिशुद्ध्यभावात्परमार्थसंन्यासस्य सम्यग्ज्ञानात्मनो न प्राप्तिरिति व्यतिरेकमुपन्यस्यान्वयमुपन्यस्यति—**योगेति**। पारमार्थिकः सम्यग्ज्ञानात्मकः। सामग्र्यभावे कार्यप्राप्तिरयुक्तेति मत्वाऽऽह—**दुःखमिति**। योगयुक्तत्वं व्याचष्टे—**वैदिकेनेति**। ईश्वरस्वरूपस्य सविशेषस्येति शेषः। ब्रह्मेति व्याख्येयं पदमुपादाय व्याचष्टे—**प्रकृत इति**। तत्र ब्रह्मशब्दप्रयोगे हेतुमाह—**परमात्मेति**। लक्षणशब्दो गमकविषयः। संन्यासे ब्रह्मशब्दप्रयोगे तैत्तिरीयकश्रुतिं प्रमाणयति—**न्यास इति**। कथं संन्यासे हिरण्यगर्भवाची ब्रह्मशब्दः प्रयुज्यते द्वयोरपि परत्वाविशेषादित्याह—**ब्रह्माहीति**। ब्रह्मशब्दस्य संन्यासविषयत्वे फलितं वाक्यार्थमाह—**ब्रह्मेत्यादिना**। नद्याः स्रोतांसीव निम्नप्रवणानि कर्मभिरतितरां परिपक्वकषायस्य करणानि सर्वतो व्यावृत्तानि निरस्ताशेषविशेषकूटस्थप्रत्यगात्मान्वेषणप्रवणानि भवन्तीति कर्मयोगस्य परमार्थसंन्यासप्राप्त्युपायत्वे फलितमाह—**अत इति** ॥ ६ ॥

**आ० भा०**—इतश्च संन्यासाद्योगो वर इत्याह—संन्यासस्त्विति। योगाभावे मोक्षादिफलं न भवति अतः कामजयादिदुःखमेव तस्य मोक्षाद्येव हि फलम्। अन्यत्तत्फलमल्पत्वादफलमेवेत्याशयः। तच्चोक्तम् 'विना मोक्षफलं यत्तु न तत्फलमुदीर्यते' इति पाद्मे। यत्तु महाफलयोग्यं तस्याल्पं फलमेव न भवति यथा पद्मरागस्य तंडुलमुष्टिः। महाफलश्च योगयुक्तश्चेत्संन्यास इत्याह—योगयुक्त इति। मुनिः संन्यासी। तच्चोक्तम्। 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इति॥६॥

**आ० ज०**—संन्यासस्त्वित्यस्य संगतिमाह—**इतश्चेति**। ननु प्राक् संन्यासाद्योगस्य वरत्वे न कोऽपि हेतुरुक्तः। तत्कथमेवमुच्यते। मैवम्। संन्यासस्य योगावरत्वे बाधकं परिहृतम्। साधकमिदानीमुच्यते बाधकाभावसहितमेव साधकं वस्तुनो व्यवस्थापकम्। तस्मादितश्चेति युक्तम्। पूर्वं संन्यासस्य निःश्रेयसकरत्वमुक्तम्। इदानीं कथं दुःखहेतुत्वमुच्यते। किं वाऽनेन साधकमुक्तमित्यतो व्याचष्टे—**योगेति**। विष्ण्वर्पणबुद्ध्या करणाभावसंन्यासमात्रेणेति शेषः। आदिपदेन ज्ञानं गृह्यते। तस्य केवलसंन्यासिनः। योगाभावे संन्यासो निष्फल एवेत्येतन्न युज्यते मोक्षाद्यभावेऽपि तात्कालिकापमानादिदुःखाभावादेर्भावादित्यत आह—**मोक्षादीति**। अत्र पुराणसंमतिमाह—**तच्चेति**। ननु मोक्षफलाभावेऽपि धान्यादिनैव कृष्यादिकं सफलमित्युच्यते। तत्कथमेवमभिहितमित्यत उक्तं विवृणोति—**यत्त्विति**। महाफलं साधयितुं योग्यमित्यर्थः। मोक्षादिग्रहणं प्रकृतापेक्षयैव कृतमितिभावः। ननु संन्यासात् योगस्य वरत्वमनेन साधितं तत्किमुत्तरार्धेनेत्यत आह—**महाफलश्चेति**। महत्फलं यस्मात्स तथोक्तः। योगांगत्वेन ततोऽवरत्वं संन्यासस्य सिसाधयिषितम्। तच्चान्वयव्यतिरेकाभ्यां सिद्ध्यति। तत्र पूर्वार्धेन व्यतिरेकमुक्त्वाऽनेनान्वयमाचष्ट इत्यर्थः। ननु योगोऽप्येवमेवेति चेत्सत्यम्। तथाऽपि चरमभावित्वेन विशेषः। नन्वत्र संन्यासवाचकं न श्रूयते तत्कथमेवमुच्यत इत्यत आह—**मुनिरिति**। मुनिशब्दस्य कामवर्जनलक्षणसंन्यासवचनत्वं कुत इत्यत आह—**तच्चेति** ॥ ६ ॥

**रा० भा०**—इयान् विशेष इत्याह—संन्यासो ज्ञानयोगस्तु अयोगतः कर्मयोगादृते प्राप्तुमशक्यः योगयुक्तः कर्मयोगयुक्तः स्वयमेव मुनिरात्ममननशीलः सुखेन कर्मयोगं साधयित्वा न चिरेणैवाल्पकालेनैव ब्रह्माधिगच्छत्यात्मानं प्राप्नोति ज्ञानयोगयुक्तस्तु महता दुःखेन ज्ञानयोगं साधयति दुःखसाध्यत्वाद्दुःखप्राप्यत्वादात्मानं चिरेण प्राप्नोतीत्यर्थः ॥ ६ ॥

**अ० टी०**—ननूभयोरेकफलत्वे उभयरूपता किमितीत्याशङ्कायामाह—**संन्यासस्त्विति**। हे महाबाहो संन्यासस्तु अयोगतः योगं विना आप्तुं प्राप्तुं दुःखं दुःखरूपमित्यर्थः । अत्रायं भावः संन्यासस्य सांख्यात्मकस्य विप्रयोगरूपत्वाद् योगस्य संयोगात्मकत्वाद्विप्रयोगस्य संयोगपूर्वत्वाद्योगं विना न तत्सिद्धिः स्यादत उभयरूपत्वेन कथनमित्यर्थः। किं च भगवतो रसरूपत्वाद्रसस्य च द्विरूपत्वादेकरूपत्वेनाकथनेऽपूर्ण एव स स्यादित्यर्थः। यतः संयोगं विना न द्वितीयसिद्धिरतो योगयुक्तः संयोगयुक्तो भूत्वा मुनिः विप्रयोगे मौनैकशरणो भूत्वा अचिरेण शीघ्रमेव ब्रह्म सर्वलीलाव्यापकमधिगच्छति प्राप्नोतीत्यर्थः ॥ ६ ॥

**नी० टी०**—नन्वेवं निर्विकल्पस्थानप्राप्तये द्वौ मार्गावुक्तौ स्यातां तच्च। "नान्यः पंथा विद्यतेऽयनाय" इति श्रुतिविरुद्धमित्याशंक्याह—**संन्यासस्त्विति**। संन्यासो नैष्कर्म्यं अयोगतो योगं विना आप्तुं दुःखं हे महाबाहो अयमर्थः। निर्विकल्पकसमाधिरपि तत्त्वमसीत्येतद्वाक्यार्थप्रतिपत्त्युपायभूत एव न स्वतः पुरुषार्थ इति द्वितीयमार्गस्याभावान्नोदाहृतश्रुतिविरोधः। "शांतो दांत उपरतास्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति" इति श्रुत्यैव शमादिवत्समाधेरप्यात्मदर्शनार्थत्वस्य दर्शितत्वात् तथा च समाहितपदं वार्तिककारैर्व्याख्यातं। "स्वातंत्र्यं येषु कर्तुः स्यात्करणाकरणं प्रति ॥ तान्येव तु निषद्धानि कर्माणीह शमादिभिः" शमादिश्रुत्या। "अस्वातंत्र्यं तु येषु स्यात्करणाकरणं प्रति ॥ समाहितोक्त्याऽथेदानीं तन्निरोधो विधीयते" अस्वातंत्र्यं गुरूपदेशापेक्षत्वं येषु मानमेयव्यवहारनिरोधेषु। 'पिंडीकृत्येंद्रियग्रामं बुद्धावारोप्य निश्चलम् ॥ विषयांस्तत्स्मृतीस्त्यक्त्वा तिष्ठेच्चिदनुरोधतः ॥ एषोऽभ्युपायः सर्वत्र वेदांतेषु प्रतिष्ठितः ॥ तत्त्वमस्यादिवाक्यार्थज्ञानोत्पत्त्यर्थमादरात्' इति । एवं व्यतिरेकमुक्त्वाऽन्वयमाह—**योगयुक्त इति** । मुनिः संन्यासी न चिरेण शीघ्रमेव ब्रह्माधिगच्छति वाक्यश्रवणमात्रेण नतु केवलसंन्यासी। यथोक्तं। 'न च संन्यसनादेव सिद्धिं समधिगच्छति' इति ॥ ६ ॥

## योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ॥
## सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

**शां० भा०**—यदा पुनरयं सम्यग्दर्शनप्राप्त्युपायत्वेन—योगेन युक्तो योगयुक्तो विशुद्धात्मा विशुद्धसत्त्वो विजितात्मा विजितदेहो जितेन्द्रियश्च सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानामात्मभूत आत्मा प्रत्यक्चेतनो यस्य स सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः। स तत्रैवं वर्तमानो लोकसंग्रहाय कर्म कुर्वन्नपि न लिप्यते न कर्मभिर्बध्यत इत्यर्थः ॥ ७ ॥

**शां० आ०**—ननु पारिव्राज्यं परिगृह्य श्रवणादिसाधनमसकृदनुतिष्ठतो लब्धसम्यग्बोधस्यापि यथापूर्वं कर्माण्युपलभ्यन्ते तानि बन्धहेतवो भविष्यन्तीत्याशङ्क्य श्लोकान्तरमवतारयति—**यदा पुनरिति**। सम्यग्दर्शनप्राप्त्युपायत्वेन यदा पुनरेष पुरुषो योगयुक्तत्वादिविशेषणः सम्यग्दर्शी संपद्यते तदा प्रातिभासिकीं वृत्तिमनुसृत्य कुर्वन्नपि न लिप्यत इति योजना। योगेन नित्यनैमित्तिककर्मानुष्ठानेनेति यावत्। आदौ नित्याद्यनुष्ठानवतो रजस्तमोमलाभ्यामकलुषितं सत्त्वं सिध्यतीत्याह—**विशुद्धेति**। बुद्धिशुद्धौ कार्यकरणसंघातस्यापि स्वाधीनत्वं भवतीत्याह—**विजितेति**। तस्य यथोक्तविशेषणवतो जायते सम्यग्दर्शित्वमित्याह—**सर्वभूतेति**। सम्यग्दर्शिनस्तर्हि कर्मानुष्ठानं कुतस्त्यं तदनुष्ठाने वा कुतो बन्धविश्लेषसिद्धिरित्याशङ्क्याऽऽह—**स तत्रेति**। सम्यग्दर्शनं सप्तम्यर्थः ॥ ७ ॥

**आ० भा०**—एतदेव प्रपंचयति—**योगयुक्त इति**। सर्वभूतात्मभूतः परमेश्वरः। यच्चाप्नोतीत्यादेः। स आत्मभूतः स्वसमीपं प्रत्यादानादिकर्ता यस्य स सर्वभूतात्मभूतात्मा ॥ ७ ॥

**आ० ज०—**प्रकृतप्रमेयस्य समाप्तत्वादुत्तरस्य वैयर्थ्यमाशंक्याह—**एतदेवेति** । योगयुक्तस्य संन्यासस्य महाफलत्वमेव प्रपंचनं च यो न द्वेष्टीत्यत्रोक्तद्वेषादिवर्जनकारणोपन्यासेन ब्रह्माधिगच्छतीत्यत्रोक्तब्रह्मज्ञानावांतरफलोपन्यासेन चेति ज्ञातव्यम् । सर्वभूतात्मभूतेत्यनेन जीवस्य परमात्मस्वरूपत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह—**सर्वेति** । सर्वभूतानामात्मभूतः कथमित्यत उक्तम्—**यच्चेति** । एतन्निर्वचनमाश्रित्य न स्वरूपत्वमित्यर्थः स आत्मभूत इति सर्वभूतात्मभूत इत्युक्तस्यानुवादः । स्वसमीपमित्यादिद्वितीयात्मशब्दस्यार्थः । एवं जानन्नत्र विवक्षितः ॥ ७ ॥

**रा० भा०—कर्मयोगयुक्तस्तु शास्त्रीये परमपुरुषाराधनरूपे विशुद्धे कर्मणि वर्तमानस्तेन विशुद्धमनाः विजितात्मा स्वाभ्यस्ते कर्मणि व्यापृतमनस्त्वेन सुखेन विजितमनास्तत एव जितेन्द्रियः कर्तुरात्मनो याथात्म्यानुसंधाननिष्ठतया सर्वभूतात्मभूतात्मा सर्वेषां देवादिभूतानामात्मभूत आत्मा यस्यासौ सर्वभूतात्मभूतात्मा आत्मयाथात्म्यमनुसंदधानस्य हि देवादीनां स्वस्य चैकाकार आत्मा देवादिभेदानां प्रकृतिपरिणामविशेषरूपतयात्माकारत्वासंभवात् । प्रकृतिवियुक्तः सर्वत्र देवादिदेहेषु ज्ञानैकाकारतया समानाकार इति 'निर्दोषं हि समं ब्रह्म' इत्यनन्तरमेव वक्ष्यते स एवंभूतः कर्म कुर्वन्नपि अनात्मन्यात्माभिमानेन न लिप्यते न संबध्यते अतः अचिरेणात्मानमाप्नोतीत्यर्थः । यतः सौकर्यात् शैघ्र्याच्च कर्मयोग एव श्रेयान् ॥ ७ ॥**

**अ० टी०—**ननु ब्रह्मप्राप्तिरेवोत्तमा तदा भक्त्यैव तत्सिद्धिरिति नियतस्वफलभोगकारककर्मकरणं किंप्रयोजनकमित्याशङ्क्याह—**योगयुक्त इति** । योगयुक्तो मत्संयोगात्मवान् विशुद्धात्मा विशेषेण शुद्ध आत्मा अन्तःकरणं कामादिभावरहितं यस्य विजितात्मा विजितो वशीकृत आत्मा भगवत्स्वरूपं येन जितेन्द्रियः जितानि इन्द्रियाणि स्वभोगादिरूपाणि येन सर्वभूतात्मा सर्वभूतात्मरूपो भगवान् स एवात्मा स्वरूपं यस्य तादृशो मदाज्ञया लोकसंग्रहार्थं कर्म कुर्वन्न लिप्यते तत्फलभोगेन न बध्यते ॥ ७ ॥

**नी० टी०—योगेति** । योगेन निर्विकल्पसमाधिना युक्तो योगयुक्तः अत एव विशुद्धात्मा वृत्तिसारूप्यदोषेण हीन आत्मा प्रत्यक्चेतनो यस्य । निर्विकल्पावस्थायां केवल एव चेतनोऽस्ति नान्यदेत्युक्तं । "तदा द्रष्टुः स्वरूपेऽवस्थानं । वृत्तिसारूप्यमितरत्र" इति । तदा वृत्त्यभावे इतरत्र वृत्तिकाले इति सौत्रपदद्वयार्थः । अत्र हेतुः यतोऽयं विजितात्मा विजितचित्तो जितेंद्रियश्च । एवं शुद्धस्त्वंपदार्थ उक्तस्तस्य तत्पदार्थाभेदमाह—**सर्वभूतात्मेति** । सर्वेषां भूतानां ब्रह्मादिस्तंबपर्यंतानां वियदादीनां च चेतनाचेतनानामात्मभूतः उपादानत्वेन स्वरूपभूतः कनकमिव कुंडलादीनां स्वरूपभूतं कारणानन्यत्वात्कार्यस्य सर्वभूतात्मभूत आत्मा प्रत्यक्चेतनो यस्य स सर्वभूतात्मभूतात्मा । यत्तु सर्वेषां भूतानामात्मभूत आत्मा यस्येति भाष्यं सर्वभूतात्मेत्येतावतैवार्थलाभादात्मभूत इत्यधिकमिति दूषितं स्वयं च सर्वभूत आत्मभूतश्चात्मा यस्येति विग्रहो दर्शितः तत्र संकोचे कारणाभावात्सर्वपदेनैव चिज्जडयोर्ग्रहे परस्याप्यात्मभूतेत्यधिकमेव सर्वभूतश्चेतनाचेतनप्रपंचभूत आत्मा यस्येति तत्रापीष्टार्थलाभात् । सर्वे च आत्मानश्च तद्भूत आत्मा यस्येति विगृह्य सर्वात्मभूतात्मेत्येतावतैव सिद्धे प्रथमभूतपदस्य वैयर्थ्यं च भाष्यमते ब्रह्मादीनां प्रत्यग्भूत आत्मा यस्येति श्रुत्यैव जीवेशाभेद उच्यते । परस्य तु उपादानत्वलिंगेन जडसाधारण्येन जीवस्य ब्रह्माभेदोऽवगम्यत इति विद्वद्भिरविनयः क्षंतव्यः । यतोऽयं सर्वेषां प्रत्यगात्मा अतोहमिव सोऽपि कुर्वन्नपि न लिप्यते असंगात्मज्ञानात् कर्त्रादेर्बाधितत्वाच्च । व्युत्थाने तत्प्रतीतावप्युत्खातदंष्ट्रोरगवदबाधकत्वाच्चेत्यर्थः ॥ ७ ॥

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ॥
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

**शां० भा०**—न चासौ परमार्थतः करोत्यतः—नैव किंचित्करोमीति युक्तः समाहितः सन्मन्येत चिन्तयेत्तत्त्वविदात्मनो याथात्म्यं तत्त्वं वेत्तीति तत्त्ववित्परमार्थदर्शीत्यर्थः ॥ कदा कथं वा तत्त्वमवधारयन्मन्येतेत्युच्यते—मन्येतेति पूर्वेण संबन्धः। यस्यैवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मस्वकर्मैव पश्यतः सम्यग्दर्शिनस्तस्य सर्वकर्मसंन्यास एवाधिकारः कर्मणोऽभावदर्शनात्। न हि मृगतृष्णिकायामुदकबुद्ध्या पानाय प्रवृत्त उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तते॥८॥९॥

**शां० आ०**—कर्माण्यङ्गीकृत्य तैरस्य विदुषो बन्धो नास्तीत्युक्तमिदानीं वस्तुतस्तस्य कर्माण्येव न सन्तीत्याह—**न चेति**। लोकदृष्ट्या विदुषोऽपि कर्माणि सन्तीत्याशङ्क्य स्वदृष्ट्या तदभावमभिप्रेत्याऽऽह—**नैवेति**। सार्धं समनन्तरश्लोकमाकाङ्क्षापूर्वकमुत्थापयति—**कदेत्यादिना**। चक्षुरादिज्ञानेन्द्रियैर्वागादिकर्मेन्द्रियैः प्राणादिवायुभेदैरन्तःकरणचतुष्टयेन च तत्तच्चेष्टानिर्वर्तनावस्थायां तत्तदर्थेषु सर्वा प्रवृत्तिरिन्द्रियाणामेवेत्यनुसंदधानो नैव किंचित्करोमीति विद्वान्प्रतिपद्येतेत्यर्थः। यथोक्तस्य विदुषो विध्यभावेऽपि विद्यासामर्थ्यात्प्रतिपत्तिकर्मभूतं कर्मसंन्यासं फलात्मकमभिलषति—**यस्येति**। अज्ञस्येव विदुषोऽपि कर्मसु प्रवृत्तिसंभवात्कुतः संन्यासेऽधिकारः स्यादित्याशङ्क्याऽऽह—**न हीति** ॥ ८ ॥ ९ ॥

**आ० भा०**—संन्यासं स्पष्टयति पुनः श्लोकद्वयेन ॥ ८ ॥ ९ ॥

**आ० ज०**—नैव किंचिदित्यादेः प्रतिपाद्यमाह—**संन्यासमिति**। ज्ञेय इत्यादिना विशुद्धात्मेत्यादिना च स्पष्टीकृतत्वात्—**पुनरिति**। स्पष्टनं च प्रागनुक्तसंकल्पत्यागस्याभिधानात् ॥ ८ ॥ ९ ॥

**रा० भा०**—अतस्तदपेक्षितं शृणु। एवमात्मतत्त्ववित् श्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि कर्मेन्द्रियाणि प्राणाश्च स्वस्य विषयेषु वर्तन्ते इति धारयन्ननुसंदधानो नाहं किंचित् करोमीति मन्येत ज्ञानैकस्वभावस्य मम कर्ममूलेन्द्रियप्राणसंबन्धकृतमीदृशं कर्तृत्वं न स्वरूपप्रयुक्तमिति मन्येत इत्यर्थः ॥ ८ ॥ ९ ॥

**अ० टी०**—ननु नियतफलस्य कर्मणः कृतस्य कथं न फलमित्याशङ्क्याह—**नैवकिञ्चिदित्यादि त्रयेण**। तत्त्ववित् भगवदिङ्गितज्ञः युक्तः मद्भावयुक्तः सन् नैव किंचित्करोमि अहं किंचिदपि न करोमि किंतु भगवदिच्छया तदाज्ञया यथा स कारयति तथा वारिवशात्तृणादिचलनवत्, कर्म किमपि मत्तो न भवति न त्वहं करोमीति यो मन्येत स पापेन कर्मजफलेन न लिप्यते। एवंरूपस्य स्थितिमाह—**पश्यन्निति**। भावात्मकेन मनसा स्थिरीकृतालौकिकेन्द्रियैश्चक्षुःप्रभृतिभिः पश्यन् भगवत्स्वरूपदर्शनं कुर्वन्। शृण्वन् भगवत्कूजितवेण्वादिशब्दान्। स्पृशन् भगवच्चरणारविन्दस्पर्शं कुर्वन्। जिघ्रन् भगवन्मुखामोदाद्याघ्राणं कुर्वन्। गच्छन् गोचारणादिलीलायां संगे गच्छन्। लीलादिसमये नेत्रमुद्रणं कुर्वन्। श्वसन् विप्रयोगादिना श्वासविमोकं कुर्वन्। प्रलपन् तद्भावेन मत्तावस्थायां भ्रमरवद्गानं कुर्वन्। विसृजन् तदवस्थायामेव दूरे यच्छन्। गृह्णन् तदवस्थयैवालिङ्गनादिचरणेषु कुर्वन्। उन्मिषन् मत्तावस्थात्यागेन स्वरूपानुभवं कुर्वन्। निमिषन् तत्सुखानुभवेन नेत्रनिमीलनं कुर्वन्। इन्द्रियाणि इन्द्रियार्थेषु भगवदवयवेषु वर्तन्त इति धारयन् ॥ ८ ॥ ९ ॥

नी० टी०—न लिप्यत इत्येतदुपपादयति—नैवेति द्वाभ्यां । तत्त्ववित् अहं नैव किंचित्करोमीति मन्येत मन्यते तत्र हेतुः इंद्रियाणि उपलक्षणमिदं प्राणादेरपि इंद्रियादय इंद्रियार्थेषु स्वेषु विषयेषु वर्त्तंते इति धारयन् निश्चिन्वन्न त्वहं विषयेषु वर्त्ते इति मन्यते धारयन्निति हेतौ शतृप्रत्ययः । अत्र दर्शनादयः पंच ज्ञानेंद्रियाणां व्यापाराः । गमनविसर्गप्रलपनग्रहणानि कर्मेंद्रियाणां तानि चानंदस्योपलक्षणानि श्वसन्निति प्राणस्य स्वपन्निति बुद्धेः उन्मेषणनिमेषणे कूर्माख्यप्राणस्येति विभागः क्रमस्त्वविवक्षितः एतानि कुर्वन्नप्यभिमानाभावान्न लिप्यते इत्यर्थः ॥ ८ ॥ ९ ॥

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ॥**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

**शां० भा०**—यस्तु पुनरतत्त्ववित्प्रवृत्तश्च कर्मयोगे—ब्रह्मणीश्वर आधाय निक्षिप्य तदर्थं करोमीति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः सर्वकर्माणि, लिप्यते न स पापेन न संबध्यते पद्मपत्रमिवाम्भसोदकेन ॥ १० ॥

**शां० आ०**—तर्हि विद्वानिवाविद्वानपि कर्माणि न प्रवर्तेत पापोपहतिसंभवादित्याशङ्कयाऽऽह—**यस्त्विति** । यथा भृत्यः स्वाम्यर्थं कर्माणि करोति न स्वफलमपेक्षते तथैव योऽविद्वान्मोक्षेऽपि सङ्गं त्यक्त्वा भगवदर्थमेव सर्वाणि कर्माणि करोति न स कर्मणा बध्यते न हि पद्मपत्रमम्भसा संबध्यते तद्वदित्यर्थः ॥ १० ॥

**आ० भा०**—संन्यासयोगयुक्त एव च कर्मणा न लिप्यत इत्याह—ब्रह्मणीति । साधननियमस्योपचारत्वव्यावृत्त्यर्थं पुनः पुनः फलकथनम् ॥ १० ॥

**आ० ज०**—ननु योगयुक्त इत्यनेन यत्संन्यासयोगयुक्तस्य कर्मालेपलक्षणं फलमुक्तं तदेव तस्य ब्रह्मण्याधायेति किमर्थं पुनरुच्यत इत्यत आह—**संन्यासेति** । प्रागुक्तस्यैव नियमोऽत्र क्रियते । सिद्धेसत्यारंभस्य नियमार्थत्वादिति भावः । योगविवरणं च किंचिदधिकमिति चार्थः । ननु संन्यासस्त्वित्यनेनैव संन्यासयोगौ मिलिताविव फलं साधयत इति नियमोऽपि लब्ध एव । तत्किमर्थमिदं 'संन्यासयोगयुक्तस्य कुर्वन्नपि न लिप्यते । लिप्यते न स पापेन' इति पुनः पुनः फलकथनमित्यत आह—**साधनेति** । साधननियमस्येति तदुक्तेरित्यर्थः । संन्यासयोगौ मिलिताविव फलसाधनमिति नियमोक्तेरुपचारत्वमपि संभवति लोकवत् । तन्निवृत्त्यर्थमित्यर्थः ॥ १० ॥

**रा० भा०**—ब्रह्मशब्देन प्रकृतिरिहोच्यते 'मम योनिर्महद्ब्रह्म' इति हि वक्ष्यते । इन्द्रियाणां प्रकृतिपरिणामविशेषरूपत्वेनेन्द्रियाकारेणावस्थितायां प्रकृतौ पश्यन् शृण्वन्नित्यादिनोक्तप्रकारेण कर्माण्याधाय फलसङ्गं त्यक्त्वा 'नैव किंचित्करोमि' इति यः कर्माणि करोति स प्रकृतिसंसृष्टतया वर्तमानोऽपि प्रकृत्याऽऽत्माभिमानरूपेण संबन्धहेतुना पापेन न लिप्यते पद्मपत्रमिवाम्भसा यथा पद्मपत्रमम्भसा संसृष्टमपि न लिप्यते तथा न लिप्यते इत्यर्थः ॥ १० ॥

**अ० टी०**—ब्रह्मणि पुरुषोत्तमे संगम् आधाय संयोगावस्थायां स्थित्वा, संगं त्यक्त्वा वा विप्रयोगावस्थायां स्थित्वा कर्माण्यपि यः करोति स तेन न लिप्यते तत्र दृष्टान्तमाह—**पद्मपत्रमिवेति** । अम्भसा पद्मपत्रमिव । जले तिष्ठन्नपि तद्यथा न लिप्तं भवति तथेत्यर्थः ॥ १० ॥

**नी० टी०**—**ब्रह्मणीति** । यतो विद्वानसंगत्वात् कुर्वन्नपि न लिप्यते तस्मादविद्वानपि ब्रह्मणि सर्वांतर्यामिणि कर्माण्याधाय अयमेव कारयिता न त्वहं कर्त्तेति समर्प्य यः कर्माणि करोति स पापेन न लिप्यतेऽम्भसा पद्मपत्रमिव ॥ १० ॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ॥
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ११ ॥

**शां० भा०**—केवलं सत्त्वशुद्धिमात्रफलमेव तस्य कर्मणः स्यात्, यस्मात्—कायेन देहेन मनसा बुद्ध्या च केवलैर्ममत्ववर्जितैरीश्वरायैव कर्म करोमि न मम फलायेति ममत्वबुद्धिशून्यैरिन्द्रियैरपि, केवलशब्दः कायादिभिरपि प्रत्येकं संबध्यते सर्वव्यापारेषु ममतावर्जनाय, योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयमात्मशुद्धये, सत्त्वशुद्धय इत्यर्थः। तस्मात्तत्रैव तवाधिकार इति कुरु कर्मैव ॥ ११ ॥

**शां० आ०**—अविदुषस्तर्हि कृतेन कर्मणा किं स्यादित्याशङ्क्याऽऽह—**केवलमिति**। अज्ञस्येश्वरार्पणबुद्ध्याऽऽनुष्ठितं कर्म बुद्धिशुद्धिफलमित्यत्रैव हेतुमाह—**यस्मादिति**। केवलशब्दस्य प्रत्येकं संबन्धे प्रयोजनमाह—**सर्वव्यापारेष्विति**। कर्मणश्चित्तशुद्धिफलत्वे तादर्थ्येन कर्मानुष्ठानमेव तव कर्तव्यमिति यस्मादित्यस्यापेक्षितं वदन्फलितमाह—**तस्मादिति** ॥११॥

**आ० भा०**—एवं चाचार इत्याह—कायेनेति ॥ ११ ॥

**आ० ज०**—कायेनेत्यनेनापि संन्यासयोगयुक्तस्यात्मशुद्धिलक्षणः पापालेपउच्यत इत्यत आह—**एवं चेति**। उभयसमुच्चयरूप एवेत्यर्थः। अन्यत्र तात्पर्यान्न पुनरुक्तिरिति भावः। आचारकथनमपि नियमसमर्थनार्थमिति ज्ञातव्यम् ॥ ११ ॥

**रा० भा०**—कायमनोबुद्धीन्द्रियसाध्यं कर्म स्वर्गादिफलसङ्गं त्यक्त्वा योगिन आत्मविशुद्धये कुर्वन्ति आत्मगतप्राचीनकर्मबन्धनविनाशाय कुर्वन्तीत्यर्थः ॥ ११ ॥

**अ० टी०**—नन्वेतत्सिद्धदशायामुक्तं साधनदशायां तत्करणे कथं न लेपः स्यादित्याशङ्क्याह—**कायेनेति**। कायेन देहेन भावस्वरूपरहितेन अधिष्ठानात्मकेन तादृशेनैव मनसा केवलैरिन्द्रियैराध्यात्मिकैर्बुद्ध्यापि तत्प्राप्तिरूपेच्छया आत्मशुद्धये भावस्वरूपप्राप्त्यर्थं योगिनः संयोगात्मकसाधनवन्तः संगं कर्मफलं त्यक्त्वा कर्म भगवदिच्छया कर्तव्यात्मकत्वेन कुर्वन्ति। साधनदशायामपि भगवदिच्छां ज्ञात्वा फलाभावेन कृतं कर्म न बन्धकं भवतीति भावः ॥ ११ ॥

**नी० टी०**—**कायेनेति**। केवलैरिति विपरिणामेन सर्वत्र संबंधनीयं। केवलेन कायेन अहमयं ब्राह्मणो युवेत्यात्माध्यासशून्येन एवमन्यत्रापि संगं त्यक्त्वा देहादिभ्यो विविक्तेऽप्यात्मनि तार्किकादिवद्दहं करोमीत्यभिनिवेशं त्यक्त्वा योगिनः कर्म कुर्वंति आत्मशुद्धये चित्तशुद्ध्यर्थं तस्मात्त्वमपि तत्रैवाधिकारोऽस्तीति तदेव त्वं कुरु ॥ ११ ॥

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ॥
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥

**शां० भा०**—यस्माच्च—युक्त ईश्वराय कर्माणि न मम फलायेत्येवं समाहितः सन्कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्यामाप्नोति नैष्ठिकीं निष्ठायां भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः। यस्तु पुनरयुक्तोऽसमाहितः कामकारेण करणं कारः। कामस्य कारः कामकारस्तेन कामकारेण कामप्रेरिततयेत्यर्थः। मम फलायेदं करोमि कर्मेत्येवं फले सक्तो निबध्यतेऽतस्त्वं युक्तो भवेत्यर्थः ॥ १२ ॥

**शां० आ०**—इतश्च सङ्गं त्यक्त्वा कर्मानुष्ठानं त्वया कर्तव्यमित्याह—**यस्माच्चेति**। युक्तः सन्फलं त्यक्त्वा कर्म कुर्वन्मोक्षाख्यां शान्तिं यस्मादाप्नोति तस्माच्च त्वया सङ्गं त्यक्त्वा कर्म कर्तव्यमिति योजना। विपक्षे दोषमाह—**अयुक्त इति**। युक्तत्वं व्याकरोति—ईश्वरायेति। फलं परित्यज्य कर्म कुर्वन्निति शेषः। नैष्ठिकी शान्तिरित्येतदेव विशदयति—**सत्त्वेति**। द्वितीयमर्धं विभजते—**यस्त्विति**। असमाधाने दोषादर्जुनस्य नियोगं दर्शयति—**अतस्त्वमिति** ॥ १२ ॥

**आ० भा०**—पुनर्युक्त्यादिनियमनार्थं युक्तायुक्तफलमाह—युक्त इति। युक्तो योगयुक्तः॥१२॥

**आ० ज०**—तथाऽपि युक्त इत्येतत् पुनरुक्तमित्यत आह—**पुनरिति**। युक्तिर्योगः आदिपदेन संन्यासः। युक्तायुक्तेत्युपलक्षणम्। संन्यास्यसंन्यासीत्यपि ग्राह्यम्। प्राक्संन्यासयोगौ मिलितावेव फलं साधयतो नान्यतरपरित्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलमुक्तम्। इदानीं तु तावेव मोक्षसाधनम्। न तु तदुभयत्यागेनान्यादिति नियमज्ञापनाय योगसंन्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमाहेत्यर्थः। युक्तशब्दस्य सहिताद्यर्थनिवारणायार्थमाह—**युक्त इति** ॥ १२ ॥

**रा० भा०**—युक्त आत्मव्यतिरिक्तफलेष्वचपलः आत्मैकप्रवणः कर्मफलं त्यक्त्वा केवलात्मशुद्धये कर्मानुष्ठाय नैष्ठिकीं शान्तिमाप्नोति स्थिरामात्मानुभवरूपां निर्वृतिमाप्नोति अयुक्तः आत्मव्यतिरिक्तफलेषु चपलः आत्मावलोकनविमुखः कामकारेण फले सक्तः कर्माणि कुर्वन्नित्यं कर्मभिर्बध्यते नित्यसंसारी भवति अतः फलसङ्गरहित इन्द्रियाकारेण परिणतायां प्रकृतौ कर्माणि संन्यस्यात्मनो बन्धमोचनायैव कर्माणि कुर्वीतेत्युक्तं भवति ॥ १२ ॥

**अ० टी०**—ननु साधनदशायां फलत्यागेन कर्मकरणं किंप्रयोजनकमित्याशङ्क्याह—**युक्त इति**। युक्तो भगवद्भजनैकनिष्ठः सन् कर्मफलं त्यक्त्वा भगवदाज्ञारूपत्वेन कर्म करोति स नैष्ठिकीं भगवत्तोषरूपां शान्तिं भगवदाज्ञाऽकरणाभावं तापरहितभगवदाज्ञाकरणतोषरूपां प्राप्नोतीत्यर्थः। अतः साधनदशायामपि भगवदाज्ञात्वेन कर्मकरणमुत्तममिति भावः। अभगवदीयस्तु फलाशया कर्मकरणेन बद्धो भवतीत्याह—**अयुक्त इति**। अयुक्तः अभगवदीयः कामकारेण कामनया प्रवृत्तः फले सक्तः सन्निबद्ध्यते नितरां बद्धो भवति। न भगवत्संबन्धं प्राप्नोतीत्यर्थः ॥ १२ ॥

**नी० टी०**—किंच—**युक्त इति**। युक्तो ब्रह्मण्याधाय कर्माणीत्यादिना उक्तलक्षणः कर्मणां फलं त्यक्त्वा ईश्वरे समर्प्य शांतिं कैवल्यं नैष्ठीकीं सत्वशुद्ध्यादिक्रमप्राप्तब्रह्मनिष्ठाफलभूतां प्राप्नोति। अयुक्तस्तद्विपरीतः कामकारेण स्वैरवृत्त्या फले सक्तः सन् नितरां बध्यते ॥ १२ ॥

**सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी ॥**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

**शां० भा०**—यस्तु परमार्थदर्शी सः—सर्वाणि कर्माणि सर्वकर्माणि संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च सर्वकर्माणि तानि मनसा विवेकबुद्ध्या कर्मादावकर्मसंदर्शनेन संत्यज्येत्यर्थः। आस्ते तिष्ठति सुखं त्यक्तवाङ्मनःकायचेष्टो निरायासः प्रसन्नचित्त आत्मनोऽन्यत्र निवृत्तबाह्यसर्वप्रयोजन इति सुखमास्त इत्युच्यते। वशी जितेन्द्रिय इत्यर्थः। क्व कथमास्त इत्याह नवद्वारे पुरे सप्त शीर्षण्यान्यात्मन उपलब्धिद्वाराण्यर्वाग्द्वे मूत्रपुरीषविसर्गार्थे तैर्द्वारैर्नवद्वारं पुरमुच्यते, शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थप्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरैरिवाधिष्ठितं तस्मिन्नवद्वारे पुरे देही सर्वं कर्म संन्यस्याऽऽस्ते। किं

विशेषणेन, सर्वो हि देही संन्यास्यसंन्यासी वा देह एवाऽऽस्ते, तत्रानर्थकं विशेषणमिति। उच्यते यस्त्वज्ञो देही देहेन्द्रियसंघातमात्रात्मदर्शी स सर्वो गेहे भूमावासने वाऽऽस इति मन्यते। न हि देहमात्रात्मदर्शिनो गेह इव देह आस इति प्रत्ययः संभवति। देहादिसंघातव्यतिरिक्तात्मदर्शिनस्तु देह आस इति प्रत्यय उपपद्यते। परकर्मणां च परस्मिन्नात्मन्यविद्ययाऽध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते। उत्पन्नविवेकज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेह इव देह एव नवद्वारे पुर आसनं प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेर्देह एवाऽऽस्त इत्यस्त्येव विशेषणफलं विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात्। यद्यपि कार्यकरणकर्माण्यविद्ययाऽऽत्मन्यध्यारोपितानि संन्यस्याऽऽस्त इत्युक्तं तथाऽप्यात्मसमवायि तु कर्तृत्वं कारयितृत्वं च स्यादित्याशङ्क्याऽऽह नैव कुर्वन्स्वयं न कार्यकरणानि कारयन्क्रियासु प्रवर्तयन्। किं यत्तत्कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायि सत्संन्यासान्न भवति यथा गच्छतो गतिर्गमनव्यापारपरित्यागे न स्यात्तद्वत्, किं वा स्वतएवाऽऽत्मनो नास्तीति। अत्रोच्यते नास्त्यात्मनः स्वतः कर्तृत्वं कारयितृत्वं च। उक्तं हि—'अविकार्योऽयमुच्यते' 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इति। "ध्यायतीव लेलायतीव" इति च श्रुतेः॥ १३॥

**शां० आ०**—तर्हि फले सक्तिं त्यक्त्वा सर्वैरपि कर्म कर्तव्यमिति कर्मसंन्यासस्य निरवकाशत्वमित्याशङ्क्याविदुषः सकाशाद्विदुषो विशेषं दर्शयति—**यस्त्विति**। सर्वकर्मपरित्यागे प्राप्तं मरणं व्यावर्तयति—**आस्त इति**। वृत्तिं लभमानोऽपि शरीरतापेनाऽऽध्यात्मिकादिना तप्यमानस्तिष्ठतीति चेन्नेत्याह—**सुखमिति**। कार्यकरणसंघातपारवश्यं पर्युदस्यति—**वशीति**। आसनस्यापेक्षितमधिकरणं निर्दिशति—**नवेति**। देहसंबन्धाभिमानाभासवत्त्वमाह—**देहीति**। मनसा सर्वकर्मसंन्यासेऽपि लोकसंग्रहार्थं बहिः सर्वं कर्म कर्तव्यमिति प्राप्तं प्रत्याह—**नैवेति**। तान्येव सर्वाणि कर्माणि परित्याज्यानि विशिनष्टि—**नित्यमिति**। तेषां परित्यागे हेतुमाह—**तानीति**। यदुक्तं सुखमास्त इति तदुपपादयति—**त्यक्तेति**। जितेन्द्रियत्वं कायवशीकारस्याप्युपलक्षणम्। द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके वागेकेति सप्त शीर्षण्यानि शिरोगतानि शब्दाद्युपलब्धिद्वाराणि। अथापि कथं नवद्वारत्वमधोगताभ्यां पायूपस्थाभ्यां सहेत्याह—**अर्वागिति**। शरीरस्य पुरसाम्यं स्वामिना पौरैश्चाधिष्ठितत्वेन दर्शयति—**आत्मेत्यादिना**। यद्यपि देहजीवनत्वाद्देहसंबन्धाभिमानाभासवानवतिष्ठते तथाऽपि प्रवासीव परगेहे तत्पूजापरिभवादिभिरप्रहृष्यन्नविषीदन्व्यामोहादिरहितश्च तिष्ठतीति मत्वाऽऽह—**तस्मिन्निति**। विशेषणमाक्षिपति—**किमिति**। तदनुपपत्तिमेवोपपादयति—**सर्वो हीति**। सर्वसाधारणे देहावस्थाने संन्यस्य देहे तिष्ठति विद्वानिति विशेषणमकिंचित्करमिति फलितमाह—**तत्रेति**। विशेषणफलं दर्शयन्नुत्तरमाह—**उच्यत इति**। किमविवेकिनं प्रति विशेषणानर्थक्यं चोद्यते किं वा विवेकिनं प्रतीति विकल्प्याऽऽद्यमङ्गीकरोति—**यस्त्विति**। अज्ञत्वं देहित्वे हेतुः। तदेव देहित्वं स्फुटयति—**देहेति**। संघातात्मदर्शिनोऽपि देहे स्थितिप्रतिभासः स्यादिति चेन्नेत्याह—**न हीति**। द्वितीयं दूषयति—**देहादीति**। गृहादिषु देहस्यावस्थानेनाऽऽत्मावस्थानभ्रमव्यावृत्त्यर्थं देहे विद्वानास्त इति विशेषणमुपपद्यते विवेकवतो देहेऽवस्थानप्रतिभाससंभवादित्यर्थः। ननु विवेकिनो देहावस्थानप्रतिभानेऽपि वाङ्मनोदेहव्यापारात्मनां कर्मणां तस्मिन्प्रसङ्गाभावात्तत्त्यागेन कुतस्तस्य देहेऽवस्थानमुच्यते तत्राऽऽह—**परकर्मणां चेति**। ननु विवेकिनो दिगाद्यनवच्छिन्नबाह्याभ्यन्तराविक्रियब्रह्मात्मतां मन्यमानस्य कुतो देहेऽवस्थानमास्थातुं शक्यते तत्राऽऽह—**उत्पन्नेति**। तत्र हेतुमाह—**प्रारब्धेति**। यदि प्रारब्धफलं धर्माधर्मात्मकं कर्म तस्योपभुक्तस्य शेषादनुपभुक्ताद्देहादिसंस्कारोऽनुवर्तते तदनुवृत्त्या च तत्रैव देहे विशेषविज्ञानमवस्थानविषयमुपपद्यतेऽतो विवेकवतः संन्यासिनो देहेऽवस्थानव्यपदेशः संभवतीत्यर्थः। अविद्वत्प्रत्ययापेक्षया विशेषणासंभवेऽपि विद्वत्प्रत्ययापेक्षया विशेषणमर्थवदित्युपसंहरति—**देह एवेति**। देहे स्वावस्थानविषयो विद्वत्प्रत्ययस्तदविषयश्चाविद्वत्प्रत्ययस्तयोरेवं भेदे विद्वत्प्रत्ययापेक्षत्वादुपपन्नं विशेषणमित्युक्तमेव हेतुं विशदयति—**विद्वदिति**। आरोपितकर्तृत्वाद्यभावेऽपि स्वगतकर्तृत्वादि दुर्वारमित्याशङ्कामनूद्य दूषयति—**यद्यपीत्यादिना**। क्रियासु प्रवर्तयन्नास्त इति पूर्वेण संबन्धः। पूर्वस्यापि शतुरेवमेव संबन्धः। कर्तृत्वं कारयितृत्वं चाऽऽत्मनो नेत्यत्र विचारयति—**किमिति**। यत्कर्तृत्वं कारयितृत्वं च तत्किं देहिनः स्वात्मसमवायि सदेव संन्यासान्न भवतीत्युच्यते यथा गच्छतो देवदत्तस्य स्वगतैव गतिस्तत्स्थित्या त्यागान्न भवत्यथवा स्वारस्येन कर्तृत्वं कारयितृत्वं चाऽऽत्मनो नास्तीति वक्तव्यमाद्ये सक्रियत्वं

द्वितीये कूटस्थत्वमित्यर्थः । द्वितीयं पक्षमाश्रित्योत्तरमाह—**अत्रेति** । उक्तेऽर्थे वाक्योपक्रममनुकूलयति—**उक्तं हीति** । तत्रैव वाक्यशेषमपि संवादयति—**शरीरस्थोऽपीति** । स्मृत्युक्तेऽर्थे श्रुतिमपि दर्शयति—**ध्यायतीवेति** । उपाधिगतैव सर्वा विक्रिया नाऽऽत्मनि स्वतोऽस्तीत्यर्थः ॥ १३ ॥

**आ० भा०—** पुनः संन्यासशब्दार्थं स्पष्टयति—**सर्वकर्माणीति** । मनसेति विशेषणादभिमानत्यागः ॥ १३ ॥

**आ० ज०**—सर्वकर्माणीत्यस्य स्वरूपेण कर्मत्यागोऽर्थ इति प्रतीतिनिवारणाय प्रतिपाद्यमाह—**पुनरिति** । प्राक्कर्तृत्वाभिमानत्याग उक्तः इदानीं तु कारयितृत्वाभिमानत्यागोऽपीतिस्पष्टनम् । स्वरूपेण कर्मत्याग एवोच्यत इत्येतन्निराचष्टे—**मनसेति** । अन्यथा तद्व्यर्थं स्यादिति भावः ॥ १३ ॥

**रा० भा०**—अथ देहाकारपरिणतायां प्रकृतौ कर्तृत्वसंन्यास उच्यते—आत्मनः प्राचीनकर्ममूलदेहसंबन्धप्रयुक्तमिदं कर्मणां कर्तृत्वं न स्वरूपप्रयुक्तमिति विवेकविषयेण मनसा सर्वाणि कर्माणि नवद्वारे पुरे संन्यस्य वशी देही स्वयं देहाधिष्ठानप्रयत्नमकुर्वन् देहेनैव कारयन् सुखमास्ते ॥ १३ ॥

**अ० टी०**—एवं भगवद्भक्तो भगवदाज्ञया कर्म कुर्वन् सुखमाप्नोति अयुक्तस्तु फलाशया कर्म कुर्वन् बद्धो भवतीत्युक्तं तत्र अभक्तस्य सर्वकर्मत्याग एवोत्तम इत्यर्जुनमनस्याभासं प्राप्य त्यागेऽपि भक्तानामेव सुखं नेतरेषामित्याह—**सर्वकर्माणीति** । वशी भगवद्वशे स्थितः सर्वकर्माणि संन्यस्य त्यक्त्वा नवद्वारे पुरे श्रवणादिकरणसमर्थे देहे देही भगवदर्थं देहाभिमानवान् सुखमास्ते तिष्ठति । मनसा नैव कुर्वन् स्वार्थाहंकाराभावान्न किंचित्कुर्वन् । न वा ममताभावादन्येभ्यः परोपकार उपदेशादिना कारयन् सुखमास्त इति भावः ॥ १३ ॥

**नी० टी०**—एवमविद्वान् फलासक्त्यनासक्तिवशात् कर्मभिर्बध्यते न बध्यते चेत्युक्तं । विद्वांस्तु तद्विपरीत इत्याह—**सर्वकर्माणीति** । वशी जितचित्तः समाधिस्थो योगी नवद्वारे नवैव पंच ज्ञानेंद्रियाणि षष्ठः प्राणस्तेनैव तत्प्रवर्त्यानां कर्मेंद्रियाणां संग्रहः बुद्ध्यहंकारचित्तानीति नव एतानि द्वाराणीव पुरपतेर्जीवस्य भोगार्थं विषयप्रवेशस्थानानि यस्मिन्नवद्वारे शरीराख्ये पुरे विचित्रवासनाकल्पितानंतविषयवति अनेकैः कर्मसचिवैराधिष्ठिते सुखदुःखादिनानापण्यवति मनसा सर्वद्वारोद्घाटनकुंचिकया सह सर्वाणि कर्माणि पुरपतिरिव राजकार्याणि संन्यस्य सुखं निर्विकल्पसंविन्मात्ररूपेणास्ते । कर्माणि क्षेत्रस्यैव धर्मो न त्वात्मन इति क्षेत्रे त्यक्तुं शक्यान्येव । तथा च श्रुतिः "शरीरे पाप्मनो हित्वा" इति । "यत्र सुहार्दः सुकृतो मदंते विहाय रोगं तन्वा ९ स्वायाम्" इति च देही सन् देहाभिमानकाले व्युत्थानेऽपीत्यर्थः । तदापि नैव कुर्वन्नास्ते नापि कारयन्नास्ते राजेवामात्येषु निहितभारः समाधौ क्षेत्रेण सहात्मनः संबंधाभावदर्शनात् । यद्वा । नवद्वाराणि चक्षुःश्रोत्रनासाबिलद्वंद्वानि षट् सप्तमं मुखं अधस्तने द्वे इति । अस्मिन्पक्षे इंद्रियाणि परिचारिका बुद्धिरमात्योऽहंकारो युवराज इत्यादिकमूह्यं । विदुषः कर्मसंबंध एव नास्ति दूरे तत्फलासक्त्यनासक्ती इति भावः ॥ १३ ॥

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ॥**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

**शां० भा०**—न कर्तृत्वमिति । न कर्तृत्वं स्वतः कुर्विति नापि कर्माणि रथघटप्रासादादीनीप्सिततमानि लोकस्य सृजत्युत्पादयति प्रभुरात्मा नापि रथादि कृतवतस्तत्फलेन संयोगं न कर्मफल-

संयोगम्। यदि किंचिदपि स्वतो न करोति न कारयति च देही कस्तर्हि कुर्वन्कारयंश्च प्रवर्तत इत्युच्यते स्वभावस्तु स्वो भावः स्वभावोऽविद्यालक्षणा प्रकृतिर्माया प्रवर्तते दैवी हीत्यादिना वक्ष्यमाणा ॥ १४ ॥

शां० आ०—आत्मनो यदुक्तं कारयितृत्वं नास्तीति तत्प्रपञ्चयति—**नेत्यादिना**। यद्यपि लोकस्य कर्तृत्वं न सृजतीति नास्ति कारयितृत्वं तथाऽपि रथशकटादीनि कुर्वन्भवति कर्तेत्याशङ्क्याऽऽह—**न कर्माणीति**। तथाऽपि भोजयितृत्वेन विक्रियावत्त्वं दुष्परिहरमित्याशङ्क्याऽऽह—**न कर्मेति**। कस्य तर्हि प्रवर्तकत्वं तदाह—**स्वभावस्त्विति**। कुर्विति कर्तृत्वं लोकस्य न सृजत्यात्मेति संबन्धः। रथादीनां कर्मत्वं साधयति—**ईप्सितेति**। आत्मनो देहादिस्वामित्वेन प्रभुत्वं रथादि कृतवतो लोकस्य रथादिफलेन संबन्धमपि न सृजत्यात्मेत्यात्मनो भोजयितृत्वं प्रत्याचष्टे—**नापीति**। चतुर्थपादं शङ्कोत्तरत्वेनावतारयति—**यदीत्यादिना**। स्वभावश्चादस्तर्हीत्याशङ्क्य व्याकरोति—**अविद्यालक्षणेति**। प्रकृतेर्विद्याभावत्वं व्युदसितुं मायेत्युक्तं सा च सप्तमे वक्ष्यते तेन प्रधानविलक्षणेत्याह—**दैवी हीति** ॥ १४ ॥

आ० भा०—न च करोति वस्तुत इत्याह—न कर्तृत्वमिति। प्रभुर्हि जीवो जडमपेक्ष्य॥१४॥

आ० ज०—ननु कर्तृत्वमित्येतत्प्रागुक्तान्न विशिष्यत इत्यत आह—**न चेति**। दर्शनादिकं कुर्वन्नेव नैव किंचित्करोमीति मन्यतेत्युक्तम्। तर्हि मिथ्या ज्ञानी प्रसज्येतेत्याशंकानिरासाय परमेश्वरप्रेरितः कुर्वन् कारयन् वस्तुतः स्वातंत्र्येण न करोति न कारयति चेत्यनेनाहेत्यर्थः। अस्य जीवविषयत्वे प्रभुरित्येतदसंभवीत्यत आह—**प्रभुर्हीति**। अनेन विभुरित्युपपादितप्रायम् ॥१४॥

रा० भा०—साक्षादात्मनः स्वाभाविकरूपमाह—अस्य देवतिर्यङ्मनुष्यस्थावरात्मना प्रकृतिसंसर्गेण वर्तमानस्य लोकस्य देवाद्यसाधारणं कर्तृत्वं तत्तदसाधारणानि कर्माणि तत्तत्कर्मजन्यदेवादिफलसंयोगं चायं प्रभुरकर्मवश्यः स्वाभाविकस्वरूपेणावस्थित आत्मा न सृजति नोत्पादयति कस्तर्हि स्वभावस्तु प्रवर्तते स्वभावः प्रकृतिवासना अनादिकालप्रवृत्तपूर्वपूर्वकर्मजनितदेवाद्याकारप्रकृतिसंसर्गकृततत्तदात्माभिमानजनितवासनाकृतमीदृशं कर्तृत्वादिकं सर्वं न स्वरूपप्रयुक्तमित्यर्थः॥१४॥

अ० टी०—ननूपदेशादिना कारणे को दोष इति चेत्तत्राह—**न कर्तृत्वमिति**। प्रभुः ईश्वरः लोकस्य कर्तृत्वं न सृजति। न कर्माणि सृजति। नवा कर्मफलसंयोगं सृजति। अतः स्वयमपि किमिति तथोपदिशेदिति भावः। नन्वीश्वरोत्पादनाऽभावे लोकः कथं प्रवर्तत इत्यत आह—**स्वभावस्तु प्रवर्तत इति**। जीवस्य स्वभावः प्रकृत्यात्मकः प्रवर्त्तते कर्तृत्वादिरूपेण ॥ १४ ॥

नी० टी०—नन्वेवं भृत्यवत्कर्तृत्वं स्वामिवत्कारयितृत्वं वाऽस्य मास्तु। अयस्कांतवदविकारस्यैव सतः कर्त्रादिधर्मकाहंकारादिप्रवर्त्तकत्वमस्त्वित्याशंक्याह—**न कर्तृत्वमिति**। कर्तृत्वमहंकारस्य। कर्माणि इंद्रियाणां वचनादानादीनि श्रवणदर्शनादीनि च। लोकस्य लोक्यते प्रकाश्यत इति लोको जडवर्गः प्रभुश्चिदात्मा सूर्य इवास्मदादीनां प्रकाशकोऽपि न कर्मादौ प्रवर्तकस्तद्वत्। अस्य कर्मफलसंयोगं वा न सृजति किंतु यो यादृक् यस्य स्वभावः स तथा प्रवर्त्तते। यथा सूर्येऽभ्युदिते कमलानां विकसनं कुमुदानामुन्मुद्रणं चेति तद्वदेवमात्मनि प्रकाशमाने घटादयो न चेष्टंते मनुष्यादयस्तु चेष्टंते। न त्वात्मा कस्यचित्प्रवर्त्तको निवर्तको वा लोहायस्कांतयोरिव सत्यानृतयोरात्मानात्मनोः संबंधाभावादितिभावः ॥ १४ ॥

**नाऽऽदत्ते कस्यचित्पापं न चैव सुकृतं विभुः ॥**
**अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

**शां० भा०**—परमार्थतस्तु—नाऽऽदत्ते न च गृह्णाति भक्तस्यापि कस्यचित्पापं न चैवाऽऽदत्ते सुकृतं भक्तैः प्रयुक्तं विभुः। किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकं च सुकृतं प्रयुज्यत इत्याह—अज्ञानेनाऽऽवृतं ज्ञानं विवेकविज्ञानं तेन मुह्यन्ति करोमि कारयामि भोक्ष्ये भोजयामीत्येवं मोहं गच्छन्त्यविवेकिनः संसारिणो जन्तवः ॥ १५ ॥

**शां० आ०**—कर्तृत्वभोक्तृत्वैश्वर्याण्यात्मनोऽविद्याकृतानीत्युक्तमिदानीमीश्वरे संन्यस्तसमस्तव्यापारस्य तदेकशरणस्य दुरितं सुकृतं वा तदनुग्रहार्थं भगवानादत्ते मदेकशरणो मत्प्रीत्यर्थं कर्म कुर्वाणो दुष्कृताद्यपनोदनेनानुग्राह्यो मयेतिप्रत्ययभाक्त्वादित्याशङ्क्य सोऽपि परमार्थतो नास्त्यास्त्यविक्रियत्वादित्याह—**परमार्थतस्त्विति**। कथं तर्हि भक्तानामनुग्राह्यत्वमीश्वरस्यानुग्रहीतृत्वमिति प्रसिद्धिस्तत्राऽऽह—**अज्ञानेनेति**। पूर्वार्धगतान्यक्षराणि व्याख्यायाऽऽकाङ्क्षापूर्वकमुत्तरार्धमवतार्य व्याचष्टे—**किमर्थमित्यादिना** ॥ १५ ॥

**आ० भा०**—॥ १५ ॥

**आ० ज०**—॥ १५ ॥

**रा० भा०**—कस्यचित्स्वसंबन्धितयाऽभिमतस्य पुत्रादेः पापं दुःखं नादत्ते नापनुदति कस्यचित्प्रतिकूलतयाऽभिमतस्य सुकृतं सुखं च नादत्ते नापनुदति यतोऽयं विभुः न क्वाचित्कः न देवादिदेहाद्यसाधारणदेशः अत एव न कस्यचित्संबन्धी न कस्यचित्प्रतिकूलश्च सर्वमिदं वासनाकृतम् एवंस्वभावस्य कथमियं विपरीतवासनोत्पद्यते अज्ञानेनावृतं ज्ञानं ज्ञानविरोधिना पूर्वपूर्वकर्मणा स्वफलानुभवयोग्यत्वायास्य ज्ञानमावृतं संकुचितं तेन ज्ञानावरणरूपेण कर्मणा देवादिदेहसंयोगः तत्तदात्माभिमानरूपमोहश्च जायते ततश्च तथाविधात्माभिमानवासना तदुचितकर्मवासना च वासनातो विपरीतात्माभिमानः कर्मारम्भश्चोपपद्यते ॥ १५ ॥

**अ० टी०**—यतः प्रभुर्न सृजत्यतः कस्यचित् पापपुण्यादिकमङ्गीकृत्य फलं न ददातीत्याह—**नादत्त इति**। विभुः अनियम्यः स्वेच्छयैव सर्वफलदानसमर्थः कस्यचित् जीवस्य पापं पापरूपं कर्म न आदत्ते नाङ्गीकरोति तदङ्गीकृत्य नरकादिफलं न ददातीत्यर्थः। सुकृतं च नैवाङ्गीकरोति तदङ्गीकारेण स्वर्गादिसुखं न ददातीत्यर्थः। विभुत्वात् स्वक्रीडेच्छयैव यथासुखं करोतीति भावः। तर्हि "एष एव तं साधु कर्म कारयति" इत्यादिश्रुतिभ्य ईश्वर एव तत्तत्कर्म कारयित्वा सर्वेभ्यः फलं ददातीति कथमुच्यते तत्राह—**अज्ञानेनेति**। अज्ञानेन प्रकृत्युत्पन्नेन ज्ञानं भगवत्स्वरूपात्मकं श्रुत्यर्थरूपं वा। तेन जंतवः जीवा मुह्यन्ति मोहं प्राप्नुवन्ति। अन्यथा वदन्तीत्यर्थः। श्रुतौ तु पूर्वं तादृक्फलदानेच्छां निरूप्य पश्चात् कर्मकारणत्वमुच्यते न तु कर्मफलत्वमागच्छति किंतु विचित्रेच्छात्वमेवायातीति ॥ १५ ॥

**नी० टी०**—ननु "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते" इति श्रुत्या परमेश्वरे कारयितृत्वं बोध्यते। तत्कथमुच्यते स्वभावस्तु प्रवर्त्तत इति तत्राह—**नादत्त इति**। कस्यचित्कर्त्तुः पापं अयं नादत्ते नापि सुकृतं कारयितृत्वाभावात् यतो विभुर्व्यापकः निष्क्रिय इति यावत्। सक्रियो ह्यन्यं प्रवर्तयति तदीयं पापं पुण्यं वा लभते अयं तु न तथा किंतु सूर्यवत् प्रकाशत एव न तु स्वप्रकाश्यानां कर्त्रादीनां कर्मणा संबध्यते इति भावः कारयितृत्वमप्यस्य सत्तामात्रेण सूर्यवत्। यथा घटः प्रकाशते सविता प्रकाशयतीति नोदाहृतश्रुतिविरोधः। कथं तर्हि ईश्वराराधनार्थं कर्माणि कुर्वीत तदकरणाच्च। बिभ्यतीत्याशंक्याह—**अज्ञानेनेति**। यथा हि महाराजस्य सार्वभौमस्याहं सर्वेश्वरो निवृत्तोऽस्मीति ज्ञानं अज्ञानेन सौषुप्तेनावृतं चेतस तत्र विविधानि

परचक्रादीनि महांति संकटशतानि पश्यति अहो अहं दीनोऽस्मि दुःख्यस्मीति च मुह्यति तद्वदेते जंतवः स्वस्याहं ब्रह्मास्मीति प्रमाणेन ब्रह्मभावमजानंत ईश्वरादात्मानं पृथङ्मन्यमाना ईशात्मनोः सेव्यसेवकभावं च पश्यंतो मुह्यंति तथा च श्रुतिः। "अथ योऽन्यां देवतामुपास्तेऽसावन्योऽसावन्योहमिति न स वेद यथा पशुरेव स देवानाम्" इति। एष ह्येवेति श्रुतिरपि भ्रांतजनव्यवहारविषयैवेति भावः ॥ १५ ॥

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

**शां० भा०—ज्ञानेनेति। ज्ञानेन तु येनाज्ञानेनाऽऽवृता मुह्यन्ति जन्तवस्तदज्ञानं येषां जन्तूनां विवेकज्ञानेनाऽऽत्मविषयेण नाशितमात्मनो भवति तेषामादित्यवद्यथाऽऽदित्यः समस्तं रूपजातमवभासयति तद्वज्ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति तत्परं परमार्थतत्त्वम् ॥ १६ ॥**

**शां० आ०**—तर्हि सर्वेषामनाद्यज्ञानावृतज्ञानत्वाद्व्यामोहापोहाभावाच्च कुतः संसारनिवृत्तिरिति तत्राऽऽह—**ज्ञानेनेति**। सर्वमिति पूर्णत्वमुच्यते। ज्ञेयस्यैव वस्तुनस्तत्परमिति विशेषणम्। तद्व्याचष्टे—**परमार्थतत्त्वमिति** ॥ १६ ॥

**आ० भा०—ज्ञानमेवाज्ञाननाशकमित्याह—ज्ञानेनेति। प्रथमज्ञानं परोक्षम् ॥ १६ ॥**

**आ० ज०**—ननु ज्ञानस्याज्ञाननाशकत्वमर्थप्रकाशकत्वं च प्रसिद्धमेव तत्किमर्थमुच्यतइत्यत आह—**ज्ञानमेवेति**। अज्ञानेनावृतं ज्ञानमित्युक्तम्। एवं तर्हि तस्याविनाश एव स्यात्। तथा च न कदाचिद्ब्रह्मप्रकाशः। विनाशकांतरांगीकारे च ज्ञानार्थयोः संन्यासयोगयोर्वैयर्थ्यमित्याशंक्य ज्ञानमेवाज्ञाननाशकम्। अतो नोक्तदोषः। किं तु स्वरूपज्ञानमविद्ययाऽऽवृतम्। वृत्तिज्ञानं त्वविद्यां शिथिलयति। ब्रह्म प्रकाशयतीत्येतदनेनाहेत्यर्थः। अत्र केचिद्यथैक एवादित्योऽधकारं नाशयति भूमंडलं च प्रकाशयति। तथैकमेव ज्ञानमज्ञानं निवर्तयति। परं च प्रकाशयतीति व्याचक्षते तदसदिति भावेनाह—**प्रथमेति**। तृतीयांतपदोक्तम् द्वितीयमपरोक्षमिति शेषः। अन्यथा द्विर्ज्ञानग्रहणं व्यर्थं स्यादिति भावः ॥ १६ ॥

**रा० भा०—'सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि' 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' 'नहि ज्ञानेन सदृशं पवित्रम्' इति पूर्वोक्तं स्वकाले संगमयति। एवं वर्तमानेषु सर्वात्मसु येषामात्मनामुक्तलक्षणेनात्मयाथात्म्योपदेशजनितेनात्मविषयेणाहरहरभ्यासाधेयातिशयेन निरतिशयपवित्रेण ज्ञानेन तज्ज्ञानावरणमनादिकालप्रवृत्तानन्तकर्मसंचयरूपाज्ञानं नाशितं तेषां तत्स्वाभाविकं परं ज्ञानमपरिमितमसंकुचितमादित्यवत्सर्वं यथावस्थितं प्रकाशयति तेषामिति। विनष्टाज्ञानानां बहुत्वाभिधानादात्मस्वरूपबहुत्वम् 'न त्वेवाहं जातु नासं न त्वं नेमे' इत्युपक्रमावगतमत्र स्पष्टतरमुक्तं न चेदं बहुत्वमुपाधिकृतं विनष्टाज्ञानानामुपाधिगन्धाभावात्। तेषामादित्यवज्ज्ञानमिति व्यतिरेकनिर्देशात् ज्ञानस्य स्वरूपानुबन्धिधर्मत्वमुक्तम् आदित्यदृष्टान्तेन च ज्ञातृज्ञानयोः प्रभाप्रभावतोरिवावस्थानं च तत एव संसारदशायां ज्ञानस्य कर्मणा संकोचः मोक्षदशायां विकाशश्चोपपन्नः ॥ १६ ॥**

अ० टी०—येषां भगवता ज्ञानेनाज्ञानं नाशितं ते न मुह्यन्तीत्याह—**ज्ञानेनेति**। तु पुनः। आत्मज्ञानेन भगवत्संबन्धिज्ञानेन ज्ञानात्मकभगवद्रूपेण येषां दुर्लभानां कृपापात्राणां तत्पूर्वोक्तमज्ञानं नाशितं तेषां तत् भगवदात्मकं ज्ञानं परं ब्रह्म प्रकाशयति प्रकटयतीत्यर्थः। आदित्यवत्। यथा सूर्यस्तमो दूरीकृत्य स्वात्मसहितं सर्वं वस्तुमात्रं प्रकाशयति तथा ॥ १६ ॥

नी० टी०—तदात्मन आवरकमज्ञानं येषां ज्ञानेन ब्रह्मास्मीति प्रमाणजेन नाशितं तेषां तज्ज्ञानं कर्तृ आदित्यवदादित्यो यथा कृत्स्नं दृश्यं प्रकाशयति तद्वत्परं परमार्थवस्तु प्रकाशयति । अज्ञानजानर्थनिवृत्त्यर्थं ज्ञानमेष्टव्यमिति भावः ॥ १६ ॥

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

**शां० भा०**—यत्परं ज्ञानं प्रकाशितम्—तस्मिन्गता बुद्धिर्येषां ते तद्बुद्धयस्तदात्मानस्तदेव परं ब्रह्माऽऽत्मा येषां ते तदात्मानस्तन्निष्ठा निष्ठाऽभिनिवेशस्तात्पर्यं सर्वाणि कर्माणि संन्यस्य ब्रह्मण्येवावस्थानं येषां ते तन्निष्ठास्तत्परायणाश्च तदेव परमयनं परा गतिर्येषां भवति ते तत्परायणाः केवलात्मरतय इत्यर्थः । येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते गच्छन्त्येवंविधा अपुनरावृत्तिमपुनर्देहसंबन्धं ज्ञाननिर्धूतकल्मषा यथोक्तेन ज्ञानेन निर्धूतो नाशितः कल्मषः पापादिसंसारकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषा यतय इत्यर्थः ॥ १७ ॥

**शां० आ०**—विदुषां विविदिषूणां चान्तरङ्गाणि विद्यापरिपाकसाधनान्युपदिदिक्षुरुत्तरश्लोकस्यापेक्षितं पूरयति—**यत्परमिति** । तस्मिन्परमार्थतत्त्वे परस्मिन्ब्रह्मणि बाह्यं विषयमपोह्य गता प्रवृत्ता श्रवणमननिदिध्यासनैरसकृदनुष्ठितैर्बुद्धिः साक्षात्कारलक्षणा येषां ते तथेति प्रथमविशेषणं विभजते—**तस्मिन्निति** । तर्हि बोद्धा जीवो बोद्धव्यं ब्रह्मेति जीवब्रह्मभेदाभ्युपगमो नेत्याह—**तदात्मान इति** । कल्पितं बोद्धृबोद्धव्यत्वं वस्तुतस्तु न भेदोऽस्तीत्यङ्गीकृत्य व्याचष्टे—**तदेवेति** । ननु देहादावात्माभिमानमपनीय ब्रह्मण्येवाहमस्मीत्यवस्थानं तत्तदनुष्ठीयमानकर्मप्रतिबन्धान्न सिध्यतीत्याशङ्क्य विशेषणान्तरमादत्ते—**तन्निष्ठा इति** । तत्र निष्ठाशब्दार्थं दर्शयन्विवक्षितमर्थमाह—**निष्ठेत्यादिना** । तथाऽपि पुरुषार्थान्तरापेक्षात्प्रतिबन्धात्कथं यथोक्ते ब्रह्मण्येवावस्थानं सेद्धुं पारयन्ति तत्राऽऽह—**तत्परायणाश्चेति** । यथोक्तानामधिकारिणां परमपुरुषार्थस्योक्तब्रह्मानतिरेकान्नान्यत्राऽऽसक्तिरिति तात्पर्यार्थमाह—**केवलेति** । ननु यथोक्तविशेषणवतां वर्तमानदेहपातेऽपि देहान्तरपरिग्रहव्यग्रतया कुतो यथोक्ते ब्रह्मण्यवस्थानमास्थातुं शक्यते तत्राऽऽह—**येषामिति** । सति संसारकारणे दुरितादौ संसारप्रसरस्य दुर्वारत्वान्नापुनरावृत्तिसिद्धिरित्याशङ्क्याऽऽह—**ज्ञानेति** । उक्तविशेषणसंपत्त्या दर्शितफलशालित्वमाश्रमान्तरेष्वसंभावितामिति मन्वानो विशिनष्टि—**यतय इति**॥१७॥

**आ० भा०**—अपरोक्षज्ञानाव्यवहितसाधनमाह—तद्बुद्धय इति ॥ १७ ॥

**आ० ज०**—तद्बुद्धित्वादिकं यद्यपुनरावृत्तिसाधनत्वेनोच्यते तदाऽपरोक्षज्ञानादेव मोक्ष इति गतः पक्षः । अथ तद्बुद्धयो ज्ञाननिर्धूतकल्मषा इति ज्ञानसाधनत्वेन । तदसत् । ज्ञानेनेति परोक्षज्ञानस्यापरोक्षज्ञानसाधनत्वेनोक्तत्वादित्यत आह—**अपरोक्षेति** । सत्यम् । परोक्षज्ञानमपरोक्षज्ञानसाधनम् । किं तु व्यवहितम् । न हि श्रवणमननानंतरमेवापरोक्षज्ञानमुत्पद्यते । इदं त्वव्यवहितसाधनमाहेत्यर्थः ॥ १७ ॥

**रा० भा०**—तद्बुद्धयस्तथाविधात्मदर्शनाध्यवसायाः तदात्मानस्तद्विषयमनसः तन्निष्ठास्तदभ्यासनिरताः तत्परायणास्तदेव परमयनं येषां ते एवमभ्यस्यमानेन ज्ञानेन निर्धूतप्राचीनकल्मषास्तथाविधमात्मानमपुनरावृत्तिं गच्छन्ति यदवस्थादात्मनः पुनरावृत्तिर्न विद्यते स आत्मा अपुनरावृत्तिः स्वेन रूपेणावस्थितः तमात्मानं गच्छन्तीत्यर्थः ॥ १७ ॥

**अ० टी०**—तत्प्रकाशात्फलं भवतीत्याह—**तद्बुद्धय इति** । तस्मिन् ईश्वरे बुद्धिर्येषां ते । तस्मिन् स एव वा आत्मा येषां । तस्मिन्नेव निष्ठा भावो येषां । तस्मिन्नेव परायणाः तत्परास्तादृशाः । ज्ञाननिर्धूतकल्मषाः निरस्ताऽज्ञानाः । अपुनरावृत्तिं मोक्षं गच्छन्ति प्राप्नुवन्ति ॥ १७ ॥

**नी० टी०**—**तद्बुद्धय इति** । यत् परं ब्रह्म प्रशांतं तत्रैव बुद्धिः अस्ति ब्रह्मेति निश्चयो येषामापाततः श्रुत्यर्थविदां ते तद्बुद्धयः । तदेव आत्मा प्रत्यक्तत्त्वं येषां श्रवणमननात्मकविचारेण प्रमाणप्रमे-

यगतासंभावनाविहीनानां ते तदात्मानः । तत्रैव निष्ठा विजातीयवृत्त्यनंतरितसजातीयवृत्तिप्रवाहो येषां देहादावनात्मनि आत्मधीरूपविपरीतभावनारहितानां ते तन्निष्ठाः । तदेव परं अयनं अज्ञानरूपोपाधिनिरासेन प्राप्यं येषामखंडानंदसमानां ते तत्परायणाः । अपुनरावृत्तिं मोक्षं गच्छंति यतः ज्ञानेन निर्धूतं कल्मषं मूलाज्ञानं संसारबीजभूतं येषां ते ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

**शां० भा०—येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिताः कथं तत्त्वं पश्यन्तीत्युच्यते— विद्याविनयसंपन्ने विद्या च विनयश्च विद्याविनयौ विनय उपशमस्ताभ्यां विद्याविनयाभ्यां संपन्नो विद्याविनयसंपन्नो विद्वान्विनीतश्च यो ब्राह्मणस्तस्मिन्ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनो विद्याविनयसंपन्न उत्तमसंस्कारवति ब्राह्मणे सात्त्विके मध्यमायां च राजस्यां गवि संस्कारहीनायामत्यन्तमेव केवलतामसे हस्त्यादौ च सत्त्वादिगुणैस्तज्जैश्च संस्कारैस्तथा राजसैस्तथा तामसैश्च संस्कारैरत्यन्तमेवास्पृष्टं सममेकमविक्रियं ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः ॥ १८ ॥**

**शां० आ०**—यदपुनरावृत्तिसाधनं तत्त्वज्ञानं तदेव प्रश्नद्वारेण विवृणोति—**येषामित्यादिना** । विद्या वेदार्थविज्ञानमित्यङ्गीकृत्य विनयं व्याचष्टे—**विनय इति** । उपशमो निरहंकारत्वमनौद्धत्यम् । पदार्थमेवमुक्त्वा वाक्यार्थं दर्शयति—**विद्वानिति** । गवीत्याद्यनूद्य वाक्यार्थं कथयति—**विद्येति** । हस्त्यादौ पण्डिताः समदर्शिन इत्युत्तरत्र संबन्धः । तत्र तत्र प्राणिभेदेषु तत्तद्गुणैस्तत्तन्निमित्तसंस्कारैश्च संस्पृष्टत्वसंभवान्न ब्रह्मणः समत्वमित्याशङ्क्याऽऽह—**सत्त्वादीति** । तज्जैश्चेत्यत्र तच्छब्देन सत्त्वमेव गृह्यते । सात्त्विकसंस्कारैरिव राजससंस्कारैरपि सर्वथैवासंस्पृष्टं ब्रह्मेत्याह—**तथेति** । राजसैरिव तामसैरपि संस्कारैर्ब्रह्मात्यन्तमेवास्पृष्टमित्याह—**तथा तामसैरिति** । ब्रह्मणोऽद्वितीयत्वं कूटस्थत्वमसङ्गत्वं चोक्तेऽर्थे हेतुरिति मत्वा समशब्दार्थमाह—**सममिति** । समदर्शित्वमेव पाण्डित्यं तद्व्याचष्टे—**ब्रह्मेति** ॥ १८ ॥

**आ० भा०—परमेश्वरस्वरूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह— विद्येति ॥ १८ ॥**

**आ० ज०**—विद्याविनयेत्यादिप्रकृतानुपयुक्तमयुक्तं च कथमुच्यत इत्यत आह—**परमेश्वरेति** । सर्वत्र ब्राह्मणादिषु स्थितानां सर्वत्र गुणेषु दोषाभावेषु वा साम्यं तारतम्याभावः । तद्बुद्धित्वादिना सहास्य समुच्चयार्थश्चशब्दः । परमेश्वरविषयता निर्दोषं हीत्युत्तरवाक्यगम्याऽपरोक्षज्ञानसाधनता च प्रकरणगम्येत्यत आशयवानित्युक्तम् । पंडितशब्दस्तु परोक्षज्ञानवचनः पांडित्यमागमज्ञानमिति वचनात् ॥ १८ ॥

**रा० भा०—विद्याविनयसंपन्ने ब्राह्मणे गोहस्तिश्वपचादिषु अत्यन्तविषमाकारतया प्रतीयमानेषु चात्मसु पण्डिताः आत्मयाथात्म्यविदो ज्ञानैकाकारतया सर्वत्र समदर्शिनः विषमाकारस्तु प्रकृतेर्नात्मनः आत्मा तु सर्वत्र ज्ञानैकाकारतया सम इति पश्यन्तीत्यर्थः ॥ १८ ॥**

अ० टी०—तेषां लक्षणमाह—**विद्येति** । विद्याविनयसंपन्ने ब्राह्मणे श्वपाके शुनो यः पचति तस्मिंश्च गवि हस्तिनि शुनि च समदर्शिनः मदंशात्मज्ञानेन ते पण्डिताः ज्ञानिनो ज्ञेया इत्यर्थः ॥ १८ ॥

नी० टी०—एतेषां जगति दृष्टिमाह—**विद्येति** । उत्तमब्राह्मणे चंडालादौ वा समं ब्रह्मैव सद्रूपेण स्फुरणरूपेण च भासमानं द्रष्टुं शीलं येषां ते समदर्शिनः । यथोक्तं । 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकं ॥ आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्' इति चराचरं जगद्ब्रह्मदृष्ट्यैव पश्यंतीत्यर्थः ॥ १८ ॥

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ॥**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥**

**शां० भा०**—नन्वभोज्यान्नास्ते दोषवन्तः 'समासमाभ्यां विषमसमे पूजातः' इति स्मृतेर्न ते दोषवन्तः । कथम्—इहैव जीवद्भिरेव तैः समदर्शिभिः पण्डितैर्जितो वशीकृतः सर्गो जन्म येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनोऽन्तःकरणं निर्दोषम् । यद्यपि दोषवत्सु श्वपाकादिषु मूढैस्तद्दोषैर्दोषवदिव विभाव्यते तथाऽपि तद्दोषैरस्पृष्टमिति निर्दोषं दोषवर्जितं हि यस्मान्नापि स्वगुणभेदभिन्नं निर्गुणत्वाच्चैतन्यस्य, वक्ष्यति च भगवानिच्छादीनां क्षेत्रधर्मत्वमनादित्वान्निर्गुणत्वादिति च । नाप्यन्त्या विशेषा आत्मनो भेदकाः सन्ति प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेरतः समं ब्रह्मैकं च तस्माद्ब्रह्मण्येव ते स्थितास्तस्मान्न दोषगन्धमात्रमपि तान्स्पृशति देहादिसंघातात्मदर्शनाभिमानाभावात् । देहादिसंघातात्मदर्शनाभिमानवद्विषयं तु तत्सूत्रं "समासमाभ्यां विषमसमे पूजातः" इति पूजाविषयत्वविशेषणात् । दृश्यते हि ब्रह्मवित्षडङ्गविच्चतुर्वेदविदिति पूजादानादौ गुणविशेषसंबन्धः कारणं ब्रह्म तु सर्वगुणदोषसंबन्धवर्जितमित्यतो ब्रह्मणि ते स्थिता इति युक्तम् । कर्मिविषयं च समासमाभ्यामित्यादीदं तु सर्वकर्मसंन्यासिविषयं प्रस्तुतं सर्वकर्माणि मनसेत्यारभ्याऽऽध्यायपरिसमाप्तेः ॥ १९ ॥

**शां० आ०**—सात्त्विकेषु राजसेषु तामसेषु च सत्त्वेषु समत्वदर्शनमनुचितमिति शङ्कते—**नन्विति** । सर्वत्र समदर्शिनस्तच्छब्देन परामृश्यन्ते । तेषां दोषवत्त्वादभोज्यान्नत्वमित्यत्र प्रमाणमाह—**समासमाभ्यामिति** । समानामध्ययनादिभिः समानधर्मकाणां वस्त्रालंकारादिपूजया विषमे प्रतिपत्तिविशेषे क्रियमाणे सत्यसमानां चासमानधर्मकाणां कस्यचिदेकवेदत्वमपरस्य द्विवेदत्वमित्यादिधर्मवतां प्रागुक्तया पूजया समे प्रतिपत्तिविशेषे पूजयिता पुरुषविशेषं ज्ञात्वा प्रतिपत्तिमकुर्वन्धनाद्धर्माच्च हीयते तेन सात्त्विके राजसतामसयोश्च समबुद्धिं कुर्वन्प्रत्यवैतीत्यर्थः । उत्तरत्वेनोत्तरश्लोकमवतारयति—**न ते दोषवन्त इति** । स्मृत्यवष्टम्भेन सर्वसत्त्वेषु समत्वदर्शिनां दोषवत्त्वमुक्तं कथं नास्तीति प्रतिज्ञामात्रेण सिध्यतीति शङ्कते—**कथमिति** । स्मृतेर्गतिमग्रे वदिष्यन्निर्दोषत्वं समत्वदर्शिनां विशदयति—**इहैवेति** । सर्वेषां चेतनानां साम्ये प्रवणमनसां ब्रह्मलोकगमनमन्तरेणास्मिन्नेव देहे परिभूतजन्मनामशेषदोषराहित्ये हेतुमाह—**निर्दोषं हीति** । वर्तमानो देहः सप्तम्या परिगृह्यते । तानेव समदर्शिनो विशिनष्टि—**येषामिति** । ननु ब्रह्मणो निर्दोषत्वमसिद्धं दोषवत्सु श्वपाकादिषु तद्दोषैर्दोषवत्त्वोपलम्भसंभवात्तत्राऽऽह—**यद्यपीति** । यस्मात्तन्निर्दोषं तस्मात्तस्मिन्ब्रह्मणि स्थितैर्निर्दोषैः सर्गो जित इति संबन्धः । ब्रह्मणो गुणभूयस्त्वादल्पीयान्दोषोऽपि स्यादित्याशङ्क्याऽऽह—**नापीति** । चेतनस्य स्वगुणविशेषविशिष्टत्वमनिष्टं निर्गुणत्वश्रवणादित्ययुक्तमिच्छादीनां परिशेषादात्मधर्मत्वस्य कैश्चिन्निश्चितत्वादित्याशङ्क्याऽऽह—**वक्ष्यति चेति** । आत्मनो निर्गुणत्वे वाक्यशेषं प्रमाणयति—**अनादित्वादिति** । चकारो वक्ष्यतीत्यनेन संबन्धार्थः । गुणदोषवशादात्मनो भेदाभावेऽपि भेदोऽन्त्यविशेषेभ्यो भविष्यतीत्यतिप्रसङ्गादाशङ्क्य दूषयति—**नापीति** । प्रतिशरीरमात्मभेदसिद्धौ तद्धेतुत्वेन तेषां सत्त्वं तेषां च सत्त्वे प्रतिशरीरमात्मनो भेदसिद्धिरिति परस्पराश्रयत्वमभिप्रेत्य हेतुमाह—**प्रतिशरीरमिति** । आत्मनो भेदकाभावे फलितमाह—**अत इति** । समत्वमेव व्याकरोति—**एकं चेति** । ब्रह्मणो निर्विशेषत्वेनैकत्वाज्जीवानां च भेदकाभावेनैकत्वस्योक्तत्वादेकलक्षणत्वादेकत्वं जीवब्रह्मणोरैक्यमित्याह—**तस्मादिति** । जीवब्रह्मणोरेकत्वे जीवानां ब्रह्मवन्निर्दोषत्वं सिध्यतीत्याह—**तस्मान्नेति** । तच्छब्दार्थमेव स्फोरयति—**देहादीति** । यदि सर्वसत्त्वेषु समत्वदर्शनमदुष्टमिष्टं तर्हि कथं गौतमसूत्रमित्याशङ्क्याऽऽह—**देहादिसंघातेति** । सूत्रस्य यथोक्ताभिमानवद्विषयत्वे गमकमाह—**पूजेति** । यदि चतुर्वेदानामेव सतां पूजया वैषम्यं यदि वा चतुर्वेदानां षडङ्गविदां ब्रह्मविदां च पूजया साम्यं तदा तेषामुक्तपूजाविषयाणां केषांचिन्मनोविकारसंभवे कर्ता प्रत्यवैतीत्यविद्वद्विषयत्वं सूत्रस्य प्रतिभातीत्यर्थः । तत्रैव चानुभवमनुकूलत्वेनोदाहरति—**दृश्यते हीति** । देहादिसंघाताभिमानवतां गुणदोषसंबन्धसंभवात्तद्विषयं सूत्रमित्युक्तमिदानीं ब्रह्मात्मदर्शनाभिमानवतां गुणदोषासंबन्धान्न तद्विषयं सूत्रमित्यभिप्रेत्याऽऽह—**ब्रह्म त्विति** । इतश्च नेदं सूत्रं ब्रह्मविद्विषयमित्याह—**कर्मीति** । तत्रैव पूजापरिभवसंभवादित्यर्थः । ननु यत्र समत्वदर्शनं तत्रैव त्विदं सूत्रं न तु कर्मिण्यकर्मिणि वेति विभागोऽस्ति तत्राऽऽह—**इदं**

त्विति। समत्वदर्शनस्य संन्यासिविषयत्वेन प्रस्तुतत्वे हेतुमाह—**सर्वकर्माणीति**। अध्यायपरिसमाप्तेः सर्वकर्माणीत्यारभ्य तत्र तत्र सर्वकर्मसंन्यासाभिधानात्तद्विषयमिदं समत्वदर्शनं गम्यते तत्र तन्निरहंकारे निरवकाशं सूत्रमित्यर्थः ॥ १९ ॥

**आ० भा०—तदेव स्तौति—इहैवेति ॥ १९ ॥**

आ० ज०—ननूत्तरवाक्ये साम्यदर्शनं मुक्तिसाधनमेवोच्यते तत्कथमुच्यते अपरोक्षज्ञानसाधनमिति प्राग्ज्ञानिनोऽपि जन्मांतरसद्भाव उक्तः। तत्कथमिहैवेति तद्देहएव मुक्तिरुक्तेत्यत आह—**तदेवेति**। स्तुतावधिकोक्तिः संभवतीति भावः ॥ १९ ॥

**रा० भा०—इहैव साधनानुष्ठानदशायामेव तैः सर्गो जितः संसारो जितः येषामुक्तरीत्या सर्वेष्वात्मसु साम्ये स्थितं मनः निर्दोषं हि समं ब्रह्म प्रकृतिसंसर्गदोषवियुक्तया सममात्मवस्तु हि ब्रह्म आत्मसाम्ये स्थिताश्चेद्ब्रह्मणि स्थिता एव ते ब्रह्मणि स्थितिरेव हि संसारजयः आत्मसु ज्ञानैकाकारतया साम्यमेवानुसंदधाना मुक्ता एवेत्यर्थः ॥ १९ ॥**

**अ० टी०—**य एतादृशास्त उत्तमा इत्याह—**इहैवेति**। येषां मनः साम्ये समभावे स्थितं तैरिहैव सर्गो जितः। अत्रायं भावः। भगवता स्वक्रीडार्थं जगदुत्पादितं तत्र यस्य यादृशेच्छया यो भाव उत्पादितः स तथैव करोति। स योग्यो भवति नवेति किमर्थं विचारणीयम्। अतो येषां मनः साम्ये भगवत्क्रीडारूपे स्थितं तैरिहैव अधिष्ठानात्मकदेह एव सर्गः संसारो मायारूपो जितः। यतो ब्रह्म समं स्वक्रीडार्थरूपेषु निर्दोषं तेषु दोषादिरहितं तस्माद्येषां मनः साम्ये स्थितं ते ब्रह्मणि ब्रह्मभावे स्थिताः। अतस्तैः संसारो जित इत्यर्थः। यद्वा सर्गः स्वोत्पत्तिर्जिता वशीकृता सफलीकृतेत्यर्थः भगवता स्वमेवार्थमुत्पादितास्तत्कृतमितिभावः। यद्वा येषां मनः संयोगवियोगयोः साम्येन स्थितं तैरिहैव अधिकरणदेह एव सर्गः अलौकिकोऽग्रेभावी जितो वशीकृतः। सर्वथैवालौकिकदेहो भावरूपो वशे जातो यतोऽयं यदैवेच्छति तदैव भावप्राकट्यं भवतीतिभावः। हीति युक्तमेव यतो ब्रह्म भगवान् स्वस्थायिरसात्मकत्वात् समानाद्यवस्थासु निर्दोषं यथा रासे। यतो ब्रह्म तादृशं तस्मात् ते ब्रह्मणि ब्रह्मभावे निरोधरूपे स्थिता इति भावः ॥ १९ ॥

**नी० टी०—**ननु "समासमाभ्यां विषमसमे पूजातः" इति तुल्यश्रुतशीलाय ब्राह्मणद्वयाय विषमां पूजां प्रयुक्तवतः तथा अतुल्यश्रुतशीलाय ब्राह्मणद्वयाय समां पूजां प्रयुक्तवतश्चाभोज्यान्नत्वं गौतमेन स्मर्यते तत्कथं ब्राह्मणचंडालयोः समदर्शित्वं युक्तमित्याशंक्याह—**इहैवेति**। येषां मनः सर्वभूतेषु साम्ये ब्रह्मभावे स्थितं निश्चलं तैरिहैव जीवद्भिरेव सर्गो जन्म जितो वशीकृतः। हि यस्मान्निर्दोषं समं सर्वत्राविषमं ब्रह्मास्ति यथा "हिरण्मययोर्देवतातत्पीठयोः स्वर्णदृक्साम्यं पश्यति पूजकस्तु आकारदृक् तारतम्यं पश्यति तद्वत्। पूजास्मृतिर्भ्रांतिकृततारतम्यविषया"। साम्यदृष्टिस्तु तत्त्वविषयेति भावः। यस्मादेवं ते साम्यं पश्यंति तस्मात् ब्रह्मणि अखंडैकरसे ते द्रष्टारः स्थिता एकीभावेन समाप्तिं गताः ॥ १९ ॥

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ॥**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥**

**शां० भा०—यस्मान्निर्दोषं समं ब्रह्माऽऽत्मा तस्मात्—न प्रहृष्येन्न प्रहर्षं कुर्यात्प्रियमिष्टं प्राप्य लब्ध्वा नोद्विजेत्प्राप्यैव चाप्रियमनिष्टं लब्ध्वा देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादस्थाने न केवलात्मदर्शिनस्तस्य प्रियाप्रियप्राप्त्यसंभवात्। किंच सर्वभूतेष्वेकः समो निर्दोष आत्मेति स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स स्थिरबुद्धिरसंमूढः संमोहवर्जितश्च स्याद्यथोक्तब्रह्मविद्ब्रह्मणि स्थितोऽकर्मकृत्सर्वकर्मसंन्यासीत्यर्थः ॥ २० ॥**

**शां० आ०**—नन्विष्टानिष्टप्राप्तिभ्यां हर्षविषादौ विद्वानपि कुर्वन्निर्दोषे ब्रह्मणि कथं स्थितिं लभेतेत्याशङ्कयाऽऽकाङ्क्षितं पूरयन्नुत्तरश्लोकमुत्थापयति—**यस्मादिति**। आत्मज्ञाननिष्ठावतो विदुषो हर्षविषादनिमित्ताभावान्न तावुचिताविल्याह—**स्थिरबुद्धिरिति**। ननु हर्षविषादनिमित्तत्वं प्रियाप्रिययोः सिद्धमिति कथं तत्प्राप्त्या हर्षोद्वेगौ न कर्तव्याविति नियुज्यते तत्राऽऽह—**देहेति**। विदुषोऽपि प्रियाप्रियप्राप्तिसामर्थ्यादेव हर्षविषादौ दुर्वारावित्याशङ्कयाऽऽह—**न केवलेति**। अद्वितीयात्मदर्शनशीलस्य व्यतिरिक्तप्रियाप्रियप्राप्त्ययोगान्न तन्निमित्तौ हर्षविषादावित्यर्थः। इतोऽपि विदुषो हर्षविषादावसंभावितावित्याह—**किंचेति**। निर्दोषे ब्रह्मणि प्रागुक्ते दृढप्रतिपत्तिः संमोहेन हर्षादिहेतुना रहितो यथोक्ते सर्वदोषरहिते ब्रह्मण्यहमस्मीतिविद्यावानशेषदोषशून्ये तस्मिन्नेव ब्रह्मणि स्थितस्तदनुरोधात्कर्माण्यमृष्यमाणो नैव हर्षविषादभागी भवितुमलमित्यर्थः॥ २०॥

**आ० भा०**—संन्यासयोगज्ञानानि मिलित्वा प्रपंचयत्यध्यायशेषेण॥ २०॥

**आ० ज०**—अत्र कश्चिदाध्यायपरिसमाप्तेः ज्ञानिनः कर्माभावः प्रतिपाद्यत इत्याह। अपरस्तु ज्ञानस्वरूपं तत्सहकारिसाधनं च प्रतिपाद्यत इति। तदुभयमसत्। अप्रतीतेरिति भावेनाध्यायशेषप्रतिपाद्यमाह—**संन्यासेति**। मिलित्वा मेलयित्वा शंकानुसारेणैव न तु प्रकरणभेदेनेत्यर्थः। पुनरुक्तिपरिहारार्थं प्रपंचयतीत्युक्तम्। संन्यासस्यादौ ग्रहणेन न प्रहृष्येदिति संन्यासप्रपंचनमिति सूचितम्॥ २०॥

**रा० भा०**—येन प्रकारेणावस्थितस्य कर्मयोगिनः समदर्शनरूपो ज्ञानविपाको भवति तं प्रकारमुपदिशति। यादृशदेहस्थस्य प्राचीनकर्मवासनया यत्प्रियं यच्चाप्रियं तदुभयं प्राप्य हर्षोद्वेगौ न कुर्यात् कथं स्थिरबुद्धिः स्थिरे आत्मनि बुद्धिर्यस्य सः स्थिरबुद्धिः असंमूढः अस्थिरेण शरीरेण स्थिरमात्मानमेकीकृत्य मोहः संमोहस्तद्रहितः तच्च कथं ब्रह्मविद्ब्रह्मणि स्थितः उपदेशेन ब्रह्मवित् सन् तस्मिन्ब्रह्मण्यभ्यासयुक्तः। एतदुक्तं भवति तत्त्वविदामुपदेशेनात्मयाथात्म्यविद्भूत्वा तत्रैव यतमानो देहाभिमानं परित्यज्य स्थिररूपात्मावलोकनप्रियानुभवे व्यवस्थितः अस्थिरे प्राकृतप्रियाप्रिये प्राप्य हर्षोद्वेगौ न कुर्यादिति॥ २०॥

**अ० टी०**—एवं साम्यस्थितस्य ब्रह्मभावापत्तिमुक्त्वा तद्भावापन्नस्य लक्षणमाह—**न प्रहृष्येदिति**। प्रियं प्राप्य संयोगेन न प्रहृष्येत्। यतः प्रकृष्टहर्षेणाग्रे मानोत्पत्त्या दोषः स्यात्। च पुनः। अप्रियं विप्रयोगं प्राप्य नोद्विजेत् उद्वेगं न प्राप्नोति। यतो भगवता विप्रयोगः परमसुखदानार्थं दत्तस्तत्रोद्वेगेऽग्रे न तत्प्राप्तिः स्यात्। एवमवस्थाद्वये स्थिरबुद्धिः स असंमूढः ब्रह्मवित् मोहाभावेन ब्रह्मस्वरूपज्ञ इतिभावः। ब्रह्मणि ब्रह्मभावे स्थितः स इत्यर्थः॥ २०॥

**नी० टी०**—**न प्रहृष्येदिति**। यस्मान्निर्दोषं समं ब्रह्म तस्मात् प्रियं पुत्रादिं प्राप्य न प्रहृष्येत्। अप्रियं शत्रुं दुःखदं प्राप्य नोद्विजेत्। बुद्धस्थितिरबुद्धेनानुष्ठेयेति ज्ञापयितुमुभयत्र लिङ्प्रयोगः। स्थिरबुद्धिः प्रत्यगद्वैते श्रुतियुक्तिभ्यां स्थिरीकृतप्रज्ञः असंमूढो ध्यानजसाक्षात्कारेण निर्गतमोहः अत एव ब्रह्मवित् ब्रह्मभावस्य लब्धा ब्रह्मभावं गत इत्यर्थः। ब्रह्मण्येव प्रत्यगद्वये व्युत्थानावस्थायामपि स्थितः सर्वं ब्रह्मेत्येव पश्यन्नित्यर्थः॥ २०॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्॥
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते॥ २१॥

**शां० भा०**—किंच ब्रह्मणि स्थितः—बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्यस्पर्शेष्वसक्त आत्माऽन्तःकरणं यस्य सोऽयमसक्तात्मा विषयेषु प्रीतिवर्जितः सन्विन्दति लभत आत्मनि यत्सुखं तद्विन्दतीत्येतत्। स ब्रह्मयोगयुक्तात्मा

ब्रह्मणि योगः समाधिर्ब्रह्मयोगस्तेन ब्रह्मयोगेन युक्तः समाहितस्तस्मिन्व्यापृत आत्माऽन्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते व्याप्नोति। तस्माद्बाह्यविषयप्रीतेः क्षणिकाया इन्द्रियाणि निवर्तयेदात्मन्यक्षयसुखार्थीत्यर्थः॥ २१॥

**शां० आ०**—शब्दादिविषयप्रीतिप्रतिबन्धान्न कस्यचिदपि ब्रह्मणि स्थितिः सिध्येदित्याशङ्क्याऽऽह—**किंचेति**। न केवलं पूर्वोक्तरीत्या ब्रह्मणि स्थितो हर्षविषादरहितः किं तु विधान्तरेणापीत्यर्थः। यावद्यावद्विषयेषु रागरूपमावरणं निवर्तते तावत्तावदात्मस्वरूपसुखमभिव्यक्तं भवतीत्याह—**बाह्येति**। न केवलमसक्तात्मा शमवशादेव सुखं विन्दते किं तु ब्रह्मसमाधिना समाहितान्तःकरणः सुखमनन्तं व्याप्नोतीत्याह—**स ब्रह्मेति**। तत्र पूर्वार्धं व्याचष्टे—**बाह्याश्चेति**। समाधानाधीनसम्यग्ज्ञानद्वारा निरतिशयसुखप्राप्तिमुत्तरार्धव्याख्यानेन कथयति—**ब्रह्मणीत्यादिना**। शब्दादिविषयविमुखस्यानन्तसुखाप्तिसंभवात्तदर्थिना प्रयत्नेन विषयवैमुख्यं कर्तव्यमिति शिष्यशिक्षार्थमाह—**तस्मादिति**॥ २१॥

**आ० भा०**—पुनर्योगस्याधिक्यं स्पष्टयति—**बाह्यस्पर्शेष्विति**। कामरहितआत्मनि यत्सुखं विंदति स एव ब्रह्मयोगयुक्तात्मा चेत्तदेवाक्षयं सुखं विंदति। ब्रह्मविषयो योगो ब्रह्मयोगः ध्यानादियुक्तस्यैवात्मसुखमक्षयम्। अन्यथा नेत्यर्थः॥ २१॥

**आ० ज०**—प्रकृतस्य संन्यासिन एवाक्षयसुखप्राप्तिरुच्यत इति परव्याख्यानमसदिति भावेनाह—**पुनरिति**। संन्यासस्त्वित्यादिना प्रागुक्तत्वात्पुनरिति। आधिक्यं संन्यासात्। प्राग्योगाभावे संन्यासस्य वैयर्थ्यमुक्तम्। तदसत्। कामाद्युपद्रवक्षये स्वरूपसुखस्याविर्भावादित्याशंकानिराकरणात्स्पष्टनम्। नैतदत्र प्रतीयत इत्यतो व्याचष्टे—**कामेति**। बाह्यस्पर्शेष्वसक्तात्मेत्यस्यार्थः—**कामरहित इति**। आत्मस्वरूपस्यापि सुखस्य न निर्विशेषत्वमिति ज्ञापनायात्मनीत्युक्तम्। स एव कामरहित एव तदेव आत्मसुखमेव। ब्रह्मणा योग इति प्रतीतिनिरासायाह—**ब्रह्मेति**। कथमनेन संन्यासाद्योगस्याधिक्यं स्पष्टीकृतमित्यतोब्रह्मयोगशब्दार्थं विवृण्वन् तात्पर्यमाह—**ध्यानादीति**। ज्ञानद्वारेति शेषः। अक्षयं पुनस्तिरोभावरहितम्। अन्यथा संन्यासमात्रेण तिरोभावोपेतं त्वल्पत्वादफलमेवेत्युक्तमेव। व्याख्यानांतरे तु बहूनां पदानां वैयर्थ्यमिति भावः॥ २१॥

**रा० भा०**—एवमुक्तेन प्रकारेण बाह्यस्पर्शेष्वात्मव्यतिरिक्तविषयानुभवेष्वसक्तमनाः अन्तरात्मन्येव यः सुखं विन्दति लभते स प्रकृत्यभ्यासं विहाय ब्रह्मयोगयुक्तात्मा ब्रह्माभ्यासयुक्तमनाः ब्रह्मानुभवरूपमक्षयं सुखं प्राप्नोति॥ २१॥

**अ० टी०**—नन्वनेन शरीरेण कथं तद्भावप्राप्तिरित्याशङ्क्याह—**बाह्यस्पर्शेष्विति**। बाह्यस्पर्शेषु लौकिकेन्द्रियविषयेष्वसक्त आत्मा अन्तःकरणं यस्य स आत्मनि भावात्मके स्वस्वरूपे यत्सुखं तद्विन्दति प्राप्नोतीत्यर्थः। योगो भावात्मकं सुखं तं जानाति। स ब्रह्मयोगे सद्भावात्मके युक्त आत्मा यस्य तादृशो भवति। अक्षयं तद्दास्यात्मकं सुखमश्नुते भुङ्क्ते इत्यर्थः॥ २१॥

**नी० टी०**—नन्वननुभूतात्मसुखेप्सया प्रसिद्धं बाह्यं सुखं त्यक्तुमशक्यमतो न प्रहृष्येदित्यसंगतमत आह—**बाह्येति**। बहिर्भवाः बाह्याः स्पर्शा विषयेंद्रियसंबंधास्तेषु। असक्तात्मा अनासक्तचित्तः सन्नात्मनि प्रत्यगद्वयानंदे सुषुप्तिकाले स्थित्वा यत्सुखं विंदति लभते स तदेव सुखं। विधेयापेक्षं पुंस्त्वं। कस्तत्सुखं यो ब्रह्मयोगे ब्रह्मणिं योगः समाधिस्तत्र युक्तो योजित आत्मा बुद्धिर्येन स ब्रह्मयोगयुक्तात्मा ब्रह्मविदित्यर्थः। "ब्रह्मविद्ब्रह्मैव भवति" इति श्रुतेः। ब्रह्मयोगयुक्तात्मा तदेव सुखं विंदतीति वक्तव्ये ब्रह्मविदेव तत्सुखमिति तस्य सुखाभिन्नत्वविवक्षया इदमुक्तं। ननूभयत्र एकमेव सुखं चेत्कः सुप्तसमाधिस्थयोर्विशेष इत्याशंक्याह—**सुखमिति**। अक्षय्यं सुखं मोक्षस्तमश्नुते व्याप्नोति द्वैतादर्शनस्य तुल्यत्वादुभयत्रैकमेव सुखं तथापि योगी मूलाविद्याया नष्टत्वादक्षय्यं सुखमश्नुते न सुप्तः अविद्यानुच्छेदात्। तथा च मोक्षसुखस्य मुख्यस्याप्यनुभूतत्वात्तदर्थं बाह्यं सुखं सुत्यजमित्यर्थः॥ २१॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ॥
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥

**शां० भा०**—इतश्च निवर्तयेत्—ये हि यस्मात्संस्पर्शजा विषयेन्द्रियसंस्पर्शेभ्यो जाता भोगा भुक्तयो दुःखयोनय एव तेऽविद्याकृतत्वात् । दृश्यन्ते ह्याध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव । यथेह लोके तथा परलोकेऽपीति गम्यत एवशब्दात् । न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा विषयमृगतृष्णिकाया इन्द्रियाणि निवर्तयेत् । न केवलं दुःखयोनय आद्यन्तवन्तश्चाऽऽदिर्विषयेन्द्रियसंयोगो भोगानामन्तश्च तद्वियोग एवात आद्यन्तवन्तोऽनित्या मध्यक्षणभावित्वादित्यर्थः । कौन्तेय न तेषु रमते बुधो भोगेषु विवेक्यवगतपरमार्थतत्त्वोऽत्यन्तमूढानामेव हि विषयेषु रतिर्दृश्यते यथा पशुप्रभृतीनाम् ॥ २२ ॥

**शां० आ०**—तत्रैव हेत्वन्तरपरत्वेनोत्तरश्लोकमुदाहरति—**इतश्चेति** । विषयेभ्यः सकाशादिन्द्रियाणीति शेषः । वैराग्यार्थमेव वैषयिकाणि सुखानि दूषयति—**ये हीति** । ननु विषयेन्द्रियसंप्रयोगसंप्रसूतेषु भोगेषु जन्तूनामभिरुचिदर्शनात्कुतस्तेषां दुःखयोनित्वमित्याशङ्क्याविवेकिनां तेष्वासङ्गेऽपि न विवेकिनामित्याह—**आद्यन्तवन्त इति** । यस्मादाधिव्याधिजरामरणादिसहितेभ्यः समागमनादिक्लेशरूपभागिभ्यश्च विषयेन्द्रियसंबन्धेभ्यो भोगाः सुखलवानुभवा जायन्ते तस्मात्ते दुःखहेतवो भवन्तीति योजना । अविद्याकार्यत्वाद्दुःखानां कुतो भोगजन्यत्वमित्याशङ्क्य भोगानामविद्याप्रयुक्तत्वात्तन्निबन्धनत्वं दुःखानां युक्तमित्यभिप्रेत्याऽऽह—**अविद्येति** । भोगानां दुःखयोनित्वे मानमनुभवमुपन्यस्यति—**दृश्यन्ते हीति** । ऐहिकानां भोगानां दुःखनिमित्तत्वेऽपि नाऽऽमुष्मिकाणां तथात्वमनुभवाभावादित्याशङ्क्यावधारणसामर्थ्यसिद्धमर्थमाह—**यथेति** । पूर्वार्धस्याक्षरार्थमुक्त्वा तात्पर्यार्थमाह—**नेत्यादिना** । इतश्च विषयेभ्यः सकाशादिन्द्रियाणि निवर्तयितव्यानीत्याह—**न केवलमिति** । आद्यन्तवत्त्वे मध्यक्षणवर्तित्वेन क्षणभङ्गुरत्वादुपेक्षणीयत्वं भोगानां सिध्यति । अस्ति हि तेषां क्षणभङ्गुरत्वं क्षणिकविषयाकारमनोवृत्तिव्यङ्ग्यत्वादिति मन्वानः सन्नाह—**अत इति** । बुद्धिपूर्वकारिणां विवेकवतां भोगेष्वपेक्षोपलब्धेश्च तेषामाभासत्वं प्रतिभातीत्याह—**न तेष्विति** । प्रतीकोपादानमाद्यमिदं पुनर्व्याख्यानमिति न पुनरुक्तिः । ननु केषांचिद्भोगेष्वभिरुचिरुपलभ्यते तत्राऽऽह—**अत्यन्तेति** ॥ २२ ॥

**आ० भा०**—संन्यासार्थं कामभोगं निंदयति—येहीति ॥ २२ ॥

**आ० ज०**—ननूत्तरश्लोके संन्यासादित्रितयांतर्गतं न किंचिदुच्यत इत्यत आह—**संन्यासार्थमिति** । निंदयतीति स्वार्थे णिच् । संन्यासार्थिनेति वा ॥ २२ ॥

**रा० भा०**—प्राकृतस्य भोगस्य सुत्यजतामाह । विषयेन्द्रियस्पर्शजा ये भोगाः दुःखयोनयस्ते दुःखोदर्का आद्यन्तवन्त अल्पकालवर्तिनो ह्युपलभ्यंते न तेष्वध्यात्मविद्रमते ॥ २२ ॥

**अ० टी०**—ननु लौकिकरसभोगाभावेऽनुभवं विना कथमलौकिकरसज्ञानं स्यात्तदभावे च कथं तदनुभवः स्यादित्यत आह—**ये हि संस्पर्शजा इति** । संस्पर्शजा भोगा विषयसंबन्धिनो लौकिकार्थे भोगास्ते दुःखयोनयो भगवत्संबन्धाभावक्लेशकारणभूताः यत आद्यन्तवन्तः आदिमन्तः स्वभावेनैवोत्पन्ना ननु भगवदिच्छया । अन्तवन्तः स्वमनोरथपूर्त्यैव पूर्णाः । यतस्त एव तादृशा अतो हे कौन्तेय ! मद्भावानुभवयोग्य ! हीति निश्चयेन बुधः सर्वरसज्ञो भगवान् न रमते न रसदानं करोतीत्यर्थः । यतो भगवान् बुधः सर्वरसज्ञोऽतस्तदिच्छया तद्भोगानुभवः सिद्ध एव भविष्यतीतिभावः ॥ २२ ॥

**नी० टी०**—ननु सुषुप्तितुल्यस्य मोक्षसुखस्यार्थे कः प्राप्तमेव बाह्यं दिव्यस्त्र्यन्नपानगीतवाद्यादिसुखं त्यजेदित्याशंक्य बाह्यसुखमनित्यत्वान्निंदति—**ये हीति** । संस्पर्शजा विषयसंबंधजाः । दुःखयोनित्वे हेतुः—आद्यंतवंत इति । जाते पुत्रे यत्सुखं तत्तस्मिन्नष्टे नश्यति दुःखं च महत्प्रयच्छतीति तेषु भोगेषु बुधः परिपाकदर्शी न रमते ॥ २२ ॥

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ॥
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥

**शां० भा०**—अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुर्दुर्निवार्यश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह भगवान्—शक्नोत्युत्सहत इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक्पूर्वं शरीरविमोक्षणादा मरणात्। मरणसीमाकरणं जीवतोऽवश्यंभावी हि कामक्रोधोद्भवो वेगोऽनन्तनिमित्तवान्हि स इति। यावन्मरणं तावन्न विश्रम्भणीय इत्यर्थः। काम इन्द्रियगोचरप्राप्त इष्टे विषये श्रूयमाणे स्मर्यमाणे वाऽनुभूते सुखहेतौ या गर्धिस्तृष्णा स कामः, क्रोधश्चाऽऽत्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः स क्रोधस्तौ कामक्रोधावुद्भवो यस्य वेगस्य स कामक्रोधोद्भवो वेगः, रोमाञ्चनहृष्टनेत्रवदनादिलिङ्गोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगो गात्रप्रकम्पप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगस्तं कामक्रोधोद्भवं वेगं य उत्सहते प्रसहते सोढुं प्रसहितुं स युक्तो योगी सुखी चेह लोके नरः ॥ २३ ॥

शां० आ०—उत्तरश्लोकस्य तात्पर्यमाह—**अयं चेति**। श्रेयोमार्गप्रतिपक्षत्वं कष्टतमत्वे हेतुस्तत्रैव हेत्वन्तरमाह—**सर्वेति**। प्रयत्नाधिक्यस्य कर्तव्यत्वे हेतुं सूचयति—**दुर्निवार्य इति**। प्रसिद्धं हि कामक्रोधोद्भवस्य वेगस्य दुर्निवारत्वं येन मातरमपि चाधिरोहति पितरमपि हन्ति तमवश्यं परिहर्तव्यं दर्शयति—**शक्नोतीति**। यथोक्तं वेगं बहिरनर्थरूपेण परिणामात्प्रागेव देहान्तरुत्पन्नं यः सोढुं क्षमते तं स्तौति—**स युक्त इति**। मरणसीमाकरणस्य तात्पर्यमाह—**मरणेति**। प्रसिद्धौ हिशब्दः। तत्र हेतुमाह—**अनन्तेति**। व्याध्युपहतानां वृद्धानां च कामादिवेगो न भवतीत्याशङ्क्याऽऽह—**यावदिति**। कामक्रोधोद्भवं वेगं व्याख्यातुमादौ कामं मनोविकारविशेषत्वेन व्याचष्टे—**काम इति**। कथमस्य मनोविकारविशेषत्वं तदाह—**इन्द्रियेति**। कामो गर्धिस्तृष्णेति पर्यायाः सन्तः शब्दा मनोविकारविशेषे पर्यवस्यन्तीत्यर्थः। क्रोधश्च मनोविकारविशेषस्तद्वदित्याह—**क्रोधश्चेति**। तमेव क्रोधं स्पष्टयति—**आत्मन इति**। एवं कामक्रोधौ व्याख्याय तयोरुत्कटत्वावस्थात्मनो वेगस्य ताभ्यामुत्पत्तिमुपन्यस्यति—**ताविति**। यथोक्तवेगावगमोपायमुपदिशति—**रोमाञ्चनहृष्टनेत्रेत्यादिना**। उभयविधवेगं यो जीवन्नेव सोढुं शक्नोति तं पुरुषधौरेयत्वेन स्तौति—**तमित्यादिना** ॥ २३ ॥

**आ० भा०**—तत्परित्यागं प्रशंसयति—शक्नोतीति। कामक्रोधोद्भवं वेगं सोढुं शक्नोति। शरीरविमोक्षणात्प्राक्। यथा मनुष्यशरीरे सोढुं सुशकः तथा नान्यत्रेति भावः। ब्रह्मलोकादिस्तु जितकामानामेव भवति ॥ २३ ॥

आ० ज०—उत्तरश्लोकमप्यंतर्भावयितुमाह—**तदिति**। कामभोगपरित्यागं संन्यासार्थमिति वर्तते। इहैव शरीरविमोक्षणात्प्रागिति प्रशंसायामनुपयुक्तमिति भावेन तद्विहायान्ययोजयति—**कामेति**। वेगं मनसोऽनवस्थानम्। एवं तर्हीहैव शरीरविमोक्षणात् प्रागितिकिमर्थमुक्तमित्यतस्तदनूद्य तात्पर्यमाह—**शरीरेति**। इहैवेत्यनुवादे ग्राह्यम्। अस्मिन्नेव लोक इति। अत एवोक्तं मनुष्यशरीर इति। अतोऽत्रैव तत्सहनाय प्रयतितव्यमित्यभिप्रायशेषः। ननु ब्रह्मलोकादौ तत्सहनमत्यंतसुशकम्। तत्कथमेवमुच्यत इत्यत आह—**ब्रह्मेति**। तथाचान्योन्याश्रय इति भावः। अन्यत्रेति पश्वादिशरीरं व्युदस्तमिति हृदयम्। एतेनात्र वाक्यभेदः कार्य इति सूचितम्। शरीरविमोक्षणपर्यंतं न सक्तदिति कश्चित्। तदसत् तथासत्याशरीरविमोक्षणादिति स्यात्। इहैवेति च व्यर्थम् ॥ २३ ॥

**रा० भा०**—शरीरविमोक्षणात्प्रागिहैव साधनानुष्ठानदशायामेवात्मानुभवप्रीत्या कामक्रोधभवं वेगं सोढुं निरोद्धुं यः शक्नोति स युक्तः आत्मानुभवायार्हः शरीरमोक्षणोत्तरकालमात्मानुभवसुखं संपत्स्यते ॥ २३ ॥

**अ० टी०**—तस्माल्लौकिकभोगत्याग एव तत्संबन्धप्रापक इत्याह—शक्नोतीति। यः शरीरविमोक्षणात् प्राक् अलौकिकदेहाप्तिकालात् पूर्वं कामक्रोधोद्भवं वेगं कामोद्भवं स्वेच्छाजनितरसभावाभावजं क्रोधो-

द्भवमन्येषु तदिच्छापूर्तिदर्शनक्षोभजं सोढुं शक्नोति स इहैव अस्मिन्नेव शरीरे युक्तो भावात्मरूपयुक्तः स सुखी नरः मद्भक्तः स्यादित्यर्थः ॥ २३ ॥

**नी० टी०**—कः पुनर्मुख्यः सुखीत्याह—**शक्नोतीति**। इहैव जीवत्येव देहे प्राक् शरीरविमोक्षणात् यावद्देहपातं मया कामक्रोधौ जिताविति विस्रंभो न कर्त्तव्य इत्यर्थः। श्रुते दृष्टे अनुमिते वा विषये यो गर्द्धस्तृष्णारूपोऽतृप्तिश्च स कामः। क्रोधस्तादृशे एव विषये द्वेषस्तौ कामक्रोधौ उद्भवो यस्य वेगस्य सरोमांचहृष्टनेत्रवक्त्रलिंगोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः। गात्रप्रकंपप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रादिलिंगः क्रोधोद्भवो वेगस्तं कामक्रोधोद्भवं वेगं सोढुं यः शक्नोति स एव युक्तो योगी मुख्यः सुखी च नान्यः॥२३॥

**योऽन्तः सुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः ॥**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥**

**शां० भा०**—कथंभूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह—योऽन्तःसुखोऽन्तरात्मनि सुखं यस्य सोऽन्तःसुखस्तथाऽन्तरेवाऽऽत्मन्याराम आक्रीडा यस्य सोऽन्तरारामस्तथैवान्तरात्मैव ज्योतिः प्रकाशो यस्य सोऽन्तर्ज्योतिरेव। य ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षमिह जीवन्नेव ब्रह्मभूतः सन्नधिगच्छति प्राप्नोति ॥ २४ ॥

**शां० आ०**—ज्ञानस्यात्यन्तमन्तरङ्गमात्ममात्रनिरतत्वं दर्शयन्प्रकृतं ब्रह्मविदमेव विशिनष्टि—**कथंभूतश्चेति**। यथाऽन्तरेव सुखं न बाह्यैर्विषयैस्तथाऽन्तरेव ज्योतिर्न श्रोत्रादिभिरतो विषयान्तरविज्ञानरहित इत्याह—**तथेति**। यथोक्तविशेषणसमाधिमाञ्जीवन्नेव मुक्तिमधिगच्छतीत्याह—**स योगीति**। आत्मन्यन्तः सुखमिति बाह्यविषयनिरपेक्षत्वं विवक्षितमन्तरारामत्वं च स्त्र्यादिविषयापेक्षामन्तरेण क्रीडाप्रयुक्तफलभाक्त्वमभिमतमिन्द्रियादिजन्यप्रकाशशून्यत्वमात्मज्योतिष्ट्वमिष्टम्। यथोक्तविशेषणसंपन्नः समाहितश्च जीवन्नेव ब्रह्मभावं प्राप्नोति ब्रह्मणि परिपूर्णं निर्वृतिं सर्वानर्थनिवृत्त्युपलक्षितां स्थितिमनतिशयानन्दाविर्भावलक्षणां प्राप्नोतीत्याह—**य ईदृश इति** ॥ २४ ॥

**आ० भा०**—ज्ञानिलक्षणं प्रपंचयत्युत्तरैः श्लोकैः। आरामः परदर्शनादिनिमित्तं सुखम्। अत्र तु परमात्मदर्शनादिनिमित्तं तत् सुखं तूपद्रवक्षये व्यक्तम्। अत्र तु कामादिक्षये व्यक्तमात्मनः सुखम्। स्वयं ज्योतिष्ट्वाद्भगवतः। तद्व्यक्तेरंतर्ज्योतिः। सर्वेषामंतर्ज्योतिष्ट्वेऽपि व्यक्तेर्विशेषः। असंप्रज्ञातसमाधीनां बाह्यादर्शनात्। दर्शनेऽप्यकिंचित्करत्वादेवशब्दः। उक्तंचैतत्। 'दर्शनस्पर्शसंभाषाद्यत्सुखं जायते नृणाम् ॥ आरामः स तु विज्ञेयः सुखं कामक्षयोदितम्' इति नारदीये। 'स्वज्योतिष्ट्वान्महाविष्णोरंतर्ज्योतिस्तु तत्स्थितः' इति च अंतःसुखत्वादेः कारणमाह—ब्रह्मणि भूत इति ॥ २४ ॥

**आ० ज०**—ननु योगिनो ब्रह्माधिगतिः प्राक् उक्ता तत्किं पुनरुच्यत इत्यत आह—**ज्ञानीति**। द्वितीये कथितत्वात् प्रपंचयतीत्युक्तम्। यथा योगस्याधिक्यकथनं योगनिरूपणमेव। संन्यासार्थे निंदास्तुती च संन्यासनिरूपणमेव तथाज्ञानिलक्षणकथनं च ज्ञाननिरूपणमिति। आरामशब्दार्थं तावदाह—**आराम इति**। इदानीमंतरारामशब्दलब्धमर्थमाह—**अत्र त्विति**। तत्सुखं एवं तर्ह्यंतःसुख इत्यनेनैव गतार्थमेतदित्याशंक्य सुखशब्दस्य तावदर्थभेदमाह—**सुखं त्विति**। व्यक्तमात्मसुखमिति संबंधः। तर्ह्यंतःसुख इति कथमित्यतस्तल्लब्धार्थमाह—**अत्र त्विति**। अनेनारामसुखशब्दार्थांतर्गतयोः परोपद्रवक्षययोरंतरित्येतत्। सामर्थ्याद्विशेषणमित्युक्तं भवति। ज्योतिःशब्दार्थं तावदाह—**स्वयमिति**। ज्योतिष्ट्वमिति शेषः। यद्यपि ज्योतिःशब्दः प्रकाशमात्रे प्रवर्तते। तथाऽपि भगवत एव परानपेक्ष्य प्रकाशत्वात् मुख्ये च संप्रत्ययात् स एव ज्योतिरित्यर्थः। इदानीमंतर्ज्योतिःशब्दार्थमाह—**तद्व्यक्तेरिति**। तस्य भगवतोंऽतर्हृदये व्यक्तेरित्यर्थः। नन्वंतर्ज्योतिर्यस्यासावंतर्ज्योतिः। व्यक्तेरिति तु कथं लभ्यत इत्यत आह—**सर्वेषामिति**। शब्दतः प्राप्तमंतर्ज्योतिष्ट्वं सर्वसाधारणम्। अत्र तु ज्ञानिनो विशेषणत्वेनोच्यते। तत्सा-

मर्थ्यादिदं लब्धमिति भावः। यद्वा तद्व्यक्तेरित्यध्याहारेण तात्पर्यमुक्तम्। अध्याहारस्येदानीं प्रयोजनमुच्यते। नन्वेवशब्दो यदि धर्मांतरानिवृत्त्यर्थः तदांऽतःसुखमित्यादिव्याहतम्। अथ वस्त्वंतरदर्शननिवृत्त्यर्थः। तदाऽसंभवित्वमित्यत आह—**असंप्रज्ञातेति**। बाह्यभगवतोन्यत्। दर्शनेप्यन्यदेतिशेषः। अकिंचित्कराद्विक्षेपकरणाभावादित्यर्थः। एवशब्दः संभवदर्थइतिशेषः। एतेन लक्ष्यमेवेदं कथं लक्षणत्वेनोच्यत इति परिहृतम्। व्यवच्छेदप्रधानत्वात्। एवशब्दस्य सामर्थ्याज्ज्योतिषा संबंधइति। आरामसुखशब्दयोरुक्तार्थत्वं कुत इत्यत आह—**उक्तंचेति**। न केवलं पुनरुक्तिबलादितिचार्थः। द्वंद्वैकत्वादेकवचनम्। कामेत्युपद्रवोपलक्षणं उदितं व्यक्तम्। अंतर्ज्योतिरित्यस्योक्तार्थत्वे प्रमाणमाह—**स्वेति**। स स्थितो यस्मिन्निति तत्स्थितः। अंतरेव ज्योतिर्दर्शनं यस्येत्येवं व्याख्यानेऽपि यद्यप्युक्तार्थो लभ्यते। तथाप्यार्थिकाच्छाब्दं वरमित्येवं व्याख्यातम्। ब्रह्मैव भूत इत्यन्यथाप्रतीतिनिरासाय ब्रह्मभूतशब्दस्य विग्रहं दर्शयन् प्रकृतसंगतिमाह—**अंतरिति**। ब्रह्मणि भूत इत्येवं विग्रहो न तु ब्रह्मैव भूत इति। प्रमाणविरोधात्। ननु ब्रह्मणि भूतत्वं साधकधर्मः। तत्कथं ज्ञानिलक्षणत्वेनोच्यते। मैवं यतोंऽतःसुखत्वादेः कारणत्वेनोच्यते नन्वेवं सत्यर्थादिदं ज्ञानसाधनत्वेनोच्यते। तच्च तद्बुद्धयइत्यनेनैवोक्तम्। सत्यम्। तद्बुद्धित्वादिकं ब्रह्मणि भूतत्वं यस्य कारणं तद्वानेवं लक्षणक इत्येवं संगतिसूचनार्थोऽयमनुवाद इति भावः। एवं चाधिगच्छतीत्यस्य जानातीत्यर्थो ज्ञातव्यः॥ २४॥

**रा० भा०—यो बाह्यविषयानुभवं सर्वं विहायान्तःसुखः आत्मानुभवैकसुखः अन्तरारामः आत्मैकाधीनः स्वगुणैरात्मैव सुखवर्धको यस्य स तथोक्तः तथान्तर्ज्योतिरात्मैकज्ञानो यो वर्तते स ब्रह्मभूतो योगी ब्रह्मनिर्वाणमात्मानुभवसुखं प्राप्नोति॥ २४॥**

**अ० टी०—ननु सुखावलम्बनाभावे कथं बाह्यदुःखसहनं न स्यादित्याशङ्क्याह—योन्तःसुखइति।** योऽन्तःसुखः भावात्मकस्वरूपसुखवान् अन्तरारामः। अन्तरेव भावात्मकस्वरूप एव भगवद्रमणकारणवान् तथा अन्तर्ज्योतिः संयोगरससुखसमत्वेनैव वियोगतासुखानुभववान्। स योगी मत्संयोगरसयुक्तो भूत्वा ब्रह्मभूतः अलौकिकस्वरूपः सन् ब्रह्मनिर्वाणं ब्रह्मवत् भगवन्निर्वाणं लयं लीलात्मकताम् अधिगच्छति प्राप्नोतीत्यर्थः॥ २४॥

**नी० टी०—कोऽसौ योगी यो मुख्यः सुखीत्युक्तं तत्राह—य इति।** सुखं विषयसंगजा प्रीतिः। आरामः प्रीतिहेतुः स्त्र्यादिभिः सह क्रीडा। ज्योतिः क्रीडोपकरणानां प्रकाशः। तदेतत्त्रयं यस्यांतरेव सोन्तःसुखोंतरारामोऽन्तर्ज्योतिश्च न त्विंद्रियद्वारकमिति एवशब्दार्थः। य एवंभूतः स योगी किमतो यद्येवं ब्रह्मनिर्वाणं गत्य प्राप्य परमानंदं ब्रह्म इहैवाधिगच्छति यतो ब्रह्मभूतो जीवन्नेव ब्रह्मदर्शने ब्रह्मभावं गतः॥ २४॥

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः॥**
**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः॥ २५॥**

**शां० भा०—किंच—लभन्ते ब्रह्मनिर्वाणं मोक्षमृषयः सम्यग्दर्शिनः संन्यासिनः क्षीणकल्मषाः क्षीणपापादिदोषाश्छिन्नद्वैधाश्छिन्नसंशया यतात्मानः संयतेन्द्रियाः सर्वभूतहिते रताः सर्वेषां भूतानां हित आनुकूल्ये रता अहिंसका इत्यर्थः॥ २५॥**

**शां० आ०—**मुक्तिहेतोर्ज्ञानस्य साधनान्तरमाह—**किंचेति**। यज्ञादिनित्यकर्मानुष्ठानात्पापादिलक्षणं कल्मषं क्षीयते ततश्च श्रवणाद्यावृत्तेः सम्यग्दर्शनं जायते ततो मुक्तिरप्रयत्नेन भवतीत्याह—**लभन्त इति**। ज्ञानप्राप्त्युपायान्तरं दर्शयति—**छिन्नेति**। श्रवणादिना संशयनिरसनं कार्यकरणनियमनं च दयालुत्वेनाहिंसकत्वमित्येतदपि सम्यग्ज्ञानप्राप्तौ कारणमित्यर्थः। अक्षरव्याख्यानं स्पष्टत्वान्न व्याख्यायते॥ २५॥

**आ० भा०—पापक्षयाच्चैतद्भवतीत्याह—लभंत इति। क्षीणकल्मषा भूत्वा छिन्नद्वैधायतात्मानः। द्वेधा भावो द्वैधम्। संशयो विपर्ययो वा। तच्चोक्तम्। 'विपर्ययः संशयो वा यद्वैधं त्वकृतात्मनाम्।**

ज्ञानासिना तु तच्छित्त्वा मुक्तसंगः परिव्रजेत्'इति च । छिन्नद्वैधास्त एवायतात्मानः दीर्घमनसः । सर्वज्ञा इत्यर्थः । तत एव छिन्नद्वैधाः । तच्चोक्तम् । 'क्षीणपापा महाज्ञाना जायंते गतसंशयाः' इति । छिन्नद्वैधा यतात्मान इति वा ॥ २५ ॥

आ० ज०—उत्तरश्लोके ज्ञानिनो ब्रह्मप्राप्तिः पुनः किमर्थमुच्यत इत्यत आह—**पापेति** । ब्रह्मभूतत्वेन सहास्य समुच्चयार्थश्चशब्दः एतदुक्तलक्षणं ज्ञानम् । अतो लभंत इत्यस्योपलभंत इत्यर्थः । कथं तर्हि ज्ञानिलक्षणप्रपंचार्थत्वं श्लोकत्रयस्योक्तमिति । उच्यते । ज्ञानप्रतिबंधकपापक्षयाख्यमसाधारणं कारणं कार्यस्य लक्षणं भवत्येवेति । अत्र कार्यकारणभावो न प्रतीयत इत्यत आह—**क्षीणेति** । भवंति ततो ब्रह्मोपलभंत इत्यर्थः । छिन्नद्वैधशब्दार्थं ज्ञापयन् द्वैधशब्दं व्याचष्टे—**द्वैधेति** । विषयापेक्षयाऽन्यप्रकारत्वमयथार्थत्वमिति यावत् । तेन च तद्वज्ज्ञानमुपलक्ष्यत इति भावेनाह—**संशय इति** । वाशब्दश्चार्थे । अत्रैव प्रमाणमाह—**तच्चेति** । अकृतात्मनामशुद्धबुद्धीनां छिन्नेत्यादेः समासत्वमभिप्रेत्य विग्रहमाह—**छिन्नेति** । आयतशब्दस्य आत्मशब्दस्य चानेकार्थत्वात् आयतात्मनइत्येतद्व्याचष्टे—**दीर्घेति** । अणुनो मनसः कथं दीर्घत्वमित्यत आह—**सर्वज्ञा इति** । बहुविषयत्वमुपलक्ष्यत इति भावः । श्रवणादिना विदितवेद्या इत्यर्थः । समासेनोक्तयोरप्यर्थयोर्बुद्ध्या विविक्तयोर्हेतुहेतुमद्भावोऽस्तीति भावेनाह—**तत एवेति** । अयतात्मत्वादेव क्षीणकल्मषत्वायतात्मत्वछिन्नद्वैधत्वानां हेतुहेतुमद्भावे प्रमाणमाह—**तच्चेति** । व्यस्ते वैते पदे इत्याह—**छिन्नेति** । नियतमनस इत्यर्थः ॥ २५ ॥

रा० भा०—छिन्नद्वैधाः शीतोष्णादिद्वन्द्वैर्विमुक्ताः यतात्मानः आत्मन्येव नियमितमनसः सर्वभूतहिते रताः आत्मवत्सर्वेषां भूतानां हितेषु निरताः ऋषयः द्रष्टारः आत्मावलोकनपराः ये एवंभूतास्ते क्षीणाशेषात्मप्राप्तिविरोधिकल्मषाः ब्रह्मनिर्वाणं लभन्ते ॥ २५ ॥

अ० टी०—ननु लीलात्मकता ऋषीणामपि दुर्लभा कथं केवलभाववतामेव सिद्ध्येदित्यत आह—**लभन्त इति** । क्षीणकल्मषा भगवल्लीलानुभवफलेतरफलानभिलाषिणऋषयः फलदर्शिनोऽग्निकुमारादितुल्यः । ब्रह्मनिर्वाणं लीलात्मकत्वं लभन्ते । कीदृशाः । छिन्नद्वैधाश्छिन्नसंशया एतत्फलेतरफलाज्ञानिनः । पुनः कीदृशाः । यतात्मानः केवलं भगवदर्थैकनिष्ठात्मवन्तः । पुनः कीदृशाः । सर्वभूतहिते भगवति रता अनुरागिणो ये ते लीलात्मकतां प्राप्नुवन्तीत्यर्थः । यद्वा भिन्नतया सर्व एव लभन्ते ऋषयः । तत्र निदर्शनमग्निकुमाराः । छिन्नद्वैधाः श्रुतयो गोपीरूपाः । यतात्मानो वृन्दावने पक्ष्यादिरूपा मुनयः । सर्वभूतहिते रताः पुलिन्द्यः । एवं भाववन्तः सर्वेऽपि लभन्त इति भावः ॥ २५ ॥

नी० टी०—लभंत इति । ऋषयः सम्यग्दर्शिनः छिन्नद्वैधाश्छिन्नसंशयाः यतात्मानो जितचित्ताः ॥२५॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ॥
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

शां० भा०—किंच—कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां वियुक्तानां यतीनां संन्यासिनां यतचेतसां संयतान्तःकरणानामभित उभयतो जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते, विदितात्मनां विदितो ज्ञात आत्मा येषां ते विदितात्मानस्तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः ॥ २६ ॥

शां० आ०—पूर्वं कामक्रोधयोर्वेगः सोढव्यो दर्शितः संप्रति तावेव त्याज्यावित्याह—**किंचेति** । ननु दर्शितविशेषणवतां मृतानामेव मोक्षो न तु जीवतामिति चेन्नेत्याह—**अभित इति** । अस्मदादीनामपि तर्हि प्रभूतकामादिप्रभावविधुराणां किमिति मोक्षो न भवतीत्याशङ्क्य सम्यग्दर्शनवैशेष्याभावादित्याह—**विदितेति** । उक्तेऽर्थे श्लोकाक्षराणामन्वयमाचष्टे—**कामक्रोधेत्यादिना** ॥ २६ ॥

**आ० भा०**—सुलभं च तेषां ब्रह्मेत्याह—**कामक्रोधेति**। अभितः सर्वतः ॥ २६ ॥

**आ० ज०**—यतीनां सर्वं ब्रह्मतयैव प्रतीयत इत्यन्यथाप्रतीतिनिरासायाह—**सुलभं चेति**। न केवलं उक्तलक्षणा इति चार्थः। इदं चासाधारणधर्मत्वात् ज्ञानिलक्षणं भवत्येव। सौलभ्यवाचि किमप्यत्र न प्रतीयत इत्यतस्तदुपादाय व्याचष्टे—**अभित इति**। सर्वदेशकालेष्वित्यर्थः ॥ २६ ॥

**रा० भा०**—उक्तगुणानां ब्रह्मात्यन्तसुलभमित्याह। कामक्रोधवियुक्तानां यतीनां यतनशीलानां यतचेतसां नियमितमनसां विजितात्मनां विजितमनसां ब्रह्मनिर्वाणमभितो वर्तते एवंभूतानां हस्तस्थं ब्रह्मनिर्वाणमित्यर्थः ॥ २६ ॥

**अ० टी०**—किं च कामक्रोधवियुक्तानां पूर्वोक्तप्रकारेण कामक्रोधरहितानां यतीनां परमहंसानां भगवदर्थं सर्वपरित्यागेन स्थितानां वृन्दावनीयवृक्षादिवत् यतचेतसां भगवत्स्वरूपानुभवैकपरचित्तानां विदितात्मनां भगवत्स्वरूपज्ञानिनाम् अभितः सर्वजन्मसु सर्वदिक्षु वा ब्रह्मनिर्वाणं लीलात्मकत्वं वर्त्तते अनुवर्तत इत्यर्थः। यथा वृन्दावने वृक्षेषु तन्मूलेषु परितश्च क्रीडति तथेतिभावः ॥ २६ ॥

**नी० टी०**—किंच—**कामेति**। अभितो जीवतां मृतानां च विदितात्मनां ज्ञातात्मतत्वानाम् ॥२६॥

**स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ॥**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥**

**शां० भा०**—सम्यग्दर्शननिष्ठानां संन्यासिनां सद्योमुक्तिरुक्ता कर्मयोगश्चेश्वरार्पितसर्वभावेनेश्वरे ब्रह्मण्याधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षायेति भगवान्पदे पदेऽब्रवीद्वक्ष्यति च। अथेदानीं ध्यानयोगं सम्यग्दर्शनस्यान्तरङ्गं विस्तरेण वक्ष्यामीति तस्य सूत्रस्थानीयाञ्श्लोकानुपदिशति स्म—स्पर्शाञ्शब्दादीन्कृत्वा बहिर्बाह्याञ्श्रोत्रादिद्वारेणान्तर्बुद्धौ प्रवेशिताः शब्दादयो विषयास्तानचिन्तयतो बाह्या बहिरेव कृता भवन्ति। तानेवं बहिः कृत्वा चक्षुश्चैवान्तरे भ्रुवोः, कृत्वेत्यनुषज्यते। तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा ॥ २७ ॥

**शां० आ०**—वृत्तमनूद्योत्तरश्लोकत्रयस्य तात्पर्यार्थमाह—**सम्यग्दर्शनेति**। **ईश्वरार्पितसर्वभावेनेति**। भगवति परस्मिन्नीश्वरे समर्पितः सर्वेषां देहेन्द्रियमनसां भावश्चेष्टाविशेषो न क्वचिदपि बहिस्तेषां व्यापारस्तेनेत्यर्थः। कर्मयोगस्य तत्फलस्य चाभिधानानन्तरमित्यथशब्दार्थः। स्वतो बाह्यानां विषयाणां कुतो बहिष्करणमित्याशङ्क्याऽऽह—**श्रोत्रादीति**। तेषां बहिष्करणं कीदृगित्याशङ्क्याऽऽह—**तानिति** ॥ २७ ॥

**आ० भा०**—ध्यानप्रकारमाह—**स्पर्शानित्यादिना**। बाह्यान्स्पर्शान्बहिः कृत्वा श्रोत्रादीनि योगेन नियम्येत्यर्थः। चक्षुर्भ्रुवोरंतरं कृत्वा भ्रुवोर्मध्यमवलोकयन्नित्यर्थः। उक्तं च 'नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधापयेत्' इति। प्राणापानौ समौ कृत्वा कुंभके स्थित्वेत्यर्थः ॥ २७ ॥

**आ० ज०**—ध्यायिनां मुक्तत्वं साक्षाच्चेत्प्रमाणविरोधः। ज्ञानद्वारा चेत्पुनरुक्तिरित्यतः श्लोकद्वयतात्पर्यमाह—**ध्यानेति**। मुक्त एव स इति स्तुतिरिति भावः। पदानां व्यवहितत्वादन्वयमाह—**बाह्यानिति**। स्पृश्यंत इति स्पर्शाः शब्दाद्याः। स्पर्शाः बाह्या एव तेषां किं बहिष्करणमित्यत आह—**श्रोत्रादीनीति**। योगेन प्रत्याहारेण श्रोत्रादीनामनियमे पटुभ्यासादरप्रत्ययवशाच्छब्दाद्या अंतरा इव भवंति। तन्नियमे तु बाह्या बहिष्कृताः स्युरिति भावः। कृत्वेत्यस्यानुवृत्त्या योजयति—**चक्षुरिति**। दुर्घटमेतदित्यत आह—**भ्रुवोरिति**। चक्षुर्वृत्तौ चक्षुःशब्द इत्यर्थः। संप्रेक्ष्य नासिकाग्रं स्वमिति वक्ष्यमाणविरोध इत्यत आह—**उक्तं चेति**। न्यूनाधिकभावराहित्यं समीकरणमित्यन्यथाप्रतीतिनिरासयानूद्य व्याचष्टे—**प्राणेति**। कुंभके प्राणायामे ततश्च समौ निर्विकारौ निश्चलावित्यर्थः। इतरत्समीकरणं कुंभकार्थमेवेति भावः ॥ २७ ॥

**रा० भा०—उक्तं कर्मयोगं स्वलक्ष्यभूतयोगशिरस्कमुपसंहरति । बाह्यान्विषयस्पर्शान्बहिः कृत्वा बाह्येन्द्रियव्यापारं सर्वमुपसंहृत्य योगयोग्यासने ऋजुकाय उपविश्य चक्षुर्भ्रुवोरन्तरे नासाग्रे विन्यस्य नासाभ्यन्तरचारिणौ प्राणापानौ समौ कृत्वा उच्छ्वासनिश्वासौ समगती कृत्वा ॥ २७ ॥**

**अ० टी०**—ननु स्पर्शभावरूपा स्थितिरतिकठिना अतः स्पर्शसंयोगेऽपि या प्राप्तिः स्यात् स्पर्शजबन्धाभावे न तथा भवेदित्यभिप्रायेणाह—**स्पर्शानिति द्वयेन ।** बहिर्बाह्यान् स्पर्शान् कृत्वा बाह्याँल्लौकिकान् स्पर्शानिन्द्रियादिविषयभोगान् बहिः तेषूत्तमाद्यभावेन प्रारब्धकर्मभोगवत् । किंच पुनर्भ्रुवोः कालयमरूपयोरन्तरैव चक्षुः दृष्टिं कृत्वा कालयममध्ये मरणरूपोऽस्मीति दृष्ट्वा नासाभ्यन्तरचारिणौ प्राणापानावूर्ध्वाधोगतिरूपौ संयोगविप्रयोगसुखानुभवाविव समौ कृत्वा ॥ २७ ॥

**नी० टी०**—एवं सम्यग्दर्शननिष्ठानां सद्यो मुक्तिरुक्ता । कर्मयोगश्च संगफलत्यागेन ईश्वरप्रीत्यर्थमनुष्ठितः सत्वशुद्धिज्ञानप्राप्तिद्वारेण मोक्षाय भवतीत्यप्युक्तं । अथेदानीं सम्यग्दर्शनस्यांतरंगसाधनं ध्यानयोगं विस्तरेण वक्ष्यामीति तत्सूत्रभूतांस्त्रीन् श्लोकानुपदिशति—**स्पर्शानिति ।** अत्रोत्तरार्धेन प्राणायाम उक्तः । स्पर्शान् कृत्वा बहिर्बाह्यानिति प्रत्याहार उक्तः । भ्रुवोरंतरे चक्षुः कृत्वेति धारणा उक्ता । विगतेच्छाभयक्रोध इति साधनभूताः फलभूताश्च द्विविधा यमा नियमाश्चोक्ताः । यतेंद्रिय इति वितर्काख्यः संप्रज्ञातः । यतमान इति विचाराख्यः । यतबुद्धिरित्यानंदास्मिताख्यौ । मोक्षपरायण इत्यसंप्रज्ञात उक्तः । शेषेण योगफलमिति विभागः । पाठक्रममननुरुध्यार्थक्रमेणाक्षरार्थः स्पष्टीक्रियते । तत्र विगतेच्छो विगतभयो विगतक्रोध इति संबंधः । यो हि इच्छावान् स इष्टसिद्ध्यर्थं हिंसानृतस्तेयस्त्रीपरिग्रहानिच्छेदतो विगतेच्छपदेन तद्विपर्यया न हिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा इति सूत्रोक्तान्यमान् लक्षयति । तथा भयं स्वोच्छेदशंका तया ह्युद्विग्नो न शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति सूत्रोक्तान्नियमान् स्वीकर्तुमिच्छेदतो विगतभय इत्यनेन तेषां ग्रहणं । तथा क्रोधाक्रांतो मैत्र्यादीन् भावयितुमशक्तश्चित्तप्रसाधनं कर्तुं न शक्नोति । तच्च "मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसाधनम्" इति सूत्रितं । तत्र विगतक्रोधः शांतप्रकृतित्वात्सुखितेषु मैत्रीं परस्येष्टेन ममैवेष्टमिदं जातमिति भावयेत् । तथा दुःखितेषु करुणां पुण्यवत्सु मुदितः पापवत्सूपेक्षां च भावयेत् । न चैतेन प्रसाधनेन विना चित्तादर्शस्य नैर्मल्यं भवति । एवं साधनावस्थायां यमनियमचित्तप्रसाधनानां सिद्ध्यर्थं विगतेच्छाभयक्रोधत्वमीप्सितं । एवं फलावस्थायामपि तदीप्सितं । तथाहि । संप्रज्ञातसमाधिफलभूतायां मधुमत्यां योगभूमौ स्थितं योगिनं प्रति दिव्याः कामा उपतिष्ठंते तत्रापि विगतेच्छत्वमिष्टं । तथा हि "स्थान्युपनिमंत्रणे संगस्मयाकरणं पुनरनिष्टप्रसंगात्" इति सूत्रं । स्थानिनो देवास्तैरुपनिमंत्रणे इहास्यतां इमे रम्यावसथा इमा रम्या रामा इमानि जरामरणहराणि रसायनानि इमे वयं किंकराः स्वपुण्यार्जितमिदं स्थानं त्वया भुज्यतामिति प्रार्थनायां क्रियमाणायां संगो लिप्सा तत्र न कर्त्तव्या । नापि तल्लाभेनात्मनो महाभागत्वं देवप्रार्थ्यत्वं मत्वा गर्वोऽपि कर्त्तव्यस्तयोः संगस्मययोर्भ्रंशहेतुत्वादिति सूत्रार्थः । तथा भयमपि द्विविधं योगांतरायजं वितर्कजं च तत्राद्यं । "व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रांतिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेंऽतरायाः । दुःखदौर्मनस्यांगमेजयत्वश्वासप्रश्वासाविक्षेपसहभुवः" इति सूत्राभ्यामुक्तं । स्त्यानमकर्मण्यता । अविरतिरवैराग्यं । अंगमेजयत्वं कंपवायुः । वितर्काहिंसादयस्तज्जं च भयं । आद्यस्य निवारणमीश्वरप्रणिधानेन तथा च सूत्रितं । "ततः प्रत्यक्चेतनाधिगमोऽतरायाभावश्च" इति तत ईश्वरप्रणिधानात् । द्वितीयस्य

प्रतिपक्षभावनेन। तथाच सूत्रितं। "वितर्कबाधने प्रतिपक्षभावनम्" इति "वितर्का हिंसादयः कृतकारितानुमोदितालोभक्रोधमोहमूला मृदुमध्याधिमात्रा दुःखाज्ञानानंतफला इति प्रतिपक्षभावनम्" इति च आदिपदादनृतस्तेयादयः। हिंसादयः प्रत्येकं कृतकारितानुमोदितभेदेन त्रिविधाः। तेऽपि प्रत्येकं लोभादिमूलकत्वेन त्रिविधाः। तेऽपि मृदुमध्यमाधिमात्रभेदेन प्रत्येकं त्रिविधाः। ते च मूलभूता वितर्कास्त्रयश्चत्वारः पंच अधिका वा त्रिस्त्रिगुणिता एकाशीतिरष्टोत्तरशतं पंचत्रिंशदधिकं शतं अधिका वा भवंति। शाखाप्रशाखभेदेनानंताश्च। दुःखरूपं अज्ञानरूपं च अनंतफलं येषां ते दुःखाज्ञानानंतफला इत्यनया प्रतिपक्षभावनया ते निवर्त्तनीया इति। एवं यमनियमचित्तप्रसाधनप्रतिपक्षभावनैर्निरंतरायं मृदूकृतचित्तो योगी विविक्ते देशे आसीनः संभवादिति न्यायेन स्थिरसुखमासनमध्यासीत। तत्र देशासने श्रूयेते। 'समे शुचौ शर्करवह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः॥ मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत्॥ त्रिरुन्नतं स्थाप्य समं शरीरं हृदींद्रियाणि मनसा संनिरुध्य॥ ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि' इति। चक्षुरित्यत्र विसर्गलोपश्छांदसः। त्रिरुन्नतं कटिवक्षःकंधराप्रदेशेषून्नतं। ततो जितासनः प्राणायाममभ्यसेत्। तेन हि मंदगतौ प्राणे सति तदनुसारि मनोऽपि चांचल्यं त्यजति। नोचेद्वायुविक्षेपेण विक्षिप्यते तत्र प्राणजयप्रमाणं। "प्राणान् प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत" इति श्रुत्युक्तमेव संगृह्णाति। 'प्राणापानौ समौ कृत्वा नासाभ्यंतरचारिणौ' इति। प्राणापानौ समौ तुल्यौ ऊर्ध्वाधोगतिविच्छेदेन नासाभ्यंतरचारिणौ कुंभकेन कृत्वा ततो बाह्यान् बहिर्भवान् स्पर्शान् विषयसंबंधान् इंद्रियद्वारा नित्यं अंतर्बुद्धौ क्रियमाणान् योगींद्रियाणां प्रत्याहरणेन तान् बहिरेव कुर्यात्। ततो विषयेभ्यो व्यावृत्तेषु करणेषु स्वप्नकाले इवांतर्मनोमात्रेणावतिष्ठते इत्यर्थः। इमं प्रत्याहारं कर्त्तुमशक्तस्याविरक्तस्य का गतिरित्यत आह—चक्षुश्चैवांतरे भ्रुवोरिति। चशब्दो वाऽर्थे चक्षुरेव वा भ्रुवोरंतरे कुर्यात् खेचरीं मुद्रामभ्यसेदित्यर्थः। साचोक्ता योगसारे। 'लंबिकोर्ध्वस्थिते गर्त्ते जिह्वां व्यावृत्त्य धारयेत्॥ दृढासनश्चिरं तिष्ठेन्मुद्रैषा खेचरी मता॥ भ्रूमध्यदृष्टिरप्येषा महादेवेन कीर्तिता' इति। य एवं सर्वोऽपि बाह्ये विषये सूर्यादौ संयमो यथोक्तं प्रत्याहारमनुष्ठातुमशक्तान् प्रत्येवोपदिश्यत इति ज्ञेयम्॥ २७॥

**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः॥**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः॥ २८॥**

**शां० भा०—यतेन्द्रिय इति। यतेन्द्रियमनोबुद्धिर्यतानि संयतानीन्द्रियाणि मनो बुद्धिश्च यस्य स यतेन्द्रियमनोबुद्धिर्मननान्मुनिः संन्यासी मोक्षपरायण एवं देहसंस्थानो मोक्षपरायणो मोक्ष एव परमयनं परा गतिर्यस्य सोऽयं मोक्षपरायणो मुनिर्भवेत्। विगतेच्छाभयक्रोध इच्छा च भयं च क्रोधश्चेच्छाभयक्रोधास्ते विगता यस्मात्स विगतेच्छाभयक्रोधः। य एवं वर्तते सदा संन्यासी मुक्त एव स न तस्य मोक्षोऽन्यः कर्तव्योऽस्ति॥ २८॥**

**शां० आ०**—विषयप्रावण्यं परित्यज्य चक्षुरपि भ्रुवोर्मध्ये विक्षेपपरिहारार्थं कृत्वा प्राणापानौ च नासाभ्यन्तरचरणशीलौ समौ न्यूनाधिकवर्जितौ कुम्भकेन निरुद्धौ कृत्वा करणानि सर्वाण्येवं संयम्य प्राणायामपरो भूत्वा किं कुर्यादित्यपेक्षायामाह—**यतेन्द्रियेति**। इन्द्रियादिसंयमं कृत्वा मोक्षमेवापेक्षमाणो मननशीलः स्यादित्यर्थः। ज्ञानातिशयनिष्ठस्य सर्वेदेच्छादिशून्यस्य संन्यासिनो मुक्तेरनायाससिद्धत्वान्न तस्य किंचिदपि कर्तव्यमस्तीत्याह—**विगतेति**। पूर्वार्धाक्षराणि व्याकरोति—**यतेत्यादिना**। द्वितीयार्धाक्षराणि व्याचष्टे—**विगतेत्यादिना**॥ २८॥

**आ० भा०—॥ २८ ॥**

आ० ज०—॥ २८ ॥

**रा० भा०—आत्मावलोकनादन्यत्र प्रवृत्त्यनर्हेन्द्रियमनोबुद्धिः तत एव विगतेच्छाभयक्रोधो मोक्षपरायणो मोक्षैकप्रयोजनो मुनिरात्मावलोकनशीलो यः सदा मुक्त एव साध्यदशायामिव साधनदशायामपि मुक्त एव स इत्यर्थः ॥ २८ ॥**

अ० टी०—मोक्षपरायणः विषयादित्यागपरो विगतेच्छाभयक्रोधो भूत्वा यतेन्द्रियमनोबुद्धिः सन् यः सदा मुनिः मननशीलो भवति स स्पर्शादिभिर्मुक्त एव स्यादित्यर्थः ॥ २८ ॥

**नी० टी०—यतेंद्रियेति** । यस्मिन् कस्मिंश्चित्स्थूले विषये सूर्ये तद्रश्मिषु वा विष्णुप्रतिमायां वाऽनाहतध्वनौ वाऽन्यत्र वा चक्षुराद्यन्यतमद्वारा मनो धारयेत् । तच्च मनस्तद्विषयाकारतां प्राप्तं तत्रैव स्थिराभ्यासेन विश्रांतं स्वदेहमपि न पश्यति सेयं महाविदेहा नाम धारणा । अस्यां सिद्धायामिंद्रियगणः स्वं स्वं विषयं न तु गृह्णाति सोऽयं बहिर्विषयप्रत्याहारः । पूर्वोक्तस्त्वांतर इति भेदः । अत एव तयोस्तुल्यफलत्वं सूत्रितं । ततः क्षीयते प्रकाशावरणमिति । ततः अभ्यंतरप्रत्याहारात् तथा बहिरकल्पिता वृत्तिर्महाविदेहा तत्संयमात्प्रकाशावरणक्षय इति । यदा चित्तं देहमविस्मृत्यैव हठेन पुरः स्थितमूर्त्याद्याकारं क्रियते तदा सा चित्तस्य मूर्त्याकारतारूपावृत्तिः कल्पिता । यदा तु निरवशेषेण देहं विस्मृत्य चेतः केवलं ध्येयाकारमात्रं भवति तदा सा महाविदेहा नाम धारणा तस्या अपि फलं तदेव । तत्संयमात्तस्यां चेतसो निग्रहात् प्रकाशावरणक्षयो भवति सोऽयं बाह्यविषयः समाधिः । वितर्काख्यो द्विविधः सवितर्कनिर्वितर्कभेदात् तत्राद्यस्य लक्षणं सूत्रितं शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्केति सवितर्का नाम समापत्तिः समाधिरित्यर्थः । यदा विष्णुप्रतिमादौ पूर्वापरानुसंधानेन शब्दार्थोल्लेखेन च भावना प्रवर्त्तते तदा सवितर्कासमापत्तिः । अस्मिन्नेवालंबने पूर्वापरानुसंधानेन शब्दार्थोल्लेखनमंतरेण भावना प्रवर्त्तते तदा निर्वितर्का नाम समापत्तिः । तथा च सूत्रं "स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का" स्मृतेः शब्दार्थस्मरणस्य परिशुद्धौ वर्जने सति भावयितुः स्वरूपेण शून्या तदाऽहमिदं भावयामीत्येवमाकारा वृत्तिरपि भावयितुर्नास्तीवेति भाति । यतोऽर्थमात्रनिर्भासा ध्येयार्थमात्रमस्यां भासते न त्वन्यदिति सूत्रार्थः । अस्यां सिद्धायां योगी जितेंद्रिय इत्युच्यते । जितमना इति आभ्यंतरप्रत्याहारपूर्वकं यदा मनःकल्पिते सूक्ष्मे विषये पूर्ववत् शब्दार्थोल्लेखपूर्वकं तद्वर्जं च मनसो भावना प्रवर्त्तते तदा ते उभे समापत्ती सविचारनिर्विचाराख्ये भवतः । तथा च सूत्रं "एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता" इति । अत्र सूक्ष्मविषयेति ग्रहणात्पूर्वस्यां स्थूलविषयत्वं गम्यते एतयैव द्विविधवितर्कसमापत्त्यैव निर्विचारसमापत्तौ दृढायां योगी जितमना इत्युच्यते । यदा पुनश्चेतसो मूर्त्याकारतां परित्यज्य सत्त्वोद्रेकात् समष्टिमनोमयविषया अहमेवेदं सर्वोऽस्मीत्येवमाकारा भावना प्रवर्त्तते सोऽयं सानंदः समाधिः । यदा तु तामपि भावनां परित्यज्य विषयवेदनमंतरेणास्मीत्येतावन्मात्राकारा भावना प्रवर्त्तते साऽस्मिता । अस्मिताहंकारयोर्भेदस्तु क्रमेण विषयवैमुख्यतदाभिमुख्यमात्रकृतः । यथैक एव पूर्वाभिमुखः पश्चिमाभिमुखश्चेति तद्वत् । अस्यामवस्थायां योगी बुद्धितो विविक्तस्य त्वंपदार्थस्य साक्षात्कारात् जितबुद्धिरित्युच्यते तदेतदुक्तं यतेंद्रियमनोबुद्धिरिति । एतान्येव प्रसाधनानि गुणपर्वाण्युच्यंते तथा च सूत्रं । "विशेषाविशेषलिंगमात्रालिंगानि गुणपर्वाणि" इति । तत्र विशेषाः स्थूलभूतानि एकादशेंद्रियाणि च । अविशेषाः पंचतन्मात्राणि अहंकारश्च । लिंगमात्रं महत्तत्त्वं । अलिंगं प्रधानं तत्र विशेषाद-

विशेषं प्रविविक्षतो योगिनो दैनंदिनलयाभ्यासात्समनस्कानीन्द्रियाणि लीयन्ते स लयः। बहिर्मुखान्येव वा भवन्ति स विक्षेपः। एवं अविशेषेभ्यो लिंगमात्रं विविक्षतोऽपि लयविक्षेपौ स्तः। लिंगमात्रात्परं पुरुषं प्रविविक्षतोऽपि तौ स्तः तावेतौ लयविक्षेपौ हेयौ श्रूयेते। 'लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम्॥ यदा यात्युन्मनीभावं तदा तत्परमं पदम्' इति। एतेषु त्रिषु लीनेष्वाद्यः सुप्त एव। द्वितीयो विगलितदेहाहंकारत्वाद्विदेहसंज्ञः। तृतीयः प्रकृतिलय इति एतयोः समाधिर्गौणः अत एव सूत्रितं। "भवप्रत्ययो विदेहप्रकृतिलयानामिति" भवप्रत्ययो जन्मांतरहेतुरेषां समाधिर्भवति। यद्वा। जन्मांतरे एतेषां जन्मनैव समाधिसिद्धिः पक्षिणामाकाशगमनसिद्धिवद्भवतीति सूत्रार्थः। सर्वथाऽपि तेषां सद्यो मुक्तिर्नास्तीति सिद्धं। यदा तु अस्मितामात्रस्यापि निर्विकल्पे चिन्मात्रे लयो भवति तदाऽयं विद्वान्कैवल्यं धर्ममेव समाध्याख्यमनुभवति। यमधिकृत्य श्रूयते क्षणमेकं क्रतुशतस्य चतुःसप्तत्या यत्फलं तदवाप्नोतीति। अयमेव मोक्षाख्यः। परं अयनं प्राप्यं स्थानं यस्य स मुनिर्मोक्षपरायण इत्युच्यते। यतोस्यामेवावस्थायां योगी जीवन्मुक्त इत्युच्यते। विगतेच्छाभयक्रोध इति पादः प्रागेव व्याख्यातः य एवंभूतः स सदा मुक्तः बंधप्रतीतिकालेऽपि स मुक्त एवास्ति अज्ञानमात्रव्यवधानान्मुक्तेः। एतेनाहंकारादेर्बंधस्य कालत्रयेऽपि असत्त्वोक्त्या मिथ्यात्वं दर्शितम्॥ २८॥

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्॥**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥ २९॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगो नाम पंचमोऽध्यायः॥ ५॥

**शां० भा०**—एवं समाहितचित्तेन किं विज्ञेयमित्युच्यते—भोक्तारं यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तमीश्वरं सर्वलोकमहेश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिमृच्छति प्राप्नोति॥ २९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये प्रकृतिगर्भो नाम पञ्चमोऽध्यायः॥ ५॥

**शां० आ०**—अधिकारिणो यथोक्तस्य कर्तव्याभावे ज्ञातव्यमपि नास्तीत्याशङ्क्य परिहरति—**एवमित्यादिना**। प्रसिद्धं भोक्तारं व्यवच्छिनत्ति—**सर्वलोकेति**। ततो ह्यस्य बन्धविपर्ययाविति न्यायेन सर्वफलदातृत्वं दर्शयति—**सुहृदमिति**। उक्तेश्वरज्ञाने फलं कथयति—**ज्ञात्वेति**। यज्ञेषु तपःसु च द्विधा भोक्तृत्वं व्यनक्ति—**कर्तृरूपेणेति**। हिरण्यगर्भादिव्यवच्छेदार्थं विशिनष्टि—**महान्तमिति**। स्वपरिकरोपकारिणं राजानं व्यावर्तयति—**प्रत्युपकारेति**। ईश्वरस्य ताटस्थ्यं व्युदस्यति—**सर्वभूतानामिति**। तर्हि तत्र तत्र व्यवस्थितकर्मतत्फलसंसर्गित्वं स्यादित्याशङ्क्याऽऽह—**सर्वकर्मेति**। न च तस्य बुद्धितद्वृत्तिसंबन्धोऽपि वस्तुतोस्तीत्याह—**सर्वप्रत्ययेति**। यथोक्तेश्वरपरिज्ञानफलमभिदधाति—**मां नारायणमिति**। तदेवं कर्मयोगस्यामुख्यसंन्यासापेक्षया प्रशस्तत्वेऽपि ततो मुख्यसंन्यासस्याऽऽधिक्यात्तद्वतो बुद्धिशुद्ध्यादियुक्तस्य कामक्रोधोद्भवं वेगमिहैव सोढुं शक्तस्य शमदमादिमतो योगाधिकृतस्य त्वंपदार्थाभिज्ञस्य परमात्मानं प्रत्यक्त्वेन जानतो मुक्तिरिति सिद्धम्॥ २९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने पञ्चमोऽध्यायः॥ ५॥

आ० भा०—ध्येयमाह—भोक्तारमिति ॥ २९ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये पंचमोऽध्यायः ॥ ५ ॥

आ० ज०—भगवज्ज्ञानस्य शांतिसाधनत्वं पुनः किमर्थमुच्यत इत्यत आह—ध्येयमिति। ततश्च ज्ञात्वेत्यस्य ध्यात्वेत्यर्थः। शांतिसाधनज्ञानत्वमपि भोक्तृत्वादिवत् ध्येयविशेषणमेवेति भावः ॥ २९ ॥

इति श्रीमदानंदतीर्थभगवत्पादविरचितश्रीमद्गीताभाष्यटीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पंचमोऽध्यायः समाप्तः ॥ ५ ॥

रा० भा०—उक्तस्य नित्यनैमित्तिककर्मेतिकर्तव्यताकस्य कर्मयोगस्य योगशिरस्कस्य सुशक्यतामाह। यज्ञतपसां भोक्तारं सर्वलोकमहेश्वरं सर्वभूतानां सुहृदं मां ज्ञात्वा शान्तिमृच्छति कर्मयोगकरण एव सुखमृच्छति सर्वलोकमहेश्वरं सर्वेषां लोकेश्वराणामपि ईश्वरं "तमीश्वराणां परमं महेश्वरम्" इति हि श्रुतेः। मां सर्वलोकमहेश्वरं सर्वसुहृदं ज्ञात्वा मदाराधनरूपः कर्मयोग इति सुखेन तत्र प्रवर्तत इत्यर्थः। सुहृदामाराधनाय सर्वे प्रवर्तन्ते ॥ २९ ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते गीताभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

अ० टी०—ननु कथमेतावन्मात्रेण स्पर्शादिमोक्षः स्यादित्याशङ्क्याह—भोक्तारमिति। यज्ञतपसां पुण्योपार्जिततापानां भोक्तारं तापोद्भूतरसभोक्तारं सर्वलोकमहेश्वरं स्वक्रीडार्थं जगत्कर्तारं सर्वभूतानां सुहृदं भक्तिमुक्तिस्वरूपरसादिदानेन। एतादृशं मां ज्ञात्वा लौकिकाच्छान्तिम् ऋच्छति प्राप्नोति ॥ २९ ॥

'संन्यासरूपकथनान्मनोवैकाल्पिकं भ्रमम् ॥ नाशयामास कौन्तेयप्रश्नव्याजान्नतोऽस्मि तम् ॥'

इति श्रीभगवद्गीताटीकायां गीतामृततरङ्गिण्यां पञ्चमोऽध्यायः ॥ ५ ॥

नी० टी०—एवं समाहितचित्तेन किं विज्ञेयमित्युच्यते—भोक्तारमिति। सोपाधिकेन रूपेण यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च भोक्तारं। तथा सर्वेषां भूतानां हिरण्यगर्भादीनामपि महांतं व्यापकमीश्वरमीशितारमंतर्यामिणं। सुहृदं सर्वभूतानां प्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वप्रत्ययसाक्षिणं नारायणं मां प्रत्यगभेदेन ज्ञात्वा साक्षात्कृत्य तद्भावं प्राप्य शांतिमनुपाध्यवस्थां निरुपाख्यां कैवल्यसंज्ञां ऋच्छति प्राप्नोति। एवं च सोपाधिब्रह्मभावप्राप्तिपूर्वकैव निरुपाधिप्राप्तिरिति गम्यते। यथोक्तं वार्त्तिकसारे। 'सोपाधिर्निरुपाधिश्च द्वेधा ब्रह्मविदुच्यते। सोपाधिकः स्यात्सर्वात्मा निरुपाख्योऽनुपाधिकः ॥ जक्षन् क्रीडन् रतिं प्राप्त इति सोपाधिकस्य तु। छांदोग्ये सर्वकामाप्तिः सार्वात्म्यात्स्पष्टमीरिता ॥ अहमन्नं तथाऽन्नादः श्लोककार्यप्यहो अहम्। इति तत्त्वविदः सामगाने सर्वात्मता श्रुता ॥ अत्रापि चक्रदृष्टांतात्सोपाधिस्तत्त्वविच्छ्रुतः। अपूर्वो न पराग्युक्त्या श्रोष्यते निरुपाधिकः' इति ॥ २९ ॥

इति श्री० नैलकंठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे पंचमोऽध्यायः ॥ ५ ॥

( श्लोकानामादितः समष्ट्यङ्काः—२३२ )

(५१)

॥ अथ षष्ठोऽध्यायः ॥ ६ ॥

**श्रीभगवानुवाच—अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ॥**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥**

**शां० भा०**—अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनं प्रत्यन्तरङ्गस्य सूत्रभूताः श्लोकाः स्पर्शान्कृत्वा बहिरित्यादय उपदिष्टास्तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते । तत्र ध्यानयोगस्य बहिरङ्गं कर्मेति यावद्ध्यानयोगारोहणासमर्थस्तावद्गृहस्थेनाधिकृतेन कर्तव्यं कर्मेत्यतस्तत्स्तौति । ननु किमर्थं ध्यानयोगारोहणसीमाकरणं यावताऽनुष्ठेयमेव विहितं कर्म यावज्जीवम् । नाऽऽरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत इति विशेषणादारूढस्य च शमेनैव संबन्धकरणात् । आरुरुक्षोरारूढस्य च शमः कर्म चोभयं कर्तव्यत्वेनाभिप्रेतं चेत्स्यात्तदाऽऽरुरुक्षोरारूढस्य चेति शमकर्मविषयभेदेन विशेषणं विभागकरणं चानर्थकं स्यात् ।

**शां० आ०**—ध्यानयोगप्रस्तावानन्तरं तद्योग्यताहेतुकर्मणः स्तुतिं भगवानुक्तवानित्याह—**श्रीभगवानिति**। पूर्वोत्तराध्याययोः संगतिमभिदधानो वृत्तमनूद्याध्यायान्तरमवतारयति—**अतीतेति** । सम्यग्दर्शनप्रकरणे ध्यानयोगस्य प्रसङ्गाभावं व्युदस्यति—**सम्यगिति** । संग्रहविवरणयोरतीतानन्तराध्याययोर्युक्तं हेतुहेतुमत्त्वमिति भावः । अध्यायसंबन्धमभिधायानाश्रितः कर्मफलमित्यादिश्लोकद्वयस्य तात्पर्यमाह—**तत्रेति** । कर्मयोगस्य संन्यासहेतोर्मर्यादां दर्शयितुं साङ्गं च योगं विचारयितुमध्याये प्रवृत्ते सतीति सप्तम्यर्थः । संन्यासिना कर्तव्यं कर्मेत्येवं प्रतिभासं व्युदस्यति—**गृहस्थेनेति** । कर्तव्यत्वं स्तुतियोग्यत्वमतःशब्दार्थः । समुच्चयवादी सीमाकरणमाक्षिपति—**नन्विति** । यावज्जीवश्रुतिवशाद्ध्यानारोहणसामर्थ्ये सत्यपि कर्मानुष्ठानस्य दुर्वारत्वादिति हेतुमाह—**यावतेति** । भार्यावियोगादिप्रतिबन्धाद्यावज्जीवश्रुतिचोदितकर्माननुष्ठानवद्वैराग्यप्रतिबन्धादपि तदननुष्ठानसंभवाद्भगवतो विशेषणवचनाच्च न यावज्जीवं कर्मानुष्ठानप्रसक्तिरिति परिहरति—**नाऽऽरुरुक्षोरिति** । उक्तमेवार्थं व्यतिरेकद्वारेण विवृणोति—**आरुरुक्षोरित्यादिना** । आरोढुमिच्छतीत्यारुरुक्षुरित्यत्राऽऽरोहणेच्छा विशेषणमारोहणं कृतवानित्यारूढ इत्यत्र पुनरिच्छाविषयभूतमारोहणं विशेषणमेवं शमकर्मविषययोर्भेदेन विशेषणं मर्यादाकरणानङ्गीकरणे विरुद्धमापद्येत, तयोरेव विभागकरणं च भागवतं सीमानङ्गीकारे न युज्येतेत्यर्थः ।

**शां० भा०**—तत्राऽऽश्रमिणां कश्चिद्योगमारुरुक्षुर्भवत्यारूढश्च कश्चिदन्ये नाऽऽरुरुक्षवो न चाऽऽरूढास्तानपेक्ष्याऽऽरुरुक्षोरारूढस्य चेति विशेषणं विभागकरणं चोपपद्यत एवेति चेत् । न तस्यैवेति वचनात् । पुनर्योगग्रहणाच्च योगारूढस्येति य आसीत्पूर्वं योगमारुरुक्षुस्तस्यैवाऽऽरूढस्य शम एव कर्तव्यं कारणं योगफलं प्रत्युच्यत इति । अतो न यावज्जीवं कर्तव्यत्वप्राप्तिः कस्यचिदपि कर्मणः, योगविभ्रष्टवचनाच्च । गृहस्थस्य चेत्कर्मिणो योगो विहितः षष्ठेऽध्याये स योगविभ्रष्टोऽपि कर्मगतिं कर्मफलं प्राप्नोतीति तस्य नाशाशङ्काऽनुपपन्ना स्यात् । अवश्यं हि कृतं कर्म काम्यं नित्यं वा मोक्षस्य नित्यत्वादनारभ्यत्वे स्वं फलमारभत एव ।

**शां० आ०**—विशेषणविभागकरणयोरन्यथोपपत्तिमाशङ्कते—**तत्रेति** । व्यवहारभूमिः सप्तम्यर्थः । षष्ठी निर्धारणे । भवत्वधिकारिणां त्रैविध्यं तथाऽपि प्रकृते विशेषणादौ किमायातमित्याशङ्क्य तृतीयापेक्षया तदुपपत्तिरित्याह—**तानपेक्ष्येति** । आरुरुक्षोरारूढस्य च भेदे तस्यैवेति प्रकृतपरामर्शानुपपत्तिरिति दूषयति—**न तस्येति** । यद्यनारुरुक्षुं पुरुषमपेक्ष्याऽऽरुरुक्षोरिति विशेषणं तस्य च कर्मारोहणकारणमनारूढं च पुरुषमपेक्ष्याऽऽरूढस्येति विशेषणं तस्य च शमः संन्यासो योगफलप्राप्तौ कारणमिति विशेषणविभागकरणयोरुपपत्तिस्तदाऽऽरुरुक्षोरारूढस्य च भिन्नत्वात्प्रकृतपरामर्शिनस्तच्छब्दस्यानुपपत्तेर्न युक्तमित्थं विशेषणाद्युपपादनमित्यर्थः । किंच योगमारुरुक्षोस्तदारोहणे कारणं कर्मेत्युक्त्वा पुनर्योगारूढस्येति योगशब्दप्रयोगाद्यो योगं पूर्वमारुरुक्षुरासीत्तस्यैवापेक्षितं योगमारूढस्य तत्फलप्राप्तौ कर्मसंन्यासः शमशब्दवाच्यो हेतुत्वेन कर्तव्य इति वचनादारुरुक्षोरारूढस्य चाभिन्नत्वप्रत्य-

भिज्ञानान्न तयोर्भिन्नत्वं शङ्कितुं शक्यमित्याह—**पुनरिति**। यत्तु यावज्जीवश्रुतिविरोधाद्योगारोहणसीमाकरणं कर्मणोऽनुचितमिति तत्राऽऽह—**अत इति**। पूर्वोक्तरीत्या कर्मतत्त्यागयोर्विभागोपपत्तौ श्रुतेरन्यविषयत्वाद्योगमारूढस्य मुमुक्षोर्जिज्ञासमानस्य नित्यनैमित्तिककर्मस्वपि परित्यागसिद्धिरित्यर्थः। इतश्च यावज्जीवं कर्म कर्तव्यं न भवतीत्याह—**योगेति**। संन्यासिनो योगभ्रष्टस्य विनाशशङ्कावचनान्न यावज्जीवं कर्म कर्तव्यं प्रतिभातीत्यर्थः। ननु योगभ्रष्टशब्देन गृहस्थस्यैवाभिधानात्तस्यैवास्मिन्नध्याये योगविधानाद्योगारोहणयोग्यत्वे सत्यपि यावज्जीवं कर्म कर्तव्यमिति नेत्याह—**गृहस्थस्येति**। तेनापि मुमुक्षुणा कृतस्य कर्मणो मोक्षातिरिक्तफलानारम्भकत्वाद्योगभ्रष्टोऽसौ छिन्नाभ्रमिव नश्यतीति शङ्का सावकाशेत्याशङ्क्याऽऽह—**अवश्यं हीति**। अपौरुषेयान्निर्दोषाद्वेदात्फलदायिनी कर्मणः स्वाभाविकी शक्तिरवगता ब्रह्मभावस्य च स्वतःसिद्धत्वान्न कर्मफलत्वमतो मोक्षातिरिक्तस्यैव फलस्य कर्माऽऽरम्भकमिति कर्मिणि योगभ्रष्टेऽपि कर्मगतिं गच्छतीति निरवकाशा शङ्केत्यर्थः।

**शां० भा०**—नित्यस्य च कर्मणो वेदप्रमाणावबुद्धत्वात्फलेन भवितव्यमित्यवोचामान्यथा वेदस्यानर्थार्थत्वप्रसङ्गादिति। न च कर्मणि सत्युभयविभ्रष्टवचनमर्थवत्कर्मणो विभ्रंशकारणानुपपत्तेः।

**शां० आ०**—ननु मुमुक्षुणा काम्यप्रतिषिद्धयोरकरणात्कृतयोश्च नित्यनैमित्तिकयोरफलत्वात्कथं तदीयस्य कर्मणो नियमेन फलारम्भकत्वं तत्राऽऽह—**नित्यस्य चेति**। चकारेण नैमित्तिकं कर्मानुकृष्यते। वेदप्रमाणकत्वेऽपि नित्यनैमित्तिकयोरफलत्वे दोषमाह—**अन्यथेति**। इति कर्मणोऽनुष्ठितस्य फलारम्भकत्वध्रौव्याद्गृहस्थो योगभ्रष्टोऽपि कर्मगतिं गच्छतीति न तस्य नाशाशङ्केति शेषः। इतोऽपि गृहस्थो योगभ्रष्टशब्दवाच्यो न भवतीत्याह—**न चेति**। ज्ञानं कर्म चेत्युभयं ततो विभ्रष्टोऽयं नश्यतीति वचनं गृहस्थे कर्मणि सति नार्थवद्भवितुमलं तस्य कर्मनिष्ठस्य कर्मणो विभ्रंशे हेत्वभावात्तत्फलस्याऽऽवश्यकत्वादित्यर्थः।

**शां० भा०**—कर्म कृतमीश्वरे संन्यस्येत्यतः कर्तरि कर्म फलं नाऽऽरभत इति चेत्। नेश्वरे संन्यासस्याधिकतरफलहेतुत्वोपपत्तेः। मोक्षायैवेति चेत्स्वकर्मणां कृतानामीश्वरे न्यासो मोक्षायैव न फलान्तराय योगसहितो योगाच्च विभ्रष्ट इत्यतस्तं प्रति नाशाशङ्का युक्तैवेति चेत्। न 'एकाकी यतचित्तात्मा निराशीरपरिग्रहः' 'ब्रह्मचारिव्रते स्थितः' इति कर्मसंन्यासविधानात्। न चात्र ध्यानकाले स्त्रीसहायत्वाशङ्का येनैकाकित्वं विधीयते। न च गृहस्थस्य निराशीरपरिग्रह इत्यादिवचनमनुकूलम्। उभयविभ्रष्टप्रश्नानुपपत्तेश्च। अनाश्रित इत्यनेन कर्मिण एव संन्यासित्वं योगित्वं चोक्तं प्रतिषिद्धं च निरग्नेरक्रियस्य च संन्यासित्वं योगित्वं चेति चेत्। न ध्यानयोगं प्रति बहिरङ्गस्य सतः कर्मणः फलाकाङ्क्षासंन्यासस्तुतिपरत्वात्। न केवलं निरग्निरक्रिय एव संन्यासी योगी च किं तर्हि कर्म्यपि कर्मफलासङ्गं संन्यस्य कर्मयोगमनुतिष्ठन्सत्त्वशुद्ध्यर्थं स संन्यासी च योगी च भवतीति स्तूयते। न चैकेन वाक्येन कर्मफलासङ्गसंन्यासस्तुतिश्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते। न च प्रसिद्धं निरग्नेरक्रियस्य परमार्थसंन्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रविहितं संन्यासित्वं योगित्वं च प्रतिषेधति भगवान्। स्ववचनविरोधाच्च।

**शां० आ०**—कृतस्य कर्मणो मुमुक्षुणा भगवति समर्पणात्कर्तरि फलानारम्भकत्वादस्ति विभ्रंशकारणमिति शङ्कते—**कर्मेति**। राजाराधनबुद्ध्या धनधान्यादिसमर्पणस्याधिकफलहेतुत्वोपलम्भादीश्वरे समर्पणे न भ्रंशकारणमिति दूषयति—**नेत्यादिना**। अधिकफलहेतुत्वेऽपि मोक्षहेतुत्वमिष्यतामिति शङ्कते—**मोक्षायेति**। तदेव चोद्यं विवृणोति—**स्वकर्मणामिति**। सहकारिसामर्थ्यात्तस्य फलान्तरं प्रत्युपायत्वासिद्धिरिति हेतुं सूचयति—**योगेति**। ध्यानसहितस्य संन्यासस्य मोक्षौपयिकत्वे कुतो योगभ्रष्टमधिकृत्य नाशाशङ्केत्याशङ्क्याऽऽह—**योगाच्चेति**। सहकार्यभावे सामग्र्यभावात्फलानुपपत्तेर्युक्ता नाशाशङ्केत्यर्थः। ध्यानसहितमीश्वरे कर्मसमर्पणं मोक्षायेत्यत्र प्रमाणाभावाद्गृहस्थो योगभ्रष्टशब्दवाच्यो न भवतीति दूषयति—**नेति**। गृहस्थस्य योगभ्रष्टशब्दवाच्यत्वाभावे हेत्वन्तरमाह—**एकाकीति**। न खल्वेतानि विशेषणानि गृहस्थसमवायीनि संभवन्ति तेन तस्य ध्यानयोगविध्यभावान्न तं प्रति योगभ्रष्टशब्दवचनमुचितमित्यर्थः। एकाकित्ववचनं गृहस्थस्यापि ध्यानकाले स्त्रीसहायत्वाभावाभिप्रायेण भविष्यतीत्याशङ्क्याग्निहोत्रादिवद्ध्यानस्य पत्नीसाध्यत्वाभावादप्राप्तप्रतिषेधान्नैवमित्याह—**न चात्रेति**। विशेषणान्तरपर्यालोचनयाऽपि नायमेकाकिशब्दो गृहस्थपरो भवितुमर्हतीत्याह—**न चेति**। किंच गृहस्थस्यैवैकाकित्वादि विवक्षित्वा ध्यानयोगविधौ तं

प्रत्युभयभ्रष्टप्रश्नो नोपपद्यत इत्याह—**उभयेति**। न हि गृहस्थं प्रत्युभयस्माज्ज्ञानात्कर्मणश्च विभ्रष्टत्वमुपेत्य प्रष्टुं युज्यते तस्य ज्ञानाद्भ्रंशेऽपि कर्मणस्तदभावादनुष्ठीयमानकर्मभ्रंशेऽपि प्रागनुष्ठितकर्मवशात्फलप्रतिलम्भादतो यथोक्तप्रश्नालोचनया न गृहस्थं प्रति ध्यानविधानोपपत्तिरित्यर्थः। ननु भगवता संन्यासस्य प्रतिषिद्धत्वाद्गृहस्थस्यैव योगविधानात्तस्यैव योगभ्रष्टशब्दवाच्यत्वमिति शङ्क्ते—**अनाश्रित इत्यनेनेति**। भगवद्वाक्यं न प्रतिषेधपरमिति परिहरति—**न ध्यानेति**। स्तुतिपरत्वमेव स्फोरयति—**न केवलमिति**। सत्त्वशुद्ध्यर्थमनुतिष्ठन्निति संबन्धः। वाक्यस्योभयपरत्वमाशङ्क्य वाक्यभेदप्रसङ्गान्मैवमित्याह—**न चेति**। इतोऽपि भगवतः संन्यासाश्रमप्रतिषेधोऽभिप्रेतो न भवतीत्याह—**न च प्रसिद्धमिति**। तस्य प्रसिद्धं संन्यासित्वं योगित्वं चेति संबन्धः। प्रसिद्धत्वमेव व्याकरोति—**श्रुतीति**। इतोऽपि संन्यासाश्रमं भगवान्न प्रतिषेधतीत्याह—**स्ववचनेति**।

**शां० भा०**—सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते मौनी संतुष्टो येन केनचिदनिकेतः स्थिरमतिः 'विहाय कामान्यः सर्वान्पुमांश्चरति निस्पृहः' 'सर्वारम्भपरित्यागी' इति च तत्र तत्र भगवता स्ववचनानि दर्शितानि तैर्विरुध्येत चतुर्थाश्रमप्रतिषेधः। तस्मान्मुनेर्योगमारुरुक्षोः प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादि फलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं सत्त्वशुद्धिद्वारेण प्रतिपद्यत इति स संन्यासी च योगी चेति स्तूयते—अनाश्रितो नाऽऽश्रितोऽनाश्रितः किं कर्मफलं कर्मणः फलं कर्मफलं यत्तदनाश्रितः कर्मफलतृष्णारहित इत्यर्थः। यो हि कर्मफलतृष्णावान्स कर्मफलमाश्रितो भवत्ययं तु तद्विपरीतोऽतोऽनाश्रितः कर्मफलमेवंभूतः सन्कार्यं कर्तव्यं नित्यं काम्यविपरीतमग्निहोत्रादिकं करोति निर्वर्तयति। यः कश्चिदीदृशः कर्मी स कर्म्यन्तरेभ्यो विशिष्यत इत्येतमर्थमाह—स संन्यासी च योगी चेति। संन्यासः परित्यागः स यस्यास्ति स संन्यासी च योगी च योगश्चित्तसमाधानं स यस्यास्ति स योगी चेत्येवं गुणसंपन्नोऽयं मन्तव्यो न केवलं निरग्निरक्रिय एव संन्यासी योगी चेति मन्तव्यः। निर्गता अग्नयः कर्माङ्गभूता यस्मात्स निरग्निरक्रियश्चानग्निसाधना अप्यविद्यमानाः क्रियास्तपोदानादिका यस्यासावक्रियः॥ १॥

**शां० आ०**—विरोधमेव साधयति—**सर्वकर्माणीत्यादिना**। अनाश्रित इत्यादिवाक्यस्य यथाश्रुतार्थत्वानुपपत्तेः स्तुतिपरत्वमुपपादितमुपसंहरति—**तस्मादिति**। कर्मफलसंन्यासित्वमत्र मुनिशब्दार्थः। स्तुतिपरं वाक्यमक्षरयोजनार्थमुदाहरति—**अनाश्रित इति**। कर्मफलेऽभिलाषो नास्तीत्येतावता कथं तदनाश्रितत्ववाचोयुक्तिरित्याशङ्क्य व्यतिरेकमुखेन विशदयति—**यो हीति**। कार्यमित्यादि व्याकरोति—**एवंभूतः सन्निति**। कथं कर्मिणः संन्यासित्वं योगित्वं च कर्मित्वविरोधादित्याशङ्क्याऽऽह—**ईदृश इति**। स्तुतेरत्र विवक्षितत्वान्नानुपपत्तिश्चोदनीयेति मन्वानः सन्नाह—**इत्येवमिति**। न निरग्निरित्यादेरर्थमाह—**न केवलमिति**। अग्नयो गार्हपत्याहवनीयान्वाहार्यपचनप्रभृतयः। नन्वनग्नित्वे सिद्धमक्रियत्वमग्निसाध्यत्वात्क्रियाणां तथा च न निरग्निरित्येतावतैवापेक्षितसिद्धेर्न चाक्रिय इत्यनर्थकमर्थपुनरुक्तेरिति तत्राऽऽह—**अनग्नीति**॥ १॥

**आ० भा०**—ॐ ज्ञानांतरंगं समाधियोगमाहानेनाध्यायेन। विवक्षितं संन्यासमाह योगेन सह—अनाश्रित इति। चतुर्थाश्रमिणोऽप्यग्निः क्रिया चोक्ता दैवमेवेत्यादौ। 'अग्निर्ब्रह्म च तत्पूजा क्रिया न्यासाश्रमे स्मृता' इति च। तस्मान्निरग्निरक्रियः संन्यासी योगी च न भवत्येव॥ १॥

**आ० ज०**—श्रीवेंकटेशाय नमः॥ संगतिं सूचयन्नेतदध्यायप्रतिपाद्यमर्थमाह—**ज्ञानांतरंगमिति**। योगे त्विमां शृण्विति प्रतिज्ञाय द्वितीयषट्के वक्ष्यमाणं भगवज्ज्ञानं प्रति कर्मयोगस्य बहिरंगत्वात्स प्राधान्येनातीते ग्रंथे प्रतिपादितः। तत्साध्यत्वाज्ज्ञानांतरंगत्वाच्चावसरप्राप्तं समाधियोगमाहानेन षष्ठाध्यायेनेत्यर्थः। आसनादीनामंगानां वक्ष्यमाणत्वेऽपि तेषां समाद्ध्यर्थत्वात्। प्राधान्येन समाधियोगस्य ग्रहणम्। पंचमांतोक्तस्य प्रपंचोऽयमित्यदोषः। गृहस्थस्यापि स्तुत्यर्थमुपचरितं संन्यासित्वं योगित्वं चानेन श्लोकेनोच्यत इति परकीयतात्पर्यकथनमसदितिभावेनाह—**विवक्षितमिति**। समाधियोगं विधातुं तत्राधिकारिणं ज्ञापयिष्यन् सांख्याद्यभिमततदधिकारिनिरासाय तद्विशेषणं प्राग्विवक्षितं कामादिवर्जनलक्षणं संन्यासमीश्वराराधनस्वकर्मानुष्ठानलक्षणेन योगेन सहाहेत्यर्थः। यदि हि संन्यासो यत्याश्रमोऽत्र विवक्षितः स्यात् योगश्च कश्चित् गृहस्थासंभवी स्यात्। तदोपचारेण तत् स्तुतिरियम्। नचैवमिति भावः। न केवलं निरग्निरक्रियश्चतुर्थाश्रमिसंन्यासी योगी च किं त्वनाश्रित इत्याद्युक्तो गृहस्थोऽपीति परकीयां योजनां निराक-

रोति—चतुर्थेति । अत्रैव स्पष्टं वाक्यांतरं पठति—अग्निरिति । वस्त्वर्थः । अतो न परकीया योजना युक्तेति शेषः । तर्हि कथमित्यत आह—तस्मादिति । परकृतयोजनायाः निरस्तत्वात् । ननु निरग्नेरक्रियस्य चतुर्थाश्रमिणोऽपि संन्यासित्वाद्योगित्वाच्च कथ न निरग्निरित्याद्युक्तमित्यतो वाह । चतुर्थाश्रमिणोऽपीत्यादि । न भवत्येवेति युक्तमिति शेषः । अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबंधन इति भावः ॥ १ ॥

रा० भा०—उक्तः कर्मयोगः सपरिकरः इदानीं ज्ञानकर्मयोगसाध्यात्मावलोकनरूपयोगाभ्यासविधिरुच्यते । तत्र कर्मयोगस्य निरपेक्षयोगसाधनत्वं द्रढयितुं ज्ञानाकारः कर्मयोगो योगशिरस्क अनूद्यते कर्मफलं स्वर्गादिकमनाश्रितः कार्यं कर्मानुष्ठानमेव कार्यं सर्वात्मनाऽस्मत्सुहृद्भूतपरमपुरुषाराधनरूपतया कर्मैव मम प्रयोजनं न तत्साध्यं किंचित् इति यः कर्म करोति स संन्यासी च ज्ञानयोगनिष्ठश्च योगी च कर्मयोगनिष्ठश्च आत्मावलोकनरूपयोगसाधनभूतोभयनिष्ठ इत्यर्थः । न निरग्निर्न चाक्रियः न चोदितयज्ञादिकर्मस्वप्रवृत्तः केवलज्ञाननिष्ठः तस्य हि ज्ञाननिष्ठैव कर्मयोगनिष्ठस्य तूभयमस्तीत्यभिप्रायः ॥ १ ॥

अ० टी०—श्रीकृष्णाय नमः ॥ 'कृत्वाऽपि सर्वसंन्यासं जडवच्चरणादिह ॥ न भक्तिं प्राप्नुयात्तस्माद्ध्यानयोगमुवाच ह ॥ १ ॥' पूर्वाध्याये संन्यासमुक्त्वाऽध्यायान्ते इच्छादिविहीनो विषयमोक्षेच्छुर्विषयभोक्तृत्वात्तेभ्यो विमुक्तो भवेदित्युक्तम् । ततस्तद्विमुक्तिरेव न फलं किंतु तद्विमुक्त्या भगवद्ध्यानेन भगवदावेशः फलमिति ध्यानस्वरूपमाह भगवान्—अनाश्रितइति । कर्मफलं स्वर्गादिरूपमनाश्रितः । कार्यं कर्म भगवदुक्तत्वादवश्यकर्तव्यं कर्म सेवादिरूपं यः करोति स संन्यासी त्यागवान् यः पुनर्योगी च भवतीतिशेषः । न निरग्निः न गार्हपत्यादित्यागवान् संन्यासी । नच अक्रियः न सेवादिरहितो योगी भवतीत्यर्थः ॥ १ ॥

नी० टी०—पूर्वाध्यायांते सूत्रितं ध्यानयोगं विवरीतुमिच्छंस्तत्राधिकारहेतुत्वात्कर्मयोगं तावत्स्तौति द्वाभ्यां—अनाश्रित इति । यः कर्मणां फलमनाश्रितोऽनपेक्षमाणः कार्यमवश्यकर्त्तव्यं नित्यं कर्म करोति स एव फलसंकल्पत्यागात् संन्यासी च योगी च भवति । न तु निरग्निर्यो विधितः श्रौतस्मार्त्तकर्मत्यागी स एव संन्यासी नापि अक्रियस्त्यक्तवाङ्मनःकायक्रिय एव वा योगीति ॥ १ ॥

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ॥**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २॥**

शां० भा०—ननु च निरग्नेरक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वं च प्रसिद्धं कथमिह साग्नेः सक्रियस्य संन्यासित्वं योगित्वं चाप्रसिद्धमुच्यत इति । नैष दोषः । कयाचिद्गुणवृत्त्योभयस्य संपिपादयिषितत्वात् । तत्कथं कर्मफलसंकल्पसंन्यासात्संन्यासित्वं योगाङ्गत्वेन च कर्मानुष्ठानात्कर्मफलसंकल्पस्य वा चित्तविक्षेपहेतोः परित्यागाद्योगित्वं चेति गौणमुभयं न पुनर्मुख्यं संन्यासित्वं योगित्वं चाभिप्रेतमित्येतमर्थं दर्शयितुमाह—यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यासमिति प्राहुः श्रुतिस्मृतिविदो योगं कर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि जानीहि हे पाण्डव । कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन परमार्थसंन्यासेन कीदृशं सामान्यमङ्गीकृत्य तद्भाव उच्यत इत्यपेक्षायामिदमुच्यते । अस्ति परमार्थसंन्यासेन सादृश्यं कर्तृद्वारकं कर्मयोगस्य । यो हि परमार्थसंन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं संकल्पं प्रवृत्तिहेतुकामकारणं संन्यस्यति । अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषयं संकल्पं संन्यस्यतीत्येतमर्थं

दर्शयन्नाह—न हि यस्मादसंन्यस्तसंकल्पोऽसंन्यस्तोऽपरित्यक्तः फलविषयः संकल्पोऽभिसंधिर्येन सोऽसंन्यस्तसंकल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान्भवति न संभवतीत्यर्थः। फलसंकल्पस्य चित्तविक्षेपहेतुत्वात्। तस्माद्यः कश्चन कर्मी संन्यस्तफलसंकल्पो भवेत्स योगी समाधानवानविक्षिप्तचित्तो भवेच्चित्तविक्षेपहेतोः फलसंकल्पस्य संन्यस्तत्वादित्यभिप्रायः। एवं परमार्थसंन्यासकर्मयोगयोः कर्तृद्वारकं संन्याससामान्यमपेक्ष्य 'यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव' इति कर्मयोगस्य स्तुत्यर्थं संन्यासत्वमुक्तम् ॥ २ ॥

शां० आ०—उत्तरश्लोकस्य तात्पर्यं दर्शयितुं व्यावर्त्यामाशङ्कां दर्शयति—**ननु चेति**। प्रसिद्धिं परित्यज्याप्रसिद्धिरुपादीयमाना प्रसिद्धिविरुद्धेति चोद्यं दूषयति—**नैष दोष इति**। उभयस्य साम्यौ सक्रिये च संन्यासित्वस्य योगित्वस्य चेत्यर्थः। गुणवृत्त्योभयसंपादनं प्रश्नपूर्वकं प्रकटयति—**तत्कथमित्यादिना**। संभवति मुख्ये संन्यासित्वादौ किमिति गौणमुभयमभीष्टमित्याशङ्क्य मुख्यस्य कर्मिण्यसंभवाद्गौणमेव स्तुतिसिद्ध्यर्थं तदिष्टमित्यभिप्रेत्याऽऽह—**न पुनरिति**। चित्तव्याकुलत्वहेतुकामनात्यागाच्चित्तसमाधानसिद्धेर्योगित्वं कर्मिणोऽपि युक्तं संन्यासित्वं तु तस्य विरुद्धमिति शङ्कमानं प्रत्युक्तेऽर्थे श्लोकमवतारयति—**इत्येतमिति**। परमार्थसंन्यासं प्राहुरिति संबन्धः। इतीत्थं संन्यासस्य प्रामाणिकाभ्युपगतत्वादितीतिशब्दो योज्यः। योगं फलतृष्णां परित्यज्य समाहितचेतस्तयेति शेषः। यदुक्तं संन्यासित्वं योगित्वं च गृहस्थस्य गौणमिति तदुत्तरार्धयोजनया प्रकटयितुमुत्तरार्धमुत्थापयति—**कर्मयोगस्येति**। कर्मयोगस्य परमार्थसंन्यासेन कर्तृद्वारकं साम्यमुक्तं व्यक्ती करोति—**यो हीति**। त्यक्तानि सर्वाणि कर्माणि साधनानि च येन स तथोक्तस्तस्य भावस्तत्ता तया सर्वकर्मविषयं तत्फलविषयं च संकल्पं त्यजतीत्यर्थः। संकल्पत्यागे तत्कार्यकामत्यागस्तत्त्यागे तज्जन्यप्रवृत्तित्यागश्च सिध्यतीत्यभिसंधाय विशिनष्टि—**प्रवृत्तीति**। कर्मिण्यपि यथोक्तसंकल्पसंन्यासित्वमस्तीत्याह—**अयमपीति**। तदपरित्यागे व्याकुलचेतस्तया कर्मानुष्ठानस्यैव दुःशकत्वादित्यर्थः। उक्तमेव साम्यं व्यक्ती कुर्वन्व्यतिरेकं दर्शयति—**इत्येतमिति**। फलसंकल्पापरित्यागे किमिति समाधानवत्त्वाभावस्तत्राऽऽह—**फलेति**। व्यतिरेकमुखेनोक्तमर्थमन्वयमुखेनोपसंहराति—**तस्मादिति**। हिशब्दार्थस्य यस्मादित्युक्तस्य तस्मादित्यनेन संबन्धः। कर्मिणं प्रति यथोक्तविधौ हेतुहेतुमद्भावमभिप्रेत्य द्वितीयविधौ हेतुमाह—**चित्तविक्षेपेति**। पूर्वश्लोके पूर्वोत्तरार्धाभ्यामुक्तमनुवदति—**एवमिति** ॥ २ ॥

**आ० भा०—संन्यासोऽपि योगांतर्भूत इत्याह। यं संन्यासमिति। कामसंकल्पाद्यपरित्यागे कथमुपायवान्स्यादित्याशयः ॥ २ ॥**

आ० ज०—ननु संन्यासयोगौ भिन्नलक्षणौ तत्कथं तयोरैक्यमुच्यत इत्यत आह—**संन्यासोऽपीति**। संन्यासी च योगी चेत्युक्त्या प्राप्तात्यंतभेदशंकानिवृत्त्यर्थमिति शेषः। अमुख्ययोगापेक्षया पृथगुक्तोऽपीत्यपेरर्थः। योगशब्देन मुख्योऽत्राभिहितः। अतएव वक्ष्यत्युपायवानिति अंतर्भूतत्वादैक्योक्तिरित्यर्थः। संन्यासस्य योगांतर्भूतत्वमुपपाद्यते—**न हीति**। तदसत्। संकल्पत्यागमात्रस्यासंन्यासत्वात् ईश्वराराधनाय स्वकर्मैकरणमात्रं योगः। तस्य संन्यासाभावेऽप्युपपत्तेरिति अतआह—**कामेति**। संकल्पशब्दस्य कामाद्युपलक्षणत्वाद्योगशब्दस्य ज्ञानोपायरूपमुख्ययोगार्थत्वान्नानुपपत्तिरिति भावः ॥ २ ॥

रा० भा०—उक्तलक्षणे कर्मयोगे ज्ञानमप्यस्तीत्याह। ज्ञानयोग इति। आत्मयाथात्म्यज्ञानमिति प्राहुः तं कर्मयोगमेव विद्धि तदुपपादयति न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चनेति आत्मयाथात्म्यानुसंधानेनात्मनि प्रकृतावात्मसंकल्पः संन्यस्तः परित्यक्तो येन स संन्यस्तसंकल्पः अनेनैवंभूतो यः सोऽसंन्यस्तसंकल्पः न ह्युक्तेषु कर्मयोगेष्वनेवंभूतः कश्चन कर्मयोगी भवति ॥ २ ॥

अ० टी०—ननु कथमुक्तत्यागवान् योगी न भवेदित्याशङ्क्याह—**यं संन्यासमिति**। यं संन्यासमिति प्राहुः प्रकर्षेण सर्वात्मभावरूपेण आहुस्तत्स्वरूपविदो भक्तास्तेऽधुनाऽधिकाराभावान्नोच्यन्ते अग्रे वाच्यास्तं हे पाण्डव! योगं योगरूपं विद्धि जानीहि। पाण्डवेतिसंबोधनेन ज्ञानयोग्यता निरूपिता। तस्मिन् संन्यासे विप्रयोगरसानुभवरूपे स्वाकाङ्क्षितफलत्यागो भवत्यतः संयोगसिद्धिः। अस्मिंस्तदभावान्न तत्सिद्धिरित्याह—न हीति। असंन्यस्तसंकल्पः। न त्यक्तो मानसो नियमः स्वसुखानुभवरूपो येन तादृशः कश्चन भावादि-

मानपि योगी न भवति । हीति युक्तश्चायमर्थः । यतः स्वसुखानुभवेच्छोः प्रसुसुखानुभवेच्छा नोदेति परस्परमुभयोः स्थितिरेकत्र न संभवत्यतः स्वसुखानुभवरूपमानसनिश्चयत्यागवान् योगी भवतीतिभावः ॥ २ ॥

नी० टी०—केन साम्येनायं संन्यासी योगी चेति स्तूयते अत आह—**यमिति** । यो हि त्यक्तसर्वसंकल्पः स संन्यासी तादृशश्च ध्यानयोगी अतो न तयोर्भेदः । "निःसंकल्पस्तटस्थस्तिष्ठेदेतन्मोक्षलक्षणम्" इति मैत्रायणीयोपनिषच्छ्रुतस्य मोक्षलक्षणस्य निःसंकल्पत्वस्योभयत्रापि तुल्यत्वात् । अतोऽयमपि कर्मयोगी फलसंकल्पत्यागान्निःसंकल्पत्वसाम्यात् संन्यासी योगी च भवतीति स्तूयत इत्यर्थः । योगाधिकारसिद्धये निष्कामकर्माण्यनुष्ठेयानीति श्लोकद्वयतात्पर्यार्थः ॥ २ ॥

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

**शां० भा०—ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरङ्गं साधनमिति तं संन्यासत्वेन स्तुत्वाऽधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति—आरुरुक्षोरारोढुमिच्छतोऽनारूढस्य ध्यानयोगेऽवस्थातुमशक्तस्यैवेत्यर्थः । कस्याऽऽरुरुक्षोर्मुनेः कर्मफलसंन्यासिन इत्यर्थः । किमारुरुक्षोर्योगं कर्म कारणं साधनमुच्यते । योगारूढस्य पुनस्तस्यैव शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढत्वस्य साधनमुच्यत इत्यर्थः । यावद्यावत्कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते । तथा सति स झटिति योगारूढो भवति । तथा चोक्तं व्यासेन—"नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः" इति ॥ ३ ॥**

शां० आ०—परमार्थसंन्यासस्य कर्मयोगान्तर्भावे कर्मयोगस्यैव सदा कर्तव्यत्वमापद्येत तेनेतरस्यापि कृतत्वसिद्धेरित्याशङ्क्योक्तानुवादपूर्वकमुत्तरश्लोकतात्पर्यमाह—**ध्यानयोगस्येति** । भाविन्या वृत्त्या मुनेर्योगमारोढुमिच्छेरिष्यमाणस्य योगारोहणस्य कर्म हेतुश्चेदपेक्षितं योगमारूढस्यापि तत्फलप्राप्तौ तदेव कारणं भविष्यति तस्य कारणत्वे क्लृप्तशक्तित्वादित्याशङ्क्याऽऽह—**योगारूढस्येति** । अनारूढस्येत्येतस्यैवार्थं स्फुटयति—**ध्यानेति** । मुनित्वं कर्मफलसंन्यासिन्यौपचारिकमित्याह—**कर्मफलेति** । साधनं चित्तशुद्धिद्वारा ध्यानयोगप्राप्तीच्छायामिति शेषः । तस्येति प्रकृतस्य कर्मिणो ग्रहणम् । एवकारो भिन्नक्रमः शमशब्देन संबध्यते । कस्यान्ययोगव्यवच्छेदेन शमो हेतुरिति तत्राऽऽह—**योगारूढत्वस्येति** । सर्वव्यापारोपरमरूपोपशमस्य योगारूढत्वे कारणत्वं विवृणोति—**यावद्यावदिति** । सर्वकर्मनिवृत्तावायासाभावाद्वशीकृतेन्द्रियग्रामस्य चित्तसमाधाने योगारूढत्वं सिध्यतीत्यर्थः । सर्वकर्मोपरमस्य पुरुषार्थसाधनत्वे पौराणिकीं संमतिमाह—**तथा चेति** । एकता सर्वेषु भूतेषु वस्तुतोऽद्वैताभावोपलक्षितत्वमिति प्रतिपत्तिः । समता तेष्वेवौपाधिकविशेषेऽपि स्वतोनिर्विशेषत्वधीः । सत्यता तेषामेव हितवचनम् । शीलं स्वभावसंपत्तिः । स्थितिः स्थैर्यम् । दण्डनिधानमहिंसनम् । आर्जवमवक्रत्वम् । क्रियाभ्यः सर्वाभ्यः सकाशादुपरतिश्चेत्येतदुक्तं सर्वं यथा यादृशमेतादृशं नान्यद्ब्राह्मणस्य वित्तं पुमर्थसाधनमस्ति तस्मादेतदेवास्य निरतिशयं पुरुषार्थसाधनमित्यर्थः ॥ ३ ॥

**आ० भा०—कियत्कालं कर्म कर्त्तव्यमित्यत आह—आरुरुक्षोर्मुनेरिति । योगमारुरुक्षोरुपायसंपूर्तिमिच्छोः । योगमारूढस्य संपूर्णोपायस्य । अपरोक्षज्ञानिन इत्यर्थः । कारणं परमसुखकारणम् । अपरोक्षज्ञानिनोऽपि समाध्यादि फलमुक्तम् । तस्य सर्वोपशमेन समाधिरेव कारणं प्राधान्येनेत्यर्थः । तथाऽपि । यदा भोक्तव्योपरमस्तदैव सम्यगसंप्रज्ञातसमाधिर्जायते अन्यदा तु भगवच्चरितादौ स्थितिः । तच्चोक्तम् । 'ये त्वां पश्यंति भगवंस्त एव सुखिनः परम् । तेषामेव तु संक्रम्य समाधिर्जायते नृणाम् ॥ भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा । वर्तयंति महात्मानस्त्वद्भक्तास्तत्परायणाः' इति ॥ ३ ॥**

आ० ज०—नन्वेवं समाधियोगस्याधिकारिणि निरूपिते तं प्रति समाधिरभिधेयः आरुरुक्षोरित्यादि किमर्थमुच्यत इत्यत आह—**कियदिति**। समाधियोगाधिकारत्वेनोक्तं कर्म किं सकृदनुष्ठेयं उताफलप्राप्तेरिति प्रश्नार्थः। ननु योगो नाम नाश्वादिरिवारोढव्यः। तत्कथमुच्यते योगमारुरुक्षोर्योगारूढस्येति तत्राह—**योगमिति**। उपरिभवनसादृश्यादुपचार इत्यर्थः। उपायः समाधिरेव समाधेः फलपरिमाणाद्यवच्छेदाभावात् कीदृशी संपूर्णतेत्यत आह—**अपरोक्षेति**। साधनस्य हि पूर्णता साध्यायपर्याप्तत्वम्। अतो यावताऽपरोक्षज्ञानं संपद्यते तावत्त्वं संपूर्णत्वमिति भावः। ननु योगमारुरुक्षोः कर्म कारणं सन्निधानाद्योगारोहस्येति लभ्यते। कारणत्वाच्च तत्पर्यंतं कर्तव्यमिति। कार्यापेक्षया नियतपूर्वक्षणभावित्वात्कारणस्य योगारूढस्य तु शमः किं प्रति कारणं ज्ञानस्य तत एव सिद्धेरित्यत आह—**कारणमिति**। परमसुखं मुक्तिगतम्। नन्वयं प्रश्नो यदा ते मोहकलिलमिति परिहृतः। मैवम्। तत्र ज्ञानार्थिनाऽत्र तु योगारोहार्थिनेति भेदात्। तयोश्च साध्यसाधनयोः पृथक्त्वात्। अपरोक्षज्ञानिन इति चानतिविप्रकर्षेणोक्तत्वात्। तथोक्तमैहिकमप्रस्तुतप्रतिबंध इति। अथवा योगारूढस्यापि कर्तव्यं वक्तुं प्रश्नोत्तरानुवादोऽयमिति। नन्वपरोक्षज्ञानिनोऽन्याधेयातिशयस्य कथं शमः परमसुखकारणमुच्यत इत्यत आह—**अपरोक्षेति**। उक्तं समर्थितं द्वितीये। समाध्यादीत्यनेन शमशब्दार्थः समाधिरिति सूचितम्। तत्किं तस्यान्यत्कर्तव्यमेव नास्तीत्यत आह—**तस्येति**। सर्वोपशमेन सर्वविषयोपरतिलक्षणेनेति समाधौ शमशब्दं समर्थयितुमुक्तम्। कारणं सुखाभिवृद्धेः। तदविरोधेनान्यत्कार्यमिति भावः। यदि ज्ञानिनः समाधिरानंदवृद्धेः कारणं तर्हि तमेव कुतो न कुर्युः। कुतश्च व्याख्यानादौ प्रवर्ततइत्यत आह—**तथापीति**। भोक्तव्योपरमः। प्रतिबंधकप्रारब्धकर्मोपरमः। अन्यदा सम्यक्समाधिप्रतिबंधककर्मानुपरमकाले। अत्रागमसंमतिमाह—**तच्चेति**। परं केवलम्। तेषामेव सम्यगेव समाधिश्च जायत इति योजना। वर्तयंति वर्तंते काल नयंतीति वा॥ ३॥

**रा० भा०—'यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः' इत्युक्तं हि कर्मयोग एवाप्रमादेन योगं साधयतीत्याह। योगमात्मावलोकनं प्राप्तुमिच्छोर्मुमुक्षोः कर्मयोग एव कारणमुच्यते तस्यैव योगारूढस्य प्रतिष्ठितयोगस्यैव शमः कर्मनिवृत्तिः कारणमुच्यते यावदात्मावलोकनरूपमोक्षप्राप्तिस्तावत्कर्म कार्यमित्यर्थः॥ ३॥**

अ० टी०—ननु स्वसुखानुभवसंकल्पत्यागः सिद्धस्य भवति साधनदशापन्नस्य किं कर्त्तव्यमित्यतआह—आरुरुक्षोरिति। योगम् आरुरुक्षोः संयोगरसप्राप्तीच्छोर्मुनेर्मननशीलस्य कारणं कर्म सेवात्मकमनुकारणरूपमुच्यते कथ्यत इत्यर्थः। तस्यैव सेवादिकरणेन योगारूढस्य संयोगरसव्याप्तमनसः शमः अनुकरणादिकृतिरहितभावनाप्रवणस्थितिः कारणमुच्यते कथ्यते तत्प्राप्त्यर्थमिति शेषः॥ ३॥

नी० टी०—तत्र कर्मानुष्ठानस्यावधिमाह—**आरुरुक्षोरिति**। यावद्धि योगं यमनियमाद्यष्टांगोपेतमत्यौत्कंठ्यादारोढुमिच्छति तावत्कर्माण्यनुतिष्ठेत् तस्यारुरुक्षोर्मुनेरारुरुक्षाकारणं तीव्रवैराग्योत्पादनद्वारा कर्म भवति। तस्यैव योगारूढस्य योगांगानुष्ठाने प्रवृत्तस्य विक्षेपासहस्य योगारोहे कर्मणां शमः संन्यासः कारणमुच्यते। न हि कर्मसु व्यापृतोऽनन्यचित्ततया योगमनुष्ठातुमीष्टे॥ ३॥

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते॥**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते॥ ४॥**

**शां० भा०—अथेदानीं कदा योगारूढो भवतीत्युच्यते—यदा समाधीयमानचित्तो योगी हीन्द्रियार्थेष्विन्द्रियाणामर्थाः शब्दादयस्तेष्विन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या नानुषज्जतेऽनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः। सर्वसंकल्पसंन्यासी सर्वान्संकल्पानिहामुत्रार्थकामहेतून्संन्यसितुं शीलमस्येति सर्वसंकल्पसंन्यासी योगारूढः प्राप्तयोग इत्येतत्तदा तस्मिन्काल उच्यते। सर्वसंकल्पसंन्यासीति वचनात्सर्वांश्च कामान्सर्वाणि च कर्माणि संन्यसेदित्यर्थः। संकल्पमूला हि सर्वे कामाः—'संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः। काम जा-**

नामि ते मूलं संकल्पात्त्वं हि जायसे ॥ न त्वा संकल्पयिष्यामि तेन मे न भविष्यसि' इत्यादिस्मृतेः । सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति "स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते" इत्यादिश्रुतिभ्यो'यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम्' इत्यादिस्मृतिभ्यश्च न्यायाच्च । न हि सर्वसंकल्पसंन्यासे कश्चित्स्पन्दितुमपि शक्तः । तस्मात्सर्वसंकल्पसंन्यासीति वचनात्सर्वान्कामान्सर्वाणि कर्माणि च त्याजयति भगवान् ॥ ४ ॥

**शां० आ०**—योगप्राप्तौ कारणकथनानन्तरं तत्प्राप्तिकालं दर्शयितुं श्लोकान्तरमवतारयति—**अथेति** । समाधानावस्था यदेत्युच्यते । अत एवोक्तं समाधीयमानचित्तो योगीति । शब्दादिषु कर्मसु चानुषङ्गस्य योगारोहणप्रतिबन्धकत्वात्तदभावस्य तदुपायत्वं प्रसिद्धमिति द्योतयितुं हीत्युक्तम् । सर्वेषामपि संकल्पानां योगारोहणप्रतिबन्धकत्वमभिप्रेत्य सर्वसंकल्पसंन्यासीत्यत्र विवक्षितमर्थमाह—**सर्वानिति** । सर्वसंकल्पसंन्यासेऽपि सर्वेषां कामानां कर्मणां च प्रतिबन्धकत्वसंभवे कुतो योगप्राप्तिरित्याशङ्क्याऽऽह—**सर्वेति** । सर्वसंकल्पपरित्यागे यथोक्तविध्यनुष्ठानमयत्नसिद्धमिति मन्वानः सन्नाह—**संकल्पेति** । मूलोन्मूलने च तत्कार्यनिवृत्तिरयत्नलभ्येति भावः । तत्र प्रमाणमाह—**संकल्पमूल इति** । तत्रान्वयव्यतिरेकावभिप्रेत्योक्तमुपपादयाति—**कामेति** । सर्वसंकल्पाभावे कामाभाववत्कर्माभावस्य सिद्धत्वेऽपि कर्मणां कामकार्यत्वात्तन्निवृत्तिप्रयुक्तामपि निवृत्तिमुपन्यस्यति—**सर्वकामेति** । यदुक्तं कर्मणां कामकार्यत्वं तत्र श्रुतिस्मृती प्रमाणयति—**स यथेति** । स पुरुषः स्वरूपमजानन्यत्फलकामो भवति तत्साधनमनुष्ठेयतया बुद्धौ धारयतीति तत्क्रतुर्भवति यच्चानुष्ठेयतया गृह्णाति तदेव कर्म बहिरपि करोतीति कामाधीनं कर्मोक्तमिति श्रुत्यर्थः । कामजन्यं कर्मेत्यन्वयव्यतिरेकसिद्धमिति द्योतयितुं स्मृतौ हिशब्दः । न्यायमेव दर्शयति—**न हि सर्वसंकल्पेति** । स्वापादावदर्शनादित्यर्थः । नित्यनैमित्तिककर्मानुष्ठानं दूरनिरस्तमिति वक्तुमपिशब्दः । श्रुतिस्मृतिन्यायसिद्धमर्थमुपसंहराति—**तस्मादिति** ॥ ४ ॥

**आ० भा०**—योगारूढस्य लक्षणमाह—यदेति । सम्यगननुषंगस्तस्यैव भवति । उक्तं च । 'स्वतो दोषक्षयो दृष्ट्वा त्वितरेषां प्रयत्नतः' इति ॥ ४ ॥

**आ० ज०**—स्फुटमपि तात्पर्यं मंदानुजिघृक्षयाऽऽह—**योगेति** । अपरोक्षज्ञानं तु योगारोहस्य कार्यं सति प्रतिबंधे विलंबत इति न लक्षणम् । नन्विदं साधकेऽपि विद्यते वशे हि यस्येंद्रियाणीत्यादेः । अतोऽतिव्यापकमित्यत आह—**सम्यगिति** । प्रयत्नं विनेत्यर्थः । तस्यैव योगारूढस्यैव । अत्र प्रमाणमाह—**उक्तं चेति** । परमात्मानं दृष्ट्वा त्वाप्यत इति शेषः । मुख्य एव चाननुषंगोऽत्र विवक्षित इति भावः ॥ ४ ॥

**रा० भा०**—कदा प्रतिष्ठितयोगो भवतीत्यत्राह । यदाऽयं योगी आत्मैकानुभवस्वभावतया इन्द्रियार्थेष्वात्मव्यतिरिक्तप्राकृतविषयेषु तत्संबन्धिषु कर्मसु च नानुषज्जते न सङ्गमर्हति तदा हि सर्वसंकल्पसंन्यासी योगारूढ इत्युच्यते तस्मादारुरुक्षोर्विषयानुभवार्हतया तदननुषङ्गाभ्यासरूपः कर्मयोग एव निष्पत्तिकारणम् अतो विषयाननुषङ्गाभ्यासरूपं कर्मयोगमेवारुरुक्षुः कुर्यात् ॥ ४ ॥

**अ० टी०**—स योगारूढः कथं ज्ञातव्य इत्यत आह—**यदाहीति** । यदा इन्द्रियार्थेषु रूपादिषु उत्कटतापनिवृत्त्यर्थं स्वप्नादिप्राप्तेषु हीतिनिश्चयेन पुरुषार्थरूपेण नानुषज्जते नाऽऽसक्तो भवति । न कर्मसु तत्साधककृतिरूपेषु अनुषज्जते नाऽऽसक्तो भवति । सर्वसंकल्पसंन्यासी मनोनिश्चयात्मकस्वभोगेच्छादित्यागवान् यो नासक्तो भवेत्तदा योगारूढः संयोगभावे प्रतिष्ठित उच्यते कथ्यत इत्यर्थः ॥ ४ ॥

**नी० टी०**—ननु योगपदेन मुख्यया वृत्त्या निर्बीजः समाधिरुच्यते तमारूढस्य कर्मणां त्यागः स्वतः सिद्धत्वादविधेय इत्याशंक्य प्रकृते योगारूढपदस्यार्थमाह—**यदा हीति** । इंद्रियार्थेषु शब्दादिषु रमणीयेषु कर्मसु च तत्प्राप्तिसाधनेषु तद्दर्शनमनु न सजते वैराग्यदार्ढ्यात्सक्तो न भवति । नापि मनसा इदं मे भूयादेतदर्थमहमिदं कर्म कुर्यामिति संकल्पयति । तादृशश्च सर्वसंकल्पसंन्यासी यदा भवति तदा योगारूढ

इत्युच्यते । यथा तीव्रबुभुक्षयोपेतोऽन्यत्र नीरागो व्यासंगांतरं त्यक्त्वा भोजनारूढ एव भवति तथा तीव्रारुरुक्षावान् सर्वत्र वीतरागस्त्यक्तसर्वकर्मा योगारूढ एव भवति तावत्कर्माणि कर्तव्यानि ततःपरं त्याज्यानीत्यर्थः ॥ ४ ॥

**उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत् ॥**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥**

**शां० भा०—**यदैवं योगारूढस्तदा तेनाऽऽत्माऽऽत्मनोद्धृतो भवति संसारादनर्थजातादतः—उद्धरेत्संसारसागरे निमग्नमात्मनाऽऽत्मानं तत उदूर्ध्वं हरेदुद्धरेद्योगारूढतामापादयेदित्यर्थः । नाऽऽत्मानमवसादयेन्नाधो नयेन्नाधो गमयेत् । आत्मैव हि यस्मादात्मनो बन्धुः । न ह्यन्यः कश्चिद्बन्धुर्यः संसारमुक्तये भवति । बन्धुरपि तावन्मोक्षं प्रति प्रतिकूल एव स्नेहादिबन्धनायतनत्वात्तस्माद्युक्तमवधारणमात्मैव ह्यात्मनो बन्धुरिति । आत्मैव रिपुः शत्रुर्योऽन्योऽपकारी बाह्यः शत्रुः सोऽप्यात्मप्रयुक्त एवेति युक्तमेवावधारणमात्मैव रिपुरात्मन इति ॥ ५ ॥

**शां० आ०—**योगारूढस्य किं स्यादित्याशङ्क्याऽऽह—**यदैवमिति** । योगारोहस्य दृष्टादृष्टोपायैरवश्यकर्तव्यतायै मुक्तिहेतुत्वं तद्विपर्ययस्याधःपतनहेतुत्वं च दर्शयति—**अत इति** । तत्र हेतुमाह—**आत्मैव हीति** । उद्धरणापेक्षामात्मनः सूचयति—**संसारेति** । संसारादूर्ध्वं हरणं कीदृगित्याशङ्क्याऽऽह—**योगारूढतामिति** । योगप्राप्तावनास्था तु न कर्तव्येत्याह—**नाऽऽत्मानमिति** । योगप्राप्त्युपायश्चेन्नानुष्ठीयते तदा योगाभावे संसारपरिहारासंभवादात्माऽधो नीतः स्यादित्यर्थः । नन्वात्मानं संसारे निमग्नं तदीयो बन्धुस्तस्मादुद्धरिष्यति नेत्याह—**आत्मैव हीति** ।कुतोऽवधारणमन्यस्यापि प्रसिद्धस्य बन्धोः संभवात्तत्राऽऽह—**न हीति** । अन्यो बन्धुः सन्नपि संसारमुक्तये न भवतीत्येतदुपपादयति—**बन्धुरपीति** । स्नेहादीत्यादिशब्दात्तदनुगुणप्रवृत्तिविषयत्वं गृह्यते । आत्मातिरिक्तस्यापि शत्रोरपकारिणः सुप्रसिद्धत्वादवधारणमनुचितमित्याशङ्क्याऽऽह—**योऽन्य इति** ॥ ५ ॥

**आ० भा०—**स च योगारोहः प्रयत्नेन कर्तव्यइत्याह—उद्धरेदित्यादिना ॥ ५ ॥

**आ० ज०—**नन्वेवं विद्व्द्युपयुक्तमुक्त्वा समाधियोगे विधेये किमर्थमात्मोद्धारकर्तव्यतोच्यते इत्यतोऽनया वाचोभंग्या योग एव विधीयत इत्याह—**स चेति** । तस्याधिकार्यादिकमुक्तं स एव च योग इति वक्तव्ये यदाऽऽरोहग्रहणं कृतं तेन तावत्पर्यंतं योगः कर्तव्यः । न मध्य एव त्याज्य इति ज्ञापनार्थम् । प्रयत्नेनाभियोगेन ॥ ५ ॥

**रा० भा०—**तदेवाह । आत्मना मनसा विषयाननुषक्तेन मनसा आत्मानमुद्धरेत् तद्विपरीतेन मनसा आत्मानं नावसादयेत् आत्मैव मन एव ह्यात्मनो बन्धुस्तदेवात्मनो रिपुः ॥ ५ ॥

**अ० टी०—**ननु कर्मसु भगवल्लीलानुकरणरूपेषु मनोहरणैकस्वभावेषु कथमासक्तिर्न स्यादित्याकाङ्क्षायामाह—**उद्धरेदिति** । आत्मना पुरुषोत्तमरूपेण आत्मानं जीवं कर्मभ्य उद्धरेत् आत्मानं न अवसादयेत् तत्रैवासक्तियुक्तं न कुर्यात् । हि युक्तश्चायमर्थः । आत्मनो जीवस्य आत्मैव जीव एव बन्धुः हितकृत् । आत्मनो जीवस्य आत्मैव स एव रिपुः शत्रुरत आत्मना आत्मानमुद्धरेद्बन्धुभावेन । न रिपुभावेन अवसादयेत् ॥ ५ ॥

**नी० टी०—**उद्धरेदिति । एवं क्रमेण कर्मद्वारा चित्तशुद्धिं संपाद्य योगारूढोऽभ्यासवैराग्यबलेनात्मानमुद्धरेत् । हि यस्मादात्मैवात्मनो बंधुर्न पुत्रादय उद्धर्तुं क्षमाः । आत्मैव रिपुरात्मनः न त्वन्ये शत्रवः संसारे मज्जयितुमेनं क्षमा इत्यर्थः ॥ ५ ॥

**बन्धुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जितः ॥**
**अनात्मनस्तु शत्रुत्वे वर्तेताऽऽत्मैव शत्रुवत् ॥ ६ ॥**

**शां० भा०**—आत्मैव बन्धुरात्मैव रिपुरात्मन इत्युक्तं तत्र किंलक्षण आत्मनो बन्धुः किंलक्षणो वाऽऽत्मनो रिपुरित्युच्यते—बन्धुरात्माऽऽत्मनस्तस्य तस्याऽऽत्मनः स आत्मा बन्धुर्येनाऽऽत्मनाऽऽत्मैव जित आत्मा कार्यकरणसंघातो येन वशीकृतो जितेन्द्रिय इत्यर्थः । अनात्मनस्त्वजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्तेताऽऽत्मैव शत्रुवद्यथाऽनात्मा शत्रुरात्मनोऽपकारी तथाऽऽत्माऽऽत्मनोऽपकारे वर्तेतेत्यर्थः ॥ ६ ॥

**शां० आ०**—उक्तमनूद्य प्रश्नपूर्वकं श्लोकान्तरमवतारयति—**आत्मैवेत्यादिना** । एकस्यैवाऽऽत्मनो मिथो विरुद्धं बन्धुत्वं रिपुत्वं च लक्षणभेदमन्तरेणायुक्तमिति चोदिते वशीकृतसंघातस्याऽऽत्मानं प्रति बन्धुत्वमितरस्य शत्रुत्वामित्यविरोधं दर्शयति—**बन्धुरित्यादिना** । वशीकृतसंघातस्य विक्षेपाभावादात्मनि समाधानसंभवादुपपन्नमात्मानं प्रति बन्धुत्वमिति साधयति—**तस्येति** । अवशीकृतसंघातस्य पुनर्विक्षेपोपपत्तेरात्मानि समाधानायोगादात्मानं प्रति शत्रुभावे प्रसिद्धशत्रुवदात्मैव शत्रुत्वेन वर्तेतेत्युत्तरार्धं व्याकरोति—**अनात्मन इति** । दृष्टांतं व्याचष्टे—**यथेति** । उक्तदृष्टान्तवशादवशीकृतसंघातः स्वस्य हितानाचरणादात्मानं प्रति शत्रुरेवेति दार्ष्टान्तिकमाह—**तथेति** ॥ ६ ॥

**आ० भा०**—कस्य बंधुरात्मेत्याह—बंधुरात्मेति । आत्मा मनः आत्मनो जीवस्य । आत्मना मनसा आत्मानं जीवम् आत्मैव मनः आत्मना बुद्ध्या जीवेनैव वा । स हि बुद्ध्या विजयति । उक्तं च । "मनः परं कारणमामनंति ॥ मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥ उद्धरेन्मनसा जीवं न जीवमवसादयेत् ॥ जीवस्य बंधुः शत्रुश्च मन एव न संशयः ॥ जीवेन बुद्ध्या हि यदा मनो जितं तदा बंधुः शत्रुरन्यत्र चास्य ॥ ततो जयेद्बुद्धिबलो नरस्तद्देवे च भक्त्या मधुकैटभारौ' इत्यादि ब्रह्मवैवर्ते । अनात्मनः अजितात्मनः पुरुषस्य अजितमनस्कस्य सदपि मनोऽनुपकारीत्यनात्मा सन्नपि भृत्यो न यस्य भृत्यपदे वर्तते सद्यभृत्यः । तस्यात्मन एव शत्रुवच्छत्रुत्वे वर्तते ॥ ६ ॥

**आ० ज०**—आत्मैव हीत्युक्तमेवोत्तरश्लोके किमिति कथ्यत इति मंदाशंकानिरासार्थमाह—**कस्येति** । किं विशेषणश्चेत्यपि ग्राह्यम् । तस्यैव तमेव प्रति बंधुत्वं रिपुत्वं च विरुद्धम् । तद्विशेषणभेदेन व्यवस्थाप्यम् । तथा च किंविशेषणस्यात्मनः किं विशेषणो वाऽत्मा बंधू रिपुश्चेत्यर्थः । इति पृच्छायामिति शेषः । आत्मा आत्मन इतिपदद्वयम् । आत्मशब्दस्यानेकार्थत्वाद्व्याचष्टे—**आत्मेति** । नन्वाद्यश्लोके स्वपर्याय एवात्मशब्दः प्रकृतः । तदुपपादकद्वितीये कथमन्योऽर्थइत्यत आह—**आत्मनेति** । अनयैव रीत्याऽद्य श्लोकोत्तरार्धगतात्मशब्दव्याख्यानं द्रष्टव्यम् । येनात्मैवात्मनाजितइत्यत्रात्मशब्दौ व्याचष्टे—**आत्मैवेति** । एवशब्दोपादानं व्याख्येयविवेकार्थम् । जीवेनैवेत्यवधारणं प्राधान्यज्ञापनार्थम् । यदाऽत्मशब्दो जीवे तदा कर्तरि तृतीया । यदा बुद्धौ तदा करण इति ज्ञापयन्नुपपादयाति—**स हीति** । विजयति विजयते मन इति शेषः । स्वेनैवेत्यादिव्याख्याननिरासार्थमुक्तेऽर्थे प्रमाणान्याह—**उक्तं चेति** । अनात्मन इति नञ्समासो बहुव्रीहिर्वा स्यात् । नाद्यः आत्मनआत्मान्यत्वानुपपत्तेः आत्मांतरादन्यत्वस्य च प्रकृतेऽनुपयोगात् । न द्वितीयः । आत्मशब्दस्य जीववाचित्वे वा मनोवाचित्वे वा संसारिणि तदभावस्यासंभवादित्यत आह—**अनात्मन इति** । बहुव्रीहिपरिग्रहसूचनाय पुरुषस्येत्यन्यपदार्थो दर्शितः । अनात्मशब्दार्थं दर्शयितुमाह—**अजितेति** । नन्वविद्यमान आत्मा यस्यासावनात्मा तत्कथमुच्यतेऽजितात्मन इति तत्राह—**सदपीति** । विद्यमानमपि मनोऽजितमनुपकारीति । अविद्यमानसादृश्यादविद्यमानतामुपचर्यअजितात्मा अनात्मोक्त इत्यर्थः । गौणप्रयोगे किं प्रयोजनमिति चेत् न रूढोपचारे प्रयोजनानपेक्षणात् इति भावेनाह—**सन्नपीति** । भृत्यपदे सेवादौ । पदानां व्यवहितत्वादनात्मनइत्यर्धं व्याचष्टे—**तस्येति** । तस्याजितमनस्कस्य बंधुरेवेत्येवार्थः । शत्रुवत्प्रसिद्धशत्रुरिव शत्रुत्वेऽपकारित्वे ॥ ६ ॥

**रा० भा०**—येन पुरुषेण स्वेनैव स्वमनो विषयेभ्यो जितं तन्मनः तस्य बन्धुः अनात्मनः अजितमनसः स्वकीयमेव मनः स्वस्य शत्रुवत् शत्रुत्वे वर्तेत स्वनिःश्रेयसाविपरीते वर्तेतेत्यर्थः । यथोक्तं भगवता

पराशरेणापि "मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः" इति ॥ ६ ॥

अ० टी०—ननु कथं स एव बन्धुः कथं वा स एव शत्रुरित्यत आह—**बन्धुरिति**। येन आत्मना भावस्वरूपेण आत्मा जितः वशीकृतः अधिकरणादिदेहकृतिभ्यो भावरूपे स्थापित इत्यर्थः। तस्य आत्मन आत्मैव बन्धुर्हितकृद्भवतीत्यर्थः। स्वस्य दास्यार्थे प्रकटितस्य तदुचितकरणैकभावप्रयुक्तसंतोषेण बन्धुस्तद्भावस्वरूप एव स्वाधिदैविकस्वरूपेण भवतीतिभावः। तु पुनः। अनात्मनः भावस्वरूपरहितस्य आत्मैव शत्रुवत् शत्रुत्वे तद्भावप्रतिबन्धके वर्तेत। तथाचायमर्थः भावरहितकेवलकर्मासक्तस्वदास्यार्थप्रकटितप्रयोजनरहितस्वस्य स्वरूपानर्थक्यकृतिरोषेणाधिदैविक आत्मा अत्र कर्मसु सेवादिषु तदावेशप्रतिबन्धको भवेत् ॥ ६॥

नी० टी०—आत्मा मनः आत्मना मनसा अनात्मनोऽजितचेतसः आत्मा मन एव शत्रुः ॥ ६ ॥

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ॥**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥**

**शां० भा०—जितात्मन इति। जितात्मनः कार्यकरणादिसंघात आत्मा जितो येन स जितात्मा तस्य जितात्मनः प्रशान्तस्य प्रसन्नान्तःकरणस्य सतः संन्यासिनः परमात्मा समाहितः साक्षादात्मभावेन वर्तत इत्यर्थः। किंच शीतोष्णसुखदुःखेषु तथा मानेऽपमाने च मानापमानयोः पूजापरिभवयोः ॥ ७ ॥**

शां० आ०—कथं संयतकार्यकरणस्य बन्धुरात्मेति तत्राऽऽह—**जितात्मन इति**। जितकार्यकरणसंघातस्य प्रकर्षेणोपरतबाह्याभ्यन्तरकरणस्य परमात्मा विक्षेपेण पुनः पुनरनभिभूयमानो निरन्तरं चित्ते प्रथत इत्यर्थः। जितात्मानं संन्यस्तसमस्तकर्माणमधिकारिणं प्रदर्श्य योगाङ्गानि दर्शयति—**शीतेति**। समः स्यादित्यध्याहारः। पूर्वार्धं व्याचष्टे—**जितेत्यादिना**। न केवलं तस्य परमात्मा साक्षादात्मभावेन वर्तते किं तु शीतोष्णादिभिरपि नासौ चाल्यते तत्त्वज्ञानादित्युत्तरार्धं विभजते—**किंचेति**। तेषु समः स्यादिति संबन्धः ॥ ७ ॥

**आ० भा०—जितात्मनः फलमाह—जितात्मन इति। जितात्मा हि प्रशांतो भवति। न तस्य मनः प्रायो विषयेषु गच्छति। तदा च परमात्मा सम्यगाहितः। हृदि सन्निहितो भवति। अपरोक्षज्ञानी भवतीत्यर्थः। अपरोक्षज्ञानिनो लक्षणं स्पष्टयति—शीतोष्णेत्यादिना। शीतोष्णादिषु कूटस्थः। ज्ञानविज्ञानतृप्तात्मा विजितेन्द्रिय इति कूटस्थत्वे हेतुः। विज्ञानं विशेषज्ञानम् अपरोक्षज्ञानं वा। तच्चोक्तं 'सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः॥ देवादीनां तु तज्ज्ञानं विज्ञानमिति कीर्तितम्' इति। 'श्रवणान्मननाच्चैव यज्ज्ञानमुपजायते। तज्ज्ञानं दर्शनं विष्णोर्विज्ञानं शंभुरब्रवीत् ॥ विज्ञानं ज्ञानमंगादेर्विशिष्टं दर्शनं तथा' इत्यादि। कूटस्थो निर्विकारः। कूटवत्स्थित इति व्युत्पत्तेः कूटमाकाशः 'कूटं खं विदलं व्योमसंधिराकाश उच्यते' इत्यभिधानात्। योगी योगं कुर्वन्। युक्तो योगसंपूर्णः एवंभूतो योगानुष्ठाता योगसंपूर्ण उच्यत इत्यर्थः ॥ ७ ॥**

आ० ज०—योगो विहितः तत्किं जितात्मन इत्यनेनेत्यत आह—**जितात्मन इति**। उपकारी हि बंधुरुच्यते। तत्र जितं मनः कमुपकारं करोति। येन बंधुः स्यात्। आत्मोद्धारं करोतीति चेत्। स एव च क इत्याशंक्येति शेषः। जितात्मनः फले वक्तव्ये प्रशांतस्येत्यनुवादः किमर्थ इत्यत आह—**जितात्माहीति**। वाक्यभेदेनेदमेव फलकथनमिति भावः ननु जितात्मन-

मेव प्रशांतत्वं तत्कथं तत्फलं स्यादित्यत आह—**नेति**। तस्य जितात्मनः स्वत एवेति शेषः। तर्हि निराकांक्षत्वादुत्तरं वाक्यं व्यर्थमित्यतः परमफलं दर्शयितुं तदिति भावेन न्यूनमध्याहारेण पूरयन्व्याचष्टे—**तदा चेति**। प्रशांतत्वे सति परमात्मा सर्वेषां हृदि सन्निहित एव। तत्कुतः प्रशांतस्य विशेष इत्यतः सम्यक्पदसूचितार्थं विवृणोति—**अपरोक्षेति**। योगारूढ इत्यर्थः। यदा हीति योगारूढस्य लक्षणमुक्तं तत्किमर्थं पुनरुच्यत इत्यतआह—**अपरोक्षेति**। सार्धश्लोकद्वयग्रहणायादिपदं अत्र सप्तम्या अन्वयो न दृश्यतेऽत आह—**शीतेति**। अत्र भास्करोऽन्वयमपश्यन् परमात्मा समाहित इति संप्रदायागतं पाठं विसृज्य परात्मसु समा मतिरिति पाठांतरं प्रकल्प्य समामतिरिति तु आवर्त्य सप्तम्या अन्वयमुक्त्वा पूर्वपाठेऽन्वयाभाव इत्यवादीत्। तदनेनापहसितं भवति। कृत्रिमेऽपि पाठे सुहृदित्यादिकमात्मौपम्येनेत्यादिकं च पुनरुक्तं स्यात्। ननु यः शीतोष्णादिषु कूटस्थः तस्य ज्ञानविज्ञानतृप्तमनस्त्वं विजितेंद्रियत्वं चार्थात्सिद्धमेव तत्किमर्थं पुनरुच्यत इत्यत आह—**ज्ञानेति**। प्रत्येकमन्वयादेकवचनम्। ननु शिल्पादिविषया बुद्धिर्विज्ञानम्। 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः' इत्यभिधानात्। तत्कथं विज्ञानेन तृप्तात्माऽयं स्यादित्यत आह—**विज्ञानमिति**। अनेन सामान्यज्ञानं परोक्षज्ञानं वा ज्ञानमिति सूचितम्। कुत एतदित्यत आह—**तच्चेति**। प्रसिद्धाभिधानार्थोऽप्यंगीक्रियत इति चशब्दः। सामान्यैः साधारणैः पुरुषैः सामान्यविषयं तु ज्ञानमित्यपि द्रष्टव्यम्। तदेव ज्ञानमिति संबंधः। अंगादेर्व्याकरणादेः। शिल्पस्य च विशिष्टं दर्शनं वैष्णवशास्त्रम्। कूटस्थशब्दो नित्यादिपर्यायः तेन कथमन्वयः सप्तम्या इत्यत आह—**कूटस्थ इति**। तत्कथमित्यत आह—**कूटवदिति**। सुपिस्थ इतिवचनात्। कूटशब्दोऽनृतवाद्यादिवाची। तत्परिग्रहे निर्विकारत्वं न लभ्यत इत्यत आह—**कूटमिति**। एतैः शब्दैः आकाश उच्यत इत्यर्थः। युक्तो योगीतिपुनरुक्तिरिति मंदाशंकानिरासार्थमाह—**योगीति**। इनेरस्त्यर्थत्वात् कुर्वन्नित्युक्तम्। निष्ठाया भूतार्थत्वात्। संपूर्ण इति वक्ष्यमाणान्वयापेक्षया क्रमोल्लंघनम्। तर्हि विरुद्धार्थयोः कथं सामानाधिकरण्यमित्यत आह—**एवंभूत इति**। धातुसंबंधेप्रत्यया इति ह्युक्तम् ॥ ७ ॥

**रा० भा०—योगारम्भयोग्यावस्थोच्यते। शीतोष्णसुखदुःखेषु मानापमानयोश्च जितात्मनः जितमनसः विकाररहितमनसः प्रशान्तस्य मनसि परमात्मा समाहितः सम्यगाहितः स्वरूपेणावस्थितः प्रत्यगात्माऽत्र परमात्मेत्युच्यते तस्यैव प्रकृतत्वात् तस्यापि पूर्वपूर्वावस्थापेक्षया परमात्मत्वात् आत्मा परं समाहित इति वा संबन्धः ॥ ७ ॥**

**अ० टी०**—ननु बन्धुत्वे कथं हितकृद्भवेदित्यत आह—**जितात्मनइति**। जितात्मनः वशीकृतभावात्मनः शीतोष्णसुखदुःखेषु संयोगविप्रयोगेषु प्रशान्तस्य संयोगे स्वसौभाग्यादिमदरहितस्य विप्रयोगे क्लेशेन प्रिये दोषारोपरहितस्य तथा भगवतः सकाशान्मानापमानयोः समस्य परमात्मा पुरुषोत्तमः समाहितस्तदर्थं दास्यदाने सावधानस्तिष्ठति। तद्धृदय एव समाहितस्तिष्ठतीतिभावः ॥ ७ ॥

**नी० टी०**—मनसो जये फलमाह—**जितात्मन इति**। शीतोष्णादिषु प्राप्तेषु जितात्मनो निर्विकारचित्तस्यात्मा चित्तं परमुत्कर्षेण समाहितः समाधिं प्राप्तो भवति। अतः समाधिसिद्ध्यर्थं मनो जेतव्यमेवेत्यर्थः ॥ ७ ॥

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ॥**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥**

**शां० भा०—ज्ञानेति। ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानं, विज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणं ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः संजातालंप्रत्यय आत्माऽन्तःकरणं यस्य स ज्ञानविज्ञानतृप्तात्मा कूटस्थोऽप्रकम्प्यो भवतीत्यर्थः। विजितेन्द्रियश्च। य ईदृशो युक्तः समाहित इति स उच्यते कथ्यते। स योगी समलोष्टाश्मकाञ्चनो लोष्टाश्मकाञ्चनानि समानि यस्य स समलोष्टाश्मकाञ्चनः ॥ ८ ॥**

शां० आ०—चित्तसमाधानमेव विशिष्टं फलं चेदिष्टं तर्हि कथंभूतः समाहितो व्यवह्रियते तत्राऽऽह—ज्ञानेति। परोक्षापरोक्षाभ्यां ज्ञानविज्ञानाभ्यां संजातोऽलंप्रत्ययो यस्मिन्नन्तःकरणे सोऽविक्रियो हर्षविषादकामक्रोधादिरहितो योगी युक्तः समाहित इति व्यवहारभागी भवतीति पादत्रयव्याख्यानेन दर्शयति—ज्ञानमित्यादिना। स च योगी परमहंसपरिव्राजकः सर्वत्रोपेक्षाबुद्धिरनतिशयवैराग्यभागीति कथयति—स योगीति ॥ ८ ॥

आ० भा०—॥ ८ ॥

आ० ज०—॥ ८ ॥

रा० भा०—ज्ञानविज्ञानतृप्तात्मा आत्मस्वरूपविषयेण ज्ञानेन तस्य च प्रकृतिविसजातीयाकारविषयेण ज्ञानेन च तृप्तमनाः कूटस्थः देवाद्यवस्थास्वनुवर्तमानः सर्वसाधारणज्ञानैकाकारात्मनि स्थितस्तत एव विजितेन्द्रियः समलोष्टाश्मकाञ्चनः प्रकृतिविविक्तस्वरूपनिष्ठतया प्राकृतवस्तुविशेषेषु भोग्यत्वाभावात् लोष्टाश्मकाञ्चनेषु समप्रयोजनो यः कर्मयोगी स युक्त इत्युच्यते। आत्मावलोकनरूपयोगाभ्यासार्ह उच्यते ॥ ८ ॥

अ० टी०—ननु परमात्मा हृदयस्थोऽस्तीति कथं ज्ञातव्य इत्याकाङ्क्षायामाह—ज्ञानविज्ञानतृप्तात्मेति। ज्ञाने शास्त्ररीत्या भगवत्स्वरूपज्ञाने विज्ञाने भावात्मकस्वरूपानुभवे तृप्तः संशयकोटिरहित आत्मा अन्तःकरणं यस्य। कूटस्थः निर्विकारः भगवच्चरणस्वरूपैकनिष्ठः। विजितेन्द्रियः स्वभोगेच्छारहितः। युक्तो योगारूढ इत्युच्यते। समलोष्टाश्मकाञ्चनः। मृत्पाषाणसुवर्णेषु समो भगवदीयभावरूपवान् योगी मत्संयोगवानुच्यते मयेतिशेषः। अत्रायं भावः। मृत्तिकायां भगवदङ्गसौगन्ध्यस्मरणेन सेवौपायिकशरीरासितापभाववान्। पाषाणे भगवद्विप्रयोगजडतास्मरणेन स्वस्य तदभावतापात्तत्र स्निग्धभाववान् सौवर्णे चालौकिककान्तिदर्शनेन रसभाववांस्तथोच्यत इतिभावः ॥ ८ ॥

नी० टी०—समाधिसिद्धेरपि किं फलमत आह—ज्ञानेति। ज्ञानं शास्त्रोपदेशजा बुद्धिः। विज्ञानं शास्त्रार्थध्यानजः प्रमारूपोऽनुभवस्ताभ्यां तृप्तः संजातालंप्रत्यय आत्मा चित्तं यस्य स ज्ञानविज्ञानतृप्तात्मा। यतस्तृप्तात्माऽतः कूटस्थोऽप्रकंप्यः संसारतापानास्कंदितो भवतीति समाधिफलं। अस्य लोकप्रसिद्धं लक्षणमाह—विजितेन्द्रिय इति। समलोष्टाश्मकांचन इत्येवंविधो योगी स युक्तः प्राप्तयोग इत्युच्यते विद्वद्भिः॥८॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ॥**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

शां० भा०—किंच—सुहृदित्यादिश्लोकार्धमेकं पदम्। सुहृदिति प्रत्युपकारमनपेक्ष्योपकर्ता। मित्रं स्नेहवान्। अरिः शत्रुः। उदासीनो न कस्यचित्पक्षं भजते। मध्यस्थो यो विरुद्धयोरुभयोर्हितैषी। द्वेष्य आत्मनोऽप्रियः। बन्धुः संबन्धीत्येतेषु साधुषु शास्त्रानुवर्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः कः किं कर्मेत्यव्यापृतबुद्धिरित्यर्थः। विशिष्यते विमुच्यत इति वा पाठान्तरम्। योगारूढानां सर्वेषामयमुत्तम इत्यर्थः ॥ ९ ॥

शां० आ०—योगारूढस्य प्रशस्ततवमभ्युपेत्य योगस्याङ्गान्तरं दर्शयति—किंचेति। पदच्छेदः पदार्थोक्तिरिति व्याख्यानाङ्गं संपादयति—सुहृदितीति। अरिर्नाम परोक्षमपकारकः प्रत्यक्षमप्रियो द्वेष्य इति विभागः। समबुद्धिरिति व्याचष्टे—कः किमिति। प्रथमो हि प्रश्नो जातिगोत्रादिविषयो द्वितीयो व्यापारविषयः। उक्तप्रकारेणाव्यापृतबुद्धेः सर्वोत्कर्षो वा सर्वपापविमोक्षो वा सिध्यतीत्याह—विशिष्यत इति। पाठद्वयेऽपि सिद्धमर्थं संगृह्य कथयति—योगारूढानामिति ॥ ९ ॥

**आ० भा०**—स एव च सर्वस्माद्विशिष्यते । साधुपापादिषु समबुद्धिः जीवचितः । परमात्मनः सर्वस्य तन्निमित्तकत्वस्य च सर्वत्रैकरूप्येण । चिद्रूपा एव हि जीवाः । विशेषस्त्वंतःकरणकृतः । सर्वेषां साधुत्वादिकं सर्वमीश्वरकृतमेव । स्वतो न किंचिदपि । उक्तं चैतत्सर्वम् । 'स्वतः सर्वेपि चिद्रूपाः सर्वदोषविवर्जिताः । जीवास्तेषां तु ये दोषास्त उपाधिकृता मताः ॥ सर्वं चेश्वरतस्तेषां न किंचित्स्वत एव तु । समा एवं ह्यतः सर्वे वैषम्यं भ्रांतिसंभवम् ॥ एवं समानजीवास्तु विशेषो देवतादिषु । स्वाभाविकस्तु नियमादत एव सनातनाः ॥ असुरादेस्तथा दोषा नित्याः स्वाभाविका अपि । गुणदोषौ मानवानां नित्यौ स्वाभाविकौ मतौ ॥ गुणैकमात्ररूपास्तु देवा एव सदा मताः' इति ब्राह्मे । न तु साधुपापादीनां पूजादिसाम्यम् । तत्र दोषस्मृतेः । 'समानां विषमा पूजा विषमानां समा तथा ॥ क्रियते येन देवोऽपि स्वपदाद्भ्रश्यते पुमान्'इति ब्राह्मे । 'वित्तं बंधुर्वयः कर्म विद्या चैव तु पंचमी ॥ एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम्'इति मानवे । 'गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः । सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ॥ वैषम्यमुत्तमत्वं तु ददाति नरसंचयात् । पूजाया विषमा दृष्टिः समा साम्यं विदुःखजम्'इतिब्रह्मवैवर्ते । सुहृदादिषु शास्त्रोक्तपूजादिकृतिः । अन्यूनानधिका या साऽपि संमता । तदप्याहुः । 'यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च । तथा करोति पूजादि समबुद्धिः स उच्यते'इति गारुडे । प्रत्युपकारनिरपेक्षयोपकारकृत्सुहृत्क्लेशस्थानं निरूप्य यो रक्षां करोति स मित्रम् । अरिर्वधादिकर्ता । कर्तव्ये उपकारे अपकारे च यदास्ते स उदासीनः । कर्तव्यमुभयमपि यः करोति स मध्यमः । अवासितकृद्द्वेष्यः । आह चैतत् । ' द्वेष्योऽवासितकृत्कार्यमात्रकारी तु मध्यमः । प्रियकृत्प्रियोनिरूप्यापि क्लेशं यः परिरक्षति ॥ स मित्रमुपकारं तु अनपेक्ष्योपकारकृत् । यस्ततः स सुहृत्प्रोक्तः शत्रुश्चापि वधादिति' ॥ ९ ॥

**आ० ज०**—मध्ये लक्ष्यस्योक्तत्वात् सुहृदित्यादिकं न योगारूढलक्षणमिति प्रतीतिनिरासायाह—**स एवेति** । साधुपापादिषु समबुद्धिश्च स योगारूढ एवेति । न किं तु सर्वस्मादयोगिवर्गाद्विशिष्यत इत्येतद्वक्तुं पृथगन्वय इति भावः । साधुत्वं धर्मित्वम् । पापत्वं पापवत्त्वं च नियतं न तु सुहृत्त्वादिवदव्यवस्थितमित्यतः सुहृदादिष्वित्यनुक्त्वा साधुपापादिष्वित्युक्तम् । समबुद्धित्वं नाम पूजादिसाम्यमित्यन्यथाप्रतीतिनिरासायाह—**जीवचित इति** । एष चेतनाया युक्तो जीव इत्यभिधीयत इति चेतनाचेतनपिंडे जीवशब्दप्रयोगात् चितइत्युक्तम् । सुहृदादिचैतन्यस्य तथा सर्वत्र सुहृदादिषु स्थितस्य परमात्मनः । एवं सर्वत्र सुहृदादिषु स्थितस्य सुहृत्त्वादेः परमात्मनिमित्तकत्वस्य चैकरूप्येण कारणेन तद्दर्शीसमबुद्धिरित्यर्थः । तत्राद्यं प्रकारं विवृणोति—**चिद्रूपा एवेति** । मनुष्येषु यदेक एकं प्रति सुहृदित्यादि तत् न जीवस्वभावांतर्गतं किं तु चिद्रूपत्वादिकमेवेत्यर्थः । तर्हि सुहृत्त्वादिधर्मः किमात्मकइत्यत आह—**विशेषस्त्विति** । अंतःकरणोपादानको बाह्यधर्मः । एतदुक्तं भवति । मुक्ताववशिष्यमाणं यज्जीवरूपं तत्रिविधा जीवसंघा इत्यादिप्रमाणाद्विषममेव । किं तु देहेंद्रियांतःकरणधर्मैर्यद्वैषम्यं तत्तत्स्वरूप एवारोप्य विषमबुद्धित्वं योगारूढस्य नास्तीति । द्वितीयः प्रकारः स्फुटः । तृतीयं विवृणोति—**सर्वेषामिति** । स्वतः स्वातंत्र्येण अत्र प्रमाणमाह—**उक्तं चेति** । स्वतः स्वरूपेण । दोषैररित्वादिभिः । एवं सुहृत्त्वादिगुणैरित्यपि ग्राह्यम् । आगंतुकधर्मा न स्वरूपांतर्गता इत्यर्थः । किं तर्हि इत्यत आह—**तेषां त्विति** । दोषा गुणाश्च उपाधिरंतःकरणादिः सर्वं सुहृत्त्वादिकम् । अतएव प्रकारद्वयेन यदनात्मधर्मानात्मस्वन्तर्भाव्य वैषम्यम् । यच्च क्वचित् परमेश्वरानधीनरूपत्वं तद्भ्रांतिप्रतीतम् । योगे प्रवर्तमानं प्रति यत्सुहृत्त्वादिकं तन्मनुष्येष्वेव स्वरूपवैषम्यकारणं न भवति । न तु देवादिष्वित्युक्तस्यापवादमाह—**एवमिति** । तुशब्दोऽवधारणे । अवधारणार्थं विवृणोति—**विशेष इति** । विशेषो योगिनं प्रति सुहृत्त्वादिः तदेव प्रपंचयति—**असुरादेरिति** । तथाशब्दो वक्ष्यमाणसमुच्चये । दोषा योगिनं प्रति अरित्वाद्याः । तथा चोक्तम् । 'विद्ध्येनमिह वैरिणम्' इति गुणदोषौ सुहृत्त्वारित्वादी अनागंतुकौ गुणैः सुहृत्त्वादिभिरेकमात्रं गुणैकमात्रं । तथा च श्रुतिः । "यथा ह वै बहवः पशव"इत्यादिका । सुहृदित्यादिश्लोकस्य प्रतीत एवार्थः किं न स्यादित्यत आह—**न त्विति** । सर्वशब्दपर्यायस्य समशब्दस्यैव सर्वनामसंज्ञा न साधारणार्थस्य समे देशे यजतीति तथा । न केवलं समपूजायां दोषः किं तु विषमपूजाविधानं चास्तीत्याह—**वित्तमिति** । बंधुरिति बंधुत्वं मान्यानि च तानि स्थानानि

च वित्तादिशब्दैः तद्वंत उपलक्ष्यंते । दृष्टिरेवोक्तप्रकारत्रयेण समा कार्या पूजा तु विषमैवेत्यत्र प्रमाणांतरमाह—**गुणेति**। या विषमा पूजा सा वैषम्यम्। तस्यैव व्याख्यानमुत्तमत्वम्। साम्यं ददाति। विदुःखत्वनिमित्तम्। समबुद्धित्वं प्रकारांतरेण व्याचष्टे—**सुहृदादिष्विति**। एतन्न योगारूढविषयमिति तत्रैव नोक्तम्। न हि योगारुढो लौकिकेष्वरिष्वपकारं करोति यः। सुहृन्मित्रशब्दयोररिद्वेष्यशब्दयोरुदासीनमध्यस्थशब्दयोश्चार्थभेदो न प्रतीयते अत आह—**प्रत्युपकारेति**। निरपेक्षयाऽनपेक्षया। अवासितमप्रियं ततः उपक्रियमाणात् ॥ ९ ॥

**रा० भा०**—तथा च वयोविशेषानङ्गीकारेण स्वहितैषिणः सुहृदः सवयसो हितैषिणो मित्राणि अरयो निमित्ततोऽनर्थेच्छवः उभयहेत्वाभावादुभयरहिता उदासीनाः जन्मत एवोभयरहिताः मध्यस्थाः जन्मत एवानिष्टेच्छवो द्वेष्याः जन्मत एव हितैषिणो बन्धवः साधवो धर्मशीलाः पापाः पापशीलाः आत्मैकप्रयोजनतया सुहृन्मित्रादिभिः प्रयोजनाभावाद्विरोधाभावाच्च तेषु समबुद्धिर्योगाभ्यासार्हत्वे विशिष्यते ॥ ९ ॥

**अ० टी०**—किं च एतत्त्रितय एव न समः किंतु सर्वत्रैव समबुद्धिरुत्तम इत्याह—**सुहृदिति**। सुहृत् सर्वहितोपदेशकृत् मित्रं स्नेहपरवशः। अरिः स्वस्मिन् शत्रुबुद्धिमान्। उदासीनो निरपेक्षः। मध्यस्थो-विवदमानयोः सदसद्वाक्यविचारकः। द्वेष्यः सद्भावहीनः। बन्धुः संबन्धी। एतेषु साधुषु सदाचारेषु अपि च किं पुनः। पापेषु धर्मविरोधिषु समबुद्धिः भगवद्विप्रयोगेन भगवदात्मबुद्धिस्तेषु वा तद्विप्रयोगेन तथाभावदर्शी विशिष्यते। योगयुक्तेषूत्तम इत्यर्थः। अत्रायं भावः। भगवद्विप्रयोगे तत्सौहार्दस्मरणेनायं सर्वेषु सौहार्दधर्मवान्। तथैव च मित्रधर्मवान् तद्रहितेषु अरिबुद्धिमान् तत्तद्दुःखेन सर्वत्रौदासीन्यधर्मवान् विप्रयोगावस्थायां तदनुकरणेन मध्यस्थधर्मवान् तथैव तत्क्लेशेन द्वेषधर्मवान्। तत्संबन्धस्मरणेन बन्धुधर्मवान्। तदर्थं तदाचारवान् तत्तापातिशयेन पापरूपवान् जडत्वधर्मेण। एवं यः समबुद्धिः स विशिष्ट इत्यर्थः॥ ९ ॥

**नी० टी०**—समत्वमेव स्तौति—**सुहृदिति**। सुहृत् प्रत्युपकारमनपेक्ष्योपकर्त्ता। मित्रं स्नेहवान्। अरिः शत्रुः। उदासीन उभयत्र पक्षपातशून्यः। मध्यस्थ उभयहितैषी। द्वेष्य आत्मनोऽप्रियः। बंधुः संबंधी। तेषु साधुषु पुण्यकृत्सु पापेषु पापाचारेषु कस्य किं कर्मेत्यनालोचयन् तेषु सर्वेषु यः समबुद्धिः स विशिष्यते ॥ ९ ॥

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ॥**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥**

**शां० भा०**—अत एवमुत्तमफलप्राप्तये—योगी ध्यायी युञ्जीत समादध्यात्सततं सर्वदाऽऽत्मानमन्तःकरणं रहस्येकान्ते गिरिगुहादौ स्थितः सन्नेकाक्यसहायः। रहसि स्थित एकाकी चेति विशेषणात्संन्यासं कृत्वेत्यर्थः। यतचित्तात्मा चित्तमन्तःकरणमात्मा देहश्च संयतौ यस्य स यतचित्तात्मा निराशीर्वीततृष्णोऽपरिग्रहश्च परिग्रहरहित इत्यर्थः। संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन्युञ्जीतेत्यर्थः॥ १० ॥

**शां० आ०**—यथोक्तविशेषणवतो योगारूढेषूत्तमत्वे योगानुष्ठाने प्रयतितव्यमित्यङ्गाभिधानानन्तरं प्रधानमभिदधाति—**अत एवमिति**। आदरनैरन्तर्यदीर्घकालत्वं विशेषणत्रयं योगस्य सूचयति—**सततमिति**। तस्यैव पञ्चाङ्गान्युपन्यस्यति—**रहसीत्यादिना**। सर्वदेत्यादरदीर्घकालयोरुपलक्षणम्। प्रत्यगात्मानं व्यावर्तयति—**अन्तःकरणमिति**। गिरिगुहादावित्यादिशब्देन

योगप्रतिबन्धकदुर्जनादिविधुरो देशो गृह्यते । विशेषणद्वयस्य तात्पर्यमाह—**रहसीति** । योगं युञ्जानस्य संन्यासिनो विशेषणान्तराणि दर्शयति—**यतेति** । सति संन्यासित्वे किमित्यपरिग्रहग्रहणमर्थपुनरुक्तेरित्याशङ्क्य कौपीनाच्छादनादिष्वपि सक्तिनिवृत्त्यर्थमित्याह—**संन्यासित्वेऽपीति** ॥ १० ॥

**आ० भा०—समाधियोगप्रकारमाह—योगी युंजीत समाधियोगयुक्तं कुर्यात् आत्मानं मनः ॥ १० ॥**

आ० ज०—ननूद्धरेदित्यनेनैव योगो विहितः । तत्किं पुनर्विधीयत इत्यत आह—**समाधीति** । प्रकारकथनाय विध्यनुवाद इत्यर्थः । युंजीतेति योगमात्रमुच्यते तत्कथं समाधीत्युक्तमित्यत आह—**युंजीतेति** । सामान्यशब्दोऽपि प्रकरणाद्विशेषेवतिष्ठत इत्यर्थः । आत्मशब्दस्यात्र विवक्षितमर्थमाह—**आत्मानमिति** ॥ १० ॥

**रा० भा०—योगी उक्तप्रकारकर्मयोगनिष्ठः सततमहरहर्योगकाले आत्मानं युञ्जीत आत्मानं युक्तं कुर्वीत स्वदर्शननिष्ठं कुर्वीतेत्यर्थः । रहसि जनवर्जिते निःशब्दे देशे स्थितः एकाको तत्रापि न सद्वितीयः तत्रापि यतचित्तात्मा यतचित्तमनस्कः निराशीः आत्मव्यतिरिक्ते कृत्स्ने वस्तुनि निरपेक्षः अपरिग्रहः तद्व्यतिरिक्ते कस्मिंश्चिदपि ममतारहितः ॥ १० ॥**

अ० टी०—एवं योगारूढस्वरूपमुक्त्वा तस्य भावस्वरूपसिद्ध्यर्थं योगसाधनप्रकारमाह 'योगीत्यारभ्य स योगी परमो मत' इत्यन्तं । योगी योगारूढः आत्मानं भावात्मकं रूपं रहसि एकान्ते भगवच्चिन्तनस्थाने स्थितः सन् समाहितः सन् सततं युञ्जीत भगवति युक्तं कुर्यात् । एकाकी संगदोषरहितः । यतचित्तात्मा यतं वशीकृतं स्वभोगादिरहितं चित्तं भावरूपमात्मा देहेऽधिकरणात्मको येन । निराशीर्निर्गता मोक्षाद्याऽऽकाङ्क्षा यस्य । अपरिग्रहः संसर्गदुःखज्ञानेन त्यक्तपरिग्रहः सर्वापेक्षारहितः । एवं युक्तचित्तः सन् मद्ध्यानं कुर्यादित्यर्थः ॥ १० ॥

नी० टी०—**योगीति** । योगी योगाभ्यासपरो रहसि एकांते स्थितः सन् आत्मानं बुद्धिं युंजीत समादध्यात् सततमिति नैरंतर्यमुक्तं । निराशीर्योगसिद्धेरन्यदप्रार्थयानस्तदेकनिष्ठ इति यावत्तेन सत्कार उक्तः । एकाकी असहायः संन्यासीत्यर्थः । यतौ स्थिरीकृतौ चित्तं मन आत्मा सेंद्रियं शरीरं येन स यतचित्तात्मा । तथा अपरिग्रहः एकाकित्वेऽपि कंथापुस्तकादिबहुपरिग्रहशून्यः ॥ १० ॥

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ॥**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥**

**शां० भा०—अथेदानीं योगं युञ्जत आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः प्राप्तयोगलक्षणं तत्फलादि चेत्यत आरभ्यते । तत्राऽऽसनमेव तावत्प्रथममुच्यते—शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरमचलनमात्मन आसनं नात्युच्छ्रितं नातीवोच्छ्रितं नाप्यतिनीचं तच्च चैलाजिनकुशोत्तरं चैलमजिनं कुशाश्चोत्तरे यस्मिन्नासने तदासनं चैलाजिनकुशोत्तरं पाठक्रमाद्विपरीतोऽत्र क्रमश्चैलादीनाम् ॥ ११ ॥**

शां० आ०—योगं योगाङ्गानि चोपदिश्योत्तरसंदर्भस्य तात्पर्यमाह—**अथेति** । योगस्वरूपकतिपयतदङ्गप्रदर्शनानन्तर्यमथशब्दार्थः । विहारादीनामित्यादिशब्देन यथोक्तासनादिगतावान्तरभेदग्रहणम् । तत्फलादि चेत्यादिशब्देन योगफलसम्यग्ज्ञानं च तत्फलं कैवल्यं ततो भ्रष्टस्याऽऽत्यन्तिकाविनष्टत्वमित्यादि गृह्यते । एवं समुदायतात्पर्ये दर्शिते किमासीनः शयानस्तिष्ठन्गच्छन्कुर्वन्वा युञ्जीतेत्यपेक्षायामनन्तरश्लोकतात्पर्यमाह—**तत्रेति** । निर्धारणे सप्तमी । प्रथमं योगानुष्ठानस्य प्रधानमासीनः संभवादिति न्यायादिति यावत् । विविक्तत्वं द्वेधा विभजते—**स्वभावत इति** । आसनस्यास्थैर्ये तत्रोपविश्य योगमनुतिष्ठतः समाधानायो-

गाद्योगासिद्धिरित्यभिसंधाय विशिनष्टि—**अचलनमिति** । आस्यतेऽस्मिन्निति व्युत्पत्तिमनुश्रित्याऽऽह—**आसनमिति** । आत्मन इति परकीयासनव्युदासार्थं, पतनभयपरिहारार्थं नात्युच्चमित्युक्तं, नाप्यतिनीचमिति भूतलपाषाणादिसंश्लेषे वातक्षोभाग्निमान्द्यादिसंभावितदोषनिरासार्थं, चैलं वस्त्रमजिनं चर्म पशूनां तच्च मृगस्य कुशा दर्भास्ते चोत्तरे यस्मिन्नुपरिष्टादारभ्य तत्तथोक्तम् । प्रथमं चैलं ततोऽजिनं ततश्च कुशा इति प्रतिपन्नपाठक्रममतिक्रम्याऽऽदौ कुशास्ततोऽजिनं ततश्चैलमिति क्रमं विवक्षित्वाऽऽह—**विपरीतोऽत्रेति** ॥ ११ ॥

**आ० भा०—॥ ११ ॥**

**आ० ज०—॥ ११ ॥**

**रा० भा०—शुचौ देशे अशुचिभिः पुरुषैरनधिष्ठिते अपरिगृहीते चाशुचिभिर्वस्तुभिरस्पृष्टे च पवित्रीभूते देशे दार्वादिनिर्मितं नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरमासनं प्रतिष्ठाप्य॥ ११ ॥**

**अ० टी०**—ससामग्रीकं ध्यानस्वरूपमाह—**शुचाविति चतुष्टयेन** । शुचौ देशे भावात्मकवृन्दावनादौ आत्मनो भगवतः स्थिरम् आसनं भावरूपं नात्युच्छ्रितं हृदयाद्बहिः केवलक्रीडायामेव स्थितं । नातिनीचं भावरहितानुकरणात्मकं कीदृशं चैलाजिनकुशोत्तरं चैलं वस्त्रं भावरूपं स्वैरुत्तरीयैः कुचकुङ्कुमांकितैरितिन्यायेन अजिनं अधिकरणदेहस्थहृदयकमलात्मकं चैलाजिने कुशेभ्यः श्रीगोवर्धनादिस्थिततृणादिरूपेभ्य उत्तरे यस्मिन् पूर्वं भावरूपतृणानि तदुपरि हृदयात्मकं तदुपरि भावात्मकं वस्त्रमेवं प्रतिष्ठाप्य ॥ ११ ॥

**नी० टी०**—योगं युंजीतेत्युक्तं तत्कथमित्याकांक्षायां तदंगान्यासनादीन्याह—**शुचौ देशे इत्यादिना।** शुचौ स्वभावतः संस्कारतो वा पुण्ये देशे स्थाने प्रतिष्ठाप्य सुस्थितं कृत्वा स्थिरं निश्चलं आस्तेऽस्मिन्नित्यासनं स्थंडिलं निश्चलमित्यनेन मृन्मयमेव स्थंडिलं न तु काष्ठमयं पीठं आसनमिति परासनव्यावृत्त्यर्थं नात्युच्छ्रितं नात्युच्चं नातिनीचं चैलाजिनकुशा उत्तरे उपर्युपरि यस्य तच्चैलाजिनकुशोत्तरं अजिनादुपरि चैलं कुशेभ्य उपरि अजिनं स्थंडिलस्योपरि कुशा इत्यर्थः ॥ ११ ॥

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ॥**
**उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२॥**

**शां० भा०—प्रतिष्ठाप्य किम्—तत्र तस्मिन्नासन उपविश्य योगं युञ्ज्यात् । कथं, सर्वविषयेभ्य उपसंहृत्यैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः, चित्तं चेन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयता यस्य स यतचित्तेन्द्रियक्रियः । स किमर्थं योगं युञ्ज्यादित्याहाऽऽत्मविशुद्धयेऽन्तःकरणस्य विशुद्ध्यर्थमित्येतत् ॥ १२ ॥**

**शां० आ०**—यथोक्तमासनं संपाद्य किं कर्तव्यमितिप्रश्नपूर्वकं कर्तव्यं तन्निर्दिशति—**प्रतिष्ठाप्येति** । योगं युञ्जानस्येतिकर्तव्यताकलापं पृच्छति—**कथमिति** । सर्वेभ्यो विषयेभ्यः सकाशात्प्रत्याहृत्य मनसो यदेकस्मिन्नेव ध्येये विषये समाधानं यच्चित्तस्येन्द्रियाणां च बाह्यक्रियाणां संयमनं तदुभयं कृत्वा योगमनुतिष्ठेदित्याह—**सर्वेति** । आसने यथोक्ते स्थित्वा यथोक्तया रीत्या योगानुष्ठानस्य प्रश्नपूर्वकं फलमाह—**स किमर्थमित्यादिना** ॥ १२ ॥

**आ० भा०—॥ १२ ॥**

**आ० ज०—॥ १२ ॥**

**रा० भा०—तस्मिन्मनःप्रसादकरे सापाश्रये उपविश्याव्याकुलमेकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः सर्वात्मनोपसंहृतचित्तेन्द्रियक्रियः आत्मविशुद्धये बन्धविमुक्तये योगं युञ्ज्यात् आत्मावलोकनं कुर्वीत ॥ १२ ॥**

अ० टी०—तत्र भगवत्स्वरूपे एकाग्रं केवलदास्यभावेऽनन्यतया स्थितं मनः कृत्वा यताः शान्ताश्चित्तेन्द्रियक्रिया यस्य। चित्तक्रियाः स्वभोगचाञ्चल्यादयः। इन्द्रियक्रियाः स्वतापनिवृत्त्यर्थं दर्शनाद्यभिलाषाः तादृशो भूत्वा। आसने उपविश्य। आत्मशुद्ध्यर्थं भावस्वरूपासिद्ध्यर्थं योगं भगवत्संयोगं युञ्ज्यात् अभ्यसेत्॥ १२॥

नी० टी०—प्रतिष्ठाप्य किं कुर्यादिति तत्राह—तत्रेति। तत्रासने पद्मस्वस्तिकाद्यन्यतमेनासनेनोपविश्य। यताः निगृहीताश्चित्तस्य क्रिया विषयाणां स्मरणानि इंद्रियक्रियास्तेषां ग्रहणं येनासौ यतचित्तेंद्रियक्रियः। अत एव मनो बाह्याभ्यंतरविषयानुपरक्ततया एकं ध्येयमेव प्रत्यक्तत्वमग्रे यस्य स्फुरति नान्यत् तदेकाग्रं वृत्त्यंतरानंतरितब्रह्मैकाकारवृत्तिप्रवाहि कृत्वा आत्मविशुद्धये चित्तशुद्ध्यर्थं योगं वृत्तिप्रवाहस्यापि निरोधं युंज्यादनुतिष्ठेच्चित्तस्य स्थैर्यतापादनेन॥ १२॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः॥**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्॥ १३॥**

शां० भा०—बाह्यमासनमुक्तमधुना शरीरधारणं कथमित्युच्यते—समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत्समं धारयन्नचलं च समं धारयतश्चलनं संभवत्यतो विशिनष्टि अचलमिति। स्थिरः स्थिरो भूत्वेत्यर्थः। स्वं नासिकाग्रं संप्रेक्ष्य सम्यक्प्रेक्षणं दर्शनं कृत्वेवेतीवशब्दो लुप्तो द्रष्टव्यः। न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितं किं तर्हि चक्षुषोर्दृष्टिसंनिपातः। स चान्तःकरणसमाधानापेक्षो विवक्षितः। स्वनासिकाग्रसंप्रेक्षणमेव चेद्विवक्षितं मनस्तत्रैव समाधीयेत नाऽऽत्मनि। आत्मनि हि मनसः समाधानं वक्ष्यत्यात्मसंस्थं मनः कृत्वेति। तस्मादिवशब्दलोपेनाक्ष्णोर्दृष्टिसंनिपात एव संप्रेक्ष्येत्युच्यते। दिशश्चानवलोकयन्दिशां चावलोकनमन्तराऽकुर्वन्नित्येतत्॥ १३॥

शां० आ०—उक्तमनूद्यानन्तरश्लोकस्य पुनरुक्तमर्थमाह—**बाह्यमिति**। समत्वमृजुत्वं कायः शरीरमध्यम्। अचलमिति विशेषणमवतार्य तस्य तात्पर्यमाह—**सममिति**। कार्यकरणयोर्विषयपारवश्यशून्यत्वमचलत्वं स्थैर्यम्। किमितीवशब्दलोपोऽत्र कल्प्यते स्वनासिकाग्रसंप्रेक्षणमेव योगाङ्गत्वेनात्र विधित्सितं किं न स्यादित्याशङ्क्याऽऽह—**न हीति**। तर्हि किमत्र विवक्षितमिति प्रश्नपूर्वकमाह—**किं तर्हीति**। दृष्टिसंनिपातो दृष्टेश्चक्षुषो रूपादिविषयप्रवृत्तिराहित्यम्। कथमसावनायासेन सिध्यति तत्राऽऽह—**स चेति**। समाधानस्य प्राधान्येनात्र विवक्षितत्वाद्दृष्टेर्बहिर्विषयत्वेन तद्भङ्गप्रसङ्गात्तस्या विषयेभ्यो व्यावृत्त्याऽन्तरेव संनिपातो विवक्षितो भातीत्यर्थः। तथाऽपि कथं स्वनासाग्रसंप्रेक्षणमत्र श्रुतमविवक्षितमित्याशङ्क्याऽऽह—**स्वनासिकेति**। तत्रैव मनःसमाधाने का हानिरित्याशङ्क्य वाक्यशेषविरोधान्मैवमित्याह—**आत्मनि हीति**। किं तर्हि संप्रेक्ष्येत्यादौ विवक्षितमित्याशङ्क्याऽऽह—**तस्मादिति**। दक्षिणेतरचक्षुषोर्या दृष्टिस्तस्या बाह्याद्विषयाद्वैमुख्येनान्तरेव संनिपतनमत्र स्वकीयं नासिकाग्रं नासिकान्तं संप्रेक्ष्येति विवक्षितमित्यर्थः। तत्रैवोत्तरमपि विशेषणमनुकूलमित्याह—**दिशश्चेति**। अनवलोकयन्नासीतेत्युत्तरत्र संबन्धः। अन्तराऽन्तरा दिशामवलोकनमपि योगप्रतिबन्धकमिति तत्प्रतिषेधः॥ १३॥

आ० भा०—॥ १३॥

आ० ज०—॥ १३॥

रा० भा०—कायशिरोग्रीवं सममचलं सापाश्रयतया स्थिरं धारयन् दिशश्चानवलोकयन् स्वं नासिकाग्रं संप्रेक्ष्य॥ १३॥

अ० टी०—समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं कायपदेन चरणमारभ्य सर्वोऽपि देहः। भक्तिमार्गानुसारेण शिरः सत्यलोकात्मकं। ग्रीवा मुक्तिस्थानं समं यथास्थितरूपमचलं धारयन् ध्यानं कुर्वन्। स्थितः सन् स्वनासिकाग्रं संप्रेक्ष्य अर्धनिमीलितनेत्रो भावस्थः दिशश्चानवलोकयन् दिग्भावज्ञानशून्यः सर्वत्र भगवद्दर्शनवान् ॥ १३ ॥

नी० टी०—आसन उपविश्येत्युक्तं तत्कथमित्यत आह—सममिति। कायः शरीरमध्यं शिरो ग्रीवा च कायशिरोग्रीवं समं मूलाधारमारभ्य मूर्धांतं अवक्रं अचलं निष्कंपं धारयन् स्थिरो भूत्वा संप्रेक्ष्य नासिकाग्रं स्वमिति नासिकाग्रावेक्षणं न विधीयते किंतु निमीलने लयभयमुन्मीलने विक्षेपभयमतो दिशोऽपि स्त्र्यादिविक्षेपकविषयदर्शनभयादनवलोकयन्नर्धोन्मीलितनेत्र आसीतेति उत्तरेणान्वयः ॥ १३ ॥

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ॥**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥**

**शां० भा०—किंच—प्रशान्तात्मा प्रकर्षेण शान्त आत्माऽन्तःकरणं यस्य सोऽयं प्रशान्तात्मा विगतभीर्विगतभयो ब्रह्मचारिव्रते स्थितो ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षाभुक्त्यादि तस्मिन्स्थितस्तदनुष्ठाता भवेदित्यर्थः। किंच मनः संयम्य मनसो वृत्तीरुपसंहृत्येत्येतन्मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तो युक्तः समाहितः सन्नासीतोपविशेन्मत्परोऽहं परो यस्य सोऽयं मत्परः। भवति कश्चिद्रागी स्त्रीचित्तो न तु स्त्रियमेव परत्वेन गृह्णाति, किं तर्हि राजानं महादेवं वाऽयं तु मच्चित्तो मत्परश्च ॥ १४ ॥**

शां० आ०—योगं युञ्जानस्य विशेषणान्तराणि दर्शयति—**किंचेति**। अन्तःकरणस्य प्रशान्ती रागद्वेषादिदोषराहित्यं तस्याश्च प्रकर्षो रागादिहेतोरपि निवृत्तिः। विगतभयत्वं सर्वकर्मपरित्यागे शास्त्रीयनिश्चयवशान्निःसंदिग्धबुद्धित्वम्। भिक्षाभुक्त्यादीत्यादिशब्देन त्रिषवणस्नानशौचाचमनादि गृह्यते। विशेषणान्तरमाह—**किंचेति**। उपसंहृत्य योगनिष्ठो भवेदिति शेषः। मनोवृत्त्युपसंहारे ध्यानमपि न सिध्येत्तस्य तद्वृत्त्यावृत्तिरूपत्वादित्याशङ्क्याऽऽह—**मच्चित्त इति**। विषयान्तरविषयमनोवृत्त्युपसंहारेणाऽऽत्मन्येव तन्नियमनान्न ध्यानानुपपत्तिरित्यर्थः। मच्चित्तत्वेनैव मत्परत्वस्य सिद्धत्वान्मत्पर इति पृथग्विशेषणमनर्थकमित्याशङ्क्याऽऽह—**भवतीति**। अन्तःकरणशुद्धिर्योगस्यावान्तरफलम् ॥ १४ ॥

**आ० भा०—॥ १४ ॥**

आ० ज०—॥ १४ ॥

**रा० भा०—प्रशान्तात्मात्यन्तनिर्वृतमनाः विगतभीः ब्रह्मचर्ययुक्तो मनः संयम्य मच्चित्तो युक्तः अवहितो मत्पर आसीत मामेव चिन्तयन्नासीत ॥ १४ ॥**

अ० टी०—प्रशान्तात्मा भक्तिरसाभिनिविष्टचित्तः विगतभीः ब्रह्मचारी श्रुत्यादिदुराचरणरेणुभगवत्प्राप्तिसंदेहरहितः ब्रह्मचारिव्रते स्थितः भगवदर्थेन्द्रियनिग्रहवान् तादृशः सन् मनः संयम्य सर्वतः आकृष्य वशे कृत्वा मच्चित्तो मय्येव चित्तं यस्य मत्परः अहमेव परः पुरुषार्थरूपो यस्यैतादृशो भूत्वा युक्तः मद्योगस्थ आसीत तिष्ठेत् ॥ १४ ॥

नी० टी०—एवमासने उपविष्टेन यत्कर्तव्यं तदाह—**प्रशांतात्मेति**। योगयुक्तो योगी ब्रह्मचारिव्रते भैक्षचर्यायां स्थितः संन्यासीत्यर्थः। मच्चित्तो मयि परमे चित्तं यस्य स एवंभूतो मय्येव मनः संयम्य मत्पर

आसीत स प्रशांतात्मा भूत्वा विगतभीर्भवतीति योजना । भवति हि कश्चिदात्मनोऽन्यमीश्वरं मत्वा तच्चित्तस्तमेवाराध्यत्वेनाभिगतस्तत्रैव च मनसः संयमं करोति न तु स तत्परस्तमेव परमपुरुषार्थतया प्राप्यत्वेन मन्यते किंतु तत्प्रीत्यान्यदेव फलं कामयते । अयं तु मच्चित्तो मय्येव मनः संयम्य मत्परो मामेव सर्वांतरं प्रत्यगद्वयं कामयत इति । यतो मत्परोऽत एव प्रशांतात्मा प्रकर्षेण बाह्याभ्यंतरविषयत्यागेन समाधिसुखास्वादत्यागेन च शांत उपरतः आत्मा चित्तं यस्य सोऽस्मितामात्रावशेषो विगतभीर्भवति । इयमेवावस्था सत्वपुरुषान्यताख्यातिरिति ब्रह्मसाक्षात्कार इति च विकल्प्यते । सर्वथा तस्यां सिद्धायां पुरुषः परमपुरुषार्थभाग्भवति ॥ १४ ॥

**युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ॥**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥**

**शा० भा०—अथेदानीं योगफलमुच्यते—युञ्जन्समाधानं कुर्वन्नेवं यथोक्तेन विधानेन सदाऽऽत्मानं योगी नियतमानसो नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः शान्तिमुपरतिं निर्वाणपरमां निर्वाणं मोक्षस्तत्परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमां मत्संस्थां मदधीनामधिगच्छति प्राप्नोति ॥ १५ ॥**

**शां० आ०**—संप्रति परमफलकथनपरत्वेनानन्तरश्लोकमादत्ते—**अथेति** । योगस्वरूपं तदङ्गमासनद्वयं तत्कर्तृविशेषणमित्यस्यार्थस्य प्रकथनानन्तरमित्यथशब्दार्थः । आत्मानं युञ्जन्निति संबन्धः । आत्मशब्दो मनोविषयः । यथोक्तो विधिरासनादिः । उक्तविशेषणत्रयद्योतनार्थं सदेत्युक्तम् । योगी ध्यायी संन्यासीत्यर्थः । मनःसंयमस्य योगं प्रत्यसाधारणत्वं दर्शयति—**नियतेति** । शान्तिशब्दितोपरतेः सर्वसंसारनिवृत्तिपर्यवसायित्वं मत्वा विशिनष्टि—**निर्वाणेति** । यथोक्ताया मुक्तेर्ब्रह्मस्वरूपावस्थानादनर्थान्तरत्वमाह—**मत्संस्थामिति** । मदधीनां मदात्मिकामित्यर्थः ॥ १५ ॥

**आ० भा०—निर्वाणपरमां शरीरत्यागोत्तरकालीनाम् ॥ १५ ॥**

**आ० ज०**—ननु शांतिर्निर्वाणमिति मोक्षपर्यायौ । तत्कथं शांतेर्निर्वाणपरमत्वमित्यत आह—**निर्वाणेति** । न जीवन्मुक्तिमात्रमित्यर्थः । उपशांतेर्योगकारणत्वात् योगफलत्वमनुपपन्नम् ॥ १५ ॥

**रा० भा०—एवं मयि परस्मिन् ब्रह्मणि पुरुषोत्तमे मनसः शुभाश्रये सदाऽऽत्मानं मनो युञ्जन्नियतमानसः निश्चलमानसः मत्स्पर्शपवित्रीकृतमानसतया निश्चलमानसः मत्संस्थां निर्वाणपरमां शान्तिमधिगच्छति निर्वाणकाष्ठारूपां मत्संस्थां मयि संस्थितां शान्तिमधिगच्छति ॥ १५ ॥**

**अ० टी०**—एवं योगाभ्यासकर्तुः फलमाह—**युञ्जन्निति** । एवं सदा निरन्तरं नियतमानसः दास्यैकपरचित्त आत्मानं युञ्जन्नपि युक्तं कुर्वन् योगी मयि योगवान् निर्वाणपरमां मोक्षाधिकां मत्संस्थां मत्स्वरूपरसात्मिकां शान्तिं वियोगक्लेशादिरहितभावमधिगच्छति प्राप्नोति ॥ १५ ॥

**नी० टी०**—अस्याः फलमाह—**युंजन्निति** । एवमनेन प्रकारेण सदा निरंतरं दीर्घकालं चात्मानं मनो युंजन् समादधानो योगी नियतं ख्यातिफलादपि निगृहीतं मानसं येन स नियतमानसः शांतिं परमवैराग्यबलात् ख्यातिमपि निरुध्य निर्विकल्पं पदं निर्वाणं मोक्षस्तदेव परमा निष्ठा यस्याः शांतेस्तां मत्संस्थां मय्येव संस्था एकीभावेनावस्थानं समाप्तिर्वा यस्यास्तामधिगच्छति प्राप्नोति । ख्यातिफलं च सूत्रकृता दर्शितं "प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातिर्धर्ममेघः समाधिः" इति तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यमिति

सत्वपुरुषान्यताख्यातिमात्रात्सर्वज्ञातृत्वं सर्वभावाधिष्ठातृत्वं चेति सूत्रत्रयेण प्रसंख्याने ध्याने अकुसीदस्य वणिज इव फलानिच्छोः सर्वथा विवेकख्यातिरेव भवति तस्याश्च फलं धर्ममेघः समाधिः स च प्रागेव व्याख्यातः। तद्वैराग्यं परं परसंज्ञं पुरुषख्यातेः फलं। तस्य लक्षणं गुणेषु दिव्यादिव्यविषयेषु वैतृष्ण्यं। एतस्यैव हि नांतरीयकं फलं कैवल्यमिति योगा वदंति। तृतीयसूत्रोक्तं फलं सार्वज्ञ्यादिकं त्वभिप्रेत्य श्रूयते। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इत्यादिकम्॥१५॥

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः॥**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन॥ १६॥**

**शां० भा०**—इदानीं योगिन आहारादिनियम उच्यते—नात्यश्नत आत्मसंमितमन्नपरिमाणमतीत्याश्नतोऽत्यश्नतो न योगोऽस्ति, न चैकान्तमनश्नतो योगोऽस्ति "यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति, यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति" इति श्रुतेः। तस्माद्योगी नाऽऽत्मसंमितादन्नादधिकं न्यूनं वाऽश्नीयात्। अथ वा योगिनो योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति। उक्तं हि—'अर्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु। वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इत्यादि परिमाणम्। तथा न चातिस्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो योगो भवति चार्जुन॥ १६॥

**शां० आ०**—आहारादीत्यादिशब्देन विहारजागरितादि चोच्यते। आत्मसंमितमन्नपरिमाणमष्टग्रासादि। आहारनियमे शतपथश्रुतिं प्रमाणयति—**यदु ह वा इति**। तदन्नं भुज्यमानं यदु ह वा इति प्रसिद्ध्याऽनूदितमवति अनुष्ठानयोग्यतामापाद्यानुष्ठानद्वारेण भोक्तारं रक्षति न पुनस्तदन्नमस्यानर्थाय भवतीत्यर्थः। यत्पुनरात्मसंमिताद्भूयोऽधिकतरं शास्त्रमतिक्रम्य भुज्यते तदात्मानं हिनस्ति भोक्तुरनर्थाय भवति। यच्चान्नं कनीयोऽल्पतरं शास्त्रनिश्चयाभावादद्यते तदन्नमनुष्ठानयोग्यतादिद्वारा न रक्षितुं क्षमते। तस्मादत्यधिकमत्यल्पं चान्नं योगमारुरुक्षता त्याज्यमित्यर्थः। श्रुतिसिद्धमर्थं निगमयति—**तस्मादिति**। नेत्यादेर्व्याख्यानान्तरमाह—**अथ वेति**। किं तदन्नपरिमाणं योगशास्त्रोक्तं यदधिकं न्यूनं वाऽभ्यवहरतो योगानुपपत्तिरित्याशङ्क्याऽऽह—**उक्तं हीति**। 'पूरयेदशनेनार्धं तृतीयमुदकेन तु। वायोः संचरणार्थाय चतुर्थमवशेषयेत्' इति वाक्यमादिशब्दार्थः। यथाऽत्यन्तमश्नतोऽनश्नतश्च योगो न संभवति तथाऽत्यन्तं स्वपतो जाग्रतश्च न योगः संभवतीत्याह—**तथेति**॥ १६॥

**आ० भा०**—अनशनादिनिषेधोऽशक्तस्य। उक्तं हि 'निद्राशनभयश्वासचेष्टातंद्रादिवर्जनम्॥ कृत्वाऽनिमीलिताक्षस्तु शक्तो ध्यायन्प्रसीदति' इति नारदीये॥ १६॥

**आ० ज०**—नचैकांतमनश्नतः जाग्रतो नैव चेति युंजानस्यानशनजागरणनिषेधः क्रियते स सर्वविषय इति प्रतीतिनिरासायार्थमाह—**अनशनादिति**। कुत इत्यतः शक्तस्य तद्विधानादित्याह—**उक्तं हीति**। आनिमीलिताक्ष ईषन्निमीलिताक्षः शक्तस्त्विति संबंधः॥ १६॥

**रा० भा०**—एवमात्मयोगमारभमाणस्य मनोनैर्मल्यहेतुभूतां मनसो भगवति शुभाश्रये स्थितिमभिधायान्यदपि योगोपकरणमाह। अत्यशनानशने योगविरोधिनी अतिविहाराविहारौ च तथातिमात्रस्वप्नजागर्ये तथा चात्यायासानायासौ॥ १६॥

**अ० टी०**—एवं योगफलमुक्त्वा तस्य स्थित्यर्थमाहारादिकमाह—**नात्यश्नतस्त्विति**। अति अश्नतः अधिकभोक्तुर्देहपुष्टयर्थं भुञ्जानस्य न च। एकान्तं सर्वथा अभुञ्जानस्य भगवत्स्वरूपमज्ञात्वा उपवासं कुर्वतः अतिस्वप्नशीलस्य निद्राशीलस्य सर्वविस्मरणैकस्वभावस्य जाग्रतश्च न चैव योगो मत्संयोगोऽस्ति॥ १६॥

नी० टी०—एवं योगाभ्यासनिष्ठस्याहारादिनियममाह द्वाभ्यां—नात्यश्नत इति । एकांतमतिशयेन जाग्रत इत्यत्राप्यतिशब्दो योज्यः ॥ १६ ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

शां० भा०—कथं पुनर्योगो भवतीत्युच्यते—युक्ताहारविहारस्याऽऽह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्य तथा युक्तचेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्चावबोधश्च तौ नियतकालौ यस्य तस्य युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा सर्वसंसारदुःखक्षयकृद्योगो भवतीत्यर्थः ॥ १७ ॥

शां० आ०—आहारनिद्रादिनियमविरहिणो योगव्यतिरेकमुक्त्वा तन्नियमवतो योगान्वयमन्वाचष्टे—कथं पुनरित्यादिना । अन्नस्य नियतत्वमर्धमशनस्येत्यादि, विहारस्य नियतत्वं योजनान्न परं गच्छेदित्यादि, कर्मसु चेष्टाया नियतत्वं वाङ्नियमादि, रात्रौ प्रथमतो दशघटिकापरिमिते काले जागरणं मध्यतः स्वपनं पुनरपि दशघटिकापरिमिते जागरणमिति स्वप्नावबोधयोर्नियतकालत्वम् । एवं प्रयतमानस्य योगिनो भवतो योगस्य फलमाह—दुःखहेति । सर्वाणीत्याध्यात्मिकादिभेदभिन्नानीत्यर्थः । यथोक्तयोगमन्तरेणापि स्वप्नादौ दुःखनिवृत्तिरस्तीति विशिनष्टि—सर्वेति । विशुद्धविज्ञानद्वारेति शेषः ॥ १७ ॥

आ० भा०—युक्ताहारविहारस्य सोपायाहारादेः । यावता श्रमाद्यभावो भवति । तावदाहारादेरित्यर्थः ॥ १७ ॥

आ० ज०—आहारादीनां केन युक्तत्वमित्यत आह—युक्तेति । उपायः समाधिः । समाधिर्हि धात्वर्थः । तद्वत्ता च प्रत्ययार्थः । अतः सोपायेत्युक्तम् । आहारादेः सोपायत्वं नाम कीदृशमित्यत आह—यावतेति । आदिपदेनेंद्रियोत्सेकाऽलस्यादेः संग्रहः । उपायेन साहित्यं नाम तदविरोधित्वम् । तच्चैवंभूतमित्यर्थः ॥ १७ ॥

रा० भा०—मिताहारविहारस्य मितायासस्य मितस्वप्नावबोधस्य सकलदुःखहा बन्धनाशनो योगः संपन्नो भवति ॥ १७ ॥

अ० टी०—यतएतादृशस्य योगो न भवतीत्यतो यथा योगसिद्धिः स्यात्तथोपायमाह—युक्ताहारेति । युक्त आहारो विहारश्च यस्य भगवत्सेवार्थदेहपोषार्थं प्रसादं भुञ्जानस्य । भगवत्सेवार्थानुकरणात्मककर्मसु प्रातरारभ्य स्नानपाकादिरूपेषु नियुक्ता भगवदर्थैकरूपा चेष्टा यस्य । युक्तौ स्वप्नावबोधौ भगवद्विश्रामोत्तरक्षणे सेवायां देहालस्यनिवारणार्थं स्वापः, सेवासामग्रीसंपादनादिष्ववबोधः । एतादृशौ तौ यस्य । तस्य योगो भावात्मको मत्संगात्मको दुःखहा तद्भावाभावतापादिहर्ता भवतीत्यर्थः ॥ १७ ॥

नी० टी०—युक्ताः परिमिता आहारादयो यस्य स तथा ॥ १७ ॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ॥
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

शां० भा०—अथाधुना कदा युक्तो भवतीत्युच्यते—यदा विनियतं चित्तं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं हित्वा बाह्यचिन्तामात्मन्येव केवलेऽवतिष्ठते स्वात्मनि स्थितिं लभत

इत्यर्थः । निःस्पृहः सर्वकामेभ्यो निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः स युक्तः समाहित इत्युच्यते तदा तस्मिन्काले ॥ १८ ॥

**शां० आ०**—सफलस्य साङ्गस्य योगस्योक्त्यनन्तरं यदा हीत्यादावुक्तकालानुवादेन युक्तं लक्षयितुमनन्तरश्लोकप्रवृत्तिं दर्शयति—**अथाधुनेति** । विशेषेण संयतत्वमेव संक्षिपति—**एकाग्रतामिति** । आत्मन्येवेत्येवकारार्थं कथयति—**हित्वेति** । केवलत्वमद्वितीयत्वम् । तस्याऽऽत्मस्थितिं विवृणोति—**स्वात्मनीति** । चित्तस्य हि कल्पितस्याऽऽत्मैव तत्त्वं तत्पुनरन्यतः सर्वतो निवारितमधिष्ठाने निमग्नं तिष्ठतीति भावः । तस्यामवस्थायां सर्वेभ्यो विषयेभ्यो व्यावृत्ततृष्णो युक्तो व्यवह्रियत इत्याह—**निःस्पृह इति** ॥ १८ ॥

**आ० भा०**—आत्मनि भवति ॥ १८ ॥

**आ० ज०**—आत्मन्येवावतिष्ठत इत्यत्र स्वस्मिन्नेवेतिप्रतीतिनिरासायाह—**आत्मनीति** । अन्यथा ज्ञात्वा मामित्यादिविरोधः १८

**रा० भा०**—यदा प्रयोजनविषयं चित्तमात्मन्येव नियतं विशेषेण नियतं निरतिशयप्रयोजनतया तत्रैव नियतं निश्चलमवतिष्ठते तदा सर्वकामेभ्यो निःस्पृहः सन् युक्त इत्युच्यते योगार्ह इत्युच्यते॥१८॥

**अ० टी०**—नन्वेवं प्रवृत्तस्य भगवद्योगसिद्धिः कदा स्यादित्याकाङ्क्षायामाह—**यदेति** । यदा यस्मिन् समये भगवत्संबन्धलक्षणभद्रकाले विनियतं वशीभूतं चित्तमात्मन्येव भावात्मकस्वरूप एव अवतिष्ठते स्थिरं भवति सर्वकामेभ्यो लौकिकेभ्यो निस्पृहो विगतेच्छो भवति तदा युक्त इत्युच्यते । सिद्धयोग उच्यत इत्यर्थः ॥ १८ ॥

**नी० टी०**—निर्वाणपरमां शांतिं प्राप्तस्य लक्षणान्याह—**यदेत्यादिभिः षड्भिः** । विनियतं विशेषेण एकाग्रताभूमेरपि निरुद्धमात्मनि प्रत्यगात्मन्येवावतिष्ठते न त्वस्मितादिरूपेण उद्रिच्यते तदा योगी सर्वेभ्यो जाग्रत्स्वप्नसबीजसमाधिषूपस्थितेभ्यः ल्यब्लोपे पंचमी सार्वात्म्यप्राप्त्यैव तान् प्राप्य तेषु निस्पृहो भवति तदा युक्तो निर्विकल्पक इत्युच्यते ॥ १८ ॥

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ॥**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥**

**शां० भा०**—तस्य योगिनः समाहितं यच्चित्तं तस्योपमोच्यते—यथा दीपः प्रदीपो निवातस्थो निवाते वातवर्जिते देशे स्थितो नेङ्गते न चलति सोपमोपमीयतेऽनयेत्युपमा योगज्ञैश्चित्तप्रचारदर्शिभिः स्मृता चिन्तिता । योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगमनुतिष्ठत आत्मनः समाधिमनुतिष्ठत इत्यर्थः ॥ १९ ॥

**शां० आ०**—उपमा योगिनश्चित्तस्थैर्यस्योदाहरणमित्यर्थः । उपमाशब्दस्य प्रदीपविषयत्वसिद्ध्यर्थं करणव्युत्पत्तिं दर्शयति—**उपमीयत इति** । योगिनो यथोक्तविशेषणवतश्चित्तस्थैर्यस्येति शेषः ॥ १९ ॥

**आ० भा०**—आत्मनो भगवद्विषयं योगम् ॥ १९ ॥

**आ० ज०**—युंजतो योगमात्मन इत्यत्रात्मशब्दस्य षष्ठ्याश्च विवक्षितमर्थमाह—**आत्मन इति** । योगिन आत्मन इति अन्वयनिरासाय योगमित्युक्तम् । अन्यथा वैयर्थ्यात् ॥ १९ ॥

**रा० भा०**—निवातस्थो दीपो यथा नेङ्गते न चलति अचलः सप्रभस्तिष्ठति यतचित्तस्य निवृत्तसकलेतरमनोवृत्तेर्योगिनः आत्मनि योगं युञ्जतः आत्मस्वरूपस्य सोपमा निवातस्थतया निश्चलसप्रभदीपवन्निवृत्तसकलेतरमनोवृत्तितया निश्चलो ज्ञातप्रभः आत्मा तिष्ठतीत्यर्थः ॥ १९ ॥

**अ० टी०**—विनियतचित्तः कीदृग्विधः स्यादित्याकाङ्क्षायामाह—**यथेति** । यथा दीपो वायुरहित प्रदेशस्थितो नेङ्गते न चलति यतचित्तस्यात्मनो भगवता योगं युञ्जतो भावयतो योगिनः सा उपमा स्मृता । अत्र दीपदृष्टान्तस्यायं भावः । दीपस्य तापरूपत्वाद्वायोश्च शैत्यधर्मत्वात् तद्रहितदेशे तस्य नाशार्थं चाञ्चल्यं न भवति । तथा भगवद्विप्रयोगतापनिवर्तकधर्मभावेन योगं युञ्जतो मनश्चञ्चलं न भवति ॥ १९ ॥

**नी० टी०**—एकाग्रतावस्थायां योगिचित्तस्योपमामाह—**यथेति** । नेंगते न चलति तद्वत् यतं च तच्चित्तं च यतचित्तं तस्य एकाग्रतां प्राप्तं चित्तं निवातप्रदीपवन्न चलतीत्यर्थः । आत्मनो योगं समाधिं युंजतोऽनुतिष्ठतः ॥ १९ ॥

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ॥**
**यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥**

**शां० भा०**—एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत्—यत्र यस्मिन्काल उपरमते चित्तमुपरतिं गच्छति निरुद्धं सर्वतोनिवारितप्रचारं योगसेवया योगानुष्ठानेन यत्र चैव यस्मिंश्च काल आत्मना समाधिपरिशुद्धेनान्तःकरणेनाऽऽत्मानं परं चैतन्यज्योतिःस्वरूपं पश्यन्नुपलभमानः स्व एवाऽऽत्मनि तुष्यति तुष्टिं भजते ॥ २० ॥

**शां० आ०**—द्विविधः समाधिः संप्रज्ञातोऽसंप्रज्ञातश्च, ध्येयैकाकारसत्त्ववृत्तिभेदेन, कथंचिज्ज्ञायमाना संप्रज्ञातः समाधिः, कथमपि पृथगज्ञायमाना सैव सत्त्ववृत्तिरसंप्रज्ञातः समाधिस्तत्र सामान्येन समाधिलक्षणमभिधायासंप्रज्ञातस्य समाधेरधुना लक्षणं विवक्षन्नाह—**एवमिति** । काले समाध्युपलक्षिते, एवकारस्तुष्यतीत्यनेन संबध्यते । चकारस्य संबन्धमाह—**यस्मिंश्चेति** । कालस्तु पूर्ववत् । कर्मकारकत्वेन निर्दिष्टमात्मानं तत्पदार्थत्वेन व्याचष्टे—**परमिति** । आत्मनीत्यस्य त्वंपदार्थविषयत्वमाह—**स्व एवेति** । परमात्मानं प्रतीच्येव तद्भावेनापरोक्षीकुर्वन्नतुष्टिहेत्वभावात्तुष्यत्येवेत्यर्थः । तस्मिन्काले योगसिद्धिर्भवतीति शेषः ॥ २० ॥

**आ० भा०**—आत्मना मनसा आत्मनि देहे आत्मानं भगवंतं पश्यन् ॥ २० ॥

**आ० ज०**—यत्र चैवात्मनेत्यत्र पदत्रयं व्याख्याति—**आत्मनेति** । अन्वयापेक्षया व्युत्क्रमः पश्यन्निति स्थानविवेकार्थमुक्तम् ॥ २० ॥

**रा० भा०**—योगसेवया हेतुना सर्वत्र विरुद्धं चित्त यत्र योगे उपरमते अतिशयितसुखमिदमेवेति रमते यत्र च योगे आत्मना मनसा आत्मानं पश्यन्नन्यनिरपेक्षमात्मन्येव तुष्यति ॥ २० ॥

**अ० टी०**—यस्मिन् योगे मनश्चञ्चलं न भवति स कीदृशो योग इत्यपेक्षायामाह—**यत्रेति सार्द्धैस्त्रिभिः**। यत्र यस्यामवस्थायां योगसेवया भावात्मकसंयोगरूपभगवत्सेवया स्वभोगादिभ्यो निरुद्धं चित्तमुपरमते संयोगावस्थाभावरूपसमीपे रमते । यत्र चावस्थाविशेषे विविधभावस्फूर्तावात्मना भावरूपेणाऽऽत्मानं भावरूपं पश्यन् । आत्मन्येव भावरूप एव तुष्यति तं योगसंज्ञितं विद्यादितितुर्ये श्लोकत्रयस्याऽन्वयः ॥ २० ॥

**नी० टी०**—**यत्रेति** । एवं चित्तमेकाग्रीभूतं सत् योगसेवया निरुद्धं यत्र यस्यामवस्थायामुपरमते विलीनं भवति यत्र वा आत्मना चित्तेनात्मानं निर्विकल्पं पश्यन्नात्मनि तुष्यति न बाह्यार्थे तुष्टिं भजते २०॥

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ॥**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**

**शां० भा०—किंच—**सुखमात्यन्तिकमत्यन्तमेव भवतीत्यात्यन्तिकमनन्तमित्यर्थः। यत्तद्बुद्धिग्राह्यं बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्यमतीन्द्रियमिन्द्रियगोचरातीतमविषयजनितमित्यर्थः। वेत्ति तदीदृशं सुखमनुभवति यत्र यस्मिन्काले न च, एव, अयं विद्वानात्मस्वरूपे स्थितस्तस्मान्नैव चलति तत्त्वतस्तत्त्वस्वरूपान्न प्रच्यवत इत्यर्थः॥ २१॥

**शां० आ०—**योगसिद्धिकालं प्रकारान्तरेण प्रकटयति—**किंचेति**। बुद्धिशब्दः स्वानुभवविषयः । इन्द्रियनिरपेक्षस्वानुभवगम्यत्वोक्तेरतीन्द्रियमिति पुनरुक्तमित्याशङ्क्याऽऽह—**अविषयेति**। पदच्छेदः—**न चेत्यादि** । अपेक्षितपूरणम्—**आत्मस्वरूप इति**। तस्मात्तत्त्वत इति संबन्धः, नैवेत्येवकारसंबन्धोक्तिः, चकारः सप्तम्या संबन्धनीयः। यत्रेति पूर्ववत्संबन्धः॥ २१॥

**आ० भा०—**तत्त्वतो भगवद्रूपात्॥ २१॥

**आ० ज०—**तत्त्वतस्तद्भावात् ब्रह्मत्वादिति प्रमाणविरुद्धं व्याख्यानं व्यावर्तयितुमाह—**तत्त्वतइति**॥ २१॥

**रा० भा०—**यत्तदतीन्द्रियमात्मबुद्ध्येकग्राह्यमात्यन्तिकं सुखं यत्र च योगे वेत्ति अनुभवति यत्र च योगे स्थितः सुखातिरेकेण तत्त्वतस्तद्भावान्न चलति॥ २१॥

**अ० टी०—**तेषामुत्पत्तिप्रकारमाह—**सुखमिति**। यत्र अवस्थाविशेषे तथाभूतसेवानुभवजाताग्रिमविविधमनोरथरूपे आत्यन्तिकमतिशयितं जीवभावप्रातिफलात्मकं सुखं बुद्धिग्राह्यं भावात्मकस्वरूपात्मबुद्धिग्राह्यमतीन्द्रियं लौकिकेन्द्रियसंबन्धाविषयं यत् तद्वेत्ति। च पुनः। अयं पुंजीवः यत्रावस्थायां तत्त्वतो भावात्मकदास्यफले रसकोटिस्फूर्तिरहितभावेन स्थितो नैव चलति तं विद्यादित्यग्रिमश्लोकेनैव संबन्धः॥ २१॥

**नी० टी०—किंच—सुखमिति**। आत्यंतिकमनंतं यत्सुखं तत्केवलं बुद्धिग्राह्यं सौषुप्तसुखवद्यतोऽतींद्रियमिंद्रियागोचरं यत्र सुखे स्थितोऽयं न वेत्ति वेद्याभावान्न किंचिदनुभवति नापि तत्त्वतश्चलति। बुद्धितादात्म्याध्यासकाले चलतीवेति भाति परंतु तत्त्वतो न चलति। तथा च श्रुतिर्ध्यायतीव लेलायतीवेतीवशब्दं प्रयुंजाना ध्यानादेरतात्त्विकत्वं दर्शयति बुद्धौ ध्यायंत्यां ध्यायतीवेति लेलायंत्यां लेलायतीवेति श्रुत्यर्थः। यद्वा तत् सुखं यत्रायं न चैव वेत्ति किमपि नैवानुभवति यत्रेत्यादिभिन्नं वाक्यम्॥ २१॥

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः॥**
**यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते॥ २२॥**

**शां० भा०—किंच—**यं लब्ध्वा यमात्मलाभं लब्ध्वा प्राप्य चापरमन्यल्लाभान्तरं ततोऽधिकमस्तीति न मन्यते न चिन्तयति। किंच यस्मिन्नात्मतत्त्वे स्थितो दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महताऽपि न विचाल्यते॥ २२॥

**शां० आ०—**प्रकारान्तरेण प्रकृतं योगं विशिनष्टि—**किंचेति**। आत्मलाभान्न परं विद्यत इति स्मृत्या व्याचष्टे—**यमात्मलाभमिति**। लाभान्तरं पुरुषार्थभूतं, ततस्तस्मादात्मलाभादिति यावत, तं विद्यादित्युत्तरत्र संबन्धः। यस्मिन्नित्याद्यवतारयति—**किंचेति**। अपरिपक्वयोगो यथा दर्शितेन दुःखेन प्रच्याव्यते नैवं विचाल्यते यस्मिन्स्थितो योगी तं योगं विद्यादिति पूर्ववत्॥ २२॥

**आ० भा०—**॥ २२॥

**आ० ज०—**॥ २२॥

**रा० भा०—**यं योगं लब्ध्वा योगाद्विरतस्तमेव काङ्क्षमाणो नापरं लाभं मन्यते यस्मिंश्च योगे स्थितो विरजोऽपि गुणवत्पुत्रवियोगादिना गुरुणापि दुःखेन न विचाल्यते॥ २२॥

अ० टी०—ननु तत्र स्थितस्य चलनाभावः कथमित्यपेक्षायामाह—यं लब्ध्वेति । यं सुखं लब्ध्वा ततोऽधिकमपरं लाभं न मन्यते तत उत्तमत्वाभावात् । यस्मिन् स्थितो गुरुणापि दुःखेन अधिकरणात्मक विप्रयोगादिना न विचाल्यते ॥ २२ ॥

नी० टी०—दुःखेन शस्त्रपातादिलक्षणेन गुरुणा महता ॥ २२ ॥

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ॥**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥**

शां० भा०—यत्रोपरमत इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तः—तं विद्याद्विजानीयाद्दुःखसंयोगवियोगं दुःखैः संयोगो दुःखसंयोगस्तेन वियोगो दुःखसंयोगवियोगस्तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्याद्विजानीयादित्यर्थः । योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यतोच्यते निश्चयानिर्वेदयोर्योगसाधनत्वविधानार्थम् । स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्योऽनिर्विण्णचेतसा न निर्विण्णमनिर्विण्णं किं तच्चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः ॥ २३ ॥

शां० आ०—तं विद्यादित्याद्यपेक्षितं पूरयन्नवतारयति—यत्रेति । तमित्यात्मावस्थाविशेषं परामृशति । दुःखसंयोगस्य वियोगो वियोगसंज्ञितो युज्यते स कथं योगसंज्ञितः स्यादित्याशङ्क्याऽऽह—विपरीतेति । इयं हि योगावस्था समुत्खातनिखिलदुःखभेदेति दुःखसंयोगाभावो योगसंज्ञामर्हतीत्यर्थः । उपसंहृते योगफले किमिति पुनर्योगस्य कर्तव्यत्वमुच्यते तत्राऽऽह—योगफलमिति । प्रकारान्तरेण योगस्य कर्तव्यत्वोपदेशारम्भोऽत्रान्वारम्भः । योगं युञ्जानस्तत्क्षणादुक्तां संसिद्धिमलभमानः संशयानो निवर्तेतेति तन्निवृत्त्यर्थं पुनः कर्तव्यत्वोपदेशोऽर्थवानिति मत्वाऽऽह—निश्चयेति । तयोः साधनत्वविधानमेवाक्षरयोजनया साधयति—स यथेति । इह जन्मनि जन्मान्तरे वा सेत्स्यतीत्यध्यवसायः । योक्तव्यः कर्तव्यः ॥ २३ ॥

आ० भा०—दुःखसंयोगो येन वियुज्यते स दुःखसंयोगवियोगः । न केवलमुत्पन्नं दुःखं नाशयति । उत्पत्तिमेव निवारयतीति दर्शयति संयोगशब्देन निश्चयेन योक्तव्यः । योक्तव्य एव बुभूषुणेत्यर्थः ॥ २३ ॥

आ० ज०—ननु दुःखसंबंधस्य वियोगो ध्वंसः स कथं योगः स्यादित्यत आह—दुःखेति । करणेऽपि घञः स्मरणात् । एवं तर्हि दुःखवियोगमित्येव वक्तव्यम् । किं संयोगशब्देनेत्यतआह—न केवलमिति । वियोगशब्दो निवारणे वर्तत इति भावः । एतच्च पदाधिक्यादेव लभ्यते नान्यथा । ननु स निश्चयेन योक्तव्य इति पुनर्विधानं किमर्थं निश्चयेनेत्यादिविशेषविधानार्थमिति चेत् न । महाफले संदेहात् प्रवृत्त्यभावेन निश्चयेनेत्यस्य वैयर्थ्यादित्यत आह—निश्चयेनेति । अयोगव्यवच्छेदे निश्चयशब्द इत्यर्थः । कुत्रायोगोव्यवच्छिद्यत इत्यत उक्तम् । बुभूषुणेति । मुमुक्षुणेत्यर्थः ॥ २३ ॥

रा० भा०—तं दुःखसंयोगवियोगं दुःखसंयोगप्रत्यनीकाकारं योगशब्दाभिधेयं ज्ञानं विद्यात् स एवंभूतो योगः इत्यारम्भदशायां निश्चयेनानिर्विण्णचेतसा हृष्टचेतसा योगो योक्तव्यः ॥ २३ ॥

अ० टी०—तं योगसंज्ञितं मद्योगसंज्ञात्मकं विद्यात् जानीयात् कीदृशं तं दुःखसंयोगवियोगं दुःखात्मको यः संयोगो लौकिकोऽधिकरणदेहस्थो वा तस्य वियोगरूपम् यतोऽयं योगः फलसाधकोऽतः स कार्य इत्याह सार्द्धेन—सइति । स पूर्वोक्तः फलसाधकरूपो योगो निश्चयेन गुरूपदिष्टेन अनिर्विण्णेन दुःखज्ञानजप्रपत्तिशैथिल्येन हितेन मनसा योक्तव्यः कर्तव्य इत्यर्थः ॥ २३ ॥

नी० टी०—तमिति । यत्रोपरमते चित्तमित्यादिना उक्तलक्षणं तं दुःखसंयोगस्याप्यंतःकरणसंबंधस्य वियोगमेव सन्तं विरुद्धलक्षणया योगसंज्ञितं विद्यात् । योगफलमुपसंहृत्य पुनर्निश्चयानिर्वेदयोः साधनत्ववि-

धानपूर्वकं तमेव शतकृत्वोऽपि पथ्यं वदितव्यमिति न्यायेन विधत्ते स इत्यादिना स योगो निश्चयेनाध्यवसायेनानिर्विण्णं निर्वेदरहितं चेतो यस्य तेन योक्तव्योऽभ्यसनीयः । यद्वा "शांतो दांतउपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति श्रुतिविहितं श्रुत्यंतरदृष्टं श्रद्धावित्तपदोपेतं शमादिषट्कमत्र क्रमतो विधीयते । तत्र निश्चयेनेति गुरुवेदवाक्यादौ फलावश्यंभावनिश्चयलक्षणा श्रद्धाऽत्र निश्चयपदेन गृह्यते । तथा निर्विण्णचेतसेति वैराग्येण द्वंद्वसहिष्णुत्वलक्षणा तितिक्षा विधीयते इति ज्ञेयम् ॥ २३ ॥

**संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ॥**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥**

**शां० भा०—किंच—संकल्पप्रभवान्संकल्पः प्रभवो येषां कामानां ते संकल्पप्रभवाः कामास्तांस्त्यक्त्वा परित्यज्य सर्वानशेषतो निर्लेपेन । किंच मनसैव विवेकयुक्तेनेन्द्रियग्राममिन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात् ॥ २४ ॥**

शां० आ०—इतश्च योगस्य कर्तव्यत्वमिति प्रतिजानीते—**किंचेति** । केन क्रमेण कर्तव्यत्वमित्यपेक्षायामाह—**संकल्पेति** । संकल्पः शोभनाध्यासः । सर्वानित्युक्त्वा पुनरशेषत इति पुनरुक्तिरित्याशङ्क्याऽऽह—**निर्लेपेनेति** । यथा शेषो न भवति तथा सर्वेषां कामानां शोभनाध्यासाधीनानां त्यागस्य योगानुष्ठानशेषत्ववद्विवेकयुक्तेन मनसा करणसमुदायस्य सर्वतो नियमनमपि तत्र शेषत्वेन कर्तव्यमित्याह—**किंचेति** ॥ २४ ॥

**आ० भा०—सर्वान्सर्वविषयान् अशेषतः । एकैकविषयोऽपि कामः स्वल्पः कादाचित्कोऽपि न कर्तव्य इत्यर्थः । मनसैव नियंतुं शक्यते नान्येनेत्येवशब्दः ॥ २४ ॥**

आ० ज०—सर्वानशेषतइत्येतयोस्तात्पर्यमाह—**सर्वानिति** । कामः स्वल्पः कादाचित्कोपीति मूलपाठः । नन्विद्रियग्रामनियमनमेवावश्यकं न तु करणनियमः । कथमुच्यते मनसैवेंद्रियग्राममिति तत्राह—**मनसैवेति** । स्वरूपकथनमेतदिति भावः । इति ज्ञापयितुमितिशेषः ॥ २४ ॥

**रा० भा०—स्पर्शजाः संकल्पजाश्चेति द्विविधाः कामाः स्पर्शजाः शीतोष्णादयः संकल्पजाः पुत्रपौत्रक्षेत्रादयः तत्र संकल्पप्रभवाः स्वरूपेणैव त्यक्तुमशक्यास्तान् सर्वान् मनसैव तदनन्वयानुसंधानेन त्यक्त्वा स्पर्शजेष्ववर्जनीयेषु तन्निमित्तहर्षोद्वेगौ त्यक्त्वा समन्ततः सर्वस्माद्विषयात्सर्वमिन्द्रियग्रामं विनियम्य ॥ २४ ॥**

अ० टी०—किंच संकल्पप्रभवान् स्वभोगार्थकस्वमनोनिश्चयजान् कामान् स्वरमणेच्छादिरूपान् सर्वान् भावानन्तरमपि स्वेङ्गितज्ञरूपान् अशेषतः फलाभावज्ञाने त्यक्त्वा मनसैवेन्द्रियग्रामं नियम्य भगवदंशात्मकलावण्यादिरसान् पश्यन् मनसैव स्वार्थभोगरूपेणैव ततः विषयेभ्यो विनियम्य वशे संस्थाप्य योगो योक्तव्य इत्यर्थः ॥ २४ ॥

नी० टी०—अथ शमदमोपरमसमाधानानि क्रमेण श्लोकद्वयेन विधत्ते—**संकल्पेति** । संकल्प इदं मे भूयादिति चेतोवृत्तिस्तत उद्भवो येषां तान् कामान् काम्यमानान् विषयानशेषतो वासनोच्छेदपूर्वकं संकल्पनिरोधेन त्यक्त्वा । एतेनांतरिंद्रियनिग्रहलक्षणः शम उक्तः । बाह्येंद्रियनिग्रहलक्षणं दममाह—**मनसैवेति** । विषयदोषदर्शिना मनसैव सर्वतः सर्वप्रकारेण श्रोत्रादिकमिंद्रियग्रामं समंततः सर्वेभ्यो विषयेभ्यो विनियम्य उपरमेदित्युत्तरेणान्वयः ॥ २४ ॥

**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ॥**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥**

**शां० भा०—शनैः शनैर्न सहसोपरमेदुपरतिं कुर्यात् । कया बुद्ध्या । किंविशिष्टया धृतिगृहीतया धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्येण युक्तयेत्यर्थः । आत्मसंस्थमात्मनि संस्थितमात्मैव सर्वं न ततोऽन्यदस्तीत्येवमात्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् । एष योगस्य परमो विधिः ॥ २५ ॥**

**शां० आ०**—कामत्यागद्वारेणेन्द्रियाणि प्रत्याहृत्य किं कुर्यादिति शङ्कितारं प्रत्याह—**शनैः शनैरिति** । सहसा विषयेभ्यः सकाशादुपरमे मनसो न स्वास्थ्यं संभवतीत्यभिप्रेत्याऽऽह—**न सहसेति** । तत्र साधनं धैर्ययुक्ता बुद्धिरित्याह—**कयेत्यादिना** । भूम्यादीरव्याकृतपर्यन्ताः प्रकृतीरष्ट पूर्वपूर्वत्र धारणं कृत्वोत्तरोत्तरक्रमेण प्रविलापयेदिति भावः । अव्यक्तमात्मनि प्रविलाप्याऽऽत्ममात्रनिष्ठं मनो विधाय चिन्तयितव्याभावादतिस्वस्थो भवेदित्याह—**आत्मेति** । तत्र संस्थितिमेव मनसो विवृणोति—**आत्मैवेति** । योगविधिमुपक्रम्य किमिदमुक्तमित्याशङ्क्याऽऽह—**एष इति** । यन्मनसो नैश्चल्यमिति शेषः ॥ २५ ॥

**आ० भा०—बुद्धेः कारणत्वं मनोनिग्रहे आत्मरमणे च ॥ २५ ॥**

**आ० ज०**—शनैःशनैरुपरमेद्बुद्ध्येति बुद्धेरपींद्रियग्रामनियमने कारणत्वस्य वक्ष्यमाणत्वात् कथमेतदित्यत आह—**बुद्धेरिति** । अनेनोपरमेदित्यस्यार्थद्वयमुक्तं भवति ॥ २५ ॥

**रा० भा०—शनैः शनैर्धृतिगृहीतया विवेकविषयया बुद्ध्या सर्वस्मादात्मव्यतिरिक्तादुपरम्यात्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥**

**अ० टी०**—ननु कथमिन्द्रियग्रामं विनियच्छेदित्यपेक्षायामाह—**शनैः शनैरिति** । धृतिगृहीतया वियोगतापादिदुःखसहनशीलधैर्यगृहीतया बुद्ध्या मनः आत्मसंस्थं भावात्मकस्थितं कृत्वा शनैःशनैरुपरमेत् स्वभोगरूपेभ्य उपशमयेत् । कथमुपरतिर्भवेदित्यत आह—**न किंचिदपि चिन्तयेदिति** । भावात्मकस्वरूपातिरिक्तं किंचिदपि न चिन्तयेन्न भावयेत् ॥ २५ ॥

**नी० टी०—शनैःशनैरिति** । भूमिकाजयक्रमेण दिव्यादिव्यविषयेभ्य उपरमेत् व्यावृत्तो भवेत् कथं धृतिगृहीतया बुद्ध्येति धृतिः । 'धृत्या यया धारयते मनःप्राणेंद्रियक्रियाः ॥ योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्विकी'इत्युक्तलक्षणा तया गृहीतया वशीकृतया बुद्ध्या उपरमेत् । तथा एवमुपरतं मनः आत्मनि स्वरूपे संस्था स्थितिर्यस्य न तु दृश्ये द्रष्टरि वा तत्तथा आत्मैकाकारमेकाग्रमित्यर्थः । "द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थं" सर्वार्थतैकार्थतयोः क्षयोदयौ चित्तस्यैकाग्रतापरिणाम इति सूत्रितमैकाग्र्यं प्रापयेत् । सूत्रार्थस्तु अहमिदं पश्यामीत्यनुभवे हि द्रष्टा दृश्यं दर्शनं च भासते तत्र दर्शनभानमप्रत्याख्येयमतो द्रष्टरि दृश्ये चोपरक्तं चित्तं सर्वार्थमिति । ननु दर्शनोपरक्तताऽपि सर्वार्थतायां गणिता तदभावे चित्तस्य नाशापत्तेः द्रष्टृदृश्योपरागाभावे तु एकार्थं तदुच्यते । यथा स्वप्ने तत्र हि दृश्यं नास्तीति पामराणामपि प्रसिद्धं । द्रष्टाऽपि नास्ति तदा इंद्रियाणामभावात् । आत्मेंद्रियमनोयुक्तं भोक्तेति श्रुत्यैव भोक्तृत्वस्येंद्रियसन्नियोगशिष्टत्वात् । किंतु द्रष्टृदृश्यवासनावासितं चित्रपटसदृशमेकं मन एवास्ति तच्च स्वयंज्योतिषा पुरुषेण भास्यमानं जाग्रद्वत्स्वप्नेऽपि द्रष्टृदृश्योपरागं प्रकाशयति तद्वासनावासितत्वात् । एवं सति यदा सर्वार्थतायाः क्षयः एकार्थताया उदयश्च तदा चित्तस्यैकाग्रतारूपः परिणामो भवतीति । तदेवमात्मसंस्थं मनः कृत्वेति संप्रज्ञातसमाधिरुक्तः । तत्रापि पूर्वाभ्यासवशाच्चित्तस्य द्रष्टृदृश्योपरागो वासनामयो भातीति तन्निवारणेन असंप्रज्ञातसमाधिमाह—**न किंचिदपि चिंतयेदिति** । ध्यातृध्यानध्येयविभागमपि न स्मरेत् किंतु अखंडैकरससंविदात्मना सुषुप्तवत्तिष्ठेदित्यर्थः ॥ २५ ॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ॥
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

**शां० भा०**—तत्रैवमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी—यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चरति निर्गच्छति स्वभावदोषान्मनश्चञ्चलमत्यर्थं चलमत एवास्थिरं ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेनाऽऽभासीकृत्य वैराग्यभावनया चैतन्मन आत्मन्येव वशं नयेदात्मवश्यतामापादयेत् एवं योगाभ्यासबलाद्योगिन आत्मन्येव प्रशाम्यति मनः॥२६

**शां० आ०**—ननु मनसः शब्दादिनिमित्तानुरोधेन रागद्वेषवशादत्यन्तचञ्चलस्यास्थिरस्य तत्र तत्र स्वभावेन प्रवृत्तस्य कुतो नैश्चल्यं नैश्चिन्त्यं चेति तत्राऽऽह—**तत्रेति**। योगप्रारम्भः सप्तम्यर्थः। एवंशब्देन मनसैवेत्यादिरुक्तप्रकारो गृह्यते। स्वाभाविको दोषो मिथ्याज्ञानाधीनो रागादिः। शब्दादेर्मनसो नियमनं कथमित्याशङ्क्याऽऽह—**तत्तन्निमित्तमिति**। याथात्म्यनिरूपणं क्षयिष्णुत्वदुःखसंमिश्रत्वाद्यालोचनं तेन तत्र तत्र वैराग्यभावनया तत्तदाभासीकृत्य ततस्ततो नियम्यैतन्मन इति संबन्धः। मनोवशीकरणेनोपशमे किं स्यादित्याशङ्क्याऽऽह—**एवमिति**। योगाभ्यासो विषयविवेकद्वारा मनोनिग्रहाद्यावृत्तिः। प्रशान्तमात्मन्येव प्रलीनमिति यावत् ॥ २६ ॥

**आ० भा०**—यतो यतो यत्र यत्र 'यतो यतो धावति' इत्यादिप्रयोगात्। आत्मन्येव वशं नयेत्। आत्मविषय एव वशीकुर्यादित्यर्थः ॥ २६ ॥

**आ० ज०**—यतो यतः। श्रोत्रादेरिति प्रतीतिनिरासायाह—**यत इति**। शब्दादावित्यर्थः। कुतः सप्तम्यर्थे तसिर्लभ्यत इत्यत आह—**यत इति**। तथा चोक्तम्। आद्यादिभ्य उपसंख्यानमिति। अन्यथा द्वारमात्रनियमे स्मरणस्य को निवारयिता। षष्ठ्या ह्यत्र भाव्यं सप्तमी तु कथमित्यत आह—**आत्मनीति** ॥ २६ ॥

**रा० भा०**—चलस्वभावतया आत्मन्यस्थिरं मनः यतो यतो विषयप्रावण्यहेतोर्बहिर्निश्चलति ततस्ततो यत्नेन मनो नियम्यात्मन्येवातिशयितसुखभावनया वशं नयेत् ॥ २६ ॥

**अ० टी०**—शनैरित्युक्तेः स्वरूपमाह—**यत इति**। मनो यतोयतः स्वभावतश्चञ्चलम् अस्थिरं यं यं प्रति निश्चलति ततस्ततो नियम्य वशीकृत्य एतन्मन आत्मन्येव भावात्मके भगवत्येव वशं नयेत् प्रापयेत्। अत्रायं भावः। पूर्वं यत्र स्थितं मनस्ततोऽन्यत्र वैशिष्ट्यबुद्ध्या ततो निर्गत्याऽपगच्छति। तत्राऽपि स्वचाञ्चल्यधर्मेण न स्थिरीभविष्यति तस्माद्भगवत्स्वरूपतोऽन्यत्रोत्तमत्वाभावान्नाग्रे चलिष्यत्यतोऽन्यतो वशीकृत्य भगवति स्थापयेत् ॥ २६ ॥

**नी० टी०**—शनैःशनैरित्येतं श्लोकं व्याचष्टे—**यतो यत इति त्रिभिः**। यतो यतो हेतोर्यं यं विषयं ग्रहीतुं मनो निश्चरति बहिर्गच्छति ततस्ततस्तत्र तत्र दोषदर्शनेन ततस्ततो विषयात् एतन्मनो नियम्य प्रत्याहृत्य आत्मनि स्वरूपे एव वशं नयेत् पर्यवस्थापयेत् एतेन पूर्वार्धं व्याख्यातम् ॥ २६ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ॥
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

**शां० भा०**—प्रशान्तमनसं प्रशान्तं मनो यस्य स प्रशान्तमनास्तं प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं निरतिशयमुपैत्युपगच्छति। शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः। ब्रह्मभूतं जीवन्मुक्तं ब्रह्मैव सर्वमित्येवंनिश्चयवन्तं ब्रह्मभूतमकल्मषमधर्मादिवर्जितम् ॥ २७ ॥

**शां० आ०**—मनस्तद्वृत्त्योरभावे स्वरूपभूतसुखाविर्भावस्य स्वापादौ प्रसिद्धिं द्योतयितुं हिशब्दः। मोहादिक्लेशप्रतिबन्धायोगिनि यथोक्तसुखाप्राप्तिमाशङ्क्य मनोविलयमुपेत्य परिहरति—**शान्तेति**। तस्यास्मदादिविलक्षणत्वमाह—**ब्रह्मभूतमिति**। अस्मदादेरपि स्वतो ब्रह्मभूतत्वेन तुल्यं जीवन्मुक्तत्वमित्याशङ्क्याऽऽह—**ब्रह्मैवेति**। धर्माधर्मप्रतिबन्धादयुक्ता यथोक्तसुखप्राप्तिरित्याशङ्क्योक्तम्—**अकल्मषमिति** ॥ २७ ॥

**आ० भा०**—॥ २७ ॥

आ० ज०— ॥ २७ ॥

**रा० भा०**—**प्रशान्तमनसम् आत्मनि निश्चलमनसम् आत्मन्यस्तमनसं तत एव हेतोर्दग्धाशेषकल्मषं तत एव शान्तरजसं विनष्टरजोगुणं तत एव ब्रह्मभूतं स्वस्वरूपेणावस्थितमेनं योगिनमात्मानुभवरूपमुत्तमं सुखमुपैति हीति हेतौ उत्तमसुखरूपमुपैतीत्यर्थः ॥ २७ ॥**

**अ० टी०**—एवं भावात्मके भगवति मनःस्थैर्ये यत्फलं स्यात्तदाह—**प्रशान्तमनसमिति**। **प्रशान्तमनसं** भगवति स्थिरमनसमेनं योगिनं शान्तरजसं विक्षेपदोषरहितमुत्तमं सुखं ब्रह्मभूतं भगवद्रसात्मकमकल्मषं स्वभोगादिसुखदोषरहितमुपैति ॥ २७ ॥

**नी० टी०**—एवमात्मवशे मनसि किं स्यादित्याशंक्याह—**प्रशांतेति**। हि यस्मात् एनं प्रशांतमनसं प्रकर्षेण उपरतचेतसं योगिनं एकाग्रताभूमौ उत्तमं सुखं संप्रज्ञातसमाधिफलभूतं उपैति। भौतिकानां बाह्यानां मानोरथिकानामांतराणां च विषयाणां त्यागात् शांतरजसं प्रक्षीणमोहादिक्लेशं ब्रह्मभूतं सद्वस्तुरूपं। अकल्मषं धर्माधर्मवर्जितं यथोक्तं योगभाष्ये। यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति कर्मबंधनानि श्लथयति निरोधमभिमुखीकरोति क्षिणोति च क्लेशान् स संप्रज्ञातो योग इत्याख्यायत इति। एतेनात्मसंस्थं मनः कृत्वेति व्याख्यातम् ॥ २७ ॥

**युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ॥**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥**

**शां० आ०**—**युञ्जन्निति। युञ्जन्नेवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदाऽऽत्मानं विगतकल्मषो विगतपापः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तद्ब्रह्मसंस्पर्शं सुखमत्यन्तमन्तमतीत्य वर्तत इत्यत्यन्तमुत्कृष्टं निरतिशयमश्नुते व्याप्नोति ॥ २८ ॥**

**शां० आ०**—उत्तमं सुखं योगिनो भवतीत्युक्तं तदेव स्फुटयति—**युञ्जन्निति**। क्रमो यथोक्तो मनसैवेन्द्रियग्राममित्यादिः, योगान्तरायो रागद्वेषादिः, सदाऽऽत्मानं युञ्जन्निति संबन्धः। पापपदमुपलक्षणं पुण्यस्यापि। संस्पर्शस्तादात्म्यमैकरस्यम्। उत्कर्षो विषयासंस्पर्शः ॥ २८ ॥

**आ० भा०**—**पूर्वश्लोकोक्तं प्रपंचयति—एवं युंजन्निति ॥ २८ ॥**

आ० ज०—प्रशांतमनसमित्युक्तमेव पुनः कस्मादुच्यत इत्यत आह—**पूर्वेति** ॥ २८ ॥

**रा० भा०**—**एवमुक्तप्रकारेणात्मानं युञ्जंस्तेनैव विगतप्राचीनसमस्तकल्मषो ब्रह्मसंस्पर्शं ब्रह्मानुभवरूपं सुखमत्यन्तमपरिमितं सुखेनानायासेन सदाऽश्नुते ॥ २८ ॥**

**अ० टी०**—एवं सुखाप्तौ किं स्यादित्यत आह—**युञ्जन्निति**। एवं पूर्वोक्तप्रकारेण सदा भगवति आत्मानं भावात्मकं युञ्जन् योगी विगतकल्मषः स्यात्। ततः प्राप्तेनानेन सुखेन ब्रह्मसंस्पर्शं भगवच्चरणारविन्दसंवाहनादिसेवारूपमत्यन्तं सुखं दास्यात्मकमश्नुते भुङ्क्त इत्यर्थः ॥ २८ ॥

नी० टी०—अस्य फलमाह—**युंजन्निति** । एवमनेन प्रकारेण योगी आत्मानं मनो युंजन् समादधानः विगतकल्मषो निरस्ताविद्यादिक्लेशः सुखेन अनायासेन ब्रह्मसंस्पर्शं निर्विशेषं ब्रह्मणा ऐक्यं त्रिविधोपाधिप्रविलयात् अश्नुते प्राप्नोति । कीदृशं ब्रह्मसंस्पर्शं अत्यंतं अंतो द्रष्टृदृश्यभावेन परिच्छेदस्तमतिक्रांतं निर्विशेषं सुखं परमानंदैकरूपं । एतेन न किंचिदपि चिंतयेदिति चतुर्थपादो व्याख्यातः ॥ २८ ॥

**सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ॥**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥**

**शां० भा०—इदानीं योगस्य यत्फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत्प्रदर्श्यते—सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानं सर्वभूतानि चाऽऽत्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतान्यात्मन्येकतां गतानीक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविशेषं दर्शनं ज्ञानं यस्य स सर्वत्रसमदर्शनः ॥ २९ ॥**

शां० भा०—योगमनुतिष्ठतो ब्रह्मभूतस्य सर्वानर्थनिवृत्तिनिरतिशयसुखप्राप्तिलक्षणो द्विविधो मोक्षो हेतुना केन स्यादिति शङ्कमानं प्रत्याह—**इदानीमिति** । स्वमात्मानमीक्षत इति संबन्धः । सर्वभूतान्यपि तद्विशेषणत्वेन पश्यति चेन्न शुद्धवस्तुज्ञानमिति नाविद्यानिवृत्तिरित्याशङ्कयाऽऽह—**सर्वभूतानीति** । उक्ते दर्शने चित्तसमाधानमुपायं दर्शयति—**योगेति** । विषमेषूपाधिषु तदनुरोधाद्विषममेव दर्शनं तदुपदर्शितदर्शनप्रतिबन्धकं प्रत्युदस्यति—**सर्वत्रेति** ॥ २९ ॥

**आ० भा०—ध्येयमाह—सर्वभूतस्थमिति । सर्वभूतस्थमात्मानं परमेश्वरम् । सर्वभूतानि चात्मनि परमेश्वरे । तं च परमेश्वरं ब्रह्मतृणादावैश्वर्यादिना साम्येन पश्यति । तच्चोक्तम् । 'आत्मानं सर्वभूतेषु भगवंतमवस्थितम् ॥ अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि' इति । 'समं सर्वेषु भूतेषु तिष्ठंतं परमेश्वरम्' इति च ॥ २९ ॥**

आ० ज०—एवं युंजन्निति योगप्रकरणस्य फलकथनेनोपसंहृतत्वात्किमुत्तरेणेत्यतआह—**ध्येयमिति** । ननु मच्चित्तो युक्त इत्यादिना ध्येयमुक्तमेव सत्यम् । तथाऽप्युत्तमाधिकारिणां ध्येयमनेनोच्यत इत्यदोषः । आत्मानं स्वात्मानमित्यादिप्रतीतिपराकरणार्थमाह—**सर्वेति** । कुतोऽयमर्थइत्यतः पुराणसमाख्यानादित्याह—**तच्चेति** । सर्वत्र समदर्शन इत्यस्योक्तार्थतां गीतासंमत्योपपादयति—**सममिति** ॥ २९ ॥

**रा० भा०—अथ योगविपाकदशा चतुष्प्रकारोच्यते स्वात्मनः परेषां च भूतानां प्रकृतिवियुक्तस्वरूपाणां ज्ञानैकाकारतया साम्याद्वैषम्यस्य च प्रकृतिगतत्वाद्योगयुक्तात्मा प्रकृतिवियुक्तेष्वात्मसु सर्वत्र ज्ञानैकाकारतया समदर्शनः सर्वभूतस्थं स्वात्मानं सर्वभूतानि च स्वात्मनीक्षते सर्वभूतसमानाकारं स्वात्मानं स्वात्मसमानाकाराणि च सर्वभूतानि पश्यतीत्यर्थः । एकस्मिन्नात्मनि दृष्टे सर्वस्यात्मवस्तुनस्तत्साम्यात् सर्वम् आत्मवस्तु दृष्टं भवतीत्यर्थः । 'सर्वत्र समदर्शनः' इति वचनात् 'योऽयं योगस्त्वया प्रोक्तः साम्येन' इत्यनुभाषणाच्च 'निर्दोषं हि समं ब्रह्म' इति वचनाच्च ॥ २९ ॥**

अ० टी०—ब्रह्मसंस्पर्शसुखं स्पष्टयति—**सर्वभूतस्थमिति** । योगयुक्ताऽत्मा भगवत्संयोगयुक्त आत्मा सर्वत्र संयोगविप्रयोगभावे समदर्शन आत्मानं भगवन्तं सर्वभूतस्थं विप्रयोगावस्थायां च पुनरात्मनि भगवत्स्वरूपे संयोगावस्थायां सर्वभूतानि सेवास्थितानि ईक्षते पश्यतीत्यर्थः । एतेन भगवत्स्वरूपज्ञानात्मसुखमुक्तमिति भावः ॥ २९ ॥

**नी० टी०**—द्विविधस्यापि योगस्य फलमाह—**सर्वेति**। 'सोपाधिर्निरुपाधिश्च द्वेधा ब्रह्मविदुच्यते ॥ सोपाधिकः स्यात्सर्वात्मा निरुपाख्योऽनुपाधिकः' इति वार्त्तिकोक्तरीत्या संप्रज्ञाते आत्मनः सार्वात्म्यमनुभवन्योगी सर्वेषु भूतेषु उपादानतया स्थितं आत्मानं ईक्षते पश्यति। तथा असंप्रज्ञाते सर्वाणि भूतानि ब्रह्मादिस्तंबपर्यंतानि आत्मन्येकतां गतानि रज्ज्वामिवाध्यस्तसर्पदंडधारादीनि तद्वत्पश्यति। योगयुक्तात्मा योगेन समाहितचित्तः। अस्यैव व्युत्थानावस्थामाह—**सर्वत्रेति**। सर्वेषु ब्रह्मादिस्थावरांतेषु विषमेषु भूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं यस्य स सर्वत्रसमदर्शनः। तथा च श्रुतयः। "यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विजुगुप्सते। सर्वस्यात्मा भवति। ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत। इदं सर्वं यदयमात्मेत्यादय एतमर्थं प्रतिपादयंति"। यत्तु यो योगयुक्तात्मा यो वा सर्वत्र समदर्शनः स आत्मानमीक्षत इति योगिसमदर्शिनावाऽऽत्मेक्षणाधिकारिणावुक्तौ। यथा हि चित्तवृत्तिनिरोधः साक्षिसाक्षात्कारहेतुस्तथा जडविवेकेन सर्वानुस्यूतचैतन्यपृथक्करणमपि नावश्यं योग एवापेक्षित इति तन्न। समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति। ततस्तु"तं पश्यति निष्कलं ध्यायमानः" इत्यादिश्रुतिभिः समाधिध्यानापरपर्याययोगस्यैवात्मदर्शनहेतुत्वप्रतिपादनात्। 'तत्कारणं सांख्ययोगाभिपन्नं विद्यामेतां योगविधिं च कृत्स्नम्'इति लिंगाच्च ज्ञानयोगयोः समुच्चयावगमात्। न च श्रौतं यौक्तिकविवेकमात्राज्जडाजडयोर्देहात्मनोः पृथक्करणं संभवति सोपाधिकस्य भ्रमस्य उपाधिनिवृत्तिमंतरेण निवृत्त्यसंभवात्। आदर्शाद्यनिवृत्तावपि प्रतिबिंबादिभ्रमनिवृत्त्यापत्तेः अत एवाधिष्ठानज्ञानदार्ढ्ये सति तत्र कल्पितस्य चित्तस्य तद्दृश्यस्य चादर्शनमनायासेनैवोपपद्यत इति निरस्तं। योगं विनाऽधिष्ठानज्ञानस्यैवासंभवात् यदाह दक्षः। 'स्वसंवेद्यं हि तद्ब्रह्म कुमारी स्त्रीसुखं यथा॥ अयोगी नैव जानाति जात्यंधो हि यथा घटम्'इति। यत्तूक्तं भगवत्पूज्यपादैः ब्रह्मविदः कुत्रापि योगापेक्षां न व्युत्पादयांबभूवुरिति। तदथातो ब्रह्मजिज्ञासेत्यत्राथशब्दसूचितमुमुक्षुविशेषणीभूतसाधनचतुष्टयांतर्गतं शमाद्युपेतसमाधिमद्दृष्टोक्तमिति न दोषः। द्वौ क्रमाविति वसिष्ठवाक्यतात्पर्यं तु परस्परनिरपेक्षमार्गद्वयोपगमे नान्यः पंथा इति श्रुतिबाधापत्त्या प्रतिपत्तिक्रमभेदमात्रपरतया प्रागेव वर्णितमिति दिक्। किंच योगप्रकरणे योगानपेक्षमार्गांतरप्रतिपादनमसंगतं। न च तत्सूचकोऽत्र कश्चिच्छब्दो वर्त्तते। संभवति वा उक्तयुक्तेरतो यो वा समदर्शन इति वापदाध्याहारोऽप्यसंगत इति दिक्॥२९॥

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥**

**शां० भा०**—एतस्याऽऽत्मैकत्वदर्शनस्य फलमुच्यते—यो मां पश्यति वासुदेवं सर्वस्याऽऽत्मानं सर्वत्र सर्वेषु भूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति तस्यैवमात्मैकत्वदर्शिनोऽहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि। स च मे न प्रणश्यति स च विद्वान्मम वासुदेवस्य न प्रणश्यति न परोक्षी भवति तस्य च मम चैकात्मकत्वात्। स्वात्मा हि नामाऽऽत्मनः प्रिय एव भवति। यस्माच्चाहमेव सर्वात्मैकत्वदर्शी ॥ ३० ॥

**शां० आ०**—उक्तस्यैकत्वज्ञानस्य फलविकल्पत्वशङ्कां शिथिलयति—**एतस्येति**। तत्रैकत्वदर्शनमनुवदति—**यो मामिति**। तत्फलमिदानीमुपन्यस्यति—**तस्येति**। ज्ञानानुवादभागं विभजते—**यो मामिति**। तत्फलोक्तिभागं व्याचष्टे—**तस्यैवमिति**। अनेकत्वदर्शिनोऽपीश्वरो नित्यत्वान्न प्रणश्यतीत्याशङ्क्याऽऽह—**नेति**। अहं परमानन्दो न तं प्रति परोक्षी भवामीत्यर्थः। स चेत्यादि व्याचष्टे—**विद्वानिति**। विद्वानिवाविद्वानपीश्वरस्य न नश्यतीत्याशङ्क्योक्तं—**नेत्यादिना**। अविदुषश्च स्वरूपेण सतोऽपि

व्यवहितत्वादविद्यया नष्टप्रायतेत्यर्थः। ईश्वरस्य विदुषश्च परस्परमपरोक्षत्वे हेतुमाह—**तस्य चेति**। आत्मैकत्वेऽपि कथं मिथोऽपरोक्षत्वं तत्राऽऽह—**स्वात्मेति**। विद्वदीश्वरयोरेकत्वानुवादेन विद्याफलं विवृणोति—**यस्माच्चेति**। तस्मादेकत्वदर्शनार्थं प्रयतितव्यमिति शेषः॥ ३०॥

**आ० भा०**—फलमाह—**यो मामिति**। तस्याहं न प्रणश्यामीति सर्वदा योगक्षेमवहः स्यामित्यर्थः। स च मे न प्रणश्यति। सर्वदा मद्भक्तो भवति। सत्यपि स्वामिन्यरक्षत्यनाथः। एवं भृत्येऽप्यभजत्यभृत्य इति हि प्रसिद्धिः। उक्तं च। 'सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति॥ अचला तस्य भक्तिः स्याद्योगक्षेमं वहाम्यहम्' इति गारुडे॥ ३०॥

**आ० ज०**—किं चैतदर्थानुवादेन फलप्रतिपादकमुत्तरवाक्यमप्यस्य भगवद्विषयत्वं ज्ञापयतीति भावेनाह—**फलमिति**। अस्य ध्यानविशेषस्येति शेषः। ननु भगवांस्तद्ध्यायी च सर्वान्प्रति नित्यौ तत्कथमेतदित्यत आह—**तस्येति**। कथमयमर्थो लभ्यत इत्यत आह—**सत्यपीति**। अविद्यमाननाथोऽयमितिभृत्ये प्रसिद्धिः। एवं सत्यपि भृत्येऽभजत्यविद्यमानभृत्योऽयमिति स्वामिनि प्रसिद्धिः। एतदुक्तं भवति। विद्यमानस्यापि स्वयोग्यव्यापाराकरणसादृश्यादुपचारेणाविद्यमानता। प्रकृते तु तथात्वाभावान्न प्रणश्यामीत्यादिरूढोपचारश्चायम्। अतो न प्रयोजनान्वेषणमिति। अत्र पुराणसंमतिमाह—**उक्तं चेति**॥ ३०॥

**रा० भा०**—ततो विपाकदशामापन्नो मम साधर्म्यमुपागतः "निरञ्जनः परमं साम्यमुपैति" इत्युच्यमानं सर्वस्यात्मवस्तुनो विधूतपुण्यपापस्य स्वरूपेणावस्थितस्य मत्साम्यं पश्यन् यः सर्वत्रात्मवस्तुनि मां पश्यति सर्वात्मवस्तु च मयि पश्यति अतोऽन्यसाम्यादन्यतरदर्शनेनान्यतरदपीदृशमिति पश्यति तस्य स्वात्मस्वरूपं पश्यतोऽहं तत्साम्यान्न प्रणश्यामि नादर्शनमुपयामि ममापि मां पश्यतो मत्साम्यात्स्वात्मानं मत्सममवलोकयन् सदा दर्शनमुपयामि॥ ३०॥

**अ० टी०**—एवं स्वरूपज्ञानफलमाह—**यो मामिति**। यः सर्वत्र जीवेषु वियोगावस्थायां मां पश्यति संयोगावस्थायां मयि सर्वं पश्यति तस्य अहं न प्रणश्यामि न कदाचिदपि वियुक्तो भवामि। स च मे मत्तः न प्रणश्यति न वियुक्तो भवतीत्यर्थः॥ ३०॥

**नी० टी०**—अस्यात्मैकत्वदर्शनस्यापि फलमाह—**यो मामिति**। सर्वत्रास्मच्छब्दः प्रत्यगात्मपरः यो योगी आत्मानं सर्वत्र पश्यति सर्वं चात्मनि पश्यति तस्य योगिनः ज्ञात आत्मा न प्रणश्यति अदर्शनं न गच्छति ज्ञात आत्मा न पुनस्तिरोभवति। सकृन्नष्टस्य मूलाज्ञानस्य बीजाभावेन पुनरुदयासंभवादित्यर्थः। ननु कार्यकारणसंघाताभिमानिना शुक्तिरूप्यवद्ब्रह्मण्यध्यस्तेन तदभिमानत्यागपूर्वकं ज्ञातं स्वाधिष्ठानभूतं ब्रह्म मा तिरोधायि बुद्धेस्तत्त्वपक्षपातित्वात्। ब्रह्मदृष्ट्या तु मुक्तजीवस्य निरन्वयाच्छेदो भवतीत्याशंक्याह—**स च मे न प्रणश्यतीति**। स च विद्वान्मे मम न प्रणश्यति न तिरोभवति मदभिन्नत्वात्। भवेदेतदेवं यदि जीवो मयि अध्यस्तो वा मम विकारो वा भवेत् तदा निरन्वयोच्छेदं प्राप्नुयात्। अहमेव तु सः। तत्त्वमस्यहं ब्रह्मासि अयमात्मा ब्रह्मेत्यादिशास्त्रात् तस्माद्युक्तमुक्तं स च मे न प्रणश्यतीति॥ ३०॥

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः॥**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते॥ ३१॥**

**शां० भा०**—इत्येतत्पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते। सर्वथा सर्वप्रकारैर्वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते नित्यमुक्त एव स न मोक्षं प्रति केनचित्प्रतिबध्यत इत्यर्थः॥ ३१॥

**शां० आ०**—पूर्वार्धेनानूद्योत्तरार्धेन फलविधिरिति मत्वाऽऽह—**इत्येतदिति**। रागादिरहितस्य यमनियमादिसंस्कारवतः स्वैरप्रवृत्त्यसंभवेऽपि तामङ्गीकृत्य ज्ञानं स्तौति—**सर्वथेति**। प्रतिभासतोऽपि यथेष्टचेष्टाङ्गीकारे कुतो ज्ञानवतो नित्यमुक्तत्वं प्रातीतिकदुराचारप्रतिबन्धादित्याशङ्क्याऽऽह—**न मोक्षमिति**॥ ३१ ॥

**आ० भा०**—एतदेव स्पष्टयति—**सर्वभूतस्थितमिति**। एकत्वमास्थितः सर्वत्र एक एवेश्वर इति स्थितः सर्वप्रकारेण वर्तमानोऽपि मय्येव वर्तते। एवमपरोक्षं पश्यतो ज्ञानफलं नियतमित्यर्थः। तथापि प्रायो नाधर्मं करोति। कुर्वतस्तु महच्चेदुःखसूचकं भवतीत्युक्तं पुरस्तात् आह च। 'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत्। प्रमादात्तु कृतं पापं स्वल्पं भस्मीभविष्यति॥ आदिराजैस्तथा देवैर्ऋषिभिः क्रियते कियत्। बाहुल्यात्कर्मणस्तेषां दुःखसूचकमेव तत्' इति॥ ३१॥

**आ० ज०**—यो मामिति उक्तमेव पुनः किमर्थमुच्यतइत्यतआह—**एतदेवेति**। एकत्वमास्थित इत्यस्यान्यथा प्रतीतिंनिरासार्थमर्थमाह—**एकत्वमिति**। मयि वा मद्विकारे वा वर्तमानोऽपीत्यपव्याख्याननिरासार्थमाह—**सर्वेति**। न्यायेन वाऽन्यायेन वेत्यर्थः। अपव्याख्याने थाल्प्रत्ययो न युक्त इति भावः। भगवंतं भजतो धर्माचरणं सर्वथाऽप्यकिंचित्करामिति प्रतीतिनिरासायाह—**एवमिति**। अधर्माचरणेऽपीति शेषः। ज्ञानफलं मोक्षः। आनंदन्हासादिकं तु वियत एवेति भावः। ननु ज्ञानिनो मोक्षएवापेक्षितः सोऽधर्माचरणेऽपि न प्रतिबध्यते चेत्। तत्किमधर्मं करोतीत्यत आह—**तथापीति**। सर्वथाऽप्यकरणे सर्वथा वर्तमानोऽपीत्युक्तमयुक्तमित्यतउक्तम्—**प्राय इति**। एतेन न हीदृशस्य यथेष्टचेष्टता संभवतीति परकीयमस्मद्व्याख्यानदूषणमपि निरस्तं भवति। प्रारब्धवशेन कदाचित्तथाभावदर्शनात्। कुतो न करोतीत्यत आह—**कुर्वतस्त्विति**। अत्र प्रमाणमाह—**आह चेति**। कियन्महदिति शेषः कर्मणः प्रारब्धस्य बाहुल्यात्प्राबल्यात्। लोके प्रवृत्तिकर्मणो बाहुल्येन चित्तविक्षेपादिति वा॥ ३१॥

**रा० भा०**—ततो विपाकदशामाह—**योगदशायां सर्वभूतस्थितं मामसंकुचितज्ञानैकाकारतया एकत्वमास्थितः** प्राकृतभेदपरित्यागेन सुदृढं यो भजते स योगी व्युत्थानकालेऽपि यथा तथा वर्तमानः स्वात्मानं सर्वभूतानि च पश्यन्मयि वर्तते मामेव पश्यति स्वात्मनि सर्वभूतेषु च सर्वदा मत्साम्यमेव पश्यतीत्यर्थः॥ ३१ ॥

**अ० टी०**—किंच। यः सर्वभूतस्थितं सर्वजीवेषु रसभोगार्थं वाऽलौकिकेषु निरोधार्थं स्थितम् एकत्वं भगवदीयत्वेन सजातीयत्वमास्थितं मां भजति स योगी उच्यते। अथवा सर्वथा तेषु दास्यादिभावशिक्षणार्थं वर्त्तमानो यः स मयि च वर्तते मत्स्वरूपे तिष्ठतीत्यर्थः॥ ३१ ॥

**नी० टी०**—यस्मात्सर्वात्मैकत्वदर्शी अहमेवातो नास्य मोक्षः प्रतिबध्यत इत्याह—**सर्वभूतेति**। सर्वोपादानतया सर्वेषु भूतेषु सत्तारूपेण स्फुरणरूपेण च स्थितं मां परमात्मानमेकत्वं जीवब्रह्मणोरैक्यमास्थितः सन् भजति निर्विकल्पेन समाधिना सेवते स योगी व्युत्थानदशायां प्रारब्धकर्मवशात् बाधितानुवृत्त्या देहमारूढः सर्वथा सर्वप्रकारेण याज्ञवल्क्यादिवत्कर्मत्यागेन वा वसिष्ठजनकादिवद्विहितकर्मणा वा दत्तात्रेयादिवन्निषिद्धकर्मणा वा वर्त्तमानोऽपि व्यवहरन्नपि मय्येव वर्त्तते न मत्तश्च्युतो भवति। "यतो देवेभ्योऽपि नास्य भयम्" इति श्रूयते। "तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति" इति च। नेत्यव्ययमप्यर्थे देवा अपि तस्य ब्रह्मविदः अभूत्यै अनैश्वर्याय न ईशते न समर्था भवंति यतोऽयमेषामात्मेति श्रुत्यर्थः स न पुनः संसारी पूर्ववद्भवतीत्यर्थः॥ ३१ ॥

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन॥**
**सुखं वा यदि वा दुःखं स योगी परमो मतः॥ ३२॥**

**शां० भा०—**किंचान्यत्—आत्मौपम्येनाऽऽत्मा स्वयमेवोपमीयते [ अनया ] इत्युपमा तस्या उपमाया भाव औपम्यं तेनाऽऽत्मौपम्येन सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन स च किं समं पश्यतीत्युच्यते यथा मम सुखमिष्टं तथा सर्वप्राणिनां सुखमनुकूलम्। वाशब्दश्चार्थे। यदि वा यच्च दुःखं मम प्रतिकूलमनिष्टं यथा तथा सर्वप्राणिनां दुःखमनिष्टं प्रतिकूलमित्येवमात्मौपम्येन सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति न कस्यचित्प्रतिकूलमाचरत्यहिंसक इत्यर्थः। य एवमहिंसकः सम्यग्दर्शनानिष्ठः स योगी परम उत्कृष्टो मतोऽभिप्रेतः सर्वयोगिनां मध्ये॥ ३२॥

**शां० आ०—**स्वैराचरणस्याप्रतिबन्धकत्वकथनात्परपीडनस्य योगिनः सम्यग्दर्शनं प्रत्यप्रतिबन्धकत्वप्रसक्तावुक्तं—**किंचेति**। अन्यदपि किंचिदुच्यते परमयोगिनो निर्देशद्वारा योगमाहात्म्यमित्यर्थः। उपमैवौपम्यमात्मा च तदौपम्यं च तेन सर्वभूतेषु यः समं पश्यतीत्युक्ते तदेव समदर्शनं प्रश्नपूर्वकं विवृणोति—**किमित्यादिना**। विकल्पार्थत्वं वारयति—**वाशब्द इति**। उपदर्शितसमदर्शनफलमभिलषति—**न कस्यचिदिति**। किमपेक्षया तस्य परमत्वं तत्राऽऽह—**सर्वेति**॥ ३२॥

**आ० भा०—**साम्यं प्रकारांतरेण व्याचष्टे—आत्मौपम्येनेति॥ ३२॥

**आ० ज०—**सर्वत्र समदर्शन इत्यस्यान्यथाव्याख्यानमितोऽप्यसदिति भावेनाह—**साम्यमिति**। साम्यदर्शनम्। समदर्शनइत्युक्ते किं गोगवयादिवद्भवति साम्यदर्शनमित्याकांक्षायामेकत्वमास्थित इति स्वयमेव व्याख्यातम्। इदानीं तु भगवदनुवर्तिविषयतयाऽपि व्याचष्ट इत्यर्थः॥ ३२॥

**रा० भा०—**ततोऽपि काष्ठामाह—आत्मनश्चान्येषां चात्मनामसंकुचितज्ञानैकाकारतयौपम्येन स्वात्मनि चान्येषु सर्वत्र वर्तमानं पुत्रजन्मादिरूपं सुखं तन्मरणादिरूपं च दुःखमसंबन्धसाम्यात्समं यः पश्यति परपुत्रजन्ममरणादिसमं स्वपुत्रजन्ममरणादिकं यः पश्यतीत्यर्थः। स योगी परमयोगकाष्ठां गतो मतः॥ ३२॥

**अ० टी०—**ननु सर्वत्र कथमेकात्मत्वेन वर्तते इत्यत आह—**आत्मौपम्येनेति**। आत्मौपम्येन स्वसादृश्येन यथा स्वस्य कृपया संयोगरसाप्तौ सुखं वियोगरसाप्तौ दुःखं तथा सर्वत्र सर्वजीवेषु सुखं यदि वा दुःखं समं यः पश्यति स योगी मम परम उत्कृष्टो मतोऽभिमत इत्यर्थः। अत्रायं भावः। योऽलौकिकसुखदुःखाभिनिविष्टेष्वपि जीवेषु यथा स्वस्य तदंशलेशज्ञानेन सुखदुःखरसानुभवो भवति तथैव सर्वेषामप्यस्ति। एवं यस्य सर्वत्रालौकिकस्फूर्तिः स्यात् स उत्तम इतिभावः॥ ३२॥

**नी० टी०—**यद्यपि निषिद्धकर्मणाऽप्यात्मविन्न बध्यते तथापि शीलवानेव योगी श्रेष्ठ इत्याह—**आत्मौपम्येनेति**। यथा स्वस्य सुखमिष्टं दुःखमनिष्टं तद्वत्परस्यापीति बुद्ध्या योऽन्यस्मै दुःखं न प्रयच्छति सोऽहिंसकः परमयोगी मत इत्यर्थः॥ ३२॥

**अर्जुन उवाच—योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन॥**
**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम्॥ ३३॥**

**शां० भा०—**एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःखसंपाद्यतामालक्ष्य शुश्रूषुर्ध्रुवं तत्प्राप्त्युपायम्—योऽयं योगस्त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन, एतस्य योगस्याहं न पश्यामि नोपलभे चञ्चलत्वान्मनसः किं स्थिरामचलां स्थितिं प्रसिद्धमेतत्॥ ३३॥

शां० आ०—मनश्चञ्चलमस्थिरमित्युपश्रुत्य निर्विशेषे चित्तस्थैर्यं दुःशकमिति मन्वानस्तदुपायबुभुत्सया पृच्छतीति प्रश्नमुत्थापयति—**एतस्येति**। तत्प्राप्त्युपायं शुश्रूषुरिति संबन्धः। मनसश्चञ्चलत्वेऽपि तन्निग्रहद्वारा योगस्थैर्यं संपाद्यतामित्याशङ्क्याऽऽह—**प्रसिद्धमिति** ॥ ३३ ॥

**आ० भा०—एतस्य योगस्य स्थिरां स्थितिं न पश्यामि। मनसश्चंचलत्वात् ॥ ३३ ॥**

आ० ज०—साम्यस्य योगस्य च प्रकृतत्वात्। एतस्येति कस्य परामर्श इति न ज्ञायते ततस्तत्प्रदर्शनाय व्यवहितानां पदानामन्वयमाह—**एतस्येति**। योगस्य प्राधान्येन साम्यस्य तु तृतीययाऽ प्राधान्येन प्रकृतत्वादितिभावः। चंचलत्वादित्यस्यान्यो धर्मी न प्रतीयतेऽतो योग एव संबध्यते। तथा च साध्याविशिष्टतेत्यत आह—**मनस इति**। एतच्चोत्तरवाक्यादवगम्यत इति भावः ॥ ३३ ॥

**रा० भा०—योयं देवमनुष्यादिभेदेन जीवेश्वरभेदेन चात्यन्तभिन्नतयैतावन्तं कालमनुभूतेषु सर्वेष्वात्मसु ज्ञानैकाकारतया परस्परसाम्येनाकर्मवश्यतया चेश्वरसाम्येन सर्वत्र समदर्शनरूपो योगस्त्वयोक्तः एतस्य योगस्य स्थिरां स्थितिं न पश्यामि मनसश्चञ्चलत्वात् ॥ ३३ ॥**

अ० टी०—उक्तभावसिद्ध्यर्थं साधनमर्जुनः पृच्छति। अर्जुन उवाच—**योयं योग इति**। हे मधुसूदन दुष्टनिराकरणसमर्थ ! अयं योगस्त्वया साम्येन सुखदुःखसाम्येन स्वसाम्येन सर्वेषु प्रोक्तः। एतस्य योगस्याऽहम् अभिमानयुक्तत्वान्मनसश्चञ्चलत्वात् स्थितिं स्थिरां निश्चलां न पश्यामि ॥ ३३ ॥

नी० टी०—साम्ययोगमशक्यं मन्वान उपायांतरबुभुत्सयाऽर्जुन उवाच—**योऽयमिति**। योऽयं योगस्त्वया साम्येन प्रोक्तोऽहिंसाप्राधान्येन संन्यासपूर्वकतया वर्णितः हे मधुसूदन तस्य योगस्य सर्ववृत्तिनिरोधरूपस्य स्थिरां स्थितिं न पश्यामि मनसश्चंचलत्वादिति शेषः ॥ ३३ ॥

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ॥**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥**

**शां० भा०—चञ्चलमिति। चञ्चलं हि मनः कृष्णेति कृषतेर्विलेखनार्थस्य रूपं भक्तजनपापादिदोषाकर्षणात्कृष्णः। न केवलमत्यर्थं चञ्चलं प्रमाथि च प्रमथनशीलं प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपति परवशी करोति। किं च बलवन्न केनचिन्नियन्तुं शक्यम्। किंच दृढं तन्तुनागवदच्छेद्यं तस्यैवंभूतस्य मनसोऽहं निग्रहं निरोधं मन्ये वायोरिव। यथा वायोर्दुष्करो निग्रहस्ततोऽपि मनसो दुष्करं मन्य इत्यभिप्रायः ॥ ३४ ॥**

शां० आ०—कृष्णपदपरिनिष्पत्तिप्रकारं सूचयति—**कृष्णेतीति**। कथं कर्षकत्वमाप्तकामस्य भगवतः संभवतीत्याशङ्क्याऽऽह—**भक्तेति**। ऐहिकामुष्मिकसर्वसंपदामाकर्षणशीलत्वाच्चेति द्रष्टव्यम्। प्रमथ्नाति क्षोभयति। तदेव क्षोभकत्वं प्रकटयति—**विक्षिपतीति**। दुर्निवारत्वमभिप्रेताद्विषयादाकष्टुमशक्यत्वं विशेषणान्तरमाह—**किंचेति**। अच्छेद्यत्वं विशेषणान्तरमाह—**किंच दृढमिति**। तन्तुनागो वरुणपाशशब्दितो जलचारी पदार्थोऽत्यन्तदृढतया छेत्तुमशक्यत्वेन प्रसिद्धो विवक्षितः। वायोरिवेत्युक्तं व्यनक्ति—**यथेति** ॥ ३४ ॥

**आ० भा०—उक्तं च। 'मनसश्चंचलत्वाद्धि स्थितिर्योगस्य वै स्थिरा ॥ विनाऽभ्यासान्न शक्या स्याद्वैराग्याद्वा न संशयः' इति व्यासयोगे ॥ ३४ ॥**

आ० ज०—अत्रागमं चाह—**उक्तं चेति**। एतेनासंशयमिति परिहारवाक्यमपि व्याख्यातम् ॥ ३४ ॥

रा० भा०—तथा ह्यनवरताभ्यस्तविषयेष्वपि स्वत एव चञ्चलं पुरुषेणैकत्र स्थापयितुमशक्यं मनः पुरुषं बलात् प्रमथ्य अन्यत्र चरति तस्य स्वाभ्यस्तविषयेष्वपि दृढमचञ्चलस्वभावस्य मनसस्तद्विपरीताकारात्मनि स्थापयितुं निग्रहं कर्तुं प्रतिकूलगतेर्महावातस्य व्यजनादिनेव सुदुष्करमहं मन्ये मनोनिग्रहोपायो वक्तव्य इत्यभिप्रायः ॥ ३४ ॥

अ० टी०—मनसश्चाञ्चल्यमेवाह—चञ्चलं हीति। हे कृष्ण सदाऽऽनन्द! मनो हीति निश्चयेन चञ्चलं स्वभावतएव चपलम् अन्यथा सदानन्दोक्तौ कथं पुनः प्रश्नार्थमहमुद्युक्त इति कृष्णेति संबोधनेन ज्ञापितं। किंच प्रमाथि प्रकर्षेण मथनशीलम् इन्द्रियक्षोभकं। किंच बलवत्। अतिप्रबलं ज्ञानादिवचनासाध्यं। किंच। दृढं स्वविषयानुरागाऽत्यागस्वभावं। तस्य मनसो निग्रहं वशीकरणमाकाशे दोधूयमानस्य स्वसुखार्थं तापनिवारणाय गृहादिषु वायोरिव निरोधनं सुदुष्करं सर्वथा कर्तुमशक्यमहं मन्ये। यद्वा। वायोः प्राणवायोर्गच्छतो निरोधमशक्यं मन्य इतिभावः ॥ ३४ ॥

नी० टी०—एतदेवोपपादयति—चंचलं हीति। प्रमाथि बहुदस्युवदेकस्य प्रमथनशीलम् ॥ ३४ ॥

**श्रीभगवानुवाच—असंशयं महाबाहो मनो दुर्निग्रहं चलम् ॥**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥**

शां० भा०—एवमेतद्यथा ब्रवीषि—असंशयं नास्ति संशयो मनो दुर्निग्रहं चलमित्यत्र हे महाबाहो। किंत्वभ्यासेन त्वभ्यासो नाम चित्तभूमौ कस्यांचित्समानप्रत्ययावृत्तिश्चित्तस्य। वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु दोषदर्शनाभ्यासाद्वैतृष्ण्यं तेन च वैराग्येण गृह्यते। विक्षेपरूपः प्रचारश्चित्तस्यैवं तन्मनो गृह्यते निगृह्यते निरुध्यत इत्यर्थः ॥ ३५ ॥

शां० आ०—प्रश्नमङ्गीकृत्य प्रतिवचनमुत्थापयति—**श्रीभगवानिति**। कुत्र संशयराहित्यं तत्राऽऽह—**मन इति**। कथं तर्हि मनोनिरोधो भवति तत्राऽऽह—**किंत्विति**। अभ्यासस्वरूपं सामान्येन निदर्शयति—**अभ्यासो नामेति**। कस्यां चिच्चित्तभूमावित्यविशेषितो ध्येयो विषयो निर्दिश्यते, समानप्रत्ययावृत्तिर्विजातीयप्रत्ययानन्तरितेति शेषः, चित्तस्येति षष्ठी प्रत्ययस्य तद्विकारत्वद्योतनार्था। वैराग्यस्वरूपं निरूपयति—**वैराग्यमिति**। तेषु वैतृष्ण्यं वैराग्यं नामेति संबन्धः। तत्र हेतुं सूचयति—**दोषेति**। विषयेषु तृष्णाविषयेषु दोषदर्शनमभ्यस्यते तेन वैतृष्ण्यं जायते। निगृह्यमाणं निर्दिशति—**विक्षेपेति**। तस्मिन्गृहीते निरुद्धे मनोनिरोधेऽस्य किं स्यादित्यपेक्षायामाह—**एवमिति**। अभ्यासहेतुकवैराग्यद्वारा चित्तप्रचारनिरोधे निरुद्धवृत्तिकं मनो विषयविमुखमन्तर्निष्ठं भवतीत्यर्थः ॥ ३५ ॥

आ० भा०—॥ ३५ ॥

आ० ज०— ॥ ३५ ॥

रा० भा०—चलस्वभावतया मनो दुर्निग्रहमेवेत्यत्र न संशयः तथाप्यात्मनो गुणाकारत्वाभ्यासजनिताभिमुख्येनात्मव्यतिरिक्तेषु विषयेष्वपि दोषाकारत्वदर्शनजनितवैतृष्ण्येन च कथंचिद्गृह्यते ३५॥

अ० टी०—एवमर्जुनोक्तचञ्चलत्वादिकमङ्गीकृत्य तन्निग्रहसाधनमाह भगवान्—श्री भगवानुवाच—**असंशयमिति**। हे महाबाहो! क्रियाशक्तिसमर्थ! मनोदुर्निग्रहं चञ्चलं यद्वदसि तदसंशयं निःसंदिग्धं तादृशमेवास्तु तु पुनस्तथाऽपि कौन्तेय मदुक्तिविश्वसनैकयोग्य! भक्तपुत्र! अभ्यासेन यतो यतो निश्चलतीति पूर्वोक्तप्रकारेणाऽन्यत्र हीनत्वज्ञानपूर्वकमग्र्युत्तमज्ञानेन चाञ्चल्यानुसरणप्रकारेण गृह्यते। च पुनः। तथा ज्ञानेन मत्संबन्धातिरिक्तेषु वैराग्येण गृह्यते वशीक्रियत इत्यर्थः ॥ ३५ ॥

नी० टी०—मनसोदुर्ग्रहत्वमभ्युपेत्य भगवानुवाच—यद्यप्येवं तथाप्यभ्यासवैराग्याभ्यां समुच्चिताभ्यां दुर्निग्रहमपि मनो निगृह्यते। तत्राभ्यासो नाम कस्यांचिच्चित्तभूमौ समानप्रत्ययावृत्तिः। वैराग्यं तु दृष्टादृष्टेष्टभोगेषु ससाधनेषु दोषदर्शनेन वैतृष्ण्यं। तत्र यथा कैदारिकः केदारेषु कुल्याजलं संचारयन्नेकस्य द्वारं पिधायापरस्योद्धाटयति तद्वद्वैराग्येण विषयस्रोतः खिलीक्रियते अभ्यासेन कल्याणस्रोत उद्घाट्यत इति द्वयोरप्यावश्यकत्वं तथा च सूत्रं। "अभ्यासवैराग्याभ्यां तन्निरोधः" इति ॥ ३५ ॥

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ॥**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६**

**शां० भा०—यः पुनरसंयतात्मा तेन—असंयतात्मनाऽभ्यासवैराग्याभ्यामसंयत आत्माऽन्तःकरणं यस्य सोऽयमसंयतात्मा तेनासंयतात्मना योगो दुष्प्रापो दुःखेन प्राप्यत इति मे मतिः। यस्तु पुनर्वश्यात्माऽभ्यासवैराग्याभ्यां वश्यत्वमापादित आत्मा मनो यस्य सोऽयं वश्यात्मा तेन वश्यात्मना तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्योऽवाप्तुं योग उपायतो यथोक्तादुपायात् ॥ ३६ ॥**

शां० आ०—संयतात्मनो योगप्राप्तिः सुलभेत्युक्त्वा व्यतिरेकं दर्शयति—**यः पुनरिति**। व्यतिरेकोपन्यासपरं पूर्वार्धमनूद्य व्याकरोति—**असंयतेति**। पूर्वोक्तान्वयव्याख्यानपरमुत्तरार्धं व्याचष्टे—**यस्त्वित्यादिना**। अन्तःकरणस्य स्ववशत्वे सिद्धेऽपि वैराग्यादावास्थावता भवितव्यमित्याह—**यततेति**। उपायो वैराग्यादिपूर्वको मनोनिरोधः ॥ ३६ ॥

**आ० भा०—न च कदाचित्स्वयमेव मनो नियम्यते। 'शुभेच्छारहितानां च द्वेषिणां च रमापतौ ॥ नास्तिकानां च वै पुंसां सदा मुक्तिर्न युज्यते' इतिनिषेधाद्ब्राह्मे ॥ ३६ ॥**

आ० ज०—असंयतेतिश्लोको व्यर्थ इव प्रतीयते तन्निवर्त्यामाशंकां सूचयन् तात्पर्यमाह—**न चेति**। यथा मत्तमातंगः स्वयमेव श्रांतः शांतो भवति तथा विषयैस्तुष्टं मनः कदाचित्स्वयमेव नियतं भवति किमभ्यासादिनेत्येतन्नैवेत्यर्थः। कुत इत्यत आह—**शुभेति**। सदेति पूर्वेण संबंधः अनेनात्र शुभेच्छादिकमप्युपलक्षितमिति सूचितम्। मुक्तिबीजत्वान्मनोनियमनस्य मुक्तिरित्युक्तम् ॥ ३६ ॥

**रा० भा०—असंयतात्मनाऽजितमनसा महतापि बलेन योगो दुष्प्राप एव उपायतस्तु वश्यात्मना पूर्वोक्तेन मदाराधनरूपेणान्तर्गतज्ञानेन कर्मणा जितमनसा यतमानेनायमेव समदर्शनरूपो योगोवाप्तुं शक्यः ॥ ३६ ॥**

अ० टी०—अथ यो मनश्चञ्चलमिति ज्ञात्वाऽभ्यासवैराग्ययोर्यत्ननिरपेक्षः स नाप्नोतीत्याह—**असंयतात्मनेति**। असंयतात्मना उक्तप्रकारेणाभ्यासवैराग्याभ्यामसंयतः अवशीकृत आत्माऽन्तःकरणं यस्य तेन योगो मत्संयोगात्मको दुष्प्रापः दुःखेनापि प्राप्तुमशक्यः। वश्यात्मना तु अभ्यासवैराग्यवशीकृतयत्नेन यतता मत्संयोगार्थं यत्नं कुर्वता उपायतोऽवाप्तुं प्राप्तुं शक्य इति मे मतिः। अत्र स्वमतित्वकथनेन मदुक्तिविश्वासपूर्वकं यो यतेत तस्याऽवश्यं मया संयोगः फलदानं कर्तुं मनोनिग्रहः करणीय इतिव्यञ्जितम् ॥ ३६ ॥

नी० टी०—असंयतात्मना अजितचित्तेन वश्यात्मना जितचित्तेन उपायतोऽभ्यासवैराग्यरूपात् ॥ ३६ ॥

**अर्जुन उवाच—अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ॥**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥**

**शां० भा०**—तत्र योगाभ्यासाङ्गीकरणेन परलोकेहलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति योगी योगमार्गान्मरणकाले चलितचित्त इति तस्य नाशमाशङ्क्य—अयतिरप्रयत्नवान्योगमार्गे श्रद्धयाऽऽस्तिक्यबुद्ध्या चोपेतो योगादन्तकालेऽपि चलितं मानसं मनो यस्य स चलितमानसो भ्रष्टस्मृतिः सोऽप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति ॥ ३७ ॥

**शां० आ०**—प्रश्नान्तमुत्थापयति—**तत्रेत्यादिना** । मनोनिरोधस्य दुःखसाध्यत्वमाशङ्क्य परिहृते सति प्रष्टा पुनरवकाशं प्रतिलभ्योवाचेति संबन्धः । लोकद्वयप्रापककर्मसंभवे कुतो योगिनो नाशाशङ्केत्याशङ्क्याऽऽह—**योगाभ्यासेति** । तथाऽपि योगानुष्ठानपरिपाकपरिप्रापितसम्यग्दर्शनसामर्थ्यान्मोक्षोपपत्तौ कुतस्तस्य नाशाशङ्केति चेन्मैवमनेकान्तरायवत्त्वाद्योगस्येह जन्मनि प्रायेण संसिद्धेरसिद्धिरित्यभिसंधायाऽऽह—**योगसिद्धीति** । अभ्युदयनिःश्रेयसबहिर्भावो नाशो योगमार्गे तत्फलस्य सम्यग्दर्शनस्यादर्शनादिति शेषः । तर्हि ततो बहिर्मुखत्वमेवाऽऽत्यन्तिकं संवृत्तमित्याशङ्क्याऽऽह—**श्रद्धयेति** । तर्हि योगमार्गमाश्रयते नेत्याह—**योगादिति** । मरणकाले व्याकुलेन्द्रियस्य ज्ञानसाधनानुष्ठानावकाशाभावाद्युक्तं ततश्चलितमानसत्वमित्याशङ्क्याऽऽह—**भ्रष्टेति** । गम्यत इति गतिः पुरुषार्थः, सामान्यप्रश्नमन्तर्भाव्य विशेषप्रश्नो द्रष्टव्यः ॥ ३७ ॥

**आ० भा०**—अयतिरप्रयत्नः ॥ ३७ ॥

**आ० ज०**—अचतुर्थाश्रमीति प्रतीतिनिरासायाह—**अयतिरिति** ॥ ३७ ॥

**रा० भा०**—अथ 'नेहाभिक्रमनाशोऽस्ति' इत्यादावेव श्रुतं योगमाहात्म्यं यथावच्छ्रोतुमर्जुनः पृच्छति अन्तर्गतात्मज्ञानतया योगशिरस्कतया च हि कर्मयोगस्य माहात्म्यं तत्रोदितं तच्च योगमाहात्म्यमेवं श्रद्धया योगे प्रवृत्तो दृढतराभ्यासरूपयत्नवैकल्येन योगसंसिद्धिम् अप्राप्य योगाच्चलितमानसः कां गतिं गच्छति ॥ ३७ ॥

**अ० टी०**—अथ भवदुक्तिविश्वासेन केवलं श्रद्धया अभ्यासवैराग्यरहितो यत्नं कुर्वन् पश्चात्सिद्धिं प्राप्नोति नवेति प्रभुं विज्ञापयत्यर्जुनः—अर्जुन उवाच—**अयतिरिति** । श्रद्धया भवदुक्तिश्रद्धामात्रत उपेतो भगवत्संयोगात्मकयोगार्थे प्रवृत्तः अयतिः अभ्यासवैराग्ययोः शिथिलप्रयत्नः स्वरूपज्ञानाभावाद्योगाच्चलितमानसो भवति । ततो योगसिद्धिमपि न प्राप्नुयात् तदाह योगसंसिद्धिमप्राप्य कृष्ण सदानन्द ! त्वदुक्तिविश्वासप्रवृत्तस्य सिद्धिरेवोचितेति विज्ञाप्य कां गतिं गच्छतीति पृष्टवान् ॥ ३७ ॥

**नी० टी०**—मनसो दुर्निग्रहत्वाद्योगसिद्धौ विघ्नं पश्यन्नर्जुन उवाच—हे कृष्ण! योगात्कर्मयोगाच्चलितमानसस्त्यक्तकर्मा संन्यासीत्यर्थः । श्रद्धयोपेतो योगमार्गं प्रविष्टोऽपि अयतिः आयुषोऽल्पत्वाद्वा वैराग्यदौर्बल्याद्वा अल्पप्रयत्नः । अलवणा यवागूरितिवदत्राल्पार्थे नञ् । स कदाचित् योगसंसिद्धिं योगफलं सम्यक्दर्शनमप्राप्य मृतश्चेत् कां गतिं गच्छति ॥ ३७ ॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ॥**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥**

**शां० भा०**—कच्चिदिति । कच्चित्किं नोभयविभ्रष्टः कर्ममार्गाद्योगमार्गाच्च विभ्रष्टः संछिन्नाभ्रमिव नश्यति किं वा न नश्यत्यप्रतिष्ठो निराश्रयो हे महाबाहो विमूढः सन्ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥ ३८ ॥

**शां० आ०**—प्रश्नमेव विवृणोति—**कच्चिदिति**। प्रशस्तप्रश्नार्थत्वं कच्चिदित्यस्याङ्गीकृत्य व्याचष्टे—**किमिति**। उभयविभ्रष्टत्वं स्पष्टयति—**कर्मेत्यादिना**। वायुना छिन्नं विशकलितमभ्रं यथा नश्यति तद्वदित्याह—**छिन्नेति**। नाशाशङ्कानिमित्तमाह—**निराश्रय इति**। कर्ममार्गरूपावष्टम्भाभावेऽपि ज्ञानमार्गावष्टम्भस्तस्य भविष्यतीत्याशङ्क्याऽऽह—**विमूढः स्त्रिति**। न हि कर्मिणं प्रतीयमाशङ्का फलाभिलाषं त्यक्त्वेश्वरे समर्प्यासमर्प्य वा कर्मानुतिष्ठतो निरुपचारेण तद्भ्रंशवचनासंभवात्सर्वकर्मसंन्यासिनस्तु विहितानां त्यागाज्ज्ञानोपायाच्च विच्युतेरनर्थप्राप्तिशङ्का युक्तेति भावः ॥ ३८ ॥

**आ० भा०**—॥ ३८ ॥

**आ० ज०**—॥ ३८ ॥

**रा० भा०**—उभयविभ्रष्टोऽयं छिन्नाभ्रमिव कच्चिन्न नश्यति यथा मेघशकलः पूर्वस्मान्महतो मेघाच्छिन्नः परं महान्तं मेघमप्राप्य मध्ये विनष्टो भवति तथैव कच्चिन्न नश्यति कथमुभयविभ्रष्टता अप्रतिष्ठो विमूढो ब्रह्मणः पथीति यथावस्थितस्वर्गादिसाधनभूतं कर्मफलाभिसंधिरहितस्यास्य पुरुषस्य स्वफलसाधत्वेन प्रतिष्ठा न भवति इति अप्रतिष्ठः प्रक्रान्ते ब्रह्मणः पथि विमूढस्तस्मात् पथः प्रच्युत अत उभयभ्रष्टतया किमयं नश्यत्येव उत न नश्यति ॥ ३८ ॥

**अ० टी०**—स्वबुद्धिपरिकल्पितसंदेहविनिवृत्त्यर्थं स्वबुद्धिसंदेहमेव विवृणोति—**कच्चिदिति**। पूर्वप्रवृत्तकर्मादित्यागेन योगमार्गे अप्रतिष्ठो निराश्रयः। अभ्यासाभावेन स्वरूपाज्ञानाद् ब्रह्मणः पथि भगवत्प्राप्त्येकयत्नमार्गे विमूढो वैराग्याभावात्। हे महाबाहो! सर्वकृपाकरणसमर्थ एवमुभयविभ्रष्टः सन् छिन्नाभ्रमिव यथा छिन्नमभ्रं पूर्वाभ्राद्वियुक्तमभ्रान्तराऽमिलितं सन्मध्य एव विनश्यति तथा पूर्वधर्मत्यागेन स्वधर्मोपार्जितमोक्षफलरहितो भगवन्मार्गस्वरूपाज्ञानात् स्वरूपसंयोगरहितो जीवस्वरूपाप्तिभावरहितः कच्चिन्नो नश्यति ॥ ३८ ॥

**नी० टी०**—**कच्चिदिति**। कच्चिन्नोभयविभ्रष्टः कर्ममार्गाद्योगमार्गाच्च विभ्रष्टश्छिन्नाभ्रमिव पूर्वमपरं वा मेघसंघमप्राप्य मध्ये एव नश्यति तद्वत् अप्रतिष्ठो निराश्रयः हे महाबाहो विमूढो ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥ ३८ ॥

**एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ॥**
**त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥ ३९ ॥**

**शां० भा०**—एतदिति। एतन्मे मम संशयं कृष्ण च्छेत्तुमपनेतुमर्हस्यशेषतस्त्वदन्यस्त्वत्तोऽन्य ऋषिर्देवो वा छेत्ता नाशयिता संशयस्यास्य न हि यस्मादुपपद्यते संभवत्यतस्त्वमेव च्छेत्तुमर्हसीत्यर्थः ॥ ३९ ॥

**शां० आ०**—यथोपदर्शितसंशयापाकरणार्थमर्जुनो भगवन्तं प्रेरयन्नाह—**एतदिति**। मत्तोऽन्यः कश्चिदृषिर्वा देवो वा त्वदीयं संशयं छेत्स्यतीत्याशङ्क्याऽऽह—**त्वदन्य इति**। अन्यस्य संशयच्छेत्तुरभावे फलितमाह—**अत इति** ॥ ३९ ॥

**आ० भा०**—॥ ३९ ॥

**आ० ज०**—॥ ३९ ॥

**रा० भा०**—तमेनं संशयमशेषश्छेत्तुमर्हसि स्वतः प्रत्यक्षेण युगपत्सर्वं सर्वदा स्वत एव पश्यतस्त्वत्तोऽन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥

**अ० टी०**—हे कृष्ण! दास्येन सदानन्ददानसमर्थ। एतन्मे संशयं मन्मनोगतसंशयं। स तु न नश्यत्येव त्वदुक्तिविश्वासात् परं मत्संशयमशेषतः सोपपत्तिकाज्ञारूपवाक्यैश्छेत्तुं दूरीकर्तुमर्हसि। नन्वन्यत्र

गुर्वादिषु भक्तेषु च विज्ञाप्य संशयं दूरीकुर्वित्यत आह—त्वदन्यइति। अस्य मद्गतस्य त्वदेकवाक्यैकनिष्ठस्य मम संशयस्य छेत्ता त्वदन्यः त्वां विना हि निश्चयेन अन्यो नोपपद्यते ॥ ३९ ॥

नी० टी०—एतत् एतं स्पष्टमन्यत् ॥ ३९ ॥

**श्रीभगवानुवाच—पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ॥**
**न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥**

**शां० भा०—पार्थेति। हे पार्थ नैवेह लोके नामुत्र परस्मिन्वा लोके विनाशस्तस्य विद्यते नास्ति नाशो नाम पूर्वस्माद्धीनजन्मप्राप्तिः स योगभ्रष्टस्य नास्ति, न हि यस्मात्कल्याणकृच्छुभकृत्कश्चिद्दुर्गतिं कुत्सितां गतिं हे तात तनोत्यात्मानं पुत्ररूपेणेति पिता तात उच्यते पितैव पुत्र इति पुत्रोऽपि तात उच्यते शिष्योऽपि पुत्र उच्यते, गच्छति ॥ ४० ॥**

शां० आ०—योगिनो नाशाशङ्कां परिहरन्नुत्तरमाह—**श्रीभगवानिति**। यदुक्तमुभयभ्रष्टो योगी नश्यतीति तत्राऽऽह—**पार्थेति**। तत्र हेतुमाह—**न हीति**। योगिनो मार्गद्वयाद्विभ्रष्टस्यैहिको नाशः शिष्टगर्हालक्षणो न भवतीति श्रद्धादेः सद्भावात्तथाऽपि कथमामुष्मिकनाशशून्यत्वमित्याशङ्क्य तद्रूपनिरूपणपूर्वकं तदभावं प्रतिजानीते—**नाशो नामेति**। तत्र हेतुभागं विभजते—**न हीत्यादिना**। उभयभ्रष्टस्यापि श्रद्धेन्द्रियसंयमादेः सामिकृतश्रवणादेश्च भावादुपपन्नं शुभकृत्त्वम्। तातेति कथं पुत्रस्थानीयः शिष्यः संबोध्यते पितुरेव तातशब्दत्वादित्याशङ्क्याऽऽह—**तनोतीति**। तेन पुत्रस्थानीयस्य शिष्यस्य तातेति संबोधनमविरुद्धमित्यर्थः। न गच्छति कुत्सितां गतिं कल्याणकारित्वादिति नाशाभावः ॥ ४० ॥

**आ० भा०—॥ ४० ॥**

आ० ज०—॥ ४० ॥

**रा० भा०—श्रद्धया योगे प्रक्रान्तस्य तस्मात्प्रच्युतस्येह चामुत्र च विनाशो न विद्यते प्राकृतस्वर्गादिभोगानुभवे ब्रह्मानुभवे चाभिलषितानवाप्तिरूपः प्रत्यवायाख्योऽनिष्टावाप्तिरूपश्च विनाशो न विद्यत इत्यर्थः। न हि निरतिशयकल्याणरूपयोगकृत्कश्चित्कालत्रयेऽपि दुर्गतिं गच्छति ॥ ४० ॥**

अ० टी०—एवं निश्चयात्मकमर्जुनस्य संशयवाक्यं श्रुत्वा भगवांस्तमाह—श्रीभगवानुवाच—पार्थेति। हे पार्थ तथासंशयानर्ह! इह लोके पूर्वत्यक्तकर्मानुकरणविहितधर्मभक्त्यादौ अमुत्र लोके परदास्यादिरूपे तस्य मदुक्तिविश्वासप्रवृत्तस्य विनाशः विशेषेण नाशो मदर्शनं न विद्यते। श्रद्धया मदुक्तिविश्वासप्रवृत्तौ कथं नाशः स्याद्यतोऽसाधारण्येनोत्तमकृतिप्रवृत्तस्य नाशो न भवतीत्याह—नहीति। भक्तत्वात्स्वबालकत्वेन तातेति संबोध्योपदिष्टम्। कल्याणकृत् धर्मादिबुद्ध्याफलेच्छासाधारण्येन शुभकृत् हीति निश्चयेन दुर्गतिं न गच्छति। तत्र श्रद्धयाऽत्र प्रवृत्तः कथं नश्येदित्यर्थः ॥ ४० ॥

नी० टी०—अत्रोत्तरं भगवानुवाच—पार्थेति। हेताततेति वात्सल्यात्संबोधयति तस्येह विनाशो नीचयोनिप्राप्तिः अमुत्र विनाशो नरकप्राप्तिस्तदुभयमपि न जायते। हि यतः कल्याणकृच्छुभकृत् दुर्गतिं नैव प्राप्नोति ॥ ४० ॥

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ॥**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥**

**शां० भा०**—किं त्वस्य भवति—योगमार्गे प्रवृत्तः संन्यासी सामर्थ्यात्प्राप्य गत्वा पुण्यकृताम श्वमेधादियाजिनां लोकांस्तत्र चोषित्वा वासमनुभूय शाश्वतीर्नित्याः समाः संवत्सरांस्तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

**शां० आ०**—योगभ्रष्टस्य लोकद्वयेऽपि नाशाभावे किं भवतीति पृच्छति—**किं त्विति**। तत्र श्लोकेनोत्तरमाह—**प्राप्येति**। कथं संन्यासीति विशेष्यते तत्राऽऽह—**सामर्थ्यादिति**। कर्मणि व्यापृतस्य कर्मिणो योगमार्गप्रवृत्त्यनुपपत्तेस्तत्प्रवृत्तावपि फलाभिलाषविकलस्येश्वरे समर्पितसर्वकर्मणस्तत्रंशाशङ्कानवकाशादित्यर्थः। समानां नित्यत्वं मानुषसमाविलक्षणत्वम्। वैराग्याभावविवक्षया विभूतिमतां गृहे जन्मेति विशेष्यते ॥ ४१ ॥

**आ० भा०**—॥ ४१ ॥

**आ० ज०**—॥ ४१ ॥

**रा० भा०**—कथमयं भविष्यतीत्यत्राह। यज्जातीयभोगाभिकाङ्क्षया योगात्प्रच्युतोयमतिपुण्यकृतां प्राप्यान् लोकान् प्राप्य तज्जातीयानतिकल्याणभोगान् ज्ञानोपाययोगमाहात्म्यादेव भुञ्जानो यावत्तद्भोगतृष्णावसानं शाश्वतीः समास्तत्रोषित्वा तस्मिन् भोगवितृष्णः शुचीनां श्रीमतां योगोपक्रमयोग्यानां कुले योगोपक्रमे भ्रष्टो योगमाहात्म्याज्जायते ॥ ४१ ॥

**अ० टी०**—एवं नाशाभावमुक्त्वा तस्य गतिस्वरूपमाह—**प्राप्येति**। स योगभ्रष्टः स्वरूपाज्ञानादभ्यासवैराग्याभावादभ्यस्यमानमार्गाद्भ्रष्टः पुण्यकृतां यज्ञादिकारिणां लोकान् श्रद्धामात्रप्रवृत्तिसाधनेन तत्फलभोगविचिकित्साजनितपूर्वप्रवृत्तमार्गस्वरूपज्ञानार्थं प्राप्य तत्र शाश्वतीः समाः बहून संवत्सरान् उषित्वा स्थित्वा तत्फलभोगं कृत्वा तत्र विचिकित्सयाऽभावकेन मनसा पूर्वश्रद्धासाधनेनैव भवति। जन्मप्रार्थनया शुचीनां कापट्यादिदोषरहितानां श्रीमतां भगवच्छोभायुक्तानां भक्तानां गृहेऽभिजायते जन्म प्राप्नोति। उपसर्गेण सरतिपूर्वकं प्राप्तिर्ज्ञापिता ॥ ४१ ॥

**नी० टी०**—इहामुत्र च तस्य महत्त्वमेवास्तीत्याह—**प्राप्येति**। उषित्वा वासं कृत्वा शाश्वतीः समाः नित्यान् वत्सरान्योगभ्रष्टो रागी चेदल्पकालाभ्यस्तयोगश्चेत् श्रीमतां गेहे जायते। तत्रापि श्रीमानधो गच्छतीत्याशंक्य शुचीनामित्युक्तं। शुचयो हि सत्कार्येष्वेव श्रियमुपयुंजानाः पूर्वापेक्षया महत्तरं स्थानमासादयंतीत्यर्थः ॥ ४१ ॥

**अथवा योगिनामेव कुले भवति धीमताम् ॥**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥**

**शां० भा०**—अथेति। अथवा श्रीमतां कुलादन्यस्मिन्योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम्। एतद्धि जन्म यद्दरिद्राणां योगिनां कुले दुर्लभतरं दुःखलभ्यतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले ॥ ४२ ॥

**शां० आ०**—श्रद्धावैराग्यादिकल्याणाधिक्ये पक्षान्तरमाह—**अथवेति**। योगिनामिति कर्मिणां ग्रहणं मा भूदिति विशिनष्टि—**धीमतामिति**। ब्रह्मविद्यावतां शुचीनां दरिद्राणां कुले जन्म दुर्लभादपि दुर्लभं प्रमादकारणाभावादित्याह—**एतद्धीति**। किमपेक्ष्यास्य जन्मनो दुःखलभ्यादपि दुःखलभ्यतरत्वं तदाह—**पूर्वमिति**। यद्यपि विभूतिमतामपि शुचीनां गृहे जन्म दुःखलभ्यं तथाऽपि तदपेक्षयेदं जन्म दुःखलभ्यतरं यदीदृशं शुचीनां दरिद्राणां विद्यावतामिति विशेषणोपेते कुले लोके जन्म वक्ष्यमाणमित्यर्थः ॥ ४२ ॥

आ० भा०—॥ ४२ ॥

आ० ज०—॥ ४२ ॥

रा० भा०—परिपक्वयोगः चलितश्चेद्योगिनां धीमतां योगं कुर्वतां स्वयमेव योगोपदेष्टॄणां कुले भवति तदेतदुभयविधं योगयोग्यानां योगिनां च कुले जन्म लोके प्राकृतानां दुर्लभतरमेतत्तु योगमाहात्म्यकृतम् ॥ ४२ ॥

अ० टी०—पक्षान्तरमाह—अथवा धीमतां स्वरूपज्ञानवतां कुले भवति जन्म प्राप्नोति। धीमत्त्वोक्त्या तत्कुलप्रसूतिमात्रेण ज्ञानोत्पत्तिर्व्यञ्जिता । जन्म विशिनष्टि—एतदिति । हीति निश्चयेनैतद्दुर्लभतरं यल्लोके ईदृशं भगवत्स्वरूपज्ञानात्मकं जन्म ॥ ४२ ॥

नी० टी०—स योगी विरक्तश्चिराभ्यस्तयोगो वा चेत्तस्य गतिमाह—अथवेति ॥ ४२ ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ॥
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥

शां० भा०—यस्मात्—तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं बुद्धिसंयोगं लभते पौर्वदेहिकं पूर्वस्मिन्देहे भवं पौर्वदेहिकं यतते च प्रयत्नं करोति ततस्तस्मात्पूर्वकृतात्संस्काराद्भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन ॥ ४३ ॥

शां० आ०—यदुत्तमतरं जन्मोक्तं तस्योत्तमत्वे हेत्वन्तरमाह—यस्मादिति । बुद्ध्येत्यात्मविषययेति शेषः । पूर्वस्मिन्देहे भवं तत्रानुष्ठितसाधनविशेषयुक्तमित्यर्थः । तर्हि यथोक्तजन्मनि साधनानुष्ठानमन्तरेणैव बुद्धिसंबन्धः स्यादित्याशङ्क्याऽऽह—यतते चेति । प्रयत्नः श्रवणाद्यनुष्ठानविषयः ॥ ४३ ॥

आ० भा०—॥ ४३ ॥

आ० ज०—॥ ४३ ॥

रा० भा०—तत्र जन्मनि तमेव पूर्वदैहिकं योगविषयं बुद्धिसंयोगं लभते ततः सुप्तप्रबुद्धवद्भूयः संसिद्धौ यतते यथा नान्तरायहतो भवति तथा यतते ॥ ४३ ॥

अ० टी०—तादृशजन्मानन्तरं किं स्यादित्यत आह—तत्र तमिति । तत्र तस्मिन् जन्मद्वयेऽपि तं पौर्वदैहिकं भगवत्कृपालब्धजीवभावानन्तरप्राप्तं प्रथमदेहसंबन्धिनं बुद्धिसंयोगं भगवत्सेवार्थप्रकटितज्ञानरूपं भगवदीयकुलजन्ममात्रेण लभते । च पुनः तं लब्ध्वा भूयः संसिद्धौ सम्यक् सिद्ध्यर्थं तथा भगवत्प्राप्त्यर्थं यतते यत्नं करोति । कुरुनंदनेतिसंबोधनं विश्वासार्थम् ॥ ४३ ॥

नी० टी०—तत्र द्विविधेऽपि जन्मनी पौर्वदेहिकं पूर्वदेहप्राप्तं बुद्धिसंयोगं । यावती च योगभूमिः पूर्वजन्मनि जिता तत्र च यावान्बुद्धिलाभो जातस्तावंतं बुद्धिसंयोगं पूर्वाभ्यासादल्पेनैवाभ्यासेन लभते तस्मादपि भूयस्यां बह्व्यां संसिद्धौ ऊर्ध्वभूमिलाभार्थमित्यर्थः । यतते यत्नं करोति ॥ ४३ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

**शां० भा०**—कथं पूर्वदेहबुद्धिसंयोग इति तदुच्यते—यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाभ्यासस्तेनैव बलवता ह्रियते हि यस्मादवशोऽपि स योगभ्रष्टो न कृतं चेद्योगाभ्याससंस्काराद्बलवत्तरमधर्मादिलक्षणं कर्म तदा योगाभ्यासजनितेन संस्कारेण ह्रियते। अधर्मश्चेद्बलवत्तरः कृतस्तेन योगजोऽपि संस्कारोऽभिभूयत एव। तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते न दीर्घकालस्थस्यापि विनाशस्तस्यास्तीत्यर्थः। जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन्योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः सामर्थ्यात्सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमतिवर्ततेऽपाकरिष्यति किमुत बुद्ध्वा यो योगं तन्निष्ठोऽभ्यासं कुर्यात् ॥ ४४ ॥

**शां० आ०**—यदि पूर्वसंस्कारोऽस्येच्छामुपनयन्न प्रवर्तयति तथा च प्रवृत्तिरनिच्छया स्यादित्याशङ्क्याऽऽह—**पूर्वेति**। स हि योगभ्रष्टः समनन्तरजन्मकृतसंस्कारवशादुत्तरस्मिञ्जन्मनि अनिच्छन्नपि योगं प्रत्येवाऽऽकृष्टो भवतीत्यर्थः। तत्र कैमुतिकन्यायं सूचयति—**जिज्ञासुरिति**। पूर्वार्धं विभजते—**यः पूर्वेति**। तस्मान्नेच्छया तस्य प्रवृत्तिरिति शेषः। योगभ्रष्टस्याधर्मादिप्रतिबन्धेऽपि तर्हि पूर्वाभ्यासवशाद्बुद्धिसंबन्धः स्यादित्याशङ्क्याऽऽह—**नेत्यादिना**। यदि योगभ्रष्टेन योगाभ्यासजनितसंस्कारप्राबल्यात्प्रबलमधर्मप्रभेदरूपं कर्म न कृतं स्यात्तदा तेन संस्कारेण वशीकृतः सन्निच्छादिरहितोऽपि बुद्धिसंबन्धभाग्भवतीत्यर्थः। विपक्षे योगसंस्कारस्याभिभूतत्वान्न कार्यारम्भकत्वमित्याह—**अधर्मश्चेदिति**। योगजसंस्कारस्याधर्माभिभूतस्य कार्यमकृत्वैवाभिभावकप्राबल्ये प्रणाशः स्यादित्याशङ्क्याऽऽह—**तत्क्षये त्विति**। कालव्यवधानान्निवृत्तिं शङ्कित्वोक्तं—**नेति**। तृणजलायुकादृष्टान्तश्रुत्या संस्कारस्य दीर्घतायाः समधिगतत्वादिति भावः। कैमुतिकन्यायोक्तिपरमुत्तरार्धं विभजते—**जिज्ञासुरपीत्यादिना**। अत्रापि संन्यासीति विशेषणं पूर्ववदवधेयमित्याह—**सामर्थ्यादिति**। न हि कर्मी कर्ममार्गे प्रवृत्तस्ततो भ्रष्टः शङ्कितुं शक्यते, अतः संन्यासी पूर्वोक्तैर्विशेषणैर्विशिष्टो योगभ्रष्टोऽभीष्टः सोऽपि वैदिकं कर्म तत्फलं चातिवर्तते किमुत योगं बुद्ध्वा तन्निष्ठः सदाऽभ्यासं कुर्वन्कर्म तत्फलं चातिवर्तत इति वक्तव्यमिति योजना। योगनिष्ठस्य कर्मतत्फलातिवर्तनं ततोऽधिकफलावाप्तिर्विवक्ष्यते ४४॥

**आ० भा०**—योगस्य जिज्ञासुरपि। ज्ञातव्यो मया योग इति यस्यातीवेच्छा। सोपि शब्दब्रह्मातिवर्तते। परं ब्रह्म प्राप्नोतीत्यर्थः ॥ ४४ ॥

**आ० ज०**—उप्रत्यययोगे न लोकाव्ययेतिषष्ठीनिषेधात् योगस्य स्वरूपमित्यध्याहृत्य कश्चिद्व्याख्यातवान् श्रमो वृथैव। नञा निर्दिष्टमनित्यमित्यस्यानित्यत्वात्। अतः कात्यायनो द्विषः शतुर्वा वचनमित्याद्यवोचदित्यभिप्रेत्याह—**योगस्येति**। ब्रह्मजिज्ञासेत्यादाविव विचारार्थताशंकानिरासाय व्याचष्टे—**ज्ञातव्य इति**। अतीवेत्युप्रत्ययस्यार्थः। "सनाशंसभिक्षउः" इति तच्छीलादौ तस्य विहितत्वात्। इच्छार्थे बाधकाभावादिति भावः। शब्दब्रह्मातिवर्ततेइत्येतद्वेदोक्तकर्मकारिभ्योऽतिरिच्यत इति कश्चिद्व्याचष्टे तदसत्। ततो याति परां गतिमित्यस्यार्थस्य परामर्शादिति भावेनाह—**शब्देति**। शब्दब्रह्मशब्देन वैदिकविधिनिषेधावत्रोच्येते। तदतिवर्तनं परब्रह्मप्राप्तस्यैवेत्यत एवमुक्तम् ॥ ४४ ॥

**रा० भा०**—तेन पूर्वाभ्यासेन पूर्वेण योगविषयेणाभ्यासेन स योगभ्रष्टो ह्यवशोऽपि योग एव ह्रियते प्रसिद्धं ह्येतद्योगमाहात्म्यमित्यर्थः। अप्रवृत्तयोगो योगजिज्ञासुरपि ततश्चलितमानसः पुनरपि तामेव जिज्ञासां प्राप्य कर्मयोगादिकं योगमनुष्ठाय शब्दब्रह्मातिवर्तते शब्दब्रह्म देवमनुष्यपृथिव्यन्तरिक्षस्वर्गादिशब्दाभिलापयोग्यं ब्रह्मप्रकृतिः प्रकृतिसंबंधाद्विमुक्तो देवमनुष्यादिशब्दाभिलापानर्हं ज्ञानानन्दैकतानमात्मानं प्राप्नोतीत्यर्थः ॥ ४४ ॥

**अ० टी०**—ननु भूयोऽपि यत्ने पूर्ववदेव चेत्स्यात्तदा किं जन्मना यत्नेन चेत्याशङ्क्याह—**पूर्वाभ्यासेनेति**। तेनैव पूर्वाभ्यासेन श्रद्धामयेन अवशोऽपि तादृक्कुलजन्मप्राप्त्या कुलरीत्यापि अन्यभावेभ्यो ह्रियते परावर्त्तते। भगवत्संयोगरसनिष्ठः क्रियत इतिभावः। ननु पूर्वप्रवृत्त्या श्रद्धायुक्तया चेन्न सिद्धिरभूत्तदा कथमिदानीं तेनैव साधनेन सिद्धिर्भविष्यतीत्याशङ्क्याह—**जिज्ञासुरपीति**। योगस्य स्वरूपजिज्ञासुरेव शब्द-

ब्रह्मनामरूपात्मकं विप्रयोगसामयिकजीवनहेतुरूपम् अतिवर्त्तते अतिक्रामति । परमक्लेशाविर्भावेन गुणगानादित्यागेन लौकिकदेहत्यागेनालौकिकदेहमाप्नोतीतिभावः । तथाचायमर्थः । पूर्वं श्रद्धया प्रवृत्तस्तु योगजिज्ञासया न प्रवृत्तः किंतु साधारण्येन वाक्यश्रद्धयैव प्रवृत्तौ तेन सिद्धिरभूदधुना तूत्तमकुलजन्माप्त्या तत्स्वरूपं कुरुते अतः प्राप्स्यतीति ॥ ४४ ॥

नी० टी०—कुतो यततेऽशिक्षितोपीत्यत आह—**पूर्वेति**। अवशोऽपि प्रह्लादादिवत्पित्रादिभिरन्यथानीयमानोऽपि तेनैव पूर्वाभ्यासेन बलवता ह्रियते योगप्रवणः क्रियते । यतो योगस्य जिज्ञासुर्ज्ञानमात्रमिच्छन्यो भवति सोपि शब्दब्रह्म कर्मकांडं वेदमप्यतिक्रम्य वर्त्तते किं पुनः पित्राद्याज्ञां । इत्थं पूर्वाभ्यासबलं यन्महांतमपि पित्रादियत्नं वृथा करोतीत्यर्थः ॥ ४४ ॥

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ॥**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥**

**शां० भा०—कुतश्च योगित्वं श्रेय इति—प्रयत्नाद्यतमानोऽधिकं यतमान इत्यर्थः । तत्र योगी विद्वान्संशुद्धकिल्बिषो विशुद्धकिल्बिषः संशुद्धपापोऽनेकेषु जन्मसु किंचित्किंचित्संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धस्ततो लब्धसम्यग्दर्शनः सन्याति परां प्रकृष्टां गतिम् ॥ ४५ ॥**

शां० आ०—योगनिष्ठस्य श्रेष्ठत्वे हेत्वन्तरं वक्तुमुत्तरश्लोकमवतारयति—**कुतश्चेति** । मृदुप्रयत्नोऽपि क्रमेण मोक्ष्यते चेदधिकप्रयत्नस्य क्लेशहेतोरकिंचित्करत्वमित्याशङ्क्य हेत्वन्तरमेव प्रकटयति—**प्रयत्नादिति** । तत्र योगविषये प्रयत्नातिरेके सतीत्यर्थः । ततः संचितसंस्कारसमुदायादिति यावत् । समुत्पन्नसम्यग्दर्शनवशात्प्रकृष्टा गतिः संन्यासिना लभ्यते तेन शीघ्रं मुक्तिमिच्छन्नधिकप्रयत्नो भवेदल्पप्रयत्नस्तु चिरेणैव मुक्तिभागीत्यर्थः ॥ ४५ ॥

**आ० भा०—नैकजन्मनीत्याह—प्रयत्नादिति । जिज्ञासुर्ज्ञात्वा प्रयत्नं करोति । एवमनेकजन्मभिः संसिद्धोऽपरोक्षज्ञानी भूत्वा परां गतिं याति। आह च। 'अतीव श्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः ॥ ज्ञात्वा ध्यात्वा तथा दृष्ट्वा जन्मभिर्बहुभिः पुमान् ॥ विशेन्नारायणं देवं नान्यथा तु कथंचन' इति नारदीये ॥ ४५ ॥**

आ० ज०—योगजिज्ञासामात्रेण परब्रह्मप्राप्तिश्चेत् योगानुष्ठानवैयर्थ्यं स्यादित्यत एतदेवाशंक्य भगवतैवोत्तरं दत्तमित्याह—**नैकेति** । न योगजिज्ञासामात्रेणेत्यभिप्रायः । अत्र योगजिज्ञासोरपरामर्शात् कथं तद्विषयमेतदित्यतोऽध्याहारेण व्याचष्टे—**जिज्ञासुरिति** । ज्ञात्वा योगमिति शेषः । यतनानंतरमनेकजन्मसंसिद्ध इत्यन्यथाप्रतीतिनिरासायाह—**एवमिति** । योगे संपूर्णे संसिद्धेर्विलंबे कारणाभावादितिभावः । व्याख्यातार्थे पुराणसंमतिमाह—**आह चेति** ॥ ४५ ॥

**रा० भा०—यत एवं योगमाहात्म्यं ततोऽनेकजन्मार्जितपुण्यसंचयैः संशुद्धकिल्बिषः संसिद्धः संजातः प्रयत्नाद्यतमानस्तु योगी चलितोऽपि पुनः परां गतिं यात्येव ॥ ४५ ॥**

अ० टी०—एतादृशकुलजन्माभावेऽपि यत्नवान् प्राप्नुयात् तत्र तादृक्कुलोत्पन्नप्राप्तौ किं वक्तव्यमित्याह—**प्रयत्नादिति** । यः सामान्यो नतु तादृशजन्मवानेव प्रयत्नाद्यतमानः संशुद्धकिल्बिषः तद्भावज्ञानप्रतिबन्धपापरहितो योगी योगस्वरूपज्ञानवान् भवति । तु पुनः । अनेकजन्मसंसिद्धः अनेकजन्मभिर्यतमानः सन् सिद्धः प्राप्तयोगरूपो भवति । ततः परां गतिं दास्यरूपां याति प्राप्नोतीत्यर्थः । यतो मत्संयोगात्मको योग उत्तमस्तस्मात्त्वं योगी भवेति ॥ ४५ ॥

नी० टी०—एवं योगभ्रष्टगतिमुक्त्वा यो विषयैर्ह्रियमाणोऽपि प्रयत्नेन योगमेवाभ्यसितुं प्रवर्त्तते तस्य गतिमाह—**प्रयत्नादिति।** प्रयत्नात्प्रकृष्टात् हठात् वायुनिरोधादिरूपात् खेचर्यादिमुद्राविशेषाभ्यासाद्यो यतमानः संशुद्धकिल्बिषो निष्पापो भवति। यदाह मनुः। प्राणायामैर्दहेद्देन इति। हठयोगानां सर्वेषां पापनिवृत्त्युपयोगित्वं न तत्त्वसाक्षात्कारे साक्षात्साधनत्वमित्यर्थः। अत एव सः अनेकैर्जन्मभिः संसिद्धः प्राप्तयोगो भूत्वा ततः परां गतिं मोक्षं याति। एतेन चक्षुश्चैवांतरे भ्रुवोरिति पंचमांते यत्सूत्रितं तद्व्याख्यातम् ॥४९॥

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः॥**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥ ४६॥**

**शां० भा०—यस्मादेवं तस्मात्—तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि, ज्ञानमत्र शास्त्रपाण्डित्यं तद्वद्भ्योऽपि मतो ज्ञातोऽधिकः श्रेष्ठ इति कर्मिभ्योऽग्निहोत्रादि कर्म तद्वद्भ्योऽधिको योगी विशिष्टो यस्मात्तस्माद्योगी भवार्जुन॥ ४६॥**

शां० आ०—सम्यग्ज्ञानद्वारा मोक्षहेतुत्वं योगस्योक्तमनूद्य योगिनः सर्वाधिकत्वमाह—**यस्मादिति।** योगस्य सर्वस्मादुत्कर्षादवश्यकर्तव्यत्वाय योगिनः सर्वाधिक्यं साधयति—**तपस्विभ्य इति।** योगिनो ज्ञानिनश्च पर्यायत्वात्कथं तस्य ज्ञानिभ्योऽधिकत्वमित्याशङ्क्याऽऽह—**ज्ञानमिति।** योगिनः सर्वाधिकत्वे फलितमाह—**तस्मादिति** ॥ ४६॥

**आ० भा०—ज्ञानिभ्यो योगज्ञानिभ्यः। तपस्विभ्यः कृच्छ्रादिचारिभ्यः। उक्तं च। 'कृच्छ्रादेरपि यज्ञादेर्ध्यानयोगो विशिष्यते॥ तत्रापि शेषश्रीब्रह्मशिवादिध्यानतो हरेः॥ ध्यानं कोटिगुणं प्रोक्तमधिकं वा मुमुक्षुणाम्' इति गारुडे। 'अज्ञात्वाध्यायिनो ध्यानाज्ज्ञानमेव विशिष्यते॥ ज्ञात्वा ध्यानं ज्ञानमात्राद्ध्यानादपि तु दर्शनम्॥ दर्शनादपि भक्तेश्च न किंचित्साधनाधिकम्' इति च नारदीये॥ ४६॥**

आ० ज०—ननु ज्ञानं योगस्य फलं तत्कथं ज्ञानिभ्योऽप्यधिकोमत इत्यतआह—**ज्ञानिभ्य इति।** यद्यपि ज्ञानतपसापूता इति ज्ञानमपि तपस्तथाऽपि तदतिरिक्तमेवात्र विवक्षितमित्याह—**तपस्विभ्यइति।** ब्रह्मज्ञानादाधिक्यस्यासंभवाद्योगज्ञानाधिक्यस्य पृथगुक्तत्वादिति भावः। अतएव पूर्वं तव्याख्यातम्। उक्तार्थमुपपादयन् श्लोकद्वयार्थं पुराणवाक्येनाह—**उक्तं चेति।** मुमुक्षूणां एतेन सर्वेषामपि योगिनां मध्ये यो मां भजते स युक्ततरोमतः। तत्रापि मद्गतेनांतरात्मना यो भजते स युक्ततमो मत इति व्याख्यातं भवति। ज्ञानिभ्योऽपि मतोऽधिक इत्येतद्योगज्ञानविषयमेव न तद्ब्रह्मज्ञानविषयमित्येतत्पुराणवाक्येन स्थापयति—**अज्ञात्वेति।** योगमिति शेषः। साधनाधिकं साधनेष्वधिकम् ॥ ४६॥

**रा० भा०—अतिशयितपुरुषार्थनिष्ठतया योगिनः सर्वस्मादाधिक्यमाह—केवलतपोभिर्यः पुरुषार्थः साध्यते आत्मज्ञानव्यतिरिक्तैर्ज्ञानैश्च यः यश्च केवलैरश्वमेधादिभिः कर्मभिस्तेभ्यः सर्वेभ्योऽधिकपुरुषार्थसाधनत्वात् योगस्य तपस्विभ्यः ज्ञानिभ्यः कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥ ४६॥**

अ० टी०—योगस्य सर्वाधिकत्वं प्रतिपादयन्नेवाह—**तपस्विभ्य इति।** तपस्विभ्यः योगस्वरूपाज्ञाने तदभिलाषाभावेन केवलक्लेशसहनशीलेभ्यो योगी अधिकः। किंच ज्ञानिभ्यः ज्ञानेन संन्यासादिधर्मयुक्तेभ्योऽपि योगी अधिको मतः मेऽभिमतः। ज्ञानी च पुनः कर्मिभ्यो यज्ञनित्यादिनिष्ठेभ्यो योगी अधिको मतः तस्मात् हे अर्जुन! मत्स्नेहैकयोग्य! त्वं योगी भव युक्तो योगनिष्ठो भवेत्यर्थः॥ ४६॥

नी० टी०—एवं योगिनं स्तौति—**तपस्विभ्य इति**। तपस्विनोऽत्र कृच्छ्रचांद्रायणमासोपवासादि-कर्त्तारः। ज्ञानिनश्च शास्त्रीयपांडित्यवंतः। कर्मिणोऽग्निहोत्राद्यनुष्ठातारः। तेभ्यः सर्वेभ्यो योगी यतोऽधिको मतस्तस्माद्योगी भवार्जुन ॥ ४६ ॥

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ॥**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-संवादे ध्यानयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

**शां० भा०**—योगिनामिति। योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेनान्तरात्मनाऽन्तःकरणेन श्रद्धावाञ्श्रद्दधानः सन्भजते सेवते यो मां स मे मम युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेत इति ॥ ४७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्येऽभ्यासयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

**शां० आ०**—नन्वादित्यो विराडात्मा सूत्रं कारणमक्षरमित्येतेषामुपासका भूयांसो योगिनो गम्यन्ते तेषां कतमः श्रेयानिष्यते तत्राऽऽह—**योगिनामिति**। यो भगवन्तं सगुणं निर्गुणं वा यथोक्तेन चेतसा श्रद्दधानः सन्ननवरतमनुसंधत्ते स युक्तानां मध्येऽतिशयेन युक्तः श्रेयानीश्वरस्याभिप्रेतो न हि तदीयोऽभिप्रायोऽन्यथा भवितुमर्हतीत्यर्थः। तदनेनाध्यायेन कर्मयोगस्य संन्यासहेतोर्मर्यादां दर्शयता साङ्गं च योगं विवृण्वता मनोनिग्रहोपायोपदेशेन योगभ्रष्टस्याऽऽत्यन्तिकनाशशङ्कावकाशं शिथिलयता त्वंपदार्थाभिज्ञस्य ज्ञाननिष्ठत्वोक्त्या वाक्यार्थज्ञानान्मुक्तिरिति साधितम् ॥ ४७ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने पञ्चमोऽध्यायः ॥ ५ ॥

**आ० भा०**—॥ ४७ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

**आ० ज०**—॥ ४७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितगीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां षष्ठोऽध्यायः ॥ ६ ॥

**रा० भा०**—तदेवं परविद्याङ्गभूतं प्रजापतिवाक्योदितं प्रत्यगात्मदर्शनमुक्तम् अथ परविद्यां प्रस्तौति—**योगिनामिति**। पञ्चम्यर्थे षष्ठी। सर्वभूतस्थमित्यादिना चतुर्विधा योगिनः प्रतिपादिताः तेष्वनन्तर्गतत्वाद्वक्ष्यमाणस्य योगिनो न निर्धारणे षष्ठी संभवति अपि सर्वेषामिति सर्वशब्दनिर्दिष्टास्तपस्विप्रभृतयः तत्राप्युक्तेन न्यायेन पञ्चम्यर्थो ग्रहीतव्यः योगिभ्योऽपि सर्वेभ्यो वक्ष्यमाणो योगी युक्ततमस्तदपेक्षयाऽवरत्वे तपस्विप्रभृतीनां योगिनां च न कश्चिद्विशेष इत्यर्थः। मेर्वपेक्षया सर्षपाणामिव यद्यपि सर्षपेष्वन्योन्यन्यूनाधिकभावो विद्यते तथापि मेर्वपेक्षयावरत्वनिर्देशः समानः मत्प्रियत्वातिरेकेणानन्यसाधारणस्वभावतया मद्गतेनान्तरात्मना मनसा बाह्याभ्यन्तरसकलवृत्तिविशेषाश्र-

यभूतं मनो ह्यन्तरात्मा अत्यर्थमतिप्रियत्वेन मया विना स्वधारणालाभान्मद्गतेन मनसा श्रद्धावानत्यर्थमतिप्रियत्वेन क्षणमात्रवियोगासहतया मत्प्राप्तिप्रवृत्तौ त्वरावान् यो मां भजते मां विचित्रानन्तभोग्यभोक्तृवर्गभोगोपकरणभोगस्थानपरिपूर्णनिखिलजगदुदयविभवलयलीलमस्पृष्टाशेषदोषानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसंख्येयकल्याणगुणगणनिधिं स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतानित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूपं वाङ्मनसापरिच्छेद्यस्वरूपस्वभावमपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यमहोदधिमनालोचितविशेषाशेषलोकशरण्यं प्रणतार्तिहरमाश्रितवात्सल्यैकजलधिमखिलमनुजनयनविषयतां गतमजहत्स्वस्वभावं वसुदेवगृहेऽवतीर्णमनवधिकातिशयतेजसा निखिलं जगद्भासयन्तम् आत्मकान्त्या विश्वमाप्याययन्तं भजते सेवते उपास्त इत्यर्थः। स मे युक्ततमो मतः स सर्वेभ्यः श्रेष्ठतम इति सर्वं सर्वदा यथावस्थितं स्वत एव साक्षात्कुर्वन्नहं मन्ये ॥ ४७ ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते गीताभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

**अ० टी०**—योगिनोऽपि बहुविधा इति तन्मध्ये दास्यधर्मेण भजनवानुत्तम इत्याह—**योगिनामपीति।** सर्वेषामपि योगिनां मध्ये योगिनस्त्रिविधाः। योगाभ्यासेन भगवद्ध्याननिष्ठाः। भक्तियोगेन साधनसेवनपराः। रसात्मकस्वसंयोगभावनिष्ठास्तन्मध्ये मद्गतेन अन्तरात्मना भावात्मकस्वरूपेण मम स्वशक्तिसंयोगेच्छारूपयोगेन मदर्थं श्रद्धावान् प्रेमयुक्तो यो मां भजते स मे मम युक्ततमः अत्यन्तं युक्तः प्रियो मतोऽभिमत इत्यर्थः। अतस्तथाभावेन त्वं योगी भवेतिभावः ॥ ४७ ॥

'दास्यात्मकस्वयोगेन भक्तिमार्गभ्रमं हि यः ॥ नाशयामास पार्थस्य स मे कृष्णः प्रसीदतु ॥ १ ॥'

इति श्रीगीतामृततरङ्गिण्यां षष्ठोऽध्यायः ॥ ६ ॥

**नी० टी०**—समाप्तः कर्मप्रधानस्त्वंपदार्थविवेकः। अतः परमुपासनाप्राधान्येन तत्पदार्थं निरूपयितुकामस्तदुपासनां महाफलत्वेन स्तौति—**योगिनामिति।** दैवमेवापरे यज्ञमित्यादिना चतुर्थाध्यायप्रोक्ता द्वादश योगास्तद्वतां योगिनां सर्वेषां मध्ये यो मद्गतेन मयि वासुदेवे समर्पितेनांतरात्मना चित्तेन श्रद्धावान् सन् मां भजते स मे मम युक्ततमोऽतिशयेन युक्तः श्लाघ्यो मतोऽभिप्रेतः। तस्मान्मद्भक्तो भवेति भावः ॥ ४७ ॥

इति श्री० नैलकंठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे षष्ठोऽध्यायः ॥ ६ ॥

( श्लोकानामादितः समष्ट्यङ्काः—२५१ )


इति प्रथमं षट्कं समाप्तम् ।

# मध्यमषट्कम् ( उपासनाकाण्डम् )

॥ अथ सप्तमोऽध्यायः ॥ ७ ॥

श्रीभगवानुवाच—मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ॥
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

**शां० भा०**—'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मतः' इति प्रश्नबीजमुपन्यस्य स्वयमेवेदृशं मदीयं तत्त्वमेवं मद्गतान्तरात्मा स्यादित्येतद्विवक्षुः—मयि वक्ष्यमाणविशेषणे परमेश्वर आसक्तं मनो यस्य स मय्यासक्तमना हे पार्थ योगं युञ्जन्मनःसमाधानं कुर्वन्मदाश्रयोऽहमेव परमेश्वर आश्रयो यस्य स मदाश्रयो यो हि कश्चित्पुरुषार्थेन केनचिदर्थी भवति स तत्साधनं कर्माग्निहोत्रादि तपो दानं वा किंचिदाश्रयं प्रतिपद्यतेऽयं तु योगी मामेवाऽऽश्रयं प्रतिपद्यते हित्वाऽन्यत्साधनान्तरं मय्येवाऽऽसक्तमना भवति । यस्त्वमेवंभूतः सन्नसंशयं समग्रं समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं मां यथा येन प्रकारेण ज्ञास्यसि संशयमन्तरेणैवमेव भगवानिति तच्छृणूच्यमानं मया ॥ १ ॥

**शां० आ०**—कर्मसंन्यासात्मकसाधनप्रधानं त्वंपदार्थप्रधानं च प्रथमषट्कं व्याख्याय मध्यमषट्कमुपास्यनिष्ठं तत्पदार्थनिष्ठं व्याख्यातुमारभमाणः समनन्तराध्यायमवतारयति—**योगिनामिति** । अतीताध्यायान्ते मद्गतेनान्तरात्मना यो भजते मामिति प्रश्नबीजं प्रदर्श्य कीदृशं भगवतस्तत्त्वं कथं वा तद्गतान्तरात्मा स्यादित्यर्जुनस्य प्रश्नद्वये जाते स्वयमेव भगवानपृष्टमेतद्वक्तुमिच्छन्नुक्तवानित्यर्थः । परमेश्वरस्य वक्ष्यमाणविशेषणत्वं सकलजगदायतनत्वादिनानाविधविभूतिभागित्वं तत्राऽऽसक्तिर्मनसो विषयान्तरपरिहाण्या तन्निष्ठत्वम् । मनसो भगवत्येवाऽऽसक्तौ हेतुमाह—**योगमिति** । विषयान्तरपरिहारे हि गोचरमालोच्यमाने भगवत्येव प्रतिष्ठितं भवतीत्यर्थः । तथाऽपि स्वाश्रये पुरुषो मनः स्थापयति नान्यत्रेत्याशङ्क्याऽऽह—**मदाश्रय इति** । योगिनो यदीश्वराश्रयत्वेन तस्मिन्नेवाऽऽसक्तमनस्त्वमुपन्यस्तं तदुपपादयति—**योहीति** । ईश्वराख्याश्रयस्य प्रतिपत्तिमेव प्रकटयति—**हित्वेति** । अस्तु योगिनस्त्वदाश्रयप्रतिपत्त्या मनसस्त्वय्येवाऽऽसक्तिस्तथाऽपि मम किमायातमित्याशङ्क्य द्वितीयार्धं व्याचष्टे—**यस्त्वमेवमिति** । एवंभूतो यथोक्तध्याननिष्ठपुरुषवदेव मय्यासक्तमना यस्त्वं स त्वं तथाविधः सन्नसंशयमविद्यमानः संशयो यत्र ज्ञाने तद्यथा स्यात्तथा मां समग्रं ज्ञास्यसीति संबन्धः । समग्रमित्यस्यार्थमाह—**समस्तमिति** । विभूतिर्नानाविधैश्वर्योपायसंपत्तिः । बलं शरीरगतं सामर्थ्यम् । शक्तिर्मनोगतं प्रागल्भ्यम् । ऐश्वर्यमीशितव्यविषयमीशनसामर्थ्यम्, आदिशब्देन ज्ञानेच्छादयो गृह्यन्ते। असंशयमिति पदस्य क्रियाविशेषणत्वं विशदयन्क्रियापदेन संबन्धं कथयति—**संशयमिति** । विना संशयं भगवत्तत्त्वपरिज्ञानमेव स्फोरयति—**एवमेवेति** । भगवत्तत्त्वे ज्ञातव्ये कथं मम ज्ञानमुपदेक्ष्यति न हि त्वामृते तदुपदेष्टा कश्चिदस्तीत्याशङ्क्याऽऽह—**तच्छृण्विति** ॥ १ ॥

**आ० भा०**—श्रीमद्वरदराजाय नमः ॥ ॐ ॥ साधनं प्राधान्येनोक्तमतीतैरध्यायैः उत्तरैस्तु षड्भिर्भगवन्माहात्म्यं प्राधान्येनाह—आसक्तमनाः अतीव स्नेहयुक्तमनाः मदाश्रयः भगवानेव सर्वं मया कारयति स एव मे शरणम् । तस्मिन्नेवाहं स्थित इति स्थितः । असंशयं समग्रमिति क्रियाविशेषणम् ॥ १ ॥

**आ० ज०**—ज्ञानसाधनादन्यदुत्तराध्यायप्रतिपाद्यं वक्तुं योगे त्विमां शृण्विति प्रतिज्ञातमसमाप्य कथमर्थांतरमुच्यत इत्याशंकां तावत्परिहरति—**साधनमिति** । ज्ञानस्येति शेषः । तत्र तत्र भगवन्महिम्नोऽपि वर्णितत्वेन प्राधान्येनेत्युक्तम् । प्राचुर्येणेत्यर्थः । उक्तमित्यनेन प्रतिज्ञातसमाप्तिं सूचयति । तच्च प्रतिज्ञांतरकरणादवगम्यते । इदानीमुत्तरग्रंथप्रतिपाद्यमाह—**उत्तरैस्त्विति** ।

अध्यायैरिति वर्तते । अनेन ज्ञानविज्ञानशब्दौ ज्ञेयभगवन्माहात्म्यपराविति सूचितम् । अत्रापि क्वचित्साधनस्योक्तत्वात् प्राधान्ये-नेत्युक्तम् । संगतिस्तु प्रथमश्लोक एवोक्ता । अनेन द्विविधेन योगेन यज्ज्ञातव्यं तच्छृण्वित्युक्तत्वात् । आसक्तमनाः संबद्धमनाः इति प्रतीतिनिरासायाह—**आसक्तेति** । अतीवेत्याङोर्थः संबंधमात्रस्य योगानंगत्वादितिभावः । भगवदाश्रयत्वं सर्वसाधारणं कथं योगिनो विशेषणमित्यतआह—**मदाश्रय इति** । शरणं रक्षकःइति स्थित इति जानन्निति यावत् । असंशयं समग्रं इत्युभयं भगवद्विशेषणत्वेन भास्करो व्याख्यातवान् । संशयरहितं समग्रं कृत्स्नं मामिति । अपरस्तु समग्रमित्येव समग्रं समस्तविभूतिबलश-क्त्यैश्वर्यादिगुणसंपन्नं मां । संशयमंतरेणेति तन्निरासार्थमाह—**असंशयमिति** । तव समग्रं यथा भवति तथेत्यर्थः । न हि भग-वतः संशयराहित्यमिदानीं वक्तव्यम् । न च भगवान्समग्रोऽन्येन केनचिच्छक्यो ज्ञातुम् । स्वयमेवात्मनात्मानं वेत्थ त्वमिति वक्ष्य-माणत्वादिति भावः ॥ १ ॥

**रा० भा०**—प्रथमेनाध्यायषट्केन परमप्राप्यभूतस्य परस्य ब्रह्मणो निरवद्यस्य निखिलजगदेक-कारणस्य सर्वज्ञस्य सर्वभूतस्य सत्यसंकल्पस्य महाविभूतेः श्रीमतो नारायणस्य प्राप्त्युपायभूतं तदु-पासनं वक्तुं तदङ्गभूतमात्मज्ञानपूर्वककर्मानुष्ठानसाध्यं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनमुक्तम् । इदानीं मध्यमेन षट्केन परब्रह्मभूतपरमपुरुषस्वरूपं तदुपासनं च भक्तिशब्दवाच्यमुच्यते । तदेतदुत्तरत्र 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्या-रभ्य 'विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते । ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्ष-ति ॥ समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' इति वक्ष्यते । उपासनं तु भक्तिरूपापन्नमेव परमप्राप्त्युपायभूतमिति वेदान्तवाक्यसिद्धम् "तमेव विदित्वातिमृत्युमेति, तमेवंविद्वानमृत इह भवति" इत्यादिनाभिहितं वेदनम् "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, आत्मान-मेव लोकमुपासीत, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" 'भिद्यते हृदयग्रन्थिः' इत्यादिभिरैकार्थ्यात्स्मृतिसंतानरूपं दर्शनसमानाकारं ध्यानोपासनशब्दवाच्यमित्यवगम्यते पुनश्च "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति विशेषणात्परेणात्मनावरणीयताहेतुभूतं स्मर्यमाणविषयस्यात्य-र्थप्रियत्वेन स्वयमप्यत्यर्थप्रियरूपं स्मृतिसंतानमेवोपासनशब्दवाच्यमिति हि निश्चीयते तदेव भक्ति-रित्युच्यते 'स्नेहपूर्वमनुध्यानं भक्तिरित्युच्यते बुधैः' इति वचनात् । "अतस्तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते" 'नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप' इत्यनयोरेकार्थत्वं सिद्धं भवति । तत्र सप्तमे तावदुपास्यभूतपरमपुरुषस्वरूपया-थात्म्यं प्रकृत्या तत्तिरोधानं तन्निवृत्तये भगवत्प्रपत्तिरुपासकविधाभेदो ज्ञानिनः श्रैष्ठ्यं चोच्यते मय्याभिमुख्येनासक्तमनाः मत्प्रियत्वातिरेकेण मत्स्वरूपेण गुणैश्च चेष्टितेन मद्विभूत्या विश्लेषे सति तत्क्षणादेव विशीर्यमाणस्वभावतया मयि सुगाढं बद्धमनाः मदाश्रयः तथा स्वयं च मया विना विशी-र्यमाणतया मदाश्रयः मदेकाधारः मद्योगं युञ्जन्योक्तु प्रवृत्तो योगविषयभूतं मामसंशयं निःसंशयं समग्रं सकलं यथा ज्ञास्यसि येन ज्ञानेनोक्तेन ज्ञास्यसि तज्ज्ञानमवस्थितमनाः शृणु ॥ १ ॥

**अ० टी०**—श्रीकृष्णाय नमः ॥ 'भगवद्योगयुक्तात्मा युक्तो रूपप्रबोधने ॥ अतः पार्थाय श्रीकृष्णः स्वरूपज्ञानमुक्तवान् ॥ १ ॥' पूर्वाध्यायान्ते 'श्रद्धावान् भजते यो मां स मे युक्ततमो मतः' इति योग-सहितस्वभजनकर्तुरुत्तमत्वं स्वाभिमतत्वमुक्तं तत्र स्वरूपाज्ञाने भजनं न भवेत् तज्ज्ञानं च योगज्ञानोत्तरभा-वीति योगस्वरूपमुक्त्वा अथ भजनार्थं स्वरूपज्ञानमाह—श्रीभगवानुवाच—**मय्यासक्तमना इति** । हे पार्थ

एतच्छ्रवणयोग्य ! मदाश्रयः मदर्थमेवाऽनन्यशरणः सन् मत्क्रीडार्थं संयोगार्थमाश्रयं कृत्वा योगं युञ्जन् दास्याभ्यासं कुर्वन् असंशयं संशयरहितं यथा स्यात्तथा समग्रं संयोगात्मकसर्वरससहितं मां यथा ज्ञास्यसि तदिदमग्रे वक्ष्यमाणं ज्ञानस्वरूपं मय्यासक्तमनाः मयि आसक्तं स्वापेक्षारहितं मत्सुखाभिलाषिमनाः शृणु ॥१॥

**नी० टी०**—पूर्वाध्यायांते यो मां भजते स मे युक्ततमो मत इत्युक्तं । तत्र कीदृशं पूर्वोक्तनिष्कामकर्मयोगापेक्षया विलक्षणं तव भजनं केन वा गुणेन पूर्वयोगापेक्षया तस्य युक्ततमत्वमित्येतामर्जुनस्याशंकां स्वयमेव परिहरन् भगवानुवाच—**मयीति**। कश्चिद्राजाश्रयो धनमानासक्तमना भवति । अयं तु मदाश्रयेण मामेव परमपुरुषार्थभूतं प्राप्तुमिच्छन्नित्यर्थः । ईदृशो योगं युंजन् समाधिमनुतिष्ठन् । त्वंपदार्थविवेककाले यद्यपि सार्वज्ञ्यमस्ति सर्वभूतस्थमात्मानमित्यादिवचनात्तथापि स्वस्मादन्य ईश्वरोऽस्ति नवेति पातंजलकापिलयोस्तार्किकमीमांसकयोर्वा सेश्वरानीश्वरयोर्मतभेदात्संशयः कारणाज्ञानाच्चासमग्रं तत्सार्वज्ञ्यमिति मत्वा आह—**असंशयं समग्रमिति** । मां तत्पदार्थमीश्वरं यथा ज्ञास्यसि तत् तं प्रकारं शृणु । अत्र वक्ष्यमाणरीत्या सर्वं ब्रह्म वासुदेवात्मकमिति भजने वैलक्षण्यं कारणज्ञातृत्वमस्य योगिनः पूर्वयोग्यपेक्षयाऽऽधिक्यमिति भावः॥१॥

## ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ॥
## यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

**शां० भा०—तच्च मद्विषयम्—ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं स्वानुभवसंयुक्तमिदं वक्ष्यामि कथयिष्याम्यशेषतः कार्त्स्न्येन । तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभिमुखीकरणाय । यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा नेह भूयः पुनर्ज्ञातव्यं पुरुषार्थसाधनमवशिष्यते नावशेषो भवतीति मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः । अतो विशिष्टफलत्वाद्दुर्लभं ज्ञानम् ॥ २ ॥**

**शां० आ०**—ज्ञास्यसीत्युक्त्या परोक्षज्ञानशङ्कायां तन्निवृत्त्यर्थं तदुक्तिप्रकारमेव विवृणोति—**तच्चेति** । इदमपरोक्षं ज्ञानं चैतन्यम् । तस्य सविज्ञानस्य प्रतिलम्भे किं स्यादित्याशङ्क्याऽऽह—**यज्ज्ञात्वेति** । इदमा चैतन्यस्य परोक्षत्वं व्यावर्त्यते । तदेव सविज्ञानमिति विशेषणेन स्फुटयति। अनवशेषेण तद्वेदनफलोपन्यासेन श्रोतारं तच्छ्रवणप्रवणं करोति—**तज्ज्ञानमिति** । एकविज्ञानेन सर्वविज्ञानश्रुतिमाश्रित्योत्तरार्धतात्पर्यमाह—**यज्ज्ञात्वेति** । भगवत्तत्त्वज्ञानस्य विशिष्टफलत्वमुक्त्वा फलितमाह—**अत इति** ॥ २ ॥

**आ० भा०—इदं मद्विषयं ज्ञानम् । विज्ञानं विशेषज्ञानम् ॥ २ ॥**

**आ० ज०**—ननु ज्ञानं वक्ष्यते न तूक्तं तत्कथमिदमिति परामर्श इत्यत आह—**इदमिति** । मामिति स्वस्य प्रकृतत्वात् तत्संबंधित्वेन ज्ञानमपि प्रकृतमिति भावः । सविज्ञानं स्वानुभवसंयुक्तमित्येतदपाकर्तुं विज्ञानपदार्थमाह—**विज्ञानमिति** । अस्यैव वक्ष्यमाणत्वादपरस्य तदभावादिति भावः ॥ २ ॥

**रा० भा०—अहं ते मद्विषयमिदं ज्ञानं विज्ञानेन सहाशेषतो वक्ष्यामि विज्ञानं विविक्ताकारविषयं ज्ञानं यथाहं मद्व्यतिरिक्तात्समस्तचिदचिद्वस्तुजातान्निखिलहेयप्रत्यनीकतयाऽनवधिकातिशयासंख्येयकल्याणगुणगणानन्तमहाविभूतितया च विविक्तः तेन विविक्तविषयज्ञानेन सह मत्स्वरूपविषयज्ञानं वक्ष्यामि । किं बहुना यज्ज्ञानं ज्ञात्वा मयि पुनरन्यज्ज्ञातव्यं नावशिष्यते ॥ २ ॥**

**अ० टी०**—ननु योगस्वरूपनिरूपणे पूर्वमपि स्वरूपज्ञानमुक्तमेव पुनरेतज्ज्ञानं किंरूपमित्याशङ्क्याह—**ज्ञानं तेऽहमिति** । अहं पुरुषोत्तमः ते तव त्वदर्थं ज्ञानं शास्त्रोक्तप्रकारेण मत्स्वरूपविषयम् अशेषतः संपूर्णं लीलादिसहितं वक्ष्यामि । कीदृशं तत् सविज्ञानं स्वरूपानुभवसहितम् । अनुभवस्वरूपमेवाह—

इदमिति। अनुभूयमानस्वस्वरूपात्मकम्। एतज्ज्ञानानन्तरं पुनरन्यज्ज्ञेयं नास्तीत्याह—**यदिति**। यत् स्वरूपानुभवसहितं स्वस्वरूपं ज्ञात्वा इह अस्मिन्मद्भक्तिमार्गे भरतखण्डे अस्मिन्मनुष्यजन्मनि वा ज्ञातव्यं न अवशिष्यते। एतज्ज्ञानेनैव दास्यानुभवो भवतीत्यर्थः॥ २॥

**नी० टी०**—एतदेवाह—**ज्ञानमिति**। ज्ञानं शुद्धप्रज्ञानघनं ब्रह्म। "सत्यं ज्ञानमनंतं ब्रह्म। विज्ञानमानंदं ब्रह्म" इति श्रुतेः। ते तुभ्यमहं वक्ष्यामि अशेषतः साधनकलापसहितं। किं वचनमात्रजेन परोक्षज्ञानेन शब्दस्य स्वविषये परोक्षज्ञानजनकत्वनियमादित्याशंक्याह—सविज्ञानं अनुभवसहितं दशमस्त्वमसीत्यादौ शब्दादप्यपरोक्षज्ञानोत्पत्तिदर्शनात्। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्" इत्येकविज्ञानात्सर्वविज्ञानप्रतिज्ञां श्रौतीमेव वर्णयति यज्ज्ञात्वेति जगत्कारणाधिष्ठानस्य ज्ञानरूपस्य ब्रह्मणो ज्ञाने संशयोच्छेदात्सर्वस्यात्ममात्रत्वेन ज्ञातव्यानवशेषो युक्त इत्यर्थः॥ २॥

## मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये॥
## यततामपि सिद्धाना कश्चिन्मां वेत्ति तत्त्वतः॥ ३॥

**शां० भा०—कथमित्युच्यते—मनुष्याणां मध्ये सहस्रेष्वनेकेषु कश्चिद्यतति प्रयत्नं करोति सिद्धये सिद्ध्यर्थं तेषां यततामपि सिद्धानां सिद्धा एव हि ते ये मोक्षाय यतन्ते तेषां कश्चिदेव मां वेत्ति तत्त्वतो यथावत्॥ ३॥**

**शां० आ०**—ज्ञानस्य दुर्लभत्वं प्रश्नपूर्वकं प्रकटयति—**कथमित्यादिना**। सहस्रशब्दस्य बहुवाचकत्वमुपेत्य व्याकरोति—**अनेकेष्विति**। सिद्धये सत्त्वशुद्धिद्वारा ज्ञानोत्पत्त्यर्थमित्यर्थः। सिद्ध्यर्थं यतमानानां कथं सिद्धत्वमित्याशङ्क्याऽऽह—**सिद्धा एवेति**। सर्वेषामेव तेषां ज्ञानोदयात्तस्य सुलभत्वमित्याशङ्क्याऽऽह—**तेषामिति**॥ ३॥

**आ० भा०—दौर्लभ्यं ज्ञानस्याह—मनुष्याणामिति॥ ३॥**

**आ० ज०**—ननु ज्ञानादिवचनं प्रतिज्ञाय यत्किंचित्कथमुच्यतइत्यत आह—**दौर्लभ्यमिति**। श्रोतुरादरजननार्थमिति शेषः। ज्ञानस्य दौर्लभ्ये विज्ञानस्य तत्सुतराम्॥ ३॥

**रा० भा०—वक्ष्यमाणस्य ज्ञानस्य दुष्प्रापतामाह—मनुष्याः शास्त्राधिकारयोग्यास्तेषां सहस्रेषु कश्चिदेव सिद्धिपर्यन्तं यतते सिद्धिपर्यन्तं यतमानानां सहस्रेषु कश्चिदेव मां विदित्वा मत्तः सिद्धये यतते मद्विदां सहस्रेषु तत्त्वतो यथावस्थितं मां वेत्ति न कश्चिदित्यभिप्रायः स महात्मा सुदुर्लभः 'मां तु वेद न कश्चन' इति हि वक्ष्यते॥ ३॥**

**अ० टी०**—ज्ञातव्यं कुतो नावशिष्यतइत्यत आह—**मनुष्याणामिति**। पूर्वं तु भगवत्सांनिधानान्निःसृतानां जीवानां मध्ये मनुष्यत्वं प्राप्तानामेव भजनाधिकारस्तत्प्राप्तिश्च दास्यदानानुग्रहैकसाध्या तत्प्राप्त्यनन्तरं च भावार्थं समर्पितस्य देहस्य तदाप्त्यर्थं लीलया प्राकट्यमतिदुर्लभं तत्रापि भावसेवया प्रीतेन भगवदुक्त स्वस्वरूपज्ञानमतिदुर्लभम् एतत्सर्वासिद्धिर्यज्ज्ञानेन भवति तज्ज्ञाने न किंचिदवशिष्यते। तदाह। मनुष्याणां सहस्रेषु भजनौपयिकप्राप्तदेहानां सहस्रेषु असंख्यातेषु कश्चित् दुर्लभो मदनुग्रहैकरूपः सिद्धये मत्सिद्धिस्वरूपनिमित्तं या सिद्धिर्द्वितीयस्कंधे उक्ता तदर्थं यतति यत्नवान् भवति। यततामपि यत्नं कुर्वतामपि सिद्धानां मध्ये कश्चित् स्वरमणेच्छादिभावरहितस्तत्स्वरूपात्मकधामरममाणं मां तत्त्वतस्तदनुग्रहैकलभ्यत्वेन वेत्ति जानाति। यत एतज्ज्ञानमतिदुर्लभं। यज्ज्ञानानन्तरं न किंचिदवशिष्यते। तन्मया त्वदर्थमुच्यत इति भावः॥ ३॥

नी० टी०—एतदेव ज्ञानं दौर्लभ्यप्रदर्शनेन स्तौति—मनुष्याणामिति। यततां यतमानानाम्॥ ३॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च॥
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥ ४॥

शां० भा०—श्रोतारं प्ररोचनेनाभिमुखीकृत्याऽऽह—भूमिरिति पृथिवीतन्मात्रमुच्यते न स्थूला 'भिन्ना प्रकृतिरष्टधा' इति वचनात्। तथाऽबादयोऽपि तन्मात्राण्येवोच्यन्ते। आपोऽनलो वायुः खं मन इति मनसः कारणमहंकारो गृह्यते। बुद्धिरित्यहंकारकारणं महत्तत्त्वम्। अहंकार इत्यविद्यासंयुक्तमव्यक्तम्। यथा विषसंयुक्तमन्नं विषमुच्यत एवमहंकारवासनावदव्यक्तं मूलकारणमहंकार इत्युच्यते प्रवर्तकत्वादहंकारस्य। अहंकार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके। इतीयं यथोक्ता प्रकृतिर्मे ममैश्वरी मायाशक्तिरष्टधा भिन्ना भेदमागता॥ ४॥

शां० आ०—ज्ञानार्थं प्रयत्नस्य तद्द्वारा ज्ञानलाभस्य तदुभयद्वारेण मुक्तेश्च दुर्लभत्वाभिधानस्य श्रोतृप्ररोचनं फलमिति मत्वाऽऽह—**श्रोतारमिति**। आत्मनः सर्वात्मकत्वेन परिपूर्णत्वमवतारयन्नादावपरां प्रकृतिमुपन्यस्यति—**आहेति**। भूमिशब्दस्य व्यवहारयोग्यस्थूलपृथिवीविषयत्वं व्यावर्तयति—**भूमिरितीति**। तत्र हेतुमाह—**भिन्नेति**। प्रकृतिसमभिव्याहाराद्गन्धतन्मात्रं स्थूलपृथिवीप्रकृतिरुत्तरविकारो भूमिरित्युच्यते न विशेष इत्यर्थः। भूमिशब्दवदबादिशब्दानामपि सूक्ष्मभूतविषयत्वमाह—**तथेति**। तेषामपि प्रकृतिसमानाधिकृतत्वाविशेषात्तन्मात्राणां पूर्वपूर्वप्रकृतीनामुत्तरोत्तरविकाराणां न विशेषत्वसिद्धिरित्यर्थः। मनःशब्दस्य संकल्पविकल्पात्मककरणविषयत्वमाशङ्क्याऽऽह—**मन इतीति**। न खल्वहंकाराभावे संकल्पविकल्पयोरसंभवात्तदात्मकं मनः संभवतीत्यर्थः। निश्चयलक्षणा बुद्धिरित्यभ्युपगमाद्बुद्धिशब्दस्य निश्चयात्मककरणाविषयत्वमाशङ्क्याऽऽह—**बुद्धिरितीति**। न हि हिरण्यगर्भसमष्टिबुद्धिरूपमन्तरेण व्यष्टिबुद्धिः सिध्यतीत्यर्थः। अहंकारस्याभिमानविशेषात्मकत्वेनान्तःकरणप्रभेदत्वं व्यावर्तयति—**अहंकार इति**। अविद्यासंयुक्तमित्यविद्यात्मकमित्यर्थः। कथं मूलकारणस्याहंकारशब्दत्वमित्याशङ्क्योक्तमर्थं दृष्टान्तेन स्पष्टयति—**यथेत्यादिना**। मूलकारणस्याहंकारशब्दत्वे हेतुमाह—**प्रवर्तकत्वादिति**। तस्य प्रवर्तकत्वं प्रपञ्चयति—**अहंकार एवेति**। सत्येवाहंकारे ममकारो भवति तयोश्च भावे सर्वा प्रवृत्तिरिति प्रसिद्धमित्यर्थः। उक्तां प्रकृतिमुपसंहरति—**इतीयमिति**। इयमित्यपरोक्षा साक्षिदृश्येति यावत्। ऐश्वरी तदाश्रया तदैश्वर्योपाधिभूता। प्रक्रियते महदाद्याकारेणेति प्रकृतिस्त्रिगुणं जगदुपादानं प्रधानमिति मतं व्युदस्यति—**मायेति**। तस्यास्तत्तत्कार्याकारेण परिणामयोग्यत्वं द्योतयति—**शक्तिरिति**। **अष्टधेति**। अष्टभिः प्रकारैरिति यावत्॥ ४॥

आ० भा०—प्रतिज्ञातं ज्ञानमाह—महतोऽहंकार एवांतर्भावः॥ ४॥

आ० ज०—मनुष्याणामितिवदुत्तरमप्यन्यार्थमितिप्रतीतिनिरासार्थं प्रतिज्ञातयोरुभयोः किमादावुच्यत इत्यपेक्षायां चाह—**प्रतिज्ञातमिति**। असंगतिपरिहारायानन्यार्थताज्ञापनाय च ज्ञानस्य प्राथम्ये हेतुसूचनाय च प्रतिज्ञातमित्युक्तम्। प्रतिज्ञातत्वेन संगतं प्रतिज्ञातमेव। न तु तदर्थं प्राथम्येन प्रतिज्ञातम्। रसोऽहमित्यतः प्राक्तनग्रंथसंग्रहायादिपदम्। महत्तत्वमत्र नोपात्तं तत्किं नास्त्येवेत्यत आह—**महत इति**। अहंकारेऽहंकारशब्दार्थेऽन्तर्भावः। कार्यवाचिनाहंकारशब्देन कारणस्य महतोऽप्युपलक्षणमेव नत्वभाव इत्यर्थः॥ ४॥

रा० भा०—अस्य विचित्रानन्तभोग्य भोगोपकरणभोगस्थानरूपेणावस्थितस्य जगतः प्रकृतिरियं गन्धादिगुणकपृथिव्यप्तेजोवाय्वाकाशादिरूपेण मनःप्रभृतीन्द्रियरूपेण च महदहंकाररूपेण चाष्टधा भिन्ना मदीयेति विद्धि॥ ४॥

अ० टी०—एवं सावधानतया श्रोतव्यत्वेनार्जुनं बोधयित्वा पूर्वप्रतिज्ञातस्वस्वरूपज्ञानार्थं स्वस्य सर्वकर्तृत्वं सर्वस्वरूपत्वं चाह—भूमिराप इत्यादिभिः। भूमिः। आपः। अनलः। वायुः। खम्। एवं पंच महाभूतानि। मनः सङ्कल्पादिसाधनं। बुद्धिर्ज्ञानात्मिका। अहंकारोऽभिमानादिरूपः। इति अनेन प्रकारेण इयं मे अष्टधा प्रकृतिः माया भिन्ना विभागं प्राप्ता। लौकिककार्यार्थमितिभावः॥ ४॥

नी० टी०—एवमेकविज्ञानात्सर्वविज्ञानं प्रतिज्ञाय तदुपपत्तये सर्वस्य जडाजडप्रपंचस्य ज्ञानात्मकब्रह्मप्रभवत्वमाह त्रिभिः—**भूमिरिति** । अत्र भूम्यादिपदैस्तत्तत्कारणान्येव गृह्यंते प्रकृतिरित्यधिकारात् स्थूलभूम्यादेश्च विकृतिमात्रत्वात् । तथा च भूमिरिति गंधतन्मात्रं । आप इति रसतन्मात्रं । अनल इति रूपतन्मात्रं । वायुरिति स्पर्शतन्मात्रं । खमिति शब्दतन्मात्रं । मन इति तत्कारणमहंकारः । बुद्धिरिति समष्टिबुद्धिर्महत्तत्त्वं । अहंकरोत्यनयेत्यहंकारो मूलप्रकृतिः । करणे घञो दुर्लभत्वेऽप्यगत्या बाहुलकात्तद्बोध्यं । इयं मे मत्तोऽभिन्नाऽपृथक्सिद्धा शुक्तिशकलादिव रजतं अष्टधा अष्टप्रकारा प्रकृतिर्जडप्रपंचोपादानभूता । यद्वा नात्राव्यक्तमहदहंकारपंचतन्मात्राण्येवाष्टौ सांख्याभिमता एव प्रकृतयो ग्राह्या इति नियमोऽस्ति । मनसा ह्येव पश्यति मनसा शृणोतीति मनस इंद्रियांतरप्रकृतित्वश्रवणेन संतु नवापि प्रकृतयः । तथाचैवं योज्यं इयं मे मदभिन्नाप्रकृतिरव्याकृताख्या भूम्यादिभेदेनाष्टधेति मूलप्रकृतेरत्र भूम्यादिभिः सह पाठाजन्यत्वमवगम्यते न सांख्यानामिवाजन्यत्वं । 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति ॥ 'अव्यक्तं पुरुषे ब्रह्मन्निष्कले प्रविलीयते' इति च । तस्या अपि प्रभवप्रलययोः स्मरणात् ॥ ४ ॥

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥**

**शां० भा०—अपरेति। अपरा न परा निकृष्टाऽशुद्धाऽनर्थकरी संसारबन्धनात्मिकेयमितोऽस्या यथोक्तायास्त्वन्यां विशुद्धां प्रकृतिं ममाऽऽत्मभूतां विद्धि मे परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे महाबाहो यया प्रकृत्येदं धार्यते जगदन्तःप्रविष्टया ॥ ५ ॥**

शां० आ०—अचेतनवर्गमेकीकर्तुं प्रकृतेरष्टधा परिणाममभिधाय विकारावच्छिन्नकार्यकल्पं चेतनवर्गमेकीकर्तुं पुरुषस्य चैतन्यस्याविद्याशक्त्यवच्छिन्नस्यापि प्रकृतित्वमुक्तां प्रकृतिमनूद्य दर्शयति—**अपरेति** । निकृष्टत्वं स्पष्टयति—**अनर्थकरीति** । अनर्थकरत्वमेव स्फोरयति—**संसारेति** । कथंचिदप्यनन्यत्वव्यावृत्त्यर्थस्तुशब्दः । अन्यामत्यन्तविलक्षणामिति यावत् । अन्यत्वमेव स्पष्टयति—**विशुद्धामिति** । प्रकृतिशब्दस्यान्यप्रयुक्तस्यार्थान्तरमाह—**ममेति** । प्रकृष्टत्वमेव भोक्तृत्वेन स्पष्टयति—**जीवभूतामिति** । प्रकृत्यन्तरादस्याः प्रकृतेरवान्तरविशेषमाह—**ययेति** । न हि जीवरहितं जगद्धारयितुं शक्यमित्याशयेनाऽऽह—**अन्तरिति** ॥ ५ ॥

**आ० भा०—अपराऽनुत्तमा । वक्ष्यमाणामपेक्ष्य जीवभूता श्रीः जीवानां प्राणधारिणी चिद्रूपभूता सर्वदासती "एतन्महद्भूतम्" इति श्रुतेः जगाद च । 'प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा । अव्यक्ताख्या जडा सा च सृष्ट्या भिन्नाऽष्टधा पुनः ॥ महान्बुद्धिर्मनश्चैव पंचभूतानि चेति ह । अवरा सा जडा श्रीश्च परेयं धार्यते तथा ॥ चिद्रूपा सात्वनंता च अनादिनिधना परा । यत्समं तु प्रियं किंचिन्नास्ति विष्णोर्महात्मनः ॥ नारायणस्य महिषी माता सा ब्रह्मणोऽपि हि । ताभ्यामिदं जगत्सर्वं हरिः सृजति भूतराड्' इति नारदीये ॥ ५ ॥**

आ० ज०—अपरशब्दस्यानेकार्थत्वात् विवक्षितमर्थमाह—**अपरेति** । अनुत्तमत्वस्य सापेक्षत्वात् किमपेक्ष्येत्यत आह—**वक्ष्यमाणामिति** । सन्निधानादिति भावः । जीवलक्षणां जीवत्वं प्राप्तामितिव्याख्याननिरासार्थमाह—**जीवभूतेति** । कथं सा जीवभूतेत्यत आह—**जीवानामिति** । प्राणधारिणीत्येवोक्ते स्वप्राणधारिणीतिप्रतीतिः स्यात् तन्निरासार्थमुक्तम्—**जीवानामिति** । सर्वजीवदेहेषु स्थित्वा तदीयान्प्राणांस्तत्र धारयतीत्यर्थः । स्वप्राणधारिणी कुतो न स्यादित्यत आह—**चिद्रूपेति** । ज्ञानात्मकविग्रहवती । यद्वा जीवप्राणधारणइत्यतो जीवशब्दस्य यौगिकार्थमुक्त्वा गौणीं वृत्तिमाश्रित्यार्थांतरमनेनोक्तम् । भूतशब्दस्य सर्वदासत्त्ववाचित्वे प्रयोगं दर्शयति—**एतदिति** । प्रकृतिमपेक्ष्य श्रियः परत्वोपपादनार्थमेतत् । भूमिरित्यादेरभिमतमर्थं पुराणवाक्येन

स्थापयति—**जगाद चेति** । देवस्यैव । सृज्यत इति सृष्टिः कार्यं कार्यरूपेणेत्यर्थः । अनेन भूम्यादिशब्दैः पंचतन्मात्राण्येवोच्यंते न स्थूलानि भूतानि । मन इति तत्कारणमहंकारः । बुद्धिरिति महत्तत्त्वमहंकार इति अविद्यासहितमव्यक्तं भिन्ना प्रकृतिरष्टधेति वचनादिति व्याख्यानं निरस्तम् । कार्यरूपेणाष्टधा भिन्नेति व्याख्यानसंभवेन प्रसिद्धार्थपरित्यागायोगान्महत्यहंकारस्यांतर्भावः इत्येवेति संबंधः । जडेत्यवरत्वोपपादनम् । श्रीः परेत्यस्योपपादनमियं धार्यते तयेत्यादि । अनंता देशतः गुणतश्च परा मुख्या । अनादिनिधना नत्वव्यक्तवद्विक्रियावती ॥ ५ ॥

**रा० भा०—**इयं ममापरा प्रकृतिः इतस्त्वन्यामितश्चेतनायाः चेतनभोग्यभूतायाः प्रकृतेर्विसजातीयाकारां जीवभूतां परां तस्याः भोक्तृत्वेन प्रधानभूतां चेतनरूपां मदीयां प्रकृतिं विद्धि ययेदमचेतनं कृत्स्नं जगद्धार्यते ॥ ५ ॥

**अ० टी०—**तदेवाह—**अपरेति** । इयम् अपरा नीचेत्यर्थः । तु पुनः । हे महाबाहो ! क्रियासमर्थ ! एतज्ज्ञानयोग्य ! इतः सकाशादन्यां पराम् उत्कृष्टां जीवभूतां मे प्रकृतिं विद्धि जानीहि । परत्वमेवाह—**ययेदमिति** । यया इदं परिदृश्यमानं जगद्धार्यते ध्रियते पोष्यते च । अत्रायं भावः । भगवान् स्वक्रीडार्थं जगत् सृजति । तत्र प्रकृत्या स्वशक्त्या क्रीडाधिकरणभूतजगत्सृष्टिं विधाय तद्भोगार्थं क्रीडार्थकया स्वशक्त्या तद्रूपजीवसृष्टिं कृतवान् । तया इदं पूर्वकृतं भोगादिरूपेण धार्यते । तस्माल्लौकिकसृष्टौ जीवरूपेण भगवान् भोगं कुर्वन् क्रीडतीति ज्ञानेन तस्यां बन्धो न स्यात् । एतत्स्वरूपज्ञानाद्रसानुकरणज्ञानं स्यादिति भावः । यद्वा या पूर्वमष्टधोक्ता सा अपरा प्रकृतिः शक्तिः । क्रीडार्थं शक्त्यंशभूतेतिभावः । संयोगविलासे अनेकधारसोत्पत्त्यर्थमाविर्भूतेत्यर्थः । अतएव भिन्ना तद्विलासेच्छया जाता । इतः सकाशादन्या विप्रयोगे तदन्वेषणार्थं पुनर्दास्यरससिद्ध्यर्थमाविर्भूता जीवभूता दास्यरूपा या मच्छक्तिस्तां परां केवलमदंशाम् उत्कृष्टां जानीहि । उत्कृष्टरूपतामेवाह । यया इदं जडात्मकं जगद्धार्यते । जीवप्राकट्यानन्तरं तद्भावेन सर्वं क्रीडौपयिकत्वेन पोष्यत इतिभावः ॥ ५ ॥

**नी० टी०—**एवं क्षेत्रात्मिकां प्रकृतिमुक्त्वा क्षेत्रज्ञात्मिकां तामाह—**अपरेयमिति** । इयं प्रागुक्ता साऽपरा अश्रेष्ठा जडत्वात् । इतस्तु विलक्षणामन्यां परां चेतनत्वेन मदनन्यत्वादुत्कृष्टां मे मत्संबंधिनीं प्रकृतिं जीवभूतां प्राणधारणनिमित्तभूतां क्षेत्रज्ञाख्यां विद्धि जानीहि हे महाबाहो यया प्रकृत्यांऽतःप्रविष्टयेदं जगत्स्थावरजंगमशरीरात्मकं धार्यते ॥ ५ ॥

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥**

**शां० भा०—**एतदिति । एतद्योनीन्येते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनिर्येषां भूतानां तान्येतद्योनीनि भूतानि सर्वाणीत्येवमुपधारय जानीहि । यस्मान्मम प्रकृती योनिः कारणं सर्वभूतानामतोऽहं कृत्स्नस्य समस्तस्य जगतः प्रभव उत्पत्तिः प्रलयो विनाशस्तथा प्रकृतिद्वयद्वारेणाहं सर्वज्ञ ईश्वरो जगतः कारणमित्यर्थः ॥ ६ ॥

**शां० भा०—**उक्तप्रकृतिद्वये कार्यलिङ्गकमनुमानं प्रमाणयति—**एतद्योनीनीति** । प्रकृतिद्वयस्य जगत्कारणत्वे कथमीश्वरस्य तदुपगतमित्याशङ्क्याऽऽह—**अहमिति** । एतद्योनीनीत्युक्ते समनन्तरप्रकृतजीवभूतप्रकृतावेतच्छब्दस्याव्यवधानात्प्रवृत्तिमाशङ्क्य व्याकरोति—**एते इति** । सर्वाणि चेतनाचेतनानि जनिमन्तीत्यर्थः । सर्वभूतकारणत्वेन प्रकृतिद्वयमङ्गीकृतं चेत्कथमहमित्याद्युक्तमित्याशङ्क्याऽऽह—**यस्मादीति** । मम प्रकृती परमेश्वरस्योपाधितया स्थिते इत्यर्थः । तर्हि प्रकृतिद्वयं कारणमीश्वरश्चेति जग-

तोऽनेकविधकारणाङ्गीकरणं स्यादित्याशङ्क्याऽऽह—**प्रकृतीति** । अपरप्रकृतेरचेतनत्वात्परप्रकृतेश्चेतनत्वेऽपि किंचिज्ज्ञत्वादीश्वरस्यैव सर्वज्ञस्य सर्वकारणत्वं युक्तमित्याह—**सर्वज्ञ इति** ॥ ६ ॥

**आ० भा०**—न केवलं ते जगत्प्रकृती मद्वशे इत्येतावन्मदैश्वर्यमित्याह—**अहमिति** । प्रभवादेः सत्ताप्रतीत्यादेः कारणत्वात्तद्भोक्तृत्वाच्च प्रभव इत्यादि । तथाच श्रुतिः । "सर्वकामः सर्वकर्मासर्वगंधः सर्वरसः सर्वमिदमभ्यात्ताऽवाक्यनादर" इति । आह च' स्रष्टा पाता च संहर्ता नियंता च प्रकाशिता । यतः सर्वस्य तेनाहं सर्वोऽस्मीत्यृषिभिः स्तुतः॥ सुखरूपस्य भोक्तृत्वान्न तु सर्वस्वरूपतः । आगमिष्यत्सुखं चापि तच्चास्त्येव सदापि तु ॥ तयाप्यचिंत्यशक्तित्वाज्जातं सुखमतीव च' इति नारदीये ॥ ६ ॥

**आ० ज०**—नन्वत्रापरपरनिरूपणपूर्वकं भगवतः यत्परतरत्वं वक्तुमभिप्रेतं तत्र शरीरेंद्रियविषयलक्षणाख्यकार्यस्य जीवानां च तयोरेवांतर्भावइति दर्शयितुमेतद्योनीनीत्युक्तम् । इदांनीमहंपरतर इति वक्तव्यं इदं तु, किमर्थमुच्यत इत्यत आह—**न केवलमिति** । पूर्वं वाक्यभेदेन प्रकृत्योरवरत्वं परत्वं म इति स्ववशत्वं चोक्त्वा ययेदं धार्यते जगदेतद्योनीनीति जगदाधारत्वकारणत्वे कथिते तत्र प्रकृती एव भगवद्वशे जगज्जन्मस्थितिलयास्तु प्रकृत्यधीनाएव न भगवदधीना इति प्रतीतं तन्निरासार्थमेतदित्यर्थः । जगत्प्रतिममैश्वर्यमित्येतावत् प्रकृतिद्वारकमुपचरितमिति यावत् । प्रकृत्योः कारणत्वादिकं मदायत्तमिति भावः । जगद्धर्मयोः प्रभवप्रलययोः साक्षाद्भगवदैक्यमुच्यत इति प्रतीतिनिरासार्थमाह—**प्रभवादेरिति** । यथा पुत्रादिप्रभवो रिपुप्रलयश्चोपलब्धः सुखहेतुरित्युपलब्धः पित्रादेस्तद्भोक्तृत्वं तथा तद्भोक्तृत्वात् । भगवतः सर्वभोक्तृत्वं कुत इत्यत आह—**तथा चेति** । सर्वकाम-इत्यादेर्द्विरुक्तत्वात् एकं भोगविषयमिति ज्ञायते । काम्यंत इति कामा द्रव्याणि । गंधरसशब्दौ गुणांतरस्याप्युपलक्षकौ । सर्वमिदमाभि अभितः आत्तो धृतः स्थित इत्यर्थः । न विद्यते वाक्यमनुग्रहमंतरेण यस्यासाववाक्यः । न विद्यते आदरः आश्चर्यबुद्धिर्यस्यासौनादरः । अवाक्यश्चासौनादरश्चेत्यवाक्यनादरः कारणत्वादिनैवैक्यव्यपदेश इत्येतत्कुत इत्यत आह—**आह चेति** । सुखरूपस्य सुखकारणस्य ननु स्रष्टापातेत्यादिकमयुक्तं कादाचित्कक्रियावेशे विकारित्वप्रसंगात् । भोगेन यद्भाव्यं सुखं तस्य पूर्वमभावेनापूर्णत्वप्रसंगाच्चेत्यत आह—**आगमिष्यदिति** । यद्भोगेनागमिष्यत्सुखं तच्च सदाऽप्यस्त्येव क्रियाश्च शक्तिरूपेण चेति चार्थः । तर्हि कथं भोगेन जातमित्युच्यत इति भावेन पृच्छति—**अपि त्विति** । उत्तरमाह—**तथाऽपीति** । सदा सद्भावेऽपि यद्यपि प्रभवत्यस्मादिति प्रभवः । प्रलीयतेऽस्मिन्निति प्रलय इति शक्यते व्याख्यातुम् तथाऽपि महिमातिशयलाभायैवं व्याख्यातम् । एतेन यस्मान्मम प्रकृती योनी सर्वभूतानां ततोऽहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथेति व्याख्यानमपहसितं भवति ॥ ६ ॥

**रा० भा०**—एतच्चेतनाचेतनसमष्टिरूपमदीयप्रकृतिद्वययोनीनि ब्रह्मादिस्तम्बपर्यन्तानि उच्चावचभावेनावस्थितानि चिदचिन्मिश्राणि सर्वाणि भूतानि मदीयानीत्युपधारय मदीयप्रकृतिद्वययोनीनि हि तानि मदीयान्येव तथा प्रकृतिद्वययोनित्वेन कृत्स्नस्य जगतस्तयोर्द्वयोरपि मद्योनित्वेन मदीयत्वेन च कृत्स्नस्य जगतोऽहमेव प्रभवः अहमेव प्रलयः अहमेव च शेषीत्युपधारय तयोश्चिदचित्समष्टिभूतयोः प्रकृतिपुरुषयोरपि परमपुरुषयोनित्वं श्रुतिस्मृतिसिद्धम् । "महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवति विष्णोः स्वरूपात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च" 'प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते' इत्यादिका हि श्रुतिस्मृतयः ॥ ६ ॥

**अ० टी०**—एतज्ज्ञानेन किं स्यादित्यत आह—**एतदिति** । सर्वाणि भूतानि स्थावरजङ्गमात्मकानि । एतद्योनीनि एते प्रकृती योनी कारणरूपे येषां तथा तदुपधारय । उपसमीपे हृदये पोषय । एतद्योनिज्ञानेन मत्क्रीडौपयिकत्वं सर्वेषु भविष्यतीतिभावः । यतस्तद्योनीनि सर्वाणि ते च मदंशे अतः कृत्स्नस्य संपूर्णस्य जगतोऽहं प्रभवः प्रकर्षेण भवत्यस्मादिति प्रभव उत्पत्तिस्थानं मूलकारणमित्यर्थः । तथा प्रकर्षेण लीयते अनेनेति लयस्थानं प्रलयकर्ताऽप्यहमेवेत्यर्थः ॥ ६ ॥

**नी० टी०—एतदिति** । एते परापरे क्षेत्रक्षेत्रज्ञरूपे प्रकृती योनिरुत्पत्तिलयस्थानं येषां भूतानां तान्येतद्योनीनि भूतानि चतुर्विधानीत्येतदुपधारय सम्यग्जानीहि । किं पातंजलानामिव एते प्रकृती ईश्वरादन्ये इत्याशंक्याह—**अहमिति** । कृत्स्नस्य स्वस्वप्रकृतिसहितस्य जगतो जडाजडरूपस्य प्रभवः प्रभवत्यस्मादिति प्रभवउत्पत्तिकारणं । तथा प्रलीयतेऽस्मिन्निति प्रलयः लयस्थानं च । अतस्ते उभे अपि प्रकृती मत्तो नातिरिच्येते ॥ ६ ॥

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

**शां० भा०—यतस्तस्मात्—मत्तः परमेश्वरात्परतरमन्यत्कारणान्तरं किंचिन्नास्ति न विद्यतेऽहमेव जगत्कारणमित्यर्थः । हे धनंजय यस्मादेवं तस्मान्मयि परमेश्वरे सर्वाणि भूतानि सर्वमिदं जगत्प्रोतमनुस्यूतमनुगतमनुविद्धं ग्रथितमित्यर्थः । दीर्घतन्तुषु पटवत्सूत्रे च मणिगणा इव ॥ ७ ॥**

**शां० आ०**—प्रधानात्परतोऽक्षरात्पुरुषवत्परमात्मनोऽपि परादन्यत्परं स्यादित्याशङ्क्य प्रकृतिद्वयद्वारा सर्वकारणत्वमीश्वरस्योक्तमुपजीव्य परिहरति—**यतस्तस्मादिति** । नान्यदस्ति परमित्यत्र हेतुमाह—**मयीति** । परतरशब्दार्थमाह—**अन्यदिति** । स्वातन्त्र्यव्यावृत्त्यर्थमन्तरशब्दः । निषेधफलं कथयति—**अहमेवेति** । सर्वजगत्कारणत्वेन सिद्धमर्थं द्वितीयार्धव्याख्यानेन विशदयति—**यस्मादिति** । अतो दीर्घेषु तिर्यक्षु च पटघटितेषु तन्तुषु पटस्यावगतिरवगम्यते तद्वन्मय्येवानुगतं जगदित्याह—**दीर्घेति** । यथा च मणयः सूत्रेऽनुस्यूतास्तेनैव ध्रियन्ते तदभावे विप्रकीर्यन्ते तथा मयैवाऽऽत्मभूतेन सर्वं व्याप्तं ततो निष्कृष्टं विनष्टमेव स्यादिति श्लोकोक्तं दृष्टान्तमाह—**सूत्र इति** ॥ ७ ॥

**आ० भा०—अहमेव परतरो मत्तोऽन्यत्परतरं न किंचिदपि ॥ ७ ॥**

**आ० ज०**—नन्वपरं परं च तत्त्वमुक्त्वा परतरोऽहमिति वक्तव्यं मत्त इति किमुच्यत इत्यतस्तात्पर्यमाह—**अहमेवेति** । परापरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्य परतरत्वमुक्तप्रायम् । किं त्वपरतत्त्वं यथाऽनेकं भूम्यादिभेदेन यथा च परतत्त्वं 'मुक्तस्तु स्यात्पराभास' इति वचनात् । तथापरतरमपि किमनेकमुत त्वमेकएवेति जिज्ञासायामहमेव परतर इत्यनेनोच्यत इत्यर्थः । कथमनेनेदं लभ्यते । भगवत्प्रतियोगिकाधिक्यवन्निषेधस्यात्र प्रतीतेरित्यतो योजयति—**मत्त इति** । अन्यथा तरपोऽन्यशब्दस्य च वैयर्थ्यादिति भावः ॥ ७ ॥

**रा० भा०—यथा सर्वकारणस्यापि प्रकृतिद्वयस्य कारणत्वेन सर्वाचेतनवस्तुशेषिणश्चेतनस्यापि शेषित्वेन कारणतया शेषितया चाहं परतरस्तथा ज्ञानशक्तिबलादिगुणयोगेन चाहमेव परतर. मत्तोऽन्यत् मद्व्यतिरिक्तं किंचिज्ज्ञानबलादिगुणान्तरयोगि परतरं नास्ति सर्वमिदं चिदचिद्वस्तुजातं कार्यावस्थं कारणावस्थं च मच्छरीरभूतं सूत्रे मणिगणवदात्मतयाऽवस्थिते मयि प्रोतमाश्रितम् "यस्य पृथिवी शरीरं, यस्यात्मा शरीरम्, एष सर्वभूतान्तरात्मापहतपाप्मा, दिव्यो देव एको नारायण" इत्यात्मशरीरभावेनावस्थानं च जगद्ब्रह्मणोरन्तर्यामिब्राह्मणादिषु सिद्धम् ॥ ७ ॥**

**अ० टी०**—यत उत्पत्तिप्रलयकारणमहमेवातो हे धनञ्जय ! मद्विभूतिरूप ! एतज्ज्ञानयोग्य ! मत्तः परतरं श्रेष्ठं जगत् जगति वा किंचित् अहं स इतिभेदेनापि अन्यन्नास्ति । एवमुत्पत्तिप्रलयकारणेन स्वत उत्तमत्वाभावमन्यस्योक्त्वा स्थितिहेतुत्वेनाऽपि तथात्वमेवेति स्वस्य स्थितिहेतुत्वमाह—**मयीति** । इदं सर्वं जगत् मयि प्रोतं ग्रथितं मदाश्रयत्वेन तिष्ठतीत्यर्थः । अत्र दृष्टान्तमाह । सूत्रे प्रोता मणिगणा इव । अत्रायं भावः । मणिगणाः क्रीडास्थजीवाधिदैविकरूपा यथा मयि तिष्ठन्ति तथेदं जगदप्याधिदैविकं मयि तिष्ठतीतिभावः ॥ ७ ॥

**नी० टी०**—एवमेकविज्ञानात्सर्वविज्ञानं प्रकृतमात्मनो जगदुपादानत्वेनोपपाद्य तत एवात्मनो निर्विकारत्वहाने प्राप्ते आह—**मत्त इति**। कारणान्मृदादेः परं पृथग्भूतं घटादि व्यवहारे तयोर्भेदानुभवात्। परतरं तु गवाश्वादि मृदनुपादानकत्वात्। एवं ब्रह्मणः परतरं तदनुपादानकं किंचिदपि नास्ति। हे धनंजय। एवं प्रपंचे ब्रह्माव्यतिरेकं प्रदर्श्य ब्रह्मणि प्रपंचव्यतिरेकं सदृष्टांतमाह—**मयीति**। मयि सद्रूपेण स्फुरणरूपेण च सूत्रवत्सर्वत्रानुस्यूते। यदिदं सर्वं मणिगणवत्परस्परव्यावृत्तं तत्प्रोतं। तेन व्यावृत्तेभ्योऽनुवृत्तं भिन्नमिति न्यायेन प्रपंचातीतोऽहमतो न मम विकारित्वमित्यर्थः ॥ ७ ॥

**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ॥**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

**शां० भा०**—केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते—**रसोऽहमपां यः सारः स रसस्तस्मिन्रसभूते मय्यापः प्रोता इत्यर्थः**। एवं सर्वत्र। यथाऽहमप्सु रस एवं प्रभाऽस्मि शशिसूर्ययोः। प्रणव ओंकारः सर्ववेदेषु तस्मिन्प्रणवभूते मयि सर्वे वेदाः प्रोताः। तथा ख आकाशे शब्दः सारभूतस्तस्मिन्मयि खं प्रोतम्। तथा पौरुषं पुरुषस्य भावो यतः पुंबुद्धिर्नृषु तस्मिन्मयि पुरुषाः प्रोताः ॥ ८ ॥

**शां० आ०**—अबादीनां रसादिषु प्रोतत्वप्रतीतेस्त्वय्येव सर्वं प्रोतमित्ययुक्तमिति मत्वा पृच्छति—**केनेति**। तत्रोत्तरमुत्तरग्रन्थेन दर्शयति—**उच्यत इति**। सारो मधुरो हेतुरिति यावत्। रसोऽहमिति कथं तत्राऽऽह—**तस्मिन्निति**। अप्सु यो रसः सारस्तस्मिन्मयि मधुररसे कारणभूते प्रोता आप इतिवदुत्तरत्र सर्वत्र व्याख्यानं कर्तव्यमित्याह—**एवमिति**। उक्तमर्थं दृष्टान्तं कृत्वा प्रभाऽस्मीत्यादि व्याचष्टे—**यथेति**। चन्द्रादित्ययोर्या प्रभा तद्भूते मयि तौ प्रोतावित्यर्थः। तत्र वाक्यार्थं कथयति—**तस्मिन्निति**। प्रणवभूते तस्मिन्वेदानां प्रोतत्ववदाकाशे यः सारभूतः शब्दस्तद्रूपे परमेश्वरे प्रोतमाकाशमित्याह—**तथेति**। पौरुषं नृष्विति भागं पूर्ववद्विभजते—**तथेत्यादिना**। पुरुषत्वमेव विशदयति—**यत इति**। पुंस्त्वसामान्यात्मके परस्मिन्नीश्वरे प्रोतास्तद्विशेषास्तदुपादानत्वेन तत्स्वभावत्वादित्यर्थः ॥ ८ ॥

**आ० भा०**—इदं ज्ञानं रसोऽहमित्यादिविज्ञानम् अबादयोऽपि तत एव। तथाऽपि रसादिस्वभावानां साराणां च स्वभावत्वे सारत्वे च विशेषतोऽपि नियामकः। न त्वबादिनियमानुबद्धो रसादिस्तत्सारत्वादिश्चेति दर्शयति अप्सु रसादित्यादिविशेषशब्दैः। भोगश्च विशेषतो रसादेरिति च उपासनार्थं च। उक्तं च गीताकल्पे। 'रसादीनां रसादित्वे स्वभावत्वे तथैव च। सारत्वे सर्वधर्मेषु विशेषेणापि कारणम् ॥ सारभोक्ता च सर्वत्र यतोऽतो जगदीश्वरः। रसादिमानिनां देहे स सर्वत्र व्यवस्थितः ॥ अबादयः पार्षदाश्च ध्येयः स ज्ञानिनां हरिः। रसादिसंपत्त्याऽन्येषां वासुदेवो जगत्पतिः' इति 'स्वभावो जीव एव च। सर्वस्वभावो नियतस्तेनैव किमुतापरम् ॥ नतदस्ति विनायत्स्यान्मया भूतं चराचरम्' इति च। धर्माविरुद्धः कामरागवर्जितमित्याद्युपासनार्थम्। उक्तं च गीताकल्पे। 'धर्माविरुद्धकामेऽसावुपास्यः काममिच्छता ॥ विहीने कामरागादेर्बले च बलमिच्छता ॥ ध्यातस्तत्त्व त्वनिच्छद्भिर्ज्ञानमेव ददाति च' इत्यादि। पुण्यो गंध इतिभोगापेक्षया। तथाहि श्रुतिः ॥ "पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति। ऋतं पिबंतौ सुकृतस्य लोके" इत्यादिका। ऋतं च पुण्यम्। 'ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयते' इत्यभिधानात्। 'ऋतं तु मानसो धर्मः सत्यं स्यात्संप्रयोगगः' इति च। नच "अनश्नन्नन्यो अभिचाकशीति" 'अन्यो निरन्नोपि बलेन

भूयान्' इत्यादि विरोधि । स्थूलानशनोक्तेः । आह च सूक्ष्माशनम् । प्रविविक्ताहारतर इव वै भवत्यस्माच्छारीरादात्मनः । नचात्र जीव उच्यते । शारीरादात्मन इति भेदाभिधानात् स्वप्नादिश्च शारीर एव 'शारीरस्तु त्रिधा भिन्नो जाग्रदादिष्ववस्थितेः' इति वचनाद्गारुडे । अस्मादिति त्वीश्वरव्यावृत्त्यर्थम् । 'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसंज्ञितः ॥ अनादिबंधनस्त्वेको नित्यमुक्तस्तथापरः' इति वचनान्नारदीये भेदश्रुतेश्च । सति गत्यंतरे पुरुषभेद एव कल्प्यो न त्ववस्थाभेदः । आह च । 'प्रविविक्तभुग्यतो ह्यस्माच्छारीरात्पुरुषोत्तमः । अतोऽभोक्ता च भोक्ता च स्थूलभोगात्स एव तु' इति गीताकल्पे । न त्वहं तेष्विति तदनाधारत्वमुच्यते । उक्तं च । 'तदाश्रितं जगत्सर्वं नासौ कुत्रचिदाश्रितः'इति गीताकल्पे ॥ ८ ॥

आ० ज०—भूमिरित्यादिनेत्यत्रावधेरनुक्ते रसोऽहमित्याद्यपि ज्ञानप्रकरणमिति प्रतीतिः स्यात्तन्निरासाय तत्समाप्तिमाह—**इदमिति** । एतावता ग्रंथेन ज्ञानं निरूपितमित्यर्थः । कुतोऽत्र ज्ञानप्रकरणस्य समाप्तिरित्यतआह—**रसोऽहमिति** । इतिशब्दाद्यभावेऽपि प्रकरणांतरारंभ एव समाप्तिं गमयिष्यति । अलौकिकमाहात्म्यप्रतिपादनादस्य विज्ञानप्रकरणत्वं ज्ञायत इति भावः । प्रभवादेरित्युक्तन्यायेनैव रसोऽहमित्यादेरपि व्याख्यानं सिद्धम् । रसादीनां सत्तादिकारणत्वाद्भोक्तृत्वाच्च भगवान् रसादिरिति । नन्वबादयो धर्मिणो भगवदधीनास्तद्भोग्याश्चेत्यंगीक्रियते न वा । नेति पक्षेहं कृत्स्नस्येत्युक्तविरोधः । आद्ये त्वप्सु रस इत्यादेर्धर्मिभ्यो निष्कृष्य धर्माणां ग्रहणस्यानुपपत्तिरित्यतः प्रथमं पक्षं तावदंगीकरोति—**अबादयोऽपीति** । धर्मिणोऽपि तदधीना एव तद्भोग्याश्चैव । ननु तत्रोक्तो दोष इत्यतः कारणत्वे तावद्विशेषशब्दोपादाने प्रयोजनमाह—**तथाऽपीति** । यद्यपि धर्मिणोऽपि भगवदधीना एव तथाऽपि धर्मिभ्यो निष्कृष्य धर्माणामुपादानं युज्यत इति शेषः । कथमित्यत आह—**रसादीति** । रसादयश्च ते स्वभावा अबादीनामनागंतुकधर्माश्चेति रसादिस्वभावास्तेषां साराणामबादिधर्मेषु संख्यादिषु श्रेष्ठानां च तेषामेवाबादिस्वभावभूतानां तद्धर्मेषु श्रेष्ठानां च रसादीनामिति यावत् । स्वभावत्वेऽबादीनामितिशेषः सारत्वेबादिधर्मेष्विति शेषः । रसादित्वे चेति चार्थः । स भगवानेव विशेषतोऽपीत्यस्य व्यावर्त्यं—**न त्विति** । अनुबद्धोऽनुषंगसिद्धः । **तत्सारत्वादिश्चेति** । तस्य रसादेरबादिधर्मेषु सारत्वमबादिस्वभावत्वं रसत्वादिकं चेत्यर्थः । यथा लोके कुविंदादिः पटादिद्रव्येष्वेव व्यापारवाननुभूयते न तु तदीयेषु गंधरसादिषु गुणेषु तद्धर्मेषु च गंधत्वादिषु पृथग्व्यापारवान् किं तु ते पटादिजन्मानुषंगिजन्मान एव । न तथा भगवान् । अपि त्वबादेर्धर्मेषु रसादिषु तद्धर्मेषु च स्वभावत्वादिषु पृथक् प्रयत्नवान् नत्वबादिनियमानुषंगिसत्तादिकास्त इति दर्शयितुं विशेषशब्दा उपात्ता इत्यर्थः । भोगपक्षेऽपि प्रयोजनमाह—**भोगश्चेति** । अबादिभोगादप्यतिशयेन रसादेर्भोगः परमेश्वरस्येति दर्शयति विशेषशब्दैरिति संबंधः । रसोऽहमित्याद्यभेदोक्तेरर्थांतरं सूचयन् तत्रापि विशेषशब्दोपादाने प्रयोजनमाह—**उपासनार्थं चेति** । विशेषतो रसादेरिति वर्तते । अर्थवशाद्रसादेरिति सप्तमीत्वेन विपरिणम्यते । रसादयः परमेश्वरोपासने प्रतिमात्वेनात्र विवक्षिताः । प्रतिमायां चाभेदोक्तिः प्रसिद्धा । प्रतिमात्वमबादीनां समानम् । योऽप्सु तिष्ठन्नित्यादेः । अतःकिं विशेषशब्दग्रहणेनेति चेत् । अबादिभ्यो विशेषतो रसादिषु भगवदुपासनार्थं तदुपपत्तिरिति । उक्तेऽर्थत्रये प्रमाणमाह—**उक्तं चेति** । तथा चशब्दो अन्योन्यसमुच्चये । एवशब्दस्येश्वर इत्यनेन संबंधः । सर्वत्राबादिषु । ईश्वरो रसादिकं जगदित्युच्यत इत्यर्थः । अबादयोऽबाद्यभिमानिनः । ज्ञानिनां ज्ञानार्थिनां संपत्त्यै प्राप्त्यै अन्येषां रसार्थिनाम् । अबादय इति रसादीति च पादयोः सप्तनवाक्षरत्वेऽपि न वा एकेनाक्षरेण छंदांसि वियंतीति वचनाददोषः । स्वभावस्य भगवदधीनत्वमलौकिकमित्यतस्तत्रान्यान्यपि वाक्यानि पठति—**स्वभाव इति** । अस्त्वेवं धर्मिभ्यो निष्कृष्य धर्माणामुपादानम् । धर्माणां विशेषणोपादानं तु किमर्थमित्यत आह—**धर्मेति** । आदिपदेन पुण्यो गंधइत्यस्य ग्रहणम् । कामादिषु विशिष्टेष्वेव भगवानुपास्यो न धर्मविरुद्धेष्वशुचिष्विति ज्ञापनाय कामादीनां धर्माविरुद्धत्वादिविशेषणोपादानमित्यर्थः । अत्र प्रमाणमाह—**उक्तं चेति** । कामं पुरुषार्थम् । कामरागादेः कामरागादिना । अनिच्छद्भिः कामादिकम् । गंधस्य विशेषणोपादाने प्रयोजनांतरमाह—**पुण्य इति** । पुण्यगंधस्यैव भगवतो भोगो न दुर्गंधस्येति ज्ञापयितुमत्र विशेषणोपादानमित्यर्थः । ननु दुर्गंधं भगवाननुभवति न वा । नेतिपक्षे सार्वज्ञाभावः । आद्ये कथं भोगाभावः । उच्यते । अनुभूयमाना अपि दुर्गंधादयो न फलहेतव इत्यभिप्रायः । सुगंधस्तु सुखहेतुरित्युपपादितम् । शुचिवस्त्वेव भगवतो भोग्यमित्यत्र प्रमाणमाह—**तथा हीति** । अमुमुपासकम् । कुतस्तस्य देवत्वात् । तथाऽपि कुतः । न ह वै देवमात्रस्य पुण्यभोगानियमे देवोत्तमस्य सुतरां तत्सिद्धिः । ऋतमितिश्रुतिः कथं प्रकृतोपयोगिनीत्यत आह—**ऋतंचेति** । कुत इत्यतः सामान्यविशेषाभिधानादित्याह—**ऋतमिति** । प्रयोगगः शब्दजन्यः । तथा च श्रुतावृतशब्दः पुण्यफलस्योपलक्षक इति भावः। स्यादिदं व्याख्यानं यदि

भगवतो विषयभोगो युक्तः स्यात् न चैवम् । तदंगीकारे श्रुत्यादिविरोधात् । ऋतं पिबंताविति चात एव छत्रिन्यायेनोपचरितमिन्यत आह—**न चेति** । कुतो नेत्यत आह—**स्थूलेति** । श्रुत्यादिषु स्थूलस्य जीवभोग्यस्य विषयस्याभोगोक्तेः । सूक्ष्मभोगस्य चांगीकारादिति भावः । सूक्ष्माशने प्रमिते भवेदियं व्यवस्था । तदेव कुत इत्यत आह—**आह चेति** । गंधादिषु यो जीवेंद्रियागोचरः सारभागस्तस्य भोगं परमेश्वरोऽस्माच्छारीरादात्मनो जीवादतिशयेन विलक्षणभोग एव भवति । अवतारेषु स्थूलमपि भुङ्क्त इतीवशब्दः । ननु प्रविविक्ताहारतरोऽयं जीव एवेत्यत आह—**न चेति** । न हि जीवोजीवादेव विलक्षणाहार इति युज्यत इत्यर्थः । ननु शारीराज्जागरावस्थाज्जीवात्स्वप्रसुषुप्त्यवस्थः स एव प्रविविक्ताहार इत्यवस्थाभेदोपाधिकं जीवस्य भेदमंगीकृत्य व्याख्यास्यामीत्यत आह—**स्वप्नादिश्चेति** । "स्वपोनन्" इति स्वप्नशब्दःकर्तरि । स्वप्नःसुषुप्तश्च शारीर एव न केवलं जाग्रत् । तथाच त्र्यवस्थस्यापि शारीरशब्देन गृहीतत्वात् न ततो भेदः स्वप्नसुषुप्तयोरित्यर्थः । अवस्थात्रयवतोऽपि शारीरत्वं कुत इत्यत आह—**शारीरस्त्विति** । जाग्रदादिष्ववस्थासु अस्तु त्र्यवस्थोऽपि शारीरः । तथाऽप्यस्मादिति विशेषणेनात्र शारीरादिति जाग्रदावस्थो गृह्यते । तस्माच्च स्वप्नाद्यवस्थस्य भेदोक्तिरुक्तविधया संभवति । भवत्पक्षेऽपि शारीरादिति जीवे सिद्धेस्मादिति विशेषणं व्यर्थं स्यादिति तत्राह—**अस्मादिति** । नैतद्विशेषणसार्थक्यायेश्वरं परित्यज्य जीवोऽत्र ग्राह्यः । शारीरादित्येवोक्तावीश्वरस्यापि प्राप्तावीश्वरादेवेश्वरस्य भेदानुपपत्तेः तद्व्यावृत्त्यर्थं जीवमात्रपरिग्रहाय विशेषणमिति सार्थक्योपपत्तेरित्यर्थः । भवेदेवं यदि शारीरत्वमीश्वरस्यापि स्यात् । तदेव कुत इत्यत आह—**शारीराविति** । नन्वेवं पक्षद्वयेऽप्युपपत्तावीश्वर एवात्रोच्यते न जीव इति कुतोविनिगमनमित्यत आह—**भेदेति** । चो हेतौ । भेदश्रुतेः स्वाभाविकभेदरूपे गत्यंतरे संभवति पुरुषभेद एवार्थतयाग्राह्यो न त्ववस्थोपाधिको भेदः । 'मुख्यामुख्ययोर्मुख्ये संप्रत्ययात् ।' अतो युक्तं विनिगमनम् । न केवलमुक्तव्यवस्था न्यायप्राप्ता किं त्वागमसिद्धा चेत्याह—**आहचेति** । अभोक्ता च भोक्ता चेत्येतयोर्व्युत्क्रमेणान्वयः । सर्वभूतस्थमात्मानमित्युक्तत्वात् । न त्वहं तेष्विति कथमुच्यतइत्यत आह—**न त्वहमिति** । तदनाधारत्वं तदुपजीवनेन स्थित्यभावः । कुत एतदित्यत आह—**उक्तं चेति** । न केवलं युक्तविरोधादिति चार्थः ॥ ८ ॥

**रा० भा०—अतः सर्वस्य परमपुरुषशरीरत्वेनात्मभूतपरमपुरुषप्रकारत्वात् सर्वप्रकारः परमपुरुष एवावस्थित इति सर्वैः शब्दैः तस्यैवाभिधानमिति तत्तत्सामानाधिकरण्येनाह—रसोहमिति चतुर्भिः । एते सर्वे विलक्षणा भावा मत्त एवोत्पन्नाः मच्छेषभूता मच्छरीरतया मध्ये वाऽवस्थिताः अतस्तत्प्रकारोऽहमेवावस्थितः ॥ ८ ॥**

**अ० टी०**—आधिदैविकरूपेण जगतः स्थितिं स्वस्मिन्नाह—**रसोहमिति पञ्चभिः** । हे कौन्तेय! मद्भक्त एतज्ज्ञानयोग्य! अहम् अप्सु जलेषु रसरूपः । जले शैत्याद्याह्लादकानन्दादिगुणो मद्रूपस्थरसांशसंबन्धादाविर्भवतीत्यर्थः । तथा शशिसूर्ययोः प्रभा प्रकाशकतेजोरूपोऽस्मि मद्रूपस्थसंयोगविप्रयोगानन्दरूपतेजःसंबन्धेनोभयोस्तद्रूपानन्दप्रकाशकत्वं भवतीतिभावः । सर्ववेदेषु शब्दरसात्मके प्रणवे च ओंकारः त्रिरूपाक्षररूपोऽस्मि शक्तिद्वयसहितपुरुषरूपोऽस्मि । तत्संबन्धेनैव वेदशब्देषु रसरूपता । अत एव श्रुतीनां भावोत्पत्तिः । खे आकाशे शब्दरूपोऽस्मि । अत्रायं भावः । आकाशस्वरूपात्मकभगवद्वेणुसंबन्धेन शब्देष्वानन्दरूपत्वं भवति । नृषु मनुष्येषु पौरुषांशत्वं । पुरुषांशानामेव भजनयोग्यतेति तत्संबन्धेनैव सर्वमनुष्याणामुत्तमत्वमुच्यत इति भावः ॥ ८ ॥

**नी० टी०**—नन्वेवं प्रपंचपरमात्मनोर्मणिसूत्रवदुपादानोपादेयभावोऽपि न स्यात् । न ह्युपादानं चाननुवृत्तं चेति घटते । मृद्घटादावदर्शनादित्याशंक्य स्वप्नमायेंद्रजालरज्जूरगतुल्यत्वं प्रपंचस्योपपाद्योभयमप्यविरुद्धमित्युपदिष्टं चेदयमकस्मादुद्विग्नो भविष्यतीति मत्वा दृष्टांतांतरैरेवानुवृत्तिं व्यावृत्तिं चिज्जडयोर्दर्शयति—**रस इति** । "यथा रसोऽप्सु एकमप्यप्परमाणुमपरित्यज्यानुस्यूतो दृश्यतेऽतो रसरूपे मयि आपः प्रोताः एवं प्रभायां चंद्रादयः प्रोताः प्रणवे सर्वे वेदाः प्रोताः । तद्यथा शंकुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक् संतृण्णा" इति वाङ्मात्रे प्रणवानुस्यूतिश्रवणात् । संतृण्णानि संग्रथितानि । एवमाकाशे

शब्दः सारभूतस्तस्मिन्मयि खं प्रोतं । सर्वपुरुषेषु सारं पौरुषं शौर्यधैर्यादिरूपं तत्र पुरुषाः प्रोताः एवमग्रेऽपि द्रष्टव्यम् ॥ ८ ॥

**पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ॥**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥**

**शां० भा०**—पुण्य इति । पुण्यः सुरभिर्गन्धः पृथिव्यां चाहं तस्मिन्मयि गन्धभूते पृथिवी प्रोता । पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितमबादिषु रसादेः पुण्यत्वोपलक्षणार्थम् । अपुण्यत्वं तु गन्धादीनामविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति । तेजो दीप्तिश्चास्मि विभावसावग्नौ । तथा जीवनं सर्वभूतेषु येन जीवन्ति सर्वाणि भूतानि तज्जीवनम् । तपश्चास्मि तपस्विषु तस्मिंस्तपति मयि तपस्विनः प्रोताः ॥ ९ ॥

**शां० आ०**—मयि सर्वमिदं प्रोतमित्यस्यैव परिमाणार्थं प्रकारान्तरमाह—**पुण्य इति** । पृथिव्यां पुण्यशब्दितो यः सुरभिर्गन्धः सोऽहमस्मीत्यत्र वाक्यार्थं कथयति—**तस्मिन्निति** । कथं पृथिव्यां गन्धस्य पुण्यत्वं तत्राऽऽह—**पुण्यत्वमिति** । यत्तु पृथिव्यां गन्धस्य स्वाभाविकं पुण्यत्वं दर्शितं तदबादिषु रसादेरपि स्वाभाविकपुण्यत्वस्योपलक्षणार्थमित्याह—**पृथिव्यामिति** । प्रथमोत्पन्नाः पश्चापि गुणाः पुण्या एव सिद्धादिभिरेव भोग्यत्वादिति भावः । कथं तर्हि गन्धादीनामपुण्यत्वप्रतिभानं तत्राऽऽह—**अपुण्यत्वं त्विति** । तदेव स्फुटयति—**संसारिणामिति** । गन्धादयः स्वकार्यैर्भूतैः सह परिणममानाः प्राणिनां पापादिवशादपुण्याः संपद्यन्त इत्यर्थः । यच्चाग्नेस्तेजस्तद्भूते मयि प्रोतोऽग्निरित्याह—**तेज इति** । जीवनभूते च मयि सर्वाणि प्रोतानीत्याह—**तथेति** । जीवनशब्दार्थमाह—**येनेति** । अन्नरसेनामृताख्येनेत्यर्थः । तपश्चास्मीत्यादेस्तात्पर्यार्थमाह—**तस्मिन्निति** । चित्तैकाग्र्यमनाशकादि वा तपस्तदात्मनीश्वरे प्रोतास्तपस्विनो विशेषणाभावे विशिष्टस्य वस्तुनोऽभावादित्यर्थः ॥ ९ ॥

**आ० भा०**—॥ ९ ॥

**आ० ज०**—॥ ९ ॥

**रा० भा०**—॥ ९ ॥

**अ० टी०**—च पुनः पृथिव्यां पुण्यो गन्धोऽस्मि येन गन्धेन पुलिन्द्यादिषु भगवद्रसोत्पत्तिः स्यात् स पुण्यरूपो गन्धस्तत्संबन्धेन पृथिव्या गन्धवत्त्वं तद्वत्त्वेनात्रत्यामोदेनाऽऽह्लादकवृन्दावनाधारत्वादिकं चेतिभावः । तथा विभावसौ अग्नौ यत्तेजस्तापकत्वं कान्तिस्तदहमस्मि । अत्रायं भावः । विप्रयोगतापरूपाग्नेर्मांशसंबन्धेनाग्नौ तापस्तेन सर्वपरिपाकं कृत्वा सर्वस्यान्नादेर्मद्भोग्यतासंपादकत्वं भवतीतिभावः । सर्वभूतेषु जीवनं प्राणधारणम् अन्यथा भगवद्वियुक्तानां तेषां तदाधारतां विना कथं स्थितिः स्यात् । तपस्विषु तापप्रयत्नवत्सु तपःक्लेशानन्दरूपोऽस्मि । अन्यथा तदभावे सुखादित्यागेन दुःखे को वा प्रवर्तते ॥ ९ ॥

**नी० टी०**—**पुण्य इति** । रसादिष्वपि द्रष्टव्यं अपुण्यस्य सर्वस्याविद्यामात्रविलसितत्वात् विभावसौ वह्नौ तेजः दहनशक्तिः । जीवंत्यनेनेति जीवनमन्नं विराजं तत्र हि सर्वाणि भूतानि प्रोतानि । अन्ये तु जीवनमायुरिति व्याचक्षते तपश्चेति तपो धर्मस्तद्रूपे मयि तपस्विनः प्रोताः ॥ ९ ॥

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ॥**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥**

**शां० भा०—बीजमिति।** बीजं प्ररोहकारणं मां विद्धि सर्वभूतानां हे पार्थ सनातनं चिरंतनम्। किंच बुद्धिर्विवेकशक्तिरन्तःकरणस्य बुद्धिमतां विवेकशक्तिमतामस्मि तेजः प्रागल्भ्यं तद्वतां तेजस्विनामहम् ॥ १० ॥

**शां० आ०**—ननु सर्वाणि भूतानि स्वकारणे प्रोतानि कथं तेषां त्वयि प्रोतत्वं तत्राऽऽह—**बीजमिति**। बीजान्तरापेक्षयाऽनवस्थां वारयति—**सनातनमिति**। चैतन्यस्याभिव्यञ्जकं तत्त्वनिश्चयसामर्थ्यं बुद्धिस्तद्वतां या बुद्धिस्तद्भूते मयि सर्वे बुद्धिमन्तः प्रोता भवन्तीत्याह—**किंचेति**। प्रागल्भ्यवतां यत्प्रागल्भ्यं तद्भूते मयि तद्वन्तः प्रोता इत्याह—**तेज इति**। तद्धि प्रागल्भ्यं यत्पराभिभवसामर्थ्यं परैश्चाप्रधृष्यत्वम् ॥ १० ॥

**आ० भा०**—॥ १० ॥

**आ० ज०**—॥ १० ॥

**रा० भा०**—॥ १० ॥

**अ० टी०**—किंच—**बीजमिति**। हे पार्थ! मत्कृपाश्रय! सर्वभूतानां सनातनं नित्यं बीजं मां विद्धि। अत्रायं भावः। पुरुषोत्तमलीलास्थजीवास्तदात्मका एव। तदंशा एवात्र प्रकटीकृताः। अन्यथा लीलोपयोगिनो न भवेयुस्तेन तद्बीजजाता एतेऽपि सेवायोग्या इति सर्वेषां बीजं मां विद्धि तज्ज्ञानं स्वरूपज्ञानप्रयोजकमितिभावः। तथैव बुद्धिमतां मत्स्वरूपज्ञानकुशलप्रयत्नवतां बुद्धिः कौशलमस्मि। तेजस्विनां दुराधर्षिणां तेजो दुराधर्षता अहमस्मि ॥ १० ॥

**नी० टी०**—बीजं कारणं सर्वभूतानां पिंडब्रह्मांडात्मकानां बीजे मयि पिंडादिकं प्रोतं कनके कुंडलादिवत्। सनातनं नित्यं बीजांतरादनुत्पन्नं। बुद्धिरूपे मयि बुद्धिमंतः प्रोताः। तेजः प्रागल्भ्यं तद्रूपे मयि प्रगल्भाः प्रोताः ॥ १० ॥

**बलं बलवतां चाहं कामरागविवर्जितम् ॥**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥**

**शां० भा०—बलमिति।** बलं सामर्थ्यमोजो बलवतामहम्। तच्च बलं कामरागविवर्जितं कामश्च रागश्च कामरागौ कामस्तृष्णाऽसंनिकृष्टेषु विषयेषु रागो रञ्जना प्राप्तेषु विषयेषु ताभ्यां विवर्जितं देहादिधारणमात्रार्थं बलमहमस्मि न तु यत्संसारिणां तृष्णारागकारणम्। किंच धर्माविरुद्धो धर्मेण शास्त्रार्थेनाविरुद्धो यः प्राणिषु भूतेषु कामो यथा देहधारणमात्राद्यर्थोऽशनपानादिविषयः कामोऽस्मि हे भरतर्षभ ॥ ११ ॥

**शां० आ०**—यच्च बलवतां बलं तद्भूते मयि तेषां प्रोतत्वमित्याह—**बलमिति**। कामक्रोधादिपूर्वकस्यापि बलस्यानुमतिं वारयति—**तच्चेति**। कामरागयोरेकार्थत्वमाशङ्क्यार्थभेदमावेदयति—**कामस्तृष्णेत्यादिना**। विशेषणसामर्थ्यसिद्धं व्यावर्त्यं दर्शयति—**न त्विति**। शास्त्रार्थाविरुद्धकामभूते मयि तथाविधकामवतां भूतानां प्रोतत्वं विवक्षित्वाऽऽह—**किंचेति**। धर्माविरुद्धं काममुदाहरति—**यथेति** ॥ ११ ॥

**आ० भा०**—॥ ११ ॥

**आ० ज०**—॥ ११ ॥

**रा० भा०**—॥ ११ ॥

अ० टी०—किंच बलवतां मद्वशीकरणलक्षणवतां । बलं वशीकरणलक्षणमहम् । चकारेण तद्रूपोऽपि । कीदृशं बलं कामरागविवर्जितं वशीकृते मयि स्वाभिलाषत्वं स्वरञ्जनादिवर्जनम् किंतु मदभिलाषादिभावः । तथा हे भरतर्षभ ! सत्कुलोत्पन्न ! तथाकामभावयोग्य ! धर्माविरुद्धः धर्मेण अविरुद्धो भूतेषु कामोऽस्मि । अत्रायं भावः । लौकिककामस्तु धर्मविरुद्धोऽस्ति यतोयं रसः स्वाऽविवाहितायामेव भवति प्रकटः सर्वधर्मविरुद्ध एव । अलौकिकस्तु रसात्मको धर्मरूप इति भावः ॥ ११ ॥

नी० टी०—बलरूपे मयि बलवंतः प्रोताः कामरागविवर्जितं कामस्तृष्णा रागो रंजना तौ हि अविद्यकौ अतो निरविद्यस्य बलं तद्वर्जितं एवं धर्माविरुद्धकामरूपे मयि ईदृशाः कामवंतः प्रोताः ॥ ११ ॥

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ॥**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

**शां० भा०—किंच—ये चैव सात्त्विकाः सत्त्वनिर्वृत्ता भावाः पदार्था राजसा रजोनिर्वृत्तास्तामसास्तमोनिर्वृत्ताश्च ये केचित्प्राणिनां स्वकर्मवशाज्जायन्ते भावास्तान्मत्त एव जायमानानित्येवं विद्धि सर्वान्समस्तानेव । यद्यपि ते मत्तो जायन्ते तथाऽपि न त्वहं तेषु तदधीनस्तद्वशो यथा संसारिणस्ते पुनर्मयि मद्वशा मदधीनाः ॥ १२ ॥**

शां० आ०—चिदानन्दयोरभिव्यञ्जकानां भावानामीश्वरात्मत्वाभिधानादन्येषामतदात्मत्वप्राप्तावुक्तं—**किंचेति** । प्राणिनां त्रैविध्ये हेतुं दर्शयन्वाक्यार्थमाह—**ये केचिदिति** । तर्हि पितुरिव पुत्राधीनत्वं त्वत्तो जायमानात्तदधीनत्वं तवापि स्यादिति विक्रियावत्त्वदूष्यत्वप्रसक्तिरित्याशङ्क्याऽऽह—**यद्यपीति** । मम परमार्थत्वात्तेषां कल्पितत्वान्न तद्गुणदोषौ मयि स्यातामित्यर्थः । तेषामपि तद्वदेव स्वतन्त्रतासंभवात्किमिति कल्पितत्वमित्याशङ्क्याह—**ते पुनरिति** । त्रिविधानां भावानां न स्वातन्त्र्यमीश्वरकार्यत्वेन तदधीनत्वात्तथा च कल्पितस्याधिष्ठानसत्ताप्रतीतिभ्यामेव तद्वत्त्वात्तन्मात्रत्वसिद्धिरित्यर्थः ॥ १२ ॥

**आ० भा०—॥ १२ ॥**

आ० ज०—॥ १२ ॥

**रा० भा०—किं विशिष्याभिधीयते । सात्त्विकाः राजसाः तामसाश्च जगति भोग्यत्वेन देहत्वेनेन्द्रियत्वेन तत्तद्धेतुत्वेन चावस्थिता ये भावास्तान्सर्वान्मत्त एवोत्पन्नान्विद्धि ते मच्छरीरतया मय्येवावस्थिता इति च न त्वहं तेषु नाहं कदाचिदपि तदायत्तस्थितिः अन्यत्रायत्तस्थितित्वेऽपि शरीरस्य शरीरेणात्मनः स्थितावपि उपकारो विद्यते मम तु तैर्न कश्चित्तथाविध उपकारः केवलं लीलैव प्रयोजनमित्यर्थः ॥ १२ ॥**

अ० टी०—किंच—ये चैवेति । ये च पुनः सात्त्विका एव भावा मत्संबन्धिदर्शनेन रोमाञ्चादयः । राजसात्मकविक्षेपादयः । च पुनस्तामसा विप्रयोगस्वरूपस्मरणे मूर्छाभ्रमादयस्ते सर्व एव । इति अमुना प्रकारेण तान् मत्त एव विद्धि जानीहि । तेषु तत्सामर्थ्येन अहं तत्प्रकारेण न प्रकटो भवामि किंतु ते मयि प्रकटीभवन्तीत्यर्थः । अत्रायं भावः । एते गुणा रसार्थं मया प्रकटिताः स्वरसात्मकगुणसाफल्याय मत्संबंधेन स्वयमुद्बुद्धरसाः सन्तः सेवां कुर्वन्तीति ते मयि सन्ति नत्वहं जीववत्तेषूत्पन्नेषु रसयुक्तो भवामीतिभावः॥१२॥

नी० टी०—सात्विका धर्मज्ञानवैराग्यैश्वर्यादयः राजसा लोभप्रवृत्त्यादयः तामसा निद्रालस्यादयः तान्सर्वान्मत्त एव रसतन्मात्रादिरूपात्सूत्रात्मनो निर्गतान् इति विद्धि । नन्वेवं तव सर्वजगदात्मनो विकारि-

त्वापत्त्या कौटस्थ्यहानिरित्याशंक्याह—न त्वहं तेषु ते मयीति । येष्वबादयः प्रोतास्तेषु सूत्रावयवभूतेषु रसादिष्वनृतजडरूपेष्वत्राधितात्मचिन्मात्ररूपो घटशरावोदंचनादाविव मृन्नास्मि । अनृतस्यास्य सत्तास्फुरणे एव स्वकीये प्रयच्छामि न त्वनृतात्मा भवामीत्यर्थः । ते तु मय्येवाध्यस्ता मदनन्याः यथा रज्ज्वामध्यस्ताः सर्पादयो रज्ज्वनन्याः । "तदनन्यत्वमारंभणशब्दादिभ्यः" इति न्यायात् । अनन्यत्वं व्यतिरेकेणाभावः । न खल्वनन्यत्वमित्यभेदं ब्रूमः किंतु भेदं निषेधामः कुतः आरंभणशब्दात् । वाचाऽऽरंभणं विकारो नामधेयमिति विकारस्य वागालंबनत्वेन स्वप्नमायेंद्रजालिकविषयसाम्यश्रुतेः । न ह्यात्मनो विचित्रप्रपंचात्मत्वे ते मयीत्यंशाविरोधेऽपि न त्वहं तेष्वित्यंशे विरोधपरिहारो युज्यते कार्यस्य कारणात्मकत्वावश्यंभावात् । तस्माद्विवर्त्तवादाश्रयेणैव ब्रह्मणो जगदुपादानत्वकूटस्थत्वे निर्वहत इति साधूक्तं न त्वहं तेषु ते मयीति ॥ १२ ॥

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ॥**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

**शां० भा०—एवंभूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वभूतात्मानं निर्गुणं संसारदोषबीजप्रदाहकारणं मां नाभिजानाति जगदित्यनुक्रोशं दर्शयति भगवान् । तच्च किंनिमित्तं जगतोऽज्ञानमित्युच्यते—त्रिभिर्गुणमयैर्गुणविकारैः रागद्वेषमोहादिप्रकारैर्भावैः पदार्थैरेभिर्यथोक्तैः सर्वमिदं प्राणिजातं जगन्मोहितमविवेकतामापादितं सन्नाभिजानाति मामेभ्यो यथोक्तेभ्यो गुणेभ्यः परं व्यतिरिक्तं विलक्षणं चाव्ययं व्ययरहितं जन्मादिसर्वभावविकारवर्जितमित्यर्थः ॥ १३ ॥**

शां० आ०—सतीश्वरस्य स्वातन्त्र्ये नित्यशुद्धत्वादौ च कुतो जगतस्तदात्मकस्य संसारित्वमित्याशङ्क्य तदज्ञानादित्याह—**एवंभूतमपीति** । यद्यप्रपञ्चोऽविक्रियश्च त्वं कस्मात्त्वामात्मभूतं स्वयंप्रकाशं सर्वो जनस्तथा न जानातीति मत्वा शङ्कते—**तच्चेति** । श्लोकेनोत्तरमाह—**उच्यत इति** । एभ्यः परमित्यप्रपञ्चत्वमुच्यते । अव्ययमिति सर्वविक्रियाराहित्यम् ॥ १३ ॥

**आ० भा०—तर्हि कथमेवं न ज्ञायत इत्यत आह—त्रिभिरिति । तादात्म्यार्थे मयट् । तच्चोक्तम् । 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति । न हि गुणकार्यभूता माया । गुणमयीति च वक्ष्यति । सिद्धं च कार्यस्यापि तादात्म्यम् । 'तादात्म्यं कार्यधर्मादेः संयोगो भिन्नवस्तुनोः' इत्यादि व्यासयोगे । भावैः पदार्थैः । सर्वे भावा दृश्यमाना गुणमया एतएवेति दर्शयति—एभिरिति । ज्ञानिव्यावृत्त्यर्थमिदमिति । गुणमयदेहादिकं दृष्ट्वेश्वरदेहेऽपि तादृश इति मायामोहित इत्यर्थः । जगाद च व्यासयोगे । 'गौणान्ब्रह्मादिदेहादीन्दृष्ट्वा विष्णोरपीदृशः ॥ देहादिरितिमन्वानो मोहितोऽज्ञो जनो भृशम्' इति । एभ्यो गुणमयेभ्यः । गुणेभ्यश्च परमिति वक्ष्यमाणत्वात् । केवलो निर्गुणश्चेत्यादिश्रुतिभ्यश्च । त्रैगुण्यवर्जितमितिचोक्तम् ॥ १३ ॥**

आ० ज०—ननु विज्ञाननिरूपणं प्रारभ्य त्रिभिरित्यादिकं किमर्थमुच्यत इत्यत आह—**तर्हीति** । **ये चैवेति** । विज्ञाननिरूपणोपसंहारवाक्ये सत्त्वादिगुणनिर्वृतानां भगवान्कारणमाश्रयश्च तदनाश्रयश्चेत्युक्तम् । तेनैव गुणातीत इति चोक्तप्रायम् । तस्यायमाक्षेपः । एवं गुणातीतया सगुणश्च ज्ञायस इति शेषः । एवमनुपलंभविपरीतोपलंभाभ्यामुक्तमसदिति भावः । विकारार्थतानिरासार्थमाह—**तादात्म्येति** । मयटस्तादात्म्यार्थत्वं कुत इत्यत आह—**तच्चेति** । तादात्म्ये प्रयोगं दर्शयितुमुपोद्घातमाह—**न हीति** । कार्यभूतेत्युपलक्षणम् । गुणप्राचुर्यादिकमपि तस्यां न संभवति । ततः किमित्यत आह—**गुणेति** । 'दैवी ह्येषा गुणमयी मम माया' इति मायाया गुणमयीत्वमुच्यते । न च तत्र विकाराद्यर्थता संभवति ततः परिशेषतः तादात्म्यार्थता ग्राह्येत्यर्थः । अस्तु मयटस्तादात्म्ये शक्तिः । अत्र विकारार्थतां परित्यज्य तद्ग्रहणे को हेतुरिति चेत् उच्यते । विकारार्थताग्रहणे मामेभ्यः परमित्यत्र गुणकार्येभ्य एव भगवतः परत्वमुक्तं स्यान्न तु गुणेभ्यः । अतस्तत्संग्रहाय तादात्म्यार्थताग्रहणम् । एवं

तर्हि गुणेभ्य एव परत्वमुक्तं स्यान्न तु गुणकार्येभ्योऽपीति समानमित्यत आह—**सिद्धं चेति** । सिद्धं प्रमितम् । ततश्च गुणात्मकैरित्युक्ते गुणानां तत्कार्याणां चोपादाने सति उभयपरत्वमुक्तं भवति—**कार्यधर्मादेरिति** । कार्यद्रव्यस्योपादानेन गुणक्रियाजातिपूर्वाणां धर्माणां गुण्यादिभिरित्यर्थः । भावशब्दस्यानेकार्थत्वात्तस्य विवक्षितमर्थमाह—**भावैरिति** । एवं सति सर्वपरत्वलाभादिति भावः । नन्वेवमप्येभिरिति पुरोवर्तिनामेव ग्रहणात् न सर्वपरत्वसिद्धिरित्यत आह—**सर्वइति** । प्रमितपरामर्शोऽयं न पुरोवर्तिमात्रस्येति भावः । जगन्मोहितमित्यलं किमिदमित्यनेनेत्यत आह—**ज्ञानीति** । व्यवहारपतितमित्यर्थः । ननु भगवद्विषयस्य सगुणत्वमोहस्य कथं गुणात्मकाः पदार्थाः कारणमित्यत आह—**गुणमयेति** । देहलादिहेतुनेति शेषः । मायेति गुणमयानां ग्रहणं । मोहितो जनः । अत्र प्रमाणमाह—**जगाद चेति** । आदिपदेनेंद्रियादिग्रहणम् । यदर्थं तादात्म्यार्थग्रहणं कृतं तदाह—**एभ्यइति** । ननु भगवतो गुणातीतत्वे प्रमिते तदर्थोऽयं श्रमः सफलः स्यात् । तदेव कुत इत्यत आह—**गुणेभ्यश्चेति** ॥१३॥

**रा० भा०**—तदेवं चेतनाचेतनात्मकं कृत्स्नं जगत् मदीयं काले काले मत्त एवोत्पद्यते मयि च प्रलीयते मय्येवावस्थितं मच्छरीरभूतं मदात्मकं चेत्यहमेव कार्यावस्थायां कारणावस्थायां च सर्वशरीरतया सर्वप्रकारोऽवस्थितः । अतः कारणत्वेन शेषित्वेन च ज्ञानाद्यसंख्येयकल्याणगुणगणैश्चाहमेव सर्वैः प्रकारैः परतरो मत्तोऽन्यत्केनापि कल्याणगुणगणेन परतरं न विद्यते एवंभूतं मां त्रिभ्यः सात्त्विकराजसतामसगुणमयभ्योः भावेभ्यः परं मदसाधारणैः कल्याणगुणगणैस्तत्तद्भोग्यताप्रकारैश्च परम् उत्कृष्टतमम् अव्ययं सदैकरूपमपि तैरेव त्रिभिर्गुणमयैर्निहीनतरैः क्षणविध्वंसिभिः पूर्वकर्मानुगुणदेहेन्द्रियभोग्यत्वेनावस्थितैः पदार्थैर्मोहितं देवतिर्यङ्मनुष्यस्थावरात्मनावस्थितम् इदं जगन्नाभिजानाति ॥ १३ ॥

**अ० टी०**—एवं लीलया रसार्थं प्रकटितान् गुणान् मयि दृष्ट्वा सर्वे मोहं प्राप्य मां न जानन्तीत्याह—**त्रिभिरिति** । एभिः परिदृश्यमानैर्मत्संबन्धेन स्नेहलीलारसतः प्रकटीभूतैस्त्रिभिः सात्त्विकादिभिर्गुणमयैर्मद्गुणात्मकैर्भावैर्भावनात्मकैरिदं परिदृश्यमानमधिकरणात्मकर्माध्यात्मिकं जगत् मामेभ्यः पूर्वोक्तभावेभ्यः परमुत्कृष्टं केवलं रसात्मकमत एवाव्ययं विप्रयोगादिभावेषु न्यूनतादिरहितं नाभिजानाति ॥ १३ ॥

**नी० टी०**—कथं तर्हि स्थूलसूक्ष्मप्रपंचबाधेन जना आत्मानं नावगच्छंतीत्याशंक्याह—**त्रिभिरिति** । एभिः पूर्वोक्तैस्त्रिभिस्त्रिविधैर्भावैः प्रकाशप्रवृत्तिनियमाद्यैर्गुणमयैः सत्वरजस्तमोगुणविकारैरिदं चराचरं प्राणिजातं जगच्छब्दवाच्यं मोहितं सदेभ्यो गुणेभ्यः परं मां न जानाति । यथा रज्ज्वां सर्पभ्रमेण व्याकुलः सर्पात्परां रज्जुं न जानाति तद्वत् । परत्वे हेतुः अव्ययं एते भावाः परिणामित्वात् व्ययवंतः अहं तु तद्विपरीतः साक्षी इत्यव्ययः ॥ १३ ॥

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

**शां० भा०**—कथं पुनर्दैवीमेतां त्रिगुणात्मिकां वैष्णवीं मायामतिक्रामन्तीत्युच्यते—दैवी देवस्य ममेश्वरस्य विष्णोः स्वभूता हि यस्मादेषा यथोक्ता गुणमयी मम माया दुरत्यया दुःखेनात्ययोऽतिक्रमणं यस्याः सा दुरत्यया । तत्रैवं सति सर्वधर्मान्परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते ते मायामेतां सर्वभूतमोहिनीं तरन्त्यतिक्रामन्ति संसारबन्धनान्मुच्यन्त इत्यर्थः ॥ १४ ॥

**शां० आ०**—यथोक्तानादिसिद्धमायापारवश्यपरिवर्जनायोगाज्जगतो न कदाचिदपि तत्त्वबोधसमुदयसभावनेत्याशङ्कते—**कथं पुनरिति** । भगवदेकशरणतया तत्त्वज्ञानद्वारेण मायातिक्रमः संभवतीति परिहरति—**उच्यत इति** । कथं दुरत्ययत्वेन

तदत्ययः स्यादिति तत्राऽऽह—**मामेवेति**। प्रधानस्येव स्वातन्त्र्यं मायाया व्युदस्यति—**देवस्येति**। स्वातन्त्र्ये मायात्यानुपपत्तिं हिशब्दद्योतितां हेतू करोति—**यस्मादिति**। अनुभवसिद्धा सा नाकस्मादपलापमर्हतीत्याह—**एषेति**। जगतस्तत्त्वप्रतिपत्तिप्रतिबन्धभूता गुणाः सत्त्वादयः। ममेति प्रागुक्तमेव मायायाः संबन्धमनूद्य विधित्सितं दुरत्ययत्वं विभजते—**दुःखेनेति**। मामेवेत्यादि व्याचष्टे—**तत्रेति**। तस्मिन्मायारूपे यथोक्तरीत्या दुरत्यये सतीति यावत्। मामेवेत्येवकारेण मायाया वेद्यकोटिनिवेशाभावो विवक्ष्यते। सर्वात्मना कर्मानुष्ठानादिव्यग्रतामन्तरेणेत्यर्थः। मायातिक्रमे मोहातिक्रमो भवतीति मत्वा विशिनष्टि—**सर्वेति**। मायातत्प्रयुक्तमोहयोरतिक्रमेऽपि कथं पुरुषार्थसिद्धिरित्याशङ्कयाऽऽह—**संसारेति**॥ १४॥

**आ० भा०**—कथमनादिकाले मोहानत्ययो बहूनामित्यत आह—**दैवीति**। अयमाशयः। माया ह्येषा मोहिका सा च सृष्ट्यादिक्रीडादिमद्देवसंबंधित्वादतिशक्तेर्दुरत्यया। तथा हि। देवताशब्दार्थं पठंति। दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमदमोदस्वप्नकांतिगतिष्विति। कथं दैवी। मदीयत्वात्। अहं हि देव इति। अब्रवीच्च 'श्रीभूदुर्गेति या भिन्ना महामाया तु वैष्णवी। तच्छक्त्यनंतांशहीनाऽथापि तस्याश्रयात्प्रभोः॥ अनंतब्रह्मरुद्रादेर्नास्याः शक्तिकलाऽपि हि। तेषां दुरत्ययाऽप्येषा विना विष्णुप्रसादतः' इति च व्यासयोगे। तर्हि न कथंचिदत्येतुं शक्यत इत्यत आह—**मामेवेति**। अन्यत्सर्वं परित्यज्य मामेव ये प्रपद्यंते। गुर्वादिवंदनं च मय्येव समर्पयंति। स एव च तत्र स्थित्वा गुर्वादिर्भवतीत्यादि पश्यंति। आह च नारदीये 'मत्संपत्त्या तु गुर्वादीन् भजंते मध्यमा नराः॥ मदुपाधितया तांश्च सर्वभूतानि चोत्तमाः' इति। 'आचार्यचैत्यवपुषा स्वगतिं व्यनंक्षि' इति च॥ १४॥

**आ० ज०**—उपायाभावानुमानाभासाभ्यामनुपलंभो विपरीतोपलंभश्चेत्युक्तम् अतः किमुत्तरेण वाक्येनेत्यत आह—**कथमिति**। भगवान्गुणमयविग्रह इत्ययं न मोहः बाधकप्रत्ययाभावात्। ज्ञानिनां सम्यक्प्रत्ययो बाधक इत्युक्तमितिचेत् न। बहुतरज्ञानविरोधेन कतिपयज्ञानानामेव यथार्थत्वापत्तेः। ननूत्तरकाले बाधकप्रत्ययो भविष्यति चेत् न। अनादौ काले जातस्योत्तरलाभ्यसंभवादिति भावः। ननु बाधकप्रत्ययाभावाद्यथार्थ एवायं प्रत्यय इति शंकायां किमेतदसंगतमुच्यतइत्यत आह—**अयमिति**। एषेत्यनुवादेन मोहिकेतिव्याख्यातं मोहितमितिधात्वर्थमात्रं परामृश्य योग्यप्रत्ययसंबंधेन व्याख्यानात्। गुणमयी तदभिमानिनी दुर्गा या हि तमोगुणेनैवंविधं मोहं जनयति। अनुमानं तु निमित्तमात्रम्। ततः किमित्यत आह—**सा चेति**। सा च दुरत्यया। तत्कृतमोहं कोऽपि नात्येतुं शक्नोति न कस्यापि बाधकप्रत्ययो भवति। कुतो दुरत्ययेत्यतोऽतिशक्तेरिति हेतुरध्याहृत्योक्तः। कुतोऽतिशक्तित्वमित्यतो दैवीत्येतद्धेतुगर्भमिति व्याख्यातम्। देवसंबंधित्वादिति। संबंधित्वं परमप्रियत्वम्। स च देवस्यातिशक्तित्वे तत्संबंधिन्यास्तस्यात्तदेव कुत इत्यतो देवशब्दार्थो निरुक्तः। **सृष्ट्यादीति**। सृष्ट्यादिश्च सा क्रीडा च प्रथमादिपदेन स्थित्यादेः संग्रहः। द्वितीयेन विजिगीषादेः। क्रीडादिमत्त्वेनातिशक्तिर्न सिध्यतीति क्रीडा व्याख्याता। देवशब्दस्य क्रीडादिमत्त्वमर्थः कुत इत्यत आह—**तथा हीति**। देवशब्दे या प्रकृतिस्तदर्थमित्यर्थः। प्रत्ययस्तु इगुपधलक्षणस्य कस्य बाधकः पचाद्यच्। दैवीत्यनेन निराकांक्षत्वान्ममेति व्यर्थमित्यत आह—**कथमिति**। तस्यैव व्याख्यार्थमेतदिति भावः। त्वदीयत्वेऽपि कथं दैवीत्यतः शेषं पूरयति—**अहं हीति**। आशयवर्णनसमाप्तावितिशब्दः। अत्र प्रमाणमाह—**अब्रवीच्चेति**। उत्तरस्य प्रकृतोपयोगितया संगतिमाह—**तर्हीति**। यदि न केवलमनुमानं किं तु भगवतोपोद्बलिता माया मोहहेतुस्तर्हीत्यर्थः। ततश्च ज्ञानिव्यावृत्त्यर्थं यदिदमित्युक्तं तदसदिति भावः। ननु मायात्ययोपायस्यासंभावनाशंकायां तदुपाय एव वक्तव्यो न तूपायांतरप्रतिषेधः। अतोऽनुपपन्नमवधारणमित्यत आह—**अन्यदिति**। स्वप्रतिपत्तावित्थंभावसूचक एवैवशब्दो नोपायांतरप्रतिषेधपर इत्यर्थः। एवं तर्हि गुर्वादिवंदनाभावः प्राप्त इत्यतोऽभिप्रायमाह—**गुर्वादीति**। भागवता एत इत्यादिबुद्ध्या वंदनादि कुर्वंतीति यावत्। एतन्मध्यमभक्तानां चरित्रमुक्तम् उत्तमानां त्वाह—**स एवेति**। भगवानेव तत्र गुर्वादिषु। द्वयं प्रमाणेनोपपादयति—**आहचेति**। अहं च सा संपत्तिश्च मदुपाधितया मत्प्रतिमात्वेन चैत्यं चित्तस्थम् स्वगतिं स्वज्ञानम् व्यनंक्षि व्यंजयसि॥ १४॥

**रा० भा०**—कथं स्वत एवानवधिकातिशयानन्दे नित्ये सदैकरूपे लौकिकवस्तुभोग्यताप्रकारैश्चोत्कृष्टतमे त्वयि स्थितेऽप्यत्यन्तनिहीनेषु गुणमयेषु अस्थिरेषु भावेषु सर्वस्य भोक्तृवर्गस्य भोग्यत्वबुद्धिरुपजायते इत्यत्र आह। ममैषा गुणमयी सत्त्वरजस्तमोमयी माया यस्माद्दैवी देवेन क्रीडा-

प्रवृत्तेन मयैव निर्मिता तस्मात्सर्वैर्दुरत्यया दुरतिक्रमा अस्याः मायाशब्दवाच्यत्वमासुरराक्षसास्त्रादीनामिव विचित्रकार्यकरत्वेन, यथा च 'ततो भगवता तस्य रक्षार्थं चक्रमुत्तमम् । आजगाम समाज्ञप्तं ज्वालामालि सुदर्शनम् ॥ तेन मायासहस्रं तच्छम्बरस्याशुगामिना । बालस्य रक्षिता देहमेकैकांशेन सूदितम्' इत्यादौ, अतो मायाशब्दो न मिथ्यार्थवाची ऐन्द्रजालिकादिष्वपि केनचिन्मन्त्रौषधादिना मिथ्यार्थविषयायाः पारमार्थिक्या एव बुद्धेरुत्पादकत्वेन मायावीति प्रयोगः तथा मन्त्रौषधादिरेव च तत्र मायासर्वप्रयोगेष्वनुगतस्यैकस्यैव शब्दार्थत्वात् तत्र मिथ्यार्थेषु मायाशब्दप्रयोगो मायाकार्यबुद्धिविषयत्वेनौपचारिकः । मञ्चाः क्रोशन्तीतिवत् । एषा गुणमयी पारमार्थिकी भगवन्मायैव 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादिष्वभिधीयते अस्याः कार्यं भगवत्स्वरूपतिरोधानं स्वस्वरूपभोग्यत्वबुद्धिश्च अतो भगवन्मायया मोहितं सर्वं जगद्भगवन्तमनवधिकातिशयानन्दस्वरूपं नाभिजानाति मायाविमोचनोपायमाह । मामेव सत्यसंकल्पं परमकारुणिकमनालोचितविशेषालोकशरण्यं ये शरणं प्रपद्यन्ते ते एतां मदीयां गुणमयीं मायां तरन्ति मायामुत्सृज्य मामेवोपासत इत्यर्थः ॥ १४ ॥

**अ० टी०**—नन्वेवं चेदस्माभिः कथं ज्ञातव्य इत्याकाङ्क्षायामाह—**दैवीति** । एषा मम गुणमयी मद्गुणात्मिका दैवी केषुचिद्भाग्यवत्सु रसदानेच्छया प्रकटीकृतक्रीडात्मिका माया अलौकिकसामर्थ्येनान्यथाभावोत्पादनसमर्था । अतएव दुरत्यया दुःखेनापि जेतुमशक्या । एतादृशीमपि ये मामेव केवलमनन्यभावेन पुरुषोत्तमं प्रपद्यन्ते प्रपन्ना भवन्ति ते एतां मायां मोहनात्मिकां तरन्ति । मां जानन्तीत्यर्थः । 'मामेव ये' इत्यत्रैवकारेण मामित्येकवचनेन च भावात्मकतया केवलं पुरुषोत्तमत्वेन स्वभजनं दास्यभावेनोक्तं नतु लीलादिसहितदर्शनेन स्वरमणेच्छादिकतया । एतेन त्वमपि तथा प्रपन्नो भवेत्युक्तम् ॥ १४ ॥

**नी० टी०**—देवस्य जीवरूपेण लीलया क्रीडतो मम संबंधिनीयं दैवी हि प्रसिद्धा पिंडब्रह्मांडरूपेण विततैषा मम चिन्मात्रस्य माया मामहं न जानामीति साक्षिप्रत्यक्षत्वेनापलापानर्होऽनृतस्य प्रपंचस्येंद्रजालादेरिव प्रकाशिका गुणमयी सत्वरजतमोगुणमयी दुरत्यया दुरतिक्रमा ये मामेव सर्वभूतस्थं भगवंतं वासुदेवं प्रपद्यंते विषयीकुर्वंति त एवैतां मायां तरंति । अधिष्ठानज्ञानेनैव समूलस्य भ्रमस्योच्छेदो भवति नतु ज्ञानांतरेण वा वृत्तिनिरोधेन वेत्यर्थः । अयमर्थः जीवेश्वरविभागशून्ये शुद्धचिन्मात्रे कल्पितो मायादर्पणश्चित्प्रतिबिंबरूपं जीवं वशीकृत्य बिंबचैतन्यमनुरुध्य प्रचलति अयस्कांतमनुरुध्येव लोहशलाका इदमेव ईश्वराधीनत्वं मायायाः ईश्वरस्य च मायाद्वारा सर्वस्रष्टृत्वमपि । तथा च श्रुतिः । "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सनिरुद्धः" इति । तथा चैकैव मायाजीवेश्वरयोरुपाधिर्दर्पण इव बिंबप्रतिबिंबयोर्बिंबप्रतिबिंबभावानाक्रांतमुभयानुस्यूतं शुद्धचिन्मात्रमन्यत्तृतीयं मुक्तप्राप्यं । जीवेश्वरौ चोपाधिपक्षपातदशायामल्पज्ञत्वसर्वज्ञत्वशास्यत्वशासितृत्वादिभावं भजेते । तावेव तदभावे उपाधिप्रचारदर्शिनावुदासीनबोधरूपतया जीवसाक्षीश्वरसाक्षीति शब्दाभ्यां व्यवह्रियेते । एवं च जीवईश्वराराधनावाप्तप्रत्यक्तत्वज्ञानेन मायायां नष्टायां तत्कार्यस्यापि नाशेन साक्ष्याभावात्साक्षित्वमपि परित्यज्य बिंबप्रतिबिंबानुस्यूतं शुद्धं तृतीयं चैतन्यं प्राप्नोतीति तदिदमुक्तं—**दैवी मायेति** । मम मायेति चैकस्या एव जीवेश्वरसंबंधित्वं जीवस्येश्वरभजनेन मायातरणमिति च ॥ १४ ॥

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ॥**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

**शां० भा०**—यदि त्वां प्रपन्ना मायामेतां तरन्ति कस्मात्त्वामेव सर्वे न प्रपद्यन्त इत्युच्यते—न मां परमेश्वरं दुष्कृतिनः पापकारिणो मूढाः प्रपद्यन्ते नराधमा नराणां मध्येऽधमा निकृष्टास्ते च माययाऽपहृतज्ञानाः संमुषितज्ञाना आसुरं भावं हिंसानृतादिलक्षणमाश्रिताः ॥ १५ ॥

**शां० आ०**—भगवन्निष्ठाया मायातिक्रमहेतुत्वे तदेकनिष्ठत्वमेव सर्वेषामुचितमिति पृच्छति—**यदीति**। पापकारित्वेनाविवेकभूयस्तया हिंसानृतादिभूयस्त्वाद्भूयसां जन्तूनां न भगवन्निष्ठत्वसिद्धिरित्याह—**उच्यत इति**। मौढ्यं पापकारित्वे हेतुरत एव निष्कर्षः। संमुषितमिव तिरस्कृतं ज्ञानं स्वरूपचैतन्यमेषामिति ते तथा ॥ १५ ॥

**आ० भा०**—तर्हि सर्वेऽपि किमिति नात्याययन्नित्यतआह—न मामिति। दुष्कृतित्वान्मूढाः अत एव नराधमाः। अपहृतज्ञानत्वाच्च मूढाः अत एवासुरं भावमाश्रिताः। स च वक्ष्यते प्रवृत्तिं च निवृत्तिं चेत्यादिना। अपहारोऽभिभवः। उक्तं चैतत् व्यासयोगे। 'ज्ञानं स्वभावो जीवानां मायया ह्यभिभूयते' इति। असुषु रता असुरास्तच्चोक्तं नारदीये। 'ज्ञानप्रधाना देवास्तु असुरास्तु रता असौ' इति ॥ १५ ॥

**आ० ज०**—उत्तरवाक्यं प्रकृतानुपयुक्तमित्यत आह—**तर्हीति**। यदि त्वत्प्रतिपत्तिर्मायातरणोपायस्तर्हीत्यर्थः। त्वां प्रपद्येति शेषः। तथा च मामेवेत्युक्तमसदिति भावः। दुष्कृतित्वादीनां प्रयोजनांतराभावात् हेतुत्वेनान्वये स्थिते किं ते पंचापि साक्षाद्भगवदप्रतिपत्तिहेतवः किं वा हेतुहेतुमद्भावेनेत्यपेक्षायामाह—**दुष्कृतित्वादिति**। मूढा मिथ्याज्ञानिनः विपर्ययस्याधर्मकार्यत्वप्रसिद्धेः। अत एव। मूढत्वादेव। देवानामुत्तममध्यममनुष्याणां च केवलमिथ्याज्ञानित्वाभावात्। अधिष्ठानयाथात्म्याज्ञानस्य विपर्ययहेतुत्वप्रसिद्धेरपहृतज्ञानत्वाच्च मूढाः। अत एव नराधमत्वादेव। जीवत्रैविध्यविवक्षायां नराधमानामसुरेष्वंतर्भावस्य प्रसिद्धत्वात्। आसुरभावाश्रयणान्न मां प्रपद्यंत इत्यर्थः। नन्वासुरो भावो हि हिंसानृतादिलक्षणोऽन्यैर्व्याख्यातः। तद्रहिताश्च क्षपणकादयो न भगवंतं प्रपद्यंते। तत्कथमस्य हेतुत्वमित्यत आह—**स चेति**। एतेषामन्यतमः सर्वेष्वप्यस्तीति भावः। ननु मुक्तौ योग्यानामयोग्यानां च भगवंतमप्रतिपद्यमानानां एते धर्मा वक्तव्याः। तत्र मुक्तियोग्यानां सम्यग्ज्ञानस्वभावात् तत्कथमपहृतज्ञानत्वामित्यत आह—**अपहार इति**। आगमवाक्यमपि सज्जीवविषयं मुक्तियोग्यानामसुरभावाश्रयणप्रवृत्त्याद्यज्ञानेनोक्तम्। प्रकारांतरेण घटायतुमाह—**असुष्विति**। इंद्रियेषु तत्प्रीणन एव रताः असाविति जातावेकवचनं पदसंधेर्विवक्षाधीनत्वादसंधिर्न दोषः। त्रिभिरित्यत्र भगवतो गौणविग्रहत्वज्ञानस्य कारणमुक्तम्। अत्र तु स्वदोषादेव न मां प्रपद्यंते। न तु मत्प्रपत्तेर्मायातरणोपायत्वाभावादित्यतो महान्भेदः ॥ १५ ॥

**रा० भा०**—किमिति भगवदुपासनापादिनीं भगवत्प्रपत्तिं सर्वे न कुर्वन्ति इत्यत्राह—मां दुष्कृतिनः पापकर्माणो दुष्कृततारतम्याच्चतुर्विधा न प्रपद्यन्ते मूढा नराधमाः माययापहृतज्ञानाः आसुरं भावमाश्रिताः इति मूढाः विपरीतज्ञानाः पूर्वोक्तप्रकारेण मत्स्वरूपापारज्ञानात्माकृतेष्वेव विषयेषु सक्ताः पूर्वोक्तप्रकारेण भगवच्छेषतैकरसमात्मानं भोग्यजातं च स्वशेषतया मन्यमानाः नराधमाः सामान्येन ज्ञातेऽपि मत्स्वरूपे मदौन्मुख्यानर्हाः माययापहृतज्ञानास्तु मद्विषयं मदैश्वर्यविषयं च ज्ञानं प्रस्तुतम् येषां तदसंभावनापादिनीभिः कूटयुक्तिभिरपहृतं ते तथोक्ताः आसुरं भावमाश्रितास्तु मद्विषयं मदैश्वर्य्यविषयं च ज्ञानं सुदृढमुपपन्नं येषां द्वेषायैव भवति ते आसुरं भावमाश्रिता उत्तरोत्तराः पापिष्ठतमाः ॥ १५ ॥

**अ० टी०**—नन्वेवं सति कथं न सर्वे प्रपन्ना भवन्तीत्याह—**न मामिति**। मां दुष्कृतिनो दुष्टकर्मकर्त्तारः पापा मूढाः पशुवद्विवेकरहिताः नराधमाः नरेषु अधमाः केवलं वैचित्र्यार्थं जगत्पूरणार्थं सृष्टाः मां न

प्रपद्यन्ते। ननूपदेशादिना कथं न पापकर्मादित्यागेन प्रपद्यन्त इत्यत आह—**मायेयेति**। मायया अपहृतं गुरूपदेशादिजनितं ज्ञानं येषां। मायेतिपदेन ज्ञाननाशनसामर्थ्यमुक्तम्। अतएव देवीपुराणे। 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा॥ बलादाकृष्य मोहाय महामाया प्रयच्छति' इत्युक्तम्। ननु भगवत्प्रपत्तीच्छूनां कथं न भगवान् रक्षतीत्यत आह—आसुरं भावमाश्रिताः। मद्विरोध्यासुरसंगेन तद्भावं प्राप्ताः। अतो मया न रक्ष्यन्त इति भावः। एतेन दुःसंगराहित्येन प्रपत्तिः कार्येत्युपदिष्टम्। अतएव दुःसंगनिषेधः श्रीभागवते। 'न तथाऽस्य भवेन्मोहः' 'संगस्तेष्वपि ते प्रार्थ्यः' इत्यादिभिरुक्तः॥ १९॥

**नी० टी०**—कुतस्तर्हि सर्वे त्वां प्रपद्य मायां न तरंतीत्याशंक्याह—**न मामिति**। यतो दुष्कृतिनोऽतश्चित्तशुद्ध्यभावान्मूढाः आत्मानात्मविवेकहीनाः अत एव नराधमा मां न प्रपद्यंते कुतो दुष्कृतिनः यतो माययाऽपहृतं तिरस्कृतं ज्ञानमखंडसंविद्रूपं ब्रह्म येषां ते अपहृतज्ञानाः। एतेन मायाया आवरणशक्तिरुक्ता। किंच आसुरं असुराणां विरोचनादीनां भावं चित्ताभिप्रायमात्मैवेहमहय्य इत्यादिना श्रुतं देहेंद्रियसंघात एव सम्यक् संतर्पणीय इत्येवंविधमाश्रिताः। एतेन मायायाविक्षेपशक्तिरुक्ता। तदेवं मायया स्वरूपानंदमावृत्य देहात्मभ्रमे जनिते सति तदभिमानाद्देहादिपुष्ट्यर्थं दुष्कृतं कुर्वंति तेन च मूढाः संतो नराधमा मां न प्रपद्यंते। सर्वानर्थमूलं मायैवेत्यर्थः॥ १९॥

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन॥**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥ १६॥**

**शां० भा०—ये पुनर्नरोत्तमाः पुण्यकर्माणः—चतुर्विधाश्चतुष्प्रकारा भजन्ते सेवन्ते मां जनाः सुकृतिनः पुण्यकर्माणो हेऽर्जुन। आर्त आर्तिपरिगृहीतस्तस्करव्याघ्ररोगादिनाऽभिभूत आपन्नो जिज्ञासुर्भगवत्तत्त्वं ज्ञातुमिच्छति योऽर्थार्थी धनकामो ज्ञानी विष्णोस्तत्त्वविच्च हे भरतर्षभ॥ १६॥**

**शां० आ०**—तेषां तर्हि तन्निष्ठता सुकरेति तत्राऽऽह—**ये पुनरिति**। ते भजन्ते भगवन्तमिति शेषः। ये त्वां भजन्ते ते किं सर्वे मायां तरन्ति नैव प्रार्थनावैचित्र्यादित्याह—**चतुर्विधा इति**। आपन्नस्तन्निवृत्तिमिच्छन्निति शेषः—**तत्त्वविदिति**। शब्दज्ञानवानात्मतत्त्वसाक्षात्कारमात्रार्थी मुमुक्षुरित्यर्थः॥ १६॥

**आ० भा०— ॥ १६॥**

**आ० ज०**— ॥ १६॥

**रा० भा०—सुकृतिनः पुण्यकर्माणो मां शरणमुपगम्य मामेव भजन्ते ते च सुकृततारतम्येन चतुर्विधाः सुकृतगरीयस्त्वेन प्रतिपत्तिवैशेष्यादुत्तरोत्तराधिकतमाः भवन्ति आर्त्तः प्रतिष्ठाहीनो भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकामः अर्थार्थी अप्राप्तैश्वर्यतयैश्वर्यकामः तयोर्मुखभेदमात्रम् ऐश्वर्यविषयतयैक्यादेक एवाधिकारः जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः ज्ञानमेवास्य स्वरूपमिति जिज्ञासुरित्युक्तं ज्ञानी च इतस्त्वन्यां प्रकृतिं विद्धि मे परामित्यादिनाऽभिहितभगवच्छेषतैकरसात्मस्वरूपवित्प्रकृतिवियुक्तकेवलात्मन्यपर्यवस्यन् भगवन्तं प्रेप्सुर्भगवन्तमेव परमप्राप्यं मन्वानः॥ १६॥**

**अ० टी०**—एवं दुष्टकर्मकर्त्तारो न भजन्तीत्युक्तं तर्हि के भजन्तीत्याकाङ्क्षायामाह—**चतुर्विधा इति**। हे अर्जुन! सावधानतया श्रोतव्यत्वेन संबोध्य! सुकृतिनः पूर्वजन्मसञ्चितपुण्यराशयो जनाः मां भजन्ति। अन्यथा भजने प्रवृत्तिरेव न स्यात्। अतएव 'नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति श्रीभागवत

उक्तम् । ते च चतुर्विधाः । चतुर्विधत्वं प्रकटयति—आर्त इति । आर्तः संसारक्लेशादियुक्तः । तन्निवृत्त्यर्थं धर्मरूपेण मां भजति । जिज्ञासुः कामात्मकमत्स्वरूपज्ञानेच्छुः कामरूपेण मां भजति । अर्थार्थी मत्सेवौपयिकसाधनसंपत्त्यर्थरूपेण मां भजति । च पुनः । ज्ञानी शास्त्रार्थज्ञानवान् मोक्षरूपेण मां भजति । भरतर्षभेतिसंबोधनं सत्कुलोत्पन्नानामेव भजनप्रवृत्तिर्भवतीति ज्ञापनार्थम् ॥ १६ ॥

**नी० टी०**—ये तु सत्यपि देहाद्यध्यासे मत्तो बिभ्यति मत्प्रीत्यर्थं सुकृतमेवाचरंति तेऽपि चतुर्विधा न केवलं सर्वे मदेककामा इत्याशयेनाह—**चतुर्विधा इति** । आर्त्तः पीडितः पीडापरिहारार्थी । जिज्ञासुः स्वाज्ञाननाशार्थी । अर्थार्थी धनाद्यर्थी । ज्ञानी चेति चतुर्विधा मां भजंते ॥ १६ ॥

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥**

**शां० भा०—तेषामिति। तेषां चतुर्णां मध्ये ज्ञानी तत्त्ववित्तत्त्ववित्त्वान्नित्ययुक्तो भवत्येकभक्तिश्चान्यस्य भजनीयस्यादर्शनादतः स एकभक्तिर्विशिष्यते विशेषमाधिक्यमापद्यतेऽतिरिच्यत इत्यर्थः । प्रियो हि यस्मादहमात्मा ज्ञानिनोऽतस्तस्याहमत्यर्थं प्रियः । प्रसिद्धं हि लोक आत्मा प्रियो भवतीति । तस्माज्ज्ञानिन आत्मत्वाद्वासुदेवः प्रियो भवतीत्यर्थः । स च ज्ञानी मम वासुदेवस्याऽऽत्मैवेति ममात्यर्थं प्रियः ॥ १७ ॥**

**शां० आ०**—चतुर्विधानां तेषां सुकृतिनां भगवदभिमुखानां तुल्यत्वमाशङ्क्याऽऽह—**तेषामिति** । तस्य विशिष्यमाणत्वे हेतुमाह—**प्रियो हीति** । नित्ययुक्तत्वं भगवत्यात्मनि सदा समाहितचेतस्त्वम् । असारे संसारे भगवानेव सारः सोऽहमस्मीत्येकस्मिन्नद्वितीये स्वस्मादत्यन्तमभिन्ने भगवति भक्तिः स्नेहविशेषोऽस्येत्येकभक्तिः । तस्याऽऽधिक्ये हेतुं विवृणोति—**प्रियो हीत्यादिना** । भगवतो ज्ञानिनश्च परस्परं प्रेमास्पदत्वे प्रसिद्धिं प्रमाणयति—**प्रसिद्धं हीति** । आत्मनो ज्ञानिनं प्रति प्रियत्वेऽपि भगवतो वासुदेवस्य कथं तं प्रति प्रियत्वमित्याशङ्क्याऽऽह—**तस्मादिति** । अहं ज्ञानिनो निरुपाधिकप्रेमास्पदं परमपुरुषार्थत्वेनाऽऽत्मत्वेन च गृहीतत्वादित्यर्थः । ज्ञानिनोऽपि भगवन्तं प्रति प्रियत्वं प्रकटयति—**स चेति** ॥ १७ ॥

**आ० भा०—एकस्मिन्नेव भक्तिरित्येकभक्तिः । तच्चोक्तं गारुडे । 'मय्येव भक्तिर्नान्यत्र एकभक्तिः स उच्यते' इति ॥ १७ ॥**

**आ० ज०**—एका भक्तिर्यस्येति विग्रहे भक्तिशब्दस्य प्रियादित्वात्तस्मिन्परतः पूर्वपदस्य पुंवद्भावो न सिध्यतीत्यालोच्याह—**एकस्मिन्नेवेति** । अस्येत्यध्याहार्यम् । तथाऽपि वैयधिकरण्यात् बहुव्रीहिर्न सिद्ध्यतीति चेत् न आगमसिद्धत्वाच्चेत्याह—**तच्चेति** । यस्येत्युपस्कर्तव्यम् ॥ १७ ॥

**रा० भा०—तेषां ज्ञानी विशिष्यते कुतः नित्ययुक्त एकभक्तिरिति च तस्य हि मदेकप्राप्यस्य मया योगो नित्यः इतरयोस्तु यावत्स्वाभिलषितप्राप्ति मया योगः तथा ज्ञानिनो मय्येकस्मिन्नेव भक्तिः इतरयोस्तु स्वाभिलषिते तत्साधनत्वेन मयि च अतः स एव विशिष्यते । किं च प्रियो हि ज्ञानिनोऽत्यर्थमहम् अत्रात्यर्थशब्दो अभिधेयवचनः ज्ञानिनोऽहं यथा प्रियस्तथा मया सर्वज्ञेन सर्वशक्तिनाऽप्यभिधातुं न शक्यत इत्यर्थः । प्रियत्वस्येयत्तारहितत्वात् यथा ज्ञानिनामग्रेसरस्य प्रह्लादस्य 'स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः । न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः' इति सोऽपि तथैव मम प्रियः ॥ १७ ॥**

**अ० टी०**—एवं चतुर्विधानुक्त्वैतेषु ज्ञानी मोक्षार्थं भजनकर्त्ता उत्तम इत्याह—**तेषामिति** । तेषां पूर्वोक्तचतुर्विधानां मध्ये ज्ञानी नित्ययुक्तो नित्यं मया युक्त इत्यर्थः । एतेभ्यश्चतुर्विधेभ्योऽपि एकभक्ति-

रनन्यत्वेनैकान्तभजनकृत् दासवत् स विशिष्यते उत्तमत्वेनेत्यर्थः । तस्य विशेष्यधर्ममाह—**प्रिय इति ।** हीति निश्चयेन ज्ञानिनः सकाशात् अत्यर्थं सर्वभावेन अहमेव तस्य प्रियः । अतएव श्रीभागवते भगवद्वाक्यं 'मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि'इति ॥ १७ ॥

नी० टी०—किं सर्वेऽपि समा एते सुकृतिन इति साधारण्येन विशेषणादत आह—**तेषामिति** । तेषां मध्ये ज्ञानी विशिष्यते यतो नित्ययुक्तः आर्त्तादयो हि कामिनः कामपूर्त्तौ न मद्भजने युक्ता भवंति अयं तु नित्ययुक्त एकभक्तिश्चैकभावेन भजनं करोति । तथा हि । आर्त्ता रोगिणः सूर्यं भजंते । जिज्ञासवः सरस्वतीं । अर्थार्थिनः कुबेरादीनिति तेषां तत्तत्कामार्थित्वेनानेकभक्तित्वं दृश्यते । तस्य नित्ययुक्तत्वे एकभक्तित्वे च हेतुः हि यतः ज्ञानिनोऽहमत्यर्थं प्रियः आत्मत्वादेव आत्मा च प्रियः निरुपाधिप्रेमगोचरत्वात् । "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादांतरं यदयमात्मा"इति श्रुतेश्च । स च ज्ञानी मम प्रियो भक्तानां दुर्लभत्वादिति भावः ॥ १७ ॥

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥**

**शां० भा०—न तर्ह्यार्तादयस्त्रयो वासुदेवस्य प्रियाः । न, किं तर्हि—उदारा उत्कृष्टाः सर्व एवैते त्रयोऽपि मम प्रिया एवेत्यर्थः । न हि कश्चिन्मद्भक्तो मम वासुदेवस्याप्रियो भवति ज्ञानी त्वत्यर्थं प्रियो भवतीति विशेषः । तत्कस्मादित्याह ज्ञानी त्वात्मैव नान्यो मत्त इति मे मम मतं निश्चयः । आस्थित आरोढुं प्रवृत्तः स ज्ञानी हि यस्मादहमेव भगवान्वासुदेवो नान्योऽस्मीत्येवं युक्तात्मा समाहितचित्तः सन्मामेव परं ब्रह्म गन्तव्यमनुत्तमां गतिं गन्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥**

शां० आ०—ज्ञानी चेदत्यर्थमीश्वरस्य प्रियो भवति तर्हि विशेषणसामर्थ्यादितरेषामप्रियत्वं प्राप्तमिति शङ्कते—**न तर्हीति ।** तेषां भगवन्तं प्रति प्रियत्वमत्र विवक्षितमित्याह—**नेति ।** अत्यर्थमिति विशेषणस्य तर्हि किं प्रयोजनमिति पृच्छति—**किं तर्हीति ।** सर्वेषां भगवदभिमुखत्वादुत्कर्षेऽपि ज्ञानिनि तदतिरेकमङ्गीकृत्य विशेषणमित्याह—**उदारा इति ।** किं तत्र प्रमाणमित्याशङ्क्येश्वरज्ञानमित्याह—**मे मतमिति ।** ज्ञानी त्वात्मैवेत्यत्र हेतुमाह—**आस्थित इति ।** सर्वशब्दस्य ज्ञानिव्यतिरिक्तविषयत्वमाह—**त्रयोऽपीति ।** ज्ञानिव्यतिरिक्तानां भगवदभिमुखत्वेऽपि ज्ञानाभावापराधान्न भगवत्प्रीतिविषयतेत्याशङ्क्याऽऽह—**न हीति ।** कस्तर्हि ज्ञानवति विशेषस्तत्राऽऽह—**ज्ञानी त्विति ।** तमेव विशेषं प्रश्नपूर्वकं प्रकटयति—**तत्कस्मादित्यादिना ।** सर्वमात्मानं पश्यतोऽपि तस्य तव कथं यथोक्तो निश्चयः स्यादित्याशङ्क्याऽऽस्थित इत्येतद्व्याकरोति—**आरोढुमिति ।** आरोहे हेतुं सूचयति—**स ज्ञानीति ।** आरोढुं प्रवृत्तत्वमेव स्फुटयति—**मामेवेति** ॥ १८ ॥

**आ० भा०—॥ १८ ॥**

आ० ज०— ॥ १८ ॥

**रा० भा०—सर्व एवैते मामेवोपासत इत्युदाराः वदान्याः ये मत्तो यत्किंचिदपि गृह्णन्ति ते हि मम सर्वस्वदायिनः ज्ञानी त्वात्मैव मे मतं तदायत्तधारणोऽहमिति मन्ये । कस्मादेवं यस्मादयं मया विनात्मधारणासंभावनया मामेवानुत्तमं प्राप्यमास्थितः अतस्तेन विना ममाप्यात्मधारणं न संभवति ततो ममाप्यात्मा हि सः ॥ १८ ॥**

अ० टी०—नन्वेषु चतुर्विधेषु ज्ञानी उत्तम उक्तस्ततोऽपि भक्तस्तदा पूर्वोक्तानां किं फलमित्यपेक्षायामाह—उदारा इति । एते सर्व एव स्वार्थपरित्यागेन मदर्थधर्मादित्रयभजनकर्त्तारः उदाराः मोक्षाधि-

कारिणः। तु पुनः। ज्ञानी आत्मैव मदात्मक एव मुक्त एवेत्यर्थ इति मे मतम्। हीति निश्चयेन अनन्यमनसा सर्वत्यागेन। अनुत्तमां, न विद्यते उत्तमा यस्यास्तादृशीं गतिं प्राप्य स्थानं ज्ञात्वा मामेवास्थितः स युक्तात्मा मत्संयोगयुक्तो दास्यादिभावेनेत्यर्थः। स उत्तम इतिभावः ॥ १८ ॥

नी० टी०—उदारा इति सर्वेऽप्येते उदारा उत्कृष्टा एव। ज्ञानी तु ममात्मैवेति मम मतं निश्चितं हि यतः स युक्तात्मा अहमेव भगवान्वासुदेव इत्यभेदेन मयि समाहितचित्तो मामेवानुत्तमां श्रेष्ठां गतिमास्थितो नतु मत्तोऽन्यदारोग्यादिकं कामयानो मद्भक्तिं करोति। किं तर्हि मत्प्राप्त्यर्थमेव मां भजत इत्यर्थः ॥ १८ ॥

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

**शां० भा०—ज्ञानी पुनरपि स्तूयते—बहूनां जन्मनां ज्ञानार्थसंस्काराश्रयाणामन्ते समाप्तौ ज्ञानवान्प्राप्तपरिपाकज्ञानो मां वासुदेवं प्रत्यगात्मानं प्रत्यक्षतः प्रपद्यते। कथं, वासुदेवः सर्वमिति। य एवं सर्वात्मानं मां प्रतिपद्यते स महात्मा न तत्समोऽन्योऽस्त्यधिको वा। अतः सुदुर्लभो मनुष्याणां सहस्रेष्वित्युक्तम् ॥ १९ ॥**

शां० भा०—उत्तरश्लोकस्य गतार्थत्वं परिहरति—**ज्ञानीति**। ज्ञानार्थसंस्कारो वासना तत्तज्जन्मनि पुण्यकर्मानुष्ठानजनिता बुद्धिशुद्धिस्तदाश्रयाणां तद्वतामनन्तानां जन्मनामिति यावत्। ज्ञानवत्त्वं प्राक्तनेष्वपि जन्मसु संभावितमित्याशङ्क्याऽऽह—**प्राप्तेति**। ज्ञानवतो भगवत्प्रतिपत्तिं प्रश्नद्वारा विवृणोति—**कथमिति**। यथोक्तज्ञानस्य तद्वतश्च दुर्लभत्वं सूचयति—**य एवमिति**। महत्सर्वोत्कृष्टमात्मशब्दितं वैभवमस्येति महात्मा। महात्मत्वे फलितमाह—**अत इति**। तत्र वाक्योपक्रमानुकूल्यं कथयति—**मनुष्याणामिति** ॥ १९ ॥

**आ० भा०—बहूनां जन्मनामंते ज्ञानवान्भवति। तच्चोक्तं ब्राह्मे 'बहुभिर्जन्मभिर्ज्ञात्वा ततो मां प्रतिपद्यते' इति ॥ १९ ॥**

आ० ज०—बहूनां जन्मनामित्यत्र ज्ञानोत्पत्त्यनंतरं भगवत्प्रतिपत्तौ बहुजन्मव्यवधानमुच्यत इति निरासार्थमाह—**बहूनामिति**। प्रतीतमेव किं न स्यादित्यत आह—**तच्चेति**। ततस्तदैव ॥ १९ ॥

**रा० भा०—नाल्पसंख्यासंख्यातानां पुण्यजन्मना फलमिदं यन्मच्छेषतैकरसात्मयाथात्म्यज्ञानपूर्वकं मत्प्रपदनम् अपि तु बहूनां जन्मनां पुण्यजन्मनाम् अन्तेऽवसाने वासुदेवशेषतैकरसोऽहं तदायत्तस्वरूपस्थितिप्रवृत्तिश्च स चासंख्येयैः कल्याणगुणैः परतर इति ज्ञानवान्भूत्वा वासुदेव एव मम परमप्राप्यं प्रापकं चान्यदपि यन्मनोरथवर्त्ति स एव मम तत्सर्वमिति मां यो प्रपद्यते मामुपास्ते स महात्मा महामनाः सुदुर्लभः दुर्लभतरो लोके वासुदेवः सर्वमित्यस्यायमेवार्थः। 'प्रियो हि ज्ञानिनोत्यर्थमहम्, आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्' इति प्रक्रमात् ज्ञानवांश्चायमुक्तलक्षण एव अस्यैव पूर्वोक्तज्ञानित्वात् 'भूमिरापः' इत्यारभ्य 'अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥ जीवभूताम्' इति हि चेतनाचेतनस्य प्रकृतिद्वयस्य परमपुरुषशेषतैकरसतोक्ता 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं नान्यत् किंचिदस्ति धनंजय' इत्यारभ्य 'ये चैव सात्त्विका भावा राजसास्तामसाश्च ये। मत्त एवेति तान्विद्धि नत्वहं तेषु ते मयि' इति प्रकृतिद्वयस्य कार्यकारणोभयावस्थस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तित्वं परमपुरुषस्य च सर्वैः प्रकारैः सर्वस्मात्परतरत्वमुक्तम् अतः स एवात्र ज्ञानीत्युच्यते ॥ १९ ॥**

**अ० टी०**—ये पूर्वोक्तास्ते कथं मोक्षमनुभवन्तीत्याकाङ्क्षायामाह—**बहूनामिति**। बहूनां जन्मनां धर्मादित्रययुक्तानाम् अन्ते अन्तिमजन्मनि ज्ञानवान् भवति। ततो मां प्रपद्यते मुक्तो भवतीत्यर्थः। यस्तु भक्त उक्तः स तु दुर्लभ इत्याह—**वासुदेव इति**। सर्वमैहिकं पारलौकिकं च वासुदेवः स महात्मा महान् मदर्थमेव अहमेव वा आत्मा तादृशः स दुर्लभोऽप्राप्य इत्यर्थः। यद्वा। दुःखेन क्लेशेन भगवानिव लभ्य इतिभावः॥ १९॥

**नी० टी०**—किंच वासुदेवः सर्वमिति ज्ञानवान् यो बहूनां जन्मनामंते चरमजन्मनि मां प्रपद्यते सम्यग्दर्शनेनापरोक्षीकरोति स महात्मा ब्रह्मभूतः सुदुर्लभ इति योजना॥ १९॥

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः॥**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया॥ २०॥**

**शां० भा०—आत्मैव सर्वं वासुदेव इत्येवमप्रतिपत्तौ कारणमुच्यते—कामैस्तैस्तैः पुत्रपशुस्वर्गादिविषयैर्हृतज्ञाना अपहृतविवेकविज्ञानाः। प्रपद्यन्तेऽन्यदेवताः प्राप्नुवन्ति वासुदेवादात्मनोऽन्या देवतास्तं तं नियमं देवताराधने प्रसिद्धो यो यो नियमस्तं तमास्थायाऽऽश्रित्य प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण नियता नियमिताः स्वयाऽऽत्मीयया॥ २०॥**

**शां० आ०**—किमिति तर्हि सर्वेषां प्रत्यग्भूते भगवति यथोक्तज्ञानं नोदेतीत्याशङ्क्य न मामित्यत्रोक्तं हृदि निधाय ज्ञानानुदये हेत्वन्तरमाह—**आत्मैवेति**। कामैर्नानाविधैरपहृतविवेकविज्ञानस्य देवतान्तरनिष्ठत्वमेव प्रत्यग्भूतपरदेवताप्रतिपत्त्यभावे कारणमित्याह—**कामैरिति**। देवतान्तरनिष्ठत्वे हेतुमाह—**तं तमिति**। प्रसिद्धो नियमो जपोपवासप्रदक्षिणानमस्कारादिः। नियमविशेषाश्रयणे कारणमाह—**प्रकृत्येति**॥ २०॥

**आ० भा०—प्रकृत्या स्वभावेन। 'स्वभावः प्रकृतिश्चैव संस्कारो वासनेति च' इत्यभिधानात्॥ २०॥**

**आ० ज०**—ननु मूलप्रकृतेः सर्वत्रैकत्वात्कथं स्वयेति प्रातिस्विकत्वमुच्यत इत्यत आह—**प्रकृत्येति**। स्वभाव एवेत्येवशब्दसंबंधः॥ २०॥

**रा० भा०—तस्य ज्ञानिनो दुर्लभत्वमेवोपपादयति। सर्व एव हि लौकिकाः पुरुषाः स्वया प्रकृत्या पापवासनया गुणमयभावविषयया नियताः नित्यान्विताास्तैस्तैः स्ववासनानुरूपैर्गुणमयैरेव कामैरिच्छाविषयभूतैर्हृतमत्स्वरूपविषयज्ञानास्तत्तत्कामसिद्ध्यर्थमन्यदेवताः मद्व्यतिरिक्ताः केवलेन्द्रादिदेवतास्तं तं नियममास्थाय तत्तद्देवताविशेषमात्रप्रीणनायासाधारणं नियममास्थाय प्रपद्यन्ते ता एवाश्रित्य अर्चयन्ते॥ २०॥**

**अ० टी०**—स कथं दुर्लभ इत्यत आह—**कामैरिति**। तैस्तैः कामैः पूर्वोक्तैरार्तत्वादित्रिरूपैर्हृतज्ञानाः सन्तोऽन्यदेवताः क्षुद्राः शिवादयो भूतप्रेतादयश्च स्वया प्रकृत्या कृत्वा तं तं नियमं देवताराधने उपवासादिलक्षणमास्थाय प्रपद्यन्ते। अत्रायमर्थः। कामनार्थं मत्सेवायां प्रवृत्ता न तु मोक्षार्थं भक्त्यर्थं वा। अहं तु मोक्षभक्त्यननुरूपं कामितफलं न ददामि तत्फलमननुभूय तैः कामैः हृतं मत्स्वरूपज्ञानं येषां तादृशाः सन्तः स्वया प्रकृत्या नियताः प्रकृत्यंशत्वाच्छीघ्रं तत्फलदा अन्यदेवता भजन्ति। अतएव 'यो यदंशः स तं भजेदित्युक्तम्'॥ २०॥

**नी० टी०**—अन्ये तु तैस्तैः कामैः पुत्रपश्वादिविषयैः हृतज्ञानाः हृतं दूरीकृतं ज्ञानं विवेको येषां ते अन्यदेवताः अहमेतस्या आराधनेनेदं फलमवाप्नवानीति भेदबुद्ध्या प्रपद्यंते इंद्रादीन् तं तं नियमं चतुर्दश्युपवासादिकमास्थाय स्वया प्रकृत्या वक्ष्यमाणविधया दैव्या असुर्या वा नियताः निगृहीताः ॥ २० ॥

**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥**

**शां० भा०**—तेषां च कामिनाम्—यो यः कामी यां यां देवतातनुं श्रद्धया संयुक्तो भक्तश्च सन्नर्चितुं पूजयितुमिच्छति तस्य तस्य कामिनोऽचलां स्थिरां श्रद्धां तामेव विदधामि स्थिरी करोमि ययैव पूर्वं प्रवृत्तः स्वभावतो यो यां देवतातनुं श्रद्धयाऽर्चितुमिच्छतीति ॥ २१ ॥

**शां० आ०**—तत्तद्देवताप्रसादात्कामिनामपि सर्वेश्वरे सर्वात्मके वासुदेवे क्रमेण भक्तिर्भविष्यतीत्याशङ्क्याऽऽह—**तेषां चेति** । स्वभावतो जन्मान्तरीयसंस्कारवशादित्यर्थः । भगवद्विहितया स्थिरया श्रद्धया संस्काराधीनया देवताविशेषमाराधयतोऽपि भगवदनुग्रहादेव फलप्राप्तिरित्याह—**यो यो यामिति** ॥ २१ ॥

**आ० भा०**—यांयां ब्रह्मादिरूपां तनुम् । उक्तं च नारदीये 'अंतो ब्रह्मादिभक्तानां मद्भक्तानामनंतता' इति । 'मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः' इत्यादेः परिहारसंदर्भाच्च । मोक्षधर्मेषु 'अवतारे महाविष्णोर्भक्तः कुत्र च मुच्यते' इत्यादेश्च ब्रह्मवैवर्ते ॥ २१ ॥

**आ० ज०**—रामकृष्णादिरूपां भगवत्तनुमिति प्रतीतिनिरासायाह—**यां यामिति** । कुत एतत् । अंतवत्तु फलं तेषामिति तद्भक्तानामंतवत्फलवचनात् । तस्य च ब्रह्मादिग्रहणे संभवाद्भगवद्ग्रहणे चासंभवादिति भावेनाह—**उक्तं चेति** । फलस्येतिशेषः । गम्यत इतिगतिः । इत्यादेः प्रश्नस्य परिहाररूपवाक्यसंदर्भाच्च बहुलादनुदाहरणमिति भावः । अनंतफलत्वं मूलरूपभक्तानामस्तु अवतारतनुभक्तानामंतवत्फलांगीकारे को विरोध इत्यत आह—**अवतारइति** । कुत्र चावतारे ॥ २१ ॥

**रा० भा०**—ता अपि देवताः मदीयास्तनवः "य आदित्ये तिष्ठन्यमादित्यो न वेद । यस्यादित्यः शरीरम्" इत्यादिश्रुतिभिः प्रतिपादिताः मदीयास्तनवः इत्यजानन्नपि यो यो यां यां मदीयामिन्द्रादिकां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति तस्य तस्याजानतोऽपि मत्तनुविषयैषा श्रद्धेत्यहमेवानुसंधाय तामेवाचलां निर्विघ्नां विदधामि अहम् ॥ २१ ॥

**अ० टी०**—अतोऽहमपि तान् स्वरूपरसदानायोग्यांस्तद्देवताभजने दृढान् करोमीत्याह—**यो य इति** । यो यो भक्तो यां यां तनुं यां यां देवतामूर्तिं श्रद्धया स्वकामसिद्ध्यर्थं शुद्धान्तःकरणेन अर्चितुमिच्छति तस्य भक्तस्य तामेव श्रद्धामचलां शास्त्रज्ञानादिना वा चालयितुमयोग्यामहमेव विदधामि करोमि पोषयामि चेत्यर्थः ॥ २१ ॥

**नी० टी०**—किंच यो यो भक्तः सात्विको राजसस्तामसो वा यां यां तनुं तादृशीमेव देवादिरूपां यक्षरक्षोरूपां भूतप्रेतरूपां वां मूर्तिं श्रद्धया तादृश्यैवार्चितुमिच्छति तस्य तस्य भक्तस्य तामेव श्रद्धां सात्त्विकीं राजसीं तामसीं वाऽहं सर्वेश्वरोऽचलां विदधामि ॥ २१ ॥

**स तया श्रद्धया युक्तस्तस्या राधनमीहते ॥**
**लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥**

**शां० भा०—**स तयेति । स तया मद्विहितया श्रद्धया युक्तः संस्तस्या देवतातन्वा राधनमाराधनमीहते चेष्टते लभते च ततस्तस्या आराधिताया देवतातन्वाः कामानीप्सितान्मयैव परमेश्वरेण सर्वज्ञेन कर्मफलविभागज्ञतया विहितान्निर्मितांस्तान्हि यस्मात्ते भगवता विहिताः कामास्तस्मात्तानवश्यं लभत इत्यर्थः । हितानिति पदच्छेदे हितत्वं कामानामुपचरितं कल्प्यं न हि कामा हिताः कस्यचित् ॥ २२ ॥

**शां० आ०—**ईहते निर्वर्तयतीत्यर्थः । आराधितदेवताप्रसादात्फलप्राप्तौ किमीश्वरेणेत्याशङ्क्य तस्य सर्वज्ञस्य कर्मफलविभागाभिज्ञस्य तत्तद्देवताधिष्ठातृत्वात्तस्यैव फलदातृत्वमित्याह—**सर्वज्ञेनेति** । "एको बहूनां यो विदधाति कामान्" इत्यादिश्रुतिमाश्रित्य हि तानिति पदद्वयं व्याचष्टे—**यस्मादिति** । हितानित्येकं पदमिति पक्षं प्रत्याह—**हितानिति** । मुख्यत्वसंभवे किमित्यौपचारिकत्वमित्याशङ्क्याऽऽह—**न हीति** ॥ २२ ॥

**आ० भा०—**॥ २२ ॥

**आ० ज०—**॥ २२ ॥

**रा० भा०—**स तया निर्विघ्नया श्रद्धया युक्तस्तस्येन्द्रादेराराधनं प्रतीहते चेष्टते ततो मत्तनुभूतेन्द्रादिदेवताराधनात्तानेव हि स्वाभिलषितान् कामान् मयैव विहितान् लभते यद्यप्याराधनकाले इन्द्रादयो मदीयास्तनवस्तत एव तदर्चनं च मदाराधनमिति न जानाति तथापि तस्य वस्तुतो मदाराधनत्वादाराधकाभिलषितमहमेव विदधामि ॥ २२ ॥

**अ० टी०—**ततः स मत्कृतश्रद्धया तस्याऽऽराधनं करोतीत्याह—**स तयेति** । स तया मत्कृतया श्रद्धया युक्तस्तस्या मूर्तेराराधनमीहते करोति । ततः श्रद्धातः स्वशुद्धान्तःकरणतस्तान् स्वमनोरथरूपान् कामान् मयैव विहितान् निर्मितान्, अन्यथा मदाज्ञां विना देवादीनां न सामर्थ्यमतो मयैव निश्चयेन विहितांल्लँभते प्राप्नोतीत्यर्थः ॥ २२ ॥

**नी० टी०—**ततश्च स तया श्रद्धया युक्तः सन् तस्या मूर्तेराराधनं ससाधनं वशीकरणमीहते इच्छति ततश्च कामान्विषयान् लभते मयैव विहितानाज्ञापितान् हितान् ईप्सितान् एतेन सर्वासां देवतानां स्वाज्ञावशवर्त्तित्वं दर्शितम् ॥ २२ ॥

**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥**
**देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥**

**शां० भा०—**यस्मादन्तवत्साधनव्यापारा अविवेकिनः कामिनश्च तेऽतः—अन्तवद्विनाशि तु फलं तेषां तद्भवत्यल्पमेधसामल्पप्रज्ञानां देवान्देवयजो यान्ति देवान्यजन्तीति देवयजस्ते देवान्यान्ति । मद्भक्ता यान्ति मामपि । एवं समानेऽप्यायासे मामेव न प्रपद्यन्तेऽनन्तफलायाहो खलु कष्टं वर्तन्त इत्यनुक्रोशं दर्शयति भगवान् ॥ २३ ॥

**शां० आ०—**प्रेक्षापूर्वकारिणि कामानां हितत्वाभावे हेतुमाह—**यस्मादिति** । किंच ये कामिनस्ते न विवेकिनस्ततश्चाविवेकपूर्वकत्वात्कामानां कुतो हितत्वाशङ्केत्याह—**अविवेकिन इति** । कामानामनन्तफलत्वेन हितत्वमाशङ्क्याऽऽह—**अत इति** । तेषामविवेकपूर्वकत्वमतःशब्दार्थः । तुशब्दोऽवधारणार्थः। कामफलस्य विनाशित्वे किमिति कामनिष्ठत्वं जन्तूनामित्याशङ्क्य प्रज्ञामान्द्यादित्याह—**अल्पेति** । किं तर्हि साधनमनन्तफलायेत्याशङ्क्य भगवद्भक्तिरित्याह—**मद्भक्ता इति** । अक्षरार्थमुक्त्वा श्लोकस्य तात्पर्यार्थमाह—**एवमिति** । देवताप्राप्तौ चेति शेषः । मामेवेत्यादौ देवताविशेषं प्रपद्यन्तेऽन्तवत्फलायेति वक्तव्यम् । उक्तवैपरीत्ये कारणमविवेकातिरिक्तं नास्तीत्यभिप्रेत्याऽऽह—**अहो खल्विति** ॥ २३ ॥

**आ० भा०**—॥ २३ ॥

आ० ज०—॥ २३ ॥

**रा० भा०**—तेषामल्पमेधसामल्पबुद्धीनामिन्द्रादिमात्रयाजिनां तदाराधनफलं स्वल्पमन्तवच्च भवति कुतः देवान्देवयजो यान्ति यत इन्द्रादीन् देवांस्तद्याजिनो यान्ति इन्द्रादयो हि परिच्छिन्न-भोगाः परिमितकालवर्तिनश्च ततस्तत्सायुज्यं प्राप्ताः तैः सह प्रच्यवन्ते मद्भक्ता अपि तेषामेव कर्मणां मदाराधनरूपतां ज्ञात्वा परिच्छिन्नफलसङ्गं त्यक्त्वा मत्प्रीणनैकप्रयोजनाः मामेव प्राप्नुवन्ति न च पुनर्निवर्त्तन्ते 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति वक्ष्यते ॥ २३ ॥

**अ० टी०**—तर्हि त्वन्निर्मितफलाऽऽप्त्या चोत्तमत्वमेव तत्फलस्य कथं नेत्यत आह—**अन्तवत्त्विति**। तु पुनः। मन्निर्मितमपि फलं तेषाम् अल्पमतिमतां भक्तिं विहाय कामपरत्वात्। अन्तवत् विनाशयुक्तं भवतीत्यर्थः। तच्छब्देन तद्बुद्ध्यनुसारेण मया तत्फलं विधीयत इतिव्यज्यते। ननु देवा अपि त्वदंशास्तद्भजने कथं नोत्तमफलमित्यत आह—**देवानिति**। देवयजः पूर्वोक्तप्रकारेण स्वकामितफलाऽऽप्त्यर्थं देवभजनकर्त्तारः। अथवा देवत्वेन तद्भजनकर्त्तारो न तु मदंशत्वेन स्फुरितसन्माना अतो देवान् यान्ति। मत्सायुज्यकामाभावे प्राप्नुवन्ति। कामनायां तु तदेव प्राप्नुवन्तीत्यर्थः। अन्यदेवेषु देवत्वेन भजनकर्त्तारस्तत्सायुज्यमेव प्राप्नुवन्ति। कामनायां तु तदपि न प्राप्नुवन्त्यतः कामनयापि मद्भजनमुत्तममित्याह—**मद्भक्ता इति**। मद्भक्ताः मद्भजनकर्तारो मामपि यान्ति। कामनयाऽपि प्रवृत्ताः पूर्वोक्तप्रकारेण। अतएव 'उदाराः सर्व एवैत' इति पूर्वमुक्तम्। मामपि प्राप्नुवन्ति। अतोऽग्रे तेषां मोक्षः। अक्षरसायुज्यमपि प्राप्नुवन्ति। अतएव हरिवंशे 'अपत्यं द्रविणं दारा हारा हर्म्यं हया गजाः। सुखानि स्वर्गमोक्षौ च न दूरे हरिभक्तितः' इति। इदमेवापिशब्देन व्यज्यते ॥ २३ ॥

**नी० टी०**—अल्पमेधसां। "अथ यत्रान्यत्पश्यत्यन्यच्छृणोति अन्यन्मनुतेऽन्यद्विजानाति तदल्पम्" इति श्रुतेः द्वैतमल्पं तत्रैव मेधा येषां ते बाह्यार्थाभिलाषिणामित्यर्थः। तेषां तत्फलमंतवत् सर्वस्य बाह्यार्थस्यांतवत्त्वादेव। तुशब्दोऽभेदेनेश्वरेभक्तेभ्यो विभेदार्थः यतो देवयजो देवान्यजंते इति देवयजस्ते देवानंतयुक्तानेव यांति। एवं यक्षरक्षोभक्ता यक्षादीनेव यांति भूतप्रेतभक्ताश्च भूतादीनेवेत्यपि द्रष्टव्यं। मद्भक्तास्तु मामेवानंतं यांति अतस्तेऽनंतफलभाज इत्यर्थः ॥ २३ ॥

## अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ॥
## परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥

**शां० भा०**—किंनिमित्तं मामेव न प्रपद्यन्त इत्युच्यते—अव्यक्तमप्रकाशं व्यक्तिमापन्नं प्रकाशं गतमिदानीं मन्यन्ते मां नित्यप्रसिद्धमीश्वरमपि सन्तमबुद्धयोऽविवेकिनः परं भावं परमात्मस्वरूपमजानन्तोऽविवेकिनो ममाव्ययं व्ययरहितमनुत्तमं निरतिशयं मदीयं भावमजानन्तो मन्यन्त इत्यर्थः ॥ २४ ॥

**शां० आ०**—भगवद्भजनस्योत्तमफलत्वेऽपि प्राणिनां प्रायेण तन्निष्ठलाभावे प्रश्नपूर्वकं निमित्तं निवेदयति—**किंनिमित्तमित्यादिना**। अप्रकाशं शरीरग्रहणात्पूर्वमिति शेषः। इदानीं लीलाविग्रहपरिग्रहावस्थायामित्यर्थः। प्रकाशस्य तर्हि कादाचित्कत्वं भगवति प्राप्तं नेत्याह—**नित्येति**। कथं तर्हि भगवन्तमागन्तुकप्रकाशं मन्यन्ते तत्राबुद्धय इत्युत्तरं तद्विवृणोति—**परमिति**। परमनुत्तममिति विशेषणद्वयं सोपाधिकनिरुपाधिकभावार्थम् ॥ २४ ॥

**आ० भा०**—को विशेषस्तवान्येभ्य इत्यत आह—**अव्यक्तमिति**। कार्यदेहादिवर्जितम्। तद्वानिव प्रतीयस इत्यत आह—**व्यक्तिमापन्नमिति**। कार्यदेहाद्यापन्नम्। तच्चोक्तम्। 'सदसतः परम्। न तस्य कार्यम्। अपाणिपादः। आनंददेहं पुरुषं मन्यंते गौणदैहिकम्'इत्यादौ। भावं याथार्थ्यम्। तथाऽब्रवीत्। 'याथातथ्यमजानंतः परं तस्य विमोहिता'इत्यादि ॥ २४ ॥

**आ० ज०**—अव्यक्तमिति श्लोकस्य प्रकृते न साक्षात्संगत्यभावात् तं संगमयितुमाह—**क इति**। अन्येभ्यो ब्रह्मादिभ्यः। येन तान् प्राप्तानामंतवत्फलत्वेऽपि त्वां प्राप्तानामनंतफलतेति शंकाशेषः। कथमनेनोक्तशंकापरिहार इत्यत आह—**कार्येति**। अनेन यथाश्रुतं पदं पठित्वा व्याख्यातम्। वस्तुतस्त्वव्यक्तं मामित्यनुवादादव्यक्तोऽहमिति यत्सिद्धं तस्येदं व्याख्यानमिति ज्ञातव्यम् इदानीमुत्तरस्य संगतिमाह—**तद्वानिति**। कार्यदेहादिमान् इवेति मृदूक्तिः वस्तुतस्त्वेवेति। अतो न तद्वर्जितइति शेषः। प्रकृतोपयोगितया व्याचष्टे—**कार्येति**। भगवतः कार्यदेहादिवर्जितत्वं तद्वत्ताप्रतीतिश्चाज्ञानमूलेत्येतत्कुतो येन वाक्यद्वयमुक्तार्थं स्यादित्यतोऽर्थद्वये क्रमेण प्रमाणान्याह—**तच्चेति**। कार्यात्कारणाच्च। इदमपरं रूपं परं तु रूपमजानंत इति प्रतीतिनिरासार्थमाह—**भावमिति**। याथार्थ्यं प्रमाणाव्यभिचरितस्वरूपम्। अत एव परम्। कुतोऽयमर्थः समाख्यानादित्याह—**तथेति**। यद्यप्ययमर्थस्त्रिभिरित्यत्रोक्तस्तथापि प्रसंगात्पुनरुक्त इत्यदोषः ॥ २४ ॥

**रा० भा०**—इतरे तु सर्वसमाश्रयणीयत्वाय मम मनुष्यादिष्ववतारमप्यकिंचित्करं कुर्वन्तीत्याह—सर्वैः कर्मभिराराध्योऽहं सर्वेश्वरः वाङ्मनसाऽपरिच्छेद्यस्वरूपस्वभावः परमकारुण्यादाश्रितवात्सल्याच्च सर्वसमाश्रयणीयत्वायाजहत्स्वभाव एव वसुदेवसूनुरवतीर्ण इति ममैवं परं भावमव्ययमनुत्तममजानन्तः प्राकृतराजसूनुसमानमितः पूर्वमनभिव्यक्तमिदानीं कर्मवशात् जन्मविशेषं प्राप्य व्यक्तिमापन्नं प्राप्तं मामबुद्धयो मन्यन्ते अतो मां नाश्रयन्ते न कर्मभिराराधयन्ति च ॥ २४ ॥

**अ० टी०**—तर्हि कथं न सर्वे त्वामेव भजन्तीत्यत आह—**अव्यक्तमिति**। अबुद्धयः कामहृतज्ञाना अव्यक्तं न विद्यते व्यक्तो लौकिकवत् प्रकटो व्यवहारो यस्य व्यक्तिर्जात्यादिर्वा यस्य तादृशं पुरुषोत्तमं व्यक्तिमापन्नं मनुष्यादिभावेन जगति प्रकटं लौकिकत्वेन अन्यदेवसमं मनुष्यादिसमं वा मन्यन्ते। कुत इत्याकाङ्क्षायामाह—**परमिति**। मम पुरुषोत्तमस्य अव्ययं नाशरहितं लीलात्मकं केषुचिद् भाग्यवत्सु प्रकटीभूय तद्रसपोषार्थं तत्समानाकारेण लीलारूपम् अजानन्तः। किंच। अनुत्तमं न विद्यते उत्तमो यस्मात्तादृशं परं भावं पुरुषोत्तमात्मकम् अजानन्तो मां तथा मन्यन्ते। अतः स्वकामितफलक्षिप्रप्रसादार्थमन्यदेवता एव भजन्ति न तु मामित्यर्थः ॥ २४ ॥

**नी० टी०**—एवं तर्हि कुतस्त्वामेव सर्वे न प्रतिपद्यंत इत्याशंक्याज्ञानादित्याह—**अव्यक्तमिति**। अव्यक्तं सर्वोपाधिशून्यत्वेनास्पष्टमपि वासुदेवशरीरेण व्यक्तिमापन्नं अस्मदादिवच्छरीराभिमानिनं मामबुद्धयो मन्यंते। यतो मम परं भावं परत्वमुत्कृष्टत्वमजानंतः। उत्कृष्टत्वमेव विशिनष्टि अव्ययं न व्येतीत्यव्ययमविनाशिनं अनुत्तमं यस्मादन्यदुत्कृष्टं च नास्ति निरतिशयमखंडैश्वर्यरूपमित्यर्थः ॥ २४ ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

**शां० भा०**—तदीयमज्ञानं किंनिमित्तमित्युच्यते—नाहं प्रकाशः सर्वस्य लोकस्य केषांचिदेव मद्भक्तानां प्रकाशोऽहमित्यभिप्रायः। योगमायासमावृतो योगो गुणानां युक्तिर्घटनं सैव माया योगमाया तया योगमायया समावृतः संछन्न इत्यर्थः। अत एव मूढो लोकोऽयं नाभिजानाति मामजमव्ययम् ॥ २५ ॥

**शां० आ०**—अविवेकरूपमज्ञानं भगवन्निष्ठाप्रतिबन्धकमुक्तं तस्मिन्नपि निमित्तं प्रश्नपूर्वकमनाद्यज्ञानमुपन्यस्यति—**तदीयमज्ञानमित्यादिना** । त्रिभिर्गुणमयैरित्यनौपाधिकरूपस्याप्रतिपत्तौ कारणमुक्तमत्र तु सोपाधिकस्यापीति विशेषं गृहीत्वा व्याचष्टे—**नाहमिति** । तर्हि भगवद्भक्तिरनुपयुक्तेत्याशङ्क्याऽऽह—**केषांचिदिति** । सर्वस्य लोकस्य न प्रकाशोऽहमित्यत्र हेतुमाह—**योगेति** । अनाद्यनिर्वाच्याज्ञानाच्छन्नत्वादेव मद्विषये लोकस्य मौढ्यं ततश्च मदीयस्वरूपविवेकाभावान्मन्निष्ठत्वराहित्यमित्याह—**अत एवेति** ॥ २५ ॥

**आ० भा०**—अज्ञानं च मदिच्छयेत्याह—नाहमिति । योगेन सामर्थ्योपायेन मायया च । मयैव मूढो नाभिजानाति । तथाहि पाद्मे 'आत्मनः प्रावृतिं चैव लोकचित्तस्य बंधनम् ॥ स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः' इति च ॥ २५ ॥

**आ० ज०**—तथाऽपि नाहं प्रकाश इति पुनरुक्तिरित्यतस्तात्पर्यमाह—**अज्ञानं चेति** । येनाज्ञानेन मामन्यथा मन्यंते तदज्ञानं च मदिच्छाधीनमेव न स्वतंत्रम् । येन तया निंदया मम खेदः स्यादिति भावः । योगे एवमायेति व्याख्यानमसदिति भावेनाह—**योगेनेति** । सामर्थ्यमेवोपायः । युज्यते येन योगोऽसावुपायः शक्तिरेव चेति वंचनाद्योगशब्दस्योभयार्थत्वेन द्वंद्वैकवद्भावः किं न स्यादिति चेत् । न मायया चेत्यस्य वैयर्थ्यापत्तेः । तस्या अप्युपायविशेषत्वात् । अत एवोपायार्थत्वं गृहीत्वा सामर्थ्येतितद्व्याख्यानं कृतम् । इदं तात्पर्यं श्लोके न प्रतीयत इत्यत आह—**मयैवेति** । उक्तार्थस्थापनाय पुराणसंमतिमाह—**तथेति** २५॥

**रा० भा०**—कुत एवं न प्रकाश्यत इत्यत्राह—क्षेत्रज्ञासाधारणमनुष्यत्वादिसंस्थानयोगाख्यमायया समावृतोऽहं न सर्वस्य प्रकाशः मयि मनुष्यत्वादिसंस्थानदर्शनमात्रेण मूढोऽयं लोको मामतिवाय्विन्द्रकर्माणमतिसूर्याग्नितेजसमुपलभ्यमानमपि अजमव्ययं निखिलजगदेककारणं सर्वेश्वरं मां सर्वसमाश्रयणीयत्वाय मनुष्यत्वसंस्थानमास्थितं नाभिजानाति ॥ २५ ॥

**अ० टी०**—ननु मनुष्या विवेकादिसहिताः कथं न त्वां जानन्तीत्यतआह—**नाहमिति** । अहं सर्वस्य साधारणस्य प्रकाशः प्रकटो न भवामि किंतु कस्यचिद्भक्तस्यैव । तत्र हेतुमाह—**योगमायासमावृत इति** । योगार्थमेव या माया अन्तरङ्गा दासीभूता शक्तिस्तया आवृतो रसार्थमाच्छन्नः । अतो मूढो भक्त्यालोचनादिज्ञानशून्योऽयं परिदृश्यमानो मां पश्यन्नपि स्वरूपज्ञानरहितो लोकबहिर्दृष्टिर्मामजं जन्मरहितं लीलया प्रकटमव्ययं नित्यं नाभिजानाति अभितः सर्वभावेन न जानाति ॥ २५ ॥

**नी० टी०**—कुतस्त्वद्विषयमज्ञानं लोकस्येत्यत आह—**नाहमिति** । हे योगयोगिन् अर्शआद्यच्प्रत्ययांतोऽयं योगशब्दः अहं तत्पदार्थः सर्वस्य योगिनस्त्वंपदार्थमात्राभिज्ञस्य न प्रकाशोस्मि तत्र हेतुः मायासमावृत इति । भाष्ये तु योगो युक्तिर्गुणानां घटनं सैव योगमाया चित्तसमाधिर्वा योगो भगवतस्तत्कृता मायेति भगवत्संकल्पवशवर्तिनी मायेत्यर्थः । उत्तरार्धः स्पष्टार्थः ॥ २५ ॥

**वेदाहं समतीतानि वर्तमानानि चार्जुन ॥**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

**शां० भा०**—यया योगमायया समावृतं मां लोको नाभिजानाति नासौ योगमाया मदीया सती ममेश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति यथाऽन्यस्यापि मायाविनो माया ज्ञानं तद्वद्यत एवमतः—अहं तु वेद जाने समतीतानि समतिक्रान्तानि भूतानि वर्तमानानि चार्जुन भविष्याणि च भूतानि वेदाहं मां तु वेद न कश्चन मद्भक्तं मच्छरणमेकं मुक्त्वा मत्तत्त्ववेदनाभावादेव न मां भजते ॥ २६ ॥

शां० आ०—मायया भगवानावृतश्चेत्तस्यापि लोकस्येव ज्ञानप्रतिबन्धः स्यादित्याशङ्क्याऽऽह—**ययेति** । न हीयं माया मायाविनो विज्ञानं प्रतिबध्नाति मायात्वाल्लौकिकमायावत्, अथवा नेश्वरो मायाप्रतिबद्धज्ञानो मायावित्वाल्लौकिकमायाविवदित्यर्थः । भगवतो मायाप्रतिबद्धज्ञानत्वाभावे सर्वज्ञत्वमप्रतिबद्धं सिद्धमित्याह—**यत इति** । लोकस्य मायाप्रतिबद्धविज्ञानत्वादेव भगवदाभिमुख्यशून्यत्वमित्याह—**मां त्विति** । कालत्रयपरिच्छिन्नापरिच्छिन्नसमस्तवस्तुपरिज्ञाने प्रतिबन्धो नेश्वरस्यास्तीतिद्योतनार्थस्तुशब्दः । मां त्विति लोकस्य भगवत्तत्त्वविज्ञानप्रतिबन्धं द्योतयति । तर्हि त्वद्भक्तिर्विफलेत्याशङ्क्याऽऽह—**मद्भक्तमिति** । तर्हि सर्वोऽपि त्वद्भक्तिद्वारा त्वां ज्ञास्यति नेत्याह—**मत्तत्त्वेति** । विवेकवतो मद्भजनं न तु विवेकशून्यस्य सर्वस्यापीत्यर्थः ॥ २६ ॥

**आ० भा०—न मां माया बध्नातीत्याह—वेदेति । न कश्चनातिसमर्थोऽपि स्वसामर्थ्यात्२६॥**

आ० ज०—अकस्मात्स्वस्य सार्वज्ञं किमित्युच्यत इत्यत आह—**नेति** । यवनिकाद्युभयभागवर्तिनोः परस्पराज्ञानवत्तवापि भूतविषये ज्ञानं न स्यादिति शंकानिरासार्थमिति शेषः । तथाऽपि मां तु वेद न कश्चनेति पुनरुक्तमित्यत आह—**न कश्चनेति** । असमर्थो लोको न जानातु । अतिसमर्थस्तु ब्रह्मादिर्ज्ञास्यतीति शंकानिरासार्थमेतदुक्तम् । कश्चनेति विशेषणादिति भावः । तर्हि ज्ञानी च भरतर्षभेत्यादिविरोधइत्यत उक्तम्—**स्वेति** ॥ २६ ॥

**रा० भा०—अतीतानि वर्तमानानि अनागतानि च सर्वाणि भूतानि अहं वेद जानामि मां तु वेद न कश्चन मयाऽनुसंधीयमानेषु कालत्रयवर्तिषु भूतेषु मामेवंविधं वासुदेवं सर्वसमाश्रयणीयतयाऽवतीर्णं विदित्वा मामेव समाश्रयन्न कश्चिदुपलभ्यत इत्यर्थः । अतो ज्ञानी सुदुर्लभ एव॥२६॥**

अ० टी०—ननु याँस्त्वं स्वसेवार्थं प्रकटीकृतान् पुनः स्वकीयत्वेन न जानासि तदा माया तान् व्यामोहयत्युतान्यथा वेत्याशङ्क्याह—**वेदाहमिति** । अहं समतीतानि सेवामकृत्वा नष्टानि वर्त्तमानानि सांप्रतं सेवां कुर्वाणानि भविष्याणि सेवार्थं प्रकटानि यानि भूतानि मत्सत्तया प्रकटानि स्थावरजङ्गमानि त्रिकालवर्तीनि मदीयत्वेन अहं वेद जानामि । तु पुनः । मज्ज्ञानानन्तरमपि कश्चन त्रिकालवर्त्तिषु मां प्रभुत्वेन न वेद । न जानातीत्यर्थः ॥ २६ ॥

नी० टी०—ननु त्वदभिन्नं लोकं त्वन्माया मोहयति चेत्त्वां कुतो न मोहयतीत्यत आह—**वेदाहमिति** । सत्यं सत्यपि लोकस्य मम चाभेदे औपाधिकभेदस्य सत्त्वादुपाधिधर्माभिमानित्वाल्लोको मूढः । तदभावाच्चाहं सर्वज्ञ इति विशेषः । अक्षरार्थः स्पष्टः ॥ २६ ॥

**इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ॥**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥**

शां० भा०—केन पुनर्मत्तत्त्ववेदनप्रतिबन्धेन प्रतिबद्धानि सन्ति जायमानानि सर्वभूतानि मा न विदन्तीत्यपेक्षायामिदमाह—इच्छाद्वेषसमुत्थेनेच्छा च द्वेषश्चेच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीतीच्छाद्वेषसमुत्थस्तेनेच्छाद्वेषसमुत्थेन । केनेति विशेषापेक्षायामिदमाह द्वंद्वमोहेन द्वंद्वनिमित्तो मोहो द्वंद्वमोहस्तावेवेच्छाद्वेषौ शीतोष्णवत्परस्परविरुद्धौ सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैः संबध्यमानौ द्वंद्वशब्देनाभिधीयेते । तत्र यदेच्छाद्वेषौ सुखदुःखतद्धेतुसंप्राप्त्या लब्धात्मकौ भवतस्तदा तौ सर्वभूतानां प्रज्ञायाः स्ववशापादनद्वारेण परमार्थात्मतत्त्वविषयज्ञानोत्पत्तिप्रतिबन्धकारणं मोहं जनयतः । न हीच्छाद्वेषदोषवशीकृतचित्तस्य यथाभूतार्थविषयज्ञानमुत्पद्यते बहिरपि किमु वक्तव्यं ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे ज्ञानं नोत्पद्यत इति । अतस्तेनेच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत भरतान्वयज सर्वभूतानि संमोहितानि सन्ति संमोहं संमूढतां सर्गे जन्मन्युत्पत्तिकाल इत्येत-

यान्ति गच्छन्ति हे परंतप । मोहवशान्येव सर्वभूतानि जायमानानि जायन्त इत्यभिप्रायः । यत एवमतस्तेन द्वंद्वमोहेन प्रतिबद्धप्रज्ञानानि सर्वभूतानि संमोहितानि मामात्मभूतं न जानन्त्यत एवाऽऽत्मभावेन मां न भजन्ते ॥ २७ ॥

**शां० आ०**—भगवत्तत्त्वविज्ञानप्रतिबन्धकं मूलाज्ञानातिरेकं प्रश्नद्वारेणोदाहरति—**केनेत्यादिना** । पुनःशब्दात्प्रतिबन्धकान्तरविवक्षा गम्यते । अपरोक्षमवान्तरप्रतिबन्धकमिदमा गृह्यते । विशेषमाकाङ्क्षापूर्वकं निक्षिपाति—**केनेति विशेषापेक्षायामिति** । द्वन्द्वशब्देन गृहीतयोरपीच्छाद्वेषयोर्ग्रहणं द्वंद्वशब्दार्थोपलक्षणार्थमित्यभिप्रेत्याऽऽह—**तावेवेति** । तयोरपर्यायमेकत्रानुपपत्तिं गृहीत्वा विशिनष्टि—**यथाकालमिति** । न च तयोरनधिकरणं किंचिदपि भूतं संसारमण्डले संभवतीत्याह—**सर्वभूतैरिति** । तथाऽपि कथं तयोर्मोहहेतुत्वमित्याशङ्क्याऽऽह—**तत्रेति** । तयोराश्रयः सप्तम्यर्थः । उक्तमेवार्थं कैमुतिकन्यायेन प्रपञ्चयति—**न हीति** । पूर्वभागानुवादपूर्वकमुत्तरभागेन फलितमाह—**अत इति** । प्रत्यगात्मन्यहंकारादिप्रतिबन्धप्रभावतो ज्ञानोत्पत्तेरसंभवोऽतःशब्दार्थः । कुलप्रसूत्यभिमानेन स्वरूपशक्त्या च युक्तस्यैव यथोक्तप्रतिबन्धविघातसामर्थ्यमितिद्योतनार्थं भारत परंतपेति संबोधनद्वयम् । तत्त्वज्ञानप्रतिबन्धे प्रकृतमवान्तरकारणमुपसंहरति—**मोहेति** । जायमानभूतानां मोहपरतन्त्रत्वे फलितमाह—**यत इति** । भगवत्तत्त्ववेदनाभावे तन्निष्ठत्ववैधुर्यं फलतीत्याह—**अत एवेति** ॥ २७ ॥

**आ० भा०**—द्वंद्वमोहेन । सुखदुःखादिविषयमोहेन इच्छाद्वेषयोः प्रवृद्धयोर्न हि किंचिज्ज्ञातुं शक्यम् । कारणान्तरमेतत् सर्गे सर्गकाले आरभ्यैव शरीरे हि सतीच्छादयः । पूर्वं त्वज्ञानमात्रम् २७॥

**आ० ज०**—इच्छाद्वेषौ द्वंद्वम् तज्जन्यो मोहो द्वंद्वमोहः तेनेति कश्चित् । तदसदिति भावेनाह—**द्वंद्वेति** । अन्यथा इच्छाद्वेषसमुत्थेन मोहेनेत्येव स्यादिति भावः । व्याख्यानव्याख्येयभावश्चागतिका गतिः द्वंद्वमोहस्येच्छाद्वेषसमुत्थत्वं कथमित्यत आह—**इच्छेति** । किंचित्सुखादिकं हेयत्वादिनेति शेषः । ननु नाहं प्रकाशइति भगवतो दैवीह्येषेति तदधीनायाः गुणमय्या मायायाश्च मोहकत्वमुक्तं तत्कथं भगवद्विषयसंमोहस्येच्छाद्वेषसमुत्थो द्वंद्वमोहः कारणमुच्यत इत्यतआह—**कारणांतरमिति** । इच्छाद्वेषसमुत्थद्वंद्वमोहलक्षणमेतद्भगवद्विषयस्य संमोहस्यावांतरकारणमुच्यत इत्यर्थः । कुत एतदित्यतः तत्सूचकं पदं पठति—**सर्गइति** । सर्गः क्रिया कथं तस्याअधिकारणत्वमित्यतो लक्षणामाश्रित्य व्याचष्टे—**सर्गेति** । तदुत्तरकालं किं तन्न कारणमित्यतः पुनर्लक्षणाश्रयणेनाह—**आरभ्येति** । सर्गकालमिति संबंधः । कथमनेनावांतरकारणत्वं ज्ञायतइत्यतः सावधारणमेतादित्युक्तमेवेति । उक्तमुपपादयन्नाह—**शरीर इति** । आदिपदेन द्वेषस्य द्वंद्वानां च ग्रहणम् । अतः सर्गकालमारभ्यैवैतत्कारणमिति सिद्धम् । एतावता कथमवांतरकारणत्वसिद्धिरित्यत आह—**पूर्वं त्विति** । सर्गात्पूर्वं त्विच्छादिना विना ज्ञानमस्त्येव भगवदिच्छाद्यधीनमत एतदवांतरं कारणमिति सिद्धमित्यर्थः ॥ २७ ॥

**रा० भा०**—तथाहि इच्छाद्वेषाभ्यां समुत्थेन शीतोष्णादिद्वन्द्वाख्येन मोहेन सर्वभूतानि सर्वे जन्मकाल एव संमोहं यान्ति । एतदुक्तं भवति गुणमयेषु सुखदुःखादिद्वन्द्वेषु पूर्वपूर्वजन्मनि यद्विषयाविच्छाद्वेषौ रागद्वेषौ अभ्यस्तौ तद्वासनया पुनरपि जन्मकाल एव तदेव द्वन्द्वाख्यमिच्छाद्वेषविषयत्वेन समुपस्थितं भूतानां मोहनं भवति तेन मोहेन सर्वभूतानि संमोहं यान्ति तद्विषयेच्छाद्वेषस्वभावानि भवन्ति न मत्संश्लेषवियोगसुखदुःखस्वभावानि । ज्ञानी तु मत्संश्लेषवियोगैकसुखदुःखस्वभावः न तत्स्वभावं किमपि भूतं जायत इति ॥ २७ ॥

**अ० टी०**—तर्हि त्वज्ज्ञाने तान् माया कथं मोहयतीत्यत आह—**इच्छेति** । सर्गे सृष्टावुत्पत्त्यनन्तरम् इच्छा स्वेष्टवस्तुषु, द्वेषस्तद्विपरीतवस्तुषु ताभ्यां सम्यक् प्रकारेणोत्थितो यो द्वन्द्वमोहः सुखदुःखरूपस्तेन हे भारत ! भक्तवंशज ! सर्वभूतानि संमोहं यान्ति प्राप्नुवन्ति । भारतेतिसंबोधनेन भरतवत् कस्यचिदेव भक्तस्य न मोहो भवतीतिव्यञ्जितम् । अत्रायं भावः । मत्क्रीडार्थं सेवार्थं वा ये सृष्टास्तैर्मत्संयोगवियोगसुखदुःखविचार एव कर्त्तव्यो न तु स्वस्वविचारकाणां भगवत्कार्यानुपयुक्तत्वान्माया मोहयतीति भावः॥२७॥

**नी० टी०**—केन पुनर्निमित्तेनातीतादीनि भूतानि न जानंतीत्याशंक्याह—**इच्छेति** । इच्छा रागः द्वेषस्ताभ्यां समुत्थितो द्वंद्वमोहः शोभनाशोभनसत्यासत्यनित्यानित्यात्मानात्मसु विपर्ययः अशोभने शोभनबुद्धिः

शोभने वा अशोभनबुद्धिरित्येवं रूपस्तेन। हे भारत भरतान्वय! सर्वभूतानि सर्गे सृष्टिविषये मोहं अविवेकं यांति हे परंतप अयं भावः। यो हि सृष्टेरुपादानं स्वरूपं च तत्त्वतो जानाति स ब्रह्मवित् सर्वज्ञत्वादतीतादीन् जानाति। सृष्टौ च सर्वेषां मोहोऽस्ति अशोभने स्त्र्यादौ शोभनाध्यासात्। असत्ये प्रपंचे सत्यत्वाध्यासात्। सत्ये चात्मनोऽसंगत्वेऽसत्यत्वाध्यासात्। अनित्ये स्वर्गादौ नित्यत्वाध्यासात्। अनात्मनि देहादावात्माध्यासात् अतो विपर्ययेण सृष्टिज्ञानं प्रतिबद्धं तेन च सार्वज्ञ्यं न जायतेऽस्मदादीनामिति ॥ २७ ॥

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ॥**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥**

**शां० भा०—के पुनरनेन द्वंद्वमोहेन निर्मुक्ताः सन्तस्त्वां विदित्वा यथाशास्त्रमात्मभावेन भजन्त इत्यपेक्षितमर्थं दर्शयितुमुच्यते—येषां तु पुनरन्तगतं समाप्तप्रायं क्षीणं पापं जनानां पुण्यकर्मणां पुण्यं कर्म येषां सत्त्वशुद्धिकारणं विद्यते ते पुण्यकर्माणस्तेषां पुण्यकर्मणां ते द्वंद्वमोहनिर्मुक्ता यथोक्तेन द्वंद्वमोहेन निर्मुक्ता भजन्ते मां परमात्मानं दृढव्रता एवमेव परमार्थतत्त्वं नान्यथेत्येवं निश्चितविज्ञाना दृढव्रता उच्यन्ते ॥ २८ ॥**

**शां० आ०**—यदि सर्वाणि भूतानि जन्म प्रतिपद्यमानानि संमूढानि सन्ति भगवत्तत्त्वपरिज्ञानशून्यानि भगवद्भजनपराङ्मुखानि तर्हि शास्त्रानुरोधेन भगवद्भजनमुच्यमानमधिकार्यभावादनर्थकमापद्येतेति शङ्कते—**के पुनरिति**। अनेकेषु जन्मसु सुकृतवशादपाकृतदुरितानां द्वंद्वप्रयुक्तमोहविरहिणां ब्रह्मचर्यादिनियमवतां भगवद्भजनाधिकारित्वान्न शास्त्रविरोधोऽस्तीति परिहरति—**उच्यत इति**। तुशब्दद्योत्यमर्थमाह—**पुनरिति**। उक्तार्थमात्रसिद्ध्यर्थं समाप्तप्रायमित्युक्तम्। प्रकृतोपयोगं पुण्यस्य कर्मणो दर्शयितुं विशिनष्टि—**सत्त्वेति**। उभयविधशुद्धेर्द्वंद्वनिमित्तमोहनिवृत्तिफलमाह—**ते द्वंद्वेति**। मोहनिवृत्तेर्भगवन्निष्ठापर्यन्तत्वमाह—**भजन्त इति**। तेषां नानापरिग्रहवतां भगवद्भजनप्रतिहतिमाशङ्क्याऽऽह—**दृढेति** ॥ २८ ॥

**आ० भा०—विपरीताश्च केचित्संतीत्याह—येषामिति ॥ २८ ॥**

**आ० ज०**—चतुर्विधाइत्यनेन गतार्थमुत्तरं वाक्यमित्यत आह—**विपरीताश्चेति**। त्वत्प्रपत्तेर्मायातरणाकारणत्वात्स्वदोषाद्वा त्वां न प्रपद्यंत इत्यत्र कथं निर्णय इत्यतस्तदुक्तम्। सर्वभूतानि संमोहं यांति चेत्। लुप्तो मुक्तिमार्ग इत्याशंक्यात्र द्वंद्वमोहरहिताश्च केचित्संतीत्याहेत्यर्थः ॥ २८ ॥

**रा० भा०—येषां त्वनेकजन्मार्जितेनोत्कृष्टपुण्यसंचयेन गुणमयं द्वन्द्वेच्छाद्वेषहेतुभूतं मदौन्मुख्यविरोधि चानादिकालप्रवृत्तं पापमन्तगतं क्षीणं ते पूर्वोक्तेन सुकृततारतम्येन मां शरणमनुप्रपद्य गुणमयान्मोहाद्विनिर्मुक्ताः जरामरणमोक्षाय प्रकृतिवियुक्तात्मस्वरूपदर्शनाय महते चैश्वर्याय मत्प्राप्तये च दृढव्रताः दृढसंकल्पाः मामेव भजन्ते ॥ २८ ॥**

**अ० टी०**—ननु ये मोहयुक्तास्तन्मध्ये तत्संगिन एव केचन पूर्वमभजन्तः पश्चात् त्वद्भजनप्रवृत्ताः कथं भवन्तीत्यत आह—**येषामिति**। येषां दुर्लभानां भाग्यवतां पुण्यकर्मणां मद्दर्शनादिना पुण्याचरणशीलानां महत्सु विनयादियुक्तानां। तु पुनः। जनाऽऽदिक्लेशयुक्तानां पापं मत्स्वरूपज्ञानप्रतिबन्धकम् अन्तभावं गतं प्राप्तं नष्टमिति यावत्। ते द्वन्द्वमोहनिर्मुक्ताः स्वसुखदुःखादिमोहनिर्मुक्ताः दृढव्रताः दृढसंकल्पाः मदेकनिष्ठाः मां भजन्ते। अत्रायं भावः। पूर्वजन्मकृतं यत्किंचित् पुण्यकर्म तेन जन्मान्तरे प्रवृद्धमाने वाऽनेकजन्मनि वयसः परिपाके पुण्योपचितमरणभयेन तन्निवृत्त्यर्थं मद्भजनप्रवृत्ता भवन्ति। अतएव 'जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति भागवतैरुक्तम् ॥ २८ ॥

**नी० टी०**—केषां तर्हि सार्वज्ञ्यं भवतीत्याशंक्याह—**येषां त्विति**द्वाभ्या। येषां पुनर्जनानां पुण्यकर्मणां पापं अंतगतं अंतं नाशं प्राप्तं द्वितीयाश्रितेति समासः ते द्वंद्वमोह उक्तलक्षणस्तेन निर्मुक्ताः संतः प्रथमं दृढव्रताः शमदमादिदार्ढ्यभाजो भूत्वा मां भजंते ॥ २८ ॥

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ॥**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥**

**शां० भा०**—ते किमर्थं भजन्त इत्युच्यते—जरामरणमोक्षाय जरामरणमोक्षार्थं मां परमेश्वरमाश्रित्य मत्समाहितचित्ताः सन्तो यतन्ति प्रयतन्ते ये ते यद्ब्रह्म परं तद्विदुः कृत्स्नं समस्तमध्यात्मं प्रत्यगात्मविषयं वस्तु तद्विदुः कर्म चाखिलं समस्तं विदुः ॥ २९ ॥

**शां० आ०**—यथोक्तानामाधिकारिणां भगवद्भजनफलं प्रश्नद्वारा दर्शयति—**ते किमर्थमिति**। जरामरणादिलक्षणो यो बन्धस्तद्विश्लेषार्थं भगवद्भजनमित्यर्थः। संप्रति सगुणस्य सप्रपञ्चस्य मध्यमानुग्रहार्थं ध्येयत्वमाह—**मामाश्रित्येति**। जरादिसंसारनिवृत्त्यर्थं निर्गुणं निष्प्रपञ्चं मामुत्तमाधिकारिणो जानन्तीत्युक्तं 'मामेव ये प्रपद्यन्ते' इत्यादावित्याह—**जरेति**। मध्यमानधिकारिणः प्रत्याह—**मामिति**। परमेश्वराश्रयणं नाम विषयविमुखत्वेन भगवदेकनिष्ठत्वमित्याह—**मत्समाहितेति**। प्रयतनं भगवन्निष्ठासिद्ध्यर्थं बहिरङ्गाणां यज्ञादीनामन्तरङ्गाणां च श्रवणादीनामनुष्ठानम्। प्रागुक्तं जगदुपादानं परं ब्रह्म। कथं ब्रह्म विदुरित्यपेक्षायां समस्ताध्यात्मवस्तुत्वेन सकलकर्मत्वेन च तद्विदुरित्याह—**कृत्स्नमिति** ॥ २९ ॥

**आ० भा०**—जरामरणमोक्षायेत्यन्यकामव्यावृत्त्यर्थं मोक्षे सक्तिस्तुत्यर्थं वा न विधिः 'मुमुक्षोरमुमुक्षुस्तु वरो ह्येकांतभक्तिभाक्' इति इतरस्तुतेर्नारदीये। नात्यंतिकमिति च। 'देवानां गुणलिंगानामानुश्राविककर्मणाम्। सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी। जरयत्याशु या कोशं निगीर्णमनलो यथा' इति लक्षणाच्च भागवते। आह च 'सर्वे वेदास्तु देवार्था देवा नारायणार्थकाः। नारायणस्तु मोक्षार्थो मोक्षो नान्यार्थ इष्यते ॥ एवं मध्यमभक्तानामेकांतानां न कस्य चित्। अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम्' इति गीताकल्पे ॥ "त एव च विदुः। यमेवैष वृणुते" इति श्रुतेः ॥ २९ ॥

**आ० ज०**—मां भजन्त इत्युक्तानुवादेन फलमुच्यते। तत्र जरामरणमोक्षायेत्यनुक्तस्यानुवादासंभवादप्राप्तत्वेन विध्यर्थं मद्भजनं च जरामरणमोक्षोद्देशेन कार्यमित्येवं प्रतीतिनिरासार्थमाह—**जरेति**। लक्षणया स्वर्गादिकामनिवृत्तिरर्थोऽस्येति तथोक्तम्। मोक्षविषयासक्तिरन्यसक्तेः प्रशस्तेति तत्स्तुत्यर्थं वा सर्वथा न विधिः। कुत इत्यत आह—**मुमुक्षोरिति**। इतरस्यामुमुक्षोर्भक्तस्य। न हि प्रशस्ते सत्यप्रशस्तं नियंतुं युक्तमिति भावः। इति चेतरस्तुतेरिति संबंधः। प्रकारभेदात्पृथगुक्तिः। इतश्च न मोक्षकामविधिरित्याह—**देवानामिति**। सत्त्व एवैकमनसः। शुद्धसात्त्विकस्य पुंसो देवानामिंद्रियाणाम् गुणलिंगानाम् गंधाद्युपलब्धिलक्षणगुणानुमेयानाम् तथा वचनादिक्रियानुमेयानां च आनुश्राविककर्मणाम् वैदिकानुष्ठाने कारणानाम्। या भगवत्यनिमित्ता फलोद्देशरहिता केवलं स्वाभाविकी निरवच्छिन्नस्नेहरूपस्वभावनिर्वृत्तावृत्तिः। सा च सकामभक्त्या जातायाः सिद्धेर्मुक्तेरपि गरीयसी। या सा कामनाऽभावेऽपि कोशं लिंगशरीरं स्वभावादेव जरयत्यनलवदित्यनिमित्तत्वस्य भक्तिलक्षणत्वेनोक्तत्वाच्चेत्यर्थः। न हि लक्षणवैकल्पं विधेयमिति भावः। आह च सप्तमेतदन्यत्र। देवार्थाः देवप्रतिपत्त्यर्थाः। प्रतिपन्नादेवा नारायणज्ञानार्थाः। मोक्षार्थे ज्ञातव्यः। नान्यार्थः परः पुरुषार्थः। मध्यमभक्तानां चित्तवृत्तिः। एकांतानां नियतानामुत्तमभक्तानां न कस्यचिदर्थे स एव परमपुरुषार्थः। ननु मामेव ये प्रपद्यंत इत्युक्तत्वात् ते ब्रह्म तद्विदुरिति पुनरुक्तमित्यत आह—**तएवेति**। अन्योपायनिवृत्त्यर्थमेतदित्यर्थः। स्यादेवं व्याख्यानम्। यदि भगवद्भजनेन विना ज्ञानस्यान्योपायाभावः प्रमितः स्यात् स एव कुत इत्यत आह—**यमिति**। भक्तमेव च वृणुत इति च प्रसिद्धम् ॥ २९ ॥

**रा० भा०**—तत्र तेषां त्रयाणां भगवन्तं भजमानानां ज्ञातव्यविशेषानुपादेयांश्च प्रस्तौति। जरामरणमोक्षाय प्रकृतिवियुक्तात्मस्वरूपदर्शनाय मामाश्रित्य ये यतन्ते ते तद्ब्रह्म विदुः अध्यात्मं च कृत्स्नं विदुः कर्म चाखिलं विदुः ॥ २९ ॥

**अ० टी०**—एवं भजनप्रवृत्ता मां जानन्तीत्याह—**जरामरणेति**। जरामरणयोः भगवद्भजनप्रतिबन्धक भगवद्विस्मरणरूपयोर्मोक्षाय निवारणार्थं मामाश्रित्य अनन्यैकचित्तेन ये यतन्ति भजनार्थं यत्नं कुर्वन्ति भजन्ति वा ते तत् परं ब्रह्म पुरुषोत्तमात्मकं विदुः जानन्ति। कृत्स्नं पूर्णमध्यात्मं भजनौपयिकं साधनरूपं विदुः। च पुनः। कर्म सेवारूपं तत्साधनात्मकमखिलं मावादियुक्तं जानन्तीत्यर्थः ॥ २९ ॥

**नी० टी०**—ततश्च जरामरणयोः प्रवाहादात्मनो मोक्षाय मामाश्रित्य मयि समाहितचेतसो भूत्वा ये यतंति यतंते ज्ञानलाभाय वेदांतश्रवणादौ ते तत् सर्ववेदांतप्रसिद्धं कृत्स्नं ब्रह्म विदुः विराडाद्युपासका ह्यकृत्स्नब्रह्मविदः सूत्रकारणयोर्निष्कलस्य चाज्ञानात्। श्रीगोपालबालोपासकास्तु तत्पदलक्ष्यकृत्स्नब्रह्मविदोऽतस्तेऽध्यात्मादिकं कात्स्न्र्येन जानंति सर्वविदो भवन्तीत्यर्थः। अनेन यज्ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यत इत्येकविज्ञानात्सर्वविज्ञानप्रतिज्ञा या पूर्वं कृता तस्या उपसंहारो दर्शितः। अध्यात्मं आत्मनि शरीरे स्थितं प्रत्यगात्मविषयं वस्तु शुद्धं त्वंपदार्थमित्यर्थः। कर्म च तत्त्वंपदार्थज्ञानयोः साधनं श्रवणादिकं सर्वं विदुः ॥ २९ ॥

**साधिभूताधिदैवं मा साधियज्ञं च ये विदुः ॥**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

**शां० भा०—साधीति। साधिभूताधिदैवमधिभूतं चाधिदैवं चाधिभूताधिदैवं सहाधिभूताधिदैवेन साधिभूताधिदैवं च मां ये विदुः साधियज्ञं च सहाधियज्ञेन साधियज्ञं ये विदुः प्रयाणकालेऽपि च मरणकालेऽपि च मां ते विदुर्युक्तचेतसः समाहितचित्ता इति ॥ ३० ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥**

**शां० आ०**—न केवलं भगवन्निष्ठानां सर्वाध्यात्मकर्मात्मकब्रह्मवित्त्वमेव किंत्वधिभूतादिसहितं तद्वेदित्वमपि सिध्यतीत्याह—**साधिभूतेति**। अध्यात्मं कर्माधिभूतमधिदैवमधियज्ञश्चेति पञ्चकमेतद्ब्रह्म ये विदुस्तेषां यथोक्तज्ञानवतां समाहितचेतसामापदवस्थायामपि भगवत्तत्त्वज्ञानमप्रतिहतं तिष्ठतीत्याह—**प्रयाणेति**। अपि चेति निपाताभ्यां तस्यामवस्थायां करणग्रामस्य व्यग्रतया ज्ञानासंभवेऽपि समाहितचित्तानामुक्तज्ञानवतां भगवत्तत्त्वज्ञानमयत्नलभ्यमिति द्योत्यते। तदनेन सप्तमेनोत्तममधिकारिणं प्रति ज्ञेयं निरूपयता तदर्थमेव सर्वात्मकत्वादिकमुपदिशता प्रकृतिद्वयद्वारेण सर्वकारणत्वादिति च वदता तत्पदवाच्यं तल्लक्ष्यं चोपक्षिप्तम् ॥ ३० ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने सप्तमोऽध्यायः ॥ ७ ॥

**आ० भा०—॥ ३० ॥**

**इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये सप्तमोऽध्यायः ॥ ७ ॥**

**आ० ज०—** ॥ ३० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितगीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां
प्रमेयदीपिकायां सप्तमोऽध्यायः ॥ ७ ॥

**रा० भा०—अत्र य इति पुनर्निर्देशात्पूर्वनिर्दिष्टेभ्योऽन्येधिकारिणो ज्ञायन्ते साधिभूतं साधिदैवं मामैश्वर्यार्थिनो ये विदुरित्येतदनुवादस्वरूपमप्यप्राप्तार्थत्वात्तद्विधायकमेव तथा साधियज्ञमित्यपि त्रयाणामधिकारिणामविशेषेण विधीयतेऽर्थस्वाभाव्यात् त्रयाणां हि नित्यनैमित्तिकरूपमहायज्ञाद्यनुष्ठानमवर्जनीयं ते च प्रयाणकालेऽपि स्वप्राप्त्यानुगुणं मां विदुः। ते चेति चकारात्पूर्वे जरामरणमोक्षाय यतमानाश्च प्रयाणकालेऽपि विदुरिति समुच्चीयन्ते। अनेन ज्ञानिनोऽप्यर्थस्वाभाव्यात्साधियज्ञं मां विदुः प्रयाणकालेऽपि स्वप्राप्त्यानुगुणं मां विदुरित्युक्तं भवति ॥ ३० ॥**

**इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये सप्तमोऽध्यायः ॥ ७ ॥**

**अ० टी०—**एवंज्ञानस्य फलमाह—**साधिभूताधिदैवमिति**। साधिभूताधिदैवम् अधिभूतेन अधिकरणात्मकेन अधिदैवेन मूलरूपेण सह अधियज्ञेन अंशात्मककर्मरूपेण च सहितं ये मां विदुस्ते युक्तचेतसः युक्तं तन्निष्ठं चेतो येषां तादृशा भवन्ति मां प्राप्नुवन्तीत्यर्थः। च पुनः। प्रयाणकाले मरणसमयेऽपि भ्रमादिरहितास्ते मां विदुः जानन्ति मरणकाले स्वज्ञानोक्त्या 'अन्ते या मतिः सा गतिः' इति वाक्योक्तरीत्या प्राप्नुवन्तीति व्यञ्जितम् ॥ ३० ॥

'भक्तानामेव श्रीकृष्णज्ञानविज्ञानयोग्यता ॥ अतोऽत्र ज्ञानविज्ञानयोगं हरिरुवाच हि ॥ १ ॥'

इति श्रीभगवद्गीतामृततरङ्गिण्यां सप्तमोऽध्यायः ॥ ७ ॥

**नी० टी०—**एवं तत्पदार्थविवेकं सद्योमुक्तिहेतुं समाप्य तत्प्राप्त्युपासनानि क्रममुक्तिफलानि विस्तरेण वक्तुकामः संक्षेपेण सूत्रयति—**साधिभूतेति**। अधिभूतं च अधिदैवं च ताभ्यां सहितं साधिभूताधिदैवं तथाऽधियज्ञेन सहितं साधियज्ञं च मां ये विदुः उपासते ते युक्तचेतसः। यतो नित्यं समाहितचित्तास्ततो मां प्रयाणकालेऽपि सर्वजनव्यामोहके विदुरेव। भावनादार्ढ्यान्मरणकालेऽपि तस्य ज्ञानस्य प्रमोषो न भवत्यतो भगवति नैरंतर्येण दृढा भावना कर्त्तव्येति भावः। अधिभूतादिपदार्थं तु भगवानेव व्याख्यास्यतीति नोक्तवंतो वयम् ॥ ३० ॥

इति श्रीमहाभारते नैलकंठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे सप्तमोऽध्यायः ॥ ७ ॥

( श्लोकानामादितः समष्ट्यङ्काः—२८१ )



## ॥ अथाष्टमोऽध्यायः ॥ ८ ॥

**अर्जुन उवाच—किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ॥**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**
**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ॥**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥**

**शां० भा०—ते ब्रह्म तद्विदुः कृत्स्नमित्यादिना भगवताऽर्जुनस्य प्रश्नबीजान्युपदिष्टान्यतस्तत्प्रश्नार्थम् ॥ १ ॥ २ ॥**

**शां० आ०**—सप्तमाध्यायान्ते 'येषां त्वन्तगतं पापम्' इत्यादिना येषां ब्रह्मादीनामनुसंधानमुक्तं यच्च प्रयाणकाले भगवतः स्मरणं दर्शितं तदिदं जिज्ञासमानः सन्पृच्छतीति प्रश्नसमुदायमवतारयति—**ते ब्रह्मेति**। प्रश्नबीजानि तद्विषयभूतानि ब्रह्मादीनि वस्तूनीति यावत्। बुभुत्सितविषयप्रतिलम्भानन्तरं तेषां प्रश्नद्वारा निर्णयार्थमित्याह—**अत इति**। यदुक्तं ते ब्रह्म तद्विदुरिति, तत्किं सोपाधिकं निरुपाधिकं वा ब्रह्मशब्दस्योभयत्रापि संभवादिति मत्वाऽऽह—**किं तदिति**। यच्चोक्तं कृत्स्नमध्यात्ममिति तत्राऽऽत्मानं देहमधिकृत्य तस्मिन्नधिष्ठाने तिष्ठतीत्यध्यात्मशब्देन श्रोत्रादिकरणग्रामो वा प्रत्यग्भूतं ब्रह्मैव वा विवक्षितमित्याह—**किमध्यात्ममिति**। "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति श्रुतौ कर्मणो द्वैविध्यनिर्धारणात्कर्म चाखिलमित्यत्र कीदृक्कर्म गृहीतमिति पृच्छति—**किमिति**। क्षराक्षराभ्यां कार्यकारणाभ्यामतीतस्य भगवतो न किंचिदवेद्यमस्तीति सूचयति—**पुरुषोत्तमेति**। साधिभूताधिदैवमित्यत्राधिभूतशब्देन पृथिव्यादिषु भूतेषु वर्तमानं किंचिदेव गृह्यते किंवा समस्तमेव कार्यमिति निर्दिधारयिषया पृच्छति—**अधिभूतमिति**। अधिदैवमिति च दैवतविषयमनुध्यानं वा दैवतेष्वादित्यमण्डलादिषु वर्तमानं चैतन्यं वा जिघृक्षितमिति प्रश्नान्तरं प्रस्तौति—**अधिदैवमिति**। साधियज्ञं चेत्यत्राधियज्ञशब्देन यज्ञमधिगतो विज्ञानात्मा वा परदेवता वेति प्रश्नान्तरं प्रकरोति—**अधियज्ञ इति**। स च कथं केन प्रकारेण ब्रह्मत्वेन चिन्तनीयः किं तादात्म्येन किं वाऽत्यन्ताभेदेनेत्याह—**कथमिति**। सर्वथाऽपि स किमस्मिन्देहे वर्तते ततो बहिर्वा, देहे चेत्स कोऽत्र बुद्ध्यादिस्तद्व्यतिरिक्तो वेति जिज्ञासया ब्रूते—**कोऽत्रेति**। अधियज्ञः कथं कोऽत्रेति न प्रश्नभेदकः कथमिति तु प्रकारभेदविवक्षयेति द्रष्टव्यम्। यत्तु समाहितचित्तानामुक्तं तत्प्रयाणकालेऽपि भगवदनुसंधानं सिध्यतीति तदयुक्तमुत्क्रमणदशायां करणग्रामवैयग्र्याच्चित्तसमाधानानुपपत्तेरित्यभिप्रेत्याऽऽह—**प्रयाणेति** ॥ १ ॥ २ ॥

**आ० भा०—ॐ ॥ मरणकालकर्तव्यगत्याद्यस्मिन्नध्याय उपदिशति। परममक्षरं ब्रह्म। वेदादिशंकाव्यावृत्त्यर्थमेतत्। आत्मन्यधि यत्तदध्यात्मम्। आत्माधिकारे यत्तदिति वा ॥ १ ॥ २ ॥**

**आ० ज०**—अध्यायस्यावांतरप्रतिपाद्यमर्थमाह—**मरणेति**। गम्यत इतिगतिः। आदिपदेन मार्गादिकम्। मरणकालकर्तव्यं च गतिश्च ते आदी यस्य तत्तथोक्तम्। कर्तव्यस्मरणविषयत्वगम्यत्वादिरूपो भगवन्महिमैव वर्ण्यत इति षट्कांतर्भावसिद्धिः। उक्तव्याख्यानपूर्वकमिति चोपस्कर्तव्यम्। तेनानंतर्यलक्षणाऽपि संगतिः सिद्धा। तत्प्रसंगेनैव मरणकालकर्तव्याद्युपदेशात्। ननु पूर्वाध्याये ते ब्रह्मेति निर्विशेषणमेवोपक्षिप्तम्। अत एवात्र किं तद्ब्रह्मेति तथैव पृष्टम्। उत्तरे तु कस्मादक्षरं परमं ब्रह्मेतिसविशेषणमुपादीयत इत्यत आह—**परममिति**। अक्षरस्यैव परमत्वविशेषणम्। न ब्रह्मण इत्यर्थः। तर्ह्यक्षरमित्येवालं किं विशेषणेनेत्यतआह—**वेदेति**। आदिपदेन प्रकृतिर्गृह्यते। तयोरपि ब्रह्माक्षरशब्दवाच्यत्वात् प्रसक्तिः स्वभावोऽध्यात्ममिति शब्दद्वयस्यैकविषयत्वसिद्धयेऽध्यात्मशब्दं तावत् द्वेधा व्याचष्टे—**आत्मनीति**। आत्मानं जीवमधिकृत्य तदुपकारित्वेन वर्तमानं वस्त्वित्यर्थः। आत्माधिकार इति ग्रंथविशेषस्य संज्ञा। यत्प्रतिपाद्यं तदध्यात्ममिति वेत्यर्थः। अत्राध्यात्मशब्दं प्रथमांतं गृहीत्वा प्रथमं व्याख्यानम्। सप्तम्यंतमुपादाय द्वितीयं आत्मशब्दं देहविषयमादाय व्याख्याने परमेश्वरप्रसक्तेर्न तथा व्याख्यातम् ॥ १ ॥ २ ॥

**रा० भा०—सप्तमे परस्य ब्रह्मणो वासुदेवस्योपास्यस्य निखिलचेतनाचेतनवस्तुशेषित्वं कारणत्वमाधारत्वं सर्वशरीरतया सर्वप्रकारत्वेन सर्वशब्दवाच्यत्वं सर्वनियन्तृत्वं सर्वैश्च कल्याणगुणगणैरेकाश्रयत्वं तस्यैव परतरत्वं च सत्त्वरजस्तमोमयैर्देहेन्द्रियत्वेन भोग्यत्वेन चावस्थितैर्भावैरनादिका-**

कमप्रवृत्तदुष्कृतप्रवाहहेतुकैस्तस्य तिरोधानमत्युत्कृष्टहेतुकभगवत्प्रपत्त्या च तन्निवर्तनं सुकृततारतम्येन च प्रपत्तिवैशेष्यादैश्वर्याक्षरयाथात्म्यभगवत्प्राप्त्यपेक्षयोपासकभेदं भगवन्तं प्रेप्सोर्नित्ययुक्ततयैकभक्तितया चात्यर्थपरमपुरुषप्रियत्वेन च श्रैष्ठ्यं दुर्लभत्वं च प्रतिपाद्य एषां त्रयाणां ज्ञातव्योपादेयभेदांश्च प्रास्तौषीत् । इदानीमष्टमे प्रस्तुतान् ज्ञातव्योपादेयभेदान्विविनक्ति जरामरणमोक्षाय भगवन्तमाश्रित्य यतमानानां ज्ञातव्यतयोक्तं तद्ब्रह्माध्यात्मं च कर्म च किमिति वक्तव्यम् ऐश्वर्यार्थिनां ज्ञातव्यम् अधिभूतमधिदैवं च किं त्रयाणां ज्ञातव्योधियज्ञशब्दनिर्दिष्टश्च कः तस्य चाधियज्ञभावः कथं प्रयाणकाले चैभिः त्रिभिः नियतात्मभिः कथं ज्ञेयोऽसि ॥ १ ॥ स्पष्टम् ॥ २ ॥

अ० टी०—श्रीकृष्णाय नमः ॥ 'पूर्वोक्तब्रह्मकर्मादिरूपजिज्ञासुरर्जुनः ॥ पृष्टवान् स्पष्टमेतस्य कृष्ण उत्तरमुक्तवान् ॥ १ ॥' पूर्वाध्यायान्ते भगवता 'ते ब्रह्म' इत्यादिना समपदार्थज्ञानमुक्तं भक्तानाम् । तत्स्वरूपजिज्ञासुरर्जुनः प्रभुं विज्ञापयामास—अर्जुन उवाच ॥ किंतद्ब्रह्मेति द्वयेन । हे पुरुषोत्तम ! तद्ब्रह्म यदुक्तं तत्किम् अध्यात्मं किं कर्म । च पुनः अधिभूतं किं प्रोक्तं । च पुनः अधिदैवं किमुच्यते। अधियज्ञः यज्ञाधिष्ठाता फलदाता कः । अत्र उक्तप्रकारेषु कथं केन प्रकारेण नियतात्मभिरनन्यैकपरचित्तैर्ज्ञेयोऽसि । हे मधुसूदन! सर्वानिष्टनिवर्तक! अस्मिन् देहे प्रयाणकाले अन्तकाले कथं केन प्रकारेण ज्ञेयोसि। अत्रायं भावः । पुरुषोत्तमेतिसंबोधनेन त्वमेव पुरुषोत्तमः त्वत्तः पराभावात् कथं तद्ब्रह्मेत्युक्तम् । आधिदैविकं तु त्वत्स्वरूपमेवातस्त्वत्तोऽन्याधिदैवं किम् । अध्यात्मादयस्तु हीना एव तेषां ज्ञानं किं प्रयोजनकं । सेवा च कथं कार्येत्यादिर्व्यंजितम् । मधुसूदनेतिसंबोधनेन त्वदीयानां मरणादिभयाभावे तत्समये त्वं कथं स्वज्ञानमुक्तवानितिज्ञापितमिति भावः ॥ १ ॥ २ ॥

नी० टी०—पूर्वस्मिन्नध्याये मायोपहितं ब्रह्म जगत्कारणमुक्तं तच्च उत्तमानामनुपाधिब्रह्मप्रतिपत्तावुपलक्षणं मध्यमानामुपास्यं चेति मत्वा प्रतिपत्तव्यं ब्रह्म तद्विषय एकः उपासनाविषयाश्च षट् एवं सप्तप्रश्नविषयास्ते ब्रह्म तद्विदुरित्यध्यायांते सार्धश्लोकेन भगवता सूत्रितास्तद्वृत्तिरूपोऽयमध्याय आरभ्यते । तत्र सूत्रितानां ब्रह्मादिशब्दानामर्थं बुभुत्सुरर्जुन उवाच। किं तत्कृत्स्नं ब्रह्मेति प्रथमः प्रश्नः शेषः स्पष्टार्थः श्लोकः॥१॥ अधियज्ञः कथं कोऽत्र क इति स्वरूपप्रश्नः कथं ज्ञेय इति पदापकर्षेण तत्तदुपासनाप्रकारप्रश्नश्चेति द्वयं मिलित्वा एक एव प्रश्नः शेषं स्पष्टम् ॥ २ ॥

**श्रीभगवानुवाच—अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ॥**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥**

शां० भा०—एषां प्रश्नानां यथाक्रमं निर्णयाय—अक्षरं न क्षरतीति पर आत्मा "एतस्य वा अक्षरस्य प्रशासने गार्गि" इतिश्रुतेः । ओंकारस्य चोमित्येकाक्षरं ब्रह्मेति परेण विशेषणादग्रहणम् । परममिति च निरतिशये ब्रह्मण्यक्षर उपपन्नतरं विशेषणम् । तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभावः । स्वभावोऽध्यात्ममुच्यते, आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु स्वभावोऽध्यात्ममुच्यतेऽध्यात्मशब्देनाभिधीयते । भूतभावोद्भवकरो भूतानां भावो भूतभावस्तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकर इत्यर्थः। विसर्गो विसर्जनं देवतोद्देशेन चरुपुरोडाशादेर्द्रव्यस्य परित्यागः स एष विसर्गलक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्येतत् । एतस्माद्धि बीजभूताद्वृष्ट्यादिक्रमेण स्थावरजङ्गमानि भूतान्युद्भवन्ति ॥ ३ ॥

**शां० आ०**—व्याख्यातप्रश्नसप्तकस्य प्रतिवचनं भागवतमवतारयाति—**एषामिति**। क्रमेण कृतानां प्रश्नानां क्रमेणैव प्रतिवचने प्रष्टुरभीष्टप्रतिपत्तिसौकर्यं सिध्यतीति बुध्यमानो विशिनष्टि—**यथाक्रममिति**। तत्र प्रश्नत्रयं निर्णेतुं भगवद्वचनमुदाहरति—**अक्षरमिति**। किं तद्ब्रह्मेति प्रश्नस्य प्रतिवचनम्—**अक्षरं ब्रह्म परममिति**। तत्राक्षरशब्दस्य निरुपाधिके परस्मिन्नात्मन्यविनाशित्वव्याप्तिमत्त्वसंबन्धात्प्रवृत्तिं व्युत्पादयति—**अक्षरमित्यादिना**। कथं पुनरक्षरशब्दस्य यथोक्ते परमात्मनि वृद्धप्रयोगमन्तरेण व्युत्पत्त्या प्रवृत्तिराश्रीयते व्युत्पत्तेरर्थान्तरेऽपि संभवादित्याशङ्क्य द्यावापृथिव्यादिविषयनिरङ्कुशप्रशासनस्य परस्मादन्यस्मिन्नसंभवात्तथाविधप्रशासनकर्तृत्वेन श्रुतमक्षरं ब्रह्मैवेत्याह—**एतस्येति**। रूढिर्योगमपहरतीति न्यायादोंकारे वर्णसमुदायात्मन्यक्षरशब्दस्य रूढ्या प्रवृत्तिराश्रयितुमुचितेत्याशङ्क्याऽऽह—**ओंकारस्येति**। प्रतिवचनोपक्रमे प्रक्रान्तमोंकाराख्यमक्षरमेवोत्तरत्र विशेषितं भविष्यतीत्याशङ्क्य परमविशेषणविरोधान्न तस्य प्रक्रमः संभवतीत्याह—**परममिति चेति**। किमध्यात्ममिति प्रश्नस्योत्तरं स्वभावोऽध्यात्ममित्यादि तद्व्याचष्टे—**तस्यैवेति**। स्वकीयो भावः स्वभावः श्रोत्रादिकरणग्रामः स चाऽऽत्मनि देहेऽहंप्रत्ययवेद्यो वर्तत इत्यमुं प्रतिभासं व्यावर्त्य स्वभावपदं गृह्णाति—**स्वभाव इति**। एवं विग्रहपरिग्रहे स्वभावोऽध्यात्ममुच्यत इत्यस्यायमर्थो निष्पन्नो भवतीत्यनुवादपूर्वकं कथयति—**स्वभाव इति**। तस्यैव परस्येत्यादिनोक्तं न विस्मर्तव्यमिति विशिनष्टि—**परमार्थेति**। परमेव हि ब्रह्म देहादौ प्रविश्य प्रत्यगात्मभावमनुभवति "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेरित्यर्थः। किं कर्मेति प्रश्नस्योत्तरमुपादत्ते—**भूतेति**। भूतान्येव भावास्तेषामुद्भवः समुत्पत्तिस्तां करोतीति व्युत्पत्तिं सिद्धवत्कृत्य विधान्तरेण व्युत्पादयति—**भूतानामिति**। भावः सद्भावो वस्तुभावोऽस्त एव भूतवस्तूत्पत्तिकर इति वक्ष्याति। वैदिकं कर्मात्रोक्तविशेषणं कर्मशब्दितमिति विसर्गशब्दार्थं दर्शयन्विशदयति—**विसर्ग इत्यादिना**। कथं पुनर्यथोक्तस्य यज्ञस्य सर्वेषु भूतेषु सृष्टिस्थितिप्रलयहेतुत्वेन तदुद्भवकरत्वमित्याशङ्क्य 'अग्नौ प्रास्ताऽऽहुतिः' इत्यादिस्मृतिमनुसृत्याऽऽह—**एतस्माद्धीति**॥ ३॥

**आ० भा०**—तथाहि। जैवस्वभावः। स्वाख्योभावः स्वभाव इति व्युत्पत्त्या जीवो वा स्वभावः सर्वदा अस्त्येव एकप्रकारेणेति भावः। अंतःकरणादिव्यावृत्त्यर्थो भावशब्दः। न ह्येकप्रकारेण स्थितिरंतःकरणादेः विकारित्वात्। स्वशब्दः ईश्वरव्यावृत्त्यर्थः। भूतानां जीवानां भावानां जडपदार्थानां चोद्भवकरीश्वरक्रिया विसर्गः। विशेषेण सर्जनं विसर्ग इत्यर्थः॥ ३॥

**आ० ज०**—एवं तर्हि स्वभाव इत्युभयस्य कथमुत्तरमित्यतस्तावत्तव्द्याख्यानं प्रतिजानीते—**तथा हीति**। तत्राद्योत्तरत्वेनादौ व्याचष्टे—**जैव इति**। जीवस्यायं जैवोंतःकरणादिर्देहपर्यंतः पदार्थः स्वभावः। स्वस्य भावं इति व्युत्पत्त्या ते ब्रह्म तद्विदुरिति जीवानां प्रकृतत्वात्। स्वशब्दो जीववाची तथा चात्मन्यधि यत् तदित्येवं व्याख्याताध्यात्मशब्दार्थप्रश्नस्येदमुत्तरं भवतीति भावः। इदानीं द्वितीयोत्तरत्वेन व्याख्याति—**स्वाख्य इति**। पूर्ववदत्रापि स्वशब्दो जीववाची तथा चात्माधिकार इति व्याख्याताध्यात्मशब्दार्थप्रश्नस्येदमुत्तरं भवतीत्याशयः। ननु जैववाचित्वे भावशब्दः सार्थकः। षष्ठ्याः साकांक्षत्वात्। जीववाचित्वे तु तस्य पदार्थत्वाव्यभिचारात् स्वशब्देनैवालं किंभावशब्देनेत्यतोभावशब्दं तावदन्यथा व्याचष्टे—**सर्वदेति**। यद्यपि भवनकर्ता भावः तथाऽपि विशेषानुपादाने मुख्यस्य ग्राह्यत्वात्सर्वदेत्यादिसिध्याति। तथाऽपि तस्य किं प्रयोजनमित्यत आह—**अंतःकरणादीति**। स्वशब्दमात्रोपादाने तस्यात्मीयेऽपि प्रयोगादंतःकरणादिकमपि प्रसज्येत तथा च द्वितीयस्येदमुत्तरं स्यात्। आत्मैव ह्यात्माधिकारे प्रतिपाद्यो वक्तव्यो नांतःकरणादिकम्। अतस्तद्व्यावृत्त्यर्थो भावशब्दः प्रयुक्तः कथं तेन तद्व्यावृत्तिरित्यत आह—**न हीति**। अन्नमयं हि सोम्य मन इत्यादेरिति भावः। तथा चांतःकरणादौ व्यावृत्ते स्वशब्द आत्मार्थतया व्याख्यातो भवतीति हृदयम्। एवं तर्हि भाव इत्येवास्तु किं स्वशब्देनेत्यत आह—**स्वशब्द इति**। ईश्वरोऽपि हि सर्वदैकप्रकारेणास्त्येव। अतो भाव इत्येवोक्ते तत्प्रसक्तौ पूर्ववत् द्वितीयोत्तरत्वासंभवे तद्व्यावृत्त्यर्थः स्वशब्दः। न हि ईश्वरो जीवानां स्वः। भेदप्रमाणविरोधात्। अत एवेश्वरस्वभावो जीव इति व्याख्यानमपास्तम्। नन्वेवमपि स्वशब्दस्यात्मीयार्थत्वादीश्वरप्रसक्तिः। मैवम्। 'द्विष्ठो यद्यपि संबंधः षष्ठ्युत्पात्तिः प्रधानतः' इति वचनात्तस्यात्मीयत्वाभावात् षष्ठ्यंतात्खल्वयं छः। सकलकार्योत्पत्तिनिमित्तभूतोदेवतोद्देशेन च पुरोडाशादिद्रव्यपरित्यागस्तज्जन्यमपूर्वमिति यावदिति व्याख्यानमसत्। तस्याध्यात्मपदेनैव गृहीतत्वादिति भावेन भूतभावेत्यादिकं व्याख्याति—**भूतानामिति**। उद्भवकरी च सेश्वरक्रिया चेति विग्रहः। ईश्वरक्रियाग्रहणं कर्मशब्देनैकार्थ्यप्रतिपत्त्यर्थम्। एवंलक्षणो यो विसर्गः स कर्मसंज्ञितो न तु कुलालादिसंबंधीत्यर्थः। ननु विसर्गशब्दस्यात्यागार्थस्तत्कथमेवं व्याख्यानमित्यत आह—**विशेषेणेति**॥ ३॥

**रा० भा०**—तद्ब्रह्मेति निर्दिष्टं परममक्षरं न क्षरतीत्यक्षरं क्षेत्रज्ञं समष्टिरूपं तथा च श्रुतिः "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इत्यादिका। परममक्षरं प्रकृतिविनिर्मुक्तात्मस्वरूपं

स्वभावः अध्यात्ममुच्यते स्वभावः प्रकृतिः अनात्मभूतमात्मनि संबद्ध्यमानं भूतसूक्ष्मतद्वासनादिकं पञ्चाग्निविद्यायां ज्ञातव्यतयोदितं तदुभयं प्राप्यतया त्याज्यतया च मुमुक्षुभिर्ज्ञातव्यं भूतभावो मनुष्यादिभावः तदुद्भवकरो यो विसर्गः " पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति " इति श्रुतिसिद्धो योषित्संबन्धजः स कर्मसंज्ञितः तच्चाखिलं सानुबन्धम् उद्वेजनीयतया परिहरणीयतया च मुमुक्षुभिर्ज्ञातव्यं परिहरणीयता चानन्तरमेव वक्ष्यते " यदिच्छन्तो ब्रह्मचर्यं चरन्ति " इति ॥ ३ ॥

अ० टी०—एतत्प्रश्नोत्तरं साभिप्रायज्ञानार्थम् श्रीभगवानुवाच—अक्षरमिति त्रयेण । न क्षरति न चलतीत्यक्षरं सदैकरसरूपं पुरुषोत्तमचरणात्मकं भक्तहृदयादचलं गृहात्मकं वा स्थिरं तत् । परमं परः पुरुषोत्तमो मीयत अस्मिन्निति परमं ब्रह्म बृहत् व्यापकं च । स्वभावः स्वस्य भगवतो दास्यादिसेवासिद्ध्यर्थं जीवरूपेण भवनम् । अध्यात्मम् आत्मानमविकृतं सेवायोग्यं देहमधिकृत्य तदनुभवे वर्त्तमानो जीवभावोऽध्यात्मशब्देनोच्यत इत्यर्थः । भूतानां जीवानां भावस्य भगवद्रसरूपस्योद्भवकरः प्रकटकारको यो विसर्गो भगवदर्थद्रव्यादिविनियोगेन सेवारूपः स कर्मसंज्ञितः क्रियारूपः कर्मशब्दवाच्य इत्यर्थः ॥ ३ ॥

नी० टी०—क्रमेणैषां प्रश्नानामुत्तरमाह—अक्षरमित्यादिभिस्त्रिभिः । तत्र किंतद्ब्रह्मेत्यस्योत्तरमक्षरं परमं ब्रह्मेति यत् परममक्षरं तद्ब्रह्मेति योजना अक्षरशब्दस्य वर्णेषु रूढत्वात् ओमित्येतदक्षरमित्यादिश्रुतौ ओमित्येकाक्षरं ब्रह्मेति स्मृतौ च दर्शनेनात्रापि प्रणवस्याक्षरशब्देन ग्रहणे प्रसक्ते परममिति विशेषणं प्रणवस्य परब्रह्मत्वासंभवात् । अतश्च " एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घम्"इति श्रुतिप्रसिद्धमखंडैकरसं वस्तु अक्षरशब्दितं तद्ब्रह्मेति प्राञ्चः । यद्वा । अक्षरशब्देन जीवः कूटस्थोऽक्षर उच्यते उत्तमः पुरुषस्त्वन्य इति गीतासु । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" इति श्रुतौ च कूटस्थपदेनामृतपदेन च विशेषितस्याक्षरपदस्य जीववाचित्वदर्शनात् अमृतोऽक्षरमित्यपेक्षिते उत्वाभावश्छांदसः यथा चाक्षरं जीवाख्यं परमं ब्रह्म परममिति विशेषणेन सोपाधिकस्य पूर्वाध्यायोक्तस्य व्यावृत्तिः । नहि जीवस्य सोपाधिकस्य ब्रह्मभावः संभवति व्यावर्त्तकोपाधौ मायादर्पणे जाग्रति तयोरभेदायोगात् । किंतद्ब्रह्मेति प्रश्ने परममिति विशेषणाभावेऽपि ते ब्रह्म तद्विदुः कृत्स्नमिति प्रश्नोत्थापके सूत्रे परमत्ववाचिना कृत्स्नपदेन ब्रह्मणो विशेषितत्वादुत्तरेऽपि ब्रह्मण एव परममिति विशेषणं युज्यत एव प्रश्नेपि तच्छब्देन कृत्स्नत्वस्यैव ग्रहात् । ततश्च किं तत् कृत्स्नं ब्रह्मेति प्रश्ने यदक्षरं जीवाख्यं तदेवापेतोपाधिसंबंधं सत् कृत्स्नं ब्रह्मेति तत्त्वमसीति महावाक्यार्थः प्रतीचो ब्रह्मभावः प्रतिपादितो भवतीति हृद्यं । तथा स्वोऽनागंतुको भावः स्वरूपं स्वभावः शुद्धस्त्वंपदार्थः सोध्यात्ममुच्यते । भाष्ये तु तस्यैव पदस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वोभावः स्वभावोऽध्यात्ममुच्यते अध्यात्मशब्देनाभिधीयत इति विसर्गो देवतोद्देशेन द्रव्यत्यागात्मको यागः स कर्मसंज्ञितः। तमेव विशिनष्टि—भूतेति । भूतानां भावः सात्विकादिः स्वभावः उद्भवश्च तयोः करणाद्भूतभावोद्भवकरः । तथा हि। बुद्धिः कर्मानुसारिणीति कर्मानुसारित्वं भावस्य स्मर्यते। तथा उद्भवोऽपि कर्मत एव स्मर्यते। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'इति ॥ ३ ॥

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ॥**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**

शां० भा०—अधिभूतमिति । अधिभूतं प्राणिजातमधिकृत्य भवतीति । कोऽसौ क्षरः क्षरतीति क्षरो विनाशी भावो यत्किंचिज्जनिमद्वस्त्वित्यर्थः । पुरुषः पूर्णमनेन सर्वमिति पुरि शयनाद्वा पुरुष

**आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानामनुग्राहकः सोऽधिदैवतम् । अधियज्ञः सर्वयज्ञाभिमानिनी देवता विष्णवाख्या "यज्ञो वै विष्णुः" इति श्रुतेः । स हि विष्णुरहमेवात्रास्मिन्देहे यो यज्ञस्तस्याहमधियज्ञो यज्ञो हि देहनिर्वर्त्यत्वेन देहसमवायीति देहाधिकरणो भवति देहभृतां वर ॥४॥**

**शां० आ०**—संप्रति प्रश्नत्रयस्योत्तरमाह—**अधिभूतमिति** । अधिभूतं च किं प्रोक्तमित्यस्य प्रतिवचनमधिभूतं क्षरो भाव इति तत्राधिभूतपदमनूद्य वाच्यमर्थं कथयति—**अधिभूतमित्यादिना** । तस्य निर्देशमन्तरेण निर्ज्ञातुमशक्यत्वात्प्रश्नद्वारा तन्निर्दिशति—**कोऽसाविति** । कार्यमात्रमत्र संगृहीतमिति वक्तुमुक्तमेव व्यनक्ति—**यत्किंचिदिति** । अधिदैवं किमिति प्रश्ने पुरुषश्चेत्यादिप्रतिवचनं तत्र पुरुषशब्दमनूद्य मुख्यमर्थं तस्योपन्यस्यति—**पुरुष इति** । तस्यैव संभावितमर्थान्तरमाह—**पुरिशयनाद्वेति** । वैराजं देहमासाद्याऽऽदित्यमण्डलादिषु दैवतेष्वन्तरवस्थितो लिङ्गात्मा व्यष्टिकरणानुग्राहकोऽत्र पुरुषशब्दार्थः । स चाधिदैवतमिति स्फुटयति—**आदित्येति** । अधियज्ञः कथमित्यादिप्रश्नं परिहरन्नधियज्ञशब्दार्थमाह—**अधियज्ञ इति** । कथमुक्तायां देवतायामधियज्ञशब्दः स्यादित्याशङ्क्य श्रुतिमनुसरन्नाह—**यज्ञो वा इति** । परैव देवताऽधियज्ञशब्देनोच्यते । सा च ब्रह्मणः सकाशादत्यन्ताभेदेन प्रतिपत्तव्येत्याह—**स हि विष्णुरिति** । शास्त्रीयव्यवहारभूमिरत्रेत्युक्ता । देहसामानाधिकरण्याद्वाऽत्रेत्यस्य व्याख्यानम्—**अस्मिन्निति** । किमधियज्ञो बहिरन्तर्वा देहादिति संदेहो मा भूदित्याह—**देह इति** । ननु यज्ञस्य देहाधिकरणत्वाभावात्कथं तथाविधयज्ञाभिमानिदेवतात्वं भगवता विवक्ष्यते तत्राऽऽह—**यज्ञो हीति** । एतेन तस्य बुद्ध्यादिव्यतिरिक्तत्वमुक्तमवधेयम् । न हि परा देवता दर्शितरीत्याऽधियज्ञशब्दिता बुद्ध्यादिष्वन्तर्भावमनुभवितुमलम् । देहान्बिभ्रतीति देहभृतः सर्वे प्राणिनस्तेषामेष वरः श्रेष्ठो युक्तं हि भगवता साक्षादेव प्रतिक्षणं संवादं विदधानस्यार्जुनस्य सर्वेभ्यः श्रैष्ठ्यम् ॥ ४ ॥

**आ० भा०**—भूतानि सशरीरान्जीवानधिकृत्य यत्तदधिभूतम् । क्षरो भावो विनाशिकार्यपदार्थः । अव्यक्तांतर्भावेऽपि तस्याप्यन्यथाभावाख्यो विनाशोऽस्त्येव । तच्चोक्तम् 'अव्यक्तं परमे व्योम्नि निष्क्रिये संप्रलीयते' इति । 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति च । विकारो व्यक्तजन्म हीति च स्कांदे । पुरिशयनात्पुरुषो जीवः । स च संकर्षणो ब्रह्मा वा । स सर्वदेवानधिकृत्य तत्पतिरित्यधिदैवतम् देवाधिकारस्थ इतिवा । सर्वयज्ञभोक्तृत्वादेरधियज्ञः । अन्योऽधियज्ञो ग्न्यादिः प्रसिद्ध इतिदेह इति विशेषणम् । भोक्तारं यज्ञतपसाम् । त्रैविद्या माम् । ये त्वन्यदेवता भक्ताः । "एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसंति यजमानं देवाः" इत्यादेः । 'कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैःश्रेयसं पदम्' इत्यादिपरिहारश्च मोक्षधर्मे । भगवांश्चेत्तद्भोक्तृत्वादेरधियज्ञत्वं सिद्धमिति कथमित्यस्य परिहारः पृथङ्नोक्तः । सर्वप्राणिदेहस्थरूपेण साधियज्ञः । अत्रेति स्वदेहनिवृत्त्यर्थम् । नहि तत्रेश्वरस्य नियंतृत्वं पृथगस्ति । नात्रोक्तं ब्रह्म भगवतोन्यत् । ते ब्रह्मेत्युक्त्वा 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' इति परामर्शात् । तस्यैव च प्रश्नात् । साधियज्ञमितिभेदप्रतितेस्तन्निवृत्त्यर्थमधियज्ञोहमित्युक्तम् । मामित्यभेदप्रसिद्धेरक्षरमित्येवोक्तम् । आह च गीताकल्पे 'देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः । कर्मेश्वरस्य सृष्ट्यर्थं तच्चापीच्छाद्यमुच्यते ॥ अधिभूतं जडं प्रोक्तमध्यात्मं जीवउच्यते । हिरण्यगर्भोधिदैवं देवः संकर्षणोपि वा ॥ ब्रह्मनारायणो देवः सर्वदेवेश्वरेश्वरः' इति । यथा प्रतीतं वा सर्वमत्र नैव विरुध्यत इति । स्कांदे च 'आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते । देहाद्बाह्यं विनाऽतीव बाह्यत्वादधिदैवतम् ॥ देवाधिकारगं सर्वं महाभूताधिकारगम् । तत्कारणं तथा कार्यमधिभूतं तदंतिकात्' इति । महाकौर्मे च 'अध्यात्मं देहपर्यंतं केवलात्मोपकारकम् । सदेहजीवभूतानि यत्तेषामुपकारकृत् ॥ अधिभूतं तु मायांतं देवानामधिदैवतम्' इति ॥४॥

**आ० ज०**—परिहारं संगमयितुमधिभूतशब्दार्थं तावदाह—**भूतानीति** । अधिकृत्य तदुपकारित्वेन यद्वर्तते । क्षरः सर्वाणि भूतानीति वक्ष्यमाणं क्षरं व्यावर्तयितुं व्याचष्टे—**क्षर इति** । क्षरशब्दव्याख्या विनाशीति । भावशब्दस्यार्थद्वयं कार्यं इति पदार्थ इति भवत्युत्पद्यत इति भावः । उत्पत्तिमान्पदार्थो नाशवान् पदार्थइति प्रत्येकमुत्तरम् । सर्वभूतानामध्यात्मत्वान्न ग्रहणम् ।

नन्वव्यक्तमपि सशरीरान् जीवानधिकृत्य वर्तत इति तस्याप्यधिभूतेंऽतर्भावोऽस्त्येव न चेत्तद्विनाशि कार्यं वा नासत इत्युक्तत्वात् । ततोऽव्यापकमुत्तरमित्यत आह—**अव्यक्तेति** । अव्यक्तस्याधिभूतांतर्भावेपि नाव्यापकमुत्तरमिति शेषः । कुत इत्यत आह—**तस्यापीति** । अन्यथाभावो वैषम्यपरित्यागेन साम्यावस्थापत्तिः । यत इतिशेषः । तथा विक्रियालक्षणं जन्मचेत्यपि ग्राह्यम् । उभयत्र क्रमेण प्रमाणान्याह—**तच्चेति** । व्योम्नि व्याप्ते प्रलये प्रचुरव्यापाराभावात् निष्क्रिये ननु पुरुषः परमात्मा स ब्रह्माधियज्ञशब्दाभ्यामुक्त इत्यत आह—**पुरीति** । शरीरे "अधिकरणे शेतेः" इतिडः । 'वर्णागमो वर्णविपर्ययश्च' इत्यादिना साधुः । तथाप्यध्यात्मशब्देन गतार्थतेत्यत आह—**स चेति** । सर्वजीवाभिमानित्वादिति भावः । तस्याधिदैवत्वं कथमित्यतो द्वेधाऽह—**स इति** । अधिकृत्य वर्तत इत्यस्यैव विवरणं—**पतिरिति** । देवाधिकारस्थस्तत्प्रकरणेषु मुख्यतः प्रतिपाद्यः सर्वदेवतासंग्रहार्थं वा द्वितीयं व्याख्यानम् । अक्षरार्थस्तु पूर्ववत् । अधियज्ञः कथमित्यस्योत्तरं भगवताऽनुक्तं भाष्यकृदाह—**सर्वेति** । आदिपदेन तत्प्रवर्तकत्वादिनाध्यात्मशब्दवदधियज्ञ शब्देऽव्ययीभावः । किं तु अधिगतो यज्ञमितिप्रादिसमासः । अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा । अधियज्ञः कइति प्रश्ने तत्परिहारे च देह इत्यस्य प्रयोजनमाह—**अन्य इति** । अन्यो भगवतः इति सिद्धार्थतापरिहारार्थं प्रश्नवाक्ये देह इति विशेषणं प्रयुक्तं कर्तृभोक्तृफलदातॄणां देहप्रेरकत्वेन वर्तमान इति । अतःपरिहारवाक्येऽपि यथाप्रश्नं तदुपात्तमिति वाक्यशेषः । भगवतः सर्वयज्ञभोक्तृत्वं कुतो येनैवमुत्तरमध्याह्रियत इत्यत आह—**भोक्तारमिति** । त्रैविद्यानुष्ठितयज्ञभोक्तृत्वाभावात्सर्वेत्यनुपपन्नमित्यत आह—**त्रैविद्या इति** । प्रवर्तकत्वे श्रुतिमाह—**एतस्येति** । यज्ञफलदातृत्वादौ प्रमाणमाह—**कुतो हीति** । ध्रुवश्चिरंतनः । निःश्रेयसे मुक्तौ भवं पदं सुखमित्यादेः प्रश्नस्य । नन्वेष परिहारो भगवतैव कुतो नोक्त इत्यत आह—**भगवांश्चेदिति** । चेतशब्दो यदाशब्दार्थे अधियज्ञोऽहमिति यदाधियज्ञत्वेन भगवानुक्तः तदा तस्य सर्वयज्ञभोक्तृत्वादेरधियज्ञत्वमर्जुनस्य सिद्धमेव । भोक्तारमित्यादेरर्थस्य तेन श्रुतत्वात् । अन्यत्वपक्ष एव कथमिति पृष्टत्वात् । एवमालोच्य भगवता कथमित्यस्य प्रश्नस्य परिहारोऽधियज्ञोहमित्यतः पृथङ्नोक्तः । अस्माभिस्तु मंदान्बोधायितुमुक्त इति भावः । ननु यद्यधियज्ञः स्वयमेव तर्हि कथं साधियज्ञं मामिति प्रागवोचदित्यत आह—**सर्वेति** । रूपविशेषापेक्षया साहित्यमुक्तमिति भावः । अनेन परिहारवाक्यस्थस्य देह इतिविशेषणस्य प्रयोजनांतरं चोक्तं भवति । अत्रेति देहविशेषणं किमर्थमित्यत आह—**अत्रेति** । इह लौकिके देहइत्यर्थः । कुत ईश्वरदेहो व्यावर्तनीय इत्यत आह—**न हीति** । तत्र स्वदेहे पृथक् पृथग्भावेन । यथाऽधियज्ञोऽहमेवेत्युक्तं न तथा ब्रह्माहमिति । अतो भगवतोऽन्यदेवेदं ब्रह्मपरममिति तु स्वरूपकथनम् । न तु विशेषणमिति शंकां निवारयति—**नात्रेति**। पूर्वाध्याये ते ब्रह्म तद्विदुरित्युक्त्वा कथंभूतं ब्रह्मेत्याकांक्षायां साधिभूताधिदैवं साधियज्ञं च ब्रह्मेतिवक्तव्ये मामितिब्रह्मणः परामर्शात्। तत्रास्तु भगवानेव ब्रह्म अत्र तु कुत इत्यत आह—**तस्यैवेति** । पृष्टस्यैव वक्तव्यत्वात् । तर्हि अधियज्ञस्य ब्रह्मणश्च भगवत्त्वादेकत्राहमेवेत्युक्तिरपरत्र तदनुक्तिः किं निबंधनेत्यत आह—**साधियज्ञमिति** । शेषं तात्पर्यनिर्णये । एतेनापव्याख्यानमपि निरस्तं द्वादशादौ च विस्तरेण आगमसंमत्योक्तं स्थापयति—**आह चेति** । यानि देहस्थविष्णुरूपाणि सोऽधियज्ञ इतीरितः । तदपीच्छाप्रयत्नाद्यमेव । न तु परिणामरूपम् । जडं देहाद्बाह्यम् । न केवलमेषां पदानामेतावन्मात्रार्थत्वं किं तु यथाप्रतीतं प्रतीतिमनतिक्रम्य शब्दशक्त्या यावत्प्रतीतं प्रमाणाविरुद्धं च तदत्र व्याख्यायमानं वक्तुरभिप्रायं न व्यभिचरतीत्यर्थः । किंचिद्व्यवहितत्वात् सध्येऽपीति शब्दः । एतदेव वाक्यांतरेण स्पष्टयति—**स्कांदे चेति** । आत्मनोऽभिमानस्य विषयः आत्माधिकारस्थं तत्र प्रतिपाद्यं देहाद्बाह्यंविनेति । सामर्थ्यादात्माभिमानस्थेन संबध्यते । तत्र युक्तिः अतीव बाह्यत्वात् । अत्यभिमानविषयत्वाभावात् । महाभूताधिकारगं महाभूतम् । कार्यकारणग्रहणहेतुः । 'तदंतिकात्तत्तादात्म्यात्' । देवानामुपकारकृत् ॥ ४ ॥

**रा० भा०**—ऐश्वर्यार्थिनां ज्ञातव्यतया निर्दिष्टमधिभूतं क्षरो भावः वियदादिभूतेषु वर्तमानस्तत्परिणामविशेषः क्षरणस्वभावो विलक्षणः शब्दस्पर्शादिः साश्रयः विलक्षणाः साश्रयाः शब्दस्पर्शरूपरसगन्धाः ऐश्वर्यार्थिभिः प्राप्यास्तैरनुसन्धेयाः पुरुषश्चाधिदैवतम् अधिदैवतशब्दनिर्दिष्टः पुरुषः अधिदैवतं दैवतोपरि वर्तमानम् इन्द्रप्रजापतिप्रभृतिकृत्स्नदैवतोपरिवर्तमानः इन्द्रप्रजापतिप्रभृतीनां भोग्यजाताद्विलक्षणशब्दादेर्भोक्ता पुरुषः सा च भोक्तृत्वावस्था ऐश्वर्यार्थिभिः प्राप्यतयाऽनुसंधेया अधियज्ञोऽहमेव अधियज्ञशब्दनिर्दिष्टोऽहमेव अधियज्ञः यज्ञैः आराध्यतया वर्त्तमानः अत्रेन्द्रादौ मम देहभूते आत्मतयावस्थितोऽहमेव यज्ञैराराध्य इति महायज्ञादिनित्यनैमित्तिकानुष्ठानवेलायां त्रयाणामधिकारिणामनुसन्धेयमेतत् ॥ ४ ॥

**अ० टी०**—एवं ब्रह्माध्यात्मकर्मोत्तराण्युक्त्वाऽधिभूताद्युत्तराण्याह—**अधिभूतमिति** । क्षरो भावो विनश्वरो देहो भगवद्विप्रयोगतापाधिक्येन नाशभावयुक्तोऽधिभूतं जीवमात्रमधिकृत्य भवतीति अधिभूतं

दास्यार्थमाविर्भावितस्वांशे विप्रयोगतापार्थं प्रकटीक्रियत इति तथोच्यत इतिभावः। च पुनः। पुरुषो मम जीवहृदि पुरुषत्वेन रसात्मको भावः स अधिदैवः तं क्रीडात्मकभावमाधिकृत्य भवतीति सर्वमूलरूप इति तथोच्यत इतिभावः। किं च। हे देहभृतां वर! मत्सेवौपयिकसामर्थ्ययुक्त! अत्र जगति देहे देहनिमित्तं सेवौपयिकोपचयार्थम् अधियज्ञः यज्ञादिकर्मात्मकस्तत्प्रवर्तकश्चेत्यर्थः ॥ ४ ॥

नी० टी०—क्षरो भावो जनिमद्वस्तु कर्मफलभूतं तत्साधनभूतं च तदधिभूतमित्युच्यते। अधिदैवतं पुरुषः सर्वासु पूर्षु वसतीति सर्वकरणानुग्राहकः सकलदेवतात्मा हिरण्यगर्भः। अधियज्ञो यज्ञाभिमानी विष्णुरंतर्यामी सोऽहमेव देह्यस्मि अत्रास्मिन्देहे देहभृतां वर ॥ ४ ॥

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ॥**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

**शां० भा०—अन्तकाल इति। अन्तकाले च मरणकाले मामेव परमेश्वरं विष्णुं स्मरन्मुक्त्वा परित्यज्य कलेवरं शरीरं यः प्रयाति गच्छति स मद्भावं वैष्णवं तत्त्वं याति नास्ति न विद्यतेऽत्रास्मिन्नर्थे संशयो याति वा न वेति ॥ ५ ॥**

शां० आ०—यत्तु प्रयाणकाले चेत्यादि चोदितं तत्राऽऽह—**अन्तकाले चेति**। मामेवेत्यवधारणेनाध्यात्मादिविशिष्टत्वेन स्मरणं व्यावर्त्यते। विशिष्टस्मरणे हि चित्तविक्षेपात्न प्रधानस्मरणमपि स्यात्। नच मरणकाले कार्यकरणपारवश्याद्भगवदनुस्मरणासिद्धिः सर्वदैव नैरन्तर्येणाऽऽदरधिया भगवति समर्पितचेतसस्तत्कालेऽपि कार्यकरणजातमगणयतो भगवदनुसंधानसिद्धेः। शरीरं तस्मिन्नहंममाभिमानाभावादिति यावत्। प्रयातीत्यत्र प्रकृतशरीरमपादानम्। "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतिमाश्रित्याऽऽह—**नास्तीति**। व्यासेध्यं संशयमेवाभिनयति—**याति वेति** ॥ ५ ॥

**आ० भा०—मद्भावं मयि सत्ताम् निर्दुःखनिरतिशयानंदात्मिकाम्। तच्चोक्तम्। 'मुक्तानां च गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्पितः' इतिमोक्षधर्मे ॥ ५ ॥**

आ० ज०—मद्भावमित्यस्य मदात्मकत्वमित्यन्यथाप्रतीतिनिरासायाह—**मद्भावमिति**। न तु भगवति स्थितिः सर्वदाऽस्ति सा कथं फलमित्यतो विशिनष्टि—**निर्दुःखेति**। क्वचित्पाठः मद्भावं मद्वद्भावमिति। तत्र भगवत्प्रतिबिंबानां जीवानां तत्सादृश्यं सदाऽस्ति। तत्कथं प्राप्यमुच्यत इत्यत उक्तम्—**निर्दुःखेति**। अत्रात्मकमिति पाठः अभिव्यक्तमिति शेषः। प्रतीत एवार्थः किं न स्यादिति चेत् न। मुक्तानां भगवदाश्रितत्वेन तद्भावायोगात्। तदपि कुतइत्यत आह—**तच्चेति**। क्षेत्रज्ञः परमात्मागतिरिति समर्थितः ॥ ५ ॥

**रा० भा०—इदमपि त्रयाणां साधारणम् अन्तकाले च मामेव स्मरन्कलेवरं त्यक्त्वा यः प्रयाति स मद्भावं याति मम यो भावः स्वभावस्तं याति तदानीं यथा मामनुसंधत्ते तथाविधाकारो भवतीत्यर्थः। यथा आदिभरतादयः तदानीं स्मर्यमाणमृगसजातीयाकाराः संभूताः ॥ ५ ॥**

अ० टी०—प्रयाणकाले च कथं ज्ञेयोसीत्यस्योत्तरमाह—अन्तकाल इति। अन्तकाले एतद्देहावसानसमये वा अन्तरूपस्य अन्तिमजन्मनो देहस्य काले नाशसमये प्राप्ते सति मामेव स्मरन् यः प्रयाति देहं मुञ्चति स कलेवरं मृतदेहं भजनायोग्यं मुक्त्वा मद्भावं सेवौपयिकस्वरूपं याति प्राप्नोति। अत्रार्थे संशयो नास्ति न वर्त्तते। अतः संदेहो न कर्त्तव्य इत्यर्थः। चकारेण शुद्धावस्थादिकं न विचारणीयमिति ज्ञापितम्। एवकारेण कामनयाऽन्यत् किंचिदपि फलत्वेन न स्मरणीयमिति ज्ञापितम् ॥ ५ ॥

नी० टी०—अत्र षट्प्रश्नोत्तरेषु प्रथमे जीवस्य ब्रह्मभाव उक्तः तं जानतां प्रयाणमेव नास्ति । "न तस्य प्राणा उत्क्रामंत्यत्रैव समवनीयंते ब्रह्मैव सन्ब्रह्माप्येति" इति श्रुतेः । द्वितीये शुद्धस्त्वंपदार्थ उक्तस्तज्ज्ञानस्यापि वस्तुतत्त्वविषयत्वान्न तत्र भावनापेक्षाऽस्तीति न भावनाफलभूतकाले तत्प्रत्ययोऽपेक्षते । तृतीयचतुर्थयोस्तु कर्म तत्साधनभूतं च जन्यं वस्तूक्तं तत्रापि न भावनापेक्षाऽस्ति अंतकाले प्रबलेनैव कर्मणा चित्तस्यावरोधात्तत्साधनफलभूतस्यैव स्मरणावश्यंभावेन तत्र भावनाया वैयर्थ्यात् । परिशेषादंत्ययोरेव कार्यकारणब्रह्मणोः सोपाधिकनिरुपाधिकयोरन्यतरस्य भावना सुदृढा चेदंतकाले तत्प्रत्ययोऽवश्यंभावीति तयोरन्यतरं रूपं परमात्मानं स्मरन् यः कलेवरं मुक्त्वार्चिरादिमार्गेण प्रयाति स ब्रह्मलोकप्राप्तिद्वारा क्रमेण मद्भावं मोक्षं यातीत्याह—अंतकाले चेति । स्पष्टा योजना नास्त्यत्र संशय इति सोपाधिकब्रह्मोपास्तिं प्रकृत्य । "शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका ॥ तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवंति" इति तदुपासकस्य गतिपूर्वकस्यामृतत्वस्य श्रवणात् । यस्तु शुद्धत्वंपदार्थरूपमध्यात्मवस्तुमात्रं वेद असौ ब्रह्मात्मैक्यज्ञानाभावान्न तस्य प्राणाउत्क्रामंतीत्येतद्वाक्यविषयो न भवति किंतु शतं चैका चेत्येतस्यैव विषयः । ननु तस्यानुपासकत्वात्कथमेतदिति चेन्न । न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छतीतिन्यायेन तस्योभयभ्रष्टत्वासंभवात् । कठवल्लीषु निष्कलप्रत्यगात्मविदं केवलयोगिनं प्रकृत्य शतं चैका चेत्याम्नानाच्च । "वेदांतविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः ॥ ते ब्रह्म लोके तु परांतकाले परामृतात्परिमुच्यंति सर्वे" इति श्रुतेर्निश्चितार्थानां शोधितत्वंपदार्थानामेव क्रममुक्तिरवगम्यते न चात्र सुनिश्चितार्था इत्यनेन ब्रह्मात्मैक्यनिश्चयवंतो ग्रहीतुं शक्याः तेषां गत्यभावस्य प्रोक्तत्वात् । नाप्युपासकाः असंभवात् । उपासना हि नाम अतस्मिंस्तद्बुद्धिः यथा शालग्रामे विष्णुबुद्धिरेवं सूत्रविराडंतर्यामिष्वात्मबुद्धिरिति न तद्वंतः सुनिश्चितार्था इति वक्तुं शक्यं । तस्मादध्यात्मविदां ब्रह्मात्मैक्यानवगमादनुपासकत्वेनांत्यप्रत्ययाभावेऽप्यर्चिरादिगतिप्राप्तिरस्तीति सर्वमनवद्यम् ॥ ५ ॥

## यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ॥
## तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

**शां० भा०—न मद्विषय एवायं नियमः किं तर्हि—यं यं वाऽपि यं यं भावं देवताविशेषं स्मरंश्चिन्तयंस्त्यजति परित्यजत्यन्ते प्राणवियोगकाले कलेवरं तं तमेव स्मृतं भावमेवैति नान्यं कौन्तेय सदा सर्वदा तद्भावभावितस्तस्मिन्भावस्तद्भावः स भावितः स्मर्यमाणतयाऽभ्यस्तो येन स तद्भावभावितः सन् ॥ ६ ॥**

शां० आ०—अन्तकाले भगवन्तमनुध्यायतो भगवत्प्राप्तिनियमवदन्यमपि तत्काले देवादिविशेषं ध्यायतो देहं त्यजतस्तत्प्राप्तिरवश्यंभाविनीति दर्शयति—**नेत्यादिना** । कथं पुनरन्तकाले परवशस्य नियतविषयस्मृतिर्भवितुमुत्सहते तत्राऽऽह—**सदेति** । देवादिविशेषस्तस्मिन्निति सप्तम्यर्थः । भावो भावना वासना स भावो भावितः संपादितो येन पुंसा स तथाविधः सन्यं यं भावं स्मरति तं तमेव देहत्यागादूर्ध्वं गच्छतीति संबन्धः ॥ ६ ॥

**आ० भा०—स्मरन्पुरुषस्त्यजतीति भिन्नकालीनत्वेप्यविरोध इति मंदमतेः शंका माभूदित्यंत इति विशेषणम् सुमतेर्नैव शंकावकाशः । स्मरंस्त्यजतीत्येककालीनत्वप्रतीतेः । दुर्मतेर्दुःखान्न स्मरंस्त्यजतीति शंका । 'त्यजन्देहं न कश्चित्तु मोहमाप्नोत्यसंशयम्' इति स्कांदे । "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति" इति हि श्रुतिः । सदा तद्भावभावित इत्यं-**

**तत्कालस्मरणोपायमाह। भावोन्तर्गतं मनः तथाभिधानात्। भावितत्वम् अतिवासितत्वम्। 'भावना त्वतिवासना' इत्यभिधानात्॥ ६॥**

आ० ज०—ननु कलेवरत्यागस्यांताव्यभिचारादंत इति व्यर्थमित्यत आह—**स्मरन्निति।** नांत इत्येतत्कलेवरं त्यजतीत्यस्य विशेषणं येन व्यर्थं स्यात्। किं तु अंते स्मरन्निति स्मरणस्यैव तत्रापि किं प्रयोजनमिति चेत् उच्यते लक्षणहेत्वोः क्रियाया इति लक्षणेपि शतुर्विधानात्। स्मरन्पुरुषः कलेवरं त्यजतीति स्मरणकलेवरत्यागयोर्भिन्नकालत्वेऽपि न कश्चिच्छब्दविरोध इतिमंदमतेः शंका स्यात् सा माभूदित्येवमर्थमंत इतिस्मरणस्य विशेषणमुपात्तम्। तेनाल स्मरणकलेवरत्यागयोरेककालत्वसिद्धिरिति। मंदमतेरित्यस्य कृत्यमाह—**सुमतेरिति।** कुत इत्यत आह—**स्मरन्निति।** "लटः शतृशानचौ" इति लडादेशत्वेनापि शतुर्विधानमास्ति स च लडिति वर्तमाने पुनर्लड्ग्रहणसामर्थ्यात्क्वचित् प्रथमासामानाधिकरण्येपि भवति लक्षणे विहिताच्च लडादेशो बलीयान्। तत्र क्रियाया इत्युपपदसापेक्षत्वात् अस्यानपेक्षत्वात्। "अप्रथमासमानाधिकरणे" इत्यस्यातिप्रसक्तिपरिहारमात्रार्थत्वात्। तथा च बलवतो ग्राह्यत्वे स्मरंस्त्यजतीत्यस्य स्मरति च त्यजति चेत्यर्थः स्यात्। एवं चांत इत्यनुक्तेऽपि स्मरणत्यागयोरेककालीनत्वप्रतीतेः सुमतेर्नैव शंकाऽवकाश इति भावः। ननु दुर्मतिरपि शाब्दं न्यायं जानात्येव अन्यथा शास्त्रे नाधिक्रियेत। केवलमध्यात्मविषये न प्रवीणः। तत्कथं तस्याप्येषा शंका स्यात्। ततश्च तं प्रत्यपि अंत इत्येतत् व्यर्थमित्यत आह—**दुर्मतेरिति।** दुर्मतेर्भविष्यति शंका भिन्नकालत्वविषया। कुतः मरणकाले महद्दुःखं जायते। दुःखस्य च संस्कारविलोपहेतुत्वं प्रसिद्धम्। अतो दुःखात्कारणात् मूर्छितो न स्मरंस्त्यजति। कलेवरत्यागसमये स्मरणमसंभवीति यावत्। एतामनुपपत्तिं पश्यन् बलवंतमपि लडादेशं विहाय लक्षणार्थमेव हि मन्यत इति भावः। ननु सुमतेरप्येवं शंका स्यादेव। कथं चेयं शंका तत्त्वप्रतीतिरेवेति चेत्। न। अज्ञानिन एव देहाभिमानिनो देहत्यागमात्मत्यागमिव मन्यमानस्य मरणकाले दुःखं भवति। तदपि मरणलक्षणात्पूर्वमेव। ज्ञानी तु सर्वदा देहं हेयमेवमन्यमानो न मनागपि दुःखायते किं तु विशिष्टमेव तस्योत्क्रमणमित्यध्यात्मशास्त्रमनुसंदधानस्य सुमतेः शंकाऽनवकाशात्। किं तदध्यात्मशास्त्रमित्यत आह—**त्यजन्निति।** कश्चिद्विद्वान्। अविद्वानपि तत्काले तस्येति मरणवैशिष्ट्यमात्रपरम्। नत्वंत इत्येतत् स्मरणविशेषणं चेत् तदा सदा तद्भावभावित इत्यनेनैव गतार्थं स्यात्। अन्यथा तव्द्यर्थं भवेदित्यत आह—**सदेति।** अंतकालस्मरणमेव तत्प्राप्तिसाधनम्। न च तदकस्माद्भवति अतः तदुपायत्वेन सदा तद्भावभावित्वमुच्यत इत्यर्थः। कथमित्यतो यथाऽयं तदुपायः स्यात् तथा व्याचष्टे—**भाव इति।** तथाऽभिधानादिति स्याद्भावोंऽतर्गतं मनइत्येवंरूपादभिधानादित्यर्थः। वासितत्वं संस्कृतत्वम् तस्मिन् भावस्तद्भावस्तेन भावित इति मनोधर्मेणात्मोपचर्यते॥ ६॥

**रा० भा०—स्मर्तुः स्वविषयसजातीयाकारतापादनमन्त्यप्रत्ययस्य स्वभाव इति सुस्पष्टमाह— अन्ते अन्तकाले यं यं वापि भावं स्मरन् कलेवरं त्यजति तं तं भावमेव मरणानन्तरम् एति अन्त्यप्रत्ययश्च पूर्वभावितविषय एव जायते॥ ६॥**

अ० टी०—अन्याऽस्मरणे हेतुमाह—**यं यमिति।** हे कौन्तेय! तत्स्मरणायोग्य! यं यं देवतान्तरमपि वा स्वमनोभिलषितजीवस्वरूपं स्मरन् अन्ते कलेवरं त्यजति स तमेव तत्सारूप्यमेति प्राप्नोतीत्यर्थः। अपीति निश्चयार्थे वा। अतएव भरतस्य अन्ते मृगस्मरणे मृगशरीरातिः। अयमेवार्थोऽपिशब्देन द्योतितः। यतोऽन्तकाले यत्स्मरणेन म्रियते तमेव प्राप्नोत्यतः साधारण्येनापि मत्स्मरणेन मरणे मत्प्राप्तौ न संदेह इत्यर्थः। नन्वन्ते वैकल्ये देवतान्तरस्मरणं स्वाभिलषितस्मरणं वा कथं स्यादित्यत आह—सदा तद्भावभावितः। निरन्तरं तद्भावेन भावितो यो भवति स तमेवान्ते स्मरति॥ ६॥

नी० टी०—न केवलं कार्यकारणब्रह्मणोरेव भावनांत्यप्रत्ययवशात्तद्भावप्राप्तिहेतुरपितु कीटस्य जीवत एव भावनाबलाद्भाव्यवस्तुभावप्राप्तिर्दृश्यते नंदिकेश्वरस्य च स्मर्यते स हि महादेवं भावयंस्तत्सारूप्यं देहांतरं विनैव प्राप्त इति योगशास्त्रेऽपि प्रसिद्धं। तत्र किमु वक्तव्यमंतप्रत्ययवशाद्देहांतरे भाव्यभावप्राप्तिरस्तीति मत्वा तमेवार्थमन्यत्रापि दर्शयति—**यं यमिति।** तद्भावभावितः भाव्याकारवासनया रंजित इत्यर्थः॥ ६॥

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च॥**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः॥ ७॥**

**शां० भा०**—यस्मादेवमन्त्या भावना देहान्तरप्राप्तौ कारणम्—तस्मात्सर्वेषु कालेषु मामनुस्मर यथाशास्त्रं युध्य च युद्धं च स्वधर्मं कुरु मयि वासुदेवेऽर्पिते मनोबुद्धी यस्य तव स त्वं मय्यर्पितमनोबुद्धिः सन्मामेव यथास्मृतमेष्यस्यागमिष्यस्यसंशयो न संशयोऽत्र विद्यते ॥ ७ ॥

**शां० आ०**—सततभावना प्रतिनियतफलप्राप्तिनिमित्तान्त्यप्रत्ययहेतुरित्यङ्गीकृत्यानन्तरश्लोकमवतारयति—**यस्मादिति**। विशेषणत्रयवतो भगवदनुस्मरणस्य भगवत्प्राप्तिहेतुत्वं तस्मादित्युच्यते। सर्वेषु कालेष्वादरनैरन्तर्याभ्यां सहेति यावत्। भगवदनुस्मरणे विशेषणत्रयसाहित्यं यथाशास्त्रमिति द्योत्यते। भगवदनुसंधानं कर्तव्यमुक्त्वा तेन सह स्वधर्ममपि कुरु युद्धमित्युपदिशता भगवता समुच्चयो ज्ञानकर्मणोरङ्गीकृतो भातीत्याशङ्क्याऽऽह—**मयीति**। मनोबुद्धिगोचरं क्रियाकारकफलजातं सकलमपि ब्रह्मैवेति भावयन्युध्यस्वेति ब्रुवता क्रियादिकलापस्य ब्रह्मातिरिक्तस्याभावाभिलापान्नात्र समुच्चयो विवक्षित इत्यर्थः। उक्तरीत्या स्वधर्ममनुवर्तमानस्य प्रयोजनमाह—**मामेवेति**। उक्तसाधनवशात्फलप्राप्तौ प्रतिबन्धाभावं सूचयति—**असंशय इति** ॥ ७ ॥

**आ० भा०**—॥ ७ ॥

**आ० ज०**—॥ ७ ॥

**रा० भा०**—यस्मात्पूर्वकालाभ्यस्तविषये एव अन्त्यप्रत्ययो जायते तस्मात्सर्वेषु कालेषु आप्रयाणादहरहर्मामनुस्मर अहरहरनुस्मृतिकरं युद्धादिकं वर्णाश्रमानुबन्धिश्रुतिस्मृतिचोदितनित्यनैमित्तिकं च कर्म कुरु एतदुपायेन मय्यर्पितमनोबुद्धिरन्तकाले च मामेव स्मरन् यथाभिलषितप्रकारं मां प्राप्स्यसि नात्र संशयः ॥ ७ ॥

**अ० टी०**—अतः सदा त्वं मद्भावयुक्तो भवेत्याह—**तस्मादिति**। तस्मात् पूर्वोक्तात् कारणात् सर्वेषु कालेषु लौकिकवैदिकक्रियायोग्येषु मय्यर्पितं मनश्चाञ्चल्यदोषनिवारणार्थं बुद्धिरन्यत्र व्यवसायदोषनिवारणार्थं येन तादृशः सन् मामनुस्मर चिन्तय। अनुस्मरणेन मया कृपया सर्वदा त्वं स्मर्यसे तस्मात्सर्वदा मत्स्मरणं फलरूपं भविष्यतीति भावो व्यञ्जितः। युद्धच च युध्यस्व सद्भावनया मदाज्ञया युद्धमपि कुर्वित्यर्थः। एवमनुस्मरणेन असंशयः संदेहरहितः सन् मामेव एष्यसीत्यर्थः। असंशयः अत्र च संदेहो नास्तीति भावः ॥ ७ ॥

**नी० टी०**—यस्मादेवं तस्मात्सर्वेषु कालेषु मामनुस्मर अंतकाले मत्स्मृत्या मद्भावप्राप्त्यर्थं। युध्यचेति चकारात्कर्मोपास्त्योः समुच्चयोऽवगम्यते। ज्ञानकर्मसमुच्चयकर्त्तरीव तदुभयानुष्ठातर्येकस्मिन्नेवाधिकारिणि कर्तृत्वाकर्त्तृत्वप्रत्ययकृतविरोधाभावात्। मयि अर्पिते मदेकनिष्ठतां नीते मनोबुद्धी येन स मय्यर्पितमनोबुद्धिस्त्वं असंशयं मामेवैष्यसि प्राप्स्यसि अंतकाले स्मरणेनेति शेषः ॥ ७ ॥

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ॥**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

**शां० भा०**—किंच—अभ्यासयोगयुक्तेन मयि चित्तसमर्पणविषयभूत एकस्मिंस्तुल्यप्रत्ययावृत्तिलक्षणो विलक्षणप्रत्ययानन्तरितोऽभ्यासः स चाभ्यासो योगस्तेन युक्तं तत्रैव व्यापृतं योगिनश्चेतस्तेन चेतसा नान्यगामिना नान्यत्र विषयान्तरे गन्तुं शीलमस्येति नान्यगामि तेन नान्यगामिना परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्यमण्डले भवं याति गच्छति हे पार्थ, अनुचिन्तयञ्शास्त्राचार्योपदेशमनुध्यायन्नित्येतत् ॥ ८ ॥

**शां० आ०**—इतश्च पूर्वश्लोकोक्तार्थानुष्ठायी भगवन्तमन्तकाले प्राप्नोतीत्याह—**किंचेति**। अभ्यासं विभजते—**मयीति**। न हि चित्तसमर्पणस्य विषयभूतं भगवतोऽर्थान्तरं वस्तु सदस्तीति मन्वानो विशिनष्टि—**चित्तेति**। अन्तरालकालेऽपि विजातीयप्रत्ययेषु विच्छिद्य विच्छिद्य जायमानेष्वपि सजातीयप्रत्ययावृत्तिरयोगिनोऽपि स्यादित्याशङ्क्याऽऽह—**विलक्षणेति**। अभ्यासाख्येन योगेन युक्तत्वं चेतसो विवृणोति—**तत्रैवेति**। तृतीयया परामृष्टोऽभ्यासयोगः सप्तम्याऽपि परामृश्यते। ननु (तु) प्राकृतानां चेतस्तथेत्याशङ्क्य विशिनष्टि—**योगिन इति**। तच्चेच्चेतो विषयान्तरं परामृशेन्न तर्हि परमपुरुषार्थप्राप्तिहेतुः स्यादित्याशङ्क्याऽऽह—**नान्यगामिनेति**। प्रामादिकं विषयान्तरपारवश्यमभ्यनुज्ञातुं ताच्छील्यप्रत्ययस्तेन तात्पर्यादपरामृष्टार्थान्तरेण परमपुरुषनिष्ठेनेत्यर्थः। तदेव पुरुषस्य निरतिशयत्वं यदपरामृष्टाखिलानर्थत्वमनतिशयानन्दत्वं च तच्च प्रागेव व्याख्यातं नेह व्याख्यानमपेक्षते। "यश्चासावादित्ये" इत्यादिश्रुतिमनुसृत्याऽऽह—**दिवीति**। तत्र विशेषतोऽभिव्यक्तिरेव भवनम्। पूर्वोक्तेन चेतसा यथोक्तं पुरुषमनुचिन्तयन्याति तमेवेति संबन्धः। अनुचिन्तयन्नित्यत्रानुशब्दार्थं व्याचष्टे—**शास्त्रेति**। चिन्तयन्निति व्याकरोति—**ध्यायन्निति**॥ ८॥

**आ० भा०**—सदा तद्भावभावितत्वं स्पष्टयति—अभ्यासेति। अभ्यासएव योगोऽभ्यासयोगः दिव्यं पुरुषं पुरिशयं पूर्णं च। "स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंचनानावृतं नैनेन किंचनासंवृतम्"इति श्रुतेः। दिव्यं सृष्ट्यादिक्रीडायुक्तम्। दिवुक्रीडेति धातोः॥ ८॥

**आ० ज०**—कुतोऽयमर्थ इत्यत उत्तरत्रैवमेव व्याख्यानादिति भावेनाह—**सदेति**। द्वंद्वादिशंकाव्युदासार्थमाह—**अभ्यास एवेति**। अभ्यासातिरिक्तस्य योगस्य प्रकृतोपयोगिनोऽभावादिति भावः। पुरुषश्चाधिदैवतमिति प्रकृतो हिरण्यगर्भोऽत्रोच्यत इति प्रतीतिनिरासार्थमाह—**दिव्यमिति**। दिव्यत्वेन विशेषणात् ईश्वर एवायमित्यर्थः। पृपालनपूरणयोरित्यतो विदिपूरोश्चेतिकुषन्प्रत्ययविधानात् पूर्णं चेति सिध्यति। सर्वासु पूर्षु वर्तमान इति स्वरूपानुवादेन पुरुष इति विधेयम्। तस्य व्याख्यानं पुरिशय इत्यादि। आवरणमंतर्व्याप्तिः। संवरणं बहिराच्छादनम्। ननु दिवि भवो दिव्यः। स च सूर्यमंडलस्थत्वाद्धिरण्यगर्भोऽपि भवतीति कश्चित्। अत आह—**दिव्यमिति**। औणादिको यक्प्रत्ययः। परममितिविशेषणादिति भावः॥ ८॥

**रा० भा०**—एवं सामान्येन सर्वत्र स्वप्राप्यावाप्तिरन्त्यप्रत्ययाधीनेत्युक्त्वा तदर्थं त्रयाणामुपासनप्रकारभेदं वक्तुमुपक्रमते तत्रैश्वर्यार्थिनामुपासनप्रकारं यथोपासनमन्त्यप्रत्ययकारकं चाह—अहरहरभ्यासयोगाभ्यां युक्ततया नान्यगामिना चेतसान्तकाले परमं पुरुषं दिव्यं मां वक्ष्यमाणप्रकारं चिन्तयन्मामेव याति आदिभरतमृगत्वप्राप्तिवदैश्वर्यविशिष्टतया मत्समानाकारो भवति। अभ्यासो नित्यनैमित्तिकाविरुद्धेषु सर्वेषु कालेषु मनसोपास्य संशीलनं योगस्तु अहरहर्योगकालेऽनुष्ठीयमानं यथोक्तलक्षणमुपासनम्॥ ८॥

**अ० टी०**—अथ तव तु मत्प्राप्तिर्निःसंदिग्धा साक्षान्मयोपदिष्टत्वात् किंतु मदाज्ञाव्यतिरेकेणापि येऽनन्यभावेन स्मरन्ति तेऽपि मां प्राप्नुवन्तीत्याह—अभ्यासेति। हे पार्थ! मद्भक्त! अभ्यासो भगवत्संगानुशीलनं स एव योग उपायस्तद्युक्तेन नान्यगामिना अन्यत्रोत्तमत्वज्ञानजचाञ्चल्यदोषरहितेन चेतसा दिव्यं क्रीडात्मकं परमं पुरुषं पुरुषोत्तमभावं निर्जितचेतसा अनुचिन्तयन् भगवत्कृतस्मरणानन्तरं चिन्तयन् स्मरन् हे पार्थ! तमेव याति प्राप्नोतीत्यर्थः। पार्थेतिसंबोधनेन पृथासंबन्धान्मत्कृतस्मरणानन्तरस्मरणेन यथा त्वं मामाप्नोषीति बोध्यते॥ ८॥

**नी० टी०**—एतदेव श्लोकत्रयेण विवृणोति—अभ्यासेति। अभ्यासयोगयुक्तेन तत्र स्थितौ यत्नोऽभ्यास इति सूत्रितोभ्यासः तत्र ध्येये वस्तुनि चित्तस्य स्थिरीकरणार्थो यत्नः स च विजातीयप्रत्ययानंतरितसजातीयप्रत्ययप्रवाहीकरणरूपः सोऽत्राभ्यासः। तत्र भाव्यो विषयः सिद्धः विष्णुप्रतिमादिर्विराडादिर्वा। असिद्धस्तु मानसप्रतिमादिः तत्रासिद्धे मनसः प्रतिमाकारतासंपादने तत्रस्थैर्यसंपादने चेति विषयभेदाद्द्विगुणो यत्नः कर्त्तव्यो

भवति। सिद्धे तु चित्तस्थिरीकरणार्थ एक एव यत्नः। तत्र यथा स्वतः स्वच्छः स्फटिको जपाकुसुमोपरागाल्लोहितः स्फटिक इति तत्र लौहित्याध्यासः। तत्प्राबल्यात्तत्रैव स्फटिकधीप्रमोषे पद्मरागत्वाध्यासः। पद्मरागेऽपि चंद्रिकायामिंद्रनीलत्वाध्यासस्तत्रैव तदानीमेव किंचिद्दूरस्थे निहीनोपलत्वाध्यास इत्युत्तरोत्तराध्यासक्रमेण शुद्ध एक एव स्फटिकः पंचविधो भवति। एवं स्वतःशुद्धं चैतन्यं मायोपरागात्तदेवेश्वरः। मायाप्राबल्ये तस्यैवेश्वरत्वांशप्रमोषे तत्रैव सूत्रात्माध्यासः। सूत्रेऽप्यज्ञानदार्ढ्याद्विराडध्यासः। तत एव विराडेकदेशेषु शरीरादिषु आत्मत्वभ्रमः। तत्र यथा घटांतर्गतः प्रदीपो घटमात्रं भासयति। घटच्छिद्रात् बहिर्गतः किंचित्स्वप्रभया संसृष्टं विषयमवभासयति। सर्वात्मना घटाद्बहिर्गतस्तु कृत्स्नं भवनोदरवर्त्तिपदार्थजातं प्रकाशयति तद्वद्देहांतर्गता चितिर्देहमात्रं भासयति। देहच्छिद्राच्चक्षुरादेर्बहिर्गता सती तत्सन्निकृष्टं कंचिद्विषयं रूपादिकमवभासयति। सर्वात्मना गुरूक्तयुक्त्या देहकृतपरिच्छेदाभिमाने त्यक्ते त्वपरिच्छिन्ना सती कृत्स्नं विराडात्मानमवभासयति। यथोक्तं बाह्यग्रंथेष्वपि। 'मणिहुतवहतारासोमसूर्यादयोऽपि क्षितिविषयमिहाल्पं बाह्यमुद्योतयंति ॥ सहजलयसमुत्थं द्योतयेज्ज्योतिरंतस्त्रिभुवनमपि सूक्ष्मस्थूलभेदक्रमेण' इति। सहजलयसमुत्थं सहजः स्वाभाविको देहकृतपरिच्छेदाभिमानस्तस्य लयमात्रादेव उत्थितं क्रमेण संकल्पक्रमेण सदीक्षणमात्राभिनिर्वृत्तत्वात्सर्वस्य प्राक्संकल्पादसत्त्वात् तथा च श्रुतिः। "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठंति" इति। "दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः" इत्यक्षपादसूत्राच्च। दोषा रागादयः तदेवं प्रकाशमाने विराजि अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक इति शास्त्रप्रामाण्यादुपासकेन गृहीतोऽहंग्रहो यद्यपि वस्तुतत्त्वापेक्षया भ्रांतिरूपस्तथाऽपि स्वाभाविकाद्देहाहंग्रहात्सत्यरूपः। यथा स्फटिके हीनोपलत्वग्रहापेक्षया इंद्रनीलत्वग्रहस्तद्वत्। यथा च स्फटिके प्रणिधीयमानं चक्षुरुत्तरोत्तरपाटववृद्धाविंद्रनीलत्वं बाधित्वा पद्मरागत्वं तद्बाधेन लोहितस्फटिकत्वं तद्बाधेन शुद्धत्वं चावगच्छति। एवं गुरूक्तयुक्त्या प्रत्यगात्मनि प्रणिधीयमानं मनोऽस्य बाह्यं बाह्यं रूपमपोह्य आंतरे आन्तरे अवतिष्ठते। चरमं विशुद्धं रूपं प्राप्य तु स्वयमेव विलीयते। यथोक्तं। येन त्यजसि तत्त्यजेति येन मनसा त्यजसि विराडादिभावं तदपि मनस्त्यजेत्यर्थः। तदेवं व्यवहारापेक्षया सिद्धेषु विराट्सूत्रांतर्यामिषु मनसः स्थिरीकरणार्थो यत्नोऽभ्यासस्तत्फलभूतो योगः। समाधिर्ध्येयवस्तुन्येव चेतसः स्थैर्यं तेन गुणेन युक्तं यच्चेतस्तेन नान्यगामिना अनन्यगामिना नैकधेतिवत्समासः तेन चेतसा परमं सर्वोत्कृष्टं पुरुषं निरस्ताशेषदोषं। यत्सर्वेषां पुरस्तात्सर्वान्पाप्मन औषत्तस्मात्पुरुष इति निर्वचनात्। दिव्यं द्योतमानमनुचिंतयन्नहमेव भगवान्सर्वात्मा वासुदेव इति सततमाचार्योपदेशमनुध्यायन् तमेव नदीसमुद्रन्यायेन याति। हेपार्थ! तथा च श्रुतिः। "यथा नद्यः स्यंदमानाः समुद्रेऽस्तं गच्छंति नामरूपे विहाय ॥ तथा विद्वान् पुण्यपापे विधूय परात्परं पुरुषमुपैति दिव्यम्" इति परात्सूत्रात्परं अंतर्यामिणम् ॥ ८ ॥

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ॥**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

**शां० भा०—किंविशिष्टं च पुरुषं यातीत्युच्यते—कविं क्रान्तदर्शिनं सर्वज्ञं पुराणं चिरंतनमनुशासितारं सर्वस्य जगतः प्रशासितारमणोः सूक्ष्मादप्यणीयांसं सूक्ष्मतरमनुस्मरेदनुचिन्तयेद्यः कश्चित्सर्वस्य कर्मफलजातस्य धातारं विचित्रतया प्राणिभ्यो विभक्तारं विभज्य दातारमचिन्त्यरूपं नास्य रूपं नियतं विद्यमानमपि केनचिच्चिन्तयितुं शक्यत इत्यचिन्त्यरूपस्तमादित्यवर्णमादित्यस्येव**

नित्यचैतन्यप्रकाशो वर्णो यस्य तमादित्यवर्णं तमसः परस्तादज्ञानलक्षणान्मोहान्धकारात्परं तमनुचिन्तयन्यातीति पूर्वेणैव संबन्धः ॥ ९ ॥

**शां० आ०**—पुरुषमनुचिन्तयन्निति संबन्धः । चकारात्कया वा नाड्योत्क्रामन्नित्यनुकृष्यते । तत्र ध्यानद्वारा प्राप्यस्य पुरुषस्य विशेषणानि दर्शयति—**उच्यत इति** । क्रान्तदर्शित्वमतीतादेरशेषस्य वस्तुनो दर्शनशीलत्वम् । तेन निष्पन्नमर्थमाह—**सर्वज्ञमिति** । चिरंतनमादिमतः सर्वस्य कारणत्वादनादिमित्यर्थः । सूक्ष्ममाकाशादि ततः सूक्ष्मतरं तदुपादानत्वादित्यर्थः । यो यथोक्तमनुचिन्तयेत्स तमेवानुचिन्तयन्यातीति पूर्वेणैव संबन्ध इति योजना । ननु विशिष्टजात्यादिमतो यथोक्तमनुचिन्तनं फलवद्भवति न त्वस्मदादीनामित्याशङ्क्याऽऽह—**यः कश्चिदिति** । फलमत उपपत्तेरिति न्यायेनाऽऽह—**सर्वस्येति** । एतदप्रमेयं ध्रुवमिति श्रुतिमाश्रित्याऽऽह—**अचिन्त्यरूपमिति** । न हि परस्य किंचिदपि रूपं वस्तुतोऽस्ति अरूपवदेव हीति न्यायात्कल्पितमपि नास्मदादिभिः शक्यते चिन्तयितुमित्याह—**नास्येति** । मूलकारणादज्ञानात्तत्कार्याच्च परस्तादुपरिष्टाद्व्यवस्थितं परमार्थतोऽज्ञानतत्कार्यास्पृष्टमित्याह—**तमस इति** ॥ ९ ॥

**आ० भा०**—ध्येयमाह—**कविमिति** । कविं सर्वज्ञम् "यः सर्वज्ञः" इतिश्रुतेः । 'त्वं कविः सर्ववेदनात्' इति च ब्राह्मे । धातारं धारणपोषणकर्तारम् डुधाञ्धारणपोषणयोरिति धातोः "धाता विधाता परमोतसंदृक्" इति च श्रुतिः । 'ब्रह्मा स्थाणु' रित्यारभ्य 'तस्य प्रसादादिच्छंति तदादिष्टफलां गतिम्' इति च मोक्षधर्मे । तमसोऽव्यक्तात्परतः स्थितम् । "तमसः परस्तादित्यव्यक्तं वै तमःपरस्ताद्धि सतत" इति पिप्पलादशाखायां । "मृत्युर्वा व तमो मृत्युर्वै तमो ज्योतिरमृतम्" इति श्रुतेः ॥ ९ ॥

**आ० ज०**—उत्तरश्लोकगतविशेषणबलाच्च परमात्मैवायमिति भावेन तत्तात्पर्यमाह—**ध्येयमिति** । आह विशिनष्टीत्यर्थः । ननु कवित्वमन्येषामप्यस्ति । तत्कथं भगवतो विशेषणमित्यत आह—**कविमिति** । परमेश्वरस्य सार्वज्ञे प्रमिते भवेदिदं व्याख्यानम् । तदेव कुत इत्यत आह—**य इति** । सर्वज्ञः कविशब्दार्थ इत्येतत्कुत इत्यत आह—**त्वमिति** । अन्येषां तु सर्वे विमोहितधिय इत्यादिना सार्वज्ञाभावः प्रमितः । ननु धाता विरिंचोऽपि प्रसिद्धः तत्कथमेतद्भगवतो विशेषणमित्यत आह—**धातारमिति** । कुतोऽयमर्थ इत्यत आह—**डुधाञिति** । तृचः कर्तृवाचित्वं प्रसिद्धमेव । परमेश्वरस्य धातृत्वसद्भावे किं प्रमाणमित्यत आह—**धातेति** । विधाता कर्ता । परमा संदृक् परमज्ञानरूपः । सर्वस्य धातारमित्येतत् । भगवत एव नान्येषामित्यत्र प्रमाणमाह—**ब्रह्मेति** । तेन भगवता दिष्टं दत्तं फलं सुखं यस्यां सा तथोक्ता । मोक्षधर्मे कथितमिति शेषः । तमसः परस्तादित्येतत् । आदित्यादिसाधारणं इत्यतो द्वेधा सप्रमाणकं व्याचष्टे—**तमस इति** । स्थितमितिशेषोक्तिः । अप्राकृतविग्रहमित्यर्थः ॥ ९ ॥

**रा० भा०**—कविं सर्वज्ञं पुराणं पुरातनं अनुशासितारं विश्वस्य प्रशासितारम् अणोरणीयांसं जीवादपि सूक्ष्मतरं सर्वस्य धातारं सर्वस्य स्रष्टारम् अचिन्त्यरूपं सकलेतरविसजातीयस्वरूपम् "आदित्यवर्णं तमसः परस्तात्" अप्राकृतस्वासाधारणदिव्यरूपम् ॥ ९ ॥

**अ० टी०**—चिन्तनीयस्वरूपधर्मानाह द्वाभ्याम्—**कविमिति** । कविं शब्दार्थरसिकं स्वगुणानुवर्णनश्रवणानन्दसंसूचितानुग्रहं । पुराणम् अनादिसिद्धं सर्वदैकरसम् । अनुशासितारं भावादिधर्मनियन्तारम् । अणोरणीयांसम् अणोः सूक्ष्मात् अणीयांसं सूक्ष्मम् । अयं भावः । सूक्ष्माज्जीवात् सूक्ष्मं जीवभावभावनयोग्यस्वरूपप्राकट्येन तद्धृदि बहिस्तदृष्ट्याचादिस्थितियोग्यं । सर्वस्य स्वक्रीडायोग्यस्य भावादिरूपाक्षरादिरूपपदार्थस्य धातारं पोषकम् । अचिन्त्यरूपम् अलौकिकक्रीडाद्यपरिमेयमहिमानम् । आदित्यवर्णं रसात्मकतापतेजसा सर्वप्रकाशकं । तमसः परस्तात् प्रकृतेः परस्ताद्वर्त्तमानम् । अत्रायं भावः । भावात्मकप्राप्तभक्तस्वरूपं प्रकटितलीलास्वरूपात् सर्वदा रसात्मकत्वेन वर्तमानमेवं पुरुषं पुरुषोत्तमम् ॥ ९ ॥

नी० टी०—तदेवमुपासनायाः स्वरूपमुक्त्वा उपास्यस्य स्वरूपमाह—**कविमिति**। कविं क्रांतदर्शिनं सर्वज्ञं पुराणं चिरंतनं अनुशासितारं जगतोऽतर्यामिणं अणोः सूक्ष्मादप्याकाशादेरणीयांसं सूक्ष्मतरं योऽनुस्मरेत् अनुचिंतयेत् । सर्वस्य कर्मफलस्य धातारं विभागेन प्रदातारं । अचिंत्यरूपं नास्य रूपं विद्यमानमपि केनचिच्चिंतयितुं शक्यं । आदित्यवर्णं आदित्यस्येव नित्यप्रकाशरूपो वर्णो दीप्यमानता यस्य तं आदित्यवर्णं सर्वजगदवभासकमित्यर्थः । तमसो देहेंद्रियादावनात्मन्यात्माभिमानरूपाऽविद्यातः परस्तात् पराचीनं सति देहाभिमाने न प्रकाशते योगयुक्त्या त्यक्ते तु तस्मिन् स्वयमेव प्रकाशत इत्यर्थः ॥ ९ ॥

**प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ॥**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥**

**शां० भा०—किंच—प्रयाणकाले मरणकाले मनसाऽचलेन चलनवर्जितेन भक्त्या युक्तो भजनं भक्तिस्तया युक्तो योगबलेन चैव योगस्य बलं योगबलं तेन समाधिजसंस्कारप्रचयजनितचित्तस्थैर्यलक्षणं योगबलं तेन च युक्त इत्यर्थः । पूर्वं हृदयपुण्डरीके वशीकृत्य चित्तं तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तः सन्स एवं बुद्धिमान्योगी कविं पुराणमित्यादिलक्षणं तं परं पुरुषमुपैति प्रतिपद्यते दिव्यं द्योतनात्मकम् ॥ १० ॥**

**शां० आ०**—इतश्च भगवदनुस्मरणं सफलत्वादनुष्ठेयमित्याह—**किंचेति** । कदा तदनुस्मरणे प्रयत्नातिरेकोऽभ्यर्थ्यते तत्राऽऽह—**प्रयाणकाल इति** । कथं तदनुस्मरणमित्युपकरणकलापमपेक्षमाणं प्रत्याह—**मनसेति** । योऽनुस्मरेत्स किमुपैति तत्राऽऽह—**स तमिति** । मरणकाले क्लेशबाहुल्येऽपि प्राचीनाभ्यासप्रसादासादितबुद्धिवैभवो भगवन्तमनुस्मरन्यथास्मृतमेव देहाभिमाननिर्गमानन्तरमुपगच्छतीत्यर्थः । भगवदनुस्मरणस्य साधनं मनसैवानुद्रष्टव्यमितिश्रुत्युपदिष्टमाचष्टे—**मनसेति** । तस्य चञ्चलत्वान्न स्थैर्यमीश्वरे सिध्यति तत्कथं तेन तदनुस्मरणमित्याशङ्क्याऽऽह—**अचलेनेति** । ईश्वरानुस्मरणे प्रयत्नेन प्रवर्तितं विषयविमुखं तस्मिन्नेवानुस्मरणयोग्ये पौनःपुन्येन प्रवृत्त्या निश्चलीकृतं ततश्चलनविकलं तेनेति व्याचष्टे—**चलनेति** । संप्रत्यनुस्मरणाधिकारिणं विशिनष्टि—**भक्त्येति** । परमेश्वरे परेण प्रेम्णा सहितो विषयान्तरविमुखोऽनुस्मरेदित्यर्थः । योगबलमेव स्फोरयति—**समाधिजेति** । योगः समाधिश्चित्तस्य विषयान्तरवृत्तिनिरोधेन परस्मिन्नेव स्थापनं तस्य बलं संस्कारप्रचयो ध्येयैकाग्र्यकरणं तेन तत्रैव स्थैर्यमित्यर्थः । चकारसूचितमन्वाचष्टे—**तेन चेति** । यत्तु कया नाड्योत्क्रामन्यातीति तत्राऽऽह—**पूर्वमिति** । चित्तं हि स्वभावतो विषयेषु व्यापृतं तेभ्यो विमुखीकृत्य हृदये पुण्डरीकाकारे परमात्मस्थाने यत्नतः स्थापनीयम् " अथ यदिदमस्मिन् " इत्यादिश्रुतेस्तत्र चित्तं वशीकृत्याऽऽदावनन्तरं कर्तव्यमुपदिशति—**तत इति** । इडापिङ्गले दक्षिणोत्तरे नाड्यौ हृदयान्निःसृते निरुध्य तस्मादेव हृदयाग्रादूर्ध्वगमनशीलया सुषुम्नया नाड्या हार्दं प्राणमानीय कण्ठावलम्बितस्तनसदृशं मांसखण्डं प्राप्य तेनाध्वना भ्रुवोर्मध्ये तमावेश्याप्रमादवान्ब्रह्मरन्ध्राद्विनिष्क्रम्य कविं पुराणमित्यादिविशेषणं परमपुरुषमुपगच्छतीत्यर्थः । भूमिजयक्रमेणेत्यत्र भूम्यादीनां पञ्चानां भूतानां जयो वशीकरणं तस्य तस्य भूतस्य स्वाधीनचेष्टावैशिष्ट्यं तद्वारेणेत्येतदुच्यते । स तमित्यादि व्याचष्टे—**स एवमिति** ॥ १० ॥

**आ० भा०—वायुजयादियोगयुक्तानां मृतिकाले कर्तव्यमाह विशेषतः—प्रयाणकाल इति । वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसंपूर्णानां भवत्येव मुक्तिः । तद्वतां त्वीषज्ज्ञानाद्यसंपूर्णानामपि निपुणानां तद्बलात्कथं चिद्भवतीति विशेषः । उक्तं च भागवते । 'पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये । वैराग्यसारं प्रतिलभ्य बोधं यथांऽजसा त्वापुरकुंठधिष्ण्यम् ॥ तथा परे त्वात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् । त्वामेव धीराः पुरुषं विशंति तेषां श्रमः स्यान्न तु सेवया ते' इति । 'ये तु तद्भाविता लोका एकांतित्वं समाश्रिताः ॥ एतदभ्यधिकं तेषां तत्तेजः प्रविशंत्युत' इति च मोक्षधर्मे । संपूर्णानां भवेन्मोक्षोविरक्तिज्ञानभक्तिभिः ॥ नियमेन तथा-पीरजयादियुतयोगिनाम् ॥ वश्यत्वान्मनसस्त्वीषत्पूर्वमप्याप्यते ध्रुवम्' इति च व्यासयोगे ॥ १० ॥**

आ० ज०—उत्तरश्लोकोक्तं सर्वं सर्वौचित्त्यमिषुसाधारणमिति प्रतीतिनिरासार्थमाह—**वायुजयादीति**। साधका द्विविधाः। भक्त्यादिप्रधाना वायुजयादिप्रधानाश्चेत्यतो विशेषणं विशेषत इत्यनेन भक्त्यादीनां साधारण्यमाह। ननु चानुस्मरेद्यः स तं परं पुरुषमुपैतीत्यन्वयादेकस्य वाक्यस्य कथं भिन्नविषयत्वम्। उच्यते। एकस्मिन्नपि वाक्ये योगबलेनैव भ्रुवोर्मध्ये प्राणमावेश्येत्येतन्न सर्वविषयमित्येतावन्मात्रमत्र प्रतिपाद्यते। यथा प्रातरुत्थायेति श्रुतौ न भृशं वदेदित्यादिकं किंचित्साधारणं किंचिदसाधारणम्। कुतोऽस्यासाधारण्यं कल्प्यत इत्यत आह—**वायुजयादीति**। अतो न तत्सर्वसाधारणमिति शेषः। तर्हि को विशेषोऽन्येषाम्। येन वायुजयादिक्लेशमधिकमनुभवंतीत्यत आह—**तद्वतां त्विति**। निपुणानां वायुजयादौ कथंचिदल्पेत्यर्थः। किंचिच्छीघ्रं चेत्यपि ग्राह्यम्। अत्र प्रमाणान्याह—**उक्तमिति**। यथा यथार्थं बोधं धिष्ण्यं मंदिरं इन्द्रियं त्वां विशंत्येव न तु त इवांजसा तद्भावितास्तेन भगवता वासिताः एतन्मुक्तिलक्षणं फलं तेजो नारायणाख्यं ईरः समीरः ध्रुवं ब्रह्माप्यते तैः॥ १०॥

**रा० भा०—तमेवंभूतमहरहरभ्यस्यमानभक्तियुक्तयोगबलेनारूढसंस्कारतयाऽचलेन मनसा प्रयाणकाले भ्रुवोर्मध्ये प्राणमावेश्य संस्थाप्य तत्र भ्रुवोर्मध्ये दिव्यं पुरुषं योऽनुस्मरेत्स तमेवोपैति तद्भावं याति तत्समानैश्वर्यो भवतीत्यर्थः॥ १०॥**

अ० टी०—प्रयाणकाले अन्तकाले मनसा निश्चलेन मनसा सर्वकामरहितेन। च पुनः। योगबलेनैव संयोगात्मकभावेनैव भ्रुवोर्मध्ये भाग्यस्थाने सन्तं विद्यमानं योऽनुस्मरेद्भगवत्कृतस्मरणानन्तरं स्वार्थप्रकटज्ञानेन स्मरेत् स तस्मिन्नेव प्राणमावेश्य सम्यक् भावात्मकस्वरूपप्राप्त्या परं पुरुषं पुरुषोत्तमं दिव्यं क्रीडात्मकम् उपैति समीपे दास्येन प्राप्नोतीत्यर्थः॥ १०॥

नी० टी०—उपासनायाः फलमाह—**प्रयाणेति**। प्रयाणकाले मनसाऽचलेन वृत्त्यंतरवर्जितेन। भक्त्या भगवति वासुदेवे आराध्यत्वबुद्ध्या युक्तो योगबलेन योगो मनःप्राणेंद्रियक्रियानिरोधो हृदयपुंडरीके तेषां वशीकरणमित्यर्थः। तस्यैव बलेन च युक्तो भूमिकाजयक्रमेण प्रागेव मूलाधारादिब्रह्मरंध्रांतस्थानेष्वारोहावरोहक्रमेण संचारितपवनोंऽतकाले भ्रुवोर्मध्ये आज्ञाचक्रे प्राणं आवेश्य सुषुम्नया नाड्या मूलाधारादुत्थापनपूर्वकं सम्यक् निवेश्य स्थापयित्वा। स्थापनप्रयोजनं तु अन्यविस्मरणपूर्वकं दिव्यपुरुषचिंतनं तच्च भ्रूमध्यादुपर्युन्नीयमाने वायौ मनो मूर्च्छामापद्यत इति तस्यामवस्थायां न भवतीत्यंत्यप्रत्ययस्तत्रैव संपाद्यस्ततोऽर्चिरादिमार्गपर्वणा अमानवस्य पुरुषस्य स्थानविशेषप्रापकस्य प्राप्यस्थानस्य च तस्मिन्नेव स्मरणं कर्त्तव्यं। तद्वासनावासितं मनो भ्रूमध्याद्योगिना ऊर्ध्वया नाड्या उत्क्षिप्ते प्राणे मुक्तेषुवद्ब्रह्मांडखर्परं भित्त्वा प्रचलिते सति लब्धवृत्तिकं भूत्वा पूर्वसंस्कारप्राबल्याद्योगमाहात्म्याच्च दिव्योपाध्युपेतमर्चिरादिपर्वदेवताभिरभिपूज्यमानमुत्तरोत्तरं स्थानं प्रत्यतिवाह्यमानममानवेन च पुरुषेण संगच्छमानं तेन च यथाभिलषितं स्थानं प्रापितमात्मानं पश्यति। तदिदमुक्तं भ्रुवोर्मध्ये सम्यक् प्राणमावेश्येति। स एवं कृत्वा योगी कविं पुराणमित्युक्तलक्षणं परं पुरुषं हिरण्यगर्भाख्यं सर्वस्य भूतजातस्य जनयितारं नारायणादिशब्दप्रतिपाद्यमुपैति समीपे प्राप्नोति तल्लोकं प्राप्नोतीत्यर्थः। न हि पौराणिकानामिव वैदिकानां मते ब्रह्मविष्णुरुद्रलोकानामुपर्युपरि कल्पनाऽस्ति। किं तर्हि सर्वे हिरण्यगर्भलोकाख्ये सत्यलोक एवांतर्भवंति। परा हि सोपासनकर्मोर्जितिर्हिरण्यगर्भप्राप्त्यंतेति बृहदारण्यके तद्भाष्यादौ च स्पष्टम्॥ १०॥

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः॥**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये॥ ११॥**

**शां० भा०**—( योगमार्गानुगमनेनैव ब्रह्मविद्यामन्तरेणापि ब्रह्म प्राप्यत इत्येवं प्राप्त इदमुच्यते। ) पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्यस्याभि-

धानं करोति भगवान्—यदक्षरं न क्षरतीत्यक्षरमविनाशि वेदविदो वेदार्थज्ञा वदन्ति "तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इति श्रुतेः। सर्वविशेषनिवर्तकत्वेनाभिवदन्त्यस्थूलमनण्वित्यादि। किंच विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यद्यतयो यतनशीलाः संन्यासिनो वीतरागा विगतो रागो येभ्यस्ते वीतरागाः। यच्चाक्षरमिच्छन्तो ज्ञातुमिति वाक्यशेषः। ब्रह्मचर्यं गुरौ चरन्ति तत्ते पदं तदक्षराख्यं पदं पदनीयं ते तुभ्यं संग्रहेण संग्रहः संक्षेपस्तेन संक्षेपेण प्रवक्ष्ये कथयिष्यामि ॥ ११ ॥

**शां० आ०**—येन केनचिन्मन्त्रादिना ध्यानकाले भगवदनुस्मरणे प्राप्ते सत्यभिधानेन नियन्तुं स्मर्तव्यत्वेन प्रकृतपरमपुरुषस्य त्रैविद्यवृद्धप्रसिद्ध्या प्रामाणिकत्वमाह—**पुनरपीति**। उपायो वक्ष्यमाण ओंकारः। अविषये प्रतीचि ब्रह्मणि वेदार्थविदामपि कथं वचनमित्याशङ्क्याविषयत्वमत्यक्त्वैवेति मत्वा श्रुतिमुदाहरति—**तद्वा इति**। तथाऽपि तस्मिन्नविषये सर्वविशेषशून्ये वचनमनुचितमित्याशङ्क्याऽऽह—**सर्वेति**। न केवलं विद्वदनुभवसिद्धं यथोक्तं ब्रह्म किंतु मुक्तोपसृप्यतया मुक्तानामपि सिद्धमित्याह—**किंचेति**। केषां पुनः संन्यासित्वं तदाह—**वीतरागा इति**। ज्ञानार्थं ब्रह्मचर्यविधानादपि ब्रह्म ज्ञेयत्वेन प्रसिद्धमित्याह—**यच्चेति**। कथं तर्हि यथोक्तं ब्रह्म मम ज्ञातुं शक्यमित्याकुलितचेतसमर्जुनं प्रत्याह—**तत्ते पदमिति** ॥ ११ ॥

**आ० भा**—तदेव ध्येयं प्रपंचयति—यदक्षरमित्यादिना। प्राप्यते मुमुक्षुभिरिति पदम्। पदगताविति धातोः। "तद्विष्णोः परमं पदम्" इति श्रुतेश्च। 'गीयसे पदमित्येवमुनिभिः पद्यसे यतः' इति वचनान्नारदीये ॥ ११ ॥

**आ० ज०**—क्रममुक्त्यर्थं ओंकारोपासनमुच्यत इत्यन्यथाव्याख्यानमपाकर्तुमाह—**तदेवेति**। वायुजययुतानां मरणकाले कर्तव्यमेव। मामनुस्मरन्नित्यादिविरोधादिति भावः। ननु पदत्वं शब्दस्यैवोंकारस्य संभवति न विष्णोरित्यत आह—**प्राप्यत इति**। कर्मण्यकारप्रत्ययः। पदं स्वरूपमिति प्रयोगप्रदर्शनम् ॥ ११ ॥

**रा० भा०**—अथ कैवल्यार्थिनां स्मरणप्रकारमाह। यदक्षरम् अस्थूलत्वादिगुणकं वेदविदो वदन्ति वीतरागाश्च यतयो यदक्षरं विशन्ति यदक्षरं प्राप्तुमिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ते प्रवक्ष्ये। पद्यते गम्यते अनेनेति पदं तन्निखिलवेदान्तवेद्यं मत्स्वरूपमक्षरं यथोपास्यं तथा संक्षेपेण प्रवक्ष्यामीत्यर्थः ॥ ११ ॥

**अ० टी०**—ननु भक्तियुक्ता अपि तदेव प्राप्नुवन्ति योगयुक्ता अपि च। तदा तयोः को विशेष इत्याकाङ्क्षायां तयोः प्राप्यरूपमाह—**यदक्षरमिति**। वेदविदो वेदान्तज्ञा यत् अक्षरं वदन्ति। यत् वीतरागा विरागिणो यतयः सर्वत्यागादिप्रयत्नवन्तो विशन्ति यत्रैक्यं प्राप्नुवन्ति। यदिच्छन्तो यत्स्वरूपज्ञानेन प्राप्तीच्छवः ब्रह्मचर्यमिन्द्रियनिग्रहं गुरुकुले चरन्ति तत्पदं तेषां प्राप्यं ते तुभ्यं संग्रहेण संक्षेपेण ज्ञानार्थं प्रवक्ष्ये कथयिष्यामीत्यर्थः ॥ ११ ॥

**नी० टी०**—भ्रुवोर्मध्ये प्राणमावेश्येत्युक्तं तत्किं कृत्वा कर्त्तव्यं तत्कृत्वा च किं कर्त्तव्यमित्येतद्द्वयं वदिष्यंस्तत्र प्रतीकत्वेन चिंत्यं प्रणवं तावद्वाच्यवाचकयोरभेदविवक्षया स्तौति—यदक्षरं प्रणवाख्यं वाचकं वेदविदो वेदादौ वदंति। यद्वा यदक्षरं ब्रह्म तद्वाच्यं। "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घम्"इत्येवं लक्षणं वा वेदविद उपनिषद्विदो वदंति। यच्च यतयो विशंति ब्रह्मप्रतीकत्वेन शरणीकुर्वंति। पक्षे सम्यग्दर्शने सति सरित्सागरन्यायेन यत्प्रविशंति यतयः। यदक्षरमिच्छंतो ब्रह्मचर्यं चरंतीति पक्षद्वयेऽपि समानं। तत्ते पदं वर्णत्रयात्मकं पदनीयं वा स्थानं विष्णोः परमं पदं संग्रहेण प्रवक्ष्ये। अयं च वाच्यवाचकयोरभेदः श्रुतिच्छायया गम्यते। "अन्यत्र धर्मादन्यत्राधर्मात्" इति सर्वधर्मातीतं ब्रह्म

प्रकृत्य । "सर्वे वेदा यत्पदमामनंति तपांसि सर्वाणि च यद्वदंति ॥ यदिच्छंतो ब्रह्मचर्यं चरंति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" इत्योंकारेणोपसंहारात् तत्फलं च प्रतीकभावात् ओंकारं प्रतीकत्वेन प्रकल्प्य तद्वारा शुद्धं शबलं वा ब्रह्म प्रतिपत्तव्यं तथा च श्रुत्यंतरे । "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकार" इत्युपक्रम्य "तस्मादेवंविद्वानेते नैवायतनेनैकतरमन्वेति" इति दृष्टं । आयतनं शालग्रामवत् प्रतीकं तेन ॥ ११ ॥

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ॥**
**मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥**

**शां० भा०**—"स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति तस्मै सहोवाच, एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः" इत्युपक्रम्य "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" इत्यादिना वचनेन "अन्यत्र धर्मादन्यत्राधर्मात्" इति चोपक्रम्य "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत्प्रतीकरूपेण च परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योंकारस्योपासनं कालान्तरे मुक्तिफलमुक्तं यत्तदेवेहापि " कविं पुराणमनुशासितारम्" "यदक्षरं वेदविदो वदन्ति" इति चोपन्यस्तस्य परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्योंकारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यं प्रसक्तानुप्रसक्तं च यत्किंचिदित्येवमर्थ उत्तरो ग्रन्थ आरभ्यते—सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराण्युपलब्धौ तानि सर्वाणि संयम्य संयमनं कृत्वा मनो हृदि हृदयपुण्डरीके निरुध्य निरोधं कृत्वा निष्प्रचारमापाद्य तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्योर्ध्वमारुह्य मूर्धन्याधायाऽऽत्मनः प्राणमास्थितः प्रवृत्तो योगधारणां धारयितुम् ॥ १२ ॥

**शां० आ०**—वक्ष्यमाणेनोपायेनेत्युक्तं व्यक्तीकुर्वन्नोंकारद्वारा ब्रह्मोपासनं श्रुत्युक्तमनुक्रामति—**स यो हेति** । सत्यकामेनाभिध्यानफलं जिज्ञासुना भगवन्निति पिप्पलादः संबोध्याभिमुखी क्रियते । निपातौ तु प्रसिद्धमर्थमेव द्योतयन्तावभिध्यानस्य फलवत्त्वेन कर्तव्यत्वमावेदयतः । मनुष्येषु मध्ये स योऽधिकृतो मनुष्यस्तत्प्रसिद्धमभिध्यानं यथा सिध्यति तथा सर्ववेदसारभूतमोंकारमाभिमुख्येन ध्यायीत । तच्चाभिध्यानमाप्रायणादिति न्यायेन मरणान्तमनुष्ठेयम् । स चैवमनुतिष्ठन्प्रकृतेनाभिध्यानेन लोकानां जेतव्यानां बहुत्वात्कतमं लोकं जयतीति प्रश्ने ( श्नं ) पृष्टवते सत्यकामाय पिप्पलादनामा किलाऽऽचार्यः प्रतिवचनं प्रोवाच । तत्र प्रथममभिध्येयमोंकारं परापरब्रह्मत्वेन मही करोति—**एतद्वा इति** । त्रिमात्रेणाकारोकारमकारात्मकेनेति यावत् । योऽभिध्यायी [ स ] तमेव यथाभिध्यानं पुरुषमधिगच्छतीत्यादिवचनेनोपासनमोंकारस्योक्तमित्यर्थः । प्रश्नश्रुतिवत्कठवल्ली च तत्रैवार्थे प्रवृत्तेत्याह—**अन्यत्रेति** । अव्यवधानेनोपनिषदां व्यवधानेन च कर्मश्रुतीनां परस्मिन्नात्मनि पर्यवसानं दर्शयति—**सर्वे इति** । तपसामपि सर्वेषां चित्तशुद्धिद्वारा तत्रैव पर्यवसानमित्याह—**तपांसीति** । तस्यैव च ज्ञानार्थमष्टाङ्गं ब्रह्मचर्यं तत्र तत्र विहितमित्याह—**यदिच्छन्त इति** । तस्य पदनीयस्य ब्रह्मणः संक्षेपेण कथनमोंकारद्वारकमिति कथयति—**ओमित्येतदिति** । उदाहृतवचनानां तात्पर्यं दर्शयति—**परस्येति** । तस्य वाचकरूपेण वा तस्यैव प्रतीकरूपेण वा विवक्षितस्योंकारस्योपासनं यथोक्तैर्वचनैरुक्तमिति संबन्धः । ननु परस्मिन्ब्रह्मणि तत्त्वमस्यादिवाक्यादेव प्रतिपत्तिरधिकारिणो भविष्यति किमित्युपासनमोंकारस्योपन्यस्यते तत्राऽऽह—**परेति** । यद्यपि विशिष्टस्याधिकारिणो विनैवोपासनमुपनिषद्भ्यो ब्रह्मणि प्रतिपत्तिरुत्पद्यते तथाऽपि मन्दानां मध्यमानां च तद्धीहेतुत्वेनोंकारो विवक्षितस्तच्चोपासनं ब्रह्मदृष्ट्या श्रुतिभिरुपदिष्टमित्यर्थः । तस्य क्रममुक्तिफलत्वादनुष्ठेयत्वं सूचयति—**कालान्तरेति** । भवत्वेवं श्रुतीनां प्रवृत्तिस्तावता प्रकृते किमायातमित्याशङ्क्याऽऽह—**उक्तं यदिति** । तदेवेहापि वक्तव्यमित्युत्तरेण संबन्धः । उपासनमेवोपास्योपन्यासद्वारा स्फोरयति—**कविमित्यादिना** । पूर्वोक्तरूपेणेत्यभिधानत्वेन प्रतीकत्वेन चेत्यर्थः । श्रौतस्योपासनस्यानूद्यमानस्य सोपस्करत्वं संगिरते—**योगेति** । तर्हि कथम्—'अनन्यचेताः सततम्' इत्यादि वक्ष्यते

तत्राऽऽह—**प्रसक्तेति**। ओंकारोपासनं प्रसक्तं तदनन्तरं तत्फलमनुप्रसक्तं तद्वारा चापुनरावृत्त्यादि वक्तव्यकोटिनिविष्टमित्यर्थः। उक्तेऽर्थे समनन्तरग्रन्थमुत्थापयति—**इत्येवमर्थ इति**। श्रोत्रादीनां कुत्र द्वारत्वं तत्राऽऽह—**उपलब्धाविति**। तेषां संयमनं विषयेषु प्रवृत्तानां दोषदर्शनद्वारा तेभ्यो वैमुख्यापादनम्। कोऽयं मनसो हृदये निरोधस्तत्राऽऽह—**निष्प्रचारमिति**। मनसो विषयाकारवृत्तिं निरुध्य हृदि वशीकृतस्य कार्यं दर्शयति—**तत्रेति**। ऊर्ध्वमित्यत्रापि हृदयादिति संबध्यते। सर्वाण्युपलब्धिद्वाराणि श्रोत्रादीनि संनिरुध्य वायुमपि सर्वतो निगृह्य हृदयमानीय ततो निर्गतया सुषुम्नया कण्ठभ्रूमध्यललाटक्रमेण प्राणं मूर्धन्याधाय योगधारणामारूढो ब्रह्म व्याहरन्मां च तदर्थमनुस्मरन्परमां गतिं यातीति संबन्धः॥ १२॥

**आ० भा०**—ब्रह्मनाडीं विना यद्यन्यत्र गच्छति तर्हि विना मोक्षं स्थानातरं प्राप्नोतीति सर्वद्वाराणि संयम्य 'निर्गच्छंश्चक्षुषा सूर्यं दिशः श्रोत्रेण चैव हि' इत्यादिवचनात्व्यासयोगे। मोक्षधर्मे च हृदि नारायणे। 'ह्रीयते त्वया जगद्यस्माद्धृदित्येवं प्रभाषसे' इति पाद्मे। नहि मूर्धनि प्राणे स्थिते हृदि मनसः स्थितिः संभवति। 'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा' इति व्यासयोगे। योगधारणामास्थितः योगभरण एवाभियुक्त इत्यर्थः॥ १२॥

**आ० ज०**—ननु मनो निरुध्येत्यनेनैव सर्वेन्द्रियसंयमनं लब्धम्। तत्किं पुनरुच्यते। मैवम्। वायुसंचरणद्वाराणां नाडीनामत्र ग्रहणात्। तन्नियमनं किमर्थमित्यत आह—**ब्रह्मेति**। इति हेतौ। इत्युक्तमिति शेषः। अत्र प्रमाणमाह—**निर्गच्छन्निति**। सूर्यं गच्छति। मोक्षधर्मे चायमेवार्थ उक्त इति शेषः। हृदीत्यस्य प्रसिद्धार्थतानिरासार्थमाह—**हृदीति**। हरतेः "क्विप् च" इति क्विप्। प्रसिद्धार्थ एव किं न स्यादित्यत आह—**न हीति**। कुतो न संभवतीत्यत आह—**यत्रेति**। आदौ हृदि निरुध्येत्यध्याहारो दोषः। मरणवेलायामखंडस्मृतिर्वक्तव्या। तत्कथं धारणोच्यत इत्यत आह—**योगेति**॥ १२॥

**रा० भा०**—सर्वाणि श्रोत्रादीनीन्द्रियाणि ज्ञानद्वारा भूतानि संयम्य स्वव्यापारेभ्यो विनिवर्त्य हृदयकमलनिविष्टे मय्यक्षरे मनो निरुध्य योगाख्यां धारणां समास्थितः मय्येव निश्चलां स्थितिमास्थितः॥ १२॥

**अ० टी०**—प्रतिज्ञातस्वरूपमाह द्वाभ्याम्—**सर्वद्वाराणीति**। सर्वाणि इन्द्रियद्वाराणि संयम्य वशीकृत्य लौकिकविषयान्मनोनिरुन्धनं कृत्वा मनश्च विकल्पादिधर्मत्यागेन हृदि निरुद्धय मूर्ध्नि भ्रुवोर्मध्ये भाग्यस्थाने प्राणमाधाय आत्मनो योगधारणाम् आस्थित आश्रितः सन्॥ १२॥

**नी० टी०**—भ्रुवोर्मध्ये कथं प्राणमावेशयेदित्यत आह—**सर्वेति**। सर्वाणि शब्दादिविषयग्रहणद्वाराणींद्रियाणि संयम्य निगृह्य तथा हृदि मनोऽपि निरुध्य तेषां कंचुकभूतं प्राणं मूर्द्धन्यनाड्या सुषुम्नाख्यया मूर्ध्नि भ्रुवोर्मध्ये आधाय कथं। योगधारणां योगशास्त्रोक्तां धारणां मनसो देशविशेषनिबंधिनीमास्थितः अनुतिष्ठन् सन्॥ १२॥

**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्॥**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम्॥ १३॥**

**शां० भा०**—तत्रैव च धारयन्—ओमित्येकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतमोंकारं व्याहरन्नुच्चारयंस्तदर्थभूतं मामीश्वरमनुस्मरन्ननुचिन्तयन्यः प्रयाति म्रियते स त्यजन्परित्यजन्देहं शरीरं त्यजन्देहमिति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणमात्मनो न स्वरूपनाशेनेत्यर्थः। स एवं त्यजन्याति गच्छति परमां प्रकृष्टां गतिम्॥ १३॥

**शां० आ०**—यथोक्तयोगधारणार्थं प्रवृत्तो मूर्धनि प्राणमाधाय धारयन्किं कुर्यादित्याशङ्क्यानन्तरश्लोकमवतारयति—**तत्रैवेति**। एकं च तदक्षरं चेत्येकाक्षरमोमित्येवंरूपं तत्कथं ब्रह्मेति विशिष्यते तत्राऽऽह—**ब्रह्मण इति**। यः प्रयातीति मरण-

मुक्त्वा त्यजन्देहमिति ब्रुवता पुनरुक्तिराश्रिता स्यादित्याशङ्क्य विशेषणार्थं विवृणोति—**देहेति**। एवमोंकारमुच्चारयन्नर्थं चाभिध्यायन्ध्याननिष्ठः स पुमानित्यर्थः। परमामिति गतिविशेषणं क्रममुक्तिविवक्षया द्रष्टव्यम् ॥ १३ ॥

**आ० भा०—॥ १३ ॥**

आ० ज०—॥ १३ ॥

**रा० भा०—ओमित्येकाक्षरं ब्रह्म मद्वाचकं व्याहरन् वाच्यं मामनुस्मरन्नात्मनः प्राणं मूर्ध्न्याधाय देहं त्यजन्यः प्रयाति स याति परमां गतिं प्रकृतिवियुक्तं मत्समानाकारमपुनरावृत्तिमात्मानं प्राप्नोतीत्यर्थः। " यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति । अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्" इत्यनन्तरमेव वक्ष्यते ॥ १३ ॥**

अ० टी०—**ओमिति**। एकाक्षरं शक्तिद्वयसंबद्धपुरुषवद्वर्णत्रयात्मकमेकं यदक्षरं ब्रह्मवाचकत्वात्तत्स्वरूपत्वाद्वा ब्रह्मात्मकं व्याहरन्नुच्चारयन्मामेवंरूपं प्रकटमनुस्मरन् यो देहं त्यजन् प्रयाति प्रकर्षेण भावात्मतया गच्छति स परमां परो मीयते यया यत्र वा तां गतिम् अक्षरात्मिकां याति प्राप्नोतीत्यर्थः ॥ १३ ॥

नी० टी०—मूर्ध्नि प्राणमाधाय किं कुर्यादत आह—ओंकाररूपं एकाक्षरं एकं च तदक्षरं च वर्णो ब्रह्म च तद्व्याहरन् उच्चरन् मां च ब्रह्मभूतं अनुस्मरन् यो हि देवदत्तं स्मृत्वा तन्नाम व्याहरति तस्मै देवदत्तोऽभिमुखो भवत्येवं ब्रह्मणो नामोच्चारणेन सन्निहिततरं व्यापकं ब्रह्म साधकस्य सन्निधीयते। सन्निहिते च ब्रह्मणि यो देहं त्यजन् म्रियमाणः प्रयाति ऊर्ध्वनाड्या उत्क्रामति स परमां गतिं सन्निकृष्टब्रह्मरूपां याति ब्रह्मैव प्रकृत्य श्रूयते। "एषाऽस्य परमागतिरेषाऽस्य परमा संपदेषोस्य परम आनंदः" इति। तामेव गतिं शुद्धं ब्रह्मैव प्राप्नोति ब्रह्मलोकप्राप्तिद्वारा ॥ १३ ॥

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ॥**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥**

**शां० भा०—किंच—अनन्यचेता नान्यविषये चेतो यस्य सोऽयमनन्यचेता योगी सततं सर्वदा यो मां परमेश्वरं स्मरति नित्यशः। सततमिति नैरन्तर्यमुच्यते। नित्यश इति दीर्घकालत्वमुच्यते। न षण्मासं संवत्सरं वा किं तर्हि यावज्जीवं नैरन्तर्येण यो मां स्मरतीत्यर्थः। तस्य योगिनोऽहं सुलभः सुखेन लभ्यः पार्थ नित्ययुक्तस्य सदा समाहितस्य योगिनः। यत एवमतोऽनन्यचेताः सन्मयि सदा समाहितो भवेत् ॥ १४ ॥**

शां० आ०—ननु वायुनिरोधविधुराणामुदीरितया रीत्या स्वेच्छाप्रयुक्तोत्क्रमणासंभवाद्दुर्लभा परमा गतिरापतेदिति तत्राऽऽह—**किंचेति**। इतश्च भगवदनुस्मरणे प्रयतितव्यमित्यर्थः। सततं नित्यश इति विशेषणयोरपुनरुक्तत्वमाह—**सततमित्यादिना**। उक्तमेवापौनरुक्त्यं व्यक्ती करोति—**नेत्यादिना**। जितासुरिच्छया देहं त्यजति तदितरस्तु कर्मक्षयेणैवेति विशेषं विवक्षयन्नाह—**यत इति**। अनन्यचेतसं समाहितचेतसं प्रतीश्वरस्य सौलभ्यमेवमित्युच्यते ॥ १४ ॥

**आ० भा०—नित्ययुक्तस्य नित्योपायवतः। योगिनः परिपूर्णयोगस्य ॥ १४ ॥**

आ० ज०—नित्ययुक्तस्य योगिन इत्येतयोरेकार्थतानिरासार्थमाह—**नित्येति**। नित्योपायवत्त्वेन संपूर्णयोगस्येत्यर्थः ॥ १४ ॥

**रा० भा०—एवमैश्वर्यार्थिनः कैवल्यार्थिनश्च स्वप्राप्यानुगुणभगवदुपासनप्रकार उक्तः। अथ ज्ञानिनो भगवदुपासनप्रकारं प्राप्तिप्रकारं चाह नित्यशो मामुद्योगप्राप्तिं सततं सर्वकालमनन्यचेताः यः स्मरति अत्यर्थं मत्प्रियत्वेन मत्स्मृत्या विनात्मधारणमलभमानो निरतिशयप्रियां स्मृतिं यः करो-**

ति तस्य नित्ययुक्तस्य नित्ययोगं काङ्क्षमाणस्य योगिनोऽहं सुलभः अहमेव प्राप्यः न मद्भाव ऐश्वर्यादिकः सुप्रापश्च तद्वियोगमसहमानोऽहमेवं तं वृणे मत्प्राप्त्यनुगुणोपासनविपाकं तद्विरोधिनिरसनमत्यर्थं मत्प्रियत्वादिकं चाहमेव ददामीत्यर्थः । "यमेवैष वृणुते तेन लभ्य" इति हि श्रूयते । वक्ष्यते च 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति ॥ १४ ॥

अ० टी०—एवं योगयुक्तानां स्वांशाक्षरात्मकगतिस्वरूपमुक्त्वा भक्तियुक्तस्य स्वप्राप्तिमाह—अनन्य इति । सततं निरन्तरमव्यवच्छिन्नतया न अन्यस्मिँल्लौकिकालौकिकविषये चेतो यस्य तादृशो यो मां नित्यशः प्रत्यहं स्मरति तस्य नित्ययुक्तस्य मम नित्यं संमतस्य योगिनः सकाशादहं सुलभः सुखेन लभ्यः प्राप्यः । पार्थेतिसंबोधनेन यथा त्वन्मातृस्मरणबलेन तव सुलभो जातस्तथेति व्यंजितम् ॥ १४ ॥

नी० टी०—इयं मतिरतीव दुर्लभेति मा मंस्था इत्याह—अनन्येति । नास्ति अन्यत्र चेतो यस्यासौ अनन्यचेता इत्यनेन स्मरणे आदर उच्यते । सततमिति नैरंतर्यं । यो मां स्मरति नित्यश इति दीर्घकालत्वं यावज्जीवं स्मरतीत्यर्थः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य नित्ये योगिनामावश्यके युक्ताहारविहारादौ यमनियमादौ च युक्तस्यावाहितस्य योगिनः योगमनुतिष्ठतः ॥ १४ ॥

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ॥**
**नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमा गताः ॥ १५ ॥**

**शां० भा०**—तव सौलभ्येन किं स्यादित्युच्यते शृणु तन्मम सौलभ्येन यद्भवति—मामुपेत्य मामीश्वरमुपेत्य मद्भावमापद्य पुनर्जन्म पुनरुत्पत्तिं न प्राप्नुवन्ति । किंविशिष्टं पुनर्जन्म न प्राप्नुवन्ति तद्विशेषणमाह दुःखालयं दुःखानामाध्यात्मिकादीनामालयमाश्रयमालीयन्ते यस्मिन्दुःखानीति दुःखालयं जन्म । न केवलं दुःखालयमशाश्वतमनवस्थितस्वरूपं च नाऽऽप्नुवन्तीदृशं पुनर्जन्म महात्मानो यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां गताः प्राप्ताः । ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्तन्ते १५ ॥

**शां० आ०**—किं त्वां प्राप्तास्त्वय्येवावतिष्ठन्ते किंवा पुनरावर्तन्ते चन्द्रलोकादिवेति संदेहात्पृच्छति—**तवेति** । तत्रोत्तरश्लोकेन निश्चयं दर्शयति—**उच्यत इति** । ईश्वरोपगमनं न सामीप्यमात्रमिति व्याचष्टे—**मद्भावमिति** । पुनर्जन्मनोऽनिष्टत्वं प्रश्नद्वारा स्पष्टयति—**किमित्यादिना** । महात्मत्वं प्रकृष्टसत्त्ववैशिष्ट्यम् । यतयस्तस्मिन्नेवेश्वरे समुत्पन्नसम्यग्दर्शिनो भूत्वेति शेषः । भगवन्तमुपगतानामपुनरावृत्तौ ततो विमुखानामनुपजातसम्यग्धियां पुनरावृत्तिरर्थसिद्धेत्याह—**ये पुनरिति** ॥ १५ ॥

**आ० भा०**—तत्प्राप्तिं स्तौति—मामिति । परमां सिद्धिं गता इति हि तत्र हेतुः ॥ १५ ॥

आ० ज०—स याति परमां गतिम् । तस्याहं सुलभ इति द्वेधावचनात् परमगतिर्भगवल्लाभश्च पृथगिति न मंतव्यम् । भगवत्प्राप्तेरेवोत्तरत्र स्तुतेः । अन्यथोभयस्तुतिप्रसंगादित्यभिप्रायेणाह—**तत्प्राप्तिमिति** । तर्हि कथं मामुपेत्येत्युक्त्वा संसिद्धिं परमां गता इति पृथगुक्तिरित्यत आह—**परमामिति** । ये मामुपेतास्ते परमां सिद्धिं मोक्षलक्षणां हि गताः । न च मुक्तानां निर्बीजं जन्म संभवतीत्येवं तत्र स्वयंप्राप्तानां जन्माभावे हेतुरयमुच्यते । न तु भगवत्प्राप्तेरन्या परमसंसिद्धिप्राप्तिरित्यर्थः ॥१५॥

**रा० भा०**—अतः परमध्यायशेषेण ज्ञानिनः कैवल्यार्थिनश्चापुनरावृत्तिमैश्वर्यार्थिनः पुनरावृत्तिं चाह । मां प्राप्य पुनर्निखिलदुःखालयमस्थिरं जन्म न प्राप्नुवन्ति यत एते महात्मानः महामनसो यथावस्थितमत्स्वरूपज्ञानाः अत्यर्थमत्प्रियत्वेन मया विनात्मधारणमलभमानाः मय्यासक्तमनसो मदाश्रयाः मामुपास्य परमसंसिद्धिरूपं मां प्राप्ताः ॥ १५ ॥

अ० टी०—नन्वेवमेव तत्तद्देवोपासकास्तत्तत्सायुज्यं प्राप्नुवन्तीति तत्तच्छास्त्रेषु निगद्यत इति भवत्प्राप्तौ को विशेष इत्याकाङ्क्षायां स्वप्राप्तेर्विशेषमाह—**मामुपेत्येति** । महात्मानो महात्मका भक्ता परमां संसिद्धिं भावरूपां गताः सन्तो मामेकं पुरुषोत्तमम् उपेत्य समीपे प्राप्य पुनः दुःखालयं संसारात्मकम् अशाश्वतमनित्यं लौकिकं जन्म न प्राप्नुवन्तीत्यर्थः ॥ १५ ॥

नी० टी०—त्वल्लाभेऽपि किं स्यादत आह—**मामिति** । मामुपेत्य पुनर्द्वितीयवारं जन्म नाप्नुवंति । यज्जन्म दुःखानामालयभूतं मूढदृष्ट्या किंचित्सुखालयत्वेऽपि अशाश्वतं नश्वरं तुच्छमित्यर्थः । केनाप्नुवंति महात्मानो योगेन जितचित्ताः अत एव परमां संसिद्धिं मोक्षं गता अगता अपि प्रत्यासन्नत्वाद्गता एव । तथा ब्रह्मलोकगतान् प्रकृत्य स्मर्यते । 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ॥ परस्यांते कृतात्मानः प्रविशंति परं पदम्' इति प्रतिसंचरे ब्राह्मे प्रलये परस्य चतुर्मुखस्य अंते नाशे ॥ १५ ॥

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

शां० भा०—किं पुनस्त्वत्तोऽन्यत्प्राप्ताः पुनरावर्तन्त इत्युच्यते—**आब्रह्मभुवनाद्** भवन्ति यस्मिन्भूतानीति भुवनं ब्रह्मभुवनं ब्रह्मलोक इत्यर्थः । आब्रह्मभुवनात्सह ब्रह्मभुवनेन **लोकाः** सर्वे **पुनरावर्तिनः** पुनरावर्तनस्वभावा **हेऽर्जुन !** **माम्** एकम् **उपेत्य तु कौन्तेय पुनर्जन्म** पुनरुत्पत्तिर्न **विद्यते**॥१६॥

शां० आ०—" अपाम सोमममृता अभूम " इति श्रुतेः स्वर्गादिगतानामपि समानैवानावृत्तिरित्याशङ्कते—**किं पुनरिति** । अर्थवादश्रुतौ कर्मिणाममृतत्वस्याऽऽपेक्षिकत्वं विवक्षित्वा परिहरति—**उच्यत इति** । एतेन भूरादिलोकचतुष्टयं प्रविष्टानां पुनरावृत्तावपि जनादिलोकत्रयं प्राप्तानामपुनरावृत्तिरितिविभागोक्तिरप्रामाणिकत्वादवहेयेत्यवधेयम् । तर्हि तद्वदेवेश्वरं प्राप्तानामपि पुनरावृत्तिः शङ्क्यते नेत्याह—**मामिति** । यावत्संपातश्रुतिवदीश्वरं प्राप्तानां निवृत्ताविद्यानां पुनरावृत्तिरप्रामाणिकीत्यर्थः । यस्य स्वाभाविकी वंशप्रयुक्ता च शुद्धिस्तस्यैवोक्तेऽर्थे बुद्धिरुदेतीति मत्वा संबुद्धिद्वयम् ॥ १६ ॥

आ० भा०—महामेरुस्थब्रह्मसदनमारभ्य न पुनरावृत्तिः । तच्चोक्तम् नारायणगोपालकल्पे 'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि । तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजम्' इति ॥ १६ ॥

आ० ज०—आब्रह्मभुवनाल्लोकाः पुनरावर्तिन इति सत्यलोकसहितानां पुनरावृत्तिरुच्यतं इत्येतदपव्याख्यानमिति भावेनाह—**महामेरुस्थेति** । परतः स्थितानाम् । एवं जनलोकमारभ्येत्यपि ग्राह्यम् । कुत एतदित्यतः श्लोकमागमेनैव व्याचष्टे—**तच्चेति** । पृथिवीसंबंधिनां तदसंबंधिनां लोकानां ग्रहणायोभयोपादानम् । परतः स्थितानाम् । यद्यपीति शेषः अभावो जनेः लभ्यत इति शेषः । अनेनैव व्याख्यातं भवति । महामेरुस्थब्रह्मसदनं जनलोकं चारभ्य न पुनरावृत्तिः । अतो मामुपेत्य पुनर्जन्मेति किमुच्यत इति चेत् सत्यम् । आब्रह्मभवनादेवमाजनाच्चार्वाक्भवा एव लोकाः पुनरावर्तिनः । परे न पुनरावर्तिन इति यावत् तथाऽपि नोक्तमयुक्तम् । यतस्तेषु लोकेषु स्थितं मामुपेत्यावस्थितस्य पुनर्जन्म न विद्यत इति । अन्यथामामुपेत्य पुनर्जन्मेत्युक्तत्वात् उत्तरार्धवैयर्थ्यं च ॥ १६ ॥

रा० भा०—ऐश्वर्यगतिं प्राप्तानां भगवन्तं प्राप्तानां च पुनरावृत्तावपुनरावृत्तौ च हेतुमनन्तरमाह । ब्रह्मलोकपर्यन्ताः ब्रह्माण्डोदरवर्तिनः सर्वे लोकाः भोगैश्वर्यालयाः पुनरावर्त्तिनः विनाशिनः अत ऐश्वर्यगतिं प्राप्तानां प्राप्यस्थानविनाशाद्विनाशित्वमवर्जनीयं मां सर्वज्ञं सत्यसंकल्पं निखिलजगदुत्पत्तिस्थितिलयलीलं परमकारुणिकं सदैकरूपं प्राप्तानां विनाशप्रसङ्गाभावात्तेषां पुनर्जन्म न विद्यते ॥ १६ ॥

निवर्तन्ते परिभ्रमन्ति 'जायस्व म्रियस्वेति' तृतीयमार्गाऽभिनिविष्टा भवन्तीत्यर्थः। अश्रद्दधाना इतिकथनेन श्रद्धामात्रेणापि संसाराभावो व्यञ्जितः ॥ ३ ॥

नी० टी०—तर्हि कुत एतज्ज्ञानं सर्वे न संपादयंतीत्याह—**अश्रद्दधाना इति**। स्पष्टार्थः श्लोकः ॥ ३ ॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ॥**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥**

शां० भा०—स्तुत्याऽर्जुनमभिमुखीकृत्याऽऽह—मया मम यः परो भावस्तेन ततं व्याप्तं सर्वमिदं जगदव्यक्तमूर्तिना न व्यक्ता मूर्तिः स्वरूपं यस्य मम सोऽहमव्यक्तमूर्तिस्तेन मयाऽव्यक्तमूर्तिना करणागोचरस्वरूपेणेत्यर्थः। तस्मिन्मय्यव्यक्तमूर्तौ स्थितानि मत्स्थानि सर्वभूतानि ब्रह्मादीनि स्तम्बपर्यन्तानि। न हि निरात्मकं किंचिद्भूतं व्यवहारायावकल्पतेऽतो मत्स्थानि मयाऽऽत्मनाऽऽत्मवत्त्वेन स्थितान्यतो मयि स्थितानीत्युच्यन्ते। तेषां भूतानामहमेवाऽऽत्मेत्यतस्तेषु स्थित इति मूढबुद्धीनामवभासतेऽतो ब्रवीमि न चाहं तेषु भूतेष्ववस्थितो मूर्तवत्संश्लेषाभावेनाऽऽकाशस्याप्यन्तरतमो ह्यहम्। न ह्यसंसर्गि वस्तु क्वचिदाधेयभावेनावस्थितं भवति ॥ ४ ॥

शां० आ०—स्तुतिनिन्दाभ्यां ज्ञाननिष्ठां महीकृत्य ज्ञानं व्याख्यातुमारभते—**स्तुत्येति**। सोपाधिकस्य व्याप्यसंभवमभिप्रेत्य विशिनष्टि—**ममेति**। अनवच्छिन्नस्य भगवद्रूपस्य निरुपाधिकत्वमेव साधयति—**करणेति**। व्याप्यव्यापकत्वेन जगतो भगवतश्च परिच्छेदमाशङ्क्याऽऽह—**तस्मिन्निति**। तथाऽपि भगवतो भूतानां चाऽऽधाराधेयत्वेन भेदः स्यादित्याशङ्क्याऽऽह—**न हीति**। निरात्मकस्य व्यवहारानर्हत्वे फलितमाह—**अत इति**। ईश्वरस्य भूतात्मत्वे तेषु स्थितिः स्यादित्याशङ्क्याऽऽह—**तेषामिति**। तस्य तेषु स्थित्यभावं व्यवस्थापयति—**मूर्तवदिति**। संश्लेषाभावेऽपि किमिति नाऽऽधेयत्वमत आह—**न हीति** ॥४॥

आ० भा०—प्रत्यक्षावगमशब्देनापरोक्षज्ञानसाधनत्वमुक्तम्। तज्ज्ञानायाह—मयेति। तर्हि किमिति न दृश्यत इत्यत आह—अव्यक्तमूर्तिनेति ॥ ४ ॥

आ० ज०—एवंतर्हि पुनरुक्तिः स्यात् ब्रह्मविषयं ज्ञानमित्यस्य ब्रह्मावगम्यते विषयीक्रियतेऽनेन ज्ञानेनेत्यस्य च भेदाभावादित्यत आह—**प्रत्यक्षेति**। नावगमशब्देन विषयीकरणमुच्यते। किंतु अवगतिसाधनत्वं। न च ज्ञानस्य तद्विरुद्धम्। परोक्षज्ञानस्यापरोक्षज्ञानसाधनत्वोपपत्तेरिति भावः। ज्ञानं विज्ञानसहितं प्रवक्ष्यामीति प्रतिज्ञाय यज्ज्ञात्वेत्यादिना तत्प्रशंसादिकमुक्तम्। अतो मया ततमित्यादिकमपि किं तथाभूतमेव किंचिदुत प्रतिज्ञातमुच्यत इति शंकायामाह—**तदिति**। प्रतिज्ञातमित्यर्थः। यस्यापरोक्षज्ञानसाधनत्वमुक्तं तदिति वा। कृत्स्नाध्यायप्रतिपाद्योक्तिरियम्। विशेषणवैयर्थ्यमाशंक्याह—**तर्हीति**। सर्वव्यापी चेदित्यर्थः। न दृश्यते सर्वत्रेति शेषः ॥ ४ ॥

रा० भा०—इदं चेतनाचेतनात्मकं कृत्स्नं जगदव्यक्तमूर्तिना अप्रकाशितस्वरूपेण मयान्तर्यामिणा ततम् अस्य जगतो धारणार्थं च शेषित्वेन व्याप्तमित्यर्थः। यथान्तर्यामिब्राह्मणे "यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद, य आत्मनि तिष्ठन् यमात्मा न वेद" इति चेतनाचेतनवस्तुजातैरदृष्टेनान्तर्यामिणा तत्र तत्र व्याप्तिरुक्ता ततो मत्स्थानि सर्वभूतानि सर्वाणि भूतानि मयि अन्तर्यामिणि स्थितानि तत्रैव ब्राह्मणे "यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति, यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति" इति शरीरत्वेन नियाम्यत्वप्रतिपादनात् तदायत्ते स्थितिनियमने प्रतिपादिते शेषित्वं च 'न चाहं तेष्ववस्थितः' अहं तु न तदायत्तस्थितिः मत्स्थितौ तैर्न कश्चिदुपकार इत्यर्थः ॥ ४ ॥

अ० टी०—एवं प्रतिज्ञाय तत्स्वरूपं च स्तुत्वा ज्ञानमेवाह द्वाभ्याम्—**मयेति**। अव्यक्तातिरिक्तेषु लौकिकेन्द्रियाऽगोचरा स्वक्रियेच्छैकदृश्या मूर्तिः स्वरूपं यस्य। वक्ष्यति चाग्रे 'दिव्यं ददामि ते चक्षुः' 'भक्त्या त्वन-

न्यया' इत्यादि। एतादृशेन मया इदं जगत् सर्वं जडजङ्गमात्मकमातृणस्तम्बान्तं ततं व्याप्तं मत्क्रीडार्थं मदात्मकं मया सृष्टमित्यर्थः। यद्वा। अव्यक्तमूर्तिना मया व्याप्तम् इदं सर्वं जगत् अस्तीति शेषः। अयं भावः। आतृणस्तम्बान्तं सर्ववस्तुषु तत्तत्स्वरूपोऽहमेवास्मि। अव्यक्तत्वात्तथा सर्वैर्न ज्ञायते। एवं चेत्सर्वेषु भूतेषु तद्रूपः प्रविष्टो भवानाधिदैविकन्यायेन भविष्यतीत्यत आह—**मत्स्थानीति**। मत्स्वरूपस्थानि सर्वाणि सन्ति सर्वाधारत्वात्। क्रीडेच्छया पृथक् तत्तद्रूपं प्रकटयामीति भावः। अपरिच्छिन्नत्वात् प्रकटमपि जगन्मय्येव तिष्ठति। तेषु न च अहं। तेषु परिच्छिन्नतया न तिष्ठामीत्यर्थः॥ ४॥

**नी० टी०**—एवं स्तुत्याऽभिमुखीकृत्य यद्वक्तव्यं तदाह—**मयेति**। मया इदं सर्वं जगत् ततं व्याप्तं उपादानत्वात् कनकेनेव कुंडलादीनि। ननु प्रागेवैतदुक्तं अहं सर्वस्य जगतः प्रभवः प्रलयस्तथेति तथा च राजविद्येत्यादिस्तुतिरस्थाने एव कृता स्यात् वक्तव्यविशेषाभावादिति चेत् अत्र ब्रूमः यथा। "यतो वा इमानि भूतानि जायंते। येन जातानि जीवंति। यत्प्रयंत्यभिसंविशंति। तद्विजिज्ञासस्व। तद्ब्रह्मेति" इति। ज्ञेयस्य ब्रह्मणो लक्षणं जगज्जन्मादिहेतुत्वमुक्त्वा तस्यानुगममन्नादिशब्दशब्दितेषु विराडादिषु दर्शयति। "अन्नाद्ध्येव खल्विमानि भूतानि जायंते"। प्राणाद्ध्येवेत्यादिना तस्य निर्णयवाक्यं तु। "आनंदाद्ध्येव खल्विमानि भूतानि जायंते" इति "सैषा भार्गवी वारुणी विद्या"इति तत्रैव विद्यायाः पर्यवसानाभिधानात्। एवमिहापि सप्तमे भूमिरापोऽनलो वायुरित्यादिना सर्वभूतात्मकस्य विराजो जगज्जन्मादिहेतुत्वं प्रदर्श्य पश्चादहं सर्वस्य जगतः प्रभवः प्रलयस्तथेत्यनेन मायाशबलेऽपि तत्प्रदर्श्येदानीं शुद्धे प्रत्यगात्मन्येव तद्दर्शयति स्थूलारुंधतीन्यायेन प्रतिपत्तिसौकर्यार्थमिति गम्यते राजविद्येत्यादिना स्तुतत्वात्। यथा कश्चिद्दुर्लक्ष्यां सूक्ष्मामरुंधतीं दिदर्शयिषुस्तत्समीपस्थां स्थूलां तारामरुंधतीति ग्राहयति प्रतिपद्यते चानेनैव क्रमेण प्रतिपत्ता एवमिहापि कार्यकारणप्रतिपत्तिद्वारा अकार्यकारणस्य शुद्धस्य प्रतिपत्तिर्युक्ता अत एव भगवान् भाष्यकारो मया ततमिदं सर्वमित्यत्र मया मम यः परो भावस्तेन ततं व्याप्तमिति व्याचख्यौ। न त्वहं सर्वस्य जगतः प्रभव इत्यत्र मम यः परो भावः स सर्वस्य जगतः प्रभव इति। स च भगवतः कारणात्मनः परो भावः परमानंद एव तेनैव चेदं ततं। आनंदाद्ध्येवेत्युदाहृतश्रुतेस्तस्यैव जगदुपादनत्वेन तदीयसत्तास्फूर्तिभ्यां जगतो व्याप्तत्वात्। अत एवाव्यक्तमूर्तिनेति विशेषणं। मायाशबलं हि कारणं बुद्धिग्राह्यत्वात्करणगोचरः शुद्धं हि बुद्धेः परत्वात्करणागोचर इति। किंभूताकारेणानंदः परिणमत इत्यत आह—**मत्स्थानीति**। मयि प्रत्यगानंदे रज्ज्वां स्रक्सर्पदंडधारादय इव सर्वभूतानि स्थितान्यतो मत्स्थानीत्युपचारादुच्यंते अधिष्ठानाध्यस्तयोर्वास्तवसंबंधायोगात्। एतदेवाह—**नचेति**। न चाहं परमानंदस्तेषु भूतेष्ववस्थितोऽस्मि घटादाविव मृत् अपरिणामित्वादेव॥४॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्॥**
**भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः॥ ५॥**

**शां० भा०**—अत एवासंसर्गित्वान्मम—न च मत्स्थानि भूतानि ब्रह्मादीनि पश्य मे योगं युक्तिं घटनं मे ममैश्वरमीश्वरस्येममैश्वरं योगमात्मनो याथात्म्यमित्यर्थः। तथा च श्रुतिरसंसर्गित्वादसङ्गतां दर्शयति "असङ्गो न हि सज्जते" इति। इदं चाऽऽश्चर्यमन्यत्पश्य भूतभृदसङ्गोऽपि सन्भूतानि बिभर्ति न च भूतस्थो यथोक्तेन न्यायेन दर्शितत्वाद्भूतस्थत्वानुपपत्तेः। कथं पुनरुच्यतेऽसौ ममाऽऽत्मेति, विभज्य देहादिसंघातं तस्मिन्नहंकारमध्यारोप्य लोकबुद्धिमनुसरन्व्यपदिशति ममाऽऽत्मेति, न पुनरात्मन आत्माऽन्य इति लोकवदजानन्। तथा भूतभावनो भूतानि भावयत्युत्पादयति वर्धयतीति वा भूतभावनः॥ ५॥

**शां० आ०**—परमेश्वरस्य भूतेषु स्थित्यभावेऽपि भूतानां तत्र स्थितिरास्थितेति कुतोऽसङ्गत्वं तत्राऽऽह—**अत एवेति** । न चेत्यत्र चकारोऽवधारणार्थः । भूतानामीश्वरे नैव स्थितिरित्यत्र हेतुमाह—**पश्येति** । आत्मनोऽसङ्गत्वं स्वरूपमित्यत्र प्रमाणमाह—**तथा चेति** । असङ्गश्चेदीश्वरस्तर्हि कथं मत्स्थानि भूतानीत्युक्तं कथं च तथोक्त्वा न च मत्स्थानीति तद्विरुद्धमुदीरितमित्याशङ्क्याऽऽह—**इदं चेति** । तर्हि भूतसंबन्धः स्यादिति नेत्याह—**न चेति** । यथोक्तेन न्यायेनासङ्गत्वेनेति यावत् । असङ्गतया वस्तुतो भूतासंबन्धेऽपि कल्पनया तदविरोधान्न मिथोविरोधोऽस्तीति भावः । आत्मनः सकाशादात्मनोऽन्यत्वायोगात्कुतः संबन्धोक्तिरित्याशङ्क्याऽऽह—**असाविति । विभज्येति** । यथा लोको वस्तुतत्त्वमजानन्भेदमारोप्य ममायमिति संबन्धमनुभवति न तथेह संबन्धव्यपदेश आत्मनि स्वतो भेदाभावादतो भेदेऽसत्येव लोके संबन्धबुद्धिदर्शनमनुसरन्भगवानात्मनो देहादिसंघातं विभज्याहंकारं तस्मिन्नारोप्यासौ ममाऽऽत्मेति भेदं व्यपदिशति । तथा च संघातस्य ममेति व्यपदेशात्ततो निकृष्टस्य स्वरूपस्याऽऽत्मशब्देन निर्देशान्न भूतस्थोऽसावित्यर्थः । पूर्वोक्तासङ्गत्वाङ्गीकारेणैवाऽऽत्मा भूतानि भावयतीत्याह—**तथेति** ॥ ५ ॥

**आ० भा०—मत्स्थत्वेपि । यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह—न चेति । 'न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च' इति हि मोक्षधर्मे । संज्ञासंज्ञ इति च । ममात्मा देह एव भूतभावनः । 'महाविभूतेर्माहात्म्यशरीरे'ति हि मोक्षधर्मे ॥ ५ ॥**

**आ० ज०**—मत्स्थानि सर्वभूतानीत्युक्त्वा पुनः कथं न च मत्स्थानीति व्याहतमुच्यत इत्यत आह—**मत्स्थत्वेऽपीति । स्पृष्ट्वेति** । स्पर्शनेंद्रियेण तां ज्ञात्वाऽन्योन्यधर्मसंक्रांतिमासाद्य चेत्यर्थः । परमेश्वरस्य स्पर्शनाद्यवेद्यत्वे प्रमाणमाह—**नेति** । संज्ञया शब्देनैव संज्ञा सम्यग्ज्ञानं यस्यासौ तथोक्तः । मत्स्थानीत्यादेरुक्तत्वात् भूतभृत्यादिकं पुनरुक्तमित्यत आह—**ममेति** । प्राक्भूताधारत्वादिकं स्वस्योक्तम् । अत्र पुनरव्यक्तमूर्तिनेति मूर्तावुक्तायां सास्मदादीनामिव भिन्नेति भ्रांतिनिरासार्थं स्वलक्षणं स्वदेहस्योच्यत इत्यर्थः । भूतभावनत्वस्याधिकस्योक्तेश्च न पुनरुक्तिरिति भावेनोक्तम्—**भूतेति** । स्यादिदं व्याख्यानं यदि भगवद्देहस्येदं भवेत् तदेव कुतइत्यत आह—**महाविभूतेरिति** । माहात्म्यमेव शरीरं यस्यासौ तथोक्तः ॥ ५ ॥

**रा० भा०—न च मत्स्थानि भूतानि न घटादीनां जलादेरिव मम धारकत्वं कथं मत्संकल्पेन पश्य ममैश्वरं योगम् अन्यत्र कुत्रचिदसंभवनीयं मदसाधारणमाश्चर्यं योगं पश्य कोऽसौ योगः भूतभृन्न च भूतस्थो ममात्मा भूतभावनः सर्वेषां भूतानां भर्ताहं न च तैः कश्चिदपि ममोपकारः ममात्मैव भूतभावनः मम मनोमयः संकल्प एव भूतानां भावयिता धारयिता नियन्ता च ॥ ५ ॥**

**अ० टी०**—मत्स्थानि सर्वभूतानीत्युक्त्या भगवतस्ते भिन्ना भविष्यन्तीति ज्ञानेन व्यापकत्वे भ्रमो मा भवत्वित्यत आह—**न च मत्स्थानीति** । च पुनः । तानि भूतानि जातान्यपि भिन्नतया मत्स्थानि न किंतु मदात्मकान्येवेत्यर्थः । ननु तर्हि कथं भेदप्रतीतिरित्यत आह—**पश्य मे योगमैश्वरमिति** । मे ऐश्वरं कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वरूपं क्रीडात्मकं योगं पश्य । अयमर्थः । मया क्रीडार्थमभेदेऽपि भेदो बोध्यते । एतदेव विशदयति—**भूतभृदिति** । भूतानि आधारत्वेन धारयति स्वरसार्थं पोषयतीति भूतभृत् । भूतानि पालयति तथा भावयति स्वभावभावितानि करोतीति भूतभावनः । एतादृशोऽपि सन् ममात्मा मदात्मस्वरूपं भूतस्थो न भवति । अयं भावः । तेषु क्रीडां कुर्वन्नपि यथा ते क्रीडार्थं सृष्टास्तत्र स्थिताः स्वाभिमानेन भिन्नतया तिष्ठन्ति तथाऽहं न तिष्ठामि ॥ ५ ॥

**नी० टी०**—एवमभ्युपगतमानंदस्य जगद्विवर्ताधिष्ठानत्वं तदप्यपवदति—**न च मत्स्थानीति** । अयं भावः । अस्य द्वैतेंद्रजालस्य यदुपादानकारणं । अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यत इति वार्तिकोक्तेरज्ञानमेव जगत्कारणं तच्च तुच्छं अहं चासंगः । ततश्च तुच्छतरेण तत्कार्येण भूतसंघेन न ममासंगस्याधाराधेयभावसंबंधोऽनिर्वचनीयोऽप्यस्ति । आवृतं हि रज्ज्वादिकमनिर्वचनीयेन सर्पादिना संबध्यते । अहं तु सर्वदाऽनावृतः साक्षिरूपत्वात्तत्संबंधशून्य इति न च मत्स्थानि भूतानीत्युक्तमिति । ननु साक्षिणस्तव ब्राह्मणो युवा सुखी चेति प्रतीच्येव भूतसंबंधानुभवात्कथं न च मत्स्थानीत्युक्तिरित्याशंक्याह—**पश्य मे योगमैश्वरमिति** । मे मम भूतैः सह योगं युक्तिघटनां पश्य ऐश्वरं

ईश्वरेण मायाविना निर्मितं गगने गंधर्वनगरामिव । अत एव मम कारणशरीरस्यात्मा प्रत्यगानंदो भूतभृदपि भूतस्थो न चकारोऽप्यर्थेऽभिन्नक्रमश्च खमिव गंधर्वनगरभृदपि तत्स्थं न तस्य तदाकारेण परिणामासंभवात् । एवंरूपोऽपि परानंदरूपो ममात्मा स भूतभावनः भूतानां वृद्धिकरः । "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनंदो न स्यात्"इत्यादिश्रुतिभ्यः आकाशे अव्याकृताख्ये स्वाधिष्ठानभूत आनंदोऽनुस्यूतो न स्यात्तर्हि प्राणापानक्रियां कश्चिदपि न कुर्यात् कारणगतं जाड्यं कार्येऽपि स्यात् आकाशे आनंदानुबंधे तु कारणस्य चेतनत्वात्कार्यमपि चेतनावत्स्यादिति श्रुत्यर्थः । बृहदारण्यकेऽपि । "यदूर्ध्वं गार्गि दिवो यदावाक् पृथिव्या यदंतरा द्यावापृथिवी इमे ॥ यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं च"इति मायाविनि सर्वस्योतप्रोतत्वमुक्त्वा कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्यस्योत्तरमेतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चेत्यस्थूलादिलक्षणस्याक्षरस्याकाशाधारत्वमुक्तं । तस्माद्युक्तमुक्तमाकाशशरीरेण भगवताकारणोपाधिनिष्कृष्टचिन्मात्राभिप्रायेण ममात्मा भूतभावन इति ॥ ५ ॥

## यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ॥
## तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

**शां० भा०—यथोक्तेन श्लोकद्वयेनोक्तमर्थं दृष्टान्तेनोपपादयन्नाह—यथा लोक आकाशस्थित आकाशे स्थितो नित्यं सदा वायुः सर्वत्र गच्छतीति सर्वत्रगो महान्परिमाणतस्तथाऽऽकाशवत्सर्वगते मय्यसंश्लेषेणैव स्थितानीत्येवमुपधारय जानीहि ॥ ६ ॥**

**शां० आ०**—सृष्टिस्थितिसंहाराणामसङ्गात्माधारत्वं ' मया ततमिदम् ' इत्यादिश्लोकद्वयेनोक्तोऽर्थस्तं दृष्टान्तेनोपपादयन्नादौ दृष्टान्तमाहेति योजना । सदेत्युत्पत्तिस्थितिसंहारकालो गृह्यते । आकाशादेर्महतोऽन्याधारत्वं कथमित्याशङ्क्याऽऽह—**महानिति** । यथा सर्वगामित्वात्परिमाणतो महान्वायुराकाशे सदा तिष्ठति तथाऽऽकाशादीनि महान्त्यपि सर्वाणि भूतान्याकाशकल्पे पूर्णे प्रतीच्यसङ्गे परस्मिन्नात्मनि संश्लेषमन्तरेण स्थितानीत्यर्थः ॥ ६ ॥

**आ० भा०—मत्स्थानि न च मत्स्थानीत्यत्र दृष्टांतमाह—यथाकाशस्थित इति । न ह्याकाशस्थितो वायुः स्पर्शाद्याप्नोति ॥ ६ ॥**

**आ० ज०**—एकमेकत्राश्रितमित्यत्रासंभवनाभावात् किं तु दृष्टांतोक्त्येत्यत आह—**मत्स्थानीति** । तत्र स्थितत्वेऽप्यन्योन्यधर्मासंक्रात्यादावित्यर्थः । तदत्र न प्रतीयत इत्यतो व्याचष्टे—**न हीति** । स्पर्शादीति तद्धर्मोपलक्षणम् ॥ ६ ॥

**रा० भा०—सर्वस्यास्य स्वसंकल्पायत्तस्थितिप्रवृत्तित्वे निदर्शनमाह । यथाकाशेऽनालम्बने महान्वायुः स्थितः सर्वत्र गच्छति । स तु वायुर्निरालम्बनो मदायत्तस्थितिरित्यवश्याभ्युपगमनीयो मयैव धृत इति विज्ञायते तथैव सर्वाणि भूतानि तैरदृष्टे मयि स्थितानि मयैव धृतानीत्युपधारय यथाहुर्वेदविदः ' मेघोदयः सागरसन्निवृत्तिरिन्दोर्विभागस्फुरितानि वायोः । विद्युद्विभङ्गो गतिरुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः ' इति विष्णोरनन्यसाधारणानि महाश्चर्याणीत्यर्थः । श्रुतिरपि " एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः । भीषास्माद्वातः पवते भीषोदेति सूर्य्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः " इत्यादिका ॥ ६ ॥**

**अ० टी०**—तर्हि भवतो व्यापकत्वाज्जीवस्याणुत्वादव्यापकत्वाच्च मत्स्थानीत्याधाराधेयभावः कथमित्यत आह सदृष्टान्तम्—**यथेति** । यथा सर्वगो महानपि वायुर्नित्यमाकाशस्थितो भवति आकाशेन च न स्पृश्यते । नित्यप-

देनाकाश एव सर्वत्र गतियुक्तो भवतीतिव्यञ्जितम् । तथा सर्वाणि भूतानि सर्वत्रगतियुक्तानि मत्क्रीडेच्छयैव मत्स्थानीत्युपधारय जानीहि । उप=समीपे मत्समीपे धारय पश्येत्यर्थः ॥ ६ ॥

**नी० टी०**—श्लोकद्वयोक्तेऽर्थे दृष्टांतमाह—**यथेति** । यथा लोके आकाशे स्थितो नित्यं सदा वायुः सर्वत्रगः परिमाणतश्च महान् । तथा सर्वाणि भूतानि सर्वगते मयि असंश्लेषेणैव स्थितानीत्येवमुपधारयेति प्राञ्चः । किं तद्ब्रह्मेति प्रश्नस्योत्तरमुक्तं अक्षरं परमं ब्रह्मेति अक्षरसंज्ञं शुद्धस्त्वंपदार्थ एव निरुपाधिकं ब्रह्मेत्युक्तं । तत्र निरुपाधिकं ब्रह्म श्लोकद्वयेन व्याख्यातं । इदानीं तस्याक्षराख्येन जीवेनाभेदं सदृष्टांतमाह—**यथेति** । वायुः सूत्रात्मा । "वायुर्वै गोतम तत्सूत्रम्"इति श्रुतेः । सर्वत्रग इति समष्टिलिंगत्वात्तस्य सर्वगतत्वं । महानिति बाह्यवायुव्यावृत्त्यर्थं । स यथा आकाशस्थितः अव्याकृताकाशे स्वकारणे स्थितः । नित्यमिति कालत्रयेऽपि तस्याकाशसंबंध उक्तः । सर्वाणि भूतानि उपाधिनिष्कृष्टत्वंपदार्थरूपी चेतनवर्गः । बहुत्वं लोकाभिप्रायेण । यथा कार्यं सर्वमुत्पत्तेः प्राक् नाशादूर्ध्वं मध्ये च स्वकारण एवाभेदेन तिष्ठति । एवं सर्वोऽपि जीववर्ग उपाध्युत्पत्तेः प्राक् तन्नाशादूर्ध्वं मध्ये वा घटाकाशो महाकाशादिव परस्माद्ब्रह्मणः कालत्रयेऽपि नातिरिच्यत इत्यर्थः । एतेन जीवब्रह्माभेदकथनेन स्वभावोध्यात्ममुच्यत इति यत्प्रागुक्तं ब्रह्मैव जीव इति तद्विवृतम् ॥ ६ ॥

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ॥**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**

**शां० भा०—एवं वायुराकाश इव मयि स्थितानि सर्वभूतानि स्थितिकाले तानि—सर्वभूतानि कौन्तेय प्रकृतिं त्रिगुणात्मिकामपरां निकृष्टां यान्ति मामिकां मदीयां कल्पक्षये प्रलयकाले । पुनर्भूयस्तानि भूतान्युत्पत्तिकाले कल्पादौ विसृजाम्युत्पादयाम्यहं पूर्ववत् ॥ ७ ॥**

**शां० आ०**—आकाशे वाय्वादिस्थितिवदाकाशादीनि भूतानि स्थितिकाले परमेश्वरे स्थितानि चेत्तर्हि प्रलयकाले ततोऽन्यत्र तिष्ठेयुरित्याशङ्क्याऽऽह—**एवमिति** । प्रकृतिशब्दस्य स्वभाववचनत्वं व्यावर्तयति—**त्रिगुणात्मिकामिति** । सा चापरेयमिति प्रागेव सूचितेत्याह—**अपरामिति** । तस्याश्चेश्वराधीनत्वेनास्वातन्त्र्यमाह—**मदीयामिति** । प्रलयकाले भूतानि यथोक्तां प्रकृतिं यान्ति चेदुत्पत्तिकालेऽपि ततस्तेषामुत्पत्तेरीश्वराधीनत्वं भूतसृष्टेर्न स्यादित्याशङ्क्याऽऽह—**पुनरिति** ॥ ७ ॥

**आ० भा०—ज्ञानप्रदर्शनार्थं प्रलयादि प्रपंचयति । सर्वभूतानीत्यादिना ॥ ७ ॥**

**आ० ज०**—यथा मयाततमित्याद्युक्तोपपादनार्थान्युत्तरवाक्यानि । न तथा सर्वभूतानीत्यादि । किं तु स्वतंत्रमेव ज्ञानप्रतिपादकमिति भावेनाह—**ज्ञानेति** । प्रलयादीति तत्कारणलम् । प्रकृतिं स्वामवष्टभ्येति वचनात् ॥ ७ ॥

**रा० भा०—सकलेतरनिरपेक्षस्य भगवतः संकल्पात्सर्वेषां स्थितिः प्रवृत्तिश्चोक्ता तथा तत्संकल्पादेव सर्वेषामुत्पत्तिप्रलयावपीत्याह । स्थावरजङ्गमात्मकानि सर्वाणि भूतानि मामिकां मच्छरीरभूतां प्रकृतिं तमःशब्दवाच्यां नामरूपविभागानर्हां कल्पक्षये चतुर्मुखावसानसमये मत्संकल्पाद्यान्ति तान्येव भूतानि कल्पादौ पुनर्विसृजाम्यहं यथाह मनुः 'आसीदिदं तमोभूतं' 'सोभिध्याय शरीरात्स्वात्' इति । श्रुतिरपि "यस्याव्यक्तं शरीरम्" इत्यादिका "अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते, तमः परदेवे एकीभवति, तम आसीत्तमसा गूढमग्रे प्रकेतम्" इति च ॥ ७ ॥**

**अ० टी०**—ननु भगवद्गतानां भवति स्थितानां नाशः कथमित्याशङ्क्याह—**सर्वभूतानीति** । हे कौन्तेय ! कृपैकपात्र ! कल्पक्षये कल्पसमाप्तौ सर्वभूतानि मामिकां प्रकृतिं स्वरतीच्छारूपां यान्ति । पुनस्तानि कल्पादौ प्रपञ्चक्रीडेच्छया अहं विसृजामि विशेषेण नीचोच्चप्रकारेण वैचित्र्यार्थं सृजामि ॥ ७ ॥

नी० टी०—नन्वेवमुपाधिरहितस्यैव ब्रह्मणि लयश्चेदुपाधेः का गतिरित्याशंक्याह—**सर्वेति**। सर्वाणि भूतानि स्थावरजंगमशरीराणि मामिकां मम मायाविनः प्रकृतिं त्रिगुणात्मिकामपरां सूक्ष्मभूम्याद्यात्मिकां यांति प्रविशंति कदा यांति कल्पक्षये। पुनश्च तान्येव भूतानि प्रकृतौ सुप्ताविव संस्कारात्मना स्थितानि एकतां गतानि कल्पादौ विसृजामि विविधरूपेण सृजाम्यहं कारणात्मा मायावी ॥ ७ ॥

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ॥**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥**

**शां० भा०**—एवमविद्यालक्षणाम्—प्रकृतिं स्वां स्वीयामवष्टभ्य वशीकृत्य विसृजामि पुनः पुनः प्रकृतितो जातं भूतग्रामं भूतसमुदायमिमं वर्तमानं कृत्स्नं समग्रमवशमस्वतन्त्रमविद्यादिदोषैः परवशीकृतं प्रकृतेर्वशात्स्वभाववशात् ॥ ८ ॥

**शां० आ०**—तर्हि कीदृशी प्रकृतिः सा च कथं सृष्टावुपयुक्तेत्याशङ्क्याऽऽह—**एवमिति**। संसारस्यानादित्वद्योतनार्थं पुनः पुनरित्युक्तम्। भूतसमुदायस्याविद्यास्मितादिदोषपरवशत्वे हेतुमाह—**स्वभाववशादिति** ॥ ८ ॥

**आ० भा०**—प्रकृत्यवष्टंभस्तु यथा कश्चित्समर्थोपि पादेन गंतुं लीलया दंडमवष्टभ्य गच्छति। 'सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि' इति 'सर्वभूतगुणैर्युक्तं दैवं मां ज्ञातुमर्हसि' इति च मोक्षधर्मे। 'विदित्वा सप्त सूक्ष्माणि षडंगं च महेश्वरम् ॥ प्रधानविनियोगस्थः परं ब्रह्माधिगच्छति' इति च। 'न कुत्रचिच्छक्तिरनंतरूपा विहन्यते तस्य महेश्वरस्य ॥ तथापि मायामधिरुह्य देवः प्रवर्तते सृष्टिविलापनेषु' इति ऋग्वेदखिलेषु। 'मय्यनंतगुणेऽनंते गुणतोऽनंतविग्रह' इति भागवते। अथ कस्मादुच्यते परं ब्रह्मेति बृंहति बृंहयति चाथर्वणे "परास्य शक्तिर्विविधैव श्रूयते" इति च। "विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ॥ न ते विष्णो जायमानो न जातो देव महिम्नः परमं तमाप" इत्यादेश्च ॥ प्रकृतेर्वशादवशं। त्वमेवैतत्सर्जने सर्वकर्मण्यनंतशक्तोऽपि स्वमाययैव। "मायावशं चावशं लोकमेतत्तस्मात्स्रक्ष्यस्यत्सि पासीश विष्णो" इति गौतमखिलेषु ॥ ८ ॥

**आ० ज०**—तद्विकलस्य भगवतो न सामर्थ्यमिति प्रतीतिनिरासार्थमाह—**प्रकृतीति**। तथा लीलयैव न तु केवलस्य सामर्थ्याभावादिति शेषः। कुत एतत्। भगवतःसर्वसामर्थ्यसंपूर्णस्य प्रमितत्वादित्याह—**सर्वेति**। सर्ववस्तुसामर्थ्यैः। एवं भूतवत् पारतंत्र्याद्युपेतं किं तु दैवं देवोत्तमम्। पंचमहाभूतानि महदहंकारौ च सप्त सूक्ष्माणि सर्वज्ञता तृप्तिरित्युक्तप्रकारेण षडंगं प्रधानस्य मूलप्रकृतेर्विनियोगः कार्येषु यो व्यापारस्तत्स्थस्तज्ज्ञानी। मायामधिरुह्य प्रकृतिमवष्टभ्य। कं कः प्रवोचं प्रवोचत्। प्रकृतेर्वशाद्विसृजामीत्याविद्यकमेवेश्वरस्य कर्तृत्वं वस्तुतस्तु निष्क्रियत्वमित्युच्यत इत्यन्यथाप्रतीतिनिरासायान्यथाऽन्वयमाह—**प्रकृतेरिति**। कुत एतदित्यतः पूर्वोक्तार्थसहितेत्यत्र प्रमाणमाह—**त्वमेवेति**। एतत्सर्जन एतस्य लोकस्य सृष्ट्याम्। अन्यस्मिन्नपि पालनादौ सर्वकर्मणि। तस्मान्मायावशत्वादेवावशम् एतदेतं स्रक्ष्यसि सृजसि ॥ ८ ॥

**रा० भा०**—स्वकीयां विचित्रपरिणामिनीं प्रकृतिमवष्टभ्य अष्टधा परिणमय्येमं चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकं भूतग्रामं मदीयायाः मोहिन्याः गुणमय्याः प्रकृतेर्वशात् अवशं पुनः पुनः काले काले विसृजामि ॥ ८ ॥

अ० टी०—ननु त्वयि लीनानामानन्दनिमग्नानां पुनः सृष्टौ किं तात्पर्यमित्याशङ्क्याह—**प्रकृतिमीति**। स्वां प्रकृतिम् असाधारणीं रमणात्मिकाम् अवष्टभ्य अधिष्ठाय रमणभावमङ्गीकृत्य पुनःपुनः वारंवारं मम क्रीडायोग्यं मद्दर्शनयोग्यं च भूतग्रामं चतुर्विधं कृत्स्नं पूर्णम् अवशं मदिच्छाधीनं प्रकृतेर्वशात् क्रीडात्मकस्वरूपवशात् सृजामि। अन्यथा सृष्टानां पूर्वोक्तदूषणं स्यात् स्वक्रीडार्थं सृष्टानामत्राप्यानन्दरूपतैवेतिभावः ॥ ८ ॥

नी० टी०—एतदेवाह—**प्रकृतिमिति**। एवमविद्यालक्षणां स्वां प्रकृतिमवष्टभ्य आश्रित्य तां विना केवलस्य स्रष्टृत्वासंभवात् इमं भूतग्रामं पुनःपुनर्विविधं सृजामि किंभूतं प्रकृतेर्वशात् स्वभाववशात् अवशं रागद्वेषाद्यधीनम्॥८॥

**न च मां तानि कर्माणि निबध्नन्ति धनंजय ॥**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

**शां० भा०—तर्हि तस्य ते परमेश्वरस्य भूतग्रामं विषमं विदधतस्तन्निमित्ताभ्यां धर्माधर्माभ्यां संबन्धः स्यादितीदमाह भगवान्—न च मामीशं तानि भूतग्रामस्य विषमविसर्गनिमित्तानि कर्माणि निबध्नन्ति धनंजय। तत्र कर्मणामसंबद्धत्वे कारणमाह—उदासीनवदासीनं यथोदासीन उपेक्षकः कश्चित्तद्वदासीनमात्मनोऽविक्रियत्वादसक्तं फलासङ्गरहितमभिमानवर्जितमहं करोमीति तेषु कर्मसु। अतोऽन्यस्यापि कर्तृत्वाभिमानाभावः फलासङ्गाभावश्चाबन्धकारणमन्यथा कर्मभिर्बध्यते मूढः कोशकारवदित्यभिप्रायः ॥ ९ ॥**

**शां० आ०**—यदि प्राकृतं भूतग्रामं स्वभावादविद्यादितन्त्रं विषमं विदधासि तर्हि तव विषमसृष्टिप्रयुक्तं धर्मादिमत्त्वमित्यनीश्वरत्वापत्तिरिति शङ्कते—**तर्हीति**। तत्रेति सप्तम्या परमेश्वरो। निरुच्यते ईश्वरस्य फलासङ्गाभावात्कर्तृत्वाभिमानाभावाच्च कर्मासंबन्धवदीश्वरादन्यस्यापि तदुभयाभावो धर्माद्यसंबन्धे कारणमित्याह—**अतोऽन्यस्येति**। यदि कर्मसु कर्तृत्वाभिमानो वा कस्यचित्फलासङ्गो वा स्यात्तत्राऽऽह—**अन्यथेति** ॥ ९ ॥

**आ० भा०—उदासीनवन्नतूदासीनः। तदर्थमाह—असक्तमिति। "अवाक्यनादर" इति श्रुतिः। 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ॥ यदनुग्रहतः संति न संति यदुपेक्षया' इति भागवते। यस्यासक्त्यैव सर्वकर्मशक्तिः कुतस्तस्य सर्वकर्मबंध इति भावः। "न कर्मणा वर्धते नो कनीयान्" इति हि श्रुतिः। यःकर्माणि नियामयति कथं च तं कर्म बध्नाति ॥ ९ ॥**

**आ० ज०**—स्वतः कर्तृत्वे कथमुदासीनत्वमुच्यत इति चेत् न। वतिना तस्य निषिद्धत्वादिति भावेनाह—उदासीनवदिति अनुदासीनत्वेऽपि वतिर्व्यर्थः स्यात्। अन्यस्य तदर्थस्याभावादित्यत आह—**तदर्थमिति**। वत्यर्थः सादृश्यं स्वयमेव वित्रृणोतीत्यर्थः। परमेश्वरस्य कर्मसु सक्त्यभावे प्रमाणमाह—**अवाक्येति**। सर्वथोदासीनएव किं न स्यादिति चेत् न। तथा सति प्रकृत्यादीनामसत्वप्रसंगादिति भावेनाह—**द्रव्यमिति**। यदीश्वरस्य स्वतः कर्तृत्वं स्यात्तदोदासीनमित्येतत् न तु मां तानि कर्माणि निबध्नंतीत्यत्र कथं हेतुः स्यादित्यत आह—**यस्येति**। असक्त्या अनादरेणानायासेनेति यावत्। भगवतोऽपि कर्मबंधोऽस्तीति केषांचित्प्रलापः। यथा विष्णुर्येनेत्यादि तन्निरासाय श्रुत्युपपत्ती प्राह—**न कर्मणेति**। नियामयति नियच्छति॥९॥

**रा० भा०—एवं तर्हि विषमसृष्ट्यादीनि कर्माणि नैर्घृण्याद्यापादनेन भगवन्तं बध्नन्तीत्यत्राह—न च तानि विषमसृष्ट्यादीनि कर्माणि मां निबध्नन्ति मयि नैर्घृण्यादिकं नापादयन्ति यतः क्षेत्रज्ञानां पूर्वकृत्यान्येव कर्माणि देवादिविषमभावहेतवः अहं तु तत्र वैषम्ये असक्तस्तत्रोदासीनवदासीनः यथाह सूत्रकारः "वैषम्यनैर्घृण्ये न सापेक्षत्वात् न कर्माभिभागादिति चेत् न, अनादित्वात्" इति ॥ ९ ॥**

अ० टी०—ननु रमणात्मकशक्तिवशसृष्टानि तानि त्वां वशीकृत्य प्रपञ्चरमण एवं कथं न स्थापयन्तीत्याशङ्क्याह—**न च मामिति**। हे धनञ्जय! लौकिकपरवशैकचित्त! तानि भूतानि उदासीनवत् आसीनं तेषु, परमकृपया कृतार्थीकरणार्थं तेषु तिष्ठन्तं मां न निबध्नन्ति न वशीकुर्वन्ति। च पुनः। कर्माणि क्रीडात्मकानि च मां न वशीकुर्वन्ति। कुतः। तेषु कर्मसु क्रीडात्मकेष्वपि असक्तम् अनासक्तम् आत्माऽऽरामत्वात् शक्तिषु रसदानार्थं क्रीडाकरणात्। एतदेवोक्तं 'रमया प्रार्थ्यमानेन देव्यास्तत्प्रियकाम्यया। वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः' इति ॥ ९ ॥

**नी० टी०**—ननु विषमां सृष्टिं कुर्वतस्तव वैषम्यनैर्घृण्ये स्यातामत आह—**न चेति**। तानि विषमसृष्टिरूपाणि कर्माणि मां न निबध्नंति तत्र हेतुः—**उदासीनवदासीनमिति**। यथा पर्जन्यो बीजविशेषेषु रागं केषुचिद्द्वेषं चाकृत्वा उदासीनः सन् वर्षति एवमीश्वरोऽपि पुण्यवत्सु रागं पापिषु द्वेषं चाकुर्वन् जगत्सृजति। तत्तदसाधारणकर्मबीजवशात्ते ते विभिन्नं फलं प्राप्नुवंतीति नेश्वरवैषम्यादीत्यर्थः ॥ ९ ॥

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥**
**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

**शां० भा०**—तत्र भूतग्राममिमं विसृजाम्युदासीनवदासीनमिति च विरुद्धमुच्यत इति तत्परिहारार्थमाह—मया सर्वतो दृशिमात्रस्वरूपेणाविक्रियात्मनाऽध्यक्षेण मम माया त्रिगुणात्मिकाऽविद्यालक्षणा प्रकृतिः सूयत उत्पादयति सचराचरं जगत्। तथा च मन्त्रवर्णः—"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति। हेतुना निमित्तेनानेनाध्यक्षत्वेन कौन्तेय जगत्सचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्तते सर्वावस्थासु। दृशिकर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिरहमिदं भोक्ष्ये पश्यामीदं शृणोमीदं सुखमनुभवामि दुःखमनुभवामि तदर्थमिदं करिष्याम्येतदर्थमिदं करिष्य इदं ज्ञास्यामीत्याद्याऽवगतिनिष्ठाऽवगत्यवसानैव। "यो अस्याध्यक्षः परमे व्योमन्" इत्यादयश्च मन्त्रा एतमर्थं दर्शयन्ति। ततश्चैकस्य देवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्य परमार्थतः सर्वभोगानभिसंबन्धिनोऽन्यस्य चेतनान्तरस्याभावे भोक्तुरन्यस्याभावात्किंनिमित्तेयं सृष्टिरित्यत्र प्रश्नप्रतिवचने अनुपपन्ने "को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः" इत्यादिमन्त्रवर्णेभ्यः। दर्शितं च भगवता 'अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति ॥ १० ॥

**शां० आ०**—ईश्वरे स्रष्टृत्वमौदासीन्यं च विरुद्धमिति शङ्कते—**तत्रेति**। पूर्वग्रन्थः सप्तम्यर्थः। विरोधपरिहारार्थमुत्तरश्लोकमवतारयति—**तदिति**। तृतीयाद्वयं समानाधिकरणमित्यभ्युपेत्य व्याचष्टे—**मयेत्यादिना**। प्रकृतिशब्दार्थमाह—**ममेति**। तस्या अपि ज्ञानत्वं व्यावर्तयति—**त्रिगुणेति**। पराभिप्रेतं प्रधानं व्युदस्यति—**अविद्येति**। साक्षित्वे प्रमाणमाह—**तथा चेति**। मूर्तित्रयात्मना भेदं वारयति—**एक इति**। अखण्डं जाड्यं प्रत्याह—**देव इति**। आदित्यवत्ताटस्थ्यं प्रत्यादिशति—**सर्वभूतेष्विति**। किमिति तर्हि सर्वैर्नोपलभ्यते तत्राऽऽह—**गूढ इति**। बुद्ध्यादिवत्परिच्छिन्नत्वं व्यवच्छिनत्ति—**सर्वव्यापीति**। तर्हि नभोवदनात्मत्वं नेत्याह—**सर्वभूतेति**। तर्हि तत्र तत्र कर्म तत्फलसंबन्धित्वं स्यात्तत्राऽऽह—**कर्मेति**। सर्वाधिष्ठानत्वमाह—**सर्वेति**। सर्वेषु भूतेषु सत्तास्फूर्तिप्रदत्वेन संनिधिर्वासोऽत्रोच्यते। न केवलं कर्मणामेवायमध्यक्षोऽपि तु तद्वताम पीत्याह—**साक्षीति**। दर्शनकर्तृत्वशङ्कां शातयति—**चेतेति**। अद्वितीयत्वं केवलत्वम्। धर्माधर्मादिराहित्यमाह—**निर्गुण इति**। किं बहुना सर्वविशेषशून्य इति चकारार्थः। उदासीनस्यापीश्वरस्य साक्षित्वमात्रं निमित्तीकृत्य जगदेतत्पौनःपुन्येन सर्गसंहारावनुभवतीत्याह—**हेतुनेति**। कार्यवत्कारणस्यापि साक्ष्यधीना प्रवृत्तिरिति वक्तुं व्यक्ताव्यक्तात्मकमित्युक्तम्। सर्वावस्थास्वित्यनेन सृष्टिस्थितिसंहारावस्था गृह्यन्ते। तथाऽपि जगतः सर्गादिभ्यो भिन्ना प्रवृत्तिः स्वाभाविकी नेश्वरायत्तेत्याशङ्क्याऽऽह—**दृशीति**। न हि दृशिव्याप्यत्वं विना जडवर्गस्य काऽपि प्रवृत्तिरिति हिशब्दार्थः। तामेव प्रवृत्तिमुदाहरति—**अहमित्यादिना**। भोगस्य विषयोपलम्भाभावेऽसंभवान्नानाविधां विषयोपलब्धिं दर्शयति—**पश्यामीति**। भोगफलमिदानीं कथयति—**सुखमिति**। विहितप्रतिषिद्धाचरणनिमित्तं सुखं दुःखं चेत्याह—**तदर्थमिति**। न च विमर्शपूर्वकं विज्ञानं विनाऽनुष्ठानमित्याह—**इदमिति**। इत्याद्या प्रवृत्तिरिति संबन्धः। सा च प्रवृत्तिः सर्वा दृक्कर्मत्वमुररीकृत्यैवेत्युक्तं निगमयति—**अवगतीति**। तत्रैव च प्रवृत्तेरवसानमित्याह—**अवगत्यवसानेति**। परस्याध्यक्षत्वमात्रेण जगच्चेष्टेत्यत्र प्रमाणमाह—**यो अस्येति**। अस्य जगतो योऽध्यक्षो निर्विकारः स परमे प्रकृष्टे हार्दे व्योम्नि स्थितो दुर्विज्ञेय इत्यर्थः। ईश्वरस्य साक्षित्वमात्रेण स्रष्टृत्वे स्थिते फलितमाह—**ततश्चेति**। किंनिमित्ता परस्येयं सृष्टिर्न तावद्भोगार्था परस्य परमार्थतो भोगासंबन्धित्वात्तस्य सर्वसाक्षिभूतचैतन्यमात्रत्वान्न

चान्यो भोक्ता चेतनान्तराभावादीश्वरस्यैकत्वादचेतनस्याभोक्तृत्वान्न च स्रष्टुरपवर्गार्थौ तद्विरोधित्वान्नैवं प्रश्नो वा तदनुरूपं प्रतिवचनं वा युक्तं परस्य मायानिबन्धने सर्गे तस्यानवकाशत्वादित्यर्थः । परस्याऽऽत्मनो दुर्विज्ञेयत्वे श्रुतिमुदाहरति—**को अद्धेति** । तस्मिन्प्रवक्ताऽपि संसारमण्डले नास्तीत्याह—**क इहेति** । जगतः सृष्टिकर्तृत्वेन परस्य ज्ञेयत्वमाशङ्क्य कूटस्थत्वात्ततो न सृष्टिर्जातेत्याह—**कुत इति** । न हीयं विविधा सृष्टिरन्यस्मादपि कस्माचिदुपपद्यतेऽन्यस्य वस्तुनोऽभावादित्याह—**कुत इति** । कथं तर्हि सृष्टिरित्याशङ्क्याज्ञानाधीनेत्याह—**दर्शितं चेति** ॥ १० ॥

**आ० भा०—उदासीनवदिति चेत्स्वयमेव प्रकृतिः सूयत इत्यत आह—मयेति । प्रकृतिसूतिद्रष्टा कर्त्ता अहमेवेत्यर्थः। तथा च श्रुतिः।"यतः प्रसूता जगतः प्रसूति तोयेन जीवान्व्यससर्ज भूम्याम्" इति१०**

आ० ज०—कथं तर्ह्यहं केवलं द्रष्टैव प्रकृतिरेव चराचरं सूयत इत्युत्तरवाक्यमित्यतस्तन्निवर्त्याशंकां प्रदर्श्य व्याचष्टे—**उदासीनवदिति** । भगवतोदासीनसादृश्यं स्वयमेव व्याख्यातम् । तदज्ञात्वा क्रियाभाव एवोक्त इति मत्वा शंकितम् । पुरा प्रकृतिं स्वामवष्टभ्य विसृजामीत्युक्तम् । इदानीं तूदासीनवदिति निष्क्रियत्वमुच्यते । एवं तर्हि प्रकृतिरेव सूयते त्वयि तु तत्सन्निधानात्कर्तृत्वोपचारमात्रमित्यापन्नमिति तन्निवृत्यर्थमिदं वाक्यम् । तत्राध्यक्षेणेत्यनेन प्रकृतिसूतेर्द्रष्टाहमेवेत्युच्यते । तृतीयया च तत्प्रयोजककर्ता चाहमेव । न तु तस्याः स्वातंत्र्यमिति । दर्शनपूर्वकत्वात्प्रयोजकत्वस्य तदुक्तिः । अन्यथा तृतीया व्यर्था स्यादिति भावः । प्रकृतिप्रयोजकत्वं परमेश्वरस्य कुत इत्यत आह—**यत इति** । प्रसूता स्रष्टावभिमुखीभूता प्रसूती प्रसूतिः । तोयेन कर्मणा व्यससर्ज विससर्ज । बहुलग्रहणात् ॥ १० ॥

**रा० भा०—तस्मात् क्षेत्रज्ञकर्मानुगुणं मदीया प्रकृतिः सत्यसंकल्पेन मयाध्यक्षेणेक्षिता सचराचरं जगत्सूयते अनेन क्षेत्रज्ञकर्मानुगुणमदीक्षणेन हेतुना जगद्विपरिवर्तत इति मत्स्वाम्यं सत्यसंकल्पत्वं नैर्घृण्यादिदोषरहितत्वमित्येवमादिकं मम वसुदेवसूनोरैश्वरं योगं पश्य । यथाह श्रुतिः । "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः" 'मायां तु प्रकृतिं विन्द्यात् मायिनं तु महेश्वरम्" इति ॥ १० ॥**

अ० टी०—ननूदासीनस्तेषु त्वं चेत्तदा प्रकृतिवशोत्पन्ना जीवाः कथं क्रीडायोग्या भवन्ति कथं वा त्वं कर्त्तेत्याशङ्क्याह—**मयेति** । मया परिदृश्यमानेन अध्यक्षेण अधिष्ठात्रा सकलकर्त्री क्रीडाधिष्ठिता सती प्रकृतिः सचराचरं जडजीवसहितं जगत् सूयते जनयति । अनेन क्रीडात्मकेन हेतुना कारणेन जगत् विशेषेण परिवर्त्तते जायते च । अतो योग्या भवन्तीत्यर्थः ॥ १० ॥

नी० टी०—ननु विसृजामि उदासीनवदासीनमिति परस्परविरुद्धमुच्यत इत्याशंक्याह—**मयेति** । मया कूटस्थेन अध्यक्षेण अयस्कांतकल्पेन प्रवर्त्तकेन प्रकृतिश्चराचरं जगत् सूयते उत्पादयति । अनेन अध्यक्षत्वेनैव हेतुना हे कौंतेय जगद्विपरिवर्त्तते जन्माद्यवस्थासु भ्रमति । अयस्कांतवदहमुदासीनश्च सृष्टिप्रवर्त्तकश्च भवामीति भावः। तथा च मंत्रवर्णः । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति एकस्यैव देवस्य सर्वाध्यक्षत्वं साक्षित्वं च प्रतिपादयति ॥ १० ॥

## अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ॥
## परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥

**शां० भा०—एवं मां नित्यशुद्धबुद्धमुक्तस्वभावं सर्वजन्तूनामात्मानमपि सन्तम्—अवजानन्त्यवज्ञां परिभवं कुर्वन्ति मां मूढा अविवेकिनो मानुषीं मनुष्यसंबन्धिनीं तनुं देहमाश्रितं मनुष्यदेहेन व्यवहरन्तमित्येतत् । परं प्रकृष्टं भावं परमात्मतत्त्वमाकाशकल्पमाकाशादप्यान्तरतममजानन्तो मम भूतमहेश्वरं सर्वभूतानां महान्तमीश्वरं स्वमात्मानम् । ततश्च तस्य ममावज्ञानभावनेनाऽऽहता वराकास्ते ११॥**

**शां० आ०**—सर्वाध्यक्षः सर्वभूताधिवासो नित्यमुक्तश्चेत्त्वं तर्हि किमिति त्वामेवाऽऽत्मत्वेन भेदेन वा सर्वे न भजन्ते तत्राऽऽह—**एवमिति**। विपर्यस्तबुद्धित्वं भगवदवज्ञायां कारणमित्याह—**मूढा इति**। भगवतो मनुष्यदेहसंबन्धात्तस्मिन्विपर्यासः संभवतीत्याह—**मानुषीमिति**। अस्मदादिवद्देहतादात्म्याभिमानं भगवतो व्यावर्तयति—**मनुष्येति**। भगवन्तमवजानतामविवेकमूलाज्ञानं हेतुमाह—**परमिति**। ईश्वरावज्ञानात्किं भवतीत्यपेक्षायां तदवज्ञानप्रतिबद्धबुद्धयः शोच्या भवन्तीत्याह—**ततश्चेति**। भगवदज्ञानादेव हेतोरवजानन्तस्ते जन्तवो वराकाः शोच्याः सर्वपुरुषार्थबाह्याः स्युरिति संबन्धः। तत्र हेतुं सूचयति—**तस्येति**। प्रकृतस्य भगवतोऽवज्ञानमनादरणं निन्दनं वा तस्य भावनं पौनःपुन्यं तेनाऽऽहतास्तज्जनितदुरितप्रभावात्प्रतिबद्धबुद्धय इत्यर्थः ॥ ११ ॥

**आ० भा०**—तर्हि केचित्कथं त्वामवजानंति का च तेषां गतिरित्यत आह—अवजानंतीत्यादिना। मानुषीं तनुं मूढानां मानुषवत्प्रतीतां तनुं न तु मनुष्यरूपां। उक्तं च मोक्षधर्मे। 'यत्किंचिदिह लोकेऽस्मिन्देहबद्धं विशांपते। सर्वं पंचभिराविष्टं भूतैरीश्वरबुद्धिजैः॥ ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट्। भूतांतरात्मा वरदः सगुणो निर्गुणोपि च॥ भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम' इति अवतारप्रसंगे चैतदुक्तम्। अतो नावताराः पृथक् शंक्याः। 'रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय सः॥ वाराहं नारसिंहं च वामनं मानुषं तथा' इति। तत्रैव प्रथमसर्गकाल एवावताररूपविभक्त्युक्तेः। अतो न तेषां मानुषत्वादिर्विना भ्रांतिम्। भूतं महदीश्वरं चेति भूतमहेश्वरम्। तथा हि बाभ्रव्यशाखायाम् "अनाद्यनंतं परिपूर्णरूपमीशं वराणामपि देववीर्यम्" इति। "अस्य महतो भूतस्य निःश्वसितम्" इति च। ब्रह्मपुरोहितब्रह्मकायिकमहाराजिकेति च मोक्षधर्मे॥ ११॥

**आ० ज०**—उत्तरवाक्यस्य संगत्यप्रतीतेस्तामाह—**तर्हीति**। यदि त्वमेव जगतः सृष्टिस्थितिसंहाराणां कर्ता। कैश्चिदवज्ञानात् तेषां चानर्थाभावादुक्तमसदिति शंकाभिप्रायः। मानुषीं तनुमाश्रितमित्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे—**मानुषीमिति**। भ्रांत्यनुवाद एवायमिति भावः। कुतो नेत्यत आह—**उक्तंचेति**। चोहेतौ। शरीराणि हि भौतिकानि भवंति। भूतानि चेश्वरस्य बुद्धिजानि तत्कथं तानि बध्नीयुरित्यर्थः। अत्रैवेश्वरो हीत्यादिनान्ये हेतवोऽभिधीयंते। विराट् नित्याभिव्यक्तरूपः वरदो मोक्षप्रदः। सगुणः स्वातंत्र्यादिगुणवान्। भूतानि प्रलीयंते यस्मिंस्तदव्यक्तं। तदभिमानिनी देवता तस्य शुश्रूषुः। लिंगव्यत्ययश्छांदसः। अस्त्वेतन्मूलरूपविषयम्। अवतारस्य तु कृष्णस्य मानुषत्वं भवत्वित्यत आह—**अवतारेति**। यत्तद्ददर्शिवान् ब्रह्मा रूपं हयशिरोधरमिति हयग्रीवावतारप्रसंगे। अस्तु हयग्रीवस्यैवं। कृष्णस्तु मानुषशरीर एव किं न स्यादितिचेत् न। युक्तिसाम्यात्। विशेषप्रमाणाच्चेत्याह—**रूपाणीति**। असृजदभजत्। प्रादुर्भावभवायोत्तरत्र स नारायणः। मानुषं कृष्णादिकं। तत्रैव मोक्षधर्म एव। प्रथमसर्गकाल एव। मानुषादिजात्युत्पत्तेः प्रागेवेत्यर्थः। उपसंहरति—**अत इति**। तेषामवताराणाम्। उत्तरपदविरोधश्चान्यथेतिभावेन तद्व्याचष्टे—**भूतमिति**। भूतं सर्वदा विद्यमानमिति कालानंत्यमाचष्टे महदिति देशानंत्यमीश्वरमिति गुणानंत्यम्। भावं याथार्थ्यमिति। व्याख्यानापेक्षया नपुंसकम्। अत्र श्रुतिं पठति—**तथा हीति**। ईशं वराणाभितीश्वरम्। षष्ठ्याः परनिपातः। देवाः वीर्यं पुत्रायस्यासौ तथोक्तः। महतो भूतस्येति देशकालानंत्यमुच्यते। वराणां देवानामीशत्वे ब्रह्मेति मोक्षधर्मवाक्यं प्रमाणं पुरोहितादिदेवनिकायास्त्वदधीना इत्यर्थः। ब्रह्मेति द्विरुक्तिरादरार्था ॥ ११ ॥

**रा० भा०**—एवं मां भूतमहेश्वरं सर्वज्ञं सत्यसंकल्पं निखिलजगदेककारणं परमकारुणिकतया सर्वसमाश्रयणीयत्वाय मानुषीं तनुमाश्रितं स्वकृतैः पापकर्मभिः मूढाः अवजानन्ति प्राकृतमनुष्यसमं मन्यन्ते भूतमहेश्वरस्य ममापारकारुण्यौदार्यसौशील्यवात्सल्यादिनिबन्धनं मनुष्यत्वसमाश्रयणलक्षणमिमं परं भावमजानन्तो मनुष्यत्वसमाश्रयणमात्रेण मामितरसजातीयं मत्वा तिरस्कुर्वन्तीत्यर्थः॥ ११॥

**अ० टी०**—नन्विदं स्वरूपं सर्वाधिष्ठातृ सर्वे कथं न जानन्तीत्यत आह—**अवजानन्तीति** द्वयेन। मूढा असुराः केवलमिच्छयैव सृष्टाः, मम भूतमहेश्वरं सर्वाधिष्ठातृ सर्वाधिदैविकरूपं परं भावं पुरुषोत्तमात्मकम् अजानन्तो मानुषीं तनुं मायिनं स्वाज्ञानेन मां ज्ञात्वा अवजानन्ति अवमन्यन्ते। अत्रायंभावः। पुरुषोत्तमोऽयं येन स्वरूपेण वदति तदेव स्वरूपं ब्रह्मरूपमानन्दमयं तमेव मानुषीं तनुमाश्रितं जानन्ति अज्ञत्वात्॥ ११॥

नी० टी०—एवंभूतं मां संतं मूढाः अवजानंति यतो मानुषीं तनुमाश्रितं मनुष्यदेहेन व्यवहरंतं । मम परं प्रकृष्टं भावं तत्त्वं अजानंतः भूतानां महेश्वरं मामवजानंतीति संबंधः ॥ ११ ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

**शां० भा०**—कथम्—मोघाशा मोघा वृथाआशा आशिषो येषां ते मोघाशाः । तथा मोघकर्माणो यानि चाग्निहोत्रादीनि तैरनुष्ठीयमानानि कर्माणि तानि च तेषां भगवत्परिभवात्स्वात्मभूतस्यावज्ञानान्मोघान्येव निष्फलानि कर्माणि भवन्तीति मोघकर्माणः । तथा मोघज्ञाना निष्फलज्ञाना ज्ञानमपि तेषां निष्फलमेव स्यात् । विचेतसो विगतविवेकाश्च ते भवन्तीत्यभिप्रायः । किंच ते भवन्ति राक्षसीं रक्षसां प्रकृतिं स्वभावमासुरीमसुराणां च प्रकृतिं मोहिनीं मोहकरीं देहात्मवादिनीं श्रिता आश्रिताश्छिन्धि भिन्धि पिब खाद परस्वमपहरेत्येवंवदनशीलाः क्रूरकर्माणो भवन्तीत्यर्थः । "असुर्या नाम ते लोकाः" इति श्रुतेः ॥ १२ ॥

**शां० आ०**—भगवन्तमवजानतां प्रश्नपूर्वकं शोच्यत्वं विशदयति—**कथमिति** । भगवन्निन्दापराणां न काचिदपि प्रार्थनाऽर्थवतीत्याह—**वृथेति** । ननु भगवन्तं निन्दन्तोऽपि नित्यं नैमित्तिकं वा कर्मानुतिष्ठन्ति तदनुष्ठानाच्च तेषां प्रार्थनाः सार्था भविष्यन्तीति नेत्याह—**तथेति** । परिभवस्तिरस्करणम् । अवज्ञानमनादरणम् । तेषामपि शास्त्रार्थज्ञानवतां तद्द्वारा प्रार्थनार्थवत्त्वमित्याशङ्क्याऽऽह—**तथा मोघेति** । तथाऽपि यौक्तिकविवेकवशात्तत्प्रार्थनासाफल्यमित्याशङ्क्याऽऽह—**विचेतस इति** । न केवलमुक्तविशेषणवत्त्वमेव तेषां किंतु वर्तमानदेहपातादनन्तरं तत्तदतिक्रूरयोनिप्राप्तिश्च निश्चितेत्याह—**किंचेति** । मोहकरीमिति प्रकृतिद्वयेऽपि तुल्यं विशेषणम् । छिन्धि भिन्धि पिब खादेति प्राणिहिंसारूपो रक्षसां स्वभावोऽसुराणां स्वभावस्तु न देहि न जुहुधि परस्वमपहरेत्यादिरूपः । मोहो मिथ्याज्ञानम् । उक्तमेव स्फुटयति—**छिन्धीति** ॥ १२ ॥

**आ० भा०**—तेषां फलमाह—मोघाशा इति । वृथाशाः । भगवद्द्वेषिभिराशासितं न किंचिदाप्यते । यज्ञादिकर्माणि च वृथैव तेषाम् ज्ञानं च । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित्पुरुषार्थ आमुष्मिकस्तैराप्यत इत्यर्थः । वक्ष्यति च । 'तानहं द्विषतः क्रूरान्' इत्यादि । मोक्षधर्मे च । 'कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् । मज्जंति पितरस्तस्य नरके शाश्वतीः समाः ॥ यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् । कथं स न भवेद्द्वेष्यआलोकान्तस्य कस्यचित्' इति । "सर्वोत्कृष्टे ज्ञानभक्ती हि यस्य नारायणे पुष्करविष्टराद्ये ॥ सर्वावमे द्वेषयुतश्च तस्मिन्भ्रूणानंतघ्नोस्य समो नचैव" इति सामवेदे शांडिल्यशाखायाम् । द्वेषाच्चैद्यादयो नृपाः । 'वैरेण यन्नृपतयः शिशुपालपौंड्रशाल्वादयो गतिविलासविलोकनाद्यैः । ध्यायंत आकृतधियः शयनासनादौ तत्साम्यमीयुरनुरक्तधियः पुनः किम्' इति भागवते । भक्तप्रियत्वज्ञापनार्थं नित्यध्यानस्तुत्यर्थं च । स्वभक्तस्य कदाचिच्छापबलात्द्वेषिणोपि भक्तिफलमेव भगवान्ददातीति । भक्ता एव हि ते पूर्वं शिशुपालादयः शापबलात्द्वेषिणः । तत्प्रश्नपूर्वं पार्षदत्वशापादिकथनाच्चैतज्ज्ञायते । अन्यथा किमितितदप्रस्तुतमुच्यते । भगवतः साम्यकथनं तु द्वेषिणामपि द्वेषमनिरूप्य पूर्वतनभक्तिफलमेव ददातीति ज्ञापयितुम् । 'न मे भक्तः प्रणश्यति' इति वक्ष्यति न च भावो हि भवकारणमित्यादिविरोधः । द्वेषभाविनां द्वेष एव भवतीति हि युक्तम् । अन्यथा गुरुद्वेषिणामपि गुरुत्वं भवतीत्यनिष्टमापद्येत । न चाकृतधीत्वे विशेषः । तेषामेव हिरण्यकशिप्वादीनां पापप्रतीतेः । 'हिरण्यकशिपुश्चापि भगवन्निंदया तमः ॥ विवक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः' इति । 'यदनिंदत्पि-

**तामह्यम्' इत्यारभ्य 'तस्मात्पिता मे पूयेत दुरंताद्दुस्तरादघात्' इति प्रह्लादेन भगवतो वरयाचनाच्च। बहुषु ग्रंथेषु च निषेधः। कुत्रचिदेव तदुक्तिरिति विशेषः। यस्मिंस्तदुच्यते तत्रैव निषेध उक्तः। महातात्पर्यविरोधश्चोक्तः पुरस्तात्। अयुक्तिमद्भ्यो युक्तिमंत्येव बलवंति वाक्यानि। युक्तयश्चोक्ताः अन्येषाम्। न चैषां काचिद्गतिः। साम्येपि वाक्ययोर्लोकानुकूलाननुकूलयोर्लोकानुकूलमेव बलवत्। लोकानुकूलं भक्तप्रियत्वं च नेतरत्। उक्तं च तेषां पूर्वं भक्तत्वम्। 'मन्ये सुरान्भागवतांस्त्र्यधीशे संरंभमार्गाभिनिविष्टचित्तान्' इत्यादि। अतो न भगवद्द्वेषिणां काचिद्गतिरिति सिद्धम्। द्वेषकारणमाह—राक्षसीमिति१२॥**

आ० ज०—किंच तेषां फलमित्यस्य परिहारो न दृश्यते—**अत आह। तेषामिति।** अनर्थत्वप्रदर्शनाय व्याचष्टे—**वृथेति।** संपदादिप्राप्तिदर्शनात्कथमित्यत आह—**भगवदिति।** युद्धादिकर्मणां साफल्यदर्शनात्कथं मोघकर्माण इत्यत आह—**यज्ञादीति।** ज्ञानं तत्त्वविषयं तेषां नास्त्येव। अतः कथं तस्य मोघत्वमुच्यत इत्यत आह—**ज्ञानं चेति।** ज्ञानं च तेषां वृथैवेत्यस्य केनापीत्यर्थ इति संबंधः। अनेन ज्ञानपदमुपलक्षणमितिचोक्तं भवति। न केवलं पुरुषार्थानवाप्तिः अपि तु दुःखावाप्तिश्चेति भावेन तत्र प्रमाणान्याह—**वक्ष्यति चेति।** आ सम्यक् लोकांतस्य चंडालादेः पुष्करविष्टराये पद्मासनस्य पितरि। भ्रूणानंतघ्नोऽनंतभ्रूणघ्नः। यद्येवं कथं तर्हि भागवतादौ भगवद्द्वेषस्य मोक्षसाधनत्ववचनमित्यत आह—**द्वेषादिति।** तद्गतिं गता इति संबंधः। वैरेण ध्यायंतः यदीयगत्यादिभिराकृतधियः आकृष्टबुद्धयः। ये पूर्वं भक्ताः शिशुपालादयस्तद्विषये भवत्वेषा गतिः। न तु पौंड्रसाल्वादिविषये अत आह—**नित्येति।** भक्तप्रियत्वज्ञापनार्थमित्युक्तं विवृणोति—**स्वभक्तस्येति।** इति भक्तप्रियत्वज्ञापनार्थमितियोजना। स्यादेतत् यदि तेषां स्वतो भक्तत्वं शापबलादेव द्वेषित्वमित्येतत्प्रमितं स्यात्तदेव कुत इत्यत आह—**भक्ता एवहीति।** प्रसिद्धमेवैतत् भागवतादावित्यर्थः। कुतो वचनानामर्थांतरकल्पनेतिचेत्। यो द्विष्यादित्याद्युदाहृतवाक्याविरोधात्। हेत्वंतरं चाह—**तत्प्रश्न इति।** 'अहो अत्यद्भुतं ह्येतत् दुर्लभैकांतिनामपि ॥ वासुदेवे भगवति गतिश्चैद्यस्य विद्विषः' इति युधिष्ठिरेण द्वेषिणः कथं मुक्तिर्जातेत्येवं रूपे तद्विषये प्रश्ने कृते सति नारदेन 'मातृष्वसेयो वश्चैद्यो दंतवक्त्रश्च पांडव॥ पार्षदप्रवरौ विष्णोर्विप्रशापात्पदच्युतौ' इति तदुत्तरत्वेन पूर्वपार्षदत्वादिकं कथ्यते। ततोऽपि द्वेषो न मोक्षसाधनमित्येतज्ज्ञायते कथमित्यत आह—**अन्यथेति।** यदि द्वेषोमोक्षसाधनं स्यात्तदा किमत्राद्भुतम्। यतो द्वेषोप्येको मुक्तिमार्ग इत्युत्तरं वक्तव्यम्। पूर्वपार्षदत्वादिकंत्वप्रस्तुतमनुपयुक्तं न वक्तव्यं स्यादित्यर्थः। ननु नारदेन निंदनस्तवसत्कारेत्यादिना भगवतो निंदादौ साम्यमपि तदुत्तरत्वेन कथ्यते यदि स्तुतेरिव निंदाया न मोक्षसाधनत्वं स्यात्तदा तदनुपयुक्तं न वक्तव्यमिति सत्प्रतिपक्षार्थापत्तिरित्यतोऽस्यान्योपपत्तिमाह—**भगवत इति।** साम्यं निर्विकारत्वम्। भक्तानामपराधं भगवान्न गणयतीत्येतत्कुत इत्यत आह—**नेति।** द्वेषस्य मुक्तिसाधनत्वाभावे भावो यथा कथंचिच्चिंतनं भवस्य मोक्षस्य कारणमित्यादिवचनविरोधः स्यादित्यत आह—**नचेति।** कुतो नेत्यत आह—**द्वेषेति।** हि यस्मादेतद्वचनमिति युक्तं घटनोपेतं तस्मादित्यर्थः। यथोक्तम्। 'यादृशी भावना ज्ञेया सिद्धिर्भवति तादृशी' इति प्रतीत एवार्थः किं न स्यादित्यत आह—**अन्यथेति।** भगवद्द्वेषिणो मुक्तिभाजस्तदाकृतधीत्वाद्भगवद्भक्तवदित्यनुमानविरोध इत्यत आह—**नचेति।** उभयोराकृतधीत्वे सति फलेप्यविशेष इति च नेत्यर्थः। कुत इत्यतः कालातीतत्वादित्याह—**तेषामेवेति।** आकृतधीनामेव। विविक्षुर्वेक्ष्यतीति संभावनाविषयः। आशंकायामचेतनेषूपसंख्यानात्। मह्यं मम। ननु वचनत्वाविशेषाद्यो द्विष्यादित्यादिभिर्द्वेषाच्चैद्येत्यादीनां कथं बाधनमित्यत आह—**बह्विति।** निषेधो द्वेषस्य मुक्तिसाधनतायाः। न केवलं बहुत्वाबहुत्वरूपोऽनयोर्विशेषः। किं तु स्वव्याहतत्वास्वव्याहतत्वरूपोपीत्याह—**यस्मिन्निति।** भागवतादौ ग्रंथे भगवन्निन्द्येत्यादिर्निषेधः। भगवद्गुणोत्कर्ष एव सर्ववेदानां यन्महातात्पर्यं तद्विरोधो द्वेषान्मुक्तिवाचिनाम्। इतरेषां तु तदानुकूल्यमिति च विशेष इति भावेनाह—**महातात्पर्येति।** उक्तः उक्तप्रायः। इतोपि बाध्यबाधकभावो युक्त इति भावेन व्याप्तिं तावदाह—**अयुक्तिमद्भ्यइति।** सप्तम्यर्थे मतुप्। ततः किमित्यत आह—**युक्तयश्चेति।** महातात्पर्यविरोधश्चेत्यपेक्षया। अन्येषामनुकूलाः अव्ययं विबुधश्रेष्ठम्। पुष्करविष्टराय इति। सावकाशत्वनिरवकाशत्वविशेषाच्चैवमित्याह—**नचेति।** इतरेषां तूक्तैवेति शेषः। इतश्च बाध्यबाधकभावो युक्त इत्यभिप्रेत्य व्याप्तिं तावदाह—**साम्येपीति।** गुणांतरेण साम्येपीति कैमुत्यार्थं लोकानुकूलशब्देन लोकदृष्टव्याप्तिकानुमानानुकूलत्वमुच्यते ततः किमित्यत आह—**लोकेति।** इतरत्द्वेषिप्रियत्वं भगवत्प्रीत्यैव मोक्ष इति तु प्रसिद्धमेव। शिशुपालादीनां पूर्वभक्तत्वं प्रसिद्धमित्युक्तम्। तत्कथमितिचेत्। पार्षदत्वात् वचनाच्चेत्याह—**उक्तंचेति।** त्रयाणां लोकानामधीशे संरंभेण मार्गमात्रेणाभिनिविष्टचित्तान्। उपसंहरति—**अत इति।** गतिः सद्गतिः। स्वमौढ्यादेव मामवजानंति। न मद्दोषात्तेषां च महाननर्थ इति सर्वं समाहितम्। राक्षसीमित्यादि तु किमर्थमित्यत आह—**द्वेषेति।** मौढ्यान्मिथ्याज्ञानं भवतु प्रज्वलनात्मको द्वेषस्तु कुत इत्याशंकानिवृत्त्यर्थमिति शेषः। अन्येषामविद्यमानं मौढ्यमेव तेषां कुतइत्याशंकानिरासार्थमिति वा। अत्र कारणमिति मूलकारणम्॥ १२॥

**रा० भा०**—मम मनुष्यत्वे परमकारुण्यादिपरत्वतिरोधानकरीं राक्षसीम् आसुरीं च मोहिनीं प्रकृतिमाश्रिताः मोघाशाः मोघवाञ्छिताः निष्फलवाञ्छिता मोघकर्माणो मोघारम्भाः मोघज्ञानाः सर्वेषु मदीयेषु चराचरेषु अर्थेषु विपरीतज्ञानतया निष्फलज्ञानाः विचेतसः तथा सर्वत्र विगतयाथात्म्यज्ञानाः मां सर्वेश्वरम् इतरसमं मत्वा मयि यत्कर्तुमिच्छन्ति यदुद्दिश्यारम्भान् कुर्वते तत्सर्वं मोघं भवतीत्यर्थः॥१२॥

**अ० टी०**—तेषां मूढत्वं विशदयति—**मोघाशा इति**। मोघाशाः मोघं निष्फलम् असमर्पितान्नं केवलं देहपोषार्थम् अश्नन्ति भक्षयन्तीति तथा। मोघं निष्फलमेव। भगवत्सेवातिरिक्तकर्मकर्त्तारः। मोघज्ञाना मोघं निष्फलं मोहकशास्त्रोक्तभगवत्स्वरूपज्ञानातिरिक्तज्ञानयुक्ताः। विचेतसः अव्यवस्थितमनसः। राक्षसीं स्वदेहपोषणरूपां। च पुनः। आसुरीं परोपद्रवकरणरूपां मोहिनीं मद्विस्मारिकां प्रकृतिमेव मायामेव स्वभावम् आश्रिताः। अतएव मां मानुषीं तनुमाश्रितं ज्ञात्वा अवमन्यन्त इति पूर्वेणान्वयः॥ १२॥

**नी० टी०**—मदवज्ञानाच्च ते मोघाशाः वृथैव आशा आशिषो येषां ते मोघाशाः तथा मोघकर्माणः निष्फलोद्योगाः मोघज्ञानाः निष्फलज्ञानाः यतो विचेतसः निर्विवेकाः यतो राक्षसीं आसुरीं च रजस्तमःप्रधानां मोहिनीं मोहकरीं प्रकृतिं श्रिताः छिंधि भिंधि पिब खाद परस्वमपहरेत्येवंशीलाः क्रूरकर्माणो भवंतीत्यर्थः॥ १२॥

**महात्मानस्तु मा पार्थ दैवीं प्रकृतिमाश्रिताः॥**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥ १३॥**

**शां० भा०**—ये पुनः श्रद्दधाना भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः—महात्मानस्त्वक्षुद्रचित्ता मामीश्वरं पार्थ दैवीं देवानां प्रकृतिं शमदमदयाश्रद्धादिलक्षणामाश्रिताः सन्तो भजन्ति सेवन्तेऽनन्यमनसोऽनन्यचित्ता ज्ञात्वा भूतादिं भूतानां वियदादीनां प्राणिनां चाऽऽदिं कारणमव्ययम्॥१३॥

**शां० आ०**—के पुनर्भगवन्तं भजन्ते तानाह—**ये पुनरिति**। महान्प्रकृष्टो यज्ञादिभिः शोधित आत्मा सत्त्वं येषामिति व्युत्पत्तिमाश्रित्याऽऽह—**अक्षुद्रेति**। तुशब्दोऽवधारणे। प्रकृतिं विशिनष्टि—**शमेति**। अनन्यस्मिन्प्रत्यग्भूते मयि परस्मिन्नेव मनो येषामिति व्युत्पत्त्या व्याकरोति—**अनन्यचित्ता इति**। अज्ञाते सेवानुपपत्तेः शास्त्रोपपत्तिभ्यामादौ ज्ञात्वा ततः सेवेतेत्याह—**ज्ञात्वेति**। अव्ययमविनाशिनम्॥ १३॥

**आ० भा०**—नेतरे द्विषंतीति दर्शयितुं देवानाह—**महात्मान इति**॥ १३॥

**आ० ज०**—ननु कुतोऽयं विवेक इत्याकांक्षायां राक्षसादिभ्य इतरे न द्विषंतीत्येतावदेव वक्तव्यम्। भजंतीत्यादि तु व्यर्थं इत्यत आह—**नेतर इति**। सत्यमेतत्। तथापि देवानां स्वरूपकथनार्थमेतत्। तच्च द्वेषाभावोपपादनार्थमितिभावः। देवानित्युक्तमजीवोपलक्षणम्॥ १३॥

**रा० भा०**—ये तु स्वकृतैः पुण्यसंचयैर्मां शरणमुपगम्य विध्वस्तसमस्तपापबन्धाः दैवीं प्रकृतिमाश्रिताः महात्मानस्ते भूतादिमव्ययं वाङ्मनसागोचरनामकर्मस्वरूपं परमकारुणिकतया साधुपरित्राणाय मनुष्यत्वेनावतीर्णं मां ज्ञात्वा अनन्यमनसो मां भजन्ते मत्प्रियत्वातिरेकेण मद्भजनेन विना मनसश्चात्मनश्च बाह्यकरणानां च धारणमलभमानाः मद्भजनैकप्रयोजनाः भजन्ते॥ १३॥

**अ० टी०**—एवमासुराणां स्वाऽज्ञानमुक्त्वा देवानां स्वज्ञानमाह—**महात्मानस्त्विति**। हे पार्थ! भक्तस्वरूपश्रवणैकयोग्य! महात्मानस्तु महान् अहमेव आत्मा येषां ते महात्मानः। तुशब्दः प्रकरणान्तरज्ञापनाय। तदेवाह दैवीं क्रीडात्मिकां देवरूपां वा प्रकृतिं स्वभावम् आश्रिताः। अनन्यमनसः न विद्यते अन्यत्र मद्व्यतिरिक्ते मनो येषां ते मां भूतादिं सकलजगत्कारणम् अव्ययं नित्यं यथार्थरूपं ज्ञात्वा भजन्ति॥ १३॥

नी० टी०—तथा ये महात्मानः अक्षुद्रचित्ताः तु पूर्वेभ्योऽत्यंतं विलक्षणाः मां भजंति यतो दैवीं प्रकृतिं सत्वप्रधानां आश्रिताः अनन्यमनसः एकाग्रचेतसः । किं गतानुगतिकतया दंभेन वा भजंति न । किं तर्हि मां भूतादिं सर्वभूतकारणं अव्ययं ज्ञात्वा मत्वा भजंति ॥ १३ ॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ॥
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥

शां० भा०—कथम्—सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्तयन्तो यतन्तश्चेन्द्रियोपसंहारशमदमदयाहिंसादिलक्षणैर्धर्मैः प्रयतन्तश्च दृढव्रता दृढं स्थिरमचाञ्चल्यं व्रतं येषां ते दृढव्रता नमस्यन्तश्च मां हृदयेशयमात्मानं भक्त्या नित्ययुक्ताः सन्त उपासते सेवन्ते ॥ १४ ॥

शां० आ०—भजनप्रकारं पृच्छति—**कथमिति** । तत्प्रकारमाह—**सततमिति** । सर्वदेति श्रवणावस्था गृह्यते । कीर्तनं वदान्तश्रवणं प्रणवजपश्च । व्रतं ब्रह्मचर्यादि । नमस्यन्तो मां प्रति चेतसा प्रह्वीभवन्तो भक्त्या परेण प्रेम्णा नित्ययुक्ताः सदासंयुक्ताः ॥ १४ ॥

आ० भा०—॥ १४ ॥

आ० ज०—॥ १४ ॥

रा० भा०—अत्यर्थं मत्प्रियत्वेन मत्कीर्तनयतननमस्कारैर्विना क्षणाणुमात्रेऽप्यात्मधारणं लभमानाः मद्गुणविशेषवाचीनि मन्नामानि स्मृत्वा पुलकितसर्वाङ्गाः हर्षगद्गदकण्ठाः श्रीरामनारायणवासुदेवेत्येवमादीनि सततं कीर्तयन्तस्तथैव यतन्तः मत्कर्मस्वर्चनादिकेषु वन्दनस्तवनकरणादिकेषु तदुपकारकेषु भवननन्दनवनकरणादिकेषु च दृढसंकल्पाः यतमानाः भक्तिभारावनमितमनोबुद्ध्यभिमानपदद्वयकरद्वयशिरोभिरष्टाङ्गैरचिन्तितपांसुकर्दमशर्करादिके धरातले दण्डवत्प्रणिपतन्तः सततं मां नित्ययुक्ताः नित्ययोगं काङ्क्षमाणाः आत्मान्तं मद्दास्यव्यवसायिनः उपासते ॥ १४ ॥

अ० टी०—ते च द्विविधाः, भक्ता ज्ञानिनश्च । तत्र प्रथमं भक्तानां भजनप्रकारमाह—**सततमिति** । सततं निरन्तरं मां कीर्तयन्तः लीलास्वरूपज्ञानेन श्रीभागवतोक्तप्रकारेण गुणगानं कुर्वन्तः । सर्वत्र मदुत्कर्षं कथयन्तः । यतन्तश्च कीर्तने यत्नादिकं कुर्वाणाः इन्द्रियनिग्रहं वा कुर्वन्तः । चकारेण श्रवणादिकं ज्ञाप्यते । पुनः कीदृशाः । दृढव्रताः दृढम् ऐहिकपारलौकिकयोर्मदेकनिष्ठं मोहशास्त्राद्यपरिभूतं व्रतं निश्चयो येषां तादृशाः । किंच नमस्यन्तश्च 'किमासनं ते गरुडासनाय' इत्यादिना परमकाष्ठापन्नवस्तुरूपनमस्कारं कुर्वन्तः स्वदैन्याविर्भावपूर्वकं चकारेण नृत्यादिकमपि कुर्वन्तः । पुनः कीदृशाः । नित्ययुक्ताः सावधानाः मदेकपरचित्ताः । भक्त्या स्नेहेन नतु विहितत्वेन माम् उपासते सेवन्त इत्यर्थः ॥ १४ ॥

नी० टी०—भजनस्वरूपमाह—**सततमिति** । यतंतः इंद्रियोपसंहारशमदमादिषु प्रयतमानाः दृढान्यहिंसादीनि व्रतानि येषां ते दृढव्रताः नमस्यंतश्च मां हृदयेशयं प्रतिमादिरूपं वा भक्त्या नित्ययुक्ताः नित्यमवहिताः संत उपासते ॥ १४ ॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ॥
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥

**शां० भा०—**ते केन केन प्रकारेणोपासत इत्युच्यते—ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञस्तेन ज्ञानयज्ञेन यजन्तः पूजयन्तो मामीश्वरं चाप्यन्येऽन्यामुपासनां परित्यज्योपासते। तच्च ज्ञानमेकत्वेनैकमेव परं ब्रह्मेति परमार्थदर्शनेन यजन्त उपासते। केचिच्च पृथक्त्वेनाऽऽदित्यचन्द्रादिभेदेन स एव भगवान्विष्णुरादित्यादिरूपेणावस्थित इत्युपासते। केचिद्बहुधाऽवस्थितः स एव भगवान्सर्वतोमुखो विश्वतोमुखो विश्वरूप इति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेणोपासते॥ १५॥

**शां० आ०—**उपासनप्रकारभेदप्रतिपित्सया पृच्छति—**ते केनेति**। तत्प्रकारभेदोदीरणार्थं श्लोकमवतारयाति—**उच्यत इति**। इज्यते पूज्यते परमेश्वरोऽनेनेति प्रकृते ज्ञाने यज्ञशब्दः। ईश्वरं चेति चकारोऽवधारणे। देवतान्तरध्यानत्यागमपिशब्दसूचितं दर्शयति—**अन्यामिति**। अन्ये ब्रह्मनिष्ठा इति यावत्। ज्ञानयज्ञमेव विभजते—**तच्चेति**। उत्तमाधिकारिणामुपासनमुक्त्वा मध्यमानामधिकारिणामुपासनप्रकारमाह—**केचिच्चेति**। तेषामेव प्रकारान्तरेणोपासनमुदीरयति—**केचिदिति**। बहुप्रकारेणाग्न्यादित्यादिरूपेणेति यावत्॥ १५॥

**आ० भा०—**सर्वत्र एक एव नारायणः स्थितइत्येकत्वेन पृथक्त्वेन सर्वतो वैलक्षण्येन। बहुधा हि तस्य रूपमाभाति शुक्लमिव लोहितमिवाथोनीलमथोऽर्जुनमितिसनत्सुजाते॥ दैवमेवापर इत्युक्तप्रकारेण बहवो वा बहुधा॥ १५॥

**आ० ज०—**एकत्वेनाद्वैतभावनयेति व्याख्यानमसत्। मिथ्याभावनात्वादितिभावेनाह—**सर्वत्रेति**। सर्वत्र स्थितो नारायण एक एवेति योजना। पृथक्त्वेनादित्यचंद्रादिरूपेणेत्यसदितिभावेनाह—**पृथक्त्वेनेति**। अपरस्तु पृथक्त्वेनेत्येतत्सम्यग्व्याख्याय बहुधेत्येतदादित्यादिरूपेणेति व्याख्यातवानत आह—**बहुधेति**। कथमित्यत आगमेनैव दर्शयति—**शुक्लमिवेति**। इव शब्दोऽप्यर्थः। प्रकारांतरेण व्याख्याति—**दैवमेवेति**॥ १५॥

**रा० भा०—**अन्येऽपि महात्मानः पूर्वोक्तैः कीर्तनादिभिः ज्ञानाख्येन यज्ञेन च यजन्तो मामुपासते कथं बहुधा पृथक्त्वेन जगदाकारेण विश्वतोमुखं विश्वप्रकारमवस्थितं मामेकत्वेनोपासते। एतदुक्तं भवति भगवान् वासुदेव एव नामरूपविभागानर्हातिसूक्ष्मचिदचिद्वस्तुशरीरः सन् सत्यसंकल्पो विविधविभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरः स्यामिति संकल्प्य स एकदेव एव तिर्यङ्मनुष्यस्थावराख्यविचित्रजगच्छरीरोऽवतिष्ठते इत्यनुसंदधानाश्च मामुपासत इति॥ १५॥

**अ० टी०—**एवं भक्तानां भजनप्रकारमुक्त्वा ज्ञानिनामाह—**ज्ञानयज्ञेनेति**। अन्ये ज्ञानिनो ज्ञानयज्ञेन चापि ज्ञानात्मकयजनप्रकारेण चापि यजन्तो हृद्येव मां पूजयन्त उपासते भजन्त इत्यर्थः। अपिशब्देन चकारेण च पूर्वोक्तभजनापेक्षया हीनत्वं व्यज्यते। ज्ञानभजने बहवः प्रकाराः सन्ति तानाह। एकत्वेन सोऽहं ब्रह्मास्मीति प्रकारेण पृथक्त्वेन योगेन शरणागमनरीत्या बहुधा सर्वत्र तद्रूपेण विश्वतोमुखं सर्वात्मकं माम् एवमनेकप्रकारेण माम् उपासते भजन्त इत्यर्थः॥ १५॥

**नी० टी०—**ज्ञानयज्ञेन निर्विकल्पसमाधिना पातंजलाः। एकत्वेन अहमेव भगवान्वासुदेव इत्यभेदेनौपनिषदाः। पृथक्त्वेन अयमीश्वरो मम स्वामीति बुद्ध्या प्राकृताः। अन्ये पुनर्बहुधा बहुप्रकारं विश्वतोमुखं सर्वैर्द्वारैर्यत्किंचिद्दृष्टं तद्भगवत्स्वरूपमेव यच्छ्रुतं तन्नामैव यद्दत्तं भुक्तं वा तत्तदर्पितमेवेत्येवं विश्वतोमुखं यथास्यात्तथा माम् उपासते॥ १५॥

अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम्॥
मन्त्रोऽहमहमेवाऽऽज्यमहमग्निरहं हुतम्॥ १६॥

**शां० भा०**—यदि बहुभिः प्रकारैरुपासते कथं त्वामेवोपासत इत्यत आह—अहं क्रतुः श्रौतकर्मभेदोऽहमेवाहं यज्ञः स्मार्तः। किंच स्वधाऽन्नमहं पितृभ्यो यद्दीयते। अहमौषधं सर्वप्राणिभिर्यदद्यते तदौषधशब्दवाच्यम्। अथवा स्वधेति सर्वप्राणिसाधारणमन्नमौषधमिति व्याध्युपशमार्थं भेषजम्। मन्त्रोऽहं येन पितृभ्यो देवताभ्यश्च हविर्दीयते। अहमेवाऽऽज्यं हविश्चाहमग्निर्यस्मिन्हूयते सोऽग्निरहमेवाहं हुतं हवनकर्म च॥ १६॥

**शां० आ०**—भगवदेकविषयमुपासनं तर्हि न सिध्यतीति शङ्कते—**यदीति**। प्रकारभेदमादाय ध्यायन्तोऽपि भगवन्तमेव ध्यायन्ति तस्य सर्वात्मकत्वादित्याह—**अत आहेति**। क्रतुयज्ञशब्दयोरपौनरुक्त्यं दर्शयन्व्याचष्टे—**श्रौत इति**। क्रियाकारकफलजातं भगवदतिरिक्तं नास्तीति समुदायार्थः॥ १६॥

**आ० भा०**—प्रतिज्ञातं विज्ञानमाह—अहंक्रतुरित्यादिना। क्रतवोऽग्निष्टोमादयः। यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागः। 'उद्दिश्य देवान्द्रव्याणां त्यागो यज्ञ इतीरितः' इत्यभिधानात्॥ १६॥

**आ० ज०**—विश्वतोमुखमित्युक्तं सर्वात्मकत्वं प्रपंचयत्युत्तरेणेत्यन्यथा व्याख्याननिरासार्थमाह—**प्रतिज्ञामिति**। अन्यथा प्रतिज्ञाततानुक्तिप्रसंग इतिभावः। व्याख्यानं तु रसोहमित्यादेरिव द्रष्टव्यम्—**क्रतवइति**। क्रतुयज्ञशब्दयोरर्थभेदमाह। सामान्यविशेषभावेन भेद इत्यर्थः॥ १६॥

**रा० भा०**—तथाहि विश्वशरीरोऽहमेवावस्थित इत्याह—अहं क्रतुः अहं ज्योतिष्टोमादिकक्रतुरहमेव यज्ञो महायज्ञोऽहमेव स्वधा पितृगणपुष्टिदायिनी औषधं हविश्चाहमेव अहमेव च मन्त्रोऽहमेवाज्यप्रदर्शनार्थमिदं सोमादिकं च हविरहमेवेत्यर्थः। अहमाहवनीयादिकोऽग्निर्होमश्चाहमेव॥ १६॥

**अ० टी०**—नन्वेकमेव त्वां बहुधा ये भजन्ति ते च ज्ञानिन एव तेषाम् अज्ञाने ज्ञाने कथं प्रवेश इत्याशङ्क्य तत्तदात्मकं मां ज्ञात्वैव भजन्तीति ज्ञापनाय स्वस्य सर्वात्मत्वं प्रकटयति—**क्रतुरित्यादि चतुर्भिः**। क्रतुः यज्ञाधिष्ठात्री देवता अहम्। आधिदैविकरूपस्तत्फलदातेत्यर्थः। यज्ञो धर्मात्मकोऽग्निहोत्रादिर्यज्ञात्मकोऽहं। स्वधा पित्रर्थे श्राद्धादि पितृयज्ञरूपोऽहम्। औषधं सकलरोगनिवर्तनात्मकभैषज्यरूपोऽन्नरूपो वा अहम्। मन्त्रः ऋगादिरहम्। आज्यं होमद्रव्यं हविः। अग्निराहवनीयादिः। हुतं होमः॥ १६॥

**नी० टी०**—इदमेवोपासनं विवृणोति—**अहमिति**। क्रतुः संकल्पो देवताध्यानरूपः। यज्ञः श्रौतः स्मार्त्तश्च देवतोद्देशेन द्रव्यत्यागः। स्वधा पितृणामन्नं। औषधं मनुष्याणामन्नं। मंत्रो येन दीयते सः। आज्यं हविः। अग्निः। हुतं प्रक्षेपक्रिया। इदं सर्वं यस्मादहमेवातस्तेषां विश्वतोमुखमुपासनं युक्ततरमित्यर्थः॥ १६॥

## पिताऽहमस्य जगतो माता धाता पितामहः॥
## वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च॥१७॥

**शां० भा०**—किंच—पिता जनयिताऽहमस्य जगतो माता जनयित्री धाता कर्मफलस्य प्राणिभ्यो विधाता पितामहः पितुः पिता वेद्यं वेदितव्यं पवित्रं पावनमोंकारश्च ऋक्साम यजुरेव च॥ १७॥

**शां० आ०**—इतश्च भगवतः सर्वात्मकत्वमनुमन्तव्यमित्याह—**किंचेति**। पवित्रं पूयतेऽनेनेति व्युत्पत्त्या परिशुद्धिकारणं पुण्यं कर्मेत्याह—**पावनमिति**। वेदितव्ये ब्रह्मणि वेदनसाधनमोंकारस्तत्र प्रमाणमृगादि। चकारादथर्वाङ्गिरसो गृह्यन्ते॥१७॥

**आ० भा०**—॥ १७॥

**आ० ज०**—॥ १७॥

**रा० भा०**—अस्य स्थावरजङ्गमात्मकस्य जगतस्तत्र तत्र पितृत्वेन मातृत्वेन धातृत्वेन पितामहत्वेन च वर्तमानोऽहमेव अत्र धातृशब्दो मातृपितृव्यतिरिक्ते उत्पत्तिप्रयोजके चेतनविशेषे वर्तते यत्किंचिद्वेदवेद्यं पवित्रं पावनं तदहमेव वेदकश्च वेदबीजभूतः प्रणवोऽहमेव ऋक्सामयजुरात्मको वेदश्चाहमेव १७

**अ० टी०**—किंच । अस्य जगतो मदात्मकस्य अहमेव पिता उत्पादकः । माता योनिः । धाता कर्मफलदाता । पितामहो ब्रह्मा । वेद्यं सर्वज्ञानादिसाधनैर्वेद्यवस्तु । पवित्रं पावनम् । ॐ कारम् अक्षरात्मकब्रह्मबीजम् । ऋगादिवेदत्रयात्मा ॥ १७ ॥

**नी० टी०**—धाता कर्मफलानां विकर्ता वेद्यं वेदितव्यं ब्रह्म पवित्रं पावनं तप आदिकम् ॥ १७ ॥

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ॥
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥

**शां० भा०**—किंच—गतिः कर्मफलं, भर्ता पोष्टा, प्रभुः स्वामी, साक्षी प्राणिनां कृताकृतस्य, निवासो यस्मिन्प्राणिनो निवसन्ति, शरणमार्तानां मत्प्रपन्नानामार्तिहरः, सुहृत्प्रत्युपकारानपेक्षः सन्नुपकारी, प्रभव उत्पत्तिर्जगतः, प्रलयः प्रलीयते यस्मिन्निति । तथा स्थानं तिष्ठत्यस्मिन्निति । निधानं निक्षेपः कालान्तरोपभोग्यं प्राणिनां, बीजं प्ररोहकारणं प्ररोहधर्मिणाम् । अव्ययं यावत्संसारभावित्वादव्ययम् । नह्यबीजं किंचित्प्ररोहति । नित्यं च प्ररोहदर्शनाद्बीजसंततिर्न व्येतीति गम्यते ॥ १८ ॥

**शां० आ०**—भगवतः सर्वात्मकत्वे हेत्वन्तरमाह—**किंचेति** । गम्यत इति प्रकृतिविलयान्तं कर्मफलं गतिरित्याह—**कर्मेति** । पोष्टा कर्मफलस्य प्रदाता । कार्यकरणप्रपञ्चस्याधिष्ठानमित्याह—**निवास इति** । शीर्यते दुःखमस्मिन्निति व्युत्पत्तिमाश्रित्याऽऽह—**शरणमिति** । प्रभवत्यस्माज्जगदिति व्युत्पत्तिमादायोक्तम्—**उत्पत्तिरिति** । कारणस्य कथमव्ययत्वमित्याशङ्कयाऽऽह—**यावदिति** । कारणमन्तरेणापि कार्यं कदाचिदुदेष्यति किं कारणेनेत्याशङ्कयाऽऽह—**न हीति** । मा भूत्तर्हि संसारदशायामेव कदाचित्कार्योत्पत्तिरित्याशङ्कयाऽऽह—**नित्यं चेति** । कारणव्यक्तेर्नाशमङ्गीकृत्य तदन्यतमव्यक्तिशून्यत्वं पूर्वकालस्य नास्तीति सिद्धवत्कृत्य विशिनष्टि—**बीजेति** ॥ १८ ॥

**आ० भा०**—गम्यते मुमुक्षुभिरिति गतिः । तथा हि सामवेदे वासिष्ठशाखायाम् । "अथ कस्मादुच्यते गतिरिति ब्रह्मैव गतिरिति तद्धि गम्यते पापविमुक्तैः" इति । साक्षादीक्षत इति साक्षी । तथाहि बाष्कलशाखायाम् । "स साक्षादिदमद्राक्षीद्यदद्राक्षीत्तत्साक्षिणः साक्षित्वम्" इति । शरणमाश्रयः संसारभीतस्य । परं परायणमित्याद्युक्तम् । "नारायणं महाज्ञेयं विश्वात्मानं परायणम्" इतिच । संहारकाले प्रकृत्या जगदत्र निधीयत इति निधानम् । तथा हि ऋग्वेदखिलेषु । "अपश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुः" इति ॥ १८ ॥

**आ० ज०**—गतिः कर्मफलमितिव्याख्यानमपाकर्तुमाह—**गम्यते इति** । शरणमित्यतोभेदार्थमुक्तं मुमुक्षुभिरिति । अत एव गम्यत इत्यस्यावगम्यत इत्यर्थः । कुत एतदित्यत आह—**तथाहीति** । किमुच्यत इत्यपिप्रश्नोऽध्याहार्यः । साक्षीत्यौदासीन्यं प्रतीयते अत आह—**साक्षादिति** । कुत एतदित्यत आह—**तथाहीति** । यदद्राक्षीत्साक्षात्तत्साक्षिणः परमेश्वरस्य साक्षित्वं साक्षिशब्दप्रवृत्तिनिमित्तम् । तदुक्तम् । "साक्षाद्द्रष्टरि संज्ञायाम्" इति । निवासशब्दागतार्थतया शरणशब्दार्थमाह—**शरणमिति** । संसारभीतस्येति मुक्तोपलक्षणं । विष्णोर्मुक्ताश्रयत्वे प्रमाणमाह—**परमिति** । परायणं मुक्तानामाश्रयः । तथापि निधानमिति पुनरुक्तिरित्यत आह—**संहारेति** । सर्वभूतानि प्रकृतिं यांतीत्युक्तत्वात् कथं भगवति निधीयत इत्यत उक्तम्—**प्रकृत्येति** । प्रथमं प्रकृतिं यांति पश्चात्तत्र निधीयंत इत्यर्थः । तत्कुतइत्यत आह—**तथाहीति** । विश्वकर्मणीश्वरे शुभ्रचक्षुः शुद्धदृष्टिरहम् ॥ १८ ॥

**रा० भा०**—गम्यत इति गतिः तत्र तत्र प्राप्यस्थानमित्यर्थः । भर्ता धारयिता प्रभुः शासिता साक्षी साक्षाद्द्रष्टा निवासः वासस्थानं च वेश्मादि शरणं इष्टस्य प्रापकतया अनिष्टस्य निवारणतया समाश्रयणीयश्चेतनः शरणं स चाहमेव सुहृत् हितैषी प्रभवः प्रलयस्थानं यस्य कस्य यत्र कुत्रचित्प्रभवप्रलययोर्येत्स्थानं तदहमेव निधानं निधीयत इति निधानमुत्पाद्यमुपसंहार्यं चाहमेवेत्यर्थः । अव्ययं बीजं तत्र तत्र व्ययरहितं यत्कारणं तदहमेव ॥ १८ ॥

**अ० टी०**—गतिर्मोक्षादिफलरूपः । भर्ता पोषकः । प्रभुः समर्थः सर्वनियन्ता । साक्षी द्रष्टेत्यर्थः । निवासः स्थानं सर्वदेहस्वरूपात्मकइति । शरणम् अभयदाता मृत्युप्रभृतिभयरक्षकः । सुहृत् अप्रार्थितहितकर्ता । प्रभवः प्रकर्षेण भवत्यस्मादिति जगत्स्रष्टा । प्रलयः प्रकर्षेण लीयतेऽस्मिन्निति लयस्थानं । स्थानं तिष्ठत्यस्मिन्निति स्थानं सकलाधारः । निधानं निधीयते स्थाप्यतेऽनेनेति निधानं रक्षक इत्यर्थः । अव्ययं बीजम् अविनाशि बीजं मूलकारणमित्यर्थः ॥ १८ ॥

**नी० टी०**—गतिर्मुक्तप्राप्यं स्थानं । भर्ता कर्मफलदानेन पोषकः । प्रभुः अंतर्यामी । साक्षी कृताकृतावेक्षकः । निवसंत्यस्मिन्निति निवास आश्रयो यजमानादिः । शरणं रक्षकः । सुहृदुपकारमनपेक्ष्य उपकर्ता । प्रभव उत्पत्तिस्थानं । प्रलयो लयस्थानं । स्थानं स्थितिस्थानं । निधानं कर्मफलसमर्पणस्थानं कालांतरे फलप्रसवार्थं । बीजं प्ररोहकारणं प्ररोहधर्मिणां । अव्ययं यावत्संसारभावित्वात् ॥ १८ ॥

## तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ॥
## अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

**शां० भा०**—किंच—तपाम्यहमादित्यो भूत्वा कैश्चिद्रश्मिभिरुल्बणैरहं वर्षं कैश्चिद्रश्मिभिरुत्सृजाम्युत्सृज्य पुनर्निगृह्णामि कैश्चिद्रश्मिभिरष्टभिर्मासैः पुनरुत्सृजामि प्रावृषि । अमृतं चैव देवानां मृत्युश्च मर्त्यानाम् । सद्यस्य यत्संबन्धितया विद्यमानं तद्विपरीतमसच्चैवाहमर्जुन । न पुनरत्यन्तमेवासद्भगवान्स्वयं कार्यकारणे वा सदसती । ये पूर्वोक्तैरनुवृत्तिप्रकारैरेकत्वपृथक्त्वादिविज्ञानैर्यज्ञैर्मां पूजयन्त उपासते ज्ञानविदस्ते यथाविज्ञानं मामेव प्राप्नुवन्ति ॥ १९ ॥

**शां० आ०**—इतश्च सर्वात्मत्वे भगवतो न विवदितव्यमित्याह—**किंचेति** । 'आदित्याज्जायते वृष्टिः' इति स्मृतिमवष्टभ्य व्याचष्टे—**कैश्चिदिति** । वर्षोत्सर्गनिग्रहावेकस्यैकस्मिन्काले विरुद्धावित्याशङ्क्याऽऽह—**अष्टभिरिति** । ऋतुभेदेन वर्षस्य निग्रहोत्सर्गावेककर्तृकावविरुद्धावित्यर्थः । यस्य कारणस्य संबन्धित्वेन यत्कार्यमभिव्यज्यते तदिह सदित्युच्यते, कारणसंबन्धेनानभिव्यक्तं कारणमेवानभिव्यक्तनामरूपमसदिति व्यवह्रियते तदेतदाह—**सदिति** । शून्यवादं व्युदस्यति—**न पुनरिति** । भगवतोऽत्यन्तासत्त्वे कार्यकारणकल्पना निरधिष्ठाना न तिष्ठतीत्यर्थः । तर्हि यथाश्रुतं कार्यस्य सत्त्वं कारणस्य चासत्त्वमास्थेयमित्याशङ्क्य वाशब्देन निषेधति—**कार्येति** । नहि कार्यस्याऽऽत्यन्तिकं सत्त्वं वाचारम्भणश्रुतेर्नापीतरस्याऽऽत्यन्तिकमसत्त्वं "कुतस्तु खलु" इत्यादिश्रुतेरित्यर्थः । उक्तैर्ज्ञानयज्ञैर्भगवदभिनिविष्टबुद्धीनां किं फलमित्याशङ्क्य सद्यो वा क्रमेण वा मुक्तिरित्याह—**य इति** ॥ १९ ॥

**आ० भा०**—सत्कार्यमसत्कारणम् । 'सदभिव्यक्तरूपत्वात्कार्यमित्युच्यते बुधैः । असदव्यक्तरूपत्वात्कारणं चापि शब्दितम्' इत्यभिधानम् । 'असच्च सच्चैव च यद्विश्वं सदसतः परम्' इति च भारते ॥ १९ ॥

**आ० ज०**—असतो नियम्यत्वानुपपत्तेः । सदसच्चाहमित्ययुक्तमित्यत आह—**सदिति** । कार्यं सदित्युच्यते । अभिव्यक्तिरूपत्वादित्यनेन सदेर्गत्यर्थस्य क्विपि कर्मणि रूपमेतदित्युच्यते । कारणमप्यव्यक्तरूपत्वादेव सच्छब्दितम् । कार्यकारणयोः तदसच्छब्दप्रयोगं च दर्शयति—**असच्चेति** । तस्मात्सदसतोर्विश्वस्माद्ब्रह्म परम् ॥ १९ ॥

**रा० भा०**—अग्न्यादित्यादिरूपेणाहमेव तपामि ग्रीष्मादावहमेव वर्षं निगृह्णामि तथा वर्षास्वपि चाहमेवोत्सृजामि अमृतं चैव मृत्युश्च येन जीवति लोको येन च म्रियते तदुभयमप्यहमेव । किमत्र बहुनोक्तेन सदसच्चाप्यहमेव सद्यद्वर्तते असद्यदतीतमनागतं च सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्तत्प्रकारोऽहमेवावस्थित इत्यर्थः । एवं बहुधा पृथक्त्वेन विभक्तनामरूपावस्थितकृत्स्नजगच्छरीरतया तत्प्रकारोऽहमेवावस्थित इत्येकत्वज्ञानेनानुसंदधानाश्च मामुपासते त एव महात्मानः ॥ १९ ॥

**अ० टी०**—तपामि रसास्वादनार्थं सर्वेषां तापं करोमि । यदा तपामि तदा वर्षं रसात्मकं निगृह्णामि आकर्षामि स्वस्मिन् स्थापयामि । च पुनः । तद्दानसमये पुनरुत्सृजामि । अमृतं जीवनम् अक्षयम् । मृत्युश्च मृत्युरूपः । सत् स्थूलं परिदृश्यमानम् । असत् सूक्ष्मम् अदृश्यम् । हे अर्जुन ! एतत्सर्वं पूर्वोक्तम् अहमेवेत्यर्थः । एवं बहुधा मामुपासत इति पूर्वेणैव संबन्धः ॥ १९ ॥

**नी० टी०**—अहं तपामि आदित्यो भूत्वा । अहं वर्षं वृष्टिः तां निगृह्णामि अष्टसु मासेषु कैश्चिद्रश्मिभिः उत्सृजामि च चतुर्षु मासेषु कैश्चिदिति । अमृतं जीवनं । मृत्युर्मरणं । अमृतं देवान्नं वा सत् साधु असत् असाधु एतत्सर्वमहमेव । अतस्तेषां विश्वतोमुखं मम भजनं कुर्वतां सर्वरूपेणाहमनुग्रहं करोमीति भावः ॥ १९ ॥

## त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ॥
## ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥ २० ॥

**शां० भा०**—ये पुनरज्ञाः कामकामाः—त्रैविद्या ऋग्यजुःसामविदो मां वस्वादिदेवरूपिणं सोमपाः सोमं पिबन्तीति सोमपास्तेनैव सोमपानेन पूतपापाः शुद्धकिल्बिषा यज्ञैरग्निष्टोमादिभिरिष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं स्वर्गतिस्तां प्रार्थयन्ते । ते च पुण्यं पुण्यफलमासाद्य संप्राप्य सुरेन्द्रलोकं शतक्रतोः स्थानमश्नन्ति भुञ्जते दिव्यान्दिवि भवानप्राकृतान्देवभोगान्देवानां भोगास्तान् ॥ २० ॥

**शां० आ०**—भगवद्भक्तानामपि निष्कामानामेव मुक्तिरिति दर्शयितुं सकामानां पुंसां संसारमवतारयति—**ये पुनरिति** । तिस्रो विद्या अधीयते विदन्तीति वा त्रैविद्या वेदविदस्तदाह—**ऋगिति** । वस्वादीत्यादिशब्देन सवनद्वयेशानादित्या रुद्राश्च गृह्यन्ते । शुद्धकिल्बिषा निरस्तपापा इति यावत् ॥ २० ॥

**आ० भा०**—तथापि मद्भजनमेवान्यदेवताभजनाद्वरमिति दर्शयति—**त्रैविद्या इत्यादिना** ॥२०॥

**आ० ज०**—सदसच्चाहमर्जुनेति विज्ञानस्योपसंहृतत्वादुत्तरस्यासंगतिमाशंक्याह—**तथापीति** । अहं क्रतुरित्यादिना सर्वक्रत्वादिभोक्तृत्वं यदुक्तम् भगवतस्तदसदिति वक्ष्यामीति गूढाभिसंधिना यदि सर्वत्र भोक्ता भगवान् तर्हि किं भागवतानां त्रैविद्यानां च फलं साम्यमेवेति पृष्टस्येदमुत्तरमित्याशयः तथापि सर्वत्र भगवतो भोक्तृत्वेऽपि मद्भजनं भागवतैरनुष्ठितम् देवतेति पित्राद्युपलक्षणम् त्रैविद्याद्यनुष्ठिताद्वरमुत्कृष्टफलम् इत्यादिना श्लोकत्रयेण ॥ २० ॥

**रा० भा०**—एवं महात्मनां ज्ञानिनां भगवदनुभवैकभोगानां वृत्तमुक्त्वा तेषामेव विशेषं दर्शयितुमज्ञानां कामकामानां वृत्तमाह । ऋग्यजुःसामरूपास्तिस्रो विद्यास्त्रिविद्यं केवलं त्रिविद्यनिष्ठास्त्रैविद्याः न तु त्रय्यन्तं निष्ठास्त्रय्यन्तनिष्ठा हि महात्मानः पूर्वोक्तप्रकारेणाखिलवेदवेद्यं मामेव ज्ञात्वातिमात्रमद्भक्तिकारितकीर्तनादिभिर्ज्ञानयज्ञेन च मदेकप्राप्या मामेव उपासते । त्रैविद्यास्तु वेदप्रतिपाद्यकेवलेन्द्रादियागशिष्टसोमान् पिबन्तः पूतपापाः स्वर्गादिप्राप्तिविरोधिपापात्पूतास्तैः केवलेन्द्रादिदैवत्यतयानुसंहितैर्यज्ञैर्वस्तुतस्तद्रूपं मामिष्ट्वा तथावस्थितं माम् अजानन्तः स्वर्गतिं प्रार्थयन्ते ते पुण्यं दुःखासंभिन्नं सुरेन्द्रलोकं प्राप्य तत्र दिव्यान् देवभोगान् अश्नन्ति ॥ २० ॥

**अ० टी०**—एवं बहुप्रकारकं यत्स्वस्वरूपमुक्तं तदज्ञात्वा ये यज्ञादिकमन्यथा कुर्वन्ति सकामास्ते जन्ममरणात्मके संसारे तिष्ठन्तीत्याह द्वाभ्याम्—**त्रैविद्या इति**। त्रैविद्याः वेदत्रयीनिरूपितकर्मकर्त्तारः। सोमपाः यज्ञशेषाऽमृतपातारः। पूतपापाः कर्मिणां पापसंभवाद्विधूतकल्मषाः। यज्ञैरेव वा विधूतकल्मषाः। मां यज्ञैरिष्ट्वा मदाज्ञारूपत्वेन भक्तिप्रतिबन्धनिवर्तकत्वमज्ञात्वा तत्स्वरूपं चाज्ञात्वा स्वर्गतिम् इन्द्रादिलोकं प्रार्थयन्ते ॥ २० ॥

**नी० टी०**—ये पुनरुक्तेषु प्रकारेष्वन्यतमेनापि मां न भजंते ते केवलकर्मठाः कां गतिं प्राप्नुवंतीति शृणु—**त्रैविद्या इति**। तिस्रः ऋग्यजुःसामरूपाः विद्या येषां ते त्रिविद्याः त एव त्रैविद्याः सोमपाः सोमपायिनो याज्ञिकाः यज्ञैर्मामिष्ट्वा स्वर्गतिं फलं प्रार्थयंते दिव्यान् अप्राकृतान् संकल्पमात्रोपनतान् दुःखासंभिन्नान् ॥ २० ॥

**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥**
**एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥ २१ ॥**

**शां० भा०—ते तमिति। ते तं भुक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकमिमं विशन्त्याविशन्ति। एवं हि यथोक्तेन प्रकारेण त्रैधर्म्यं केवलं वैदिकं कर्मानुप्रपन्ना गतागतं गतं चाऽऽगतं च गतागतं गमनागमनं कामकामाः कामान्कामयन्त इति कामकामा लभन्ते गतागतमेव न तु स्वातन्त्र्यं क्वचिल्लभन्त इत्यर्थः ॥ २१ ॥**

**शां० आ०**—तर्हि स्वर्गप्राप्तिरपि भगवत्प्राप्तितुल्येत्याशङ्कयाऽऽह—**ते तमिति**। पुण्ये स्वर्गप्राप्तिहेताविति यावत्, प्रसिद्धयर्थो हिशब्दः, त्रयाणां हौत्रादीनां वेदत्रयविहितानां धर्माणां समाहारस्त्रिधर्मं तदेव त्रैधर्म्यं तदनुप्रपन्नास्तदनुगता इति यावत्। कामकामानां गमनागमनद्वारा कामितफलाप्तिश्चेदिष्टमेव चेष्टितमित्याशङ्कयाऽऽह—**गतेति** ॥ २१ ॥

**आ० भा०**—॥ २१ ॥

**आ० ज०**—॥ २१ ॥

**रा० भा०—ते तं विशालं स्वर्गलोकं भुक्त्वा तदनुभवहेतुभूते पुण्ये क्षीणे पुनरपि मर्त्यलोकं विशन्ति एवं त्रय्यन्तसिद्धज्ञानविधुराः काम्यस्वर्गादिकामाः केवलं त्रयीधर्ममनुप्रपन्नाः गतागतं लभन्ते अल्पास्थिरस्वर्गादीननुभूय पुनः पुनर्निवर्तन्त इत्यर्थः ॥ २१ ॥**

**अ० टी०**—ते पुण्यात्मकं सुरेन्द्रलोकमासाद्य प्राप्य दिवि स्वर्गे स्वर्गलोकं विशालं सकलविषयभोगयोग्यं भुक्त्वा भोगेन पुण्ये क्षीणे सति मर्त्यलोकं विशन्ति प्राप्नुवन्तीत्यर्थः। एवं प्रकारेण त्रयीधर्ममिष्टं परित्यज्य कामकामाः सन्तोऽनुप्रपन्नाः गतागतं जन्ममरणात्मकप्रवाहं लभन्ते प्राप्नुवन्तीत्यर्थः ॥ २१ ॥

**नी० टी०**—त्रयी वेदत्रयी तस्यामुक्तं धर्मं त्रयीधर्मं काम्ययज्ञं कामकामाः विषयकामुकाः गतागतं यातायातं सातत्येन लभंते तथा च श्रुतिः। "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ॥ एतच्छ्रेयो येऽभिनंदंति मूढा जरामृत्युं ते पुनरेवापि यंति" इति अष्टादश षोडशर्त्विजः यजमानः पत्नी चेति द्वौ ॥ २१ ॥

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ॥**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥**

**शां० भा०—ये पुनर्निष्कामाः सम्यग्दर्शिनः—अनन्या अपृथग्भूताः परं देवं नारायणमात्मत्वेन गताः सन्तश्चिन्तयन्तो मां ये जनाः संन्यासिनः पर्युपासते तेषां परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं योगोऽप्राप्तस्य प्रापणं क्षेमस्तद्रक्षणं तदुभयं वहामि प्रापयाम्यहम्। ज्ञानी त्वात्मैव**

मे मतं स च मम प्रियो यस्मात्तस्मात्ते ममाऽऽत्मभूताः प्रियाश्चेति । नन्वन्येषामपि भक्तानां योगक्षेमं वहत्येव भगवान् । सत्यमेवं वहत्येव । किं त्वयं विशेषोऽन्ये ये भक्तास्ते स्वात्मार्थं स्वयमपि योगक्षेममीहन्तेऽनन्यदर्शिनस्तु नाऽऽत्मार्थं योगक्षेममीहन्ते । न हि ते जीविते मरणे वाऽऽत्मनो गृद्धिं कुर्वन्ति केवलमेव भगवच्छरणास्ते । अतो भगवानेव तेषां योगक्षेमं वहतीति ॥ २२ ॥

**शां० आ०**—फलमनभिसंधाय त्वामेवाऽऽराधयतां सम्यग्दर्शननिष्ठानामत्यन्तनिष्कामानां कथं योगक्षेमौ स्यातामित्याशङ्क्याऽऽह—**ये पुनरिति** । तेषां योगक्षेमं वहामीत्युत्तरत्र संबन्धः । येभ्योऽन्यो न विद्यत इति व्युत्पत्तिमाश्रित्याऽऽह—**अपृथगिति** । कार्यस्येव कारणे तादात्म्यं व्यावर्तयति—**परमिति** । अहमेव वासुदेवः सर्वात्मा न मत्तोऽन्यत्किंचिदस्तीति ज्ञात्वा तमेव प्रत्यञ्चं सदा ध्यायन्त इत्याह—**चिन्तयन्त इति** । प्राकृतान्व्यावर्त्य मुख्यानधिकारिणो निर्दिशति—**संन्यासिन इति** । पर्युपासते परितः सर्वतोऽनवच्छिन्नतया पश्यन्तीत्यर्थः । नित्याभियुक्तानां नित्यमनवरतमादरेण ध्याने व्यापृतानामित्याह—**सततेति** । योगश्च क्षेमश्च योगक्षेमम् । तत्रापुनरुक्तमर्थमाह—**योग इति** । किमर्थं परमार्थदर्शिनां योगक्षेमं वहसीत्याशङ्क्याऽऽह—**ज्ञानी त्विति** । अतस्तेषां योगक्षेमं वहामीति संबन्धः । सम्यग्दर्शननिष्ठानामेव योगक्षेमं वहति भगवानिति विशेषणममृष्यमाणः शङ्कते—**नन्विति** । अन्येषामपि भक्तानां भगवान्योगक्षेमं वहतीत्येतदङ्गीकरोति—**सत्यमिति** । तर्हि भक्तेषु ज्ञानिषु च विशेषो नास्तीति पृच्छति—**किं त्विति** । तत्र विशेषं प्रतिज्ञाय विवृणोति—**अयमित्यादिना** । योगक्षेममुद्दिश्य स्वयमीहन्ते चेष्टां कुर्वन्तीति यावत् । आत्मविदां स्वार्थं योगक्षेममुद्दिश्य चेष्टाभावं स्पष्टयति—**न हीति** । गृद्धिरपेक्षा कामना तामित्येतत् । ज्ञानिनां तर्हि सर्वत्रानास्थेत्याशङ्क्याऽऽह—**केवलमिति** । तेषां तदेकशरणत्वे फलितमाह—**अत इति** । इतिशब्दो विशेषशब्देन संबध्यते ॥ २२ ॥

**आ० भा०**—अनन्याः अन्यदचिंतयित्वा । तथा हि गौतमखिलेषु । "सर्वं परित्यज्य मनोगतं यद्विना देवं केवलं शुद्धमाद्यम् । ये चिंतयंतीह तमेव धीरा अनन्यास्ते देवमेवाविशंति'इति । 'कामं कालेन महता एकांतित्वात्समाहितैः ॥ शक्यो द्रष्टुं स भगवान्प्रभासंदृश्यमंडले'इति मोक्षधर्मे । नित्यमभितः सर्वतो युक्तानाम् ॥ २२ ॥

**आ० ज०**—अद्वैतज्ञानिनोऽनन्या इति प्रतीतिनिरासार्थमाह—**अनन्या इति** । अविद्यमानमन्यद्येषां ते अनन्याः । तच्चान्यच्चिंतयंतो मामिति । प्रसंगाच्चिंतनीयमिति लब्धे अन्यदचिंतयित्वेति सिध्यति । प्रतीत एवार्थः किं न स्यादित्यत आह—**तथाहीति** । देवमेव विशंतीत्यनेन योगक्षेमं वहाम्यहमित्युक्तार्थं भवति । अत्रैव काममित्यागमांतरम् । प्रभया संदृश्यं मंडलं स्वरूपं यस्यासौ तथोक्तः । दर्शनस्य योगक्षेमसाधनत्वं प्रसिद्धमेव । नित्याभियुक्तानामित्यस्यापवादविषयाणामित्यन्यथाप्रतीतिनिरासार्थमाह—**नित्यमिति** । सर्वतः सर्वस्मिन्देशे । शरीरेंद्रियमनोभिर्वा युक्तानां भगवति सेवोद्युक्तानाम् ॥ २२ ॥

**रा० भा०**—महात्मानस्तु निरतिशयप्रियरूपं मच्चिन्तनं कृत्वा मामनवधिकातिशयानन्दं प्राप्य न पुनरावर्तन्त इति तेषां विशेषं दर्शयति । अनन्याः अनन्यप्रयोजना मच्चिन्तनेन विना आत्माधारणालाभान्मच्चिन्तनैकप्रयोजनाः मां चिन्तयन्तो ये महात्मानो जनाः पर्युपासते सर्वकल्याणगुणान्वितं सर्वविभूतियुक्तं मां परित उपासते अन्यूनमुपासते तेषां नित्याभियुक्तानां मयि नित्याभियोगं काङ्क्षमाणानामहं मत्प्राप्तिलक्षणं योगं अपुनरावृत्तिरूपं क्षेमं च वहामि ॥ २२ ॥

**अ० टी०**—अथ ये पूर्वोक्तसर्वस्वरूपं मदैशबलयुक्तं ज्ञात्वा सर्वं परित्यज्य मां भजन्ति तेषां सर्वमहमेव करोमि त उत्तमा इति तत्स्वरूपमाह—**अनन्या इति** । अनन्याः न विद्यते अन्यो लौकिकाऽलौकिकादिषु प्रार्थ्यत्वेन येषां, वा मत्सेवनातिरिक्तं फलं येषां ते तथाभूताः सन्तो माम् एकं चिन्तयन्तः सर्वतो मनोनिरोधेन मां स्मरन्तो ये दुर्लभा जनाः जन्मभाजो मत्सेवार्थकजन्मज्ञानवन्तः पर्युपासते परितः सर्वात्मभावेन सेवन्त इत्यर्थः । तेषां नित्याभियुक्तानां नित्यस्वरूपस्य मम सेवनपराणां मम नित्यम् अभियुक्तानां संमतानां योगं सेवार्थधनादिसंपत्तिलाभं सेवने मद्योगं वा, क्षेमं तत्पालनं भक्त्युन्मुखीकरणात्मकं मद्भावरूपं वा अहं पुरुषोत्तमः वहामि पालयामीत्यर्थः । वहनोक्त्या तदशक्तौ स्वशक्त्याऽविर्भावेन तत्करोमीति व्यञ्जितम् ॥ २२ ॥

**नी० टी०**—एवं कर्मिणामावृत्तिं फलं चोक्त्वा भक्तानामपि मद्भजनेनैव सर्वसिद्धिरित्याह—**अनन्या इति**। नास्ति अन्य उपास्यो येषां अहमेव भगवान्वासुदेव इति अभेदेन चिंतयंत इत्यर्थः। ये जनाः पर्युपासते परितः साकल्येन कार्त्स्न्येनाद्वैतदृष्ट्येत्यर्थः। उपासते तेषां नित्याभियुक्तानां सतताभियोगिनां। योगः अप्राप्तस्य अन्नादेर्योगभूमिकाया वा प्रापणं। क्षेमः तस्यैव प्राप्तस्य संरक्षणं तत् द्वयं अहमेव वहामि निर्वहामि। तैरन्नाद्यर्थं वा योगभूमिषूर्ध्वोर्ध्वभूमिलाभार्थं वा चिंता न कर्त्तव्येत्यर्थः। अनन्यचेतसां तेषां मदभिन्नत्वात्सर्वं सेत्स्यतीत्यर्थः। तथा चोक्तं। 'ज्ञानी त्वात्मैव मे मतम्' इति ॥ २२ ॥

**येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ॥**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥**

**शां० भा०**—नन्वन्या अपि देवतास्त्वमेव चेत्तद्भक्ताश्च त्वामेव यजन्ते सत्यमेवम्—**येऽप्यन्यदेवताभक्ता** अन्यासु देवतासु भक्ता अन्यदेवताभक्ताः सन्तो **यजन्ते** पूजयन्ते **श्रद्धया**ऽऽस्तिक्यबुद्ध्याऽन्विता अनुगतास्**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम**विधिरज्ञानं तत्पूर्वकमज्ञानपूर्वकं यजन्त इत्यर्थः ॥ २३ ॥

**शां० आ०**—तत्तद्देवतात्मना परस्यैवाऽऽत्मनः स्थित्यभ्युपगमाद्देवतान्तरपराणामपि भगवच्छरणत्वाविशेषात्तदेकनिष्ठत्वमकिंचित्करमिति मन्वानः शङ्कते—**नन्विति**। उक्तमङ्गीकृत्य परिहरति—**सत्यमित्यादिना**। देवतान्तरयाजिनां भगवद्याजिभ्यो विशेषमाह—**अविधीति**। तद्व्याकरोति—**अविधिरिति** ॥ २३ ॥

**आ० भा०**—तर्ह्यहं क्रतुरित्यादि असत्यमित्यत आह—**येऽपीति** ॥ २३ ॥

**आ० ज०**—उक्तप्रश्नस्योत्तरं जातं तत्किमुत्तरेणेत्यतःप्रश्नाभिसंध्युद्घाटनस्येदमुत्तरामित्याह—**तर्हीति**। भगवद्योगनिमित्तं हि फलं स चेत्सर्वत्र समस्तदा सर्वेषां फलसाम्येन भाव्यं तदभावश्चेत्तर्ह्यहं क्रतुरित्युक्त सर्वत्र भगवतो भोक्तृत्वमप्यसत्यमित्यर्थः ॥ २३ ॥

**रा० भा०**—**येऽप्यन्यदेवताभक्ताः** ये त्विन्द्रादिदेवताभक्ताः केवलत्रयीनिष्ठाः **श्रद्धयान्विताः** इन्द्रादीन् **यजन्ते तेऽपि** पूर्वोक्तेन न्यायेन अन्वयं यथा वेदान्तवाक्यानि सर्वस्य मच्छरीरतया मदात्मत्वेनेन्द्रादिशब्दानां च मद्वाचित्वात् वस्तुतो **मामेव यजन्ते** अपि **त्वविधिपूर्वकं** यजन्ते इन्द्रादीनां देवतानां कर्मस्वाराध्यतया अन्वयं यथा वेदान्तवाक्यानि "चतुर्होतारो यत्र संपदं गच्छन्ति देवैः" इत्यादीनि विदधति न तत्पूर्वकं यजन्ते वेदान्तवाक्यजातं हि परमपुरुषशरीरतयावस्थितानामिन्द्रादीनाम् आराध्यत्वं विदधदात्मभूतस्य परमपुरुषस्यैव साक्षादाराध्यत्वं विदधाति चतुर्होतारोऽग्निहोत्रदर्शपूर्णमासादीनि कर्माणि यत्र परमात्मनि आत्मतयावस्थिते सत्येव तच्छरीरभूतैरिन्द्रादिदेवैः संपदं गच्छन्ति इन्द्रादिदेवानामाराधनान्येतानि कर्माणीतीमां संपदं गच्छन्तीत्यर्थः ॥ २३ ॥

**अ० टी०**—नन्वन्यदेवभजनकर्त्तारोऽपि त्वदंशत्वात् त्वद्भजनमेव कुर्वन्तीति कथं न तेषु त्वत्कृपा तद्भजनं च कथं भोग एव क्षीयत इत्यत आह—**येऽपीति**। येऽपि श्रद्धयाऽन्विताः श्रद्धायुक्तास्तदासक्तत्वधर्मयुक्ता अन्यदेवता यज्ञादिसाधनैस्तदधिष्ठातृरूपेण मदंशाज्ञानेन भजन्ति तेषु मदंशत्वात् मामेव भजन्ति परन्तु मत्स्वरूपाज्ञानादविधिपूर्वकं भजन्त्यतस्तेषां तद्भजनानुरूपं क्षयिष्ण्वेव फलं भवति अहं च न कृपां करोमीत्यर्थः। अतएव स्मृतिष्वविधिकरणनिषेधः। 'विधिहीनं भावदुष्टं कृतमश्रद्धया च यत्। तद्धरन्त्यसुरास्तस्य मूढस्याऽकृतात्मनः' इति ॥ २३ ॥

**नी० टी०**—अविधिपूर्वकं विधिरभेदबुद्धिस्तद्राहित्यादविधिपूर्वकत्वं तदीयभजनस्य ॥ २३ ॥

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥**

**शां० भा०**—कस्मात्तेऽविधिपूर्वकं यजन्त इत्युच्यते यस्मात्—अहं हि सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानां देवतात्मत्वेन भोक्ता च प्रभुरेव च । मत्स्वामिको हि यज्ञोऽधियज्ञोऽहमेवात्रेति ह्युक्तम् । तथा न तु मामभिजानन्ति तत्त्वेन यथावत् । अतश्चाविधिपूर्वकमिष्ट्वा यागफलाच्च्यवन्ति प्रच्यवन्ते ते ॥ २४ ॥

**शां० आ०**—ननु वस्वादित्येन्द्रादिज्ञानपूर्वकमेव तद्भक्तास्तद्याजिनो भवन्तीति कथमविधिपूर्वकं तेषां यजनमिति शङ्कते—**कस्मादिति** । देवतान्तरयाजिनां यजनमविधिपूर्वकमित्यत्र हेत्वर्थत्वेन श्लोकमुत्थापयति—**उच्यत इति** । सर्वेषां द्विविधानां यज्ञानां वस्वादिदेवतात्वेनाहमेव भोक्ता स्वेनान्तर्यामिरूपेण प्रभुश्चाहमेवोति प्रसिद्धमेतदिति हिशब्दः । प्रभुरेव चेत्युक्तं विवृणोति—**मत्स्वामिको हीति** । तत्र पूर्वाध्यायगतवाक्यं प्रमाणयति—**अधियज्ञोऽहमिति** । तथाऽपि देवतान्तरयाजिनां यजनमविधिपूर्वकमिति कुतः सिद्धं तत्राऽऽह—**तथेति** । ममैव यज्ञेषु भोक्तृत्वे प्रभुत्वे च सतीति यावत् । तयोर्भोक्तृप्रभ्वोर्भावस्तत्त्वं तेन भोक्तृत्वेन प्रभुत्वेन च मां यथावद्यतो न जानन्त्यतो भोक्तृत्वादिना ममाज्ञानान्मय्यनर्पितकर्माणश्च्यवन्ते कर्मफलादित्याह—**अतश्चेति** ॥ २४ ॥

**आ० भा०**—कारणमाह विधिपूर्वकत्वे—अहं हीति ॥ २४ ॥

**आ० ज०**—अहंक्रतुरित्यादिनोक्तत्वादहं हीति पुनरुक्तिरित्यत आह—**कारणमिति** । त्रैविद्यादिकृतानां यज्ञानां भगवांश्चेद्भोक्ता कथं तर्ह्यविधिपूर्वकत्वमितिशंकायामितिशेषः ॥ २४ ॥

**रा० भा०**—अतस्त्रैविद्या इन्द्रादिशरीरस्य परमपुरुषस्याराधनान्येतानि कर्माणि आराध्यश्च स एवेति न जानन्ति ते च परिमितफलभागिनश्च्यवनस्वभावाश्च भवन्ति तदाह । प्रभुरेव च तत्र तत्र फलप्रदाता चाहमेवेत्यर्थः ॥ २४ ॥

**अ० टी०**—विधिहीनरूपमाह—**अहमिति** । हि निश्चयेन सर्वयज्ञानां भोक्ता तदधिष्ठातृदेवानां मदंशत्वात्तद्रूपेण अहं भोक्ता । चकारेण तद्रूपोऽपि । प्रभुरेव च । फलदाता चेत्यर्थः । एवकारेण द्वितीयचकारेण च सर्वप्रभुत्वेन भोक्तृत्वेपि मदेकांशप्रीणनमेव भवति ननु सर्वप्रभुमत्प्रीतिरितिज्ञापितम् । एतादृशं मां तु पुनस्तत्त्वेन मूलरूपेण न अभितः सर्वप्रकारेण जानन्ति यावान् 'यश्चास्मि यादृश' इति । अतस्ते च्यवन्ति पर्यावर्तन्ते । मत्तो वा च्यवन्ति भ्रश्यन्ति । अत्रायं भावः । भगवदंशदेवताभजनत्वेन यज्ञादिना वा यत्फलं भवति तन्महाप्रभुभजनेन भवति 'मूलनिषेकः शाखायामपि'इति न्यायेन प्रभुभजने तेऽपि प्रसीदन्ति तद्भजने त एव प्रसीदन्ति तदंशप्राकट्यं च भवेत् । अतएव युधिष्ठिरेण श्रीभागवते । 'क्रतुराजेन गोविन्द राजसूयेन पावनीः । यक्ष्ये विभूतीर्भवतस्तत्संपादय नः प्रभो'इति विज्ञापितं । तेन भगवदिच्छया भगवद्भजनं कुर्वता तदिच्छां ज्ञात्वा तदंशप्राकट्यं चेत्तदा तद्रीत्यैव कार्यमन्यथा न कार्यमेतदज्ञानात्तत्त्वज्ञानाभावः ॥ २४ ॥

**नी० टी०**—हि यतः सर्वयज्ञानामहमेव सर्वदेवतारूपेण भोक्ता प्रभुः फलदाता च । एवं सति ते माम् प्रत्यगभिन्नं तत्त्वेन याथातथ्येन न जानंति अतश्च्यवंति ज्ञाननिष्ठामलब्ध्वा संसारगर्ते पतंति ॥ २४ ॥

**यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ॥**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥**

**शां० भा०—**येऽप्यन्यदेवताभक्तिमत्त्वेनाविधिपूर्वकं यजन्ते तेषामपि यागफलमवश्यंभावि, कथम्—यान्ति गच्छन्ति देवव्रता देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रता देवान्यान्ति। पितॄनग्निष्वात्तादीन्यान्ति पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ताः। भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्या भूतानां पूजकाः। यान्ति मद्याजिनो मद्यजनशीला वैष्णवा मामेव। समानेऽप्यायासे मामेव न भजन्तेऽज्ञानात्। तेन तेऽल्पफलभाजो भवन्तीत्यर्थः॥ २५॥

**शां० आ०—**यद्यन्यदेवताभक्ता भगवत्तत्त्वाज्ञानात्कर्मफलाच्च्यवन्ते तर्हि तेषां देवतान्तरयजनमकिंचित्करमित्याशङ्क्याह—**येऽपीति**। देवतान्तरयाजिनामनावृत्तिफलाभावेऽपि तत्तद्देवतायागानुरूपफलप्राप्तिध्रौव्यान्न तदकिंचित्करमित्यर्थः। देवतान्तरयाजिनामावश्यकं तत्फलमाशङ्कापूर्वकमुदाहरति—**कथमित्यादिना**। नियमो बल्युपहारप्रदक्षिणप्रह्वीभावादिरित्यर्थः। देवतान्तराराधनस्यान्तवत्फलमुक्त्वा भगवदाराधनस्यानन्तफलत्वमाह—**यान्तीति**। भगवदाराधनस्यानन्तफलत्वे देवतान्तराराधनं त्यक्त्वा भगवदाराधनमेव युक्तमायाससाम्यात्फलातिरेकाच्चेत्याशङ्क्याऽऽह—**समानेऽपीति**। अज्ञानाधीनत्वेन देवतान्तराराधनवतां फलतो न्यूनतां दर्शयति—**तेनेति**॥ २५॥

**आ० भा०—**फलं विविच्याह—यांतीति॥ २५॥

**आ० ज०—**ते पुण्यमासाद्येति योगक्षेमं वहाम्यहमिति च फलभेदस्योक्तत्वात्किं यांतीत्यादिनेत्यत आह—**फलमिति**। तस्यैवायं प्रपंच इति भावः॥ २५॥

**रा० भा०—**अहो महदिदं वैचित्र्यं यदेकस्मिन्नेव कर्मणि वर्तमानाः संकल्पमात्रभेदेन केचिदत्यल्पफलभागिनश्च्यवनस्वभावाश्च भवन्ति केचनानवधिकातिशयानन्दपरमपुरुषप्राप्तिरूपफलभागिनोऽपुनरावर्तिनश्च भवन्तीत्याह। व्रतशब्दः संकल्पवाची देवव्रताः दर्शपौर्णमासादिभिः कर्मभिरिन्द्रादीन् यजाम इति इन्द्रादियजनसंकल्पाः ये ते इन्द्रादिदेवान् यान्ति। ये च पितृयज्ञादिभिः पितॄन् यजामः इति पितृयजनसंकल्पास्ते पितॄन् यान्ति। ये च यक्षरक्षःपिशाचादीनि भूतानि यजाम इति भूतयजनसंकल्पास्ते भूतानि यान्ति। ये तु तैरेव यज्ञैः देवपितृभूतशरीरकं परमात्मानं भगवन्तं वासुदेवं यजामः इति मां यजन्ते ते मद्याजिनो मामेव यान्ति। देवादिव्रता देवादीन् प्राप्य तैः सह परिमितं भोगं भुक्त्वा तेषां विनाशकाले तैः सह विनष्टा भवन्ति मद्याजिनस्तु मामनादिनिधनं सर्वज्ञं सत्यसंकल्पम् अनवधिकातिशयासंख्येयकल्याणगुणगणमहोदधिम् अनवधिकातिशयानन्दं प्राप्य न पुनर्निवर्तन्त इत्यर्थः॥२५॥

**अ० टी०—**ननु त्वदंशाऽज्ञाने यजनकर्त्तारश्च्यवन्ति येषां तु त्वदंशज्ञानेन तद्देवयजनकर्तृत्वं तेषां किं फलमित्यत आह—**यान्तीति**। देवव्रताः इन्द्रादिषु मदंशज्ञानेन तद्रूपेषु सनियमाः। देवान् तानेव यान्ति प्राप्नुवन्ति। पितृव्रताः श्राद्धादिविधिभिः पितृयाजकाः पितॄन् यान्ति प्राप्नुवन्ति। भूतेज्याः विनायकदुर्गादिपूजकाः भूतानि तान्येव यान्ति। अत्रायमर्थः। तत्तद्देवान् प्राप्य तत्संगेन परंपरया मां प्राप्नुवन्ति। मद्याजिनः कर्मादिभिस्तदाधिदैविकरूपं मद्यजनकर्त्तारोऽपि मां प्राप्नुवन्ति। ते परंपरया मां प्राप्नुवन्ति। एते साक्षादिति विशेषः। अपिशब्देन कर्माङ्गत्वेन भजनेऽपि मुक्त्यात्मकस्वप्राप्तिरूपविशेषो व्यञ्जितः॥ २९॥

**नी० टी०—**सर्वे भक्ता यथाभजनं प्राप्नुवंति स्वाराध्यसान्निध्यमित्याह—**यांतीति**। भूतार्थमिज्या येषां ते भूतेज्याः॥ २९॥

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति॥**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥ २६॥**

**शां० भा०**—न केवलं मद्भक्तानामनावृत्तिलक्षणमनन्तफलं सुखाराधनश्चाहं कथम्—पत्रं पुष्पं फलं तोयमुदकं यो मे मह्यं भक्त्या प्रयच्छति तदहं पत्रादि भक्त्योपहृतं भक्तिपूर्वकं प्रापितं भक्त्युपहृतमश्नामि गृह्णामि प्रयतात्मनः शुद्धबुद्धेः ॥ २६ ॥

**शां० आ०**—अनन्तफलत्वाद्भगवदाराधनमेव कर्तव्यमित्युक्तं सुकरत्वाच तथेत्याह—**न केवलमिति**। भगवदाराधनस्य सुकरत्वमेव प्रश्नपूर्वकं प्रपञ्चयति—**कथमित्यादिना**। यद्धि पुष्पादिकं भक्तिपूर्वकं मदर्थमर्पितं तेनायं शुद्धचेतास्तपस्वी मामाराधयतीत्यहमवधारयामीत्याह—**पत्रमित्यादिना** ॥ २६ ॥

**आ० भा०**—दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वादित्याशंक्याह—पत्रमिति। न त्वविहितपत्रादि। तस्यापराधत्वोक्तेर्वाराहादौ भक्त्यैवाहं तृप्यइति भावः। 'भक्तप्रियं सकललोकनमस्कृतं च' इति भारते। 'एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः॥ एकांतभक्तिर्गोविंदे यत्सर्वत्रात्मदर्शनम्' ॥ २६ ॥

**आ० ज०**—पत्रमित्यस्य संगत्यप्रतीतेराह—**दुर्बलैरिति**। अतस्तद्भजनस्य महाफलत्वेपि तद्विहायाल्पानां देवानां भजनमल्पफलमपि सुशकत्वात्करोमीति प्रासंगिकशंकाशेषः। साधनानादरस्योक्तत्वाद्यत्किंचित्पत्रादिकमिति न मंतव्यमित्याह—**नत्विति**। तत्किमपि भगवते समर्पणीयमेवेति नियमोऽत्राभिप्रेत इत्यत आह—**भक्त्यैवेति**। कुत इत्यत आह—**भक्तेति**। स्वार्थः स्वार्थसाधनोपायः ॥ २६ ॥

**रा० भा०**—मद्याजिनामयमपि विशेषोऽस्तीत्याह। सर्वसुलभं पत्रं वा पुष्पं वा फलं वा यो भक्त्या मे प्रयच्छति अत्यर्थमत्प्रियतया तत्प्रदानेन विनाऽऽत्मधारणमलभमानतया तदेकप्रयोजनो यो मे पत्रादिकं ददाति तस्य प्रयतात्मनः तत्प्रदानैकप्रयोजनत्वरूपशुद्धियुक्तमनसस्तत्तथाविधभक्त्युपहृतमहं सर्वेश्वरो निखिलजगदुदयविभवलयलीलः अवाप्तसमस्तकामः सत्यसंकल्पोऽनवधिकातिशयासंख्येयकल्याणगुणगणस्वाभाविकानवधिकातिशयानन्दस्वानुभवे वर्तमानोऽपि मनोरथपथदूरवर्ति प्रियं प्राप्येवाश्नामि। यथोक्तं मोक्षधर्मे 'याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतबुद्धिभिः। ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्' इति ॥ २६ ॥

**अ० टी०**—भक्तेषु विशेषमाह—**पत्रमिति**। पत्रं तुलस्यादीनां प्रियरूपम्। पुष्पम् अलंकारात्मकम्। फलं सामग्रीरूपम्। तोयं सामग्रीभेदरूपं। यो मे मम भक्त्या स्नेहेन नतु विहितत्वेन प्रयच्छति प्रकर्षेण भावात्मकतया समर्पयति। तत् पूर्वोक्तं सर्वं भक्त्युपहृतं स्नेहेन समर्पितं प्रयतात्मनः मदेकपरतया वशीकृतचेतसः अहं पुरुषोत्तमः अश्नामि भुनज्मीत्यर्थः। अनायासप्राप्त्यर्थं पत्रादिकमुक्तम्। अशनोक्त्या तदङ्गीकारेणाग्रे स्वभोगयोग्यसर्वसामग्रीसंपादनं व्यज्यते। अतएव सुदामार्थं स्वसंपद्दाने पृथुकमुष्टिमङ्गीकृतवान् ॥ २६ ॥

**नी० टी०**—मद्भक्तिरतिसुकरा देवतांतरभक्तिस्तु बहुवित्तव्ययायाससाध्येत्याशयेनाह—**पत्रमिति**। भक्तिरेव केवलं ममापेक्षिता नान्यदिति भावः भक्त्युपहृतं भक्त्या समर्पितम् ॥ २६ ॥

## यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥
## यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥

**शां० भा०**—यत एवमतः—यत्करोषि स्वतः प्राप्तं यदश्नासि यच्च जुहोषि हवनं निर्वर्तयसि श्रौतं स्मार्तं वा, यद्ददासि प्रयच्छसि ब्राह्मणादिभ्यो हिरण्यान्नाज्यादि, यत्तपस्यसि तपश्चरसि कौन्तेय तत्कुरुष्व मदर्पणं मत्समर्पणम् ॥ २७ ॥

**शां० आ०**—तदाराधनस्य सुकरत्वे तदेवाऽऽवश्यकमित्याह—**यत इति**। स्वतः शास्त्रादृते प्राप्तं गमनादीति यावत्। यदश्नासि यं कंचिद्भोगं भुङ्क्षे। हवनस्य स्वतस्त्वं वारयति—**श्रौतमिति**। मत्समर्पणं तत्सर्वं मह्यं समर्पयेत्यर्थः ॥ २७ ॥

**आ० भा०—अतो यत्करोषि ॥ २७ ॥**

**आ० ज०**—आत्मनो गोविंदस्यासाधनानादरस्य पूर्वमेवोक्तत्वाद्यर्थमुत्तरमित्यत आह—**अत इति**। सामान्यमुक्त्वा विशेषे निगमनमेतदिति भावः ॥ २७ ॥

**रा० भा०**—यस्माज्ज्ञानिनां महात्मनां वाङ्मनसागोचरोऽयं विशेषः तस्मात्त्वं च ज्ञानी भूत्वा उक्तलक्षणभक्तिभारावनतात्मात्मीयः कीर्तनयतनार्चनप्रणामादिकं सततं कुर्वाणो लौकिकं वैदिकं च नित्यनैमित्तिकं कर्म चेत्थं कुर्वित्याह। यद्देहयात्रादिशेषभूतं लौकिकं कर्म करोषि यच्च देहधारणायाश्नासि यच्च वैदिकं होमदानतपःप्रभृति नित्यनैमित्तिकं कर्म करोषि तत्सर्वं मदर्पणं कुरुष्व अर्प्यत इति अर्पणं सर्वस्य लौकिकस्य वैदिकस्य च कर्मणः कर्तृत्वं भोक्तृत्वमाराध्यत्वं च यथा मयि सर्वं समर्पितं भवति तथा कुरु। एतदुक्तं भवति यागदानादिष्वाराध्यतया प्रतीयमानानां देवादीनां कर्म कर्तुर्भोक्तुस्तव च मदीयतया मत्संकल्पायत्तस्वरूपस्थितिप्रवृत्तितया च मय्येव परमशेषिणि परमकर्तरि त्वां च कर्त्तारं भोक्तारमाराधकमाराध्यं च देवताजातमाराधनं च क्रियाजातं सर्वं समर्पय तव मन्नियाम्यतापूर्वकं मच्छेषतैकरसतामाराध्यादेश्चैतत्स्वभावकगर्भताम् अत्यर्थप्रीतियुक्तोऽनुसंधत्स्वेति ॥ २७ ॥

**अ० टी०**—यतोऽहं भक्त्युपहृतमङ्गीकरोम्यतः पूर्वकृतानां कुर्वतां च कर्मणां फलभोगरूपप्रतिबन्धनिवृत्त्यर्थं तत्सर्वं मदर्पितं कुर्वित्याह—**यत्करोषीति**। यत् लौकिकं वैदिकं करोषि। यत् अश्नासि भुङ्क्षे। यत् जुहोषि होमं करोषि। यत् ददासि दानं करोषि। तत्सर्वं मदर्पणं मत्समर्पितं कुरुष्व। देहादिधर्मान् विवाहपुत्रोत्पत्त्यर्थकामादीन् निद्राजागरणमूत्रपुरीषादिकाँस्तानपि भगवत्सेवाद्यर्थप्रतिबन्धाभावार्थविचारेण कुर्यात् नतु स्वसुखेच्छया। तथा भोजनादिकमपि। तत्र प्रसादजपुष्ट्या सेवार्थबलाप्त्यर्थम्। होमश्च तद्वियोगजदुःखास्ये। दानं च तदीयत्वेन द्रव्यशुद्ध्या भगवद्विनियोगप्रातिबन्धनिवृत्त्यर्थम्। तपश्च भगवतः कारुण्योदयार्थम्। एवमेतत्सर्वं भगवत्समर्पितं भवति ॥ २७ ॥

**नी० टी०**—अतः सर्वं मदर्पणं कुर्वित्याह—**यदिति**। यत्करोषि गमनादिकं तद्भगवत एव प्रदक्षिणादिकं करोमीति मत्प्रीत्यर्थमेव तदर्पणं कुर्विति। एवं वचनादिष्वपि नामकीर्तनादिदृष्ट्या ऊह्यम् ॥ २७ ॥

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥**

**शां० भा०**—एवं कुर्वतस्तव यद्भवति तच्छृणु—**शुभाशुभफलैरेवं** शुभाशुभे इष्टानिष्टफले येषां तानि शुभाशुभफलानि कर्माणि तैः शुभाशुभफलैः कर्मबन्धनैः कर्माण्येव बन्धनानि तैः कर्मबन्धनैरेवं मत्समर्पणं कुर्वन्मोक्ष्यसे। सोऽयं संन्यासयोगो नाम संन्यासश्चासौ मत्समर्पणतया कर्मत्वाद्योगश्चासाविति तेन संन्यासयोगेन युक्त आत्माऽन्तःकरणं यस्य तव स त्वं संन्यासयोगयुक्तात्मा सन्विमुक्तः कर्मबन्धनैर्जीवन्नेव पतिते चास्मिञ्शरीरे मामुपैष्यस्यागामिष्यासि ॥ २८ ॥

**शां० आ०**—किमतो भवति तदाह—**एवमिति**। भगवदर्पणबुद्ध्या सर्वकर्म कुर्वतो जीवन्मुक्तस्य प्रारब्धकर्मावसाने विदेहकैवल्यमावश्यकमित्याह—**शुभेत्यादिना**। भगवदर्पणकरणान्मुक्तिः संन्यासयोगाच्चेति साधनद्वयशङ्कां शातयाति—**सोऽयमिति** ॥ २८ ॥

**आ० भा०**—॥ २८ ॥

आ० ज०—॥ २८ ॥

**रा० भा०**—एवं संन्यासाख्ययोगयुक्तमना आत्मानं मच्छेषतामन्नियाम्यतैकरसं कर्म च सर्वं मदाराधनमनुसंदधानो लौकिकं वैदिकं च कर्म कुर्वन् शुभाशुभफलैरनन्तैः प्राचीनकर्माख्यैर्बन्धनैर्मत्प्राप्तिविरोधिभिः सर्वैर्मोक्ष्यसे तैर्विमुक्तो मामेवोपैष्यसि ॥ २८ ॥

**अ० टी०**—एवं मत्समर्पितेषु तत्कृतबन्धो न भविष्यतीत्याह—**शुभाशुभफलैरिति** । एवं मत्समर्पणेन शुभाशुभफलैः शुभानि शुभपुत्रादीनि । अशुभानि क्लेशदारिद्र्यादीनि यानि कर्मजानि फलानि तैर्मोक्ष्यसे मुक्तो भविष्यसीत्यर्थः । तानि फलानि मत्सेवौपयिकान्येव भविष्यन्तीतिभावः । ततः संन्यासयोगयुक्ताऽऽत्मा संन्यासः कर्मणां मत्समर्पणं तेन यो योगो मद्भक्त्यात्मकस्तेन युक्त आत्मा अन्तःकरणं यस्य तादृशः सन् कर्मबन्धनैर्विमुक्तो मामुपैष्यसि प्राप्स्यसीत्यर्थः ॥ २८ ॥

**नी० टी०**—एवं कुर्वतः फलमाह—**शुभाशुभेति** । शुभाशुभफलैः इष्टानिष्टफलैः कर्मरूपैर्बंधनैः एवं कुर्वन् त्वं मोक्ष्यसे भगवदर्पणबुद्ध्या यत्किंचित्कर्म कुर्वतः कर्मलेपो नास्तीत्यर्थः । अयमेवोक्तलक्षणः कर्मफलसंन्यासरूपो मार्गस्तत्र युक्तात्मा समाहितचित्तः सन् विमुक्तः कर्मबन्धनैर्विमुक्तः सन् मां सर्वेषां प्रत्यगात्मानं उपैष्यसि॥२८॥

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ॥**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥**

**शां० भा०**—रागद्वेषवांस्तर्हि भगवान्यतो भक्ताननुगृह्णाति नेतरानिति तन्न—समस्तुल्योऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियोऽग्निवदहं दूरस्थानां यथाऽग्निः शीतं नापनयति समीपमुपसर्पतामपनयति तथाऽहं भक्ताननुगृह्णामि नेतरान् । ये भजन्ति तु मामीश्वरं भक्त्या मयि ते स्वभावत एव न मम रागनिमित्तं मयि वर्तन्ते । तेषु चाप्यहं स्वभावत एव वर्ते नेतरेषु नैतावता तेषु द्वेषो मम ॥२९॥

**शां० आ०**—भगवतो रागद्वेषवत्त्वेनानीश्वरत्वमाशङ्क्य परिहरति—**रागेत्यादिना** । तर्हि भगवद्भजनमकिंचित्करमित्याशङ्क्याऽऽह—**अग्निवदिति** । तत्प्रपञ्चयति—**यथेति** । भक्तानभक्तांश्चानुगृह्णतोऽननुगृह्णतश्च भगवतो न कथं रागादिमत्त्वामित्याशङ्क्याऽऽह—**ये भजन्तीति** । ये वर्णाश्रमादिधर्मैर्मां भजन्ति ते तेनैव भजनेनाचिन्त्यमाहात्म्येन परिशुद्धबुद्धयो मयि मत्समीपे वर्तन्ते मदभिव्यक्तियोग्यचित्ता भवन्ति । तुशब्दोऽस्य विशेषस्य द्योतनार्थः। तेषु च समीपे तेषामहमपि स्वभावतो वर्तमानस्तदनुग्रहपरो भवामि । यथा व्यापकमपि सावित्रं तेजः स्वच्छे दर्पणादौ प्रतिफलति तथा परमेश्वरोऽव्वर्जनीयतया भक्तिनिरस्तसमस्तकलुषसत्त्वेषु पुरुषेषु संनिधत्ते दैवीं प्रकृतिमाश्रिता मां भजन्तीत्युक्तत्वादित्यर्थः ॥ २९ ॥

**आ० भा०**—तर्हि स्नेहादिमत्त्वादल्पभक्तस्यापि कस्यचिद्बहुफलं ददासि । विपरीतस्यापि कस्यचिद्विपरीतमित्यत आह—समोहमिति । तर्हि न भक्तिप्रयोजनमित्यत आह—ये भजंतीति । मयि ते तेषु चाप्यहमिति । मम ते वशाः तेषामहं वश इति । उक्तंच पैंगिखिलेषु । "ये वै भजंते परमं पुमांसं तेषां वशः स तु ते मद्वशाश्च" इति । तद्वशा एव ते सर्वदा तथापि बुद्धिपूर्वाबुद्धिपूर्वकत्वेन भेदः । उद्धवादिवच्छिशुपालादिवच्च । तच्चोक्तं तत्रैव । "अबुद्धिपूर्वाद्योवशस्तस्य ध्यानात्पुनर्वशो भवते बुद्धिपूर्वम्" इति ॥ २९ ॥

**आ० ज०**—भक्तप्रियत्वमुक्त्वा तद्विरुद्धं सर्वत्र साम्यं कथमुच्यत इत्यत आह—**तर्हीति** । यदि त्वं भक्तप्रियः। तदा द्वेष्योप्रियश्च स्याः ततश्च भक्तेषु द्वेषिषु यथासंख्यं स्नेहद्वेषवत्त्वादल्पभक्तस्यापि कस्यचिद्बहुफलं सुखरूपं ददासि । विपरीतस्याल्पद्वे-

षिणोऽपि कस्यचिद्बहुफलं दुःखरूपं ददासि इत्याद्यापद्यते । राजादिषु तथा दर्शनात् । तथा च वैषम्यनैर्घृण्ये तवेति शंकार्थः । पूर्वार्धेनैव शंकायाः परिहृतत्वात्किमुत्तरार्धेनेत्यत आह—**तर्हीति** । अहं हि सर्वभूतेषु समो न वैषम्यादिमान्यतो मे तदीयं द्वेषमपेक्ष्याधिकं द्वेष्यो नास्ति । तदीयां भक्तिमपेक्ष्याधिकं प्रियश्च नास्तीति भगवतोक्तेऽपि विपरीतमर्थं गृहीत्वा शंकते । यदि ते प्रियो नास्ति तर्हि न भक्तिः प्रयोजनं फलस्य । तथा चोक्तविरोध इति भावः । मयि ते तेषु चाप्यहमित्येतत्र फलं स्वभावसिद्धत्वादित्यत आह—**मयीति** । इत्यस्येत्यर्थ इति योजना । कुत एतदित्यत आह—**उक्तंचेति** । मम ते वशा इत्येतदपि तादृगेव भजनाभावेऽपि तद्वशत्वस्वाभाव्यादित्यत आह—**तदिति** । यद्यपीति शेषः । अत्र दृष्टांतं प्रमाणं चाह—**उद्धवादीति** । अबुद्धिपूर्वं यो वशः सः ॥ २९ ॥

**रा० भा०—ममेमं परममतिलोकं स्वभावं शृणु देवतिर्यङ्मनुष्यस्थावरात्मना स्थितेषु जातितश्चाकारतः स्वभावतो ज्ञानतश्चात्यन्तोत्कृष्टापकृष्टरूपेण वर्तमानेषु सर्वेषु भूतेषु समाश्रयणीयत्वेन समोऽहम् अयं जात्याकारस्वभावज्ञानादिभिर्निकृष्ट इति समाश्रयणे न मे द्वेष्योऽस्ति उद्वेजनीयतया न त्याज्योऽस्ति तत्समाश्रितत्वातिरेकेण जात्यादिभिरत्यंतोत्कृष्टोऽयमिति तद्युक्ततया समाश्रयणे न कश्चित्प्रियोऽस्ति न संग्राह्योऽस्ति अपि त्वत्यर्थमत्प्रियत्वेन मद्भजनेन विनात्मधारणालाभात् मद्भजनैकप्रयोजना ये मां भजन्ते ते जात्यादिभिः उत्कृष्टाः अपकृष्टा वा मत्समानगुणवद्यथासुखं मय्येव वर्तन्ते अहमपि तेषु मदुत्कृष्टोष्विव वर्त्ते ॥ २९ ॥**

**अ० टी०**—एवं कर्मसमर्पणेन तद्बन्धनिवृत्त्युक्त्या, असमर्पकाणां च बन्ध एव पर्यवसितस्तेन स्ववैषम्यमाशङ्कमानमाह—**समोऽहमिति** । अहं सर्वभूतेषु समः । न मे द्वेष्यः कोपि । न प्रियः । अत्रायं भावः । स्वक्रीडार्थं सर्वभूतानि मया सृष्टान्यतस्तेषु सर्वेष्वहं समः, ये क्रीडार्थकत्वमज्ञात्वाऽन्यथाकर्मादिकर्तारो मयि विषमत्वं कुर्वन्त्यतस्तेषां त्वात्मदोषेणैव बन्धादिकं भवति । ये तु मां भक्त्या स्नेहेन क्रीडारूपं ज्ञात्वा भजन्ति ते स्वभजनात्मकधर्मेण मयि तिष्ठन्ति, तेष्वहं तत्कृतितुष्टस्तिष्ठामि तेन न वैषम्यमितिभावः ॥ २९ ॥

**नी० टी०**—यतो भक्तानेवानुगृह्णाति नेतरानित्यतो रागद्वेषवान् भगवानित्यत आह—**समोहमिति** । यथाऽग्निः रागादिशून्योऽपि समीपस्थानामेव शीतं नाशयति न दूरस्थानां तद्वत्सर्वत्र समोऽप्यहं शरणागतानामेव बंधं नाशयामि नान्येषामित्यर्थः । अतो मम न रागद्वेषाविति भावः । मयि ते तेषु चाप्यहं भक्ता अनन्यशरणतया मय्येव वर्त्तन्ते अहमपि तेष्वेव वर्त्ते । अभक्तचित्तानां रागाद्याक्रांतत्वेन तत्र मम विशेषतोऽभिव्यक्तिर्नास्तीति भावः २९

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥**

**शां० भा०—शृणु मद्भक्तेर्माहात्म्यम्—अपि चेद्यद्यपि सुष्ठु दुराचारः सुदुराचारोऽतीव कुत्सिताचारोऽपि भजते मामनन्यभागनन्यभक्तिः सन्साधुरेव सम्यग्वृत्त एव स मन्तव्यो ज्ञातव्यः सम्यग्यथावद्व्यवसितो हि यस्मात्साधुनिश्चयः सः ॥ ३० ॥**

**शां० आ०**—प्रकृतां भगवद्भक्तिं स्तुवन्पापीयसामपि तत्राधिकारोऽस्तीति सूचयति—**शृण्विति** । सम्यग्वृत्त एव भगवद्भक्तो ज्ञातव्य इत्यत्र हेतुमाह—**सम्यगिति** ॥ ३० ॥

**आ० भा०—न भवत्येव प्रायस्तद्भक्तः सुदुराचारस्तथापि बहुपुण्येन यदि कथंचिद्भवति तर्हि साधुरेव स मंतव्यः ॥ ३० ॥**

**आ० ज०**—अपि चेत्यादिना भक्तेः प्रशंसा क्रियते । तत्र विष्णुभक्तेः सुदुराचारेणैकत्र समावेशप्रतीतौ यथावद्व्याचष्टे—**न भवत्येवेति** ॥ ३० ॥

**रा० भा०—तत्रापि तत्र तत्र जातिविशेषे जातानां यः समाचार उपादेयः परिहरणीयश्च तस्मादतिवृत्तोऽप्युक्तप्रकारेण मामनन्यभाक् भजनैकप्रयोजनो भजते चेत् साधुरेव सः वैष्णवाग्रेसर एव**

मन्तव्यो बहुमन्तव्यः पूर्वोक्तैः सम इत्यर्थः। कुत एव तत् सम्यग्व्यवसितो हि सः यतोऽस्य व्यवसायः सुसमीचीनः भगवान् निखिलजगदेककारणभूतः परब्रह्मनारायणश्चराचरपतिरस्मत्स्वामी मम गुरुर्मम सुहृन्मम परं भोग्यमिति सर्वैः दुष्प्रापोऽयं व्यवसायस्तेन कृतः तत्कार्ये चानन्यप्रयोजनं निरन्तरभजनं तस्यास्ति अतः साधुरेव बहु मन्तव्यः। अस्मिन् व्यवसाये तत्कार्ये चोक्तप्रकारभजने संपन्ने सति तस्याचारव्यतिक्रमः स्वल्पवैकल्यमिति न तावताऽनादरणीयः अपि तु बहुमन्तव्य एवेत्यर्थः ॥ ३० ॥

अ० टी०—ननु ये त्वां भजन्ति तेषु चेत्त्वं तिष्ठसि कथं तदा ते विषयाद्यभिभूता भवन्तीत्यत आह—अपीति। चेत् सुदुराचारोऽपि, अनन्यभाक् मां भजते स साधुरेव मन्तव्यः। अत्रायं भावः। विषयादिमहापापौघाचरणशीलस्तन्निवृत्तिनिमित्तान्यदेवभजनप्रायश्चित्तादिधर्माऽनुपायज्ञानेन अन्यभजनरहितस्तत्त्यागाशक्तस्त्यक्तुकामः स्वदैन्याविर्भावेन यो मां भजते स साधुरेव मान्यः। त्वयेतिशेषः। अपिचेदित्यनेन तादृशाचारस्यानन्यभजनत्वे दुर्लभत्वं ज्ञापितम्। कुत इत्यत आह। सम्यग्व्यवसितः। स पूर्वोक्तः सम्यगध्यवसायं निश्चयं यतः कृतवान्। यन्मम महापातकनिवारकः श्रीकृष्णं विना नान्य इति। हीति निश्चयार्थम्। अत्र संदेहो नास्तीत्यर्थः॥ ३० ॥

नी० टी०—भक्तेर्माहात्म्यमाह—अपि चेदिति। अत्यंतपापिष्ठोऽपि मां यद्यनन्यचेताः सन् भजते तथापि स साधुरेव मंतव्यः हि यतः स सम्यग्व्यवसितः सम्यग्वृत्तः ॥ ३० ॥

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ॥**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥**

शां० भा०—उत्सृज्य च बाह्यां दुराचारतामन्तःसम्यग्व्यवसायसामर्थ्यात्—क्षिप्रं शीघ्रं भवति धर्मात्मा धर्मचित्त एव शश्वन्नित्यं शान्तिं चोपशमं निगच्छति प्राप्नोति। शृणु परमार्थं कौन्तेय प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु न मे मम भक्तो मयि समर्पितान्तरात्मा मद्भक्तो न प्रणश्यतीति॥ ३१॥

शां० आ०—हेत्वर्थमेव प्रपञ्चयति—उत्सृज्येति। भगवन्तं भजमानस्य कथं दुराचारता परित्यक्ता भवतीत्याशङ्कयाऽऽह—क्षिप्रमिति। सति दुराचारे कथं धर्मचित्तत्वं तदाह—शश्वदिति। उपशमो दुराचारादुपरमः। किमिति त्वद्भक्तस्य दुराचारादुपरतिरुच्यते दुराचारोपहतचेतस्तया किमित्यसौ न नङ्क्ष्यतीत्याशङ्कयाऽऽह—शृण्विति ॥ ३१ ॥

आ० भा०—कुतः क्षिप्रं भवति धर्मात्मा। देवदेवांशादिष्वेव च तद्भवति। उक्तं च शांडिल्यशाखायाम्। "नाविरतोदुश्चरितान्नाभक्तो नासमाहितः। सम्यग्भक्तो भवेत्कश्चिद्वासुदेवेऽमलाशयः॥ देवर्षयस्तदंशाश्च भवंति क्वच ज्ञानतः" इति। अतोऽन्यः कश्चिद्भवतिचेत् दांभिकत्वेन सोऽनुमेयः। साधारणपापानां सत्संगान्महत्यपि कथंचिद्भक्तिर्भवति। साधारणभक्तिर्वेतरेषाम्। 'स शठमतिरुपदधाति योऽर्थतृष्णां तमधमचेष्टमवेहि नास्य भक्तिः' इति श्रीविष्णुपुराणे। 'सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः' इति च। 'वेदास्त्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम्। पूजां गुरूणां सततं करोमि परस्य गुह्यं न च भिन्नपूर्वम्॥ गुप्तानि चत्वारि यथागमं मे शत्रौ च मित्रे च समोऽस्मि नित्यम्। तं चापि देवं शरणं प्रपन्नं एकांतभावेन भजाम्यजस्रं॥ एतैरुपायैः परिशुद्धसत्वः कस्मान्न पश्येयमनंतमेनम्' इति मोक्षधर्मे। आचारस्य ज्ञानसाधनत्वोक्तेश्च। ज्ञानाभावे सम्यक्भक्त्यभावात्। तथा हि गौतमखिलेषु। "विना ज्ञानं कुतो भक्तिः कुतो भक्तिं विना च तत्" इति। 'भक्तिः परेशाऽनुभवो विरक्तिरन्यत्र चैतत्त्रिकमेककालम्' इति च भागवते ॥ ३१ ॥

**आ० ज०**—बहुपुण्येन स्वयोग्यादधिकेनार्जितेन सम्यग्व्यवसितो हि स इति हेतोरुक्तत्वात्क्षिप्रमित्यादि व्यर्थमित्यतआह—**कुत इति**। सम्यग्व्यवसायवत्त्वेपि सुदुराचारः कुतः साधुर्मंतव्य इति शंकार्थः। सम्यग्व्यवसायवत्त्वात्क्षिप्रं भवति धर्मचित्तः यदेतद्भक्तेः सुदुराचारेण सहैकत्र क्वचिदवस्थानमंगीकृतं तदपि न मनुष्यविषयमित्याह—**देवेति**। देवाश्चंद्रादयस्तदंशाः सुग्रीवादयः। आदिपदेन विश्वामित्रादीनामृषीणां ग्रहणम् एतच्च देवदेवांशादिष्वेव विषयेषु भवतीति योजना। कुत इत्यत आह—**उक्तंचेति**। दुश्चरितादविरतो यः कश्चित्सोऽमलाशयो भूत्वा वासुदेवे सम्यग्भक्तो न भवेत्। तथाऽभक्तः। श्रवणकीर्तनादिभक्तिलिंगरहितः। एवमसमाहितो विषयविक्षिप्तमनाश्च। देवादयश्च क्वचिदेवं भूत्वा अपि सम्यग्भक्ता भवंति। कुतः ज्ञानतः सम्यग्व्यवसायत्वात्। ननु देवादिभ्योऽन्योऽपि सुदुराचारस्तद्भक्तो दृश्यते शंखचक्रांकितबाहुमूलत्वादिलिंगवत्त्वात् कथमेतदित्यत आह—**अतोऽन्य इति**। भवति चेत्सुदुराचारोऽपि भक्तिलिंगवानिति शेषः। मा भूत्सुदुराचारो भक्तः। मध्यमदुराचारस्तु तथाविधः कथमित्यत आह—**साधारणेति। महतीति**। वक्ष्यमाणसाधारणभक्तिव्यवच्छेदार्थं सुदुराचाराणामपि भगवत्प्रेम्णोनुभवसिद्धत्वात्कथं दांभिकत्वानुमानमित्यत आह—**साधारणेति**। अल्पेत्यर्थः। प्रेमानुभवाभावेऽनुमानमुक्तम्। महाभक्त्यभावविषयं वेति भावः। सुदुराचारोऽपि भक्तिलिंगवान्महाभक्त एवास्तु किं दांभिकत्वादिकल्पनयेत्यत आह—**स इति**। शठमतिः दंभबुद्धिः। महाभक्तेर्दुराचारोपशमेहेतुत्वोक्तेश्च न तयोरेकत्र समावेश इत्याह—**सेति**। हरिभक्तिः। इतश्चैवमित्याह—**वेदा इति**। मम मया परस्य गुह्यं न च भिन्नपूर्वं। पिशुनत्वं नाचरितं। उपस्थमुदरं पाणिर्वागिति चत्वारि। मे मया। एकांतभावेन नियतमनसा सत्वमंतःकरणं कारणसामग्र्यां सत्यां कार्यानुदयो ह्याश्चर्यहेतुः। नन्वाचारस्य ज्ञानसाधनत्वोक्त्या दुराचाराणां ज्ञानाभावः सिध्यतु। महाभक्त्यभावस्तु कुत इत्यत आह—**ज्ञानेति**। कुत एतदित्यत आह—**तथाहीति**। भक्तिज्ञानयोरविनाभूतत्वाच्च तदभावे तदभावसिद्धिरित्याह—**भक्तिरिति** ॥ ३१ ॥

**रा० भा०**—ननु "नाविरतो दुश्चरितान्नाशांतो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" इत्यादिश्रुतेराचारव्यतिक्रम उत्तरोत्तरभजनोत्पत्तिप्रवाहं निरुणद्धीत्यत्राह। मत्प्रियत्वकारितानन्यप्रयोजनमद्भजनेन विधूतपापतयैव समूलोन्मूलितरजस्तमोगुणः क्षिप्रं धर्मात्मा भवति क्षिप्रमेव विरोधिरहितसपरिकरमद्भजनैकमना भवति। एवंरूपभजनमेव हि धर्मस्यास्य परंतपेत्युपक्रमे धर्मशब्दोदितां शश्वच्छान्तिं निगच्छति शाश्वतीमपुनरावर्तिनीं मत्प्राप्तिविरोध्याचारनिवृत्तिं गच्छति। कौन्तेय त्वमेवास्मिन्नर्थेप्रतिज्ञां कुरु मद्भक्तावुपक्रान्तो विरोध्याचारमिश्रोऽपि न नश्यति अपि तु मद्भक्तिमाहात्म्येन सर्वं विरोधिजातं नाशयित्वा शाश्वतीं विरोधिनिवृत्तिमधिगम्य क्षिप्रं परिपूर्णभक्तिर्भवति॥३१॥

**अ० टी०**—एवं प्रवृत्तस्य दुराचारादिकं नश्यतीत्याह—**क्षिप्रमिति**। क्षिप्रं शीघ्रं धर्मात्मा मत्सेवनयोग्यो भवति, ततः शश्वच्छान्तिं शाश्वतीं शान्तिं मद्रूपां नितरां भावात्मरूपेण गच्छति प्राप्नोतीत्यर्थः। तस्मात् हे कौंतय! मत्कृपापात्र! तथादुराचरणशीलेऽपि मद्भक्ते निर्दोषभावेन साधुत्वं मत्वा मद्भक्ते दोषदृष्टिषु प्रतिजानीहि प्रतिज्ञां कुरु यन्मे भक्तो दुराचारादिदोषैर्न प्रणश्यति दोषा एव नश्यन्तीत्यर्थः। एवं मद्भक्ताधिक्यवर्णनेनाहं तुष्टो भविष्यामीतिभावः ॥ ३१ ॥

**नी० टी०**—सम्यग्व्यवसितत्वादेव क्षिप्रं शीघ्रं धर्मात्मा भवति शान्तिं च शश्वत् निगच्छति प्राप्नोति। हे कौंतेय त्वमेव मदाज्ञया प्रतिजानीहि प्रतिज्ञां कुरु मे मम भगवतो हरेर्भक्तो न नश्यतीति ॥ ३१ ॥

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ॥**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥**

**शां० भा०**—किंच—मां हीति। मां हि यस्मात्पार्थ व्यपाश्रित्य मामाश्रयत्वेन गृहीत्वा येऽपि स्युर्भवेयुः पापयोनयः पापा योनिर्येषां ते पापयोनयः पापजन्मानः। के त इत्याह स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति गच्छन्ति परां गतिं प्रकृष्टां गतिम् ॥ ३२ ॥

**शां० आ०**—इतश्च भगवद्भक्तिर्विधातव्येत्याह—**किंचेति** । न मे भक्तः प्रणश्यतीत्यत्र हेतुमाचक्षाणो भक्त्यधिकारे जातिनियमो नास्तीत्याह—**मां हीति** ॥ ३२ ॥

**आ० भा०**—॥ ३२ ॥

**आ० ज०**—॥ ३२ ॥

**रा० भा०**—**स्त्रियो वैश्याः शूद्राश्च पापयोनयोऽपि मां व्यपाश्रित्य परां गतिं यान्ति ॥ ३२ ॥**

**अ० टी०**—नन्वेवं भक्ते हीनाधिकारित्वं स्यादित्यत आह—**मां हीति** । हे पार्थ ! मातृसंबन्धेनोत्पन्नभक्तिरूप ! हीति निश्चयेन मां व्यपाश्रित्य विशेषेण आश्रित्य संसेव्य ये पापयोनयोऽपि स्युः नीचयोनयः अन्त्यजादयो म्लेच्छादयश्च, स्त्रियः परतन्त्रैकयोनयो, वैश्याः केवलं कृष्यादिपरा उदरम्भराः, तथा शूद्राः शोकेन द्रवीभूता अनुपदेश्यास्तेऽपि परां गतिं मोक्षं सायुज्यं यान्ति प्राप्नुवन्तीत्यर्थः । तत्र ये इतिपदेन स्वसेवार्थोत्पादिताऽतिरिक्ता इति ज्ञापितम् ॥ ३२ ॥

**नी० टी०**—किंच हे पार्थ! हि प्रसिद्धं मां व्यपाश्रित्य आश्रित्य येऽत्यंतं पापयोनयः स्त्र्यादयस्तेऽपि परां गतिं यांति ॥ ३२ ॥

## किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥
## अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥

**शां० भा०**—**किं पुनरिति । किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयो भक्ता राजर्षयस्तथा राजानश्च त ऋषयश्चेति राजर्षयः । यत एवमतोऽनित्यं क्षणभङ्गुरमसुखं च सुखवर्जितमिमं लोकं मनुष्यलोकं प्राप्य पुरुषार्थसाधनं दुर्लभं मनुष्यत्वं लब्ध्वा भजस्व सेवस्व माम् ॥ ३३ ॥**

**शां० आ०**—यदि पापयोनिः पापाचारश्च त्वद्भक्त्या परां गतिं गच्छति तर्हि किमुत्तमजातिनिमित्तेन संन्यासादिना किं वा सद्वृत्तेनेत्याशङ्क्याऽऽह—**किं पुनरिति** । उत्तमजातिमतां ब्राह्मणादीनामतिशयेन परा गतिर्यतो लभ्यतेऽतो भगवद्भजनं तैरेकान्तेन विधातव्यमित्याह—**यत इति** । मनुष्यदेहातिरिक्तेषु पश्वादिदेहेषु भगवद्भजनयोग्यताभावात्प्राप्ते मनुष्यत्वे तद्भजने प्रयतितव्यमित्याह—**दुर्लभमिति** ॥ ३३ ॥

**आ० भा०**—॥ ३३ ॥

**आ० ज०**—॥ ३३ ॥

**रा० भा०**—**किं पुनः पुण्ययोनयो ब्राह्मणाः राजर्षयश्च भक्तिमाश्रिताः अतस्त्वं राजर्षिरस्थिरं तापत्रयाभिहततया असुखं चेमं लोकं प्राप्य वर्तमानो मां भजस्व ॥ ३३ ॥**

**अ० टी०**—यत्र हीनाधिकारिणः परमां गतिं प्राप्नुवन्ति तत्रोत्तमाधिकारिणां किं वक्तव्यमित्याह—**किं पुनरिति** । पुण्याः वेदोक्तमत्स्वरूपज्ञानार्थं पूर्वं वेदाध्ययनकारिणो ब्राह्मणाः, तथा पुण्यधर्मादिकरणेन प्रजाप्रतिपालकाः राजर्षयः राजानः क्षत्रिया भूत्वा ऋषयः ब्रह्मकर्मनिष्ठा उत्तमाधिकारिणो भक्ताः सन्तः परां गतिं प्राप्नुवन्तीति किं पुनर्वक्तव्यम् । तेषां तु साक्षाद्भजनौपायिकत्वमेव भवतीति भावः । एतेन उत्तमाधिकारिणां तु भवत्येव यत्र हीनाधिकारिणामपि भवतीत्यनेन 'अधिकं तत्रानुप्रविष्टं नतु तद्धानिः' इत्ययं न्यायः प्रदर्शितः । एतेनोत्तमानामेतदभावे हीनत्वमेवेति व्यञ्जितम् । यत उत्तमाधिकारिणामावश्यकमतस्तव क्षत्रियत्वात् स्वधर्मनिष्ठत्वाद् भक्तपुत्रत्वाच्चोत्तमाधिकारित्वेनावश्यं कर्तव्यमित्याह—**अनित्यमिति** । इमं लोकमधिकरणं देहं प्राप्य अनित्यम् असुखं संसारं त्यक्त्वा ज्ञात्वा वेतिशेषः, मां भजस्व ॥ ३३ ॥

**नी० टी०**—ब्राह्मणादयः पुनः पुण्याः मदाश्रयेण परां गतिं यांतीत्यत्र किं चित्रं अतस्त्वं इमं मर्त्यलोकं अनित्यं नश्वरं असुखं सुखलेशहीनं प्राप्य मां परमात्मानं भजस्व लोकांतरे भजनं न भविष्यतीत्यर्थः । तथा च श्रुतिः । "इह चेदवेदीदथ सत्यमस्ति न चेदवेदीन्महती विनष्टिः" इति ॥ ३३ ॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

**शां० भा०**—कथम्—मयि मनो यस्य स त्वं मन्मना भव । तथा मद्भक्तो भव । मद्याजी मद्यजनशीलो भव। मामेव च नमस्कुरु मामेवेश्वरमेष्यस्यागमिष्यसि युक्त्वा समाधाय चित्तम् । एवमात्मानमहं हि सर्वेषां भूतानामात्मा परा च गतिः परमयनं तं मामेवंभूतमेष्यसीत्यतीतेन पदेन संबन्धः । मत्परायणः सन्नित्यर्थः ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

**शां० आ०**—भगवद्भक्तेरित्थंभावं पृच्छति—**कथमिति** । ईश्वरभजन इतिकर्तव्यतां दर्शयति—**मन्मना इति** । एवं भगवन्तं भजमानस्य मम किं स्यादित्याशङ्कयाऽऽह—**मामेवेति** । समाधाय भगवत्येवेति शेषः । एवमात्मानमित्येतद्विवृणोति—**अहं हीति** । अहमेव परमयनं तवेति मत्परायणस्तथाभूतः सन्मामेवाऽऽत्मानमेष्यसीति संबन्धः । तदेवं मध्यमानां ध्येयं निरूप्य नवमेनाधमानामाराध्याभिधानमुखेन निजेन पारमार्थिकेन रूपेण प्रत्यक्त्वेन ज्ञानं परमेश्वरस्य परमाराधनमित्यभिदधता सोपाधिकं तत्पदवाच्यं निरुपाधिकं च तत्पदलक्ष्यं व्याख्यातम् ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने नवमोऽध्यायः ॥ ९ ॥

**आ० भा०**—॥ ३४ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितश्रीमद्गीताभाष्येनवमोध्यायः ॥ ९ ॥

**आ० ज०**—॥ ३४ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यगीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां नवमोऽध्यायः ॥ ९ ॥

**रा० भा०**—भक्तिस्वरूपमाह । मन्मना भव मयि सर्वेश्वरे निखिलहेयप्रत्यनीककल्याणैकताने सर्वज्ञे सत्यसंकल्पे निखिलजगदेककारणे परस्मिन् ब्रह्मणि पुरुषोत्तमे पुण्डरीकदलामलायतेक्षणे स्वच्छनीलजीमूतसंकाशे युगपदुदितदिनकरसहस्रतेजसि लावण्यामृतमहोदधावुदारपीवरचतुर्बाहावत्युज्ज्वलपीताम्बरे अमलकिरीटमकरकुण्डलहारकेयूरकटकादिभूषितेऽपारकारुण्यसौशील्यसौन्दर्यमाधुर्य्यगाम्भीर्य्यौदार्य्यवात्सल्यजलधावनालोचितविशेषाशेषलोकशरण्ये सर्वस्वामिनि तैलधारावदविच्छेदेन निविष्टमना भव। तदेव विशिनष्टि। मद्भक्तः अत्यर्थमत्प्रियत्वेन युक्तो मन्मना भवेत्यर्थः। पुनरपि विशिनष्टि । मद्याजी अनवधिकातिशयप्रियमदनुभवकारितमद्यजनपरो भव। यजनं नाम परिपूर्णशेषवृत्तिः औपचारिकसां-

स्पर्शिकाभ्यवहारिकादिसकलभोगप्रदानरूपो हि यागः यथा मदनुभवजनितनिरवधिकातिशयप्रीतिकारितमद्यजनपरो भवसि तथा मन्मना भवेत्युक्तं भवति। पुनरपि तदेव विशिनष्टि। मां नमस्कुरु अनवधिकातिशयप्रियमदनुभवकारितात्यर्थप्रियाशेषशेषवृत्तावपर्यवस्यन् मय्यन्तरात्मन्यतिमात्रप्रह्वीभावव्यवसायं कुरु मत्परायण अहमेव परमयनं यस्यासौ मत्परायणः मया विनाऽऽत्मधारणासंभावनया मद्व्याश्रय इत्यर्थः। एवमात्मानं युङ्क्त्वा मत्परायणस्त्वमेवमनवधिकातिशयप्रीत्या मदनुभवसमर्थं मनः प्राप्य मामेवैष्यसि। आत्मशब्दो ह्यत्र मनोविषयः। एवंरूपेण मनसा मां ध्यात्वा मामनुभूय मामिष्ट्वा मां नमस्कृत्य मत्परायणो मामेव प्राप्स्यसीत्यर्थः। तदेवं लौकिकानि शरीरधारणार्थानि वैदिकानि च नित्यनैमित्तिकानि कर्माणि मत्प्रीतये मच्छेषतैकरसो मयैव कारित इति कुर्वन् सततं मत्कीर्तनयजननमस्कारादिकान् प्रीत्या कुर्वाणो मन्नियाम्यनिखिलजगन्मच्छेषतैकरसमिति चानुसंदधानोऽत्यर्थप्रियमद्गुणगणं चानुसंधायाहरहर्मदुक्तलक्षणमिदमुपासनमुपादधानो मामेव प्राप्स्यसि ॥ ३४ ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमद्गीताभाष्ये नवमोऽध्यायः ॥ ९ ॥

अ० टी०—भजने प्रकारमाह—**मन्मना इति**। मय्येव मनो यस्य तादृशो भूत्वा मद्भक्तो मयि स्नेहयुक्तश्च सन् मद्याजी मत्पूजकः परिचर्याकरणशीलो मां नमस्कुरु। मनोनिवेशनेन मनोभजनमुक्तम्। पूजनेन कायिकम्। नमनोक्त्या वाचिकम्। ततः कायवाङ्मनोभिर्भजनं कुर्वित्युक्तम्। एवं मत्परायणः सन् आत्मानं मयि युक्त्वा युक्तं कृत्वा अवश्यं मामेव पुरुषोत्तमम् एष्यसि प्राप्स्यसि। एवकारेणाक्षरांशादिप्राप्तिर्निवारिता ॥ ३४॥

'एवं स्वभक्तिमाहात्म्यं भजनार्थं ससाधनम् ॥ प्रोवाच नवमेऽध्याये श्रीकृष्णो ह्यर्जुनाय तु ॥ १ ॥'

इति श्रीभगवद्गीताटीकायां गीताऽमृततरङ्गिण्यां नवमोऽध्यायः ॥ ९ ॥

**नी० टी०**—भजनप्रकारं दर्शयति—**मन्मना इति**। मय्येव मनो यस्य न पुत्रादौ स मन्मनाः। ममैव भक्तो न राजादेर्धनाद्यर्थं स मद्भक्तः। मद्याजी मदर्थमेव यजते न स्वर्गाद्यर्थं स मद्याजी तादृशो भव। मामेव नमस्कुरु शरणं व्रज न त्वन्यान्। एवमनेन प्रकारेण युक्त्वा योगं कृत्वा मामेवात्मानं सर्वान्तरं एष्यसि प्राप्स्यसि अभेदेन घटाकाश इव महाकाशं। यतो मत्परायणः अहमेव सर्वोपाधिशून्यश्चिदात्मा परं सर्वोत्कृष्टं अयनं प्राप्यं यस्य स मत्परायणः। तथा च श्रूयते। "यथा नद्यः स्यंदमानाः समुद्रेऽस्तं गच्छंति नामरूपे विहाय ॥ तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति ॥ ३४ ॥

इति भीष्मपर्वणि नैलकंठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे नवमोऽध्यायः ॥ ९ ॥

( श्लोकानामादितः समष्ट्यङ्काः—३४३ )



## ॥ अथ दशमोऽध्यायः ॥ १० ॥

**श्रीभगवानुवाच—भूय एव महाबाहो शृणु मे परमं वचः ॥**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥**

**शां० भा०**—सप्तमेऽध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिता नवमे च । अथेदानीं येषु येषु भावेषु चिन्त्यो भगवांस्ते ते भावा वक्तव्याः । तत्त्वं च भगवतो वक्तव्यमुक्तमपि दुर्विज्ञेयत्वादित्यतः—भूय एव भूयः पुनर्हे महाबाहो शृणु मे मदीयं परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचो वाक्यं, यत्परमं ते तुभ्यं प्रीयमाणाय । मद्वचनात्प्रीयसे त्वमतीवामृतमिव पिबंस्ततो वक्ष्यामि हितकाम्यया हितेच्छया ॥ १ ॥

**शां० आ०**—अध्यायद्वये सिद्धमर्थं संक्षेपतोऽनुभाषते—**सप्तम इति** । तत्त्वं सोपाधिकं निरुपाधिकं च । विभूतयः सविशेषनिर्विशेषरूपप्रतिपत्त्युपयोगिन्यः । उत्तराध्यायस्याध्यायद्वयेन संबन्धं वदन्नध्यायान्तरमवतारयति—**अथेति** । वक्तव्याः सविशेषध्याने निर्विशेषप्रतिपत्तौ च विशेषत्वेनेति शेषः । ननु सविशेषं निर्विशेषं च भगवतो रूपं प्रागेव तत्र तत्रोक्तं तत्किमिति पुनरुच्यते तत्राऽऽह—**उक्तमपीति** । यद्यपि तत्र तत्र तत्त्वमुक्तं तथाऽपि पुनर्वक्तव्यं दुर्विज्ञेयत्वादिति यतो मन्यतेऽत इति योजना । प्रकृष्टत्वं वचसः स्पष्टयति—**निरतिशयेति** । तदेव वचो विशिनष्टि—**यत्परममिति** । सकृदुक्तेरर्थसिद्धेरसकृदुक्तिरनर्थिकेत्याशङ्क्याऽऽह—**प्रीयमाणायेति** । ततो वक्ष्यामि तुभ्यमिति पूर्वेण संबन्धः । हितं दुर्विज्ञेयं तत्त्वज्ञानम् ॥ १ ॥

**आ० भा०**—ॐम् उपासनार्थं विभूतीः विशेषणकारणत्वं च केषां चिदनेनाध्यायेनाह—प्रीयमाणाय श्रुत्वा संतोषं प्राप्नुवते ॥ १ ॥

**आ० ज०**—प्रकृतसंगतत्वेनाध्यायप्रतिपाद्यं दर्शयति—**उपासनार्थमिति** । षष्ठे ध्यानमुक्तं तन्नवमांते मन्मनाभवेति स्मारितं तच्च ध्येयसापेक्षं विशिष्टाधिकारिणां च भगवद्विभूतय उपास्याः अतस्ता आहानेन दशमाध्यायेन तत्रादौ केषां चिद्बुद्ध्यादीनां-महर्ष्यादीनां च विशेषकारणत्वमपि भगवत आहेत्यर्थः । विभूतिशब्दार्थस्तात्पर्यनिर्णयेऽभिहितः । तदुक्तेर्भूयस्त्वात्प्रथममुपादानं । अत एवैकवाक्यता । ननु विभूतयो रसोऽहमित्यादिनोक्ता एव । सत्यं । अत एव विस्तरेणात्मन इति वक्ष्याति । विशेषकारणत्वं नाम सामर्थ्यातिशयोपेततया निर्माणं । प्राक्शोकसंविग्नमानस इत्युक्तं । तद्विरुद्धं कथं प्रीयमाणायेत्युच्यत इत्यतो व्याचष्टे—**प्रियमाणायेति** । पूर्वं बंधुस्नेहाच्छोक उक्तः इदानीं भगवद्वचनश्रवणनिमित्तात्संतोषप्राप्तिः श्रोतृत्वसंपत्प्रतिपादनायोच्यत इति न विरोध इति भावः ॥ १ ॥

**रा० भा०**—भक्तियोगः सपरिकर उक्तः इदानीं भक्त्युत्पत्तये तद्विवृद्धये च भगवतो निरङ्कुशैश्वर्यादिकल्याणगुणगणानन्त्यं कृत्स्नस्य जगतस्तच्छरीरतया तदात्मकत्वेन तत्प्रवर्त्यत्वं च प्रपञ्च्यते । मम माहात्म्यं श्रुत्वा प्रीयमाणाय ते मद्भक्त्युत्पत्तिविवृद्धिरूपरहितकामनया भूयो मन्माहात्म्यप्रपञ्चविषयमेव परमं वचो यद्वक्ष्यामि तदवहितमनाः शृणु ॥ १ ॥

**अ० टी०**—श्रीकृष्णायनमः ॥ 'नवमे भक्तिरूपं यदुक्तं तत्सिद्धये हरिः ॥ स्वविभूतिस्वरूपं च कृपया दशमेऽब्रवीत् ॥ १ ॥' पूर्वाध्याये सर्वकर्मसमर्पणमुक्तं ततश्च भक्तिकरणमाज्ञप्तं । तच्च स्वरूपाज्ञानेन कृतमप्यकृतप्रायमिति स्वरूपज्ञानार्थं स्वस्वरूपं स्वविभूतिरूपं वदन् पार्थं श्रवणार्थं सावधानतया सम्मुखीकुर्वन् प्रतिजानीते—**श्रीभगवानुवाच** । **भूय एवेति** । हे महाबाहो ! भजनौपयिककृपाशक्तिमन् ! भूय एव पुनरपि मम वचनश्रवणेन प्रीयमाणाय परमानन्दं प्राप्नुवते ते हितकाम्यया यदहं वक्ष्यामि तत् परमं परो मीयते ज्ञायतेऽनेनेति परमार्थरूपमुत्कृष्टं मे वचः शृणु । प्रीयमाणायेति पदेनान्येभ्योऽवक्तव्यत्वं गोप्यत्वं च ज्ञापितं । हितकाम्ययेतिपदेन परमकृपा दर्शिता ॥ १ ॥

नी० टी०—सप्तमे त्वंपदवाच्योर्थो निरूपितः तदुपासनाच्च क्रममुक्तिरित्यष्टमे प्रोक्तं नवमे तत्पदलक्ष्यार्थ उक्तस्तत्प्राप्तये च विश्वतोमुखं सर्वत्र भगवद्भावभावनात्मकं भगवद्भजनमुक्तं। तद्रागद्वेषकलुषितमनसामशक्यमिति मन्वानो भगवांस्तत्सिद्धये स्वविभूतीः केषुचिदेव पदार्थेषु भगवद्बुद्धिविधानार्थास्तावद्दर्शयति दशमे। तत्फलभूतं विश्वतोमुखस्योपासनं तेन च विश्वरूपदर्शनमेकादशे। द्वादशे पुनस्तत्पदलक्ष्यस्याव्यक्तस्योपासनं तदुपासकलक्षणानि चोक्त्वा उपासनाकांडं तत्पदार्थशोधनार्थं समापयिष्यति तत्र वात्सल्यात्स्वयमेव श्रीभगवानुवाच—**भूय एवेति**। हे महाबाहो भूयः प्रागुक्तमपि पुनर्मे परमं निरतिशयवस्तुनः प्रकाशकं वचः शृणु प्रीयमाणाय अमृतपानादिवन्मद्वचनात्प्रीतिमनुभवते वक्ष्यामि हितकाम्यया तव हितेच्छया॥ १॥

**न मे विदुः सुरगणाः प्रभवं न महर्षयः॥**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः॥२॥**

**शां० भा०**—किमर्थमहं वक्ष्यामीत्यत आह—न मे विदुर्न जानन्ति सुरगणा ब्रह्मादयः। किं ते न विदुः, मम प्रभवं प्रभावं प्रभुशक्त्यतिशयम्, अथ वा प्रभवं प्रभवनमुत्पत्तिम्। नापि महर्षयो भृग्वादयो विदुः। कस्मात्ते न विदुरित्युच्यतेऽहमादिः कारणं हि यस्माद्देवानां महर्षीणां च सर्वशः सर्वप्रकारैः॥ २॥

**शां० आ०**—कश्चिदन्योऽपि परमं वचो मह्यं वक्ष्यति तेन च मम तत्त्वज्ञानं भविष्यत्यतो भगवद्वचनमकिंचित्करमिति शङ्कित्वा परिहरति—**किमर्थमित्यादिना**। इन्द्रादयो भृग्वादयश्च भगवत्प्रभावं न विदन्तीत्यत्र प्रश्नपूर्वकं हेतुमाह—**कस्मादिति**। निमित्तत्वेनोपादानत्वेन च यतो देवादीनां भगवानेव हेतुरतस्तद्विकारस्ते न तस्य प्रभावं विदुरित्यर्थः॥ २॥

**आ० भा०**—प्रभवं प्रभावं मदीयां जगदुत्पत्तिं वा। तद्वशत्वात्तस्येत्युच्यते। यद्यस्ति तर्हि देवादयोऽपि जानंति सर्वज्ञत्वादतो नास्तीति भावः। अहमादिर्हीति तूत्पत्तिरपि यस्य वशा कुतस्तस्य जनिरिति ज्ञापनार्थम्। अहं सर्वस्य जगतः प्रभवः प्रलय इति चोक्तम्। उक्तं चैतत्सर्वमन्यत्रापि। "को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः। अर्वाग्देवा अस्य विसर्जनेनाथाको वेद यत आबभूव" इति "न तत्प्रभावमृषयश्च देवा विदुः कुतोऽन्येऽल्पधृतिप्रमाणाः" इतिऋग्वेदखिलेषु। अन्यस्त्वर्थो यो मामजमिति वाक्यादेव ज्ञायते॥ २॥

**आ० ज०**—प्रभवशब्दः केनचित्सामर्थ्यमात्रवाचित्वेन व्याख्यातः अन्येन तु भगवदुत्पत्तिवाचित्वेन तदुभयमंगीकुर्वन्नधिकमपि विवक्षुराह—**प्रभवमिति**। मदीयामुत्पत्तिमिति संबंधः। जगदुत्पत्तिर्मे इतिकथं विशेष्यत इत्यत आह—**तदिति**। जगदुत्पत्तिरिति वर्तते। एवं तर्हि भगवत्प्रभाववज्जगदुपत्तिवच्च भगवदुत्पत्तिरस्त्येव किं तु दुर्ज्ञानैवेत्यापन्नमित्यत आह—**यदीति**। भगवदुत्पत्तिरितिशेषः। सर्वज्ञत्वात्सामान्यत इति शेषः। ततः परं न च सामान्यतोऽपि जानंतीत्यध्याहारः। अतः सर्वथाऽनुपलंभात्। प्रभावादिकं तु विशेषत एव न जानंति न तु सामान्यतोऽपीति भावः। ननु भगवदुत्पत्तेरभावश्चेदत्राभिप्रेतस्तदाहमादिर्हीति हेतुवचनं न संगच्छते। अत्रहि देवादयोऽर्वाक्तना मया सृष्टाः कथं पूर्वतनीमुत्पत्तिं जानीयुरिति प्रतीयत इत्यत आह—**अहमिति**। अपिशब्दोऽध्याहृतेन सर्वस्येत्यनेन संबध्यते। कुतो जनकात्। नन्वत्र सर्वस्याप्युत्पत्तिर्भगवदधीनेति नोच्यते। किंतु देवादीनामेव तत्कथमनेन कारणाभावः सिध्यतीति चेत्। न। देवादिशब्दस्योपलक्षणार्थत्वात्। तत्कुत इत्यत आह—**अहमिति**। उक्तमर्थत्रयमुपपादयति—**उक्तं चेति**। इयं विसृष्टिर्विविधा जगत्सृष्टिः कुतः कारणादाजातेति कः पुरुषः कुतः प्रमाणादद्धा वेद कश्चेह लोके प्रावोचत्। न कोऽपि कुतश्चित् यतो देवा अस्येश्वरस्य विसर्जनेन निष्प्रभा अर्वाचीनाः। सर्वथाऽप्यज्ञाने तदभावः स्यादित्यत उक्तं अथान्यत् यतो यस्मात् इयमाबभूव स कः प्रजापतिर्भगवानद्धा वेदेत्यर्थः। न तत्प्रभावमित्यत्राद्धेति द्रष्टव्यं। अत एव व्युत्क्रमः। प्रमाणं प्रमा। अन्यस्त्वर्थो भगवतो जन्माभावः॥ २॥

**रा० भा०**—सुरगणा महर्षयश्चातीन्द्रियार्थदर्शिनोऽधिकतरज्ञाना अपि मे प्रभवं प्रभावं न विदुः मम नामकर्मस्वरूपस्वभावादिकं न जानन्ति। यतस्तेषां देवानां महर्षीणां च सर्वशोऽहमादिः तेषां स्वरूपस्य ज्ञानशक्त्यादेश्चाहमादिः तेषां देवत्वदेवऋषित्वादिहेतुभूतपुण्यानुगुणं मया दत्तं ज्ञानं परिमितम् अतस्ते परिमितज्ञानाः मत्स्वरूपादिकं यथावन्न जानन्ति ॥ २ ॥

**अ० टी०**—अथ स्वकृपां विना अस्योक्तस्वस्वरूपस्यातिदुर्ज्ञेयत्वेन दुर्लभत्वमाह—**न म इति**। मे मम प्रभवं प्रकृष्टं भवं जन्म प्रादुर्भावमिति यावत् सुरगणा ब्रह्मेन्द्रादयः महर्षयो भृग्वादयो न विदुः न जानान्ति। अहं देवानां ब्रह्मादीनां सर्वशः सर्वप्रकारैः आधिदैविकत्वेन देवत्वेन च आदिः मूलभूतः। च पुनस्तथैव महर्षीणां। हीति निश्चयेन संदेहाभावार्थं देवत्वाद् ऋषित्वात् स्वमूलभूतत्वेन ज्ञानमावश्यकं तथापि भूभारहरणार्थं स्वरक्षार्थं धर्मक्षार्थं प्रादुर्भावं जानन्ति परं यदर्थं यद्रूपश्च प्रादुर्भावस्तं मत्कृपां विना न जानन्तीति भावः ॥ २ ॥

**नी० टी०**—दुर्ज्ञेयत्वाच्च मत्स्वरूपस्याहं त्वां ब्रवीमीत्याह—**न मे इति**। प्रभवं प्रकृष्टं भवं ऐश्वर्यं वियदादिसृष्टिसामर्थ्यं न विदुः तत्र हेतुः अहमिति अयं भावः। देहोत्पत्त्यनंतरं हि देवादीनां बुद्ध्यादिलाभो न चार्वाचीनैर्बुद्ध्यादिभिः। स्वोत्पत्तिप्राक्कालीनोर्थः परिच्छेत्तुं शक्यत इति पदार्थः स्पष्टः ॥ २ ॥

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

**शां० भा०**—किंच—यो मामजमनादिं च यस्मादहमादिर्देवानां महर्षीणां च न ममान्य आदिर्विद्यतेऽतोऽहमजोऽनादिश्चानादित्वमजत्वे हेतुस्तं मामजमनादिं च यो वेत्ति विजानाति लोकमहेश्वरं लोकानां महान्तमीश्वरं तुरीयमज्ञानतत्कार्यवर्जितमसंमूढः संमोहवर्जितः स मर्त्येषु मनुष्येषु सर्वपापैः सर्वैः पापैर्मतिपूर्वामतिपूर्वकृतैः प्रमुच्यते प्रमोक्ष्यते ॥ ३ ॥

**शां० आ०**—इतश्च कश्चिदेव भगवत्प्रभावं वेत्तीत्याह—**किंचेति**। कोऽसौ प्रभावो भगवतो यं बहवो न विदुरित्यपेक्षायां पारमार्थिकं प्रभावं तद्धीफलं च कथयति—**यो मामिति**। पदद्वयापौनरुक्त्यमाह—**अनादित्वमिति** ॥ ३ ॥

**आ० भा०**—अनश्चेष्टयिता आदिश्च सर्वस्येत्यनादिः। अजत्वेन सिद्धेरितरस्य ॥ ३ ॥

**आ० ज०**—अजशब्दागतार्थतयाऽनादिशब्दं व्याचष्टे—**अन इति**। सर्वस्येत्युभयशेषः। अंतर्णीतण्यर्थादनतेः पचाद्यच्। न विद्यते आदिकारणमस्येत्यनादिरिति अन्ये। तदसत्। आर्थिकपुनरुक्तेरपरिहारादित्याह—**अजत्वेनेति**। इतरस्य कारणराहित्यस्य। अजत्वे हेतुरयमुच्यत इति चेत् भैवं। तज्ज्ञापकविभक्त्याद्यभावात्। गत्यंतराभावे हि गमनिकैषा। चेष्टकत्वं प्रागनुक्तं कथमनूद्यत इति चेत् न। प्रभावे सर्वस्यांतर्भावात् ॥ ३ ॥

**रा० भा०**—तदेतदेवाद्यचिन्त्यस्वयाथात्म्यविषयज्ञानं भक्त्युत्पत्तिविरोधिपापविमोचनोपायमाह—न जायते इत्यजः अनेन विकारिद्रव्यादचेतनात्तत्संसृष्टात्संसारिचेतनाच्च विसजातीयत्वमुक्तम् संसारिचेतनस्य हि कर्मकृताऽचित्संसर्गो जन्म। अनादिमित्यनेन पदेनादिमतोऽजान्मुक्तात्मनो विसजातीयत्वमुक्तं मुक्तात्मनो ह्यजत्वमादिमत् तस्य हेयसम्बन्धस्य पूर्ववृत्तत्वात्तदर्हताऽस्ति अतः अनादिमित्यनेन तदनर्हतया तत्प्रत्यनीकतोच्यते। "निरवद्यम्" इत्यादिश्रुत्या च। एवं हेयसम्बन्धः प्रत्यनीकस्वरूपतया तदनर्हं मां लोकमहेश्वरं लोकेश्वराणामपि ईश्वरं मर्त्येष्वसंमूढो यो वेत्ति इतरसजातीयतयैकीकृत्य मोहः संमोहः तद्रहितोऽसंमूढः स मद्भक्त्युत्पत्तिविरोधिभिः सर्वैः पापैः प्रमुच्यते एतदुक्तं भवति। लोके

मनुष्याणां राजा इतरमनुष्यसजातीयः केनचित्कर्मणा तदाधिपत्यं प्राप्तः तथा देवानामधिपतिरपि तथाण्डाधिपतिरपि इतरसंसारिसजातीयः तस्यापि भावनात्रयान्तर्गतत्वात् "यो ब्रह्माणं विदधाति" इति श्रुतेश्च तथान्येऽपि ये केचन अणिमाद्यैश्वर्यं प्राप्ताः। अयं तु लोकमहेश्वरः कार्यकारणावस्थाद-चेतनाद्बद्धान्मुक्ताच्च चेतनादीशितव्यात्सर्वस्मान्निखिलहेयप्रत्यनीकानवधिकातिशयासंख्येयकल्याणैक-तानतया नियमनैकस्वस्वभावतया च विसजातीय इतीतरसजातीयतामोहरहितो यो मां वेत्ति स सर्वैः पापैः प्रमुच्यते इति ॥ ३ ॥

अ० टी०—एवं स्वकृपां विना स्वाज्ञानात् देवानां देवत्वमपि जातं व्यर्थमेवेत्युक्त्वा स्वकृपया ज्ञानेन मनुष्याणामप्युत्तमत्वं भवतीत्याह—**यो मामजमिति**। यो मां मनुष्येषु च अजं जन्मादिदोषरहितम्, अनादिं लीलादिभिर्नित्यमेवंभूतमेव लोकमहेश्वरं लोकानां परमेश्वरं कर्तुमन्यथाकर्तुं समर्थम्, असंमूढः प्रमादरहितः सन् जानाति स सर्वपापैः मद्भक्तिप्रतिबन्धरूपैः प्रमुच्यते प्रकर्षेण मुच्यते मनुष्यभावरहितो देवरूपो भवतीत्यर्थः ॥३॥

नी० टी०—कस्तर्हि त्वां वेत्तीत्यत आह—**य इति**। यः असंमूढः स मां वेत्ति स एव च सर्वपापैः प्रमुच्यत इति संबंधः जडाजडयोर्बुद्ध्यात्मनोरेकीभावेनान्योन्याध्यासलक्षणेन मूढः संमूढस्तद्विपरीतोऽसंमूढस्तत्त्वज्ञानेन बाधिताध्यासः स एवात्मवित्त्वादितरस्य जनिमनुभवन् मां प्रत्यगात्मानं लोकमहेश्वरमनादिं आदिः कारणं तच्छू-न्यमत एवाजमजातं वेत्ति स सर्वैः कृतैः क्रियमाणैर्वा पापैः प्रमुच्यते मर्त्येषु मध्ये ॥ ३ ॥

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ॥**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥**

शां० भा०—इतश्चाहं महेश्वरो लोकानाम्—बुद्धिरन्तःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यम्। तद्वन्तं बुद्धिमानिति हि वदन्ति। ज्ञानमात्मादिपदार्थानामवबोधः। असंमोहः प्रत्युपपन्नेषु बोद्धव्येषु विवे-कपूर्विका प्रवृत्तिः। क्षमाऽऽक्रुष्टस्य ताडितस्य वाऽविकृतचित्तता। सत्यं यथादृष्टस्य यथाश्रुतस्य चाऽऽत्मानुभवस्य परबुद्धिसंक्रान्तये तथैवोच्चार्यमाणा वाक्सत्यमुच्यते। दमो बाह्येन्द्रियोपशमः। शमोऽन्तःकरणस्य। सुखमाह्लादः। दुःखं संतापः। भव उद्भवोऽभावस्तद्विपर्ययः। भयं च त्रासोऽभ-यमेव च तद्विपरीतम् ॥ ४ ॥

शां० आ०—भगवतो लोकमहेश्वरत्वे हेत्वन्तरमाह—**इतश्चेति**। मुमुक्षुभिराराध्यत्वसिद्ध्ये बन्धमोक्षसाधनं पुरस्कृत्याशे-षजगत्प्रकृत्यधिष्ठातृत्वलक्षणं सोपाधिकं भगवत्प्रभावमभिधत्ते—**बुद्धिरिति**। सूक्ष्मादीत्यादिशब्देन सूक्ष्मतरः सूक्ष्मतमश्चार्थो गृह्यते। उक्तं सामर्थ्यं बुद्धिरित्यस्मिन्नर्थे प्रसिद्धिं प्रमाणयति—**तद्वन्तमिति**। आत्मादीति तदवबोधवन्तं हि ज्ञानिनं वदन्ति। अन्तःकरणस्योपशमो विषयेभ्यो व्यावृत्तिरिति शेषः ॥ ४ ॥

आ० भा०—तत्प्रथयति—बुद्धिरित्यादिना। कार्याकार्यविनिश्चयो बुद्धिः। ज्ञानं प्रतीतिः। 'ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यविनिश्चयः' इति ह्यभिधानम्। दम इंद्रियनिग्रहः। शमः परमात्मनि निष्ठा। 'शमोमन्निष्ठताबुद्धेर्दमइंद्रियनिग्रहः' इति भागवते ॥ ४ ॥

आ० ज०—तद्यादिमित्यनेन बुद्धिरित्यादिकं गतार्थमित्यत आह—**तादिति**। सर्वादित्वं बुद्धिरुपलब्धिर्ज्ञानमित्यनर्था-तरमिति गौतमवचनात् बुद्धिर्ज्ञानमिति पुनरुक्तिरित्यत आह—**कार्येति**। कुत एतदित्यत आह—**ज्ञानमिति**। ज्ञायतेऽनेनेति ज्ञानं शास्त्रमित्यसत्। अध्यात्मिकधर्मप्रसंगात्। दमो बाह्येंद्रियोपशमः। शमोंऽतःकरणस्येति कश्चित्। तदसत्। एकेनैवशब्देन सिद्धत्वात्। किं तु दमः क्रियासु विनयः। शमो बाह्यांतःकरणसंयम इत्यपरः। तदप्यसदितिभावेनाह—**दम इति**। कुत इत्यत आह—**शम इति** ॥ ४ ॥

रा० भा०—एवं स्वस्वभावानुसंधानेन भक्त्युत्पत्तिविरोधिपापनिरसनं विरोधिनिरसनादेवार्थतो भक्त्युत्पत्तिं च प्रतिपाद्य स्वैश्वर्यस्वकल्याणगुणगणप्रपञ्चानुसंधानेन भक्तिवृद्धिप्रकारमाह । बुद्धिर्मनसो निरूपणसामर्थ्यम् । ज्ञानं चिदचिद्वस्तुविशेषनिश्चयः । असंमोहः पूर्वगृहीतादजतादेर्विसजातीये शुक्तिकादिवस्तुनि सजातीयताबुद्धिनिवृत्तिः । क्षमा मनोविकारहेतौ सत्यविकृतमनस्त्वम् । सत्यं यथादृष्टविषयं भूतहितरूपं वचनं तदनुगुणा मनोवृत्तिरिहाभिप्रेता मनोवृत्तिप्रकरणात् । दमो बाह्यकरणानामनर्थविषयेभ्यो नियमनम् । शमोऽन्तःकरणस्य तथा नियमनम् । सुखमात्मानुकूलानुभवः । दुःखं प्रतिकूलानुभवः । भवो भवनम् । अनुकूलानुभवहेतुकं मनसो भवनम् । अभावः प्रतिकूलानुभवहेतुको मनसोऽवसादः । भयम् आगामिनो दुःखस्य हेतुदर्शनजं दुःखम् तन्निवृत्तिरभयम् ॥ ४ ॥

अ० टी०—एवं ये जानन्ति तेषामन्येषामजानतां च सर्वेश्वरत्वात् मत्त एव नानाविधा भावास्तत्तज्ज्ञानानुरूपा भवन्तीत्याह द्वयेन—बुद्धिर्ज्ञानमसंमोह इति । बुद्धिः धर्मज्ञानकौशलं, ज्ञानं स्वरूपात्मकम्, असंमोहो मायाविलासेषु, क्षमा दुष्टादिकृतिसहिष्णुता, सत्यम् आपदादिष्वपि यथार्थभाषणं, दम इन्द्रियनिग्रहः, शमः परमानन्दाप्तिरूपा शान्तिः, सुखं मद्भावानन्दरूपं, दुःखम् आनन्दतिरोधानात्मकं, भवः संसारात्मकः, अभावो नाशः, भयं मृत्युकालादीनां, चकारेण यमयातनादयः, अभयं मच्चरणाप्त्या कालादिभयाभावः ॥ ४ ॥

नी० टी०—मम महेश्वरत्वादेव मत्तो बुद्ध्यादयो भवंतीत्याह—बुद्धिरिति । बुद्धिः अंतःकरणस्य सूक्ष्मार्थावबोधने सामर्थ्यं । ज्ञानं आत्मानात्मादिपदार्थावबोधः । असंमोहः प्रत्युत्पन्नेषु बोद्धव्येष्वव्याकुलतया विवेकपूर्विका प्रतिपत्तिः । क्षमा आक्रुष्टस्य ताडितस्य वा अविकृतचित्तता । सत्यं प्रमाणेनावगतस्यार्थस्य यथार्थत्वेन भाषणं । दमो बाह्येन्द्रियनियमः । शमो मनोनिग्रहः । सुखमाह्लादः । दुःखं तापः । भव उत्पत्तिः । भावः सत्ता । अभावस्तद्विपर्ययः । भयं त्रासः । अभयमेव च तद्विपरीतम् ॥ ४ ॥

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ॥**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥**

शां० भा०—अहिंसेति । अहिंसाऽपीडा प्राणिनाम् । समता समचित्तता । तुष्टिः संतोषः पर्याप्तबुद्धिर्लाभेषु । तप इन्द्रियसंयमपूर्वकं शरीरपीडनम् । दानं यथाशक्ति संविभागः । यशो धर्मनिमित्ता कीर्तिः । अयशस्त्वधर्मनिमित्ताऽकीर्तिः । भवन्ति भावा यथोक्ता बुद्ध्यादयो भूतानां प्राणिनां मत्त एवेश्वरात्पृथग्विधा नानाविधाः स्वकर्मानुरूपेण ॥ ५ ॥

शां० आ०—यथाशक्तीति । पात्रे श्रद्धया स्वशक्तिमनतिक्रम्यार्थानां देशकालानुगुण्येन प्रतिपादनमित्यर्थः । उक्तानां बुद्ध्यादीनां साश्रयाणामीश्वरादुत्पत्तिं प्रतिजानीते—भवन्तीति । नानाविधत्वे हेतुमाह—स्वकर्मेति । कथंचिदपि तेषामात्मातिरेकेणाभावान्मत्त एवेत्युक्तम् ॥ ५ ॥

आ० भा०—तुष्टिरलंबुद्धिः । 'अलंबुद्धिस्तथा तुष्टिः' इत्यभिधानात् ॥ ५ ॥

आ० ज०—सुखशब्दागतार्थतया तुष्टिशब्दं सप्रमाणकं व्याचष्टे—तुष्टिरिति ॥ ५ ॥

रा० भा०—अहिंसा परदुःखाहेतुत्वम् । समता आत्मनि सुहृत्सु विपक्षेषु चार्थानर्थयोः समम-तित्वम् । तुष्टिः सर्वेष्वात्मसु दृष्टेषु तोषस्वभावत्वम् । तपः शास्त्रीयो भोगसंकोचरूपः कायक्लेशः । दानं

**स्वकीयभोग्यानां परस्मै प्रतिपादनम् । यशो गुणवत्ता प्रथा अयशो नैर्गुण्यप्रथा कीर्त्यकीर्त्य-नुगुणमनोवृत्तिविशेषौ तथोक्तौ मनोवृत्तिप्रकरणात् । तपोदाने च तथा एवमाद्याः सर्वेषां भूतानां भावाः प्रवृत्तिनिवृत्तिहेतवो मनोवृत्तयो मत्त एव मत्संकल्पायत्ताः भवन्ति ॥ ५ ॥**

**अ० टी०**—अहिंसा दयात्मिका, समता सर्वत्र मद्भावः, तुष्टिः सदामद्भावसन्तोषः, तपो मदर्थक्लेशसहनं, दानं मदुपदेशादीनां, यशो मत्सेवकत्वेन सत्कीर्तिः, अयशो दुष्टत्वादिलक्षणाऽऽत्मिकाऽपकीर्तिः, भूतानाम् एते भावाः पृथग्विधाः भिन्नाः मत्कृपाविशिष्टमज्ज्ञानवतां बुद्ध्यादयः सर्वे भवन्ति । अन्येषामयशःसहितदुःखादिचतुष्टया भावा भवन्तीतिभावः ॥ ५ ॥

**नी० टी०**—अहिंसा प्राणिनामपीडा । समता मित्रामित्रादौ समचित्तता । तुष्टिः संतोषो लब्धे पर्याप्तबुद्धिः । तप इंद्रियसंयमपूर्वकं शरीरपीडनं । दानं यथाशक्ति संविभागः । यशो धर्मनिमित्ता कीर्त्तिः । अयशोऽधर्मनिमित्ता अकीर्त्तिः । एते बुद्ध्यादयो विंशतिभावा मत्त एव प्राणिनां भवंति पृथग्विधाः प्रत्येकं नानाप्रकाराः । तत उत्तम-गुणलाभायाहमेव त्वया शरणीकरणीय इति भावः ॥ ५ ॥

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ॥**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**

**शां० भा०—किंच—महर्षयः सप्त भृग्वादयः पूर्वेऽतीतकालसंबन्धिनश्चत्वारो मनवस्तथा सावर्णा इति प्रसिद्धाः । ते च मद्भावा मद्गतभावना वैष्णवेन सामर्थ्येनोपेता मानसा मनसैवोत्पादिता मया जाता उत्पन्ना येषां मनूनां महर्षीणां च सृष्टिर्लोक इमाः स्थावरजङ्गमाः प्रजाः ॥ ६ ॥**

**शां० आ०**—न केवलं भगवतः सर्वप्रकृतित्वमेव किंतु सर्वज्ञत्वसर्वेश्वरत्वरूपमधिष्ठातृत्वमपीत्याह—**किंचेति** । आद्या भृग्वादयो वसिष्ठान्ताः सर्वज्ञा विद्यासंप्रदायप्रवर्तकाः । तथेति मनूनामपि पूर्वत्वेनाऽऽद्यत्वमनुकृष्यते । के ते मनवस्तत्राऽऽह—**सावर्णा इतीति** । प्रसिद्धाः पुराणेषु प्रजानां पालकाः स्वयमीश्वराश्चेति शेषः । महर्षीणां मनूनां च तुल्यं विशेषणं—**ते चेति** । मयि सर्वज्ञे सर्वेश्वरे गता भावना येषां ते तथा । भावनाफलमाह—**वैष्णवेनेति** । वैष्णव्या शक्त्याऽधिष्ठितत्वेन ज्ञानैश्वर्यवन्त इत्यर्थः । तेषां जन्मनो वैशिष्ट्यमाचष्टे—**मानसा इति** । मन्वादीनेव विशिनष्टि—**येषामिति** । विद्यया जन्मना च संततिभूता मन्वादीनामस्मिँल्लोके सर्वाः प्रजा इत्यर्थः ॥ ६ ॥

**आ० भा०—पूर्वे सप्तर्षयः । 'मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः । वशिष्ठश्चमहातेजा' इति मोक्षधर्मोक्ताः । तेहि सर्वपुराणेषु उच्यंते । चत्वारः प्रथमाः स्वायंभुवाद्याः तेषां हीमाः प्रजाः नहि भविष्यतामिमाः प्रजाइतियुक्तं विभागः प्राधान्यं च प्राथमिकत्वादेव भवति । गौतमखिलेषु चोक्तम् । "स्वायंभुवं रोचिषं च रैवतं च तथोत्तमम् ॥ वेद यः स प्रजावान्" इति । पूर्वेभ्योत्द्युत्तरा जायंतइत्येषांप्राधान्यम् । अजातेषु च ज्यैष्ठ्यम् । तापसस्य भगवदवतारत्वादमुक्तिः । तच्च भागवते प्रसिद्धम् । मानसत्वं च सर्वेषां मनूनामुक्तं भागवते । 'ततो मनून्ससर्जांते मनसा लोकभावनान्' इति । अन्यपुत्रत्वं त्वपरित्यज्यापि शरीरं तद्भवति । प्रमाणं चोभयविधवाक्यान्यथाऽनुपपत्तिरेव । पूर्वइतिविशेषणाच्चैतात्सिद्धिः । मत्तो भावो येषां ते मद्भावाः । ये ते ब्रह्मणो मानसा जातास्ते मत्तएव जाताइति भावः ॥ ६ ॥**

**आ० ज०**—महर्षयः सप्त भृग्वादय इति संकरः । तदसत् । पूर्व इति विशेषणेन प्रथममन्वंतरस्थानामेव ग्रहणस्योचितत्वात् मोक्षधर्मसंवादाच्चेति भावेनाह—**पूर्व इति** । इतोऽपि मरीच्यादय एवेत्याह—**ते हीति** । निरुपपदेन सप्तर्षिशब्देनेति शेषः ।

पूर्व इत्यस्योत्तरत्र संबंधेऽपि एतत्सिद्धमिति भावेनानेकप्रमाणोपन्यासः। ब्रह्मसावर्ण्यो रुद्रसावर्ण्यो दक्षसावर्ण्यो धर्मसावर्ण्य इति भविष्यंतश्चत्वारो मनव इत्यन्ये। तदसदिति भावेनाह—**चत्वारइति**। स्वायंभुवस्वारोचिषरैवतोत्तमाः। प्रथमातिक्रमे कारणाभावादिति भावः। किं च येषां लोक इमाः प्रजा इति विशेषणमेष्वेव संभवति। नेतरेष्वतोऽप्येवमित्याह—**तेषां हीति**। इमा वर्तमानाः प्रजा अपत्यानि। ननु चतुर्दशमनवस्तेषु चतुर्णां यत्पृथक्करणं तत्र कारणेन भाव्यं। अस्ति च तत्परोक्तेषु संज्ञासाम्यं। न तु स्वायंभुवादिषु। अतः कथमेतदित्यत आह—**विभाग इति**। प्राधान्यादेवेति शेषः। संज्ञासाम्यस्याप्रयोजकत्वात्। अन्यथा मेरुसावर्णेरपि ग्रहणप्रसंगादिति भावः। अस्त्वेवं प्राधान्यं च परोक्तानामेवेत्यत आह—**प्राधान्यं चेति**। स्वायंभुवादीनामिति शेषः। किं च श्रुतौ स्वायंभुवादीनामेव पृथक्करणात्त एवात्रेत्याह—**गौतमेति**। पृथक्करणे न फलमितिशेषः। प्राथमिकत्वादेव प्राधान्यं भवतीत्युक्तं तत्कथमित्यत आह—**पूर्वेभ्यो हीति**। तत्संततताविल्यर्थः। तेषां पूर्वेषां उत्तरान्प्रति। तत्संततावजातान् प्रति प्रथमानां कथं प्राधान्यमित्यत आह—**अजातेष्विति**। विषयसप्तमीयं। ज्यैष्ठ्यं प्रथमानां प्राधान्यमित्यर्थः। इदमुक्तं भवति। प्रधानगुणभावो हि सति संबंधे भवति। अयुगपद्भाविषु चैतेषु प्रथमानामेव प्राधान्यं उत्तरेषां गुणत्वमुक्तविधया संभवति। न त्वन्यथा कथमपीति। प्रथमाश्चेद्वृद्यंते तदा चतुर्थस्तापसो गीताऽभिप्रेततया कुतो न व्याख्यायत इत्यत आह—**तापसस्येति**। अनुक्तिरव्याख्यानं भगवति च मद्भावा मानसा जाताइतिविशेषणासंभवादिति भावः। तापसस्य भगवदवतारत्वं कुत इत्यत आह—**तच्चेति**। 'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः॥ हरिरित्याहुतो येन गजेंद्रो मोचितो ग्रहात्' इत्यादिना। ननु यदि विशेषणासंभवात्प्रथमप्राप्तातिक्रमेण तत्संभवतां ग्रहणं। तर्हि मानसा जाता इति विशेषणासंभवादेतान्परित्यज्य ब्रह्मसावर्ण्यादय एव ग्राह्यास्तेषु तत्संभवादिति भास्करस्तत्राह—**मानसत्वं चेति**। चतुर्णां दक्षदुहितरि किल भावो युगपदासीदित्येवंविधं मानसत्वं न सर्वेषामिति चेत् न। अत्रार्थे तद्वितोत्पत्तेरस्मरणात्। ननु ब्रह्मपुत्राः संतु मानसाः। न तु तदा ते मनवः। किं तु मच्छरीरं परित्यज्य प्रियव्रतादिपुत्रा जातास्तदैव। अतो मनुषु मानसत्वमसंभाव्यमित्यत आह—**अन्येति**। तन्मानसं शरीरं अपरित्यज्य स्थितानामप्यन्यपुत्रत्वं संभवतीति योजना। द्वितीये शरीरे जाते तत्पूर्वशरीरेणैक्यमापद्यत इति संप्रदायविदः। किमत्र प्रमाणमित्यत आह—**प्रमाणं चेति**। मनूनामेव ब्रह्ममानसपुत्रत्ववाक्यं प्रियव्रतादिपुत्रत्ववाक्यं चेत्युभयविधवाक्यम्। उपचारत्वकल्पना क्लिष्टैव। किं च पूर्व इति विशेषणं पूर्वेणैव संबध्यते परेणैव वोभाभ्यामपीति त्रयः पक्षाः पक्षत्रयेऽपि चत्वारो मनवः प्रथमा एवेति सिध्यति। आद्ये सप्तर्षीणां प्रथमत्वेन तत्साहचर्यात् द्वितीयतृतीययोर्वचनादेवेति भावेनाह—**पूर्व इति**। मयि भावो येषामिति व्याख्यानं प्रकृतासंगतं कारणत्वस्यात्र प्रकृतत्वादिति भावेनाह—**मत्त इति**। भावो जन्म। ननु मनसो जाताइत्यनेन भगवतस्तत्कारणत्वमुच्यते। मैवम्। ततो मनूनिति वचनस्य सत्वेन ब्रह्मणो मानसा जाता इति व्याख्येयत्वात् तर्हि कथं न व्याहतिरित्यत आह—**ये त इति**। मत्त एव ब्रह्मांतर्यामिणः। ब्रह्मा तु द्वारमात्रमिति भावः॥ ६॥

**रा० भा०—सर्वस्य भूतजातस्य सृष्टिस्थित्योः प्रवर्तयितारश्च मत्संकल्पायत्तप्रवृत्तय इत्याह। पूर्वे सप्त महर्षयः अतीतमन्वन्तरे ये भृग्वादयः सप्त महर्षयो नित्यसृष्टिप्रवर्तनाय ब्रह्मणो मनःसंभवाः नित्यास्थितिप्रवर्त्तनाय ये च सावर्णिका नाम चत्वारो मनवः स्थिताः येषां संतानसमये लोके जाता इमाः सर्वाः प्रजाः प्रतिक्षणमाप्रलयादपत्यानामुत्पादकाः पालकाश्च भवन्ति ते भृग्वादयो मनवश्च मद्भावाः मम यो भावः स एव येषां भावस्ते मद्भावाः मन्मते स्थिताः मत्संकल्पानुवर्तिन इत्यर्थः॥ ६॥**

**अ० टी०**—ननु कृष्यादिप्रयुक्तधर्माचरणादिभिः सर्वेषां तत्तत्फलरूपा भावा भवन्ति तत्कथं भवत एवेत्याकाङ्क्षायामाह—**महर्षय इति**। महर्षयः सप्त भृग्वादयस्ततः पूर्वे अन्ये चत्वारो महर्षयस्तथा स्वायंभुवादयो मनवः, हिरण्यगर्भात्मनो मम मानसा मद्भावा मदीयोऽनुभावो मत्क्रीडार्थरूपो येषु तादृशा जाताः। येषां लोके इमाः प्रजास्तदुक्तप्रवर्तमाना भवन्तीत्यर्थः। अतोऽपि मत्त एव भवन्तीतिभावः॥ ६॥

**नी० टी०**—एतदेव शिष्टाचारप्रदर्शनेन द्रढयति—**महर्षय इति**। सप्त भृग्वाद्याश्चत्वारः सनकादयश्च पूर्वे प्रसिद्धा महर्षय इति संबंधः तथा मनवश्चतुर्दश प्रसिद्धाः ते सर्वे मानसा हिरण्यगर्भरूपस्य मम मनस एवोद्भूता अयोनिजा जाता उत्पन्नाः इमाः प्रजाश्चतुर्विधा अयं लोकश्च तदाधारभूतः तदुभयं येषां यत्संबंधि संततिर्येषां संततिरित्यर्थः। यद्वा येषामिति षष्ठी पंचम्यर्थे येभ्य इमाः प्रजा अयं लोकश्च जाता इत्यर्थः। तेऽपि मद्भावा मय्येव भावो मनो येषां ते। प्रसिद्धमहिमानोऽप्येते यतो मामेवोपासतेऽतस्त्वमपि मामुपास्वेति भावः॥ ६॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ॥
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥

**शां० भा०**—एतामिति। एतां यथोक्तां विभूतिं विस्तारं योगं च युक्तिं चाऽऽत्मनो घटनमथवा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजं योग उच्यते। मम मदीयं यो वेत्ति तत्त्वतस्तत्त्वेन यथावदित्येतत्। सोऽविकम्पेनाप्रचलितेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते संबध्यते नात्र संशयो नास्मिन्नर्थे संशयोऽस्ति ॥ ७ ॥

**शां० आ०**—सोपाधिकं प्रभावं भगवतो दर्शयित्वा तज्ज्ञानफलमाह—**एतामिति**। बुद्ध्याद्युपादानत्वेन विविधा भूतिर्भवनं वैभवं सर्वात्मकत्वं तदाह—**विस्तारमिति**। ईश्वरस्य तत्तदर्थसंपादनसामर्थ्यं योगस्तदाह—**आत्मन इति**। योगस्तत्फलमैश्वर्यं सर्वज्ञत्वं सर्वेश्वरत्वं च मदीयं शक्तिज्ञानलेशमाश्रित्य मन्वादयो भृग्वादयश्चेशते जानते च तदाह—**अथवेति**। यथा तौ विभूतियोगौ तथा वेदनस्य निरङ्कुशत्वं दर्शयति—**यथावदिति**। सोपाधिकं ज्ञानं निरुपाधिकज्ञाने द्वारमित्याह—**सोऽविकम्पेनेति**। उक्तेऽर्थे प्रतिबन्धाभावमाह—**नास्मिन्निति** ॥ ७ ॥

**आ० भा०**—॥ ७ ॥

**आ० ज०**—॥ ७ ॥

**रा० भा०**—विभूतिरैश्वर्यम् एतां सर्वस्य मदायत्तोत्पत्तिस्थितिरूपां विभूतिं मम हेयप्रत्यनीककल्याणगुणरूपं योगं च यस्तत्त्वतो वेत्ति सोऽविकम्पेनाप्रकंपेन भक्तियोगेन युज्यते नात्र संशयः मद्विभूतिविषयं कल्याणगुणविषयं च ज्ञानं भक्तियोगवर्द्धनमिति स्वयमेव द्रक्ष्यसीत्यभिप्रायः ॥ ७ ॥

**अ० टी०**—एतन्निरूपणप्रयोजनमाह—**एतामिति**। एतां मदनुभावरूपां भृग्वादिलक्षणां तां मम विभूतिं क्रिडार्थैकप्रकटिततां। च पुनः क्रिडार्थप्रकटितसामग्र्या मम योगं तत्त्वतः मल्लीलारूपेण यो वेत्ति सः, अविकम्पेन निश्चलेन तद्वियोगादिरहितेन योगेन मत्संयोगेन भक्तिरूपेण युज्यते युक्तो भवतीत्यर्थः। नात्र संशयः, अत्र संदेहो नास्तीत्यर्थः। अनेन संदेहे सति न भवतीति ज्ञापितम् ॥ ७ ॥

**नी० टी०**—उपास्तावधिकारिणमाह—**एतामिति**। एतां वक्ष्यमाणां विभूतिं योगं च विश्वतोमुखे भगवति मनःसमाधानं यस्तत्त्वतो वेत्ति सम्यगनुष्ठातुं ज्ञातुं च समर्थो भवति सोऽविकंपेनाचलेन निर्विकल्पकेन षष्ठाध्यायोक्तेन योगेन मद्विषयेण समाधिना युज्यते ततश्च कृतकृत्यो भवति नात्र संशय इति प्रवृत्त्यतिशयार्थमुच्यते भगवद्वचसि संशयासंभवात् ॥ ७ ॥

अहं सर्वस्य प्रभवो मत्तःसर्वं प्रवर्तते ॥
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥

**शां० भा०**—कीदृशेनाविकम्पेन योगेन युज्यत इत्युच्यते—अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिर्मत्त एव स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रियारूपं सर्वं जगत्प्रवर्तत इत्येवं मत्वा भजन्ते सेवन्ते मां बुधा अवगततत्त्वार्था भावसमन्विता भावो भावना परमार्थतत्त्वाभिनिवेशस्तेन समन्विताः संयुक्ता इत्यर्थः ॥ ८ ॥

**शां० आ०**—कथं तावकविभूत्यैश्वर्यज्ञानमुक्तयोगस्य हेतुरिति मत्वा पृच्छति—**कीदृशेनेति**। उक्तज्ञानमाहात्म्यात्प्रतिष्ठिता भगवन्निष्ठा सिध्यतीत्याह—**उच्यत इति**। प्रभवत्यस्मादिति प्रभवः सर्वप्रकृतिः सर्वात्मेत्याह—**उत्पत्तिरिति**। सर्वज्ञात्सर्वेश्वरान्मत्तो निमित्तात्सर्वं स्थितिनाशादि भवति मया चान्तर्यामिणा प्रेर्यमाणं सर्वं यथास्वं मर्यादामनातिक्रम्य चेष्टते

तदाह—**मत्त इति** । इत्थं मम सर्वात्मत्वं सर्वप्रकृतित्वं सर्वेश्वरत्वं सर्वज्ञत्वं च महिमानं ज्ञात्वा मय्येव निष्ठावन्तो भवन्तीत्याह—**इत्येवमिति** । संसारासारताज्ञानवतां भगवद्भजनेऽधिकारं द्योतयाति—**अवगतेति** । परमार्थतत्त्वे पूर्वोक्तरीत्या ज्ञाते प्रेमादरावभिनिवेशाख्यौ भवतस्तेन संयुक्तत्वं च भगवद्भजने भवति हेतुरित्याह—**भावेति** ॥ ८ ॥

**आ० भा०—संति च भजंतः केचिदित्याह—अहमित्यादिना ॥ ८ ॥**

**आ० ज०**—नन्वेतां विभूतिमिति परिज्ञातुः फलमुक्तं तत्किमर्थं पुनरुच्यत इत्यतस्तात्पर्यांतरमाह—**संति चेति** । उक्तफले विश्वासजननार्थमिति शेषः ॥ ८ ॥

**रा० भा०—विभूतिं ज्ञानविपाकरूपां भक्तिवृद्धिं दर्शयति । अहं सर्वस्य विचित्रचिदचित्प्रपञ्चस्य प्रभवः उत्पत्तिकारणं सर्वं मत्त एव प्रवर्तत इतीदं मम स्वाभाविकं निरङ्कुशैश्वर्यं सौशील्यसौन्दर्यवात्सल्यादिकल्याणगुणगणयोगं च मत्वा बुधाः ज्ञानिनो भावसमन्विताः मां सर्वकल्याणगुणान्वितं भजन्ते भावो मनोवृत्तिविशेषः मयि स्पृहयालवो मां भजन्त इत्यर्थः ॥ ८ ॥**

**अ० टी०**—एवं ज्ञानिनो भक्तियुक्तत्वं विशदयति—**अहमिति चतुर्भिः** । अहं सर्वस्य जगतः प्रभव उत्पत्तिस्थानं, सर्वं जगत् मत्तः 'बुद्धिर्ज्ञाने' त्यादिरीत्या भृग्वाद्युक्तधर्मादिरीत्या च प्रवर्तते मत्क्रीडार्थकभावयुक्तं भवतीत्यर्थः । भावसमन्विताः मत्सेवनैकप्रयत्नवन्तः सन्तो बुधाः पण्डिता विवेकिनः, इति=अमुना प्रकारेण क्रीडात्मकतया प्रकटीभूतरूपं मां भजन्ते सेवन्ते ॥ ८ ॥

**नी० टी०**—उपासनास्वरूपमाह द्वाभ्यां—**अहमिति** । बुधा मां प्रत्यगात्मानमिति मत्वा भजंते इति कथं अहमेव सर्वस्य जगतः प्रभव उत्पत्तिः मत्तो मदनुग्रहं प्राप्यैव सर्वं बुद्ध्यादिकं स्वस्वकार्याय प्रवर्त्तते । अहमेव जगतः कर्त्तान्तर्यामीचेत्यहंग्रहेणात्मानमुपासीतेति भावः भावसमन्विताः भावनायुक्ताः एतच्चोत्तरार्थम् ॥ ८ ॥

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ॥
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥**

**शां० भा०—किंच—मच्चित्ता मयि चित्तं येषां ते मच्चित्ता मद्गतप्राणा मां गताः प्राप्ताश्चक्षुरादयः प्राणा येषां ते मद्गतप्राणा मय्युपसंहृतकरणा इत्यर्थः । अथवा मद्गतप्राणा मद्गतजीवना इत्येतत् । बोधयन्तोऽवगमयन्तः परस्परमन्योन्यं कथयन्तो ज्ञानबलवीर्यादिधर्मैर्विशिष्टं मां तुष्यन्ति च परितोषमुपयान्ति रमन्ति च रतिं च प्राप्नुवन्ति प्रियसंगत्येव ॥ ९ ॥**

**शां० आ०**—न केवलमुक्तमेव भगवद्भजने साधनं साधनान्तरं चास्तीत्याह—**किंचेति** । ईश्वरात्प्रतीचः प्रागुक्तादन्यत्र चित्तप्रचाररराहित्यं भगवद्भजनोपायमाह—**मयीति** । चक्षुरादीनां भगवत्यप्राप्तिस्तदगोचरत्वात्तस्येत्याशङ्क्याऽऽह—**मय्युपसंहृतेति** । भगवदतिरेकेण जीवनेऽपि नाऽऽदरस्तदपि मय्येवार्पितं भक्तानामित्याह—**अथवेति** । आचार्येभ्यः श्रुत्वा वादकथया परस्परं भगवन्तं सब्रह्मचारिणो बोधयन्ति तदपि भगवद्भजनसाधनमित्याह—**बोधयन्त इति** । आगमोपपत्तिभ्यां भगवन्तमेव विशिष्टधर्माणं शिष्येभ्यो गुरवो व्युपादिशन्ति तदपि भगवद्भजनमेवेत्याह—**कथयन्त इति** । भक्तानां तुष्टिरती स्वरसतः स्यातामित्याह—**तुष्यन्तीति** । मनोरथपूर्त्यां रतिप्राप्तौ कामुकसंमतमुदाहरणमाह—**प्रियेति**॥९॥

**आ० भा०—॥ ९ ॥**

**आ० ज०**—॥ ९ ॥

**रा० भा०—कथं मच्चिताः मयि निविष्टमनसः मद्गतप्राणाः मद्गतजीविताः मया विनात्मधारणमलभमाना इत्यर्थः । स्वैः स्वैरनुभूतान् मदीयान् गुणान् परस्परं बोधयन्तो मदीयानि दिव्यानि रमणी-**

यानि कर्माणि च कथयन्तस्तुष्यन्ति च रमन्ति च वक्तारस्तद्वचनेनान्यप्रयोजनेन तुष्यन्ति श्रोतारश्च तच्छ्रवणेनानवधिकातिशयप्रियेण रमन्ते ॥ ९ ॥

अ० टी०—भजने प्रकारमाह—**मच्चित्ता इति**। मय्येव चित्तं येषां ते मच्चिन्तनपराः। लीलावस्थमत्स्वरूपविचारणपराः। मद्गतप्राणाः मय्येव गताः प्राप्ताः प्राणा येषां ते, मद्दुःखदुःखिता मत्सुखसुखिता इत्यर्थः। तादृशाः सन्तः परस्परं तादृशानेव मामेतादृशं स्वानुभवप्रमाणादिभिर्बोधयन्तस्तदनुकथयन्तः कीर्तनरीत्या कीर्तयन्तः। चकारेणाऽन्यकीर्त्तनं शृण्वन्तः। च पुनः। तद्गाने सति तुष्यन्ति ज्ञानेन वा रमन्ते च। स्वयं कीर्त्तनेनानन्दयुक्ता भवन्ति रमन्ते वा। तोषमानन्दं च प्राप्नुवन्तीतिभावः। यद्वा मां विप्रयोगादिलीलावस्थासु नित्यं कथयन्तः सततं परस्परं बोधयन्तः ॥ ९ ॥

नी० टी०—एवं ध्याने भावनाप्रकारमुक्त्वा व्युत्थाने तमाह—**मच्चित्ता इति**। अहमेव चित्ते येषां ते मच्चित्ताः तथाऽहमेव गतो विद्यमानो येषु ते मद्गतास्तथाविधाः प्राणा इंद्रियाणि येषां ते मद्गतप्राणाः। चित्तेनेंद्रियैर्वा यद्गृह्यते तत्सर्वं प्रत्यगात्मा वासुदेव इति भावयंत इत्यर्थः। इममेवार्थं परस्परं बोधयंतः श्रुतियुक्तिप्रदर्शनेन समानानां समुदायं ज्ञापयंतः कथयंतश्च शिष्यान्प्रति तुष्यंति तेनैव ज्ञानेन न तु मिष्टान्नादिना रमंति च तत्रैव न तु स्त्र्यादावित्यर्थः ॥ ९ ॥

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ॥**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥**

**शां० भा०—ये यथोक्तप्रकारैर्भजन्ते मां भक्ताः सन्तः—तेषां सततयुक्तानां नित्याभियुक्तानां निवृत्तसर्वबाह्यैषणानां भजतां सेवमानानां, किमर्थित्वादिना कारणेन नेत्याह। प्रीतिपूर्वकं प्रीतिः स्नेहस्तत्पूर्वकं मां भजनमित्यर्थः। ददामि प्रयच्छामि बुद्धियोगं बुद्धिः सम्यग्दर्शनं मत्तत्त्वविषयं तेन योगो बुद्धियोगस्तं बुद्धियोगम्। येन बुद्धियोगेन सम्यग्दर्शनलक्षणेन मां परमेश्वरमात्मभूतमात्मत्वेनोपयान्ति प्रतिपद्यन्ते। के ते, ये मच्चित्तत्वादिप्रकारैर्मां भजन्ते ॥ १० ॥**

शां० आ०—यदुक्तं सोऽविकम्पेनेत्यादि तदर्थं भूमिकां कृत्वा तदिदानीमुदाहरति—**ये यथोक्तेति**। नित्याभियुक्तानामनवरतं भगवत्यैकाग्र्यसंपन्नानामित्यर्थः। पुत्रादिलोकत्रयहेत्वार्थित्वेन वा गर्भदासत्वेन वा प्रत्यहं जीवनोपायसिद्धये वा भजनमिति शङ्कित्वा दूषयति—**किमित्यादिना**। प्रागुक्तां ज्ञानाख्यां भक्तिं स्नेहेन कुर्वतामित्यर्थः। तेभ्योऽहं तत्त्वज्ञानं प्रयच्छामीत्याह—**ददामीति**। उक्तबुद्धिसंबन्धस्य फलमाह—**येनेति**। ध्यानजन्यप्रकर्षकाष्ठागतान्तःकरणपरिणामे निरस्ताशेषविशेषभगवद्रूपप्राप्तिहेतौ बुद्धियोगे प्रश्नपूर्वकमुक्तानाधिकारिणो दर्शयति—**के त इति** ॥ १० ॥

**आ० भा०—॥ १० ॥**

आ० ज०—॥ १० ॥

**रा० भा०—तेषां सततयुक्तानां मयि सततयोगमाशंसमानानां मां भजमानानामहं तमेव बुद्धियोगं विपाकदशापन्नं प्रीतिपूर्वकं ददामि येन ते मामुपयान्ति ॥ १० ॥**

अ० टी०—एवंभावेन भजतामहं फलं ददामीत्याह—**एवमिति**। एवम् अमुना प्रकारेण सततयुक्तानां निरन्तरं मत्कृपाविशिष्टानां प्रीतिपूर्वकम् अनुद्वेगेन भजतां तं बुद्धियोगं मत्स्वरूपानुभवात्मकभक्त्युपायरूपं

ददामि येन ते माम् उपयान्ति प्राप्नुवन्ति । उपसर्गेण तथा यान्ति यथा तद्भावच्युतिः कदापि न भवतीतिज्ञापितम् ॥ १० ॥

**नी० टी०**—उपासनाया फलमाह—**तेषामिति**। सततयुक्तानां नित्योत्साहवतां प्रीतिः प्रेमा तत्पूर्वकं भजतां सेवमानानां तेभ्यो ददामि तं बुद्धियोगं ज्ञानरूपं योगं समाधिं ज्ञाननिष्ठामित्यर्थः। तां ददामि येन यया निष्ठया ते मामुपयांति समुद्रमिव नद्योऽभेदेन प्रविशंति ॥ १० ॥

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ॥**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥**

**शां० भा०—किमर्थं कस्य वा त्वत्प्राप्तिप्रतिबन्धहेतोर्नाशकं बुद्धियोगं तेषां त्वद्भक्तानां ददासीत्याकाङ्क्षायामाह—तेषामेव कथं नाम श्रेयः स्यादित्यनुकम्पार्थं दयाहेतोरहमज्ञानजमाविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमो नाशयाम्यात्मभावस्थ आत्मनो भावोऽन्तःकरणाशयस्तास्मिन्नेव स्थितः सन्। ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिना विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः ॥ ११ ॥**

**शां० आ०**—भगवत्प्राप्तेर्बुद्धिसाध्यत्वे सत्यनित्यत्वापत्तेस्त्वमपि भक्तेभ्यो बुद्धियोगं ददासीत्ययुक्तामिति शङ्कते—**किमर्थमिति**। तेषां बुद्धियोगं किमर्थं ददासीति संबन्धः। भगवत्प्राप्तिप्रतिबन्धकनाशको बुद्धियोगस्तेन नास्ति तत्प्राप्तेरनित्यत्वमित्याशङ्कयाऽऽह—**कस्येति**। भक्तानां तत्प्राप्तिप्रतिबन्धकं विविच्य दर्शयति—**इत्याकाङ्क्षायामिति**। अविवेको नामाज्ञानं ततो जातं मिथ्याज्ञानं तदुभयमेकीकृत्य तमो विवक्ष्यते। न च तन्नाशकत्वं जडस्य कस्यचित्तदन्तर्भूतस्य युक्तं तेनाहं नाशयामीत्युक्तम्। केवलचैतन्यस्य जडबुद्धिप्रवृत्तेरिवाज्ञानाद्यनाशकत्वमाशङ्क्य विशिनष्टि—**आत्मेति**। तस्याऽऽशयस्तन्निष्ठो वृत्तिविशेषः। वाक्योत्थबुद्धिवृत्त्यभिव्यक्तश्चिदात्मा सहायसामर्थ्यादज्ञानादिनिवृत्तिहेतुरित्यर्थः। बुद्धीद्धबोधस्याज्ञानादिनिवर्तकत्वमुक्त्वा बोधेद्धबुद्धेस्तन्निवर्तकत्वामिति पक्षान्तरमाह—**ज्ञानेति**। देहाद्यव्यक्तान्तानात्मवर्गातिरिक्तवस्तुगोचरत्वमाह—**विवेकेति**। भगवति सदा विहितया भक्त्या तस्य प्रसादोऽनुग्रहः स एव स्नेहस्तेनाऽऽसेचनद्वाराऽस्योत्पत्तिमाह—**भक्तीति**। मय्येव भावनायामभिनिवेशो वातस्तेन प्रेरितोऽयं जायते, न हि वातप्रेरणमन्तरेणाऽऽदौ दीपस्योत्पत्तिरित्याह—**मद्भावनेति**। ब्रह्मचर्यमष्टाङ्गमादिशब्देन शमादिग्रहः। तेन हेतुनाऽऽहितसंस्कारवती या प्रज्ञा तथाविधवर्तिनिष्ठश्चायं न हि वर्त्यतिरेकेण दीपो निर्वर्त्यते तदाह—**ब्रह्मचर्येति**। न चाऽऽधारादृते दीपस्योत्पत्तिरदृष्टत्वादित्याह—**विरक्तेति**। यद्विषयेभ्यो व्यावृत्तं चित्तं रागाद्यकलुषितं तदेव निवातमपवारकं तत्र स्थितत्वमस्य दर्शयति—**विषयेति**। भास्वतेति विशेषणं विशदयति—**नित्येति**। सदातनं चित्तैकाग्र्यं तत्पूर्वकं ध्यानं तेन जनितं सम्यग्दर्शनं फलं तदेव भास्तद्वता तत्पर्यन्तेनेत्यर्थः। तेनाज्ञाने सकार्ये निवृत्ते भगवद्भावः स्वयमेव प्रकाशी भवतीति मत्वा व्याख्यातमेव पदमनुवदति—**ज्ञानेति** ॥ ११ ॥

**आ० भा०—॥ ११ ॥**

**आ० ज०**—॥ ११ ॥

**रा० भा०—किं च तेषामेवानुग्रहार्थमहमात्मभावस्थस्तेषां मनोवृत्तौ विषयतयावस्थितो मदीयान् कल्याणगुणगणांश्चाविष्कुर्वन् मद्विषयज्ञानाख्येन भास्वता दीपेन ज्ञानविरोधिप्राचीनकर्मरूपाज्ञानजं मद्व्यतिरिक्तविषयप्रावण्यरूपं पूर्वाभ्यस्तं तमो नाशयामि ॥ ११ ॥**

**अ० टी०**—नन्वन्यबोधने तेषामज्ञत्वाद्बहुकालव्यासंगेन सेवावियोगक्लेशः स्यादिति कथं बोधनं स्यादित्याशङ्क्याह—**तेषामेवेति**। तेषामेव भक्तानामेव अनुकम्पार्थं मत्सेवाविप्रयोगक्लेशाभावार्थम्, आत्मभावस्थेषु तेषु स्वीय-

त्वभावयुक्तोऽहमन्येषामज्ञानजं तमः संसारात्मकं भास्वता स्फुरद्रूपेण ज्ञानदीपेन नाशयामि। ततः संसाराऽज्ञानविमुक्तानां शीघ्रं स्वरूपबोधात् पुनः परस्परं मद्गुणकथनेन परमानन्द एव भवति नतु क्लेश इतिभावः ॥ ११ ॥

**नी० टी०**—किंच तेषां भक्तानामुपर्यनुकंपार्थं न स्वप्रयोजनसिद्धयर्थं राजवत्। बुद्धियोगप्रदानेनाज्ञानजमविवेकादुत्थितं मिथ्याप्रत्ययलक्षणं मोहांधकारं तमोनामकं सर्वानर्थनिदानमूलाज्ञाननाशेन नाशयामि आत्मभावस्थः आत्मनो भावोंऽतःकरणगृहं तत्स्थः ज्ञानरूपेण दीपेन भास्वता प्रबलेन अयं भावः। तत्त्वमसीतिवाक्यजा ब्रह्माकारांतःकरणवृत्तिः स्वोत्पत्तये श्रवणमननध्यानानि शमादीनि कर्माणि चापेक्षते यथा दीपः स्वोत्पत्तये तैलवर्त्यग्न्यादीन्। उत्पन्ना तु तमोनाशेन स्वविषयप्रकाशनार्थं प्रत्ययावृत्तिलक्षणं प्रसंख्यानं च कर्मभिरुपकारं वा नापेक्षते। न हि ज्ञाते घटे तदाकारप्रत्यया वृत्तिर्वा कर्मापेक्षा वा तज्ज्ञानदार्ढ्यायापेक्षते प्रमाणव्याप्तिमात्रसापेक्षत्वाज्ज्ञानस्य। तस्माद्ये उत्पन्नज्ञानानामपि प्रसंख्यानापेक्षां कर्मभिरुपकारापेक्षां च वदंति ते बलादेव मोक्षस्य कृतकतामनित्यतां च प्रार्थयंत इति दिक् ॥ ११ ॥

**अर्जुनउवाच—परं ब्रह्म परं धाम पवित्रं परमं भवान् ॥**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥**

**शां० भा०—**यथोक्तां भगवतो विभूतिं योगं च श्रुत्वा—परं ब्रह्म परमात्मा परं धाम परं तेजः पवित्रं पावनं परमं प्रकृष्टं भवान्पुरुषं शाश्वतं नित्यं दिव्यं दिवि भवमादिदेवं सर्वदेवानामादौ भवं देवमजं विभुं विभवनशीलम् ॥ १२ ॥

**शां० आ०**—निरस्ताशेषविशेषं निरुपाधिकं सोपाधिकं च सर्वात्मत्वादि भगवतो रूपं तद्धीफलं च श्रुत्वा निरुपाधिकरूपस्य प्राकृतबुद्ध्यनवगाह्योक्तिपूर्वकं मन्दानुग्रहार्थं सर्वदा सर्वबुद्धिग्राह्यं सोपाधिकं रूपं विस्तरेण श्रोतुमिच्छन्पृच्छतीत्याह—**यथोक्तामिति**। परं ब्रह्म भवानिति लक्ष्यनिर्देशः, तस्य लक्षणार्थं परं धामेत्यादिविशेषणत्रयम्। धामशब्दस्य स्थानवाचित्वं व्यावर्तयन्व्याचष्टे—**तेज इति**। तस्य चैतन्यस्य परत्वं जन्मादिराहित्येन कौटस्थ्यम्। प्रकृष्टं पावनमत्यन्तशुद्धत्वमुच्यते। यदेवंलक्षणं परं ब्रह्म तद्भवानेव नान्य इत्यर्थः। कुतस्त्वमेवमज्ञासीरित्याशङ्क्याऽऽप्तवाक्यादित्याह—**पुरुषमिति**। दिवि परमे व्योम्नि भवतीति दिव्यस्तं सर्वप्रपञ्चातीतं दीव्यति द्योतत इति देवः स चाऽऽदिः सर्वमूलत्वादत एवाजस्तं सर्वगतमाहुरिति संबन्धः ॥ १२ ॥

**आ० भा०—**ब्रह्म परिपूर्णम्। अथ कस्मादुच्यते परं ब्रह्म। "बृहति बृंहयति" इति च श्रुतिः। बृह बृहि वृद्धाविति पठंति। परमं यो महद्ब्रह्मेति च। विविधमासीदिति विभुः। तथा हि वारुणशाखायाम्॥ "विभुः प्रभुः प्रथमं मेहनाव्रतः" इति "स ह्येव प्रभावाद्विविधोऽभवत्" इति। "सोऽकामयत बहु स्यां प्रजायेय" इत्यादेश्च ॥ १२ ॥

**आ० ज०**—ब्रह्मविभुशब्दावैकार्थ्यपरिहाराय क्रमेण सप्रमाणकं व्याचष्टे—**ब्रह्मेति**। परं वस्तु ब्रह्मेति कस्मादुच्यते बृहति पूर्णं भवति बृंहयति पूरयति चान्यान्। बृहतेर्मन्प्रत्ययोऽमागमश्च। ईश्वरो ब्रह्मणोऽन्यः स कथं परं ब्रह्मेत्युच्यत इत्यत उक्तम्—**परममिति**। विविधमनेकरूपत्वेनाभवत् मेहनावतः सेचकस्य भगवतः प्रथमं रूपं विभुःप्रभुश्चेत्येतदनूद्य व्याख्यायते। प्राभवत्समर्थोऽभवदिति प्रभुः विविधोभवदिति विभुः। "सोऽकामयत" इतिविविधभवनेश्रुत्यंतरं। "विप्रसंभ्योड्वसंज्ञायाम्" इति च स्मृतिः ॥ १२ ॥

**रा० भा०—**एवं सकलेतरविसजातीयं भगवदसाधारणं शृण्वतां निरतिशयानन्दजनकं कल्याणगुणगणयोगं तदैश्वर्यविततिं च श्रुत्वा तद्विस्तारं श्रोतुकामः अर्जुन उवाच। परं ब्रह्म परं धाम परमं पवित्रमिति यं श्रुतयो वदन्ति स हि भवान् " यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति,

यत्प्रयन्त्याभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेति, ब्रह्मविदाप्नोति परम्, स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति" इति तथा परं धाम धामशब्दो ज्योतिर्वचनः परं ज्योतिः "अथ यदतः परो दिव्यो ज्योतिर्दीप्यते परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते तं देवा ज्योतिषां ज्योतिः" तथा च परमं पवित्रं परमं पावनं स्मर्तुरशेषकल्मषाश्लेषविनाशकरं च यथा "पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यते तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैव९ हास्य सर्वे पाप्मानः प्रदूयन्ते" "नारायणः परं ब्रह्म तत्त्वं नारायणः परः । नारायणः परं ज्योतिरात्मा नारायणः परः" इति हि श्रुतयो वदन्ति ऋषयश्च सर्वे परावरतत्त्वयाथात्म्यविदस्त्वामेव शाश्वतं दिव्यं पुरुषमादिदेवमजं विभुमाहुः ॥ १२ ॥

अ० टी०—एवं 'न मे विदुः सुरगणा' इत्यादिना सर्वेषां स्वाऽवेदनयुक्तानां 'यो मामजमनादिं च' इत्यादिना स्वज्ञानस्योत्तमत्वं प्रतिपादितम् । ततः सर्वभावोत्पत्तिः स्वत उक्ता स्वरूपा या । स्वस्वविभूतिज्ञस्य स्वभजने स्वप्राप्तिमुक्तवान् । एतत्सर्वजिज्ञासुरर्जुनः प्रभुं विज्ञापयति सप्तभिः । विज्ञप्तेरपि भगवदात्मत्वाय षड्गुणधर्मिसमसंख्यैः श्लोकैर्विज्ञापयति—**अर्जुन उवाच । परं ब्रह्मेति** । परं पुरुषोत्तमाख्यं ब्रह्म बृहद्व्यापकं परं धाम पुरुषोत्तमात्मकतेजोरूपं रमणात्मगृहात्मकं वा । परमं पवित्रं सर्वोत्कृष्टं सर्वपावनम् । एतत्सर्वरूपो भवान् सत्यमेवेत्यर्थः । कथमेवमवगतामित्यत आह—**पुरुषमिति** । पुरुषं पुरुषोत्तमम् । अन्यत्रापि तथात्वमाशङ्क्य शाश्वतं नित्यमिति । अक्षरादिष्वपि नित्यत्वमाशङ्क्य दिव्यमित्याह क्रीडनैकरूपम् । अवतारादिष्वपि तथात्वमाशङ्क्याह—**आदिदेवमिति** । मूलरूपमित्यर्थः । परिदृश्यमानजन्माद्याशङ्कायामाह—**अजमिति** । जन्मरहितम् । जन्माऽभावे जन्मप्रतीतिः कथमित्यत आह—**विभुमिति** । समर्थमित्यर्थः । तथाप्रतीतिकरणसमर्थमितिभावः ॥ १२ ॥

नी० टी०—एवमेतां विभूतिं योगं चेत्यादिना विभूतिज्ञानस्य फलोदर्कं श्रुत्वा तत्प्राप्त्युत्सुकः प्रथमं स्तुत्या भगवंतमार्जवयन्नर्जुन उवाच—**परमिति** । परं ब्रह्म न त्वपरमुपास्यं । "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति श्रुतेः परं धाम ज्योतिर्न त्वपरं वृत्तिरूपं ज्ञानं । "एतस्य ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेर्वृत्तिरूपत्वात् परमं पवित्रं न तु तीर्थादिवदपरमं भवान् । तत्र मानमाह—**पुरुषमिति** सार्धेन । पुरुषं देहांतरस्थं शाश्वतं नित्यं दिव्यं दिवि हार्दाकाशे आविर्भूतं आदिदेवं सूत्रात्मनोऽप्याद्यं अत एव अजं विभुं व्यापकं त्वां ऋषय आहुरिति संबंधः ॥ १२ ॥

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ॥**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥**

शां० भा०—ईदृशम्—आहुः कथयन्ति त्वामृषयो वसिष्ठादयः सर्वे देवर्षिर्नारदस्तथाऽसितो देवलोऽप्येवमेवाऽऽह व्यासश्च, स्वयं चैव ब्रवीषि मे ॥ १३ ॥

शां० आ०—उक्तविशेषणं त्वामृषयः सर्वे यस्मादाहुस्तस्मात्तद्वचनात्तवोक्तं ब्रह्मत्वं युक्तमित्याह—**ईदृशमिति** । ऋषिग्रहणेन गृहीतानामपि नारदादीनां विशिष्टत्वात्पृथग्ग्रहणम् । असितो देवलस्य पिता । किमन्यैस्त्वं स्वयमेवाऽऽत्मानमुक्तरूपं मह्यमुक्तवानित्याह—**स्वयं चेति** ॥ १३ ॥

आ० भा०—॥ १३ ॥

आ० ज०—॥ १३ ॥

**रा० भा०**—तथैव देवर्षिर्नारदः असितो देवलो व्यासश्च 'एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः। नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम्॥ पुण्या द्वारवती तत्र यत्रास्ते मधुसूधनः। साक्षाद्देवः पुराणोऽसौ स हि धर्मः सनातनः॥ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्॥ पवित्राणां हि गोविन्दः पवित्रं परमुच्यते। पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम्॥ त्रैलोक्यं पुण्डरीकाक्षो देवदेवः सनातनः। आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूधनः॥' तथा 'यत्र नारायणो देवः परमात्मा सनातनः। तत्र कृत्स्नं जगत्पार्थ तीर्थान्यायतनानि च॥ तत्पुण्यं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम्। तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः॥ आदिदेवो महायोगी यत्रास्ते मधुसूदनः। पुण्यानामपि तत्पुण्यं माभूत्ते संशयोऽत्र वै॥ कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः। कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्॥' इति। तथा स्वयमेव ब्रवीषि च 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥' इत्यादिना 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्यन्तेन॥१३॥

**अ० टी०**—एवंविधं त्वां सर्वे वदन्तीत्यनेनावगतमित्याह—**आहुरिति**। सर्वे ऋषयो भृगवादयः तथा देवर्षिः देवानामपि मन्त्रद्रष्टा नारदः सर्वमोक्षदः। असितः भगवद्धर्मरूपः। देवलः देवानुग्रहकृत्। व्यासः ज्ञानावतारः। च पुनः स्वयमेव त्वमेव साक्षान्मे मह्यम् 'अहमादिर्हि देवानाम्' इत्यादिना ब्रवीषि। अतस्त्वां तथा जानामीत्यर्थः॥१३॥

**नी० टी०**—॥१३॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव॥**
**न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः॥१४॥**

**शां० भा०**—सर्वमिति। सर्वमेतद्यथोक्तमृषिभिस्त्वया च तदृतं सत्यमेव मन्ये यन्मां प्रति वदसि भाषसे। हे केशव! न हि ते तव भगवन्व्यक्तिं प्रभवं विदुर्न देवा न दानवाः॥१४॥

**शां० आ०**—ऋषिभिस्त्वया चोक्तत्वादुक्तं सर्वं सत्यमेवेति मम मनीषेत्याह—**सर्वमिति**। किं तदित्याशङ्क्याऽऽत्मरूपामित्याह—**यन्मामिति**। देवादिभिः सर्वैरुच्यमानतया त्वद्रूपे विशिष्टवक्तृग्रहणमनर्थकमित्याशङ्क्याऽऽह—**न हीति**। प्रभवो नाम प्रभावो निरुपाधिकस्वभावः, यदा देवादीनामपि दुर्विज्ञेयं तव रूपं तदा का कथा मनुष्याणामित्यर्थः॥१४॥

**आ० भा०**—॥१४॥

**आ० ज०**—॥१४॥

**रा० भा०**—अतः सर्वमेतद्यथावस्थितवस्तुकथनं मन्ये न प्रशंसाद्यभिप्रायम्। यन्मां प्रत्यनन्यसाधारणमनवधिकातिशयं स्वाभाविकं तवैश्वर्यं कल्याणगुणगणानन्त्यं च वदसि अतो भगवन्निरतिशयज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधे! ते व्यक्तिं व्यञ्जनप्रकारं न हि परिमितज्ञाना देवा दानवाश्च विदुः॥१४॥

**अ० टी०**—परोक्षे स्वानुभवाभावे न विश्वासः स्यादित्यत आह—**सर्वमेतदिति**। सर्वं पूर्वोक्तं 'परं ब्रह्म' इत्यादि अहं स्वानुभवात् ऋतं सत्यं मन्ये। किंच। न मे विदुरित्यादिना देवाः क्रीडारूपाः। दानवाविरोधेऽपि मोक्षदातुः हे भगवन्! ते व्यक्तिं प्राकट्यं स्वरूपं वा न विदुरिति। केशव! दुष्टगुणव्याप्तयोरपि मोक्षदायक! यत् मां वदसि एतत्सर्वं हि निश्चयेन ऋतं मन्ये॥१४॥

**नी० टी०**—व्यक्तिं प्रभवम्॥१४॥

स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ॥
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

शां० भा०—यतस्त्वं देवादीनामादिरतः—स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तमीश्वरं पुरुषोत्तम। भूतानि भावयतीति भूतभावनो हे भूतभावन! भूतेश! भूतानामीशितः! हे देवदेव! जगत्पते! ॥ १५ ॥

शां० आ०—कश्चिदेव महता कष्टेनानेकजन्मसंसिद्धो जानाति त्वदनुगृहीतस्त्वद्रूपमित्यभिप्रेत्याऽऽह—यत इति। स्वयमेवोपदेशमन्तरेणेत्यर्थः। आत्मना प्रत्यक्त्वेनाविषयतयेति यावत्। आत्मानं निरुपाधिकं रूपम्। न चैतत्सोपाधिकमपि रूपमन्यस्य गोचरे तिष्ठतीत्याह—निरतिशयेति। पुरुषश्चासावुत्तमश्चेति क्षराक्षरातीतपूर्णचैतन्यरूपत्वं संबोधनेन बोध्यते। सर्वप्रकृतित्वं सर्वकर्तृत्वं च कथयति—भूतानीति। सर्वेश्वरत्वमाह—भूतानामिति। उक्तं ते सोपाधिकं रूपं देवादीनामाराध्यतामधिगच्छतीत्याह—देवेति। जगतः सर्वस्य स्वामित्वेन पालयितृत्वमाह—जगदिति ॥ १५ ॥

आ० भा०—॥ १५ ॥

आ० ज०—॥ १५ ॥

रा० भा०—हे पुरुषोत्तम! आत्मना आत्मानं त्वां स्वयमेव स्वेनैव ज्ञानेन वेत्थ। भूतभावन सर्वेषां भूतानामुत्पादयितः! भूतेश सर्वेषां भूतानां नियन्तः! देवदेव दैवतानामपि परमदैवत! यथा मनुष्यमृगपक्षिसरीसृपादीन् सौन्दर्यसौशील्यादिकल्याणगुणगणैर्दैवतान्यतीत्य वर्तन्ते तथा तानि सर्वाणि दैवतान्यपि तैस्तैर्गुणैरतीत्य वर्तमान जगत्पते जगत्स्वामिन् ॥ १५ ॥

अ० टी०—यतोऽन्ये न विदुरतः स्वस्वरूपं स्वयमेव जानासीत्याह—स्वयमेवेति। स्वयं स्वेच्छयैव, न केनचित् प्रेरितः। आत्मना स्वस्वरूपेणैव आत्मानं यादृशोऽसि तादृशं त्वमेव वेत्थ जानासीत्यर्थः। अन्याऽज्ञानहेतुभूतत्वेन संबोधयति। हे पुरुषोत्तम! केन कथं वा ज्ञातुं योग्य इत्यर्थः। अतएव ब्रह्माण्डपुराणे 'नैष भावयितुं योग्यः केनचित् पुरुषोत्तम' इत्युक्तम्। ननु तर्हि 'यो मामजमनादिं च वेत्ति' इति कथमुक्तमित्याशङ्क्य तत्कृपया स्ववेदनात्मकस्वशक्तिदानेन ज्ञापयतीति 'ददामि बुद्धियोगं तम्' इत्यादिनोक्तम्। तथात्वेनैव संबोधयन्नाह—भूतभावनेत्यादिभिः। हे भूतभावन! भूतानि भावयसि स्वभावयुक्तानि करोषीति तथा। कथमेवं करोतीत्यत आह—भूतेश! तेषां स्वामी नियामकः तेन स्वीयत्वेन करोतीतिभावः। ईशत्वेऽपि कथमेवं करोतीत्यत आह—देवदेव! पूज्यानामपि पूज्य! तत्पूजादिसंतुष्टस्तथा करोतीतिभावः। तर्हि देवेष्वेव तथोचितं ननु सर्वेष्वित्यत आह—जगत्पते इति। जगतः सर्वस्यैव पतिः पालको रक्षक इति यावत्। रक्षार्थं तथा करोतीतिभावः ॥ १५ ॥

नी० टी०—हे भूतभावन भूतानां भावक ॥ १५ ॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ॥
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

शां० भा०—वक्तुमिति। वक्तुं कथयितुमर्हस्यशेषेण दिव्या ह्यात्मविभूतय आत्मनो विभूतयो यास्ता वक्तुमर्हसि। याभिर्विभूतिभिरात्मनो माहात्म्यविस्तरैरिमाँल्लोकांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

शां० आ०—यस्मादस्मादृशामगोचरस्तवाऽऽत्मा जिज्ञासितश्च तस्मात्त्वयैव त्वद्रूपं वक्तव्यमित्याह—वक्तुमिति। दिव्यत्वमप्राकृतत्वम्। संप्रत्यन्वयमन्वाचष्टे—आत्मन इति। वक्तव्या विभूतीर्विशिनष्टि—याभिरिति। यद्द्वारा लोकान्पूरयित्वा वर्तसे ता विभूतीरशेषेण वक्तुमर्हसीत्यर्थः ॥ १६ ॥

**आ० भा०—विभूतयो विविधभूतयः ॥ १६ ॥**

**आ० ज०**—विभूतय ऐश्वर्याणि पृष्टानि नानारूपाणि वक्ष्यंते । किं केन संगतमित्यत आह—**विभूतय इति** । विविधभूतयो नानाभूतानि रूपाणि ॥ १६ ॥

**रा० भा०—दिव्यास्त्वदसाधारण्यो विभूतयो यास्तास्त्वमेवाशेषेण वक्तुमर्हसि त्वमेव व्यञ्जयेत्यर्थः याभिरनन्ताभिर्विभूतिभिर्यैर्नियमनविशेषैर्युक्त इमाँल्लोकांस्त्वं नियन्तृत्वेन व्याप्य तिष्ठसि ॥ १६ ॥**

**अ० टी०**—एवं संबोध्य जगत्पतित्वेन स्वस्यापि पतित्वं संपाद्येदानीं स्वीयत्वेनानुग्रहं कुरु यथाऽहं पूर्वोक्तं त्वत्स्वरूपं ज्ञात्वा प्रपन्नो भवामीत्याह—**वक्तुमर्हसीति** । दिव्याः क्रीडारूपाः । आत्मविभूतयः स्वविभूतयः कार्यार्थं स्वयमेवांशरूपाः । अशेषेण वक्तुं त्वमेवार्हसि योग्योऽसि । योग्यत्वोक्त्या विभूतिज्ञानमपि नान्यस्य यत्र तत्र साक्षात् त्वदज्ञाने किं वाच्यमिति व्यञ्जितम् । यतस्त्वमेव योग्योऽस्यतः कृपया वदेतिभावः । याभिर्विभूतिभिः इमान् लोकान् व्याप्य स्वीयत्वेनाङ्गीकृत्य तिष्ठसि ता वक्तुमर्हसीत्यर्थः ॥ १६ ॥

**नी० टी०**—एवं स्तुत्वात्मनो बुभुत्सितमाह—वक्तुमिति ॥ १६ ॥

**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ॥**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥**

**शां० भा०—कथमिति । कथं विद्यां विजानीयामहं हे योगिंस्त्वां सदा परिचिन्तयन् । केषु केषु च भावेषु वस्तुषु चिन्त्योऽसि ध्येयोऽसि भगवन्मया ॥ १७ ॥**

**शां० आ०**—किमर्थं विभूतीः श्रोतुमिच्छसीत्याशङ्क्य ध्यानसौकर्यप्रकारप्रश्नेन फलं कथयति—**कथमिति** । योगो नामैश्वर्यं तदस्यास्तीति योगी हे योगिन्नहं स्थविष्ठमतिस्त्वां केन प्रकारेण सततमनुसंदधानो विशुद्धबुद्धिर्भूत्वा निरुपाधिकं त्वां विजानीयामिति प्रश्नः । प्रश्नान्तरं प्रस्तौति—**केषु केष्विति** । चेतनाचेतनभेदादुपाधिबहुत्वाच्च बहुवचनम् ॥ १७ ॥

**आ० भा०—॥ १७ ॥**

**आ० ज०**—॥ १७ ॥

**रा० भा०—अहं योगी भक्तियोगनिष्ठः सन् भक्त्या त्वां सदा परिचिन्तयन् चिन्तयितुं प्रवृत्तश्चिन्तनीयं त्वां परिपूर्णैश्वर्यादिकल्याणगुणगणं कथं विद्यां पूर्वोक्तबुद्धिज्ञानादिभावव्यतिरिक्तेष्वनुक्तेषु केषु केषु च भावेषु मया नियन्तृत्वेन चिन्त्योऽसि ॥ १७ ॥**

**अ० टी०**—कथनप्रयोजनमाह—**कथमिति**।हे योगिन् ! सर्वव्यापक! सर्वकरणसमर्थ! अहं प्रकटरूपमानन्दमयं त्वां सदा परिचिन्तयन् परितो बाह्याभ्यन्तरभेदेन चिन्तयन् विभूतीः कथं विद्यां जानामीत्यर्थः । अत्रायं भावः साक्षाद्भगवच्चिन्तने विभूतिज्ञाने तत्र मनोनिवेशने चिन्तनविच्छेदो भविष्यतीति कथं जानामि । ननु तर्हि प्रश्नः किमर्थमित्याशङ्क्य यत्पूर्वमुक्तम् 'एतां विभूतिम्' इत्यारभ्य 'येन मामुपयान्ति त' इत्यन्तं तेन त्वत्प्राप्त्यर्थं पृच्छामि तत्रापि स्वाधिकारानुसारेण यत्स्वस्यावश्यकं तत्कथयेति विज्ञापयति—**केष्विति** । केषु लोकेषु । च पुनः । केषु भावेषु पदार्थेषु भगवन् ! षड्गुणैश्वर्य ! पूर्णगुणैः सर्वव्यापक ! मया चिन्तनीयोऽसि ॥ १७ ॥

**नी० टी०**—योगं ऐश्वर्यं तद्वत् हे योगिन् त्वां कथं चर्मचक्षुषा विद्यां न कथमपीति विश्वरूपदर्शनस्य दौर्लभ्यं मन्वानः कतिपयेष्वेव स्थानेषु भगवंतं चिंतयिष्यामि विश्वरूपदर्शनेऽधिकारसिद्ध्यर्थमित्याशयेनाह—**केष्विति** ॥ १७ ॥

विस्तरेणाऽऽत्मनो योगं विभूतिं च जनार्दन ॥
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

**शां० भा०**—विस्तरेणेति। विस्तरेणाऽऽत्मनो योगं योगैश्वर्यशक्तिविशेषं विभूतिं च विस्तरं ध्येयपदार्थानां हे जनार्दन, अर्दतेर्गतिकर्मणो रूपम्। असुराणां देवप्रतिपक्षभूतानां जनानां नरकादिगमयितृत्वाज्जनार्दनः। अभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा। भूयः पूर्वमुक्तमपि कथय तृप्तिर्हि परितोषो यस्मान्नास्ति मे शृण्वतस्त्वन्मुखनिःसृतवाक्यामृतम् ॥ १८ ॥

**शां० आ०**—प्रकृतं प्रश्नमुपसंहरति—**विस्तरेणेति**। अर्दतेर्गतिकर्मणो जनार्दनेति रूपं तद्व्युत्पादयति—**असुराणामिति**। प्रकारान्तरेण शब्दार्थं व्युत्पादयति—**अभ्युदयेति**। ननु पूर्वमेव सप्तमे नवमे च विभूतिरैश्वर्यं चेश्वरस्य दर्शितं तत्किमिति श्रोतुमिष्यते तत्राऽऽह—**भूय इति**। अमृतममृतप्रख्यमित्यर्थः ॥ १८ ॥

**आ० भा०**—न जायतेऽर्दयति च संसारमिति जनार्दनः। तथा च बाभ्रव्यशाखायां "स भूतः स जनार्दनः" इति। "स ह्यासीत्स नासीत्सोऽर्दयत्" इति ॥ १८ ॥

**आ० ज०**—अर्द गतौ याचने चेति वचनात् आसुरजनानां नरकादिगमयितृत्वाज्जनैर्याच्यत्वाद्वा जनार्दन इति संकरः। तदप्रामाणिकं व्याख्यानम्। इदं तु श्रौतत्वादुपादेयमिति भावेनाह—**न जायत इति**। नञः परनिपातः। अत एव नलोपाभावः। उत्तरपदे तस्य स्मरणात् अर्दयति गमयति। **स ह्यासीदिति**। भूतः। अनादितः सत्तावानित्यर्थः। स नासीन्न जन्मवान्सोऽर्दयतीति जनार्दनः ॥ १८ ॥

**रा० भा०**—'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इति संक्षेपेणोक्तं तव स्रष्टृत्वादियोगं विभूतिं नियमनं च भूयो विस्तरेण कथय त्वयोच्यमानं त्वन्माहात्म्यामृतं शृण्वतो मे तृप्तिर्नास्ति हि ममातृप्तिस्त्वयैव विदितेत्यभिप्रायः ॥ १८ ॥

**अ० टी०**—यच्चिन्तनात् त्वां प्राप्नोमि याथातथ्येन जानामि तादृशमात्मनो योगं पदार्थेषु क्रीडात्मकं योगं। च पुनः। तादृशीमेव विभूतिं हे जनार्दन! सर्वाऽविद्यानाशक पूर्वं संक्षेपकथितामपि भूयो विस्तारेण कथय। हि यस्मात् अमृतं मोक्षात्मकं मरणनिवर्तकमानन्दरूपं त्वद्वाक्यं शृण्वतो मे तृप्तिः अलंभावो न भवतीत्यर्थः ॥ १८ ॥

**नी० टी०**—योगं वैश्वरूप्यं विभूतिं ध्यानालंबनं अमृतममृतस्य मोक्षस्य साधनम् ॥ १८ ॥

श्रीभगवानुवाच—हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ॥
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

**शां० भा०**—हन्त त इति। हन्तेदानीं ते दिव्या दिवि भवा आत्मविभूतय आत्मनो मम विभूतयो यास्ताः कथयिष्यामीत्येतत्प्राधान्यतो यत्र यत्र प्रधाना या या विभूतिस्तां तां प्रधानां प्राधान्यतः कथयिष्याम्यहं कुरुश्रेष्ठ। अशेषतस्तु वर्षशतेनापि न शक्या वक्तुं यतो नास्त्यन्तो विस्तरस्य मे मम विभूतीनामित्यर्थः ॥ १९ ॥

**शां० आ०**—प्रष्टारं विश्रम्भयितुं भगवानुक्तवानित्याह—**श्रीभगवानिति**। हन्तेत्यनुमतिं व्यावर्त्य जिज्ञासावच्छिन्नं कालं दर्शयति—**इदानीमिति**। दिविभवत्वमप्राकृतत्वमस्मदगोचरत्वम्। वाक्यान्वयं द्योतयति—**यास्ता इति**। सर्वविभूतीनां वक्तव्यत्वप्राप्तावुक्तम्—**यत्रेति**। किमित्यनवशेषतो विभूतयो नोच्यन्ते तत्राऽऽह—**अशेषतस्त्विति**। तत्र हेतुः—**यत इति** ॥ १९ ॥

**आ० भा०**—॥ १९ ॥

**आ० ज०**—॥ १९ ॥

**रा० भा०**—हे कुरुश्रेष्ठ ! मदीयाः कल्याणीर्विभूतीः प्राधान्यतस्ते कथयिष्यामि प्राधान्यशब्देनोत्कर्षो विवक्षितः ‘ पुरोधसां च मुख्यं माम् ’ इति हि वक्ष्यते जगत्युत्कृष्टाः काश्चन विभूतीर्वक्ष्यामि विस्तरेण वक्तुं श्रोतुं च न शक्यते तासामानन्त्यात् । विभूतित्वं नाम नियाम्यत्वं सर्वेषां भूतानां बुद्ध्यादयः पृथग्विधा भावा मत्त एव भवन्तीत्युक्त्वा ‘ एतां विभूतिं योगं च मम यो वेति तत्त्वतः।’ इति प्रतिपादनात् तथा तत्र योगशब्दनिर्दिष्टं स्रष्टृत्वादिकं विभूतिशब्दनिर्दिष्टं तत्प्रवर्त्यत्वमिति पुनश्च ‘अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥’ इत्युक्तम् ॥ १९ ॥

**अ० टी०**—एवं जिज्ञासुनाऽर्जुनेन प्रार्थित आह—**हंतेति** । स्वस्वरूपज्ञानार्थकताद्दक्प्रार्थनया हंतेतिहर्षे । हे कुरुश्रेष्ठ ! भक्तवंशोद्भव ! दिव्याः क्रीडारूपा विभूतयः ते प्राधान्यतस्त्वद्योग्यास्त्वदर्थं कथयिष्यामि । ननु विस्तरेण कथं नोच्यतइत्यत आह—**नास्तीति** । मे विभूतीनां विस्तरस्य अन्तो नास्ति । अतस्त्वत्पृष्टत्वाद्योग्या एव कथयिष्यामीतिभावः ॥ १९ ॥

**नी० टी०**—अत्रोत्तरं श्रीभगवानुवाच—**हंतेति** । हंत इदानीं हंतेत्यनुमतौ वा दिव्याः पुराणांतरेष्वपि श्रेष्ठत्वेन प्रसिद्धा या आत्मविभूतयस्ताः कथयामीति योजना प्राधान्यत इति योगोपकारित्वेन विभूतय इह प्राधान्येन । योगस्तु संक्षेपेणैवोच्यते तस्याग्रे वक्ष्यमाणत्वादिति भावः । अन्यथा योगं विभूतिं च कथयेति पृष्टे विभूतिमात्रकथनेनानवहितचित्तत्वं भगवतः स्यात् । नास्त्यंतो विस्तरस्य मे विभूतीनामिति विपरिणामेनानुषंजनीयम् ॥ १९ ॥

## अहमात्मा गुडाकेश सर्वभूताशयस्थितः ॥
## अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥

**शां० भा०**—तत्र प्रथममेव तावच्छृणु—अहमात्मा प्रत्यगात्मा गुडाकेश गुडाका निद्रा तस्या ईशो गुडाकेशो जितनिद्र इत्यर्थः, घनकेश इति वा । सर्वेषां भूतानामाशयेऽन्तर्हृदि स्थितोऽहमात्मा प्रत्यगात्मा नित्यं ध्येयः । तदशक्तेन चोत्तरेषु भावेषु चिन्त्योऽहं चिन्तयितुं शक्यो यस्मादहमेवाऽऽदिर्भूतानां कारणं तथा मध्यं च स्थितिरन्तः प्रलयश्च ॥ २० ॥

**शां० आ०**—विभूतिप्रदर्शने प्रस्तुते सत्यादावेव पारमार्थिकं पारमेश्वरं रूपं दर्शयितुं श्रोतुरर्जुनस्य मनःसमाधानार्थं यतते—**तत्रेति** । सोपाधिकमपि काल्पनिकं परस्य रूपं पश्चाद्वक्ष्यमाणं श्रोतुं चित्तसमाधानं कर्तव्यमेवेत्याह—**तावदिति** । आशेरतेऽस्मिन्विद्याकर्मपूर्वप्रज्ञा इत्याशयो हृदयं सर्वेषां भूतानां हृदयेऽन्तः स्थितो यः प्रत्यगात्मा सोऽहमेवेति वाक्यार्थमाह—**सर्वेषामिति** । यस्तु मन्दो मध्यमो वा परमात्मानमात्मत्वेन ध्यातुं नालं तं प्रत्याह—**तदशक्तेनेति** । वक्ष्यमाणादित्यादिषु परस्य न ध्येयत्वमन्यदेव कारणं किंचित्तत्र तत्र ध्येयमित्याशङ्क्याऽऽह—**यस्मादिति** । सर्वकारणत्वेन सर्वज्ञत्वेन सर्वेश्वरत्वेन च परस्य ध्येयत्वमत्रेप्सितं नान्यस्य कस्यचित्कारणस्याऽऽदित्यादिषु ध्येयतेत्यर्थः ॥ २० ॥

**आ० भा०**—॥ २० ॥

**आ० ज०**—॥ २० ॥

**रा० भा०**—तत्र सर्वभूतानां प्रवर्तनरूपं नियमनमात्मतयावस्थायेतीममर्थं योगशब्दानिर्दिष्टं सर्वस्य स्रष्टृत्वं पालयितृत्वं संहर्तृत्वं चेति सुस्पष्टमाह। सर्वेषां भूतानां मम शरीरभूतानाम् आशये हृदये अहमात्मतयावस्थितः आत्मा हि नाम शरीरस्य सर्वात्मन आधारो नियन्ता शेषी च तथा वक्ष्यते। 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च। ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥' इति। श्रूयते च। "यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरोऽयं सर्वाणि भूतानि न विदुः। यस्य सर्वाणि भूतानि शरीरं, यः सर्वाणि भूतान्यन्तरो यमयति। एषत सर्वान्तर्याम्यमृत" इति "य आत्मनि तिष्ठन् आत्मनोऽन्तरोऽयमात्मा न वेद। यस्य आत्मा शरीरम्। य आत्मानमन्तरो यमयति। सत आत्मान्तर्याम्यमृतः" इति च। एवं सर्वभूतानाम् आत्मतयावस्थितोऽहं तेषामादिर्मध्यं चान्तश्च तेषामुत्पत्तिस्थितिप्रलयहेतुरित्यर्थः॥ २०॥

**अ० टी०**—एवं कथनं प्रतिज्ञाय प्रथमं सर्वत्र स्वयोगमाह—**अहमिति**। अतन्द्रितभावेन श्रवणार्थं संबोधयति। हे गुडाकेश! सर्वभूतानामाशयेषु अन्तःकरणेषु स्थितः आत्मा अहम् तेन मदात्मकात्मसंबन्धेन सर्वेषां जीवानां विषयानन्दमारभ्य ब्रह्मानन्दाऽनुभवान्ताऽऽनन्दानुभवो भवतीत्यर्थः। त्वयाऽपि तेषु आनन्दानुभवार्थकमदंशात्मकसंयोगात्मकोऽहं चिन्तनीय इतिभावः। एतच्चिन्तनं च माहात्म्यज्ञानायोपयोक्ष्यतीतिभावः। ननु त्वदात्मसंयोगे नाशः कथं भवतीत्याकाङ्क्षायामाह—**अहमिति**। भूतानाम् आदिः उत्पत्तिस्थानं चाहं। च पुनः मध्यं स्थितिः। अन्तश्च लयस्थानम् अहमेव। यतो मदिच्छया मत्क्रीडार्थमुत्पादिताः यावत्क्रीडनं च रक्षिताः क्रीडोपसंहारेच्छायां च लयं प्रापिता अतो न दोष इतिभावः। मयोत्पादितानां मदात्मांशसंयुक्तानामन्यतो नाशोऽन्यलीनत्वे दोषः स्यात् न तु मयि लीनानाम्। इदमेवैवकारेण द्योतितम्। अतएव निर्दोषभावेन मदंशात्मसंयोगं सर्वेषु चिन्तयेतिभावः॥ २०॥

**नी० टी०**—संक्षेपेण योगमाह—**अहमिति**। हेगुडाकेश हेजितनिद्र! घनकेशेति वा अहं वासुदेव आत्मा अततीत्यात्मा व्यापकः अत एव सर्वेषां भूतानामाशय एकीभावस्थानं जलानामिव कासारो जलाशयस्तद्वदहं सर्वभूताशयः स्थितोऽचलः। 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति वार्तिकेन पक्षे विसर्गलोपः। भाष्ये तु सर्वेषां भूतानामाशयेंऽतर्हृदि स्थित इति व्याख्यातं। सर्वभूताशयत्वादेवाहं आदिर्जन्मकारणं। मध्यं स्थितिकारणं भूतानामंतो लयस्थानं। सर्वमिदं ब्रह्मांडं मय्येवास्तीति भावः॥ २०॥

## आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्॥
## मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी॥ २१॥

**शां० भा०**—एवं च ध्येयोऽहम्—आदित्यानां द्वादशानां विष्णुर्नामाऽऽदित्योऽहं ज्योतिषां रविः प्रकाशयितृणामंशुमान्रश्मिमान्मरीचिर्नाम मरुतां मरुद्देवताभेदानामस्मि नक्षत्राणामहं शशी चन्द्रमाः॥ २१॥

**शां० आ०**—उक्तध्यानाशक्तेभ्यो व्यस्तं विभूतियोगमुपदिशति—**एवं चेति**। तत्र तत्र प्रधानत्वेन परस्य ध्येयत्वम्। एवंशब्दार्थमेव दर्शयति—**आदित्यानामित्यादिना**॥ २१॥

**आ० भा०**—विष्णुः सर्वव्यापित्वप्रवेशित्वादेः। विष्लृ व्याप्तौ विश्प्रवेशन इति च पठंति। 'गतिश्च सर्वभूतानां प्रजानां चापि भारत। व्याप्तौ मे रोदसी पार्थ कांतिश्चाभ्यधिका मम॥ अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत। क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः' इति मोक्षधर्मे॥ २१॥

**आ० ज०**—द्विविधं विभूतिरूपं प्रत्यक्षं तिरोहितं चात्र विष्ण्वादिकं प्रत्यक्षमिति ज्ञापयितुं तच्छब्दान्व्याकुर्वन् आदित्यानामहं विष्णुरिति विष्णुशब्दं तावत्सप्रमाणकं व्याकरोति—**विष्णुरिति**। सर्वेति योग्यतया संबध्यते आदिपदेन वक्ष्यमाणार्थसंग्रहः चशब्दो धात्वंतरसमुच्चयार्थः गच्छंत्यनेनेति गतिः। भूतानां पृथिव्यादीनां प्रजानां ब्रह्मादीनां। वी गतिप्रजनकांत्यशनखादनेष्वित्यतो गत्यर्थात्क्स्नुप्रत्ययो धातोर्ह्रस्वश्च। मे मया रोदसी द्यावापृथिव्यौ व्याप्तौ व्याप्ते विषॢव्याप्तावित्यतः क्नुः कांतिः कमनीयता वशकांतावित्यतो नुः धातोरकारस्येकारः शकारस्य षकारः। वीगतीत्यतो वा कांतिकर्मणः क्स्नुः। अधिभूतं प्राग्व्याख्यातम्। विश् प्रवेशन इति अतः क्नुः षत्वं च। तदिच्छुरधिभूतस्य जन्मादीच्छुः। कांतिरिच्छा। अतो वयतेर्वष्टेश्च पूर्ववद्रूपम्। क्रमणात् त्रिविक्रमरूपेण पादविक्षेपात्। पूर्ववद्व्यतेर्गत्यर्थात्कर्तरि प्रत्ययः॥ २१॥

**रा० भा०**—एवं भगवतः स्वविभूतिभूतेषु सर्वेष्वात्मतयावस्थानं तत्तच्छब्दसामानाधिकरण्यनिर्देशहेतुं प्रतिपाद्य विभूतिविशेषान् सामानाधिकरण्येन व्यपदिशति। भगवत्यात्मतयावस्थिते हि सर्वे शब्दास्तस्मिन्नेव पर्यवस्यन्ति यथा देवो मनुष्यः पक्षी वृक्ष इत्यादयः शब्दाः शरीराणि प्रतिपादयन्तः तत्तदात्मनि पर्यवस्यन्ति भगवतस्तत्तदात्मतयावस्थानमेव तत्तच्छब्दसामानाधिकरण्यनिबन्धनमिति विभूत्युपसंहारे वक्ष्यति 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्।' इति सर्वेषां स्वेनाविनाभाववचनात् अविनाभावश्च नियाम्यतयेति 'मत्तः सर्वं प्रवर्तते' इत्युपक्रमोदितं द्वादशसंख्यासंख्यातानामदित्यानां द्वादशो य उत्कृष्टो विष्णुनामादित्यः सोऽहं ज्योतिषां जगति प्रकाशकानां योंऽशुमान् रविरादित्यगणः सोऽहं मरुतामुत्कृष्टो मरीचिर्यः सोऽहमस्मि नक्षत्राणामहं शशी। नेयं निर्धारणे षष्ठी। भूतानामस्मि चेतनेतिवत् नक्षत्राणां पतिर्यश्चन्द्रः सोऽहमस्मि॥ २१॥

**अ० टी०**—योगयुक्ता विभूतीः कथयति—**आदित्यानामित्यारभ्य** यावदध्यायसमाप्ति। आदित्यानां द्वादशानां मध्ये विष्णुः व्यापकधर्मात्मको बिम्बप्रकाशकोऽहम्। ज्योतिषां बहिर्जगत्प्रकाशकानां मध्ये अंशुमान् सर्वप्रकाशकरश्मियुक्तो रविः सूर्योऽस्मीत्यर्थः। मरुतां वायूनां मध्ये मरीचिर्नाम कश्चन सर्वसुखोत्पादनरूपो वायुरस्मि। नक्षत्राणां मध्ये शशी चन्द्रोऽस्मि। शशीतिनाम्ना रोहिण्यासक्तिजलाञ्छनवत्त्वेन रसात्मकाऽऽसक्तिधर्मरूपशृङ्गाररसात्मकत्वं व्यञ्जितम्॥ २१॥

**नी० टी०**—योगमुक्त्वा विभूतीराह—**आदित्यानामित्यादिना** यावदध्यायसमाप्ति। आदित्यानां द्वादशानां मध्ये विष्णुनामाऽदित्योऽहं वामनावतारो वा। ज्योतिषामग्न्यादीनां मध्ये रविरंशुमान् अत्यंतं प्रतपनशीलो निदाघमध्याह्ने तीव्रातपवान् रविरहमेवेत्यर्थः। मरुतां सप्तसप्तकानां मध्ये मरीचिरहं। नक्षत्राणां ताराणां अत्र प्रायेण निर्द्धारणे षष्ठी भूतानामस्मि चेतनेत्यादौ संबंधेऽपि शशी चंद्रमाः॥ २१॥

## वेदानां सामवेदोऽस्मि देवानामस्मि वासवः॥
## इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना॥ २२॥

**शां० भा०**—वेदानामिति। वेदानां मध्ये सामवेदोऽस्मि, देवानां रुद्रादित्यादीनां वासव इन्द्रोऽस्मि, इन्द्रियाणामेकादशानां चक्षुरादीनां मनश्चास्मि संकल्पविकल्पात्मकं मनश्चास्मि। भूतानामस्मि चेतना कार्यकरणसंघाते नित्याभिव्यक्ता बुद्धिवृत्तिश्चेतना॥ २२॥

**शां० आ०**—मन्त्रब्राह्मणसमुदायानामृगादीनां मध्ये सामवेदोऽस्मीति ध्यानान्तरमुदाहरति—**वेदानामिति**। संघाते जीवाधिष्ठिते यावत्पञ्चत्वं सर्वत्र व्यापिनी चैतन्याभिव्यञ्जिकेति शेषः॥ २२॥

आ० भा०—॥ २२ ॥

आ० ज०—॥ २२ ॥

रा० भा०—वेदानाम् ऋग्यजुः सामाथर्वणां य उत्कृष्टः सामवेदः सोऽहं देवानामिन्द्रोऽहमस्मि एकादशानामिन्द्रियाणां यदुत्कृष्टं मन इन्द्रियं तदहमस्मि इयमपि न निर्धारणे भूतानां चेतनावतां या चेतना साहमस्मि ॥ २२ ॥

अ० टी०—वेदानां चतुर्णामपि मध्ये सामवेदोऽस्मि । गानात्मकमाधुर्यरसवत्त्वेनाऽधिक्यं तत्रेतिभावः । देवानां मध्ये वासव इन्द्रोऽस्मि । शतमखत्वेन सर्वक्रियांशभोक्तृत्वेन राज्यभोक्तृत्वेन च । इन्द्रियाणाम् आधिदैविकेन्द्रियरूपोऽस्मि । च पुनः । सर्वप्रेरकत्वान्मनोऽस्मि । भूतानां चेतनानां चेतना ज्ञानशक्तिरस्मि ॥ २२ ॥

नी० टी०—सामवेदो गानेन रमणीयत्वात् वासवो देवराजत्वात् मन इंद्रियांतरप्रवर्त्तकत्वात् चेतना धीवृत्तिः चिदभिव्यक्तिहेतुत्वात् एते वेदादीनां मध्ये श्रेष्ठाः ॥ २२ ॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ॥
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥

शां० भा०—रुद्राणामिति । रुद्राणामेकादशानां शंकरश्चास्मि । वित्तेशः कुबेरो यक्षरक्षसां यक्षाणां रक्षसां च । वसूनामष्टानां पावकश्चास्म्यग्निर्मेरुः शिखरिणां शिखरवतामहम् ॥ २३ ॥

शां० आ०—॥ २३ ॥

आ० भा०—॥ २३ ॥

आ० ज०—॥ २३ ॥

रा० भा०—रुद्राणामेकादशानां शंकरोऽहमस्मि यक्षरक्षसां वैश्रवणोऽहं वसूनामष्टानां पावकोऽहं शिखरिणां शिखरशोभिनां पर्वतानां मध्ये मेरुरहम् ॥ २३ ॥

अ० टी०—रुद्राणां तामसानामेकादशानां च मध्ये शंकरः सुखकरः सर्वेषां भक्तिज्ञानोपदेशकोऽस्मि।यक्षरक्षसां वित्तेशः कुबेरोऽस्मि। वसूनां मध्ये मुख्यतया द्रोणोऽस्मि । अतएव 'द्रोणो वसूनां प्रवर 'इति श्रीभागवते उक्तं। च पुनः। पावकः आग्निरास्मि। शिखरिणां शिखरवताम् उच्चानां मध्ये मेरुरहमस्मि ॥ २३ ॥

नी० टी०—रुद्राणामेकादशानां वसूनामष्टानां शिखराणि रत्नविशेषास्तद्वतां मध्ये मेरुरहम् ॥ २३ ॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ॥
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥

शां० भा०—पुरोधसामिति । पुरोधसां राजपुरोहितानां मुख्यं प्रधानं मां विद्धि जानीहि हे पार्थ! बृहस्पतिम् । स हीन्द्रस्येति मुख्यः स्यात्पुरोधाः । सेनानीनां सेनापतीनामहं स्कन्दो देवसेनापतिः । सरसां यानि देवखातानि सरांसि तेषां सरसां सागरोऽस्मि भवामि ॥ २४ ॥

शां० आ०—पुरोहितेषु बृहस्पतेर्मुख्यत्वे हेतुमाह—स हीति ॥ २४ ॥

भा० श्रा०—॥ २४ ॥

आ० ज०—॥ २४ ॥

रा० भा०—पुरोधसामुत्कृष्टो बृहस्पतिर्यः सोऽहमस्मि सेनानीनां सेनापतीनां स्कन्दोऽहमस्मि सरसां सागरोऽहमस्मि ॥ २४ ॥

अ० टी०—हे पार्थ ! पुरोधसां च मध्ये मुख्यं बृहस्पतिं मां विद्धि । पार्थेतिसंबोधनेन पृथासंबन्धेन त्वयि कृपां करोमि । तथा निन्दिते पौरोहित्येऽपि देवक्रियया तस्मिन् बुद्ध्यादिशक्तिरूपेण तिष्ठामि । तेन मत्स्वरूपं विद्धीतिव्यञ्जितम् । सेनानीनां सेनामध्ये देवसेनापतित्वात् स्कन्दोऽस्मि । सरसां रसयुतानां स्थिरजलानां मध्ये सागरः समुद्रोऽस्मि । रत्नाकर इत्यर्थः ॥ २४ ॥

नी० टी०—पुरोधसां पुरोहितानां बृहस्पतिं देवराजपुरोहितत्वात् । सेनानीनां सेनापतीनां स्कंदः कार्त्तिकेयः सरसां जलाशयानाम् ॥ २४ ॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ॥**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**

शां० भा०—महर्षीणामिति । महर्षीणां भृगुरहं गिरां वाचां पदलक्षणानामेकमक्षरमोंकारोऽस्मि । यज्ञानां जपयज्ञोऽस्मि, स्थावराणां स्थितिमतां हिमालयः ॥ २५ ॥

शां० आ०—एकमित्योंकारस्य ब्रह्मप्रतीकत्वेन तदभिधानत्वेन च प्रधानत्वमुच्यते । जपयज्ञस्य यज्ञान्तरेभ्यो हिंसादिराहित्येन प्राधान्यमुपेत्याऽऽह—**यज्ञानामिति** । शिखरवतामुच्छ्रितानां पर्वतानां मध्ये मेरुरहमित्युक्तेऽपि स्थितिशीलानां तेषामेव हिमवान्पर्वतराजोऽस्मीत्यर्थभेदं गृहीत्वाऽऽह—**स्थितिमतामिति** ॥ २५ ॥

आ० भा०—॥ २५ ॥

आ० ज०—॥ २५ ॥

रा० भा०—महर्षीणां मरीच्यादीनां भृगुरहं अर्थाभिधायिनः शब्दा गिरः तासामेकमक्षरं प्रणवोऽहमस्मि यज्ञानामुत्कृष्टो जपयज्ञोऽस्मि पर्वतमात्राणां हिमवानहम् ॥ २५ ॥

अ० टी०—महर्षीणां सर्ववेदाऽऽत्मको भृगुरस्मि । गिरां पदात्मकानां मध्ये एकाक्षरम् ॐकारात्मकमहमस्मि । यज्ञानां कर्मणां मध्ये जपयज्ञोऽस्मि । स्थावराणामचलानां हिमालयोऽस्मि ॥ २५ ॥

नी० टी०—एकमक्षरं ओंकाराख्यं जपयज्ञो हिंसाशून्यत्वात् स्थावराणां स्थितिमताम् ॥ २५ ॥

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ॥**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥**

शां० भा०—अश्वत्थ इति । अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदो देवा एव सन्त ऋषित्वं प्राप्ता मन्त्रदर्शित्वात्ते देवर्षयस्तेषां नारदोऽस्मि । गन्धर्वाणां चित्ररथो नाम गन्धर्वोऽस्मि । सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलो मुनिः ॥ २६ ॥

शां० आ०—सर्ववृक्षाणामित्यत्र सर्वशब्देन वनस्पतयो गृह्यन्ते ॥ २६ ॥

**आ० भा०**—सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः । 'प्रीतिः सुखं कमानंद' इत्यभिधानात् "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति च ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् । सुखादनंतात्पालनाल्लीयनाच्च यं वै देवं कपिलमुदाहरंति" इति बाभ्रव्यशाखायाम् ॥ २६ ॥

आ० ज०—सिद्धानां कपिलो मुनिरिति कपिलशब्दं व्याचष्टे—**सुखेति** । सुखरूप इति कः । पाल्यते जगदनेनेति पिः । पा रक्षण इत्यतः किः । लीयते जगदनेनेति लः । लीश्लेषण इत्यस्माड्डः ला आदानइत्यतो वा कः । ततः कर्मधारयः कशब्दस्य सुखवाचित्वेऽभिधानं प्रयोगं च पठति—**प्रीतिरिति** । समग्रार्थे श्रुतिमाह—**ऋषिमिति** । तं भगवंतमृषिं च पश्येत् । कथमृषिः सर्वज्ञत्वादित्युच्यते । यः प्रसूतं पूर्वकल्पेषु जातं जायमानं वर्तमानं चैवमागामि च जगज्ज्ञानैर्बिभर्ति जानातीति यावत् । कथं कपिल इत्यत उक्तं—**सुखादिति** । यच्छब्दद्वयस्य तमित्यनेनान्वयः ॥ २६ ॥

**रा० भा०**—वृक्षाणां पूज्योऽहं देवर्षीणां नारदोऽहम् ॥ २६ ॥

**अ० टी०**—सर्ववृक्षाणां मध्ये अश्वत्थः पिप्पलोऽस्मि । देवर्षीणां देवमन्त्रद्रष्टॄणां मध्ये मदिङ्गितोपदेशकत्वान्नारदोऽस्मि । गन्धर्वाणां गायकानां मध्ये चित्ररथोऽस्मि । सिद्धानाम् अधिगतपरमार्थानां मध्ये स्वतोऽधीतपरमार्थरूपः कपिलो मुनिरस्मि ॥ २६ ॥

**नी० टी०**—॥ २६ ॥

**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ॥**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥**

**शां० भा०**—उच्चैरिति । उच्चैःश्रवसमश्वानामुच्चैःश्रवा नामाश्वस्तं मां विद्धि जानीह्यमृतोद्भवममृतनिमित्तमथनोद्भवम् । ऐरावतमिरावत्या अपत्यं गजेन्द्राणां हस्तीश्वराणां तं मां विद्धीत्यनुवर्तते। नराणां मनुष्याणां च नराधिपं राजानं मां विद्धि जानीहि ॥ २७ ॥

शां० आ०—॥ २७ ॥

**आ० भा०**—॥ २७ ॥

आ० ज०—॥ २७ ॥

**रा० भा०**—॥२७॥

**अ० टी०**—अश्वानाम् अमृतमथने अमृतसंगोत्पन्नम् उच्चैःश्रवसं मदंशं विद्धि । गजेन्द्राणाम् ऐरावतं विद्धि। नराणां मध्ये पालकं नरं राजानं विद्धि ॥ २७ ॥

**नी० टी०**—अमृतोद्भवं अमृतमथनावसरे उद्भवो यस्य तम् ॥ २७ ॥

**आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ॥**
**प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥**

**शां० भा०**—आयुधानामिति । आयुधानामहं वज्रं दधीच्यस्थिसंभवं धेनूनां दोग्ध्रीणामस्मि कामधुक्, वसिष्ठस्य सर्वकामानां दोग्ध्री सामान्या वा कामधुक् । प्रजनः प्रजनयिताऽस्मि कंदर्पः कामः। सर्पाणां सर्पभेदानामस्मि वासुकिः सर्पराजः ॥ २८ ॥

**शां० आ०**—प्रजनयतीति व्युत्पत्तिमाश्रित्याऽऽह—**प्रजनयितेति**। सर्पा नागाश्च जातिभेदाद्भिद्यन्ते ॥ २८ ॥

**आ० भा०**—॥ २८ ॥

**आ० ज०**—॥ २८ ॥

**रा० भा०**—कामधुक् दिव्या सुरभिः जननहेतुः कन्दर्पश्चाहमस्मि सर्पाः एकशिरसः ॥ २८ ॥

**अ० टी०**—आयुधानां शस्त्राणां मध्ये वज्रम् असि।धेनूनां दोग्ध्रीणां कामधुक् कामधेनुरस्मि।प्रजनः प्रजोत्पादकः कंदर्पश्च कामोऽस्मि। चकारेण केवलसंभोगहेतुर्निवारितः। सर्पाणां विषधराणां गतिमतां वा वासुकिरस्मि ॥ २८ ॥

**नी० टी०**—प्रजनोऽपत्यजनयिता कंदर्पः कामः न तु वृथामैथुनरूपः ॥ २८ ॥

**अनन्तश्चास्मि नागानां वरुणो यादसामहम् ॥**
**पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥**

**शां० भा०**—अनन्त इति। अनन्तश्चास्मि नागानां नागविशेषाणां नागराजश्चास्मि। वरुणो यादसामहमब्देवतानां राजाऽहम्। पितॄणामर्यमा नाम पितृराजश्चास्मि, यमः संयमतां संयमनं कुर्वतामहम् ॥ २९ ॥

**शां० आ०**—॥ २९ ॥

**आ० भा०**—॥ २९ ॥

**आ० ज०**—॥ २९ ॥

**रा० भा०**—नागा बहुशिरसः यादांसि जलवासिनस्तेषा वरुणोऽहं दण्डयतां वैवस्वतोऽहम्॥२९॥

**अ० टी०**—नागानाम् अविषाणां स्थिराणां मध्ये अनन्तस्तेषामधीशः शेषोऽस्मि। यादसां जलचराणां पतिर्वरुणोऽस्मि। पितॄणां मुख्यः अर्यमा चास्मि। चकारेण सर्वेषां पितृरूपत्वमपि ज्ञापितम्। संयमतां नियमं कुर्वतां मुख्यो यमोऽस्मि ॥ २९ ॥

**नी० टी०**—नागानां सर्पावांतरभेदानां यादसां जलचराणां संयमतां नियमनकर्तॄणाम् ॥ २९ ॥

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ॥**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥**

**शां० भा०**—प्रह्लाद इति। प्रह्लादो नाम चास्मि दैत्यानां दितिवंश्यानां, कालः कलयतां कलनं गणनं कुर्वतामहं, मृगाणां च मृगेन्द्रः सिंहो व्याघ्रो वाऽहं, वैनतेयश्च गरुत्मान्विनतासुतः पक्षिणां पतत्रिणाम् ॥ ३० ॥

**शां० आ०**—॥ ३० ॥

**आ० भा०**—॥ ३० ॥

**आ० ज०**—॥ ३० ॥

**रा० भा०**—अनर्थप्रेप्सुतया गणयतां मध्ये कालो मृत्युरहम् ॥ ३० ॥

अ० टी०—दैत्यानां च असंभावितत्वात् मध्ये दैत्यकुलोद्धारकः प्रह्लादोऽस्मि । कलयतां व्याकुर्वतां कालोऽहमस्मि । मृगाणां मृगेन्द्रः सिंहः । पक्षिणां पक्षवतां मध्ये वैनतेयस्तेषां राजा गरुडोऽस्मि ॥ ३० ॥

नी० टी०—कलयतां गणनं कुर्वताम् ॥ ३० ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ॥
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

शां० भा०—पवन इति । पवनो वायुः पवतां पावयितॄणामस्मि, रामः शस्त्रभृतामहं शस्त्राणां धारयितॄणां दाशरथी रामोऽहं, झषाणां मत्स्यादीनां मकरो नाम जातिविशेषोऽहं स्रोतसां स्रवन्तीनामस्मि जाह्नवी गङ्गा ॥ ३१ ॥

शां० आ०—॥ ३१ ॥

आ० भा०—आनंदरूपत्वात्पूर्णत्वाल्लोकरमणत्वाच्च रामः । "आनंदरूपो निष्परिमाण एष लोकश्चैतस्माद्रमते तेन रामः" इति शांडिल्यशाखायाम् । रश्च अमश्चेति व्युत्पत्तिः ॥ ३१ ॥

आ० ज०—रामः शस्त्रभृतामहमिति रामशब्दं व्याख्याति—**आनंदेति**। आनंदरूपत्वात्पूर्णत्वादित्येकोऽर्थः। रमत इति रः। रमु क्रीडायामित्यतोऽन्यमंताड्डइति डः। न विद्यते मा प्रमा परिच्छेदोऽस्येत्यमः लोकइत्यपरोर्थः। रमतेर्घञ्। अत्र श्रुतिमाह—**आनंदेति**। आद्येऽर्थे विग्रहं दर्शयाति—**रश्चेति**। रश्चासावमश्चेत्यर्थः ॥ ३१ ॥

रा० भा०—पवतां गमनस्वभावानां पवनोऽहं शस्त्रभृतां रामोऽहम् । अत्र शस्त्रभृत्त्वं विभूतिः अर्थान्तराभावात् आदित्यादयश्च क्षेत्रज्ञा आत्मत्वेनावस्थितस्य भगवतः शरीरतया धर्मभूता इति शस्त्रभृत्त्वस्थानीयाः ॥ ३१ ॥

अ० टी०—पवतां वेगवतां मध्ये पवनः वायुरस्मि । शस्त्रभृतां रामः दशरथात्मजोऽस्मि । झषाणां मध्ये मकरः मत्स्यजातिविशेषोऽस्मि । स्रोतसां प्रवहज्जलानां मध्ये जाह्नवी गङ्गास्मि ॥ ३१ ॥

नी० टी०—पवतां पावयितॄणां वेगवतां वा रामो दाशरथिः रामादीनां परमेश्वराणामपि विभूतिमध्ये गणनं ध्यानार्थं झषाणां मत्स्यादीनां मकरो जातिभेदः स्रोतसां नदीनाम् ॥ ३१ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ॥
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

शां० भा०—सर्गाणामिति । सृष्टीनामादिरन्तश्च मध्यं चैवाहमुत्पत्तिस्थितिलया अहमर्जुन । भूतानां जीवाधिष्ठितानामेवाऽऽदिरन्तश्चेत्याद्युक्तमुपक्रम इह तु सर्वस्यैव सर्गमात्रस्येति विशेषः । अध्यात्मविद्या विद्यानां मोक्षार्थत्वात्प्रधानमस्मि । वादोऽर्थनिर्णयहेतुत्वात्प्रवदतां प्रधानमतः सोऽहमस्मि । प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डानामिह ग्रहणं प्रवदतामिति ॥ ३२ ॥

शां० आ०—अहमादिश्चेत्यादावुक्तमेव पुनरिहोच्यते तथा च पुनरुक्तिरित्याशङ्क्याऽऽह—**भूतानामिति** । सर्गशब्देन सृज्यन्त इति सर्वाणि कार्याणि गृह्यन्ते । **अध्यात्मविद्येति** । आत्मन्यन्तःकरणपरिणतिरविद्यानिवर्तिका गृहीता । प्रवदतां

संबन्धी वादो वीतरागकथा तत्त्वनिर्णयावसाना। यदा प्रवदतामिति लक्षणया कथाभेदोपादानं तदा निर्धारणे षष्ठीत्याह— प्रवक्त्रिति ॥ ३२ ॥

**आ० भा०—**॥ ३२ ॥

आ० ज०—॥ ३२ ॥

**रा० भा०—सृज्यन्त इति सर्गाः तेषामादिः कारणं सर्वदा सृज्यमानानां सर्वेषां प्राणिनां तत्र तत्र स्रष्टारोऽहमेवेत्यर्थः। तथान्तः सर्वदा संह्रियमाणानां तत्र तत्र संहर्तारोऽप्यहमेव तथा च मध्यं पालनं सर्वदा पाल्यमानानां पालयितारश्चाहमेवेत्यर्थः। जल्पवितण्डादि कुर्वतां तत्त्वनिर्णयाय प्रवृत्तो वादो यः सोऽहम् ॥ ३२ ॥**

**अ० टी०—सर्गाणामिति।** सृज्यन्त इति सर्गाः भूतादयश्च स त्रिविधः कार्यसर्गः कारणसर्गः। तत्र कार्यसर्गो लौकिको बहिःसृष्टिरूपः। स च जीवनाशरूपत्वात् प्रलयात्मकः। कारणसर्गस्तु मोक्षात्मकत्वादलौकिकः। तृतीयो भगवल्लीलात्मकः। तत्राऽप्यवान्तरभेदास्तत्त्वकालजीवादिरूपाः सन्ति तेषां सर्गाणां मध्ये आदिः कारणरूपोऽहम्। च पुनः। अन्तः रजोगुणात्मकब्रह्मकृतोऽन्तात्मकोऽप्यहम्। मध्यं लीलात्मसर्गोऽहमेव। च मत्स्वरूपमेवेत्यर्थः। हे अर्जुन ! मुक्त्यधिकारजातीय ! असतामुक्त्यर्थमेव सर्गत्रयं मद्रूपत्वेन चिन्तयेत्यर्थः। **अध्यात्मेति।** विद्यानां सर्वासां मध्ये अध्यात्मविद्याऽहमस्मि। प्रवदतां वादिनां वादः, वितण्डाजल्पपक्षत्रयमध्ये वादस्तत्त्वस्वरूपनिर्णयात्मकोऽहमस्मि ॥ ३२ ॥

**नी० टी०—**सर्गाणां भौतिकानां भूतानामादिरंत इति प्रागेवोक्तत्वात् विद्यानां चतुर्दशसंख्यानां मध्ये अध्यात्मविद्या बंधच्छेदहेतुत्वात्। प्रवदतां प्रवक्तृद्वारेण वदनभेदा एव वादजल्पवितंडा इह गृह्यंते तेषां मध्ये वादस्तत्त्वनिर्णयार्थत्वादहम् ॥ ३२ ॥

**अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ॥**
**अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥**

**शां० भा०—अक्षराणामिति। अक्षराणां वर्णानामकारो वर्णोऽस्मि द्वंद्वः समासोऽस्मि सामासिकस्य समाससमूहस्य। किं चाहमेवाक्षयोऽक्षीणः कालः प्रसिद्धः क्षणाद्याख्यः, अथवा परमेश्वरः कालस्यापि कालोऽस्मि, धाताऽहं कर्मफलस्य विधाता सर्वजगतो विश्वतोमुखः सर्वतोमुखः ॥ ३३ ॥**

शां० आ०—॥ ३३ ॥

**आ० भा०—**॥ ३३ ॥

आ० ज०—॥ ३३ ॥

**रा० भा०—अक्षराणां मध्ये " अकारो वै सर्वा वाक् " इति श्रुतिसिद्धः सर्ववर्णानां प्रकृतिरकारोऽहं सामासिकः समाससमूहस्तस्य मध्ये द्वन्द्वसमासोऽहं स ह्युभयपदार्थप्रधानत्वेनोत्कृष्टः कलामुहूर्तादिमयोऽक्षयः कालोऽहमेव सर्वस्य स्रष्टा हिरण्यगर्भश्चतुर्मुखोऽहम् ॥ ३३ ॥**

**अ० टी०—**अक्षराणां वर्णानां मध्ये अकारोऽस्मि। सर्वाक्षरगतत्वात्। सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः गोपीमाधवावित्यादिरस्मि। अक्षयः लीलात्मकोऽलौकिकःकालोऽहमेवास्मि। एवकारेण तस्य साक्षात्स्वरूपात्म-

कत्वाद्विभूतित्वे किं वाच्यमितिज्ञापितम्। विधातॄणां मध्ये विश्वतोमुखः सर्वतोमुखश्चतुर्मुखो धाता अलौकिकसृष्टिकर्त्ताऽहमस्मीत्यर्थः ॥ ३३ ॥

**नी० टी०**—अक्षराणां मध्ये अकारः। "अकारो वै सर्वा वाग्" इति श्रुतेः। सामासिकस्य समाससमुदायस्य मध्येऽहं द्वंद्वोऽस्मि उभयपदार्थप्रधानत्वादिति प्राञ्चः समं एकत्रासनं समासो विदुषां वा गुरुशिष्याणां वा मंत्रार्थकथनार्थं वा एकत्रावस्थानं तत्र विदितमर्थजातं सामासिकं। चातुरर्थिकष्ठक् ठस्येक इतीकादेशः यस्येति चेत्यलोपः तस्य मध्ये द्वंद्वो रहस्योऽर्थोऽहं। "द्वंद्वं रहस्य" इति सूत्रे द्वंद्वशब्दस्य रहस्यवाचित्वं शाब्दिकप्रसिद्धं अक्षयः क्षयहीनः कालः क्षणादिः परो वा ईश्वरः कालस्यापि कालोऽस्मि धाता कर्मफलप्रदः विश्वतोमुखः सर्वप्राणितृप्त्या तृप्यामीत्यर्थः ॥ ३३ ॥

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ॥**
**कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥**

**शां० भा०**—मृत्युर्द्विविधो धनादिहरः प्राणहरश्च सर्वहर उच्यते सोऽहमित्यर्थः। अथवा पर ईश्वरः प्रलये सर्वहरणात्सर्वहरः सोऽहम्। उद्भव उत्कर्षोऽभ्युदयस्तत्प्राप्तिहेतुश्चाहं, केषां भविष्यतां भाविकल्याणानामुत्कर्षप्राप्तियोग्यानामित्यर्थः। कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमेत्येता उत्तमाः स्त्रीणामहमस्मि यासामाभासमात्रसंबन्धेनापि लोकः कृतार्थमात्मानं मन्यते ॥ ३४ ॥

**शां० आ०**—सर्वहरशब्दस्य मुख्यमर्थान्तरमाह—**अथवेति**। भाविकल्याणानामित्युक्तमेव स्पष्टयति—**उत्कर्षेति**। कीर्तिर्धार्मिकत्वनिमित्ता ख्यातिः, श्रीर्लक्ष्मीः कान्तिः शोभा, वाग्वाणी सर्वस्य प्रकाशिका, स्मृतिश्चिरानुभूतस्मरणशक्तिः, मेधा ग्रन्थधारणशक्तिः, धृतिर्धैर्यं, क्षमा मानापमानयोरविकृतचित्तता। स्त्रीषु कीर्त्यादीनामुक्तत्वमुपपादयति—**यासामिति** ॥३४॥

**आ० भा०**—॥ ३४ ॥

**आ० ज०**—॥ ३४ ॥

**रा० भा०**—सर्वप्राणहरो मृत्युश्चाहम् उत्पत्स्यमानानाम् उद्भवाख्यं कर्म चाहम्। नारीणां श्रीरहं कीर्तिश्चाहं स्मृतिश्चाहं मेधा चाहं धृतिश्चाहं क्षमा चाहम् ॥ ३४ ॥

**अ० टी०**—**मृत्युरिति**। संहारिणां मध्ये सर्वसंहारकोऽहम्। च पुनः मृत्युरपि। भविष्यतां निखिलानां प्राणिनां पदार्थानाम् उद्भवः अभ्युदयः भाग्यरूपोऽहम्। **कीर्तिरिति**। कीर्तिः धर्मस्य स्त्री। श्रीः लक्ष्मीः। वाक् सरस्वती श्रीभागवतादिरूपा। स्मृतिर्भगवत्स्मरणात्मिका। मेधा बुद्धिः भगवद्गुणैकनिष्ठा। धृतिः आपत्सु धर्मैकनिष्ठता। क्षमा सर्वाऽतिक्रमसहनरूपा। नारीणां मध्ये एता मद्विभूतिरूपाः ॥ ३४ ॥

**नी० टी०**—सर्वहरः प्रलयकालिको मृत्युरस्मि भविष्यतां भाविकल्याणानामुद्भव ऐश्वर्योत्कर्षोऽहं कीर्त्यादिसप्तकमप्यहं यासां संश्रयमात्रेण मनुष्येषु कृतार्थता बुद्धिर्भवति ॥ ३४ ॥

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ॥**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥**

**शां० भा०**—बृहत्सामेति । बृहत्साम तथा साम्नां प्रधानमस्मि । गायत्री छन्दसामहं गायत्र्यादिच्छन्दोविशिष्टानामृचां गायत्र्यृगहमित्यर्थः । मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरो वसन्तः॥३५॥

**शां० आ०**—वेदानां सामवेदोऽस्मीत्युक्तं तत्रावान्तरविशेषमाह—**बृहदिति** । छन्दसां मध्ये गायत्री नाम यच्छन्दस्तदहमित्ययुक्तं छन्दसामृग्भ्योऽतिरेकेण स्वरूपभावादित्याशङ्कयाऽऽह—**गायत्र्यादीति** । द्विजातेर्द्वितीयजन्मजननीत्वादित्यर्थः । मार्गशीर्षो मृगशीर्षेण युक्ता पौर्णमास्यस्मिन्निति मार्गशीर्षो मासः सोऽहं पक्वसस्याढ्यत्वादित्याह—**मासानामिति** । वसन्तो रमणीयत्वादिति शेषः ॥ ३५ ॥

**आ० भा०**—॥ ३५ ॥

**आ० ज०**—॥ ३५ ॥

**रा० भा०**—साम्नां बृहत्सामाहं छन्दसां गायत्री अहं कुसुमाकरो वसन्तः ॥ ३५ ॥

**अ० टी०**—साम्नां सामऋचां मध्ये बृहत्साम मद्विभूतिरित्यर्थः । छंदसां मध्ये गायत्री मद्विभूतिः । मासानां मध्ये मार्गशीर्षोऽहम् । ऋतूनां मध्ये कुसुमाकरो वसन्तोऽस्मि ॥ ३५ ॥

**नी० टी०**—बृहत्साम "त्वामिद्धिहवामह" इत्यस्यामृचि गीयमानं सामपृष्ठ्यस्तोत्रे विनियुक्तमिंद्रदेवत्यं तत् साम्नां मध्येऽहमस्मि । छंदसां मध्ये गायत्री द्विजत्वसंपादनात्सोमाहरणाच्च श्रेष्ठाऽहमस्मि । कुसुमाकरो वसंतः॥३५॥

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ॥**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥**

**शां० भा०**—द्यूतमिति । द्यूतमक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणामस्मि, तेजस्तेजस्विनामहं, जयोऽस्मि जेतॄणां, व्यवसायोऽस्मि व्यवसायिनां, सत्त्वं सत्त्ववतां सात्त्विकानामहम् ॥ ३६ ॥

**शां० आ०**—द्यूतमुक्तलक्षणं सर्वस्वापहारकारणमन्यापदेशेन पराभिप्रेतं निघ्नतां स्वाभिप्रेतं वा संपादयतामित्याह—**छलस्येति** । तेजोऽप्रतिहताज्ञा, उत्कर्षो जयः, व्यवसायः फलहेतुरुद्यमः, धर्मज्ञानवैराग्यादि सत्त्वकार्यं सत्त्वम् ॥ ३६ ॥

**आ० भा०**—॥ ३६ ॥

**आ० ज०**—॥ ३६ ॥

**रा० भा०**—छलं कुर्वतां छलास्पदेष्वक्षादिलक्षणद्यूतमहं जेतॄणां जयोऽस्मि व्यवसायिनां व्यवसायोऽस्मि सत्त्ववतां सत्त्वं महामनस्त्वम् ॥ ३६ ॥

**अ० टी०**—**द्यूतमिति** । छलयतां वञ्चकानां मध्ये द्यूतमस्मि येन क्रीडाक्षात्रादिधर्मज्ञानेन मोहितो जानन्नपि वञ्चति । तेजस्विनां प्रभावतां मध्ये तेजः प्रभा अहमस्मि । जयतां मध्ये जयोऽस्मि । व्यवसायिनामुद्यमवतां निश्चयवतां वा व्यवसायः उद्यमः निश्चयो वाऽस्मि । सत्त्ववतां सात्त्विकानां मध्ये सत्त्वमहम् ॥ ३६ ॥

**नी० टी०**—व्ययसायो निश्चय उद्यमो वा ॥ ३६ ॥

**वृष्णीनां वासुदेवोऽस्मि पाण्डवाना धनंजयः ॥**
**मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥**

**शां० भा०**—वृष्णीनामिति। वृष्णीनां वासुदेवोऽस्म्ययमेवाहं त्वत्सखा, पाण्डवानां धनंजयस्त्वमेव, मुनीनां सर्वपदार्थज्ञानिनामप्यहं व्यासः, कवीनां क्रान्तदर्शिनामुशना कविरस्मि ॥ ३७ ॥

**शां० आ०**—उशना शुक्रः, कविशब्दोऽत्र यौगिको न रूढः पौनरुक्त्यात् ॥ ३७ ॥

**आ० भा०**—आच्छादयति सर्वं वासयति वसति चेतिसर्वत्र वासुदेवः देवशब्दार्थ उक्तः पुरस्तात् 'छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ॥ सर्वभूताधिवासश्च वासुदेवस्ततोस्म्यहम्' इति मोक्षधर्मे । विशिष्टः सर्वस्मादासमंतात्स एवेति व्यासः। तथाचाग्निवेश्यशाखायाम्। "सव्यासो वीति तमप् वै विः सोऽधस्तात्स उत्तरतः स पश्चात्सपूर्वस्मात्सदक्षिणतः सउत्तरतइति" इति "यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति च ॥ ३७ ॥

**आ० ज०**—वृष्णीनां वासुदेवोऽस्मीतिवासुदेवशब्दं व्याचिकीर्षुर्वासुशब्दार्थं तावदाह—**आच्छादयतीति ।** वसआच्छादनइत्यत उण् वासयाति सर्वमिति वर्तते। वसनिवासइत्यतोण्यंतादुण्। वसाति चेतिकेवलादुणेव। ततः किमायातं वासुदेवशब्दस्येत्यत आह—**देवेति** । तथाहि देवशब्दार्थमित्यत्र ततः कर्मधारयः । विश्वं समस्तं भूत्वा प्राप्य भूप्राप्तावात्मनेपदीति वचनात् सर्वभूताधिवासश्चेतितत्पुरुषो बहुव्रीहिश्च । अत्रापि देवशब्दार्थो ग्राह्यः मुनीनामप्यहं व्यासइति व्यासशब्दं व्याचष्टे—**विशिष्टइति** । सर्वस्माद्विशिष्टइतिविशब्दार्थः ।आइत्यनुवादेन समंतादितिव्याख्यानम् । सइत्यस्य एवेति । सृगतौ सृप्लृगतावित्यतोवा डे रूपमेतत नतु तदः । व्यासमित्याद्यनुपपत्तेः । समंताद्गतः सर्वगत इत्यर्थः स व्यासः । कुतः । वीति हेतोः । कोऽर्थः तमपोऽर्थो हि विशब्दः उत्तरत उपरिष्टात् यच्च किंचिदिति भगवतः सर्वगतत्वे प्रमाणम् ॥ ३७ ॥

**रा० भा०**—वसुदेवसूनुत्वमत्र विभूतिः अर्थान्तराभावादेव पाण्डवानां धनञ्जयोऽर्जुनोऽहं मुनयो मननेनार्थयाथात्म्यदर्शिनः तेषां व्यासोऽहं कवयो विपश्चितः ॥ ३७ ॥

**अ० टी०**—**वृष्णीनामिति** । वृष्णीनां यादवानां सर्वेषां मध्ये हृदये वासुदेवः सर्वमोक्षदाता क्रीडार्थम् अंशैरस्मि । सर्वे यादवा मद्विभूतिरूपा इत्यर्थः । पाण्डवानां मध्ये धनञ्जयस्त्वमेवास्मि । मुनीनां ब्रह्ममननशीलानां मध्ये व्यासः कृष्णद्वैपायनोऽस्मि । कवीनां निर्दुष्टस्वरशब्दप्रदर्शिनां मध्ये उशना कविः शुक्रोस्मि ॥ ३७ ॥

**नी० टी०**—वृष्णीनां यादवानां उशना शुक्रः ॥ ३७ ॥

## दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ॥
## मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

**शां० भा०**—दण्ड इति । दण्डो दमयतां दमयितॄणामस्म्यदान्तानां दमकारणं, नीतिरस्मि जिगीषतां जेतुमिच्छतां, मौनं चैवास्मि गुह्यानां गोप्यानां, ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

**शां० आ०**—अदान्तानुत्पथान्पथि प्रवर्तयतां दण्डोऽहमुत्पथप्रवृत्तौ निग्रहहेतुरित्यर्थः, नीतिर्न्यायो धर्मस्य जयोपायस्य प्रकाशकः, मौनं वाचंयमत्वमुत्तमा वा चतुर्थाश्रमप्रवृत्तिः, श्रवणादिद्वारा परिपक्वसमाधिजन्यं सम्यग्ज्ञानं ज्ञानम् ॥ ३८ ॥

**आ० भा०**—॥ ३८ ॥

**आ० ज०**—॥ ३८ ॥

**रा० भा०**—नियमातिक्रमणे दण्डं कुर्वतां दण्डोऽहं विजिगीषूणां जयोपायभूता नीतिरस्मि गुह्यानां सम्बन्धिषु गोपनेषु मौनमस्मि ज्ञानवतां ज्ञानं चाहम् ॥ ३८ ॥

अ० टी०—दण्ड इति। दमयतां दमकारिणां मध्ये दण्डोऽस्मि सर्वदोषहरत्वेनेतिभावः। जिगीषतां जेतुमिच्छतां नीतिरस्मि। गुह्यानां गोप्यानां मध्ये मौनम् अवचनमस्मि। ज्ञानवतां ज्ञानिनां मध्ये ज्ञानमहमस्मि ॥ ३८ ॥

नी० टी०—दमयतां राजादीनां दमनसाधनं दंडोऽहमस्मि। जिगीषतां जेतुमिच्छतां जयसाधनं नीतिरस्मि। मौनं वाचो निग्रहः ॥ ३८ ॥

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ॥**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥**

**शां० भा०—यच्चापीति। यच्चापि सर्वभूतानां बीजं प्ररोहकारणं तदहमर्जुन, प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह न तदस्ति भूतं चराचरं चरमचरं वा मया विना यत्स्याद्भवेन्मयाऽपकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत्स्यादतो मदात्मकं सर्वमित्यर्थः ॥ ३९ ॥**

शां० आ०—जाड्यमात्रप्रतिबिम्बितं चैतन्यं बीजम्। किमिति स्थावरं जङ्गमं वा त्वदतिरेकेण न भवति तत्राऽऽह—**मयेति**। तस्यापि स्वरूपेण सत्त्वमाशङ्क्योक्तं—**शून्यं हीति**। आत्मनोऽपकर्षादित्यर्थः। मयैव सच्चिदानन्दस्वरूपेण सर्वस्य सिद्धेरित्यतःशब्दार्थः ॥ ३९ ॥

**आ० भा०—मया विना यद्भूतं स्यात्तन्नास्ति। विश्वरूप अनंतगतिरनंतभाग अनंतग अनंते त्यादिमोक्षधर्मे ॥ ३९ ॥**

आ० ज०—न तदस्ति विनेत्यत्र पदानां व्यवहितत्वादन्वयमाह—**मयेति**। भगवतोऽनंतै रूपैः सर्वपदार्थव्यापित्वे प्रमाणमाह—**विश्वेति**। विश्वं रूपं प्रतिमा यस्यासौ विश्वरूपः। अनंतानां गतिराश्रयोऽनंतगतिः। अनंता भागा अवतारा यस्यासावनंतभागः। अनंतान्पदार्थान् गतः अनंतगः। अनंतः कालाद्यपरिच्छिन्नः ॥ ३९ ॥

**रा० भा०—सर्वभूतानां सर्वावस्थावस्थितानां तत्तदवस्थाबीजभूतं प्रतीयमानमप्रतीयमानं च यत्तदहमेव चराचरसर्वभूतजातं मया आत्मतयावस्थितेन विना यत्स्यात् न तदस्ति 'अहमात्मा गुडाकेश सर्वभूताशयः स्थितः।' इति प्रक्रमात् 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्।' इत्यत्राप्यात्मतयावस्थानमेव विवक्षितम्। सर्ववस्तुजातं सर्वावस्थं मयात्मभूतेन युक्तं स्यादित्यर्थः। अनेन सर्वस्यास्य सामानाधिकरण्यनिर्देशस्यात्मतयावस्थितिरेव हेतुरिति प्रकटयति ॥ ३९ ॥**

अ० टी०—यदिति। यत्सर्वभूतानां बीजम् उत्पत्तिकारणं तदपि अहमेव। अपिशब्देन योनिस्तद्रूपं चाऽहमेवेतिव्यञ्जितम्। यत् चराचरं भूतं तज्जातं तन्मया विना किंचिन्नास्ति ॥ ३९ ॥

नी० टी०—सर्वभूतानां बीजमित्यनेन सर्वभूतानि मद्विभूतिरिति दर्शितं। तदेवोपपादयति न तदस्तीति मया विना भूतं किमपि नास्ति उपादेयस्योपादानमंतरेण स्थित्यसंभवात् ॥ ३९ ॥

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ॥**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

**शां० भा०—नान्तोऽस्तीति। नान्तोऽस्ति मम दिव्यानां विभूतीनां विस्तराणां परंतप। न हीश्वरस्य सर्वात्मनो दिव्यानां विभूतीनामियत्ता शक्या वक्तुं ज्ञातुं वा केनचित्। एष तूद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

शां० आ०—दिव्यानां विभूतीनां परिमितत्वशङ्कां वारयति—**नेत्यादिना** । तदेवोपपादयति—**न हीति** । कथं तर्हि विभूतेर्विस्तरो दर्शितस्तत्राऽऽह—**एष त्विति** ॥ ४० ॥

**आ० भा०—॥ ४० ॥**

आ० ज०—॥ ४० ॥

**रा० भा०—मम दिव्यानां कल्याणीनां विभूतीनामन्तो नास्ति एष तु विभूतेर्विस्तरो मया कैश्चिदुपाधिभिः संक्षेपतः प्रोक्तः ॥ ४० ॥**

अ० टी०—एवं विभूतिमुक्त्वोपसंहरति—**नान्तोऽस्तीति** । मम स्वच्छन्दचारिणः दिव्यानां क्रीडात्मिकानां विभूतीनाम् अन्तो नास्ति । परन्तपेतिसंबोधनं विश्वासार्थम् नन्वन्ताऽभावे कथमेता एवोक्ता इत्याकाङ्क्षायामाह—**एष इति** । एष तूद्देशतः संक्षेपतो विभूतेर्विस्तरो मया प्रोक्तः । प्रोक्तत्वेनान्येषामेतावज्ज्ञानेऽप्यसामर्थ्यं द्योतितम् ॥ ४० ॥

नी० टी०—नांतोऽस्तीति उद्देशत एकदेशेन विभूतेर्विस्तरो विस्तारो मया प्रोक्तः ॥ ४० ॥

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ ४१ ॥**

**शां० भा०—यद्यदिति । यद्यल्लोके विभूतिमद्विभूतियुक्तं सत्त्वं वस्तु श्रीमदूर्जितमेव वा श्रीर्लक्ष्मीस्तया सहितमुत्साहोपेतं वा तत्तदेवावगच्छ त्वं जानीहि ममेश्वरस्य तेजोंशसंभवं तेजसोंऽश एकदेशः संभवो यस्य तत्तेजोंशसंभवमित्यवगच्छ त्वम् ॥ ४१ ॥**

शां० आ०—अनुक्ता अपि परस्य विभूतिः संग्रहीतुं लक्षणमाह—**यद्यदिति** । वस्तु प्राणिजातं, श्रीमत्समृद्धिमद्वा कान्तिमद्वा । सप्राणं बलवदूर्जितं तदाह—**उत्साहेति** । संभवत्यस्मादिति संभवः । तेजसश्चैतन्यस्येश्वरशक्तेर्वांऽशस्तेजोंशः संभवोऽस्येति तेजोंशसंभवं तदाह—**तेजस इति** ॥ ४१ ॥

**आ० भा०—यद्यद्विभूतिमादितिविस्तरः। विष्णवादीनि तत्स्वरूपाण्येव। अन्यानि तु तेजोयुक्तानि। तथा च पैंगिखिलेषु । "विशेषका रुद्रवैन्येंद्रदेवा राजन्याद्या अंशयुताऽन्यजीवाः कृष्णव्यासौ रामकृष्णौ च रामकपिलयज्ञप्रमुखाः स्वयं सः" इति॥ "सएवैकोभार्गवदाशरथिकृष्णाद्यास्त्वंशयुताऽन्यजीवाः" इति गौतमखिलेषु। 'ऋषयो मनवो देवा मनुपुत्रा महौजसः। कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः॥ एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्' इति भागवते। ऋष्यादीनंशयुतत्वेनोक्त्वा वराहादीन्स्वरूपत्वेनाह। तुशब्दएवार्थे। अन्यस्तु विशेषो न कुत्राप्यवगतः। अंशत्वं तत्राप्यवगतम् 'उद्धबर्हात्मनः केशौ' इति। मृडयंतीति च बहुवचनं चायुक्तम्। न ह्यंतराऽन्यदुक्त्वा पूर्वमपरामृश्य तत्क्रियोच्यमाना दृष्टा कुत्रचित् ॥ ४१ ॥**

आ० ज०—एष तूद्देशत इत्येतच्छब्दोऽनुक्रांतपरामर्शीतिप्रतीतिनिरासार्थमाह—**यद्यदिति** । वक्ष्यमाणं बुद्धिस्थमेतच्छब्देन परामृश्यते। शृंग्रिग्राहिकयोक्तेरपि लक्षणोक्तेर्विस्तरत्वादिति भावः। विभूतिमदादिकं मम तेजोरूपेणांशेन सह भवतीत्युक्त्या विष्णवादीनामपि भगवदंशयुक्तत्वं प्रतीयते तेषामप्येतल्लक्षणोपेतत्वात्तन्निवृत्त्यर्थमाह—**विष्णवादीनीति** । तर्हि किंविषयमेतद्वाक्यमित्यत आह—**अन्यानित्विति**। कुत एतदित्यत आह—**तथा चेति**। विशेषकाः गरुडानंतविरिंचा वैन्यः पृथुः । राजन्यग्रहणेन गृहीतस्यापि पुनरुक्तिः साक्षादवतारत्वविशेषोक्तिबाधनार्थम्। कृष्णो धर्मसूनुरपि। रामो भार्गवोऽपि। अंशयुक्तत्वेनोक्त्वा कला इत्यनेन कला

इव कलाः न स्वरूपत्वेन । एते स्वांशकला इत्यनेन स्वरूपांशरूपा एव कलाः न तु पूर्ववदुपचारेणेति । नन्वत्रैते वराहाद्याः परमपुरुषस्यांशा एव कृष्णस्त्वंशी भगवान् स्वयमिति प्रतीयते तत्कथमुक्तव्याख्यानमन्यथा तुशब्दानुपपत्तेरित्यत आह—**तुशब्द इति ।** ततश्चायमर्थः । एते वराहाद्याः पुंसः स्वांशकलाः । कोऽर्थः । कृष्णः परमपुरुषो भगवान् स्वयमेवैते इति । कुत एतदिति चेत् उदाहृतश्रुतिसंवादात् । अर्थांतरस्य संवादाभावाच्चेत्याह—**अन्यस्त्विति ।** वराहादयोंऽशाः कृष्णोंऽशीत्येवंरूपः । इतोऽप्ययं विशेषो न युक्तइत्याह—**अंशत्वमिति ।** तत्रापि कृष्णेऽपि किंचास्मिन् व्याख्याने कृष्णस्यैकस्यैव प्रकृतत्वात् । 'इंद्रारिव्याकुलं लोकं मृडयंति युगे युगे' इत्युत्तरवाक्ये बहुवचनं नोपपन्नमित्याह—**मृडयंतीति ।** ननु बहुवचनं पूर्वोक्तैर्वराहादिभिः संबध्यते न कृष्णेनेति चेत् न कृष्णस्तु भगवान् स्वयमिति वाक्यार्थेन व्यवहितत्वात् । व्यवहितस्यापि पुनःसंनिधानाय परामर्शाभावात् । सति गत्यंतरेऽध्याहारायोगात् । असंनिहितेनान्वयबोधस्य क्वाप्यदर्शनादिति भावेनाह—**न हीति ।** क्रियते प्रकृतापेक्षयोक्तम् । ननु संनिधेरपि योग्यता बलवतीति चेत् । सत्यम् । संनिधिमनतिक्रम्य योग्यान्वयस्तूक्तः ॥ ४१ ॥

**रा० भा०**—यद्यद्विभूतिमदीशितव्यसंपन्नं भूतजातं श्रीमत्कान्तिमत् धनधान्यसमृद्धं वा ऊर्जितं कल्याणारम्भेषूद्युक्तं तत्तन्मम तेजोंशसंभवमित्यवगच्छ । तेजः पराभिभवनसामर्थ्यं ममाचिन्त्यशक्तेर्नियमनशक्त्यैकदेशसंभवमित्यर्थः ॥ ४१ ॥

**अ० टी०**—ननु मया सर्वस्वरूपज्ञानेन सर्वत्र त्वच्चिन्तनार्थं विभूतिविस्तारः पृष्टस्तस्यान्ताभावोक्त्या मया कुत्र कथं चिन्तनीय इत्याकाङ्क्षायामाह—**यद्यदिति ।** यत् यत् सत्त्वं वस्तुमात्रं विभूतिमत् ऐश्वर्ययुक्तं श्रीमत् संपत्तियुक्तम् ऊर्जितमेव केनापि प्रकारेणोत्कृष्टतां प्राप्तं रमणीयतरं वा तत् तदेवं मम तेजोंशसंभवं ममानुभावसंभूतम् अवगच्छ जानीहि ॥ ४१ ॥

**नी० टी०**—सर्वभूतानां बीजमहमित्युक्त्या स्वस्य सार्वात्म्योक्तेः सर्वं स्वविभूतिरित्युक्तमेव तथापि तद्ग्रहणाशक्तं प्रति प्राह—**यद्यदिति ।** यद्यत्सत्त्वं प्राणिविभूतिमदैश्वर्ययुक्तं श्रीर्लक्ष्मीः शोभा वा तद्युक्तं ऊर्जितं बलाद्यतिशययुक्तं तत्तत्सर्वं मम तेजसश्चिच्छक्तेरंशसंभवं अंशात्संभूतं त्वमवगच्छ जानीहि । लोके यदतिरमणीयं तद्भगवतो रूपमिति ध्यायेदित्यर्थः ॥ ४१ ॥

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ॥**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥**

**शां० भा०**—अथवेति । अथवा बहुनैतेनैवमादिना किं ज्ञातेन तवार्जुन स्यात्सावशेषेण । अशेषतस्त्वमिममुच्यमानमर्थं शृणु विष्टभ्य विशेषतः स्तम्भनं दृढं कृत्वेदं कृत्स्नं जगदेकांशेनैकावयवेनैकपादेन सर्वभूतस्वरूपेणेत्येतत् । तथा च मन्त्रवर्णः—"पादोऽस्य विश्वा भूतानि" इति स्थितोऽहमिति ॥ ४२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

**शां० आ०**—सर्वेषां सुगमत्वायावयवशो विभूतिमुक्त्वा शक्तानुग्रहार्थं साकल्येन तामाह—**अथ वेति** । पक्षान्तरपरिग्रहार्थमथेत्युक्तम् । बहुधा विस्तीर्णेनैतेन ग्रन्थेन संज्ञातेन सावशेषेण तव शक्तस्य न किंचित्फलं स्यादित्याह—**बहुनेति** । न हि विभूतिसूक्तासु ज्ञातासु सर्वं ज्ञायते कासांचिदेव विभूतीनामुक्तत्वादित्यर्थः । तर्हि केनोपदेशेनाल्पाक्षरेण सर्वोऽर्थो ज्ञातुं शक्यते तत्राऽऽह—**अशेषत इति** । विशेषतः स्तम्भनं विधरणं सर्वभूतस्वरूपेण सर्वप्रपञ्चोपादानशक्त्युपाधिकेनैकेन पादेन कृत्स्नं जगद्विधृत्य स्थितोऽस्मीति संबन्धः । तत्रैव श्रुतिं प्रमाणयति—**तथा चेति** । तदनेन भगवतो नानाविधा विभूतीर्ध्येयत्वेन ज्ञेयत्वेन चोपदिश्यन्ते । सर्वप्रपञ्चात्मकं ध्येयं रूपं दर्शयित्वा "त्रिपादस्यामृतं दिवि" इति प्रपञ्चाधिकं निरुपाधिकं तत्त्वमुपदिशता परिपूर्णसच्चिदानन्दैकतानस्तत्पदलक्ष्योऽर्थो निर्धारितः ॥ ४२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने दशमोऽध्यायः ॥ १० ॥

**आ० भा०**—किमिति वक्ष्यमाणप्राधान्यज्ञापनार्थं नतूक्तनिष्फलत्वज्ञानाय । तथा सति नोच्येत । "अज्ञात्वैनं सर्वविशेषयुक्तं देवं वरं को विमुच्येत बंधात्" इत्यृग्वेदखिलेषु । त्वं तु बहुलफलप्राप्तियोग्य इति । तवेतिविशेषणम् । अन्यस्तुत्यर्थत्वेन प्रसिद्धश्चैकत्र किंशब्दः । 'रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ॥ ताउभौ यदि न स्यातां तपसा किं प्रयोजनम्' इत्यादौ । प्राधान्यं च सिद्धमेकत्र दर्शनात्सर्वत्र भगवद्दर्शनस्य । यो मां पश्यति सर्वत्रेत्यादौ ॥ ४२ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये दशमोऽध्यायः ॥ १० ॥

**आ० ज०**—अथवा बहुनैतेन किं ज्ञातेनेति पूर्वोक्तव्यस्तज्ञानाक्षेपात् तस्य निष्फलत्वमिति प्रतीतिनिरासार्थमाह—**किमिति** । किमित्ययमाक्षेपो वक्ष्यमाणसर्वव्याप्तरूपज्ञानस्योक्तरविप्रभृतिपरिच्छिन्नवस्तुस्वरूपज्ञानापेक्षया प्राधान्यज्ञापनार्थमेव न तूक्तविशेषज्ञानस्य निष्फलत्वज्ञापनार्थम् । निष्फलत्वे तदुक्तिवैयर्थ्यापत्तिरित्यर्थः । ननु व्याप्तिज्ञानेनैव मुक्तिसंभवाद्विशेषज्ञानं व्यर्थमेव किं न स्यादित्यत आह—**अज्ञात्वेति** । प्रियशिरस्त्वाद्यप्राप्तिरित्यादिकं ध्यानापेक्षयोक्तं ज्ञानापेक्षया तु श्रुतिरित्यविरोधः अथवा विशिष्टाधिकारिविषयेयं श्रुतिः । ननु व्याप्तज्ञानयोग्यानां विशेषज्ञानं निष्फलमेव । अन्यान्प्रति तु तदुक्तिरिति व्यवस्थाऽस्तु तवेति विशेषणसामर्थ्यादित्यत आह—**त्वं त्विति** । अतो न तव विशेषज्ञानमात्रेणालमिति ज्ञापयितुमिति शेषः । विशेषणस्यान्यथासिद्धत्वान्नोक्तव्यवस्थाकल्पकत्वमितिभावः । ननु किं ज्ञातेन न किमपीति शब्दादुक्तस्य नैष्फल्ये प्रतीते तदुक्तिवैयर्थ्यप्रसंगात् बाधकान्निष्फलाल्पफलयोर्महाफलत्वाभावसादृश्याद्गौण्या वृत्त्योक्तस्याप्राधान्यप्रतीतावर्थाद्वक्ष्यमाणस्य प्राधान्यप्रतीतिरित्युक्तम् तत्र गौणप्रयोगे प्रयोजनं वाच्यामिति चेत् न । रूढोपचारत्वादिति भावेनाह—**अन्येति** । स्तुतिः प्रशस्तताज्ञापनम् । अर्थः प्रयोजनम् । स्यादिदं व्याख्यानं यदि परिच्छिन्नज्ञानाद्व्याप्तिज्ञानस्य प्राधान्यं प्रमितं स्यात् तदेव कुत इत्यत आह—**प्राधान्यं चेति** । यो मामिति विशिष्टफलकथनात् । न्यायसिद्धोऽप्यर्थो वाक्यसंमत्या दृढो भवतीत्येतदुक्तम् ॥ ४२ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविराचितगीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां दशमोऽध्यायः ॥ १० ॥

**रा० भा०**—बहुनैतेनोच्यमानेन ज्ञानेन किं प्रयोजनम् इदं चिदचिदात्मकं कृत्स्नं जगत्कार्यावस्थं कारणावस्थं स्थूलसूक्ष्मं च स्वरूपसद्भावे स्थितौ प्रवृत्तिभेदे च यथा मत्संकल्पं नातिवर्तेत तथा मम महिम्नः अयुतायुतांशेन विष्टभ्याहमवस्थितः । यथोक्तं भगवता पराशरेण । 'यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता' । इति ॥ ४२ ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते गीताभाष्ये दशमोऽध्यायः ॥ १० ॥

**अ० टी०**—एवं विभूत्यादिमत्सु भगवदंशज्ञानेनान्यत्र हेयत्वादिबुद्धौ सर्वस्य भगवदात्मकत्वं भज्येतेत्यन्यं प्रकारमाह—**अथवेति** । अथ वा पक्षान्तरेण हे अर्जुन ! तव बहुना नानाविधेन ज्ञानेन किं कार्यम्, न किमपी-

त्यर्थः । यत एतेन नानाज्ञानेन न किंचित् कार्यम् अतः कार्योपयोगिस्वरूपमाह । इदं परिदृश्यमानं जगत् कृत्स्नं संपूर्णम् एकांशेन क्रीडात्मकेन विष्टभ्य धृत्वा स्थितोऽस्म्यहमेवेत्यर्थः । अनेन सर्वं मत्क्रीडारूपमेव चिन्तयेति-भावो बोधितः ॥ ४२ ॥

'प्रतीयते जगन्नानाविधं स्वाज्ञानभावतः । विभूतिरूपं श्रीकृष्णस्तन्नाशायाऽब्रवीन्नरम् ॥ '

इति श्रीभगवद्गीताऽमृततरङ्गिण्यां दशमोऽध्यायः ॥ १० ॥

**नी० टी०**—उत्तमाधिकारिणमुद्दिश्याह—**अथवेति** । मूढान्प्रत्येतदुक्तं त्वं तु एतावदेव विद्धि एकांशेन एकदेशेनाहमिदं विष्टभ्य व्याप्य स्थितोऽस्मि । "पादोऽस्य विश्वा भूतानि" इति श्रुतेः । तस्मात्परिच्छिन्नं दर्शनं त्यक्त्वा सर्वत्र ब्रह्मबुद्धिमेव कुर्वित्याशयः ॥ ४२ ॥

इति भीष्मपर्वणि नैलकंठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे दशमोऽध्यायः ॥ १० ॥

( श्लोकानामादितः समष्ट्यङ्काः—३८५ )

## ॥ अथैकादशोऽध्यायः ॥ ११ ॥

**अर्जुन उवाच—मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ॥**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

**शां० भा०—भगवतो विभूतय उक्तास्तत्र च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति भगवताऽभिहितं श्रुत्वा यज्जगदात्मरूपमाद्यमैश्वरं तत्साक्षात्कर्तुमिच्छन्—मदनुग्रहाय ममानुग्रहार्थं परमं निरतिशयं गुह्यं गोप्यमध्यात्मसंज्ञितमात्मानात्मविवेकविषयं यत्त्वयोक्तं वचो वाक्यं तेन ते वचसा मोहोऽयं विगतो मम।विवेकबुद्धिरपगतेत्यर्थः ॥ १ ॥**

**शां० आ०**—तेन तेनाऽऽत्मना भगवदनुसंधानार्थमुक्ता विभूतीरनुवदति—**भगवत इति** । परस्य सोपाधिकं निरुपाधिकं च चिद्रूपं ध्येयत्वेन ज्ञेयत्वेन चोक्तमित्यर्थः । सोपाधिकमैश्वरं रूपमशेषजगदात्मकं विश्वरूपाख्यमाधिकृत्याध्यायान्तरमवतारयन्ननन्तरप्रश्नोपयोगित्वेन वृत्तं कीर्तयति—**तत्र चेति** । यदेतदशेषप्रपञ्चात्मकमखिलस्यैतस्य जगतः कारणं सर्वज्ञं सर्वैश्वर्यवद्रूपमुक्तं तदिदं श्रुत्वा तस्य साक्षात्कारं यियाचिषुरादौ पृष्टवानित्याह—**श्रुत्वेति** । मयि करुणां निमित्तीकृत्योपकारोऽनुग्रहस्तदर्थमिति वचसो विशेषणम् । निरतिशयत्वं परमपुरुषार्थसाधनत्वम् । अशोच्यानित्यादि त्वंपदार्थप्रधानं वाक्यम् । मोहस्यायमित्यात्मसाक्षिकत्वं दर्शयति । अविवेकबुद्धिरज्ञानविपर्यासात्मिका ॥ १ ॥

**आ० भा०—ॐ यथा श्रुते ध्यानं शक्यं तथा स्वरूपस्थितिरनेनाध्यायेनोच्यते ॥ १ ॥**

**आ० ज०**—एतदध्यायप्रतिपाद्यमर्थमाह—**यथेति** । दशमांते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति व्यासोपासनं संक्षेपेणोक्तम् । न च संक्षेपोक्तस्य ध्यानं शक्यम् । बुद्ध्यावनारोहात् । अतो यथा भूते व्याप्तरूपे विस्तरेण श्रुते ध्यानं शक्यं भवति । तथाभूतस्वरूपस्थितिरर्जुनाय प्रदर्शितस्यानुवादेनानेनैकादशेनाध्यायेनोच्यते । स्वरूपग्रहणेन विश्वरूपस्य मायादिना तदैव निर्माय विसृष्टत्वं निवारयति ॥ १ ॥

**रा० भा०**—एवं भक्तियोगनिष्पत्तये तद्विवृद्धये च सकलेतरविलक्षणेन स्वाभाविकेन भगवदसाधारणेन कल्याणगुणगणेन सह भगवतः सर्वोत्मत्वं तद्व्यतिरिक्तस्य कृत्स्नस्य चिदचिदात्मकस्य वस्तुजातस्य तच्छरीरतया तदायत्तस्वरूपस्थितिप्रवृत्तित्वं चोक्तं तमेतं भगवदसाधारणस्वभावं कृत्स्नस्य तदायत्तस्वरूपस्थितिप्रवृत्तितां च भगवत्सकाशादुपश्रुत्यैवमेवेति निश्चित्य तथाभूतं भगवन्तं साक्षात्कर्त्तुकामोऽर्जुन उवाच तथैव भगवत्प्रसादादनन्तरं द्रक्ष्यति ' सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् । तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ॥ ' इति हि वक्ष्यते। देहात्माभिमानरूपमोहेन मोहितस्य ममानुग्रहैकप्रयोजनाय परमं गुह्यं परमं रहस्यमध्यात्मसंज्ञितम् आत्मनि वक्तव्यं वचः ' न त्वेवाहं जातु नासम् ' इत्यादि ' तस्माद्योगी भवार्जुन ' इत्येतदन्तं यत्त्वयोक्तं तेनायं ममात्मविषयो मोहः सर्वो विगतो दूरतो निरस्तः ॥ १ ॥

**अ० टी०**—श्रीकृष्णायनमः ॥ 'कृष्णाऽऽत्मत्वं हि जगतो विभूतिकथनान्नरः ॥ अवगत्य च तद्रूपं द्रष्टुं हरिमथाऽब्रवीत् ॥ १ ॥' पूर्वाध्यायान्ते विष्टभ्याऽहमित्यनेन स्वक्रीडात्मकत्वेन विश्वस्य स्वात्मकत्वं प्रतिपादितम् तद्रूपदर्शनेच्छुरर्जुनो भगवन्तं विज्ञापयति—**मदनुग्रहायेति चतुर्भिः** । मदनुग्रहाय मम स्वीयत्वेन ग्रहणाय परमं परः पुरुषोत्तमो मीयते अनुमीयते यस्मात्तादृशम् अतएव गुह्यं सर्वेषामनाख्येयम् अध्यात्मसंज्ञितम् आत्मानात्मविवेकविषयत्वेन सर्वात्मरूपं यत् त्वया वचो 'विष्टभ्याहमिति' उक्तं तेन ममाऽयं रूपे मोहो विशेषेण गतो नष्ट इत्यर्थः ॥ १ ॥

**नी० टी०**—पूर्वस्मिन्नध्याये योगो विभूतिश्च व्याख्येयत्वेन प्रतिज्ञातौ एतां विभूतिं योगं च मम यो वेत्तीति । आत्मनो योगं विभूतिं च जनार्दन भूयः कथयेतीतरेण च श्रोतव्यत्वेन प्रार्थितौ । तत्र 'अहमात्मा गुडाकेश सर्वभूताशयस्थित' इति संक्षेपेण योगो भगवतः सर्वभूताधारत्वलक्षण उक्तः प्राग्विभूतिकथनात् । तदंते च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति । कुसूलेन धान्यमिव मयेदं जगद्विष्टब्धमित्युक्त्या स एव स्मारितस्तदेव भगवतः सर्वभूताधारत्वं साक्षात्कर्तुकामोऽर्जुन उवाच—**मदनुग्रहायेति** । मयि अनुग्रहोऽनुकंपा तदर्थं मदनुग्रहाय परमं सद्यः शोकमोहनिवर्त्तकत्वेनोत्कृष्टं गुह्यं गोप्यं अध्यात्मसंज्ञितमात्मानात्मविवेकार्थं शास्त्रमध्यात्मं तत्संज्ञितं । यत्त्वया वचः 'अशोच्यानन्वशोच' इत्यादिना षष्ठाध्यायपर्यंतं त्वंपदार्थशुद्धिप्रधानं ' नायं हंति न हन्यते' इत्यात्मनोऽकर्तृत्वाभोक्तृत्वप्रतिपादकं तेन मम मोहः अविवेकोऽयं विशेषेण गतो नष्टः अत्र प्रथमे पादेऽक्षराधिक्यमार्षम् ॥ १ ॥

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ॥**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**

**शां० भा०**—किंच—भव उत्पत्तिरप्ययः प्रलयो भूतानां तौ भवाप्ययौ श्रुतौ विस्तरशो मया न संक्षेपतस्त्वत्तस्त्वत्सकाशात्कमलपत्राक्ष कमलस्य पत्रं कमलपत्रं तद्वदक्षिणी यस्य तव स त्वं कमलपत्राक्षो हे कमलपत्राक्ष माहात्म्यमपि चाव्ययमक्षयं श्रुतमित्यनुवर्तते ॥ २ ॥

**शां० आ०**—सप्तमादारभ्य तत्पदार्थनिर्णयार्थमपि भगवदुक्तं वचो मया श्रुतमित्याह—**किंचेति** । त्वत्तो भूतानामुत्पत्तिप्रलयौ त्वत्तः श्रुतावित्याभ्यां संबध्यते, महात्मनस्तव भावो माहात्म्यं पारमार्थिकं सोपाधिकं वा सर्वात्मत्वादिरूपं, श्रुतमिति परिणम्यानुवृत्तिं द्योतयितुमपिचेत्युक्तम् ॥ २ ॥

**आ० भा०**—॥ २ ॥

**आ० ज०**—॥ २ ॥

**रा० भा०**—तथा सप्तमप्रभृति दशमपर्यन्तं त्वद्व्यतिरिक्तानां सर्वेषां भूतानां त्वत्तः परमात्मनो भवाप्ययावुत्पत्तिप्रलयौ विस्तरतो मया श्रुतौ । हे कमलपत्राक्ष! तवाव्ययं नित्यं सर्वचेतनाचेतनवस्तुशेषित्वं ज्ञानं बलादिकल्याणगुणगणैस्त्वैव परतरत्वं सर्वाधारत्वं चिन्तितनिमिषितादिसर्वप्रवृत्तिषु तवैव प्रवर्तयितृत्वमित्याद्यपरिमितं माहात्म्यं च श्रुतं हिशब्दो वक्ष्यमाणदिदृक्षाद्योतनार्थः॥ २ ॥

**अ० टी०**—किंच—**भवाप्ययाविति** । भूतानां भवाप्ययौ उत्पत्तिनाशौ 'अहमादिश्चेत्यादिना हे कमलपत्राक्ष ! दृष्ट्यैव तापनाशक ! त्वत्तो मया विस्तरशः श्रुतौ । अव्ययं स्थितिरूपं पालनरूपं माहात्म्यं महत्त्वं नाशानन्तरपालनरूपं चापि श्रुतं, तेन मोहो नष्ट इति पूर्वेणैवान्वयः ॥ २ ॥

**नी० टी०**—**भवेति** । तथा सप्तमाध्यायमारभ्य दशमपर्यंतं त्वया भूतानां भवाप्ययावप्युक्तौ । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते इति तावपि मया विस्तरशस्त्वत्तः श्रुतौ हे कमलपत्राक्ष! अव्ययं माहात्म्यमपि । न च मां तानि कर्माणि लिंपन्तीति । विषमसृष्टिकर्तुरपि वैषम्यनैर्घृण्यदोषो नास्ति जगत्कर्तुरपि विकारगंधो नास्तीत्येवमादिरूपतत्पदार्थशुद्धिप्रधानं श्रुतमित्यनुषंगः ॥ २ ॥

**एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ॥**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥**

**शां० भा०**—एवमिति । एवमेतन्नान्यथा यथा येन प्रकारेणाऽऽत्थ कथयसि त्वमात्मानं परमेश्वर तथाऽपि द्रष्टुमिच्छामि ते तव ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नमैश्वरं वैष्णवं रूपं पुरुषोत्तम ॥ ३॥

**शां० आ०**—त्वदुक्तेऽर्थे विश्वासाभावान्न तस्य दिदृक्षा किंतु कृतार्थीबुभूषयेत्याह—**एवमेतदिति** । येन प्रकारेण सोपाधिकेन निरुपाधिकेन चेत्यर्थः । यदि ममाऽऽत्तत्वं निश्चित्य मद्वाक्यं ते मानं तर्हि किमिति मदुक्तं दिदृक्षते कृतार्थीबुभूषयेत्युक्तं मत्वाऽऽह—**तथाऽपीति** । चतुर्भुजादिरूपनिवृत्त्यर्थमाह—**ऐश्वरमिति** । तद्व्याचष्टे—**ज्ञानेत्यादिना** ॥ ३ ॥

**आ० भा०**—॥ ३ ॥

**आ० ज०**—॥ ३ ॥

**रा० भा०**—हे परमेश्वर! एवमेतदित्यवधृतं यथात्थ त्वमात्मानं ब्रवीषि पुरुषोत्तम आश्रितवात्सल्यजलधे तवैश्वरं त्वदसाधारणं सर्वस्य प्रशासितृत्वे पालयितृत्वे स्रष्टृत्वे संहर्तृत्वे भर्तृत्वे कल्याणगुणाकरत्वे परतरत्वे सकलेतरविसजातीयत्वे च अवस्थितं रूपं द्रष्टुं साक्षात्कर्तुमिच्छामि ॥ ३ ॥

**अ० टी०**—कथं ज्ञातव्यं मोहोनष्ट इतीत्याशङ्क्य नष्टमोहानां भगवद्वाक्ये विश्वासो नियत इति तदाह—**एवमिति** । हे परमेश्वर ! सर्वाधीश ! यथा त्वम् आत्मानं स्वस्वरूपम् आत्थ वदसि 'न मे विदुरित्यनेन सर्वाज्ञातत्वं, 'विष्टभ्याहमित्यनेन सर्वात्मत्वं, 'ददामि बुद्धियोगं तमित्यादिना स्वकृपयैव ज्ञातत्वम् एवमेतद् यथार्थमेवेत्यर्थः । यथार्थत्वोक्त्या पूर्वमज्ञातस्वरूपोऽहम् अधुना विभूतिनिरूपणेन विष्टभ्याहमिति कृपोक्त्या च तच्चिन्तनेन सर्वात्मत्वज्ञानयुक्तो जात इति स्वानुभवो व्यञ्जितः । अथातो ज्ञातस्वरूपस्तद्रूपं दर्शयेत्याह—**द्रष्टुमिति** । हे पुरुषोत्तम ! ते तवैव तत्संबन्धिनाम् ऐश्वरं नानाविलासकं रूपं द्रष्टुम् इच्छामि ॥ ३ ॥

नी० टी०—एवमिति। यच्च त्वं 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति आत्मानं जगदाधारमात्थ तदपि इत्थमेव न ममात्रासंभावनाऽस्ति हे परमेश्वर! ते तव रूपं ऐश्वरमीश्वरस्येदं विश्वात्मकं मायामयमित्यर्थः। हे पुरुषोत्तम क्षराक्षरातीत! विश्वरूपं मायामयं वास्तवं तु रूपं मायातीतमित्यैश्वरमिति पुरुषोत्तमेति च पदाभ्यां लभ्यते। तथा च वक्ष्यति। 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ॥ सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि' इति। उक्तं च शुद्धं रूपमभिप्रेत्य 'अव्यक्तोऽयमचिंत्योऽयम्' इति ॥ ३ ॥

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ॥**
**योगेश्वर ततो मे त्वं दर्शयाऽऽत्मानमव्ययम् ॥ ४ ॥**

**शां० भा०—मन्यस इति। मन्यसे चिन्तयसि यदि मयाऽर्जुनेन तच्छक्यं द्रष्टुमिति प्रभो स्वामिन्योगेश्वर योगिनो योगास्तेषामीश्वरो योगेश्वरो हे योगेश्वर। यस्मादहमतीवार्थी द्रष्टुं ततस्तस्मान्मे मदर्थं दर्शय त्वमात्मानमव्ययम् ॥ ४ ॥**

शां० आ०—द्रष्टुमयोग्ये कुतो दिदृक्षेत्याशङ्क्याऽऽह—**मन्यस इति**। प्रभवति सृष्टिस्थितिसंहारप्रवेशप्रशासनेभ्य इति प्रभुः। लक्षणया योगशब्दार्थमाह—**योगिन इति**। तत इत्यादि व्याचष्टे—**यस्मादिति** ॥ ४ ॥

**आ० भा०—प्रभुः समर्थः 'नास्ति तस्मात्परं भूतं पुरुषाद्वै सनातनात्' इति मोक्षधर्मे। प्रभुरीश समर्थश्चेत्याद्यभिधानम् ॥ ४ ॥**

आ० ज०—मन्यसे यदीत्यत्र प्रभुशब्दो न स्वामित्वमात्रार्थः। किंतु तवातिकामसामर्थ्यात् त्वत्सामर्थ्येनैवातींद्रियस्यापि दर्शनमितिभावेन प्रयुक्तइत्याशयेनाह—**प्रभुरिति**। ईश्वरस्य निरतिशयसामर्थ्ये प्रमाणमाह—**नास्तीति**। भूतं समर्थम्। प्रभुशब्दस्य समर्थार्थत्वेऽभिधानमाह—**प्रभुरिति** ॥ ४ ॥

**रा० भा०—तत्सर्वस्य स्रष्टृ सर्वस्य प्रशासितृ सर्वस्याधारभूतं त्वद्रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे ततो योगेश्वर योगो ज्ञानादिकल्याणगुणयोगः 'पश्य मे योगमैश्वरम्' इति हि वक्ष्यते त्वद्व्यतिरिक्तस्य कस्याप्यसंभावितानां ज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधे आत्मानं त्वामव्ययं मे दर्शय त्वमव्ययमिति क्रियाविशेषणं त्वां सकलं मे दर्शयेत्यर्थः ॥ ४ ॥**

अ० टी०—स्वेच्छायां सत्यामपि भगवदिच्छाऽभावे च द्रष्टुमपि निर्बन्धेन न फलतीति विज्ञापयति—**मन्यस इति**। हे प्रभो! सर्वकरणसमर्थ! यदि तद्रूपं मया द्रष्टुं शक्यं दर्शनानन्तरं फलरूपं भवति तथाचेन्मन्यसे फलरूपं भवत्विति, तदा योगेश्वर! योगिनः स्वयोगबलेन सामर्थ्यं प्रकटयन्ति तेषां योग आगन्तुको धर्मः, त्वं तु योगस्यापीश्वरस्तेन मम दर्शनसामर्थ्यमपि कृपया दत्त्वा दर्शय। एवं प्रार्थनायां प्रभुस्तद्रूपं दर्शयित्वा तत्रैव लीनं कुर्यात् तदा भक्तिरसानुभूतपुरुषोत्तमरूपानुभवो न भवेदतो विज्ञापयति। **तत इति**। तत एतन्मनोरथपूर्त्यनन्तरम् अव्ययम् अविनाशिनम् आत्मानं पुरुषोत्तमम् आनन्दमयं दर्शयेतिभावः ॥ ४ ॥

नी० टी०—**मन्यस इति**। हे योगेश्वर योगानां योगिनामीश्वर! तद्रूपं यदि मया द्रष्टुं शक्यमिति मन्यसे यदि मयि तद्दर्शनाधिकारं पश्यसि ततस्तर्हि मे मह्यमव्ययं मायामयमात्मानं दर्शय। मायामयत्वादेवास्याव्ययत्वं मायायां हि सर्वं सर्वात्मकं सर्वदाऽस्तीति प्रसिद्धं। यथोक्तं वसिष्ठेन। 'वर्त्तमानमतीतं च भविष्यत्स्थूलमण्वपि ॥ तथा दूरमदूरं च निमेषः कल्प इत्यपि ॥ चिदात्मनि स्थितान्येव पश्य मायाविजृंभितम्' इति। नहि मरुमरीचिसरसी क्रमशः शुष्यति अतो मायामयत्वादेवास्यैश्वरस्य रूपस्याप्यव्ययत्वम् ॥ ४ ॥

श्रीभगवानुवाच—पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ॥
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

**शां० भा०**—एवं चोदितोऽर्जुनेन—पश्य मे मम पार्थ रूपाणि शतशोऽथ सहस्रशोऽनेकश इत्यर्थः । तानि च नानाविधान्यनेकप्रकाराणि दिवि भवानि दिव्यान्यप्राकृतानि नानावर्णाकृतीनि च नाना विलक्षणा नीलपीतादिप्रकारा वर्णास्तथाऽऽकृतयोऽवयवसंस्थानविशेषा येषां रूपाणां तानि नानावर्णाकृतीनि च ॥ ५ ॥

**शां० आ०**—अर्जुनमतिभक्तं सखायं प्रार्थितप्रतिश्रवणेनाऽऽश्वासयितुमाह—**एवमिति** ॥ ५ ॥

**आ० भा०**—॥ ५ ॥

आ० ज०—॥ ५ ॥

**रा० भा०**—एवं कौतूहलान्वितेन हर्षगद्गदकण्ठेन पार्थेन प्रार्थितो भगवानुवाच । पश्य मे सर्वाश्चर्याणि रूपाणि अथ शतशः सहस्रशश्च नानाविधानि नानाप्रकाराणि दिव्यान्यप्राकृतानि नानावर्णाकृतीनि शुक्लकृष्णादिनानावर्णानि नानाकाराणि च पश्य ॥ ५ ॥

**अ० टी०**—एवं प्रार्थितः सन् तद्रूपं दर्शयिष्यन्नर्जुनं सावधानं करोति भगवान्—**पश्येत्यादि चतुर्भिः** । हे पार्थ भक्तपुत्र ! कृपया दर्शयामीतिसंबोधनम् । अन्यथा पुरुषोत्तमदर्शनतोऽन्यदर्शनेच्छायामेतद्रसानुभवमपि न कारयेदितिभावः । मे मम शतशः सहस्रशः असंख्यातानि शतशः सहस्रशः यावदिच्छसि तावद्वा नानाविधानि नानाफलकारकाणि रूपाणि यस्य नानाविधान्यपि दिव्यानि अलौकिकानि क्रीडात्मकानि नतु प्रदर्शनार्थमेव कृतानि । च पुनः । तथैव नाना वर्णाकृतीनि नाना अनेके वर्णाः शुक्लोहितादयः, आकृतयः अवयवादिविशेषाश्च येषां तानि ॥ ५ ॥

**नी० टी०**—एवं प्रार्थितः सन् भगवानुवाच—**पश्येति** । शतश इत्यादिना अनंतानीत्युक्तं नानावर्णानि नानाकृतीनि च ॥ ५ ॥

पश्याऽऽदित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ॥
बहून्यदृष्टपूर्वाणि पश्याऽऽश्चर्याणि भारत ॥ ६ ॥

**शां० भा०**—पश्याऽऽदित्यानिति । पश्याऽऽदित्यान्द्वादश वसूनष्टौ रुद्रानेकादशाश्विनौ द्वौ मरुतः सप्तसप्तगणा ये तांस्तथा बहून्यन्यान्यप्यदृष्टपूर्वाणि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित्पश्याऽऽश्चर्याण्यद्भुतानि भारत ॥ ६ ॥

**शां० आ०**—दिव्यानि रूपाणि पश्येत्युक्तं तान्येव लेशतोऽनुक्रामति—**पश्याऽऽदित्यानिति** । तान्मरुतस्तथा पश्येति संबन्धः । नानाविधानीत्युक्तं तदेव स्फुटयति—**बहूनीति** । अदृष्टपूर्वाणि पूर्वमदृष्टानि । नानावर्णाकृतीनीत्युक्तं व्यनक्ति—**आश्चर्याणीति** ॥ ६ ॥

**आ० भा०**—॥ ६ ॥

आ० ज०—॥ ६ ॥

रा० भा०—ममैकस्मिन् रूपे पश्यादित्यान् द्वादश वसूनष्टौ रुद्रानेकादश अश्विनौ द्वौ मरुतश्चैकोनपञ्चाशत् प्रदर्शनार्थमिदम् इह जगति प्रत्यक्षदृष्टानि शास्त्रदृष्टानि च यानि वस्तूनि तानि सर्वाण्यपि सर्वेषु लोकेषु सर्वेषु च शास्त्रेष्वदृष्टपूर्वाणि बहून्याश्चर्याणि पश्य ॥ ६ ॥

अ० टी०—तान्येव पश्येति नामभिर्विशेषेणाह—पश्येति। आदित्यान् द्वादशात्मकान् वसून् अष्टसंख्याकान् रुद्रानेकादशसंख्यान् अश्विनौ अश्विनीकुमारौ मरुतः देवगणविशेषान्। तथा बहून्यसंख्येयानि अदृष्टपूर्वाणि सर्वैः। आश्चर्याणि अलौकिकानि हे भारत! उत्तमवंशोद्भव! योग्यत्वात् पश्य ॥ ६ ॥

नी० टी०—दिव्यानि तावदाह—पश्यादित्यानिति। अदृष्टपूर्वाण्याश्चर्याण्यद्भुतानि चतुर्मुखपंचमुखषण्मुखादीनि ॥ ६ ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ॥
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

शां० भा०—न केवलमेतावदेव—इहैकस्थमेकस्मिन्स्थितं जगत्कृत्स्नं समस्तं पश्याद्येदानीं सचराचरं सह चरेणाचरेण च वर्तते मम देहे गुडाकेश यच्चान्यज्जयपराजयादि यच्छङ्कसे 'यद्वा जयेम यदि वा नो जयेयुः' इति यदवोचस्तदपि द्रष्टुं यदीच्छसि ॥ ७ ॥

शां० आ०—न केवलमादित्यवस्वाद्येव मद्रूपं त्वया द्रष्टुं शक्यं किं तु समस्तं जगदपि मद्देहस्थं द्रष्टुमर्हसीत्याह—नेत्यादिना। सप्तमीद्वयं मिथः संबध्यते। समासान्तर्गताऽपि सप्तमी तत्रैवान्विता। यदीच्छासि तर्हीहैव पश्येति संबन्धः ॥ ७ ॥

आ० भा०—॥ ७ ॥

आ० ज०—॥ ७ ॥

रा० भा०—इह ममैकस्मिन् देहे तत्राप्येकस्थमेकदेशस्थं सचराचरं कृत्स्नं जगत् पश्य यच्चान्यद्रष्टुमिच्छसि तदप्येकदेहैकदेश एव पश्य ॥ ७ ॥

अ० टी०—किंच—इहेति। कोटिजन्मभिरपि संपूर्णं द्रष्टुमशक्यं कृत्स्नं समस्तं जगत् विरुद्धत्वेन परिदृश्यमानमपि मम देहे एकस्थम् एकत्र स्थितं सचराचरं जडजीवसहितम् इह अस्मिन्नेव जन्मनि। अद्य तत्कालमेव यच्च अन्यत्=सर्वेषां विभूतित्वेन कथं मारयामीतिविचारेण मरणमारणादिरूपं यत् द्रष्टुम् इच्छसि तत्पश्य ॥ ७ ॥

नी० टी०—हेगुडाकेश जितनिद्र! इह मम देहे एकस्थमेकस्मिन्नेवावयवे नखाग्रमात्रे स्थितं कृत्स्नं वर्त्तमानं जगत् पश्य यच्चान्यत् अतीतमनागतं विप्रकृष्टं व्यवहितं स्थूलं सूक्ष्मं वा तत्सर्वमिह पश्य ॥ ७ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ॥
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

शां० भा०—किंतु—न तु मां विश्वरूपधरं शक्यसे द्रष्टुमनेन प्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा येन तु शक्यसे द्रष्टुं दिव्येन तद्दिव्यं ददामि ते तुभ्यं चक्षुस्तेन पश्य मे योगमैश्वरमीश्वरस्य ममैश्वरं योगं योगशक्त्यतिशयमित्यर्थः ॥ ८ ॥

शां० आ०—मन्यसे यदीत्युक्तमनुवदति—**किंत्विति** । सप्रपञ्चमनवच्छिन्नं मां स्वचक्षुषा न शक्नोषि द्रष्टुमित्याह—**न त्विति** । कथं तर्हि त्वां द्रष्टुं शक्नुयामित्याशङ्क्याऽऽह—**येनेति** । दिव्यस्य चक्षुषो वक्ष्यमाणयोगशक्त्यातिशयदर्शने विनियोगं दर्शयति—**तेनेति** ॥ ८ ॥

**आ० भा०**—॥ ८ ॥

आ० ज०—॥ ८ ॥

**रा० भा०—अहं मम देहैकदेशे सर्वं जगद्दर्शयिष्यामि त्वं त्वनेन नियमितपरिमितवस्तुग्राहिणा प्राकृतेन स्वचक्षुषा मां तथाभूतं सकलेतरविसजातीयमपरिमेयं द्रष्टुं न शक्यसे तव दिव्यमप्राकृतं मद्दर्शनसाधनं चक्षुर्ददामि । पश्य मे योगमैश्वरं मदसाधारणं योगं पश्य ममानन्तज्ञानादियोगमनन्तविभूतियोगं च पश्येत्यर्थः ॥ ८ ॥**

अ० टी०—एवमुक्ते दर्शनोद्यतं प्रत्याह—**नत्विति** । तु पुनः एवमेव द्रष्टुं न शक्यसे न शक्तोऽसि । अतस्ते दिव्यमलौकिकं चक्षुर्ददामि । तेन स्वचक्षुषा मत्कृपादृष्ट्या मां पुरुषोत्तमं पश्य । अतो दृष्टपुरुषोत्तमेन अनेनैव मे ऐश्वरं करणाकरणाऽन्यथाकरणसामर्थ्यरूपं योगयुक्तं पश्य । पुरुषोत्तमस्वरूपज्ञानदर्शनाभावे सर्वस्वरूपदर्शनं न स्यात् । पुरुषोत्तमदर्शनं चासाधारणदृष्ट्या भवेदितिभावः ॥ ८ ॥

नी० टी०—यत्तूक्तं मन्यसे यदि तच्छक्यं मया द्रष्टुमिति तत्राह—**न त्विति** । शक्यसे शक्नोषि पदविकरणव्यत्यय आर्षः अनेन प्राकृतेन दिव्यमप्राकृतं ऐश्वरमीश्वरसंबंधिनं योगं विश्वाश्रयत्वलक्षणं सामर्थ्यम् ॥ ८ ॥

**संजय उवाच—एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ॥**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

**शां० भा०—एवं यथोक्तप्रकारेणोक्त्वा ततोऽनन्तरं राजन्धृतराष्ट्र महायोगेश्वरो महांश्चासौ योगेश्वरश्च हरिर्नारायणो दर्शयामास दर्शितवान्पार्थाय पृथासुताय परमं रूपं विश्वरूपमैश्वरम् ॥ ९ ॥**

शां० आ०—इमं वृत्तान्तं धृतराष्ट्राय संजयो निवेदितवानित्याह—**संजय इति** । मदीयं विश्वरूपाख्यं रूपं न प्राकृतेन चक्षुषा निरीक्षितुं क्षमं किंतु दिव्येनेत्यादि यथोक्तप्रकारः । अनन्तरं दिव्यचक्षुषः प्रदानादिति शेषः । हरत्यविद्यां सकार्यामिति हरिः । यदीश्वरस्य मायोपहितस्य परममुत्कृष्टं रूपं तद्दर्शयांबभूवेत्याह—**परममिति** ॥ ९ ॥

**आ० भा०—हरिः सर्वयज्ञभागहारित्वात् । 'इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् ॥ वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः' इति हि मोक्षधर्मे ॥ ९ ॥**

आ० ज०—महायोगेश्वरोहरिरित्यत्र हरिशब्दस्य प्रकृतोपयुक्तमर्थमाह—**हरिरिति** । गेहेषु इष्टिगृहेषु । हरतेरिकारप्रत्ययः । श्रेष्ठोऽप्राकृतः । अप्राकृतविग्रहस्य साकारस्यैवानंतपूजास्थानेषु स्वरूपेणैव युगपत्सान्निधाने किं वक्तव्यं महायोगेश्वरत्वमिति ॥ ९ ॥

**रा० भा०—एवमुक्त्वा सारथ्येऽवस्थितः पार्थमातुलजो महायोगेश्वरो हरिः महाश्चर्ययोगानामीश्वरः परब्रह्मभूतो नारायणः परमेश्वरं स्वासाधारणं रूपं पार्थाय पितृष्वसुः पृथायाः पुत्राय दर्शयामास तद्विविधविचित्रनिखिलजगदाश्रयं विश्वस्य प्रशासितृ च रूपम् ॥ ९ ॥**

अ० टी०—एवमुक्त्या अर्जुनाय स्वरूपं दर्शयामास भगवानिति धृतराष्ट्रं प्रति संजय आह—राजन्याभिमानेन दिव्यदृष्ट्यसुरावेशिभीष्मादिमारणेन सर्वदुःखनिराकरणार्थं महायोगेश्वरः सर्वकरणसमर्थः सर्वात्मकयोगबलेन एवम्

उक्त्वा अलौकिकीं दृष्टिं दत्त्वा पार्थाय स्वाङ्गीकृताय परमं रूपं पुरुषोत्तमरूपं दर्शयामास । ततस्तद्दर्शनानन्तरम् ऐश्वरं रूपं दर्शयामास ॥ ९ ॥

**नी० टी०**—एवमुक्त्वा भगवानर्जुनाय दिव्यं रूपं दर्शितवान् स च दृष्ट्वा विस्मयाविष्टो भगवंतं विज्ञापितवानितीमं वृत्तांतमेवमुक्त्वेत्यादिषड्भिः श्लोकैर्धृतराष्ट्रं प्रति संजय उवाच—**एवमुक्त्वेत्यादि**। ततः दिव्यचक्षुःप्रदानानंतरं राजन् हे धृतराष्ट्र ! महांश्चासौ योगेश्वरश्चेति विग्रहः महतो योगस्य वा ईश्वरः परमं दिव्यं रूपं ऐश्वरं मायाविसंबंधि नतु मायातीतं दर्शयामास ॥ ९ ॥

## अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥
## अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

**शां० भा०**—अनेकेति । अनेकवक्त्रनयनमनेकानि वक्त्राणि नयनानि च यस्मिन्रूपे तदनेकवक्त्रनयनम् । अनेकाद्भुतदर्शनमनेकान्यद्भुतानि विस्मापकानि दर्शनानि यस्मिन्रूपे तदनेकाद्भुतदर्शनं तथाऽनेकदिव्याभरणमनेकानि दिव्यान्याभरणानि यस्मिंस्तदनेकदिव्याभरणं तथा दिव्यानेकोद्यतायुधं दिव्यान्यनेकान्युद्यतान्यायुधानि यस्मिंस्तद्दिव्यानेकोद्यतायुधं दर्शयामासेति पूर्वेण संबन्धः ॥ १० ॥

**शां० आ०**—तदेव रूपं विशिनष्टि—**अनेकेति** । दिव्यान्याभरणादीनि हारकेयूरादीनि भूषणानिं । उद्यतान्युच्छ्रितानि ॥ १० ॥

**आ० भा०**—॥ १० ॥

**आ० ज०**—॥ १० ॥

**रा० भा०**—तच्चेदृशं देवं द्योतमानं अनन्तं कालत्रयवर्तिनिखिलजगदाश्रयतया देशकालपरिच्छेदानर्हं विश्वतोमुखं विश्वदिग्वर्तिमुखं स्वोचितदिव्याम्बरगन्धमाल्याभरणायुधान्वितम् ॥ १० ॥

**अ० टी०**—उभयोः स्वरूपमाह—**अनेकेति**। अनेकानि वक्त्राणि नयनानि च यस्मिंस्तत् । निखिललीलात्मकरूपसहितम् । अनेकाद्भुतदर्शनम् अनेकानि अलौकिकानि लीलामयानि दर्शनानि यस्मिंस्तत् । अनेकानि दिव्यानि अलौकिकानि आभरणानि यस्मिंस्तत् । दिव्यानि अलौकिकानि अनेकानि उद्यतानि सकलदुःखनिवारकाणि आयुधानि शङ्खगदादीनि यस्मिंस्तत् ॥ १० ॥

**नी० टी०**—तदेव रूपं विशिनष्टि द्वाभ्यां—**अनेकेत्यादिना** । अनेकान्यनंतानि वक्त्राणिं नयनानि च यस्मिन् तदनेकवक्त्रनयनं । अनेकान्यद्भुतानि दर्शनानि यास्मिंस्तदनेकाद्भुतदर्शनं । अनेकानि दिव्यान्याभरणानि यास्मिन् । दिव्यान्यनेकानि च उद्यतानि आयुधानि चक्रादीनि यस्मिन् ॥ १० ॥

## दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥
## सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

**शां० भा०**—किंच—दिव्यमाल्याम्बरधरं दिव्यानि माल्यानि पुष्पाण्यम्बराणि वस्त्राणि च ध्रियन्ते येनेश्वरेण तं दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं दिव्यं गन्धानुलेपनं यस्य तं दिव्यगंधानुलेपनं

सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं देवमनन्तं नास्यान्तोऽस्तीत्यनन्तस्तं विश्वतोमुखं सर्वतोमुखं सर्वभूतात्मत्वात्तं दर्शयामासार्जुनो ददर्शेति वाऽध्याह्रियते ॥ ११ ॥

**शां० आ०**—उक्तरूपवन्तं भगवन्तं प्रकारान्तरेण विशिनष्टि—**किंचेति**। [अर्जुन इति] अध्याहारेऽपि पदसंघटनासंभवात् ॥ ११ ॥

**आ० भा०**—सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् ॥ ११ ॥

**आ० ज०**—सर्वाश्चर्यमयमितिकेनचित्प्राचुर्यार्थो मयड्व्याख्यातः। तदसत्। सर्वशब्देन गतार्थत्वादितिभावेनाह—**सर्वेति**। मयटस्तादात्म्यार्थत्वे प्रमाणमुक्तमेव ॥ ११ ॥

**रा० भा०**—॥ ११ ॥

**अ० टी०**—दिव्यानि क्रीडोपयुक्तानि माल्यानि अम्बराणि बिभर्तीति तथा। दिव्यः क्रीडोद्भूतो गन्धो यस्य तादृशम् अनुलेपनं यस्य तत्। सर्वाश्चर्यमयं दुर्वितर्क्यं देवं सर्वपूज्यम् अनन्तम् अपरिच्छिन्नं व्यापकं विश्वतोमुखं सर्वं पश्यन्तं सर्वसन्मुखम् ॥ ११ ॥

**नी० टी०**—विश्वतोमुखमिति पूर्वोक्तस्य एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमित्यस्यायं परामर्शः अनंतं सर्वतः परिच्छेदरहितम् ॥ ११ ॥

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ॥**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥**

**शां० भा०**—या पुनर्भगवतो विश्वरूपस्य भास्तस्या उपमोच्यते—दिव्यन्तरिक्षे तृतीयस्यां वा दिवि सूर्याणां सहस्रं सूर्यसहस्रं तस्य युगपदुत्थितस्य या युगपदुत्थिता भाः सा यदि सदृशी स्यात्तस्य महात्मनो विश्वरूपस्यैव भासो यदि वा न स्यात्ततोऽपि विश्वरूपस्यैव भा अतिरिच्यत इत्यभिप्रायः ॥ १२ ॥

**शां० आ०**—ननु प्रकृष्टस्य भगवतो रूपस्य दीप्तिरस्ति न वा न चेत्काष्ठादिसाम्यं यद्यस्ति कीदृशी सेत्याशङ्कयाऽऽह—**या पुनरिति**। सा यदि स्यात्तद्भासः सदृशी सेति योजना। असंभाविताभ्युपगमार्थो यदिशब्दः, स्याच्छब्दो निश्चयार्थः। सा कथंचित्सदृशी संभवति न तु भवत्येवेति विवक्षित्वाऽऽह—**यदि वेति** ॥ १२ ॥

**आ० भा०**—सहस्रशब्दोऽनंतवाची। तदपि पाकशासनविक्रमइत्यादिवत्प्रत्यायनार्थमेव। तथा हि ऋग्वेदखिलेषु। "अनंतशक्तिः परमोऽनंतवीर्यः सोऽनंततेजाश्च ततस्ततोऽपि" इति महातात्पर्याच्च प्राबल्यं न च परिमाणोक्त्या किंचित्प्रयोजनम् ॥ १२ ॥

**आ० ज०**—दिवि सूर्यसहस्रस्येति विश्वरूपस्य सहस्रसूर्योपमप्रभत्वमुच्यते। तत्रसहस्रशब्दोदशशतवाचीतिं प्रतीतिनिरासार्थमाह—**सहस्रेति**। अनंतसूर्योपमप्रभत्वमपि भगवतो न वास्तवं निरुपमत्वात्। किंतर्हीत्यतआह—**तदपीति**। प्रत्यायनार्थं बुद्धिप्रवेशनार्थमेवोच्यते। यथा भगवतोदाशरथेः पाकशासनोपमपराक्रमत्वमित्यर्थः। सहस्रशब्दस्य प्रसिद्धार्थपरित्यागः कुतइत्यत आह—**तथाहीति**। ततस्ततः सूर्यादेरपि। विलक्षणइतिशेषः। कुतः श्रुत्या गीतावाक्यस्य बाधइतिचेत्। शतंसहस्रमिति अपरिमितनामानीति गीतावाक्यस्य सावकाशत्वेन दौर्बल्यात्। श्रुतेर्निरवकाशत्वेन प्राबल्यात्। इतश्च श्रुतेः प्राबल्यमित्याह—**महातात्पर्याच्चेति**। समस्तागमानां महाप्रयोजनाय यद्भगवति महातात्पर्यं श्रुतेस्तदानुकूल्याद्गीतावाक्यस्य तत्प्रातिकूल्यादित्यर्थः। कथं गीतावाक्यस्य तत्प्रातिकूल्यमिति चेत्। किं भगवतः परिमितप्रभत्वमेव वस्तुतः। उतापरिमितप्रभस्याप्यत्र सह-

खसूर्योपमप्रभत्वमुच्यते । नाद्यः सकलश्रुतिस्मृतीतिहासपुराणविरोधात् । द्वितीयेत्वपरिमितस्य परिमाणोक्त्या किंचिदपि प्रयोजनं न सिध्यति । कुतोमहदित्याह—**नचेति** ॥ १२ ॥

**रा० भा०**—तामेव देवशब्दनिर्दिष्टां द्योतमानतां विशिनष्टि । तेजसोऽपरिमितत्वदर्शनार्थमिदम् । अक्षयतेजःस्वरूपमित्यर्थः ॥ १२ ॥

**अ० टी०**—तस्य स्वरूपस्याऽप्रमेयं तेजःस्वरूपमाह—**दिवीति** । दिवि स्वर्गे सूर्यसहस्रस्य युगपत् एकदैव उदितस्य युगपदेव उत्थिता भाः प्रभा यदि भवेत् सा तस्य महात्मनः पुरुषोत्तमस्य अनेकात्मरूपस्य भासः सदृशी स्यात् । किंतु न स्यादेवेति काकूक्तिः । एतादृशं स्वरूपम् ॥ १२ ॥

**नी० टी०**—दिवि अंतरिक्षे भाः दीप्तिः भासः दीप्तेः अभूतोपमेयं निरुपमतामेव तस्य दीप्तेर्दर्शयति उभौ यदि व्योम्नि पृथक्प्रवाहावित्यादिवत् ॥ १२ ॥

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ॥**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

**शां० भा०**—किंच—तत्र तस्मिन्विश्वरूप एकस्मिन्स्थितमेकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा देवपितृमनुष्यादिभेदैरपश्यद्दृष्टवान्देवदेवस्य हरेः शरीरे पाण्डवोऽर्जुनस्तदा ॥ १३ ॥

**शां० आ०**—न केवलमुक्तमेवार्जुनो दृष्टवान्किंतु तत्रैव विश्वरूपे सर्वं जगदेकस्मिन्नवस्थितमनुभूतवानित्याह—**किंचेति**। तदा विश्वरूपस्य भगवद्रूपस्य दर्शनदशायामित्यर्थः ॥ १३ ॥

**आ० भा०**—॥ १३ ॥

**आ० ज०**—॥ १३ ॥

**रा० भा०**—तत्रानन्तायामविस्तारे अनन्तबाहूदरवक्त्रनेत्रे अपरिमिततेजस्के अपरिमितादिव्यायुधोपेते स्वोचितापरिमितदिव्यभूषणे दिव्यमाल्याम्बरधरे दिव्यगन्धानुलेपने अनन्ताश्चर्यमये देवदेवस्य शरीरे दिव्ये अनेकधा प्रविभक्तं ब्रह्मादिविविधविचित्रदेवतिर्यङ्मनुष्यस्थावरादि भोक्तृवर्गपृथिव्यन्तारिक्षस्वर्गपातालातलवितलसुतलादिभोगस्थानभोग्यभोगोपकरणभेदभिन्नं प्रकृतिपुरुषात्मकं कृत्स्नं जगत् 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । हन्त ते कथयिष्यामि विभूतीरात्मनः शुभाः ॥ अहमात्मा गुडाकेश सर्वभूताशयः स्थितः । आदित्यानामहं विष्णुः' इत्यादिना 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम् । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥' इत्यन्तेनोदितम् एकस्थम् एकदेशस्थं पाण्डवो भगवत्प्रसादलब्धतद्दर्शनानुगुणदिव्यचक्षुरपश्यत् ॥ १३ ॥

**अ० टी०**—तत्र तस्मिन्नेव रूपे एकस्थम् एकत्र स्थितं कृत्स्नं संपूर्णं जगत् अनेकधा प्रविभक्तं नानाप्रकारविभागयुक्तं दर्शयामासेतिपूर्वेणैवान्वयः । यदा दर्शितं तदा देवदेवस्य पूज्यानामपि पूज्यस्य शरीरे पूर्वप्रतयिमानसूक्ष्मरूप एव पाण्डवः अर्जुनः अपश्यत् दृष्टवान् ॥ १३ ॥

**नी० टी०**—इहैकस्थं जगत्कृत्स्नं पश्येति यत्प्राक् भगवता उक्तं तदप्यपश्यदित्याह—**तत्रेति** । अनेकधा प्रविभक्तमित्येतत् वर्षासूत्थितातिंतिणीबीजे सूक्ष्मरूपेण तरुर्दृश्यते तद्वन्माभूदिति दर्शयितुं सावकाशं अनेकधा विभागयुक्तं विविक्तं अपश्यत् एकस्थं एकावयवस्थं अयमर्थः । यदा भगवतश्चतुर्भुजं रूपं चिंत्यते तत्र च चेतसि

लब्धपदे सति क्रमशस्तदीयावयवांस्त्यक्त्वा मुखे स्मिते वा पदनखे वा चित्तं ध्रियते तत्रापि लब्धपदे तस्मिंस्तदपि त्यक्त्वा विश्वरूपमारोहति दिव्यं चक्षुरपि एवं सूक्ष्मतामापादितं मन एव । "मनोस्य दैवं चक्षुः स एतेन दैवेन चक्षुषा मनसैतान् कामान्पश्यन् रमते" इति श्रुतेः । कामान् विषयान् एतान् हार्दाकाशाख्यसगुणब्रह्मगतानिति श्रुतिपदयोरर्थः। यथोक्तं श्रीभागवते । 'तत्र लब्धपदं चित्तमाकृष्यैकत्र धारयेत् । नान्यानि चिंतयेद्भूयः सुस्मितं भावयेन्मुखं ॥ तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् । तच्च त्यक्त्वा मदारोहो न किंचिदपि चिंतयेत्' इति तत्र मूर्तौ एकत्र अंगे व्योम्नि कारणे मदारोहो निर्विकल्पे ब्रह्मण्यारूढः तदिदमुक्तं देवदेवस्य शरीरे कृत्स्नं जगदेकस्थं पांडवोऽपश्यदिति ॥ १३ ॥

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ॥**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

**शां० भा०**—तत इति । ततस्तं दृष्ट्वा स विस्मयेनाऽऽविष्टो विस्मयाविष्टो हृष्टानि रोमाणि यस्य सोऽयं हृष्टरोमा चाभवद्धनंजयः प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सञ्शिरसा देवं विश्वरूपधरं कृताञ्जलिर्नमस्कारार्थं संपुटीकृतहस्तः सन्नभाषतोक्तवान् ॥ १४ ॥

**शां० आ०**—विश्वरूपधरस्य भगवतस्तस्मिन्नेकीभूतजगतश्चोक्तविशेषणस्य दर्शनानन्तरं किमकरोदित्यपेक्षायामाह—**तत इति** । आश्चर्यबुद्धिर्विस्मयो, रोम्णां हृष्टत्वं पुलकितत्वं, प्रकर्षो भक्तिश्रद्धयोरतिशयः ॥ १४ ॥

**आ० भा०**—॥ १४ ॥

**आ० ज०**—॥ १४ ॥

**रा० भा०**—ततो धनंजयो महाश्चर्यस्य कृत्स्नस्य जगतः स्वदेहैकदेशेनाश्रयभूतं कृत्स्नस्य प्रवर्तयितारं चाश्चर्यतमानन्तज्ञानादिकल्याणगुणगणं देवं दृष्ट्वा विस्मयाविष्टो हृष्टरोमा शिरसा दण्डवत् प्रणम्य कृताञ्जलिरभाषत ॥ १४ ॥

**अ० टी०**—दर्शनानन्तरं किं कृतवानित्यत आह—**तत इति** । ततस्तदनन्तरं स पूर्वोक्तः प्राप्तदिव्यदृष्टिः विस्मयाविष्टः आश्चर्यरसनिमग्नः । हृष्टरोमा उत्पुलकिताङ्गः अन्तरानन्दयुक्तः धनञ्जयः प्रादुर्भूतविभूतिरूपः शिरसा मस्तकेन देवं पूज्यं नमस्करणीयं प्रणम्य नमस्कृत्य कृताञ्जलिः विनीतः सन् अभाषत विज्ञप्तिं कृतवान् ॥ १४ ॥

**नी० टी०**—हृष्टरोमा रोमांचितगात्रः ॥ १४ ॥

**अर्जुन उवाच—पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् ॥**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥**

**शां० भा०**—कथं यत्त्वया दर्शितं विश्वरूपं तदहं पश्यामीति स्वानुभवमाविष्कुर्वन्—पश्याम्युपलभे हे देव! तव देहे देवान्सर्वांस्तथा भूतविशेषसंघान्भूतविशेषाणां स्थावरजङ्गमानां नानासंस्थानविशेषाणां संघा भूतविशेषसंघास्तान् । किंच ब्रह्माणं चतुर्मुखमीशमीशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमित्यर्थः । ऋषींश्च वसिष्ठादीन्, सर्वानुरगांश्च वासुकिप्रभृतीन्दिव्यान्दिवि भवान् ॥ १५ ॥

**शां० आ०**—कथं भगवन्तं प्रत्यर्जुनो भाषितवानिति पृच्छति—**कथमिति** । तत्प्रश्नमपेक्षितं पूरयन्नवतारयति—**यत्त्वयेति** । भूतविशेषसंघेषु देवानामन्तर्भावेऽपि पृथक्करणमुत्कर्षात् । ब्रह्मणः सर्वदेवतात्मत्वेऽपि तेभ्यो भेदकथनं तदुत्पादकत्वादिति मत्वाऽऽह—**किंचेति** । ऋषीणामुरगाणां च किंचिद्वैषम्यात्पृथक्त्वं, दिव्यानित्युभयेषां विशेषणम् ॥ १५ ॥

**आ० भा०**—॥ १५ ॥

**आ० ज०**—॥ १५ ॥

**रा० भा०**—देव तव देहे सर्वान् देवान् पश्यामि तथा सर्वान् प्राणिविशेषाणां संघान् तथा ब्रह्माणं चतुर्मुखमण्डाधिपतिं तथेशं कमलासनस्थं कमलासने ब्रह्मणि स्थितमीशं तन्मतेऽवस्थितं तथा देवर्षिप्रमुखान् सर्वान् ऋषीन् उरगांश्च वासुकितक्षकादीन् दीप्तान् ॥ १५ ॥

**अ० टी०**—तद्वाक्यमेवाह—**पश्यामीति सप्तदशभिः** । हे देव ! पूज्य ! तव देहे उपचितस्वरूपे देवान् इन्द्रादीन् क्रीडामयान्, तथा क्रीडात्मकानेव सर्वान् भूतविशेषाणां चतुर्विधानां संघान् समूहान् । दिव्यान् क्रीडार्थप्रकटितान् ऋषीन् नारदादीन्, पुनस्तामसान् उरगान् शेषादीन्, तन्मूलभूतं कमलासनस्थं नाभिपद्मस्थं ब्रह्माणम्, ईशं महादेवम् एवमेतान् सर्वान् पश्यामि ॥ १५ ॥

**नी० टी०**—देवानादित्यादीन् भूतविशेषाश्चतुर्विधा जरायुजादयस्तेषां संघान् समूहान् ब्रह्माणं चतुर्मुखं ईशं ईशितारं कमलासनस्थमित्यनेन दूरदर्शनमुक्तं उरगान् पातालस्थाननंतादीन् दिव्यान् कैलासादौ स्थितान् वासुकिप्रमुखान् एतेन व्यवहितदर्शनमुक्तम् ॥ १५ ॥

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा सर्वतोनन्तरूपम् ॥**
**नान्तं न मध्यं न पुनस्तवाऽऽदिं पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥**

**शां० भा०**—अनेकबाहूदरवक्त्रनेत्रमनेके बाहव उदराणि वक्त्राणि नेत्राणि च यस्य तव स त्वमनेकबाहूदरवक्त्रनेत्रस्तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्रानन्तरूपमनन्तानि रूपाण्यस्येत्यनन्तरूपस्तमनन्तरूपं नान्तमन्तोऽवसानं न मध्यं मध्यं नाम द्वयोः कोट्योरन्तरं न पुनस्तवाऽऽदिं तव देवस्य नान्तं पश्यामि न मध्यं पश्यामि न पुनरादिं पश्यामि हे विश्वेश्वर हे विश्वरूप ॥ १६ ॥

**शां० आ०**—यत्र भगवद्देहे सर्वमिदं दृष्टं तमेव विशिनष्टि—**अनेकेति** । आदिशब्देन मूलमुच्यते । नान्तं न मध्यमित्यत्रापि पश्यामीत्यस्य प्रत्येकं संबन्धं सूचयति—**नान्तं पश्यामीति** ॥ १६ ॥

**आ० भा०**—अनेकशब्दोऽनंतवाची अनंतबाहुमिति वक्ष्यति । सर्वतः पाणिपादं तदित्यादि च । “ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ॥ संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः” इति ऋग्वेदखिलेषु । “विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ॥ संबाहुभ्यां नमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः” इति यजुर्वेदे च । विश्वशब्दश्चानंतवाची । ‘सर्वं समस्तं विश्वं च अनंतं पूर्वमेव च’ इत्यभिधानात् । “ अनंतबाहुमनंतपादमनंतरूपं पुरुवक्त्रमेकम् ” इति च बाभ्रव्यशाखायां । महत्त्वाद्युक्तिस्तु तदात्मकत्वेनापि भवति । अन्यथा अनादिमत्परं ब्रह्मेत्याद्ययुक्तं स्यात् । एकत्र त्वनंतान्यस्य रूपाणीत्यनंतरूपः । अन्यत्र त्वपरिमाण इति । उक्तं ह्युभयमपि । ‘परात्परं यन्महतो महांतं यदेकमव्यक्तमनंतरूपम्” इतियजुर्वेदे। अव्यक्तस्यानंतत्वादेव महत्त्वे अपरिमितत्वं

सिध्यति । ' महांतं च समावृत्य प्रधानं समवस्थितम् ॥ अनंतस्य न तस्यांतः संख्यानं चापि विद्यते' इत्यादित्यपुराणे । तानि चैकैकानि रूपाण्यनंतानीति चैकत्र भवति । " असंख्याता ज्ञानकास्तस्य देहाः सर्वे परिमाणविवर्जिताश्च" इत्यृग्वेदखिलेषु । यावान्वा अयमाकाशस्तावानेषोंतर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अंतरेव समाहिते । "उभावग्निश्च वायुश्च सूर्याचंद्रमसावुभौ" इति च । ' कृष्णस्य गर्भजगतोऽतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणातपत्रम्' इति च भागवते । न चैतदयुक्तम् । अचिंत्यशक्तित्वादीश्वरस्य । 'अचिंत्याः खलु ये भावा न तांस्तर्केण योजयेत्' इति च श्रीविष्णुपुराणे ॥ " नैषा तर्केण मतिरापनेया'' इति श्रुतिः । अतिप्रसंगस्तु महातात्पर्यवशात् वाक्यबलाच्चापनेयः । न हि घटवत्कश्चित्पदार्थो न दृष्ट इत्येतावता प्रमाणदृष्टः सन्निराक्रियते । केषुचित्पदार्थेषु वाक्यव्यवस्था अचिंत्यशक्तित्वाभावादंगीक्रियते । गुणाः श्रुताः सुविरुद्धाश्च देवे संत्यश्रुता अपि नैवात्र शंका । " चिंत्या अचिंत्याश्च तथैव दोषाः श्रुताश्च नाङ्गीर्हि तथा प्रतीताः ॥ एवं परेऽन्यत्र श्रुताश्रुतानां गुणागुणानां च क्रमाद्व्यवस्था " इति च जाबालखिलश्रुतेश्च । उपचारत्वपरिहाराय न मध्यमिति । अन्यथा आद्यंताभावेनैव तत्सिद्धेः । " विश्वरूपः पूर्णरूपः स विश्वरूपो अनूनरूपो अतोयं सोऽनंतरूपो न हि नाशोऽस्ति तस्य " इति शांडिल्यशाखायाम् ॥ १६ ॥

**आ० ज०**—अनेकबाहूदरवक्त्रनेत्रमित्यत्रानेकशब्दस्य द्व्यादौ पर्यवसानात् विवक्षितमर्थमाह—**अनेकेति** । अनेनानेकवक्त्रनयनमित्यपि व्याख्यातम् । कुत एतदित्यत आह—**अनंतेति** । सर्वत इत्यस्यार्थस्तात्पर्यनिर्णयेऽवगंतव्यः इत्यादि च वक्ष्यति । बाहुभ्यां प्रधानाभ्यां पतत्रैः पतत्रसदृशैरितरबाहुभिः संधमति अग्न्यादिभूतानि संयोजयतीति प्रत्येकमन्वयः । संनमतीत्यस्याप्ययमेवार्थः । एतयोर्मंत्रयोः प्रकृतानुपयोगादयुक्तमुदाहरणमित्यत आह—**विश्वशब्दश्चेति** । तथा च प्रथमार्थे तसिरित्युक्तं भवति । स्पष्टार्थां चात्र श्रुतिमाह—**अनंतपादमिति** । यदि भगवाननंतबाह्वादिस्तदा परममहत्परिमाणः स्यात् । अन्यथा तदयोगात् । न च तद्युक्तम् । रूपं महत्त इति महत्त्वमात्रोक्तेः । तथा बहुवक्त्रनेत्रमिति बहुत्वमात्रोक्तेरनंतबाह्वादित्वोक्तिश्चानुपपन्नेत्यत आह—**महत्वादीति** । स्यादयं विरोधो यदि भगवद्रूपस्य महत्त्वमात्रं तदवयवानां च बहुत्वमात्रमुच्येत । न चैवम् अवच्छेदकाश्रवणात् । महत्त्वबहुत्वोक्तिस्तु परममहत्त्वात्मकत्वेनानंतावयवत्वेन च सह संभवति । परममहति महत्त्वस्यानंते बहुत्वस्यांतर्भावादित्यर्थः । अवच्छेदकानुक्तावप्यवांतरमहत्त्वादिग्रहणे को दोष इत्यत आह—**अन्यथेति** । तत्र परममहत्त्वस्यानंतावयवत्वस्य चोक्तेरिति भावः । पश्यामि त्वां सर्वतोऽनंतरूपं त्वया ततं विश्वमनंतरूपेत्यनंतशब्दद्वयस्य माहात्म्यातिशयसूचनायार्थभेदमाह—**एकत्र त्विति** । अपरिमाणोऽपरिच्छिन्न इत्यनंतरूपइति संबंधः । स्यादिदं व्याख्यानं यदीदं द्वयं प्रामाणिकं स्यादित्यत आह—**उक्तं हीति** । महांतं महत् । महतो महांतमित्यनंतमपरिच्छिन्नपरिमाणं रूपमस्येत्युक्तार्थे प्रमाणम् । एकम् भिन्नमपि अनंतरूपमित्यनंतसंख्यान्यस्य रूपाणीत्यत्र । ननु महतो महांतमिति महत्तत्वान्महत्त्वमेवोच्यते न त्वनंतत्वम् । ततश्च यदेकमव्यक्तमित्यव्यक्तव्यापित्ववचनात्तत्साम्यमेव सिध्यतीत्यतआह—**अव्यक्तस्येति** । महतो महत्त्वेऽव्यक्तव्यापित्वे चेत्यपि ग्राह्यम् । अव्यक्तस्यानंतत्वं कुत इत्यत आह—**महांतं चेति** । अनंतस्य विष्णोः प्रतिमाभूतस्य तस्यांतः परिमाणं परिच्छेदः कार्यतः संख्यानं संख्यापरिच्छेदोऽपि न विद्यते । प्रकारांतरेणानंतरूपशब्दद्वयस्यार्थभेदमाह—**तानि चेति** । एकस्यानंतरूपशब्दस्यानंतसंख्यारूपार्थत्वे स्थिते सत्येकत्रानंतरूपशब्दे तानि चानंतसंख्यानि रूपाणि प्रत्येकमपरिच्छिन्नपरिमाणानीत्यर्थो भवतीत्यर्थः । अत्र प्रमाणमाह—**असंख्याता इति** । ज्ञानकाः ज्ञानानंदात्मकाः । अयं बहिर्व्याप्त आकाशः परमात्मा यावान् यावत्परिमाणस्तावानेवैषोंऽतर्हृदये स्थितः परमात्मेत्यर्थः गर्भे जठरे जगद्यस्यासौ तथोक्तः । अवसन्नोऽवनतः । गर्भजगत्त्वेनापरिच्छिन्नपरिमाणत्वं लभ्यते । कृष्णादीनामप्यपरिच्छिन्नपरिमाणत्वं वदंतो वक्तव्याः । तत्राल्पपरिमाणप्रतीतिर्या सा किं भ्रांतिरुत प्रमितिरिति । आद्ये क्रियादेर्द्विभुजचतुर्भुजादेश्च मिथ्यात्वं स्यात् । न द्वितीयः युगपदेकत्राल्पानल्पपरिमाणसमावेशस्यायुक्तत्वात् । अतोऽपरिच्छिन्नपरिमाणोक्तिरुपचारमात्रमिति चेत् । किमिदमनेकपरिमाणत्वस्यायुक्तत्वं किमन्यत्रादर्शनेनासंभावितत्वम् । उत नायमल्पानल्पपरिमाणोपेतो द्रव्यत्वात् । नायं परममहत्परिमाणोऽल्पपरिमाणत्वात्पटवदित्यादियुक्तिविरुद्धत्वम् । अथातिप्रसंगदुष्टत्वं किं वाऽप्रामाणिकत्वम् । नाद्य इत्याह—**नचेति** । अघटितघटनाशक्त्युपेते किं नामासंभावितमिति भावः । न द्वितीयः । ईश्वरस्य युक्त्यगोचरत्वेन तदनवकाशादिति भावेनाह—**अचिंत्या इति** । एषा ब्रह्मविषया । अपनेया निरा-

कार्या। अतिप्रसंगोऽपि किं यदीश्वरो विरुद्धपरिमाणद्वयोपेतः स्यात् तदा निर्दुःखो दुःखी स्यादितीश्वरमधिकृत्य स्यात्। उत प्राणादयोऽपि तथा स्युः। तथा चाणुश्चेत्यादिका तद्विषयवाक्यव्यवस्था नांगीक्रियेतेत्यन्यदधिकृत्य स्यात्। आद्यं दूषयति—**अतिप्रसंगस्त्विति।** अविशेषमाश्रित्य ह्ययमतिप्रसंगः। न चासावस्ति निर्दोषानंतगुणत्वे हरेः श्रुतीनां महातात्पर्येण दुःखादेस्तद्विरोधात्परिमाणद्वयस्य तु तदविरोधात् दुःखादेरप्रामाणिकत्वात्परिमाणद्वयस्य तूक्तवक्ष्यमाणवाक्यसिद्धत्वादिति भावः। विपर्ययापर्यवसायी चायं प्रसंग इतिभावेनाह—**न हीति।** यदि घटः पृथुबुध्नोदराकारः स्यात्तर्हि पदार्थो न स्यात्। तथाविधस्य पदार्थस्य कस्याप्यदृष्टत्वादिति प्रसंगो यथा न युक्तः। भवति च पदार्थस्तस्मात्पृथुबुध्नोदराकारो न भवतीति विपर्ययस्य प्रमाणबाधितत्वेनापर्यवसानात्। तथात्वेन तस्य धर्मिग्राहकप्रमाणदृष्टत्वात्। तथा प्रकृतेऽपीति। एतेनानुमानानां कालात्ययापदिष्टत्वं चोक्तं भवति। प्राणादिकमधिकृत्यातिप्रसंग इति द्वितीयं निराकरोति—**केषुचिदिति।** अत्रापि संभावनाहेतुभावाभ्यां विशेषादविशेषोऽसिद्ध इति भावः। चतुर्थं निरस्यति—**गुणा इति।** श्रुता अश्रुता अपि सुविरुद्धा अन्यत्र सहादृष्टा अविरुद्धाश्च। तथा गुणा इव दोषाः। श्रुताअश्रुताश्च नैव संति। किंत्वज्ञैर्मिथ्यादृष्टिभिर्हि तथा संतीति प्रतीताः। एवं परे ईश्वरे स्थितिस्ततोऽन्यत्र तु श्रुतानां प्रमाणांतरसिद्धानां च गुणदोषाणां व्यवस्थाऽवस्थानम्। तच्च क्रमादुत्तमेषु गुणबाहुल्यं दोषाल्पत्वं मध्यमेषूभयसाम्यम्। अवरेषु दोषबाहुल्यं गुणाल्पत्वमिति। तदेवमसंभावनाद्यभावान्न भगवति अपरिच्छिन्नपरिमाणत्वोक्तेरुपचरितत्वं कल्प्यम्। अर्जुनेनापि तन्निराकृतमिति भावेनाह—**उपचारत्वेति।** नांतं न पुनस्तवादिं पश्यामीत्याद्यंताभावोक्तेरुपचरितत्वपरिहाराय न मध्यमित्युक्तम्। मध्यनिराकरणार्थमेव तत्किं न स्यादित्यत आह—**अन्यथेति।** उपचारत्वपरिहारार्थत्वाभावे तद्वैयर्थ्यं स्यादिति शेषः। कुतः। आद्यंतसापेक्षत्वात् मध्यस्य तदभावोक्त्यैव तदभावसिद्धेः। विश्वं महदादिकं रूपं स्वरूपमस्येति प्रतीतिं सप्रमाणकं निवारयति—**विश्वरूप इति।** एतच्चाभ्यासरूपमिति मंतव्यम्॥ १६॥

**रा० भा०—अनेकबाहूदरवक्त्रनेत्रम् अनन्तरूपं त्वां सर्वतः पश्यामि। विश्वेश्वर विश्वस्य नियन्तः विश्वरूप विश्वशरीर यतस्त्वमनन्तः अतस्तव नान्तं न मध्यं न पुनस्तवादिं च पश्यामि॥ १६॥**

**अ० टी०**—यस्य देहेन एतान् पश्यामि तादृशं त्वां च पश्यामीत्याह भ्रमाभावाय—**अनेकेति।** अनेकानि बाह्वादीनि यस्य। सर्वतोऽनन्तानि रूपाणि यस्यैतादृशं त्वां पश्यामि। तादृशानेकरूपस्यापि तव अन्तं पूर्णभावं, मध्यं स्थितिस्थानम्, आदिम्, उत्पत्तिस्थानं न पश्यामि। विश्वेश्वर! विश्वपरिपालक! किं बहुना विश्वरूपं पश्यामि॥ १६॥

**नी० टी०**—अनेके अनंताः बाहवः उदराणि वक्त्राणि नेत्राणि च यस्मिंस्तदनेकबाहूदरवक्त्रनेत्रं सर्वतश्चतुर्दिक्षु उपर्यधश्च अनंतमपरिच्छिन्नं रूपमस्य तं। अनंतत्वमेवाह—**नांतमिति।** दीर्घरज्ज्वा इव तवाद्यंतौ दैशिकौ न स्तइत्यर्थः॥ १६॥

## किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतोदीप्तिमन्तम्॥
## पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम्॥ १७॥

**शां० भा०**—किंच—किरीटिनं किरीटं नाम शिरोभूषणविशेषस्तद्यस्यास्ति स किरीटी तं किरीटिनं तथा गदिनं गदा यस्य विद्यत इति गदी तं गदिनं तथा चक्रिणं चक्रमस्यास्तीति चक्री तं चक्रिणं च तेजोराशिं तेजःपुञ्जं सर्वतोदीप्तिमन्तं सर्वतो दीप्तिर्यस्यास्ति स सर्वतोदीप्तिमांस्तं सर्वतोदीप्तिमन्तं पश्यामि त्वां दुर्निरीक्ष्यं दुःखेन निरीक्ष्यो दुर्निरीक्ष्यस्तं दुर्निरीक्ष्यं समन्तात्समन्ततः सर्वत्र दीप्तानलार्कद्युतिमनलश्चार्कश्चानलार्कौ दीप्तावनलार्कौ दीप्तानलार्कौ तयोर्दीप्तानलार्कयोर्द्युतिरिव द्युतिस्तेजो यस्य तव स त्वं दीप्तानलार्कद्युतिस्तं त्वां दीप्तानलार्कद्युतिम्। अप्रमेयं न प्रमेयमप्रमेयमशक्यपरिच्छेदमित्यर्थः॥ १७॥

**शां० आ०**—विश्वरूपवन्तं भगवन्तमेव प्रकारान्तरेण प्रपञ्चयति—**किंचेति**। परिच्छिन्नत्वं व्यावर्तयति—**सर्वत इति**। दुर्निरीक्ष्यं पश्यामीत्यधिकारिभेदादविरुद्धम्। पुरतो वा पृष्ठतो वा पार्श्वतो वा नास्य दर्शनं किंतु सर्वत्रेत्याह—**समन्तत इति**। दीप्तिमत्त्वं दृष्टान्तेन स्पष्टयति—**दीप्तेति** ॥ १७ ॥

**आ० भा०—अनलार्कद्युतिमित्युक्ते मितत्वशंकामपाकरोति—अप्रमेयमिति ॥ १७ ॥**

**आ० ज०**—नन्वनलार्कद्युतिमित्युक्तत्वात् सहस्रशब्दोऽनंतवाचीत्याद्युक्तमयुक्तमितिचेत् न। एतदेवाशंक्य प्रत्ययनार्थमेवै-तदुक्तम्। वस्तुतस्त्वपरिच्छिन्नद्युतिरेव भगवानिति स्वयमेवोक्तत्वादित्याह—**अनलेति**। इत्युक्ते जातां द्युतेर्मितत्वशंकाम्। एतच्च सविशेषणविशेषणत्वात् द्युत्या संबध्यते ॥ १७ ॥

**रा० भा०—तेजोराशिं सर्वतो दीप्तिमन्तं समन्ताद्दुर्निरीक्ष्यं दीप्तानलार्कद्युतिमप्रमेयं त्वां किरीटिनं गदिनं चक्रिणं च पश्यामि ॥ १७ ॥**

**अ० टी०**—किंच। किरीटिनं मुकुटालङ्कारयुक्तं रसात्मकं, गदिनं सकलप्राणाधिदैविकधर्मधारिणं, चक्रिणं तेजोरूपसुदर्शनधारिणं चकारेण तद्वत् मोक्षदानार्थमपि चक्रधारित्वं ज्ञापितम्। तेजोराशिं तेजःपुञ्जात्मकं। सर्वतो दीप्तिमन्तं परित उद्दीपककिरणयुक्तम्। तेजोयुक्तत्वे दीप्तियुक्तत्वे च दृष्टान्तमाह। दीप्ताऽनलार्कद्युतिं। दीप्तौ यावनलार्कौ तयोर्द्युतिरिव द्युतिर्यस्य तादृशम् अप्रमेयं प्रमातुमयोग्यं त्वां समन्तात् दुर्निरीक्ष्यं पश्यामि ॥ १७ ॥

**नी० टी०**—किरीटगदाचक्रधारिणं दीप्तिमत्त्वादेव दुर्निरीक्ष्यं द्रष्टुमशक्यं समंतात्सर्वतो ये दीप्ता अनलाअर्काश्च तद्वत् द्युतिर्यस्य तं समंताद्दीप्तानलार्कद्युतिमित्येकं पदं अत एवाप्रमेयं द्रष्टुमशक्यपरिच्छेदम् ॥ १७ ॥

**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ॥**
**त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥**

**शां० भा०—इत एव ते योगशक्तिदर्शनादनुमिनोमि—त्वमक्षरं न क्षरतीति परमं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिस्त्वमस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयतेऽस्मिन्निति निधानं पर आश्रय इत्यर्थः। किंच त्वमव्ययो न तव व्ययो विद्यत इत्यव्ययः शाश्वतधर्मगोप्ता शश्वद्भवः शाश्वतो नित्यो धर्मस्तस्य गोप्ता शाश्वतधर्मगोप्ता सनातनश्चिरंतनस्त्वं पुरुषः परो मतोऽभिप्रेतो मे मम ॥ १८ ॥**

**शां० आ०**—सप्रपञ्चे भगवद्रूपे प्रकृते प्रकरणविरुद्धं त्वमक्षरमित्यादिनिरुपाधिकवचनमित्याशङ्कयाऽऽह—**इत एवेति**। योगशक्तिरैश्वर्यातिशयः, न क्षरतीति निष्प्रपञ्चत्वमुच्यते, परमपुरुषार्थत्वात्परमार्थत्वाच्च ज्ञातव्यत्वम्। यस्मिन्द्यौः पृथिवीत्यादौ प्रपञ्चायतनस्यैव ततो निष्कृष्टस्य ज्ञातव्यत्वश्रवणात्कुतो ब्रह्मणो ज्ञातव्यत्वं तत्राऽऽह—**त्वमस्येति**। निष्प्रपञ्चस्य ब्रह्मणो ज्ञेयत्वे हेत्वन्तरमाह—**किंचेति**। अविनाशित्वात्तस्यैव ज्ञातव्यत्वादतिरिक्तस्य नाशित्वेन हेयत्वादित्यर्थः। ज्ञानकर्मात्मनो धर्मस्य नित्यत्वं वेदप्रमाणकत्वम्। धर्मसंस्थापनार्थाय संभवामीत्युक्तत्वाद्गोप्ता रक्षिता ॥ १८ ॥

**आ० भा०—॥ १८॥**

**आ० ज०**—॥ १८ ॥

**रा० भा०—उपनिषत्सु "द्वे विद्ये वेदितव्ये" इत्यादिषु वेदितव्यतया निर्दिष्टं परमक्षरं त्वमेव अस्य विश्वस्य परं निधानं विश्वस्यास्य परमाधारभूतस्त्वमेव त्वमव्ययः व्ययरहितः यत्स्वरूपो यद्गुणो यद्विभवश्च त्वं तेनैव रूपेण सर्वदावतिष्ठसे शाश्वतधर्मगोप्ता शाश्वतस्य नित्यस्य वैदिकस्य धर्मस्यैवमा-**

दिभिरवतारैस्त्वमेव गोप्ता सनातनस्त्वं पुरुषो मतो मे "वेदाहमेतं पुरुषं महान्तं परात्परं पुरुषम्" इत्यादिषूदितः सनातनपुरुषस्त्वमेवेति मे मतः ज्ञातः यदुकुलतिलकस्त्वमेवंभूत इदानीं साक्षात्कृतो ममेत्यर्थः ॥ १८ ॥

**अ० टी०**—एवंभूतस्वरूपदर्शनेन स्वज्ञानार्थं निवेदयति—**त्वमिति**। अक्षरम् अक्षरस्वरूपं त्वमेव परमं ब्रह्म। त्वं वेदितव्यं भक्तानां ज्ञानिनां ज्ञेयरूपस्त्वमेव। अक्षरत्वेन सर्वोत्पत्तिकारणता निरूपिता। लयस्वरूपमाह। त्वम् अस्य विश्वस्य परम् उत्कृष्टं मोक्षरूपं निधानं निधीयतेऽस्मिन्निति लयस्थानम्। पालकत्वमाह। शाश्वतस्य नित्यस्य धर्मस्य गोप्ता पालको रक्षकस्त्वम्। एवमपि न गुणात्मकः किन्तु अव्ययः अविनाशी नित्यः। एवं सर्वधर्मानुक्त्वा मुख्यं स्वनिश्चिततामाह। सनातनः पुरुषः पुरुषोत्तमो मे मम मतः संमत इत्यर्थः ॥ १८ ॥

**नी० टी०**—एवं तव योगैश्वर्यदर्शनात्त्वामेवमवैमीति वदन्नप्रमेयत्वमेव विवृणोति—**त्वमिति**। परममक्षरमस्थूलादिलक्षणं अक्षरं ब्रह्म परममित्यत्र प्रागुक्तं निष्कलं ब्रह्म तदेव त्वमसि। एतेन सगुणरूपस्य निर्गुणज्ञापकत्वमुक्तं शाखाग्रस्येव चंद्रज्ञापकत्वं अत एव वेदितव्यं वेदांतप्रमाणेन ज्ञातुं योग्यं नतूपासनीयं। सगुणं ब्रह्मापि त्वमेवेत्याह—**त्वमस्येति**। निधानं लयस्थानं एतेन कारणत्वमुक्तं अव्ययः अमृतः देवत्वात् शाश्वतस्य वैदिकस्य धर्मस्य गोप्तेत्यनेन कार्यब्रह्मभूतहिरण्यगर्भरूपत्वमुक्तं। सनातनश्चिरंतनोऽनादिपुरुषो जीवात्मा सोऽपि त्वमेव मे मम मतः। एवं विश्वरूपदर्शने जीवब्रह्मणोरैक्यं शाखयाचंद्र इवाधिगम्यत इत्युक्तम् ॥ १८ ॥

**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ॥**
**पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥**

**शां० भा०**—किंच—अनादिमध्यान्तमादिश्च मध्यं चान्तश्च न विद्यते यस्य सोऽयमनादिमध्यान्तस्तं त्वामनादिमध्यान्तमनन्तवीर्यं न तव वीर्यस्यान्तोऽस्तीत्यनन्तवीर्यस्तं त्वामनन्तवीर्यं तथाऽनन्तबाहुमनन्ता बाहवो यस्य तव स त्वमनन्तबाहुस्तं त्वामनन्तबाहुं शशिसूर्यनेत्रं शशिसूर्यौ नेत्रे यस्य तव स त्वं शशिसूर्यनेत्रस्थं त्वां शशिसूर्यनेत्रं चन्द्रादित्यनयनं पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्चासौ हुताशश्च स वक्त्रं यस्य तव स त्वं दीप्तहुताशवक्त्रस्तं त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तं तापयन्तम् ॥ १९ ॥

**शां० आ०**—भगवतो विश्वरूपाख्यं रूपमेव पुनर्विवृणोति—**किंचेति**। हुतमश्नातीति हुताशो वह्निः ॥ १९ ॥

**आ० भा०**—शशिसूर्यनेत्रमित्यप्यहं क्रतुरित्यादिवत्। "तदंगजाः सर्वसुरादयोऽपि तस्मात्तदंगेत्यृषिभिः स्तुतास्ते" इत्यृग्वेदखिलेषु। "चंद्रमा मनसो जातश्चक्षोः सूर्यो अजायत" इति च। बहुरूपत्वाद्ब्रह्माश्रयत्वं तेषां युक्तम् ॥ १९ ॥

**आ० ज०**—शशिसूर्यनेत्रमित्युक्तत्वात् कथं विश्वरूपशब्दस्यान्यथाव्याख्यानमित्यतआह—**शशीति**। इत्यादिवद्व्याख्येयम्। जन्यजनकभावेनाश्रयाश्रयिभावेन वाऽभेदोक्तिरित्यर्थः। कुतएतदित्यत आह—**तदंगजा इति**। तदंगेत्याविभक्तिको निर्देशः संबुद्धिर्वा। अभेदे बाधकं चाह—**चंद्रमा इति**। चक्षोश्चक्षुषः। नन्वत्र चंद्रमसो मनोजातत्वं तदाश्रयत्वं चोच्यते। गीतायां तु नेत्राश्रयत्वादि। तथाऽन्यत्र दंष्ट्राऽर्यमेंदू इति तत्कुतो न विरोधइत्यत आह—**बह्विति** ॥ १९ ॥

**रा० भा०**—अनादिमध्यान्तम् आदिमध्यान्तरहितम् अनन्तवीर्यम् अनवधिकातिशयवीर्यं वीर्यशब्दः प्रदर्शनार्थः अनवधिकातिशयज्ञानबलैश्वर्यशक्तितेजसां निधिमित्यर्थः। अनन्तबाहुम् असंख्येय

बाहुं सोऽपि प्रदर्शनार्थः अनन्तबाहूदरपादवक्त्रादिकं शशिसूर्यनेत्रं शशिवत्सूर्यवच्च प्रसादप्रतापयुक्तसर्वनेत्रं देवादीननुकूलान्नमस्कारादिकुर्वाणान्प्रति प्रसादः तद्विपरीतानसुरराक्षसादीन् प्रति प्रतापः "रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ।" इति हि वक्ष्यते । दीप्तहुताशवक्त्रं प्रदीप्तकालानलवत्संहारानुगुणवक्त्रं तेजः पराभिभवनसामर्थ्यं स्वकीयेन तेजसा विश्वमिदं तपन्तं त्वां पश्यामि एवंभूतं सर्वस्य स्रष्टारं सर्वस्याधारभूतं सर्वस्य प्रशासितारं सर्वस्य संहर्तारं ज्ञानाद्यपरिमितगुणसागरमादिमध्यान्तरहितमेवंभूतदिव्यदेहं त्वां यथोपदेशं साक्षात्करोमीत्यर्थः । एकस्मिन्दिव्यदेहे अनेकोदरादिकं कथम् इत्थमुपपद्यते एकस्मात् कटिप्रदेशादनन्तपरिमाणादूर्ध्वमुद्गता यथोदितदिव्योदरादयः अधश्च यथोदितदिव्यपादः तत्रैकस्मिन् मुखे नेत्रद्वयमिति च न विरोधः ॥ १९ ॥

**अ० टी०**—एवं पुरुषोत्तममुक्त्वा दृष्टं विश्वरूपमाह—**अनादीत्यादिना** । अनादिमध्यान्तं न विद्यते आदिर्मध्यम् अन्तश्च यस्य उत्पत्तिस्थितिप्रलयरहितम् । अनन्तं वीर्यं पराक्रमो यस्य तम् । अनन्तबाहुम् अनन्ताः क्रियाशक्तयो यस्य । शशिसूर्यनेत्रं शशिसूर्यौ नेत्रे यस्य । दीप्तहुताशवक्त्रं दीप्तो धूमादिरहितो हुताशः अग्निर्वक्त्रेषु यस्य तम् । स्वतेजसा इदं परिदृश्यमानं विश्वं तपन्तं तेजोयुक्तं त्वां पश्यामि ॥ १९ ॥

**नी० टी०**—एतदेवाह—**अनादीति** । देशतः कालतश्चादिमध्यांतहीनत्वादनादिमध्यांतं । दीप्तो हुताशो वक्त्रे यस्येति भास्वरदंतत्वं व्यज्यते । स्वतेजसा चैतन्यज्योतिषा इदं विश्वं विश्वरूपं तपंतं प्रकाशयन्तं । अनादित्वादिसर्वविशेषणविशिष्टं विश्वं तपिकर्मीभूतं तापयंतं त्वां परज्योतीरूपं पश्यामि जानामि । चित्रपटस्थानीयं विश्वरूपं सकलकारकात्मकधीवासनोपेतं येन ज्योतिषा प्रकाशते तदेव त्वमसीति जानामीति भावः ॥ १९ ॥

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ॥**
**दृष्ट्वाऽद्भुतं रूपमिदं तवोग्रं लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

**शां० भा०**—द्यावापृथिव्योरिदमन्तरं ह्यन्तरिक्षं व्याप्तं त्वयैकेन विश्वरूपधरेण दिशश्च सर्वा व्याप्ता दृष्ट्वोपलभ्याद्भुतं विस्मापकं रूपमिदं तवोग्रं क्रूरं लोकानां त्रयं लोकत्रयं प्रव्यथितं भीतं प्रचलितं वा हे महात्मन्नक्षुद्रस्वभाव ॥ २० ॥

**शां० आ०**—प्रकृतभगवद्रूपस्य व्याप्तिं व्यनक्ति—**द्यावापृथिव्योरिति** । तस्यैव भयंकरत्वमाचष्टे—**दृष्ट्वेति** ॥२०॥

**आ० भा०**—"मातापित्रोरंतरंगः स एकः रूपेण चान्यैः सर्वगतः स एक" इति वारुणश्रुतेरेकेनैव द्यावापृथिव्योरंतरं व्याप्तो भवति । पश्य मे पार्थ रूपाणीति बहूनि रूपाणि प्रतिज्ञातानि मातापितरौ च पृथिवीद्यावौ। "मा नो माता पृथिवी दुर्मतौ धात्। मधु द्यौरस्तु नः पिता" इत्यादिप्रयोगात्। नतु नियमतो भयप्रदं तत्स्वरूपम् । नारदस्य तदभावात् । केषांचित्तथा दर्शयति भगवान् । "प्रियंति केचित्तस्य रूपस्य दृष्टौ बिभेति कश्चिदभ्यसे सर्वतृप्तिः" इतिवारुणशाखायाम् । न तु तं सर्वे पश्यंति । अदृष्ट्वाऽपि तन्निरूप्य भये द्रष्टुस्तथा प्रतिभाति । तथा च गौतमखिलेषु । "दृष्ट्वा देवं मोदमानाअदृष्ट्वाऽप्येतद्भयाद्बिभ्यतो दृष्टवत्ते ॥ पश्यंति ते न्यस्तचक्षुर्मुखांस्तु तस्मिन्नैवेते मनसोगतत्वात्" इति॥२०॥

**आ० ज०**—द्यावापृथिव्योरिदमंतरं हीत्येव त्वयेत्यनेनैवैकत्वस्य सिद्धत्वादेकेनेति व्यर्थमित्यतः प्रमाणपूर्वकं तदभिप्रायमाह—**मातापित्रोरिति** । बहुत्वेऽपि स एकोऽभिन्नः । अनेन दिशश्च सर्वा रूपांतरैरित्युक्तं भवति । तदयुक्तम् । विश्वरूपस्य द्रष्टुमि

च्छामि ते रूपमित्यादिना एकत्वावगतेरित्यत आह—**पश्येति**। ऐक्यापेक्षयैकवचनमिति भावः मातापित्रोरिति श्रुतिः प्रकृतानुपयोगिनी कथमुदाहृता । द्यावापृथिव्योरित्यनभिधानादित्यत आह—**मातापितरौ चेति**। माता पृथिवी नोऽस्मान्दुर्मतौ माधात् न दध्यात्। नोऽस्माकं मधु सुखहेतुरस्तु। दृष्ट्वाऽद्भुतमित्यादिना विश्वरूपदर्शनस्य भयहेतुत्वमुच्यते। तन्न सर्वेषां सर्वदा किं तु केषांचित्कारणविशेषात्कदाचिदेवेति सप्रमाणकं तदभिप्रायमाह—**नत्विति**। अभ्यसेऽभ्यासे सति सर्वेषां तृप्तिरानंद एवेत्यर्थः। एवं तद्दर्शनस्य भयहेतुत्वनियमाभावमभिधाय लोकत्रयस्य दर्शनाभावं चाह—**नत्विति**। किंतु त्रिलोकेषु स्थितैर्भक्तैरित्युक्तप्रकारेण कैश्चिदेव। तदभिप्रायश्च लोकत्रयशब्द इति भावः। प्रकारांतरेण लोकत्रयमित्यस्याभिप्रायमाह—**अदृष्ट्वाऽपीति**। विश्वरूपदर्शनार्थं यतमानानां लोकत्रयस्थानां पुंसां तददृष्ट्वाऽपि चेतसि निरूप्य स्थितानां भये जाते सति तद्द्रष्टुरर्जुनस्य तथाऽहमिवैतेऽपि दृष्ट्वा बिभ्यतीति प्रतिभातीत्यतो लोकत्रयं दृष्ट्वा प्रव्यथितमित्याहेत्यर्थः। अत्र श्रुतिसंमतिमाह—**दृष्ट्वेति**। देवं विश्वरूपं दृष्ट्वामोदमानास्त एतेऽर्जुनादयस्तद्ध्यायिनः पश्यंति कथं भूतान् अदृष्ट्वाऽपि तन्निरूप्यैतद्भयाद्बिभ्यतो भयचिह्नवतस्तस्मिन्नेव विश्वरूपे मनसोगतत्वात्तन्यस्तचक्षुर्मुखांश्च दृष्टवतदृष्टवंतइवेत्यर्थः ॥ २० ॥

**शा० भा०—एवंभूतं त्वां दृष्ट्वा देवादयोऽहं च प्रव्यथिता भवाम इत्याह। द्युशब्दः पृथिवीशब्दश्चोभावुपरितनानामधस्तनानां च लोकानां प्रदर्शनार्थौ द्यावापृथिव्योरन्तरमवकाशः यस्मिन्नवकाशे सर्वे लोकास्तिष्ठंति सर्वोऽयमवकाशो दिशश्च सर्वास्त्वयैकेन व्याप्ताः दृष्ट्वाद्भुतं रूपमयं तवेदम् अनन्तायामविस्तारमत्यद्भुतमत्युग्रं तव रूपं दृष्ट्वा लोकत्रयं प्रव्यथितं युद्धदिदृक्षया आगतेषु ब्रह्मादिदेवासुरपितृगणसिद्धगंधर्वयक्षराक्षसेषु प्रतिकूलानुकूलमध्यस्थरूपलोकत्रयं सर्वं प्रव्यथितम् अत्यन्तभीतं महात्मन् अपरिच्छेद्यमनोवृत्ते! एतेषामप्यर्जुनस्येव विश्वाश्रयरूपसाक्षात्कारसाधनं दिव्यं चक्षुर्भवता दत्तं किमर्थमिति चेदर्जुनाय स्वैश्वर्यं सर्वं प्रदर्शयितुम् अत इदमुच्यते। 'दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन्।' इति ॥ २० ॥**

अ० टी०—किंच—**द्यावापृथिव्योरिति**। इदं द्यावापृथिव्योः अन्तरम् अन्तरिक्षम् एकेन त्वया व्याप्तं। च पुनः। दिशः सर्वास्त्वया व्याप्ताः पश्यामि। किंच। हे महात्मन्! इतोऽप्यधिकप्रकटनसमर्थ! तव इदम् अद्भुतम् अलौकिकम् उग्रम् अदृष्टं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितं प्रकर्षेण व्यथितं भीतं पश्यामीति पूर्वेणान्वयः॥२०॥

नी० टी०—एवं स्वयंकृतविश्वरूपदर्शनेन कृतकृत्यो भूत्वा तदुपसंहारमिच्छन् स्तौति—**द्यावा पृथिव्योरिति**। हे महात्मन्! हि प्रत्यक्षं त्वया एकेन इदं द्यावापृथिव्योरंतरं मध्यं सर्वाः दिशश्च व्याप्ताः अतस्तवेदं अद्भुतं उग्रं रूपं दृष्ट्वा लोकत्रयं प्रकर्षेण व्यथितं अतः परामिदमुपसंहरेत्यभिप्रायः ॥ २० ॥

**अमी हि त्वां सुरसंघा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ॥**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः॥२१॥**

**शां० भा०—अथाधुना पुरा 'यद्वा जयेम यदि वा नो जयेयुः' इत्यर्जुनस्य संशय आसीत्तन्निर्णयाय पाण्डवजयमैकान्तिकं दर्शयामीति प्रवृत्तो भगवांस्तं पश्यन्नाह, किंच—अमी हि युध्यमाना योद्धारस्त्वा त्वां सुरसंघा येऽत्र भूभारावतारायावतीर्णा वस्वादिदेवसंघा मनुष्यसंस्थानास्त्वां विशन्ति प्रविशन्तो दृश्यन्ते। तत्र केचिद्भीताः प्राञ्जलयः सन्तो गृणन्ति स्तुवन्ति त्वामन्ये पलायनेऽप्यशक्ताः सन्तः। युद्धे प्रत्युपस्थित उत्पातादिनिमित्तान्युपलक्ष्य स्वस्त्यस्तु जगत इत्युक्त्वा महर्षिसिद्धसंघा महर्षीणां सिद्धानां च संघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः संपूर्णाभिः ॥ २१ ॥**

शां० आ०—अमी हीत्यादिसमनन्तरग्रन्थस्य तात्पर्यमाह—**अथेति**। तं भगवन्तं पाण्डवजयमैकान्तिकं पश्यन्नर्जुनो ब्रवीतीत्याह—**तं पश्यन्निति**। विश्वरूपस्यैव प्रपञ्चनार्थमनन्तरग्रन्थजातमिति दर्शयति—**किंचेति**। असुरसंघा इति पदं छित्त्वा

भूभारभूता दुर्योधनादयस्त्वां विशन्तीत्यपि वक्तव्यम् । उभयोरपि सेनयोरवस्थितेषु योद्धुकामेष्ववान्तरविशेषमाह—**तत्रेति** । समरभूमौ समागतानां द्रष्टुकामानां नारदप्रभृतीनां विश्वविनाशमाशङ्कमानानां तं परिजिहीर्षतां स्तुतिपदेषु भगवद्विषयेषु प्रवृत्ति-प्रकारं दर्शयति—**युद्ध इति** ॥ २१ ॥

**आ० भा०—॥ २१ ॥**

**आ० ज०**—॥ २१ ॥

**रा० भा०—अमी सुरसंघाः उत्कृष्टास्त्वां विश्वाश्रयमवलोक्य हृष्टमनसस्त्वत्समीपं विशन्ति तेष्वेव केचिदत्युग्रमत्यद्भुतं च तवाकारमालोक्य भीताः प्राञ्जलयः स्वज्ञानानुगुणं स्तुतिरूपाणि वाक्यानि गृणन्ति उच्चारयन्ति अपरे महर्षिसंघाः सिद्धसंघाश्च परावरतत्त्वयाथात्म्यविदः स्वस्तीत्युक्त्वा पुष्कलाभिर्भगवदनुरूपाभिः स्तुतिभिः स्तुवन्ति ॥ २१ ॥**

**अ० टी०**—किंच—**अमीहीति** । अमी सुरसंघाः देवसमूहाः त्वां त्वत्समीपे विशन्ति शरणमागच्छन्तीत्यर्थः । हीति युक्तमेव पुरुषोत्तमशरणागमनं देवानाम् । केचित् इतरे असुरा इत्यर्थः, भीताः सन्तः प्राञ्जलयो बद्धाञ्जलिपुटाः गृणन्ति रक्षेति वदन्तीत्यर्थः । महर्षिसिद्धसंघाः महर्षीणां सिद्धानां च समूहाः स्वस्ति अस्माकमस्तीत्युक्त्वा पुष्कलाभिः पूर्णाभिः स्तुतिभिस्त्वां स्तुवन्ति ॥ २१ ॥

**नी० टी०**—व्यथामेवाह—**अमीति** । हि यतः अमी त्वा त्वां असुरसंघाः असुरांशाः दुर्योधनादयः त्वां पतंगाः पावकमिव अदृष्टप्रेरिताः विशंति मरणायेत्यर्थः । केचिद्भीताः प्रांजलयो बद्धांजलयो गृणंति स्तुवंति ॥ २१ ॥

**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ॥**
**गन्धर्वयक्षासुरसिद्धसंघा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥**

**शां० भा०—किंचान्यत्—रुद्रादित्या वसवो ये च साध्या रुद्रादयो गणा विश्वेऽश्विनौ च देवौ मरुतश्च ऊष्मपाश्च पितरो गन्धर्वयक्षासुरसिद्धसंघा गन्धर्वा हाहाहूहूप्रभृतयो यक्षाः कुबेरप्रभृतयोऽसुरा विरोचनप्रभृतयः सिद्धाः कपिलादयस्तेषां संघा गन्धर्वयक्षासुरसिद्धसंघास्ते वीक्षन्ते पश्यन्ति त्वा त्वां विस्मिता विस्मयमापन्नाः सन्तस्त एव सर्वे ॥ २२ ॥**

**शां० आ०**—दृश्यमानस्य भगवद्रूपस्य विस्मयकरत्वे हेत्वन्तरमाह—**किंचेति** । त एवोक्ता रुद्रादयः सर्वे विस्मयमापन्नास्त्वां पश्यन्तीति संबन्धः ॥ २२ ॥

**आ० भा०—॥ २२ ॥**

**आ० ज०**—॥ २२ ॥

**रा० भा०—ऊष्मपाः पितरः " ऊष्मभागा हि पितरः " इति श्रुतेः । एते सर्वे विस्मयमापन्नास्त्वां वीक्षन्ते ॥ २२ ॥**

**अ० टी०**— ॥ २२ ॥

**नी० टी०**—किंच ये त्वदनुगृहीताः रुद्रादयस्तेपि विस्मिताः संतः सर्वे त्वां वीक्षंत इत्याह—**रुद्रादित्या इति** । साध्याः विश्वे च देवगणविशेषौ रुद्रादित्यवज्ज्ञेयौ ऊष्मपाः पितरः गंधर्वाणां यक्षाणामसुराणां सिद्धानां जातिभेदानां संघाः समूहाः शेषं स्पष्टम् ॥ २२ ॥

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ॥
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ २३ ॥

शां० भा०—यस्मात्—रूपं महदतिप्रमाणं ते तव बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि नेत्राणि चक्षूंषि च यस्मिंस्तद्रूपं बहुवक्त्रनेत्रं हे महाबाहो बहुबाहूरुपादं बहवो बाहव ऊरवः पादाश्च यस्मिन्रूपे तद्बहुबाहूरुपादं, किंच बहूदरं बहून्युदराणि यस्मिन्निति बहूदरं बहुदंष्ट्राकरालं बह्वीभिर्दंष्ट्राभिः करालं विकृतं तद्बहुदंष्ट्राकरालं दृष्ट्वा रूपमीदृशं लोका लौकिकाः प्राणिनः प्रव्यथिताः प्रचलिता भयेन तथाऽहमपि ॥ २३ ॥

शां० आ०—लोकत्रयं प्रव्यथितमित्युक्तमुपसंहरति—**यस्मादिति**। ईदृशं यस्मात्ते रूपं तस्मात्तं दृष्ट्वेति योजना। भयेन लौकिकवदहमपि व्यथितो व्यथां पीडां देहेन्द्रियप्रचलनं प्राप्तोऽस्मीत्याह—**तथेति** ॥ २३ ॥

आ० भा०—॥ २३ ॥

आ० ज०—॥ २३ ॥

रा० भा०—बह्वीभिर्दंष्ट्राभिरतिभीषणाकारं लोकाः पूर्वोक्ताः प्रतिकूलानुकूलमध्यस्थास्त्रिविधाः सर्वे एवाहं च तवेदमीदृशं रूपं दृष्ट्वातीव व्यथिता भवामः ॥ २३ ॥

अ० टी०—किंच—**रूपमिति**। हे महाबाहो! महत्कृपाशक्तियुक्त! ते रूपं दृष्ट्वा लोकास्त्वत्स्वरूप एव स्थिताः प्रव्यथिताः भीता इत्यर्थः। तथा अहं च प्रव्यथितः। भयजनकत्वेन रूपं वर्णयति। बह्वित्यादि-विशेषणैः। बहूनि वक्त्राणि नेत्राणि च यस्मिन्। बहवः बाहव ऊरवः पादाश्च यस्मिन्। बहूनि उदराणि यस्मिन्। बहुभिर्दंष्ट्राभिः करालं भयानकम्। वक्त्रबाहुल्येन गिलनसामर्थ्यं नेत्रबाहुल्येन सर्वतो दर्शनसामर्थ्यं। तेन निलायनाद्यशक्यत्वं। क्रियाबाहुल्येन ग्रहणसामर्थ्यम्। ऊरुपादबाहुल्येन धावनसामर्थ्यं तेन पलायनाद्यशक्तत्वम्। उदरबाहुल्येन जारणसामर्थ्यं। दंष्ट्राबाहुल्येन चर्वणसामर्थ्यं द्योतितम्। अत एवंविधं दृष्ट्वा त्वद्रूपस्थाश्चेल्लोकाः प्रव्यथितास्तदा मम कः संदेह इति तथेतिपदेन द्योतितम् ॥ २३ ॥

नी० टी०—पुनर्लोकानामात्मनश्च व्यथामाह—**रूपमिति**। महत् आदिमध्यांतहीनं हे महाबाहो! ते तव करालं महारूपं दृष्ट्वा लोका व्यथितास्तथाऽहं च व्यथित इति योजना ॥ २३ ॥

नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ॥
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥२४॥

शां० भा०—तत्रेदं कारणम्—नभःस्पृशं द्युस्पर्शमित्यर्थः, दीप्तं प्रज्वलितमनेकवर्णमनेके वर्णा भयंकरा नानासंस्थाना यस्मिंस्त्वयि तं त्वामनेकवर्णं व्यात्ताननं व्यात्तानि विवृतान्याननानि मुखानि यस्मिंस्त्वयि तं त्वां व्यात्ताननं दीप्तविशालनेत्रं दीप्तानि प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्मिंस्त्वयि तं त्वां दीप्तविशालनेत्रं दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतोऽन्तरात्मा मनो यस्य मम सोऽहं प्रव्यथितान्तरात्मा सन्धृतिं धैर्यं न विन्दामि न लभे शमं चोपशमं मनस्तुष्टिं हे विष्णो ॥ २४ ॥

शां० आ०—अर्जुनस्य विश्वरूपदर्शनेन व्यथितत्वे हेतुमाह—**तत्रेति** ॥ २४ ॥

किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ॥
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

**शां० भा०**—किरीटिनमिति । किरीटिनं किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तमिच्छामि त्वां प्रार्थये त्वां द्रष्टुमहं तथैव पूर्ववदित्यर्थः । यत एवं तस्मात्तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन सहस्रबाहो वार्तमानिकेन विश्वरूपेण भव विश्वमूर्ते उपसंहृत्य विश्वरूपं तेनैव रूपेण वसुदेवपुत्ररूपेण भवेत्यर्थः ॥ ४६ ॥

**शां० आ०**—तदेव दर्शयेत्युक्तं किं तदित्यपेक्षायामाह—**किरीटिनमिति** । चक्रं हस्ते यस्य तमिति व्युत्पत्तिं गृहीत्वाऽऽह—**चक्रेति** । मदीयेच्छा फलपर्यन्ता कर्तव्येत्याह—**यत इति** । चतुर्भुजत्वे कथं सहस्रबाहुत्वं तत्राऽऽह—**वार्तमानिकेनेति** । सति विश्वरूपे कथं पूर्वरूपभाक्त्वं तत्राऽऽह—**उपसंहृत्येति** ॥ ४६ ॥

**आ० भा०**—॥ ४६ ॥

**आ० ज०**—॥ ४६ ॥

**रा० भा०**—तथैव पूर्ववत्किरीटिनं गदिनं चक्रहस्तं त्वां द्रष्टुमिच्छामि अतस्तेनैव पूर्वसिद्धेन चतुर्भुजेन रूपेण युक्तो भव सहस्रबाहो विश्वमूर्ते इदानीं सहस्रबाहुत्वेन विश्वशरीरत्वेन दृश्यमानरूपस्त्वं तेनैव रूपेण युक्तो भवेत्यर्थः ॥ ४६ ॥

**अ० टी०**—रूपं विशिनष्टि—**किरीटिनमिति** । किरीटवन्तं गदावन्तं चक्रहस्तं त्वामहं तथैव पूर्ववदेव द्रष्टुमिच्छामि । अतो हे सहस्रबाहो ! अगणितक्रियाशक्तिमन् ! विश्वमूर्ते ! तेनैव चतुर्भुजेन रूपेण भव प्रकटो भवेत्यर्थः ॥ ४६ ॥

**नी० टी०**—तदेव रूपमाह—**किरीटिनमिति** । एतेनार्जुनस्य चक्रगदाकिरीटोपेतं चतुर्भुजं भगवतो रूपं धारणाविषय इति दर्शितं हे सहस्रबाहो ! हे विश्वमूर्ते ! सहस्रबाहुत्वादिकमुपसंहृत्य तेनैव रूपेण भव प्रकटो भव ॥ ४६ ॥

श्रीभगवानुवाच—मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ॥
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

**शां० भा०**—अर्जुनं भीतमुपलभ्योपसंहृत्य विश्वरूपं प्रियवचनेनाऽऽश्वासयन्—मया प्रसन्नेन प्रसादो नाम त्वय्यनुग्रहबुद्धिस्तद्वता प्रसन्नेन मया तव हेऽर्जुनेदं परं रूपं विश्वरूपं दर्शितमात्मयोगादात्मन ऐश्वर्यस्य सामर्थ्यात्तेजोमयं तेजःप्रायं विश्वं समस्तमनन्तमन्तरहितमादौ भवमाद्यं यद्रूपं मे मम त्वदन्येन त्वत्तोऽन्येन केनचिन्न दृष्टपूर्वम् ॥ ४७ ॥

**शां० आ०**—अर्जुनेन स्थाने हृषीकेशेत्यादिनोक्तस्य भगवतो वचनमवतारयति—**अर्जुनमिति** । भगवत्प्रसादैकोपायलभ्यं तद्दर्शनमित्याशयेनाऽऽह—**मयेति** ॥ ४७ ॥

**आ० भा०**—॥ ४७ ॥

**आ० ज०**—॥ ४७ ॥

**रा० भा०**—यन्मे तेजोमयं तेजोराशिं विश्वं सर्वात्मभूतमनन्तमन्तरहितं प्रदर्शनार्थमिदम् आदिमध्यान्तरहितमाद्यं मद्व्यतिरिक्तस्य कृत्स्नस्यादिभूतं त्वदन्येन केनापि न दृष्टपूर्वं रूपं तदिदं प्रसन्नेन मया मद्भक्ताय ते दर्शितम् आत्मयोगात् आत्मनः सत्यसंकल्पत्वयोगयुक्तत्वात् ॥ ४७ ॥

**अ० टी०**—एवं प्रार्थितोऽर्जुनमाश्वासयन् स्वरूपं दर्शयामास तत्र पूर्वमाश्वासनमाह—**श्री भगवानुवाच । मयेति** । हे अर्जुन ! मया सर्वदा त्वयि प्रसन्नेन आत्मयोगात् स्वकीयत्वयोगाच्च तव परम् इच्छया इदं रूपं दर्शितम् कीदृशं तेजोमयं विश्वं विश्वात्मकम् अनन्तम् अन्तरहितम् आद्यं सनातनं यत् मे रूपं त्वदन्येन त्वां विना केनाऽपि दृष्टपूर्वं न तादृशं रूपं त्वदिच्छया दर्शितमित्यर्थः ॥ ४७ ॥

**नी० टी०**—एवमर्जुनेन प्रार्थितस्तं स्तुवन् भगवानुवाच—**मयेति** त्रिभिः। हे अर्जुन ! प्रसन्नेन मया तव तुभ्यमिदं परं रूपं दर्शितं आत्मयोगात्स्वसामर्थ्यात् करुणया न तु तव दर्शनेऽधिकारोऽस्ति तथा च प्रागुक्तं । कर्मण्येवाधिकारस्त इति तेजोमयं चिद्रूपं दिव्यं विश्वं विश्वात्मकं आद्यमनादि अनंतं च यत् रूपं त्वदन्येन कदाचिदपि न पूर्वं दृष्टं दृष्टपूर्वम् ॥ ४७ ॥

**न वेदयज्ञाध्ययनैर्न दानैर्नच क्रियाभिर्न तपोभिरुग्रैः ॥**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥**

**शां० भा०**—आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्त इति तत्स्तौति—न वेदयज्ञाध्ययनैर्न दानैश्चतुर्णामपि वेदानामध्ययनैर्यथावद्यज्ञाध्ययनैश्च, वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात्पृथग्यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थम्, तथा न दानैस्तुलापुरुषादिभिर्न च क्रियाभिरग्निहोत्रादिभिः श्रौतादिभिर्नापि तपोभिरुग्रैश्चान्द्रायणादिभिरुग्रैर्घोरैरेवंरूपो यथा दर्शितं विश्वरूपं यस्य सोऽहमेवंरूपः शक्यो न शक्योऽहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन त्वत्तोऽन्येन कुरुप्रवीर ॥ ४८ ॥

**शां० आ०**—तच्छब्देन प्रकृतं दर्शनं परामृश्यते। वेदाध्ययनात्पृथग्यज्ञाध्ययनग्रहणं पुनरुक्तेरयुक्तमित्याशङ्क्याऽऽह—**वेदेति**। न च वेदाध्ययनग्रहणादेव यज्ञविज्ञानमपि गृहीतमध्ययनस्यार्थावबोधान्तत्वादिति वाच्यं, तस्याक्षरग्रहणान्ततया वृद्धैः साधितत्वादिति भावः। श्लोकपूरणार्थमसंहितकरणं, त्वत्तोऽन्येन मदनुग्रहविहीनेनेति शेषः ॥ ४८ ॥

**आ० भा०**—॥ ४८ ॥

**आ० ज०**—॥ ४८ ॥

**रा० भा०**—अनन्यभक्तिव्यतिरिक्तैः सर्वैरप्युपायैर्यथावदवस्थितोऽहं द्रष्टुं न शक्य इत्याह—एवंरूपो यथावस्थितोऽहं मयि भक्तिमतस्त्वत्तोन्येन ऐकान्तिकात्यन्तिकभक्तिरहितेन केनापि पुरुषेण केवलैर्वेदयज्ञादिभिर्द्रष्टुं न शक्यः ॥ ४८ ॥

**अ० टी०**—एवं त्वदिच्छयैवेदं रूपं दर्शितमिदानीं च पूर्वतनमेव रूपं पश्य दर्शनीयस्य रूपस्य दुर्लभत्वायाऽर्जुने कृपाऽधिक्यमाह—**न वेदेति** । न वेदयज्ञाध्ययनैः वेदानां सार्थकशब्दात्मकानां यज्ञानामानुपूर्व्यादिसहितविद्याक्रियाणाम् अध्ययनैः, न दानैः तुलापुरुषादिभिः, नच क्रियाभिरग्निहोत्रादिरूपाभिः, न तपोभिरुग्रैः कृच्छ्रचान्द्रायणादिभिः नृलोके मनुष्यलोके एवंरूपः अहं पुरुषोत्तमः हे कुरुप्रवीर ! भक्तकुलश्रेष्ठ ! त्वदन्येन त्वामपहायान्येन द्रष्टुं पूर्वोक्तैः साधनैरपि न शक्यः न समर्थः ॥ ४८ ॥

**नी० टी०**—योगैकगम्यमेतत्कर्मिणां दुष्प्रापमित्याह—**न वेदेति**। वेदानां यज्ञानां चाध्ययनैरधिगमैः न च दानैर्न च क्रियाभिः स्मृत्युक्ताभिरापूर्तादिभिर्वापीकूपारामादिभिस्तपोभिः कृच्छ्रचांद्रायणाद्यैः उग्रैर्मासोपवासाद्यैः नृलोके एवंरूपोऽहं द्रष्टुं न शक्यः रोरुत्वाभाव आर्षः त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ॥**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥**

**शां० भा०**—मा ते व्यथेति। मा ते व्यथा मा भूत्ते भयं मा च विमूढभावो विमूढचित्तता दृष्ट्वोपलभ्य रूपं घोरमीदृग्यथादर्शितं ममेदं व्यपेतभीर्विगतभयः प्रीतमनाश्च सन्पुनर्भूयस्त्वं तदेव चतुर्भुजं शङ्खचक्रगदाधरं तवेष्टं रूपमिदं प्रपश्य ॥ ४९ ॥

**शां० आ०**—विश्वरूपदर्शनमेवं स्तुत्वा यद्यस्माद्दृश्यमानाद्बिभेषि तर्हि तदुपसंहरामीत्याह—**मा ते व्यथेति**। बहुविधमनुभूतत्वमभिप्रेत्येदृगित्युक्तमिदमिति प्रत्यक्षयोग्यत्वम् ॥ ४९ ॥

**आ० भा०**—॥ ४९ ॥

**आ० जं०**—॥ ४९ ॥

**रा० भा०**—ईदृशघोररूपदर्शनेन ते या व्यथा यश्च विमूढभावो वर्तते तदुभयं मा भूत् त्वयाभ्यस्तपूर्वमेव सौम्यरूपं दर्शयामि तदेवेदं मम रूपं प्रपश्य ॥ ४९ ॥

**अ० टी०**—यदन्येन न शक्यस्ततः पूर्वोक्तभयाऽऽशङ्कादिरहितस्तदेव रूपं पश्येत्याह—**मा त इति**। ते व्यथा न दर्शयिष्यामीत्यादिरूपा माऽस्तु। च पुनः। मम घोरं भयानकम् ईदृक् सर्वग्रसनादिधर्मयुक्तम् इदं परिदृश्यमानं दृष्ट्वा विमूढभावः मोहरूपो माऽस्तु। व्यपेतभीः विगतभयः प्रीतमनाः संस्तदेव पूर्वदृष्टमेव मे इदं रूपं प्रपश्य प्रकर्षेण यथाऽभिलाषं भक्तियुतः पश्येत्यर्थः ॥ ४९ ॥

**नी० टी०**—इदमतिदुर्लभदर्शनं रूपं दृष्ट्वाऽपि चेद्व्यथसे तर्हि उपसंहरामीदमित्याशयेनाह—**मा ते इति**। ममेदं ईदृक् घोरं रूपं दृष्ट्वा ते तव व्यथा माभूदिति शेषः विमूढभावो मोहश्च ते माभूत् व्यपेतभीर्निर्भयः प्रीतमनाश्च पुनस्त्वं भूत्वा तदेव यत्त्वया द्रष्टुं प्रार्थितं मे ममेदं रूपं प्रपश्य ॥ ४९ ॥

**संजय उवाच—इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ॥**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥**

**शां० भा०**—इत्यर्जुनमिति। इत्येवमर्जुनं वासुदेवस्तथाभूतं वचनमुक्त्वा स्वकं वसुदेवगृहे जातं रूपं दर्शयामास दर्शितवान्। भूयः पुनराश्वासयामास चाऽऽश्वासितवांश्च भीतमेनं भूत्वा पुनः सौम्यवपुः प्रसन्नदेहो महात्मा ॥ ५० ॥

**शां० आ०**—तदिदं वृत्तं राज्ञे सूतो निवेदितवानित्याह—**संजय इति**। तथाभूतं वचनं मया प्रसन्नेनेत्यादि, चतुर्भुजं रूपम्। किं तस्य रूपस्य परिचितपूर्वस्य प्रदर्शनेन प्रसन्नदेहत्वेन चार्जुनं प्रत्याश्वासनं भगवतो युक्तमित्यत्र हेतुमाह—**महात्मेति** ॥ ५० ॥

**आ० भा०**—स्वकं रूपं तु भ्रांतप्रतीत्या। अन्यथा तदपि स्वकमेव। प्रमाणानि तूक्तानि पुरस्तात् ॥ ५० ॥

आ० ज०—स्वकं रूपं दर्शयामासेति कृष्णरूपत्वस्य स्वकत्वविशेषणात्। विश्वरूपं न स्वकमितिप्रतीतिः स्यादत आह—**स्वकमिति**। कृष्णः स्वकं रूपं न विश्वरूपमिति भ्रांतप्रतीत्यनुवादेनोच्यत इत्यर्थः। कुत एतदित्यत आह—**अन्यथेति**। प्रमाणप्रतीत्येत्यर्थः। कानि तानि प्रमाणानीत्यत आह—**प्रमाणानीति**। द्वितीयांते॥ ५०॥

रा० भा०—एवं पाण्डुतनयं भगवान् वसुदेवसूनुरुक्त्वा भूयः स्वकीयमेव चतुर्भुजरूपं दर्शयामास अपरिचितस्वरूपदर्शनेन भीतमेनं पुनरपि परिचितसौम्यवपुर्भूत्वाऽऽश्वासयामास स च महात्मा सत्यसंकल्पः अस्य सर्वेश्वरस्य परमपुरुषस्य परस्य ब्रह्मणो जगदुपकृतिमर्त्यस्य वसुदेवसूनोश्चतुर्भुजमेव स्वकीयं रूपं कंसाद्भीतवसुदेवप्रार्थनेन आकंसवधात्पूर्वं भुजद्वयमुपसंहृतं पश्चादाविष्कृतं च 'जातोऽसि देवदेवेश शङ्खचक्रगदाधर। दिव्यं रूपमिदं देव प्रसादेनोपसंहर॥' इति हि प्रार्थितं शिशुपालस्यापि द्विषतोऽनवरतभावनाविषयं चतुर्भुजमेव वसुदेवसूनो रूपम् उदारपीवरचतुर्बाहुं शङ्खचक्रगदाधरमिति अतः पार्थेनात्र तेनैव रूपेण चतुर्भुजेनेत्युच्यते॥ ५०॥

अ० टी०—एवमुक्त्वा स्वरूपं दर्शयामासेति संजय आह—**इतीति**। अमुना प्रकारेण वासुदेवः मोक्षदाता परमकृपालुः अर्जुनं तथा पूर्वप्रकारेणोक्त्वा स्वकं स्वीयं पुरुषोत्तमरूपं भूयः पुनः दर्शयामास एवं दर्शयित्वा सौम्यवपुर्भूत्वा च पुनः पूर्वरूपदर्शनभीतम् एनम् अर्जुनं पुनराश्वासयामास। नन्वेवं वारं वारं कथं कृतवानित्यत आह। महात्मेति महांश्चासौ आत्मा च तेन कृपया तथा कृतवानितिभावः। यद्वा महतां भक्तानाम् आत्मा अतो भक्तत्वात्तथा कृतवानित्यर्थः॥ ५०॥

नी० टी०—संजय उवाच—**इतीति**। वासुदेवोऽर्जुनं प्रति इति पूर्वोक्तरीत्या उक्त्वा यथापूर्वमासीत्तथा स्वकं मानुषं रूपं भूयः पुनर्दर्शयामास। यदर्जुनेन प्रार्थितं चतुर्भुजं धारणाविषयं रूपं तदपि तिरोदधे इत्यर्थः। तथा महात्मा व्यापकोऽपि सन् सौम्यवपुरनुग्रदेहो भूत्वा भीतमेनमाश्वासयामास च॥ ५०॥

## अर्जुन उवाच—दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन॥
## इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः॥ ५१॥

शां० भा०—दृष्ट्वेदमिति। दृष्ट्वेदं मानुषं रूपं मत्सखं प्रसन्नं तव सौम्यं जनार्दनेदानीमधुनाऽस्मि संवृत्तः संजातः किं सचेताः प्रसन्नचित्तः प्रकृतिं स्वभावं गतश्चास्मि॥ ५१॥

शां० आ०—एवं भगवदाश्वासितः सन्नर्जुनस्तं प्रत्युक्तवानित्याह—**अर्जुन इति**॥ ५१॥

आ० भा०—॥ ५१॥

आ० ज०—॥ ५१॥

रा० भा०—अनवधिकातिशयसौन्दर्यसौकुमार्यलावण्यादियुतं तवैवासाधारणं मनुष्यत्वसंस्थानसंस्थितमिति सौम्यमिदं तव रूपं दृष्ट्वा इदानीं सचेताः संवृत्तोऽस्मि प्रकृतिं गतश्च॥ ५१॥

अ० टी०—दर्शितस्वरूपं दृष्ट्वाऽर्जुनो विज्ञापयति—**दृष्ट्वेति**। हे जनार्दन! अविद्यानाशक! इदं पुरतो दृश्यमानं मानुषं मनुष्यैर्द्रष्टुं योग्यं सौम्यं दयापरीतं दयायुक्तं तव रूपं दृष्ट्वा इदानीम् अधुना सचेताः सावधानचित्तः संवृत्तः जातोस्मि। प्रकृतिं भक्तिरूपां गतः प्राप्तोऽस्मि॥ ५१॥

नी० टी०—ततो निर्भयः सन्नर्जुन उवाच—**दृष्ट्वेति**। सचेता अव्याकुलः प्रकृतिं गतः स्वास्थ्यं प्राप्तः संवृत्तो जातोऽस्मि॥ ५१॥

**श्रीभगवानुवाच—सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ॥**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥**

**शां० भा०**—सुदुर्दर्शमिति । सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम देवा अप्यस्य मम रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणो दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तो न द्रक्ष्यन्ति चेत्यभिप्रायः ॥ ५२ ॥

**शां० आ०**—उपास्यत्वाय विश्वरूपं स्तोतुं भगवदुक्तिमुत्थापयति—**श्रीभगवानिति** । त्वद्व्यतिरिक्तानामिदं रूपं द्रष्टुमशक्यमित्येतद्विशदयति—**देवा अपीति** ॥ ५२ ॥

**आ० भा०**—॥ ५२ ॥

**आ० ज०**—॥ ५२ ॥

**रा० भा०**—ममेदं सर्वस्य प्रशासनेऽवस्थितं सर्वाश्रयं सर्वकारणभूतं रूपं यत् दृष्टवानसि तत्सुदुर्दर्शनं न केनापि द्रष्टुं शक्यम् अस्य रूपस्य देवा अपि नित्यं दर्शनकाङ्क्षिणः न तु दृष्टवन्तः ॥५२॥

**अ० टी०**—स्वस्य रूपस्य स्वाऽनुग्रहैकसाध्यत्वेन परमदुर्लभत्वमाह—**श्रीभगवानुवाच । सुदुर्दर्शमिति ।** इदं परिदृश्यमानं मम रूपं सुदुर्दर्शं सुष्ठु दुःखेनाऽपि द्रष्टुमशक्यं यत् त्वं दृष्टवानसि देवा अपि मत्क्रीडायोग्या मदंशा अपि अस्य नित्यं प्रत्यहं दर्शनकाङ्क्षिणः दर्शनेच्छवस्तिष्ठन्तीत्यर्थः । अत्रायं भावः । ब्रह्माऽऽदयो देवाः श्रीदेवकीगृहे स्तुत्वा गतास्तदा गर्भ एव प्राकट्यं न बहिः, बहिः प्राकट्यानन्तरं तु मातृप्रार्थनया तिरोहितं कृत्वा ध्यानाऽऽस्पदत्वेन स्थापितं देवादीनां तु तद्वृत्तान्ताऽज्ञानाद्वेदोक्तरीत्या भजनात्तादृक्स्वरूपदर्शनमेव भवति इदं च स्वरूपं भावात्मकं वेदाद्यगम्यं भक्तमुखात् श्रुतत्वाच्चाकाङ्क्षिणस्तिष्ठन्तीति तथा ॥ ५२ ॥

**नी० टी०**—अस्य विश्वरूपदर्शनस्य दौर्लभ्यं दर्शयन् श्रीभगवानुवाच—**सुदुर्दर्शमिति** । दर्शनकांक्षिणः दर्शनं कांक्षन्ते एव न तु लभंते ॥ ५२ ॥

**नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥**

**शां० भा०**—कस्मात्—नाहं वेदैर्ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि न तपसोग्रेण चान्द्रायणादिना न दानेन गोभूहिरण्यादिना न चेज्यया यज्ञेन पूजया वा शक्य एवंविधो यथादर्शितप्रकारो द्रष्टुं दृष्टवानसि मां यथा त्वम् ॥ ५३ ॥

**शां० आ०**—दर्शनोपायाभावाद्दुर्दर्शत्वमिति शङ्कते—**कस्मादिति** । वेदादिषूपायेषु सत्स्वपि भगवानुक्तरूपो न शक्यो द्रष्टुमित्याह—**नाहमिति** । तर्हि दर्शनायोग्यत्वाद्द्रष्टुमशक्यत्वमित्याशङ्क्याऽऽह—**दृष्टवानिति** ॥ ५३ ॥

**आ० भा०**—॥ ५३ ॥

**आ० ज०**—॥ ५३ ॥

**रा० भा०**—कुतः वेदैरध्यापनप्रवचनाध्ययनश्रवणजपविषयैर्यागदानहोमतपोभिश्च मद्भक्तिरहितैः केवलैर्यथावदवस्थितोऽहं द्रष्टुं न शक्यः ॥ ५३ ॥

अ० टी०—ननु ते वेदाद्युक्तसाधनैः कथं न पश्यन्तीत्यत आह—**नाहमिति**। यथात्वं मां दृष्टवानसि एवंविधः पुरुषोत्तमोऽहं परिदृश्यमानवेदैः वेदोक्तसाधनैः वेदैरेव वा न, अतएव "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्युक्तम्। तपसा क्लेशात्मकेनाऽपि न, दानेन सर्वस्वदक्षिणात्मकेन न, इज्यया यागेन न द्रष्टुं शक्यः॥५३॥

नी० टी०—**नाहमिति**। न वेदयज्ञाध्ययनैरित्यनेनोक्त एवार्थः पुनरुच्यते विश्वरूपदर्शनस्यातिदौर्लभ्यसूचनाय। स्पष्टार्थश्च श्लोकः॥ ५३॥

**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥**

**शां० भा०—कथं पुनः शक्य इत्युच्यते—भक्त्या तु किंविशिष्टयेत्याह—अनन्ययाऽपृथग्भूतया भगवतोऽन्यत्र पृथङ्न कदाचिदपि या भवति सा त्वनन्या भक्तिः सर्वैरपि करणैर्वासुदेवादन्यन्नोपलभ्यते यया साऽनन्या भक्तिस्तया भक्त्या शक्योऽहमेवंविधो विश्वरूपप्रकारो हेऽर्जुन ज्ञातुं शास्त्रतो न केवलं ज्ञातुं शास्त्रतो द्रष्टुं च साक्षात्कर्तुं तत्त्वेन तत्त्वतः प्रवेष्टुं च मोक्षं च गन्तुं परंतप॥ ५४॥**

शां० आ०—केनोपायेन तर्हि द्रष्टुं शक्यो भगवानिति पृच्छति—**कथमिति**। शास्त्रीयज्ञानद्वारा तद्दर्शनं सफलं सिध्यतीत्याह—**उच्यत इति**। न भक्तिमात्रं तत्र हेतुरिति तुशब्दार्थं स्फुटयति—**किमित्यादिना**। अनन्यां भक्तिमेव व्यनक्ति—**सर्वैरिति**॥ ५४॥

**आ० भा०—॥ ५४ ॥**

आ० ज०—॥ ५४॥

**रा० भा०—अनन्यया तु भक्त्या तत्त्वतः शास्त्रैर्ज्ञातुं तत्त्वतः साक्षात्कर्तुं तत्त्वतः प्रवेष्टुं च शक्यः। यथा च श्रुतिः "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैव आत्मा विवृणुते तनूं स्वाम्" इति॥ ५४॥**

अ० टी०—तदा कथं द्रष्टुं शक्य इत्यत आह—**भक्त्येति**। हे अर्जुन! हे परन्तप! इति स्नेहेन वीप्सया संबोधनम् एवंविधोऽहम् अनन्यया न विद्यते अन्य पारलौकिकैरैहिकयत्नो यस्यां तादृश्या भक्त्या तत्त्वेन याथार्थ्यस्वरूपेण ज्ञातुं च पुनरलौकिकभावदृष्ट्या द्रष्टुं च पुनः प्रवेष्टुम् अलौकिकरूपेण लीलासु सेवनार्थं शक्यः अस्मीतिशेषः॥ ५४॥

नी० टी०—कथं तर्हि द्रष्टुं शक्यस्त्वमत आह—**भक्त्येति**। भक्त्या आराधनेन अनन्यया अव्यभिचरितया अखंडयेत्यर्थः। अहमेवंविधो ज्ञातुं शक्यस्त्वंपदार्थशोधकशास्त्रतः। द्रष्टुं शक्यो ध्यानतः। तत्त्वेन याथात्म्येन प्रवेष्टुं शक्यस्तत्त्वमसिवाक्यार्थजज्ञानतः। हे परं अज्ञानशत्रुं तापयतीति परंतप॥ ५४॥

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ॥**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनं नामैकादशोऽध्यायः॥ ११॥**

**शां० भा०**—अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्योच्यते—मत्कर्मकृन्मदर्थं कर्म मत्कर्म तत्करोतीति मत्कर्मकृन्मत्परमः करोति भृत्यः स्वामिकर्म न त्वात्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते, अयं तु मत्कर्मकृन्मामेव परमां गतिं प्रतिपद्यत इति मत्परमोऽहं परमः परा गतिर्यस्य सोऽयं मत्परमस्तथा मद्भक्तो मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन भजत इति मद्भक्तः सङ्गवर्जितो धनपुत्रमित्रकलत्रबन्धुवर्गेषु सङ्गवर्जितः सङ्गः प्रीतिः स्नेहस्तद्वर्जितो निर्वैरो निर्गतवैरः सर्वभूतेषु शत्रुभावरहित आत्मनोऽत्यन्तापकारप्रवृत्तेष्वपि य ईदृशो मद्भक्तः स मामेत्यहमेव तस्य परा गतिर्नान्या गतिः काचिद्भवत्ययं तवोपदेश इष्टो मयोपदिष्टो हे पाण्डवेति ॥ ५५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥ ११ ॥

**शां० आ०**—**भक्त्या त्विति** । विशेषणादन्येषामहेतुत्वमाशङ्क्याऽऽह—**अधुनेति** । समुच्चित्य संक्षिप्य पुञ्जीकृत्येति यावत् । मत्कर्मकृदित्युक्ते मत्परमत्वमार्थिकमिति पुनरुक्तिरित्याशङ्क्याऽऽह—**करोतीति** । भगवानेव परमा गतिरिति निश्चयवतस्तत्रैव निष्ठा सिध्यतीत्याह—**तथेति** । न तत्रैव सर्वप्रकारैर्भजनं धनादिस्नेहाकृष्टत्वादित्याशङ्क्याऽऽह—**सङ्गेति** । द्वेषपूर्वकानिष्टाचरणं वैरम् । अनपकारिषु तदभावेऽपि भवत्येवापकारिष्विति शङ्कित्वाऽऽह—**आत्मन इति** । एतच्च सर्वं संक्षिप्यानुष्ठानार्थमुक्तमेवमनुतिष्ठतो भगवत्प्राप्तिरवश्यंभाविनीत्युपसंहरति—**अयमिति** । तदेवं भगवतो विश्वरूपस्य सर्वात्मनः सर्वज्ञस्य सर्वेश्वरस्य मत्कर्मकृदित्यादिन्यायेन क्रममुक्तिफलमभिध्यानमभिवदता तत्पदवाच्योऽर्थो व्यवस्थापितः ॥ ५५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने एकादशोऽध्यायः ॥ ११ ॥

**आ० भा०**—॥ ५५ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्येएकादशोऽध्यायः ॥ ११ ॥

**आ० ज०**—॥ ५५ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितगीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां एकादशोऽध्यायः ॥ ११ ॥

**रा० भा०**—वेदाध्ययनादीनि सर्वाणि कर्माणि मदाराधनरूपाणीति यः करोति स मत्कर्मकृत् मत्परमः सर्वेषामारम्भाणां अहमेव परमोद्देश्यो यस्य स मत्परमः मद्भक्तः अत्यर्थमत्प्रियत्वेन मत्कीर्तनस्तुतिध्यानार्चनप्रणामादिभिर्विनात्मधारणमलभमानो मदेकप्रयोजनतया यः सततं तानि करोति स मद्भक्तः सङ्गवर्जितः मदेकप्रियत्वेनेतरसङ्गमसहमानः निर्वैरः सर्वभूतेषु मत्संश्लेषवियोगैकसुखदुःखस्वभावत्वात् स्वदुःखस्य स्वापराधनिमित्तत्वानुसंधानाच्च सर्वभूतानां परमपुरुषतन्त्रत्वानुसंधानाच्च सर्वभूतेषु वैरनिमित्ताभावात्तेषु निर्वैरः य एवंभूतः स मामेति मां यथावदवस्थितं प्राप्नोति निरस्ताविद्याद्यशेषदोषगन्धो मदेकानुभवो भवतीत्यर्थः ॥ ५५ ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमद्गीताभाष्ये एकादशोऽध्यायः ॥ ११ ॥

अ० टी०—नन्वनन्यभक्तः कथं ज्ञेय इत्याकाङ्क्षायामाह—**मत्कर्मकृदिति** । मदर्थं स्वस्य सहजदासत्वेन नतु कामनया कर्म सेवादिरूपं करोति स तथा । मत्परमः अहमेव परमः सर्वस्वं यस्य । मद्भक्तः मद्भजनकृत् मदाश्रितो वा । संगवर्जितः पुत्रादिलौकिकाऽवैष्णवादिसंगवर्जितः । सर्वभूतेषु निर्वैरः द्वेषरहितः हे पाण्डव ! उत्पत्त्यैव भक्त ! एवंविधो यः स माम् एति प्राप्नोति सः अनन्यो ज्ञातव्य इतिभावः ॥ ५५ ॥

'प्रदर्श्य विश्वरूपं स्वं दृढीकृत्याऽर्जुनाय वै ॥ श्रीकृष्णः साधनाऽसाध्यं स्वस्वरूपमदर्शयत् ॥१॥'

इतिश्रीगीताऽमृततरङ्गिण्यां विश्वरूपदर्शनयोगोनामैकादशोऽध्यायः ॥ ११ ॥

**नी० टी०**—शास्त्रसर्वस्वं संगृह्णाति—**मत्कर्मकृदिति** । मदर्थमेव कर्माणि करोतीति मत्कर्मकृत् अहमेव परमो निष्कलः प्राप्यो यस्येति स मत्परमः । एतेन कृत्स्नः कर्मयोगो ध्यानयोगश्च त्वंपदार्थशोधक उक्तः । मम भक्त आराधनकृदित्युपासनाकांडार्थसंग्रहः । संगवर्जित इत्यनेन एकांते भगवद्ध्याननिष्ठ इत्युक्तं । निर्वैर इति विश्वं भगवदात्मना पश्येदित्युक्तं । अन्यथा भेदबुद्धिमतो निर्वैरत्वासंभवात् । एवं भूतो यः स मां तत्पदलक्ष्यार्थभूतमखंडानंदैकघनमेति प्राप्नोति प्रत्यगभेदेन हे पांडव विशुद्धवंशज ! त्वमेवैतज्ज्ञातुं शक्नोषीति भावः ॥ ५५ ॥

इति भीष्मपर्वणि नैलकंठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे एकादशोऽध्यायः ॥ ११ ॥

( श्लोकानामादितः समष्ट्यङ्काः—४४० )

## ॥ अथ द्वादशोऽध्यायः ॥ १२ ॥

**अर्जुन उवाच—एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ॥**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

**शां० भा०**—द्वितीयप्रभृतिष्वध्यायेषु विभूत्यन्तेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वविशेषणस्योपासनमुक्तं सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य तव चोपासनं तत्र तत्रोक्तं विश्वरूपाध्याये त्वैश्वरमाद्यं समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया तच्च दर्शयित्वोक्तवानासि मत्कर्मकृदित्याद्यतोऽहमनयोरुभयोः पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीति—एवमित्यतीतानन्तरश्लोकेनोक्तमर्थं परामृशति मत्कर्मकृदित्यादिना । एवं सततयुक्ता नैरन्तर्येण भगवत्कर्मादौ यथोक्तेऽर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः । ये भक्ता अनन्यशरणाः सन्तस्त्वां यथादर्शितं विश्वरूपं पर्युपासते ध्यायन्ति ये चान्येऽपि त्यक्तसर्वैषणाः संन्यस्तसर्वकर्माणो यथाविशेषितं ब्रह्माक्षरं निरस्तसर्वोपाधित्वादव्यक्तमकरणगोचरं यद्धि लोके करणगोचरं तद्व्यक्तमुच्यतेऽञ्जेर्धातोस्तत्कर्मकत्वादिदं त्वक्षरं तद्विपरीतं शिष्टैश्चोच्यमानैर्विशेषणैर्विशिष्टं तद्ये चापि पर्युपासते तेषामुभयेषां मध्ये के योगवित्तमाः केऽतिशयेन योगविद इत्यर्थः ॥ १ ॥

**शां० आ०**—अशोच्यानित्यादिषु विभूत्यध्यायावसानेष्वध्यायेषु निरुपाधिकस्य ब्रह्मणो ज्ञेयत्वेनानुसंधानमुक्तमिति वृत्तं कीर्तयति—**द्वितीयेति** । अतिक्रान्तेषु तत्तदध्यायेषु सोपाधिकस्यापि ब्रह्मणो ध्येयत्वेन प्रतिपादनं कृतमित्याह—**सर्वेति** । सर्वस्यापि प्रपञ्चस्य योगो घटना जन्मस्थितिभङ्गप्रवेशनियमनाख्या तत्रैश्वर्यं सामर्थ्यं तेन सर्वत्र ज्ञेये प्रतिबन्धविधुरया ज्ञानशक्त्या

विशिष्टस्य सत्त्वाद्युपहितस्य भगवतो ध्यानं तत्र तत्र प्रसङ्गमापाद्य मन्दमध्यमयोरनुग्रहार्थमुक्तमित्यर्थः। एकादशे वृत्तमनुवदति—**विश्वरूपेति**। अध्यायान्ते भगवदुपदेशमनुवदति—**तच्चेति**। यथाधिकारं तारतम्योपेतानि साधनानि नियन्तुमध्यायान्तरमवतारयन्नादौ प्रश्नमुत्थापयति—**अत इति**। सोपाधिकध्यानस्य निरुपाधिकज्ञानस्य चोक्तत्वादित्यर्थः। एवंशब्दार्थमुक्त्वा तमनूद्य सततयुक्ता इति भागं विभजते—**एवमिति**। ये भक्ता इत्यनूद्य व्याचष्टे—**अनन्येति**। मन्दमध्यमाधिकारिणः सगुणशरणानुक्त्वा निर्गुणनिष्ठानुत्तमाधिकारिणो निर्दिशति—**ये चेति**। यथाविशेषितमनिर्देश्यं सर्वत्रगमचिन्त्यं कूटस्थमित्यादिवक्ष्यमाणविशेषणविशिष्टमित्यर्थः, न क्षरत्यश्नुते वेत्यक्षरम्। अव्यक्तमित्येतद्व्याचष्टे—**निरस्तेति**। करणागोचरत्वं व्यतिरेकद्वारा स्फोरयति—**यद्धीति**। यथाविशेषितमित्युक्तं स्पष्टयति—**शिष्टैश्चेति**। पूर्वार्धगतक्रियापदस्यानुषङ्गं सूचयति—**तदिति**। सर्वे तावदेते योगं समाधिं विन्दन्तीति योगविदः। के पुनरतिशयेनैषां मध्ये योगविदो योगिन इति पृच्छति—**केऽतिशयेनेति**॥१॥

**आ० भा०—श्रीउपासनाप्रियाय नमः॥ ॐ॥** अव्यक्तोपासनाद्भगवदुपासनस्योत्तमत्वं प्रदर्श्य तदुपायं प्रदर्शयत्यस्मिन्नध्याये। तदुपासनमपि मोक्षसाधनं प्रतीयते। "श्रियं वसाना अमृतत्वमायन्भवंति सत्या समिथा मितद्रौ" इति। "अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इति च। अव्यक्तं च महतः परम्। महतः परमव्यक्तमित्युक्तपरामर्शोपपत्तेः। "उपास्य तां श्रियमव्यक्तसंज्ञां भक्त्या मर्त्यो मुच्यते सर्वबंधैः" इति सामवेदे आग्निवेश्यशाखायाम्। महच्च माहात्म्यं तस्या वेदेषूच्यते। "चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते॥ तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्॥ चतुःशिखंडा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते" इति च। "अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः" इत्यारभ्य "अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्॥ तां मा देवा व्यदधुः पुरुत्रा भूरि स्थात्रां भूर्यावेशयंतीम्॥ मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्॥ अमंतवो मां त उपक्षियंति श्रुधि श्रुत श्रद्धिवं ते वदामि॥ यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्॥ अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हंतवा उ॥ अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वं१तः समुद्रे॥ परो दिवा पर एना पृथिव्यै तावती महिना संबभूव" इत्यादि च। "त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया" इति च। इति शंका कस्यचिद्भवति। अतो जानन्नपि सूक्ष्मयुक्तिज्ञानार्थं पृच्छति। एवमिति। एवंशब्देन दृष्टश्रुतरूपं मत्कर्मकृदित्यादिप्रकारश्च परामृश्यते। अव्यक्तं प्रकृतिः। महतः परमव्यक्तमिति प्रयोगात्। 'यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्॥ प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्' इति च भागवते। अक्षरं च तत्। "अक्षरात्परतः परः" इति श्रुतेः। परं तु ब्रह्म न हि भगवतोऽन्यत्। 'आनंदमानंदमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे' इति भागवते। रूपं चेदृशं साधितं पुरस्तात्। उपासनं च तथैव कार्यम्। "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" इत्यारभ्य "तमेवं विद्वानमृत इह भवति। नान्यः पंथा अयनाय विद्यते" इति साभ्यासा॥ आदित्यवर्णत्वादिश्च न वृथोपचारत्वेनांगीकार्यः। तथा च सामवेदे सौकरायणश्रुतिः। "स्थाणुर्ह वै प्राजापत्यः सप्रजापतिं पितरमेत्योवाच। मुमुक्षुभिः साधुभिः पूतपापैः किमु ह वै तारकं तारवाच्यम्। ध्यानंच तस्याप्तरुचेः कथं स्याद्ध्येयश्च कः पुरुषोऽलोमपादइति तं होवाचैष वै विष्णुस्तारको लोमपादोध्यानं च तस्याप्तरुचेर्वदामि। सोऽनंतशीर्षो बहुवर्णः सुवर्णो ध्येयः स वै लोहितादित्यवर्णः। श्यामोऽथ वा हृदये सोऽष्टबाहुरनंतवीर्योऽनंतबलः पुराणः" इति। अरूपत्वादेस्तु गतिरुक्ता। पुरुषभेदश्च प्रश्नादौ प्रतीयते। त्वां पर्युपासते ये चाप्यक्षरमव्यक्तमित्यादौ॥ १॥

आ० ज०—एतदध्यायप्रतिपाद्यमर्थमाह—**अव्यक्तेति**। अव्यक्तं श्रीः तदुपायं भगवदुपासनोपायम् । तदुपायप्रदर्शनं च भगवदुपासनाधिक्यसमर्थनार्थमित्येकार्थता षट्कांतर्भावश्च। अर्जुनस्य प्रश्नसंगतिप्रदर्शनेनैवानंतर्यलक्षणाऽपि संगतिर्ज्ञायते। ननु भगवदुपासनमिवाव्यक्तोपासनमपि यदि मोक्षसाधनत्वेन प्रमितं स्यात् तदा तत्साधकाधिक्यविषयः संशयः स्यात् । तदेव कुतः। तथा च कथमयं संशयमूलोऽर्जुनस्य प्रश्नः। नहि भिन्नफलसाधनसाधकानां निर्धारणार्थः प्रश्नो युज्यते। किं तु साध्यानिर्धारणार्थ एव। न च तथा प्रकृतो यावानर्थ इत्यादिना निरस्तत्वादित्यत आह—**तदुपासनमपीति**। श्रियं प्रति वसानावसंतस्तामाच्छाद्य स्थित्वा उपासीना इति यावत्। तेषां समिथा समीहितानि सत्यानि भवंति। मितद्रौ समुद्रे क्षीराब्धौ। श्रीशब्दस्यान्यतोपि प्रवृत्तेः अव्यक्तविषयामेव श्रुतिं पठति—**अनादीति**। निचाय्य संपूज्य निशाम्य वा। अत्रापि नाव्यक्तं श्रूयत इत्यत आह—**अव्यक्तं चेति**। चोऽवधारणे। कुत एतत् । परमात्मनोऽपि तत्संभवादित्यतआह—**महत इति**। अत्र हि तं महतः परमितिपरामर्शो दृश्यते। स चोक्तस्यैव भवति। अव्यक्तमेव च महतः परमव्यक्तमिति महतः परत्वेनोक्तमतोऽत्राप्यव्यक्तग्रहणे तमित्ययं महतः परमव्यक्तमित्युक्तस्य परामर्शइत्युपपद्यते। अन्यथाऽनुक्तपरामर्शः प्रसज्यते । परमात्मा तु न महतः पर इत्युक्तः किं त्वव्यक्तात्पुरुषः पर इत्येवेत्यर्थः। श्रुतिद्वयार्थसंग्राहिकां स्पष्टां चात्र श्रुतिमुदाहरति—**उपास्येति**। नन्वेवं प्रतीयमानमपि अव्यक्तोपासनस्य मोक्षसाधनत्वमुपचरितमेव। अंतवत्तु फलं तेषामित्युक्तन्यायात् अतो नास्य संदेहहेतुत्वमित्यत आह—**महश्चेति**। तस्याः श्रियः युक्तं ब्रह्माद्युपासनस्य मोक्षसाधनतायां उपचरितत्वकल्पनं। तेषां जननमरणादिमत्त्वेनासंभवात्। श्रियस्तु महामाहात्म्यवत्त्वेन वेदोक्तत्वादसंभवाभावात् । वास्तवमेव तदुपासनस्य मोक्षसाधनत्वमित्यर्थः । सुपेशा सुरूपा घृतप्रतीका दीप्तांगी वयुनानि ज्ञानानि वस्ते आच्छादयति। ज्ञानालंकृतेतियावत्। सुपर्णौ सुष्ठुपरमानंदौ। वृषणा सेचकौ द्विरूपो भगवानेव। यत्र यस्यां विषये। अत्र नित्ययौवनं ज्ञानमयत्वं सर्वदेवतापूज्यत्वं च प्रतीयते। एवमुत्तरत्र। रुद्राद्यैः परिवृता राष्ट्री राज्ञी यज्ञियानां यज्ञार्हाणां वसूनां पदार्थानां देवानां वा संगमनी संगमयित्री प्रथमा चिकितुषी अनादितः सर्वत्र कृतनिवासा। पुरुत्रा पुरुस्थानेषु व्यदधुः कृतवंतः पूजार्थं प्रतिष्ठापितवंतः। भूरिस्थात्रां स्वतो भूरिस्थानेषु स्थिताम् भूरिस्थानेषु देवानावेशयंतीम् योऽन्नमात्ति स मयैवात्तीत्यादि। ये अमंतवो निरपराधास्ते मामुपक्षियंति मत्समीपे वसंति । श्रुधि शृणु श्रुत प्रसिद्ध। श्रद्धिवं श्रद्धेयम्। यमुग्रं रुद्रं कर्तुं कामये तंतमुग्रं कृणोमि करोमीत्यादि। सुमेधां सुमेधसम्। रुद्रायेत्यादिचतुर्थी द्वितीयार्थे। ब्रह्मद्विषे संहारकाले ब्राह्मणादि सर्वप्राणिद्विषम्। यद्वा ब्रह्मद्विषां शरवे हिंसकं हंतवा उ हंतुमेव। अस्य जगतः पितरं हिरण्यगर्भं मूर्धनि सर्वाधिक्ये । योनिः कारणम्। दिवेत्यादितृतीया पंचम्यर्थे। एना एतस्याः महिनामहिम्नाऽहमेतावती संबभूवेत्यादिनोच्यते । भवत्वेवं ततः किं असंदिग्धतया भगवंतमेवोपासीनस्यार्जुनस्य कथमयं संशयो येनैवं पृच्छतीत्यतआह—**इतीति**। यत एवं भगवदुपासनस्येवाव्यक्तोपासनस्यापि विनोपचारेण मोक्षसाधनत्वं प्रतीयत इति तस्मान्मार्गद्वयेनैकमेव फलं प्राप्नुवतां मध्ये के श्रेष्ठा इति साधकबाधकप्रमाणाभावेन शंकासंशयः कस्यचिदविदिततत्त्वस्य भवति । अतस्तदनुजिघृक्षया भगवदुपासका एव श्रेष्ठा इति जानन्नप्यर्जुनः पृच्छतीत्यर्थः। अथवा जानन्नपि तत्र स्वाविदितयुक्तिज्ञानार्थं संशयमाहृत्य पृच्छतीत्याह—**सूक्ष्मेति**। योग्यतावशादेवंभूतं त्वामेवं प्रकारेणोपासत इत्युभयत्रैवं शब्दस्यान्वय इत्याशयवानाह—**एवमिति**। दृष्टं श्रुतं च रूपं यस्य ब्रह्मणस्तत्तथा। अव्यक्ताक्षरशब्दयोरपव्याख्यानं निराकर्तुमर्थं तावदाह—**अव्यक्तमिति** । प्रकृतिश्चेतना त्रिगुणं त्रिगुणाभिमानित्वात् । सदसदात्मकं कार्यकारणाभिमानित्वात्। अविशेषं अकार्यं ततः प्रधानं प्राहुः विशेषवत् कार्यवत्। ततः प्रकृतिं प्राहुः तत्प्रकृत्याख्यं तत्त्वम् । परतः परोऽप्युत्तमः। अत्राव्यक्तमिति विशेष्यवाची । अक्षरमिति विशेषणवाची अव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिरित्यादिवचनात्। अतो व्युत्क्रमेण व्याख्यानम् । विशेषणोपादानं च देवतांतरवैलक्षण्यप्रदर्शनेन प्रश्नसंभावनार्थम्। एतदेव भाष्यकृता महच्चेत्यादिना प्रपंचितम्। अन्ये तु ये त्वां भगवंतं वासुदेवमुपासते। ये चाप्यक्षरमव्यक्तं परं ब्रह्म तेषां के योगवित्तमाइति व्याचक्षते तदसदित्याह—**परं त्विति**। आनंदमित्यादेः पूर्वेणोत्तरेण चान्वयो द्रष्टव्यः। तथा च ये त्वां पर्युपासते ये च त्वामित्युक्तं स्यात्। तथा चोन्मत्तप्रलापत्वप्रसंग इति भावः। ननु भगवान्करचरणादिमद्रूपवान् परं ब्रह्म तु नेदृशरूपवत्। "अशब्दमस्पर्शमरूपम्" इत्यादिश्रुतेः। अतः कथमेतदित्यत आह—**रूपं चेति**। पराभ्युपगतस्य ब्रह्मणोऽपीति शेषः। अस्तु भगवानेव परं ब्रह्म किंतु ये त्वामेवं साकारमुपासते ये चाव्यक्तं निराकारं तेषां के योगवित्तमा इति प्रश्नार्थ इत्यत आह—**उपासनं चेति**। तथैव रूपवत्त्वैव। स्यादयं प्रश्नार्थो यदि रूपवत्त्वारूपवत्त्वाभ्यां भगवदुपासनं कार्यं स्यात् न त्वेतदस्ति किं तु रूपवत्त्वयैवान्यस्य मिथ्योपासनत्वेनानर्थहेतुत्वादितिभावः। कुत एतदित्यत आह—**सहस्रेति**। आरभ्येत्यनेन "ब्राह्मणोऽस्य मुखमासीत्" इत्यादेः "आदित्यवर्णं तमसस्तुपारे" इत्यादेश्च ग्रहणम्। अभ्यासशब्देन तत्फलनियमो लक्ष्यते श्रुतिः साकारोपासनं मोक्षसाधनमाहेतिशेषः । नन्वत्रोच्यमान आदित्यवर्णत्वादिराकार अतमस्कत्वादिसादृश्यादुपचरित एवेत्यत आह—**आदित्येति**। वृथा बाधकेन विना उपचर्यत इत्युपचारः । केचित्सहस्रशीर्षेत्यादिकं हिरण्यगर्भविषयमिति मन्यंते अतस्तद्विधूय ईश्वरविषतया स्वमतं गृहीतुमादित्येत्याद्युक्तम्। उपचारानर्हां चात्र श्रुतिमाह—**तथा चेति**। स्थाणुः रुद्रः

प्राजापत्यः प्रजापतेरपत्यम्। साधुभिः साधकैः तारकं संसारस्य तारः ओंकारः आप्तरुचेर्व्याप्ततेजसः। लोमेतिकेशवचनम् । लोमपादेतिद्वंद्वः । न विद्यंते लोमांतपादाद्यवयवा यस्यासावलोमपादः तं स्थाणुमुवाच प्रजापतिः । सुवर्णः सुवर्णवर्णः । अत्र मुमुक्षुभिः को ध्येयइत्येकः प्रश्नः । तारावाच्यं तारकं वस्तु किमिति द्वितीयः। तस्य ध्यानं कथं स्यात् किं साकारतयोत निराकारत्वेन । नाद्य अलोमपादो ह्यसावुच्यते । न द्वितीयः बुद्धावनारोहात् इति । तृतीयः तत्राद्यद्वितीययोरर्थतो न भेदः । तारकस्यैव मुमुक्षुध्येयत्वादित्यभिप्रेत्य द्वयोरेकमेवोत्तरमाह यस्त्वया मुमुक्षुध्येयः तारकः पृष्टः एष विष्णुरिति । यद्यप्यसावलोमपाद उच्यते तथाऽपि तस्य साकारतयैव ध्यानं वदामीति तृतीयस्य यदि ब्रह्म साकारमेव तद्ध्यानं च तथैव कार्यम्। तर्ह्यशब्दमस्पर्शमरूपमव्ययमित्यादेः का गतिरित्यत आह—**अरूपत्वादेस्त्विति।** लौकिकरूपाद्यभावरूपा। एतेनालोमपाद इत्यस्याभिमायोऽप्युक्तो भवति। इतोपि न परोक्तः प्रश्नार्थ इत्याह—**पुरुषेति ।** एवं हि व्याख्याने ध्येयस्यैव ध्यानं द्वेधेत्युक्तं स्यात् । अत्र तु ध्येयौ पुरुषौ द्वौ प्रतीयेते । अतश्च नैवमित्यर्थः । प्रश्नस्यैकध्येयविषयतया कथंचिद्व्याख्यानेऽप्युत्तरं निरवकाशमित्याशयेनादिग्रहणं कृतं । किं च साकारोपासनेन विशुद्धाशये निराकारमुपास्त इत्येकस्यैव क्रमेण ध्येयद्वयमिति परेषां सिद्धांतः अत्र तूपासकपुरुषभेदः प्रतीयते ततोऽपि नान्योऽर्थ इत्याह—**पुरुषेति** । उत्तरापव्याख्यानानिराकरणं तु तात्पर्यनिर्णय इत्युक्तमेव व्याख्यानमिति स्थितम् ॥ १ ॥

**रा० भा०—भक्तियोगनिष्ठानां प्राप्यभूतस्य परस्य ब्रह्मणो भगवतो नारायणस्य निरङ्कुशैश्वर्यं साक्षात्कर्तुकामायार्जुनायानवधिकातिशयकारुण्यऔदार्यसौशील्यादिगुणसागरेण सत्यसंकल्पेन भगवता स्वैश्वर्यं यथावदवस्थितं दर्शितम् । उक्तं च तत्त्वतो भगवज्ज्ञानदर्शनप्राप्तीनामैकान्तिकात्यन्तिकभगवद्भक्त्यैकलभ्यत्वम् अनन्तरमात्मप्राप्तिसाधनभूतादात्मोपासनाद्भक्तिरूपस्य भगवदुपासनस्य त्वसाध्यनिष्पादने शैघ्र्यात्सुखोपादानत्वाच्च श्रैष्ठ्यं भगवदुपासनोपायश्च तदशक्तस्याक्षरनिष्ठता तदपेक्षिताश्चोच्यन्ते । भगवदुपासनस्य प्राप्यभूतोपास्यश्रैष्ठ्यात् श्रैष्ठ्यं तु ' योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥' इत्यत्रोक्तम् । एवं मत्कर्मकृदित्यादिनोक्तेन प्रकारेण सततयुक्ताः भगवन्तं त्वामेव परं प्राप्यं मन्वाना ये भक्तास्त्वां सकलविभूतियुक्तमनवधिकातिशयसौन्दर्यसौशील्यसार्वज्ञसत्यसंकल्पत्वाद्यनन्तगुणसागरं परिपूर्णमुपासते ये चाप्यक्षरं प्रत्यगात्मस्वरूपं तदेव चाव्यक्तं चक्षुरादिकरणेनानभिव्यक्तस्वरूपमुपासते तेषामुभयेषां के योगवित्तमाः के स्वसाध्यं प्रति शीघ्रगामिन इत्यर्थः । ' भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ।' इत्युत्तरत्र योगवित्तमत्वं शैघ्र्यविषयमिति हि व्यञ्जयिष्यते ॥ १ ॥**

**अ० टी०**—श्रीकृष्णाय नमः ॥ ' पुरुषोत्तमभक्तानामक्षराऽभिनिवेशिनाम् ॥ स्वरूपतारतम्यार्थं श्रीकृष्णं ह्यर्जुनोऽब्रवीत् ॥ १ ॥ ' पूर्वाध्यायान्ते मत्कर्मकृदित्यनेन भक्तानां स्वभजनैकनिष्ठानां स्वप्राप्तिरुक्ता। पूर्वं चाष्टमाऽध्याये 'यदक्षरं वेदविदो वदन्ति ' इत्यारभ्य ' स याति परमां गतिम्' इत्यन्तमक्षरोपासकानां परमगतिरुक्ता एतदुभयोस्तारतम्यजिज्ञासुरर्जुनो भगवन्तं विज्ञापयति—**एवमिति** । एवं पूर्वोक्तप्रकारेण सर्वसंगपरित्यागेन अनन्यभक्ता ये त्वां प्रकटम् आनन्दरूपं पर्युपासते ध्यायन्ति तेषाम् उभयेषां मध्ये के योगवित्तमाः? अतिशयितत्वत्संयोगविदः श्रेष्ठा इत्यर्थः। तान् कृपया आज्ञापयेतिभावः ॥ १ ॥

**नी० टी०**—सप्तममारभ्यैतावता ग्रंथेन तत्पदवाच्यार्थो निरूपितः । इदानीं तत्पदार्थशोधनमुपासनाकांडं च समापयिष्यन्निहार्थतः प्राधान्येन तत्पदलक्ष्यमर्थं तद्विदां लक्षणानि च प्रदर्श्यंते । शब्दतस्तु लौकिकबुद्ध्यनुसारेण तत्पदवाच्यस्यैवोपासनादिकं प्रपंच्यते। तत्र पूर्वाध्यायान्ते मत्कर्मकृन्मत्परम इत्यादिना स्वभजनमुक्तं । तत्र मच्छब्दार्थः किं सगुणमुत निर्गुणं ब्रह्म उभयत्राप्यस्मच्छब्दस्य पूर्वं प्रयोगदर्शनात्संदिहानः पृच्छति—**एवमिति ।** एवमित्यव्यवहितं मत्कर्मकृदित्यादिनोक्तं प्रकारं परामृशति अनेन प्रकारेण ये सततयुक्ता नित्यं समाहितचित्ता

भक्ताः सगुणवेदिनस्त्वां पर्युपासते ये चाप्यक्षरमस्थूलादिलक्षणमव्यक्तं बुद्ध्याद्यगोचरमुपासते तेषां मध्ये योगवित्तमाः के कतरे इत्यर्थः ॥ १ ॥

**श्रीभगवानुवाच—मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ॥**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥**

**शां० भा०**—ये त्वक्षरोपासकाः सम्यग्दर्शिनो निवृत्तैषणास्ते तावत्तिष्ठन्तु तान्प्रति यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः। ये त्वितरे—मयि विश्वरूपे परमेश्वर आवेश्य समाधाय मनो ये भक्ताः सन्तो मां सर्वयोगेश्वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिं नित्ययुक्ता अतीतानन्तराध्यायान्तोक्तश्लोकार्थन्यायेन सततयुक्ताः सन्त उपासते श्रद्धया परया प्रकृष्टयोपेतास्ते मे मम मता अभिप्रेता युक्ततमा इति। नैरन्तर्येण हि ते मच्चित्ततयाऽहोरात्रमतिवाहयन्त्यतो युक्तं तान्प्रति युक्ततमा इति वक्तुम् ॥ २ ॥

**शां० आ०**—किमनयोर्योगयोर्मध्ये सुशक्यो योगो वा पृच्छयते किंवा साक्षान्मोक्षहेतुरिति विकल्प्य क्रमेणोत्तरं भगवानुक्तवानित्याह—**श्रीभगवानिति**। यदि द्वितीयस्तथाविधयोगस्य वक्ष्यमाणत्वान्न प्रष्टव्यतेत्याह—**ये त्वक्षरेति**। यद्याद्यस्तत्राऽऽह—**ये त्विति**। सर्वयोगेश्वराणां सर्वेषां योगमधितिष्ठतां योगिनामित्यर्थः। विमुक्ता त्यक्ता रागाद्याख्या क्लेशनिमित्तभूता तिमिरशब्दितानाद्यज्ञानकृता दृष्टिरविद्या मिथ्या धीर्यस्य तमिति विशिनष्टि—**विमुक्तेति**। नित्ययुक्तत्वं साधयति—**अतीतेति**। तत्रोक्तो योऽर्थो मत्कर्मकृदित्यादि तस्मिन्निश्चयेनायनमायो गमनं तस्य नियमेनानुष्ठानं तेनेत्यर्थः। उपासते मयि स्मृतिं सदा कुर्वन्तीत्यर्थः। उक्तोपासकानां युक्ततमत्वं व्यनक्ति—**नैरन्तर्येणेति**। तदेव स्फुटयति—**अहोरात्रमिति**। अह्नि च रात्रौ चातिमात्रमतिशयेन मामेव विषयान्तरविमुक्ताश्चिन्तयन्तीत्यर्थः ॥ २ ॥

**आ० भा०**—॥ २ ॥

**आ० ज०**—॥ २ ॥

**रा० भा०**—अत्यर्थमत्प्रियत्वेन मनो मय्यावेश्य श्रद्धया परयोपेता नित्ययुक्ता नित्ययोगं काङ्क्षमाणा ये मामुपासते प्राप्यविषयं मनो मय्यावेश्य ये मामुपासत इत्यर्थः। ते युक्ततमा मे मताः। मां सुखेनाचिरात्प्राप्नुवन्तीत्यर्थः ॥ २ ॥

**अ० टी०**—तत्र ये प्रकटपुरुषोत्तमरूपमद्भजनकर्तारस्त उत्तमा इत्याशयेनोत्तरमाह—**श्रीभगवानुवाच**। **मयीति**। मयि प्रकटरूपे सम्यक् निष्कामतया मनः सर्वदैकरूपम् आवेश्य आसमन्तात् सर्वात्मभावेन निवेश्य ये भाग्यवन्तो नित्ययुक्ताः मत्सेवैकतत्पराः परया प्रेमैकलक्षणया श्रद्धया उपेताः युक्तास्ततो मामुपासते सेवन्ते ते युक्ततमा उत्तमाः मे मताः संमता इत्यर्थः ॥ २ ॥

**नी० टी०**—निर्गुणस्य दुष्प्रापत्वोक्त्यैवं श्रेष्ठत्वं सूचयन् सगुणप्राशस्त्यं च शब्दतो दर्शयन् श्रीभगवानुवाच—**मयीति**। मयि सगुणे ब्रह्मणि मन आवेश्य प्रवेश्य ये नित्ययुक्ताः सदोद्युक्ता मां परमेश्वरमुपासते चिंतयंति श्रद्धया आस्तिक्यबुद्ध्या परया सात्विक्या अवश्यं परमात्माऽयमाराधितोऽस्मांस्तारयिष्यतीत्येवं निश्चयरूपया श्रद्धया उपेतास्ते मे मम ज्ञानी त्वात्मैव मे मतमिति ज्ञानिनमात्मत्वेनैव पश्यतो मूर्खेष्वपि कारुण्यात्पक्षपातवतः सर्वज्ञस्य युक्ततमा मताः ॥ २ ॥

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥**

**शां० भा०**—किमितरे युक्ततमा न भवन्ति न किंतु तान्प्रति यद्वक्तव्यं तच्छृणु—ये त्वक्षरमनिर्देश्यमव्यक्तत्वादशब्दगोचरमिति न निर्देष्टुं शक्यतेऽतोऽनिर्देश्यमव्यक्तं न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं पर्युपासते परि समन्तादुपासते । उपासनं नाम यथाशास्त्रमुपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत्समानप्रत्ययप्रवाहेण दीर्घकालं यदासनं तदुपासनमाचक्षते । अक्षरस्य विशेषणमाह सर्वत्रगं व्योमवद्व्याप्यचिन्त्यं चाव्यक्तत्वादचिन्त्यम् । यद्धि करणगोचरं तन्मनसाऽपि चिन्त्यं तद्विपरीतत्वादचिन्त्यमक्षरं कूटस्थं दृश्यमानगुणमन्तर्दोषं वस्तु कूटं कूटरूपं कूटसाक्ष्यमित्यादौ कूटशब्दः प्रसिद्धो लोके । तथा चाविद्याद्यनेकसंसारबीजमन्तर्दोषवन्मायाव्याकृतादिशब्दवाच्यतया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' 'मम माया दुरत्यया' इत्यादौ प्रसिद्धं यत्तत्कूटं तस्मिन्कूटे स्थितं कूटस्थं तदध्यक्षतयाऽथवा राशिरिव स्थितं कूटस्थमत एवाचलं यस्मादचलं तस्माद्ध्रुवं नित्यमित्यर्थः ॥ ३ ॥

**शां० आ०**—वक्ष्यामस्तदुपरिष्टादित्युक्तं प्रश्नपूर्वकं प्रकटयति—**किमित्यादिना** । पूर्वेभ्यः फलतो विशेषार्थस्तुशब्दः । अव्यक्तत्वमनिर्देश्यत्वे हेतुरित्याह—**अव्यक्तत्वादिति** । यतोऽव्यक्तमतोऽनिर्देश्यमिति योजना । निरुपाधिकेऽक्षरे कथमुपासनेति पृच्छति—**उपासनमिति** । शास्त्रतोऽक्षरं ज्ञात्वा तदुपेत्याऽऽत्मत्वेनोपगम्योपासते तथैव तिष्ठन्ति पूर्णचिदेकतानमक्षरमात्मानमेव सदा भावयन्तीत्येतदिह विवक्षितमित्याह—**यथेति** । अव्यक्तत्वमेवाचिन्त्यत्वेऽपि हेतुरित्याह—**यद्धीति** । कूटशब्दस्योक्तार्थत्वं वृद्धप्रयोगतः साधयति—**कूटरूपमिति** । आदिपदमनृतार्थम् । प्रकृते किं तदनृतं कूटशब्दितमित्याशङ्क्याऽऽह—**तथा चेति** । उक्तरीत्या कूटशब्दस्यानृतार्थत्वे सिद्धे यदनेकस्य संसारस्य बीजं निरूप्यमाणं नानाविधदोषोपेतं तद्धेदं तर्ह्यव्याकृतं मायां तु प्रकृतिं मम मायेत्यादौ मायाशब्दिततया प्रसिद्धमविद्यादि तदिह कूटशब्दितमित्यर्थः । तत्रावस्थानं केन रूपेणेत्याशङ्कायामाह—**तदध्यक्षतयेति** । कूटस्थशब्दस्य निष्क्रियत्वमर्थान्तरमाह—**अथवेति** । पूर्वमुपजीव्यानन्तरविशेषणद्वयप्रवृत्तिमाह—**अत एवेति** ॥ ३ ॥

**आ० भा०**—भवंतु त्वदुपासका एवोत्तमाः । इतरेषां तु किं फलमित्यत आह—ये त्वित्यादिना । अनिर्देश्यत्वं चोक्तं भागवते मायायाः । 'अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः' इति । ईश्वरस्तु देवशब्देनोक्तः दैवमन्ये परइत्यत्र । उक्तं च सामवेदे काषायणश्रुतौ । "नासदासीन्नोसदासीत्तदानीम्" इति । "न महाभूतं नोपभूतं तदासीत्" इत्याद्यारभ्य "तम आसीत्तमसागूढमग्रे" इति । "तमो ह्यव्यक्तमजरमनिर्देश्यमेषा ह्येव प्रकृतिः" इति । सर्वगाचिंत्यादिलक्षणा हि सा । तथाहि मोक्षधर्मे । 'नारायणगुणाश्रयादजरादतींद्रियादग्राह्यादसंभवतः । असत्यादहिंस्राल्ललामाद्द्वितीयप्रवृत्तिविशेषादवैरादक्षयादमरादक्षरादमूर्तितः । सर्वस्याः सर्वकर्तुः शाश्वततमसः' इति 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' इति मानवे । 'कूटस्थोऽक्षर उच्यते' इति वक्ष्यति । कूटे आकाशे स्थिता कूटस्था । "आकाशे संस्थिता त्वेषा ततः कूटस्थिता मता" इतिह्यृग्वेदखिलेषु । "सा सर्वगा निश्चला लोकयोनिः साचाक्षरा विश्वगा विरजस्का" इति सामवेदे गौपवनशाखायाम् ॥ ३ ॥

**आ० ज०**—एवं तर्हि मय्यावेश्येत्यनेनैव मदुपासका एवोत्तमा इति प्रश्नस्योत्तरं जातं किमुत्तरेण वाक्येनेत्यत आह—**भवंत्विति** । आक्षेपगर्भोऽयमभ्युपगमः । न युक्तं त्वदुपासकानामेवोत्तमत्वमिति भावः । तदुपपादनाय पृच्छति—**इतरेषामिति** । अव्यक्तोपासकानां किं फलं मोक्षोऽस्ति न वा । न चेदुदाहृतवाक्यविरोधः । आद्ये कथं त्वदुपासकानामुत्तमत्वं फलसाम्यादिति

भावः। नन्वेषां विशेषणानां ब्रह्मणोऽन्यत्रासंभवात् कथमितरेषां किं फलमित्यस्योत्तरत्वेन एतदवतार इत्यतोऽक्षराव्यक्तत्वयोर्मायायामुपपादितत्वात् तदन्यानि तत्रोपपादयन्ननिर्देश्यत्वं तावदुपपादयति—**अनिर्देश्यत्वं चेति**। शब्दागोचरत्वम्। धर्मस्य मम पादभंग इत्यन्वयः। नन्वत्रापीश्वरोऽस्त्वनिर्देश्य इत्यत आह—**ईश्वरस्त्विति**। दैवं पादभंगकारणमाहुः। तथा च पुनरुक्तिः स्यादिति भावः। न च दैवशब्दोऽदृष्टवाची। तस्यापरे कर्मेति पृथगुक्तत्वात्। मायाया अनिर्देश्यत्वे स्पष्टं च प्रमाणमाह—**उक्तं चेति**। महाभूतमाकाशवायुरूपम्। उपभूतं तेजोब्भूलक्षणम्। तदा प्रलयेअजरामित्यादिकं प्रलयेऽवस्थानस्योपपादकम्। नचैतत् ब्रह्मेति प्रदर्शनायैषा ह्येव प्रकृतिरित्युदाहृतम्। इदानीं सर्वत्रगमित्यादिकं मायायामुपपादयितुमाह—**सर्वगेति**। भावप्रधानो निर्देशः। स्वरूपवाची वा लक्षणशब्दः। नारायणगुणस्तदिच्छादिलक्षण आश्रयो यस्य तत्तथोक्तम्। अनेन ब्रह्मणोऽव्यावृत्तिः। अजरादमरादिति जडप्रधानादेः। तस्य तत्प्राप्त्यभावात्। अग्राह्यान्मनसोऽप्यगोचरादित्यनेनाचिंत्यमिति सिद्ध्यति। असंभवतोऽक्षयादक्षरादिति ध्रुवत्वसिद्धिः। असति प्रलये भवमसत्यम्। ललामं प्रधानम्। द्वितीया भगवदेकाधीना प्रवृत्तिर्विशेषो यस्य तत्तथा। अमूर्तितः प्राकृतदेहरहितात्। सर्वस्याः सर्वगायाइति छांदसो लिंगव्यत्ययः। अनाद्यविद्याभिमानित्वात्। शाश्वततमसः पुरुषोऽभूदित्यन्वयः। इदं प्रसिद्धं तमो मायाख्यं प्रलये सर्वतः प्रसुप्तमिव निर्व्यापारमासीत अभूतमजातम्। अप्रज्ञातमित्यादिना प्रत्यक्षानुमानागमवेद्यत्वाभाव उच्यते। अवेद्यलक्षणत्वादप्रतर्क्यम्। अनेन सर्वत्रगमचिंत्यं ध्रुवमिति सिध्यति। गीतावाक्येन कूटस्थत्वं नित्यत्वं चेत् ध्रुवमिति पुनरुक्तिः। कूटमनृतं तिष्ठत्यस्मिन्नित्यसंभवीत्यत आह—**कूटइति**। कूटशब्दस्याकाशवाचित्वेऽभिधानं प्राक्पठितम्। तथाऽपि दार्ढ्याय श्रुत्युदाहरणम्। श्रुत्यनुसारेण स्त्रीलिंगम्। सा सर्वगेत्युक्तार्थे स्पष्टं प्रमाणम्। निश्चला स्वपदादभ्रष्टा विश्वं गतमाश्रितमस्यामिति विश्वगा। एतानि चोक्तविशेषणानि तदुपासनस्य मोक्षसाधनत्वांगीकारसमर्थनार्थानीति ज्ञेयम्॥ ३॥

**रा० भा०**—ये त्वक्षरं प्रत्यगात्मस्वरूपमनिर्देश्यं देहादन्यतया देवादिशब्दानिर्देश्यम् अत एव चक्षुरादिकरणानभिव्यक्तं सर्वत्रगमचिन्त्यं च सर्वत्र देवादिदेहेषु वर्तमानमपि तद्विसजातीयतया तेन रूपेण चिन्तयितुमनर्हम् अत एव कूटस्थं सर्वसाधारणं सत्तद्देवाद्यसाधारणाकारासंबन्धमित्यर्थः। अपरिणामित्वेन स्वासाधारणाकारान्न चलति न च्यवते इत्यचलं तत एव ध्रुवं नित्यम्॥ ३॥

**अ० टी०**—एवं स्वभक्तानामुत्तमत्वमुक्त्वा अक्षरोपासकानां स्वरूपमाह—**येत्वक्षरमिति द्वयेन**। ये तु, तुशब्देन स्वाभिमतत्वं निराकृतम् ये अनिर्देश्यं शब्दाऽविवेच्यम् अव्यक्तम् अप्रकटरूपं सर्वत्रगं ध्यानादिदशायामपि हृदयेऽस्थिरस्वभावम्। अतएव अचिन्त्यं चिन्तनाऽयोग्यं रूपाद्यभावादस्थिरत्वाच्च, कूटस्थं प्रपञ्चाधिष्ठितम्, अचलं मच्चरणात्मकम् अतएव ध्रुवं नित्यम् एतादृशम् अक्षरम्॥ ३॥

**नी० टी०**—एवमुपासकान् स्तुत्वा अव्यक्तविदां ज्ञानिनां दौर्लभ्यं श्लोकत्रयेणाह—**ये त्विति**। तुशब्दः सगुणाद्वैलक्षण्यार्थः। अक्षरं "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घम्" इत्यादिश्रुत्या सर्वधर्मशून्यं निरूपितं अत एवानिर्देश्यं निर्देष्टुमशक्यं वाचा अव्यक्तं च वाचामगोचरत्वाद्बुद्धेरप्यविषय इत्यर्थः। तथाच श्रुतिः "यतो वाचो निवर्त्तंते अप्राप्य मनसा सह" इति ब्रह्मणो वाङ्मनसातीतत्वं दर्शयति पर्युपासते सर्वप्रकारेणोपासते उपासनमिहानात्मनामदर्शनमेव। यथोक्तं 'अनात्मादर्शनेनैव परमात्मानमुपास्महे' इति। ननु तर्ह्येवंविधस्य शून्यकल्पस्य सत्त्वे किं मानमत आह—**सर्वत्रगमिति**। सत्तारूपेण स्फुरणरूपेण च सर्वत्रगतं यत्सत्तया सर्वं सत्तावद्भवति कथं तस्यासत्त्वं वाच्यमिति भावः। नन्वेवं तार्किकाभिमतं सत्तासामान्यमुक्तं स्यात् ताद्धि घटः सन् पटः सन्निति सर्वत्रानुगतं दृश्यत इत्याशंक्याह—**अचिंत्यमिति**। सत्तासामान्यं हि प्रत्यक्षं तदपि ब्रह्मसत्तानुवेधेनैवात्मानं लभते न स्वतःसिद्धं सामान्यं सत् जातिः सती घटत्वं सदितिप्रत्ययात्। सामान्यस्य सदिति प्रत्ययागोचरत्वे तु तस्यासत्त्वापत्त्या पदार्थत्वमेव न स्यात्। तस्मात्सर्वाधिष्ठानभूतं ब्रह्म रूपादिहीनत्वाच्चिंतयितुमशक्यं दूरे तस्य सर्वगतत्वेन प्रत्यक्षगोचरत्वमित्यर्थः। ननु सत्सदितिप्रत्ययस्यान्यथाप्युपपत्तौ सत्तासा-

मान्यवादिनं प्रति तेनाधिष्ठानभूतं ब्रह्म न साधयितुं शक्यमत आह—**कूटस्थमिति**। वस्तुतो सदपि सदिवावभासमानं कूटं यथा कूटकार्षापणं कूटतुलेति तद्वत्कूटः अहंकारः प्रतीच्यभेदेन भासमानत्वे सति कादाचित्कत्वाद्यो यदभेदेन कदाचिद्भाति स तत्र मिथ्याकल्पितो यथा रज्जूरगस्तथा चायमहंकारो मिथ्यात्वात् कूटसंज्ञस्तत्र तिष्ठति तद्भासकत्वेनेति कूटस्थं चैतन्यं अहमनुभवे ह्यहंकारो दृश्यतया भाति तद्भासकं च चैतन्यं ततोऽन्यत् यथा घटभासकोऽर्को घटादन्यस्तद्वत्। एतेन नित्यापरोक्षत्वं ब्रह्मणः साधितं नन्वहमनुभव एवात्मविषयोऽतोऽहमर्थ एवात्मा न ततोऽन्य आत्माऽस्तीत्याशंक्याह—**अचलमिति**। अमहर्थो हि सुखी दुःखी परिणाम्याविर्भावतिरोभावशीलश्चातश्चंचलः आत्मा तु न तथा तस्य तथात्वेऽनिर्मोक्षापत्तेः वन्ह्यौष्ण्यवद्दुःखादिधर्मिण आत्यंतिकदुःखनाशस्य मोक्षस्य धर्मिनाशमंतरेणासंभवात् घटे यावद्रूपनाशादर्शनात्। आत्मनस्तिरोभावे च जगदांध्यं प्रसज्येत सुषुप्तावपि तत्रत्यसुखाज्ञानसाक्षित्वेनाविर्भूतस्वरूप एवात्माऽस्ति अन्यथा सुप्तोत्थितस्य सुखमहमस्वाप्समिति परामर्शायोगात्। ननु सुषुप्तौ सन्नप्यात्मा न प्रकाशते तत्प्रकाशकस्य मनःसंयोगस्याभावात् कर्त्रा व्याप्रियमाणं हि करणं क्रियां साधयति न च सुषुप्तौ करणव्यापारोऽस्ति तस्मान्यस्तवासिस्तक्षेवात्मा सुषुप्तौ ज्ञानादिगुणहीनोऽप्रकाशमानोऽस्त्येवेत्याशंक्याह—**ध्रुवमिति**। नन्वात्मा किं सत्तामात्रेणायस्कांतवत्करणानि प्रवर्त्तयति उत व्यापाराविष्टः सन् नाद्यः इष्टापत्तेः त्वन्मते च आत्मनः कर्तृत्वासिद्धेः। नांत्यः अनित्यत्वापत्तेः व्यापारो हि स्पंदः स च परिच्छिन्नस्यैव युज्यते न विभोः विभुत्वहाने चाणुत्वानभ्युपगमात् मध्यमपरिमाणत्वे घटादिवदनित्यतापत्तिः। तस्माद्ध्रुवमप्रच्युतस्वभावमक्षरमित्यर्थः ॥ ३ ॥

**संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ॥**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥**

**शां० भा०—संनियम्येति । संनियम्य सम्यङ्नियम्य संहृत्येन्द्रियग्राममिन्द्रियसमुदायं सर्वत्र सर्वस्मिन्काले समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयस्ते य एवंविधास्ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः । न तु तेषां वक्तव्यं किंचिन्मां ते प्राप्नुवन्तीति । ज्ञानी त्वात्मैव मे मतमिति ह्युक्तम् । न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम् ॥ ४ ॥**

**शां० आ०**—कथमक्षरमुपासते तदुपासने वा किं स्यादिति तदाह—**संनियम्येति** । तुल्या हर्षविषादरागद्वेषादिरहिता सम्यग्ज्ञानेनाज्ञानस्यापनीतत्वात् । क्रमपरापेक्षयोरसंभवं विवक्षित्वाऽऽह—**ते य इति**। सर्वेभ्यो भूतेभ्यो हिते रताः सर्वेभ्यो भूतेभ्यो हितमेव चिन्तयन्तस्तदेवाऽऽचरन्ति । ज्ञानवतां यथाज्ञानं भगवत्प्राप्तेरर्थसिद्धत्वादनुवादेमात्रमेतदित्याह—**नत्विति** । ज्ञानिनो भगवत्प्राप्तिः सिद्धैवेत्यत्र प्रमाणमाह—**ज्ञानीत्विति**। ज्ञानवतां भगवत्प्राप्तौ त एव युक्ततमा वक्तव्याः कथं सगुणब्रह्मोपासकान्युक्ततमानुक्तवानसीत्याशङ्क्याऽऽह—**न हीति** ॥ ४ ॥

**आ० भा०—॥ ४ ॥**

आ० ज०—॥ ४ ॥

**रा० भा०—सन्नियम्येन्द्रियग्रामं चक्षुरादिकमिन्द्रियग्रामं सर्वस्वव्यापारेभ्यः सम्यक् नियम्य सर्वत्र समबुद्धयः सर्वत्र देवादिविषमाकारेषु देहेष्ववस्थितेष्वात्मसु ज्ञानैकाकारतया समबुद्धयः तत एव सर्वभूतहिते रताः सर्वभूताहितरतित्वान्निवृत्ताः सर्वभूताहितरतित्वं ह्यात्मनो देवादिविषमाकाराभिमाननिमित्तं य एवमक्षरमुपासते तेऽपि मां प्राप्नुवन्त्येव मत्समानाकारमसंसारिणमात्मानं प्राप्नुवन्त्येवेत्यर्थः ॥ ४ ॥**

अ० टी०—इन्द्रियग्रामं सन्नियम्य वशीकृत्य सर्वत्र मयि देवादिषु लौकिकेषु सुखदुःखेषु वा समबुद्धयः सर्वभूतहिते रताः सन्तो ये पर्युपासते ध्यायन्ति ते मामेव प्राप्नुवन्ति । एवकारेणाक्षरसंबन्धव्यवहिताः प्राप्नुवन्तीति भावः, स्वयुक्ततमत्वाऽभावश्च ज्ञापितः ॥ ४ ॥

नी० टी०—एवंविधमक्षरं कथमुपासनीयमित्यत आह—**संनियम्येति** । सर्वत्र काले सर्वदा एतेन ध्यानस्य नैरंतर्यमुक्तं इंद्रियग्रामं समनस्कानींद्रियाणि संनियम्य एकीभावेनात्मनि वशे कृत्वा स्वकारणे प्रविलाप्येत्यर्थः । समा चांचल्यहीना बुद्धिर्येषां ते समबुद्धयो ये भवंति तेऽपि मामेव निर्विकल्पं परं ब्रह्म परां काष्ठां प्राप्नुवंति । श्रुतिश्च "यदा पंचावतिष्ठंते ज्ञानानि मनसा सह ॥ बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्" इति सर्वभूतहिते रता इत्यनेन सर्वभूताभयदानेन संन्यासोऽपि ध्यानांगमिति विधीयते ॥ ४ ॥

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥**

**शां० भा०—किंतु—क्लेशोऽधिकतरो यद्यपि मत्कर्मादिपराणां क्लेशोऽधिक एव क्लेशोऽधिकतरस्त्वक्षरात्मनां परमार्थदर्शिनां देहाभिमानपरित्यागनिमित्तोऽव्यक्तासक्तचेतसामव्यक्त आसक्तं चेतो येषां तेऽव्यक्तासक्तचेतसस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि यस्माद्या गतिरक्षरात्मिका दुःखं सा देहवद्भिर्देहाभिमानवद्भिरवाप्यतेऽतः क्लेशोऽधिकतरः । अक्षरोपासकानां यद्वर्तनं तदुपरिष्टाद्वक्ष्यामः ॥५॥**

शां० आ०—सगुणोपासकेष्वपि कथमित्याह—**किंत्विति** । अक्षरोपासनस्य दुष्करत्वादुपासनान्तरस्य सुकरत्वादित्यभिप्रेत्याऽऽह—**क्लेश इति** । अधिक एवेतरेभ्यो द्वैतदर्शिभ्यः कामिभ्य इति शेषः । तेषां क्लेशस्याधिकतरत्वे हेतुं मत्वा विशिनष्टि—**देहेति** । अव्यक्तमत्यन्तसूक्ष्मं निर्विशेषमक्षरं तस्मिन्नासक्तमभिनिविष्टं चेतो येषां तेषामिति यावत् । अक्षरोपासकानां क्लेशस्याधिकतरत्वे भगवानेव हेतुमाह—**अव्यक्तेति** । दुःखं दुःखेन कृच्छ्रेणेति यावत्, अतो देहाभिमानत्यागादित्यर्थः । ते कथं वर्तन्ते तत्राऽऽह—**अक्षरेति** ॥ ५ ॥

**आ० भा०—कथं तर्हि त्वदुपासकानामुत्तमत्वमित्यत आह—क्लेश इति । अव्यक्ता गतिर्दुःखं ह्यवाप्यते । गतिर्मार्गः । अव्यक्तोपासनद्वारकोमत्प्राप्तिमार्गो दुःखमवाप्यत इत्यर्थः । अतिशयेनोपासनं सर्वेंद्रियातिनियमनं सर्वसमबुद्धिसर्वभूतहितेरतत्वातिसुष्ठ्वाचारसम्यग्विष्णुभक्त्यादि साधनसंदर्भमृते नाव्यक्तापरोक्षम् । तदृते च न विष्णुप्रसादः । सत्यपि तस्मिन्नसम्यग्भगवदुपासनमृते । नर्ते च तं मोक्षः विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इति क्लेशिष्ठोऽयं मार्ग इति भावः । तथाप्यपरोक्षीकृताव्यक्तानां सुकरं भगवदुपासनमित्येव प्रयोजनम् । तत्रापि योऽव्यक्तापरोक्षे प्रयासस्तावता प्रयासेन यदि भगवंतं उपास्ते ऊनेन वा तदा भगवदपरोक्षमेव भवतीति द्वितीयमधिकम् । इंद्रियसंयमाद्यूनभावे अत्युपासकस्यापि देवी नातिप्रसादमेति । देवस्तु तानि साधनानि भक्तिमतः स्वयमेव प्रयत्नेन ददातीति सौकर्यमिति भक्तानां भगवदुपासने । इतरत्र च क्लेशोऽधिकतरः । तदेतत्सर्वं पर्युपासते सन्नियम्याधिकतर इति परिसंतरप्शब्दैः प्रतीयते । सामवेदे माधुच्छंदशाखायां चोक्तम् । "भक्ताश्च येऽतीव विष्णावतीव जितेंद्रियाः सम्यगाचारयुक्ताः । उपासते तां समबुद्धयश्च तेषां देवी दृश्यते नेतरेषाम् । दृष्टा च सा भक्तिमतीव विष्णौ दत्त्वोपास्ते सर्वविघ्नाञ्छिनत्ति । उपास्य तं वासुदेवं विदित्वा ततस्ततः शांतिमत्यंतमेति" इति । उक्तं च सामवेदे अयास्यशाखायाम् ।**

“प्रसन्नो भविता देवः सोऽव्यक्तेन सहैव तु । यावता तत्प्रसादो हि तावतैव न संशयः । न तत्प्रसादमात्रेण प्रीयते स महेश्वरः । तस्मिन्प्रीते तु सर्वस्य प्रीतिस्तु भवति ध्रुवम् । यद्यप्युपासनाधिक्यं तथापि गुणदो हि सः । मुक्तिदश्च स एवैको नाव्यक्तादिस्तु कश्चन” इति । ‘ममात्मभावमिच्छंतो यतंते परमात्मनः’ इति मोक्षधर्मे श्रीवचनम् । ‘धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ॥ प्रश्रिते दानशीले च सदैव निवसाम्यहम्’ इति च । महतः परंतु ब्रह्मैव । तथा हि भगवता सयुक्तिकमभिहितम् । “ॐवदतीति चेन्न प्राज्ञोहि ॐ” त्रयाणामेव चैवमुपन्यासः प्रश्नश्चेत्यादि । तमिति पुल्लिंगाच्चैतत्सिद्धिः । महतः परत्वं तु अव्यक्तपरस्य भवत्येव । तथा चाग्निवेश्यशाखायाम् । “अनाद्यनंतं महतः परं ध्रुवम्” इति । ‘परो हि देवः पुरुहूतो महत्तः’ इति । नचाव्यक्तरूपं भगवता निषिद्धं भारतादौ साधितत्वात् । शरीररूपकविन्यस्तगृहीतेरित्यादौ तु सांख्यप्रसिद्धं प्रधानं निषिध्य वैदिकमव्यक्तमेवोक्तम् । तथा च सौकरायणश्रुतिः “शरीररूपिका अशरीरस्य विष्णोर्यतः प्रिया सा जगतः प्रसूतिः” इति । सुव्रतानां क्षिप्रं महदैश्वर्यं ददाति देवी न देव इति विशेषः । “सुवर्णवर्णां पद्मकरां च देवीं सर्वेश्वरीं व्याप्तजडां च बुद्ध्वा । सैवेति वै सुव्रतानां तु मासान्महाविभूतिं श्रीस्तु दद्यान्न देवः” इत्यृग्वेदखिलेषु ॥ ५ ॥

आ० ज०—नन्वितरेषां किं फलमित्यस्य प्रश्नस्य ते प्राप्नुवंति मामेवेत्युत्तरं दत्तम् । तत्किमुत्तरेणेत्यत आह—**कथमिति** । पूर्ववाक्ये पक्षग्रहणमात्रं कृतम् । न तु तत्राभिप्रेतस्य दोषस्य परिहारः । अतः पूर्वपक्षिणाऽभिप्रायोद्घाटने कृते तत्समाधानमाहेति भावः । तर्ह्युभयेषां फलसाम्ये । यद्यप्येषा शंका पूर्ववाक्ये परिहृता । पर्यादिपदप्रयोगात् । तथा च वक्ष्यति । तथाऽपि साध्यस्यानुक्तत्वाद्धेतुवचनं स्वरूपकथनं मन्यमानस्य भवत्येव पुनः शंका । उत्तरार्धे पदानां व्यवहितत्वादन्वयाप्रतीतौ तमाह—**अव्यक्तेति** । अनेन दुःखमित्यस्य क्रियाविशेषणत्वमुक्तम् । गतिशब्दस्याकर्तरि कारके भावे च प्रयोगादत्र विवक्षितमर्थमाह—**गतिरिति** । गम्यतेऽनेनेति व्युत्पादनादुपायो गतिरित्यर्थः । ननु मार्गस्याव्यक्तत्वं कथमुच्यते । कुतश्च गम्यार्थतागतिशब्दस्य त्यज्यत इत्यत आह—**अव्यक्तेति** । अव्यक्तोपासनं द्वारं उपायो यस्यासौ तथोक्तः । अव्यक्तोपासनानंतरभावि यद्भगवदुपासनं तदेवमुच्यते अनेनाव्यक्तशब्दस्तदुपासनं लक्षयति । तेन च तद्द्वारकत्वं लक्ष्यते गम्यार्थतायां च गतिशब्दस्याव्यक्ताख्यं गम्यमित्युक्तं स्यात् । न च तद्युक्तम् । ते प्राप्नुवंति मामेवेति भगवत्प्राप्तेरुक्तत्वादित्युक्तं भवति । अत्र पूर्वार्धेऽस्य मार्गस्याधिकतरक्लेशवत्त्वं प्रतिज्ञाय कथमित्यतस्तत्प्रसिद्धमित्युत्तरार्धेनोक्तम् । तत्प्रसिद्धिं विवृणोति—**अतिशयेति** । षष्ठोक्तप्रकारेण सर्वसमबुद्धिः । ततः किमित्यत आह—**तद्दतेचेति** । अयोगव्यवच्छेद एवायमुक्तो न तु तावन्मात्रेणेत्याह—**सत्यपीति** । तस्मिन्नव्यक्तापरोक्ष्ये सति विष्णुप्रसाद इति वर्तते । ततोऽपि किमित्यतआह—**नर्तेचेति** । तं विष्णुप्रसादम् । अस्त्वेवमव्यक्तोपासनद्वारकभगवत्प्राप्तिमार्गप्रकारः । तथापि कथमत्राधिकतरः क्लेश इत्यत आह—**विनेति** । अव्यक्तोपासनमार्गम् । अयमव्यक्तोपासनद्वारकः । एवं तर्हि किमिति प्रवृत्तो येनार्जुनेनाशंकित इत्यत आह—**तथाऽपीति** । एवं तर्हि मार्गयोः साम्यमेव । अनेन प्रयोजनेन क्लेशस्य समाधानादित्यत आह—**तत्रापीति** । अव्यक्तोपासनद्वारके मार्गेऽपि द्वितीयं भगवदुपासने दुःखं पाक्षिकमेतत् । ऊनेन वेत्युक्तत्वात् । इतश्चाव्यक्तोपासनद्वारके मार्गे भगवदुपासनात्क्लेशोऽधिकतर इत्याह—**इंद्रियेति** । नातिप्रसादमेतीत्यतः परमेक इति शब्दः । द्वावपि हेतौ प्रकारार्थौ वा कुतोऽयं भगवतो भाव इत्यत आह—**तदेतदिति** । उपलक्षणमेतत् । सर्वत्र समबुद्धय इत्यादिनेत्यपि द्रष्टव्यम् तत्र परीत्यनेनोपासकस्यातिशयः । समित्यनेनेंद्रियनियमस्यातिशयः । सर्वत्रेत्यादिना सर्वेत्यादिकम् । तरपाऽतिसुष्ठ्वाचारादिकम् । अव्यक्तागतिरित्यनेन तद्दते चेत्यादिव्यवधानम् । मामेवेत्यवधारणेन तथापीत्यादिकं प्राप्नुवंतीति स्वातंत्र्योक्त्यैंद्रियसंयमादिति देवतासहायाभावः । भगवदुपासने त्वेतदभावो यथा गीतोक्तस्तदुत्तरत्र प्रदर्शयिष्यते । आगमांतरसिद्धत्वाच्चायं भवति । भगवदभिप्राय इत्याह—**सामवेदइति** । तेषामित्यादिषष्ठी तृतीयार्थे । विदित्वा साक्षात्कृत्य ततो वेदनात्प्रसन्नात्ततो वासुदेवात् । यावता प्रयासेन तत्प्रसादोऽव्यक्तप्रसादः सर्वस्यापीति द्वितीयस्तुशब्दोऽपिशब्दार्थे आधिक्यशब्देन न्यूनत्वमप्युपलक्ष्यते । न्यूनाधिकयोरन्यत्र प्रत्यवायहेतुत्वात् । नाव्यक्तादेरिति पाठे मध्ये इत्युपस्कारः । ममोपासनेनात्मभावं कैवल्यं परमात्मने तमुद्दिश्य । अस्य वाक्यस्य कथं प्रकृतोपयोग इत्यत उक्तम्—**श्रीवचनमिति** । नित्ये नियते ब्रह्मण्ये ब्रह्माणि साधौ निवसामि प्रसन्ना भवामीति च श्रीवचनमिति संबंधः । पूर्वं शंकाहेतुत्वेन

श्रियं वसाना इत्यादीनि वाक्यान्युदाहृतानि तेष्विदमेकं नाव्यक्तविषयमिति वस्तुस्थितिमाह—**महत इति**। अनाद्यनंतं महतः परमिति वाक्यप्रतिपाद्यमिति यावत्। अत्राभ्युच्चययुक्तिं चाह—**तमिति**। ननूक्तपरामर्शोपपत्तेरिति पूर्वपक्षेऽपि युक्तिरुक्तेत्यतः साऽन्यथासिद्धेत्याह—**महतइति**। तथा चोक्तवक्ष्यमाणबलादव्यक्तात्पुरुषः परइत्युक्तस्यायं परामर्शइतिभावः श्रुत्यंतरेणैवं व्याख्यातत्वाच्चैतद्वाक्यं तत्परमित्याह—**तथाचेति**। पुरुभिर्हूतः पुरुहूतः। नन्वव्यक्तंनाम तत्त्वमेव नास्तीति सूत्रकृतोक्तं ततस्तदभिमानिन्यव्यक्ताख्यादेवताऽपि नास्ति तत्कथं तद्विषयतया व्याख्यानमित्यतआह—**नचेति**। तर्हि कथं तत्सूत्रमित्यत आह—**शरीरेति**। सांख्यप्रसिद्धं प्रधानमिति स्वतंत्रं मुख्यतः शब्दवाच्यमित्यर्थः। वैदिकमिति भगवदधीनं तत्संबंधेन शब्दवाच्यमित्यर्थः। अत्र श्रुतिं चाह—**तथा चेति**। प्राक् तथाऽप्यपरोक्षीकृताव्यक्तानामित्यादिनैकं प्रयोजनमुक्तम्। अपरं च सप्रमाणकमाह—**सुव्रतानामिति**। बुद्ध्येत्युक्तप्रकारेणोपासीना यइतिशेषः। एतत्प्रयोजनं गीतायां न सूचितमिति न तत्रैवोक्तम् ॥ ५ ॥

**रा० भा०—'मम साधर्म्यमागताः' इति वक्ष्यते श्रूयते च। "निरञ्जनः परमं साम्यमुपैति" इति तथाक्षरशब्दनिर्दिष्टात्कूटस्थादन्यत्वं परस्य ब्रह्मणो वक्ष्यते। 'कूटस्थोक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः' इति अथ "परा यया तदक्षरमधिगम्यते" इति अक्षरविद्यायां तु "अक्षरशब्दनिर्दिष्टं परमेव ब्रह्म भूतयोनित्वादेः" तेषामव्यक्तासक्तचेतसां क्लेशोऽधिकतरः अव्यक्ता हि गतिः अव्यक्तविषया मनोवृत्तिः देहवद्भिर्देहात्माभिमानयुक्तैः दुःखेनावाप्यते देहवन्तो हि देहमेवात्मानं मन्यन्ते ॥ ५ ॥**

**अ० टी०**—किंच मदभिमताऽभावात्परंपराप्राप्तावपि तेषां क्लेशः, अप्रकटरूपाऽऽसक्तचित्तानां सेवार्थप्रकटितसर्वेन्द्रियवैकल्यात् क्लेशः अधिकतरो भवति आसक्तचित्तत्वाद्दर्शनाद्यभिलाषे सति तदभावादाधिक्यं भवति साधनदशायामपि। अत एवाधिकतरत्वमुक्तम्। फलमपि दुःखेन प्राप्यत इत्याह—**अव्यक्तेति**। देहवद्भिः देहात्मसेवमानवद्भिः अव्यक्ता गतिः अव्यक्तनिष्ठा गतिः दुःखं दुःखेन अवाप्यते प्राप्यते। हीति युक्तत्वाय। भगवत्सेवैकयोग्यदेहस्य व्यर्थगमनेन सा गतिर्दुःखेनैव प्राप्यते। प्राप्त्यनन्तरमप्यलौकिकदेहाद्यभावादव्यक्ततया प्रवेशे तदात्मकांशस्य पूर्वानुभूतलौकिकेन्द्रियरसस्मरणेन जले निमग्नस्य जलपानवद्दुःखं प्राप्यत इतिभावः ॥ ५ ॥

**नी० टी०**—अस्यागतेर्दुष्प्रापत्वमाह—**क्लेश इति**। यद्यपि सगुणविदामधिकः क्लेशोऽस्त्येव तथापि ते सालंबना ध्यायंति सोपानारोहक्रमेण परां काष्ठां प्रविशंति। येषां तु निरालंबं ध्यानमाकाशयुद्धसमं तेषां निर्विषये चेतः स्थिरीकरणेऽधिकतरः क्लेशोऽस्ति। तत्र क्रमिकध्यानप्रयोगः शुद्धे चिन्मात्रे विश्वरूपं माययाऽध्यस्तं तत्र च केवलमातिवाहिकं कृत्स्नं जडमाधिभौतिकमध्यस्तं। यथोक्तं वसिष्ठेन। 'आतिवाहिक एवायं त्वादृशैश्चित्तदेहकः॥ आधिभौतिकया बुद्ध्या गृहीतश्चिरभावनात्' इति अतिक्रम्य पाषाणादीन् वहति इष्टदेशं नयत्यभिमानिनमित्यतिवाहि सर्वत्राप्रतिहतगतिकं भूतसूक्ष्मं तेन निर्वृत्त आतिवाहिकोऽयं कृत्स्नः प्रपंचो यतश्चित्तदेहकः चित्तमेव देहः स्वरूपमस्येति स्वप्नतुल्य एव सन् चिरभावनात् वज्रपंजरवत् काठिन्येनोपेत आधिभौतिकया स्थूलभूतप्रभवया बुद्ध्या गृहीत इति श्लोकार्थः। एवं च यथा तीव्राभिनिवेशेन निरीक्ष्यमाणो रज्जूरगः स्वयं शाम्यति तदधिष्ठानभूता रज्जुश्चाविर्भवति तथा वस्तुतश्चिद्रूपायामपि माधवादिमूर्तौ जाड्यमध्यस्तं तामेवाभिनिवेशेन चिरकालं चर्मचक्षुषैव पश्यतस्तस्या मूर्तेर्जाड्यं तिरोधीयते चैतन्यमाविर्भवति अत एव बाणादयः स्वाराध्यैः सार्द्धं स्वामिभृत्यन्यायेन व्यवहरंतीति सर्वत्रोपाख्यायते। एवमचेतनाया मूर्तेरपि तत्त्वं विश्वरूपमेवेति मूर्त्तिमेवात्यादरेण पश्यंस्तस्यास्तत्त्वं विश्वरूपमवगच्छति यदपश्यदर्जुनो वासुदेवदेहे। एतदेव वितर्कजं प्रत्यक्षं प्रकृत्योक्तं भगवता योगभाष्यकारेण बादरायणेन। 'तत्परं प्रत्यक्षं तच्च श्रुतानुमानयोर्बीजमिति स्थूलालंबनः समाधिर्वितर्कः विश्वरूपस्याप्यस्मितामात्रेऽध्यासात् तस्यावलोकनेऽस्मितामात्रमवशिष्यते अस्मिताया अपि शुद्धायां चितावध्यस्तत्वात्तस्यामपि

समाहिते मनसि सहैव मनसाऽस्मिता तिरोधीयते शुद्धा चितिरेवावशिष्यते इति।' एवं व्यक्तासक्ताः सोपानारोहक्रमेण परां काष्ठां प्रतिपद्यंते ये तु अव्यक्तासक्ताः पक्षिवदकस्मादूर्ध्वं पदमारुरुक्षंति ते लयेन विक्षेपेण च भृशं बाध्यंते लयमेव च कदाचित्समाधित्वेनाभ्युपगच्छंतीति तेषां पराभवसंभावनाऽप्यस्तीत्यत उक्तं 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' इति हि यस्मादव्यक्ता निरालंबना गतिः पदप्राप्तिर्देहवद्भिर्देहाभिमानिभिर्दुःखं यथा स्यात्तथा अवाप्यते न तु सा सुखप्राप्येति भावः ॥ ५ ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ॥
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥

**शां० भा०**—ये त्विति। ये तु सर्वाणि कर्माणि मयीश्वरे संन्यस्य मत्परा अहं परो येषां ते मत्पराः सन्तोऽनन्येनैवाविद्यमानमन्यदालम्बनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यस्तेनानन्येनैव केन योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते ॥ ६ ॥

**शां० आ०**—यद्यक्षरोपासका मामेवाऽऽप्नुवन्तीति विशेष्यन्ते तत्किं सगुणोपासकास्त्वां नाऽऽप्नुवन्ति न तेषामपि क्रमेण मत्प्राप्तेरित्याह—**ये त्विति**। तुशब्दः शङ्कानिवृत्त्यर्थः ॥ ६ ॥

**आ० भा०**—मदुपासकानां भक्तानां न कश्चित्क्लेश इति दर्शयति—ये त्वित्यादिना। उक्तं च सौकरायणश्रुतौ। "उपासते ये पुरुषं वासुदेवमव्यक्तादेरीप्सितं किन्नु तेषाम्" इति। 'तेषामेकांतिनः श्रेष्ठास्ते चैवानन्यदेवताः। अहमेव गतिस्तेषां निराशीः कर्मकारिणाम्' इति च मोक्षधर्मे ॥ ६ ॥

**आ० ज०**—नन्वव्यक्तोपासकानां क्लेशातिशयो गीतायां प्रतीयते भगवदुपासकानां तु तदभावो न प्रतीयते अतस्तदेतत्सर्वमिति कथमुक्तमित्यतआह—**मदुपासकानामिति**। भक्तानामित्यनेन नान्यत्रात्यंतमादर इतिसूचयति। अत्रानन्येनैव योगेनेत्यादिना विनाऽव्यक्तोपासनमित्येतत्प्रतीयते। उपासन इत्येवोक्त्याऽतिशयोपासनाद्यभावः। न चिरादित्यनेन तत्रापीत्यादिकम्। तेषामहं समुद्धर्ता भवामीत्यनेन देवस्त्वित्यादिकं आगामिगीतावाक्यमपेक्ष्य प्राग्बुद्ध्यारोहाय तदुक्तमिति। अत्र श्रुत्यादिसंमतिं चाह—**उक्तंचेति**। तेषामार्तादीनां मध्ये गतिः साधनादिसंपादकः ॥ ६ ॥

**रा० भा०**—भगवन्तमुपासीनानां युक्ततमत्वं सुव्यक्तमाह। ये तु लौकिकानि देहयात्राशेषभूतानि देहधारणार्थानि चाशनादीनि कर्माणि वैदिकानि च यागदानहोमतपःप्रभृतीनि सर्वाणि सकारणानि सोद्देश्यानि अध्यात्मचेतसा मयि संन्यस्य मत्परा मदेकप्राप्याः अनन्येनैव योगेन मां ध्यायन्त उपासते ध्यानार्चनप्रणामस्तुतिकीर्तनादीनि स्वयमेवात्यन्तप्रियाणि प्राप्य समानि कुर्वन्तो मामुपासत इत्यर्थः ॥ ६ ॥

**अ० टी०**—अक्षरोपासकानां साक्षात्कारेऽपि क्लेशो मद्भक्तानां तु मत्स्वरूपध्यानेन मत्प्रतिमादिसेवतामप्यहमुद्धारं करोमीत्याह—**ये त्विति द्वाभ्याम्**। ये तु सर्वाणि लौकिकवैदिकादीनि मयि मन्निमित्तं संन्यस्य त्यागं कृत्वा मत्पराः अहमेव पर उत्कृष्टः प्राप्यो येषां तादृशाः सन्तोऽनन्येनैव योगेन, नैव अन्यो भजनीयो यस्मिंस्तादृशेन भक्तियोगेन मां ध्यायन्तः मद्ध्यानं कुर्वन्त उपासते सेवन्ते, मूर्त्यादिष्विति शेषः ॥ ६ ॥

**नी० टी०**—नन्वव्यक्तासक्तचेतसां क्लेशाधिक्येऽपि क्लेशांते सद्यः कैवल्यसिद्धिरस्तीति किं विलंबसाध्येन व्यक्तभावनेनेत्याशंक्याह—**येत्विति द्वाभ्यां**। सर्वाणि नित्यनैमित्तिकस्वाभाविकादीनि संन्यस्य समर्प्य मत्परा अहमेव परः सर्वकर्मभिः प्राप्यो येषां ते मत्परा मद्ध्यानपरा वा अनन्येन भेदशून्येन अहमेव भगवान्वासुदेव इति परमेश्वरेऽहंग्रहलक्षणेन योगेन चेतःसमाधानेन मां ध्यायंत उपासते तत्रैव ध्याने स्थैर्यं लभंते ॥ ६ ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

**शां० भा०**—तेषां किम्—तेषां मदुपासनैकपराणामहमीश्वरः समुद्धर्ता। कुत इत्याह मृत्युसंसारसागरात्, मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागर इव सागरो दुरुत्तरत्वात्तस्मान्मृत्युसंसारसागरादहं तेषां समुद्धर्ता भवामि न चिरात्किं तर्हि क्षिप्रमेव हे पार्थ मय्यावेशितचेतसां मयि विश्वरूप आवेशितं प्रवेशितं समाहितं चेतो येषां ते मय्यावेशितचेतसस्तेषाम् ॥ ७ ॥

**शां० आ०**—तेषां भगवद्ध्यायिनां किं फलतीति शङ्कामनुभाष्य फलमाह—**तेषामित्यादिना**। समुद्धर्ता सम्यगूर्ध्वं नेता ज्ञानावष्टम्भदानेनेत्यर्थः। मृत्युरज्ञानं मरणाद्यनर्थहेतुत्वात्तेन कार्यतया युक्तः संसारः ॥ ७ ॥

**आ० भा०**—॥ ७ ॥

**आ० ज०**—॥ ७ ॥

**रा० भा०**—तेषां मत्प्राप्तिविरोधितया मृत्युभूतात्संसाराख्यात् सागरादहमचिरेणैव कालेन समुद्धर्ता भवामि ॥ ७ ॥

**अ० टी०**—हे पार्थ मद्भक्त! मयि आसमन्तात् सर्वभावेनाऽऽवेशितं चेतो येषां तेषां मृत्युसंसारसागरात् वारंवारं मरणधर्मयुक्तशरीरप्रापकरूपात् अलौकिकभजनौपयिकस्वरूपदानेन उद्धर्ता, न चिरात् शीघ्रमेवाऽहं भवामि ध्याने मूर्तौ वा प्रकटो भवामीत्यर्थः ॥ ७ ॥

**नी० टी०**—तेषां ध्यायिनां न चिरात् शीघ्रमेवाहं समुद्धता समुद्धरणकर्त्ता यतस्ते मयि सगुणे विश्वरूपे आवेशितचेतसो भवंति अतो व्यक्तासक्ता अपि शीघ्रमेव परं पदमारोढुमर्हा इति नाव्यक्तेऽत्यंताभिनिवेष्टव्यमिति भावः ॥ ७ ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ॥
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥

**शां० भा०**—यत एवं तस्मात्—मय्येव विश्वरूप ईश्वरे मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय मय्येवाध्यवसायं कुर्वतीं बुद्धिमाधत्स्व निवेशय। ततस्ते किं स्यादिति शृणु निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि निवासं करिष्यस्येवातः शरीरपातादूर्ध्वं न संशयः संशयोऽत्र न कर्तव्यः ॥ ८ ॥

**शां० आ०**—भगवदुपासना विशिष्टफलेत्येवं यतः सिद्धमतो भगवन्निष्ठायां प्रयतितव्यमित्याह—**यत इति**। असंहिताकरणं श्लोकपूरणार्थम्। मनोबुद्ध्योर्भगवत्यवस्थापने प्रश्नपूर्वकं फलमाह—**तत इति**। भगवन्निष्ठस्य तत्प्राप्तौ प्रतिबन्धाभावं सूचयति—**संशयोऽत्रेति** ॥ ८ ॥

**आ० भा०**—॥ ८ ॥

**आ० ज०**—॥ ८ ॥

रा० भा०—अतोऽतिशयितपुरुषार्थत्वात्सुलभत्वादचिरलभ्यत्वाच्च मय्येव मन आधत्स्व मयि मनःसमाधानं कुरु मयि बुद्धिं निवेशय अहमेव परमप्राप्य इत्यध्यवसायं कुरु अत ऊर्ध्वं मय्येव निवसिष्यसि। अहमेव परमप्राप्य इत्यध्यवसायपूर्वकमनोनिवेशनानन्तरमेव मयि निवासिष्यसीत्यर्थः ॥ ८॥

अ० टी०—यतो ध्यानादिभिः सेवतामप्युत्तमफलप्राप्तिर्भवति तत्र साक्षान्मद्भजनकर्तृणां किं वाच्यमतस्त्वं मत्परो भवेत्याह—मयीति। मय्येव प्रकटरूप एव मनः संकल्पविकल्पात्मकम् आधत्स्व आसमन्तात् स्थैर्येण सर्वत आकृष्य स्थापय। बुद्धिं व्यवसायात्मिकां मय्येव निवेशय। अत ऊर्ध्वं बुद्धिप्रवेशानन्तरं मय्येव पुरुषोत्तमे निवसिष्यसि नितरां सेवादियोग्यतया निकट एव स्थास्यसि न संशयः अत्र न संदेहः। संशयं मा कुर्य्या इत्यर्थः ॥ ८ ॥

नी० टी०—यस्मादेवं तस्मान्मय्येव विश्वरूपे ईश्वर मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय मय्येवाध्यवसायं कुर्वतीं बुद्धिं निवेशय तत्फलं च। निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि वा संकरिष्यसि। अतः शरीरपातादूर्ध्वं न संशयः कर्तव्यः ॥ ८ ॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ॥
अभ्यासयोगेन ततो मामिच्छाऽऽप्तुं धनंजय ॥ ९ ॥

शां० भा०—अथेति। अथैवं यथाऽवोचाम तथा मयि चित्तं समाधातुं स्थापयितुं स्थिरमचलं न शक्नोषि चेत्ततः पश्चादभ्यासयोगेन चित्तस्यैकस्मिन्नालम्बने सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधानलक्षणस्तेनाभ्यासयोगेन मां विश्वरूपमिच्छ प्रार्थयस्वाऽऽप्तुं प्राप्तुं हे धनंजय ॥ ९ ॥

शां० आ०—मतप्रदर्शनपूर्वकं भगवत्प्राप्तावुपायान्तरमाह—अथेत्यादिना। एकमालम्बनं स्थूलं प्रतिमादि। समाधानं ततोऽभ्यन्तरे विश्वरूपे चित्तैकाग्र्यम् ॥ ९ ॥

आ० भा०—॥ ९ ॥

आ० ज०—॥ ९ ॥

रा० भा०—अथ सहसैव मयि स्थिरं चित्तं समाधातुं न शक्नोषि ततोऽभ्यासयोगेन मां प्राप्तुमिच्छन् स्वाभाविकानवधिकातिशयसौन्दर्यसौशील्यसौहार्दवात्सल्यकारुण्यमाधुर्य्यगाम्भीर्यौदार्य्यशौर्य्यवीर्यपराक्रमसर्वज्ञत्वसत्यकामत्वसत्यसंकल्पत्वसकलकारणत्वाद्यसंख्येयकल्याणगुणसागरे निखिलहेयप्रत्यनीके मयि निरतिशयप्रेमगर्भस्मृत्यभ्यासयोगेन स्थिरं चित्तसमाधानं लब्ध्वा मां प्राप्तुमिच्छ ॥ ९ ॥

अ० टी०—ननु मनश्चञ्चलत्वात् कथं त्वयि स्थिरं स्यादत आह—अथेति। धनञ्जयेतिसावधानार्थे संबोधनम्। अथचेत् मयि स्थिरं चित्तं समाधातुं न शक्नोषि समर्थो न भवसि तदा अभ्यासयोगेन मच्छ्रवणानुस्मरणादिरूपेण माम् आप्तुं प्राप्तुम् इच्छ यतस्व विचार्य प्रयत्नपरो भवेत्यर्थः ॥ ९ ॥

नी० टी०—विश्वरूपधारणायामशक्तं प्रति प्राह—अथेति। मयि विश्वेश्वरे विश्वरूपे अथ यदि चित्तं समाधातुं निवेशितुमचलं धारयितुं न शक्नोषि ततस्तर्ह्यभ्यासयोगेन चित्तस्यैकस्मिन्नाभ्यंतरे बाह्ये वा प्रतिमादावा-

लंबने सर्वतः समाहृत्य पुनःपुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधानलक्षणस्तेनाभ्यासयोगेन मां विश्वरूपमाप्तुं प्राप्तुमिच्छ प्रार्थयस्व हे धनंजय ॥ ९ ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ॥
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥

**शां० भा०**—अभ्यासेऽपीति। अभ्यासेऽप्यसमर्थोऽस्यशक्तोऽसि तर्हि मत्कर्मपरमो भव मदर्थं कर्म मत्कर्म तत्परमो मत्कर्मप्रधान इत्यर्थः। अभ्यासेन विना मदर्थमपि कर्माणि केवलं कुर्वन्सिद्धिं सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारेणावाप्स्यसि ॥ १० ॥

**शां० आ०**—द्वैताभिनिवेशादभ्यासाधीने योगेऽपि सामर्थ्याभावे पुनरुपायान्तरमाह—**अभ्यासेऽपीति**। अभ्यासयोगेन विना भगवदर्थं कर्माणि कुर्वाणस्य किं स्यादित्याशङ्क्याऽऽह—**अभ्यासेनेति**। सिद्धिर्ब्रह्मभावः। अपिरुक्तव्यवधिसूचनार्थः॥ १०॥

**आ० भा०**—॥ १० ॥

**आ० ज०**—॥ १० ॥

**रा० भा०**—अथैवंविधस्मृत्यभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव मदीयानि कर्माण्यालयनिर्माणोद्यानकरणप्रदीपारोपणमार्जनाभ्युक्षणोपलेपनपुष्पापहरणपूजनोद्वर्तननामकीर्तनप्रदक्षिणनमस्कारस्तुत्यादीनि तान्यत्यर्थप्रियत्वेनाचर अत्यर्थप्रियत्वेन मदर्थं कर्माणि कुर्वन्नप्यचिरादभ्यासयोगपूर्विकां मयि स्थिरां चित्तस्थितिं लब्ध्वा मत्प्राप्तिरूपां सिद्धिमवाप्स्यसि ॥ १० ॥

**अ० टी०**—एवं चित्तधारणार्थमभ्यासः साधनत्वेनोक्तस्तत्साधनमप्याह—**अभ्यास इति**। अभ्यासे निरन्तराऽनुस्मरणे अपिचेत् असमर्थोऽसि तदा मत्कर्मपरमः मत्प्रीतिहेतुपूजादिरूपाणि यानि तदनुष्ठानमेव परममुत्कृष्टं यस्य तादृशो भव। एवं मदर्थं मत्प्रीत्यर्थं नतु फलकामनया कर्माण्यपि कुर्वन् सिद्धिम् अभ्यासासिद्धिं प्राप्स्यसि ॥ १० ॥

**नी० टी०**—**अभ्यासेऽपीति**। अभ्यासे पूर्वश्लोकोक्ते मत्कर्म। 'श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनं ॥ अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम्' इति नवविधभजनात्मकं भगवत्प्रीत्यर्थं कर्म मत्कर्मशब्दितं तदेव परममावश्यकं यस्य तादृशो भव कर्माणि श्रवणादीनि सिद्धिं सत्वशुद्धिम् ॥ १० ॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ॥
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

**शां० भा०**—अथैतदिति। अथ पुनरेतदपि यदुक्तं मत्कर्मपरमत्वं तत्कर्तुमशक्तोऽसि मद्योगमाश्रितो मयि क्रियमाणानि कर्माणि संन्यस्य यत्करणं तेषामनुष्ठानं स मद्योगस्तमाश्रितः सन्सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं सर्वकर्मफलत्यागं ततोऽनन्तरं कुरु यतात्मवान्संयतचित्तः सन्नित्यर्थः ॥ ११ ॥

**शां० आ०**—भगवत्कर्मपरत्वमप्यशक्यमिति शङ्कते—**अथेति**। बहिर्विषयाकृष्टचेतस्त्वादित्यर्थः। तर्हि भगवत्प्राप्त्युपायत्वेन संयतचित्तो भूत्वा कर्मफलसंन्यासं कुर्वित्याह—**मद्योगमिति** ॥ ११ ॥

**आ० भा०**—॥ ११ ॥

**आ० ज०**—॥ ११ ॥

**रा० भा०**—अथ मद्योगमाश्रित्यैतदपि कर्तुं न शक्नोषि मद्गुणानुसंधानकृतं मदेकप्रियत्वाकारं भक्तियोगमाश्रित्य भक्तियोगाङ्कुररूपमेतन्मत्कर्मापि कर्तुं न शक्नोषि ततोक्षरयोगमात्मस्वभावानुसंधानरूपं परभक्तिजननं पूर्वषट्कोदितमाश्रित्य तदुपायतया सर्वकर्मफलत्यागं कुरु मत्प्रियत्वेन मदेकप्राप्यताबुद्धिर्हि क्षीणाशेषपापस्यैव जायते यतात्मवान् यतमनस्कः ततोऽनभिसंहितफलेन मदाराधनरूपेणानुष्ठितेन कर्मणा सिद्धेनात्मध्यानेन निवृत्ताविद्यादिसर्वतिरोधाने मच्छेषतैकस्वरूपे प्रत्यगात्मनि साक्षात्कृते सति मयि परा भक्तिः स्वयमेवोत्पद्यते । तथा च वक्ष्यते । 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । ' इत्यारभ्य 'विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते । ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ॥ समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । ' इति ॥ ११ ॥

**अ० टी०**—एतत्प्राप्त्यर्थमतिसुगमोपायमाह—**अथैतदिति** । अथचेत् एतदपि मदर्थकं कर्तुम् अशक्तोऽसि, न समर्थोऽसि स्वरूपाऽज्ञानात् तदा मद्योगं मम योगः संयोगो यस्मिन् यस्य वा तादृशं भक्तम् आश्रितः सन् यताऽऽत्मवान् तदेकपरचित्तो भूत्वा सर्वकर्मफलत्यागं संध्यावन्दनाग्निहोत्रादीनां स्वर्गादिरूपफलानां त्यागं कुरु चिन्तनं त्यजेत्यर्थः तत्फलानभिलाषे मदाज्ञया करणात् कर्मभिश्चित्तशुद्ध्या मद्भक्तोपादिष्टं ज्ञानं स्थिरीभविष्यति तेन मत्कर्मसिद्धिर्भविष्यतीतिभावः ॥ ११ ॥

**नी० टी०**—मद्योगं श्रवणादौ निष्ठां तर्हि पूर्वोक्तं श्रौतस्मार्त्तसर्वकर्मफलत्यागं कुर्वित्यर्थः । यतात्मवान् यतश्च नियमादिमांश्च आत्मवान् जितचित्तश्चेति यतात्मवान् ॥ ११ ॥

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ॥**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥**

**शां० भा०**—इदानीं सर्वकर्मफलत्यागं स्तौति—श्रेयो हि प्रशस्यतरं ज्ञानं कस्मादविवेकपूर्वकादभ्यासात्तस्मादपि ज्ञानाज्ज्ञानपूर्वकं ध्यानं विशिष्यते । ज्ञानवतो ध्यानादपि कर्मफलत्यागो विशिष्यत इत्यनुषज्यते । एवं कर्मफलत्यागात्पूर्वविशेषणवतः शान्तिरुपशमः सहेतुकस्य संसारस्यानन्तरमेव स्यान्न तु कालान्तरमपेक्षते । अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठानाशक्तौ सर्वकर्मणः फलत्यागः श्रेयःसाधनमुपदिष्टं न प्रथममेवातश्च श्रेयो हि ज्ञानमभ्यासादित्युत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते संपन्नसाधनानुष्ठानाशक्तावनुष्ठेयत्वेन श्रुतत्वात् । केन साधर्म्येण स्तुतित्वं "यदा सर्वे प्रमुच्यन्ते" इति सर्वकामप्रहाणादमृतत्वमुक्तं तत्प्रसिद्धम् । कामाश्च सर्वे श्रौतस्मार्तसर्वकर्मणां फलानि । तत्त्यागे च विदुषो ज्ञाननिष्ठस्यानन्तरैव शान्तिरिति सर्वकामत्यागसामान्यमज्ञकर्मफलत्यागस्यास्तीति तत्सामान्यात्सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था । यथाऽगस्त्येन ब्राह्मणेन समुद्रः पीत इतीदानींतना अपि ब्राह्मणा ब्राह्मणत्वसामान्यात्स्तूयन्ते । एवं कर्मफलत्यागात्कर्मयोगस्य श्रेयःसाधनत्वमभिहितम् ॥ १२ ॥

**शां० आ०**—उत्तरश्लोकतात्पर्यमाह—**इदानीमिति** । ज्ञानं शब्दयुक्तिभ्यामात्मनिर्श्चयः, अभ्यासो ज्ञानार्थश्रवणाभ्यासो निश्चयपूर्वको ध्यानाभ्यासो वा । तस्य विशिष्यमाणत्वे साक्षात्कारहेतुत्वं हेतुः । त्यागस्य विशिष्टत्वे हेतुमाह—**एवमिति** ।

प्रणिातु भगवानिति तस्मिन्कर्मसंन्यासपूर्वकमित्यर्थः । पूर्वविशेषणवतो नियतचित्तस्य पुंसो यथोक्तत्यागादित्यर्थः । अनन्तरमेवेत्युक्तं व्यनक्ति—**न त्विति** । ननु कर्मफलत्यागस्य सद्यःशान्तिकरत्वे सम्यग्धीरेव तथेति श्रुतिस्मृतिप्रसिद्धिर्विरुध्येत तत्राऽऽह—**अज्ञस्येति** । दीर्घेण कालेनाऽऽदरनैरन्तर्यानुष्ठिताद्ध्यानाद्वस्तुसाक्षात्कारद्वारा संसारदुःखोपशान्तेस्तथाविधाद्ध्यानात्त्यागस्य विशिष्टत्वोक्तेरतदीयस्तुतिरत्रेष्टेत्याह—**अतश्चेति** । तत्र हेतुमाह—**संपन्नेति** । संपन्नानि प्राप्तानि साधनान्यक्षरोपासनादीनि तेषां मध्ये पूर्वपूर्वस्यानुष्ठानाशक्तावुत्तरोत्तरस्यानुष्ठेयत्वेनोपदेशात्त्यागे चोपदेशपर्यवसानादित्यर्थः । त्यागे विशिष्टत्ववचनस्य केन साधर्म्येण तं प्रति स्तुतित्वमिति पृच्छति—**केनेति** । उत्तरमाह—**यदेति** । अमृतत्वमुक्तमथ मर्त्योऽमृतो भवतीति शेषादिति शेषः । कामप्रहाणस्यामृतत्वार्थत्वमथाकामयमान इत्यादावपि सिद्धमित्याह—**तदिति** । कामत्यागस्यामृतत्वहेतुत्वेऽपि कथं कर्मफलत्यागस्य तद्धेतुत्वमित्याशङ्क्याऽऽह—**कामाश्चेति** । कर्मफलत्यागादेव शान्तिश्चेज्ज्ञाननिष्ठोपेक्षितेत्याशङ्क्याऽऽह—**तत्यागे चेति** । तथाऽपि कथमज्ञस्य कर्मफलत्यागस्तुतिरित्याशङ्क्याऽऽह—**इति सर्वेति** । विद्यावतस्त्यागवदविद्वत्त्यागस्यापि त्यागत्वाविशेषाद्विशिष्टत्वोक्तिर्युक्तेति स्तुतिमुपसंहरति—**इति तत्सामान्यादिति** । किमर्था स्तुतिरित्याशङ्क्य त्यागे रुचिमुत्पाद्य प्रवर्तयितुमित्याह—**प्ररोचनार्थेति** । त्यागस्तुतिं दृष्टान्तेन स्पष्टयति—**यथेति** । फलत्यागः श्रेयोहेतुश्चेत्कर्मत्यागादपि फलत्यागसिद्धेरलं कर्मानुष्ठानेनेत्याशङ्क्याऽऽह—**एवं कर्मेति** । फलाभिलाषं त्यक्त्वा कर्मानुष्ठानस्यार्पितस्येश्वरे श्रेयोहेतुताया विवक्षितत्वान्नानुष्ठानानर्थक्यमित्यर्थः ॥ १२ ॥

**आ० भा०**—अज्ञानपूर्वादभ्यासाज्ज्ञानमेव विशिष्यते । ज्ञानमात्रात्सज्ञानं ध्यानम् । तथा च सामवेदे अनभिम्लानशाखायाम् । " अधिकं केवलाभ्यासाज्ज्ञानं तत्सहितं ततः ॥ ध्यानं ततश्चापरोक्षं ततः शांतिर्भविष्यति " इति । ध्यानात्कर्मफलत्याग इति तु स्तुतिः । अन्यथा कथमसमर्थोऽसीत्युच्यते । ' तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ' इति चोक्तम् । " सर्वाधिकं ध्यानमुदाहरंति ध्यानाधिके ज्ञानभक्ती परात्मन् ॥ कर्मफलाकांक्षमथो विरागस्त्यागश्च न ज्ञानकलाफलार्हाश्च " इति च काषायणशाखायाम् । वाक्यसाम्येऽप्यसमर्थविषयत्वोक्तेस्तात्पर्याभाव इतरत्र प्रतीयते । ध्यानादिप्राप्तिकारणत्वाच्च त्यागस्तुतिर्युक्ता केवलध्यानात्फलत्यागयुक्तं ध्यानमधिकम् । ध्यानयुक्तत्याग एव चात्रोक्तः । अन्यथा कथं त्यागाच्छांतिरनंतरमित्युच्यते । कथं च ध्यानादाधिक्यम् । तथा च गौपवनशाखायाम् । "ध्यानात्तु केवलात्त्यागयुक्तं तदधिकं भवेत्" इति । न हि त्यागमात्रानंतरमेव मुक्तिर्भवति । भवति च ध्यानयुक्तात् । केवलत्यागस्तुतिरेवमपि भवति । यथाऽनेनयुक्तो जेता नान्यथेत्युक्ते ॥ १२ ॥

**आ० ज०**—ननु ज्ञानमभ्यासस्य साधनं तत्कथं ततः श्रेयइत्यत आह—**अज्ञानेति** । एवेति केवलम् । ज्ञानाद्ध्यानं विशिष्यत इत्यसत् । सध्यानस्यापि ज्ञानस्य संभवात् । अज्ञानपूर्वस्य ध्यानस्य संभवाच्चेत्यत आह—**ज्ञानमात्रादिति** । उपपत्तिलब्धमर्थं श्रुत्याऽपि द्रढयति—**तथा चेति** । तत्सहितं ज्ञानसहितम् ध्यानम् । ततो ज्ञानमात्रादधिकम् । ध्यानात्कर्मफलत्यागो विशिष्यत इत्येतदन्यथाप्रतीतिनिरासाय व्याख्याति—**ध्यानादिति** । त्यागस्य प्रशस्तत्वमेवानेन लक्ष्यते न प्रतीतार्थे तात्पर्यमित्यर्थः । कुत इत्यत आह—**अन्यथेति** । अथैतदप्यशक्तोऽसि कर्तुमिति । ध्यानात्प्रत्यवरे कर्मयोगेऽप्यशक्तस्य कर्मफलत्यागः कथमन्यथा-ध्यानादाधिक्ये सत्युपदिश्येत इत्यर्थः । कर्मसंन्यासात्कर्मफलरागसंन्यासात् कर्मयोगोऽपि विशिष्यते किमुत ध्यानयोगः वक्ष्यमाणकर्मादिसर्वाधिकम् । परात्मन् परमात्मविषये विरागः शोभनाध्यासाभावः । ननु तयोऽस्त्विति सर्वाधिकमिति चेत्तयोरपि वाक्यत्वात्कथं तद्विरोधेन ध्यानादितिवाक्यस्य स्वार्थे तात्पर्याभावो व्याख्यातइत्यत आह—**वाक्येति** । वाक्यत्वेन साम्येऽप्युपपत्तिसाहित्येन प्राबल्यादित्यर्थः । इतरत्र ध्यानादितिवाक्यस्य प्रतीतेऽर्थे युक्त्यंतरं चाह—**ध्यानादीति** । त्यागो हि ध्यानज्ञाननिवृत्तकर्मानुष्ठानप्राप्तौ कारणत्वेन परीक्ष्य लोकानित्यादौ उच्यते । न च फलात्साधनं श्रेयः । अतोऽपीयं स्तुतिरेवेत्यर्थः । अनेन लक्ष्यार्थोऽपि निष्कृष्योक्तो भवति । प्रकारांतरेण व्याख्याति—**केवलेति** । त्यागराहितात् ध्यानात् । ननु कुतो ध्यानादिति केवलस्य निर्धारणं कुतश्च कर्मफलत्याग इति तत्साहितध्यानलक्षणात्यागस्य वा ध्यानसाहित्येनोपस्कार इत्यतः प्रतिज्ञापूर्वकमाह—**ध्यानेति** । त्यागयुक्तं ध्यानं ध्यानयुक्तस्त्याग इति द्विविधोत्त्योक्तं प्रकारद्वयं सूचयति । अन्यथा । केवलत्यागांगीकारे कथं चेत्यत्राप्यन्यथेति वर्तते । न केवलमन्यथानुपपत्त्याऽयमर्थः सिद्धः किंतर्हि श्रुत्यापीत्याह—**तथा चेति** । आद्यामन्यथानुपपत्तिमुपपादयति—**न हीति** । ततश्चापरोक्ष्यमित्युक्तश्रुतिविरोधादिति भावः । उक्तांगीकारे कथमेतदनुपपत्त्यभाव इत्यत आह—**भवति**

**चेति** । त्यागादिति संबंधः । ज्ञानमात्रव्यवधानेनेति भावः । द्वितीयानुपपत्तिस्तु तयोस्त्वित्युपपादितैव । नन्वथैतदप्यशक्तोऽसीत्यनेन केवलत्यागो विहितः । तत्प्ररोचनाय श्रेयो हीति तस्य स्तुतिरुपक्रांता । नच केवलध्यानात् तत्फलत्यागयुक्तं ध्यानमधिकमिति व्याख्याने केवलत्यागस्तुतिर्लभ्यते किंतु तद्युक्तस्य ध्यानस्यैव । अतः पूर्वसंगतत्वात्पूर्वमेव व्याख्यानं युक्तम् । ननु द्वितीयं असंगतेरित्यत आह—**केवलेति** । यथाऽनेन भृत्येन युक्तो राजा रिपूणां जेता नाऽन्यथेत्युक्ते भृत्यस्य स्तुतिर्लभ्यते तथैवमप्यस्मिन्नपि व्याख्याने केवलत्यागस्तुतिर्युक्ता । ध्यानस्य ध्यानांतराधिक्ये तत्सहायस्य हेतुत्वेनोक्तत्वादित्यर्थः ॥ १२ ॥

**रा० भा०**—अत्यर्थप्रीतिविरहितात्कर्कशरूपात्स्मृत्यभ्यासादक्षरयाथात्म्यानुसंधानपूर्वकं तदापरोक्षज्ञानमेवात्महितत्वे विशिष्यते आत्मा परोक्षज्ञानादप्यनिष्पन्नरूपात्तदुपायभूतात्मध्यानमेवात्महितत्वे विशिष्यते ध्यानादप्यनिष्पन्नरूपात्तदुपायभूतं फलत्यागेनानुष्ठितं कर्मैव विशिष्यते अनभिसंहितफलादनुष्ठितात्कर्मणोनन्तरमेव निरस्तपापतया मनसः शान्तिर्भविष्यति शान्तेन मनसात्मनोध्यानं संपत्स्यते ध्यानाच्च तदापरोक्ष्यं तदापरोक्ष्यात्परा भक्तिरिति भक्तियोगाभ्यासाशक्तस्य आत्मनिष्ठैव श्रेयसी आत्मनिष्ठस्याप्यशान्तमनसो निष्ठाप्राप्त्यन्तर्गतात्मज्ञानानभिसंहितफलकर्मनिष्ठैव श्रेयसीत्यर्थः ॥ १२ ॥

**अ० टी०**—एवमुक्तानामुत्तरोत्तरकर्त्तव्यानां स्वरूपमाह—**श्रेय इति** । अभ्यासात् केवलचित्ताकर्षणेनाऽनुस्मरणरूपात् ज्ञानं श्रेयः श्रेष्ठमित्यर्थः । अतो ज्ञानयुक्तोऽभ्यास उत्तम इतिभावः । ज्ञानात् केवलात् ध्यानं मत्स्वरूपाऽनुचिन्तनात्मकं विशिष्टं भवतीत्यर्थः । तेन ज्ञानाऽभ्यासयुक्तं ध्यानमुत्तमामितिभावः । ध्यानात् केवलात् कर्मफलत्याग उत्तमः । तेन ज्ञानाभ्यासध्यानसाहितमदर्थकमत्कर्मकरणमुत्तममित्यर्थः । यत एवमतस्तादृशत्यागादनन्तरं शीघ्रमेव शान्तिः मद्भक्तिस्थितिरूपा भवेदितिशेषः ॥ १२ ॥

**नी० टी०**—इममेव त्यागं सर्वपुरुषार्थमूलत्वात्स्तौति—**श्रेयो हीति** । अभ्यासान्निदिध्यासनात् ज्ञानं श्रवणमननजं परोक्षं श्रेयः । ज्ञानादपि ध्यानं विष्णोः श्रवणकीर्त्तनादि विशिष्यते । ततोऽपि कर्मफलत्यागः श्रेयान् । यस्मादनंतरमव्यवधानेन शांतिर्मोक्षोऽस्ति चित्तशुद्ध्याद्युत्पादनद्वारेण । अत्र बाह्यं साधनं सुकरत्वात्पूर्वपूर्वापेक्षया प्रशस्तमित्युच्यते तत्रैव प्रवृत्त्यतिशयाय । यद्वा श्रवणाद्यभ्यासात् तज्जं ज्ञानं तत्त्वनिश्चयात्मकं श्रेयः । ततोऽपि ज्ञातस्यार्थस्य साक्षात्कारार्थं ध्यानं श्रेयः । ततोपि कर्मफलत्यागः । योगी हि सर्वकर्मत्यागी प्रजहाति यदा कामानिति प्रोक्तः । अयमपि कर्मफलत्यागेन कामान् जहात्येवेति तेन सम इति स्तूयते ॥ १२ ॥

## अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ॥
## निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥

**शां० भा०**—अत्र चाऽऽत्मेश्वरभेदमाश्रित्य विश्वरूप ईश्वरे चेतःसमाधानलक्षणो योग उक्त ईश्वरार्थं कर्मानुष्ठानादि च । 'अथैतदप्यशक्तोऽसि' इत्यज्ञानकार्यसूचनान्नाभेददर्शिनोऽक्षरोपासकस्य कर्मयोग उपपद्यत इति दर्शयति । तथा कर्मयोगिनोऽक्षरोपासनानुपपत्तिं दर्शयति भगवान् 'ते प्राप्नुवन्ति मामेव' इति । अक्षरोपासकानां कैवल्यप्राप्तौ स्वातन्त्र्यमुक्त्वेतरेषां पारतन्त्र्यमीश्वराधीनतां दर्शितवांस्तेषामहं समुद्धर्तेति । यदि हीश्वरस्याऽऽत्मभूतास्ते मता अभेददर्शित्वादक्षररूपा एव त इति समुद्धरणकर्मवचनं तान्प्रत्यपेशलं स्यात् । यस्माच्चार्जुनस्यात्यन्तमेव हितैषी भगवांस्तस्य सम्यग्दर्शनान्वितं कर्मयोगं भेददृष्टिमन्तमेवोपदिशति । न चाऽऽत्मानमीश्वरं प्रमाणतो बुद्ध्वा कस्यचिद्गुणभावं जिगमिषति कश्चिद्विरोधात् । तस्मादक्षरोपासकानां सम्यग्दर्शननिष्ठानां संन्यासिनां त्यक्तसर्वैषणानाम् 'अद्वेष्टा सर्वभूतानाम्' इत्यादिधर्मपूगं साक्षादमृतत्वकारणं वक्ष्यामीति प्रवर्तते—अद्वेष्टा सर्वभूतानां

न द्वेष्टाऽऽत्मनो दुःखहेतुमपि न किंचिद्द्वेष्टि सर्वाणि भूतान्यात्मत्वेन हि पश्यति। मैत्रो मित्रभावो मैत्री मित्रतया वर्तत इति मैत्रः। करुण एव च करुणा कृपा दुःखितेषु दया तद्वान्करुणः सर्वभूताभयप्रदः संन्यासीत्यर्थः। निर्ममो ममप्रत्ययवर्जितो निरहंकारो निर्गताहंप्रत्ययः। समदुःखसुखः समे दुःखसुखे द्वेषरागयोरप्रवर्तके यस्य स समदुःखसुखः क्षमी क्षमावानाक्रुष्टोऽभिहतो वाऽविक्रिय एवाऽऽस्ते ॥ १३ ॥

**शां० आ०**—संप्रत्यद्वेष्टेत्याद्यवतारयितुं वृत्तं कीर्तयति—**अत्र चेति**। तयोश्चेदात्यन्तिकोऽभेदो तर्हीश्वरे मनःसमाधानरूपो योगोऽत्यन्ताभेदे ध्यातृध्येयत्वाभावात्। न चात्यन्ताभेदे कर्मानुष्ठानं तत्फलत्यागो वा परस्परं तदयोगादित्यर्थः। भगवदुक्तिसामर्थ्यादपि कर्मयोगादि नाभेददृष्टिमतो भवतीत्याह—**अथेति**। अक्षरोपासकस्य कर्मयोगायोगवत्कर्मयोगिनोऽक्षरोपासनानुपपत्तिरपि दर्शितेत्याह—**तथेति**। अक्षरोपासकाः सम्यग्धीनिष्ठा यथाज्ञानं भगवन्तमेवाऽऽप्नुवन्ति न तथा कर्मिणः साक्षात्तदाप्तावुचितास्तथा च कर्मिणो नाक्षरोपासनसिद्धिरित्यर्थः। इतश्चाक्षरोपासनं कर्मानुष्ठानं न चैकत्र युक्तमित्याह—**अक्षरेति**। नन्वक्षरोपासकवदन्येषामपीश्वरात्मत्वाविशेषात्कुतस्तदधीनत्वं तत्राऽऽह—**यदीति**। कर्मयोगस्याक्षरोपास्तेश्च युगपदेकत्रायोगे हेत्वन्तरमाह—**यस्माच्चेति**। कुरु कर्मैवेत्यादाविति शेषः। किंचाक्षरोपासको वाक्यादीश्वरमात्मानं वेत्ति नासौ क्रियायां गुणत्वेन कर्तृत्वमनुभवति गुणत्वेश्वरत्वयोरेकत्र व्याघातादतोऽपि नाक्षरोपासनं कर्मानुष्ठानं चैकत्र युक्तमित्याह—**न चेति**। अक्षरोपास्तिकर्मयोगयोरेकत्र पर्यायायोगे फलितमाह—**तस्मादिति**। अज्ञानां कर्मिणां वक्ष्यमाणधर्मजातस्य साकल्येनायोगादक्षरनिष्ठानामेवेदमुच्यतेऽविरुद्धांशस्य तु सर्वार्थत्वमिष्टमेवेत्यर्थः। सर्वेषां भूतानां मध्ये यो दुःखहेतुस्तं विद्वानपि द्वेष्ट्येवेत्याशङ्क्याऽऽह—**आत्मन इति**। तत्र हेतुः—**सर्वाणीति**। सर्वभूतानामित्युभयतः संबध्यते। मम प्रत्ययवर्जितो देहेऽपीति शेषः। वृत्तस्वाध्यायकृताहंकारान्निष्क्रान्तत्वमाह—**निर्गतेति** ॥ १३ ॥

**आ० भा०**—॥ १३ ॥

**आ० ग०**—॥ १३ ॥

**रा० भा०**—अनभिसंहितफलकर्मनिष्ठस्योपादेयान् गुणानाह—अद्वेष्टा सर्वभूतानां द्विषतां द्वेषं कुर्वतामपि सर्वेषां भूतानामद्वेष्टा मदपराधानुगुणमीश्वरप्रेरितानि एतानि भूतानि द्विषन्ति उपकुर्वन्ति चेत्यनुसंदधानस्तेषु द्विषत्सूपकुर्वत्सु च सर्वभूतेषु मैत्रीं मतिं कुर्वन् मैत्रः तेष्वेव दुःखितेषु करुणां कुर्वन् करुणः निर्ममदेहेन्द्रियेषु तत्सम्बन्धिषु च निर्ममो निरहंकारः देहात्माभिमानरहितः तत एव समदुःखसुखः सुखदुःखागमयोः सांकल्पिकयोः हर्षोद्वेगरहितः क्षमी स्पर्शप्रभवयोरवर्जनीययोरपि तयोर्विकाररहितः ॥ १३ ॥

**अ० टी०**—तस्य स्वरूपमाह—**अद्वेष्टेति**। सर्वभूतानां प्राणिमात्राणां मत्क्रीडात्मकत्वात् अद्वेष्टा आधिक्याद्यदर्शने द्वेषरहितः, मैत्रः भक्तेषु मित्रतया वर्त्तमानः, करुणः भक्तिरहितेषु संसारदुःखनिश्चयात् करुणः उपदेशादिदानार्थं करुणावान्। एवकारेण न कदाचित् कर्कशस्तिष्ठेदितिज्ञापितम्। निर्ममः उपदेशदानानन्तरं तेषु सर्वत्र च ममत्वरहितः, निरहंकारः स्वस्योत्तमत्वज्ञानेनाऽहंकाररहितः, समदुःखसुखः समे दुःखसुखे वियोगसंयोगात्मके यस्य क्षमी क्षमावान् दुष्टकृतावमानादिसहनशीलः ॥ १३ ॥

**नी० टी०**—परमप्रकृतस्याक्षरस्योपासकं स्तौति तद्गुणकथने हि साधकानां तेषु गुणेष्वादरो भविष्यतीति बुद्ध्याऽऽह—**अद्वेष्टेति**। अद्वेष्टा चेदुदासीनः स्यान्नेत्याह मैत्रः मित्रमेव मैत्रो नतूदासीनः कदाचिदपि। नन्वन्यस्मिन् शत्रौ सति कथं मैत्रत्वं स्यात्तत्राह—**करुण इति**। दुःखदातारमपि करुणया न बाधितुमीष्टे अपि तु त्रातुमेवेच्छति एतेन सर्वभूताभयप्रदः संन्यासी उक्तः। अत एव तस्य निर्मम इति विशेषणं युज्यते। मुख्यमक्षरविदो लक्षणं निरहंकार इति अहंकारो हि सर्वानर्थनिदानं स एव निर्गतो यस्मात् स निरहंकारः अत एव समे

दुःखसुखे यस्य । "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति श्रुतेः । क्षमी क्षमावान् परिभवप्राप्तावपि स्वस्थचित्तः । अन्योऽपि मुमुक्षुरेतान् धर्माननुतिष्ठेदित्यर्थः ॥ १३ ॥

**संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ॥**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥**

**शां० भा०**—संतुष्ट इति । संतुष्टः सततं नित्यं देहस्थितिकारणस्य लाभेऽलाभे चोत्पन्नालंप्रत्ययस्तथा गुणवल्लाभे विपर्यये च संतुष्टः सततं योगी समाहितचित्तो यतात्मा संयतस्वभावो दृढनिश्चयो दृढः स्थिरो निश्चयोऽध्यवसायो यस्याऽऽत्मतत्त्वविषये स दृढनिश्चयो मय्यर्पितमनोबुद्धिः संकल्पात्मकं मनोऽध्यवसायलक्षणा बुद्धिस्ते मय्येवार्पिते स्थापिते यस्य संन्यासिनः स मय्यर्पितमनोबुद्धिर्य ईदृशो मद्भक्तः स मे प्रियः 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति सप्तमेऽध्याये सूचितं तदिह प्रपञ्च्यते ॥ १४ ॥

**शां० आ०**—अक्षरोपासकस्य ज्ञानवतो विशेषणान्तराण्याह—**संतुष्ट इति** । सततमिति सर्वत्र संबध्यते, कार्यकरणसंघातः स्वभावशब्दार्थः, स्थिरत्वं कुतर्कादिनाऽनभिभवनीयत्वम् । मद्भक्तो मद्भजनपरो ज्ञानवानिति यावत् । ज्ञानवतो भगवत्प्रियत्वे प्रमाणमाह—**प्रियो हीति** । किमर्थं तर्हि पुनरुच्यते तत्राऽऽह—**तदिहेति** ॥ १४ ॥

**आ० भा०**—॥ १४ ॥

**आ० ज०**—॥ १४ ॥

**रा० भा०**—संतुष्टः यदृच्छोपनतेन येन केनापि देहधारणद्रव्येण संतुष्टः सततं योगी सततं प्रकृतिवियुक्तात्मानुसंधानपरः यतात्मा नियमितमनोवृत्तिः दृढनिश्चयः अध्यात्मशास्त्रोदितेष्वर्थेषु दृढनिश्चयः मय्यर्पितमनोबुद्धिः भगवान् वासुदेव एवानभिसंहितफलेनानुष्ठितेन कर्मणाराध्यते आराधितश्च ममात्मापरोक्ष्यं साधयिष्यतीति मय्यर्पितमनोबुद्धिः एवंभूतो मद्भक्तः एवंभूतेन कर्मयोगेन मां भजमानो यः स मे प्रियः ॥ १४ ॥

**अ० टी०**—किंच—**संतुष्ट इति** । सततं संतुष्टः निरन्तरं हृदयस्थितमत्स्वरूपेण आनन्दयुक्तः योगी मच्चिन्तनशीलः यताऽऽत्मा वशीकृतस्वभावः, दृढनिश्चयः दृढः कामाद्यनुपहतो मत्परीक्षितदुःखादिष्वचलो मयि सर्वकरणसमर्थत्वेन निश्चयो यस्य, मयि अर्पिते मनोबुद्धी येन, य एतादृशः स मद्भक्तः मे प्रियः मदिङ्गितकरणादितिभावः ॥ १४ ॥

**नी० टी०**—संतुष्टो यदृच्छालाभेनैव संजातालंप्रत्ययः । सततं सर्वदा योगी श्रवणादौ समाहितचित्तः । यतात्मा संयतशरीरेंद्रियादिसंघातः । दृढः स्थिर आत्मतत्त्वविषये निश्चयो यस्य स दृढनिश्चयोऽसंभावनाशून्यो दृढश्रद्धावान् । मयि निर्गुणे ब्रह्मण्यर्पिते निहिते प्रविलापिते वा मनः संकल्पादिरूपं बुद्धिरध्यवसायस्ते उभे येन स मय्यर्पितमनोबुद्धिः । एतादृशो यो मे मम भक्तः स मे मम प्रियः आत्मत्वादेव स परमप्रेमास्पदं 'ज्ञानी त्वात्मैव मे मतम्' इत्युक्तं । एतेन पूर्वश्लोकोक्ताया निरहंकारतायाः साधनान्युक्तानि ॥ १४ ॥

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥**

**शां० भा०**—यस्मादिति। यस्मात्संन्यासिनो नोद्विजते नोद्वेगं गच्छति न संतप्यते न संक्षुभ्यते लोकः। तथा लोकान्नोद्विजते च यः। हर्षामर्षभयोद्वेगैर्हर्षश्चामर्षश्च भयं चोद्वेगश्च तैर्हर्षामर्षभयोद्वेगैर्मुक्तः। हर्षः प्रियलाभेऽन्तःकरणस्योत्कर्षो रोमाञ्चनाश्रुपातादिलिङ्गः, अमर्षोऽसहिष्णुता भयं त्रास उद्वेग उद्विग्नता तैर्मुक्तो यः स च मे प्रियः॥ १५॥

**शां० आ०**—उद्वेगादिराहित्यमपि ज्ञानवतो विशेषणमित्याह—**यस्मादिति**। न केवलमुद्वेगं प्रत्यपादानत्वमेव संन्यासिनोऽनुपपन्नं किंतु तत्कर्तृत्वमपीत्याह—**तथेति**। असहिष्णुता परकीयप्रकर्षस्येति शेषः। त्रासस्तस्करादिदर्शनाधीनः, उद्विग्नत्वमचेतनाचेतनाधीनस्य लोकादितिगतत्वात्॥ १५॥

**आ० भा०**—॥ १५॥

**आ० ज०**—॥ १५॥

**रा० भा०**—यस्मात्कर्मनिष्ठात्पुरुषान्निमित्तभूताल्लोको नोद्विजते यो लोकोद्वेगकरं कर्म किंचिदपि न करोतीत्यर्थः। लोकाच्च निमित्तभूताद्यो नोद्विजते यमुपदिश्य सर्वो लोको नोद्वेगकरं कर्म करोति सर्वाविरोधित्वनिश्चयात् अत एव कंचनप्रति हर्षेण कंचनप्रत्यमर्षेण कंचनप्रति भयेन कंचनप्रति उद्वेगेन मुक्तः एवंभूतोऽपि यः सोऽपि मे प्रियः॥ १५॥

**अ० टी०**—किंच—**यस्मादिति**। यस्मात् सकाशाल्लोकः न उद्विजते ध्रुवादिवत् सकामभजनादिना लोकः क्लेशं नाप्नोति च पुनः लोकात् स्वस्योत्सादनार्थं तपआदियत्नवतो यो न उद्विजते भयं न प्राप्नोतीत्यर्थः। च पुनः हर्षाऽमर्षभयोद्वेगैर्मुक्तः हर्षः स्वेष्टाऽऽप्त्या तद्राहित्येन सर्वत्र भगवदात्मकत्वेनेतरास्फूर्त्या सर्वदैव हर्षाऽऽत्मक एवेत्यर्थः। अमर्षः परोत्कर्षासहिष्णुता तद्राहित्येन भगवल्लीलाऽऽत्मकज्ञानवानित्यर्थः। भयं त्रासस्तदभावेन भगवद्रक्षणसामर्थ्यज्ञानवानित्यर्थः। उद्वेगश्चित्तलोभस्तेन सेवादिसमये चित्तचाञ्चल्यरहित इत्यर्थः। एतादृशो य स मे प्रियः॥ १५॥

**नी० टी०**—स च निरहंकारो द्विविधः समाधिस्थो व्युत्थितश्च तयोर्लक्षणं क्रमेणाह द्वाभ्यां—**यस्मादिति**। यस्मात् समाधिस्थत्वेन काष्ठसमाल्लोको नोद्विजते न त्रस्यति लोकादपि यो निर्मनस्कत्वान्नोद्विजते अत एव हर्षं इष्टलाभे सति मनस उत्फुल्लता। अमर्षः असहिष्णुता। भयमात्मोच्छेदशंका। उद्वेगस्तत्कृतैव व्याकुलता। एतैर्निर्मनस्कत्वादेव स्वयमेव मुक्तस्त्यक्तः न त्वेतान् स्वयं त्यक्तुं यतते साधकवत् ईदृशो यो मद्भक्तः स च मे प्रियः॥ १५॥

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः॥**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥ १६॥**

**शां० भा०**—अनपेक्ष इति। देहेन्द्रियविषयसंबन्धादिष्वपेक्षाविषयेष्वनपेक्षो निःस्पृहः शुचिर्बाह्येनाभ्यन्तरेण च शौचेन संपन्नो दक्षः प्रत्युत्पन्नेषु कार्येषु सद्यो यथावत्प्रतिपत्तुं समर्थः। उदासीनो न कस्यचिन्मित्रादेः पक्षं भजते यः स उदासीनो यतिर्गतव्यथो गतभयः। सर्वारम्भपरित्यागी, आरभ्यन्त इत्यारम्भा इहामुत्रफलभोगार्थानि कामहेतूनि कर्माणि सर्वारम्भास्तान्परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥ १६॥

**शां० आ०**—निरपेक्षत्वादिकमपि ज्ञानिनो विशेषणमित्याह—**अनपेक्ष इति** । आदिपदमपेक्षणीयसर्वसंग्रहार्थं, प्रतिपत्तव्येषु प्रतिपत्तुं कर्तव्येषु कर्तुं चेत्यर्थः । परैस्ताडितस्यापि गता व्यथा भयमस्येति व्युत्पत्तिमाश्रित्याऽऽह—**गतेति** । न च क्षमीत्यनेन पौनरुक्त्यं प्रत्युत्पन्नायामपि व्यथायामपकर्तृष्वनपकर्तृत्वं क्षमित्वमित्यभ्युपगमात् ॥ १६ ॥

**आ० भा०**—**सर्वारंभपरित्यागीत्यादेः सामान्यविशेषव्याख्यानव्याख्येयभावेनापुनरुक्तिः । हर्षादिभिर्मुक्त इत्युक्ते कादाचित्कमपि भवतीति यो न हृष्यतीत्युक्तम् । उपचारपरिहारार्थं पूर्वम् । आधिक्यज्ञानार्थं भक्त्यभ्यासः । ये तु सर्वाणि कर्माणीत्यादेः प्रपंचएषः ॥ १६ ॥**

**आ० ज०**—पुनरुक्तिदोषमाशंक्य परिहरति—**सर्वेति** । सर्वारंभपरित्यागी शुभाशुभपरित्यागीत्यादौ सामान्यविशेषभावेन संतुष्टः सततं संतुष्टो येन केनचिदित्यादौ व्याख्यानव्याख्येयभावेन हर्षामर्षभयोद्वेगैर्मुक्तो यो न हृष्यतीत्यत्र नोक्तं प्रकारद्वयं संभवतीत्यत आह—**हर्षादिभिरिति** । निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालांतरे हर्षादिकं भवतीत्याशंक्य क्रियाप्रबंधे विहितेन लटा प्रतिपादयतीत्यर्थः । तर्हीदमेवास्तु किंतेनेत्यत आह—**उपचारेति** । सिद्धेऽर्थे वचनमुपचारं तात्पर्यद्योतनेन परिहरतीत्यर्थः । यो मद्भक्तइति भक्तिः पुनःपुनरुच्यते । तत्प्रयोजनमाह—**आधिक्येति** । अद्वेष्टेत्यादिनोक्तेषु सर्वधर्मेषु भक्तेरितिशेषः । अद्वेष्टेत्यादेः संगत्यदर्शनात्तामाह—**ये त्वेति** । प्रपंचस्तदुपलक्षितस्याभिधानम् । अक्षरोपासकानधिकृत्यैतदुच्यत इत्यसत् । सन्निहितसंबंधे सति व्यवहितसंबंधग्रहणायोगात् 'यो मद्भक्तः स मे प्रियः' इत्यादिवचनाच्च ॥ १६ ॥

**रा० भा०**—**अनपेक्ष आत्मव्यातिरिक्ते कृत्स्ने वस्तुन्यनपेक्षः शुचिः शास्त्रविहितद्रव्यवर्धितकायः दक्षः शास्त्रीयक्रियोपादानसमर्थः अन्यत्रोदासीनः गतव्यथः शास्त्रीयक्रियानिवृत्तावनर्जनीयशीतोष्णवर्षस्पर्शादिदुःखेषु व्यथारहितः सर्वारम्भपरित्यागी शास्त्रीयव्यतिरिक्तसर्वकर्मारम्भपरित्यागी य एवंभूतो मद्भक्तः स मे प्रियः ॥ १६ ॥**

**अ० टी०**—किंच । अनपेक्षः सेवादौ स्वमनोऽतिरिक्ताऽपेक्षारहितः समर्थ इतियावत्, शुचिः मत्स्मरणवान्, दक्षः भजनस्वरूपज्ञानवान्, उदासीनः लोकेषु, गतव्यथः मानसिकक्लेशरहितः सर्वारम्भपरित्यागी दृष्टश्रुतफलककर्माऽनुद्यमानस्वभावः एतादृशो मद्भक्तः मद्भजनकर्त्ता स मे प्रियः ॥ १६ ॥

**नी० टी०**—अस्यैव व्युत्थानावस्थामाह—**अनपेक्ष इति** । सुखप्राप्तौ दुःखहाने वा तत्साधने वा लिप्साशून्योऽनपेक्षः । शुचिः बाह्याभ्यंतरशौचवान् पुण्यापुण्याभ्यामलिप्तो वा । दक्षः भगवद्भजनादावनलसः । उदासीनो मानापमानादौ समवृत्तिः । अत एव गता व्यथा चेतःपीडा यस्य स गतव्यथः । सर्वारंभपरित्यागी संन्यासित्वादेव यो मद्भक्तः स मे प्रियः ॥ १६ ॥

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ॥**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥**

**शां० भा०**—**किंच—यो न हृष्यतीष्टप्राप्तौ न द्वेष्टयनिष्टप्राप्तौ न शोचति प्रियवियोगे न चाप्राप्तं काङ्क्षति शुभाशुभे कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥१७॥**

**शां० आ०**—द्वेषहर्षादिराहित्यमपि ज्ञानिनो लक्षणमित्याह—**किंचेति** । सर्वारम्भपरित्यागीत्यनेन विहितकाम्यत्यागस्योक्तत्वाद्विहितादन्यत्र मा संकोचीति विशिनष्टि—**शुभाशुभेति** ॥ १७ ॥

**आ० भा०**—॥ १७ ॥

**आ० ज०**—॥ १७ ॥

**रा० भा०—**यो न हृष्यति यन्मनुष्याणां हर्षनिमित्तं प्रियजातं तत्प्राप्य यः कर्मयोगी न हृष्यति यच्चाप्रियं तत्प्राप्य यो न द्वेष्टि यच्च मनुष्याणां शोकानिमित्तं भार्य्यापुत्रवित्तक्षयादिकं तत्प्राप्य न शोचति तथाविधमप्राप्तं च न काङ्क्षति यच्च मनुष्याणां हर्षनिमित्तभार्यावित्तादि तत् अप्राप्तं च न काङ्क्षतीत्यर्थः। शुभाशुभपरित्यागी पापवत्पुण्यस्यापि बन्धहेतुत्वाविशेषादुभयपरित्यागी य एवंभूतो भक्तिमान्स मे प्रियः ॥ १७ ॥

अ० टी०—किंच—**यो नेति**। यः लौकिकप्रियाऽऽप्त्या न हृष्यति। तथैवाऽप्रियादिना न द्वेष्टि। तथाच सेवार्थवस्तुनाशे न शोचति न तदाकाङ्क्षति। शुभाऽशुभे स्वर्गनरकादिरूपे त्यजति। सर्वत्र भगवदिच्छां ज्ञात्वा लीलात्वेन व्यवहरतीत्यर्थः। एतादृशो यो भक्तिमान् भक्तियुक्तः स मे प्रियः ॥ १७ ॥

नी० टी०—एतमेव श्लोकं व्याचष्टे त्रिभिः श्लोकैः—**यो नेति**। इष्टलाभे सति न हृष्यति। अनिष्टप्राप्तौ न द्वेष्टि। इष्टवियोगे सति न शोचति। इष्टसंयोगमनिष्टपरिहारं वा न कांक्षति अनपेक्षत्वात्। शुभं कल्याणं पुण्यं च अशुभममंगलं पापं च ते उभे परित्यक्तुं शीलमस्य स शुभाशुभपरित्यागी एतेन शुचित्वं व्याख्यातं। भक्तिमान् भक्तौ सततोद्युक्त इति दक्ष इत्यर्थः ॥ १७ ॥

**समः शत्रौ च मित्रे च तथा मानापमानयोः ॥**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥**

**शां० भा०—**सम इति। समः शत्रौ च मित्रे च तथा मानापमानयोः पूजापरिभवयोः शीतोष्णसुखदुःखेषु समः सर्वत्र च सङ्गवर्जितः ॥ १८ ॥

शां० आ०—अद्वेष्टेत्यादिना द्वेषादिविशेषाभाव उक्तः, संप्रति सर्वत्रैवाविकृतचित्तत्वमुच्यते। सर्वत्र चेतने स्त्र्यादावचेतने च चन्दनादावित्यर्थः ॥ १८ ॥

**आ० भा०—॥ १८ ॥**

आ० ज०—॥ १८ ॥

**रा० भा०—**अद्वेष्टा सर्वभूतानामित्यादिना शत्रुमित्रादिषु द्वेषादिरहितत्वमुक्तम्। अत्र तेषु सन्निहितेष्वपि समचित्तत्वं ततो व्यतिरिक्तो विशेष उच्यते। आत्मनि स्थिरमतित्वेन निकेतनादिष्वसक्त इत्यनिकेतः तत एवं मानापमानादिष्वपि समः य एवंभूतो भक्तिमान्स मे प्रियः ॥ १८ ॥

अ० टी०—किंच—**सम इति**। शत्रौ द्वेषकर्तरि, मित्रे अनुरागवति समः स्वतो द्वेषानुरागरहित इत्यर्थः। तथा मानाऽपमानयोरपि समः शीतोष्णयोर्दैहिकयोः सुखदुःखयोः पुत्रजन्ममरणादिरूपयोः समः संगवर्जितः लौकिकाऽऽसक्तिरहितः ॥ १८ ॥

नी० टी०—उदासीनत्वं व्याचष्टे—**सम इति**। गतव्यथत्वमुपपादयति संगविवर्जित इति संगी हि व्यथते न तु तद्वर्जित इत्यर्थः ॥ १८ ॥

**तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ॥**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥**

**शां० भा०**—किंच—तुल्यनिन्दास्तुतिः निन्दा च स्तुतिश्च निन्दास्तुती ते तुल्ये यस्य स तुल्यनिन्दास्तुतिर्मौनी मौनवान्संयतवाक्संतुष्टो येन केनचिच्छरीरस्थितिमात्रेण। तथा चोक्तम्—"येन केनचिदाच्छन्नो येन केनचिदाशितः। यत्रक्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः" इति। किंचानिकेतो निकेत आश्रयो निवासो नियतो न विद्यते यस्य सोऽनिकेतो नागार इत्यादिस्मृत्यन्तरात्। स्थिरमतिः स्थिरा परमार्थवस्तुविषया मतिर्यस्य स स्थिरमतिर्भक्तिमान्मे प्रियो नरः॥ १९॥

**शां० आ०**—वाग्यमत्वादिविशेषणमपि ज्ञाननिष्ठस्यास्तीत्याह—**किंचेति**। निन्दा दोषसंकीर्तनं, स्तुतिर्गुणगणनम्। देहस्थितिमात्रफलेनान्नादिना ज्ञानिनः संतुष्टत्वे स्मृतिं प्रमाणयति—**तथा चेति**। नियतनिवासराहित्यमपि ज्ञानवतो विशेषणमित्याह—**किंचेति**। 'न कुड्यां नोदके सङ्गो न चैले न त्रिपुष्करे। नागारे नाऽऽसने नान्ने यस्य वै मोक्षवित्तु सः' इति स्मृतिमुक्तेऽर्थे प्रमाणयति—**नेत्यादिना**। पुनःपुनर्भक्तेर्ग्रहणमपवर्गमार्गस्य परमार्थज्ञानस्योपायत्वार्थम्॥ १९॥

**आ० भा०**—॥ १९॥

**आ० ज०**—॥ १९॥

**रा० भा०**—॥ १९॥

**अ० टी०**—तुल्ये निन्दास्तुती यस्य निन्दितो न व्यथति स्तुतो न हृष्यति। स्वयं च न कंचन निन्दति नच स्तौति। मौनी वशवाक् येनकेनचिद्भगवदिच्छाप्राप्तेन संतुष्टः, अनिकेतः गृहाद्यासक्तिरहितः, स्थिरमतिः मयीत्यर्थः। एतादृशो यो भक्तिमान् भक्तियुक्तो नरः स मे प्रियः प्रियो भवतीत्यर्थः॥ १९॥

**नी० टी०**—सर्वारंभपरित्यागीत्येतद्व्याचष्टे—**तुल्येति**। शिष्टेषु विगीतो न स्यामिति वा लोकेषु प्रख्यातः स्यामिति वा इदं मे भूयादिति वा कामयमानः किंचिदारभते न त्वयं तुल्यनिंदास्तुतित्वात्संतुष्टत्वाच्च मौनी संन्यासी अत एवानिकेतो गृहशून्यः। कुटीमपि वासार्थं नारभते यतः स्थिरमतिः स्थितप्रज्ञो भक्तिमान्योगी मे मम प्रियो नरः पुरुषः॥ १९॥

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते॥**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥ २०॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः॥ १२॥

**शां० भा०**—अद्वेष्टा सर्वभूतानामित्यादिनाऽक्षरस्योपासकानां निवृत्तसर्वैषणानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रक्रान्तमुपसंह्रियते—ये तु संन्यासिनो धर्म्यामृतं धर्मादनपेतं धर्म्यं च तदमृतं च तदमृतत्वहेतुत्वादिदं यथोक्तमद्वेष्टा सर्वभूतानामित्यादिना पर्युपासतेऽनुतिष्ठन्ति श्रद्दधानाः सन्तो मत्परमा यथोक्तोऽहमक्षरात्मा परमो निरतिशया गतिर्येषां ते मत्परमा मद्भक्ताश्चोत्तमां परमार्थज्ञानलक्षणां भक्तिमाश्रितास्तेऽतीव मे प्रियाः। प्रियो हि ज्ञानिनोऽत्यर्थमिति यत्सूचितं तद्व्याख्यायेहोपसंहृतं

भक्तास्तेऽतीव मे प्रिया इति। यस्माद्धर्म्यामृतमिदं यथोक्तमनुतिष्ठन्भगवतो विष्णोः परमेश्वरस्यातीव मे प्रियो भवति तस्मादिदं धर्म्यामृतं मुमुक्षुणा यत्नतोऽनुष्ठेयं विष्णोः प्रियं परं धाम जिगमिषुणेति वाक्यार्थः॥ २०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये भक्तियोगो नाम द्वादशोऽध्यायः॥ १२॥

**शां० आ०—**अद्वेष्टेत्यादिधर्मजातं ज्ञानवतो लक्षणमुक्तं तदुपपादितमनूद्योपसंहारश्लोकमवतारयति—**अद्वेष्टेत्यादिना**। चतुर्थपादस्य तात्पर्यमाह—**प्रियो हीति**। यद्यपि यथोक्तं धर्मजातं ज्ञानवतो लक्षणं तथाऽपि जिज्ञासूनां ज्ञानोपायत्वेन यत्नादनुष्ठेयमिति वाक्यार्थमुपसंहरति—**यस्मादिति**। तदेवं सोपाधिकाभिध्यानपरिपाकान्निरुपाधिकमनुसंदधानस्याद्वेष्टा सर्वभूतानामित्यादिधर्मविशिष्टस्य मुख्यस्याधिकारिणः श्रवणाद्यावर्तयतस्तत्त्वसाक्षात्कारसंभवात्ततो मुक्त्युपपत्तेस्तद्धेतुवाक्यार्थधीविषयत्वयोग्यस्तत्पदार्थोऽनुसंधेय इति सिद्धम्॥ २०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने द्वादशोऽध्यायः॥ १२॥

**आ० भा०—**पिंडीकृत्योपसंहरति—ये तु धर्म्यामृतामिति। धर्मो विष्णुस्तद्विषयं धर्म्यम्। धर्म्यं मृत्यादिसंसारनाशकं चेति धर्म्यामृतम्। श्रदास्तिक्यम्। 'श्रन्नामास्तिक्यमुच्यते' इत्यभिधानम्। तद्दधानाः श्रद्दधानाः॥ २०॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये द्वादशोध्यायः॥ १२॥

**आ० ज०—**ये त्वित्युक्तमेव किमर्थमुच्यत इत्यतआह—**पिंडीकृत्येति**। धर्म्यामृतमित्येतदप्रतीतार्थं व्याख्यातुं धर्मशब्दं तावद्व्याख्याति—**धर्मइति**। तद्विषयं तदुपासनांगत्वात् धर्मादनपेतं धर्म्यं धर्मश्च विष्णुः। नादृष्टम् प्रवृत्तस्यासंभवात्। निवृत्तस्यैतत्साधनत्वात्। इदानीममृतशब्दं व्याकुर्वन् धर्म्यामृतमिति कर्मधारयोऽयमित्याह—**धर्म्यमिति**। नमृतं अमृतं नञ् विरुद्धार्थेमृतशब्दश्चोपलक्षक इत्यर्थः। श्रद्दधानाइत्येतद्व्युत्पादयति—**श्रदिति**। श्रच्छब्दस्योपसंख्यानमित्युपसर्गत्वेनोपसंख्यायमानस्याप्यस्य सत्ववाचित्वमविरुद्धम्। उपसर्गत्वस्य कार्यविशेषार्थत्वात्॥ २०॥

इति श्रीमदानंदतीर्थभगवत्पादविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वादशोऽध्यायः॥ १२॥

**रा० भा०—**तस्मादात्मनिष्ठात् मद्भक्तियोगनिष्ठस्य श्रैष्ठ्यं प्रतिपादयन् यथोपक्रममुपसंहरति। धर्म्यं चामृतं चेति धर्म्यामृते। ये तु प्राप्य समं प्रापकं भक्तियोगं यथोक्तं 'मय्यावेश्य मनो ये माम्' इत्यादिनोक्तेन प्रकारेणोपासते ते भक्ता अतितरां मे प्रियाः॥ २०॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते गीताभाष्ये द्वादशोऽध्यायः॥ १२॥

**अ० टी०—**उक्तभक्तिरूपमुपसंहरति—**येत्विति**। य इतिसामान्योक्त्या नात्रवर्णादिनियमः किंतु ये केचन भाग्यवन्त इदं पुरत उक्तं धर्म्याऽमृतम् अक्षयं मत्प्रसादाऽऽत्मकफलरूपं यथोक्तं श्रद्दधानाः मदुक्तं सत्यमिति ज्ञानवन्तो मत्परमाः मदेकनिष्ठाः सन्तः पर्युपासते मां सेवन्ते ते भक्ता मे अतीव स्वात्मनः प्रिया भवन्तीत्यर्थः। 'नाऽहमात्मानमाशास' इतिवत्॥ २॥

'एवमर्जुनमासिञ्चद्भक्तियोगाऽमृतोक्तिभिः। सर्वसंशयमाच्छिद्य लोकोद्धारपरो हरिः॥ १॥'

इतिश्रीभगवद्गीताऽमृततरङ्गिण्यां द्वादशोऽध्यायः॥ १२॥

**नी० टी०**—मुक्तलक्षणान्येव मुमुक्षोः साधनत्वेन विधत्ते—येत्विति । ये मुमुक्षवः तु पूर्वोक्तमुक्तापेक्षया विलक्षणाः इदमद्वेष्टा सर्वभूतानामित्यादिना ग्रंथेन प्रतिपादितं धर्मजातं तदेवामृतस्य मोक्षस्य साधनत्वादमृतं धर्मामृतं यथोक्तमुक्तानतिक्रमेण पर्युपासते साकल्येनानुतिष्ठंति श्रद्दधानाः श्रद्धायुक्ताः मत्परमाः अहमेव भगवान्वासुदेवोऽक्षराख्यः सर्वविशेषरहितः परमानंदरूपः परमः पार्यंतिकः प्राप्यो येषां ते मत्परमाः भक्ताः शांतिदांत्यादिमंतो मद्भजनशीलास्तेऽतीव मे मम प्रियाः ज्ञानी तु भगवत आत्मैव परिशेषादतीव प्रियत्वं भक्तेष्वेव पर्यवसन्नं यो मुक्तानां स्वाभाविको धर्मः स मुमुक्षुणा यत्नतोऽनुष्ठेय इत्यर्थः यथोक्तं वार्तिके । 'उत्पन्नात्मप्रबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ॥ अयत्नतो भवंत्येव न तु साधनरूपिणः' इति समाप्त उपासनाप्रधानस्तत्पदार्थविवेकः । अतःपरं वाक्यार्थविचारो जीवब्रह्माभेदप्रतिपादको भविष्यति ॥ २० ॥

इति भीष्मपर्वणि नैलकंठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे द्वादशोऽध्यायः ॥ १२ ॥

( श्लोकानामादितः समष्ट्यङ्काः—४६० )

**इति मध्यमषट्कं समाप्तम् ।**

# तृतीयं षट्कम् ( ज्ञानकाण्डम् )

**॥ अथ त्रयोदशोऽध्यायः ॥ १३ ॥**

**श्रीभगवानुवाच—इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ॥**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥**

**शां० भा०**—सप्तमेऽध्याये सूचिते द्वे प्रकृती ईश्वरस्य । त्रिगुणात्मिकाऽष्टधा भिन्नाऽपरा संसारहेतुत्वात्परा चान्या जीवभूता क्षेत्रज्ञलक्षणेश्वरात्मिका । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्धारणार्थं क्षेत्राध्याय आरभ्यते । अतीतानन्तराध्याये चाद्वेष्टा सर्वभूतानामित्यादिना यावदध्यायपरिसमाप्तिस्तावत्तत्त्वज्ञानिनां संन्यासिनां निष्ठा यथा ते वर्तन्त इत्येतदुक्तं, केन पुनस्ते तत्त्वज्ञानेन युक्ता यथोक्तधर्माचरणाद्भगवतः प्रिया भवन्तीत्येवमर्थश्चायमध्याय आरभ्यते । प्रकृतिश्च त्रिगुणात्मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते सोऽयं संघात इदं शरीरं तदेतत्—इदमिति सर्वनाम्नोक्तं विशिनष्टि शरीरमिति। हे कौन्तेय! क्षतत्राणात्क्षयात्क्षरणात्क्षेत्रवद्वाऽस्मिन्कर्मफलनिर्वृत्तेः क्षेत्रमिति । इतिशब्द एवंशब्दपदार्थकः क्षेत्रमित्येवमभिधीयते कथ्यते । एतच्छरीरं क्षेत्रं यो वेत्ति विजानात्यापादतलमस्तकं ज्ञानेन विषयीकरोति स्वाभाविकेनौपदेशिकेन वा वेदनेन विषयीकरोति विभागशस्तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञ इति । इतिशब्द एवंशब्दपदार्थक एव पूर्ववत्क्षेत्रज्ञ इत्येवमाहुः । के तद्विदस्तौ क्षेत्रक्षेत्रज्ञौ ये विदन्ति ते तद्विदः ॥ १ ॥

आ० भा०—॥ २ ॥

आ० ज०—॥ २ ॥

रा० भा०—देवमनुष्यादिसर्वक्षेत्रेषु वेदितृत्वैकाकारं क्षेत्रज्ञं च मां विद्धि मदात्मकं विद्धि । क्षेत्रमपि मां विद्धीत्युक्तमित्यवगम्यते यदा क्षेत्रं क्षेत्रज्ञविशेषणतैव स्वभावतया तदपृथक्सिद्धेस्तत्सामानाधिकरण्येनैव निर्दिष्टं तथा क्षेत्रं क्षेत्रज्ञं च मद्विशेषणतैकस्वभावतया मदपृथक्सिद्धेर्मत्सामानाधिकरण्येनैव निर्देश्यौ विद्धि । वक्ष्यति। क्षेत्रात् क्षेत्रज्ञाच्च वद्धमुक्तोभयावस्थात् क्षराक्षरशब्दनिर्दिष्टादर्थान्तरत्वं परस्य ब्रह्मणो वासुदेवस्य । 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥' इति पृथिव्यादिसंघातरूपस्य क्षेत्रस्य क्षेत्रज्ञस्य च भगवच्छरीरतैकस्वभावस्वरूपतया भगवदात्मकत्वं श्रुतयो वदन्ति । "यः पृथिव्यां तिष्ठन् पृथिव्यन्तरोयं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति । सत आत्मान्तर्याम्यमृत" इत्यारभ्य "य आत्मनि तिष्ठन्नात्मनोन्तरोयमात्मा न वेद । यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति । स त आत्मान्तर्याम्यमृत"इत्याद्याः इदमेवान्तर्यामितया सर्वक्षेत्रज्ञानामात्मत्वेनावस्थानं भगवत्सामानाधिकरण्येन व्यपदेशहेतुः । 'अहमात्मा गुडाकेश सर्वभूताशयः स्थितः । न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।' इति । पुरस्तादुपरिष्टाच्चाभिधाय मध्ये सामानाधिकरण्येन व्यपदिशति । 'आदित्यानामहं विष्णुः' इत्यादिना यदिदं क्षेत्रक्षेत्रज्ञयोर्विवेकविषयं तयोर्मदात्मकत्वविषयं च ज्ञानमुक्तं तदेवोपादेयं ज्ञानमिति मे मतं केचिदाहुः। 'क्षेत्रज्ञं चापि मां विद्धि' इति सामानाधिकरण्येनैकत्वमवगम्यते ततश्चेश्वरस्यैव सतोऽज्ञानात् क्षेत्रज्ञत्वमिव भवतीत्यभ्युपगन्तव्यं तन्निवृत्त्यर्थश्चायमेकत्वोपदेशः । अनेन चाप्ततमभगवदुपदेशेन रज्जुरियं न सर्प इत्याप्तोपदेशेन सर्पत्वभ्रमनिवृत्तिवत् क्षेत्रज्ञत्वभ्रमो निवर्त्तत इति ते प्रष्टव्याअयमुपदेष्टा भगवान् वासुदेवः परमेश्वरः किमात्मयाथात्म्यसाक्षात्कारेण निवृत्ताज्ञानः उत नेति । निवृत्ताज्ञानश्चेत् निर्विशेषचिन्मात्रैकस्वरूप आत्मन्यतद्रूपाध्यासासम्भावनया कौन्तेयादिभेददर्शनं तान्प्रत्युपदेशादिव्यापारश्च न संभवति । अथात्मयाथात्म्यसाक्षात्काराभावादनिवृत्ताज्ञानः तर्हि तस्याज्ञत्वादेवात्मज्ञानोपदेशारम्भो न संभवति। 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इत्युक्तम् । अत एवमादिवादा अनाकलितश्रुतिस्मृतीतिहासपुराणन्यायसदाचारस्ववाक्यविरोधिभिः स्ववचःस्थापनदुराग्रहैरज्ञानिभिर्जगन्मोहनाय प्रवर्त्तिता इत्यनादरणीयाः। अत्रेदं तत्त्वम्। अचिद्वस्तुनश्चिद्वस्तुनः परस्य ब्रह्मणो भोग्यत्वेन भोक्तृत्वेन ईशितृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः । "अस्मान्मायी सृजते विश्वमेतत्, तस्मिंश्चान्यो मायया सन्निरुद्धः । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । क्षरं प्रधानममृताक्षरं हरः । क्षरात्मानावीशते देव एकः"। अमृताक्षरं हर इति भोक्ता निर्दिश्यते प्रधानं भोग्यत्वेन हरतीति हरः । "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः। प्रधानक्षेत्रज्ञपतिर्गुणेशः । पतिर्विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् । ज्ञाज्ञौ द्वावजावीशानीशौ । नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। भोक्ता भोग्यं प्रेरितारं च मत्वा पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति । अजामेकां

लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्यः ॥ गौरनाद्यन्तवती सा जनित्री भूतभाविनी । समाने वृक्षे पुरुषो निमग्नोनीशया शोचति विमुह्यमानः ॥ जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः " इत्याद्याः । अत्रापि 'अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥ जीवभूतां महाबाहो ययेदं धार्यते जगत् । सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ॥ कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् । प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ॥ भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् । मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥ हेतुनानेन कौन्तेय जगद्विपरिवर्तते । प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥ मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । संभवः सर्वभूतानां ततो भवति भारत ॥ " इति । कृत्स्नजगद्योनिभूतं महद्ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्ममचिद्वस्तु यत्तस्मिंश्चेतनाख्यं गर्भं संयोजयामि ततो मत्संकल्पकृताचिदचित्संसर्गादेव देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां संभवो भवतीत्यर्थः । श्रुतावपि भूतादिसूक्ष्मं ब्रह्मेति निर्दिष्टं तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इति । एवं भोग्यभोक्तृरूपेणावस्थितयोः सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपुरुषस्य चात्मतत्त्वमाहुः काश्चन श्रुतयः । " यः पृथिव्यां तिष्ठन् पृथिव्यन्तरोऽयं पृथिवी न वेद, यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति " इत्यारभ्य " य आत्मनि तिष्ठन्नात्मनोन्तरोयमात्मा न वेद, यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति । स त आत्मान्तर्याम्यमृत " इति तथा " यः पृथिवीमन्तरे संचरन्यस्य पृथिवी शरीरम्, यं पृथिवी न वेद " इत्यारभ्य " योऽक्षरमन्तरे संचरन् यस्याक्षरम् शरीरं यमक्षरं न वेद । यो मृत्युमन्तरे संचरन्यस्य मृत्युः शरीरम् । यं मृत्युर्न वेद । एष सर्वभूतान्तरात्मापहतपाप्मा । दिव्यो देव एको नारायणः " अत्र मृत्युशब्देन तमःशब्दवाच्यं सूक्ष्मावस्थमाचिद्वस्त्वभिधीयते । अस्यामेवोपनिषदि " अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते । तमः परदेव एकीभूय तिष्ठति " इति वचनात् " अन्तः प्रविष्टोजः सृजते, अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा " इति च एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्य्यावस्थं कारणावस्थं जगत्स एवेत्याहुः। तथा " सदेव सौम्येदमग्रमासीदेकमेवाद्वितीयं ब्रह्म । तदैक्षत बहु स्यां प्रजायेयेति । अन्तः प्रविष्टो यः तत्तेजोऽसृजत " इत्यारभ्य " सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो " इति तथा "सोऽकामयत बहु स्यां प्रजायेयेति। स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत " इत्यारभ्य "सत्यं चानृतं च सत्यमभवत् " इत्यत्रापि श्रुत्यन्तरसिद्धचिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः । " हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् । विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्" इति च अनेन जीवेनात्मनानुप्रविश्येति जीवस्य ब्रह्मात्मकत्वं तदनुप्रविश्य सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं चेत्यनेनैकार्थ्यादात्मशरीरभावनिबन्धनमिति विज्ञायते एवंभूतं यन्नामरूपव्याकरणं तद्धचेतर्त्ताहि " अव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियते " इत्यत्र चोक्तम् अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात्कार्यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततयैकविज्ञानेन सर्वविज्ञानं समभिहितमुपपन्नतरम् " हन्ताहमिमाः तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य

नामरूपे व्याकरवाणीति" तिस्रो देवता इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात् सर्वे वाचकाः शब्दाः अचिज्जीवविशिष्टपरमात्मन एव वाचकाः इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यं वृत्तम् अतः स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत् सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्मैव कारणमिति जगतो ब्रह्मोपादानत्वेऽपि संसृष्टस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासंकरोऽप्युपपन्नतरः। यथा शुक्लकृष्णरक्ततन्तुसंघातोपादानत्वेऽपि विचित्रपटस्य तत्तत्तन्तुप्रवेश एव शौक्ल्यादिसंयोग इति कार्यावस्थायामपि कारणवत्सर्वत्र चासंकरः तथा चिदचिदीश्वरसंघातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियंतृत्वनियम्यत्वाद्यसंकरः तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्संगतानां कारणत्वं कार्यत्वं च इह तु चिदचितोः सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतैकपदार्थत्वात्स प्रकारः परमपुरुष एव कारणं कार्यं च स एव सर्वदा सर्वशब्दवाच्य इति विशेषः स्वभावभेदः तदसंकरश्च तत्र चात्र च तुल्यः। एवं च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावादविकृतत्वमुपपन्नं स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयावस्थानात कार्यत्वमप्युपपन्नम् अवस्थान्तरापत्तिरेव हि कार्यतानिर्गुणवादश्च परस्य ब्रह्मणो हेयगुणसंबन्धादुपपद्यते "अपहतपाप्मा विज्वरो विमृत्युर्विशोको विजिघत्सो पिपास" इति हेयगुणान्प्रतिषिध्य "सत्यकामः सत्यसङ्कल्प" इति कल्याणगुणान्विदधतीयं श्रुतिरेव अन्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति ज्ञानस्वरूपं ब्रह्मेति वादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य परस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयं स्वप्रकाशतया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः "यः सर्वज्ञः स सर्ववित्, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। विज्ञातारमरे केन विजानीयात्" इत्यादिका ज्ञातृत्वमावेदयन्ति "सत्यं ज्ञानमनन्तम्" इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्वरूपत्वम् "सोऽकामयत बहु स्यां प्रजायेय। तदैक्षत बहु स्याम् तन्नामरूपाभ्यां व्याक्रियते। आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं भवति। सर्वं तं परादात्। योऽन्यत्रात्मनः सर्वं वेद। तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इति ब्रह्मैव स्वसंकल्पाद्विचित्वस्थिरत्वसस्वरूपतया नानाप्रकारमवस्थितमिति तत्प्रत्यनीका ब्रह्मात्मकवस्तुनानात्वमिति प्रतिषिध्यते "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। नेह नानास्ति किंचन। यत्र हि द्वैतमिव भवति। तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्। तत्केन कं पश्येत्" इत्यादिना न पुनः "बहु स्यां प्रजायेय" इति श्रुतिसिद्धस्वसंकल्पकृतं ब्रह्मणो नानानामरूपभोक्तृत्वेन नानाप्रकारत्वमपि निषिध्यते यत्र तु "अस्य सर्वमात्मैवाभूत्" इति निषेधवाक्यारम्भे च "तत्स्थापितं तस्य वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद" इत्यादिना एवं चिदचिदीश्वराणां स्वरूपभेदं स्वभावभेदं च वदन्तीनां च तासां कार्यकारणभावं कार्यकारणयोरन्यत्वं वदन्तीनां च सर्वासां श्रुतीनामविरोधः। श्रुतिभिरेव ज्ञायत इति ब्रह्मज्ञानवादस्य औपाधिकब्रह्मभेदवादस्याप्यन्यस्यान्यायमूलकस्य सकलश्रुतिविरुद्धस्य न कथंचिदवकाशो विद्यत इत्यलमतिविस्तरेण॥ २॥

अ० टी०—भगवान् कृपयाऽत्रोत्तरमाह—इदमिति। हे कौन्तेय कृपापात्र! इदं शरीरं दृश्यमानं मरणादिधर्मयुक्तं क्षेत्रं ज्ञानादिप्ररोहस्थानं लीलार्थं स्वांशजीवोत्पत्तिस्थानं तद्विदा अभिधीयते कथ्यत

इत्यर्थः । एतत् याथातथ्येन यो वेत्ति तं तद्विदः क्षेत्रविदा ज्ञानिनः क्षेत्रज्ञं प्राहुः । अन्योक्तिकथनेन तथा न भवतीतिज्ञापितम्॥अथाऽर्जुनज्ञानार्थं स्वमते यथा तत्स्वरूपमस्ति तथाऽऽह—क्षेत्रज्ञमिति । क्षेत्रज्ञं बीजम् अपि-शब्देनाणुरूपमपि मां मदंशं रसानुभवार्थं सर्वक्षेत्रेषु चकारेण मद्रूपेषु स्थितं विद्धि जानीहि । भारतेतिसंबोधनं वि-श्वासार्थम् । क्षेत्रक्षेत्रज्ञयोर्मदंशत्वेन लीलार्थत्वेन यज्ज्ञानं तत् मम मतं संमतमित्यर्थः । एतद्विपरीतं देहादीनां क-र्मादिजन्यत्वं तज्ज्ञानवत्त्वं जीवस्य क्षेत्रज्ञत्वम् असंबद्धमित्यर्थः स्वमतोक्त्या ज्ञापितः ॥ २ ॥

**नी० टी०**—तमेवंलक्षणमुपाधितो निष्कृष्टं क्षेत्रज्ञं चात् क्षेत्रमपि मां परमेश्वरमेव उभयरूपेण संतं विद्धि "तत्त्वमस्यहं ब्रह्मास्मि ब्रह्मैवेदं सर्वं सर्वं खल्विदं ब्रह्म" इति शास्त्रात् । यस्मादुभयात्माऽहं तस्मात्क्षेत्रक्षेत्रज्ञयोर्य-ज्ज्ञानं क्षेत्रस्य बाध्यत्वेन क्षेत्रज्ञस्य सर्वबाधावधिभूतत्वेन च यज्ज्ञानमापरोक्ष्येण तत्त्वनिश्चयस्तदेव ज्ञानं मम मद्विषयं सम्यग्ज्ञानं एतयोरेव ज्ञानं ब्रह्मज्ञानमिति मतं निश्चितं ब्रह्मविद्भिः॥"नेह नानास्ति किंचन" इति क्षेत्रस्य बाधात् "नान्यो-तोऽस्ति द्रष्टा" इति क्षेत्रज्ञादन्यस्य द्रष्टुर्निषेधाच्च। यद्यपि सर्वस्य ब्रह्माभिन्नत्वाद्यत्किंचिदपि ज्ञानं तत्सर्वं ब्रह्मविषयमेव भवति। तथापि रज्जुं सर्पात्मना पश्यतो नतु रज्जुविषयं सर्पविषयं वा सम्यग्ज्ञानमस्ति। नापि तस्य ज्ञानस्य रज्जु-व्यतिरेकेण विषयांतरं वास्तवमस्ति । किंतु यदा सर्पबाधेन रज्जुतत्त्वमधिगच्छति तदैव सर्पं मिथ्यायमिति सम्य-ग्जानाति रज्जुं च । तद्वदिहाप्युभयविदेव सम्यग्ज्ञानीत्यर्थः । न ह्यन्यतरस्य तत्त्वे ज्ञाते कृतकृत्यतास्ति । नहि सांख्यो निर्विशेषात्मविदपि प्रपंचमबाधमानः शून्यवादी वा प्रपंचं तुच्छत्वेन पश्यन्नधिष्ठानं ब्रह्म नास्तीति ब्रुवाणः कृतकृत्यो भवतीति वक्तुं युक्तमतो द्वयोरपि तत्त्वं बोध्यमेव ॥ २ ॥

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ॥**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥**

**शां० भा०—इदं शरीरमित्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकोऽयमुपन्यस्यते तत्क्षेत्रं यच्चेत्यादि व्याचिख्यासितस्य ह्यर्थस्य संग्रहोपन्यासो न्याय्य इति—यन्निर्दिष्टमिदं शरीरमिति तत्तच्छब्देन परामृशति यच्चेदं निर्दिष्टं क्षेत्रं तद्यादृग्यादृशं स्वकीयैर्धर्मैः । चशब्दः समुच्चयार्थः । यद्वि-कारि यो विकारोऽस्य तद्यद्विकारि यतो यस्माच्च यत्कार्यमुत्पद्यत इति वाक्यशेषः । स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावो ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं यथाविशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु श्रुत्वाऽवधारयेत्यर्थः ॥ ३ ॥**

**शां० आ०**—एवं श्लोकद्वयं व्याख्याय श्लोकान्तरमवतारयति—**इदमिति** । कुत्र संग्रहोक्तिरुपयुज्यते तत्राऽऽह—**व्याचिख्यासितस्येति** । प्रतिपत्तिसौकर्यार्थं संग्रहोक्तिरर्थवतीत्यर्थः । वक्ष्यमाणेऽर्थे श्रोतुर्मनःसमाधानार्थं सूत्रितवाक्यार्थोपायविव-रणप्रतिज्ञामभिप्रेत्याऽऽह—**यन्निर्दिष्टमिति** । इदं शरीरमिति यन्निर्दिष्टं तच्छरीरं तच्छब्देन परामृशति प्रकृतार्थत्वात्त-स्येति योजना । तत्क्षेत्रं ज्ञातव्यमित्यध्याहारः । यच्चेति येन रूपेण रूपवदिति तदेव क्षेत्रं विशेष्यते । तस्य क्षेत्रस्य स्वकीया धर्मा जन्मादयस्तैर्विशिष्टस्य ज्ञेयत्वे हेयत्वं फलति । चशब्दपञ्चकस्येतरेतरसमुच्चयार्थत्वमाह—**चशब्द इति** । विकारित्वेनापि हेयत्वं सूचयति—**यद्विकारीति** । यत्कार्यं तत्सर्वं यस्मादुत्पद्यते तत्कारणत्वाज्ज्ञातव्यमित्याह—**यत इति** । क्षेत्रमिव क्षेत्रज्ञं ज्ञात-व्यं दर्शयति—**स चेति** । स ज्ञातव्य इति संबन्धः । चक्षुराद्युपाधिकृतद्रष्ट्र्यादिशक्तिवशात्तस्य ज्ञातव्यत्वं सूचयति—**यत्प्रभाव इति** । तेनोक्तेन प्रभावेण तस्य ज्ञातव्यतेति शेषः । कथं यथाविशेषितं क्षेत्रं क्षेत्रज्ञो वा शक्यो ज्ञातुमित्याशङ्क्य भगवद्वाक्या-दित्याह—**तदिति** ॥ ३ ॥

**आ० भा०**—॥ ३ ॥

**आ० ज०**—॥ ३ ॥

**शा० भा०**—तत्क्षेत्रं यच्च यत् द्रव्यं यादृक् च येषामाश्रयभूतं यद्विकारि ये चास्य विकाराः यतश्च यतो हेतोरिदमुत्पन्नं यस्मै प्रयोजनायोत्पन्नमित्यर्थः । यद्यत् स्वरूपं चेदं स च यः स च क्षेत्रज्ञो यः यत्स्वरूपो यत्प्रभावश्च ये चास्य प्रभावाः तत्सर्वं समासेन संक्षेपेण मत्तः शृणु ॥ ३ ॥

**अ० टी०**—एवं प्रतिज्ञाय क्षेत्रक्षेत्रज्ञस्वरूपं सभेदकं कथयामि तच्छृण्वित्याह—**तत् क्षेत्रमिति** । तन्मदुक्तं क्षेत्रं यत् मत्सत्तात्मकं जडादिरूपमपि यादृक् यादृशं मल्लीलेच्छात्मकम् । यद्विकारि विचित्रक्रीडेच्छया नानाविकारयुक्तम् । यतश्च मदंशात्मकमत्क्रीडार्थप्रकृतिपुरुषसंयोगजम् । तत्स्थावरजङ्गमपक्ष्यादिविचित्ररूपम् । स च क्षेत्रज्ञः स्वरूपतोमदंशरूपो यत्प्रभावः सूक्ष्मोऽपि व्यापकादिसेवनयोग्याद्यचिन्त्यप्रभाववांस्तदन्यैर्याथातथ्यस्वरूपाऽज्ञानाद्बहुविधमुक्तं तत्सर्वं समासेन संक्षेपतो मे मत्तः शृणु ॥ ३ ॥

**नी० टी०**—क्षेत्रक्षेत्रज्ञपदे विवरीतुमारभते—**तदिति** । यच्चेदं क्षेत्रं निर्दिष्टं तत् यादृक् यादृशं स्वकीयैर्धर्मैरस्ति । यद्विकारि ये च तस्य विकाराः यतश्च यत् यस्माद्विकाराद्यज्जायत इति प्राञ्चः । तत्पूर्वोक्तं क्षेत्रं यच्च यत्स्वरूपं यादृक् यत्प्रकारकं यद्विकारि ये च तस्य विकाराः यतश्च क्षेत्रावयवाद्यज्जायते तत् शृणु तथा स च क्षेत्रज्ञः यो यत्स्वरूपः यत्प्रभावश्च तदपि मत्तः शृणु ॥ ३ ॥

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ॥**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

**शां० भा०**—तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थम्—ऋषिभिर्वसिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितं छन्दोभिश्छन्दांसि ऋगादीनि तैश्छन्दोभिर्विविधैर्नानाप्रकारैः पृथग्विवेकतो गीतम्। किंच ब्रह्मसूत्रपदैश्चैव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि पदान्युच्यन्ते । तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतमित्यनुवर्तते । "आत्मेत्येवोपासीत" इत्यादिभिर्हि ब्रह्मसूत्रपदैरात्मा ज्ञायते । हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैर्न संशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थः ॥ ४ ॥

**शां० आ०**—श्लोकान्तरस्य तात्पर्यमाह—**तदित्यादिना** । विवक्षितं जिज्ञासितमित्यर्थः । स्तुतिफलमाह—**श्रोत्रिति** । न केवलमाप्तोक्तेरेव क्षेत्रादियाथात्म्यं संभावितं किंतु वेदवाक्यादपीत्याह—**छन्दोभिश्चेति** । ऋगादीनां चतुर्णामपि वेदानां नानाप्रकारत्वं शाखाभेदादिष्टम् । न केवलं श्रुतिस्मृतिसिद्धमुक्तं याथात्म्यं किंतु यौक्तिकं चेत्याह—**किंचेति** । कानि तानि सूत्राणीत्याशङ्क्याऽऽह—**आत्मेत्येवेति** । आदिपदेन " ब्रह्मविदाप्नोति परम् " " अथ योऽन्यां देवताम् " इत्यादीनि विद्याविद्यासूत्राण्युक्तानि । आत्मेति क्षेत्रज्ञोपादानं तच्च क्षेत्रोपलक्षणम् । " अथातो ब्रह्मजिज्ञासा " इत्यादीन्यपि सूत्राण्यत्र गृहीतान्यन्यथा छन्दोभिरित्यादिना पौनरुक्त्यादिति मत्वा विशिनष्टि—**हेतुमद्भिरिति** ॥ ४ ॥

**आ० भा०**—यद्विकारि येन विकारेण युक्तं यतश्च यत् यतो याति प्रवर्तते । स च प्रवर्तकः । यतश्च यदित्यस्मात्प्रवर्तते क्षेत्रमितिवचनं स च य इति स्वरूपमात्रम् ॥ ४ ॥

**आ० ज०**—यो विकारो यस्य तत् यद्विकारीति कश्चित् । तदसत् । बहुव्रीहितायामिनेर्वैयर्थ्यात् । किं तु यश्चासौ विकारश्चेति यद्विकारः सोऽस्यास्तीति यद्विकारीति भावेनाह—**यदिति** । अत्र येन विकारेणेत्यनेन कर्मधारयं सूचयति । युक्तमितीनेरर्थम् । यतश्च यदित्येतद्यस्माच्च यत्कार्यमुत्पद्यत इति कश्चिद्व्याख्यातवान् तदयुक्तम् । यद्विकारीत्यनेन गतार्थत्वात् साध्याहारत्वाच्च । विकारांश्च गुणांश्चेत्यस्यान्यथोपपत्तेः । अपरस्तु यतश्चामानित्वादिभ्यो यज्ज्ञेयं प्राप्यतइति । तदप्यसत् अध्याहारादेव । अमानित्वमित्यादेरनादिमदित्यादेश्चान्यथासिद्धेरिति भावेनान्यथा व्याचष्टे—**यतश्चेति** । यतो यस्य प्रेरणया यदितीणो लडादेशशतृ-

तस्य रूपम् । इणो यातेश्चानतिभिन्नार्थत्वाद्यातीत्युक्तम् । सर्वस्य क्षेत्रस्य गत्यभावाद्गौणीं वृत्तिमाश्रित्य विवृणोति—**प्रवर्ततइति** । स च य इति जीवप्रतिज्ञेति व्याख्यानमसत् । तस्याप्रकृतत्वात् क्षेत्रज्ञशब्दस्यात्ताद्विषयत्वादिति भावेनाह—**स चेति**। यतः क्षेत्रं प्रवर्तत इति प्रवर्तकस्य प्रकृतत्वादित्याशयः । नन्वेवं चेदेतद्वक्तव्यम् । किं यतश्च यत् । स च य इत्येकैव प्रतिज्ञा उत द्वे । नाद्यः चशब्दद्वयानुपपत्तेः । तत्समासेनेत्यनेनान्वयात्स च य इत्यस्य वैयर्थ्याच्च । न द्वितीयः । अर्थभेदाभावादित्यतो द्वितीयमंगीकृत्याह—**यतश्चेति** । यतश्च यदितिवचनमस्मादेवंधर्मविशिष्टात्क्षेत्रं प्रवर्तत इति वक्तुं प्रतिज्ञारूपम् । स च य इति वचनं प्रवर्तकस्य स्वरूपमात्रं वक्तुं प्रतिज्ञारूपमित्यर्थभेद इत्यर्थः ॥ ४ ॥

**रा० भा०—**तदिदं क्षेत्रक्षेत्रज्ञयाथात्म्यमृषिभिः पराशरादिभिः बहुधा बहुप्रकारं गीतम् ‘अहं त्वं च तथान्ये च भूतैरुह्याम पार्थिव । गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम् ॥ कर्मवश्या गुणा ह्येते सत्त्वाद्याः पृथिवीपते । अविद्यासंचितं कर्म तच्चाशेषेषु जन्तुषु ॥ आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः । तथा पिण्डः पृथक् पुंसः शिरःपाण्यादिलक्षणः ॥ ततोऽहमिति कुत्रैतां संज्ञां राजन्करोम्यहम् ’ तथा च ‘किं त्वमेतच्छिरः किं तु उरस्तव तथोदरम्। किमु पादादिकं त्वं वै तवैतत्किं महीपते॥ समस्तावयवेभ्यस्त्वं पृथक् भूप व्यवस्थितः । कोऽहमित्येव निपुणो भूत्वा चिन्तय पार्थिव ॥’ इति । एवं विविक्तयोर्द्वयोर्वासुदेवात्मकं चाहुः ‘इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः। वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च ॥’ इति छन्दोभिर्विविधैः पृथक् पृथक् विविधैः छन्दोभिः ऋग्यजुःसामाथर्वभिः देहात्मनोः स्वरूपं पृथक् गीतम् “तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः” इति शरीरस्वरूपमभिधाय तस्मादनन्तरं प्राणमयं तस्माच्चान्तरं मनोमयमभिधाय “तस्माद्वा एतस्मान्मनोमयादन्योन्तर आत्मा विज्ञानमय” इति क्षेत्रज्ञस्वरूपभिधाय “तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तर आत्मानन्दमयः” इति क्षेत्रज्ञस्याप्यन्तरात्मतया आनन्दमयः परमात्मा विहितः एवमृक्सामाथर्वसु च तत्र तत्र क्षेत्रक्षेत्रज्ञयोः पृथग्भावस्तयोर्ब्रह्मात्मकत्वं च सुस्पष्टं गीतम् । ‘ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः । ’ ब्रह्मप्रतिपादनसूत्राख्यैः पदैः शारीरकसूत्रैर्हेतुमद्भिर्हेतुयुक्तैः । विनिश्चितैर्निर्णयान्तैर्न वियदश्रुतेरित्यारभ्य क्षेत्रप्रकारनिर्णय उक्तः नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः इत्यारभ्य ज्ञाते एवेत्यादिभिः क्षेत्रज्ञयाथात्म्यनिर्णय उक्तः । परात्तु तच्छ्रुतेरिति च भगवत्प्रवर्त्यत्वेन भगवदात्मकत्वमुक्तम् । एवं बहुधा गीतं क्षेत्रक्षेत्रज्ञयाथात्म्यं मया संक्षेपेण सुस्पष्टमुच्यमानं शृण्वित्यर्थः ॥ ४ ॥

**अ० टी०—**बहुधान्योक्तं भ्रमाऽभावाय प्रपञ्चयति—**ऋषिभिरिति** । ऋषिभिः स्वानुभवोत्पन्नफलनिरूपणेन बहुधा बहुप्रकारेण गीतम् । किंच । छन्दोभिर्वेदैर्विविधैः कर्मज्ञानोपासनकाम्यादिभिः पृथक् भिन्नतया अधिकारपरत्वेन गीतम् । तथैव ब्रह्मसूत्रपदैश्च ब्रह्म सूत्र्यते एभिरिति ब्रह्मसूत्राणि जन्माद्यस्य यत इत्यादीनि तथाच ब्रह्म प्रपद्यते गम्यते एभिरिति पदानि “ एको देवो बहुधा निविष्टः ” इत्यादीनि तैर्बहुधा श्रुत्यनुसारेणैव गीतम् कीदृशैस्तैः हेतुमद्भिः सहेतुकैः “ को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । एष ह्येव तं साधु कर्म कारयति ” इत्यादिभिः विनिश्चितैः निःसंदिग्धैः स्वानुभवप्रतिपादकैरित्यर्थः । एवं विस्तरेणैतैरुक्तं दुर्बोधं याथातथ्येन तत् समासेन मे मत्तः उक्तं शृणु कथयामीत्यर्थः ॥ ४ ॥

**नी० टी०—**वक्ष्यमाणेऽर्थे प्रमाणमाह—**ऋषिभिरिति** । ऋषिभिर्वसिष्ठाद्यैर्बहुधा गीतं योगवासिष्ठादौ प्रतिपादितं । छंदोभिर्वेदैर्मन्त्रैर्वा पृथक् प्रतिशाखमनेकप्रकारं गीतं । ब्रह्मसूत्रपदैः ब्रह्मणः सूचकानि पदानि समुच्चित्य

वाक्यभावमापन्नानि तैर्ब्रह्मसूचकैर्ब्राह्मणवाक्यैस्तत्त्वमसीत्याद्यैरित्यर्थः। हेतुमद्भिः "अन्नेन सोम्य शुंगेनापो मूलमन्विच्छ अद्भिः सोम्य शुंगेन तेजो मूलमन्विच्छ तेजसा सोम्य शुंगेन सन्मूलमान्विच्छ सन्मूलाः सोम्येमाः प्रजाः" इत्यादिना कार्यलिंगान्यनुमानानि ब्रह्माधिगमाय प्रदर्शयंतो हेतवस्तद्वद्भिः विनिश्चितैः असकृदभ्यासेन सकलशंकापंकक्षालनेन निश्चितार्थैः क्षेत्रक्षेत्रज्ञयोः स्वरूपमेतैः सर्वैर्यद्गीतं तत् शृणु इति पूर्वेण संबंधः ॥ ४ ॥

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ॥
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥

**शां० भा०**—स्तुत्याऽभिमुखीभूतायार्जुनायाऽऽह—महाभूतानि महान्ति च तानि सर्वविकारव्यापकत्वाद्भूतानि च सूक्ष्माणि। स्थूलानि त्विन्द्रियगोचरशब्देनाभिधायिष्यन्ते। अहंकारो महाभूतकारणमहंप्रत्ययलक्षणः। अहंकारकारणं बुद्धिरध्यवसायलक्षणा। तत्कारणमव्यक्तमेव च न व्यक्तमव्यक्तमव्याकृतमीश्वरशक्तिर्मम माया दुरत्ययेत्युक्तम्। एवशब्दः प्रकृत्यवधारणार्थः। एतावत्येवाष्टधा भिन्ना प्रकृतिः। चशब्दो भेदसमुच्चयार्थः। इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वाद्बुद्धीन्द्रियाणि वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात्कर्मेन्द्रियाणि तानि दश। एकं च किं तन्मन एकादशं संकल्पाद्यात्मकम्। पञ्च चेन्द्रियगोचराः शब्दादयो विषयाः। तान्येतानि सांख्याश्चतुर्विंशतितत्त्वान्याचक्षते ॥ ५ ॥

**शां० आ०**—क्षेत्रादियाथात्म्यस्तुत्या प्रलोभिताय किं तदिति जिज्ञासवे यथोद्देशं क्षेत्रं निर्दिशति—**स्तुत्येति**। महत्त्वे हेतुमाह—**सर्वेति**। भूतशब्देन स्थूलानामपि विशेषाभावाद्ग्रहे का हानिरित्याशङ्क्याऽऽह—**स्थूलानीति**। अहंकारोऽहंप्रत्ययलक्षण इति संबन्धः। भूतानां प्रातीतिकत्वेनाभिमानमात्रात्मत्वं मत्वाऽहंकारं विशिनष्टि—**महाभूतेति**। महतः परमित्यादौ प्रसिद्धं महच्छब्दार्थमहंकारहेतुमाह—**अहंकारेति**। ईश्वरशक्तिरित्युक्ते चैतन्यमपि शङ्क्येत तदर्थमाह—**ममेति**। अवधारणरूपमर्थमेव स्फुटयति—**एतावत्येवेति**। पञ्च तन्मात्राण्यहंकारो महदव्याकृतमित्यष्टधा भिन्नत्वम्। मूलप्रकृत्या सह तन्मात्रादिभेदानां समुच्चयश्चकारार्थः। दशेन्द्रियाण्येव विभज्य व्युत्पादयति—**श्रोत्रेत्यादिना**। तदेव प्रश्नद्वारा स्फुटयति—**किं तदिति**। शब्दादिविषयशब्देन स्थूलानि भूतानि गृह्यन्ते। उक्तेषु तन्मात्रादिषु तन्त्रान्तरीयसंमतिमाह—**तानीति**। 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकश्च विकारः' इति पठन्ति ॥ ५ ॥

**आ० भा०**—ब्रह्मसूत्राणि शारीरकम् ॥ ५ ॥

**आ० ज०**—ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि। ततश्च छंदसामृषिवाक्यानां च तथात्वात् ऋषिभिरित्यादिकं वृथा स्यादित्यतो रूढिमाश्रित्याह—**ब्रह्मेति** ॥ ५ ॥

**रा० भा०**—'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च' इति क्षेत्रारम्भकद्रव्याणि पृथिव्यप्तेजोवाय्वाकाशमहाभूतानि अहंकारो भूतादिः बुद्धिर्महान् अव्यक्तं प्रकृतिः 'इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचरा' इति क्षेत्राश्रितानि तत्त्वानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेंद्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि तानि दश एकमिति मनः। इन्द्रियगोचराश्च पञ्च शब्दस्पर्शरूपरसगन्धाः ॥ ५ ॥

**अ० टी०**—तत्क्षेत्रस्वरूपमाह द्वयेन—**महाभूतानीति**। महाभूतानि पृथिव्यादीनि। अहंकारस्तत्कारणात्मकः बुद्धिर्विज्ञानात्मिका। अव्यक्तं मूलप्रकृतिः। इन्द्रियाणि दश। च पुनः एकं मनः। इन्द्रियगोचरास्तन्मात्रात्मकाः शब्दादयः पञ्च। एवं चतुर्विंशतितत्त्वानि प्रतिपादितानि ॥ ५ ॥

नी० टी०—तच्च यच्च यादृक् च यद्विकारि चेत्येतद्व्याचष्टे—**महाभूतानीति** । चकारो भिन्नक्रमो बुद्धिश्चेति बुद्धिपदादुपरि द्रष्टव्यः । यत्क्षेत्रं शरीराख्यमुक्तं तदव्यक्तमेव। "शरीरं रथमेव तु" इति श्रुतौ अव्यक्तपदेन तस्यैव ग्रहणात् । क्षेत्रस्वरूपमुक्त्वा तत्प्रकारमाह महाभूतान्यहंकारो बुद्धिश्चेति सप्तप्रकारैरंकुरितं । महाभूतशब्देन पंचतन्मात्रा उच्यंते । अहंकारो बुद्धिरिति महत्तत्त्वमुच्यते । स्वप्ने हि एतान्येव करणानि भासंते तत्प्रकारक एव भूतगण इति तावत्प्रकारकमेव क्षेत्रमित्युक्तं । यद्विकारीत्यस्योत्तरमाह—**इंद्रियाणीति** । इंद्रियाणि दशैकं चेत्येकादश । पंच ज्ञानेंद्रियाणि श्रोत्रत्वक्चक्षुरसनघ्राणानि पंच कर्मेंद्रियाणि वाक्पाणिपादपायूपस्थाख्यानि मनश्चेत्येकादश । इंद्रियाणां गोचरा विषयाः स्थूला वियदादयः पंच । अयं षोडशको विकार एव एतान्येव सांख्यैश्चतुर्विंशतितत्त्वानि गण्यंते एतावांस्त्वस्माकं विशेषः । तैः स्वतंत्रा सत्या च प्रकृतिरुच्यते अस्माभिर्मायारूपा मिथ्या ईश्वराधीना चोच्यते इति । तथा च श्रुतिः । " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् " इति तस्मात्सांख्यप्रक्रियाऽत्र भगवताऽऽश्रितेति न भ्रमितव्यम् ॥ ५ ॥

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ॥**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥**

**शां० भा०—अथेदानीमात्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव न तु क्षेत्रज्ञस्येत्याह भगवान्—इच्छा यज्जातीयं सुखहेतुमर्थमुपलब्धवान्पूर्वं पुनस्तज्जातीयमुपलभमानस्तमादातुमिच्छति सुखहेतुरिति सेयमिच्छाऽन्तःकरणधर्मो ज्ञेयत्वात्क्षेत्रम् । तथा द्वेषो यज्जातीयमर्थं दुःखहेतुत्वेनानुभूतवान्पुनस्तज्जातीयमुपलभमानस्तं द्वेष्टि सोऽयं द्वेषो ज्ञेयत्वात्क्षेत्रमेव । तथा सुखमनुकूलं प्रसन्नं सत्त्वात्मकं ज्ञेयत्वात्क्षेत्रमेव । दुःखं प्रतिकूलात्मकं ज्ञेयत्वात्तदपि क्षेत्रम् । संघातो देहेन्द्रियाणां संहतिः। तस्यामभिव्यक्ताऽन्तःकरणवृत्तिस्तप्त इव लोहपिण्डेऽग्निरात्मचैतन्याभासरसविद्धा चेतना सा च क्षेत्रं ज्ञेयत्वात् । धृतिर्यया ऽवसादप्राप्तानि देहेन्द्रियाणि ध्रियन्ते सा च ज्ञेयत्वात्क्षेत्रम् । सर्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणं यत उक्तं तदुपसंहरति—एतत्क्षेत्रं समासेन सविकारं सह विकारेण महदादिनोदाहृतमुक्तम् । यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रमित्युक्तं तत्क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम् ॥ ६ ॥**

**शां० आ०**—अव्यक्ताहंकारादीनां त्रैगुण्याभिमानादिधर्मकत्वं प्रसिद्धमिति शब्दादीनामेव ग्रहणे कर्मेन्द्रियाणां विषयानुक्तेर्वैरूप्यप्रसङ्गात्क्षेत्रनिरूपणस्य च प्रकृतत्वात्स्वरूपनिर्देशेनैव तत्क्षेत्रं यच्च यादृक्चेति व्याख्यातमिदानीमिच्छादीनामात्मविकारत्वनिवृत्तये क्षेत्रविकारत्वनिरूपणेन यद्विकारीत्येतन्निरूपयन्मतान्तरनिवृत्तिपरत्वेन श्लोकमवतारयति—**अथेति** । सर्वज्ञोक्तिविरोधाद्धेयं वैशेषिकं मतमिति मत्वोक्तं—**भगवानिति** । उपलब्धजातीयस्योपलभ्यमानस्याऽऽदानेच्छायां हेतुमाह—**सुखेति** । इतिशब्दो हेत्वर्थः । सुखहेतुत्वात्तस्मिन्निच्छेत्यर्थः । इच्छां सुखतद्धेतुविषयत्वेन व्याख्यायाऽऽत्मधर्मत्वं तस्या व्युदस्यति—**सेयमिति** । तथाऽपि कथं क्षेत्रान्तर्भूतत्वं तत्राऽऽह—**ज्ञेयत्वादिति** । इच्छावद्द्वेषोऽपि धर्मो बुद्धेरित्याह—**तथेति** । कोऽसौ द्वेषो यस्य बुद्धिधर्मत्वं तत्राऽऽह—**यज्जातीयमिति** । तस्यापीच्छावत्क्षेत्रान्तर्भावमाह—**सोऽयमिति** । इच्छाद्वेषवद्बुद्धिधर्मः सुखमपीत्याह—**तथेति** । तस्यापि स्वरूपोक्त्या क्षेत्रान्तःपातित्वमाह—**अनुकूलमिति** । दुःखस्यापि स्वरूपोक्त्या क्षेत्रमध्यवर्तित्वमाह—**दुःखमिति** । देहेन्द्रियात्मवादौ व्युदसितुं क्षेत्रान्तर्भूतमेव संघातं विभजते—**देहेति** । विज्ञानवादं प्रत्याह—**तस्यामिति** । तप्ते लोहपिण्डे वह्नेरभिव्याक्तिवदुक्तसंहतौ बुद्धिवृत्तिरभिव्यज्यते। तत्र चाग्निरभिव्यक्तो लोहपिण्डमेवाग्निबुद्ध्या ग्राहयति तथाऽऽत्मचैतन्यं बुद्धिवृत्तावभिव्यक्तं तामेवाऽऽत्मतया बोधयत्यतस्तदाभासानुविद्धा सैव चेतनेत्युच्यते। सा च मुख्यं चेतनं प्रति ज्ञेयत्वादतद्रूपत्वात्क्षेत्रमेवेत्यर्थः । धृतिस्वरूपोक्त्या क्षेत्रत्वं तस्या दर्शयति—**धृतिरित्यादिना** । नन्वन्येऽपि संकल्पादयो मनो-

धर्माः सन्ति ते किमित्यत्र क्षेत्रत्वेन नोच्यन्ते तत्राऽऽह—**सर्वेति** । तस्योपलक्षणार्थत्वे हेतुमाह—**यत इति** । इच्छादिवदास्मिन्नवसरे संकल्पादीनामपि दर्शितत्वं सिद्धवत्कृत्य प्रकरणविभागार्थं यतो भगवानुक्तं क्षेत्रमुपसंहरत्यतो युक्तमिच्छादिग्रहस्य सर्वानुक्तबुद्धिधर्मोपलक्षणार्थत्वमित्यर्थः । विरक्तस्य ज्ञानेऽधिकाराय वैराग्यार्थं क्षेत्रं व्याख्यातमित्यनुवदति—**यस्येति** । क्षेत्रभेदजातस्य व्यष्टिदेहविभागस्य सर्वस्येत्यर्थः । संहतिः समष्टिशरीरम् ॥ ६ ॥

**आ० भा०**—॥ ६ ॥

**आ० ज०**—॥ ६ ॥

**रा० भा०**—इच्छा द्वेषः सुखं दुःखमिति क्षेत्रकार्याणि क्षेत्रविकारा उच्यन्ते यद्यपीच्छाद्वेषसुखदुःखान्यात्मधर्मभूतानि तथाप्यात्मनः क्षेत्रसंबन्धप्रयुक्तानीति क्षेत्रकार्यतया क्षेत्रविकारा उच्यंते तेषां पुरुषधर्मत्वम् 'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।' इति वक्ष्यते । संघातश्चेतना धृतिः आधृतिराधारः सुखदुःखे भुञ्जानस्य भोगापवर्गौ साधयतश्च चेतनस्याधारतयोत्पन्नो भूतसंघातः प्रकृत्यादि पृथिव्यन्तद्रव्यारब्धमिन्द्रियाश्रयभूतम् इच्छाद्वेषसुखदुःखविकारिभूतसंघातरूपं चेतनसुखदुःखोपभोगाधारत्वप्रयोजनं क्षेत्रमित्युक्तं भवति । एतत्क्षेत्रं समासेन संक्षेपेण सविकारं सकार्यमुदाहृतम् ॥ ६ ॥

**अ० टी०**—इच्छा अभिलषितार्थरूपा, द्वेषः प्रतीपस्फूर्त्या, सुखं स्वाभिलषितप्राप्त्या, दुःखं स्वाज्ञानकल्पितं, संघातः शरीरं, चेतना ज्ञानरूपा मनोवृत्तिः, धृतिः धैर्यम्, इच्छाऽऽदयोऽपि मनोधर्मा अतः सविकारम् इन्द्रियादिविकारसहितं क्षेत्रं सर्वोत्पत्तिस्थानं संक्षेपेण सम्यक्प्रकारेण उदाहृतं लीलार्थं प्रकटितमितिज्ञानार्थं कथितमित्यर्थः ॥ ६ ॥

**नी० टी०**—यतश्च विकाराद्यजायत इत्युक्तं तदाह—**इच्छेति** । इच्छा सुखे तत्साधने वा स्पृहारूपा चित्तवृत्तिरिदं मे भूयादिति सा काम इति राग इति चोच्यते । द्वेषो दुःखे तत्साधने चेदं मे माभूदिति स्पृहाविरोधिनी चेतोवृत्तिः । सुखदुःखे प्रसिद्धे । संघातः "आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति श्रुतेरिंद्रियमनश्चिदात्मनामेकलोलीभावरूपो भोक्ता । चेतना या पूर्वोक्ता बुद्धिः सैव शुद्धा सत्त्वमयत्वाद्विमलादर्शवच्चित्प्रतिबिंबग्राहिणी तप्तायःपिंडे वह्नित्वमिव स्वयमचेतनाऽपि चेतनात्वं प्राप्ता यया व्याप्तः स्थूलपिंडोऽपि चेतन एव प्रतीयते सेयं चेतना मनःसंज्ञिता सैव इच्छादिरूपा परिणमते । तथा च श्रुतिः । " कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति कामादीनां मनोवृत्तित्वमाह । एतत्क्षेत्रमव्यक्ताख्यं सविकारं विकारेण महदादिना तद्विकारेण चेच्छादिना सहितमुदाहृतमुक्तं । नन्विच्छादयोहंप्रत्ययविषयस्यात्मनो धर्मा इति काणादा वदंति । सत्यमेव वदंति ते परंतु सोऽस्माकं मुख्य आत्मैव न भवति तस्य शुद्धायां चिति अभेदेनाध्यस्तत्वादिति प्रागेवोक्तं । अतः क्षेत्रांतर्गतस्याहमर्थस्य दृश्यस्य तादृशा एव दृश्या इच्छादयो धर्माः संतु न नः किंचिच्छिन्नं । आत्मनोऽसंगत्वमहंकारस्यानृतत्वं चानुभवसिद्धं श्रुती अप्यनुवदतः । " असंगो ह्ययं पुरुष " इति " अमृतेन हि प्रत्यूढा " इति ॥ ६ ॥

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ॥
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥

**शां० भा०**—क्षेत्रज्ञो वक्ष्यमाणविशेषणो यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं भवति तं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवानधुना तु तज्ज्ञानसाधनगणममानित्वा-

दिलक्षणं यस्मिन्सति तज्ज्ञेयविज्ञाने योग्योऽधिकृतो भवति यत्परः संन्यासी ज्ञाननिष्ठ उच्यते, तममानित्वादिगणं ज्ञानसाधनत्वाज्ज्ञानशब्दवाच्यं विदधाति भगवान्—अमानित्वं मानिनो भावो मानित्वमात्मनः श्लाघनं तदभावोऽमानित्वम् । अदम्भित्वं स्वधर्मप्रकटीकरणं दम्भित्वं तदभावोऽदम्भित्वम् । अहिंसाऽहिंसनं प्राणिनामपीडनम् । क्षान्तिः परापराधप्राप्तावविक्रिया । आर्जवमृजुभावोऽवक्रत्वम् । आचार्योपासनं मोक्षसाधनोपदेष्टुराचार्यस्य शुश्रूषादिप्रयोगेण सेवनम् । शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनमन्तश्च मनसः प्रतिपक्षभावनया रागादिमलानामपनयनं शौचम् । स्थैर्यं स्थिरभावो मोक्षमार्ग एव कृताध्यवसायत्वम् । आत्मविनिग्रह आत्मनोऽपकारकस्याऽऽत्मशब्दवाच्यस्य कार्यकरणसंघातस्य विनिग्रहः स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्ग एव निरोध आत्मविनिग्रहः ॥ ७ ॥

**शां० आ०**—ननूक्ते क्षेत्रे क्षेत्रज्ञो वक्तव्यस्तं हित्वा किमित्यन्यदुच्यते तत्राऽऽह—**क्षेत्रज्ञ इति** । अनादिमदित्यादिना वक्ष्यमाणविशेषणं क्षेत्रज्ञं स्वयमेव भगवान्विवक्षितविशेषणसहितं ज्ञेयं यत्तदित्यादिना वक्ष्यतीति संबन्धः । किमिति क्षेत्रज्ञो वक्ष्यते तत्राऽऽह—**यस्येति** । ज्ञेयं यत्तदित्यतः प्राक्तनग्रन्थस्य तात्पर्यमाह—**अधुनेति** । अमानित्वादिलक्षणं विदधातीत्युत्तरत्र संबन्धः । ज्ञानसाधनसमुदायबोधनं कुत्रोपयुज्यते तत्राऽऽह—**यस्मिन्निति** । योग्यमधिकृतमेव विवृणोति—**यत्पर इति** । एतज्ज्ञानामिति वचनात्कथमिदं ज्ञानसाधनमित्याशङ्क्याऽऽह—**तमिति** । तद्विधानस्य वक्तृद्वारा दार्ढ्यं सूचयति—**भगवानिति** । अमानित्वादिनिष्ठस्यान्तर्धियो ज्ञानमिति नियमार्थमाह—**अमानित्वमिति** । मानस्तिरोहितोऽवलेपः स चाऽऽत्मन्युत्कर्षारोपहेतुः सोऽस्येति मानी न मान्यमानी तस्य भावोऽमानित्वमिति व्याकरोति—**अमानित्वमित्यादिना** । प्रतियोगिमुखेनादम्भित्वं विवृणोति—**अदंभित्वमिति** । वाङ्मनोदेहैरपीडनं प्राणिनामहिंसनम्, तदेवाहिंसेत्याह—**अहिंसेति** । परापराधस्य चित्तविकारकारणस्य प्राप्तावेवाविकृतचित्तत्वेनापकारसहिष्णुत्वं क्षान्तिरित्याह—**क्षान्तिरिति** । अवक्रत्वमकौटिल्यं यथाहृदयव्यवहारः सदैकरूपप्रवृत्तिनिमित्तत्वं चेत्यर्थः 'उपनीय तु यः शिष्यम्' इत्यादिनोक्तमाचार्यं व्यवच्छिनत्ति—**मोक्षेति** । शुश्रूषादीत्यादिपदं नमस्कारादिविषयम् । बाह्यमाभ्यन्तरं च द्विप्रकारं शौचं क्रमेण विभजते—**शौचमित्यादिना** । मनसो रागादिमलानामिति संबन्धः । तदपनयोपायमुपदिशति—**प्रतिपक्षेति** । रागादिप्रतिकूलस्य भावनाविषयेषु दोषदृष्ट्या वृत्तिस्तयेति यावत् । स्थिरभावमेव विशदयति—**मोक्षेति** । आत्मनो नित्यसिद्धस्यानाधेयातिशयस्य कुतो विनिग्रहस्तत्राऽऽह—**आत्मन इति** ॥ ७ ॥

**आ० भा०**—इच्छादयो विकाराः ॥ ७ ॥

**आ० ज०**—महाभूतानीत्यनुक्रम्यैतत्क्षेत्रं समासेन सविकारमुदाहृतमित्युक्तम् । तत्र न ज्ञायते किं क्षेत्रं के च तद्विकारा इत्यत आह—**इच्छादय इति** । पूर्वं क्षेत्रमिति भावः ॥ ७ ॥

**रा० भा०**—अथ क्षेत्रकार्येष्वात्मज्ञानसाधनतयोपादेया गुणाः प्रोच्यन्ते अमानित्वमुत्कृष्टजनेष्ववधीरणारहितत्वम् । अदम्भित्वं धार्मिकत्वयशःप्रयोजनतया धर्मानुष्ठानं दम्भस्तद्रहितत्वम् अहिंसा वाङ्मनःकायैः परपीडारहितत्वम् । क्षान्तिः परपीड्यमानस्यापि तान्प्रत्यविकृतचित्तत्वम् । आर्जवं परान् प्रति वाङ्मनःकायवृत्तीनामेकरूपता । आचार्योपासनम् आत्मज्ञानप्रदायिन्याचार्ये प्रणिपातपरिप्रश्नसेवादिनिरतत्वम् । शौचम् आत्मज्ञानतत्साधनयोग्यता मनोवाक्कायगता शास्त्रसिद्धा । स्थैर्यमध्यात्मशास्त्रोदितेष्वर्थेषु निश्चलत्वम् । आत्मविग्रहः आत्मस्वरूपव्यतिरिक्तविषयेभ्यो मनसो निवर्त्तनम् ॥ ७ ॥

**अ० टी०**—एवं क्षेत्रस्वरूपमुक्त्वा ससाधनं ज्ञानस्वरूपमाह पञ्चभिः—**अमानित्वमिति** । अमानित्वं स्वगुणोत्कर्षवर्णनप्रबोधराहित्यम् । अदंभित्वं लोकदर्शनार्थधर्माद्यनुष्ठानाभावत्वम् । अहिंसा परपीडाराहित्यम् । क्षान्तिः दुष्टाद्यतिक्रमसहनम् । आर्जवम् अकौटिल्यम् आचार्योपासनं गुरुसेवनम् । शौचं बाह्याभ्यन्तरभेदेन द्विविधं बाह्यं मृत्तिकाजलादिना आभ्यन्तरं भगवत्स्मरणात्मकम् । स्थैर्यं क्लेशादिष्वपि भगवत्परतया स्थितिः । आत्मविनिग्रहः क्षुधाशीतादिसहनेन शरीरसंयमः ॥ ७ ॥

नी० टी०—इदानीं ज्ञानसाधनानि विधत्ते—**अमानित्वमिति** । अमानित्वादयोऽपि चेतोवृत्तिविशेषा दृश्यत्वाच्च तत्क्षेत्रविकारा एव संतः सत्त्वगुणकार्यत्वात् ज्ञानस्य साधनभूता अप्युपचाराज्ज्ञानपदवाच्या भवंति । एतज्ज्ञानमिति प्रोक्तमित्युपसंहारात् । तत्र विद्यमानैरविद्यमानैर्वा गुणैरात्मनः श्लाघित्वं मानित्वं । लाभपूजाख्यात्यर्थं स्वधर्मस्य प्रकटीकरणं दंभित्वं । कायवाङ्मनोभिः प्राणिनां पीडनं हिंसा । तेषां वर्जनममानित्वमदंभित्वमहिंसा च । परेणापकृतेऽपि चित्तस्य निर्विकारत्वं क्षांतिः । आर्जवमकौटिल्यं । आचार्योपासनं स्पष्टं । शौचं मृज्जलाभ्यां बाह्यं भावशुद्धिरांतरं । स्थैर्यं मोक्षसाधने प्रवृत्तस्य विघ्नसद्भावेपि तदगणनं । आत्मविनिग्रहो देहेंद्रियादिप्रचारसंकोचः ॥ ७ ॥

**इन्द्रियार्थेषु वैराग्यमनहंकार एव च ॥**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥**

**शां० भा०**—किंच—इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यम् । अनहंकारोऽहंकाराभाव एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येकं दोषानुदर्शनं, जन्मनि गर्भवासयोनिद्वारा निःसरणं दोषस्तस्यानुदर्शनमालोचनं, तथा मृत्यौ दोषानुदर्शनं, तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं परिभूतता चेति । तथा व्याधिषु शिरोरोगादिषु दोषानुदर्शनं, तथा दुःखेष्वध्यात्माधिभूताधिदैवनिमित्तेषु । अथवा दुःखान्येव दोषो दुःखदोषस्तस्य जन्मादिषु पूर्ववदनुदर्शनम् । दुःखं जन्म दुःखं मृत्युर्दुःखं जरा दुःखं व्याधयः । दुःखनिमित्तत्वाज्जन्मादयो दुःखं न पुनः स्वरूपेणैव दुःखमिति । एवं जन्मादिषु दुःखदोषानुदर्शनाद्देहेन्द्रियविषयभोगेषु वैराग्यमुपजायते । ततः प्रत्यगात्मनि प्रवृत्तिः करणानामात्मदर्शनाय । एवं ज्ञानहेतुत्वाज्ज्ञानमुच्यते जन्मादिदुःखदोषानुदर्शनम् ॥ ८ ॥

**शां० आ०**—न केवलममानित्वादीन्येव ज्ञानस्यान्तरङ्गसाधनानि किंतु वैराग्यादीन्यपि तथाविधानि सन्तीत्याह—**किंचेति** । दृष्टादृष्टेष्वनेकार्थेषु रागे तत्प्रतिबद्धं ज्ञानं नोत्पद्येतेति मत्वा व्याकरोति—**इन्द्रियेति** । आविर्भूतो गर्वोऽहंकारस्तदभावोऽपि ज्ञानहेतुरित्याह—**अनहंकार इति** । इन्द्रियार्थेषु वैराग्यमुक्तमुपपादयति—**जन्मेति** । प्रत्येकं दोषानुदर्शनमित्युक्तं तत्र जन्मनि दोषानुदर्शनं विशदयति—**जन्मनीति** । यथा जन्मनि दोषानुसंधानं तथा मृत्यौ दोषस्य सर्वमर्मनिकृन्तनादेरालोचनं कार्यमित्याह—**तथेति** । जन्मनि मृत्यौ च दोषानुसंधानवज्जरादिष्वपि दोषानुसंधानं कर्तव्यमित्याह—**तथेति** । व्याधिषु दोषस्यासह्यतारूपस्यानुसंधानं, दुःखेषु त्रिविधेष्वपि दोषानुसंधानं प्रसिद्धम् । व्याख्यानान्तरमाह—**अथवेति** । यथा जन्मादिषु दुःखान्तेषु दोषदर्शनमुक्तं तथा तेष्वेव दुःखाख्यदोषस्य दर्शनं स्फुटयति—**दुःखमित्यादिना** । कथं जन्मादीनां बाह्येन्द्रियग्राह्याणां दुःखत्वं तत्राऽऽह—**दुःखेति** । जन्मादिषु दोषानुदर्शनकृतं फलमाह—**एवमिति** । वैराग्ये सत्यात्मदृष्ट्यर्थं करणानां तदाभिमुख्येन प्रवृत्तिरिति वैराग्यफलमाह—**तत इति** । जन्मादिदुःखदोषानुदर्शनं ज्ञानहेतुषु किमित्युपसंख्यातमित्याशङ्क्य वैराग्यद्वारा धीहेतुत्वादित्याह—**एवमिति** ॥ ८ ॥

**आ० भा०**—स च यो यत्प्रभावश्चेति वक्तुं तज्ज्ञानसाधनान्याह—अमानित्वमित्यादिना । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं दंभः । 'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दंभो माहात्म्यदर्शनम्' इति ह्यभिधानम् । आर्जवम् मनोवाक्कायकर्मणामवैपरीत्यम् ॥ ८ ॥

**आ० ज०**—ननु षट्स्वर्थेषु प्रतिज्ञातेषु अमानित्वादिकमनंतर्भूतं किमित्युच्यत इत्यत आह—**स चेति** । इति प्रतिज्ञातमर्थद्वयं वक्तुं ज्ञेयं यत्तदित्यादिना । न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवतीत्याशयेनेति शेषः । मानाहंकाराभ्यां दंभं पृथक् दर्शयति—**आत्मेति** । आर्जवं ज्ञानसाधनं यथास्यात्तथा व्याचष्टे—**आर्जवमिति** । एतच्च सन्मार्ग इति ज्ञातव्यम् ॥ ८ ॥

**रा० भा०**—इंद्रियार्थेषु वैराग्यम् आत्मव्यतिरिक्तेषु विषयेषु सदोषतानुसंधानेनोद्वेजनम् । अनहंकारः अनात्मनि देहे आत्माभिमानरहितत्वं प्रदर्शनार्थमिदम् अनात्मीयेष्वात्मीयाभिमानरहितत्वं चापि विवक्षितं जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं सशरीरत्वे जन्ममृत्युजराव्याधिदुःखस्वरूपस्य दोषस्यावर्जनीयत्वानुसंधानम् ॥ ८ ॥

**अ० टी०**—इन्द्रियार्थेषु इन्द्रियभोगेषु वैराग्यम् । अनहंकार एव च ।-च पुनः अहंकाररहित्यम् । एवकारेणाऽस्यावश्यकत्वं ज्ञापितम् । जन्मादिषु दुःखदोषयोरनुदर्शनं विचारः । तथाहि । जन्म-अजन्मानो ब्रह्मांशस्याऽपि योनिमलादिसंबन्धः । मृत्युर्भगवद्विस्मरणं, जरा शक्तिह्रासः, व्याधिः रोगादिक्लेशः ॥ ८ ॥

**नी० टी०**—इंद्रियार्थेषु दृष्टेषु आनुश्रविकेषु वा शब्दादिषु वैराग्यं रागाभावः । अनहंकारो दर्पराहित्यं अयोगव्यवच्छेदार्थ एवकारः समुच्चयार्थश्चकारः । जन्मादिषु यज्जायमानं दुःखं परस्य व्यथा दोषाश्च दैन्यादयस्तेषामनुदर्शनम् ॥ ८ ॥

## असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ॥
## नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥

**शां० भा०**—किंच—असक्तिः सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रं तदभावोऽसक्तिः। अनभिष्वङ्गोऽभिष्वङ्गाभावोऽभिष्वङ्गो नाम सक्तिविशेष एवानन्यात्मभावनालक्षणः। यथाऽन्यस्मिन्सुखिनि दुःखिनि वाऽहमेव सुखी दुःखी च जीवति मृते वाऽहमेव जीवामि मरिष्यामि चेति। क्वेत्याह पुत्रदारगृहादिषु । पुत्रेषु दारेषु गृहेष्वादिग्रहणादन्येष्वप्यत्यन्तेष्टेषु दासवर्गादिषु । तच्चोभयं ज्ञानार्थत्वाज्ज्ञानमुच्यते। नित्यं च समचित्तत्वं तुल्यचित्तता, क्व, इष्टानिष्टोपपत्तिषु, इष्टानामनिष्टानां चोपपत्तयः संप्राप्तयस्तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता, इष्टोपपत्तिषु न हृष्यति न कुप्यति चानिष्टोपपत्तिषु । तच्चैतन्नित्यं समचित्तत्वं ज्ञानम् ॥ ९ ॥

**शां० आ०**—ज्ञानस्यान्तरङ्गमेव हेत्वन्तरमाह—**किंचेति** । नन्वसक्तिरेवाभिष्वङ्गाभावस्तथा च पुनरुक्तिरित्याशङ्क्याभिष्वङ्गोक्तिद्वारा निरस्यति—**अभिष्वङ्गो नामेति** । अन्यस्मिन्नेव पुत्रादावनन्यत्वधिया तद्गते सुखादावात्मनि तद्भावनाख्यं सक्तिविशेषमेवोदाहरति—**यथेति** । उक्तविशेषणयोराकाङ्क्षाद्वारा विषयमाह—**क्वेत्यादिना** । उक्तविशेषणयोर्ज्ञानशब्दस्योपपत्तिमाह—**तच्चेति** । सदा हर्षविषादशून्यमनस्त्वमपि ज्ञानहेतुरित्याह—**नित्यं चेति** । तदेव विभजते—**इष्टेति** । तस्य ज्ञानहेतुत्वं निगमयति—**तच्चैतदिति** ॥ ९ ॥

**आ० भा०**—॥ ९ ॥

**आ० ज०**—॥ ९ ॥

**रा० भा०**—असक्तिरात्मव्यतिरिक्तविषयेषु सङ्गरहितत्वम् अनभिष्वङ्गः पुत्रदारगृहादिषु तेषु शास्त्रीयकर्मोपकरणत्वातिरेकेण शेषरहितत्वं नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु संकल्पप्रभवेष्विष्टानिष्टोपनिपातेषु हर्षोद्वेगरहितत्वम् ॥ ९ ॥

**अ० टी०**—किंच—**असक्तिरिति** । पुत्रदारगृहादिपदार्थेष्वसक्तिः आसक्तिराहित्यम्, अनभिष्वङ्गः तेषु समदुःखसुखतया तन्मयत्वाभावः। इष्टानिष्टोपपत्तिषु इष्टानिष्टप्राप्तिषु नित्यं भगवदिच्छाविचारेण समचित्तत्वम् ॥ ९ ॥

नी० टी०—असक्तिरिति। सक्तिः पुत्रादौ ममतामात्रं। अभिष्वंगस्तेन सह तादात्म्याभिमानोऽयमेवाहमिति च। पुत्रादेः सुखेऽहमेव सुखी तस्य दुःखेऽहमेव दुःखीति संगाभिष्वंगौ तद्वर्जनमित्यर्थः। समचित्तत्वं हर्षविषादराहित्यं। कुत्र इष्टानिष्टोपपत्तिषु इष्टप्राप्तौ हर्षाभावोऽनिष्टप्राप्तौ विषादाभावः॥ ९॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी॥
विविक्तदेशसेवित्वमरतिर्जनसंसदि॥ १०॥

शां० भा०—किंच—मयि चेश्वरेऽनन्ययोगेनापृथक्समाधिना नान्यो भगवतो वासुदेवात्परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिताऽव्यभिचारिणी बुद्धिरनन्ययोगस्तेन भजनं भक्तिर्न व्यभिचरणशीलाऽव्यभिचारिणी। सा च ज्ञानम्। विविक्तदेशसेवित्वं विविक्तः स्वभावतः संस्कारेण वाऽशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितोऽरण्यनदीपुलिनदेवगृहादिभिर्विविक्तो देशस्तं सेवितुं शीलमस्येति विविक्तदेशसेवी तद्भावो विविक्तदेशसेवित्वम्। विविक्तेषु हि देशेषु चित्तं प्रसीदति यतस्तत आत्मादिभावना विविक्त उपजायतेऽतो विविक्तदेशसेवित्वं ज्ञानमुच्यते। अरतिररमणं जनसंसदि जनानां प्राकृतानां संस्कारशून्यानामविनीतानां संसत्समवायो जनसंसन्न संस्कारवतां विनीतानां संसत्तस्या ज्ञानोपकारकत्वादतः प्राकृतजनसंसद्यरतिर्ज्ञानार्थत्वाज्ज्ञानम्॥ १०॥

शां० आ०—साधनान्तरमाह—**किंचेति**। अनन्ययोगमेव संक्षिप्तं व्यनक्ति—**नेत्यादिना**। उक्तधीद्वारा जाताया भक्तेर्भगवति स्थैर्यं दर्शयति—**नेति**। तत्रापि ज्ञानशब्दस्तद्धेतुत्वादित्याह—**सा चेति**। देशस्य विविक्तत्वं द्विविधमुदाहरति—**विविक्त इति**। तदेव स्पष्टयति—**अरण्येति**। उक्तदेशसेवित्वं कथं ज्ञाने हेतुस्तत्राऽऽह—**विविक्तेष्विति**। आत्मादीत्यादिशब्देन परमात्मा वाक्यार्थश्चोच्यते। नन्वरतिविषयत्वेनाविशेषतो जनसंसन्मात्रं किमिति न गृह्यते तत्राऽऽह—**तस्या इति**। सन्तः सङ्गस्य भेषजमित्युपलम्भादित्यर्थः॥ १०॥

आ० भा०—सक्तिः स्नेहः। स एवातिपक्वोऽभिष्वंगः। 'स्नेहः सक्तिः स एवातिपक्वोऽभिष्वंग उच्यते' इत्यभिधानम्॥ १०॥

आ० ज०—सक्त्यभिष्वंगशब्दयोरर्थभेदमाह—**सक्तिरिति**॥ १०॥

रा० भा०—मयि सर्वेश्वरे च ऐकान्तिकयोगेन स्थिरा भक्तिः जनवर्जितदेशवासित्वं जनसंसदि चाप्रीतिः॥ १०॥

अ० टी०—च पुनः मयि अनन्ययोगेन लौकिकालौकिकेषु मच्छरणतया अव्यभिचारिणी अन्यत्र सद्बुद्धिराहित्येन भक्तिः, विविक्तदेशसेवित्वं भगवत्परिपन्थिरहिततद्देशसेवनशीलत्वम्, अरतिर्जनसंसदि जननादिक्लेशयुक्तलौकिकजीवसभायाम् अरतिः प्रतिष्ठाद्यनाकाङ्क्षा॥ १०॥

नी० टी०—मयीति श्लोकः स्पष्टार्थः॥ १०॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्॥
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥ ११॥

शां० भा०—किंच—अध्यात्मज्ञाननित्यत्वमात्मादिविषयं ज्ञानमध्यात्मज्ञानं तस्मिन्नित्यभावो नित्यत्वममानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानं तस्यार्थो मोक्षः संसारोपरमस्त-

स्याऽऽलोचनं तत्त्वज्ञानार्थदर्शनम् । तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति । एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्तं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात् । अज्ञानं यदतोऽस्माद्यथोक्तादन्यथा विपर्ययेण मानित्वं दम्भित्वं हिंसाऽक्षान्तिरनार्जवमित्याद्यज्ञानं विज्ञेयं परिहरणाय संसारप्रवृत्तिकारणत्वादिति ॥ ११ ॥

**शां० आ०**—साधनान्तरमाह—**किञ्चेति** । आत्मादीत्यादिशब्दोऽनात्मार्थस्तद्विषयं ज्ञानं विवेकस्तन्नित्यत्वं तत्रैव निष्ठावत्त्वं विवेकनिष्ठो हि वाक्यार्थज्ञानसमर्थो भवति । तेषां भावनापरिपाको नाम यत्नेन साधितानां प्रकर्षपर्यन्तत्वं तन्निमित्तं तत्त्वज्ञानमैक्यसाक्षात्कारः । तत्फलालोचनं किमर्थमित्याशङ्क्याऽऽह—**तत्त्वेति** । प्रवृत्तिः स्यादित्यतस्तत्त्वज्ञानार्थदर्शनमर्थवदिति शेषः । ज्ञानस्यान्तरङ्गहेतुमुक्तमुपसंहरति—**एतदिति** । किमिति तस्य विज्ञेयत्वमित्याशङ्क्याऽऽह—**परिहरणायेति** । तत्र हेतुः—**संसारेति** । तस्य प्रवृत्तिरुत्पत्तिस्तद्धेतुत्वान्मानित्वादि त्याज्यं ज्ञाते च त्याज्यत्वं तेन तस्य ज्ञेयतेत्यर्थः । इतिशब्दः साधनाधिकारसमाप्त्यर्थः ॥ ११ ॥

**आ० भा०**—॥ ११ ॥

**आ० ज०**—॥ ११ ॥

**रा० भा०**—आत्मनि ज्ञानमध्यात्मज्ञानं तन्निष्ठत्वं तत्त्वज्ञानार्थदर्शनं तत्त्वज्ञानप्रयोजनं यत्तत्त्वं तन्निरतत्वमित्यर्थः । ज्ञायतेऽनेनात्मेति ज्ञानं आत्मज्ञानसाधनमित्यर्थः । क्षेत्रसंबन्धिनः पुरुषस्यामानित्वादिकमुक्तं गुणवृन्दमेवात्मज्ञानोपयोगि एतद्व्यतिरिक्तं सर्वं क्षेत्रकार्यमात्मज्ञानविरोधीत्यज्ञानम् ॥ ११ ॥

**अ० टी०**—अध्यात्मज्ञाने आत्मस्वरूपज्ञाने नित्यभावः । तत्त्वज्ञानस्य अथात्मको भगवान् मोक्षो वा तस्य दर्शनम् आलोचनरीत्या विचारः । एतत्पञ्चश्लोकोक्तं ज्ञानमितिप्रोक्तम् । एतद्युक्तो ज्ञानवान् । अतोऽन्यथा यत् विपरीतत्वं मानित्वादिभावयुक्तं तत् अज्ञानं न ज्ञानमित्यर्थः । संगाऽनर्हा एतेऽपि त्याज्याः ॥ ११ ॥

**नी० टी०**—अध्यात्मशास्त्रजे ज्ञाने निष्ठावहमध्यात्मज्ञाननित्यत्वं । तत्त्वज्ञानस्यार्थः प्रयोजनमविद्यानिवृत्तिरानंदावाप्तिश्च तयोर्दर्शनं । एतदमानित्वादितत्त्वज्ञानार्थदर्शनांतं विंशकं ज्ञानं ज्ञानसाधनमिति प्रोक्तं वेदेषु । अज्ञानं ज्ञानविरोधि इतोऽन्यथा यत्तत् मानित्वादिकमित्यर्थः । तस्मात्तत्परित्यागेनामानित्वादिकमेवोपादेयमिति भावः ॥ ११ ॥

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥

**शां० भा०**—यथोक्तेन ज्ञानेन ज्ञातव्यं किमित्याकाङ्क्षायामाह ज्ञेयं यत्तदित्यादि । ननु यमानियमाश्चामानित्वादयो न तैर्ज्ञेयं ज्ञायते । न ह्यमानित्वादि कस्यचिद्वस्तुनः परिच्छेदकं दृष्टम् । सर्वत्रैव च यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते । न ह्यन्यविषयेण ज्ञानेनान्यदुपलभ्यते । यथा घटविषयेण ज्ञानेनाग्निः । नैष दोषो ज्ञाननिमित्तत्वाज्ज्ञानमुच्यत इति ह्यवोचाम । ज्ञानसहकारिकारणत्वाच्च—ज्ञेयं ज्ञातव्यं यत्तत्प्रवक्ष्यामि प्रकर्षेण यथावद्वक्ष्यामि । किं फलं तदिति प्ररोचनेन श्रोतुरभिमुखीकरणायाऽऽह यज्ज्ञेयं ज्ञात्वाऽमृतममृतत्वमश्नुते न पुनर्म्रियत इत्यर्थः । अनादिमदादिरस्यास्तीत्यादिमन्नाऽऽदिमदनादिमत् । किं तत्परं निरतिशयं ब्रह्म ज्ञेयमिति प्रकृतम् । अत्र केचिदनादिमत्परमिति पदं छिन्दन्ति बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादिति । अर्थविशेषं च दर्शयन्ति अहं वासुदेवाख्या परा शक्तिर्यस्य तन्मत्परमिति । सत्यमेवमपुनरुक्तं स्यादर्थश्चेत्संभवति न त्वर्थः संभवति

ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वान्न सत्तन्नासदुच्यत इति । विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धम् । तस्मान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थः । अमृतत्वफलं ज्ञेयं मयोच्यत इति प्ररोचनेनाभिमुखीकृत्याऽऽह न सत्तज्ज्ञेयमुच्यत इति नाप्यसत्तदुच्यते । ननु महता परिकरबन्धेन कण्ठरवेणोद्घुष्य ज्ञेयं प्रवक्ष्यामीत्यननुरूपमुक्तं न सत्तन्नासदुच्यत इति । न, अनुरूपमेवोक्तम् । कथं सर्वासु ह्युपनिषत्सु ज्ञेयं ब्रह्म "नेति नेत्यस्थूलमनणु" इत्यादिविशेषप्रतिषेधेनैव निर्दिश्यते नेदं तदिति वाचोऽगोचरत्वात् । ननु न तदस्ति यद्वस्त्वस्तिशब्देन नोच्यते । अथास्तिशब्देन नोच्यते नास्ति तज्ज्ञेयम् । विप्रतिषिद्धं च ज्ञेयं तदस्तिशब्देन नोच्यत इति च । न तावन्नास्ति नास्तिबुद्ध्यविषयत्वात् ।

**शां० आ०**—उत्तरग्रन्थमवतारयति—**यथोक्तेनेति** । अमानित्वादीनां ज्ञानत्वमाक्षिपति—**नन्विति** । वस्तुपरिच्छेदकत्वाज्ज्ञानत्वमाशङ्क्याऽऽह—**नहीति** । परिच्छेदकत्वाज्ज्ञानत्वं ज्ञानत्वात्परिच्छेदकत्वमित्यन्योन्याश्रयादित्यभिप्रेत्याऽऽह—**सर्वत्रेति** । स्वार्थस्यैव ज्ञानं परिच्छेदकमित्येतद्व्यतिरेकद्वारा विशदयति—**न हीति** । व्यतिरेकदृष्टान्तमाह—**यथेति** । अमानित्वादीनां ज्ञानत्वमाक्षिप्तं प्रतिक्षिपति—**नैष दोष इति** । तत्र हेतुत्वेनोक्तं स्मारयति—**ज्ञानेति** । तेषु ज्ञानशब्दे हेत्वन्तरमाह—**ज्ञानेति** । अमानित्वादीनां ज्ञानत्वमुक्त्वा ज्ञातव्यमवतारयति—**ज्ञेयमिति** । प्रश्नद्वारा ज्ञेयप्रवचनस्य फलमुक्त्वा प्ररोचनं कृत्वा तेन श्रोतुराभिमुख्यमापादयितुं प्रवचनफलोक्तिपरमनन्तरवाक्यमित्याह—**किमित्यादिना** । तदेव विशिनष्टि—**अनादिमदिति** । आदिमत्त्वराहित्यमव्याकृतस्याप्यस्त्यतो विशेषं दर्शयति—**किं तदिति** । भोक्तुरपि भोग्यात्परत्वमित्यतो विशिनष्टि—**ब्रह्मेति** । अनादीत्येकं पदं मत्परमिति चापरमिति पदच्छेदान्न पुनरुक्तिरिति मतान्तरमुत्थापयति—**अत्रेति** । एकपदत्वसंभवे किमिति पदद्वयमित्याशङ्क्याऽऽह—**बहुव्रीहिणेति** । आदिरस्य नास्तीति यो बहुव्रीहिणोक्तोऽर्थस्तस्मिन्नादिमत्त्वनिषेधे नास्ति मतुपोऽर्थवत्त्वमिति मतुबानर्थक्यमनिष्टं स्यादिति मत्वा पदं छिन्दन्तीति पूर्वेण संबन्धः । आदिरस्य नास्तीत्यनादीत्युक्त्वा मत्परमित्युच्यमाने कोऽर्थः स्यादित्याशङ्क्याऽऽह—**अर्थेति** । उक्तव्याख्यानस्यायुक्तत्वान्नायं पुनरुक्तिसमाधिरित्याह—**सत्यमिति** । अर्थासंभवं समर्थयते—**ब्रह्मण इति** । तथाऽपि विशिष्टशक्तिमत्त्वं किं न स्यादित्याशङ्क्याऽऽह—**विशिष्टेति** । तथाऽपि मतुपो बहुव्रीहिणा तुल्यार्थस्य कथं नाऽऽनर्थक्यं तत्राऽऽह—**तस्मादिति** । अनादिमत्परं ब्रह्मेत्यत्र पक्षान्तरं प्रतिक्षिप्य स्वपक्षः समर्थितः संप्रति ब्रह्मणो ब्रह्मत्वादेव कार्यकारणात्मकत्वप्राप्तावुक्तानुवादद्वारा न सदित्याद्यवतारयति—**अमृतत्वेति** । सत्कार्यमभिव्यक्तनामरूपत्वादसत्कारणं तद्विपर्ययादिति विभागः । ज्ञेयप्रवचनमनिर्वाच्यविषयत्वात्प्रक्रमप्रतिकूलमित्याक्षिपति—**नन्विति** । निर्विशेषस्य वस्तुनो ज्ञेयत्वात्तद्विषयं प्रवचनं प्रक्रमानुकूलमित्युत्तरमाह—**नेत्यादिना** । अनिर्वाच्यत्वे न सत्तन्नासदित्युच्यमाने कथमिदमनुरूपमिति पृच्छति—**कथमिति** । ब्रह्मात्मप्रकाशस्य सिद्धत्वात्तदर्थं विधिमुखेनोपदेशायोगादध्यस्ततद्धर्मनिवृत्तये निषेधद्वारोपदेशस्य वेदान्तेषु प्रसिद्धेरारोपितविशेषनिषेधरूपमिदं प्रवचनमुचितमिति परिहरति—**सर्वास्विति** । ज्ञेयस्य ब्रह्मणो विधिमुखोपदेशायोगे हेतुमाह—**वाच इति** । ब्रह्मणोऽस्तिशब्दावाच्यत्वे नरविषाणवन्नास्तित्वमित्यनिष्टमाशङ्कते—**नन्विति** । एवमुत्सर्गेऽपि ब्रह्मणि किमायातमित्याशङ्क्याऽऽह—**अथेति** । ज्ञेयस्यास्तिशब्दावाच्यत्वे व्याघातश्चेत्याह—**विप्रतिषिद्धं चेति** । अस्तिशब्दावाच्यत्वादवस्तु ब्रह्मेत्यत्राप्रयोजकत्वमाह—**न तावदिति** ।

**शां० भा०**—ननु सर्वा बुद्धयोऽस्तिनास्तिबुद्ध्यनुगता एव । तत्रैवं सति ज्ञेयमप्यस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । नातीन्द्रियत्वेनोभयबुद्ध्यनुगतप्रत्ययाविषयत्वात् । यद्धीन्द्रियगम्यं वस्तु घटादिकं तदस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । इदं तु ज्ञेयमतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वान्न घटादिवदुभयबुद्ध्यनुगतप्रत्ययविषयमित्यतो न सत्तन्नासदित्युच्यते । यत्तूक्तं विरुद्धमुच्यते ज्ञेयं तन्न सत्तन्नासदुच्यत इति । न विरुद्धम् "अन्यदेव तद्विदितादथो अविदितादधि" इति श्रुतेः । श्रुतिरपि विरुद्धार्थेति चेद्यथा यज्ञाय शालामारभ्य को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेतीत्येवमिति चेत् न, विदिताविदिताभ्यामन्यत्वश्रुतेरवश्यविज्ञेयार्थप्रतिपादनपरत्वात् । यद्यमुष्मिन्नित्यादि तु विधिशेषोऽर्थवादः । उपपत्तेश्च

सदसदादिशब्दैर्ब्रह्म नोच्यत इति । सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्तः श्रूयमाणश्च श्रोतृभिर्जातिक्रियागुणसंबन्धद्वारेण संकेतग्रहणं सव्यपेक्षोऽर्थं प्रत्याययति । नान्यथाऽदृष्टत्वात् । तद्यथा गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः, शुक्लः कृष्ण इति वा गुणतः, धनी गोमानिति वा संबन्धतः, न तु ब्रह्म जातिमदतो न सदादिशब्दवाच्यं नापि गुणवद्येन गुणशब्देनोच्येत निर्गुणत्वान्नापि क्रियाशब्दवाच्यं निष्क्रियत्वात् "निष्कलं निष्क्रियं शान्तम्" इति श्रुतेः । न च संबन्ध्येकत्वादद्वयत्वादविषयत्वादात्मत्वाच्च न केनचिच्छब्देनोच्यत इति युक्तं "यतो वाचो निवर्तन्ते" इत्यादि श्रुतिभ्यश्च ॥ १२ ॥

**शां० आ०**—नास्तिबुद्धिविषयत्वमेवावस्तुत्वे निमित्तमतस्तदभावाद्ब्रह्मणो नावस्तुतेत्येतदेव व्यक्तीकर्तुं चोदयति—**नन्विति**। सर्वासां धियामस्तिधीत्वेन नास्तिधीत्वेन वाऽनुगतत्वेऽन्यतरधीगोचरत्वाभावे ब्रह्मणोऽनिर्वाच्यत्वं दुर्वारमिति फलितमाह—**तत्रेति** । ब्रह्मणो घटादिवैलक्षण्यादुभयबुद्ध्यविषयत्वेऽपि नानिर्वाच्यतेत्याह—**नेत्यादिना** । घटादेरिन्द्रियग्राह्यस्योभयबुद्धिविषयत्वेऽपि ब्रह्मणस्तदग्राह्यस्य नोभयधीविषयत्वं तथाऽपि नानिर्वाच्यत्वं सच्चिदेकतानस्य शब्दप्रमाणादविषयत्वेन दृष्टत्वादित्युक्तमेव प्रपञ्चयति—**यद्धीति** । परोक्तं विरोधमनुवदति—**यत्त्विति** । श्रुत्यवष्टम्भेन निराचष्टे—**न विरुद्धमिति** । साऽपि विरुद्धार्थत्वान्न मानं बोधकस्याविरोधापेक्षत्वादिति शङ्कते—**श्रुतिरिति** । तस्या विरुद्धार्थत्वेनाप्रामाण्ये दृष्टान्तमाह—**यथेति** । प्राचीनवंशं करोतीति पारलौकिकफलयज्ञानुष्ठानार्थं शालानिर्माणं प्रस्तुत्य को हि तद्वेदेत्याद्या परलोकसत्त्वे सांदिहाना यथा विरुद्धार्था श्रुतिरप्रमाणमेवं विदिताविदितान्यत्वश्रुतिरपीत्यर्थः । नेयं श्रुतिर्विरुद्धार्थत्वेनामानतया ज्ञातव्या ब्रह्मण्यद्वितीये प्रत्यक्त्वाप्रतिपादनेन मानत्वादित्युत्तरमाह—**न विदितेति** । यत्तु विरुद्धार्थत्वे को हीत्युदाहृतं तदसदर्थवादस्य विधिशेषस्य स्वार्थेऽतात्पर्यादित्याह—**यदीति** । यत्र जात्यादिमत्त्वं तत्र वाच्यत्वं यथा गवादौ न ब्रह्मणि जात्यादिमत्त्वमतस्तस्यावाच्यत्वान्निषेधेनैव बोध्यत्वमित्याह—**उपपत्तेश्चेति** । नोच्यत इति निषेधेनैव तस्योपदेश इति शेषः । जात्यादिमतोऽर्थस्यैव वाच्यत्वं तत्रैव संगतिग्रहादिति प्रपञ्चयति—**सर्वो हीति** । अश्रुतस्य जात्यादिद्वारेणाज्ञातसंमतेर्वा शब्दस्य न बोधकत्वमदृष्टेरित्याह—**नान्यथेति** । जात्यादेः सच्छब्दविषयत्वमुदाहरति—**तद्यथेत्यादिना** । ब्रह्मणस्त्वगोत्रत्वमवर्णत्वमित्यादिश्रुतेर्जात्यादिमत्त्वाभावान्न शब्दवाच्यतेत्याह—**न त्विति** । केवलो निर्गुणश्चेति श्रुतेर्गुणद्वारा ब्रह्मणो न वाच्यतेत्याह—**नापीति** । निष्क्रियत्वे मानमाह—**निष्कलमिति** । ब्रह्मणोऽद्वयत्वस्याशेषोपनिषत्सु सिद्धत्वाद्विशिष्टस्य संबन्धस्य तस्मिन्नसिद्धेर्न तद्वाराऽपि तस्य वाच्यतेत्याह—**न चेति** । ब्रह्मण्यभिधावृत्त्या शब्दाप्रवृत्तौ हेत्वन्तराण्याह—**अद्वयत्वादिति** । ब्रह्मणोऽवाच्यत्वे श्रुतिमपि संवादयति—**यत इति** ॥ १२ ॥

**आ० भा०**—तत्त्वज्ञानार्थदर्शनम् । अपरोक्षज्ञानार्थं शास्त्रदर्शनम् ॥ १२ ॥

**आ० ज०**—ननु तत्त्वज्ञानार्थदर्शनं नाम ज्ञानमेव तत्कथं ज्ञानसाधनेषूच्यतइत्यत आह—**तत्त्वेति** । शास्त्रदर्शनं तात्पर्यालोचनम् । अत्र शास्त्रस्येत्यध्याहृत्य व्याख्यानमिति ज्ञातव्यम् ॥ १२ ॥

**रा० भा०**—अथैतद्यो वेत्तीति वेदितृत्वलक्षणेन तस्य क्षेत्रज्ञस्य स्वरूपं विशोध्यते । अमानित्वादिभिः साधनैर्ज्ञेयं प्राप्यं यत्प्रत्यगात्मस्वरूपं तत्प्रवक्ष्यामि यज्ज्ञात्वा जन्मजरामरणादिप्राकृतधर्मरहितममृतमात्मानं प्राप्नोति । अनादि आदिर्यस्य न विद्यते तदनादि अस्य हि प्रत्यगात्मन उत्पत्तिर्न विद्यते तत एवान्तो न विद्यते । श्रुतिश्च "न जायते म्रियते वा विपश्चित्" इति । मत्परम् अहं परो यस्य तन्मत्परम् "इतस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूताम्" इति हि उक्तं भगवच्छरीरतया भगवच्छेषतैकरसं ह्यात्मस्वरूपम् । तथा च श्रुतिः "य आत्मनि तिष्ठन्नात्मनोन्तरोयमात्मा न वेद । यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति" इति । तथा "सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः । प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादिका ब्रह्मबृहत्त्वगुणयोगिशरीरादर्थान्तरभूतं स्वतः शरीरादिभिः परिच्छेदरहितं क्षेत्रज्ञतत्त्वमित्यर्थः । "स चानन्त्याय कल्पते" इति हि श्रूयते । शरीरपरिच्छिन्नत्वं चास्य कर्मकृतं कर्मबन्धान्मुक्तस्यानन्त्यम् । आत्मन्यपि ब्रह्मशब्दः प्रयुज्यते । 'स गुणान्स-

मतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ॥ ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' इति वचनम् 'न सत्तन्नासदुच्यते' कार्यकारणरूपावस्थाद्वयरहिततया सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते कार्य्यावस्थायां हि देवादिनामरूपभाक्त्वेन सदित्युच्यते तदनर्हतया कारणावस्थायाम् असदित्युच्यते । तथा च श्रुतिः । "असद्वा इदमग्र आसीत् । ततो वै सदजायत । तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इत्यादिका । कार्यकारणावस्थाद्वयान्वयस्त्वात्मनः कर्मरूपाविद्यावेष्टनकृतः न स्वरूपतः इतिसदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते । यद्यपि "असद्वा इदमग्र आसीत्" इति कारणावस्थं परं ब्रह्मोच्यते तथापि नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरं परं ब्रह्म कारणावस्थमिति कारणावस्थायां क्षेत्रक्षेत्रज्ञस्वरूपमपि असच्छब्दवाच्यं क्षेत्रज्ञस्य सावस्था कर्मकृतेति परिशुद्धस्वरूपं न सदसच्छब्दनिर्देश्यम् ॥१२॥

अ० टी०—एवं ज्ञानस्वरूपमुक्त्वा तेन ज्ञेयस्वरूपमाह—**ज्ञेयमित्यादिषड्भिः** । स्वगुणरूपैरेवं पूर्वोक्तसाधनैर्यत् ज्ञेयं तत् प्रकर्षेण सर्वाङ्गयुक्तं वक्ष्यामि कथयामीत्यर्थः । तत्कथनप्रयोजनमाह—यत् ज्ञात्वा अमृतं मोक्षम् अश्नुते प्राप्नोति । एवं कथनं प्रतिज्ञाय तत्स्वरूपमाह—**अनादीति** । न विद्यते आदिरुत्पत्तिर्यस्य तादृशं मत्परम् अहमेव परो यस्य मत्स्थानभूतं ब्रह्म बृहत् व्यापकं च । तदेवाह । न सत् सन्न भवति । तर्ह्यसद्भवतीति चेदित्याशङ्क्याह—तत् असत् न उच्यते सदसदनिश्चयोक्त्या दुर्ज्ञेयत्वेन ब्रह्मत्वं प्रतिपादितम् ॥ १२ ॥

नी० टी०—एवं क्षेत्रं व्याख्याय स च यो यत्प्रभावश्चेत्युक्तं क्षेत्रज्ञस्वरूपं तस्य मायिकं प्रभावं व्याचष्टे—**ज्ञेयमिति** । एतैर्ज्ञानसाधनैर्यत् ज्ञेयं तत्प्रवक्ष्यामि । यज्ज्ञेयं ज्ञात्वा अमृतं मोक्षमश्नुते प्राप्नोति । तस्य स्वरूपं तावदाह—**अनादिमदिति** । आदिमदव्यक्तं तस्मादव्यक्तमुत्पन्नमिति तदुत्पत्तिस्मरणात् तदन्यदनादिमत् । अनादीत्येतावत्युक्ते प्रवाहनित्यत्वमव्यक्तादीनामप्यस्तीति तेषामप्यनादितायां प्राप्तायां तत्प्रतिषेधार्थमनादिमदित्युक्तं । यद्वा आदिमच्च ततः परं च आदिमत्परे कार्यकारणे ताभ्यामन्यदनादिमत्परमिति । अत एव परं निर्विशेषं न त्वपरं सविशेषं । ब्रह्म त्रिविधपरिच्छेदशून्यं । न सत् प्रधानपरमाण्वादिवत् सदिति नोच्यते । नाप्यसत् शून्यवदसदपि नोच्यते । तथा च श्रुतिः "नासदासीन्नोसदासीत्तदानीं नासीद्रजो नो व्योमापरोयत्" इति । असच्छब्दितस्य शून्यस्य सच्छब्दितस्य प्रधानस्य रजःशब्दितानां परमाणूनां परव्योमशब्दितस्यास्मदभिमतस्याव्यक्तस्यापि सृष्टेः प्राक् निषेधं दर्शयति ॥ १२ ॥

**सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ॥**
**सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥**

शां० भा०—सच्छब्दप्रत्ययाविषयत्वादसत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयंस्तदाशङ्कानिवृत्त्यर्थमाह—**सर्वतःपाणिपादं** सर्वतः पाणयः पादाश्चास्येति सर्वतःपाणिपादं तज्ज्ञेयम् । सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञास्तित्वं विभाव्यते । क्षेत्रज्ञश्च क्षेत्रोपाधित उच्यते । क्षेत्रं च पाणिपादादिभिरनेकधा भिन्नम् । क्षेत्रोपाधिभेदकृतं विशेषजातं मिथ्यैव क्षेत्रज्ञस्येति तदपनयनेन ज्ञेयत्वमुक्तं न सत्तन्नासदुच्यत इति । उपाधिकृतं मिथ्यारूपमप्यस्तित्वाधिगमाय ज्ञेयधर्मवत्परिकल्प्योच्यते सर्वतःपाणिपादमित्यादि । तथाहि संप्रदायविदां वचनम्—'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्य-

ते' इति। सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति ज्ञेयसद्भावे लिङ्गानि ज्ञेयस्येत्युपचारत उच्यन्ते। तथा व्याख्येयमन्यत्सर्वतःपाणिपादं तज्ज्ञेयम्। सर्वतोक्षिशिरोमुखं सर्वत्राक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोक्षिशिरोमुखम्। सर्वतःश्रुतिमच्छ्रुतिःश्रवणेन्द्रियं तद्यस्य तच्छ्रुतिमल्लोके प्राणिनिकाये सर्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते॥ १३॥

**शां० आ०**—सर्वविशेषरहितस्यावाङ्मनसगोचरस्यादृष्टेर्दृष्टेश्च विपरीतस्य प्राप्ते ब्रह्मणः शून्यत्वे प्रत्यक्त्वेनेन्द्रियप्रवृत्त्यादिहेतुत्वेन कल्पितद्वैतसत्तास्फूर्तिप्रदत्वेनेश्वरत्वेन च सत्त्वं दर्शयन्नादौ देहादीनां प्रवृत्तिमतां रथादिवदचेतनानां प्रेक्षापूर्वकप्रवृत्तिमत्त्वाच्चेतनाधिष्ठितत्वमनुमिमानस्तत्प्रत्यक्चेतनं ब्रह्मेत्याह—**सच्छब्देति**। तदस्तित्वमिति तच्छब्दो ज्ञेयब्रह्मार्थः। तदाशङ्केति तच्छब्देनासत्त्वमुच्यते। ननु सर्वदेहेषु पाणिपादमस्येति कथं पाणीनां च पादानां च देहस्थत्वेनाऽऽत्मधर्मत्वं तत्राऽऽह—**सर्वेति**। करणप्रवृत्तौ रथादिप्रवृत्तिवत्प्रेक्षापूर्वकप्रवृत्तित्वाच्चेतनाधिष्ठातृपूर्विकेत्यर्थः। उक्तप्रवृत्त्याचेतनास्तित्वसिद्धावपि कथं क्षेत्रज्ञास्तित्वमित्याशङ्क्य चेतनस्यैव क्षेत्रोपाधिना क्षेत्रज्ञत्वाच्चेतनास्तित्वं तदस्तित्वमेवेत्याह—**क्षेत्रज्ञश्चेति**। तस्य क्षेत्रोपाधित्वेऽपि कथं पाणिपादाक्षिशिरोमुखादिमत्त्वमित्याशङ्क्याऽऽह—**क्षेत्रं चेति**। अतश्चोपाधितस्तस्मिन्विशेषोक्तिरिति शेषः। कथं तर्हि न सत्तन्नासदिति निर्विशेषत्वोक्तिरित्याशङ्क्याऽऽह—**क्षेत्रेति**। पाणिपादादिमत्त्वमौपाधिकं मिथ्या चेज्ज्ञेयप्रवचनाधिकारे कथं तदुक्तिरित्याशङ्क्याऽऽह—**उपाधीति**। मिथ्यारूपमपि ज्ञेयवस्तुज्ञानोपयोगीत्यत्र वृद्धसंमतिमाह—**तथा हीति**। पाणिपादादीनामन्यगतानामात्मधर्मत्वेनाऽऽरोप्य व्यपदेशे को हेतुरिति चेत्तत्राऽऽह—**सर्वत्रेति**। ज्ञेयस्य ब्रह्मणः शक्तिः संनिधिमात्रेण प्रवर्तनसामर्थ्यं तत्सत्त्वं निमित्तीकृत्य स्वकार्यवन्तो भवन्ति पाण्यादय इति कृत्वेति योजना। सर्वतोक्षीत्यादावुक्तमतिदिशति—**तथेति**। तज्ज्ञेयं यथा सर्वतःपाणिपादमिति व्याख्यातं तथेत्युक्तमेव स्फुटयति—**सर्वत इति**। सर्वतोक्षीत्यादेरक्षरार्थमाह—**सर्वतोक्षीति**। अक्षिश्रवणवत्त्वमवशिष्टज्ञानेन्द्रियवत्त्वस्य पाणिपादमुखवत्त्वं चावशिष्टकर्मेन्द्रियवत्त्वस्य मनोबुद्ध्यादिमत्त्वस्य चोपलक्षणम्। एकस्य सर्वत्र पाण्यादिमत्त्वं साधयति—**सर्वमिति**॥ १३॥

**आ० भा०**—परं ब्रह्मेति। स च य इति प्रतिज्ञातमुच्यते। अन्यद्यत्प्रभाव इति। आदिमद्देहवर्जितमित्यनादिमत्। अन्यथानादीत्येव स्यात्॥ १३॥

**आ० ज०**—प्रतिज्ञातार्थद्वयप्रतिपादनाय ज्ञेयं यत्तदित्यादिकं वाक्यमिति सूचितम्। तत्र केन तु किमुच्यत इत्यत आह—**परमिति**। इति नामोक्त्या अन्यदनादिमदित्यादिकं यत्प्रभाव इति प्रतिज्ञातस्य प्रतिपादकमित्यर्थः। आदिरस्यास्तीत्यादिमन्न आदिमदनादिमदिति व्याख्यानेन विवृतेआदिरस्येत्यनादीति बहुव्रीहित्वाश्रयणेनैव विवक्षितार्थसिद्धेः मतुपो वैयर्थ्यमिति दोषं पश्यंतः केचिदनादीति मत्परामिति चपदं विच्छिद्याहंवासुदेवाख्या परा शक्तिर्यस्य तन्मत्परमिति व्याचक्षते। तदसत्। अर्थासंभवात्। न हि ब्रह्मेति वासुदेवेति कश्चिद्भेदः। न चावतारेषु पारावर्यमित्युक्तमिति भावेन यथा मतुपो न वैयर्थ्यं तथा व्याचष्टे—**आदिमदिति**। आदिर्येषामस्तीत्यादिमंति न विद्यंतेआदिमंति यस्य तदनादिमत्। सामर्थ्यात्तानि देहेंद्रियगुणाक्रियादीनीत्यर्थः। अथवा पूर्वोक्त एव विग्रहः। न च मतुपो वैयर्थ्यं वैदिकं लिंगव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहिर्वा नञ्समासो वायमिति संशयः स्यात्। तथा च ब्रह्म स्वयं कारणं न भवतीत्यपि शंक्येत तन्निवृत्त्यर्थं मतुवंतेनादिशब्देन नञ्समासस्याश्रयंणात्। ये त्वेवं प्रयोजनमनभिधाय मतुपः प्रयोगः श्लोकपूरणार्थ इत्युक्तवंतस्तन्निराचष्टे—**अन्यथेति**। अस्मदुक्तप्रयोजनद्वयानंगीकार इत्यर्थः। सार्थकेन शब्दांतरेण श्लोकपूरणसंभवादिति भावः। ननु बहुव्रीहिमाश्रित्य पुनर्मतुपः प्रयोगे दोषः स्यात्। न चैवम्। किं तु शब्दांतरमेवैतत् तत्कथमयं दोषः अन्यथा यद्विकारीत्यत्रापि दोषप्रसंगात्। मैवम्। बहुव्रीहिविवक्षितत्वाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसंभवे बहुयत्नाश्रयणस्य दोषत्वेनोक्तत्वात्। यद्विकारीत्यत्र गौरवाभावात्॥ १३॥

**रा० भा०**—सर्वतःपाणिपादं तत्परिशुद्धात्मस्वरूपं सर्वतःपाणिपादकार्यशक्तं तथा सर्वतोक्षिशिरोमुखं सर्वतःश्रुतिमत् सर्वतश्चक्षुरादिकार्यकृत् "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति परस्य ब्रह्मणोऽपाणिपादस्यापि सर्वतः पाणिपादादिकार्यकर्तृत्वं श्रूयते। प्रत्यगात्मनोऽपि परिशुद्धस्य तत्साम्यापत्त्या सर्वतः पाणिपादकार्यकर्तृत्वं श्रुतिसिद्धमेव "तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति हि श्रूयते "इदं ज्ञानमुपाश्रित्य मम साधर्म्य-

मागताः । " इति च वक्ष्यते । लोके सर्वमावृत्य तिष्ठतीति । लोके यद्वस्तुजातं तत्सर्वं व्याप्य तिष्ठति परिशुद्धस्वरूपं देशादिपरिच्छेदरहिततया सर्वगतमित्यर्थः ॥ १३ ॥

अ० टी०—एवं सर्वाविषयत्वे ज्ञेयत्वं बाध्यते इति ज्ञेयत्वेन स्वरूपमाह—**सर्वत इति** । सर्वतः पाणयः पादाश्च यस्य तत् । एवं विशेषणद्वयेन सर्वत्र क्रियाशक्तिः । सर्वसेव्यत्वं च निरूपितम् । सर्वतः अक्षीणि शिरांसि मुखानि च यस्य । एवं विशेषणत्रयेण सर्वज्ञानवत्त्वं सर्वमुख्यत्वं ज्ञापितम् । सर्वतःश्रुतिमत् सर्वतः श्रवणेन्द्रिययुक्तम् । अनेन भक्तादिस्तुतिश्रवणे योग्यत्वेन कृपालुत्वं प्रदर्शितम् । लोके स्वकीय इतिशेषः । तर्हि परिच्छिन्नं भविष्यतीत्याशङ्क्याह—सर्वम् आवृत्य व्याप्य सर्वेन्द्रियादियुक्तमेव तिष्ठतीतिभावः ॥ १३ ॥

नी० टी०—एवं स च य इत्येतत् क्षेत्रज्ञस्वरूपमपास्तसमस्तविशेषमुपपाद्य यत्प्रभाव इति प्रतिज्ञातं तस्य प्रभावं वैश्वरूप्यलक्षणमुपपादयति—**सर्वत इति** । सर्वतः सर्वासु दिक्षु अंतर्बहिश्च पाणयः पादाश्चास्य संतीति सर्वतःपाणिपादं । एवं सर्वतः अक्षोणि शिरांसि मुखानि च यस्य तत्सर्वतोक्षिशिरोमुखं । सर्वतःश्रुतिमत् श्रवणवत् । लोके सर्वमावृत्य व्याप्य तिष्ठति यथा स्वप्नदृक् तैजसो वासनामयेनैव पाणिपादादिना स्वाप्नं प्रपंचमनुभवति तस्य च जाग्रत्काले उपाधिभूतं पिंडगतमेव पाणिपादादिकं तदेव स्थूलप्रपंचानुभवसंस्काराधानद्वारा वासनामयस्य प्रपंचस्य कारणं। वासनामयश्च स्थूलप्रपंचस्य कारणमिति बीजांकुरन्यायेनानयोरन्योन्यासिन्नन्योन्यसद्भावोऽन्योन्यकारणत्वं चास्तीति । एवं सकलप्राणिधीवासनोपरक्ताज्ञानोपाधिकं चैतन्यं सकलप्राणिधीवासनामय समष्टिसूक्ष्मप्रपंचमवभासयति । अस्य चोपाधिभूतं ब्रह्मांडगतसकलप्राणिपाणिपादादिकमेव । एवं च पूर्ववत् स्थूलसूक्ष्मयोरपि समष्टिप्रपंचयोरन्योन्यं बीजांकुरन्यायेन कार्यकारणभावमन्योन्यस्यान्योन्यस्मिन्सद्भावं चाभिप्रेत्योक्तं भगवता भाष्यकारेण । सकलप्राणिकरणोपाधिद्वारेण ज्ञेयब्रह्मणोऽस्तित्वं प्रतिपाद्यत इति कार्यद्वारा कारणास्तित्वसिद्धौ च कारणाभावोऽप्यपोह्यते । 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' इति । ननु 'प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम्' इति न्यायेन व्यर्थस्तर्हि कारणोपन्यास इति चेन्न तं विना शुद्धाधिगमायोगात् शाखाचंद्रन्यायेन हि सगुणं निर्गुणस्य वस्तुनो ज्ञापकं यथोक्तं भाष्ये । उपाधिकृतमिथ्यारूपमप्यस्तित्वाधिगमाय ज्ञेयधर्मवत् परिकल्प्योच्यते सर्वतःपाणिपादमित्यादि । तथा हि संप्रदायविदां वचनमध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यत इति ॥ १३ ॥

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥**

शां० भा०—उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणाज्ज्ञेयस्य तद्वत्ताशङ्का मा भूदित्येवमर्थः श्लोकारम्भः—सर्वेन्द्रियगुणाभासं सर्वाणि च तानीन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रियाख्यान्यन्तःकरणे च बुद्धिमनसी ज्ञेयोपाधित्वस्य तुल्यत्वात्सर्वेन्द्रियग्रहणेन गृह्यन्ते । अपि चान्तःकरणोपाधिद्वारेणैव श्रोत्रादीनामप्युपाधित्वमित्यतोऽन्तःकरणबहिष्करणोपाधिभूतैः सर्वेन्द्रियगुणैरध्यवसायसंकल्पश्रवणवचनादिभिरवभासत इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैर्व्यापृतमिव तज्ज्ञेयमित्यर्थः । "ध्यायतीव लेलायतीव " इति श्रुतेः। कस्मात्पुनः कारणान्न व्यापृतमेवेति गृह्यत इत्यत आह सर्वेन्द्रियविवर्जितं सर्वकरणरहितमित्यर्थः । अतो न करणव्यापारैर्व्यापृतं तज्ज्ञेयम् । यस्त्वयं मन्त्रः—" अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः " इत्यादिः स सर्वेन्द्रियोपाधिगुणानुगुण्यभ-

जनशक्तिमत्तज्ज्ञेयमित्येवंप्रदर्शनार्थो न तु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः । "अन्धो मणिमविन्दत्" इत्यादिमन्त्रार्थवत्तस्य मन्त्रस्यार्थः । यस्मात्सर्वकरणवर्जितं ज्ञेयं तस्मादसक्तं सर्वसंश्लेषवर्जितम् । यद्यप्येवं तथाऽपि सर्वभृच्चैव । सदास्पदं हि सर्वं सर्वत्र सद्बुद्ध्यनुगमात् । न हि मृगतृष्णिकादयोऽपि निरास्पदा भवन्ति । अतः सर्वभृत्सर्वं बिभर्तीति । स्यादिदं चान्यज्ज्ञेयस्य सत्त्वाधिगमद्वारं निर्गुणं सत्त्वरजस्तमांसि गुणास्तैर्वर्जितं तज्ज्ञेयं तथाऽपि गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ चोपलब्धृ तज्ज्ञेयमित्यर्थः ॥ १४ ॥

**शां० आ०**—आरोपाद्दते साक्षादेव ज्ञेयस्य पाण्यादिमत्त्वमाशङ्क्याऽऽह—**उपाधीति** । इन्द्रियविशेषणीभूतसर्वशब्दाज्ज्ञेयोपाधित्वन्यायाविशेषाच्चात्र बुद्ध्यादेरपि ग्रहणमित्याह—**अन्तःकरणे चेति** । श्रोत्रादीनां ज्ञेयोपाधित्वस्य मनोबुद्धिद्वारत्वादपि तयोरिह ग्रहणमित्याह—**अपि चेति** । तयोरपीहोपादाने फलितमाह—**इत्यत इति** । अक्षरार्थमुक्त्वा वाक्यार्थमाह—**सर्वेति** । उपाधिद्वारा कल्पितव्यापारवत्त्वे मानमाह—**ध्यायतीति** । कल्पितमेवास्य व्यापारवत्त्वं न वास्तवमित्यत्र भगवतोऽपि संमतिमाकाङ्क्षाद्वारा दर्शयति—**कस्मादित्यादिना** । सर्वकरणराहित्ये फलमाह—**अत इति** । साक्षादेव ज्ञेयस्य वेगवद्विहरणादिक्रियावत्ताया मान्त्रवर्णिकत्वात्कुतोऽस्य करणव्यापारैरव्याप्टतत्वमित्याशङ्क्यानुवादपूर्वकं मन्त्रस्य प्रकृतानुगुणत्वमाह—**यस्त्विति** । करणगुणानुगुण्यभजनमन्तरेण साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनपरत्वे मन्त्रस्य मुख्यार्थत्वं स्यादित्याशङ्क्य तदसंभवान्नैवमित्याह—**अन्ध इति** । अर्थवादस्य श्रुतेऽर्थे तात्पर्याभावान्न प्रकृतप्रतिकूलतेत्यर्थः । सर्वकरणराहित्यं तद्व्यापारराहित्यस्योपलक्षणमित्यङ्गीकृत्योक्तमेव हेतुं कृत्वा वस्तुतः सर्वसङ्गवर्जितत्वमाह—**यस्मादिति** । वस्तुतः सर्वसङ्गाभावेऽपि सर्वाधिष्ठानत्वमाह—**यद्यपीति** । स्वसत्तामात्रेणाधिष्ठानतया सर्वं पुष्णातीत्येतदुपपादयति—**सदिति** । विमतं सति कल्पितं प्रत्येकं सदनुविद्धधीबोध्यत्वात्प्रत्येकं चन्द्रभेदानुविद्धधीबोध्यचन्द्रभेदवदित्यर्थः । सर्वं सदास्पदमित्ययुक्तं मृगतृष्णिकादीनां तदभावादित्याशङ्क्याऽऽह—**न हीति** । तेषामपि कल्पितत्वे निरधिष्ठानत्वायोगान्निरूप्यमाणे तदधिष्ठानं सदेवेति सर्वस्य सति कल्पितत्वमविरुद्धमित्यर्थः । सर्वाधिष्ठानत्वेन ज्ञेयस्य ब्रह्मणोऽस्तित्वमुक्तमुपसंहरति—**अत इति** । इतश्च ज्ञेयं ब्रह्मास्तीत्याह—**स्यादिदं चेति** । न हि तस्योपलब्धृत्वमसत्त्वे सिध्यतीत्यर्थः ॥ १४ ॥

**आ० भा०**—॥ १४ ॥

**आ० ज०**—॥ १४ ॥

**रा० भा०**—सर्वेन्द्रियगुणाभासं सर्वेन्द्रियगुणैराभासो यस्य तत्सर्वेन्द्रियगुणाभासम् इन्द्रियगुणा इन्द्रियवृत्तयः इन्द्रियवृत्तिभिरपि विषयान् ज्ञातुं समर्थमित्यर्थः । स्वभावतः सर्वेन्द्रियविवर्जितं विनैवेन्द्रियवृत्तिभिः स्वत एव सर्वं जानातीत्यर्थः । असक्तं स्वभावादेव देवादिदेहसङ्गरहितं सर्वभृच्चैव देवादिसर्वदेहभरणसमर्थं च । "स एकधा भवति द्विधा भवति त्रिधा भवति" इत्यादिश्रुतेः । निर्गुणं तथा स्वभावतः सत्त्वादिगुणरहितं गुणभोक्तृ च सत्त्वादीनां गुणानां भोगसमर्थं च ॥ १४ ॥

**अ० टी०**—किंच—**सर्वेन्द्रियगुणाभासमिति** । सर्वेषामिन्द्रियाणां चक्षुरादीनां गुणेषु रूपादिषु भासमानम् । अनेन यत्र सौन्दर्यादिकं यत्किंचिदपि तद्भगवत्संबन्धादेवेति ज्ञापितम् । तर्हि लौकिकेन्द्रियादियुक्तं भविष्यतीत्यत आह—सर्वेन्द्रियविवर्जितं रहितमित्यर्थः । अनेनेन्द्रियाणां पूर्वोक्तानामलौकिकत्वं ज्ञापितम् । एतदेव विवेचयति—**असक्तमित्यादिना** । असक्तं सर्वत्राऽऽसक्तिरहितं तेन संगाभावः सूचितः । च पुनस्तादृशमेव सर्वभृत् सर्वाधारभूतं । सर्वधारणेन सगुणत्वमाशङ्क्याह—निर्गुणं सत्त्वादिगुणरहितम् । एवं गुणवैयर्थ्यमाशङ्क्याह—गुणभोक्तृ च गुणेषु स्थित्वा तद्भोगं करोतीत्यर्थः । चकारेण तत्पालकमपीति ज्ञापितम् ॥ १४ ॥

**नी० टी०**—ननु यूपाहवनीयादिवदलौकिकमपि ब्रह्म कार्यकारणप्रपंचविशिष्टं चित्रमेव सर्वतःपाणिपादं तदित्यादिना शास्त्रेण कार्यशेषतया समर्थ्यते । न च वाच्यं उपासनापरं शास्त्रं न ब्रह्मणो वैचित्र्य प्रतिपादयितुमीष्टे

इति। देवताधिकरणन्यायेन देवताविग्रहादिवत्तद्वैचित्र्यस्याप्यवांतरतात्पर्यविषयतया सिद्धेः। न च देवताविग्रहादेर्व्यावहारिकमेव सत्वं न पारमार्थिकं ब्रह्मज्ञानेन तस्य बाधादिति वाच्यं सत्ताद्वैविध्यस्याप्रसिद्धेः। तस्मात्सर्वतःपाणिपादत्वादिकं ब्रह्मणो वास्तवमेवेति नापवादमर्हतीत्याशंक्याह—**सर्वेन्द्रियेति**। सर्वाण्यांतराणि बाह्यानि चेंद्रियाणि मनोबुद्ध्यहंकारचित्ताख्यानि श्रोत्रादीनि चेति ग्राहकमात्रसंगृहीतं। गुणाश्च विषयास्तेन ग्राह्यमात्रं गृह्यते समस्तग्राह्यग्राहकवदाभासते न तु ग्राह्यग्राहकस्वरूपं विचित्रं यथा जलसूर्योऽधस्थ इव कंपत इवाभासते नतु वस्तुतोऽधस्तः कंपते वा तद्वदात्मनो ग्राह्यग्राहकाकारत्वं मिथ्येत्यर्थः। कुत एतत् यतः सर्वेन्द्रियविवर्जितं इंद्रियेतिगुणानामप्युपलक्षणं। नहि ब्रह्मणि किंचित् ग्राह्यं रूपादि ग्राहकं वा मनआदि वर्तते। 'अशब्दमस्पर्शमरूपमव्ययं। अप्राणो ह्यमनाः शुभ्रः। यत्तदद्रश्यमग्राह्यमचक्षुः श्रोत्रं तदपाणिपादम्' इत्यादिशास्त्रात् तस्मान्न प्रपंचविशिष्टं विचित्रं ब्रह्म। कथं तर्हि सर्वं ब्रह्मेति शास्त्रमित्याशंक्याह—**असक्तं सर्वभृच्चैवेति**। अत्र सर्वभृदिति सर्वाधारत्वोक्त्या सर्वस्मात्पृथग्भूतमित्युक्तं। सर्वस्य ब्रह्मणा सहाधाराधेयभावोऽपि किं घटरूपयोरिव समवायसंबंधेन कुंडबदरयोरिव संयोगसंबंधेन वेत्याशंक्य संबंधं विनैव सर्वभृत्त्वं ब्रह्मण इत्याह—**असक्तमिति**। ननु व्याहतमेतत् असक्तमिति सर्वभृदिति चेति नैष दोषः न ह्युषरभूमिर्मरीचिकोदकेन संसक्ता अथ च तदाधारभूताऽपि भवति तद्वदेतद्भविष्यति। नन्वेवं प्रपंचस्य मिथ्यात्वमापततीति। तथा च कर्मोपास्तिविधय उपरुध्येरन् न ब्रह्मात्मैकत्वज्ञानेन यावद्वैतं न बाध्यते तावत्क्रियाकारकादिसर्वव्यवहारस्य सत्यत्वोपगमात्। "प्राणा वै सत्यं तेषामेष सत्यम्" इति श्रुत्याऽपि प्राणोपलक्षितस्य कृत्स्नस्य प्रपंचस्य व्यावहारिकं सत्यत्वमुक्त्वा ततोऽप्यधिकं परमार्थसत्यं ब्रह्म दर्शितं। सत्यत्वं चाबाध्यत्वं तत्किंचित्कालं प्राणानामस्ति ब्रह्मणस्तु सार्वदिकमिति यथा भूपतीनां भूपतिरित्युक्ते ऐश्वर्याल्पत्वभूयस्त्वकृतो भेदः स्पष्ट एवमिहापि द्रष्टव्यं तस्माद्ब्रह्मणः सविशेषत्वं निष्कलात्मबोधात् प्रागेव नतूर्ध्वमित्यवश्यं तत्त्वज्ञानेन बाधितुं शक्यमित्यनुपाधिकं ब्रह्म न केनचित्कार्यशेषतां नेतुं शक्यं। तदधिगमे क्रियाकारकादिद्वैतोपमर्दादुपास्योपासकोपासनाभेदस्य बाधितत्वात्। तस्माद्युक्तमुक्तमुपाधिकृतं रूपं मिथ्येति। किंच निर्गुणं गुणभोक्तृ च ग्राह्यग्राहकसंबंधशून्यमपि ग्राहकेषु बुद्ध्यादिषु ग्राह्यसंबंधात्सुखाद्याकारेण परिणतेषु सत्सु केवलं तत्प्रकाशकत्वमात्रेण गुणभोक्तृत्वमप्यस्य चिदाभासरूपस्योपपद्यते। यथा प्रतिबिंबरूपे रवावुपाधिगतं चलनादिकं। तथा च श्रुतिः "ध्यायतीव लेलायतीव" इति बुद्धौ ध्यायंत्यां तत्र प्रविष्टश्चिदाभासो ध्यायतीव विषयान्। बुद्धौ लेलायंत्यां विषयप्रदेशं गच्छंत्यां सोऽपि लेलायतीव नतु स्वतो ध्यायति लेलायति वेति प्रतिपादयति। एतेन "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स श्रृणोत्यकर्णः" इत्यपि ब्रह्मण उपाधिगुणानुगुण्यभजनशक्तिमत्त्वेनैव व्याख्येयं। अयमपादोऽपि पादे जववति जववान् भवतीति। अंधो मणिमविंददित्यादिकं वचनजातं चात्रानुसंधेयं। तस्माद्युक्तमुक्तं निर्गुणं गुणभोक्तृ चेति। भाष्ये तु निर्गुणं सत्वादिगुणरहितमपि तेषां गुणानां सुखदुःखमोहात्मकत्वेन परिणतानां भोक्तृ च उपलब्धृ चेति व्याख्यातम्॥ १४॥

## बहिरन्तश्च भूतानामचरं चरमेव च॥
## सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥ १५॥

**शां० भा०**—किंच—बहिस्त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवावधिं कृत्वा बहिरुच्यते। तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वाऽन्तरुच्यते। बहिरन्तश्चेत्युक्ते मध्येऽभावे प्राप्त इदमुच्यतेऽचरं चरमेव च यच्चराचरं देहाभासमपि तदेव ज्ञेयं यथा रज्जुसर्पाभासः। यद्यचरं चरमेव च

व्यवहारविषयं सर्वं ज्ञेयं किमर्थमिदमिति सर्वैर्न विज्ञेयमिति । उच्यते, सत्यं सर्वाभासं तत्तथाऽपि व्योमवत्सूक्ष्ममतः सूक्ष्मत्वात्स्वेन रूपेण तज्ज्ञेयमप्यविज्ञेयमविदुषाम् । विदुषां त्वात्मैवेदं सर्वं ब्रह्मैवेदं सर्वमित्यादिप्रमाणतो नित्यं विज्ञातमविज्ञाततया दूरस्थं वर्षसहस्रकोट्याऽप्यविदुषामप्राप्यत्वादन्तिके च तदात्मत्वाद्विदुषाम् ॥ १५ ॥

**शां० आ०**—इतोऽपि ज्ञेयं ब्रह्मास्तीत्याह—**किंचेति** । बहिरिति व्याख्येयमादाय व्याचष्टे—**त्वगिति** । भूतेभ्यो बहिर्बाह्यविषयाद्यात्मकमित्यर्थः । कथमनात्मन एवाऽऽत्मत्वं कल्पनयेत्याह—**आत्मत्वेनेति** । अन्तःशब्दार्थमाह—**तथेति** । भूतानां चराचराणामन्तर्मध्ये प्रत्यग्भूतामित्यर्थः । द्वितीयं पादमवतार्य व्याचष्टे—**बहिरित्यादिना** । यन्मध्ये भूतात्मकं नानाविधदेहात्मना भासमानं तदपि ज्ञेयान्तर्भूतं तत्त्वं सदित्यर्थः । कथं चराचरात्मनो भूतजातस्य ज्ञेयत्वं तत्राऽऽह—**यथेति** । अधिष्ठाने रज्ज्वां कल्पितसर्पादेरन्तर्भाववद्देहाभासस्यापि ज्ञेयान्तर्भावान्नासत्त्वं मध्ये ज्ञेयस्य शङ्कितव्यामित्यर्थः । सर्वात्मकं चेज्ज्ञेयं सर्वैरिदमिति गृह्येतेति शङ्कते—**यदीति** । इदमिति ग्राह्यत्वयोग्यत्वाभावान्नेत्याह—**उच्यत इति** । सर्ववस्त्वात्मना भासते तदयोग्यत्वं कथमित्याशङ्क्याऽऽह—**सत्यमिति** । सूक्ष्मत्वेऽपि किं स्यादित्याशङ्क्याऽऽह—**अत इति** । सूक्ष्मत्वमतीन्द्रियत्वम् । तस्याविज्ञेयत्वे कुतस्तज्ज्ञानान्मुक्तिस्तत्राऽऽह—**अविदुषामिति** । विशेषणफलमाह—**विदुषां त्विति** । तेषामात्मत्वन ज्ञातं चेत्कथं दूरस्थत्वमित्याशङ्क्याऽऽह—**अविज्ञाततयेति** । कथं तर्हि तस्य प्रत्यक्त्वं तत्राऽऽह—**अन्तिके चेति** । विद्वदविद्वद्भेदापेक्षया "दूरात्सुदूरे तदिहान्तिके च" इति श्रुतिस्तदर्थोऽत्र प्रसङ्गादनूदित इत्यर्थः ॥ १५ ॥

**आ० भा०**—सर्वेंद्रियाणि गुणांश्चाभासयतीति सर्वेन्द्रियगुणाभासम् । इंद्रियवर्जितत्वाद्यर्थ उक्तः पुरस्तात् ॥ १५ ॥

**आ० ज०**—अहं परा शक्तिर्यस्येति व्याख्यानेऽर्थासंभवं कश्चिदन्यथाप्राह । ब्रह्मणः सर्वविशेषप्रतिषेधेनैवात्र विजिज्ञापयिषितत्वात् । शक्तिमत्त्वप्रतिपादनं विरुद्धमिति । तदसत् । अत्र विशेषत्वस्य दर्शनादिति भावेनाह—**सर्वेति** । गुणांस्तद्विषयानाभासयति प्रत्यापयति प्रत्येतीतिवा । भासतेः पचाद्यच् । एवं सर्वतःपाणिपादं तत्सर्वभृत् गुणभोक्तृ चेत्यादिकमप्युदाहार्यम् । कथं तर्हि सर्वेंद्रियाविवर्जितं निर्गुणमचरमित्याद्युक्तमित्यतआह—**इंद्रियेति** । आदिशब्दात्परं शब्देत्यध्याहार्यम् पुरस्तात् द्वितीये१५॥

**रा० भा०**—पृथिव्यादिभूतानि परित्यज्य अशरीरो बहिर्वर्तते तेषामन्तश्च वर्तते "जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा" इत्यादिश्रुतिसिद्धस्वच्छन्दवृत्तिषु अचरं चरमेव च स्वभावतोऽचरं चरदेहित्वे सूक्ष्मत्वात्तदविज्ञेयम् एवं सर्वशक्तिवियुक्तं सर्वज्ञं तदात्मतत्त्वम् अस्मिन्क्षेत्रे वर्तमानमपि अतिसूक्ष्मत्वात् देहात् पृथक्त्वेन संसारिभिरविज्ञेयं दूरस्थं चान्तिके च तत् । अमानित्वाद्युक्तगुणरहितानां विपरीतगुणानां पुंसां स्वदेहे वर्तमानमप्यतिदूरस्थं तथा अमानित्वादिगुणोपेतानां तदेवान्तिके च वर्तते१५

**अ० टी०**—एवं भोगकर्तृत्वे व्यापकत्वं बाध्यत इत्यत आह—**बहिरिति** । भूतानां चराचराणां बहिः भोक्तृत्वेन, अन्तस्तद्रूपेणात्मरूपेण वा तदेव एवं बहिरन्तःस्थत्वे सति भिन्नत्वेन व्यापकत्वहानिमाशङ्क्याह—अचरं स्थावरं, चरमेव च जङ्गमं च । एवकारेण स्थावरत्वसहितमेव जङ्गमत्वं जङ्गमत्वसहितमेव स्थावरत्वं, तेन विरुद्धधर्माश्रयत्वं ज्ञापितम् । एवंसति सर्वज्ञेयत्वमेव स्यात् पूर्वोक्तसाधनवत्सु को विशेष इत्यत आह—**सूक्ष्मत्वादिति** । तत् ब्रह्म तत्र तत्र लीलार्थरूपेण सूक्ष्मत्वात् साधनाभावे अविज्ञेयं विशेषेण ज्ञातुमशक्यमित्यर्थः । एतदेवाह । दूरस्थं चान्तिके च तत् । बहिर्मुखाणां दूरस्थं, भक्तानां च अन्तिके निकटे स्थितमित्यर्थः । चकारद्वयेनैतदुभयस्याऽपि लीलात्मकत्वं ज्ञापितम् । यद्वा । मर्यादास्थानां दूरस्थं, पुष्टिस्थानाम् अन्तिके स्थितम् । यद्वा । पुष्टिमार्गीयाणामेव विरहदशायामतितापेन पुरस्कृतं तच्च विरहरीत्या दूरस्थमेव, अन्तिके हृदये परोक्षरीत्या । तदज्ञानेन तज्जीवनार्थं निकटे च स्थितम् । 'मया परोक्षं भजता तिरोहितम्' इतिरीत्येतिभावः ॥ १५ ॥

नी० टी०—नन्वसक्तमसंबद्धं चेत्कथमुपलब्धं स्यादित्याशंक्याह—**बहिरिति**। भूतानां प्राणिनामेकादशेंद्रियाणि स्थूलभूतानि च केवलविकारत्वेन व्यवहितत्वात् बहिरित्युच्यंते। महदहंकारपंचतन्मात्राव्यक्तानि प्रकृतिरूपत्वेन संनिहितत्वादंतरित्युच्यंते चराचरमिति। उभयनिकृष्टाश्चराचरोपाध्युपलक्षिता अवधिभूताः पुरुषाश्चरमचरं चेत्यनेनोच्यते। तत्र चराचरं ज्ञेयमिति सामानाधिकरण्यात् पुरुषाणां ज्ञेयब्रह्मभाव उक्तः। बहिरंतश्च ज्ञेयमिति षोडशसु विकारेष्वष्टासु प्रकृतिषु च ज्ञेयस्य संबंध उक्तः स च संबंधो यादृशो यक्षस्तादृशो बलिरिति न्यायेनाध्यस्तप्रकृतिविकृतिनिरूपितत्वेनाध्यस्त एव। एवं च पुरुषस्योपलब्धिमात्रशरीरस्य गुणैः सहाध्यासिकसंबंधसत्त्वात् गुणोपलब्धृत्वं युज्यते। यथा प्रकाशमात्रस्वरूपस्य रवेः प्रकाश्यसंबंधापेक्षं प्रकाशयितृत्वं तद्वदित्यर्थः। ननु नित्यापरोक्षः पुरुषप्रकृतिविकारसंबद्धश्च तर्हि कुतो न सर्वैर्गृह्यत इत्याशंक्याह सूक्ष्मत्वात् दुर्लक्षत्वात्तज्ज्ञेयं अविज्ञेयं दुर्विज्ञेयं। यथा जपाकुसुमोपहितस्य स्फटिकस्य शौक्ल्यं सन्निहितमपि रूपांतरविक्षेपेण तिरोहितं सन्न गृह्यते। एवं नित्यापरोक्षमप्यसंगं ब्रह्मोपाध्युपधानाद्विविक्ततया न ग्रहीतुं शक्यं किंत्वौपाधिकधर्मोपेतमेव गृह्यते मूढैः। विद्वद्भिस्तूपाधिप्रविलापनेन सुग्रहमित्याशयः। एतदेवाह—**दूरस्थं चांतिके च तदिति**। यथा मूढो जलसूर्यं बिंबसूर्याद्दूरस्थं मन्यते। विद्वांस्तु उपाधिप्रतिहतनयनरश्मीनामुपर्युत्प्लुत्य गतानां बिंबग्राहित्वं स्पष्टं। बिंबस्याधस्थत्वग्रहणं तु पूर्वप्रवृत्ताधोमुखवृत्तिसंस्कारापेक्षमिति जानन् बिंबदेशे एव प्रतिबिंबं पश्यति। बिंबे एव जलस्थत्वमध्यस्य तेन तु जले प्रतिबिंब इति उपाधौ धर्म्यध्यासकल्पनातो विषयस्योपाधिसंसर्गमात्राध्यासकल्पने लाघवात्। एवं बिंबभूतं ब्रह्म प्रतिबिंबभूताजीवान्मूढानां विप्रकृष्टं विदुषां त्वत्यंतं संनिकृष्टमिति ॥ १५ ॥

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥**

**शां० भा०—किंच—अविभक्तं च प्रतिदेहं व्योमवत्तदेकं भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं देहेष्वेव विभाव्यमानत्वाद्भूतभर्तृ च भूतानि बिभर्तीति तज्ज्ञेयं भूतभर्तृ च स्थितिकाले। प्रलयकाले ग्रसिष्णु ग्रसनशीलम्। उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पितस्य ॥ १६ ॥**

शां० आ०—ज्ञेयस्यास्तित्वे हेत्वन्तरमाह—**किंचेति**। तद्धि प्रतिदेहं नभोवदेकं तद्भेदे मानाभावाद्भिन्नत्वे च घटवदनात्मत्वापातादतोऽद्वितीयं सर्वत्र प्रत्यग्भूतं ज्ञेयं नास्तीत्यतिसाहसमित्याह—**अविभक्तं चेति**। कथं तर्हि देहादेर्भेदधीरित्याशङ्क्य कल्पनयेत्याह—**भूतेष्विति**। तत्र हेतुः—**देहेष्विति**। कार्याणां स्थितिहेतुत्वाच्च ज्ञेयमस्तीत्याह—**भूतेति**। निमित्तोपादानतया तेषां प्रलये प्रभवे च कारणत्वाच्च तदस्तीत्याह—**प्रलयेति**। तर्हि कार्यकारणत्वस्य वस्तुत्वान्नाद्वैतमित्याशङ्क्याऽऽह—**यथेति** ॥ १६ ॥

**आ० भा०—॥ १६ ॥**

आ० ज०—॥ १६ ॥

**रा० भा०—देवमनुष्यादिभूतेषु सर्वत्र स्थितमात्मवस्तु वेदितृत्वैकाकारतया अविभक्तम् अविदुषां देवाद्याकारेणायं देवो मनुष्य इति विभक्तमिव च स्थितं देवोऽहं मनुष्योऽहमिति देहसामानाधिकरण्येनानुसंधीयमानमपि वेदितृत्वेन देहादर्थान्तरभूतं ज्ञातुं शक्यमित्याद्युक्तमेतद्यो वेत्तीति। इदानीं प्रकारान्तरैश्च देहादर्थान्तरत्वेन ज्ञातुं शक्यमित्याह। भूतभर्तृ चेति। भूतानां पृथिव्यादीनां देहरूपेण**

**संहृतानां यद्भर्तृ तद्भर्तव्येभ्यो भूतेभ्योऽर्थान्तरं ज्ञेयम् । अर्थान्तरमिति ज्ञातुं शक्यमित्यर्थः । तथा ग्रसिष्णु अन्नादीनां भौतिकानां ग्रसिष्णु ग्रस्यमानेभ्यो भूतेभ्यो ग्रसितृत्वेन अर्थान्तरभूतमिति ज्ञातुं शक्यं प्रभविष्णु च प्रभवहेतुः । ग्रस्तानामन्नादीनामाकारान्तरेण परिणतानां प्रभवहेतुस्तेभ्योऽर्थान्तरमिति ज्ञातुं शक्यमित्यर्थः । मृतशरीरे ग्रसनप्रभवादीनामदर्शनात् न भूतसंघातरूपं क्षेत्रं ग्रसनप्रभवभरणहेतुरिति निश्चीयते ॥ १६ ॥**

**अ० टी०**—किंच—**अविभक्तमिति** । भूतेषु स्थावरजङ्गमेषु स्वलीलार्थस्वस्वरूपात्मकत्वेन सर्वस्य प्रकटितत्वात् अभिन्नं रसार्थं द्वितीयरूपेण कृतत्वात् विभक्तमिव भिन्नमिव स्थितम् । इव पदेन स्वेच्छया तथा प्रदर्शयतीति ज्ञापितम् । किंच तत् पूर्वोक्तं ज्ञेयं भूतानां भर्तृ रक्षकं पोषकं । भर्तृपदेन रमणशीलत्वं ज्ञापितं तेन रमणार्थमेव स्थितिकाले रक्षकमित्यर्थः । वियोगात्मकप्रलयकाले ग्रसिष्णु ग्रसनशीलं स्वस्मिन्नवरोधकमित्यर्थः । च पुनः सृष्टिकाले लीलात्मकरसदानात्मके प्रभविष्णु नानास्वरूपैः प्रभवनशीलम् ॥ १६ ॥

**नी० टी०**—एतदेवोपपादयत्यर्द्धेन—**अविभक्तं चेति** । "एक एव तु भूतात्मा भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचंद्रवत्" इति श्रुतेर्भूतेषु कार्यकारणसंघातापन्नेषु जलपात्रेषु चंद्रस्येव ब्रह्मणः प्रतिबिंबा जीवास्ते चोक्तरीत्या बिंबादनन्या इति तद्रूपेण भूतेष्वविभक्तं च विभागमप्राप्तमपि ज्ञेयवस्तु मूढदृष्ट्या विभक्तमिव दूरदेशस्थमिव चाद्विभिन्नमिव च स्थितं । एवं तर्हि चंद्रादुदपात्राणामिव भूतानां पृथक्सत्त्वापत्तिरित्याशंक्याह—**भूतभर्तृ चेति** । अधिष्ठानत्वेन सर्वाणि भूतानि धारयतीति न ततस्तेषां पृथक्सत्ताऽस्ति रज्जुत इव तदध्यस्तानां सर्पदंडधारादीनामित्यर्थः । एतदेवाह ग्रसिष्णु प्रभविष्णु च यथा रज्जुस्तत्त्वज्ञानदशायां सर्पादीन् ग्रसति अज्ञानदशायां च तानेव प्रसूते तद्वत् ज्ञातं ब्रह्म सर्वभूतानि ग्रसिष्णु ग्रसनशीलमज्ञातं च सर्वभूतानां प्रभविष्णु उत्पादनशीलम् ॥ १६ ॥

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ॥**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥**

**शां० भा०—किंच सर्वत्र विद्यमानं सन्नोपलभ्यते चेज्ज्ञेयं तमस्तर्हि । न, किं तर्हि—ज्योतिषामादित्यादीनामपि तज्ज्ञेयं ज्योतिः । आत्मचैतन्यज्योतिषेद्धानि ह्यादित्यादीनि ज्योतींषि दीप्यन्ते "येन सूर्यस्तपति तेजसेद्धः, तस्य भासा सर्वमिदं विभाति" इत्यादिश्रुतिभ्यः । स्मृतेश्चेहैव 'यदादित्यगतं तेजः' इत्यादेः । तमसोऽज्ञानात्परमस्पृष्टमुच्यते । ज्ञानादेर्दुःसंपादनबुद्ध्या प्राप्तावसादस्योत्तम्भनार्थमाह ज्ञानममानित्वादि । ज्ञेयं 'ज्ञेयं यत्तत्प्रवक्ष्यामि' इत्यादिनोक्तम् । ज्ञानगम्यं ज्ञेयमेव ज्ञातं सज्ज्ञानफलमिति ज्ञानगम्यमुच्यते । ज्ञायमानं तु ज्ञेयम् । तदेतत्त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितम् । तत्रैव हि त्रयं विभाव्यते ॥ १७ ॥**

**शां० आ०**—इतोऽपि ज्ञेयस्यास्तित्वमित्याह—**किंचेति** । हेत्वन्तरमेव स्फोरयितुं शङ्कते—**सर्वत्रेति** । न तत्तमो मन्तव्यमित्याह—**नेति** । तर्हि किं तस्य रूपमिति पृच्छति—**किं तर्हीति** । तत्रोत्तरं—**ज्योतिषामिति** । सूर्यादीनां बुद्ध्यादीनां च प्रकाशकत्वादस्ति ज्ञेयं ब्रह्मेत्याह—**ज्योतिषामिति** । तदेवोपपादयति—**आत्मेति** । तत्र श्रुतिद्वयं प्रमाणयति—**येनेति** । उक्तेऽर्थे वाक्यशेषमपि दर्शयति—**स्मृतेश्चेति** । ज्ञेयस्यातमस्त्वेऽपि तमःस्पृष्टत्वमाशङ्क्योक्तं—**तमस इति** । उत्तरार्धस्य तात्पर्यमाह—**ज्ञानादेरिति** । उत्तम्भनमुद्दीपनं प्रकटीकरणमिति यावत् । ज्ञानममानित्वादि करणव्युत्पत्त्येति

शेषः। ज्ञानगम्यं ज्ञेयमिति पुनरुक्तिं शङ्कित्वोक्तं—**ज्ञेयमिति**। उक्तत्रयस्य बुद्धिस्थतया प्राकट्यं प्रकटयति—**तदेतदिति**। तत्रानुभवमनुकूलयति—**तत्रैवेति** ॥ १७ ॥

**आ० भा०**—॥ १७ ॥

**आ० ज०**—॥ १७ ॥

**रा० भा०—ज्योतिषां दीपादित्यमणिप्रभृतीनामपि तदेव ज्योतिः प्रकाशकं दीपादित्यादीनामपि आत्मप्रभावरूपं ज्ञानमेव प्रकाशयति । दीपादयस्तु विषयेन्द्रियसन्निकर्षविरोधिसंतमसनिरसनमात्रं कुर्वते तावन्मात्रेणैव तेषां प्रकाशकत्वं तमसः परमुच्यते । तमःशब्दः सूक्ष्मावस्थप्रकृतिवचनः प्रकृतेः परमुच्यत इत्यर्थः। अतो ज्ञानं ज्ञेयं ज्ञानैकाकारमिति ज्ञेयं तच्च ज्ञानगम्यम् अमानित्वादिभिरुक्तैः ज्ञानसाधनैः प्राप्यमित्यर्थः। हृदि सर्वस्य विष्ठितं सर्वस्य मनुष्यादेः हृदि विशेषेणावस्थितं सन्निहितम् ॥ १७ ॥**

**अ० टी०**—किंच—**ज्योतिषामिति**। ज्योतिषां रविचन्द्रादीनामन्यप्रकाशमानानामपि तदेव ज्योतिः प्रकाशकमित्यर्थः। अत्रायं भावः। "न तत्र सूर्यो भाति "इत्यादिश्रुत्या तत्रैतेषामभानमुक्तं, तथाच तत्प्रकटनवैयर्थ्यं स्यात्तदर्थं तत्प्रकाशनेन तत्र शोभादिकारकमित्यर्थः। अन्यथाऽन्यत्र सर्वप्रकाशकत्वमपि न भवेत्। तर्हि मुख्यतमोरूपं सर्वप्रकाश्यत्वेन भविष्यतीत्यत आह—**तमसः परमिति**। तमसः मुख्यतमसोऽपि परम् उपरि उत्कृष्टं वा उच्यते श्रूयते इत्यर्थः। अतएव श्रुतिरपि "तमसा गूढमग्रे प्रकेतम्" इत्याह। ननु स्वप्रकाश्यत्वे स्वस्यैव नानास्वरूपात्मके सर्वेषां कथं न तज्ज्ञानमित्यत आह—**ज्ञानमिति**। ज्ञानबुद्धिवृत्त्यभिव्यक्त्यात्मकं च तदेव। तेन यत्र ज्ञापनेच्छा तत्रैव तद्रूपेणाविर्भवतीत्यर्थः। तथैव ज्ञेयं ज्ञेयरूपेणाविर्भूतमित्यर्थः। तथापि पुरुषोत्तमगृहात्मकमेवेत्याह—**ज्ञानगम्यमिति**। ज्ञाने ज्ञानेन पूर्वोक्तरूपेण गम्यं प्राप्यं तेनाऽक्षरात्मकत्वं ज्ञापितम्। ननु पूर्वं ज्ञानरूपत्वेन सर्वाऽगम्यत्वमुक्तं तत्कथं ज्ञानगम्यमित्याह—**हृदीति**। सर्वस्य प्राणिमात्रस्य हृदि धिष्ठितम् अधिष्ठितमित्यर्थः। सर्वप्रेरकत्वेन स्थितं तेन यत्र तथेच्छा तत्र ज्ञानरूपेणाविर्भवति यत्र न ज्ञापनेच्छा तत्राऽऽच्छादकत्वेन भवतीतिभावः ॥ १७ ॥

**नी० टी०**—एवं ज्ञेयस्य तटस्थलक्षणमुक्त्वा स्वरूपलक्षणमाह—**ज्योतिषामिति**। ज्योतिषां बाह्यानामादित्यादीनामांतराणां च बुद्ध्यादीनामितरावभासकानामपि तज्ज्ञेयं ब्रह्म ज्योतिरवभासकं चैतन्यज्योतिषो जडज्योतिरवभासकत्वोपपत्तेः तथा च श्रुतयः। "येन सूर्यस्तपति तेजसेद्धः। तस्य भासा सर्वमिदं विभाति" इत्याद्याः वक्ष्यति च। यदादित्यगतं तेज इत्यादि तमसोऽज्ञानात् भूतग्रासप्रसवहेतोः परं दूरस्थं तदुच्यते। ननु यथा चांद्रस्य ज्योतिषोऽवभासकं तत्सजातीयं सौरं ज्योतिरितिज्योतिःशास्त्रे प्रसिद्धं। एवं सौरादिज्योतिषामप्यवभासकं किंचित्तत्सजातीयं ज्योतिरलौकिकं स्यादित्याशंक्याह—**ज्ञानमिति**। केवलज्ञप्तिमात्रशरीरं यज्ज्योतिर्न तु भौतिकं तदेव ज्ञेयं वस्तु आवृतत्वात् ज्ञानेन प्राप्तुमिष्टतमम्। कुतस्तर्हि तज्ज्ञानमत आह—**ज्ञानगम्यमिति**। यतस्तज्ज्ञानेनामानित्वादिना ज्ञानसाधनेन गम्यं प्राप्यं। किं तर्हि ग्रामांतरवद्देशव्यवहितं वा बाल्ययौवनाद्यवस्थांतरवत् कालव्यवहितं वा तत्प्राप्यमस्तीत्यत आह—**हृदि सर्वस्य धिष्ठितमिति**। स्वात्मभूतमेव तदंतर्दृष्टीनां सम्यक् प्रकाशत इत्यर्थः॥ १७॥

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ॥**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

**शां० भा०**—यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरभ्यते—इत्येवं क्षेत्रं महाभूतादि धृत्यन्तं तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तं ज्ञेयं च 'ज्ञेयं यत्तत्' इत्यादि 'तमसः परमुच्यते' इत्येवमन्तमुक्तं समासतः संक्षेपतः । एतावान्सर्वो हि वेदार्थो गीतार्थश्चोपसंहृत्योक्तः । अस्मिन्सम्यग्दर्शने कोऽधिक्रियत इत्युच्यते मद्भक्तो मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो यत्पश्यति शृणोति स्पृशति वा सर्वमेव भगवान्वासुदेव इत्येवंग्रहाविष्टबुद्धिर्मद्भक्तः स एतद्यथोक्तं सम्यग्दर्शनं विज्ञाय मद्भावाय मम भावो मद्भावः परमात्मभावस्तस्मै मद्भावायोपपद्यते मोक्षं गच्छति ॥ १८ ॥

**शां० आ०**—त्वमर्थशुद्ध्यर्थं सविकारं क्षेत्रं पदवाक्यार्थविवेकसाधनं चामानित्वादि तत्पदार्थं च शुद्धं तद्भावोक्त्यर्थमुक्त्वा तेषां फलमुपसंहरति—**यथोक्तेति** । पूर्वार्धं विभजते—**इत्येवमिति** । वक्तव्यान्तरे सति किमिति त्रितयमेव संक्षिप्योपसंहृतं तत्राऽऽह—**एतावानिति** । उत्तरार्धमाकाङ्क्षाद्वाराऽवतारयति—**अस्मिन्निति** । ईश्वरे समर्पितसर्वात्मभावमेवाभिनयति—**यत्पश्यतीति** । विज्ञाय लब्ध्वेत्यर्थः ॥ १८ ॥

**आ० भा०**—॥ १८ ॥

**आ० ज०**—॥ १८ ॥

**रा० भा०**—एवं 'महाभूतान्यहंकार' इत्यादिना 'संघातश्चेतना धृतिः' इत्यन्तेन क्षेत्रतत्त्वं समासेनोक्तम् । 'अमानित्वम्' इत्यादिना 'तत्त्वज्ञानार्थदर्शनम्' इत्यन्तेन ज्ञातव्यस्यात्मतत्त्वस्य ज्ञानसाधनमुक्तम् । 'अनादि मत्परम्' इत्यादिना 'हृदि सर्वस्य विष्ठितम्' इत्यन्तेन ज्ञेयस्य क्षेत्रज्ञस्य याथात्म्यं च संक्षेपेणोक्तम् । मद्भक्त एतत् क्षेत्रयाथात्म्यं क्षेत्राद्विविक्तात्मस्वरूपप्राप्त्युपाययाथात्म्यं च विज्ञाय मद्भावायोपपद्यते मम यो भावः स्वभावः असंसारित्वम् असंसारित्वप्राप्तये उपपन्नो भवतीत्यर्थः ॥ १८ ॥

**अ० टी०**—उपसंहरति—**इतीति** । इति अमुना प्रकारेण 'महाभूतानीत्यादिना' क्षेत्रम्, 'अमानित्वमित्यादिना' ज्ञानम्, 'अनादि मत्परं ब्रह्मेत्यादिना' ज्ञेय, चकारेण सर्वमक्षरात्मकं समासतः संक्षेपेण सौकर्यबोधार्थमुक्तम् । यदर्थमुक्तं तदाह—**मद्भक्त इति** । एतदुक्तरूपं विज्ञाय विशेषेण मद्विभूत्यक्षरात्मकं ज्ञात्वा मद्भक्तो मद्भजनशीलः सन् मद्भावाय भावात्मकस्वरूपलाभाय उपपद्यते योग्यः समर्थो वा भवतीत्यर्थः ॥ १८ ॥

**नी० टी०**—उक्तमर्थजातमुपसंहरति—**इतीति** । क्षेत्रं महाभूतादिधृत्यंतं । ज्ञानं ज्ञानसाधनममानित्वादि तत्त्वज्ञानार्थदर्शनांतं । ज्ञेयमनादि मत्परमित्यादि धिष्ठितमित्यंतं श्रुतिभ्यः स्मृतिभ्यश्च समासतः संक्षेपत उक्तं । मद्भक्त एतत्त्रयं विज्ञाय मद्भावाय ब्रह्मभावायोपपद्यते युक्तो भवति भक्त्यैव प्राप्यं ब्रह्म यत्प्राप्य ब्रह्मैव भवति । तथा च श्रुतिः "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः" इति । "ब्रह्म वेद ब्रह्मैव भवति" इति च ॥ १८ ॥

## प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥
## विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

**शां० भा०**—तत्र सप्तम ईश्वरस्य द्वे प्रकृती उपन्यस्ते परापरे क्षेत्रक्षेत्रज्ञलक्षणे । एतद्योनीनि भूतानीति चोक्तम् । क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामित्ययमर्थोऽधुनोच्यते—प्रकृतिं पुरुषं

चैवेश्वरस्य प्रकृती तौ प्रकृतिपुरुषावुभावप्यनादी विद्धि । न विद्यत आदिर्ययोस्तावनादी । नित्येश्वरत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हीश्वरस्येश्वरत्वम् । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुस्ते द्वे अनादी सत्यौ संसारस्य कारणम् । नाऽऽदी अनादी इति तत्पुरुषसमासं केचिद्वर्णयन्ति । तेन हि किलेश्वरस्य कारणत्वं सिध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगन्नेश्वरस्य जगतः कर्तृत्वम् । तदसत्, प्राक्प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावादीश्वरस्यानीश्वरत्वप्रसङ्गात् । संसारस्य निर्निमित्तत्वेऽनिर्मोक्षत्वप्रसङ्गाच्छास्त्रानर्थक्यप्रसङ्गाद्बन्धमोक्षाभावप्रसङ्गाच्च । नित्यत्वे पुनरीश्वरस्य प्रकृत्योः सर्वमेतदुपपन्नं भवेत् । कथं, विकारांश्च गुणांश्चैव वक्ष्यमाणान्विकारान्बुद्ध्यादिदेहेन्द्रियान्तान्गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान्विद्धि जानीहि प्रकृतिसंभवान्प्रकृतिरीश्वरस्य विकारकारणशक्तिस्त्रिगुणात्मिका माया सा संभवो येषां विकाराणां गुणानां च तान्विकारान्गुणांश्च विद्धि प्रकृतिसंभवान्प्रकृतिपरिणामान् ॥ १९ ॥

**शां० आ०**—प्रकृतिमित्यादि वक्ष्यमाणमनन्तरपूर्वग्रन्थसंबन्धीत्याशङ्क्य व्यवहितेन संबन्धार्थं व्यवहितमनुवदति—**तत्रेति** । तयोश्च प्रकृत्योरुक्तं भूतकारणत्वमित्याह—**एतादिति** । भूतानामिव प्रकृत्योरपि प्रकृत्यन्तरापेक्षयाऽनवस्थानान्न भूतयोनितेति शङ्कते—**क्षेत्रेति** । तत्राकृताभ्यागमादिवारणाय बन्धस्य निदानज्ञानार्थमात्मनो विक्रियावत्त्वादिदोषनिरासार्थं च प्रकृतिपुरुषयोरनादित्वं क्षेत्रत्वेनोक्तानां प्रकृतिं प्रति विकारभावं च दर्शयति—**अयमर्थ इति** । स च यो यत्स्वभावश्चेत्युद्दिष्टं व्याचष्टे—**प्रकृतिमिति** । ईश्वरस्यापरा प्रकृतिरत्र प्रकृतिशब्देनोक्ता परा तु प्रकृतिर्जीवाख्या पुरुषशब्देन विवक्षितेति व्याकरोति—**ईश्वरस्येति** । तयोरनादित्वं व्युत्पादयति—**नेत्यादिना** । तत्र युक्तिमाह—**नित्येश्वरत्वादिति** । ईश्वरस्योक्तप्रकृतिद्वयवत्त्वं कथमित्याशङ्क्याऽऽह—**प्रकृतीति** । तस्य जगज्जन्मादौ स्वातन्त्र्यमेवेश्वरत्वं न प्रकृतिद्वयवत्त्वमित्याशङ्क्याऽऽह—**याभ्यामिति** । प्रकृत्योरनादित्वं कुत्रोपयुक्तमित्याशङ्क्याऽऽह—**ते इति** । मतान्तरमाह—**नेत्यादिना** । तयोर्मूलकारणत्वाभावे कस्य तदेष्टव्यमित्याशङ्क्याऽऽह—**तेन हीति** । प्रकृत्योरेव मूलकारणत्वे श्रुतिस्मृतिसिद्धमीश्वरस्य तथात्वं न स्यादित्याह—**यदीति** । प्रकृतिद्वयस्य कार्यत्वपक्षं प्रत्याह—**तदसदिति** । किंच प्रकृतिद्वयमनपेक्ष्येश्वरस्य संसारहेतुत्वे स्वातन्त्र्यान्मुक्तानामपि ततः संसारात्तेरनिषेधान्मोक्षशास्त्राप्रामाण्यान्न तस्यैव संसारहेतुतेत्याह—**संसारस्येति** । निर्निमित्तत्वं प्रकृतिद्वयापेक्षामृते परस्यैव निमित्तत्वमिति यावत् । किंच कार्यत्वे प्रकृत्योस्तदुदयात्पूर्वं बन्धाभावे तद्विश्लेषात्मनो मोक्षस्याभावात्कदाचिदुभयाभावे पुनस्तदप्रसङ्गान्न प्रकृतिद्वयस्य कार्यतेत्याह—**बन्धेति** । प्रकृत्योर्मूलकारणत्वे नानुपपत्तिरित्याह—**नित्यत्व इति** । स्वपक्षे दोषाभावं प्रश्नपूर्वकं प्रपञ्चयति—**कथमित्यादिना** । संभवः सत्ताप्रापको हेतुः । प्रकृतेरनादित्वे विकाराणां गुणानां च तत्कार्यत्वादात्मनो निर्विकारत्वं निर्गुणत्वं च सिध्यतीति भावः ॥ १९ ॥

**आ० भा०**—विकारांतर्भावाज्ज्ञानसाधनं प्रथमत उक्तम् । बहुत्वात्साधनात्युपयोगात्प्रभावः ॥ १९ ॥

**आ० ज०**—ननु ब्रह्मणि प्रतिपादिते केन साधनेनेदं बुद्ध्यारूढं भवेदित्याकांक्षायां साधनं पश्चाद्वक्तव्यम् तत्कुतः प्रथमतउक्तमित्यतआह—**विकारेति** । विकारेष्वंतर्भावं ज्ञापयितुं तदनंतरमुपोद्घातप्रक्रियोक्तमिति भावः । उद्देशक्रमानुसारेण यतश्च यदिति प्रथममनुक्त्वा स च योयत्प्रभावश्चेतत्कुत उक्तमित्यत आह—**बहुत्वादिति** । सूचीकटाहनिर्माणादौ बहुत्वस्य प्राथम्यव्यभिचाराद्धेत्वंतरोक्तिः । अलौकिकस्य प्रभावस्य बुद्ध्यारोहे हि साधनानामत्युपयोगो न तु तावान् लौकिकस्य प्रेरकत्वस्यानुभावारोह इति ज्ञापयितुं ज्ञानसाधनानंतरमेव प्रभाव उक्तः । तत्प्रसंगेन चेति भावः ॥ १९ ॥

**रा० भा०**—अथात्यन्तविभक्तस्वभावयोः प्रकृत्यात्मनोः संसर्गस्यानादित्वं संसृष्टयोर्द्वयोः कार्यभेदः संसर्गहेतुश्चोच्यते । प्रकृतिपुरुषावुभावन्योन्यसंसृष्टावनादीति विद्धि । बन्धहेतुभूतान्विकारानिच्छाद्वेषादीन् अमानित्वादिकांश्च गुणान्मोक्षहेतुभूतान्प्रकृतिसंभवान् विद्धि । पुरुषेण संसृष्टेयमनादिकालप्रवृत्ता क्षेत्राकारपरिणता प्रकृतिः स्वविकारैः इच्छाद्वेषादिभिः पुरुषस्य बन्धहेतुर्भवति । सैवामानित्वादिभिः स्वविकारैः पुरुषस्यापवर्गहेतुर्भवतीत्यर्थः ॥ १९ ॥

अ० टी०—एवं पूर्वप्रतिज्ञातं तत्क्षेत्रं यच्च यादृक्चेति निरूपितम् । स्वांशत्वेन तत्र क्षेत्रक्षेत्रज्ञसंज्ञा कथमित्याशङ्क्य 'यद्विकारीत्यादिना' पूर्वमेव प्रतिज्ञातमुभयोः स्वरूपं निरूपयति—**प्रकृतिमित्याद्यैः** पञ्चभिः पद्यैः । प्रकृतिं सर्वजननसमर्थां व्यापकत्वादिधर्मयुतां भगवच्छक्तित्वादनादिं, पुरुषं च तद्रसभोक्तारं भोक्त्रंशरूपं भगवदंशत्वादनादिम् । एवमुभावपि अनादी विद्धि जानीहि । अत्रायं भावः । पूर्वं ब्रह्मप्रकृतिपुरुषरूपेण विचित्ररसभोगार्थमाविर्भूय ततः सर्वं कृतवान् स्वांशानां जीवानां ज्ञापनार्थं तत्र मोहकस्वभावमायासंबन्धादन्यथा ज्ञानेन संबन्धो भवति तदभावायाऽनादिस्वभगवच्छक्तिभगवदंशादिज्ञानेन मोहो न भवेदित्यर्थः । एवं तावनादी ज्ञात्वा विकारान् देहेन्द्रियादीन् सेवौपयिकान् गुणान् सुखदुःखमोहात्मकान् प्रकृतिसंभवानेव विद्धि । अत्रायं भावः । कयाचिदवस्थयाऽवस्थितस्वस्वरूपेण स्वरसानुभवार्थं देहादीन् सत्तात्मकान् शक्तितः प्रकटीकरोति । तथैव संगमसुखानुभवविरहदुःखानन्दानुभवाऽऽसक्त्यात्मकानन्दमोहात्मकान् गुणानपि प्रकटयति । अतस्तथा विद्धि । एवं ज्ञानप्रयोजनं चाग्रे स्फुटीभविष्यति ॥ १९ ॥

नी० टी०—एवं क्षेत्रं शरीराख्यमव्यक्तमुक्तं तत्प्रकाराश्च महदाद्यास्त्रयो विंशतिस्तद्विकारा इच्छादयो ज्ञानाज्ञानशब्दिता अमानित्वमानित्वादयः पुरुषश्च उक्तः । इदानीं क्षेत्रक्षेत्रज्ञयोर्मध्ये यस्माद्यज्जायते तच्च क्षेत्रज्ञस्य प्रभावश्चेति द्वयं वक्तव्यं तत्राद्यं विवृणोति त्रिभिः—**प्रकृतिमिति** । सप्तमाध्यायेऽष्टधा या प्रकृतिरपरा उक्ता साऽत्र प्रकृतिः । या तु जीवभूता परा प्रकृतिरुक्ता साऽत्र पुरुषशब्देनोच्यते । एतौ हि संपृक्तौ संसारं जनयतः वियोगश्च तयोर्मोक्षः । तत्र तावुभावप्यनादी विद्धि तयोरादिमत्त्वे संसारस्याकस्मिकत्वापातात् कृतहानाकृताभ्यागमप्रसंगश्चेत्यन्यत्र विस्तरः । विकारान् इच्छादीन् गुणान् बुद्धींद्रियादींश्च प्रकृतिसंभवान् विद्धि ॥ १९ ॥

**कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥**

**शां० भा०—के पुनस्ते विकारा गुणाश्च प्रकृतिसंभवाः—कार्यकरणकर्तृत्वे कार्यं शरीरं करणानि तत्स्थानि त्रयोदश । देहस्याऽऽरम्भकाणि भूतानि विषयाश्च प्रकृतिसंभवा विकाराः पूर्वोक्ता इह कार्यग्रहणेन गृह्यन्ते गुणाश्च प्रकृतिसंभवाः सुखदुःखमोहात्मकाः करणाश्रयत्वात्करणग्रहणेन गृह्यन्ते। तेषां कार्यकरणानां कर्तृत्वमुत्पादकत्वं यत्तत्कार्यकरणकर्तृत्वं तस्मिन्कार्यकरणकर्तृत्वे हेतुः कारणमारम्भकत्वेन प्रकृतिरुच्यते । एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिः । कार्यकारणकर्तृत्व इत्यस्मिन्नपि पाठे कार्यं यद्यस्य विपरिणामस्तत्तस्य कार्यं विकारो विकारि कारणं तयोर्विकारविकारिणोः कार्यकारणयोः कर्तृत्व इति । अथवा षोडश विकाराः कार्यं सप्त प्रकृतिविकृतयः कारणं तान्येव कार्यकारणान्युच्यन्ते । तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यत आरम्भकत्वेनैव । पुरुषश्च संसारस्य कारणं यथा स्यात्तदुच्यते पुरुषो जीवः क्षेत्रज्ञो भोक्तेतिपर्यायः सुखदुःखानां भोग्यानां भोक्तृत्व उपलब्धृत्वे हेतुरुच्यते। कथं पुनरनेन कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यत इति । अत्रोच्यते कार्यकरणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे पुरुषस्य चेतनस्यासति तदुपलब्धृत्वे कुतः संसारः स्यात्। यदा पुनः कार्यकरण (सुखदुःख) रूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेनाविद्यारूपः संयोगः स्यात्तदा संसारः स्यादिति । अतो यत्प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमुक्तं**

**तद्युक्तम् । कः पुनरयं संसारो नाम, सुखदुःखसंभोगः संसारः पुरुषस्य च सुखदुःखानां संभोक्तृत्वं संसारित्वमिति ॥ २० ॥**

**शां० आ०**—विकाराणां गुणानां प्रकृतेश्च स्वरूपमाकाङ्क्षाद्वारा निर्णेतुमुत्तरश्लोकपूर्वार्धं पातयति—**के पुनरिति**। पुरुषस्यानादित्वकृतं बन्धहेतुत्वमाह—**पुरुष इति**। पूर्वार्धं व्याचष्टे—**कार्यमित्यादिना**। ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनोबुद्धिरहंकारश्चेति त्रयोदश करणानि। तथाऽपि भूतानां विषयाणां चाग्रहणात्कथं तेषां प्रकृतिकार्यतेत्याशङ्कयाऽऽह—**देहस्येति**। तथाऽपि गुणानामिहाग्रहणान्न प्रकृतिकार्यत्वं तत्राऽऽह—**गुणाश्चेति**। उक्तरीत्या निष्पन्नमर्थमाह—**एवमिति**। पाठान्तरमनूद्य व्याख्यापूर्वकमर्थाभेदमाह—**कार्येत्यादिना**। व्याख्यान्तरमाह—**अथवेति**। एकादशेन्द्रियाणि पञ्च विषया इति षोडशसंख्याको विकारोऽत्र कार्यशब्दार्थः। महानहंकारो भूततन्मात्राणीति प्रकृतिविकृतयः सप्त कारणं, तेषामारम्भकत्वेन कर्तृत्वेन हेतुराश्रयो मूलप्रकृतिरित्यर्थः। उत्तरार्धस्य तात्पर्यमाह—**पुरुषश्चेति**। तस्य परमात्मत्वं व्यवच्छिनत्ति—**जीव इति**। तस्य प्राणधारणनिमित्तस्य तदर्थं चेतनत्वमाह—**क्षेत्रज्ञ इति**। तस्यानौपाधिकत्वं वारयति—**भोक्तेति**। तयोः संसारकारणत्वमुपपादयितुं शङ्कते—**कथमिति**। अन्वयव्यतिरेकाभ्यां तयोस्तथात्वमित्याह—**अत्रेति**। तत्र व्यतिरेकं दर्शयति—**कार्येति**। न हि नित्यमुक्तस्याऽऽत्मनः स्वतः संसारोऽस्तीत्यर्थः। इदानीमन्वयमाह—**यदेति**। अन्वयादिफलमुपसंहरति—**अत इति**। आत्मनोऽविक्रियस्य संसरणं नोचितमित्याक्षिपति—**कः पुनरिति**। सुखदुःखान्यतरसाक्षात्कारो भोगः स चाविक्रियस्यैव द्रष्टुः संसारस्तथाविधभोक्तृत्वमस्य संसारित्वमित्युत्तरमाह—**सुखेति**। श्लोकव्याख्यासमाप्तावितिशब्दः ॥ २० ॥

**आ० भा०—यतश्च यदिति वक्तुं प्रकृतिविकारपुरुषान् संक्षिप्याह । गुणाः सत्वादयः । तेषामत्यल्पे विशेषो लयात्सर्ग इति विकाराः पृथगुक्ताः । "कार्याकार्यगुणास्तिस्रो यतः स्वल्पोद्भवो जनौ" इति माधुच्छंदसशाखायाम् ॥ २० ॥**

**आ० ज०**—ननु प्रकृतिं पुरुषं चैव विद्धीत्यादिकमप्रतिज्ञातं किमित्युच्यते। मैवम्। यादृक्चेति प्रतिज्ञातस्य सप्रकारस्य क्षेत्रस्य कथनात तत्प्रतिज्ञाक्रमेण प्रागेव कुतोनोक्तमित्यतआह—**यतश्चेति**। यतश्च यदिति प्रतिज्ञातं प्रेरकस्वरूपं तावत्प्रभावानंतरं वक्तव्यं प्राप्तम्। तत्र प्रेरकस्य स्वरूपनिरूपणं प्रेर्यज्ञानमपेक्षते। प्रेर्यं च सप्रकारं क्षेत्रम् प्रेरकस्वरूपं वक्तुं अनेन प्रेरणीयं सप्रकारं क्षेत्रमुच्यते। तस्य प्रागपि वचने गौरवं स्यादितिभावः। तर्हि प्रकृतीत्यादि कथमुच्यते। ईश्वरातिरिक्तः सर्वोपि चेतनाचेतनवर्गः क्षेत्रमित्युच्यते। तत्र प्रकृतिशब्देन महाभूतानीत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यंते। विकारशब्देनेच्छाद्युपलक्षिताः क्षेत्रांतर्भूता अपि गुणत्रयाद्याः सर्वे विकारा विवक्षाविशेषवशेन पृथगुपात्ताः। पुरुषशब्देन जीव इति। यावत्संजायत इत्यादिना पुनर्वक्ष्यमाणत्वात्पुनरुक्तिदोषं परिहर्तुं संक्षिप्येत्युक्तम्। आह सप्रकारान्निरूपयति। गुणाः सुखदुःखमोहा इति कश्चित् कार्यकारणलक्षणा इत्यन्यः। तदुभयं निराकर्तुं व्याचष्टे—**गुणाइति**। ननु सत्वरजस्तमसामपि प्रकृतिविकारत्वाद्विकारांश्च गुणांश्चेति पृथगुक्तिः किमर्थेत्यत आह—**तेषामिति**। इतिज्ञापयितुमिति शेषः। विकाराः पृथगुक्ता इति विकाराश्च गुणाश्च पृथगुक्ता इत्यर्थः। कार्याश्च तेऽकार्याश्च। तिस्रस्त्रयः। अनेन सुखाद्यंगीकारे विकारेभ्यः पृथग्ग्रहणमयुक्तमित्यपि सूचितम्॥ २०॥

**रा० भा०—संसृष्टयोः प्रकृतिपुरुषयोः कार्य्यभेदमाह—कार्यं शरीरं कारणानि समनस्कानीन्द्रियाणि तेषां क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिरेव हेतुः पुरुषाधिष्ठितक्षेत्राकारपरिणतप्रकृत्याश्रया भोगसाधनभूता क्रिया इत्यर्थः। पुरुषस्य त्वधिष्ठातृत्वमेव तदपेक्षयाधिकं कर्त्ता शास्त्रार्थवत्त्वादित्यादिकम् उक्तं शरीराधिष्ठानप्रयत्नहेतुत्वमेव हि पुरुषस्य कर्तृत्वं प्रकृतिसंसृष्टः पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः सुखदुःखानुभवाश्रय इत्यर्थः। एवमन्योन्यसंसृष्टयोः प्रकृतिपूरुषयोः कार्य्यभेद उक्तः ॥ २० ॥**

**अ० टी०**—एतदेव विशदयति—**कार्येति**। कार्यस्य स्वरसानुभवात्मकस्य कारणानि देहगुणादीनि तेषां कर्तृत्वे प्रकटकरणे हेतुः प्रकृतिः पूर्वोक्तरूपा शक्तिरुच्यते। तथैव पुरुषः सुखदुःखानां संगमविरहात्मकादीनां भोक्तृत्वे तद्रसज्ञत्वे हेतुः कारणम् उच्यते ॥ २० ॥

**नी० टी०**—उभयोरपि संसारं प्रति कारणत्वे द्वारमाह—**कार्येति**। कार्यं शरीरं तदारंभकाणि भूतानि विषयाश्च। कारणं त्रयोदशेंद्रियाणि तदाश्रिताश्च सुखदुःखमोहात्मका गुणाश्च। करणेति पाठेऽपि स एवार्थः। एतयोः

कार्यकारणयोः कर्तृत्वे निमित्ते सति कर्तृत्वेनेत्यर्थः । हेतुः संसारस्य कारणं प्रकृतिर्भवति । तथा पुरुषः सुखदुःखानां भोक्तृत्वेन संसारस्य हेतुरिति । यदि हि कार्यकारणसुखदुःखस्वरूपहेतुफलात्मना प्रकृतिर्न परिणमेत तदा पुरुषः किमुपलभेत अनुपलब्ध्वा वा कथं संसारी स्यात् । अनुपलब्धृका वा प्रकृतिः कुत्रोपयुज्येत । तस्मादुपलभ्योपलब्धृसंयोगः संसारकारणमिति यथाभाष्यं व्याख्यातं । यद्वा पुरुषस्य कार्यत्वे कारणत्वे कर्तृत्वे च प्रकृतिरेव पुरुषतादात्म्यं प्राप्ता हेतुर्भवति । वह्नितादात्म्यं प्राप्तं लोहं वह्नेश्चतुष्कोणत्वादाविव हेतुर्भवति । तथा प्रकृतेः सुखदुःखभोक्तृत्वे स्वच्छायाप्रदानेन पुरुषः कारणं । वह्निरिव लोहस्य स्वच्छायाप्रदानेन दग्धृत्वे तथा हि । कार्यत्वादयः प्राकृतदेहेंद्रियबुद्धिधर्माः संतश्चिदात्मन्यारोप्यंते गौरोऽहं मनुष्यपुत्रोऽहं काणोऽहं खंजोऽहं करोम्यहमकार्षमहमिति । तथा चिच्छायापन्ना बुद्धिश्चेतयाम्यहं सुखदुःखादीनुपलभे इति मन्यते । सोऽयं प्रकृतिपुरुषयोरन्योन्यधर्माध्यासः संसारस्य कारणमित्युपपादितं भवति । सांख्याभिमतं पुरुषस्य भोक्तृत्वमपि निरस्तं भवति । अन्यथा प्रकृतिः कर्त्री पुरुषो भोक्तेति कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यमापद्येत । न च भोक्तुः पुरुषस्य निर्विकारत्वमपि वक्तुं शक्यमित्यन्यत्र विस्तरः । द्वंद्वांते श्रूयमाणं पदं प्रत्येकमभिसंबध्यत इति त्वप्रत्ययस्य पूर्वाभ्यामपि संबंधे कार्यत्वं कारणत्वं कर्तृत्वं चेति विग्रहः । द्वंद्वैकवद्भावश्च "प्रातिपदिकार्थलिंगपरिमाणवचनमात्रे प्रथमा" इत्यादिवत् ॥ २० ॥

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ॥**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥**

**शां० भा०—यत्पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वमित्युक्तं तस्य तत्किंनिमित्तमित्युच्यते—पुरुषो भोक्ता प्रकृतिस्थः प्रकृतावविद्यालक्षणायां कार्यकारणरूपेण परिणतायां स्थितः प्रकृतिस्थः प्रकृतिमात्मत्वेन गत इत्येतद्धि यस्मात्तस्माद्भुङ्क्त उपलभत इत्यर्थः । प्रकृतिजान्प्रकृतितो जातान्सुखदुःखमोहाकाराभिव्यक्तान्गुणान्सुखी दुःखी मूढः पण्डितोऽहमित्येवम् । सत्यामप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्ग आत्मभावः संसारस्य स प्रधानं कारणं जन्मनः "स यथाकामो भवति तत्क्रतुर्भवति" इत्यादिश्रुतेः। तदेतदाह कारणं हेतुर्गुणसङ्गो गुणेषु सङ्गोऽस्य पुरुषस्य भोक्तुः, सदसद्योनिजन्मसु सत्यश्चासत्यश्च योनयः सदसद्योनयस्तासु सदसद्योनिषु जन्मानि सदसद्योनिजन्मानि तेषु सदसद्योनिजन्मसु विषयभूतेषु कारणं गुणसङ्गः । अथवा सदसद्योनिजन्मस्वस्य संसारस्य कारणं गुणसङ्ग इति संसारपदमध्याहार्यम् । सद्योनयो देवादियोनयोऽसद्योनयः पश्वादियोनयः । सामर्थ्यात्सदसद्योनयो मनुष्ययोनयोऽप्यविरुद्धा द्रष्टव्याः । एतदुक्तं भवति प्रकृतिस्थत्वाख्याऽविद्या गुणेषु च सङ्गः कामः संसारस्य कारणमिति । तच्च परिवर्जनायोच्यते । अस्य च निवृत्तिकारणं ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धम् । तच्च ज्ञानं पुरस्तादुपन्यस्तं क्षेत्रक्षेत्रज्ञविषयम् । यज्ज्ञात्वाऽमृतमश्नुत इत्युक्तं चान्यापोहेनातद्धर्माध्यारोपेण च ॥ २१ ॥**

**शां० आ०**—श्लोकान्तरं प्रश्नोत्तरत्वेनावतारयति—**यदिति** । निमित्तं वक्तुमादौ संसारित्वमस्याविद्यैक्याध्यासादित्याह—**पुरुष इति** । यस्मात्प्रकृतिमात्मत्वेन गतस्तस्माद्भुङ्क्त इति योजना । गुणविषयं भोगमभिनयति—**सुखीति** । अविद्याया भोगहेतुत्वात्किं कारणान्वेषणयेत्याशङ्क्याऽऽह—**सत्यामपीति** । सङ्गस्य जन्मादौ संसारे प्रधानहेतुत्वे मानमाह—**स यथेति** । उक्तेऽर्थे द्वितीयार्धमवतार्य व्याचष्टे—**तदेतदित्यादिना** । साध्याहारं योजनान्तरमाह—**अथवेति** । सदसद्योनीर्विविच्य व्याचष्टे—**सद्योनय इति** । योनिद्वयनिर्देशान्मध्यवर्तिन्यो मनुष्ययोनयोऽपि ध्वनिता इत्याह—**सामर्थ्यादिति** । सङ्गस्य संसारकारणत्वे नाविद्यायास्तत्कारणत्वमेकस्मादेव हेतोस्तदुपपत्तेरित्याशङ्क्याऽऽह—**एतदिति** । अविद्योपादानं सङ्गो निमित्तमि-

त्युभयोरपि कारणत्वं सिध्यतीत्यर्थः । द्विविधहेतूक्तेर्विवक्षितं फलमाह—**तच्चेति** । सासङ्गस्याज्ञानस्य स्वतोऽनिवृत्तेस्तन्निवर्तकं वाच्यमित्याशङ्कयाऽऽह—**अस्येति** । वैराग्ये सति संन्यासस्तत्पूर्वकं ज्ञानं सासङ्गाज्ञाननिवर्तकमित्यर्थः । उक्ते ज्ञाने मानमाह—**गीतेति** । अध्यायादौ चोक्तं ज्ञानमुदाहृतमित्याह—**तच्चेति** । तदेव ज्ञानं यज्ज्ञात्वेत्यादिना न सत्तन्नासदित्यन्तेनान्यनिषेधेन सर्वतःपाणिपादमित्यादिना चातद्धर्माध्यासेनोक्तमित्याह—**यज्ज्ञात्वेति** ॥ २१ ॥

**आ० भा०**—कार्यं शरीरम्। 'शरीरं कार्यमुच्यते' इत्यभिधानम्। कारणानीन्द्रियाणि भोगोऽनुभवः। स हि चिद्रूपत्वादनुभवति। प्रकृतिश्च जडत्वात्परिणामिनी । 'कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः। भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्' इति भागवते॥ २१ ॥

**आ० ज०**—कारणानामपि कार्यत्वात् पृथगुक्तिर्व्यर्थेत्यतो रूढिमाश्रित्य कार्यकारणशब्दौ व्याख्याति—**कार्यमिति** । भोक्तृत्व इत्यत्र प्रकृत्यर्थो भोगोऽभ्यवहारादिः सुखादिविषयो न संभवति अत आह—**भोगइति**। स्वीयतया साक्षात्कार इत्यर्थः । भोगः प्रकृतेरेव न पुरुषस्य अतः पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरिति कथमुक्तमितिसांख्याः । तत्राह—**स हीति** । न तु प्रकृतिरचैतन्यादिति शेषः । ननु कार्यकारणकर्तृत्वे हेतुः प्रकृतिरित्युक्तम् । कर्तृत्वं च ज्ञानेच्छाप्रयत्नयोगः तत्कथं प्रकृतेर्भोगासंभव इत्यत आह—**प्रकृतिश्चेति** । चस्त्वर्थः परिणामिकारणत्वात्कर्तृत्वमित्युपचर्यत इति भावः । श्लोकार्थे पुराणसंमतिमाह—**कार्येति** । कारणं विदुरित्युत्तरार्धेऽनुवर्तते ॥ २१ ॥

**रा० भा०**—पुरुषस्य स्वतः स्वानुभवैकसुखस्यापि वैषयिकसुखदुःखोपभोगहेतुत्वमाह। गुणशब्दः स्वकार्येष्वौपचारिकः स्वतः स्वानुभवैकसुखः पुरुषः प्रकृतिस्थः प्रकृतिसंसृष्टः प्रकृतिजान् गुणान् प्रकृतिसंसर्गौपाधिकान्सत्त्वादिगुणकार्यभूतान् सुखदुःखादीन् भुङ्क्ते अनुभवति। प्रकृतिसंसर्गहेतुमाह। पूर्वपूर्वप्रकृतिपरिणामरूपदेवमनुष्यादियोनिविशेषेषु स्थितोऽयं पुरुषः तत्तद्योनिप्रयुक्तसत्त्वादिगुणमयेषु सुखादिषु सक्तस्तत्साधनहेतुभूतेषु पुण्यपापकर्मसु प्रवर्तते ततस्तत्पुण्यपापफलानुभवाय सदसद्योनिषु साध्वसाधुयोनिषु जायते। ततश्च कर्मारभते ततश्च जायते यावदमानित्वादिकानात्मप्राप्तिसाधनभूतान् गुणान् सेवते तावदेव संसरति तदिदमुक्तम्। 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु।' इति ॥२१॥

**अ० टी०**—ततः किमत आह—**पुरुष इति**। पुरुषः पुरुषरूपेण प्रकटो भगवान्, प्रकृतिस्थः स्वरसानुभवस्थानस्थितः सन् प्रकृतिजान् पूर्वोक्तान् गुणान् भुङ्क्ते इतरसंभोगं करोतीत्यर्थः। ननु पुरुषरूपस्य सदसद्योनिदेवतिर्यगादिरूपजन्मसु गुणरसभोगेच्छा कारणं हेतुरित्यर्थः ॥ २१ ॥

**नी० टी०**—ननु यथा बौद्धं कर्तृत्वं पुंस्यारोप्यते एवं पौंस्नं भोक्तृत्वं बुद्धावस्त्वित्येतं भ्रमं वारयति—**पुरुष इति**। हि प्रसिद्धं प्रकृतिस्थः देहेंद्रियमनःसंघातमध्यारूढस्तत्तादात्म्यं गत इत्यर्थः । प्रकृतिजान् सुखदुःखमोहात्मकान् गुणान् भुंक्ते उपलभते। यदा तु सुप्तिसमाधिमूर्च्छादौ प्रकृतिस्थत्वं नास्ति तदा न सुखादीनुपलभते तेनोपाधिगतान्येव सुखादीनि तदभावेन प्रतीयंत इति सिद्धं। श्रुतिरपि "आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इतींद्रियमनोयोगादेवात्मनि भोक्तृत्वं दर्शयन्ती शुद्धस्य केवलस्य भोक्तृत्वं नास्तीति दर्शयति। कुतस्तर्ह्यभोक्तुरप्यस्य प्राकृतो बंध इति तत्राह—**कारणमिति**। अस्य पुरुषस्य सदसद्योनिजन्मसु। तत्र सद्योनिजन्मानो देवाः। असद्योनिजन्मभाजस्तिर्यंचः स्थावराश्च । सदसद्योनिजन्मानो मनुष्याः एतेषु त्रिष्वपि जन्मसु प्राप्येषु अस्य पुंसो गुणसंगः सुखादिष्वभिष्वंगः कारणं हेतुः। तथाहि। सात्विका देवा भवंति राजसा मनुष्यास्तामसाश्च पशवस्तेषां तत्तद्योनिप्राप्तौ तद्गुणप्राधान्यमेव कारणं वक्ष्यति च। 'ऊर्ध्वं गच्छंति सत्वस्था' इत्यादि। यद्वा प्रकृतिस्थो विद्वानविद्वान्वा गुणान्भुंक्ते "पश्वादिभिश्चाविशेषात्" इति न्यायात्। तत्किं विद्वानिवाविद्वानपि

कुतो न मुच्यते अविद्वानिव विद्वान्वा कुतो न बध्यते इत्याशंक्याह—**कारणमिति** । गुणेषु देहेंद्रियविषयेषु संगः अहमिदं ममेदमित्यभिनिवेशः स एव जन्मकारणं । विदुषां तु तदभावान्न जन्म समानेऽपि देहसंबंधे यदा यक्षो देहाभिमानं धत्ते तदा स एव देहपीडया पीड्यते नतु देहपतिर्जीवः । यदा त्वयं देहाभिमानं धत्ते तदा नेतर इति प्रसिद्धं । संगस्य बंधकत्वं नतु सांनिध्यमात्रं बंधकं । अतो विद्वदविदुषोः समानेऽपि देहसंबंधे संगतदभावकृतो महान् विशेष इति भावः ॥ २१ ॥

**उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ॥**
**परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥**

**शां० भा०**—तस्यैव पुनः साक्षान्निर्देशः क्रियते—उपद्रष्टा समीपस्थः सन्द्रष्टा स्वयमव्यापृतो यथर्त्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्योऽव्यापृतो यज्ञविद्याकुशल ऋत्विग्यजमानव्यापारगुणदोषाणामीक्षिता तद्वत्कार्यकरणव्यापारेष्वव्यापृतोऽन्यो विलक्षणस्तेषां कार्यकरणानां सव्यापाराणां सामीप्ये न द्रष्टोपद्रष्टा । अथवा देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारस्तेषां बाह्यो द्रष्टा देहस्तत आरभ्यान्तरतमश्च प्रत्यक्समीप आत्मा द्रष्टा । यतः परोऽन्तरो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात् । यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणादुपद्रष्टा । अनुमन्ता चानुमोदनमनुमननं कुर्वत्सु तत्क्रियासु परितोषस्तत्कर्ताऽनुमन्ता च । अथवाऽनुमन्ता कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ता । अथवा प्रवृत्तान्स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता । भर्ता भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां यत्स्वरूपधारणं तच्चैतन्यात्मकृतमेवेति भर्ताऽऽत्मेत्युच्यते । भोक्ताऽग्न्युष्णवन्नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयविषयाश्चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्त इति भोक्ताऽऽत्मोच्यते । महेश्वरः सर्वात्मत्वात्स्वतन्त्रत्वाच्च महानीश्वरश्चेति महेश्वरः । परमात्मा देहादीनां बुद्ध्यन्तानां प्रत्यगात्मत्वेन कल्पितानामविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा "सोऽन्तः परमात्मा" इत्यनेन शब्देन चाप्युक्तः कथितः श्रुतौ । कासावस्मिन्देहे पुरुषः परोऽव्यक्तात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति यो वक्ष्यमाणः 'क्षेत्रज्ञं चापि मां विद्धि' इत्युपन्यस्तो व्याख्यायोपसंहृतश्च ॥ २२ ॥

**शां० आ०**—प्रकृतस्यैव मोक्षहेतोर्ज्ञानस्य साक्षान्निर्देशायोत्तरश्लोकमुत्थापयति—**तस्येति** । कार्यकरणानां व्यापारवतां समीपे स्थितः संनिधिमात्रेण तेषां साक्षीत्येवमर्थत्वेनोपद्रष्टेति पदं व्याचष्टे—**समीपस्थ इति** । लौकिकस्येव द्रष्टुरस्यापि व्यापारविशिष्टतया निष्क्रियत्वविरोधमाशङ्क्याऽऽह—**स्वयमिति** । स्वव्यापारादृते संनिधिरेव द्रष्टृत्वम् । दृष्टान्तेन स्पष्टयति—**यथेति** । उपद्रष्टेत्यस्यार्थान्तरमाह—**अथवेति** । बहूनां द्रष्टृत्वेऽपि कस्योपद्रष्टृत्वं तत्राऽऽह—**तेषामिति** । उपोपसर्गस्य सामीप्यार्थत्वेन प्रत्यगर्थत्वात्तत्रैव सामीप्यावसानात्प्रत्यगात्मा च द्रष्टा चेत्युपद्रष्टा सर्वसाक्षी प्रत्यगात्मेत्यर्थः । उक्तमेव व्यनक्ति—**यत इति** । यथा यजमानस्य ऋत्विजां च यज्ञकर्मणि गुणं दोषं वा सर्वयज्ञाभिज्ञः सन्नुपद्रष्टा विषयीकरोति तथाऽयमात्मा चिन्मात्रस्वभावः सर्वं गोचरयतीत्युपद्रष्टेति पक्षान्तरमाह—**यज्ञेति** । अनुमन्ता चेत्येतद्व्याकरोति—**अनुमन्तेति** । ये स्वयं कुर्वन्तो व्यापारवन्तो भवन्ति तेषु कुर्वत्सु सत्सु यास्तेषां क्रियास्तासु पार्श्वस्थस्य परितोषोऽनुमननं तच्चानुमोदनं तस्य संनिधिमात्रेण कर्ता यः सोऽनुमन्तेत्यर्थः । व्याख्यान्तरमाह—**अथवेति** । तदेव स्फुटयति—**कार्येति** । अर्थान्तरमाह—**अथवेत्यादिना** । भर्तेति पदमादाय किं भरणं नामेति पृच्छति—**भर्तेति** । तद्रूपं निरूपयन्नात्मनो भर्तृत्वं साधयति—**देहेति** । भोक्तेत्युक्ते क्रियावत्त्वे प्राप्ते भोगश्चिदवसानतेति न्यायेन विभजते—**अग्नीति** । विशेषणान्तरमादाय व्याचष्टे—**महेश्वर**

इति। परमात्मत्वमुपपादयति—**देहादीनामिति**। अविद्यया कल्पितानामिति संबन्धः। परमत्वं प्रकृष्टत्वम्। स पूर्वोक्तविशेषणवानिति यावत्। परमात्मशब्दस्य प्रकृतात्मविषयत्वे श्रुतिमनुकूलयति—**अन्त इति**। तस्य ताटस्थ्यं प्रश्नद्वारा प्रत्याचष्टे—**केति**। कस्मात्परत्वं तदाह—**अव्यक्तादिति**। तत्रैव वाक्यशेषानुकूल्यमाह—**उत्तम इति**। सोऽस्मिन्देहे परः पुरुष इति संबन्धः। शोधितार्थयोरैक्यज्ञानं प्रागुक्तं फलोक्त्या स्तौति—**क्षेत्रज्ञं चेति**॥ २२॥

**आ० भा०**—॥ २२॥

**आ० ज०**—॥२२॥

**रा० भा०**—अस्मिन्देहेऽवस्थितोऽयं पुरुषो देहप्रवृत्त्यनुगुणसंकल्पादिरूपेण देहस्योपद्रष्टानुमन्ता च भवति तथा देहस्य भर्त्ता च भवति तथा देहप्रवृत्तिजनितसुखदुःखयोर्भोक्ता च भवति। एवं देहनियमनेन देहभरणेन देहशेषित्वेन च देहेन्द्रियमनांसि प्रति महेश्वरो भवति तथा च वक्ष्यते। 'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्।' इति अस्मिन्देहे देहेन्द्रियमनांसि प्रति परमात्मेति। चाप्युक्तः देहे मनसि चात्मशब्दोनन्तरमेव प्रयुज्यते। 'ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना' इति। अपिशब्दात् महेश्वर इत्यप्युक्त इति गम्यते। पुरुषः परः अनादिमत्परमित्यादिनोक्तोऽपरिच्छिन्नज्ञानशक्तिरयं पुरुषोऽनादिप्रकृतिसंबन्धकृतगुणसङ्गादेतद्देहमात्रमहेश्वरो देहमात्रपरमात्मा च भवति॥ २२॥

**अ० टी०**—एवं रसभोगेच्छां कारणत्वेनोक्त्वा तत्र देहादिषु प्रविष्टस्य स्वल्पांशस्याविद्यात्मकजीवस्य भोगादिदर्शने पुरुषस्य कथं भोगः कथं तेन जीवस्य संसार इत्याशङ्कायां समाधत्ते—**उपद्रष्टेति**। परः पुरुषः पुरुषोत्तमः अस्मिन्देहे उपद्रष्टा उप—समीपे द्रष्टा साक्षी, तथा अनुमन्ता अनुमोदिता, भर्त्ता धारकः, भोक्ता रक्षकः, महेश्वरः महांश्चासावीश्वरश्च सः। तथैव परमात्मा। चकारेण प्राणजीवादिरप्युक्त इत्यर्थः। अयं भावः। देहादिकं सर्वं भगवति निवेद्य तद्दत्तप्रसादत्वेन सेवार्थोपयोगिभोगकर्तुः साक्षी—मुख्यसेवायां तदुपयोगकारयिता। एवमेव कृतसमर्पणमोदे अनु—पश्चान्मोदिता। एवमेव भर्त्ता पतित्वेन धारकपोषक इत्यर्थः। तथैव भोक्तृत्वेन स्वीयत्वज्ञानेन रक्षकः। तथैव महेश्वरः कर्तॄणां ब्रह्मादीनामपि प्रभुः तेन तादृग्वस्तुकर्त्तेत्यर्थः। तथैव परमात्मा तादृग्धर्मवतो मित्ररूप इत्यर्थः॥ २२॥

**नी० टी०**—स च यो यत्प्रभावश्चेति क्षेत्रज्ञतत्प्रभावौ व्याख्येयत्वेन प्रतिज्ञातौ तत्र क्षेत्रज्ञः प्रागेव वर्णितस्तस्येदानीं प्रभावमाह—**उपद्रष्टेति**। तत्र पूर्वं गुणसंगो जन्मकारणमित्युक्तं तत्र संगश्चतुर्विधः पुरुषापलापेन गुणमात्रप्राधान्येन वा तमंतर्भाव्य गुणप्राधान्येन वा गुणानां समप्राधान्येन वा अप्राधान्येन वेति। तत्राद्ये देहेंद्रियमनआदिरूपं गुणसंघातमेव आत्मत्वेन पश्यन् भोक्ता भवति यथा चार्वाकादिः। द्वितीये गुणानां प्राधान्यादात्मनि वास्तवकर्तृत्वाद्यभिमानेन कर्मफलानां भर्त्ता संचेता भवति। यथा तार्किकादिः तृतीये गुणानां समप्राधान्येन गुणगतमपि भोक्तृत्वमसंगेऽप्यात्मनि वस्त्रे भल्लातकांकवदनुमन्यते यथा सांख्यः। चतुर्थे सर्वथाऽपि गुणधर्माणामात्मनि संक्रममपश्यन्नुदासीनबोधरूपत्वेन गुणप्रचारदर्शी उपद्रष्टा भवति यथाऽस्माकं साक्षी। एतेषु चतुर्ष्वपि गुणसंगिषूपद्रष्टोत्तमः। अनुमंता मध्यमः। भर्त्ता अधमः। भोक्ता अधमाधमः। स एव गुणान्वशीकृत्य यदा क्रीडति तदा महेश्वर इत्युच्यते। यः सर्गस्थित्यंतकर्त्ता प्रभुर्जगदंतर्यामी स एव गुणानपहाय स्थितः परमात्मेति चाप्युक्तो भवति। यद्यप्युपद्रष्टाऽपि गुणानपहाय तत्साक्षित्वेन स्थितो भवति तथापि तस्यैव संघातोपहितस्य संघातांतरप्रचारदर्शित्वाभावादयं सकलसंघातप्रचारदर्शीति सर्वोत्कृष्टत्वात्परमोऽयमात्मा। तमेनं वक्ष्यति 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इति एतावपि गुणसंगिनौ एवमेक एव देहेस्मि-

न्विद्यमानः परो गुणातीतः स्वात्मनि गुणान्प्रविलाप्य स्थितोऽखंडैकरस आत्मा गुणसंगेन षड्विधो भवति अयमेवास्य प्रभावः तत्र अनुमंतृभर्तृभोक्तृभिस्त्रिभी रूपैरयं बध्यते उपद्रष्टृमहेश्वरपरमात्मरूपैस्तु नित्यमुक्त एक एवेति ज्ञेयं । अत्र भाष्यार्थोऽप्यनुसंधेयो विस्तरभयात्तु न प्रदर्शितः ॥ २२ ॥

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ॥**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥**

**शां० भा०**—तमेवं यथोक्तलक्षणमात्मानम्—य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादहमिति प्रकृतिं च यथोक्तामविद्यालक्षणां गुणैः स्वविकारैः सह निवर्तितामभावमापादितां विद्यया सर्वथा सर्वप्रकारेण वर्तमानोऽपि स भूयः पुनः पतितेऽस्मिन्विद्वच्छरीरे देहान्तराय नाभिजायते नोत्पद्यते देहान्तरं न गृह्णातीत्यर्थः । अपिशब्दात्किमु वक्तव्यं स्ववृत्तस्थो न जायत इत्यभिप्रायः । ननु यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तस्तथाऽपि प्राग्ज्ञानोत्पत्तेः कृतानां कर्मणामुत्तरकालभाविनां च यानि चातिक्रान्तानेकजन्मकृतानि तेषां फलमदत्त्वा नाशो न युक्त इति स्युस्त्रीणि जन्मानि । कृतविप्रणाशो हि न युक्त इति । यथा फले प्रवृत्तानामारब्धजन्मनां कर्मणाम् । न च कर्मणां विशेषोऽवगम्यते । तस्मात्त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मान्यारभेरन्संहतानि वा सर्वाण्येकं जन्माऽऽरभेरन् । अन्यथा कृतविनाशे सति सर्वत्रानाश्वासप्रसङ्गः शास्त्रानर्थक्यं च स्यादित्यत इदमयुक्तमुक्तं न स भूयोऽभिजायत इति । न, “क्षीयन्ते चास्य कर्माणि । ब्रह्म वेद ब्रह्मैव भवति । तस्य तावदेव चिरमिषीकातूलवत्सर्वकर्माणि प्रदूयन्ते” इत्यादिश्रुतिशतेभ्य उक्तो विदुषः सर्वकर्मदाहः ।

**शां० आ०**—यथोक्तप्रकारेण, जीवेश्वरादिसर्वकल्पनाधिष्ठानत्वेनेत्यर्थः । साक्षादपरोक्षत्वेनेति यावत्, यथोक्तामनाद्यनिर्वाच्यां सर्वानर्थोपाधिभूतामित्यर्थः । विद्यया प्रागुक्तैकत्वगोचरया प्रकृतिमविद्यारूपां सकार्यामभावमापादितां यो वेत्तीति संबन्धः । सर्वप्रकारेण विहितेन निषिद्धेन चेत्यर्थः । पुनर्नकारोऽन्वयार्थः । निपातसूचितं न्यायमाह—**अपीति** । न स भूयोऽभिजायत इत्युक्तमाक्षिपति—**नन्विति** । ज्ञानोत्पत्त्यनन्तरं जन्माभावस्योक्तत्वात्पुनर्देहारम्भमुपेत्य नाऽऽक्षेपः स्यादित्याशङ्कयाऽऽह—**यद्यपीति** । तथाऽपि स्युस्त्रीणि जन्मानीति संबन्धः । वर्तमानदेहे ज्ञानात्पूर्वोत्तरकालानां कर्मणां फलमदत्त्वा नाशायोगाज्जन्मद्वयमावश्यकमतीतानेकदेहेष्वपि कृतकर्मणां ‘नाभुक्तं क्षीयते कर्म’ इति स्मृतेरदत्त्वा फलमनाशादस्ति तृतीयमपि जन्मेत्याह—**प्रागिति** । फलदानं विनाऽपि कर्मनाशे दोषमाह—**कृतेति** । न युक्त इति कृत्वा फलमदत्त्वा कर्मनाशो नेति शेषः । विमतानि कर्माणि फलमदत्त्वा न क्षीयन्ते वैदिककर्मत्वादारब्धकर्मवदिति मत्वाऽऽह—**यथेति** । नाशो न ज्ञानादिति शेषः । नन्वनारब्धकर्मणां ज्ञानान्नाशो युक्तोऽप्रवृत्तफलत्वादारब्धकर्मणां तु प्रवृत्तफलत्वेन बलवत्त्वान्न ज्ञानात्तन्निवृत्तिर्नेत्याह—**न चेति** । अज्ञानोत्थत्वेन ज्ञानविरोधित्वाविशेषात्प्रवृत्ताप्रवृत्तफलत्वमनुपयुक्तमिति भावः । कर्मणां फलमदत्त्वा नाशाभावे फलितमाह—**तस्मादिति** । ननु कर्मणां बहुत्वात्तत्फलेषु जन्मसु कुतस्त्रित्वमारम्भकर्मणां त्रिप्रकारत्वादिति चेन्नानारब्धत्वेनैकप्रकारत्वसंभवात्तत्राऽऽह—**संहतानीति** । नास्ति ज्ञानस्यैकान्तिकफलत्वमिति शेषः । उक्तकर्मणां जन्मानारम्भकत्वे प्रागुक्तं दोषमनुभाष्य तस्यातिप्रसञ्जकत्वमाह—**अन्यथेति** । सर्वत्रेत्यारब्धकर्मस्वपीति यावत् । फलजनकत्वानिश्चयोऽनाश्वासः । कर्मणां जन्मानारम्भकत्वे कर्मकाण्डानर्थक्यं दोषान्तरमाह—**शास्त्रेति** । अनारब्धकर्मणां सत्यपि ज्ञाने जन्मारम्भकत्वध्रौव्ये फलितमाह—**इत्यत इति** । श्रुत्यवष्टम्भेन परिहरति—**नेत्यादिना** ।

**शां० भा०**—इहापि चोक्तो यथैधांसीत्यादिना सर्वकर्मदाहः । वक्ष्यति चोपपत्तेश्च । अविद्याकामक्लेशबीजनिमित्तानि हि कर्माणि जन्मान्तराङ्कुरमारभन्ते । इहापि च साहंकाराभिसंधीनि कर्माणि फलारम्भकाणि नेतराणीति तत्र तत्र भगवतोक्तम् । “बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।

ज्ञानदग्धैस्तथा क्लेशैर्नाऽऽत्मा संपद्यते पुनः" इति च। अस्तु तावज्ज्ञानोत्पत्त्युत्तरकालकृतानां कर्मणां ज्ञानेन दाहो ज्ञानसहभावित्वात्। न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक्कृतानामतीतानेकजन्मान्तरकृतानां च दाहो युक्तः। न, सर्वकर्माणीतिविशेषणात्। ज्ञानोत्तरकालभाविनामेव सर्वकर्मणामिति चेत् न, संकोचे कारणानुपपत्तेः। यत्तूक्तं यथा वर्तमानजन्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने तथाऽनारब्धफलानामपि कर्मणां क्षयो न युक्त इति। तदसत्। कथं, तेषां मुक्तेषुवत्प्रवृत्तफलत्वात्। यथा पूर्वं लक्ष्यवेधाय मुक्त इषुर्धनुषो लक्ष्यवेधोत्तरकालमप्यारब्धवेगक्षयात्पतनेनैव निवर्तत एवं शरीरारम्भकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽप्यासंस्कारवेगक्षयात्पूर्ववद्वर्तत एव। स एवेषुः प्रवृत्तिनिमित्तानारब्धवेगस्त्वमुक्तो धनुषि प्रयुक्तोऽप्युपसंह्रियते तथानारब्धफलानि कर्माणि स्वाश्रयस्थान्येव ज्ञानेन निर्बीजीक्रियन्त इति पतितेऽस्मिन्विद्वच्छरीरे 'न स भूयोऽभिजायते' इति युक्तमेवोक्तमिति सिद्धम्॥ २३॥

शां० आ०—ज्ञानादनारब्धकर्मदाहे भगवतोऽपि संमतिमाह—**इहापीति**। ज्ञानाधीनसर्वकर्मदाहे सर्वधर्मान्परित्यज्येति वाक्यशेषोऽपि प्रमाणी भवतीत्याह—**वक्ष्यति चेति**। ज्ञानादनारब्धाशेषकर्मक्षये युक्तिरपि वक्तुं शक्येत्याह—**उपपत्तेश्चेति**। तामेव विवृणोति—**अविद्येति**। अज्ञस्याविद्यास्मितारागद्वेषाभिनिवेशाख्यक्लेशात्मकानि सर्वानर्थबीजानि तानि निमित्तीकृत्य यानि धर्माधर्मकर्माणि तानि जन्मारम्भकाणि यानि तु विदुषो विद्यादग्धक्लेशबीजस्य प्रतिभासमात्रशरीराणि कर्माणि न तानि शरीरारम्भकाणि दग्धपटवदर्थक्रियासामर्थ्याभावादित्यर्थः। प्रतीतिमात्रदेहानां कर्माभासानां न फलारम्भकतेत्यस्मिन्नर्थे भगवतोऽपि संमतिमाह—**इहापीति**। तत्त्वज्ञानादूर्ध्वं प्रातीतिकक्लेशानां कर्मद्वारा देहानारम्भकत्वे वाक्यान्तरमपि प्रमाणयति—**बीजानीति**। ज्ञानानन्तरभाविकर्मणां ज्ञानेन दाहमङ्गीकरोति—**अस्त्विति**। विरोधिग्रस्तानामेवोत्पत्तेरिति हेतुमाह—**ज्ञानेति**। अस्मिञ्जन्मनि जन्मान्तरे वा ज्ञानात्पूर्वभाविकर्मणां न ततो दाहो विरोधिनं विना प्रवृत्तेरित्याह—**नत्विति**। श्रुतिस्मृतिविरोधान्नैवमिति परिहरति—**नेत्यादिना**। सर्वशब्दश्रुतेः संकोचं शङ्कते—**ज्ञानेति**। प्रकरणादिसंकोचकाभावान्नैवमित्याह—**नेति**। आक्षेपदशायामुक्तमनुमानमनुवदति—**यत्त्विति**। आभासत्वादिदमसाधकमिति दूषयति—**तदसदिति**। व्याप्त्यादिसत्त्वे कथमाभासत्वमिति पृच्छति—**कथमिति**।प्रवृत्तफलत्वोपाधिना हेतोर्व्याप्तिभङ्गादाभासत्वधीरित्याह—**तेषामिति**। तदेव प्रपञ्चयति—**यथेत्यादिना**। धनुषः सकाशादिषुर्मुक्तो बलवत्प्रतिबन्धकाभावे मध्ये न पतति तथा प्रबलप्रतिबन्धकं विना प्रवृत्तफलानां कर्मणां भोगादृते न क्षयो न च तत्त्वज्ञानं तादृक्प्रतिबन्धकमुत्पत्तावेव पूर्वप्रवृत्तेन कर्मणा प्रतिबद्धशक्तित्वादित्यर्थः। यत्र ज्ञानेनादाह्यत्वं तत्र प्रवृत्तफलत्वमित्यन्वयेऽपि यत्राप्रवृत्तफलत्वं तत्र ज्ञानदाह्यत्वमिति न व्यतिरेकसिद्धिरित्याशङ्क्याऽऽह—**स एवेति**। प्रवृत्तौ निमित्तभूतो नाऽऽरब्धो वेगोऽनेनेति विग्रहः। स्वाश्रयस्थानि साभासान्तःकरणनिष्ठानीति यावत्। विमतानि तत्त्वधीनिमित्तनिवृत्तीनि तत्कृतकारणनिवृत्तित्वाद्रज्जुसर्पादिवदितिव्यतिरेकासिद्धिरिति भावः। विदुषो वर्तमानदेहपाते देहहेत्वभावात्तत्त्वधीरैकान्तिकफलेत्युपसंहरति—**पतित इति**॥ २३॥

आ० भा०—यतश्च यदित्याह—उपद्रष्टेति। अनुमंता अन्वनु विशेषतो निरूपकः। पुरुषः सुखदुःखानामिति जीव उक्तः। पुरुषं प्रकृतिमिति जीवेश्वरौ सहैवोच्येते। अन्यत्र महातात्पर्यविरोधः। उत्कर्षे हि महातात्पर्यम्। तथा हि सौकरायणश्रुतिः "अवाच्योत्कर्षे महत्त्वात्सर्ववाचां सर्वन्यायानां च महत्तत्परत्वम्। विष्णोरनंतस्य परात्परस्य तच्चापि ह्यस्त्येव न चात्र शंका। अतो विरुद्धं तु यदत्र मानं तदक्षजादावथ वाऽपि युक्तिः। न तत्प्रमाणं कवयो वदंति न चापि युक्तिर्हीनमतिर्हि दृष्टेः" इति। अतो युक्तिभिरप्येतदपलापो न युक्तः। अतो यया युक्त्याऽविद्यमानत्वादि कल्पयति साप्याभासरूपेति सदैव माहात्म्यं वेदैरुच्यत इति सिध्यति। अवांतरं च तात्पर्यं तत्रास्ति। उक्तं च तत्रैव। "अवांतरं तत्परत्वं च सत्वे महद्वाऽप्येकत्वात्तयोरनंत" इति। श्यामत्वाद्यभिधा-

नाच्च । युक्तं च पुरुषमतिकल्पितयुक्त्यादेराभासत्वम् अज्ञानसंभवात् । न तु स्वतः प्रमाणस्य वेदस्याभासत्वम् । अदर्शनं च संभवत्येव पुंसाम् बहूनामप्यज्ञानात् । तर्ह्यस्मदनधीतश्रुत्यादौ विपर्ययोऽपि स्यादिति न वाच्यम् । यतस्तत्रैवाह—"नैव तद्विरुद्धावाचो नैव तद्विरुद्धा युक्तय इति ह प्रजापतिरुवाच प्रजापति रुवाचेति । " तद्विरुद्धं च जीवसात्म्यम् आभास एव चेति चोक्तम् । जनमेजय उवाच—'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।। को ह्यत्र पुरुषश्रेष्ठस्तं भवान्वक्तुमर्हति ।।' श्रीवैशंपायन उवाच—'नैतदिच्छंति पुरुषमेकं कुरुकुलोद्वह ।। बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ' इति मोक्षधर्मे । न च तत्सर्वं स्वप्नेंद्रजालवत् वैधर्म्याच्च न स्वप्नादिवदिति भगवद्वचनम् । न च स्वप्नवदेकजीवकल्पितत्वे मानं पश्यामः। विपर्यये मानानि चोक्तानि द्वितीये। उक्तं चायास्यशाखायाम् । " स्वप्नो ह वा अयं चंचलत्वान्न स्वप्नो न हि विच्छेद एतदिति " इति । नायं दोषः । नहीश्वरस्य जीवैक्यमुच्यते जीवस्य हीश्वरैक्यं ध्येयम् । तदपि न निरुपाधिकम् अतो न प्रतिबिंबत्वस्य विरोध्यैक्यम् । तथा च माधुच्छंदसश्रुतिः । " ऐक्यं चापि प्रतिबिंबेन विष्णोः जीवस्यैतदृषयो वदंति " इति । अहंग्रहोपासने च फलाधिक्यमाग्निवेश्यश्रुतिसिद्धम् । अहंग्रहोपासकस्तस्य साम्यमभ्याशो हवाऽश्नुते नात्र शंकेति । 'तदीयोऽहमिति ज्ञानमहंग्रह इतीरितः' इति वामने । तद्वशत्वात् सोऽस्मीति भृत्यैरेव न तु स्वत इति च । प्रातिबिंब्येन सोऽस्मि भृत्यश्चेतिभावना । तथा ह्यायास्यशाखायाम् । " भृत्यश्चाहं प्रातिबिंब्येन सोऽस्मीत्येवं ह्युपास्यः पुमान् सः" इति प्रातिबिंब्यं च तत्साम्यमेव ।। २३ ।।

**आ० ज०**—यतश्च यदिति वक्तुमित्युक्तम् तत्केनोच्यत इत्यत आह—**यतश्चेति**। इति प्रतिज्ञातामिति शेषः। अनुमंता अनुज्ञातेति कश्चित् । तदसत् औदासीन्यप्राप्तौ भर्ता भोक्तेत्यादिविरोधादिति भावेन व्याचष्टे—**अनुमंतेति** । अनुशब्दः पुनरर्थे क्रियावृत्तिश्च तदर्थ इति ज्ञापनाय द्विरुक्तिः। विशेषत इति तृनोर्थः। निरूपकः कर्तव्यस्यालोचकः। य एनं वेत्ति पुरुषमित्यत्र पुरुषशब्दं व्याख्यातुमुपोद्घातमाह—**पुरुषइति** । सुखदुःखभोक्तृलिंगादिति भावः। सुखदुःखानां भोक्तृत्वे भोगे हेतुः कर्तेति व्याख्यानमाश्रित्येदमुक्तं व्याख्यानांतरे तु भगवानेवात्र पुरुषः पुरुषप्रकृतिस्थो हीति जीवः। उपलक्षणमेतत् उपद्रष्टेतीश्वर उक्त इत्यपि द्रष्टव्यम् । ततः किमित्यत आह—**पुरुषमिति** । यत एवमुभावपि प्रकृतौ । अतो य एनं वेत्ति पुरुषमित्यत्र पुरुषशब्देन जीवेश्वरौ द्वावपि गृह्येते द्वयोरपि परामर्शसंभवात् । तर्हि द्वयोर्द्विवचनेन भाव्यमित्यत उक्तम्—**सहैवेति** । तंत्रेणेत्यर्थः । अत्र कश्चिद्य एनं वेत्ति पुरुषं साक्षादहमस्मीत्येवमध्याहारेण जीवेश्वरैक्यं व्याख्यातवान् तद्दूषयति—**अन्यत्रेति** । जीवेश्वरैक्ये सर्ववेदानां प्राधान्येन यत्प्रतिपादकत्वं तद्विरोधः । कथमित्यत आह—**उत्कर्षेहीति** । सर्वागमानामीश्वरस्य सर्वोत्कर्षे हि महातात्पर्यमित्यर्थः । तत्कुतः प्रागुक्तयुक्तेः श्रुतेश्चेत्याह—**तथा हीति** । विष्णोर्महत्त्वादेवावाच्यत्वेनोक्ते सर्वोत्कर्षे सर्वासां वेदवाचां सर्वन्यायानां न्यायव्युत्पादकस्य मीमांसाशास्त्रस्येति यावत् । महत्तत्परत्वं महातात्पर्यम् । अस्तूत्कर्षे महातात्पर्यम् तथाप्युत्कर्षस्य सत्त्वं कुतः । न हि जैनवाक्यस्य क्वचिन्महातात्पर्येऽपि तत्सत्वमस्तीत्यत आह—**तच्चापीति** । न केवलं तत्र तात्पर्यं किं तु तन्महत्त्वमपि चास्त्येव । धियां स्वतः प्रामाण्यादिति हेरर्थः । स्वतःप्रामाण्येऽपि बाधकाद्विषयासत्वं भवति । तदप्यत्र नास्तीत्याह—**न चात्रेति । शंकेति** । शंकाहेतुर्बाधकमिति यावत् । कथं बाधकाभाव इत्यत आह—**अत इति** । अत इत्यस्योत्तरत्रान्वयः तत्रेश्वरस्य सर्वोत्कर्षे तु यद्विरुद्धं मानं शंक्यते तदपि किमक्षजादौ । अक्षजागमयोरन्यतरत् अथ वा युक्तिः । आद्यं निराकरोति—**न तदिति** । कवयो न्यायविदः । कुतः अतउपजीव्यवेदविरोधात् । एतेन द्वितीयोऽपि निरस्तः तथापि विशेषं वक्तुमाह—**नचेति** । युक्तिरपि नैव मानं यतो दृष्टेः श्रुतेरूनमतिर्जात्यैव दुर्बलज्ञानोत्पादिका भगवदुत्कर्षे सर्वागमानां महातात्पर्यमित्यत्र पठितायाः श्रुतेः शेषेण योऽर्थो लब्धः सोऽपि प्रकृतोपयुक्त एव । उत्कर्षस्य सत्त्वाभावे जीवेश्वरैक्यस्य तद्विरोधाभावादतस्तं स्ववाक्येनाप्याह—**अत इति** । युक्तिभिरित्युपलक्षणम् एतदपलापो भगवदुत्कर्षस्याविद्यमानत्वादिकल्पनम् । अत इत्युक्तमेवार्थं विशदयति—**अत इति** । वेदविरोधादित्यर्थः । आदिपदेनानिर्वाच्यत्वं गृह्यते भगवदुत्कर्षस्येति शेषः । सापीत्यपिशब्देन प्रत्यक्षादेः समुच्चयः । इतिशब्दो हेतौ । बाधकाभावादित्यर्थः । उत्कर्षस्य प्रकृतत्वेऽपि तच्चापीति श्रौततच्छब्दव्याख्यानाय माहात्म्यमित्युक्तम् । ननु

प्रतिपन्नस्य विद्यमानत्वादिकं बाधकाभावेन कल्प्यम् स्वतः प्रामाण्यात्। न चोत्कर्षस्य सत्वं वेदात्प्रतिपन्नम्। उत्कर्षे तत्सत्वे च तात्पर्यांगीकारे वाक्यभेदप्रसंगादित्यत आह—**अवांतरं चेति**। चशब्दस्य तत्र सत्वे चेत्यन्वयः उभयत्र महातात्पर्याभावान्न दोषः। एतत्कुत इत्यत आह—**उक्तं चेति**। तत्रैव तस्यामेव श्रुतावंगीकृत्यचेदमुक्तं वस्तुतस्तूत्कर्षसत्वे महदपि तत्परत्वम्। कुतः अनंतसंबधिनोस्तयोरुत्कर्षस्य तत्सत्वस्य चैकत्वात्। अनंत इति प्रकृतत्वादेवोक्तम्। एत दुक्तं भवति। प्रमाणं हि प्रवर्तमानं विधिरूपं निषेधरूपं वा न तूदासीनं तस्य च बाधाभावे स्वत एव सत्वासत्वलक्षणौ विधिनिषेधौ सिध्यतः किं तत्र तात्पर्यांतरकल्पनयेति। ननु निराकारमेव ब्रह्म श्रूयते तत्कथं तद्गुणोत्कर्षे सर्वश्रुतीनां महातात्पर्यं स्यादित्यत आह—**श्यामत्वे चेति**। एतच्चानंतरातीताध्याये प्रपंचितम्। वेदविरोधाद्युक्त्यादेराभासत्वमित्युक्तम् तदयुक्तम्। नियामकाभावात्। विपर्ययस्यापि सुवचनादित्यत आह—**युक्तं चेति**। युक्तं संभावितम्। अज्ञानसंभवात्। अज्ञानमूलत्वसंभवात्। अज्ञानं चोपाधिव्यभिचारादिविषयम्। स्वतः प्रमाणस्यापौरुषेयतया पुरुषगुणानपेक्षप्रमाणभावस्य युक्तेरज्ञानमूलत्वसंभावनानिर्बीजेत्यत आह—**अदर्शनं चेति**।संभवति शंकार्हमित्यर्थः। एतदुक्तं भवति। वेदस्य युक्त्यादेश्च परस्परविरोधे द्वयोः प्रामाण्यानुपपत्तावन्यतरस्याभासत्वे कल्पनीये युक्त्यादेरेव तत्कल्प्यं संभवात् न तु वेदस्यासंभवात्। निरवकाशेन सावकाशस्य बाधदर्शनादिति। पुरुषेष्वदर्शनमाशंकमानानामतिप्रसंगमाशंक्य निषेधति—**तर्हीति**। विपर्ययो भगवद्गुणोत्कर्षस्य "सर्ववाचाम्" इति श्रुत्यैवोक्तत्वादिति परिहारे स्थितेऽन्यमप्याह—**यत इति**। तस्यामेव श्रुतावाह वेदपुरुषः एतद्विरुद्धाः भगवद्गुणोत्कर्षविरुद्धाः। उत्कर्षे हीत्यादिनोक्तमुपसंहरति—**यदिति**। सर्ववेदानां यद्भगवद्गुणोत्कर्षे महातात्पर्यमुक्तं तद्विरुद्धं जीवसात्म्यमीश्वरेण जीवस्यैकात्म्यम् सूत्रेतिहासविरुद्धं चेत्याह—**आभास इति**। बहव इति पक्षेपि किं सर्वे समा उतैकः श्रेष्ठः द्वितीये कोऽसावत्र पुरुषेषु श्रेष्ठः कथं च श्रेष्ठस्तं तथा वक्तुमर्हतीति। एतदेतस्मिन् जगति किं तु बहवः तेषां बहूनां पुरुषाणां मध्ये यो योनिः यः कारणभूतः श्रेष्ठः। तथा च तं पुरुषं तथा व्याख्यास्यामि। विश्वं व्याप्तम्। स्यादेतत् सर्वं जगत्स्वप्नवदेकाज्ञानपरिकल्पितमित्येके इंद्रजालवदनेकाज्ञानकल्पितमित्यपरे। अपकृष्टापेक्षश्चोत्कर्षः तथा चापकृष्टस्य विश्वस्य मिथ्यात्वादुत्कर्षस्य सत्त्वं कथं स्यात् कथं च तत्र सर्ववेदानां महातात्पर्यमित्यत आह—**न चेति**। भगवद्वचनं यत इति शेषः। इतोऽप्येवमित्याह—**न चेति**। कल्पितत्वे विश्वस्य। एवं बहुजीवकल्पितत्वेऽपीति वाच्यम्। विपर्यये सत्यत्वे। तर्हि कथं विश्वस्य पुराणेषु स्वप्नादिसाम्यमुच्यत इत्यत आह—**उक्तं चेति**। अयं प्रपंचः स्वप्न इवोच्यते। चंचलत्वादनित्यत्वात् विकारित्वाच्च। न तु स्वप्नः साक्षान्मिथ्येति यावत्। कुतः एतदेतस्य विच्छेदो बाधो न हीत्यर्थः। यद्यपि स्वप्नः सत्यः। तथाप्यंगीकारवादोऽयं मिथ्यार्थप्राचुर्याद्वा। ननु जीवस्य ब्रह्मणि अहं ब्रह्मास्मीत्यहंग्रहोपास्तिस्तावत्कर्तव्या। जीवश्च न सर्वोत्कृष्टः। ततश्च तेनैकीभूतस्येश्वरस्य कथं सर्वोत्कर्ष इत्यत आह—**नायमिति**। बुद्धिस्थस्यायमिति परामर्शः कुत इत्यत आह—**न हीति**। किं तर्ह्युच्यत इत्यत आह—**जीवस्य हीति**। स्यादयं दोषो यद्यहं ब्रह्मास्मीत्यादिनेश्वरमुद्दिश्य तस्यानुत्कृष्टजीवैक्यमुच्येत। नचैवं किं तु जीवमुद्दिश्य तस्येश्वरैक्यं अन्यथा ब्रह्म मदात्मकं भवतीति निर्देशप्रसंगादिति। सत्यमेतत्। जीवस्येश्वरैक्यमुच्यत इति तथाऽपि नोक्तदोषपरिहारः। यदीश्वरो वस्तुतः सर्वोत्कृष्टः स्यात्तदा कथं जीवस्य तदैक्यं स्यात्। तस्यानुत्कृष्टत्वेनानुभवात् अतो जीवस्य ब्रह्मणि श्रुतस्याहंग्रहोपासनस्यान्यथाऽनुपपत्त्येश्वरस्य सर्वोत्कृष्टत्वं मिथ्येत्यंगीकार्यमित्यत आह—**तदिति**। यज्जीवस्येश्वरेणैक्यमुच्यते तदपि न निरुपाधिकं निरुपचरितम्। किं तूपचारेणैवोच्यते। उपचारबीजं सहेतुकमाह—**अत इति**। यतः साक्षादैक्यं नार्थः अतोऽहं ब्रह्मास्मीत्यादावुच्यमानमैक्यं प्रतिबिंबत्वविरोधि प्रतिबिंबत्वादन्यं न भवति किंतु प्रतिबिंबत्वमेवेत्यर्थः। ननु साक्षादैक्यं कुतो नार्थः। कुतश्चोपचारोऽपि प्रतिबिंबत्वनिमित्त इत्यतआह—**तथा चेति**। जीवस्यापि विष्णोरैक्यं यदृषयो वदंति तत्प्रतिबिंबेनैव निमित्तेन हीत्यर्थः। इतश्चोपचारेणैवाहंग्रहोपासनमित्याह—**अहमिति**। फलाधिक्यं मुख्यं फलमहंग्रहोपासनस्य हि परमं प्रयोजनमीश्वरसारूप्यापत्तिरेव श्रुत्योच्यते। यदि च निरुपचरितमैक्यमुपास्यं स्यात् तदा तन्नोपपद्येत। तं यथा यथोपासते तदेव भवतीतिश्रुतेरिति भावः। अभ्याशः समीपम्। अल्पेनैव कालेनेत्यर्थः। इतोऽप्युपचारेणैवाहंग्रह इत्याह—**तदीय इति**। भृत्यैरेवोपास्यत इति शेषः। स्वतः साक्षादैक्यात्। नन्वग्निर्माणवकइत्याद्युपचारो भेदज्ञानसहचारितोदृष्टः। न च प्रकृते तदस्ति। तत्कथमुपचारेणाहंग्रहोपासनामित्यतोऽत्रापि भेदज्ञानसाहित्यमस्तीति सप्रमाणकमाह—**प्रतिबिंबेनेति**। ननु बिंबत्वमंगीकृतं चेदैक्यमेवोपपन्नमित्यत आह—**प्रातिबिंब्यं चेति**। तदधीनत्वं च ग्राह्यम् तदीयोऽहमित्युक्तत्वात् एवशब्दस्त्वैक्यस्य व्यवच्छेदार्थः एतेन क्षेत्रज्ञं चापि मां विद्धीत्यादेरपव्याख्यानमपास्तं भवति॥ २३॥

**रा० भा०**—एनमुक्तस्वभावं पुरुषमुक्तस्वभावां च प्रकृतिं वक्ष्यमाणस्वभावयुक्तैः सत्त्वादिभिर्गुणैस्सह यो वेत्ति यथावद्विवेकेन जानाति स सर्वथा देवमनुष्यादिदेहेष्वातिमात्रक्लिष्टप्रकारेण वर्तमानोऽ-

पि भूयो न जायते न भूयः प्रकृत्या संबध्नाति अपरिच्छिन्नज्ञानलक्षणमपहतपाप्मानमात्मानं तद्देहावसानसमये प्राप्नोतीत्यर्थः ॥ २३ ॥

**अ० टी०**—एवमनूद्यैवंविदः संसाराऽभावमाह—**य एवमिति** । एवं पूर्वोक्तप्रकारेण यः पुरुषं प्रकृतिं च गुणैः सह भगवद्रूपं वेत्ति जानाति ज्ञात्वा तथा सर्वथा वर्तमानोऽपि तथाऽऽचरणशीलो यो भवति स भूयो नाऽभिजायते संसारे नोत्पन्नो भवति । किंतु मुक्त एव भवतीत्यर्थः ॥ २३ ॥

**नी० टी०**—एवं यथोक्तलक्षणात्मज्ञाने फलमाह—**एवमिति** । गुणैः स्वविकारैः सर्वथा विहितेन निषिद्धेन वा कर्मणा वर्तमानोऽपि न स भूयोऽभिजायते पुनर्जन्म न लभते मुक्तो भवतीत्यर्थः ॥ २३ ॥

ध्यानेनाऽऽत्मनि पश्यन्ति केचिदात्मानमात्मना ॥
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

**शां० भा०**—अत्राऽऽत्मदर्शन उपायविकल्पा इमे ध्यानादय उच्यन्ते—ध्यानेन ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य मनश्च प्रत्यक्चेतयितर्येकाग्रतया यच्चिन्तनं तद्ध्यानम् । तथा ध्यायतीव बको ध्यायतीव पृथिवी ध्यायन्तीव पर्वता इत्युपमोपादानात्तैलधारावत्संततोऽविच्छिन्नप्रत्ययो ध्यानं तेन ध्यानेनाऽऽत्मनि बुद्धौ पश्यन्त्यात्मानं प्रत्यक्चेतनमात्मना ध्यानसंस्कृतेनान्तःकरणेन केचिद्योगिनः । अन्ये सांख्येन योगेन सांख्यं नाम—इमे सत्त्वरजस्तमांसि गुणा मया दृश्या अहं तेभ्योऽन्यस्तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनमेष सांख्यो योगस्तेन पश्यन्त्यात्मानमात्मनेति वर्तते । कर्मयोगेन कर्मैव योग ईश्वरार्पणबुद्ध्याऽनुष्ठीयमानं घटनरूपं योगार्थत्वाद्योग उच्यते । गुणतस्तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण चापरे ॥ २४ ॥

**शां० आ०**—ज्ञेयं यत्तदित्यादिना तत्पदार्थस्त्वंपदार्थश्चानन्तरमेव शोधितौ तयोरैक्यं च 'क्षेत्रज्ञं चापि मां विद्धि' इत्युक्तमिदानीं तद्दृष्टिहेतून्यथाधिकारं कथयति—**अत्रेति** । ध्यानाख्यं साधनं किंरूपमिति पृच्छति—**ध्यानं नामेति** । तद्रूपं वदन्नुत्तरमाह—**शब्दादिभ्य इति** । एकाग्रतयोपसंहृत्येति संबन्धः । यच्चिन्तनं प्रत्यक्चेतयितरीति पूर्वेणान्वयः । किं तच्चिन्तनमित्युक्ते दृष्टान्तद्वारा श्रुत्यवष्टम्भेन ध्यानं प्रपञ्चयति—**तथेति** । विवक्षितध्यानानुरोधेनेति यावत्, आत्मानं पश्यन्ति परमात्मतयेति शेषः । केचिदित्युत्तमाधिकारिणो गृह्यन्ते । मध्यमानधिकारिणो निर्दिशति—**अन्य इति** । सांख्यशब्दितं साधनं किं नामेत्युक्ते विचारजन्यं ज्ञानं तदेव ज्ञानं हेतुतया योतुल्यत्वाद्योगशब्दितमित्याह—**सांख्यमिति** । अधमानधिकारिणः संगिरते—**कर्मेति** । चित्तैकाग्र्यं योगस्तादर्थ्यं कर्मणः शुद्धिहेतोरास्ति तेन गौण्या वृत्त्या योगशब्दितं कर्मेत्याह—**गुणत इति** । अपरे पश्यन्त्यात्मानमात्मनेति पूर्ववदनुषङ्गमङ्गीकृत्याऽऽह—**तेनेति** ॥ २४ ॥

**आ० भा०**—सांख्येन वेदोक्तभगवत्स्वरूपज्ञानेन । कर्मिणामपि श्रुत्वा ज्ञात्वा ध्यात्वा दृष्टिः । श्रावकाणां च ज्ञात्वा ध्यात्वा । सांख्यानां च ध्यात्वा । तथा च गौपवनश्रुतिः । "कर्मकृच्चापि तच्छ्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति । श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति ॥ अन्यथा तस्य दृष्टिर्हि कथंचिन्नोपजायते" इति । अन्य इत्यशक्तानामप्युपायदर्शनार्थम् ॥ २४ ॥

**आ० ज०**—अन्ये सांख्येन योगेनेत्यत्र कापिलतंत्रोक्तप्रकृतिपुरुषविवेकज्ञानं सांख्यमिति व्याख्यानमसत् । कापिलतंत्रस्यावैदिकस्यात्र ग्रहणायोगात् । तस्य भगवद्दर्शने प्रधानसाधनत्वायोगाच्चेति भावेनान्यथा व्याचष्टे—**सांख्येनेति** । ज्ञानेन परोक्षज्ञानेन । ध्यानेनेत्यत्र ध्यानादीनां केवलानामेवेश्वरदर्शनसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह—**कर्मिणामिति** । दृष्टिः प्राप्येति शेषः । पाठक्रमादर्थक्रमस्य प्राधान्याद्व्युत्क्रमेणोक्तिः । कुत एतदित्यत आह—**तथा चेति** । ध्यात्वेत्येतज्ज्ञान्यपीत्युत्त-

रेणापि संवध्यते। ननु सर्वत्र सर्वस्य संयोजने सत्येक एवायं प्रकारः स्यात्तथा च केचिदन्ये पर इत्युक्तमयुक्तं स्यादित्यत आह—**अन्यइति**। ध्यानादावुत्तरोत्तरसाधने साक्षादशक्तानामपि तत्तदुपायज्ञानादिप्रदर्शनार्थमवस्थाभेदमाश्रित्यान्य इत्याद्युक्तमित्यर्थः२४

**रा० भा०—केचिन्निष्पन्नयोगा आत्मनि शरीरेऽवस्थितमात्मानम् आत्मना मनसा ध्यानेन भक्तियोगेन पश्यन्ति। अन्ये चानिष्पन्नयोगाः सांख्येन योगेन ज्ञानयोगेन योगयोग्यं मनः कृत्वात्मानं पश्यन्ति। अपरे योगादिष्वात्मावलोकसाधनेष्वनधिकृता ये ज्ञानयोगानाधिकारिणः तदधिकारिणश्च सुकरोपायसक्ताः व्यपदेश्याश्च कर्मयोगेनान्तर्गतज्ञानेन मनसा योगयोग्यतामुत्पाद्यात्मानं पश्यन्ति॥२४॥**

अ० टी०—नन्वेवं ज्ञानेनैव मुक्तिश्चेत्तदाऽन्यसाधनानामप्रयोजकत्वं स्यादित्याशङ्क्यान्यसाधनस्वरूपमाह—**ध्यानेनेति** द्वयेन। केचित् ज्ञानिनः ध्यानेन परिकल्पनेन आत्महृदये आत्मना मनसा आत्मानं आत्मरूपं भगवन्तं पश्यन्ति। अन्ये सांख्येन नित्याऽनित्यवस्तुविवेकात्मकेन योगेन तथा पश्यन्ति। अपरे कर्मयोगेन कर्मसु तदात्मकप्राकट्यरूपयोगेन पश्यन्ति तद्रूपम् ॥ २४ ॥

नी० टी०—एवंविधात्मदर्शनेऽधिकारिभेदेनोपायाविकल्पानाह—**ध्यानेनेति**। अत्र ये आत्मानं विविदिषंति ते निष्कामकर्मणा परमेश्वरमाराधयंति ते कर्मयोगिनः। तत एवोत्पन्नविविदिषा वेदांतश्रवणे प्रवर्तंते। ततः प्रमाणगतासंभावनानिवृत्तौ सत्यां तस्यैवार्थस्य मनने प्रवर्त्तते प्रमेयगतासंभावनानिवृत्त्यर्थं ते सांख्याः। ततः प्रमाणप्रमेयगतासंभावनाया निवृत्त्यनंतरमनात्मनि देहादावात्मबुद्धिरूपाया विपरीतभावनाया निवृत्त्यर्थं निदिध्यासनं विजातीयप्रत्ययतिरस्कारपूर्वकसजातीयप्रत्ययप्रवाहीकरणलक्षणं कर्तुं प्रवर्तंते ततस्तत्परिपाके आत्मनि बुद्धिवृत्तौ आत्मानं परमेश्वरं पश्यंति ते ध्यायिनः। तत्र ये कर्मसांख्ययोर्निष्णातास्ते ध्यानेनात्मनि देहे आत्मानं परमेश्वरं आत्मना बुद्ध्या पश्यंति। अन्ये त्वकृतकर्माणः सांख्येन योगेन विचारात्मकेन योगेन ध्यानद्वारा पश्यंति। अन्ये पुनः कर्मयोगेनैव पूर्वोक्तलक्षणेन सांख्या ध्यानद्वारा पश्यंतीति साधनत्रयस्य समुच्चयो न तु विकल्पः२४॥

**अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ॥**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

**शां० भा०—अन्ये त्विति। अन्ये त्वेषु विकल्पेष्वन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्य आचार्येभ्यः श्रुत्वेदमेव चिन्तयतेत्युक्ता उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति तेऽपि चातितरन्त्येवातिक्रामन्त्येव मृत्युं मृत्युयुक्तं संसारमित्येतत्। श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिता इत्यभिप्रायः किमु वक्तव्यं प्रमाणं प्रति स्वतन्त्रा विवेकिनो मृत्युमतितरन्तीत्यभिप्रायः ॥ २५ ॥**

शां० आ०—अधमतमानधिकारिणो मोक्षमार्गे प्रवृत्तिं प्रतिलम्भयति—**अन्ये त्विति**। आचार्याधीनां श्रुतिमेवाभिनयति—**इदमिति**। उपासनमेव विवृणोति—**श्रद्दधाना इति**। परोपदेशात्प्रवृत्तानामपि प्रवृत्तेः साफल्यमाह—**तेऽपीति**। तेषां मुख्याधिकारित्वं व्यावर्तयति—**श्रुतीति**। तेऽपीत्यपिना सूचितमर्थमाह—**किमिति** ॥ २५ ॥

**आ० भा०—॥ २५ ॥**

आ० ज०—॥ २५ ॥

**रा० भा०—अन्ये तु कर्मयोगादिष्वात्मावलोकनसाधनेष्वनधिकृताः अन्येभ्यस्तत्त्वदर्शिभ्यो ज्ञानिभ्यः श्रुत्वा कर्मयोगादिभिरात्मानमुपासते तेऽप्यात्मदर्शनेन मृत्युमतितरन्ति ये श्रुतिपरायणाः श्रवण-**

मात्रनिष्ठाः ते च श्रवणानिष्ठाः पूतपापाः क्रमेण कर्मयोगादि कर्मारभ्यातितरन्त्येव मृत्युम् अपिश-ब्दाच्च पूर्वभेदोऽवगम्यते ॥ २५ ॥

**अ० टी०—** अन्येतु मूर्खाः अजानन्तः अन्येभ्यो गुरुभ्यः श्रुत्वा विनैवानुभवम् एवं पूर्वोक्तप्रकारैरुपासते उपासनां कुर्वन्ति तेऽपि च सर्वे मृत्युम् अतितरन्त्येव मुक्ता भवन्तीत्यर्थः । कथमित्यत आह । श्रुतिपरायणाः । श्रुत्युक्तप्रकारत्वात् श्रद्धया करणादित्यर्थः । अयमर्थः । स्ववाक्यसत्यत्वाय तानपि तारयामि निर्बन्धेन, नतु स्नेहेन । इदमेवैवकारापिशब्दाभ्यां व्यञ्जितम् ॥ २५ ॥

**नी० टी०—**पक्षांतरमाह—**अन्येत्विति** । अन्ये ऊहापोहकौशलहीनाः तुशब्देन पूर्वोक्तेभ्यो विलक्षणाः एवं पूर्वोक्तप्रकारमजानंतोऽन्येभ्य आचार्येभ्यः श्रुत्वा आत्मनो निर्विशेषब्रह्मचैतन्यरूपत्वं तदुपासनमार्गं चाधिगत्य उपासते यथोक्तप्रकारेण ध्यायंति तेऽपि च मृत्युं संसारं तरंत्येव। अपिशब्दात्पूर्वश्लोकोक्तास्तरंतीत्यत्र किमाश्चर्य-मिति गम्यते । एवशब्दात्तेषां मुख्यक्रमाभावेऽपि तरणे संशयो नास्ति । यतस्ते श्रुतिपरायणाः । श्रुतिः श्रवणं त-देव परं अयनं मोक्षसाधनं येषां ते तथा । ध्याने प्रवृत्त्यतिशयान्न तेषां चित्तशुद्ध्यर्थं कर्मापेक्षा । वेदोक्त-तत्त्वे दृढनिश्चयाच्चासंभावनानिवृत्त्यर्थं श्रवणमननापेक्षेति भावः । अयं च ब्रह्मसाक्षात्कारः संवादिभ्रमरूप इति केचित् प्रमारूप इत्यन्ये । तथाहि यथा कश्चिन्मणिप्रभां मणिबुद्ध्या पश्यन् भ्रांत एव तथाऽपि तद्ग्रहणकाले म-णिं लभतेऽतः स संवादिभ्रमः । एवं त्वंपदार्थं तत्पदार्थमणिप्रभाभूतं तत्पदार्थबुद्ध्या भावयन् व्यवहारतो भ्रांत एव तथाऽपि तत्साक्षात्कारकाले तदनन्यस्य तत्पदार्थस्य साक्षात्कारोऽपि संवादिभ्रमन्यायेन जायते इति । तथा च वसिष्ठः 'असत्ये सत्यता साधो शाश्वती परिदृश्यते ॥ शून्येन ध्यानयोगेन शाश्वतं प्राप्यते पदम्' इति व्यव-हारतो निर्विशेषस्वरूपत्वेनासत्ये आत्मनि तत्र निर्विशेषत्वभावनं शून्यो निर्विषयोऽयं ध्यानयोगो योषित्यग्निध्या-नवत् तथाऽपि तेन शाश्वती सत्यता प्राप्यते दृश्यत इति वसिष्ठवाक्यार्थः । कल्पद्रुमाचार्यास्तु वेदांतवाक्यजध्या-नभावनाजाऽपरोक्षधीर्मूलप्रमाणदार्ढ्येन भ्रमत्वं प्रतिपद्यते इति प्राहुः ॥ २५ ॥

**यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ॥**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥**

**शां० भा०—**क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं यज्ज्ञात्वाऽमृतमश्नुत इत्युक्तं तत्कस्माद्धेतोरिति तद्धेतुप्रदर्शनार्थं श्लोक आरभ्यते—यावद्यत्किंचित्संजायते समुत्पद्यते सत्त्वं वस्तु किमविशेषेणेत्याह स्थावरजङ्गमं स्थावरं जङ्गमं च क्षेत्रक्षेत्रज्ञसंयोगात्तज्जायत इत्येवं विद्धि जानीहि हे भरतर्षभ। कः पुनरयं क्षेत्रक्षेत्रज्ञयोः संयोगोऽभिप्रेतः । न तावद्रज्ज्वेव घटस्यावयवसंश्लेषद्वारकः संबन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य संभवत्याकाशवन्निरवयवत्वात् । नापि समवायलक्षणस्तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरका-र्यकारणभावानभ्युपगमादिति । उच्यते, क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यास-लक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनो रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपि-तसर्परजतादिसंयोगवत् । सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणः । यथाशास्त्रं क्षेत्र-क्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राग्दर्शितरूपात्क्षेत्रान्मुञ्जादिवेषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य न सत्तन्नासदुच्यत इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति क्षेत्रं च मायानिर्मित-

हस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवदसदेव सदिवावभासत इत्येवं निश्चितविज्ञानो यस्तस्य यथोक्तसम्यग्दर्शनविरोधादपगच्छति मिथ्याज्ञानं तस्य जन्महेतोरपगमात्। 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' इत्यनेन विद्वान्भूयो नाभिजायत इति यदुक्तं तदुपपन्नमुक्तम् ॥ २६ ॥

शां० आ०—ऐक्यधर्मिमुक्तिहेतुरीति। प्रागुक्तमनूद्य प्रश्नपूर्वकं जिज्ञासितहेतुपरत्वेन श्लोकमवतारयति—**क्षेत्रेति**। सर्वस्य प्राणिजातस्य क्षेत्रक्षेत्रज्ञसंबन्धाधीना यस्मादुत्पत्तिस्तस्मात्क्षेत्रज्ञात्मकपरमात्मातिरेकेण प्राणिनिकायस्याभावादैक्यज्ञानादेव मुक्तिरित्याह—**कस्मादिति**। क्षेत्रक्षेत्रज्ञसंबन्धमुक्तमाक्षिपति—**कः पुनरिति**। क्षेत्रज्ञस्य क्षेत्रेण संबन्धः संयोगो वा समवायो वेति विकल्प्याऽऽद्यं दूषयति—**न तावदिति**। द्वितीयं निरस्यति—**नापीति**। वास्तवसंबन्धाभावेऽपि तयोरध्यासरूपः सोऽस्तीति परिहरति—**उच्यत इति**। भिन्नस्वभावत्वे हेतुमाह—**विषयेति**। इतरेतरवत्क्षेत्रे क्षेत्रज्ञे वा तद्धर्मस्य क्षेत्रानधिकरणस्य क्षेत्रज्ञगतस्य चैतन्यस्य क्षेत्रज्ञानाधारस्य च क्षेत्रनिष्ठस्य जाड्यादेरारोपरूपो योगस्तयोरित्याह—**इतरेति**। तत्र निमित्तमाह—**क्षेत्रेति**। अविवेकादारोपितसंयोगे दृष्टान्तमाह—**रज्जिवति**। उक्तं संबन्धं निगमयति—**सोऽयमिति**। तस्य निवृत्तियोग्यत्वं सूचयति—**मिथ्येति**। कथं तर्हि मिथ्याज्ञानस्य निवृत्तिरित्याशङ्क्याऽऽह—**यथेति**। योऽयं विज्ञानमयः प्राणेष्वित्यादि त्वंपदार्थविषयं शास्त्रमनुसृत्य विवेकज्ञानमापाद्य महाभूतादिधृत्यन्तात्क्षेत्रादुपद्रष्टृत्वादिलक्षणं प्रागुक्तं क्षेत्रज्ञं मुञ्जेषीकान्यायेन विविच्य सर्वोपाधिविनिर्मुक्तं ब्रह्म स्वरूपेण ज्ञेयं योऽनुभवति तस्य मिथ्याज्ञानमपगच्छतीति संबन्धः। कथमस्य निर्विशेषत्वं क्षेत्रज्ञस्य सविशेषत्वहेतोः सत्त्वादित्याशङ्क्याऽऽह—**क्षेत्रं चेति**। बहुदृष्टान्तोक्तिर्बहुविधत्वं क्षेत्रस्य द्योत्यते। उक्तज्ञानान्मिथ्याज्ञानापगमे हेतुमाह—**यथोक्तेति**। तथाऽपि कथं पुरुषार्थसिद्धिः कालान्तरे तुल्यजातीयमिथ्याज्ञानोदयसंभवादित्याशङ्क्याऽऽह—**तस्येति**। सम्यग्ज्ञानादज्ञानतत्कार्यनिवृत्त्या मुक्तिरिति स्थिते फलितमाह—**य एवमिति** ॥ २६ ॥

आ० भा०—पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुक्तमाह—यावदित्यादिना ॥ २६ ॥

आ० ज०—तत्क्षेत्रं यच्चेत्यादिना प्रतिज्ञातस्य सर्वस्योक्तत्वात्किमुत्तरेणेत्यत आह—**पुनश्चेति**। उक्तस्य पुनर्वचने को हेतुरित्यत उक्तम्। **साम्यादीति**। ईश्वरधर्मस्योभयधर्मात्प्राधान्येन साम्यग्रहणम् तच्च प्रकृतिपुरुषधर्मकथनं यादृगिति प्रतिज्ञातेऽन्तर्भवति ईश्वरधर्मकथनं च यत्प्रभाव इति ॥ २६ ॥

रा० भा०—अथ प्रकृतिसंसृष्टस्यात्मनो विवेकानुसंधानप्रकारं वक्तुं स्थावरं जङ्गमं च सत्त्वं चिदचित्संसर्गजमित्याह। यावत् स्थावरजंगमात्मना सत्त्वं जायते तावत् क्षेत्रक्षेत्रज्ञयोरितरेतरसंयोगादेव जायते संयुक्तमेव जायते न त्वितरेतरवियुक्तमित्यर्थः ॥ २६ ॥

अ० टी०—एतेषु पूर्वोक्तप्रकारेषु किमुत्तमम् अथ च कथं ज्ञेयमित्यत आह—**यावदिति**। यावद्वस्तुमात्रं स्थावरजङ्गमं तत् क्षेत्रक्षेत्रज्ञयोः पूर्वोक्तस्वरूपयोगात् क्रीडार्थकमत्संयोगात् सत्त्वं सत्त्वात्मकं विद्धि जानीहि। भरतर्षभेतिसंबोधनं तदर्थज्ञानयोग्यत्वाय ॥ २६ ॥

नी० टी०—पूर्वं कार्यकारणकर्तृत्वे इत्यत्र चिदचितोः पुंप्रकृत्योरन्योन्यधर्माध्यास उक्तस्तस्यैव गुणसंगरूपस्य कारणं गुणसंगोऽस्येति नानाजन्महेतुत्वं चोक्तं तद्विशदयति—**यावदिति**। सत्त्वं जीवरूपं गुणसंगोऽत्र रूपाद्यासक्तिर्न किंतु क्षेत्रक्षेत्रज्ञयोः संयोगोऽन्योन्यस्मिन्नन्योन्यात्मकताध्यासलक्षणो बोध्यः शेषं स्पष्टम् ॥ २६ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

शां० भा०—न स भूयोऽभिजायत इति सम्यग्दर्शनफलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तः। जन्मकारणं चाविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोग उक्तः। अतस्तस्या अविद्याया

निवर्तकं सम्यग्दर्शनमुक्तमपि पुनः शब्दान्तरेणोच्यते—समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तं क सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु कं परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्तात्मनोऽपेक्ष्य परमेश्वरस्तं सर्वेषु भूतेषु समं तिष्ठन्तम् । तानि विशिनष्टि विनश्यत्स्विति । तं च परमेश्वरमविनश्यन्तमिति भूतानां परमेश्वरस्य चात्यन्तवैलक्षण्यप्रदर्शनार्थम् । कथं सर्वेषां हि भावविकाराणां जनिलक्षणो भावविकारो मूलं जन्मोत्तरभाविनोऽन्ये सर्वे भावविकारा विनाशान्ताः । विनाशात्परो न कश्चिदस्ति भावविकारो भावाभावात् । सति हि धर्मिणि धर्मा भवन्त्यतोऽन्त्यभावविकाराभावानुवादेन पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सह कार्यैः । तस्मात्सर्वभूतैर्वैलक्षण्यमत्यन्तमेव परमेश्वरस्य सिद्धं निर्विशेषत्वमेकत्वं च । य एवं यथोक्तं परमेश्वरं पश्यति स पश्यति । ननु सर्वोऽपि लोकः पश्यति किं विशेषणेनेति, सत्यं पश्यति किंतु विपरीतं पश्यत्यतो विशिनष्टि स एव पश्यतीति । यथा तिमिरदृष्टिरनेकं चन्द्रं पश्यति तमपेक्ष्यैकचन्द्रदर्शी विशिष्यते स एव पश्यतीति तथैवेहाप्येकमविभक्तं यथोक्तमात्मानं यः पश्यति स विभक्तानेकात्मविपरीतदर्शिभ्यो विशिष्यते स एव पश्यतीति । इतरे पश्यन्तोऽपि न पश्यन्ति विपरीतदर्शित्वादनेकचन्द्रदर्शिवदित्यर्थः ॥ २७ ॥

**शां० आ०**—उत्तरग्रन्थमवतारयितुं व्यवहितं वृत्तं कीर्तयति—**नेत्यादिना** । अविद्याऽनाद्यनिर्वाच्यमज्ञानं मिथ्याज्ञानं तत्संस्कारश्चाऽऽदिशब्दार्थः । व्यवहितमनूद्याव्यवहितमनुवदति—**जन्मेति** । व्यवधानाव्यवधानाभ्यां सर्वानर्थमूलत्वादज्ञानस्य तन्निवर्तकं सम्यग्ज्ञानं वक्तव्यमित्याह—**अत इति** । तस्यासकृदुक्तत्वात्तदुक्तार्थप्रवृत्तिर्वृथेत्याशङ्क्यातिसूक्ष्मार्थस्य शब्दभेदेन पुनः पुनर्वचनमाधिकारिभेदानुग्रहायेति मत्वाऽऽह—**उक्तमिति** । सर्वत्र परस्यैकत्वान्नोत्कर्षापकर्षवत्त्वमित्याह—**सममिति** । परमत्वमीश्वरत्वं चोपपादयति—**देहेति** । आत्मा जीवस्तमित्यादिनाऽन्वयोक्तिः । आश्रयनाशादाश्रितस्यापि नाशमाशङ्क्याऽऽह—**तं चेति** । अविनश्यन्तमिति विशिनष्टीति संबन्धः । उभयत्र विशेषणद्वयस्य तात्पर्यमाह—**भूतानामिति** । नाशानाशाभ्यां वैलक्षण्येऽपि कथमत्यन्तवैलक्षण्यं सविशेषत्वभिन्नत्वयोस्तुल्यत्वादिति शङ्कते—**कथमिति** । भूतानां सविशेषत्वादिभावेऽपि परस्य तदभावादत्यन्तवैलक्षण्यमिति वक्तुं जन्मनो भावविकारेष्वादित्वमाह—**सर्वेषामिति** । तत्र हेतुमाह—**जन्मेति** । न हि जन्मान्तरेणोत्तरे विकारा युज्यन्ते जन्मवतस्तदुपलम्भादित्यर्थः । विनाशानन्तरभाविनोऽपि विकारस्य कस्यचिदुपपत्तेर्न तस्यान्त्यविकारत्वमित्याशङ्क्याऽऽह—**विनाशादिति** । तस्यान्त्यविकारत्वे सिद्धे फलितमाह—**अत इति** । तेषां जन्मादीनां कार्याणि कादाचित्कसत्त्वानि तदधिकरणानि तैः सहेति यावत् । परमेश्वरस्य भूतेभ्योऽत्यन्तवैलक्षण्यमुक्तमुपसंहरति—**तस्मादिति** । निर्विशेषत्वं सर्वभावविकारविरहितत्वं कूटस्थत्वमेकत्वमद्वितीयत्वम् । यः पश्यतीत्यादि व्याचष्टे—**य एवमिति** । उक्तविशेषणमीश्वरं पश्यन्नेव पश्यतीत्युक्तमाक्षिपति—**नन्विति** । ईश्वरपराङ्मुखस्यानात्मनिष्ठस्य तद्दर्शित्वेऽपि विपरीतदर्शित्वादीश्वरप्रवणस्यैव सम्यग्दर्शित्वमिति विवक्षित्वा विशेषणमिति परिहरति—**सत्यमिति** । उक्तमेव दृष्टान्तेन विवृणोति—**यथेत्यादिना** । यः पश्यतीत्यादेरर्थमुपसंहरति—**इतर इति** । परवस्तुनिष्ठेभ्यो व्यतिरिक्ता इत्यर्थः ॥ २७ ॥

**आ० भा०**—॥ २७ ॥

**आ० ज०**—॥ २७ ॥

**रा० भा०**—एवमितरेतरैः युक्तेषु सर्वभूतेषु देवादिविषमाकाराद्विविक्तं तत्र तत्र तत्तद्देहेन्द्रियमनांसि प्रति परमेश्वरत्वेन स्थितमात्मानं ज्ञातृत्वेन समानाकारं तेषु देहादिषु विनश्यत्सु विनाशानर्हस्वभावेनाविनश्यन्तं यः पश्यति स पश्यति आत्मानं यथावस्थितं पश्यति । यस्तु देवादिविषमाकारेण आत्मानमपि विषमाकारं जन्मविनाशादियुक्तं च पश्यति स नित्यमेव संसरतीत्यभिप्रायः २७

**अ० टी०**—एतदेव फलरूपत्वेन विशदयति—**सममिति** । सर्वेषु प्रपञ्चान्तःपातिस्थावरजङ्गमात्मकेषु भूतेषु लीलया अनेकविधरसभोगार्थं तिष्ठन्तं रसानुभवार्थं नीचोच्चादिधर्मरहितं समं तेषु विनश्यत्सु च अविनश्यन्तं तादृग्लीलावबोधरहितत्वाद्विनाशं प्राप्तेषु अन्यथाभावेन क्रोधादिराहित्येन तथैव लीलानुभवं कुर्वन्तं यः पश्यति स

परमेश्वरं पश्यति। अत एवंदर्शनाऽभावे साऽपराधो भवत्येव ॥ २७ ॥

**नी० टी०**—तन्नाशोपायमाह—**सममिति**। सममपरिणामिनं कूटस्थं नित्यं सर्वेषु भूतेषु देहाद्याकारेण परिणतेषु तिष्ठंतं। एतेन देह एव तदधिगमस्थानमित्युक्त। परमेश्वरमंतर्यामिणं सर्गस्थित्यंतकर्तारं। अत एवांतर्मुखदृष्ट्या विनश्यत्सु तेषु भूतेषु रज्जूरगादिवत्कल्पितत्वाददर्शनं गच्छत्सु विभुत्वादात्मत्वान्नित्यदृग्रूपत्वाच्चाविनश्यंतं सर्वास्वप्यवस्थास्वदर्शनमगच्छंतं यः पश्यति स एव पश्यति। अन्येंऽधा इत्यर्थः ॥ २७ ॥

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥**

**शां० भा०**—यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्तव्येति श्लोक आरभ्यते—समं पश्यन्नुपलभमानो हि यस्मात्सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतयाऽवस्थितमीश्वरमतीतानन्तरश्लोकोक्तलक्षणमित्यर्थः। समं पश्यन्किं न हिनस्ति हिंसां न करोत्यात्मना स्वेनैव स्वमात्मानं ततस्तदहिंसनाद्याति परां प्रकृष्टां गतिं मोक्षाख्याम्। ननु नैव कश्चित्प्राणी स्वयं स्वमात्मानं हिनस्ति कथमुच्यतेऽप्राप्तं न हिनस्तीति। यथा न पृथिव्यामग्निश्चेतव्यो नान्तरिक्ष इत्यादि। नैष दोषः, अज्ञानामात्मतिरस्करणोपपत्तेः। सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मौ कृत्वोपात्तमात्मानं हत्वाऽन्यमात्मानमुपादत्ते नवं तं चैवं हत्वाऽन्यमेवं तमपि हत्वाऽन्यमित्येवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा सर्वोऽज्ञः। यस्तु परमार्थात्माऽसावपि सर्वदाऽविद्यया हत इव विद्यमानफलाभावादिति सर्व आत्महन एवाविद्वांसः। यस्त्वितरो यथोक्तात्मदर्शी स उभयथाऽप्यात्मनाऽऽत्मानं न हिनस्ति ततो याति परां गतिं यथोक्तं फलं तस्य भवतीत्यर्थः ॥२८॥

**शां० आ०**—प्रकृतसम्यग्ज्ञानेन किमित्यपेक्षायां तत्फलोक्त्या तस्यैव स्तुत्या तद्धेतौ पुरुषं प्रवर्तयितुं श्लोकान्तरमित्याह—**यथोक्तस्येति**। यस्मादित्यस्य ततःशब्देन संबन्धः। सर्वभूतेषु तुल्यतयाऽवस्थितं पूर्वोक्तलक्षणमीश्वरं निर्विशेषं पश्यन्नात्मानमात्मना यस्मान्न हिनस्ति ततस्तस्मान्मोक्षाख्यां परां गतिं यातीति योजना। तत्र पादत्रयेण ज्ञानादज्ञानध्वस्त्या ध्वस्तिरनर्थस्योक्ता। अज्ञानमिथ्याज्ञानयोरावरणयोर्नाशे सर्वोत्कृष्टां गतिं परमपुरुषार्थं परमानन्दमनुभवति विद्वानिति चतुर्थपादार्थः। न हिनस्त्यात्मनाऽऽत्मानमिति यथाश्रुतमादाय चोदयति—**नन्विति**। न पृथिव्यामिति प्राप्तिद्वारा निषेधवन्नान्तरिक्षे न दिवीति प्राप्त्यभावाच्चायं निषेधो मुख्यो नेष्यते तथेहापि प्राप्तिं विना निषेधो न युक्तिमानित्याह—**यथेति**। अज्ञानामात्मनैवाऽऽत्महिंसासंभवाद्विदुषां तदभावोक्तिर्युक्तेति समाधत्ते—**नैष दोष इति**। संग्रहवाक्यं विवृणोति—**सर्वो हीति**। अनात्मशब्दो देहादिविषयः। अविदुषामारोपितात्महन्तृत्वं निगमयति—**इत्यात्महेति**। तथाऽपि पारमार्थिकस्याऽऽत्मनो हननाभावान्न तेषां सर्वेषामात्महन्तृत्वमित्याशङ्क्याऽऽह—**यस्त्विति**। उक्तरीत्या सर्वेषामविदुषामात्महन्तृत्वं सिद्धमित्युपसंहरति—**सर्व इति**। आत्मनैवाऽऽत्महननमविदुषां दृष्टं तदिह विद्वद्विषये शक्यं निषेद्धुमित्याह—**यस्त्वितर इति**। **उभयथाऽपीति**। आरोपानारोपाभ्यामित्यर्थः। ज्ञानादनर्थभ्रमभ्रंशे पूर्वोक्तं परमानन्दप्राप्त्या परितृप्तत्वं युक्तमित्याह—**तत इति**॥ २८॥

**आ० भा०**—॥ २८ ॥

**आ० ज०**—॥ २८ ॥

**रा० भा०**—सर्वत्र देवादिशरीरेषु तत्तच्छेषित्वेनाधारतया नियन्तृतया च स्थितमीश्वरमात्मानं देवादिविषमाकारवियुक्तं ज्ञानैकाकारतया समं पश्यन्नात्मना मनसा स्वमात्मानं न हिनस्ति रक्षति संसारान्मोचयति। ततस्तस्माज्ज्ञातृतया सर्वत्र समानाकारदर्शनात्परां गतिं याति गम्यत इति गतिः

परं गन्तव्यं यथावदवस्थितमात्मानं प्राप्नोति देवाद्याकारयुक्ततया सर्वत्र विषममात्मानं पश्यन्नात्मानं हिनस्ति भवजलधिमध्ये प्रक्षिपति ॥ २८ ॥

**अ० टी०**—पश्यन् मुक्तो भवतीत्याह—**सममिति**। सर्वत्र प्रापञ्चिकपदार्थमात्रे समवस्थितं सम्यक्प्रकारेण तथाभूतलीलार्थमवस्थितम् ईश्वरं सर्वसामर्थ्ययुक्तं समं पश्यन् आत्मना स्वलीलात्मरूपेण आत्मस्वरूपमविकृतमा-त्मानं हि निश्चयेन न हिनस्ति अन्यथा न प्राप्नोति, यथार्थरूपेण ज्ञात्वा प्रपद्यते। ततः पराम् उत्कृष्टां वैकुण्ठाख्यां गतिं याति। हीति युक्तत्वम् अन्यथाप्रपत्तेर्निषिद्धत्वात्। अत एव 'यो ऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥ किं तेन न कृतं पापं चौरेणाऽऽत्मापहारिणा'इति संपठ्यते ॥ २८ ॥

**नी० टी०**—दर्शनफलमाह—**सममिति**। स्वदेहे इव सर्वत्र देहमात्रे समवस्थितं सम्यगवस्थितमीश्वरं सम समतया पश्यन् हि यतः स सर्वाभेददर्शी आत्मना देहादिना आत्मानं ईश्वरं न हिनस्ति नानायोनिसंकटेषु पातनेन न पीडयति किंतु ततः परां गतिं मोक्षं याति यद्वा ऐकात्म्यदर्शित्वात्स्वात्मानमिवान्यमपि न हिनस्ति सर्वत्र दयालुर्भवतीति भावः। ततश्च परां गतिं याति ॥ २८ ॥

## प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ॥
## यः पश्यति तथाऽऽत्मानमकर्त्तारं स पश्यति ॥ २९ ॥

**शां० भा०**—सर्वभूतस्थमीशं समं पश्यन्न हिनस्त्यात्मनाऽऽत्मानमित्युक्तं तदनुपपन्नं स्वगुणकर्मवैलक्षण्यभेदभिन्नेष्वात्मस्वित्येतदाशङ्क्याऽऽह—प्रकृत्या प्रकृतिर्भगवतो माया त्रिगुणात्मिका "मायां तु प्रकृतिं विद्यात्"इति मन्त्रवर्णात्तया प्रकृत्यैव च नान्येन महदादिकार्यकारणाकारपरिणतया कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैर्यः पश्यत्युपलभते तथाऽऽत्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिविवर्जितं पश्यति स परमार्थदर्शीत्यभिप्रायः। निर्गुणस्याकर्तुर्निर्विशेषस्याऽऽकाशस्येव भेदे प्रमाणानुपपत्तिरित्यर्थः ॥ २९ ॥

**शां० व्या०**—श्लोकान्तरं शङ्कोत्तरत्वेनावतारयितुमुक्तमनुवदति—**सर्वेति**। प्रतिदेहं धर्माधर्मादिमत्त्वेनाऽऽत्मनो भेदभानान्न सम्यग्दर्शनमिति शङ्कते—**तदिति**। स्वगुणैः सुखदुःखादिभिः स्वकर्मभिश्च धर्माधर्माख्यैर्वैलक्षण्यात्प्रतिदेहं भेदे तद्विशिष्टेष्वात्मसु कथं साम्येन दर्शनमित्येतदाशङ्क्य परिहरतीत्याह—**एतदिति**। प्रकृतिशब्दस्य स्वभाववाचित्वं व्यावर्तयति—**प्रकृतिरिति**। मायाशब्दस्य संवित्पर्यायत्वं प्रत्याह—**त्रिगुणेति**। उक्ता परस्य शक्तिर्मायेत्यत्र श्रुतिसंमतिमाह—**मायां त्विति**॥ अन्येन केनचित्क्रियमाणानि न भवन्ति कर्माणीत्येवकारार्थमाह—**नान्येनेति**। किं तदन्यन्निषेध्यमित्युक्ते सांख्याभिप्रेता प्रधानाख्या प्रकृतिरित्याह—**महदादीति**। सर्वप्रकारत्वं काम्यत्वनिषिद्धत्वादिना प्रकारबाहुल्यमात्मानमुक्तविशेषणं यः पश्यतीति पूर्वेण संबन्धः। स पश्यतीत्ययुक्तं पुनरुक्तेरित्याशङ्क्याऽऽह—**स परमार्थेति**। आत्मनां प्रतिदेहं भिन्नत्वे तेषु समदर्शनमयुक्तमित्युक्तस्य कः समाधिरित्याशङ्क्याऽऽह—**निर्गुणस्येति** ॥ २९ ॥

**आ० भा०**—आत्मानं चाकर्त्तारं पश्यति स पश्यति ॥ २९ ॥

**आ० ज०**—प्रकृत्यैव चेत्यत्र यः प्रकृत्यैव च कर्माणि क्रियमाणानि पश्यति स आत्मानमकर्तारं पश्यतीति कश्चिदन्वयमाह। तदसत्। तथाशब्दवैयर्थ्यापत्तेरिति भावेनान्यथाह—**आत्मानं चेति**। स पश्यति परमेश्वरम् ॥ २९ ॥

**रा० भा०**—सर्वाणि कर्माणि 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते' इति पूर्वोक्तरीत्या प्रकृत्या क्रियमाणानीति यः पश्यति तथात्मानमकर्त्तारं ज्ञानाकारं च यः पश्यति तस्य प्रकृतिसंयोगस्त

दधिष्ठानं तज्जन्यसुखदुःखानुभवश्च कर्मरूपाज्ञानकृत इति च यः पश्यति स आत्मानं यथावदवस्थितं पश्यति ॥ २९ ॥

अ० टी०—ननु सर्वरूपेण यदि सर्वत्र स एवास्ति तदा कथं न सर्वे तथा पश्यन्तीत्याशङ्क्याह—**प्रकृत्यैवेति**। प्रकृत्या लीलोपयोगिन्यैव क्रियमाणानि कर्माणि यः पश्यति चकारेण कार्यमाणानि, तथा आत्मानं जीवम् अकर्तारं तदिच्छाभावे सर्वकरणाऽशक्तं यः पश्यति स पश्यति परमेश्वरमिति शेषः। अथवा स एव पश्यति अन्येत्वन्धा एवेति भावः ॥ २९ ॥

नी० टी०—ननु विषमस्वभावानि भूतानि कः समबुद्ध्या पश्यत्याग्निमिव शीतबुद्ध्येत्याशंक्याह—**प्रकृत्यैवेति**। सर्वशः सर्वप्रकारेण कर्माणि वाङ्मनःकायैरारब्धानि प्रकृत्यैव क्रियमाणानीति यः पश्यति तथा आत्मानं चाकर्तारं यः पश्यति पूर्वोक्तरीत्या स एव सर्वत्र समं पश्यतीति पूर्वेणान्वयः ॥ २९ ॥

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

शां० भा०—पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयति—यदा यस्मिन्काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वमेकस्थमेकस्मिन्नात्मनि स्थितमेकस्थमनुपश्यति शास्त्राचार्योपदेशतो मत्त्वाऽऽत्मप्रत्यक्षत्वेन पश्यत्यात्मैवेदं सर्वमिति । तत एव च तस्मादेव च विस्तारमुत्पत्तिं विकाशमात्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमित्येवमादिप्रकारैर्विस्तारं यदा पश्यति ब्रह्म संपद्यते ब्रह्मैव भवति तदा तस्मिन्काल इत्यर्थः ॥ ३० ॥

शां० आ०—प्रकृतेर्विकाराणां च सांख्यवत्पुरुषादन्यत्वप्रसक्तौ प्रत्याह—**पुनरपीति**। उपदेशजनितं प्रत्यक्षदर्शनमनुवदति—**आत्मैवेति**। भूतानां विकाराणां नानात्वं प्रकृत्या सहाऽऽत्ममात्रतया प्रलीनं पश्यति न हि भूतपृथक्त्वं सत्यां प्रकृतौ केवल परस्मिन्विलापयितुं शक्यत इत्यर्थः। परिपूर्णादात्मन एव प्रकृत्यादेर्विशेषान्तस्य स्वरूपलाभमुपलभ्य तन्मात्रतां पश्यतीत्याह—**तत एवेति**। उक्तमेव विस्तारं श्रुत्यवष्टम्भेन स्पष्टयति—**आत्मत इति**। ब्रह्मसंपत्तिर्नाम पूर्णत्वेनाभिव्यक्तिरपूर्णत्वहेतोः सर्वस्याऽऽत्मसात्कृतत्वादित्याह—**ब्रह्मैवेति**। ज्ञानसमानकालैव मुक्तिरिति सूचयति—**तदेति** ॥ ३० ॥

आ० भा०—एकस्थम् एकस्मिन्विष्णौ स्थितम् । तत एव च विष्णोर्विस्तारम् ॥ ३० ॥

आ० ज०—एकस्थमित्यस्यैकस्थात्मकइति व्याख्यानं सर्वप्रमाणविरुद्धमिति भावेनाह—**एकस्थमिति**। तत एव च विस्तारमित्यस्य स्वस्मादेव विश्वस्य विस्तारमिति व्याख्यानमसदिति भावेनाह—**तत एवेति**। विस्तारमुत्पत्तिम् ॥ ३० ॥

रा० भा०—प्रकृतिपुरुषतत्त्वद्वयात्मकेषु देवादिषु सर्वेषु भूतेषु सत्सु तेषां देवत्वमनुष्यत्वह्रस्वत्वदीर्घत्वादिपृथग्भावमेकस्थम् एकतत्त्वस्थं प्रकृतिस्थं यदा पश्यति नात्मस्थं तत एव प्रकृतित एवोत्तरोत्तरपुत्रपौत्रादिकभेदविस्तारं च यदा पश्यति तदैव ब्रह्म संपद्यते अनवच्छिन्नज्ञानैकाकारमात्मानं प्राप्नोतीत्यर्थः ॥ ३० ॥

**अ० टी०**—एवमेव सर्वेषां लये सूक्ष्मत्वमुत्पत्तौ विस्तरं च यदा ब्रह्मणः सकाशादेव तद्रूपं पश्यति तदा ब्रह्मत्वमाप्नोतीत्याह—**यदेति**। यदा भूतानां स्थावरजङ्गमानां पृथग्भावं ब्रह्मणो भेदं विचित्रानेकरूपात्मकम् एकस्थं संहारेच्छात्मकरमणात्मकब्रह्मस्वरूपस्थं प्रलये अनु पश्यति च पुनः। तत एव प्रपञ्चरमणेच्छुब्रह्मण एव सृष्टिसमये विस्तारम् अनुपश्यति, तदा ब्रह्म संपद्यते ब्रह्मत्वमाप्नोतीत्यर्थः॥ ३०॥

**नी० टी०**—ननु कथं प्रकृतेरेव कर्तृत्वं न त्वात्मन इत्याशंक्याह—**यदेति**। भूतानां वियदादीनां जरायुजादीनां च पृथग्भावं नानाभावेनावस्थानं परिदृश्यमानमिदं यदा एकस्थं एकस्मिन्नात्मनि स्थितं रज्ज्वां सर्पादिवत् कनके वा कुंडलादिवत् विलीनं शास्त्राचार्योपदेशमनुपश्यति। तत एवैकस्मात् विस्तारं च भूतपृथग्भावस्य व्युत्थानावस्थामनु स्वप्नादिवत् पश्यति तदा ब्रह्म संपद्यते ब्रह्मैव भवति। अयं भावः कर्तृत्वं हि क्रियावत्त्वं क्रिया च परिस्पंदः स च परिच्छिन्नस्य पृथग्भूतस्य प्राकृतस्य बुद्ध्यादेरेव संभवति नतु व्यापकस्य सर्वभूतपृथग्भावग्रसिष्णोरात्मन इति॥ ३०॥

अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः॥
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते॥ ३१॥

**शां० भा०**—एकस्याऽऽत्मनः सर्वदेहात्मत्वे तद्दोषसंबन्धे प्राप्त इदमुच्यते—अनादित्वादनादेर्भावोऽनादित्वमादिः कारणं तद्यस्य नास्ति तदनादि। यद्ध्यादिमत्तत्स्वेनाऽऽत्मना व्येत्ययं त्वनादित्वान्निरवयव इति कृत्वा न व्येति। तथा निर्गुणत्वात्सगुणो हि गुणव्ययाद्व्येत्ययं तु निर्गुणत्वान्न व्येतीति परमात्माऽयमव्ययो नास्य व्ययो विद्यत इत्यव्ययः। यत एवमतः शरीरस्थोऽपि शरीरेष्वात्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते तथाऽपि न करोति। तदकरणादेव तत्फलेन न लिप्यते। यो हि कर्ता स कर्मफलेन लिप्यतेऽयं त्वकर्ताऽतो न फलेन लिप्यत इत्यर्थः। कः पुनर्देहेषु करोति लिप्यते च यदि तावदन्यः परमात्मनो देही करोति लिप्यते च तत इदमनुपपन्नमुक्तं क्षेत्रज्ञेश्वरैकत्वं क्षेत्रज्ञं चापि मां विद्धीत्यादि। अथ नास्तीश्वरादन्यो देही कः करोति लिप्यते चेति वाच्यं परो वा नास्तीति। सर्वथा दुर्विज्ञेयं दुर्वाच्यं चेति भगवत्प्रोक्तमौपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च। तत्रायं परिहारो भगवता स्वेनैवोक्तः 'स्वभावस्तु प्रवर्तते' इति। अविद्यामात्रस्वभावो हि करोति लिप्यत इति व्यवहारो भवति न तु परमार्थत एकस्मिन्परमात्मनि तदस्ति। अत एतस्मिन्परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां कर्माधिकारो नास्तीति तत्र तत्र दर्शितं भगवता॥ ३१॥

**आं० आ०**—परिपूर्णत्वेन सर्वात्मत्वे प्राप्तमात्मनो देहादिगतेन कर्तृत्वादिना तद्वत्त्वं दृष्टं हि पवित्रस्यापि पञ्चगव्यादेरपवित्रसंसर्गात्तद्दोषेण दुष्टत्वमित्याशङ्कामनूद्योत्तरत्वेन श्लोकमवतारयति—**एकस्येति**। अनादित्वमेव साधयति—**आदिरिति**। तथाऽपि किं स्यादित्याशङ्क्य कार्यत्वकृतव्ययाभावः सिध्यतीत्याह—**यद्धीति**। तथाऽपि गुणापकर्षद्वारको व्ययो भविष्यति नेत्याह—**तथेति**। निरवयवत्वादेवावयवद्वारकस्य निर्गुणत्वाद्गुणद्वारकस्य च व्ययस्याभावेऽपि स्वभावतो व्ययः स्यादित्याशङ्क्याऽऽह—**परमात्मेति**। परमात्मनः स्वतः परतो वा व्ययाभावे फलितमाह—**यत इति**। स्वमहिमप्रतिष्ठस्य कथं शरीरस्थत्वं तत्राऽऽह—**शरीरेष्विति**। सर्वगतत्वेन सर्वात्मत्वेन च देहादौ स्थितोऽपि स्वतो देहाद्यात्मना वा न करोति कूटस्थत्वाद्देहादेश्च कल्पितत्वादित्यर्थः। कर्तृत्वाभावेऽपि भोक्तृत्वं स्यादित्याशङ्क्याऽऽह—**तदकरणादिति**। तदेवोपपादयति—

**यो हीति** । परस्य कर्तृत्वादेरभावे कस्य तदिष्टमिति पृच्छति—**कः पुनरिति** । परस्मादन्यस्य कस्यचिज्जीवस्य कर्तृत्वादीत्याशङ्कामनुवदति—**यदीति** । तस्मिन्पक्षे प्रक्रमभङ्गः स्यादिति दूषयति—**तत इति** । ईश्वरातिरिक्तजीवानङ्गीकारान्नोपक्रमविरोधोऽस्तीति शङ्कते—**अथेति** । तर्हि प्रतीतकर्तृत्वादेरधिकरणं वक्तव्यमिति पूर्ववाद्याह—**क इति** । परस्यैव कर्तृत्वाद्याधारत्वान्नास्ति वक्तव्यमित्याशङ्क्याऽऽह—**परो वेति** । नास्तीति वाच्यामिति पूर्वेण संबन्धः । न हि कर्तृत्वादिभाक्त्वे परस्यास्मदादिवदीश्वरत्वमिति भावः । परस्यान्यस्य वा कर्तृत्वादावविशिष्टे शरीरस्थोऽपीत्यादि श्रुतिमूलमपि ज्ञातुं वक्तुं चाशक्यत्वात्त्याज्यमेवेति परीक्षकसंमत्योपसंहरति—**सर्वथेति** । परस्य वस्तुतोऽकर्तुरभोक्तुश्चाविद्यया तदारोपादादेयमेव भगवन्मतमिति परिहरति—**तत्रेति** । तमेव परिहारं प्रपञ्चयति—**अविद्येति** । व्यावहारिके कर्तृत्वादाविष्टे पारमार्थिकमेव किं नेष्यते तत्राऽऽह—**न त्विति** । वास्तवकर्तृत्वाद्यभावे लिङ्गमुपन्यस्यति—**अत इति** ॥ ३१ ॥

**आ० भा०—न च व्ययादिस्तस्येत्याह—अनादित्वादिति । सादि हि प्रायो व्ययि गुणात्मकं च । न करोतीत्यादेरर्थ उक्तः पुरस्तात् । न लौकिकक्रियादिस्तस्य अतो न प्रज्ञामित्यादिवदिति ॥ ३१ ॥**

**आ० ज०**—अव्यय इत्यनुवादेन लेपाभावमात्रं विधीयतइत्यन्यथाप्रतीतिनिरासार्थमाह—**नचेति** । एतेनाव्ययत्वमपि साध्यमप्राप्तत्वादित्युक्तं भवति। तस्य विष्णोः अनेन जीवविशेषणमेतत् तस्य प्राप्तिसद्भावेन प्रतिषेधोपपत्तेरिति निरस्तम् । विष्णोरपि शरीरस्थोऽपीति प्रतिरुक्तत्वात् अनादित्वनिर्गुणत्वयोरव्ययत्वे हेतुत्वमुपपादयितुं व्याप्तिमाह—**सादीति** । यद्व्ययि तत्प्रायः सादि गुणात्मकं चेति योजना । प्रागभावे व्यभिचारपरिहाराय प्राय इत्युक्तम् । सत्साद्येव गुणात्मकमेवेत्यवधारणेन यथास्थितयोजना वा न करोति निर्गुणत्वादिति ईश्वरस्य क्रियागुणाभावः प्रतीयत इत्यत आह—**नकरोतीति** । पुरस्तादुक्तमेव स्मारयति—**नेति** । इत्यादिवदक्रियत्वादिकं व्याख्येयमितिशेषः । यद्यप्यव्ययत्वमप्यत्र साध्यं तथापि तल्लोकतो ज्ञातुं शक्यतइति लेपाभावमात्रं यथा सर्वगतमित्युपपद्यते ॥ ३१ ॥

**रा० भा०—अयं परमात्मा देहान्निकृष्टस्वभावेन निरूपितः शरीरस्थोऽपि अनादित्वादनारभ्यत्वादव्ययः व्ययरहितः निर्गुणत्वात्सत्वादिगुणरहितत्वान्न करोति न लिप्यते देहभावैर्न लिप्यते न बध्यते ॥ ३१ ॥**

**अ० टी०**—ननु यथा ब्रह्मांशस्यादिजीवस्य देहसंबन्धात्कर्मलेपस्तेनैवाज्ञानं तन्नाशश्च प्रेरकात्मसंबंधात्तस्यैव जीवसंबन्धाल्लेपे सति कथं समदर्शनमित्याशङ्क्याह—**अनादित्वादिति** । यस्यैवोत्पत्तिस्तस्यैवान्यसंबन्धेन नाशः । स च अनादिर्नत्वाविद्यकजीवभाववदुत्पत्तिरतएव तत्संबन्धाऽभावार्थं साक्षित्वं पूर्वं निरूपितम् । तस्मात् गुणसंबन्धिन एव तन्नाशे नाशः सच निर्गुणस्तस्मादयं परमात्मा अव्ययः परसंबन्धादिनाशशून्यः । अतः शरीरस्थोऽपि कर्माणि न करोति अत एव न लिप्यते ॥ ३१ ॥

**नी० टी०**—नन्वात्मनो विभुत्वेन रूपेण कर्तृत्वं मा स्वीकारि देहाद्यवच्छिन्नेन तु रूपेण तद्वक्तव्यमन्यथाऽनुभवविरोधादित्याशंक्याह—**अनादित्वादिति** । अयं सर्वेषां प्राणिनां नित्यापरोक्षः । परमो देहादिभ्योऽपरमेभ्य आत्मभ्योऽन्यः कोशपंचकातीत आत्मा परमात्मा । अव्ययः न व्येति परिच्छिद्यते देशतः कालतो वस्तुतश्चेत्यव्ययः । अव्ययत्वे हेतुः अनादित्वादिति यद्धि आदिमदाकाशादि तद्व्येति न त्वयं व्येति अनादित्वात् । नन्वनादिभावस्यानंत्यानियमेनात्मनः कालतः परिच्छेदो माऽस्तु । तथा देशतः परिच्छिन्नस्य नाशावश्यंभावादनादित्वायोगाच्च देशतोऽपि परिच्छेदो ब्रह्मणो माऽस्तु । ननु परमाणुवद्भविष्यतीति चेन्न दशदिगवच्छेद्यप्रदेशभेदवतो द्रव्यस्य निरवयवत्वरूपाणुत्वासिद्धेः । नहि परमाणोः पूर्वदिगवच्छिन्नो भागः पश्चिमया व्यवच्छेत्तुं शक्यते अनुभवविरोधात् । देशतः परिच्छेदाभावादेव सजातीयविजातीयवस्तुसद्भावकृतः परिच्छेदोऽपि मास्तु तथापि

विचित्रशक्तियुक्तस्याभिनवप्रपंचरचनापटीयसः परस्य सर्वेश्वरत्वसर्वज्ञत्वादिगुणयुक्तस्य स्वगतभेदोवश्यंभावी स्वशक्तिमायावच्छिन्नेन रूपेण जगत्कर्तृत्वं देहावच्छेदेनाग्निहोत्रादिकर्तृत्वं चावश्यं वक्तव्यमित्याशंक्याह—**निर्गुणत्वादिति**। यो हि गुणवानाकाशादिः स संयोगं विभागं वोपाधिं प्राप्य स्वगुणं शब्दमाविष्करोति नतु स्वस्मिन्नसंतं स्पर्शं केनचिदपि उपाधिना दर्शयितुमीष्टे। एवं आत्मा सर्वगुणहीनः सत्यप्यवच्छेदलाभे कर्तृत्वादिकं गुणमाविष्कर्तुं न समर्थ इति। फलितमाह शरीरस्थोऽपीति स्पष्टार्थमेतत् ॥ ३१ ॥

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥**
**सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३२ ॥**

**शां० भा०—**किमिव न करोति न लिप्यत इत्यत्र दृष्टान्तमाह—**यथा सर्वगतं** व्याप्यपि सत्**सौक्ष्म्यात्**सूक्ष्मभावा**दाकाशं** खं **नोपलिप्यते** न संबध्यते **सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३२ ॥**

**शां० आ०—**सूक्ष्मभावादप्रतिहतस्वभावत्वादित्यर्थः। न संबध्यते पङ्कादिभिरिति शेषः ॥ ३२ ॥

**आ० भा०—**॥ ३२ ॥

**आ० ज०—** ॥ ३२ ॥

**रा० भा०—**यद्यपि निर्गुणत्वान्न करोति नित्यसंयुक्तः देहस्वभावैः कथं न लिप्यते इत्यत्राह। यथाकाशं सर्वगतमपि सर्वैर्वस्तुभिः संयुक्तमपि सौक्ष्म्यात्सर्ववस्तुस्वभावैर्न लिप्यते तथात्मातिसौक्ष्म्यात् सर्वत्र देवमनुष्यादौ देहेऽवस्थितोऽपि तत्तद्देहस्वभावैर्न लिप्यते ॥ ३२ ॥

**अ० टी०—**एतदर्थं दृष्टान्तमाह—**यथेति**। यथा सर्वगतं सर्वत्र जडजीवान्तर्गतमाकाशं सौक्ष्म्यात्स्वरूपाभावात् संगरहितं तेन सह नोपलिप्यते तथा सर्वत्र उच्चनीचोऽपि देहावस्थितोऽप्यात्मा न लिप्यते ॥ ३२ ॥

**नी० टी०—**निर्गुणत्वान्न करोतीति सिद्धं असंगत्वान्नोपलिप्यत इत्याह—**यथेति**। यथा आकाशो धूमादिना न लिप्यते सौक्ष्म्यादसंगस्वभावत्वात्। एवमात्मा पुण्यपापादिना नोपलिप्यत इत्यर्थः ॥ ३२ ॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

**शां० भा०—**किंच—**यथा प्रकाशयति** अवभासयति **एकः कृत्स्नं लोकमिमं रविः** सविताऽऽदित्यस्**तथा** तद्वन्महाभूतादिधृत्यन्तं **क्षेत्रमेकः** सन्**प्रकाशयति** कः **क्षेत्री** परमात्मेत्यर्थः। रविदृष्टान्तोऽत्राऽऽत्मन उभयार्थोऽपि भवति रविवत्सर्वक्षेत्रेष्वेक आत्माऽलेपकश्चेति ॥ ३३ ॥

**शां० आ०—**न करोति न लिप्यते चेत्यत्र द्रष्टृत्वेन दृश्यधर्मशून्यत्वं हेतुमाह—**किंचेति**। दृष्टान्तेन विवक्षितमर्थं दर्शयति—**रवीति**। उभयविधमर्थमेव स्फुटयति—**रविवदिति** ॥ ३३ ॥

आ० भा०—॥ ३३ ॥

आ० ज०—॥ ३३ ॥

रा० भा०—यथैक आदित्यः स्वया प्रभया कृत्स्नमिमं लोकं प्रकाशयति तथा क्षेत्रमपि क्षेत्री ममेदं क्षेत्रमीदृशमिति कृत्स्नं बहिरन्त आपादतलमस्तकं स्वकीयेन ज्ञानेन प्रकाशयति अतः प्रकाश्यालोकात् प्रकाशकादित्यवद्वेदितृत्वेन वेद्यभूतादस्मात् क्षेत्रादत्यन्तविलक्षणोऽयमुक्तलक्षणात्मेत्यर्थः ॥ ३३ ॥

अ० टी०—नन्वलेपे देहादिगुणप्रकाशकत्वं कथमित्याशङ्क्याह—यथेति । यथैको रविर्मदंशात्मकत्वात् कृत्स्नं संपूर्णमिमं लोकं प्रकाशयति, तथा मदंशकत्वादेव क्षेत्री क्षेत्रं कृत्स्नं संपूर्णं प्रकाशयति । रवेर्लोचनात्मकत्वात्तद्दृष्टान्ते मत्कृपादृष्ट्या क्रीडोपयोग्यत्वायाऽऽत्मापि क्षेत्रं प्रकाशयतीतिज्ञापितम् । भारतेतिसंबोधनेन सैन्यमध्ये स्थितो मदंशत्वात्तद्दोषैस्त्वं यथा न लिप्यस इतिज्ञापितम् ॥ ३३ ॥

नी० टी०—न करोति न लिप्यत इति द्वयमपि दृष्टांतांतरेण प्रतिपादयति—यथेति । यथा सूर्यः स्वसत्तामात्रेण विश्वं प्रकाशयति नतु व्यापाराविष्टतया कुविंद इव पटं । यथा चैष प्रकाश्यधर्मैर्दुर्गंधादिभिर्नलिप्यते एवमयं क्षेत्री क्षेत्रज्ञः सूर्यवदेक एव सन्ननेकधाभूतं क्षेत्रं महाभूतानीत्यादिना चतुर्विंशतितत्त्वात्मकमिच्छाद्वेषादिविकारयुक्तमुक्तं तत्स्वसत्तामात्रेण प्रकाशयति हेभारत ! नतु व्यापाराविष्टतया तत्संपादयति । तद्धर्मैर्वा पुण्यपापादिभिर्न लिप्यते । सूर्यदृष्टांतेनैकत्वमकर्तृत्वप्रयुक्तमलेपत्वं च दर्शितं । तथा च श्रुतयः । "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुरूपोऽनुगच्छन् ॥ उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥ सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ॥ एकस्तथा सर्वभूतांतरात्मा न लिप्यते लोकदुःखेन बाह्यः" इति ॥ ३३ ॥

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगोनाम त्रयोदशोऽध्यायः ॥ १३ ॥

शां० भा०—समस्ताध्यायार्थोपसंहारार्थोऽयं श्लोकः—क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोरेवं यथाप्रदर्शितप्रकारेणान्तरमितरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्योपदेशजनितमात्मप्रत्यायिकं ज्ञानं चक्षुस्तेन ज्ञानचक्षुषा भूतप्रकृतिमोक्षं च भूतानां प्रकृतिरविद्यालक्षणाऽव्यक्ताख्या तस्या भूतप्रकृतेर्मोक्षणमभावगमनं च ये विदुर्विजानन्ति यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म न पुनर्देहमाददत इत्यर्थः ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्य
श्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये क्षेत्रक्षेत्रज्ञयोगो
नाम त्रयोदशोऽध्यायः ॥ १३ ॥

**शां० आ०**—अध्यायार्थं सफलमुपसंहरति—**समस्तेति**। विशेषं कौटस्थ्यपरिणामादिलक्षणम्। तदेवममानित्वादिनिष्ठतया क्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतः सर्वानर्थनिवृत्त्या परिपूर्णपरमानन्दाविर्भावलक्षणपुरुषार्थसिद्धिरिति सिद्धम् ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते
श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने त्रयोदशोऽध्यायः ॥ १३ ॥

**आ० भा०—भूतेभ्यः प्रकृतेश्च मोक्षसाधनम् अमानित्वादिकम् ॥ ३४ ॥**

**इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥**

**आ० ज०**—भूतप्रकृतिमोक्षमित्यस्य भूतानां प्रकृतिरविद्या तस्याः मोक्षमवसानलक्षणमिति व्याख्यानमसत् भूतशब्दवैयर्थ्यात् अविद्याध्वंसस्यानुक्तत्वेनैवमिति परामर्शायोगाच्चेति भावेनाह—**भूतेभ्यइति**। अनेन भूतप्रकृतीति द्वंद्वः। ततः पंचमीति योगविभागात्पंचमीतत्पुरुष इत्युक्तं भवति। भूतेभ्यः पृथिव्यादिभ्यः। ननु मोक्षो न प्रागुक्त इत्यत उक्तम्—**मोक्षसाधनमिति**। करणेघञित्यर्थः। मोक्षसाधनमपि नोक्तमित्यत आह—**अमानित्वादिकमिति**। ज्ञानसाधनमपि परंपरया मोक्षसाधनमिति भावः। मोक्षशब्दस्य नित्यसापेक्षत्वान्नासमर्थत्वम्। यद्वा भूतेभ्यः प्रकृतेश्चेतिसमासद्वयसूचनार्थं पृथगेव वाक्यम् ततो मोक्षपदव्याख्यानं पृथगेवेति ॥ ३४ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां
प्रमेयदीपिकायां त्रयोदशोऽध्यायः ॥ १३ ॥

**रा० भा०—एवमुक्तेन प्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं विशेषं विवेकविषयज्ञानाख्येन चक्षुषा ये विदुः भूतप्रकृतिमोक्षं च ते परं यान्ति निर्मुक्तबन्धमात्मानं प्राप्नुवन्ति एवमुक्तेन प्रकारेण मोक्ष्यतेऽनेनेति मोक्षः अमानित्वादिकमुक्तं मोक्षसाधनमित्यर्थः। क्षेत्रक्षेत्रज्ञयोर्विवेकविषयेण उक्तेन ज्ञानेन तयोर्विवेकं विदित्वा भूतप्रकृतिमोक्षोपायममानित्वादिकं चावगम्यते आचरन्ति ते निर्मुक्तबन्धाः स्वेन रूपेणावस्थितमनवच्छिन्नलक्षणमात्मानं प्राप्नुवन्तीत्यर्थः ॥ ३४ ॥**

**इति श्रीमद्भगवद्रामानुजाचार्यविरचिते गीताभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥**

**अ० टी०**—उपसंहरति—**क्षेत्रक्षेत्रज्ञयोरिति**। एवं पूर्वोक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं लौकिकस्थितः ज्ञानचक्षुषा ये विदुः। च पुनः भूतानां संबन्धिनी या प्रकृतिः संसारोपयोगिनी ततो मोक्षसाधनं ध्यानाद्यात्मकं ये विदुस्ते परं मोक्षं यान्ति प्राप्नुवन्तीत्यर्थः ॥ ३४ ॥

'क्षेत्रक्षेत्रज्ञयोरेवं रूपमुक्त्वेश्वरः स्वयम् ॥ मोहं निवारयामास फाल्गुनस्य नमामि तम् ॥'
इति श्रीभगवद्गीताऽमृततरङ्गिण्यां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

**नी० टी०**—अध्यायार्थं कृत्स्नमुपसंहरति—**क्षेत्रेति**। क्षेत्रक्षेत्रज्ञयोः पूर्वोक्तयोरेवमुक्तरीत्या अंतरं भेदं जडत्वाजडत्वकर्तृत्वाकर्तृत्वविकारित्वाविकारित्वकृतं वैलक्षण्यं ज्ञानचक्षुः शास्त्राचार्योपदेशात्मप्रत्ययजनितेन ज्ञानचक्षुषा ये विदुस्ते परं मोक्षं यांति प्राप्नुवंति। किं सांख्यानामिवास्माकमपि गुणपुरुषांतरज्ञानादेव कैवल्यमुच्यते इत्याशंक्याह—**भूतप्रकृतिमोक्षमिति**। भूतानां वियदादीनां प्रकृतिरुपादानं त्रिगुणात्मिका अविद्या तस्या विद्यया मोक्षं निरन्वयोच्छेदं च ये विदुस्त एव परं यांति नतु क्षेत्रक्षेत्रज्ञयोरंतरमात्रविद इत्यर्थः। यद्येका सत्या विभ्वी

च प्रकृतिस्तर्हि विभूनामलिप्तदृशां बहूनां पुरुषाणां मुक्तानामपि तद्दर्शनमपरिहार्यं तथा च तेषामपि बंधप्रसक्तिः। यदि तु मिथ्या तर्हि यस्यैवात्मसाक्षात्कारो जातस्तद्दृष्ट्या सर्वथैव रज्जूरगवद्बाधिता कालत्रयेऽपि नास्ति। इतरेषां त्वनादिरनंतास्त्येवेति वक्तुं शक्यं। तस्मान्न प्रकृतिपुरुषांतरज्ञानमात्रात्कैवल्यं किंतु प्रकृतिबाधेन पुरुषज्ञानात् सर्पबाधेन रज्जुदर्शनात् भयनिवृत्तिवद्बंधनिवृत्तिरिति सिद्धम्॥ ३४॥

इति भीष्मपर्वणि नैलकंठीये भारतभावदीपे त्रयोदशोऽध्यायः॥ १३॥

( श्लोकानामादितः समष्ट्यङ्काः—४९४ )

## ॥ अथ चतुर्दशोऽध्यायः॥ १४॥

**श्रीभगवानुवाच—परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्॥**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः॥ १॥**

**शां० भा०—सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इत्युक्तं तत्कथमिति तत्प्रदर्शनार्थं 'परं भूयः' इत्यादिरध्याय आरभ्यते, अथवेश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं न तु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणमित्युक्तं कस्मिन्गुणे कथं सङ्गः के वा गुणाः कथं वा ते बध्नन्तीति गुणेभ्यश्च मोक्षणं कथं स्यान्मुक्तस्य च लक्षणं वक्तव्यमित्येवमर्थं च—परं ज्ञानमिति व्यवहितेन संबन्धः। भूयः पुनः पूर्वेषु सर्वेष्वध्यायेष्वसकृदुक्तमपि प्रवक्ष्यामि। तच्च परं परवस्तुविषयत्वात्, किं तत्, ज्ञानं सर्वेषां ज्ञानानामुत्तममुत्तमफलत्वात्। ज्ञानानामिति नामानित्वादीनां किं तर्हि यज्ञादिज्ञेयवस्तुविषयाणामिति। तानि न मोक्षायेदं तु मोक्षायेति परोत्तमशब्दाभ्या स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थम्। यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनो मननशीलाः सर्वे परां सिद्धिं मोक्षाख्यामितोऽस्माद्देहबन्धनादूर्ध्वं गताः प्राप्ताः॥ १॥**

**शां० आ०**—क्षेत्रक्षेत्रज्ञसंयोगस्य सर्वोत्पत्तिनिमित्तत्वमज्ञातं ज्ञापयितुमध्यायान्तरमवतारयन्नध्याययोरुत्थाप्योत्थापकत्वरूपां संगतिमाह—**सर्वमिति**। विधान्तरेणाध्यायारम्भं सूचयति—**अथवेति**। तदेव वक्तुमुक्तमनुवदति—**ईश्वरेति**। प्रकृतिस्थत्वं पुरुषस्य प्रकृत्या सहैक्याध्यासस्तस्यैव गुणेषु शब्दादिविषयेषु सङ्गोऽभिनिवेशः। षड्विधामाकाङ्क्षां निक्षिप्य तदुत्तरत्वेनाध्यायारम्भे पूर्ववदेव पूर्वाध्यायसंबन्धसिद्धिरित्याह—**कस्मिन्निति**। पूर्वोक्तेनार्थेनास्याध्यायस्य समुच्चयार्थश्चकारः। परमित्यस्य भाविकालार्थत्वं व्यावर्तयितुं संगतिमाह—**परमिति**। भूयःशब्दस्याधिकार्थत्वमिह नास्तीत्याह—**पुनरिति**। पुनःशब्दार्थमेव विवृणोति—**पूर्वेष्विति**। पुनरुक्तिस्तर्हीत्याशङ्क्य सूक्ष्मत्वेन दुर्बोधत्वात्पुनर्वचनमर्थवदित्याह—**तच्चेति**। विशेष्यं प्रश्नद्वारा निर्दिशति—**किं तदिति**। निर्धारणार्थां षष्ठीमादाय तस्य प्रकर्षं दर्शयति—**सर्वेषामिति**। परमुत्तममिति पुनरुक्तिमाशङ्क्य विषयफलभेदान्मैवमित्याह—**उत्तमेति**। ज्ञानं ज्ञेयमित्यादौ ज्ञानशब्देनामानित्वादीनामुक्तत्वात्तन्मध्ये च ज्ञानस्य साध्यत्वेनोत्तमत्वान्न तस्य वक्तव्यतेत्याशङ्क्याऽऽह—**ज्ञानानामिति**। नामानित्वादीनां ग्रहणमिति शेषः। इतिशब्दादूर्ध्वं पूर्ववदेव शेषो द्रष्टव्यः। यथोक्तज्ञानापेक्षया कुतस्तज्ज्ञानस्य प्रकर्षस्तत्राऽऽह—**तानीति**। स्तुतिफलमाह—**श्रोतृबुद्धीति**। ज्ञानं ज्ञात्वा ज्ञानस्य ज्ञेयत्वोपगमादनवस्थेत्याशङ्क्याऽऽह—**प्राप्येति**। मुनिशब्दस्य चतुर्थाश्रमविषयत्वं तन्मात्रादेव ज्ञानायोगात्कुतस्तेषां मुक्तिरित्याशङ्क्याऽऽह—**मननेति**। सिद्धेर्ज्ञानत्वं परामिति विशेषणाद्व्यावर्त्य मुक्तित्वमाह—**मोक्षाख्यामिति**। देहाख्यस्य बन्धनस्याध्यक्षत्वमाह—**अस्मादिति**॥ १॥

**आ० भा०—साधनकृज्ज्ञानदात्रे नमः ॥ ॐ साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति ॥ १ ॥**

**आ० ज०**—उत्तरेषां पंचानामध्यायानां प्रतिपाद्यमाह—**साधनमिति** । योगे त्विमां शृण्विति प्रतिज्ञायाषष्ठपरिसमाप्तेः कामवर्जनादीतिकर्तव्यतासहितं कर्मध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्रेतिकर्तव्यतांशमुत्तरैरध्यायैः प्रपंचयतीत्यर्थः । मम योनि-र्महद्ब्रह्म न तद्भासयते सूर्य इत्यादिनेश्वरमाहात्म्यस्यापि वचनात्कथमेतदित्यत उक्तम्—**प्राधान्येनेति** । प्राचुर्यापेक्षया संग्राहकमेतदित्यर्थः । अवांतरप्रतिपाद्यभेदादध्यायभेदः । तत्र यावत्संजायते किंचिदित्युक्तविवरणपूर्वक कारणं गुणसंगोऽस्येत्युक्तं गुणसंबंधं प्रपंच्य तदत्ययसाधनमनेनाध्यायेनोच्यते ॥ १ ॥

**रा० भा०—त्रयोदशे प्रकृतिपुरुषयोरन्योन्यसंसृष्टयोः स्वरूपयाथात्म्यं विज्ञायामानित्वादि-भिर्भगवद्भक्त्यानुगृहीतैर्बन्धान्मुच्यते इत्युक्तं तत्र बन्धहेतुः पूर्वपूर्वसत्वादिगुणमयसुखादिसङ्ग इति चाभिहितं ' कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ' इति । अथेदानीं गुणानां बन्धहेतुताप्रकारो गुणनिवर्तनप्रकारश्चोच्यते । परं पूर्वोक्तादन्यत् प्रकृतिपुरुषान्तर्गतमेव सत्त्वादिगुणविषयं ज्ञानं भूयः प्रवक्ष्यामि तच्च ज्ञानं सर्वेषां प्रकृतिपुरुषविषयज्ञानानामुत्तमं यत् ज्ञानं ज्ञात्वा सर्वे मुनयस्तन्मननशीला इतस्संसारात्परां सिद्धिं गताः ॥ १ ॥**

**अ० टी०**—श्रीकृष्णाय नमः ॥ 'कृष्णः स्वगुणसंबन्धात्प्रपञ्चस्य विचित्रताम् ॥ बोधनार्थं पाण्डवाय वर्णयामास विस्तरात् ॥ १॥' अथ स्वक्रीडार्थं विरचितसत्त्वादिगुणसंगजप्रपञ्चवैचित्र्यस्वरूपेण फलात्मकं निरूप्य वर्ण-यति । तत्र श्लोकद्वयेन फलरूपस्वरूपमाह—**परममिति** । परं भगवत्संबन्धिफलात्मकं ज्ञानं ज्ञेयसाधनं तेन भूयः पूर्वमुक्तं साधारण्येन, पुनः प्रकर्षेण ससाधनं वक्ष्यामि कथयामीत्यर्थः । भूयः प्रकर्षकथने विशेषणेन विशेषयति । कीदृशं तत् ? ज्ञानानां पूर्वोक्तज्ञेयसाधनानां मध्ये उत्तमं मुख्यमित्यर्थः । एवं कथनं प्रतिज्ञाय फलरूपत्वमाह—**यदिति** । यत् ज्ञानं ज्ञात्वा मुनयो मननशीलास्तदभ्यसनपराः सर्वे परां सिद्धिमनुभवात्मिकाम् इतः लौकिकदे-हात् गताः प्राप्ताः । सर्व इतिपदेन येषां सिद्धिर्जाता तेषामनेनैवेतिज्ञापितम् । ज्ञानानामुत्तममनेन विशेषणेन ज्ञानेष्वेवोत्तमत्वं नतु भक्तित इति व्यञ्जितम् ॥ १ ॥

**नी० टी०**—पूर्वाध्यायांते भूतप्रकृतिमोक्षं च ये विदुस्ते परं यांतीत्युक्तं तत्र का वा भूतप्रकृतिः किमा-श्रयेण तस्या भूतजनकत्वं कथं वा बंधकत्वं कथं च ततो मोक्षः किंच मुक्तानां लक्षणमित्येतदर्थजातं विवरीतुं चतुर्दशोऽध्याय आरभ्यते । तत्र रुच्युत्पादनार्थं परं ज्ञानं स्तुवन् श्रीभगवानुवाच—**परमिति** । परं सर्वोत्कृष्टं ब्रह्मविषयत्वात् ज्ञानं भूयः पुनः असकृदुक्तमपि प्रवक्ष्यामि । किं तत्स्वरूपमाह—ज्ञानानाममानित्वादिनां यज्ञादीनां ज्ञानसाधनानां मध्ये यदुत्तमं मोक्षफलत्वादंतरंग तदेव तत् । अह घटं जानामीत्यत्राहमर्थस्य घटाकारवृत्तेर्घटस्य च ज्ञानमस्तीति विषयभेदात् ज्ञानत्रयमस्ति । तत्राद्यद्वयं नांतरीयकं यच्च उत्तम चरमं घटप्रकाशफलरूपं ज्ञानं तदेव परं ब्रह्मेत्यर्थः । यथोक्तं वार्तिककारैः । 'परागर्थप्रमेयेषु या फलत्वेन संमता ॥ संवित्सैवेह ज्ञेयोऽर्थो वेदांतोक्तिप्रमाणतः' इति । यत् ज्ञानं ज्ञात्वा वेदांतवाक्यजन्यया धीवृत्त्या अपरोक्षीकृत्य परां सिद्धिं मोक्षमितः संसारात् संसारं विहाय गताः प्राप्ताः ॥ १ ॥

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

**शां० भा०—**अस्याश्च सिद्धेरैकान्तिकत्वं दर्शयति—इदं ज्ञानं यथोक्तमुपाश्रित्य ज्ञानसाधनमनुष्ठायेत्येतत्। मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थो न तु समानधर्मतां साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमाद्गीताशास्त्रे। फलवादश्चायं स्तुत्यर्थमुच्यते। सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते नोत्पद्यन्ते प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां नाऽऽपद्यन्ते न च्यवन्तीत्यर्थः ॥ २ ॥

**शां० आ०—**ज्ञानफलस्य कर्मफलवैलक्षण्यमाह—**अस्याश्चेति**। कथं ज्ञानाश्रयणं तद्धेतुश्रवणादिसामग्रीसंपत्तिद्वारेत्याह—**ज्ञानेति**। साधर्म्ये गोगवययोरिव विद्वदीश्वरयोरपि भेदः स्यादित्याशङ्क्याऽऽह—**मत्स्वरूपतामिति**। साधर्म्यस्य मुख्यत्वे भेदध्रौव्याद्गीताशास्त्रविरोधः स्यादित्याह—**न त्विति**। ज्ञानस्तुतये तत्फलस्य विवक्षितत्वाच्च नात्रसारूप्यमिष्टमित्याह—**फलेति**। सारूप्ये धीफलं हित्वा ध्यानफलमप्रस्तुतं प्रसज्येतेत्यर्थः। ईश्वरात्मतां गतानामेवावान्तरसर्गादौ जन्माद्यभावेऽपि महासर्गादौ तद्भविष्यतीत्याशङ्क्याऽऽह—**सर्गेऽपीति** ॥ २ ॥

**आ० भा०—**॥ २ ॥

आ० ज०—॥ २ ॥

**रा० भा०—**पुनरपि ज्ञानं फलेन विशिनष्टि। इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः मत्साम्यं प्राप्ताः सर्गेऽपि नोपजायन्ते न सृजिकर्मतां भजन्ते ते प्रलये न व्यथन्ति च न च संसृतिकर्मतां भजन्ते ॥ २ ॥

**अ० टी०—**ज्ञानेन कथं सिद्धिं प्राप्ता इत्यत आह—**इदमिति**। इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य साधनानुष्ठानं कृत्वा मम साधर्म्यं समानधर्मत्वं लीलायोग्यत्वम् आगताः सन्तः सर्गेऽपि आदिसर्गे ब्रह्मादिसृष्टावपि नोपजायन्ते। च पुनः प्रलये सृष्टिसंहारे न व्यथन्ति, न पुनरावर्तन्त इत्यर्थः ॥ २ ॥

**नी० टी०—**इदं ज्ञानं विषयविषयिरूपविकल्पविनिर्मुक्तमुपाश्रित्य मम ईश्वरस्य साधर्म्यं सर्वात्मत्वं सर्वनियंतृत्वं सर्वभावाधिष्ठातृत्वमित्यादिधर्मसाम्यं साधर्म्यमागताः। तथा च श्रुतयो "य एव वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्" इति ज्ञानफलमीश्वरसाधर्म्यप्राप्तिमाहुः। किंच भुशुंडिप्रभृतयो ज्ञानबलादेव सर्गेऽपि न जायंते प्रलयकाले च तत्तद्भूतभावं गच्छंतो न प्रलयाग्न्यादिभिर्व्यथंते व्यथां प्राप्नुवंति। इदं श्लोकद्वयं भाष्ये वक्ष्यमाणज्ञानस्तुत्यर्थत्वेनैव व्याख्यातं। तज्ज्ञानमुपाश्रित्य ज्ञानसाधनमनुष्ठायेति पदार्थः शेषं स्पष्टम् ॥ २ ॥

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

**शां० भा०—**क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमित्याह—मम स्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां सर्वकार्येभ्यो महत्त्वाद्भरणाच्च स्वविकाराणां महद्ब्रह्मेति योनिरेव विशिष्यते। तस्मिन्महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भस्य जन्मनो बीजं सर्वभूतजन्मकारणं बीजं दधामि निक्षिपामि क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहमविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः। संभव उत्पत्तिः सर्वभूतानां हिरण्यगर्भोत्पत्तिद्वारेण ततस्तस्माद्गर्भाधानाद्भवति हे भारत ॥ ३ ॥

**शां० भा०**—ज्ञानस्तुत्या तदभिमुखायावहितचेतसे विवक्षितमर्थमाह—**क्षेत्रेति** । स्वरूपत्वेन स्वभूतत्वं वारयति—**मदीयेति** । ईश्वरीं चिच्छक्तिं व्यावर्तयति—**त्रिगुणात्मिकेति** । सांख्यीयप्रकृतिरपि मदीयेति व्यावर्तिता । योनिशब्देन सर्वाणि भवनयोग्यानि कार्याणि प्रत्युपादानत्वमभिप्रेतमित्याह—**सर्वभूतानामिति** । प्रकृतेर्महत्त्वं साधयति—**सर्वेति** । सर्वकार्यव्याप्तिमादाय योनावेव ब्रह्मशब्दः । लिङ्गवैषम्यान्महद्ब्रह्मेत्यर्थान्तरं किंचिदित्याशङ्क्याऽऽह—**योनिरिति** । तस्मिन्नित्यादि व्याचष्टे—**तस्मिन्निति** । ईदृशस्य क्षेत्रक्षेत्रज्ञसंयोगस्य भूतकारणत्वमिति वक्तुमुपक्रम्य किमिदमन्यदादर्शितमित्याशङ्क्याऽऽह—**क्षेत्रेति** । गर्भशब्देनोक्तसंयोगस्य फलं दर्शयति—**संभव इति** । 'आदिकर्ता स भूतानाम्' इति स्मृत्या हिरण्यगर्भकार्यत्वावगमाद्भूतानां कथं यथोक्तगर्भाधाननिमित्तत्वमित्याशङ्क्याऽऽह— **हिरण्यगर्भेति**॥ ३ ॥

**आ० भा०**—महद्ब्रह्म प्रकृतिः सा च श्रीभूदुर्गेति भिन्ना । उमासरस्वत्याद्यास्तु तदंशयुता अन्यजीवाः । तथा च काषायणश्रुतिः । "श्रीर्भूर्दुर्गा महती तु माया सालोकसूतिर्जगतो बंधिका च ॥ उमावागाद्या अन्यजीवास्तदंशास्तदात्मना सर्ववेदेषु गीता" इति ॥ मम योनिरिति गर्भाधानार्था योनिः न तु माता वाक्यशेषात् । तथा हि सामवेदे शार्कराक्षश्रुतौ । "विष्णोर्योनिर्गर्भसंधारणार्था महामाया सर्वदुःखैर्विहीना ॥ तथाऽप्यात्मानं दुःखिवन्मोहनार्थं प्रकाशयंती सह विष्णुना सा" इति अतः सीतादुःखादिकं मृषा प्रदर्शनमेव । तथा कूर्मपुराणे । 'न चेयं भूः ' तथा च सौकरायणश्रुतिः "अन्या भूर्भूरियं तस्य च्छाया भूताऽत्रमा सा हि भूतैकयोनिः" इति । "अवाप स्वेच्छया दास्यं जगतां प्रपितामही" इत्यनभिम्लानश्रुतिः । मत्स्यपुराणोक्तमपि स्वेच्छयैव । महद्ब्रह्मशब्दवाच्यापि प्रकृतिरेव महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वर इति तत्रैव ॥ ३ ॥

**आ० ज०**—अत्र महद्ब्रह्मेतिजडाविद्योच्यत इति प्रतीतिनिरासार्थमाह—**महदिति** । प्रकृतीर्महालक्ष्मीः । ननु सत्वं रजस्तम इति जडा प्रकृतिर्वक्ष्यते । तत्संनिधानादत्रापि सैव युक्तेति चेत् न तत्रापि चेतनप्रकृत्यविधानात् । कथमस्याः सत्वादिभेदभिन्नत्वमित्यत आह—**सा चेति** । जडप्रकृतेरभिमानिनी तत्कार्यसत्वादिगुणाभिमानिन्येतद्रूपत्रयवतीत्यर्थः । ननु भगवती माहेश्वरीब्राह्मीकौमारीमाहेन्द्रीश्रीभूदुर्गेति सप्तधाभिन्नाऽगमेषूच्यते । तत्कथं त्रिधा भिन्नोच्यत इत्यतआह—**उमेति** । आद्याश्वतस्रो भगवत्या अन्याः । कुतः । जीवाः । कथं तद्रूपत्वोक्तिः । तदंशयुतास्तत्संनिधानोपेताः । कुत एतदित्यत आह—**तथा चेति** । ममयोनिरित्येतत्परे व्याचक्षते । मम स्वरूपभूता योनिः कारणं विश्वस्य । प्रतीत एवान्वये मम मातेत्यापत्तेरिति । तन्निरासार्थमाह—**ममेति** । भार्येत्यर्थः । ममेत्यनुवादेनान्यथा प्रतीतान्वयबाधः स्यादिति सूचयति । प्रतीतान्वयांगीकारे मातेत्यपि प्रतीयेत तत्र कथं भार्येति निश्चय इत्यत आह—**न त्विति** । इति प्रतीतिः प्रसज्यत इति शेषः । कुतो नेत्यत आह—**वाक्येति** । तस्मिन् गर्भं दधाम्यहमिति वाक्यशेषाद्भार्यार्थतानिश्चयात् । श्रुतिबलाचेत्याह—**तथा हीति** । प्रकाशयंती प्रवर्तते । अनयैव श्रुत्याऽन्यदपि लब्धमिति प्रसंगादाह—**अत इति** । मृषाऽयथार्थं प्रदर्शनं यस्य तत्तथा । इतश्चैवमेवेत्याह—**तथेति** । तत्र ह्येवमुक्तम् । 'दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत्सीतां पावकोऽसौ सुरप्रियः' इत्यादि । ननु महालक्ष्मीः श्रीभूदुर्गेति भिन्नेत्युक्तम् । भुवश्च गौर्भूत्वाऽश्रुमुखी खिन्नेति दुःखं प्रतीयते तत्कथं तदित्यत आह—**न चेति** । इयं भूताभिमानिनी प्रसिद्धा भूः भगवत्या रूपं न भवति । किं त्वियमन्यैव । कुत इत्यत आह—**तथा चेति** । महालक्ष्मीरूपं भूरन्या इयं प्रसिद्धा तस्य तस्याः छाया प्रतिमा । ननु रावणहरणादिकं भवतु मायासीतायाः वाल्मीकिदास्यं तावन्मत्स्यपुराणे साक्षात्सीताया एवोक्तम् । दास्ये च दुःखमवर्जनीयमित्याशंकां प्रमाणपूर्वकमपाकरोति—**अवापेति** । श्रुतिरस्ति " यतोऽत " इति शेषः । महद्ब्रह्म प्रकृतिरित्युक्तम् । तत्र प्रमाणं वक्तुं व्यवहितत्वात्पुनः प्रतिजानीते—**महदिति** । महत् ब्रह्मेति भिन्ने पदे ततःपरमितिशब्दोऽध्याहार्यः । कुत इत्यत आह—**महतीति** । तत्रैव मत्स्यपुराणे । अर्थक्रमेण मम योनिर्महद्ब्रह्मेत्यत्र यत्क्रमेण व्याख्यानम् । मत्स्यपुराणोदाहरणप्रसंगादत्रोपपादनमिति ॥ ३ ॥

**रा० भा०**—अथ प्राकृतानां गुणानां बन्धहेतुताप्रकारं वक्तुं सर्वभूतजातस्य प्रकृतिपुरुषसंसर्गजत्वं 'यावत्संजायते किंचित्' इत्यनेनोक्तं भगवता स्वेनैव कृतमित्याह । कृत्स्नस्य जगतो

योनिभूतं मम महत् ब्रह्म यत् तस्मिन् गर्भं दधाम्यहम् । ' भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयम् ' इति निर्दिष्टा चेतना प्रकृतिः महदहंकारादिविकाराणां कारणतया महद्ब्रह्मेति उच्यते । श्रुतावपि क्वचित्प्रकृतिरपि ब्रह्मेति निर्दिश्यते । " यः सर्वज्ञः स सर्ववित् । यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते " इति ' इतस्त्वन्यां प्रकृतिं विद्धि मे परां । जीवभूताम् ' इति चेतनपुञ्जरूपा या प्रकृतिर्निर्दिष्टा सेह सकलप्राणिबीजतया गर्भशब्देनोच्यते । तस्मिन्नचेतने योनिभूते महति ब्रह्मणि चेतनपुंजरूपं गर्भं दधामि अचेतनप्रकृत्या भोगक्षेत्रभूतया भोक्तृवर्गपुंजभूतां चेतनप्रकृतिं संयोजयामीत्यर्थः । ततस्तस्मात्प्रकृतिद्वयसंयोगान्मत्संकल्पकृतात्सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानां संभवो भवति ॥ ३ ॥

**अ० टी०**—एवं फलरूपतामुक्त्वा तदेव प्रपञ्चयति—**ममेति** । महत् देशकालाद्यपरिच्छिन्नं ब्रह्म बृहत्त्वाद्बृंहणत्वेन मल्लीलार्थवस्तुवृद्धिहेतुत्वाद् ब्रह्म प्रकृतिः मम पुरुषोत्तमस्य योनिः क्रीडार्थविचित्रानेकवस्तुरूपप्रकटनात्मकगर्भाधानस्थानम् । तस्मिन् गर्भं क्रीडेच्छात्मकभावं दधामि स्थापयामि । ततो गर्भाधानानन्तरं सर्वभूतानां संभव उत्पत्तिर्भवति । भारतेतिसंबोधनं विश्वासार्थम् ॥ ३ ॥

**नी० टी०**—अथेदानीं का वा भूतप्रकृतिः किमाश्रयेण तस्या भूतजनकत्वं तदाह—**ममेति** । मम शुद्धचिन्मात्रस्य योनिः प्रवेशस्थानं महद्ब्रह्म महत्तत्त्वस्य प्रथमकार्यस्य ब्रह्म बृंहकं कारणमव्यक्ताव्याकृतापरपर्यायं त्रिगुणात्मकमायाख्यं तस्मिन् गर्भं स्वप्रतिबिंबरूपं दधामि अर्पयामि अहं चिदात्मा ततो मत्प्रतिबिंबगर्भिता या माया ततः सर्वेषां भूतानां भवनधर्माणां महदादीनां हिरण्यगर्भादीनां च संभव उत्पत्तिर्भवति । हे भारत! एतेन चित्प्रतिबिंबसापेक्षत्वोपपादनेन प्रकृतेः सांख्याभिमतं स्वातंत्र्यं निरस्तम् ॥ ३ ॥

**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ॥**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

**शां० भा०**—सर्वयोनिष्विति । देवपितृमनुष्यपशुमृगादिसर्वयोनिषु कौन्तेय मूर्तयो देहसंस्थानलक्षणा मूर्छिताङ्गवयवा मूर्तयः संभवन्ति यास्तासां मूर्तीनां ब्रह्म महत्सर्वावस्थं योनिः कारणमहमीशो बीजप्रदो गर्भाधानस्य कर्ता पिता ॥ ४ ॥

**शां० आ०**—ननु कथमुक्तकारणानुरोधेन हिरण्यगर्भोद्भवमभ्युपेत्य भूतानामुत्पत्तिरुच्यते देवादिजातिविशेषेषु देहविशेषाणां कारणान्तरस्य संभवात्तत्राऽऽह—**सर्वयोनिष्विति** । तत्र तत्र हेत्वन्तरप्रतिभासे कुतोऽस्य हेतुत्वमित्याशङ्क्य तत्तद्रूपेणास्यैवावस्थानादित्याह—**सर्वावस्थमिति** ॥ ४ ॥

**आ० भा०**—॥ ४ ॥

आ० ज०—॥ ४ ॥

**रा० भा०**—कार्यावस्थोऽपि चिदाचित्प्रकृतिसंसर्गो मयैव कृत इत्याह । सर्वासु देवगन्धर्वयक्षराक्षसमनुष्यपशुमृगपक्षिसरीसृपादिषु योनिषु तत्तन्मूर्तयो याः संभवन्ति जायन्ते तासां ब्रह्म महद्योनिः कारणं मया संयोजितचेतनवर्गा महदादिविशेषान्तावस्था प्रकृतिः कारणमित्यर्थः । अहं बीजप्रदः पिता तत्र तत्र च तत्तत्कर्मानुगुण्येन चेतनवर्गस्य संयोजकश्चाहमित्यर्थः ॥ ४ ॥

**अ० टी०**—नन्वनेकविधवस्तूनामनेकयोनिषु नानाविधप्रतीतौ कथमेकयोनित्वमित्यत आह—**सर्वयोनिष्विति**। पूर्वं तु सर्वोत्पत्तिरूपसर्वयोन्युत्पत्तिस्ततः सर्वयोनिषु हे कौन्तेय ! या मूर्तयः स्वरूपाणि संभवन्ति, तासां महद्ब्रह्म प्रकृतियोनिरुत्पत्तिस्थानं मातृस्थानीयं, बीजप्रदः इच्छाज्ञानात्मकबीजप्रदः पिता उत्पादकोऽहमेवेत्यर्थः। तदेव ब्रह्म मदिच्छया नानायोनिरूपेण भूत्वा भासते इत्यर्थः ॥ ४ ॥

**नी० टी०**—किंच सर्वेषु भूतेषु योनिषु उपादानभूतेषु पृथिव्यामोषधय इव या मूर्तयः शरीराणि सुरनरतिर्यक्स्थावरात्मकानि चतुर्विधानि संभवंति तासां मूर्तीनां ब्रह्म महत्पूर्वोक्तं महतो ब्रह्म ब्रह्ममहत् राजदंतादित्वादुपसर्जनस्य परनिपातः मायैव योनिरित्यर्थः। अहं तु तासां बीजप्रदः पिता तास्वपि स्वप्रतिबिंबस्यार्पयिता। यथा पुरुषो भार्यायामनुशायि संपृक्तं रेतो निषिंचति ततो भार्यातः पिंडोत्पत्तिः रेतोंशतस्तत्र चैतन्योत्पत्तिरिति चैतन्यविशिष्टस्य पिंडस्य पिताऽहं माता च मायेत्यर्थः ॥ ४ ॥

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

**शां० भा०—के गुणाः कथं बध्नन्तीत्युच्यते—सत्त्वं रजस्तम इत्येवंनामानो, गुणा इति पारिभाषिकः शब्दो न रूपादिवद्द्रव्याश्रिताः। न च गुणगुणिनोरन्यत्वमत्र विवक्षितम्। तस्माद्गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रत्यविद्यात्मकत्वात्क्षेत्रज्ञं निबध्नन्तीव तमास्पदीकृत्याऽऽत्मानं प्रतिलभन्त इति निबध्नन्तीत्युच्यते। ते च प्रकृतिसंभवा भगवन्मायासंभवा निबध्नन्तीव हे महाबाहो महान्तौ समर्थतरावाजानुप्रलम्बौ बाहू यस्य स महाबाहुर्हे महाबाहो देहे शरीरे देहिनं देहवन्तमव्ययमव्ययत्वं चोक्तमनादित्वादित्यादि श्लोके। ननु देही न लिप्यत इत्युक्तं तत्कथमिह निबध्नन्तीत्यन्यथोच्यते, परिहृतमस्माभिरिवशब्देन निबध्नन्तीवेति ॥ ५ ॥**

**शां० आ०**—एवं क्षेत्रक्षेत्रज्ञसंयोगाज्जगदुत्पत्तिं दर्शयता ब्रह्मैवाविद्यया संसरतीत्युक्तमिदानीमध्यायादावुक्तमाकाङ्क्षाद्वयं पूर्वमनूद्यानन्तरश्लोकेनोत्तरमाह—**के गुणा इति**। सत्त्वादिषु कथं गुणशब्दप्रवृत्तिरित्याशङ्क्य परतन्त्रत्वादित्याह—**गुणा इति**। रूपादिष्विव गुणशब्दः सत्त्वादिषु द्रव्याश्रितत्वं निमित्तीकृत्य किं न स्यादित्याशङ्क्य प्रकृत्यात्मकानां तेषां सर्वाश्रयत्वान्नैवमित्याह—**न रूपादिवदिति**। गुणानां प्रकृतेश्च पृथगुक्तेरन्यत्वे कुतस्तेषां प्रकृत्यात्मत्वमित्याशङ्क्याऽऽह—**न च गुणेति**। अत्यन्तभेदे गवाश्ववत्तद्भावासंभवादित्यर्थः। भेदाभेदे च तद्भावासंभवाद्विरोधात्कुतस्तेषु गुणपरिभाषेत्याशङ्क्याऽऽह—**तस्मादिति**। क्षेत्रज्ञं प्रति नित्यपारतन्त्र्ये हेतुमाह—**अविद्येति**। के गुणा इत्यस्योत्तरमुक्तं कथं बन्धन्तीत्यस्योत्तरमाह—**क्षेत्रज्ञमिति**। तदेवोपपादयति—**तमास्पदीकृत्येति**। प्राकृतानां गुणानां प्रकृत्यात्मकत्वमाह—**ते चेति**। संभवत्यस्मादिति संभवः प्रकृतिः संभवो येषां ते तथेति। सांख्यीयां प्रकृतिं प्रधानाख्यां व्यावर्तयति—**भगवदिति**। इवकारानुबन्धेन नितरां बध्नन्ति स्वविकारवत्तयोपदर्शयन्तीति क्रियापदं व्याख्याय महाबाहुशब्दं व्याचष्टे—**महान्ताविति**। देहवन्तं देहमात्मानं मन्यमानं देहस्वामिनमित्यर्थः। कूटस्थस्य कथं बध्यमानत्वमित्याशङ्क्य कुर्यान्मेरावणुधियमितिन्यायेन मायामाहात्म्यमिदामित्याह—**अव्ययमिति**। स्वतो धर्मतो वा व्ययराहित्यामित्यपेक्षायामाह—**अव्ययत्वं चोति**। लिप्यते न स पापेनेत्यनेन विरुद्धमिदंनिबध्नन्तीति वचनमिति शङ्कते—**नन्विति**। इवकारानुबन्धेन क्रियापदं व्याचक्षाणैरस्माभिरस्य चोद्यस्य परिहृतत्वान्नैवमित्याह—**परिहृतमिति** ॥ ५ ॥

**आ० भा०—बंधप्रकारं दर्शयति साधनानुष्ठानाय सत्त्वमित्यादिना ॥ ५ ॥**

**आ० ज०**—ननु प्रतिज्ञातं ज्ञानं श्लोकद्वयेनोक्तं तत्किमुत्तरेण ग्रंथेनाध्यायासंगतमुच्यत इत्यत आह—**बंधेति**। योहि बद्धोऽस्मीति जानाति स एव तन्निवृत्तिसाधनं विजिज्ञास्य ज्ञात्वाऽनुतिष्ठति अतो बंधोच्छेदसाधनानुष्ठानाय तज्ज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृतबंधप्रकारमादौ तावद्दर्शयतीति नासंगतिरित्यर्थः ॥ ५ ॥

**रा० भा०**—एवं सर्गादौ प्राचीनकर्मवशादचित्संसर्गेण देवादियोनिषु जातानां पुनः पुनः देवादिभावेन जन्महेतुमाह । सत्त्वरजस्तमांसि त्रयो गुणाः प्रकृतेः स्वरूपानुबन्धिनः स्वभावविशेषाः प्रकाशादिकार्य्यैकनिरूपणीयाः प्रकृत्यवस्थायामनुद्भूताः तद्विकारेषु महदादिषूद्भूताः महदादिविशेषान्तैरारब्धदेवमनुष्यादिदेहसंबन्धिनमेनं देहिनमव्ययं स्वतो गुणसंबन्धानर्हं देहे वर्तमानं निबध्नन्ति देहे वर्तमानत्वोपाधिना निबध्नन्तीत्यर्थः ॥ ५ ॥

**अ० टी०**—ननु लीलाऽऽत्मकप्रकृत्युत्पादितलीलार्थदेहादिषु स्थितस्य बीजस्य बन्धः कथमित्यत आह—**सत्त्वमिति**। सत्त्वं रजस्तम इति संज्ञका गुणाः प्रकृतिसंभवाः प्रकृतितः संभव उत्पत्तिर्येषां तादृशाः ते अव्यय विनाशादिधर्मरहितं भगवतश्चिदंशात्मकं देहिनं जीवं तद्रूपेण तद्द्वारा गुणभोगार्थमाविर्भूतं निबध्नन्ति वशीकुर्वन्ति रसपरत्वादित्यर्थः ॥ ५ ॥

**नी० टी०**—एवमीश्वराश्रयेण प्रकृतिर्भूतानि सृजतीत्युक्तं । इदानीं सा कथं भूता निबध्नातीति तदुच्यते—**सत्वमिति**। प्रकृतिः सत्वरजस्तमसां साम्यावस्था ततः सकाशात्परस्परांगांगीभावेन वैषम्येणोद्रिच्यमानाः प्रकृतिसंभवा इत्युच्यंते ननु प्रकृतितो वैशेषिकाणामिव द्रव्यात् गुणा अन्ये एते हेमहाबाहो। देहे अव्ययमविकारिणमपि देहिनं स्थूणायां वत्समिव रशनाभूता गुणा निबध्नंति ॥ ५ ॥

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ॥**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

**शां० भा०**—तत्र सत्त्वमिति । तत्र सत्त्वादीनां सत्त्वस्यैव तावल्लक्षणमुच्यते निर्मलत्वात्स्फटिकमणिरिव प्रकाशकमनामयं निरुपद्रवं सत्त्वं तन्निबध्नाति । कथं सुखसङ्गेन सुख्यहमिति विषयभूतस्य सुखस्य विषयिण्यात्मनि संश्लेषापादनं मृषैव सुखे सज्जनमिति । सैषाऽविद्या । न हि विषयधर्मो विषयिणो भवति । इच्छादि च धृत्यन्तं क्षेत्रस्यैव विषयस्य धर्म इत्युक्तं भगवता । अतोऽविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणयाऽस्वात्मभूते सुखे सञ्जयतीव सक्तमिव करोत्यसुखिनं सुखिनमिव । तथा ज्ञानसङ्गेन च । ज्ञानमिति सुखसाहचर्यात्क्षेत्रस्यैवान्तःकरणस्य धर्मो नाऽऽत्मनः । आत्मधर्मत्वे सङ्गानुपपत्तेर्बन्धानुपपत्तेश्च सुख इव ज्ञानादौ सङ्गो मन्तव्यो हेऽनघाव्यसन ॥ ६ ॥

**शां० आ०**—किंलक्षणो गुणः केन बध्नातीत्यपेक्षायामाह—**तत्रेति**। निर्धारणार्थतया सप्तमीं व्याचष्टे—**तत्र सत्वादीनामिति**। पुनस्तत्रेत्यनुवादमात्रं, निर्मलत्वं स्वच्छत्वमावरणवारणक्षमत्वं, तस्मात्प्रकाशकं चैतन्याभिव्यञ्जकं, निरुपद्रवमिति निर्मलं सत्सुखस्यातिव्यञ्जकमित्यर्थः । केन द्वारेण तदात्मानं निबध्नातीति पृच्छति—**कथमिति** । सुखसङ्गेन बध्नातीत्युत्तरं तदेव विवृणोति—**सुख्यहमित्यादिना**। मुख्यसुखस्याभिव्यञ्जकसत्त्वपरिणामोऽत्र विषयसंभूतं सुखमुच्यते। संश्लेषापादनमेव विशदयति—**मृषैवेति**। किमिति मृषैवेति विशेषणं सङ्गस्य वस्तुत्वसंभवादित्याशङ्क्याऽऽह—**सैषेति**। नन्विच्छा सङ्गोऽभिनिवेशश्चेत्येकोऽर्थस्तत्रेच्छादेरात्मधर्मत्वात्किमविद्ययेत्याशङ्क्य मनोधर्मत्वादिच्छादेर्नाऽऽत्मधर्मतेत्याह—**न हीति** । इच्छादेरनात्मधर्मत्वे किं प्रमाणमित्याशङ्क्याऽऽह—**इच्छादि चेति**। तस्याऽऽत्मधर्मत्वासंभवे फलितमाह—**अत इति**। सञ्जयतीव सत्त्वमिति

शेषः । इवकारप्रयोगे हेतुमाह—**अविद्ययेति** । तस्या वस्तुतो नाऽऽत्मसंबन्धस्तथाऽपि संबन्ध्यन्तराभावादस्वातन्त्र्याच्चाऽऽत्मधर्मत्वमापाद्य दृष्टत्वमाचष्टे—**स्वकीयेति** । वृत्तिमदन्तःकरणस्य विषयत्वादात्मनः साधकत्वेन तद्विषयित्वेऽपि तदविवेकरूपाऽविद्येति तत्स्वरूपमाह—**विषयेति** । यथोक्ताविद्यामाहात्म्यमिदं यदस्वरूपेऽतद्धर्मे च सक्तिसंपादनमित्याह—**अस्वेति** । तदेव स्फुटयति—**सक्तमिवेति** । प्रकारान्तरेण सत्त्वस्य निबन्धृत्वमाह—**तथेति** । ज्ञायतेऽनेनेति सत्त्वपरिणामो ज्ञानं तेन ज्ञान्यहमिति विपरीताभिमानेन सत्त्वमात्मानं निबध्नातीत्याह—**ज्ञानमित्यादिना** । विपक्षे दोषमाह—**आत्मेति** । स्वाभाविकत्वेन प्राप्तत्वात्तत्र स्वतः संयोगात्तद्वारा बन्धे च तन्निवृत्त्यनुपपत्तेर्नाऽऽत्मधर्मत्वमित्यर्थः । ज्ञानैश्वर्यादावपि क्षेत्रधर्मे सङ्गस्य पूर्ववदाविद्यकत्वं सूचयति—**सुख इवेति** । पापादिदोषहीनस्यैवात्र शास्त्रेऽधिकार इति द्योतयति—**अनघेति** ॥ ६ ॥

**आ० भा०—॥ ६ ॥**

आ० ज०—॥ ६ ॥

**रा० भा०—सत्त्वरजस्तमसामाकारं बन्धनप्रकारं चाह । तत्र सत्त्वरजस्तमःसु सत्त्वस्य स्वरूपमीदृशं निर्मलत्वात् प्रकाशकं प्रकाशसुखावरणस्वभावरहितता निर्मलत्वं प्रकाशसुखजननैकान्तस्वभावतया प्रकाशसुखहेतुभूतमित्यर्थः । प्रकाशो वस्तुयाथात्म्यावबोधः अनामयम् आमयाख्यकार्यं न विद्यत इत्यनामयम् अरोगताहेतुरित्यर्थः । एषु सत्त्वाख्यो गुणो देहिनमेनं सुखसङ्गेन ज्ञानसङ्गेन च बध्नाति पुरुषस्य सुखसङ्गं ज्ञानसङ्गं च जनयतीत्यर्थः । ज्ञानसुखयोः सङ्गे हि जाते तत्साधनेषु लौकिकवैदिकेषु प्रवर्तते ततश्च तत्फलानुभवसाधनभूतासु योनिषु जायत इति सत्त्वं सुखज्ञानसङ्गद्वारेण पुरुषं बध्नाति ज्ञानसुखजननं पुनरपि तयोः सङ्गजननं च सत्त्वमित्युक्तं भवति ॥ ६ ॥**

**अ० टी०**—अथ त्रयाणां बन्धनरीतिं सलक्षणामाह—**तत्रेति** । तत्र गुणत्रये सत्त्वं निर्मलत्वाद्भगवदिच्छात्मकपदार्थस्थितिहेतुत्वेन शुद्धत्वात् प्रकाशकं भगवद्रमणात्मकसर्वस्वरूपप्रकटीकरणसमर्थम्, अनामयं भगवत्सेवाप्रतिबन्धात्मकरागादिदोषराहितम्, अतः सुखसंगेन भगवतः साधनात्मकसेवनसुखजनकदेहाद्युत्तमत्वसंगेन बध्नाति । च पुनः । ज्ञानसंगेन ज्ञानोत्पत्तिसाधकत्वेन बध्नाति । अनघेतिसंबोधनेन मत्कृपाविशिष्टत्वात्तव संबन्धाभाव इति ज्ञापितम् ॥ ६ ॥

**नी० टी०**—तत्र कः केन संगेन बध्नातीत्युच्यते—**तत्रेति** । तत्र तेषु गुणेषु सत्त्वं निर्मलत्वाद्दुःखमोहाख्यमलराहित्यात् प्रकाशकमालोकवत्सर्वार्थावद्योतकं । यतोऽनामयं रजस्तमोभ्यामनभिभूतं तत्सुखसंगेन ज्ञानसंगेन च चरमविद्यया तिरोहितस्वरूपज्ञानानंदमहं सुख्यहं ज्ञानीत्यभिमानेनांतःकरणवृत्तिधर्मयोः सुखज्ञानयोरात्मन्यारोपेण बध्नाति हे अनघ अव्यसनिन् ॥ ६ ॥

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ॥**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

**शां० भा०—रजो रागात्मकमिति । रजो रागात्मकं रञ्जनाद्रागो गैरिकादिवद्रागात्मकं विद्धि जानीहि तृष्णासङ्गसमुद्भवं तृष्णाऽप्राप्ताभिलाष आसङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणः संश्लेषः, तृष्णासङ्गयोः समुद्भवं तृष्णासङ्गसमुद्भवं तन्निबध्नाति तद्रजः कौन्तेय कर्मसङ्गेन दृष्टादृष्टार्थेषु कर्मसु सज्जनं तत्परता कर्मसङ्गस्तेन निबध्नाति रजो देहिनम् ॥ ७ ॥**

**शां० आ०**—रजस्तर्हि किंलक्षणं कथं वा पुरुषं निबध्नातीत्याशङ्क्याऽऽह—**रज इति** । रज्यते संसृज्यतेऽनेन पुरुषो दृश्यैरिति रागोऽसावात्माऽस्येति रागात्मकं रजो जानीहीत्याह—**रञ्जनादिति** । समुद्भवत्यस्मादिति समुद्भवस्तृष्णा चाऽऽसङ्गश्च तृष्णा-

सङ्गौ तयोः समुद्भवस्तमिति विग्रहं गृहीत्वा कार्यद्वारा रजो विवक्षुस्तृष्णासङ्गयोरर्थभेदमाह—**तृष्णेत्यादिना** । रजसो लक्षणमुक्त्वा निबन्धृत्वप्रकारमाह—**तद्रज इति** । कर्मसङ्गं विभजते—**दृष्टेति** । अकर्तारमेव पुरुषं करोमीत्यभिमानेन प्रवर्तयतीत्यर्थः ॥७॥

**आ० भा०—तृष्णासंगयोः समुद्भवं तयोः कारणम् ॥ ७ ॥**

**आ० ज०**—अत्र रजस्तृष्णासंगसमुद्भवमित्यस्य तृष्णासंगाभ्यां समुद्भवोयस्येत्यपव्याख्यानामिति भावेन विग्रहप्रदर्शनपूर्वकमर्थमाह—**तृष्णेति** । समुद्भवत्यस्मादिति समुद्भवं कारणम् । अन्यथा प्रकृतिसंभवा इत्युक्तविरोधात् समुद्भवशब्देनाविर्भावो विवक्षित इति चेत्तथाऽपि गुणकार्यकथनप्रकरणविरोधात् ॥ ७ ॥

**रा० भा०—रजो रागात्मकं रागहेतुभूतं रागो योषित्पुरुषयोरन्योन्यस्पृहा तृष्णासङ्गसमुद्भवं तृष्णासङ्गयोरुद्भवस्थानं तृष्णासङ्गहेतुभूतमित्यर्थः । तृष्णा शब्दादिसर्वविषयस्पृहा । सङ्गः पुत्रमित्रादिषु संबन्धिषु संश्लेषस्पृहा । तथा देहिनं कर्मसु क्रियासु स्पृहाजननद्वारेण निबध्नाति क्रियासु हि स्पृहया याः क्रिया आरभते देही ताश्च पुण्यपापरूपा इति तत्फलानुभवसाधनभूतासु योनिषु जन्महेतवो भवन्ति अतः कर्मसङ्गद्वारेण रजो देहिनं निबध्नाति तदेवं रजो रागतृष्णासङ्गहेतुः कर्मसंगहेतुश्चेत्युक्तं भवति ॥ ७ ॥**

**अ० टी०**—सत्त्वलक्षणमुक्त्वा रजोलक्षणमाह—**रजो रागात्मकमिति** । रजः रजोगुणं रागात्मकम् अनुरञ्जनात्मकं नानापदार्थोत्पादनेन भगवद्रञ्जनात्मकं विद्धि । तत् तृष्णासंगसमुद्भवं तृष्णा भगवदर्थोत्पन्नवस्तुमात्राज्ञानेन स्वाभिलाषः तत्संगेन समुद्भव उत्पत्तिर्यस्य तादृशं देहिनं नतु भगवदर्थकज्ञानात्मकं, कर्मसंगेन तत्स्वाभिलषितप्राप्त्यर्थं क्रियासंगेन बध्नाति लौकिकासक्तिं जनयतीत्यर्थः ॥ ७ ॥

**नी० टी०**—रजोगुणो रागो रंजना तदात्मकं विद्धि । तृष्णा प्राप्यमाणेष्वप्यर्थेष्वतृप्तिः । संगः प्राप्ते विषये मनसः प्रीतिलक्षणः संश्लेषस्तयोः समुद्भवं निदानभूतं तद्रजो हेकौंतेय ! कर्मसंगेन दृष्टादृष्टार्थेषु कर्मसु संगस्तत्परता तेन निबध्नाति देहिनं देहाभिमानिनम् ॥ ७ ॥

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ॥**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

**शां० भा०—तमस्त्विति । तमस्तृतीयो गुणोऽज्ञानजमज्ञानाज्जातमज्ञानजं विद्धि मोहनं मोहकरमविवेककरं सर्वदेहिनां सर्वेषां देहवतां प्रमादालस्यनिद्राभिः प्रमादश्चाऽऽलस्यं च निद्रा च प्रमादालस्यनिद्रास्ताभिस्तत्तमो निबध्नाति भारत ॥ ८ ॥**

**शां० आ०**—तमस्तर्हि किंलक्षणं कथं वा पुरुषं निबध्नाति तत्राऽऽह—**तमस्त्वति** । गुणानां प्रकृतिसंभवत्वाविशेषेऽपि तमसोऽज्ञानजत्वविशेषणं तद्विपरीतस्वभावानापत्तेरिति मत्वाऽऽह—**अज्ञानादिति** । मुह्यत्यनेनेति मोहनं विवेकप्रतिबन्धकमिति कार्यद्वारा तमोनिर्दिशति—**मोहनमित्यादिना** । लक्षणमुक्त्वा तमसो बन्धनकरत्वं दर्शयति—**प्रमादेति** । कार्यान्तरासक्ततया चिकीर्षितस्य कर्तव्यस्याकरणं प्रमादः निरीहतयोत्साहप्रतिबन्धस्त्वालस्यं स्वापो निद्रा ताभिरात्मानमविकारमेव तमोऽपि विकारयतीत्यर्थः ॥ ८ ॥

**आ० भा०—अज्ञानं जायते यतस्तदज्ञानम् । प्रमादमोहौ तमस इति वाक्यशेषात् ॥ ८ ॥**

आ० ज०—तमस्त्वज्ञानजमित्यस्याज्ञानाज्जातमित्यपव्याख्यां प्रत्याख्यातुमाह—**अज्ञानमिति** । एतच्चान्येष्वपि दृश्यत इति दृशिग्रहणसामर्थ्याल्लभ्यते । कुतः प्रतीत एवार्थो नेत्यत आह—**प्रमादेति** । वाक्यशेषेऽज्ञानस्य तमःकार्यत्ववचनादित्यर्थः ॥८॥

**रा० भा०—ज्ञानादन्यदिहाज्ञानमभिप्रेतं ज्ञानं वस्तुयाथात्म्यावबोधः तस्मादन्यत्तद्विपर्ययज्ञानं तमस्तु वस्तुयाथात्म्यविपरीतविषयज्ञानजं मोहनं सर्वदेहिनां मोहो विपर्ययज्ञानं विपर्ययज्ञानहेतुरित्यर्थः। तत्तमः प्रमादालस्यनिद्राहेतुतया तद्द्वारेण देहिनं निबध्नाति । प्रमादः कर्तव्यात्कर्मणोऽन्यत्र प्रवृत्तिहेतुभूतमनवधानम् । आलस्यं कर्मस्वनारम्भस्वभावः । स्तब्धतेति यावत् । पुरुषस्येन्द्रियप्रवर्तनश्रान्त्या सर्वेन्द्रियप्रवर्तनोपरतिः निद्रा । तत्र बाह्येन्द्रियप्रवर्तनो परमः स्वप्नः । मनसोऽप्युपरमः सुषुप्तिः ॥८॥**

अ० टी०—तमसो लक्षणं सबन्धकमाह—**तमस्त्विति** । तमः पूर्वोक्तभगवल्लीलाद्यज्ञानाज्जातं प्रलयात्मकत्वात् भगवद्विस्मारणात्मकं सर्वदेहिनां मोहनं भ्रमजनकं विद्धि । प्रमादालस्यनिद्राभिर्भगवत्सेवाप्रतिबंधात्मकत्रयरूपाभिरन्यथाज्ञानेन तं बध्नाति । प्रमादो भगवदनवधानता । आलस्यं भगवत्सेवाऽनुद्यमः । निद्रा चित्तस्य ज्ञाननाशः ॥ ८ ॥

नी० टी०—तमोगुणस्तु पूर्वाभ्यां विलक्षणः अज्ञानं मायाया आवरणशक्तिस्ततः उद्भूतमज्ञानजं विद्धि अतः सर्वेषां देहिनां मोहनं भ्रांतिहेतुः । प्रमादोऽनवहितत्वं स च सत्वकार्यप्रकाशविरोधी । आलस्यं जडता तच्च रजःकार्यप्रवृत्तिविरोधि । उभयकार्यनिरोधिनी तमोगुणालंबना वृत्तिर्निद्रा ताभिस्तत्तमो नितरां बध्नाति हेभारत देहिनमित्यनुवर्तते ॥ ८ ॥

**सत्त्वं सुखे संजयति रजः कर्मणि भारत ॥**
**ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥**

**शां० भा०—पुनर्गुणानां व्यापारः संक्षेपत उच्यते—सत्त्वं सुखे संजयति संश्लेषयति रजः कर्मणि हे भारत संजयतीति वर्तते । ज्ञानं सत्त्वकृतं विवेकमावृत्याऽऽच्छाद्य तु तमः स्वेनाऽऽवरणात्मना प्रमादे संजयत्युत प्रमादो नाम प्राप्तकर्तव्याकरणम् ॥ ९ ॥**

शां० आ०—उक्तानां मध्ये कस्मिन्कार्ये कस्य गुणस्योत्कर्षस्तत्राऽऽह—**पुनरिति** । सुखे साध्ये विषये समुत्कृष्यते सत्त्वमित्याह—**सत्त्वमिति** । संजयतीत्यस्यार्थमाह—**संश्लेषयतीति** । कर्मणि साध्ये रजः समुत्कृष्यत इत्याह—**रज इति** । प्रमादे प्राधान्यं तमसो दर्शयाति—**ज्ञानमिति** ॥ ९ ॥

**आ०भा०—॥ ९ ॥**

आ०ज—॥ ९ ॥

**रा० भा०—सत्त्वादीनां बन्धद्वारभूतेषु प्रधानान्याह । सत्त्वं सुखसङ्गप्रधानम् । रजः कर्मसङ्गप्रधानं तमस्तु वस्तुयाथात्म्यज्ञानमावृत्य विपरीतज्ञानहेतुतया कर्त्तव्यविपरीतप्रवृत्तिसङ्गप्रधानम् । देहाकारपरिणतायाः प्रकृतेः स्वरूपानुबन्धिनः सत्त्वादयो गुणाः ॥ ९ ॥**

अ० टी०—एवं सत्त्वादीनां स्वरूपमुक्त्वा तेषां स्वकार्यकरणातिशयत्वमाह—**सत्त्वमिति** । सत्त्वं सत्त्वगुणः सुखे भगवज्ज्ञानात्मके संजयति संयोजयति । एवमेव रजः कर्मणि पूर्वोक्ते संयोजयति । तथा तमो भगवदीयसंगादिना जायमानं ज्ञानं निद्राऽऽलस्याद्यैरावृत्य प्रमादे अनवधानतायां संयोजयति । यद्वा । सुख उत्पा-

दिते सत्त्वं संजयति सर्वोत्कर्षेण तिष्ठति । तथैव कर्मणि रजः । प्रमादे तमः । अत्रायं भावः । भगवता त्रयोऽपि गुणा एतद्वैचित्र्यार्थमेवोत्पादितास्तेषां तत्कृतकार्यदर्शनेन संतुष्यति प्रभुस्तेनैव तदुत्कर्षः सिद्ध्यतीति ॥ ९ ॥

**नी० टी०**—सत्त्वमुत्कृष्टं सत् सुखदुःखकारणमभिभूय संजयति संश्लेषं जनयति एवमुत्तरत्रापि । ज्ञानं प्रकाशमावृत्य प्रमादे अवश्यकर्तव्यस्याकरणे ॥ ९ ॥

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ॥**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥**

**शां० भा०—उक्तं कार्यं कदा कुर्वन्ति गुणा इत्युच्यते—रजस्तमश्चोभावप्यभिभूय सत्त्वं भवत्युद्भवति वर्धते यदा तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखाद्यारभते हे भारत । तथा रजोगुणः सत्त्वं तमश्चैवोभावप्यभिभूय वर्धते यदा तदा कर्मतृष्णादि स्वकार्यमारभते । तमआख्यो गुणः सत्त्वं रजश्चोभावप्यभिभूय तथैव वर्धते यदा तदा ज्ञानावरणादि स्वकार्यमारभते ॥ १० ॥**

**शां० आ०**—इतरेतराविरोधेन वा सत्त्वादयो गुणा युगपदुत्कृष्यन्ते विरोधेन वा क्रमेण वेति संदेहात्पृच्छति—**उक्तमिति**। सर्वोत्कर्षार्थिनामितराभिभवार्थं क्रमपक्षमाश्रित्योत्तरमाह—**उच्यत इति**। सत्त्वाभिवृद्धिमेव विवृणोति—**तदेति**। रजस्तमसोस्तिरोधानदशायामिति यावत्। रजसो वृद्धिप्रकारं तत्कार्यं च कथयति—**तथेति**। तमसोऽपि विवृद्धिं तत्कार्यं च निर्दिशति—**तम इति** ॥ १० ॥

**आ० भा०—॥ १० ॥**

आ० ज०—॥ १० ॥

**रा० भा०—ते च स्वरूपानुसंबन्धित्वेन सर्वदा सर्वे वर्तन्त इति परस्परविरुद्धं कार्यं कथं जनयन्तीत्यत्राह । यद्यपि सत्त्वादयस्त्रयः प्रकृतिसंसृष्टात्मस्वरूपानुबन्धिनः तथापि प्राचीनकर्मवशात् देहाप्यायनभूताहारवैषम्याच्च सत्त्वादयः परस्परसमुद्भवाभिभवरूपेण वर्तन्ते रजस्तमसी कदाचिदभिभूय सत्त्वमुद्रिक्तं वर्तते । तथा तमःसत्त्वे अभिभूय रजः कदाचित् कदाचिच्च रजःसत्त्वे अभिभूय तमः ॥ १० ॥**

**अ० टी०**—ननु सुखदुःखाद्यदृष्टसाधनत्वे सति स्वकार्यकरणमन्यथाभावकत्वं कथमित्याशङ्क्य तेषां तथा सामर्थ्यं मया दत्तमस्तीतिज्ञापनाय सिद्धवत्कारेणानुवदति—**रजस्तम इति**। रजस्तमः दुःखाज्ञानात्मकगुणद्वयमभिभूय तिरस्कृत्य सत्त्वं भवतीत्यर्थः । भारतेतिसंबोधनेन यथा मदिच्छया सर्वपराभवेन त्वं जयसि तथेत्यर्थो द्योतितः । एवं रजोऽपि सत्त्वं तमश्चेतिगुणद्वयाभिभवेन भवति । एवकारेण तमसो मोहकसामर्थ्याधिक्येपि तथाकर्तृत्वं व्यज्यते । तथा तमः, सत्त्वं रजश्चाभिभूय भवतीत्यर्थः ॥ १० ॥

**नी० टी०**—सत्त्वादयः कदा स्वस्वकार्ये प्रभवंतीत्याशंक्येतरेतरयोरभिभवे सतीत्याह—**रज इति**। रजस्तमसी अभिभूय सत्त्वं भवति वर्धते । एवं रजोऽपि सत्त्वतमसी अभिभूय भवति । तथा तमोऽपि सत्त्वरजसी अभिभूय भवतीत्यर्थः ॥ १० ॥

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ॥**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥**

**शां० भा०**—यदा यो गुण उद्भूतो भवति तदा तस्य किं लिङ्गमित्युच्यते—सर्वद्वारेष्वात्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि तेषु सर्वद्वारेष्वन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिन्नुपजायते । तदेव ज्ञानम् । यदैवं प्रकाशो ज्ञानाख्य उपजायते तदा ज्ञानप्रकाशेन लिङ्गेन विद्याद्विवृद्धमुद्भूतं सत्त्वमित्युतापि ॥ ११ ॥

**शां० आ०**—उत्तरश्लोकत्रयस्याऽऽकाङ्क्षां दर्शयाति—**यदेति** । सत्त्वोद्भवलिङ्गदर्शनार्थमनन्तरं श्लोकमुत्थापयति—**उच्यत इति** । सर्वद्वारेष्वित्यादिसप्तमी निमित्ते नेतव्या, उतशब्दोऽपिशब्दपर्यायोऽप्यतिशयार्थः ॥ ११ ॥

**आ० भा०**—॥ ११ ॥

आ० ज०—॥ ११ ॥

**रा० भा०**—तच्च कार्योपलब्ध्यैवावगच्छेदित्याह । सर्वेषु चक्षुरादिषु ज्ञानद्वारेषु यदा वस्तुयाथात्म्यप्रकाशे ज्ञानमुपजायते तदास्मिन्देहे सत्त्वं प्रवृद्धमिति विद्यात् ॥ ११ ॥

**अ० टी०**—ननु तदभिभवेन तत्तदुत्पत्तिः कथं न ज्ञातव्येत्यत आह—**सर्वद्वारेष्विति** । अस्मिन् देहे साधनात्मके सर्वद्वारेषु श्रोत्रादिषु यदा भगवत्संबन्धित्वेन प्रकाशो दर्शनमुपजायते, अथवा ज्ञानं तदा सत्त्वं विवृद्धं विशेषेण भगवत्संबन्धित्वेन विवृद्धं विद्यात् । अयमर्थः । श्रोत्रद्वारेण भगवत्कथाश्रवणात्मकः । वचनद्वारेण च कीर्तनात्मकः । प्रसादग्रहणात्मकः । नासाद्वारेण च गन्धादिग्रहणम् । एवं सर्वत्रेति भावः ॥ ११ ॥

**नी० टी०**—तत्तद्गुणोद्भवलिंगान्याह त्रिभिः—**सर्वेति** । अस्मिन्देहे यदा सर्वेषु द्वारेषु बाह्याभ्यंतरविषयोपलब्धिसाधनेषु बाह्याभ्यंतरकरणेषु प्रकाशः स्वस्वविषयावरणविरोधी परिणामविशेषो जायते तेन च ज्ञानं शब्दादिविषयस्य याथात्म्येन प्रकाशो यदा जायते तदा सत्त्वं विवृद्धमिति विद्याज्जानीयात् । उत अपि सुखादिलिंगेनापि जानीयादित्यर्थः ॥ ११ ॥

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ॥**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥**

**शां० भा०**—रजस उद्भूतस्येदं चिह्नम्—लोभः परद्रव्यादित्सा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा, आरम्भः, कस्य, कर्मणाम् । अशमोऽनुपशमः, हर्षरागादिप्रवृत्तिः, स्पृहा सर्वसामान्यवस्तुविषया तृष्णा, रजसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते हे भरतर्षभ ॥ १२ ॥

**शां० आ०**—अतिशयेनोद्भूतस्य रजसो लिङ्गमाह—**रजस इति** । उपक्रमपर्यायस्याऽऽरम्भस्य विषयं पृच्छति—**कस्येति** । काम्यानि निषिद्धानि च लौकिकानि कर्माणि विषयत्वेन निर्दिशति—**कर्मणामिति** । अनुपशमो बाह्यान्तःकरणानामिति शेषः । लोभाद्युपलम्भाद्रजोवृद्धिर्बोद्धव्येति भावः ॥ १२ ॥

**आ० भा०**—॥ १२ ॥

आ० ज०—॥ १२ ॥

**रा० भा०**—लोभः स्वकीयद्रव्यस्यात्यागशीलता प्रवृत्तिः । प्रयोजनमनुद्दिश्यापि चलस्वभावता आरम्भः । कर्मणां फलसाधनभूतानां कर्मणामारम्भः । अशमः इन्द्रियानुपरतिः । स्पृहा विषयेच्छा । एतानि रजसि प्रवृद्धे जायन्ते । यदा लोभादयो वर्तन्ते तदा रजः प्रवृद्धमिति विद्यादित्यर्थः ॥ १२ ॥

अ० टी०—एवं सत्त्वज्ञानमुक्त्वा रजोज्ञानरूपमाह—**लोभ इति**। लोभो भगवत्सेवार्थे स्वेच्छया दत्ता-त्रव्यवहारयोग्यद्रव्ये सत्यपि लौकिकाऽऽसक्त्या पुनर्द्रव्येच्छयेतस्ततो मनोधावनेन तद्यत्नादिकरणे। प्रवृत्तिः क्रियाकरणम्। आरम्भः कर्मणां लौकिकस्वोपभोग्यवस्तुकरणम्। अशमः अशान्तिः प्रातरिदं कर्त्तव्यमद्येदं कृतमित्यादिविचारेण चित्तोद्वेगः। स्पृहा स्वायोग्यवस्तुन्यपीच्छा। रजसि विवृद्धे एतानि जायन्ते। एतदुत्पत्तौ रजोविवृद्धिं विद्यादित्यर्थः। भरतर्षभेतिसंबोधनं राज्याद्यर्थस्पृहाभावेनैतद्दोषराहित्याय ॥ १२ ॥

**नी० टी०**—लोभः प्राप्ताधिके गर्धः। प्रवृत्तिरग्निहोत्रादौ। आरंभो गृहादेः। कर्मणामशमः सतामसतां वा कार्याणामनुपरमः। स्पृहा दृष्टे परधनादावुपादित्सा। रजसि विवृद्धे सति एतानि लिंगानि जायंते हे भरतर्षभ ॥ १२ ॥

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥**
**तमस्यैतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥**

**शां० भा०—अप्रकाश इति। अप्रकाशोऽविवेकोऽत्यन्तमप्रवृत्तिश्च प्रवृत्त्यभावस्तत्कार्यं प्रमादो मोह एव चाविवेको मूढतेत्यर्थः। तमसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते हे कुरुनन्दन ॥१३॥**

**शां० आ०**—उद्भूतस्य तमसो लिङ्गमाह—**अप्रकाश इति**। सर्वथैव ज्ञानकर्मणोरभावो विशेषणाभ्यामुक्तः। तत्कार्य-मिति तच्छब्दो दर्शिताविवेकार्थः। प्रमादो व्याख्यातः। मोहो वेदितव्यस्यान्यथावेदनम्। तस्यैव मौढ्यान्तरमाह—**अविवेक इति**। अविवेकातिशयादिना प्रवृद्धं तमो ज्ञेयमिति भावः ॥ १३ ॥

**आ०भा०—॥ १३ ॥**

**आ० ज०**—॥ १३ ॥

**रा० भा०—अप्रकाशः ज्ञानानुदयः। अप्रवृत्तिश्च स्तब्धता। प्रमादः अकार्यप्रवृत्तिफलमन-वधानम्। मोहो विपरीतज्ञानम्। एतानि तमसि प्रवृद्धे जायन्ते एतैस्तमः प्रवृद्धमिति विद्यात् ॥१३॥**

**अ० टी०**—तमसोऽज्ञानायाऽऽह—**अप्रकाश इति**। अप्रकाशश्चित्ताप्रसादः। अप्रवृत्तिः भगवत्सेवन-भगवदीयसंगाद्यनुद्यमः। प्रमादो भगवद्भजनाऽननुसंधानम्। मोहः संसारासक्तिः। हे कुरुनन्दन! तमसि विवृद्धे सत्येतानि जायन्ते ॥ १३ ॥

**नी० टी०**—सत्यपि बोधके गुर्वादावप्रकाशः सत्वकार्यप्रकाशानुदयः। अप्रवृत्तिः सत्यपि प्रवृत्तिनिमित्ते रजःकार्यप्रवृत्त्यनुदयः। प्रमादः कार्याकार्यविवेकराहित्यं। मोहो निद्रालस्यादिरूपः ॥ १३ ॥

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ॥**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥**

**शां० भा०—मरणद्वारेणापि यत्फलं प्राप्यते तदपि सङ्गरागहेतुकं सर्वं गौणमेवेति दर्शयन्ना-ह—यदा सत्त्वे प्रवृद्धे उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृदात्मा तदोत्तमविदां महदादितत्त्व-विदामित्येतत्। लोकानमलान्मलरहितान्प्रतिपद्यते प्राप्नोतीत्येतत् ॥ १४ ॥**

शां० आ०—सात्त्विकादीनां भावानां पारलौकिकं फलविभागमुदाहरति—मरणेति । सङ्गः सक्ती रागस्तृष्णा तद्बलादनुष्ठानद्वारा लभ्यमानमित्यर्थः । गौणं सत्त्वादिगुणप्रयुक्तमिति यावत् । तत्र सत्त्वगुणवृद्धिकृतफलविशेषमाह—यदेति । मलरहितात्रजस्तमसोरन्यतरस्योद्भवो मलं तेन रहितानागमसिद्धान्ब्रह्मलोकादीनित्यर्थः ॥ १४ ॥

आ० भा०—॥ १४ ॥

आ० ज०—॥ १४ ॥

रा० भा०—यदा सत्वं प्रवृद्धं तदा सत्वे प्रवृद्धे देहभृत् प्रलयं मरणं याति चेदुत्तमविदाम् उत्तमतत्वविदामात्मयाथात्म्यविदां लोकान् समूहानमलान् मलरहितान् अज्ञानरहितान् । प्रतिपद्यते प्राप्नोति सत्वे प्रवृद्धे तु मृतः आत्मविदां कुलेषु जनित्वात्मयाथात्म्यज्ञानसाधनेषु पुण्यकर्मस्वधिकरोतीत्युक्तं भवति ॥ १४ ॥

अ० टी०—एवं विवृद्धौ सत्यां मरणान्तं तेन यान्त्यतस्तत्संबन्धिदेहातिर्भवतीत्याह—यदेति पद्येन । सत्त्वे प्रवृद्धे, तु शब्दोऽन्यव्यवच्छेदकः यदा देहभृज्जीवः प्रलयं याति मृत्युमवाप्नोति तदोत्तमविदान् उत्तमैर्ज्ञानिभिर्ये ज्ञातुं योग्यास्तान् लोकान् अमलान् वैष्णवब्राह्मणादीन् प्रतिपद्यते प्राप्नोतीत्यर्थः ॥ १४ ॥

नी० टी०—प्रलयं मरणं उत्तमविदां हिरण्यगर्भाद्युपासकानां देवानां वा लोकान् अमलान निर्दुःखान् ॥ १४ ॥

**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ॥**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥**

शां० भा०—रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते । तथा तद्वदेव प्रलीनो मृतस्तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥ १५ ॥

शां० आ०—रजःसमुद्रेके मृतस्य फलविशेषं दर्शयति—रजसीति । जायते शरीरं गृह्णातीत्यर्थः । यथा सत्त्वे रजसि च प्रवृद्धे मृतो ब्रह्मलोकादिषु मनुष्यलोके च जायते देवादिषु मनुष्येषु च जायते तथैवेत्याह—तद्वदिति ॥ १५ ॥

आ० भा०—॥ १५ ॥

आ० ज०—॥ १५ ॥

रा० भा०—रजसि प्रवृद्धे मरणं प्राप्य फलार्थं कर्म कुर्वतां कुलेषु जायते तत्र जनित्वा स्वर्गादिफलसाधनकर्मस्वधिकरोतीत्यर्थः । तथा तमसि प्रवृद्धे मृतः मूढयोनिषु श्वसूकरादियोनिषु जायते सकलपुरुषार्थारम्भानर्हो जायत इत्यर्थः ॥ १५ ॥

अ० टी०—किंचैवमेव रजसि प्रवृद्धे प्रलयं गत्वा मृत्युमवाप्य कर्मसंगिषु कर्माऽऽसक्तेषु तेषु नरेषु पुनस्तदाचरणेन तत्फलभोगार्थं जायते । तथा तमसि प्रवृद्धे प्रलीनो मृतो मूढयोनिष्वासुरेषु जायते ॥ १५ ॥

नी० टी०—कर्मसंगिषु श्रौतस्मार्तकर्मानुष्ठातृषु मनुष्येषु मूढयोनिषु तिर्यक्स्थावरचांडालादिषु ॥ १५ ॥

**कर्मणः सुकृतस्याऽऽहुः सात्त्विकं निर्मलं फलम् ॥**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥**

**शां० भा०**—अतीतश्लोकार्थस्यैव संक्षेप उच्यते—कर्मणः सुकृतस्य सात्त्विकस्येत्यर्थः । आहुः शिष्टाः सात्त्विकमेव निर्मलं फलमिति । रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः । कर्माधिकारात्फलमपि दुःखमेव कारणानुरूप्याद्राजसमेव । तथाऽज्ञानं तमसस्तामसस्य कर्मणोऽधर्मस्य पूर्ववत् ॥ १६ ॥

**शां०आ०**—भावानां फलमुक्त्वा सात्त्विकादीनां कर्मणां फलमाह—**अतीतेति** । सुकृतस्य शोभनस्य कृतस्य पुण्यस्येत्यर्थः । सात्त्विकस्याशुद्धिरहितस्येति यावत्, सात्त्विकं सत्त्वेन निर्वृत्तं निर्मलं रजस्तमःसमुद्भवान्मलान्निष्क्रान्तम् । रजश्शब्दस्य राजसे कर्मणि कुतो वृत्तिस्तत्राऽऽह—**कर्मेति** । दुःखमेव दुःखबहुलं दुःखमेवेत्यर्थः । कथमित्थं व्याख्यायते तत्राऽऽह—**कारणेति** । पापमिश्रस्य पुण्यस्य रजोनिमित्तस्य कारणत्वात्तदनुरोधात्फलमपि रजोनिमित्तं यथोक्तं युक्तमित्यर्थः । अज्ञानमविवेकप्रायं दुःखं तामसाधर्मफलमित्याह—**तथेति** ॥ १६ ॥

**आ०भा०**—रजसस्तु फलं दुःखमित्यल्पसुखं दुःखम् । तथा हि शार्कराक्ष्यशाखायाम् । "रजसो ह्येव जायते मात्रया सुखं दुःखं तस्मात्तान्सुखिनो दुःखिन इत्याचक्षते" इति । अन्यथा दुःखस्यातिकष्टत्वात्तमोधिकत्वं रजसो न स्यात् ॥ १६ ॥

**आ० ज०**—दुःखशब्दः—केवलदुःखवाचीत्यन्यथाप्रतीतिनिरासायाह—**रजस इति** । दुःखशब्देनोच्यत इति शेषः । तत्कथमित्यत उक्तम्—**अल्पेति** । अल्पत्वात्सुखस्याविवक्षेति भावः । कुत इत्यत आह—**तथा हीति** । रजस इति पंचमी । मात्रयेति सुखविशेषणं स्तोकात्मकं सुखं दुःखं चेत्यर्थः । तान् राजसकर्मिणः । केवलदुःखार्थांगीकारे बाधकं चाह—**अन्यथेति** । अतिकष्टत्वादज्ञानादपि कष्टत्वात् । तत्फलकस्य रजसः । तथा च 'मध्ये तिष्ठंति राजसाः ॥ अधोगच्छन्ति तामसाः' इत्याद्ययुक्तं स्यादिति भावः ॥ १६ ॥

**रा० भा०**—एवं सत्ववृद्धौ मरणमुपगम्यात्मविदां कुले जातेनानुष्ठितस्य सुकृतस्य फलासन्धिरहितस्य मदाराधनरूपस्य कर्मणः फलं पुनरपि ततोधिकसत्वजनितं निर्मलं दुःखगन्धरहितं भवतीत्याहुः सत्वगुणपरिणामविदः । अन्त्यकालप्रवृद्धस्य रजसस्तु फलं फलसाधनकर्मसंगिकुले जन्म फलाभिसन्धिपूर्वककर्मारम्भं तत्फलानुभवपुनर्जन्मरजोवृद्धिफलाभिसंधिपूर्वककर्मारम्भपरम्परारूपं सांसारिकं दुःखप्रायमेवेत्याहुः तद्गुणयाथात्म्यविदः । अज्ञानं तमसः फलम् एवमन्तकालप्रवृद्धस्य तमसः फलमज्ञानपरम्परारूपम् ॥ १६ ॥

**अ० टी०**—तथाजातानां किं फलमित्यत आह—**कर्मण इति** । सुकृतस्य सुष्ठु भगवदाज्ञया भगवत्तोषहेतुत्वेन कृतस्य सात्विकस्य कर्मणः सात्त्विकं विष्णुप्रसादाऽऽत्मकं निर्मलं दोषराहितं फलमाहुः । व्यासकपिलादय इत्यर्थः । तु पुनः । रजसो राजसकर्मणो दुःखं संसारात्मकं फलमाहुः । तथा तमसः कर्मणोऽज्ञानं भगवद्वैमुख्यात्मकं फलमाहुः । कर्मस्वरूपं चाऽग्रेऽष्टादशे वक्ष्यति ॥ १६ ॥

**नी० टी०**—सुकृतस्य सात्विकस्य कर्मणः फलं निर्मलं दुःखाज्ञानमलशून्यं सात्त्विकं ज्ञानवैराग्यादिकं रजसो राजसस्य कर्मणः फलं दुःखं । तमसस्तामसस्य कर्मणः फलमज्ञानं । सात्विकादिकर्मलक्षणं च नियतं संगरहितमित्यादिनाऽष्टादशे वक्ष्यति ॥ १६ ॥

**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ॥**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥**

**शां० भा०**—किंच गुणेभ्यो भवति—सत्त्वाल्लब्धात्मकात्संजायते समुत्पद्यते ज्ञानं रजसो लोभ एवच । प्रमादमोहौ चोभौ तमसो भवतोऽज्ञानमेव च भवति ॥ १७ ॥

शां० आ०—विहितप्रतिषिद्धज्ञानकर्माणि सत्त्वादीनां लक्षणानि संक्षिप्य दर्शयति—**किंचेति** । ज्ञानं सर्वकरणद्वारकमज्ञानं विवेकाभावः ॥ १७ ॥

**आ० भा०**—॥ १७ ॥

आ० ज०—॥ १७ ॥

**रा० भा०**—तदधिकसत्वादिजनितनिर्मलादिफलं किमित्यत्राह । एवं परम्परया जातादधिकसत्वादात्मयाथात्म्यापरोक्षरूपं ज्ञानं जायते यथा प्रवृद्धाद्रजसः स्वर्गादिफले लोभो जायते तथा प्रवृद्धाच्च तमसः प्रमादोऽनवधानं तन्निमित्तासत्कर्मणि प्रवृत्तिस्ततश्च मोहो विपरीतज्ञानं ततश्चाधिकतरं तमसः ततश्चाज्ञानं ज्ञानाभावः ॥ १७ ॥

अ० टी०—ननु स्वरूपज्ञानाऽभावे कथं तादृक्कर्मकरणं संभवतीत्यत आह—**सत्वादिति** । सत्त्वात् ज्ञानं संजायते तादृक्स्वभावविशिष्टस्यैव प्रकटनात् । तथा रजसो रजोगुणाल्लोभः पापमूलको भवतीति । तस्य च दुःखात्मकत्वात्तदेव भवति । तमसस्तामसगुणात् प्रमादमोहौ भवतः । ततस्ताभ्यां चाज्ञानमेव भवतीत्यर्थः ॥ १७ ॥

नी० टी०—एतादृशफलवैचित्र्ये पूर्वोक्तमेव हेतुमाह—**सत्त्वादिति** ॥ १७ ॥

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ॥**
**जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥ १८ ॥**

**शां० भा०**—किंच—ऊर्ध्वं गच्छन्ति देवलोकादिषूत्पद्यन्ते सत्त्वस्थाः सत्त्वगुणवृत्तस्थाः । मध्ये तिष्ठन्ति मनुष्येषूत्पद्यन्ते राजसाः । जघन्यगुणवृत्तस्था जघन्यश्चासौ गुणश्च जघन्यगुणस्तमस्तस्य वृत्तं निद्रालस्यादि तस्मिन्स्थिता जघन्यगुणवृत्तस्था मूढा अधो गच्छन्ति पश्वादिषूत्पद्यन्ते तामसाः ॥ १८ ॥

शां० आ०—सात्त्विकादिज्ञानकर्मफलान्युक्त्वाऽनुक्तसंग्रहार्थं सामान्येनोपसंहरति—**किंचेति** । वक्ष्यमाणफलद्वाराऽपि सत्त्वादिज्ञानमित्यर्थः । सत्त्वगुणस्य वृत्तं शोभनं ज्ञानं कर्म वा तत्र तिष्ठन्तीति तथा । राजसा रजोगुणनिमित्ते ज्ञाने कर्मणि वा निरताः ॥ १८ ॥

**आ० भा०**—॥ १८ ॥

आ० ज०—॥ १८ ॥

**रा० भा०**—एवमुक्तेन प्रकारेण सत्वस्था ऊर्ध्वं गच्छन्ति क्रमेण संसारबन्धान्मोक्षं गच्छन्ति । रजसः स्वर्गादिफललोभकरत्वाद्राजसाः फलसाधनभूतं कर्मानुष्ठाय तत्फलमनुभूय पुनरपि जनित्वा तदा कर्म अनुतिष्ठन्तीति मध्ये तिष्ठन्ति पुनरावृत्तिरूपतया दुःखप्रायमेव तत् । तामसास्तु जघन्यगुणवृत्तिस्था उत्तरोत्तरनिकृष्टतमोगुणवृत्तिषु स्थिता अधो गच्छन्ति अन्त्यत्वं ततस्तिर्यक्त्वं ततः कृमिकीटादिजन्मस्थावरत्वं ततोऽपि गुल्मलतात्वं ततश्च शिलाकाष्ठलोष्टतृणादित्वं गच्छन्तीत्यर्थः ॥ १८ ॥

**अ० टी०**—अथ तेषां फलं तद्रूपं चाह—**ऊर्ध्वमिति**। सत्त्वस्थाः सात्त्विककर्मनिरता ऊर्ध्वं सत्यादिलोकं गच्छन्ति। राजसा राजसकर्मनिरता मध्ये मनुष्यलोके दुःखाऽऽवृते राज्यादिसुखफले तिष्ठन्ति। जघन्यगुणतामसतद्वृत्तिस्थास्तत्कर्मसु वर्तमानास्तामसा अधो नरकादिनीचयोनिषु गच्छन्ति ॥ १८ ॥

**नी० टी०**—यतः सत्त्वादिभ्यो ज्ञानादीनि जायंतेऽतः सत्त्वादिवृद्धिकाले प्रलयं गच्छंतः क्रमेणोत्तममध्यमाधमासु योनिषु जायंत इत्याह—**ऊर्ध्वमिति**। ऊर्ध्वं देवभावे। मध्ये मानुषभावे। अधो नरकतिर्यक्स्थावरभावे। जघन्यं निंद्यं यद्गुणवृत्तं निद्रालस्यप्रमादादि तत्स्थास्तामसाः ॥ १८ ॥

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ॥**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥**

**शां० भा०**—पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु सुखी दुःखी मूढोऽहमस्मीत्येवंरूपो यः संगस्तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्येति समासेन पूर्वाध्याये यदुक्तं तदिह सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवा इत्यत आरभ्य गुणस्वरूपं गुणवृत्तं स्ववृत्तेन च गुणानां बन्धकत्वं गुणवृत्तनिबद्धस्य च पुरुषस्य या गतिरित्येतत्सर्वं मिथ्याज्ञानमज्ञानमूलं बन्धकारणं विस्तरेणोक्त्वाऽधुना सम्यग्दर्शनान्मोक्षो वक्तव्य इत्याह भगवान्—नान्यं कार्यकारणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्तारमन्यं यदा द्रष्टा विद्वान्सन्नानुपश्यति। गुणा एव सर्वावस्थाः सर्वकर्मणां कर्तार इत्येवं पश्यति। गुणेभ्यश्च परं गुणव्यापारसाक्षिभूतं वेत्ति मद्भावं मम भावं स द्रष्टाऽधिगच्छति ॥ १९ ॥

**शां० आ०**—कस्मिन्गुणे कथमित्यादिप्रश्नान्प्रत्याख्याय गुणेभ्यो मोक्षणं कथमितिप्रत्याख्यानार्थं वृत्तानुवादपूर्वकं मिथ्याज्ञाननिवर्तकं सम्यग्ज्ञानं प्रस्तौति—**पुरुषस्येत्यादिना**। पुरुषस्य या गतिः सा चेति शेषः। मोक्षो गुणेभ्यो विश्लेषपूर्वको ब्रह्मभावः। सम्यग्ज्ञानोक्तिपरं श्लोकं व्याख्यातुं प्रतीकमादत्ते—**नान्यमिति**। सत्त्वादिविषयस्य गुणशब्दस्य विवक्षितमर्थमाह—**कार्येति**। विद्यानन्तर्यमनुशब्दार्थः। अक्षरार्थमुक्त्वा पूर्वार्धस्याऽऽर्थिकमर्थमाह—**गुणा एवेति**। सर्वावस्थास्तत्तत्कार्यकरणाकारपरिणता इति यावत्। सर्वकर्मणां कायिकवाचिकमानसानां विहितप्रतिषिद्धानामित्यर्थः। परं व्यतिरिक्तम्। व्यतिरेकमेव स्फोरयति—**गुणेति**। निर्गुणब्रह्मात्मानमित्यर्थः। मद्भावं ब्रह्मात्मतामसौ प्राप्नोति ब्रह्मभावोऽस्याभिव्यज्यत इत्यर्थः॥१९॥

**आ० भा०**—परिणामिकर्त्तारं गुणेभ्योऽन्यं न पश्यति। अन्यथा "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इति श्रुतिविरोधः। 'नाहं कर्त्ता न कर्त्ता त्वं कर्त्ता यस्तु सदा प्रभुः' इति मोक्षधर्मे ॥ १९ ॥

**आ० ज०**—नान्यं गुणेभ्यः कर्तारमिति स्वतंत्रकर्तृत्वं गुणानामेव नान्यस्येत्युच्यत इत्यपव्याख्याननिरासार्थमाह—**परिणामीति**। कुत एतदित्यतआह—**अन्यथेति**। गुणेभ्योऽन्यस्य कर्तृत्वाभावे। मोक्षधर्मे परमेश्वरस्य कर्तृत्वमुक्तं तद्विरोधश्चेति वाक्यशेषः ॥ १९ ॥

**रा० भा०**—आहारविशेषैः फलाभिसन्धिरहितसुकृतविशेषैश्च परम्परया प्रवर्द्धितसत्वानां गुणात्ययद्वारेण ऊर्ध्वगमनप्रकारमाह। एवं सात्विकाहारसेवया फलाभिसंधिरहितभगवदाराधनरूपकर्मानुष्ठानैश्च रजस्तमसी सर्वात्मनाभिभूय उत्कृष्टसत्वनिष्ठो यदा यो द्रष्टा गुणेभ्योऽन्यं कर्तारं नानुपश्यति गुणा एव स्वानुगुणप्रवृत्तिषु कर्तार इति पश्यति गुणेभ्यश्च परं वेत्ति कर्तृभ्यो गुणेभ्यश्च परम-

न्यमात्मानमकर्त्तारं वेत्ति स मद्भावमधिगच्छति मम यो भावस्तमधिगच्छति। एतदुक्तं भवति आत्मनः स्वतः परिशुद्धस्वभावस्य पूर्वपूर्वकर्ममूलसङ्गनिमित्तं विविधकर्मसु कर्तृत्वम् आत्मा स्वतस्त्वकर्ता अपरिच्छिन्नज्ञानैकाकार इत्येवमात्मानं पश्यति तदा मद्भावमधिगच्छतीति ॥ १९ ॥

**अ० टी०**—एवं स्वेच्छया स्वक्रीडार्थोत्पादितगुणादिरूपमुक्त्वा कृतोंच्चमध्यनीचादिधर्मेषूच्चत्वादिबुद्धिरहितो मत्क्रीडाज्ञानवांस्तत्संगरहितो यः स मद्भक्तिमाप्नोतीत्येतदर्थमेतन्निरूपितामित्याह—**नान्यमिति** । यदा मत्कृपाविशिष्टकाले द्रष्टा विवेकवान् गुणेभ्यः स्वक्रीडार्थप्रकटरूपेभ्यः कृत्वा कर्तारं सर्वमूलभूतमनुपश्यति नान्यं च पुनः गुणेभ्यो विचित्ररूपेभ्यः परं पुरुषोत्तमं वेत्ति स मद्भावं मद्भक्तिमधिगच्छति प्राप्नोतीत्यर्थः । अत्रायं भावः । गुणकृतनानावैचित्र्यदर्शनेन पुरुषोत्तममाहात्म्यज्ञानेन सर्वत्र तद्वैचित्र्यं पश्यन्तं तत्कर्तारं तद्रूपेणाऽऽविर्भूतम् अनु तद्वदेव यथा भगवान् स्वात्मकमेव पश्यति तथा पश्यति नान्यं कंचन पश्यति स मद्भावं प्राप्नोति ॥ १९ ॥

**नी० टी०**—कथं प्रकृतिः पुरुषं बध्नातीत्यस्योत्तरमुक्तं । कथं वा ततोऽस्य मुक्तिरित्यस्योत्तरमाह—**नान्यमिति** । गुणेभ्यः कार्यकारणविषयाकारपरिणतेभ्योऽन्यं दृशिमात्रमात्मानं द्रष्टा जीवः कर्तारं नानुपश्यति विवेकमनु न पश्यति किंतु गुणा एव कर्तार इत्येव पश्यति नत्वहं कर्तेति । तथा गुणेभ्यः परं गुणव्यापारसाक्षिभूतं मां यदा वेत्ति तदा स वेदिता मद्भावं ब्रह्मभावं गच्छति अन्यदा तु गुणभावं गतो भवति ॥ १९ ॥

## गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ॥
## जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

**शां० भा०**—कथमधिगच्छतीत्युच्यते—गुणानेतान्यथोक्तानतीत्य जीवन्नेवातीक्रम्य मायोपाधिभूतांस्त्रीन्देही देहसमुद्भवान्देहोत्पत्तिबीजभूतान्, जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखानि च तैर्जीवन्नेव विमुक्तः सन्विद्वानमृतमश्नुते । एवंमद्भावमधिगच्छतीत्यर्थः ॥ २० ॥

**शां० आ०**—अनर्थव्रातरूपमपोह्य विद्वान्ब्रह्मत्वं प्राप्नोतीत्येतत्प्रश्नद्वारा विवृणोति—**कथमित्यादिना** । यथोक्तानित्येतदेव व्याचष्टे—**मायेति** । मायैवोपाधिस्तद्भूतांस्तदात्मनः सत्त्वादीननर्थरूपानित्यर्थः । एभ्यः समुद्भवन्तीति समुद्भवा देहस्य समुद्भवा देहसमुद्भवास्तानिति व्युत्पत्तिं गृहीत्वा व्याचष्टे—**देहोत्पत्तीति** । यो विद्वानविद्यामयान्गुणाञ्जीवन्नेवातिक्रम्य स्थितस्तमेव विशिनष्टि—**जन्मेति** । पुरस्ताद्विस्तरेणोक्तस्य प्रसङ्गादत्र संक्षिप्तस्य सम्यग्ज्ञानस्य फलमुपसंहरति—**एवमिति** ॥२०॥

**आ० भा०**—॥ २० ॥

**आ० ज०**—॥ २० ॥

**रा० भा०**—कर्तृभ्यो गुणेभ्योऽन्यमकर्तारमात्मानं पश्यन् भगवद्भावमधिगच्छतीत्युक्तं स भगवद्भावः कीदृश इत्यत्राह । अयं देही देहसमुद्भवान्देहाकारपरिणतप्रकृतिसमुद्भवानेतान्सत्वादींस्त्रीन गुणानतीत्य तेभ्यश्च ज्ञानैकाकारमात्मानं पश्यन् जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमात्मानमनुभवति एष मद्भाव इत्यर्थः ॥ २० ॥

**अ० टी०**—ततो मद्भावयुक्तो गुणदोषाभिभूतो न भवतीत्याह—**गुणानेतानिति** । देही जीवो देहसमुद्भवान् देहानां समुद्भव उत्पत्तिर्येभ्यस्तादृशानेतान् लौकिकान् नत्वलौकिकान् त्रीन् गुणानतीत्य अतिक्रम्य जन्म तत्कर्मभोगार्थकं, मृत्युस्तद्भोगसमाप्तिरूपो भगवद्विस्मरणरूपो वा, जरा सेवाप्रतिबन्धरूपा, दुःखं संसारात्मकम्,

एतैर्विमुक्तः अमृतं मरणादिदोषरहितम् अलौकिकं देहमश्नुते भुङ्क्ते प्राप्नोतीत्यर्थः, अथवा अमृतम् अलौकिकं देहं प्राप्य मया सह सर्वकामानश्नुते "सोश्नुते सर्वान् कामान्सह" इतिश्रुत्युक्तरीत्या देहीतिपदादिदं व्यज्यते, अन्यथा देहवत्पदं व्यर्थं स्यादितिभावः ॥ २० ॥

**नी० टी०**—कथं त्वद्भावं गच्छतीति तत्राह—**गुणानिति**। एतान्गुणान् महदादित्रयोविंशतिविकारात्मना परिणतान् देहसमुद्भवान् स्थूलदेहस्य समुद्भवो येभ्यस्तानतीत्य जीवन्नेवातिक्रम्य निर्विकल्पकसमाध्यभ्यासेन बाधित्वाऽमृतं मोक्षमश्नुते प्राप्नोति। ऐतेनानंदावाप्तिर्गुणात्ययप्रयोजनमुक्त। यतो मुक्तो जन्ममृत्युजरादुःखै-र्विमुक्तः सन्निति तु अनर्थनिवृत्तिरुक्ता ॥ २० ॥

**अर्जुन उवाच—कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ॥**
**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥**

**शां० भा०**—जीवन्नेव गुणानतीत्यामृतमश्नुत इति प्रश्नबीजं प्रतिलभ्य—**कैर्लिङ्गैश्चिह्नैस्त्रीनेता-न्व्याख्यातान्गुणानतीतोऽतिक्रान्तो भवति प्रभो। किमाचारः कोऽस्याचार इति किमाचारः। कथं केन च प्रकारेणैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥**

**शां० आ०**—सम्यग्धीफलं गुणातिक्रमपूर्वकममृतत्वमुक्तं श्रुत्वा मुक्तस्य लक्षणं वक्तव्यमिति प्रकृतं विवक्षित्वा प्रश्नमुत्थापयति—**जीवन्नेवेति**। ये व्याख्याताः सत्त्वादयो गुणास्तत्परिणामभूतानध्यासानतिक्रान्तः सन्कैर्लिङ्गैर्ज्ञातो भवतीति तानि वक्तव्यानि सिद्धयर्थं पूर्वमनुष्ठेयानि पश्चादयत्नलभ्यानि लिङ्गानि, कानि तानीति पृच्छति—**कैरिति**। यथेष्टचेष्टाव्यावृत्त्यर्थं प्रश्नान्तरं—**किमाचार इति**। ज्ञानस्य गुणात्ययोपायस्योक्तत्वादुपायप्रकारजिज्ञासया प्रश्नान्तरं—**कथमिति** ॥ २१ ॥

**आ० भा०**—॥ २१ ॥

**आ० ज०**—॥ २१ ॥

**रा० भा०—अथ गुणातीतस्य स्वरूपसूचनाचारप्रकारं गुणात्ययहेतुं च पृच्छन् अर्जुन उवाच—सत्वादींस्त्रीन्गुणानेतानतीतः कैर्लिङ्गैः कैर्लक्षणैरुपलक्षितो भवति किमाचारः केनाचारेण युक्तोऽसौ अस्य स्वरूपावगतौर्लिङ्गभूताचारः कीदृश इत्यर्थः। कथं चैतान् केनोपायेन सत्वादींस्त्रीन्गुणानतिवर्तते॥२१॥**

**अ० टी०**—एवमेतांस्त्रीन् गुणानिति भगवतोक्तं तेनान्येऽपि गुणाः सन्ति, यैरेतदतिक्रमो भवतीतिविचार्या-ऽर्जुनस्तथैव विज्ञापयति—**कैर्लिङ्गैरिति**। हे प्रभो! सर्वकरणसमर्थ! कैर्लिङ्गैश्चिन्हैरेतान् बन्धनात्मकांस्त्रीन् गुणान् अतीतो भवति, अतिक्रमं कृत्वा अलौकिकदेहवान् भवतीत्यर्थः। ततो देहाप्त्यनन्तरं किमाचारः कीदृ-गाचारवान्। च पुनः। एतांस्त्रीन् गुणानतीत्य कथं केनोपायेन वर्त्तते तं कथयेत्यर्थः ॥ २१ ॥

**नी० टी०**—प्रकृतितो मुक्तिप्रकारे उक्तेऽथ मुक्तलक्षणानि पृच्छन्नर्जुन उवाच—**कैरिति**। कैर्लिंगैश्चिह्नै-स्त्रीन्गुणानेतान् व्याख्यातानतीतो भवति पुमान् हे प्रभो। स च किमाचारः कोऽस्याचारः कथं केन च प्रका-रेणैतांस्त्रीन्गुणानतिक्रम्य वर्तते ॥ २१ ॥

**श्रीभगवानुवाच—प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ॥**
**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥**

**शां० भा०—**गुणातीतस्य लक्षणं गुणातीतत्वोपायं चार्जुनेन पृष्टोऽस्मिञ्श्लोके प्रश्नद्वयार्थं प्रतिवचनम्—यत्तावत्कैर्लिङ्गैर्युक्तो गुणातीतो भवतीति तच्छृणु—प्रकाशं च सत्त्वकार्यं प्रवृत्तिं च रजःकार्यं मोहमेव च तमःकार्यमित्येतानि न द्वेष्टि संप्रवृत्तानि सम्यग्विषयभावेनोद्भूतानि। मम तामसः प्रत्ययो जातस्तेनाहं मूढस्तथा राजसी प्रवृत्तिर्ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्तितः प्रचलितः स्वरूपात्कष्टं मम वर्तते योऽयं मत्स्वरूपावस्थानाद्भ्रंशस्तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन्सुखे च संजनयन्बध्नातीति तानि द्वेष्ट्यसम्यग्दर्शित्वेन। तदेवं गुणातीतो न द्वेष्टि संप्रवृत्तानि। यथा च सात्त्विकादिपुरुषः सात्त्विकादिकार्याण्यात्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति न तथा गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः। एतन्न परप्रत्यक्षं लिङ्गं किं तर्हि स्वात्मप्रत्यक्षत्वादात्मविषयमेवैतल्लक्षणम्। न हि स्वात्मविषयं द्वेषमाकाङ्क्षां वा परः पश्यति॥ २२॥

**शां० आ०—**प्रश्नस्वरूपमनूद्य तदुत्तरं दर्शयति—**गुणातीतस्येति**। पृष्टो भगवानिति संबन्धः। किंवृत्तस्य त्रिधा प्रयोगदर्शनात्प्रश्नद्वयार्थमित्युपलक्षणं प्रश्नत्रयार्थमिति द्रष्टव्यम्। उत्तरमवतार्यानन्तरश्लोकतात्पर्यमाह—**यत्तावदिति**। तानि सम्यग्दर्शी न द्वेष्टीत्युक्तमेव स्पष्टयितुं निषेध्यमसम्यग्दर्शिनो द्वेषं तेषु प्रकटयति—**ममेत्यादिना**। सम्यग्दर्शिनः संप्रवृत्तेषु प्रकाशादिषु द्वेषाभावमुपसंहरति—**तदेवमिति**। न निवृत्तानीत्यादिव्याचष्टे—**यथा चेति**। तेषामनात्मीयत्वं सम्यक्पश्यन्नात्मानुकूलप्रतिकूलतारोपणेन नोद्विजते तेभ्यश्च न स्पृहयतीत्यर्थः। स्वानुभवसिद्धं गुणातीतस्य लक्षणमुक्तमित्याह—**एतन्नेति**। परप्रत्यक्षत्वाभावं प्रपञ्चयति—**न हीति**। आश्रयो विषयः॥ २२॥

**आ० भा०—**प्रायो न द्वेष्टि न कांक्षति। तथा हि सामवेदे भाल्लवेयशाखायाम्। "रजस्तमः सत्वगुणान्प्रवृत्तान्प्रायो न च द्वेष्टि न चापि कांक्षति। तथापि सूक्ष्मं सत्त्वगुणं च कांक्षेद्यदि प्रविष्टं सुतमश्च जह्यात्" इति। 'न हि देवा ऋषयश्च सत्वस्था नृपसत्तम। हीनाः सत्वेन सूक्ष्मेण ततो वैकारिका मताः॥ कथं वैकारिको गच्छेत्पुरुषः पुरुषोत्तमम्' इति मोक्षधर्मे। 'सात्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः' इति च॥ २२॥

**आ० ज०—**प्रकाशं च प्रवृत्तिं चेत्यनेन गुणातीतस्य सर्वथा सत्त्वादिगुणकार्येषु प्रकाशादिषु द्वेषाकांक्षे न स्त इत्युच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह—**प्राय इति**। इदमुक्तं भवति सत्वादयो गुणा द्विविधाः स्थूलाः सूक्ष्माश्च। तत्र स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहाः जायंते सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः। तत्राद्येषु गुणातीतस्य द्वेषाकांक्षे प्रायो न स्तः न तु सर्वथा प्रारब्धवशात्कदाचित्संभवात्। द्वितीयेषु तु आकांक्षादिकं विद्यत एवेति कुत एतदित्यत आह—**तथा हीति**। यद्यपि न द्वेष्टीत्यादिकमुक्तम् तथाऽपि यदि सुतमः सूक्ष्मतमो दैववशात्तं प्रविष्टं स्यात् तदाऽसौ तज्जह्यात् द्विष्यात् गुणातीतानां च सूक्ष्मसत्त्वसद्भावे भारतवाक्यं च पठति—**नहीति**। यदि देवा ऋषयश्च सूक्ष्मेण सत्वेन हीनाः स्युः तदा सत्वस्था इति नोच्येरन् किं तु ततस्तदा वैकारिकाः स्मृताः प्रसज्येरन् ततः किं कथं वैकारिको गच्छेत् पुरुषोत्तमम्। तेषां मोक्षो न स्यादिति यावत्। अस्ति च तेषां मोक्षोऽतः सूक्ष्मसत्ववंत एव त इत्यर्थः। सात्विकः सूक्ष्मसत्ववान्। 'ससूक्ष्मसत्वसंयुक्तः संयुक्तस्त्रिभिरक्षरैः॥ पुरुषः पुरुषं' गच्छेन्निष्क्रियः पंचविंशक इति सूक्ष्मसत्वप्रकरणात् मोक्षार्थनिश्चितो मोक्षलक्षणे पुरुषार्थे निश्चितः॥ २२॥

**रा० भा०—**प्रकाशमिति। आत्मव्यतिरिक्तेषु वस्तुषु अनिष्टेषु संप्रवृत्तानि सत्वरजस्तमसां कार्याणि प्रकाशप्रवृत्तिमोहाख्यानि यो न द्वेष्टि तथा आत्मव्यतिरिक्तेष्विष्टेषु वस्तुषु तान्येव निवृत्तानि न काङ्क्षति॥ २२॥

**अ० टी०—**अत्रोत्तरं मद्गुणैरेव सर्वं भवतीति ज्ञापनाय गुणसंख्याकैः श्लोकैराह भगवान्—**प्रकाशं चेति**। प्रकाशं सर्वद्वारेष्वलौकिकानुभवसिद्ध्यर्थं मदीयाऽलौकिकमत्स्वरूपात्मकसत्त्वोपस्थापिताऽलौकिकानुकर-

णाऽऽत्मकलौकिकरूपम् । इदमेव चकारेण व्यञ्जितम् । च पुनः । तथैव प्रवृत्तिं, चस्त्वर्थे । तथाच महदनुभव-रससिद्धयर्थं विप्रयोगलयाऽऽत्मकरूपं मोहमेव केवलं मोहं वा, एतादृक्श्रवणेऽपि भयाभावाय हेपाण्डव ! न द्वेष्टि मदिच्छागतानलौकिकान् लौकिकसरूपान् किंचैवं सात्त्विकादित्रयाण्येव कार्याणि प्रवृत्तानि मदिच्छया प्राप्नोति । अतएव स्वतः प्रवृत्तिरुक्ता । स्वेच्छात्वज्ञापनाय लौकिकत्वेन प्रतिबन्धकतया न द्वेष्टि तत्त्यागाय यत्नं न करोति । तथैव मदिच्छाभावे निवृत्तानि न काङ्क्षति, स गुणातीत उच्यते इति चतुर्थश्लोकेनाऽन्वयः ॥२२॥

**नी० टी०**—तत्राद्यस्योत्तरमाह—**प्रकाशमिति** । प्रकाशप्रवृत्तिमोहाः तत्वरजस्तमसां कार्याणि व्युत्थानावस्थायां तानि सम्यक्प्रवृत्तानि 'सामान्ये नपुंसकं' तान्संप्रवृत्तान् न द्वेष्टि । नापि समाध्यवस्थायां तानि निवृत्तानि संति कांक्षति । सोऽयं नित्यसमाधिस्थो ब्रह्मविद्वरिष्ठः यं प्रकृत्य श्रीभागवते स्मर्यते 'देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति'इति । अत्र वासिष्ठे सप्तयोगभूमय उक्ताः 'ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ॥ विचारणा द्वितीया तु तृतीया तनुमानसा ॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ॥ पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता' इति । तत्र यथोक्ता साधनसंपत् मुमुक्षांता प्रथमा । श्रवणमननाख्यविचारात्मिका द्वितीया । निदिध्यासनरूपा तृतीया । एताः साधनभूमयः । सत्त्वापत्तिर्ब्रह्मसाक्षात्काररूपा चतुर्थी फलभूता यस्यां योगी कृतार्थोऽपि जीवन्मुक्तिसुखं पुष्कलं नानुभवति । परास्तिस्रो जीवन्मुक्तेरवांतरभेदाः । तत्रापि पंचम्यां भूमौ स्वयं स्थितः स्वयमेव व्युत्तिष्ठति । षष्ठ्यां परप्रयत्नेन सप्तम्यां तु न स्वतः परतो वा व्युत्तिष्ठति सोऽयं नित्यसमाधिस्थः प्रकाशमित्यनेन श्लोकेनोक्तः ॥ २२ ॥

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ॥**
**गुणा वर्तन्त इत्येव योवतिष्ठति नेङ्गते ॥ २३ ॥**

**शां० भा०**—अथेदानीं गुणातीतः किमाचार इति प्रश्नस्य प्रतिवचनमाह—**उदासीनवद्यथो**-दासीनो न कस्यचित्पक्षं भजते तथाऽयं गुणातीतत्वोपायमार्गेऽवस्थित आसीन आत्मविद्गुणैर्यः संन्यासी न विचाल्यते विवेकदर्शनावस्थातः । तदेतत्स्फुटीकरोति गुणाः कार्यकरणविषयाकारपरिणता अन्योन्यस्मिन्वर्तन्त इति योऽवतिष्ठति । छन्दोभङ्गभयात्परस्मैपदप्रयोगः । योऽनुतिष्ठतीति वा पाठान्तरम् । नेङ्गते न चलति स्वरूपावस्थ एव भवतीत्यर्थः ॥ २३ ॥

**शां० आ०**—कैर्लिङ्गैरित्यादि परिहृत्य द्वितीयं प्रश्नं परिहरति—**अथेति** । दृष्टान्तं व्याचष्टे—**यथेति** । उपेक्षकस्य पक्षपाते तत्त्वायोगादित्यर्थः । आत्मविदात्मकौटस्थ्यज्ञानेनाऽऽसीनो निवृत्तकर्तृत्वाभिमानोऽप्रयतमानो भवतीति दार्ष्टान्तिकमाह—**तथेति** । गुणातीतत्वोपायमार्गो ज्ञानमेव । शब्दादिभिर्विषयैरस्य कूटस्थत्वज्ञानात्प्रच्यवनमाशङ्कयाऽऽह —**गुणैरिति** । उपनतानां विषयाणां रागद्वेषद्वारा प्रवर्तकत्वमित्येतत्प्रपञ्चयति—**तदेतदिति** । योऽवतिष्ठति स गुणातीत इत्युत्तरत्र संबन्धः । अवपूर्वस्य तिष्ठतेरात्मनेपदे प्रयोक्तव्ये कथं परस्मैपदमित्याशङ्कयाऽऽह—**छन्दोभङ्गेति** । पाठान्तरे तु बाधितानुवृत्तिमात्रमनुष्ठानम् । करणाकारपरिणतानां गुणानां विषयाकारपरिणतेषु तेषु प्रवृत्तिर्न ममेति पश्यन्नचलतया कूटस्थदृष्टिमात्मनो न जहातीत्याह—**नेङ्गत इति** ॥ २३ ॥

**आ० भा०**—॥ २३ ॥

**आ० ज०**—॥ २३ ॥

**रा० भा०**—उदासीनवदासीनः गुणव्यतिरिक्तात्मावलोकनतृप्त्यान्यत्र उदासीनवदासीनो गुणैर्द्वेषाकाङ्क्षाद्वारेण यो न विचाल्यते गुणाः स्वेषु कार्येषु प्रकाशादिषु वर्त्तन्ते इत्यनुसंधाय यः तूष्णीमवतिष्ठते नेङ्गते न गुणकार्यानुगुणं चेष्टते ॥ २३ ॥

**अ० टी०**—एवं लिङ्गोत्तरमुक्त्वा आचारोत्तरमाह—**उदासीन इति** । उदासीनवत् सुखदुःखप्राप्त्यभावराहित्येन मत्कृतिं साक्षिरूपेण पश्यन्नासीनो गुणैर्लौकिकैर्मत्कृतिं पश्यन्नात्मस्वरूपान्न विचाल्यते । किंच गुणाः भगवदात्मकाः गुणेषु स्वकार्येषु वर्तन्ते स्वत एव भगवदिच्छयेत्येवं प्रकारेणैवावतिष्ठति नेङ्गते न चलति पूर्वरूपात् ॥ २३ ॥

**नी० टी०**—अथ षष्ठ्यां पदार्थाभावन्यां गतो ब्रह्मविद्वरीयानुच्यते—**उदासीनवदिति** । योऽयं समाधावुदासीन इवास्ते व्युत्थाने किमपि प्रयोजनमपश्यन् इदं मम कर्तव्यमस्तीति वासनाशून्यत्वात् य आस्ते एव नतु परप्रयत्नमंतरेण कदाचिदपि गुणैर्विचाल्यते । परेण व्युत्थापितोऽपि गुणान् पश्यन् गुणा वर्तन्त इत्येव ज्ञात्वा योऽवतिष्ठति स्तब्ध एव वर्तते नतु गुणकृतैरिष्टानिष्टस्पर्शैरिंगते चलति । अयमर्थः यथा कश्चिद्भूंजानो रसनामौढ्यात् स्वयं शाकादिरसं न विंदति परेण ज्ञापितोऽपि कंचिद्रसविशेषमुपलभ्यापि तत्रोदासीन एवास्ते झटित्येव विशेषदर्शनस्य तिरोधानात् न तत्कृतं सुखं दुःखं वा पश्यति तद्वदय ज्ञेयः ॥ २३ ॥

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ॥**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिंदात्मसंस्तुतिः ॥ २४ ॥**

**शां० भा०**—किंच—समदुःखसुखः समे दुःखसुखे यस्य स समदुःखसुखः । स्वस्थः स्व आत्मनि स्थितः प्रसन्नः । समलोष्टाश्मकाञ्चनो लोष्टं चाश्मा च काञ्चनं च समानि यस्य स समलोष्टाश्मकाञ्चनः । तुल्यप्रियाप्रियः प्रियं चाप्रियं च प्रियाप्रिये तुल्ये समे प्रियप्रिये यस्य सोऽयं तुल्यप्रियाप्रियः। धीरो धीमान् । तुल्यनिन्दात्मसंस्तुतिर्निन्दा चाऽऽत्मसंस्तुतिश्च निन्दात्मसंस्तुती तुल्ये निन्दात्मसंस्तुती यस्य यतेः स तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

**शां० आ०**—गुणातीतस्य लिङ्गान्तरमाह—**किंचेति** । तयोः समत्वं रागद्वेषानुत्पादकतया स्वकीयत्वाभिमानानास्पदत्वम् । प्रसन्नत्वं स्वास्थ्यादप्रच्युतिरविक्रियत्वम् । विद्वद्दृष्ट्या प्रियाप्रिययोरसंभवेऽपि लोकदृष्टिमाश्रित्याऽऽह—**प्रियं चेति** । प्रियाप्रियग्रहणेन गृहीतानां काञ्चनादीनां ब्राह्मणपरिव्राजकवत्पृथग्ग्रहणम् । निन्दा दोषोक्तिरात्मसंस्तुतिरात्मनो गुणकीर्तनम् ॥२४॥

**आ० भा०**—॥ २४ ॥

आ० ज०—॥ २४ ॥

**रा० भा०**—**समदुःखसुखः दुःखसुखयोः समचित्तः स्वस्थः स्वस्मिन् स्थितस्त्वात्मैकप्रियत्वेन तद्व्यतिरिक्तपुत्रादिजन्ममरणादिसुखदुःखयोः समचित्त इत्यर्थः । तत एव समलोष्टाश्मकाञ्चनः तत एव च तुल्यप्रियाप्रियविषयः । धीरः प्रकृत्यात्मविवेककुशलः अत एव तुल्यनिन्दात्मसंस्तुतिः आत्मनि मनुष्यत्वाद्यभिमानकृतगुणागुणनिमित्तस्तुतिनिन्दयोः स्वासंबन्धानुसंधानेन तुल्यचित्तः ॥ २४ ॥**

**अ० टी०**—किंच समदुःखसुखः समे दुःखसुखे विप्रयोगसंयोगात्मके लौकिकाऽलौकिकदेहरूपे वा यस्य सः। स्वस्थः मत्स्वरूपे स्थितः । अतएव समलोष्टाश्मकाञ्चनः समानि लोष्टाश्मकाञ्चनानि यस्य, सर्वस्य भगवदात्मकत्वात्तादृशः । तुल्यप्रियाप्रियः तुल्ये प्रियाप्रिये संयोगवियोगात्मके यस्य सः । भगवदिच्छाया एव मुख्यत्वादुभयोस्तुल्यत्वम् । धीरः विप्रयोगादितीक्ष्णदुःखसहनशीलः । तुल्यनिन्दात्मसंस्तुतिः तुल्या निन्दा आत्मसंस्तुतिश्च यस्य । अयं भावः । दुष्टकृता निन्दाऽपि भक्तत्वेन स्तुतिप्रायैव ॥ २४ ॥

नी० टी०—अथ पंचम्यां भूमावसंसक्तिनामिकायां स्थितो ब्रह्मविद्वर उच्यते—समेति । समाधौ समे दुःखसुखे यस्य स समदुःखसुखः स्वस्थः स्वेनैव स्वेच्छयैव तिष्ठतीति स्वस्थः । यदा तु न समाधाविच्छा तदा स्वयमेव व्युत्तिष्ठतीति भावः । सोऽपि व्युत्थानावस्थायां समलोष्टाश्मकांचनो विरक्त इत्यर्थः । तुल्यप्रियाप्रियः तुल्यनिंदात्मसंस्तुतिश्च प्रियाप्रिययोर्निंदास्तुत्योश्च प्राप्तौ तुल्यो हर्षविषादशून्यः अत्र हेतुर्धीर इति यथा कश्चिच्छूरस्तीव्रप्रहारवेदनार्त्तोऽपि न व्यामुह्यति धैर्याद्वेदनां चानुभवति । तद्वदयं हर्षविषादावनुभवन्नपि धैर्यान्न चलति । पूर्वस्य तु जातायामपि वेदनायां हर्षाद्युदय एव नास्ति तत्पूर्वस्य तु वेदनैव नास्तीति भेदः । एतेन श्लोकत्रयेण सर्वेषां जीवन्मुक्तानां समाधौ लिंगानि तत्संवेद्यान्याचाराश्च परसंवेद्यानि लिंगान्युक्तानि ॥ २४ ॥

## मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ॥
## सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥

**शां० भा०—किंच—मानापमानयोस्तुल्यः समो निर्विकारः । तुल्यो मित्रारिपक्षयोः, यद्यप्युदासीना भवन्ति केचित्स्वाभिप्रायेण तथाऽपि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्तीति तुल्यो मित्रारिपक्षयोरित्याह । सर्वारम्भपरित्यागी दृष्टादृष्टार्थानि कर्माण्यारभ्यन्त इत्यारम्भाः सर्वानारम्भान्परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः । गुणातीतः स उच्यते । उदासीनवदित्यादि गुणातीतः स उच्यत इत्येतदन्तमुक्तं यावद्यत्नसाध्यं तावत्संन्यासिनाऽनुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः स्थिरीभूतं तु स्वसंवेद्यं सद्गुणातीतस्य यतेर्लक्षणं भवतीति ॥२५॥**

शां० आ०—इतश्च गुणातीतः शक्यो ज्ञातुमित्याह—**किंचेति** । मानः सत्कारस्तिरस्कारोऽपमानः । परदृष्टया यौ सखिशत्रू तयोः पक्षयोर्निर्विशेषो न कस्यचित्पक्षे तिष्ठतीत्याह—**तुल्य इति** । विदुषो मित्रादिबुद्ध्यभावात्तुल्यो मित्रारिपक्षयोरित्ययुक्तमित्याशङ्क्याऽऽह—**यद्यपीति** । सर्वकर्मत्यागे देहधारणमपि निमित्ताभावान्न स्यादित्याशङ्क्याऽऽह—**देहेति** । उक्तविशेषणो गुणातीतो ज्ञातव्य इत्याह—**गुणेति** । यदुक्तमुपेक्षकत्वादितद्विद्योदयात्पूर्वं यत्नसाध्यं विद्याधिकारिणा ज्ञानसाधनत्वेनानुष्ठेयमुत्पन्नायां तु विद्यायां जीवन्मुक्तस्योक्तधर्मजातं स्थिरीभुतं स्वानुभवसिद्धलक्षणत्वेन तिष्ठतीत्युक्ते धर्मजाते विभागं दर्शयति—**उदासीनवदित्यादिना** ॥ २५ ॥

**आ० भा०—तुल्यत्वार्थ उक्तः पुरस्तात् ॥ २५ ॥**

आ० ज०—समदुःखसुखइत्यादिना सर्वथा सुखादौ तुल्यत्वबुद्धिरुच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह—**तुल्यत्वेति** । तुल्यत्ववाचिनः शब्दस्य **यावत्**यर्थः । प्रायः सर्वानित्याद्युक्तरीत्येति भावः ॥ २५ ॥

**रा० भा०—तत्प्रयुक्तमानापमानयोस्तत्प्रयुक्तमित्रारिपक्षयोरपि स्वसंबन्धाभावादेव तुल्यचित्तः तथा देहित्वप्रयुक्तसर्वारम्भपरित्यागी य एवंभूतः स गुणातीत उच्यते ॥ २५ ॥**

अ० टी०—किंच । मानापमानयोस्तुल्यः भगवत्कृतमानापमानयोः स्वीयत्वेन कृतत्वातुल्यः । तुल्यो मित्रारिपक्षयोः भगवदीयेन तदीयत्वेन, मित्रपक्षे कृते तुल्यः भगवदीयभावेन । अरिपक्षे आसुरैर्भगवदीयत्वेन विचारिते भगवदीयत्वेन तथाविचारयन्तीति तेषामुचितमेवेतितद्दोषाऽविचारकत्वात्तुल्यः । सर्वारम्भपरित्यागी सर्वेषां पदार्थानामारम्भानां दृष्टप्रत्ययानां परित्यजनशीलवान् । एवमाचारवान् यः स गुणातीत उच्यते कथ्यत इत्यर्थः ॥ २५ ॥

नी० टी०—अथ चतुर्थ्यां भूमौ सत्त्वापत्तिसंज्ञायां स्थितस्य योगिनः समाधिसुखाभावेन स्वसंवेद्यलिंगाभावात्तत्त्वनिश्चयेन द्वैतस्य बाधाल्लिंगमाचारश्च परसंवेद्य एव तदाह—मानेति। यथा हि परीक्षकः कूटकार्षापणस्य लाभे विनाशे वा हर्षविषादशून्यो न च तल्लाभार्थं यत्नमारभते। मूढस्तु ताभ्यां बाध्यते तल्लाभार्थं यत्नं चारभते। एवं विद्वान् द्वैतं मरुमरीचिकाह्रदसमानं पश्यन् तत्र मानापमानयोर्वा मित्रारिपक्षयोर्वा तुल्य एव न त्वन्यतरलाभाय परिहाराय वा यत्नमारभते अतो गुणातीत इत्युच्यते सर्वत्र पदार्थः स्पष्टः ॥ २५ ॥

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥**

**शां० भा०—अधुना कथं च त्रीन्गुणानतिवर्तत इति प्रश्नस्य प्रतिवचनमाह—मां चेश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वाऽव्यभिचारेण न कदाचिद्यो व्यभिचरति भक्तियोगेन भजनं भक्तिः सैव योगस्तेन भक्तियोगेन सेवते स गुणान्समतीत्यैतान्यथोक्तान्ब्रह्मभूयाय भवनं भूयो ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥ २६ ॥**

शां० आ०—प्रश्नद्वयमेवं परिहृत्य तृतीयं प्रश्नं परिहरति—**अधुनेति**। मच्छब्दस्य संसारिविषयत्वं व्यावर्तयति—**ईश्वरमिति**। तत्रैव नारायणशब्दान्मूर्तिभेदो व्यावर्त्यते। तस्य ताटस्थ्यं व्यवच्छिनत्ति—**सर्वेति**। मुख्यामुख्याधिकारिभेदेन विकल्पः। भक्तियोगस्य याद‌ृच्छिकत्वं व्यवच्छेत्तुमव्यभिचारेणेत्युक्तम्। तद्व्याचष्टे—**नेति**। भजनं परमप्रेमा स एव युज्यतेऽनेनेति योगः। सेवते पराक्चित्ततां विना सदाऽनुसंदधातीत्यर्थः। स भगवदनुग्रहकृतसम्यग्धीसंपन्नो विद्वाञ्जीवन्नेवेत्यर्थः ॥ २६ ॥

**आ० भा०—ब्रह्मवत्प्रकृतिवद्भगवत्प्रियत्वं ब्रह्मभूयम्। न तु तावत्प्रियत्वं किंतु प्रियत्वमात्रम्। 'बद्धा वापि तु मुक्ता वा न रमावत्प्रिया हरेः' इति पाद्मे। भूयाय भावाय ॥ २६ ॥**

आ० ज०—ब्रह्मभूयायेत्यस्य परब्रह्मत्वायेति व्याख्यानं प्रमाणविरुद्धमिति भावेनान्यथा व्याचष्टे—**ब्रह्मवदिति**। नात्र ब्रह्मशब्दः परं ब्रह्म किं तु मम योनिर्महद्ब्रह्मेति प्रकृता प्रकृतिरेव ब्रह्मणो हि प्रतिष्ठाऽहमित्युत्तरवाक्यात्। तद्रूपं च न तादात्म्यं किं तु तद्वद्भगवत्प्रियत्वमेव अन्यस्यान्यभावायोगादिति भावः। तत्किं यावत्प्रकृतेर्भगवत्प्रियत्वं तावद्गुणातीतस्येत्यतः सप्रमाणमाह—**न त्विति**। तत्किं भूयशब्दः प्रियत्ववाची येनैवं व्याख्यायत इत्यत आह—**भूयायेति**। भुवो भाव इति वचनाद्भावो भवनं भूयशब्दार्थः। ब्रह्मवद्भावो ब्रह्मभूयम्। वदः सुपीति सुबंतमात्रस्योपपदस्यानुवृत्तेः। वत्यर्थस्य च वृत्तावंतर्भावात्। मयूरव्यंसकादितिवत्। वत्यर्थश्च प्रियत्वमिति तदुक्तमिति भावः ॥ २६ ॥

**रा० भा०—अथैवं रूपगुणात्यये प्रधानहेतुमाह। 'नान्यं गुणेभ्यः कर्तारम्' इत्यादिनोक्तेन प्रकृत्यात्मविवेकानुसंधानमात्रेण न गुणात्ययः प्राप्स्यते तस्यानादिकालप्रवृत्तविपरीतवासनाबाध्यत्वसंभवात्। मां सत्यसंकल्पपरमकारुणिकमाश्रितवात्सल्यजलधिमव्यभिचारैणैकान्त्यविशिष्टेन भक्तियोगेन च यः सेवते स एतान् सत्त्वादीन् गुणान् दुरत्ययानतीत्य ब्रह्मभूयाय ब्रह्मत्वाय कल्पते ब्रह्मभावयोग्यो भवति। यथावस्थितमात्मानममृतमव्ययं प्राप्नोतीत्यर्थः ॥ २६ ॥**

अ० टी०—कथं गुणानतिवर्त्तत इत्यत्रोत्तरमाह—**मां चेति**। चस्त्वर्थे मां मदर्थे अव्यभिचारेण अनन्यात्मकेन भक्तियोगेन यः सेवते स एतान् गुणान् समतीत्य सम्यगतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय कल्पते समर्थो भवति ॥ २६ ॥

नी० टी०—अथ कथं त्रीन् गुणानतिवर्तत इत्यस्योत्तरं विवक्षन् साधनभूतासु तिसृषु तृतीयां तनुमानसामाह—मां चेति। यश्च साधको मा प्रत्यगात्मानं चकारस्त्वर्थे पूर्वभूमिस्थापेक्षया अस्य वैलक्षण्यं द्योतयति अव्यभिचारेण वृत्त्यंतरानंतरितेन भक्तियोगेन मयि भगवति तैलधारावदविच्छिन्नवृत्तिप्रवाहे मनःप्रणिधानरूपेण योगेन सेवते ध्यायति स एवं सूक्ष्मीकृतचित्त एतान् गुणान् समतीत्य ध्यानपरिपाकांते सत्त्वमपि बाधित्वा ब्रह्मभूयाय ब्रह्मभावाय कल्पते योग्यो भवति। भुवो भाव इति भवतेर्भावे क्यप् ॥ २६ ॥

**ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च॥**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥ २७॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगोनाम चतुर्दशोऽध्यायः ॥ १४ ॥

शां० भा०—कुत एतदित्युच्यते—ब्रह्मणः परमात्मनो हि यस्मात्प्रतिष्ठाऽहं प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठाऽहं प्रत्यगात्मा। कीदृशस्य ब्रह्मणोऽमृतस्याविनाशिनोऽव्ययस्याविकारिणः शाश्वतस्य च नित्यस्य धर्मस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्याऽऽनन्दरूपस्यैकान्तिकस्याव्यभिचारिणः। अमृतादिस्वभावस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा सम्यग्ज्ञानेन परमात्मतया निश्चीयते। तदेतद्ब्रह्मभूयाय कल्पत इत्युक्तम्। यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्तते सा शक्तिर्ब्रह्मैवाहं शक्तिशक्तिमतोरनन्यत्वादित्यभिप्रायः। अथवा ब्रह्मशब्दवाच्यत्वात्सविकल्पकं ब्रह्म तस्य ब्रह्मणो निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठाऽऽश्रयः। किंविशिष्टस्यामृतस्यामरणधर्मकस्याव्ययस्य व्ययरहितस्य। किंच शाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तज्जनितस्यैकान्तिकस्यैकान्तनियतस्य च प्रतिष्ठाऽहमिति वर्तते ॥ २७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

शां० आ०—विद्वान्ब्रह्मैवेत्यत्र हेतुं पृच्छति—**कुत इति**। तत्रोत्तरमाह—**उच्यत इति**। ब्रह्मशब्दस्यासति बाधके मुख्यार्थग्रहणमभिप्रेत्याऽऽह—**परमात्मन इति**। तं प्रति प्रत्यगात्मनो यत्प्रतिष्ठात्वं तदुपपादयति—**प्रतितिष्ठतीति**। यद्ब्रह्म प्रत्यगात्मनि प्रतितिष्ठति तत्किंविशेषणमित्यपेक्षायामुक्तम्—**अमृतस्येत्यादि**। तत्रामृतशब्देनाव्ययशब्दस्य पुनरुक्तिं परिहरति—**अविकारिण इति**। नित्यत्वमपक्षयराहित्यं तेन पूर्वाभ्यामपौनरुक्त्यम्। प्रसिद्धार्थस्य धर्मशब्दस्य ब्रह्मण्यनुपपत्तिमाशङ्कयाऽऽह—**ज्ञानेति**। अर्थेन्द्रियसंबन्धोत्थं सुखं व्यावर्तयितुमैकान्तिकस्येत्युक्तम्। अक्षरार्थमुक्त्वा वाक्यार्थमाह—**अमृतादीति**। प्रतिष्ठा यस्मादिति पूर्वेण संबन्धः। तस्मात्प्रत्यगात्मा परमात्मतया निश्चीयते सम्यग्ज्ञानेनेति योजना। अस्य श्लोकस्य पूर्वश्लोकेनैकवाक्यतामाह—**तदेतदिति**। विवक्षितं वाक्यार्थं प्रपञ्चयति—**ययेति**। सा शक्तिर्ब्रह्मैवेति कथं सामानाधिकरण्यं तत्राऽऽह—**शक्तीति**। व्याख्यानान्तरमाह—**अथवेति**। विशेषणानि पूर्ववदपौनरुक्त्यानि नेतव्यानि। तदनेनाध्या-

येन क्षेत्रक्षेत्रज्ञसंयोगस्य संसारकारणत्वं पञ्चप्रश्ननिरूपणद्वारेण च सम्यग्ज्ञानस्य सकलसंसारनिवर्तकत्वमित्येतदुपपादयता मुमुक्षोर्यत्न-साध्यं गुणैरचाल्यत्वादि मुक्तस्यायत्नसिद्धं लक्षणमिति निर्धारितम् ॥ २७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने चतुर्दशोऽध्यायः ॥ १४ ॥

**आ० भा०—ब्रह्मणो मायायाः ॥ २७ ॥**

**इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥**

**आ० ज०**—ब्रह्मणो हीत्येतत्परब्रह्मणो हीति व्याचक्षते तदसत् प्रतिष्ठाऽहमिति वचनात् । उपचारोऽसाविति चेत् न । मुख्ये संभवति तदुपादानायोगादिति भावेनाह—**ब्रह्मण इति** । मायेतिप्रकृता महालक्ष्मीः ॥ २७ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां चतुर्दशोऽध्यायः ॥ १४ ॥

**रा० भा०—हि शब्दो हेतौ । यस्मादहमव्यभिचारिभक्तियोगेन सेवितोऽमृतस्याव्ययस्य च ब्रह्मणः प्रतिष्ठा तथा शाश्वतस्य च धर्मस्य अतिशयितनित्यैश्वर्यस्य ऐकान्तिकस्य सुखस्य च "वासुदेवः सर्वम्" इत्यादिना निर्दिष्टस्य ज्ञानिनः प्राप्यस्य सुखस्येत्यर्थः । यद्यपि शाश्वतधर्मशब्द प्रापकवचनः यथापि पूर्वोत्तरयोः प्राप्यरूपत्वेन तत्साहचर्य्यादयमपि प्राप्यलक्षकः । एतदुक्तं भवतिः सर्वत्र 'दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते' इत्यारभ्य गुणात्ययस्य तत्पूर्वकाक्षरैश्वर्यभगवत्प्राप्तीनां च भगवत्प्रपत्त्येकोपायतायाः प्रतिपादितत्वात् । तदेकान्तभगवत्प्रपत्त्ये-कोपायो गुणात्ययस्तत्पूर्वकब्रह्मभावश्चेति ॥ २७ ॥**

**इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमद्गीताभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥**

**अ० टी०**—ब्रह्मशब्दस्याऽक्षरवाचकत्वे तद्भावे धर्मात्मकभाव एव भविष्यति न मुख्यभाव इत्यत आह—**ब्रह्मण इति** । हीति निश्चयेन यस्माद्धेतोः ब्रह्मणः अक्षरात्मकस्यापि प्रतिष्ठास्थितिरूपोऽहमेव अमृतस्य मोक्षस्य, अव्ययस्य नित्यात्मकवैकुण्ठस्यापि शाश्वतस्य नित्यरूपस्य शास्त्रीयभक्त्यादिरूपस्य धर्मस्य च । च पुनः । तथा एकान्तिकस्य रक्षात्मकस्य भावादिरूपस्य सुखस्याऽहं प्रतिष्ठा मूलमित्यर्थः । अत एवमेतैरुत्पन्नो भावो मदात्मक एवेतिभावः ॥ २७ ॥

'एवं चतुर्दशेऽध्याये गुणानां स्वस्वरूपताम् ॥ द्विरूपतां च क्रीडार्थं प्रोक्तवानर्जुनं हरिः ॥'

इति श्रीभगवद्गीताऽमृततरङ्गिण्यां चतुर्दशोऽध्यायः ॥ १४ ॥

**नी० टी०**—विषयप्रदर्शनद्वारा विचारणाख्यां द्वितीयां भूमिमाह—**ब्रह्मणो हीति** । ब्रह्मणो वेदस्य प्रतिष्ठा तात्पर्येण पर्यवसानस्थानमहमेव । अमृतस्य कर्मब्रह्मोभयदर्शनद्वाराऽमृतसाधनस्य अव्ययस्य अनादि-त्वादनंतत्वाच्चापौरुषेयत्वेनाप्रामाण्यशंकाकलंकशून्यस्य स्वतःप्रमाणभूतस्येत्यर्थः । एतेनोपक्रमोपसंहारादिपर्यालोच-नया वेदाविरुद्धतर्कोपकरणया कृत्स्नस्य वेदस्य तात्पर्यं मद्दर्शनकामेन निर्णेतव्यमिति विचारणाख्या द्वितीया

भूमिरुक्ता। हेतुफलोपदर्शनमुखेन शुभेच्छाख्यां प्रथमां भूमिमाह—शाश्वतस्येति। काम्यकर्मवत्फलदानेन नाशाभावात् भगवत्यर्पितो नित्यो धर्मः शाश्वतः विविदिषादिपारंपर्येण मोक्षाख्यशाश्वतफलहेतुत्वात्। शाश्वतस्य च धर्मस्य प्रतिष्ठा परमं प्राप्यं फलमहमेव। तथा ऐकांतिकं विषयसंगजन्यसुखव्यभिचारिस्वरूपभूतं मोक्षसुखं तस्यापि प्रतिष्ठा पराकाष्ठा अहमेव। एवं निष्कामधर्मेण विशुद्धचित्तस्यैकांतिकसुखेच्छा भवति सेयं शुभेच्छाख्या प्रथमा भूमिः अत्र परां परां भूमिमारोढुमशक्तस्य पूर्वा पूर्वा भूमिरुपदिश्यते। यथा ध्यानेनात्मनि पश्यंतीत्यत्र निदिध्यासनाशक्तस्य सांख्यनामा विचारस्तत्राप्यशक्तस्य कर्मयोग उपदिश्यते तद्वत् ॥ २७ ॥

इति भीष्मपर्वणि नैलकंठीये भारतभावदीपे चतुर्दशोऽध्यायः ॥ १४ ॥

( श्लोकानामादितः समष्ट्यङ्काः—५२१ )

## ॥ अथ पञ्चदशोऽध्यायः ॥ १५ ॥

**श्रीभगवानुवाच—ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

**शां० भा०—यस्मान्मदधीनं कर्मिणां कर्मफलं ज्ञानिनां च ज्ञानफलमतो भक्तियोगेन मां ये सेवन्ते ते मत्प्रसादाज्ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति किमु वक्तव्यमात्मनस्तत्त्वमेव सम्यग्विजानन्त इत्यतो भगवानर्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुरुवाच—ऊर्ध्वमूलमित्यादि। तत्रतावद्वृक्षरूपककल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति विरक्तस्य हि संसाराद्भगवत्तत्त्वज्ञानेऽधिकारो नान्यस्येति—ऊर्ध्वमूलं कालतः सूक्ष्मत्वात्कारणत्वान्नित्यत्वान्महत्त्वाच्चोर्ध्वमुच्यते ब्रह्माव्यक्तमायाशक्तिमत्तन्मूलमस्येति सोऽयं संसारवृक्ष ऊर्ध्वमूलः। श्रुतेश्च—"ऊर्ध्वमूलोऽर्वाक्शाखः" इति। पुराणे च—'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः। बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा। धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः। एतद्ब्रह्मवनं चैव ब्रह्माऽऽचरति नित्यशः॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना। ततश्चाऽऽत्मरतिं प्राप्य यस्मान्नाऽऽवर्तते पुनः' इत्यादि॥ तमूर्ध्वमूलं संसारमायामयं वृक्षमधःशाखं महदहंकारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधःशाखस्तमधःशाखं न श्वोऽपि स्थातेत्यश्वत्थस्तं क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्ति। अव्ययं संसारमायामयमनादिकालप्रवृत्तत्वात्सोऽयं संसारवृक्षोऽव्ययोऽऽनाद्यनन्तदेहादिसंतानाश्रयो हि सुप्रसिद्धस्तमव्ययम्। तस्यैव संसारवृक्षस्येदमन्यद्विशेषणं छन्दांसि छादनादृग्यजुःसामलक्षणानि यस्य संसारवृक्षस्य पर्णानीव पर्णानि। यथा वृक्षस्य परिरक्षणार्थानि पर्णानि तथा वेदाः संसारवृक्षपरिरक्षणार्था धर्माधर्मतद्धेतुफलप्रकाशनार्थत्वात्। यथाव्याख्यातं संसारवृक्षं समूलं यस्तं वेद स वेदविद्वेदार्थविदित्यर्थः। नहि संसारवृक्षादस्मात्समूलाज्ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्त्यतः सर्वज्ञः स यो वेदार्थविदिति समूलवृक्षज्ञानं स्तौति ॥१॥**

**शां० आ०**—ज्ञानेन गुणात्यये दर्शिते नाशित्वे तेषां विना ज्ञानेनानत्ययादनाशित्वे तेनापि तदयोग्यत्वान्न ज्ञानं गुणात्ययहेतुरित्याशङ्कां निरस्य साक्षादेव श्रवणादिहेतुं संन्यासं विधित्सुर्ब्रह्मत्वस्य परमपुरुषार्थतां च विवक्षुरध्यायान्तरमारभते—**यस्मादिति** । कर्मिणो ज्ञानिनश्च शास्त्रेऽधिकृतास्तत्र कर्मिणां कर्मानुकूलं फलमीश्वरायत्तं "फलमत उपपत्तेः" इति न्यायाज्ज्ञानिनामपि तत्फलमीश्वरायत्तमेव ततो ह्यस्य बन्धविपर्ययावित्युक्तत्वाद्यस्मादेवं तस्माद्ये भक्त्याख्येन योगेन मामेव सेवन्ते ते मत्प्रसादद्वारा ज्ञानं प्राप्य गुणातीता मुक्ता भवन्तीति स्थितमित्यर्थः । ये त्वात्मनस्तत्त्वमेव संदेहाद्यपोहेन जानन्ति ते तेन ज्ञानेन गुणातीताः सन्तो मुक्तिं गच्छन्तीति किमु वक्तव्यमित्यर्थसिद्धमर्थमाह—**किमु वक्तव्यमिति** । आत्मतत्त्वाज्ञानं यतः संसारहेतुः, ज्ञानं मोक्षानुकूलमतोऽर्जुनेन किं तदित्यपृष्टमपि तत्त्वं भगवानुक्तवान्प्रश्नाभावेऽपि तस्य तद्व्युत्पादनाभिमानादित्याह—**अत इति** । तत्त्वे विवक्षिते किमिति संसारो वर्ण्यते तत्राऽऽह—**तत्रेति** । अध्यायादिः सप्तम्यर्थः । वैराग्यमपि किमिति मृग्यते तत्राऽऽह—**विरक्तस्येति** । इति वैराग्याय संसारवर्णनमिति शेषः । नाशसंभावनायै वृक्षरूपकं बन्धहेतोर्दर्शयति—**ऊर्ध्वमूलमिति** । कथं कालतः सूक्ष्मत्वं तदाह—**कारणत्वादिति** । तदेव कथं कार्यापेक्षया नियतपूर्वभावित्वादित्याह—**नित्यत्वादिति** । सर्वव्यापित्वाच्चोत्कर्षं संभावयति—**महत्त्वाच्चेति** । ऊर्ध्वमुच्छ्रितमुत्कृष्टमिति यावत् । तस्य कूटस्थस्य कथं मूलत्वमित्याशङ्क्याऽऽह—**अव्यक्तेति** । स्मृतिमूलत्वेन श्रुतिमुदाहरति—**श्रुतेश्चेति** । अर्वाञ्च्यो निकृष्टाः शाखा इव महदाद्या यस्य स तथा । प्रकृते संसारवृक्षे पुराणसंमतिमाह—**पुराणे चेति** । अव्यक्तमव्याकृतं तदेव मूलं तस्मात्प्रभवनं प्रभवो यस्य स तथा तस्यैव मूलस्याव्यक्तस्यानुग्रहादतिदृढत्वादुत्थितः संवर्धितः । तस्य लौकिकवृक्षसाधर्म्यमाह—**बुद्धीत्यादिना** । वृक्षस्य हि शाखाः स्कन्धादुद्भवन्ति संसारस्य च बुद्धेः सकाशान्नानापरिणामा जायन्ते तेन बुद्धिरेव स्कन्धस्तन्मयस्तत्प्रचुरोऽयं संसारतरुरिन्द्रियाणामन्तराणि च्छिद्राणि कोटराणि यस्य स तथा । महान्ति भूतानि पृथिव्यादीन्याकाशान्तानि विशाखा स्तम्भा यस्य स तथा । आजीव्यत्वमुपजीव्यत्वं, ब्रह्मणाऽधिष्ठितो वृक्षो ब्रह्मवृक्षस्तथाऽपि ज्ञानं विना छेत्तुमशक्यतया सनातनश्चिरंतनः । एतच्च ब्रह्मणः परस्याऽऽत्मनो वनं वननीयं संभजनीयमत्र हि ब्रह्म प्रतिष्ठितं तस्य वृक्षस्य संसाराख्यस्य तदेव ब्रह्म सारभूतमथवाऽस्य ब्रह्मवृक्षस्यानवच्छिन्नस्य संसारमंडलस्य तदेतद्ब्रह्म वनमिव वनं वननीयं संभजनीयं न हि ब्रह्मातिरिक्तं संसारस्याऽऽस्पदमस्ति ब्रह्मैवाविद्यया संसरतीत्यभ्युपगमादित्यर्थः । अहं ब्रह्मेति दृढज्ञानेनोक्तं संसारवृक्षं छित्त्वा प्रतिबन्धकाभावादात्मनिष्ठो भूत्वा पुनरावृत्तिरहितं कैवल्यं प्राप्नोतीत्याह—**एतदिति** । अधःशाखमित्येतद्व्याचष्टे—**महदिति** । आदिशब्देनेन्द्रियादिसंग्रहः । संसारवृक्षस्यातिचञ्चलत्वे प्रमाणमाह—**प्राहुरिति** । क्षणध्वंसिनोऽव्ययत्वं विरुद्धमित्याशङ्क्याऽऽह—**संसारेति** । तदेवोपपादयति—**अनादीति** । छादनं रक्षणं प्रावरणं वा कर्मकाण्डानि खल्वारोहावरोहफलानि नानाविधार्थवादयुक्तानि संसारवृक्षं रक्षन्ति तच्छिद्रं दोषं चाऽऽवृण्वन्ति ते तानि च्छन्दांसि पर्णानीव भवन्तीत्यर्थः । तदेव प्रपञ्चयति—**यथेति** । उक्तेऽर्थे हेतुमाह—**धर्मेति** । कर्मकाण्डानां वेदानामिति शेषः । कर्मब्रह्माख्यसर्ववेदार्थस्य तत्रान्तर्भावमुपेत्य व्याचष्टे—**वेदार्थेति** । समूलसंसारवृक्षज्ञानेऽमूलं हित्वा मूलमेव निष्कृष्य ज्ञातुं शक्यमिति तज्ज्ञानार्थं प्रयतितव्यमिति मत्वा तज्ज्ञानस्तुतिरत्र विवक्षितेत्याह—**न हीति** ॥ १ ॥

**आ० भा०—संसारच्छेत्रे नमः ॥ ॐ संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति । ऊर्ध्वो विष्णुः "ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि द्रविण ँ सवर्चसम्" इति हि श्रुतिः । ऊर्ध्वः उत्तमः सर्वतः अधोनिकृष्टं शाखा । भूतानि श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । तथाऽपि न प्रवाहव्ययः पूर्वब्रह्मकाले यथास्थितिः । तथा सर्वत्रापीत्यव्ययता फलकारणत्वाच्छंदसां पर्णत्वम् न हि कदाचिदप्यजाते पर्णे फलोत्पत्तिः ॥ १ ॥**

**आ० ज०**—अध्यायप्रतिपाद्यमर्थमाह—**संसारेति** । संसरत्यनेनेति संसारः प्रकृत्यादिकं क्षेत्रम् । पूर्वाध्याये संसारैकदेशानां गुणानामेव वृत्तं दर्शितम् अत्र पुनः समग्रं संसारस्वरूपं प्रदर्श्य तदत्ययेच्छामुत्पाद्य तत्साधनजिज्ञासुं प्रति प्रागुक्तं साधनं प्रपंचयति । तत्प्रसंगादलौकिकं भगवन्महिमानं च दर्शयत्यनेनाध्यायेनेत्यर्थः । जगद्वृक्षस्योर्ध्वमूलत्वं घटयितुमूर्ध्वशब्दाभिधेयं तावदाह—**ऊर्ध्व इति** । कुतः श्रौतप्रयोगादित्याह—**ऊर्ध्वेति** । आदौ तावदहमूर्ध्वेन विष्णुना पवित्रो निष्पापोऽस्मि ततो वाजिरूपश्च नेता च वाजिनीः सूर्यः तत्र वसतीति वाजिनीवसुः तेन वाजिनीवसुना विष्णुना अमृतं प्रारब्धकर्मनिर्मुक्तश्चास्मि । "स तेजसि सूर्ये संपन्नः" इति श्रुतेः । ततश्च तेनैव सवर्चसं सप्रभं अनुभूयमानमिति यावत् । द्रविणं धनं सुखं चास्मीत्यर्थः । वर्चसशब्दोऽकारान्तोऽप्यस्ति "ब्रह्महस्तिभ्यां वर्चसः" इत्यत्र योगविभागात्समासांतो वा । विष्णुप्रसंगदर्शनाय श्रुतिशेषोदाहरणम् । इदानीं तस्य तत्र प्रवृत्तौ निमित्तमाह—**ऊर्ध्व इति** । उन्नतो ह्यूर्ध्व उच्यते अतो ब्रह्मादिलो-

कस्थत्वादिलक्षणा सूक्ष्मत्वादिगुणयोगो वा नाश्रयणीयः सर्वतः सर्वस्मात्प्रपंचात् सर्वैश्च गुणैः । अधःशाखमित्येतद्व्यत्यन्नधःशब्दार्थं तावदाह—**अध इति** । शाखाः का इत्यत आह—**शाखा इति** । तानि हि मूलपेक्षयाऽपकृष्टानि । ननु वृक्षमात्रस्य सारूप्यमभिदधता कथमश्वत्थत्वमस्योच्यत इत्यत आह—**श्वोऽपीति** । "सुपिस्थ" इति कः । श्वसः सकारस्य तकारो धातुसकारस्य लोपश्च निरुक्तत्वात् । श्वस्स्थाता श्वत्थः श्वत्थो न भवतीत्यश्वत्थः किमुत कालांतरइत्यपिशब्दः । ननु पदार्थानां बहुकालस्थायित्वदर्शनात्कथमेतदित्यत उक्तम्—**एकेति** । तिष्ठतीतिलडर्थेऽनादरसूचनाय लट् । अथवाऽपिशब्देन वर्तमानातीतयोः समुच्चयः । ततः क्रियाप्रबंधे लट् । तर्ह्यव्ययमिति व्याघात इत्यत आह—**तथाऽपीति** । विकारित्वेऽपि एतदपि नास्ति । जगत्प्रवाहस्य प्रलये व्ययादित्यत आह—**पूर्वेति** । छंदसां पर्णत्वं घटयति—**फलेति** । फलकारित्वसादृश्यादित्यर्थः । तत्र फलं मोक्षादिकम् । छंदसां वेदानाम् । स्यादिदं यदि पर्णानां फलकारणत्वं स्यात्तदेव कुतः । अन्वयव्यतिरेकाभ्यामित्याह—**न हीति** । किं तु जात एवेत्यन्वयोऽपि वाच्यः ॥ १ ॥

**रा० भा०—क्षेत्राध्याये क्षेत्रक्षेत्रज्ञभूतयोः प्रकृतिपुरुषयोः स्वरूपं विशोध्य विशुद्धस्यापरिच्छिन्नज्ञानैकाकारस्यैव पुरुषस्य प्राकृतगुणसङ्गप्रवाहनिमित्तो देवाद्याकारपरिणतप्रकृतिसंबन्धोऽनादिरित्युक्तम् । अनन्तरे चाध्याये पुरुषस्य कार्यकारणोभयावस्थप्रकृतिसंबन्धो गुणसङ्गमूलो भगवतैव कृत इत्युक्त्वा गुणसङ्गप्रकारं सविस्तरं प्रतिपाद्य गुणसङ्गनिवृत्तिपूर्वकात्मयाथात्म्यावाप्तिश्च भगवद्भक्तिमूलेत्युक्तम् । इदानीं भजनीयस्य भगवतः क्षराक्षरात्मकबद्धमुक्तविभूतियुक्तां विभूतिभूतात् क्षराक्षरपुरुषद्वयात् निखिलहेयप्रत्यनीककल्याणैकतानतयात्यन्तोत्कर्षरूपेण विसजातीयस्य पुरुषोत्तमत्वं च वक्तुमारभते । तत्र तावदसङ्गरूपशस्त्रच्छिन्नबन्धामक्षराख्यविभूतिं च वक्तुं छेद्यरूपं बन्धाकारेण विततमचित्परिणामविशेषमश्वत्थवृक्षाकारं कल्पयन् श्रीभगवानुवाच । यं संसाराख्यमश्वत्थमूर्ध्वमूलमधःशाखमव्ययं चाहुः श्रुतयः "ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातनः । ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति" इत्याद्याः सप्तलोकोपरि निविष्टचतुर्मुखादित्वेन तस्य ऊर्ध्वमूलत्वं पृथिवीनिवासिसकलनरपशुमृगपक्षिकृमिकीटपतंगस्थावरान्ततयाधःशाखत्वम् असङ्गहेतुभूतात् असम्यग् ज्ञानोदयात् प्रवाहरूपेणाच्छेद्यत्वेनाव्ययत्वं यस्य चाश्वत्थस्य छन्दांसि पर्णान्याहुः छन्दांसि श्रुतयः "वायव्यं श्वेतमालभेत भूतिकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इत्यादिश्रुतिप्रतिपादितैः काम्यकर्मभिर्विवर्द्धते अयं संसारवृक्ष इति छन्दांस्येव अस्य पर्णानि पत्रैर्हि वृक्षो वर्द्धते । यस्तमेवंभूतमश्वत्थं वेद स वेदवित् वेदो हि संसारवृक्षस्य छेदोपायं वदति छेद्यस्य वृक्षस्य स्वरूपज्ञानं छेदनोपायज्ञानोपयोगीतिवेदविदित्युच्यते ॥ १ ॥**

**अ० टी०—**श्रीकृष्णाय नमः ॥ 'स्वरूपज्ञानरहिता भक्तिर्नैवोपयुज्यते ॥ पुरुषोत्तमरूपं तु ततः पञ्चदशेऽवदत ॥१॥ परीतः पार्थकृपया श्रीकृष्णः करुणानिधिः ॥ उद्दिधीर्षुश्च तद्द्वारा लोकं भक्तिप्रवर्तित्तम् ॥ २ ॥' पूर्वाऽध्याये'मां च योऽव्यभिचारेण भक्तियोगेन सेवत'इत्यनेनाऽनन्यभजनमुक्तम् । तत्सिद्ध्यर्थं स्वपुरुषोत्तमस्वरूपं सपरिकरं वदिष्यन् सार्द्धश्लोकद्वयेन तदङ्गत्यागज्ञापनाय स्वलीलात्मकसंसारवृक्षाद्भिन्नं संसारस्वरूपं वृक्षरूपेणाऽऽह—**उर्ध्वमूलमित्यादिना** । ऊर्ध्वः पुरुषोत्तमो मूलं यस्य स्वक्रीडार्थं प्रकटितत्वात् । अधः जीवादयः सेवार्थोत्पादिताः शाखा यस्य तम् । अव्ययं लीलार्थकत्वान्नित्यं स्थास्यति, दुर्लभत्वाज्जीवदर्शनयोग्यमतो व्यासादयोऽश्वत्थं प्राहुः । यस्य पर्णानि पत्राणि छायोपयोग्यानि तापापहानि भगवत्स्वरूपभगवद्भजनादिप्रतिपादकत्वेन छन्दांसि वेदाः । 'य' इति दुर्लभाधिकारित्वम् । वेदं वेत्ति जानाति स वेदवित्, वेदार्थज्ञानवानित्यर्थः ॥ १ ॥

**नी० टी०**—पूर्वाध्यायांते सुखस्यैकांतिकस्य प्रतिष्ठा पराकाष्ठाऽहमित्युक्तं तत्र किं लक्षणं तत्सुखं केन वा आवृतं केन वा साधनेनास्यावरणभंगः केन वाऽधिकारिणा तत्प्राप्यमित्यादि वर्णयितुं पंचदशोऽध्याय आरभ्यते—ऊर्ध्वमूलमिति। "आनंदाद्ध्येव खल्विमानि भूतानि जायंते" इति श्रुतिप्रसिद्धं मानुषानन्दमारभ्योत्तरोत्तरशतगुणविवृद्धानंदसोपानपंक्तेरुपरि स्थितं परमानंदाद्वयं वस्तु ऊर्ध्वं तदेव मूलं मूलकारणमस्य संसाराश्वत्थस्य तमूर्ध्वमूलं। अधःशाखं ऊर्ध्वादधोधः सोपानस्थानीयाः शाखा इव शाखाः अव्यक्तमहदहंकारपंचतन्मात्रा षोडशविकारहिरण्यगर्भविराट्प्रजापतिसुरगंधर्वासुरनरातिर्यक्स्थावररूपा यस्य सोधःशाखस्तं। न श्वोऽपि स्थातुं योग्यमनृतत्वादश्वत्थं संसारवृक्षं। तथाऽप्यव्ययं मूढानामनाद्यनंतं प्राहुर्वेदाः। "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः" इत्यादयः। छंदांसि वेदास्तदुपलक्षिता यज्ञादयस्त एव पर्णानि पर्णसंघातवत् शोभाहेतवो यस्य तरोस्तमश्वत्थं यो वेद मिथ्यात्वेन स एव वेदवित् विदितवेद्य इत्यर्थः। अत्राश्वत्थरूपकेण संसारो वर्ण्यते ॥ १ ॥

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ॥**
**अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

**शां० भा०**—तस्यैव संसारवृक्षस्यापराऽवयवकल्पनोच्यते—अधो मनुष्यादिभ्यो यावत्स्थावरमूर्ध्वं च यावद्ब्रह्मा विश्वसृजो धर्म इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगता गुणप्रवृद्धा गुणैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृता उपादानभूतैर्विषयप्रवाला विषयाः शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्योऽङ्कुरी भवन्तीव तेन विषयप्रवालाः शाखाः। संसारवृक्षस्य परममूलमुपादानं कारणं पूर्वमुक्तमथेदानीं कर्मफलजनितरागद्वेषादिवासनामूलानीव धर्माधर्मप्रवृत्तिकारणान्यवान्तरभावीनि तान्यधश्च देहाद्यपेक्षया मूलान्यनुसंततान्यनुप्रविष्टानि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावी येषामुद्भूतिमनुभवतीति तानि कर्मानुबन्धीनि मनुष्यलोके विशेषतोऽत्र हि मनुष्याणां कर्माधिकारः प्रसिद्धः ॥ २ ॥

**शां० आ०**—अवयवसंबन्धिन्यपरा प्रागुक्तादतिरिक्ता कल्पनेति यावत्। आमनुष्यलोकादाविरिञ्चेरित्यधःशब्दार्थमाह—**मनुष्यादिभ्य इति**। तस्मादेवाऽऽरभ्याऽऽसत्यलोकादित्यूर्ध्वंशब्दार्थमाह—**यावदिति**। शाखाशब्दार्थं दर्शयति—**ज्ञानेति**। तेषां हेत्वनुगुणत्वेन बहुविधत्वं सूचयति—**यथेति**। प्रत्यक्षाणां शब्दादिविषयाणां प्रवालत्वं शाखासु पल्लवत्वम्। अङ्कुरत्वं स्फोरयति—**देहादीति**। ऊर्ध्वमूलमित्यत्र संसारवृक्षस्य मूलमुक्तं किमिदानीमधश्च मूलानीत्युच्यते तत्राऽऽह—**संसारेति**। अनुप्रविष्टत्वं सर्वेषु लिङ्गेष्वनुगततया संततत्वमविच्छिन्नत्वम्। रागादीनां कर्मफलजन्यत्वं प्रकटयति—**कर्मेति**। कर्मणां रागादीनां मिथो हेतुहेतुमत्त्वम्। तेषां तथात्वेनावच्छिन्नतया प्रवृत्तिविशेषतो मनुष्यलोके भवतीत्यत्र हेतुमाह—**अत्र हीति**। कर्मव्युत्पत्त्या प्राणिनिकायो लोकः। मनुष्यश्चासौ लोकश्चेत्यधिकृतो ब्राह्मण्यादिविशिष्टो देहो मनुष्यलोकः ॥ २ ॥

**आ० भा०**—अव्यक्तेपि सूक्ष्मरूपेण संति शरीरादौ च भूतानीत्यधश्चोर्ध्वं च प्रसृताः गुणैः सत्वादिभिः। प्रतीतिमात्रसुखत्वात्प्रवालाः विषयाः। मूलानि भगवद्रूपादीनि। भगवानपि कर्मानुबंधेन हि फलं ददाति। तथा च भाल्लवेयशाखायाम्। "ब्रह्म वाऽस्य पृथङ्मूलं प्रकृतिः समूलं सत्वादयोऽर्वाचीनमूलम्। भूतानि शाखा छंदांसि पर्णानि देवा नृतिर्यञ्चश्च शाखाः। पत्रेभ्यो हि फलं जायते। मात्राः शिफाः। मुक्तिः फलं अमुक्तिः फलं। मोक्षो रसोऽमोक्षो रसः। अव्यक्ते च शाखाः व्यक्ते च शाखा अव्यक्ते च मूलं व्यक्ते च मूलं एषोऽश्वत्थोगुणालोलपत्रो न स्थीयते न स्थीयते न ह्येष कदाचनान्यथा जायते नान्यथा जायत" इति ॥ २ ॥

आ० ज०—अधश्चेत्येतद्घटयति—**अव्यक्तेऽपीति** । अनेन तस्य शाखा भूतान्यधश्च स्वापेक्षयाऽप्रकृष्टे शरीरादौ कार्ये चोर्ध्वं च उत्तमे कारणेऽव्यक्ते च प्रसृताः । सूक्ष्मरूपेण संतीतिव्याख्यातं भवति । प्रसृता इत्यनेनोच्यंत इतिशेषः । अधः पातालादावूर्ध्वं स्वर्गादावित्यादिव्याख्याने प्रकृतप्रक्रिये प्रसज्येते । गुणशब्दस्यानेकार्थत्वात् गुणप्रवृद्धा इत्यत्र विवक्षितमर्थमाह—**गुणैरिति** । अर्वाचीनमूलैर्हि शाखाः प्रवृद्धा भवंति । सत्वादयश्चार्वाचीनमूलानीति वक्ष्यंते । विषयाणां प्रवालत्वं घटयति—**प्रतीतिमात्रेति** । प्रतीतिसमयमात्रसुखहेतुत्वादित्यर्थः । विमर्दनासहत्वसाम्यादिति भावः । विषया प्रवाला इति संबंधः । अधश्च मूलानीत्यत्र रागद्वेषादिवासनामूलानीति व्याख्यानमसत् । प्रक्रमविरोधादिति भावेनाह—**मूलानीति** । आदिपदेन जडाजडप्रकृत्योः सत्वादीनां च ग्रहणम् । तेषामप्यूर्ध्वमूलमित्यत्र विवक्षितत्वात् । ननु भगवतः कथं कर्मानुबंधित्वमित्यत आह—**भगवानपीति** । अत्र कर्मानुबंधित्वं नाम कर्मानुसारित्वम् । तच्च कर्मसंबंधेन फलदातृत्वाद्भगवतोऽपि युक्तमित्यर्थः । यद्वा कर्मैवानुबंधश्चरमभाविकारणं कर्मानुबंधस्तद्वत्त्वं कर्मानुबंधित्वम् । तदपि कर्मानुबंधेन फलदातृत्वाद्भगवतो युज्यतइति । श्लोकद्वयार्थे श्रुतिसंमतिं चाह—**तथा चेति** । अस्य जगद्वृक्षस्य पृथग्वृक्षानंतर्गतम् । सद्भूतं मूलं समूलं अर्वाचीनमूलं भूम्यंतर्गतपादाख्यं छंदांसीत्यस्योपपादनम्—**पत्रेभ्यो हीति** । देवादिशरीराणि चोपशाखाः । मात्राः भूतसूक्ष्माणि । शिफाः जटाः । मुक्त्यमुक्तिशब्दाभ्यां मोक्षतदितरपुरुषार्थसाधने ज्ञानकर्मणी उच्येते । फलमवांतरम् । मोक्षामोक्षशब्दाभ्यां तु पुरुषार्थावेव रसः श्रेष्ठं फलम् । गुणाविषयाः । अलोलपत्राणि प्रवालपर्णानि यस्यासौ तथोक्तः । न स्थीयत इत्यनेनाश्वत्थशब्दार्थकथनम् । तर्हि क्षणिकः । न स्थीयते प्रवाहव्ययो नास्तीत्यर्थः । तस्योपपादनम्—**न हीति** । द्विरुक्तिस्तात्पर्यार्था ॥ २ ॥

**रा० भा०—तस्य मनुष्यादिशाखस्य वृक्षस्य तत्तत्कर्मकृता अपराश्च अधःशाखाः पुनरपि मनुष्यपश्वादिरूपेण प्रसृता भवन्ति ऊर्ध्वं च गन्धर्वयक्षदेवादिरूपेण प्रसृता भवन्ति ताश्च । गुणप्रवृद्धाः गुणैः सत्त्वादिभिः प्रवृद्धाः विषयप्रवालाः शब्दादिविषयपल्लवाः । कथमित्यत्राह । अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके । ब्रह्मलोकमूलस्य अस्य वृक्षस्य मनुष्याग्रस्य अधो मनुष्यलोके मूलान्यनुसंततानि च कर्मानुबन्धीनि कर्माण्येवानुबन्धीनि मूलान्यधो मनुष्यलोके च भवन्तीत्यर्थः । मनुष्यत्वावस्थायां कृतैर्हि कर्मभिरधो मनुष्यपश्वादय ऊर्ध्वं च देवादयो भवन्ति ॥ २ ॥**

अ० टी०—एवं क्रीडाऽऽत्मकं वृक्षं निरूप्य तत एव संसाराऽऽत्मकवृक्षोत्पत्तिमाह—**अधश्चोर्ध्वमिति** । तस्य अलौकिकवृक्षस्य अधः विविधजीवादिषु, ऊर्ध्वं लीलावतारादिषु शाखाः प्रसृताः अनेकरूपेण विस्तारं गताः । चकारेणाऽधः प्रसृतानामपि दर्शनानन्दप्रकारेण लीलौपयिकता ज्ञापिता । किंच गुणैः सात्त्विकादिभिः सेचनेनैव प्रकर्षेण वृद्धाः वृद्धिं गताः । किंच । विषयरूपादयः प्रवालाः पल्लवस्थानीया जाताः । किंच तासां शाखानां लौकिकानुबन्धार्थम् अधः जीवादिषु मूलान्यनुसंततानि प्ररूढानि । प्रयोजनमाह, मनुष्यलोके कर्म अनुबन्धः पश्चाद्भवनं येषां तदर्थं तादृशानि, मनुष्यलोकोत्पन्नानां कर्मप्रवृत्त्या सृष्ट्याद्यर्थम् ॥ २ ॥

नी० टी०—अधश्च मानुषेभ्यस्तिर्यक्स्थावरादयोवीच्यंताः । ऊर्ध्वं च मानुषेभ्य एवोपरि च गंधर्वयक्षादिहिरण्यगर्भपर्यंतं प्रसृताः प्रसरं प्राप्तास्तस्य शाखाः । गुणैः सत्वादिभिः प्रकर्षेण वृद्धाः गुणप्रवृद्धाः । विषया एव रंजकतया कोमलपल्लवरूपाणि प्रवालानि यासां ताः । संसारवृक्षस्योपरिमूलं ब्रह्म उक्तं । अधश्च इह मनुष्यलोके च तस्य मूलानि वासनारूपाण्यवांतरमूलान्यनुसंततानि प्रवाहनित्यानि । यतः कर्मानुबन्धीनि कर्मैव धर्माधर्माख्यमनुबन्धः पश्चाद्भावि येषां तानि कर्मानुबंधीनि । वासनाभ्यः कर्माणि कर्मभ्यो वासना इत्यनवरत संतानोऽयं वृक्ष इत्यर्थः ॥ २ ॥

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ॥**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥**

**शां० भा०**—यस्त्वयं वर्णितः संसारवृक्षः—न रूपमस्येह यथा वर्णितं तथा नैवोपलभ्यते स्वप्नमरीच्युदकमायागन्धर्वनगरसमत्वाद्दृष्टनष्टस्वरूपो हि स इत्यत एव नान्तो न पर्यन्तो निष्ठा समाप्तिर्वा विद्यते। तथा न चाऽऽदिरिति आरभ्यायं प्रवृत्त इति न केनचिद्गम्यते। न च संप्रतिष्ठा स्थितिर्मध्यमस्य न केनाचिदुपलभ्यते। अश्वत्थमेनं यथोक्तं सुविरूढमूलं सुष्ठु विरूढानि विरोहं गतानि मूलानि यस्य तमेनं सुविरूढमूलमसङ्गशस्त्रेणासङ्गः पुत्रवित्तलोकैषणादिभ्यो व्युत्थानं तेनासङ्गशस्त्रेण दृढेन परमात्माभिमुख्यनिश्चयदृढीकृतेन पुनःपुनर्विवेकाभ्यासाश्मनिशितेन छित्त्वा संसार वृक्षं सबीजमुद्धृत्य ॥ ३ ॥

**शां० आ०**—पुनः पुना रागादिना प्रवृत्तत्वेनानादित्वान्न संसारवृक्षः समुच्छिद्यते न चोच्छेत्तुं शक्यते केनापीत्याशङ्क्याऽऽह—**यस्त्विति**। यथा पूर्वं वर्णितं यथा च लोके प्रसिद्धं तथाऽस्य रूपमिह शास्त्रादनुमीयते तथा चास्य ज्ञानापनोद्यत्वं युक्तमित्याह—**यथेति**। तस्याप्रमितत्वे हेतुमाह—**स्वप्नेति**। तस्य स्वप्नादिसमत्वे दृष्टनष्टस्वरूपत्वं हेतुं करोति—**दृष्टेति** इत्यमेयतेति शेषः। तमेवामेयत्वं हेतुं कृत्वाऽवसनमपि तस्य न भातीत्याह—**अत एवेति**। ज्ञानं विना भ्रान्तिवासनाकर्मणामन्योन्यनिमित्तत्वान्नावसानमस्तीत्यर्थः। इदं प्रथमत्वमपि नास्य परिच्छेत्तुं शक्यमित्याह—**तथेति**। आद्यन्तवन्मध्यमपि नास्य प्रामाणिकमित्याह—**मध्यमिति**। संसारवृक्षस्याश्वत्थशब्दितस्य क्षणभंगुरस्य स्वयमेवोच्छेदसंभवात्तदुच्छेदार्थं न प्रयतितव्य मित्याशङ्क्याऽऽह—**अश्वत्थमिति**। व्युत्थानं वैराग्यपूर्वकं पारिव्राज्यम्। दृढीकृतत्वमेव विवेकपूर्वकत्वेन स्फुटयति—**पुनः पुनरिति** ॥ ३ ॥

**आ० भा०**—यथास्थितस्तथा नोपलभ्यते। अंतादिर्विष्णुः। 'त्वमादिरंतो जगतोऽस्य मध्यम्'इति भागवते। 'अनाद्यंतं परं ब्रह्म न देवा ऋषयो विदुः'इति च मोक्षधर्मे। असंगशस्त्रेण संगराहित्यसहितेन ज्ञानेन। 'ज्ञानासिनोपासनया सितेन'इति भागवते। छेदश्च विमर्श एव। ततश्च तस्यैवाबंधकं भवति। तथा हि मूलस्थं ब्रह्म प्रतीयते। तच्चोक्तम् तच्छ्रुतावेव। "विमर्शो ह्यस्य छेदः। स तन्न बध्नाति बध्नाति चान्यान्"इति ॥ ३ ॥

**आ० ज०**—अस्य रूपं नोपलभ्यत इत्युक्ते प्रमाणबाधः। अत उक्तम्—**तथेति**। तत्सापेक्षमित्यतः पूरयति—**यथेति**। विकारित्वादिनेत्यर्थः। जगतो देशकालाभ्यां परिच्छेदस्योपलभ्यमानत्वान्नांत इत्याद्युक्तमयुक्तमित्यत आह—**अंतादिरिति**। संहर्तृत्वादेरिति शेषः। अत्र संमतिमाह—**त्वमिति**। मध्यं स्थितेःकर्ता। तस्यानुपलभ्यमानत्वे प्रमाणमाह—**अनादिति**। आद्यंतरहितम्। असंग एव शस्त्रमिति व्याख्यानमसदिति भावेनाह—**असंगेति**। असंगः संगराहित्यं तेन सहितं ज्ञानमसंगशस्त्रम्। दध्योदनादिवत्। वृत्तौ साहित्यस्यांतर्भावादप्रयोग इति भावः। प्रतीतार्थः कुतो नेत्यतो ज्ञानस्यैव तत्र कारणत्वोक्तेरित्याह—**ज्ञानेति**। छित्त्वेत्यस्य सबीजमुद्धृत्येति व्याख्यानमसदिति भावेनाह—**छेदश्चेति**। चरस्त्वर्थः विमर्शो विवेकः। व्याख्यानांतरपरित्यागेनैवं व्याख्याने को हेतुरित्यत आह—**ततश्चेति**। यतोविमर्श एव प्रकृत्यादेर्विश्वस्य छेदो न सर्वथोद्धारणम्। तत एव तस्यैकस्यैवेदमबंधकं भवतीति युज्यते। अन्यथैकेन छेदे कृते सर्वमुक्तिः स्यादिति भावः। इतश्चायमेव छेद इत्याह—**तथाहीति**। अत्र ह्यश्वत्थमेनं छित्त्वा ततः परं तत्परिमार्गितव्यमिति विश्वछेदस्य ब्रह्मप्रतीतानुपायत्वमुच्यते। तथाहि। विश्वस्य कार्यत्वादिना विमर्शे सति कार्यस्य कारणापेक्षत्वात् चेतनानधिष्ठितादुपादानादुत्पत्त्यसंभवात्परतंत्राणां मुख्यतोऽधिष्ठातृत्वायोगान्मूलस्थमुपादानकारणाधिष्ठातृ ब्रह्म प्रतीयते न विश्वविनाशे। अतो योग्यतावशाद्विमर्श एव छेदो न विनाश इति गम्यत इत्यर्थः। विश्वमिथ्यात्वज्ञानमेव छेद इति चेत् न। अस्य मिथ्याज्ञानत्वात् श्रुतिसंवादाच्चैवमेवेत्याह—**तच्चेति**। "तं वै प्रपद्ये यं वै प्रपद्ये"इति तच्छ्रुतावेव अतस्तं छेदकमेव ॥ ३ ॥

**रा० भा०**—अस्य वृक्षस्य चतुर्मुखादित्वेन ऊर्ध्वमूलत्वं तत्संतानपरम्परया मनुष्याग्रत्वेन अधःशाखत्वं मनुष्यत्वे कृतैः कर्मभिर्मूलभूतैः पुनरप्यधश्चोर्ध्वं च प्रसृतशाखत्वमिति यथेदं रूपं निर्दिष्टं

न तथा संसारिभिरुपलभ्यते। मनुष्योऽहं देवदत्तस्य पुत्रो यज्ञदत्तस्य पिता तदनुरूपपरिग्रहश्च इत्येतावन्मात्रमुपलभ्यते। तथास्य वृक्षस्यान्तो विनाशोऽपि गुणमयभोगेष्वसङ्गकृत इति नोपलभ्यते तथास्य गुणसङ्ग एवादिरिति नोपलभ्यते। तस्य प्रतिष्ठा चात्मन्यात्माभिमानरूपमज्ञानमिति नोपलभ्यते। प्रतितिष्ठत्यस्मिन्नेवेतिह्यज्ञानमेवास्य प्रतिष्ठा। अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा। एनमुक्तप्रकारं सुविरूढमूलं सुष्टु विविधं रूढमूलमश्वत्थं सम्यक्ज्ञानं मूलेन दृढेन गुणमयभोगासङ्गाख्येन शस्त्रेण छित्त्वा ॥ ३ ॥

अ० टी०—ननु कथं तैः सृष्टिरित्यत आह—**न रूपमिति**। इहाऽस्मिन् लौकिके संसारे कर्मासक्तानाम् अस्य तच्छाखारूपत्वे सत्यपि तथाऽलौकिकक्रीडात्मकं रूपं न लभ्यते। नच अन्तः, क्रीडात्मकेन नित्यत्वात्। नच आदिः, पुरुषोत्तममूलकत्वेनाऽनादित्वात्। नच पुनः संप्रतिष्ठा स्थितिः। तस्माल्लौकिकसंसारात्मकवृक्षं छित्त्वा पुनरलौकिकान्वेषणं कार्यमित्याह—**अश्वत्थमिति**। एनं परिदृश्यमानं लौकिकम् अश्वत्थं नश्वरं सुविरूढमूलं दृढं, दृढेन निश्चयात्मकेन असंगशस्त्रेण एतन्मध्यपातिदुष्टविषयादिदोषपर्यालोचनसंगाभावात्मकेन शस्त्रेणैतच्छेदपटुना च्छित्त्वा भिन्नं कृत्वा ॥ ३ ॥

नी० टी०—ननु श्वोऽपि स्थातुमनर्हश्चाव्ययश्चेत्युक्ते प्रतिक्षणविनाशिविज्ञानसंतानरूपो वा व्रीह्यादिवत्प्रवाहनित्योवाऽयं संसारस्तर्हिदुरुच्छेद्यो वासनानां कर्मणां च बीजांकुरवदन्योन्यजन्महेतुत्वस्यावर्जनीयत्वादित्याशंक्य सत्त्वासत्त्वाभ्यामनिर्वचनीयोऽयमित्येतं पक्षमाश्रित्य परिहरति—**न रूपमिति**। रज्जूरगस्येवास्य रूपं सम्यग्दृशावीक्ष्यमाणं सन्नोपलभ्यते इह जीवत्येव देहे। यथा पूर्वमज्ञानदशायां तथा नोपलभ्यते ज्ञानदशायां। तेनास्यमृषात्वमनुभवैकवेद्यमित्युक्तं एतेनानुपलभ्यरूपत्ववचनेन स्वप्रकाशानां विज्ञानानां रूपवतां बीजादीनां च सादृश्यस्य व्यावृत्तिः। तर्हि शशविषाणवत्तुच्छ एवायं स्यादित्यत आह—**नांतो न चादिरिति**। उपादानस्य मूलाज्ञानस्याद्यंतशून्यत्वादयमप्याद्यंतशून्य इत्यर्थः। तर्ह्यात्मवदपरिहार्यः स्यादित्याशंक्याह। नच संप्रतिष्ठा अस्य प्रतिष्ठाख्यं लयस्थानं वृक्षस्य भूमिरिव नास्ति। न चायं ब्रह्मणो विकारो येन तत्रैव लीयते। न चेष्टापत्तिः ब्रह्मणः कौटस्थ्यभंगापत्तेः। किं तर्हि तुच्छमज्ञानमस्योपादानं तस्मिंश्च ज्ञानेन विनष्टे समूलस्यास्योच्छेदो भवत्यज्ञानस्य च तुच्छत्वं। "तुच्छेनाभ्वमिहितं यदासीत्" इत्यादिश्रुत्या। तत्कार्यस्य रज्जूरगादेः प्रलये तदनुपलंभस्यानुभवेन च सिद्धं। तस्मादस्य प्रतिष्ठा नोपलभ्यत इति युक्तमेवोक्तं तमेनमश्वत्थं वासनानां दार्ढ्यात् सुविरूढमूलं दृढतरमूलमप्यसंगशस्त्रेण संगो देहादितादात्म्यबुद्धिस्तद्वर्जनमसंगः स एव शस्त्रं तेन दृढेन परिपक्वेन छित्त्वा ततः पदं तत्परिमार्गितव्यमित्युत्तरेणान्वयः। यद्यपि स्थूलसूक्ष्मयोः संसारयोरसंगः सुषुप्तौ स्वयमेव जायते तेन तन्मूलवासनाभिरप्यात्मनोऽसंगोऽनुमीयते तथापि वासनामूलस्याज्ञानस्याज्ञानेनानुच्छेदान्नासंगधीर्दृढा भवति तस्मान्निर्विकल्पसमाध्यभ्यासेन कारणशरीरस्याप्यसंगः साध्यः तेन चासंगशस्त्रेणास्य च्छेदो मूलोच्छेदो लवणोदकवद्रज्जूरगवद्वा प्रविलापनरूपः कर्तव्यः। न तु सांख्यानामिव स्वरूपेण सतः परिवर्जनमात्रम् ॥ ३ ॥

**ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ॥**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

शां० भा०—तत इति। ततः पश्चात्पदं वैष्णवं तत्परिमार्गितव्यं परिमार्गणमन्वेषणं ज्ञातव्यमित्यर्थः। यस्मिन्पदे गताः प्रविष्टा न निवर्तन्ति नाऽऽवर्तन्ते भूयः पुनः संसाराय। कथं परिमार्गित-

व्यमित्याह तमेव च यः पदशब्देनोक्त आद्यमादौ भवं पुरुषं प्रपद्य इत्येवं परिमार्गितव्यं तच्छरणतयेत्यर्थः । कोऽसौ पुरुष इत्युच्यते यतो यस्मात्पुरुषात्संसारमायावृक्षप्रवृत्तिः प्रसृता निःसृतैन्द्रजालिकादिव माया पुराणी चिरंतनी ॥ ४ ॥

शां०आ०—उद्धृत्य किं कर्तव्यं तदाह—**तत इति** । पश्चादश्वत्थादूर्ध्वं व्यवस्थितमित्यर्थः । किं तत्पदं यदन्विष्य ज्ञातव्यं तदाह—**यस्मिन्निति** । येन सर्वं तं पूर्णं पूर्षु वा शयानं पुरुषं प्रपद्ये शरणं गतोऽस्मीत्यर्थः । विवर्तवादानुरोधिनं दृष्टान्तमाह—**ऐन्द्रेति** ॥ ४ ॥

**आ० भा०**—तदर्थं च तमेव प्रपद्ये प्रपद्येत ।तच्चोक्तम् तत्रैव "तं वै प्रपद्येत यं वै प्रपद्य न शोचति न हृष्यति न जायते न म्रियते तद्ब्रह्म मूलं तच्छित्सुः" इति । 'नारायणेन दृष्टश्च प्रतिबुद्धो भवेत्पुमान्' इति च मोक्षधर्मे । छेदनोपायो ह्यत्राकांक्षितः । न च भगवतोऽन्यः शरण्योऽस्ति ॥ ४॥

**आ० ज०**—वाक्यार्थस्य समाप्तत्वात्तमेव चाद्यमिति व्यर्थमित्यतः संगतिं सूचयन्नाह—**तदर्थं चेति** । विमर्शार्थेच । विश्वविमर्शाद्ब्रह्मज्ञानं भवतु स विमर्श एव कथं स्यादित्याकांक्षां तदर्थमित्यनेन सूचयति । तर्हि चिच्छिदिषुं प्रति तदुपायो विधेयो न तु प्रपद्य इतिवचनं संगतमित्यतो व्यत्ययो बहुलमिति वचनमाश्रित्याह—**प्रपद्येतेति** । कुतो व्यत्यय इत्यतः श्रुतिस्मृतिसंवादादित्याह—**तच्चेति** । तद्विश्वं छित्सुः । अभ्यासलोप इडभावश्च छांदसः । चिच्छिदिषुः । विश्वविमर्शार्थीयतद्ब्रह्म विश्वस्य मूलं तमेव पुरुषं प्रपद्येतेत्यर्थः । प्रपत्त्या प्रसन्नेन नारायणेन दृष्टः पुमान्प्रतिबुद्धो विश्वविमर्शक्षमो भवेदित्यर्थः । इतश्च पुरुषव्यत्ययोऽत्र व्याख्येय इत्याह—**छेदनेति** । अतस्तदुपादाय विधानमेव संगतमिति शेषः । न केवलमुत्तमपुरुषोऽत्रानुपयुक्तः किं त्वयुक्तश्चेत्याह—**न चेति** । तमेव प्रपद्य इत्येवं परिमार्गितव्यमिति संबंधस्त्वयुक्तः अस्य परिमार्गणत्वाभावात् ॥ ४ ॥

**रा० भा०**—ततो विषयासङ्गाद्धेतोस्तत्पदं परिमार्गितव्यम् अन्वेषणीयं यस्मिन् गता भूयो न निवर्तन्ते । कथमनादिकालप्रवृत्तो गुणमयभोगसङ्गस्तन्मूलं च विपरीतज्ञानं निवर्तत इत्यत्राह । अज्ञानादिनिवृत्तये तमेव चाद्यं कृत्स्नस्यादिभूतम् । 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ॥ मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।' इत्यादिषूक्तमाद्यं पुरुषमेव शरणं प्रपद्येत् तमेव शरणं प्रपद्येत । यतः यस्मात्कृत्स्नस्य स्रष्टुरियं गुणमयभोगसङ्गप्रवृत्तिः पुराणी पुरातनी प्रसृता । उक्तं हि मयैव पूर्वमेतत् 'दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥' इति । प्रपद्ये यतः प्रवृत्तिरिति वा पाठः । तमेव चाद्यं पुरुषं प्रपद्य शरणमुपगम्य इत्यर्थः। अज्ञाननिवृत्त्यादेः कृत्स्नस्यैतत्साधनभूता पुराणी प्रवृत्तिः प्रसृता पुरातनानां मुमुक्षूणां प्रवृत्तिः पुराणी पुरातना हि मुमुक्षवो मामेव शरणमुपगम्य निर्मुक्तबन्धाः संजाता इत्यर्थः ॥ ४ ॥

**अ० टी०**—ततः पदमिति । ततस्तदनन्तरं तत्पदम् अलौकिकस्य तस्य मूलभूतं परिमार्गितव्यं परितो विचारपूर्वकमालोचनरीत्या मार्गितव्यम् अन्वेषणीयम् । अन्वेषणे प्रयोजनमाह—**यस्मिन्निति** । यस्मिन् पदे गताः प्राप्ताः भूयो न निवर्तन्ते संसारे नागच्छन्तीत्यर्थः । कथमन्वेषणीयमित्यत आह—**तमेवेति** । यतः पुरुषोत्तमात् पुराणी सनातनी नित्या प्रवृत्तिर्भक्त्यात्मिका भगवदनुप्रवृत्तिः प्रसृता विस्तृता प्रकटिता तमेव आद्यं च पुनः पुरुषं भावात्मतया पुरुषरूपं शरणं प्रपद्ये व्रजामीतिभावः ॥ ४ ॥

**नी० टी०**—तमिममश्वत्थं छित्त्वा किं कर्तव्यमत आह—**तत इति** । न केवलं निर्विकल्पसमाधिना तदसंगमात्रेण कृतार्थता किं तर्हि ततोऽसंगानंतरं तत् श्रुतिप्रसिद्धं पदं पदनीयं ब्रह्म परिमार्गितव्यं श्रुतियुक्तिबलेनाह-

मेव ब्रह्मास्मीति ज्ञातव्यं। यस्मिन्पदे निर्विकल्पे गताः प्राप्ताः संतो न निवर्तंति न पुनर्निवर्तंते। तमेव प्रत्यगानंदमाद्यं पुरुषं पुरि शरीरे शयानमहमपि प्रपद्ये शरणागतोऽस्मीति भावयेत्। भगवत एव वा इदं वचनं लोकशिक्षार्थं वर्त एव च कर्मणीतिवत्। कोऽसौ पुरुषः यतः पुराणी आद्या प्रवृत्तिः। "सोऽकामयत बहु स्यां प्रजायेय" इतीत्येवंरूपा प्रसृता अस्मास्वपि प्रवृत्ता। यतो वयमपि इदानीं कामयामहे धनादिना वयं भूयांसः स्याम प्रजया प्रजायेमहीति चेति। येनेयं प्रवृत्तिर्दर्शिता तत्प्रणामेनैव सा निवर्तिष्यत इत्यर्थः ॥ ४ ॥

## निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ॥
## द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥

**शां० भा०—कथंभूतास्तत्पदं गच्छन्तीत्युच्यते—निर्मानमोहा मानश्च मोहश्च मानमोहौ तौ निर्गतौ येभ्यस्ते निर्मानमोहा मानमोहवर्जिता जितसङ्गदोषाः सङ्ग एव दोषः सङ्गदोषो जितः सङ्गदोषो यैस्ते जितसङ्गदोषा अध्यात्मनित्याः परमात्मस्वरूपालोचनानित्यास्तत्परा विनिवृत्तकामा विशेषतो निर्लेपेन निवृत्ताः कामा येषां ते विनिवृत्तकामा यतयः संन्यासिनो द्वंद्वैः प्रियाप्रियादिभिर्विमुक्ताः सुखदुःखसंज्ञैः परित्यक्ता गच्छन्त्यमूढा मोहवर्जिताः पदमव्ययं तद्यथोक्तम् ॥ ५ ॥**

**शां० आ०**—परिमार्गणपूर्वकं वैष्णवं पदं गच्छतामङ्गान्तराण्याकाङ्क्षापूर्वकं कथयति—**कथमित्यादिना**। मानोऽहंकारः, मोहस्त्वविवेकः, जितसङ्गदोषाः शत्रुमित्रसंनिधावपि द्वेषप्रीतिवर्जिता इत्यर्थः। तत्परत्वं श्रवणादिनिष्ठत्वं, संन्यासिनो वैराग्यद्वारा त्यक्तसर्वकर्माण इत्यर्थः। आदिशब्देन तद्धेतुग्रहः। मोहवर्जितत्वमुक्तहेतुतः संजातसम्यग्धीत्वम् ॥ ५ ॥

**आ० भा०—साधनांतरमाह—निर्मानेति ॥ ५ ॥**

**आ० ज०**—तर्हि ब्रह्मज्ञानसाधनं विश्वविमर्शस्तत्र साधनं च तत्प्रतिपत्तिरिति समस्तमुक्तं किमुत्तरेणेत्यत आह—**साधनांतरमिति** ॥ ५ ॥

**रा० भा०—एवं मा शरणमुपगम्य निर्मानमोहा निर्गतानात्मात्माभिमानरूपमोहाः। जितसङ्गदोषाः जितगुणमयभोगसङ्गाख्यदोषाः। अध्यात्मनित्या आत्मनियतज्ञानं तदध्यात्मम् आत्मध्याननिरताः विनिवृत्ततदितरकामाः सुखदुःखसंज्ञैश्च द्वन्द्वैर्विमुक्ताः अमूढाः आत्मानात्मस्वभावज्ञाः तदव्ययं पदं गच्छन्ति अनवच्छिन्नज्ञानाकारमात्मानं यथावस्थितं प्राप्नुवन्ति। मां शरणमुपागतानां मत्प्रसादादेव ताः सर्वाः प्रवृत्तयः सुशक्याः सिद्धिपर्यन्ता भवन्तीत्यर्थः ॥ ५ ॥**

**अ० टी०**—शरणागतिं विना दोषाऽनिवृत्तौ तत्प्राप्तिर्न भवेदिति शरणागतौ च स्यादेवेत्यन्यथा अनिवृत्तित्वाद्दोषनिरूपणपूर्वकं तद्रहितानां तत्पदप्राप्तिरुच्यते—**निर्मानमोहा इति**। निर्गतौ मानमोहौ येषां ते। मानस्तु भगवत्संबन्धजो मोहः स्वरूपाऽज्ञानात्मकः। तथा जितः संगदोषः अवैष्णवादिसंगदोषो यैः। अध्यात्मनित्याः भगवत्स्वरूपतत्त्वविचारपरिनिष्ठिताः। विनिवृत्तकामाः विशेषेण मनसा विचारराहित्येन विनिवृत्तः कामो येभ्यः। सुखदुःखसंज्ञैः सांसारिकैर्द्वन्द्वैर्विमुक्ताः। अमूढाः भगवत्परिचिन्तनेन मोहरहिताः, तत् अव्ययं नित्यं पदं गच्छन्ति। यत एतद्दोषरहिता उक्तगुणवन्तश्च गच्छन्ति तदद्वयमपि शरणातिरिक्तसाधनाऽसाध्यं तस्मात् शरणं प्रपद्य इति शरणगमनमन्वेषणप्रकार इत्यर्थः ॥ ५ ॥

**नी० टी**—एवमैकांतिकस्य सुखस्याच्छादकं संसाराश्वत्थं तच्छेदकमसंगशस्त्रं चोक्त्वा तस्य सुखस्य प्राप्तावधिकारिणं तस्य स्वरूपं चाह द्वाभ्यां—**निर्मानेति**। मानोदर्पः मोहो विपर्ययस्तद्रहिताः निर्मानमोहाः।

जितः संगः कर्ताहमित्यभिमानो दोषो रागादिश्च यैस्ते जितसंगदोषाः । अध्यात्मं आत्मनि नित्याः निष्ठावंतः आत्मध्यानपरा इति यावत् । विनिवृत्तकामाः त्यक्तसर्वपरिग्रहाः । द्वंद्वैः सुखदुःखेत्युपलक्षणं शीतोष्णादीनामपि तैर्विमुक्तास्तितिक्षावंत इत्यर्थः । अमूढाः विद्ययाऽविद्यानाशं कृतवंतः । तत्पदं अव्ययं अपुनरावृत्ति गच्छंति॥५॥

**न तद्भासयते सूर्यो न शशांको न पावकः ॥**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

**शां० भा०**—तदेव पदं पुनर्विशिष्यते—तद्धामेति व्यवहितेन धाम्ना संबन्धः। धाम तेजोरूपं पदं न भासयते सूर्य आदित्यः सर्वावभासनशक्तिमत्त्वेऽपि सति । तथा न शशाङ्कश्चन्द्रो न पावको नाग्निरपि । यद्धाम वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते यच्च सूर्यादिर्न भासयते तद्धाम पदं परमं मम विष्णोः ॥ ६ ॥

**शां० आ०**—तच्चेत्पदं वेद्यं कर्तुरन्यत्कर्मेति द्वैतापातोऽवेद्यं चेदपुमर्थत्वात्प्रेप्सितत्वासिद्धिरित्याशङ्क्याऽऽह—**तदेवेति** ॥६॥

**आ० भा०**—स्वरूपं कथयति—न तदित्यादिना ॥ ६ ॥

**आ० ज०**—उत्तरवाक्यानां संगत्यप्रतीतिस्तां सूचयन्नाह—**स्वरूपमिति** । अनेन कीदृशं तत्पदं यत्प्राप्तिः पुरुषार्थ इत्याकांक्षायामिदमुच्यत इत्युक्तं भवति । स्वरूपमित्यनेन पदमित्युक्तस्य धामेतिवक्ष्यमाणस्य चार्थोऽप्युक्तो भवति । स्थानतेजसोरसंगतत्वात् ॥ ६ ॥

**रा० भा०**—तदात्मज्योतिर्न सूर्यो भासयते न शशाङ्को न पावकश्च । ज्ञानमेव हि सर्वस्य प्रकाशकं बाह्यानि तु ज्योतींषि विषयेन्द्रियसंबन्धिविरोधितमोनिरसनद्वारेणोपकारकाणि अस्य च प्रकाशको योगः तद्विरोधि चानादिकर्म तन्निवर्तनं चोक्तं भगवत्प्रतिपत्तिमूलकसङ्गादि यद्गत्वा पुनः न निवर्तन्ते तत्परमं धाम परमं ज्योतिर्मम मदीयं मद्विभूतिभूतो ममांश इत्यर्थः । आदित्यानामपि प्रकाशकत्वेन तस्य परमत्वम् । आदित्यादीनि हि ज्योतींषि न ज्ञानज्योतिषः प्रकाशकानि ज्ञानमेव हि सर्वस्य प्रकाशकम् ॥ ६ ॥

**अ० टी०**— अथ तत्पदस्वरूपमाह—**न तदिति** । तत्पदं सूर्यो न भासयते, न प्रकाशयति । एतेन स्वयंप्रकाशत्वमुक्तम् । न शशाङ्कः चन्द्रोऽपि तापहरणपूर्वकशीतादिना न प्रकाशयति । न पावकः अग्निः शीतादिनिवारकत्वेन न प्रकाशयति । किंच यत्पदं गत्वा न निवर्तन्ते न पुनरागच्छन्ति । कुत इत्यत आह । तत् मम परममुत्कृष्टं धाम गृहरूपमित्यर्थः ॥ ६ ॥

**नी० टी०**—ननु यदि तदूर्ध्वं पदं गच्छंति तर्हि ततः पातोऽप्यवश्यंभावी पतनांताः समुच्छ्रया इति न्यायात् । ततश्च यस्मिन् गता न निवर्ततीत्यनुपपन्नमित्याशंक्य तस्य पदस्य स्वरूपमाह—**न तदिति**। तत्पदं सूर्यो न भासयति रूपादिहीनत्वेन चक्षुरयोग्यत्वात् । एतेन सर्वेषां बाह्येंद्रियाणां निवृत्तिः । यद्धि रूपवच्चक्षुर्योग्यं तत्सूर्येण चक्षुरनुग्राहकेण भास्यं इदं तु न तथेत्यर्थः । न शशांकश्चंद्रोऽपि भासयति यन्मनोग्राह्यं वस्तु तच्चंद्रेण मनोनुग्राहकेण भास्यं इदं तु न तथा । "यन्मसा न मनुते" इति श्रुत्यास्य मनोग्राह्यत्वनिषेधात् । नापि पावको भासयति यद्धि वाचा ग्राह्यं तत्तदनुग्राहकेण पावकेन भास्यं इदं तु न तथा। "यद्वाचाऽनभ्युदितम्"इति श्रुत्यास्य वाग्गोचरत्वनि-

षेधात्। "न चक्षुषा गृह्यते नापि वाचा" इत्यादिश्रुत्यंतरं च। यतश्चक्षुर्मनोवाचामगम्यं तेन स्थूलसूक्ष्मकारणप्रपंचातीतं प्रत्यगद्वयं। "नांतःप्रज्ञं न बहिःप्रज्ञं अस्थूलमनणु" इत्यादिश्रुतिभिः सर्वविशेषरहितं यत्प्रतिपादितं तत् मम परमं धाम वृत्तिरूपज्ञानादपरमादन्यज्ज्योतिश्चिन्मात्रं ममेति संबंधो राहोः शिर इतिवदुपचारात्। मदभिन्नं ज्योतिः स्वयं प्रकाशमित्यर्थः अत एव यद्गत्वा प्राप्य ज्ञात्वेत्यर्थः। न निवर्तते निवृत्तिकारणस्य मूलाज्ञानस्याभावात्। एवं व्याख्याने हि। "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विंदते। अथ सोऽभयं गतो भवति" इति श्रुत्यर्थानुगमो दृश्यते। अदृश्ये इति दृग्योग्यत्वेन सूर्यभास्यत्वं पर्युदस्यते। अनात्म्ये आत्मनो मनसो योग्यं आत्म्यं तदन्यत्र अनात्म्ये इति मनसोऽप्ययोग्यत्वेन चंद्रमोभास्यत्वं निरस्यते। अनिलयने निलीयतेऽस्मिन्सर्वं स्थूलं सूक्ष्ममिति निलयनं कारणं तद्भिन्ने। अत एवानिरुक्ते निर्वचनायोग्ये वाचामगोचर इत्यर्थः। तेन पावकाप्रकाश्ये इति सिद्धं। ये तु सूर्याद्यप्रकाश्यमर्चिरादिमार्गगम्यं सत्यलोकादप्युपरितनमप्राकृतं वैष्णवं पदं नित्यं देशांतरेऽस्ति तद्गत्वा पुनर्न निवर्तत इति व्याचक्षते। तेषां न रूपमस्येह तथोपलभ्यत इति दृश्यस्य तुच्छत्वादेव तादृशस्यापि तुच्छत्वमपरिहार्यं दृश्यत्वाविशेषात् तस्माद्यथोक्त एव श्लोकार्थः ॥ ६ ॥

**ममैवांशो जीवलोके जीवभूतः सनातनः॥**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

**शां० भा०—यद्गत्वा न निवर्तन्त इत्युक्तम्। ननु सर्वा हि गतिरागत्यन्ता संयोगा विप्रयोगान्ता इति हि प्रसिद्धं कथमुच्यते तद्धामगतानां नास्ति निवृत्तिरिति, शृणु तत्र कारणम्—ममैव परमात्मनोंऽशो भागोऽवयव एकदेश इत्यनर्थान्तरं जीवलोके जीवानां लोके संसारे जीवभूतो भोक्ता कर्तेति प्रसिद्धः सनातनः। यथा जलसूर्यकः सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते तथाऽयमप्यंशस्तेनैवाऽऽत्मना संगच्छत्येवमेव यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाश आकाशांशः सन्घटादिनिमित्तापाय आकाशं प्राप्य न निवर्तत इत्येवमत उपपन्नमुक्तं यद्गत्वा न निवर्तन्त इति। ननु निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोंऽश इति। सावयवत्वे च विनाशप्रसङ्गोऽवयवविभागात्। नैष दोषोऽविद्याकृतोपाधिपरिच्छिन्न एकदेशोंऽशइव कल्पितो यतः। दर्शितश्चायमर्थः क्षेत्राध्याये विस्तरशः। स च जीवो मदंशत्वेन कल्पितः कथं संसरत्युत्क्रामति चेत्युच्यते मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षत्याकर्षति ॥ ७ ॥**

**शां० आ०**—उक्तमनूद्याऽऽक्षिपति—**यद्गत्वेति**। तत्र प्रसिद्धिं प्रमाणयति—**संयोगा इति**। गमनस्याऽऽगमनान्तत्वप्रसिद्धेरयुक्तं यद्गत्वेत्यादीत्युपसंहरति—**कथमिति**। आक्षेपं परिहरति—**शृण्विति**। भगवत्प्राप्तेर्निवृत्त्यन्तत्वाभावः सप्तम्यर्थः। जीवस्य परांशत्वेऽपि कथमुक्तदोषसमाधिरित्याशङ्क्य प्रतिबिम्बपक्षमादाय दृष्टान्तेन प्रत्याचष्टे—**यथेति**। अवच्छेदपक्षमाश्रित्य दृष्टान्तान्तरेणोक्तदोषसमाधिं दर्शयति—**यथा वेति**। आक्षेपसमाधिमुपसंहरति—**अत इति**। परस्य निरवयवत्वात्तदंशत्वं जीवस्यायुक्तमितिशङ्कते—**नन्विति**। तस्य निरवयवत्वं साधयति—**सावयवत्वे चेति**। वस्तुतो निरंशस्यापि परस्य कल्पनया जीवोंऽशो भविष्यतीति परिहरति—**नैष दोष इति**। वस्तुतस्तु जीवस्य नांशत्वं परमात्मना तावन्मात्रताया दार्शितत्वादित्याह—**दर्शितश्चेति**। यदि परस्यांशत्वेन कल्पितो जीवो वस्तुतस्तदात्मैव न तर्हि तस्य संसारित्वमुत्क्रान्तिर्वेति शङ्कते—**कथमिति**। जीवस्य संसरणमुत्क्रमणं चोपपादयितुमुपक्रमते—**उच्यत इति** ॥ ७ ॥

**आ० भा०—॥ ७॥**

**आ० ज०—॥ ७॥**

**रा० भा०**—इत्थमुक्तस्वरूपः सनातनो मदंश एव सन् कश्चिदनादिकर्मरूपाविद्यावेष्टनतिरोहित स्वरूपो जीवभूतो जीवलोके वर्तमानो देवमनुष्यादिप्रकृतिपरिणामविशेषशरीरस्थानि मनःषष्ठानीन्द्रियाणि कर्षति। कश्चिच्च पूर्वोक्तमार्गेणास्या अविद्यायाः मुक्तः स्वेन रूपेणावतिष्ठते। जीवभूतस्त्वति संकुचितज्ञानैश्वर्यः कर्मलब्धप्रकृतिपारिणामविशेषरूपशरीरस्थानाम् इन्द्रियाणां मनःषष्ठानाम् ईश्वरस्तानि कर्मानुगुणमितस्ततः कर्षति ॥ ७ ॥

**अ० टी०**—ननु पूर्वं क्षेत्रक्षेत्रज्ञप्रकृतिपुरुषजडजङ्गमादीनां स्वांशत्वक्रीडौपयिकत्वस्वक्रीडार्थोपसादितत्वमुक्तमधुना च यद्गत्वा न निवर्त्तन्त इत्युक्तं तत्कथं संभवतीत्याकाङ्क्षायामाह—**ममैवेति पञ्चभिः**। जीवलोके मत्क्रीडार्थप्रकटिते जीवभूतः आनन्दांशतिरोधानेनाऽनाशितृत्वोद्भावनेन क्रीडारसभोगार्थसेवारसानुभवार्थजीवत्वलक्षणो ममैव अंशः सनातनः सदा मयि विद्यमानः। मनः षष्ठं येषां तादृशानि पञ्चेन्द्रियाणि प्रकृतौ क्रीडार्थमाविर्भूतायां स्थितानि तद्भोगाद्यनुभवार्थं कर्षति। अत्रायं भावः। साक्षात्स्वक्रीडानुभवार्थप्रकटितो जीवभावः सनातनः पुरुषोत्तमांश एव साक्षात् तद्द्वारा प्रकृत्युत्पादितभोगानुभवार्थं प्रकटितोऽशः सांसारिको जीवो मूलभूतजीवांशः स स्वांशं तत्र नयति यत्र तदिच्छा। अतएव "तमुत्क्रामन्तं प्राणोऽनुत्क्रामति" इत्यादिश्रुतिः ॥ ७ ॥

**नी० टी०**—ननु यदि सूर्याद्यभास्यज्योतीरूपस्त्वं क्षेत्रज्ञं चापि मां विद्धीति स्वस्यैव क्षेत्रज्ञत्वं ब्रूषे तर्हि क्षेत्रज्ञस्य सतस्तव घटादिप्रकाशे किमिति सूर्याद्यपेक्षा दृश्यते। न हि स्वयं ज्योतीरूपः स्वविषयावभासने ज्योतिरंतरमपेक्षते दीपादिष्वदर्शनादित्याशंक्याह त्रिभिः—**ममैवेति**। यद्यस्मादीश्वरो जगत्स्रष्टा शरीरं अवाप्नोति स एष इह प्रविष्ट आनखाग्रेभ्यः। "तत्सृष्ट्वा तदेवानुप्राविशत्"इत्यादिश्रुतिभ्यः ईश्वर एव शरीरधारी तथा यद्यस्माद्धेतोः अपिशब्दोऽवधारणार्थे चः समुच्चयार्थे। "कस्मिन्नहमुत्क्रांत उत्क्रांतो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत"इति श्रुतेः। प्राणधारणेनोपाधिना ईश्वर एव च उत्क्रामति ततो हेतुद्वयाज्जीवलोके संसारे यो जीवभूतः प्राणी स सनातनः सर्वदैकरूपोऽहमेवेति वक्तव्ये "यथाग्नेः क्षुद्रा विस्फुलिंगा व्युचरन्त्येवमेवैतस्मादात्मनः सर्व एत आत्मानो व्युचरंति"इति वह्निविस्फुलिंगन्यायेन स ममैवांश इत्यंशांशिभावोक्तिः। यद्यपि वह्नौ भेदः परिमाणं च स्वगतं न दृश्यते तथापि तूपाधिगतमेव तदुभयं तत्राप्युपचर्यते अयमग्निरस्मादग्नेर्भिन्नः अयमस्य स्फुलिंगः अयमस्मादल्प इति। एवं"अस्थूलमनण्वह्रस्वमदीर्घम्"इतिश्रुतेश्चतुर्विधपरिमाणशून्ये ब्रह्मणि ममैवांश इत्यंशांशिभावेन भेदोऽल्पत्वमहत्त्वे चोपचारादौपाधिके ध्येये तथा च श्रुतिः। "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट" इति "समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः"इति च। तथा च विस्फुलिंगो वह्निरेव नतु वन्ह्यंशः। एवं जीवोऽपि ब्रह्मैव नतु ब्रह्मांशः। "ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत" इति दाशादिष्वपि पिंडेषु गोत्वस्येव कात्स्न्येंन एकैकस्मिन् ब्रह्मभावपरिसमाप्तिदर्शनात् निरंशेऽशांशिकल्पानाया अयोग्यत्वाच्च। स एवं जीवभूत ईश्वरो ममैवांश इवांशो रूपभेदो मनःषष्ठं येषु तानि मनसा सह षडिंद्रियाणि प्रकृतिस्थानि इंद्रियाणां प्रकृतिः स्वभावो विषयप्रावण्यं तत्र स्थितानि। कर्षति सुप्तिप्रलयसमाधिकालेषु संकोचयति ॥ ७ ॥

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥**

**शां० भा०**—कस्मिन्काले—यच्चापि यदा चाप्युत्क्रामतीश्वरो देहादिसंघातस्वामी जीवस्तदा कर्षतीति श्लोकस्य द्वितीयपादोऽर्थवशात्प्राथम्येन संबध्यते। यदा च पूर्वस्माच्छरीराच्छरीरान्तरमाप्नोति तदा गृहीत्वैतानि मनःषष्ठानीन्द्रियाणि संयाति सम्यग्याति गच्छति। किमिवेत्याह वायुः पवनो गन्धानिवाऽऽशयात्पुष्पादेः ॥ ८ ॥

**शां० आ०**—स्वस्थाने स्थितानामिन्द्रियाणां जीवेनाऽऽकर्षणस्य कालं पृच्छति—**कस्मिन्निति**। जीवस्योत्क्रान्तिर्नेश्वरस्येत्याशङ्क्येश्वरशब्दार्थमाह—**देहादीति**। उत्क्रान्त्यनन्तरभाविनी गतिरित्येतदर्थवशादित्युक्तम्। अवशिष्टानि श्लोकाक्षराण्याचष्टे—**यदा चेति** ॥ ८ ॥

**आ० भा०**—कर्षतीत्युक्ते जीवस्य स्वातंत्र्यं प्रतीतं तन्निवारयति। शरीरमित्यादिना—यद्यदाशरीरमवाप्नोति उत्क्रामति जीवस्तदेश्वर एवैतानि गृहीत्वा संयाति। 'यत्र यत्र च संयुक्तो धाता गर्भं पुनः पुनः। तत्र तत्रैव वसति न यत्र स्वयमिच्छति'इति मोक्षधर्मे। 'भावाभावावपि जानन्गरीयो जानामि श्रेयो न तु तत्करोमि। आशासु हर्म्यासु ह्रदासु कुर्वन्यथा नियुक्तोऽस्मि तथा वहामि'इति च। 'हत्वा जित्वापि मघवन्यः कश्चित्पुरुषायते॥ अकर्ता त्वेव भवति कर्ता त्वेव करोति तत्'इति च। "तद्यथाऽनःसुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनान्वारूढ उत्सर्जद्याति"इति च श्रुतिः। "वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्"इति च। गंधानिव सूक्ष्माणि। भोगोऽस्यापि साधितः पुरस्तात् ॥ ८ ॥

**आ० ज०**—पूर्ववाक्ये जीवस्य प्रकृतत्वात्तदुत्तरमपि तद्विषयमिति व्याख्यानमसत्। ईश्वरपदरूढार्थपरित्यागदोषादित्याशयवान् संगतिं तावदाह—**कर्षतीति**। शरीरावाप्तौ मूलकारणादुत्क्रमणे शरीरात्। स्थितौ गोलकादिभ्यो विषयान्प्रतींद्रियाणि जीवः कर्षतीति पूर्वत्रोक्तम्। तथा च तस्य नियामकांतरानुक्त्या इंद्रियकर्षणे स्वातंत्र्यं प्रतीतं तदयुक्तम्। पूर्वोक्तविरोधादित्याशंक्येश्वरस्यैव तत्प्रतिपादयंस्तज्जीवस्य स्वातंत्र्यं निवारयतीत्यर्थः। श्लोकद्वयोपादानायादिपदम्। अत्र शरीरावाप्त्युत्क्रमणयोरुक्तत्वादीश्वरस्य तदयोगात्कथमिदं तद्विषयमित्यतो व्याचष्टे—**यदिति**। जीव इति पूर्ववाक्यादनुवर्तते। यदेतिश्रवणात्तदेतिलभ्यते। एतानींद्रियाणि संयाति शरीरं लोकांतरं च। कुतोऽयमर्थ इत्यतो जीवस्य शरीरप्राप्तौ तावदीश्वराधीनत्वे प्रमाणसंमतिमाह—**यत्रेति**। संयुक्तः प्रेरकत्वेन संयुक्तः परमेश्वरो यत्र यत्रैव योनौ गर्भधाता तत्र तत्रैव वसति जीवः। प्रवृत्तावपीश्वराधीनत्वे जीवस्य प्रमाणसंवादमाह—**भावेति**। भावाभावौ लौकिके शुभाशुभे गरीयः श्रेयो मोक्षमपि। तथाऽपि तन्न करोमि साधयितुं न स्वतंत्रोऽस्मि किं तु आशासु दिक्षु हर्म्यासु हर्म्येषु ह्रदासु ह्रदेषु। तास्ताः क्रियाः कुर्वन्निव प्रतीयमानोऽहं यथेश्वरेण नियुक्तोऽस्मि तथा तां वहामि। हननादिक्रियाः कृत्वा यः कश्चित्परमपुरुषवत्स्वातंत्र्यमात्मनोमन्यते सोऽप्यकर्तैव भवति यतस्तद्धननादिकर्तेश्वर एव करोति। शरीरोत्क्रमणमपीश्वराधीनमित्यत्र श्रुतिसंमतिमाह—**तद्यथेति**। अनः शकटम्। सुसमाहितं पुरुषेण सम्यगधिष्ठितमुत्सर्जद्ग्रामादिकमुत्सृजच्छारीर आत्मा जीवः प्राज्ञेनात्मना परमात्मना अन्वारूढोऽधिष्ठितः। उत्सर्जत् शरीरमुत्सृजन्। वागित्यनेनोत्क्रमणे परदेवतावागादीन्याकर्षतीत्युच्यते। अनेकेष्वाकृष्यमाणेषु सत्सु गंधोपादानेऽभिप्रायमाह—**गंधानिवेति**। गंधवतः पुष्पाद्यवयवानित्यर्थः। ननु श्रोत्रमित्यादिना विषयभोगोऽस्योच्यते। न चेश्वरस्यासावस्ति किं तु जीवस्यैव तत्कथमिदमीश्वरविषयमित्यत आह—**भोग इति**। पुरस्तात् सप्तमे ॥ ८ ॥

**रा० भा०**—यच्छरीरमवाप्नोति यस्माच्छरीरादुत्क्रामति तत्रायमिन्द्रियाणामीश्वरः एतानीन्द्रियाणि भूतसूक्ष्मैः सह गृहीत्वा संयाति। वायुर्गन्धानिवाशयात्। यथा वायुः स्रक्चन्दनकस्तूरिकाद्याशयात्तत्स्थानात्सूक्ष्मावयवैः सह गन्धान् गृहीत्वान्यत्र संयाति तद्वदित्यर्थः ॥ ८ ॥

**अ० टी०**—तदेव विस्तरेणाऽऽह—**शरीरमिति**। ईश्वरः मूलभूतो जीवो यत् यदा शरीरभोगार्थमवाप्नोति। च पुनः। यदा भोगसमाप्तौ उत्क्रामति तदा एतानि पूर्वोक्तानीन्द्रियाणि स्वभोगार्थकानि सूक्ष्माणि

संस्कारात्मकानि गृहीत्वैव सम्यक् स्वांशजीवभावेन सह याति प्राप्नोति । तत्र दृष्टान्तमाह, वायुः आशयात् पुष्पादितो गन्धान् सूक्ष्मांशानिव ॥ ८ ॥

**नी० टी०**—तथैतान्येव आशयात् स्वलयस्थानात् गृहीत्वा संयाति विषयदेशं प्रति गच्छति प्रबोधसर्गव्युत्थानकालेषु । तत्र दृष्टांतः वायुर्गंधानिवाशयात् गंधाश्रयात् पुष्पात् ॥ ८ ॥

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

**शां० भा०—कानि पुनस्तानीति—श्रोत्रं चक्षुः स्पर्शनं च त्वगिन्द्रियं रसनं घ्राणमेव च मनश्च षष्ठं प्रत्येकमिन्द्रियेण सहाधिष्ठाय देहस्थो विषयाञ्शब्दादीनुपसेवते ॥ ९ ॥**

**शां० आ०**—मनःषष्ठानीन्द्रियाण्येव प्रश्नद्वारा विशेषतो दर्शयति—**कानीति** ॥ ९ ॥

**आ० भा—इंद्रियद्वारापि सोऽपि भुङ्क्ते । "तद्य इमे वीणायां गायंत्येतं ते गायंति"इति च श्रुतिः । गुणान्वितमेव भुङ्क्ते । "न ह वै देवान्पापं गच्छति"इति श्रुतेः ॥ ९ ॥**

**आ० ज०**—अस्तीश्वरस्य भोगः । किं तु जीवेंद्रियैर्नास्तीत्यतो जीवविषयमेतदित्यत आह—**इंद्रियेति** । राजाद्यंतर्गतं गायंतीत्यनेन हि तच्छ्रोत्रेण गानभोगो लभ्यते । विषयभोगांगीकारे दुष्टस्यापि भोगः स्यादित्यत उत्तरवाक्यगतं विशेषणमाश्रित्याह—**गुणेति** । गुणमेवेत्यर्थः । एतद्भुंजानस्य विशेषणमिति केचित् तान्प्रत्याह—**न ह वा इति** ॥ ९ ॥

**रा० भा०—कानि पुनस्तानीन्द्रियाणीत्याह । एतानि मनःषष्ठानीन्द्रियाणि अधिष्ठाय स्वस्वविषयवृत्त्यनुगुणानि कृत्वा तत्तच्छब्दादीन् विषयानुपसेवते उपभुङ्क्ते ॥ ९ ॥**

**अ० टी०**—किमर्थं गृहीत्वा गच्छतीत्यत आह—**श्रोत्रमिति** । श्रोत्रादीनीन्द्रियाणि लौकिकस्थूलशरीरे स्थूलानि मनः अन्तःकरणं च अधिष्ठाय मुख्यरूपेण तत्र स्वयं स्थितिं कृत्वा अग्रे अलौकिकतदनुभवार्थं विषयान् उप—स्वांशजीवसमीपे सेवते भोगं करोतीत्यर्थः ॥ ९ ॥

**नी० टी०**—कानि तानि मनःषष्ठानि तानि गृहीत्वा गत्वा चायं किं करोतीत्यत आह—**श्रोत्रमिति** । अधिष्ठाय व्यापारवंति कृत्वा विषयान् शब्दादीनुपसेवते प्रकाशयति । यथा दीपः स्वस्य वृत्तिलाभाय तैलवर्त्याद्यपेक्षमाणोऽपि स्वविषयावभासने स्वयमेव प्रभुः एवं जीवोऽपि घटाकारत्वलाभाय मनःषष्ठानींद्रियाणि सूर्यादींश्चापेक्षते तथाऽपि घटावभासं स्वयमेव करोति नेतराणि इंद्रियसूर्यादीनि स्वभास्यत्वात्तैलवर्त्यादिवदित्याशयः ॥ ९ ॥

**उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ॥**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥**

**शां० भा०—एवं देहगतं देहात्—उत्क्रामन्तं परित्यजन्तं देहं पूर्वोपात्तं स्थितं वा देहे तिष्ठन्तं भुञ्जानं वा शब्दादींश्चोपलभमानं गुणान्वितं सुखदुःखमोहाद्यैर्गुणैरन्वितमनुगतं संयुक्तमित्यर्थः । एवं**

भूतमप्येनमत्यन्तदर्शनगोचरप्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तयाऽनेकधा मूढा नानुपश्यन्त्यहो कष्टं वर्तत इत्यनुक्रोशति च भगवान्। ये तु पुनः प्रमाणजनितज्ञानचक्षुषस्त एनं पश्यन्ति ज्ञानचक्षुषो विविक्तदृष्टय इत्यर्थः ॥ १० ॥

**शां० आ०**—शरीरमित्यादिश्लोके देहादात्मनोऽतिरेकमुक्त्वा श्रोत्रं चक्षुरित्यादौ स्वाभिलषिते विषये यथायथं करणानां प्रवर्तकत्वात्तेभ्योऽतिरिक्तश्चाऽऽत्मेत्युक्तं तर्हि तमुत्क्रान्त्यादि कुर्वन्तं स्वरूपत्वात्किमिति सर्वे न पश्यन्तीत्याशङ्क्याऽऽह—**एवमिति**। संनिहिततमत्वेन दर्शनयोग्यमपि विषयपारवश्यादात्मानं सर्वे न पश्यन्तीति भगवतोऽनुक्रोशं दर्शयति—**एवंभूतमिति** । तर्हि केषामात्मदर्शनं तदाह—**ये तु पुनरिति** ॥ १० ॥

**आ० भा०**—तर्हि किमिति न दृश्यत इत्यत आह—उत्क्रामंतमित्यादिना ॥ १० ॥

**आ० ज०**—उक्तमेव किमित्युच्यत इति मंदाशंकानिरासार्थमुत्तरश्लोकद्वयस्य संगतिमाह—**तर्हीति** । यदि जीवातिरिक्तो देहे नियामकः स्यादिति शेषः । उक्तानुवादेन विमूढत्वमनुपलंभे कारणम् । न तदभाव इत्युच्यत इति भावः ॥ १० ॥

**रा० भा०**—एवं गुणान्वितं सत्वादिगुणमयप्रकृतिपरिणामविशेषमनुष्यत्वादिसंस्थानपिण्डसंसृष्टं पिण्डविशेषादुत्क्रामन्तं पिण्डविशेषेऽवस्थितं वा गुणमयान् विषयान् भुञ्जानं वा कदाचिदपि प्रकृतिपरिणामविशेषमनुष्यत्वादिपिण्डाद्विलक्षणं ज्ञानैकाकारं विमूढा नानुपश्यन्ति । विमूढाः मनुष्यत्वादिपिण्डाकारात्माभिमानिनः । ज्ञानचक्षुषस्तु पिण्डात्मविवेकविषयज्ञानवन्तः सर्वावस्थमप्येनं विविक्ताकारमेव पश्यन्ति ॥ १० ॥

**अ० टी०**—एवंभूतं कथं सर्वे न पश्यंति तत्राह—**उत्क्रामन्तमिति** । उत्क्रामन्तं भजनरसानुपयुक्तदेहाद् उपयुक्ताय गच्छन्तं वा विकल्पेन तादृगीक्षणेच्छया तत्रैव स्थितमपि वा भुञ्जानं तादृग्विषयरसानुभावकं गुणान्वितं तद्भोगपटुभिरिन्द्रियैर्युक्तं मुख्यजीवं विमूढाः सत्संगाऽभावेन स्वोपभोगैकपराऽऽक्षिप्तदृशो नानुपश्यन्ति तद्द्रष्टा अपि स्वयं न पश्यन्ति । ज्ञानचक्षुषः सत्संगलब्धस्वरूपाः पश्यन्ति ॥ १० ॥

**नी० टी०**—तमेवंभूतं मनःषष्ठानींद्रियाणि प्राणं चाधिष्ठाय तेषामुत्क्रमणेनोत्क्रामंतं तेषां स्थित्या स्थितं तेषां भोगेन भुंजानं तेषां सत्वरजस्तमोगुणयुक्तत्वेन गुणान्वितं घटसूर्यमिव घटाकाशमिव वा घटगमनादिना गमनादिमंतं स्वतस्तूत्क्रमणादिशून्यमपि विमूढास्तात्त्विकरूपं नानुपश्यंति । ज्ञानचक्षुषस्तु पश्यंति उपाधेरेवोत्क्रमणादिकं न तूपहितस्यात्मन इति जानंत्येवेत्यर्थः ॥ १० ॥

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ॥**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥**

**शां० भा०**—केचित्तु—यतन्तः प्रयत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृतमात्मानं पश्यन्त्ययमहमस्मीत्युपलभन्त आत्मनि स्वस्यां बुद्धाववस्थितं यतन्तोऽपि शास्त्रादिप्रमाणैरकृतात्मानोऽसंस्कृतात्मानस्तपसेन्द्रियजयेन च दुश्चरितादनुपरता अशान्तदर्पात्मानः प्रयत्नं कुर्वन्तोऽपि नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥ ११ ॥

**शां० आ०**—ज्ञानचक्षुःशब्देन न्यायानुगृहीतं शास्त्रं ज्ञानसाधनमुक्तं तत्किमिदानीं शास्त्रमात्रेण न्यायानुगृहीतेनाऽऽत्मानं पश्यन्ति नेत्याह—**केचित्त्विति** । प्रयत्नः श्रवणमननात्मकः । शास्त्रादिप्रमाणैर्यतन्तोऽपीति संबन्धः । असंस्कृतात्मत्वं प्रकटयति—

**तपसेति** । दुश्चरितादविरतिफलं कथयति—**अशान्तेति** । अशुद्धबुद्धीनामविवेकिनां सदपि श्रवणादि न फलवदिति मत्वाऽऽह—**प्रयत्नमिति** ॥ ११ ॥

**आ० भा०—यतंतो ज्ञानं प्राप्य अकृतात्मान अशुद्धबुद्धयः ॥ ११ ॥**

**आ० ज०**—यतंतो योगिनश्चेति कारणांतरमुच्यत इति प्रतीतिनिराकरणार्थमाह—**यतंत इति** । आत्माजीवश्चेत्सर्वदाऽकृत एव । शरीरं चेदसंभव इत्यत आह—**अकृतेति** । आत्मा बुद्धिः अकृतत्वं चाशुद्धत्वम् । केशानुकरोतीत्यादौ शोधनेऽपि करोतेः प्रयोगादिति भावः ॥ ११ ॥

**रा० भा०**—मत्प्रतिपत्तिपूर्वकं कर्मयोगादिषु यतमानास्तैर्निर्मलान्तःकरणाः योगिनो योगाख्येन चक्षुषात्मानि शरीरेऽवस्थितमपि शरीराद्विविक्तं स्वेन रूपेणावस्थितमेनं पश्यन्ति । यतमानाः अप्यकृतात्मानो मत्प्रतिपत्तिविरहिणस्त एवासंस्कृतमनसः तत एव अचेतसः आत्मावलोकनसमर्थचेतोरहिताः नैनं पश्यति । एवं रविचन्द्राग्नीनामिन्द्रियसन्निकर्षविरोधिसंतमसनिरसनमुखेनेन्द्रियानुग्राहकतया प्रकाशकानां ज्योतिष्मतामपि प्रकाशकं ज्ञानं ज्योतिरात्ममुक्तावस्थो जीवावस्थश्च भगवद्विभूतिरित्युक्तम् । 'तद्धाम परमं मम । ममैवांशो जीवलोके जीवभूतः सनातनः ॥' इति ॥ ११ ॥

**अ० टी०**—अथचैनं भक्ता एव पश्यन्ति नान्य इत्याह—**यतन्त इति** । योगिनश्च योगिनोऽपि यतन्तः ज्ञानार्थं यत्नं कुर्वन्तः, एनम् आत्मन्यवस्थितम् अधिष्ठितं पश्यन्ति तथाभोगं कुर्वन्तमित्यर्थः । अकृतात्मानः सत्संगादिभक्तत्वरहिताः, ज्ञानाऽभावेन केवलयोगादिना यतन्तोऽप्येनं न पश्यन्ति, यतोऽचेतसः मन्दमतयश्चैतन्यराहिता इत्यर्थः ॥ ११ ॥

**नी० टी०**—यतंतो यत्नशीला योगिनश्च एनं आत्मनि बुद्धाववस्थितं विभुमुत्क्रांत्यादिहीनमसंगं पश्यंति । यतंतोऽपि अकृतात्मानः ये यज्ञादिभिरशोधितचित्ताः एनं न पश्यंति यतः अचेतसः अनिर्जितचित्ताः पाषाणतुल्या इत्यर्थः ॥ ११ ॥

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥**

**शां० भा०**—यत्पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योतिर्नावभासयते यत्प्राप्ताश्च मुमुक्षवः पुनः संसाराभिमुखा न निवर्तन्ते यस्य च पदस्योपाधिभेदमनु विधीयमाना जीवा घटाकाशादय इवाऽऽकाशस्यांशास्तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुश्चतुर्भिः श्लोकैर्विभूतिसंक्षेपमाह भगवान्—यदादित्यगतमादित्याश्रयं किं तत्तेजो दीप्तिः प्रकाशो जगद्भासयते प्रकाशयत्यखिलं समस्तं यच्चन्द्रमसि शशभृति तत्तेजोऽवभासकं वर्तते यच्चाग्नौ हुतवहे तत्तेजो विद्धि विजानीहि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । अथवा यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिर्यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । ननु स्थावरेषु जङ्गमेषु च तत्समानं चैतन्यात्मकं ज्योतिस्तत्र कथमिदं विशेषणं यदादित्यगतमित्यादि । नैष दोषः सत्त्वाधिक्यादाधिक्योपपत्तेः । आदित्यादिषु हि सत्त्वमत्यन्तप्रकाशमत्यन्तभास्वरमतस्तत्रैवाऽऽविस्तरां ज्योतिरिति तद्विशिष्यते, न तु तत्रैव तदधिकमिति । यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवत्यादर्शादौ तु स्वच्छे स्वच्छतरे च तारतम्येनाऽऽविर्भवति तद्वत् ॥ १२ ॥

**शां० आ०**—अनन्तर श्लोकचतुष्टयस्य वृत्तानुवादद्वारा तात्पर्यमाह—**यत्पदमिति**। जीवात्मत्वेन चिद्रूपत्वमुक्त्वा तदीयचैतन्येनाऽऽदित्यादीनामवभासकत्वाच्च ब्रह्मणश्चिद्रूपत्वमित्याह—**यदादित्येति**। चिद्रूपस्यैव ब्रह्मणः सर्वात्मकत्वप्रतिपादकत्वेन श्लोकं व्याचष्टे—**यदित्यादिना**। आदित्यादौ तत्र तत्र स्थितं ब्रह्मचैतन्यज्योतिः सर्वावभासकमित्यर्थः। ब्रह्मणः सर्वज्ञत्वेन चिद्रूपत्वमत्र विवक्षितमिति व्याख्यान्तरमाह—**अथवेति**। चैतन्यज्योतिषः सर्वत्राविशेषादादित्यादिगतत्वविशेषणमयुक्तमिति शङ्कते—**नन्विति**। सर्वत्र सत्त्वेऽपि क्वचिदेवाभिव्यक्तिविशेषाद्विशेषणमिति परिहरति—**नैषदोष इति**। तदेव प्रपञ्चयति—**आदित्यादिष्विति**। सर्वत्र चैतन्यज्योतिषस्तुल्यत्वेऽपि क्वचिदेवाभिव्यक्त्या विशेषणोपपत्तिं दृष्टान्तेन स्पष्टयति—**यथा हीति** ॥ १२ ॥

**आ० भा०**—**पूर्वोक्तमेव ज्ञानं प्रपंचयति—यदादित्यगतमित्यादिना ॥ १२ ॥**

**आ० ज०**—ननु न तद्भासयत इत्यादिना स्वरूपं कथितं तत्किमुत्तरेणेत्यतआह—**पूर्वोक्तमेवेति**। अधश्च मूलान्यनुसंततानीति यत्सर्वांतर्यामिस्वरूपं विज्ञानमुक्तं यच्चोर्ध्वशब्देन सर्वोत्तमत्वं तदध्यायशेषेण प्रपंचयतीत्यर्थः ॥ १२ ॥

**रा० भा०—इदानीमचित्परिणामविशेषभूतमादित्यादीनां ज्योतिष्मतां ज्योतिरपि भगवद्विभूतिरित्याह। अखिलस्य जगतो भासकमेतेषामादित्यादीनां यत्तेजस्तन्मदीयं तेजस्तैस्तैराराधितेन मया तेभ्यो दत्तमिति विद्धि ॥ १२ ॥**

**अ० टी०**—ननु योगादीनां जडत्वेन दर्शनासाधकत्वमास्तां परं सूर्यादीनां तेजस्त्वात्तदाराधनादिना दर्शनं स्यादित्याशङ्क्याऽऽह—**यदिति**। आदित्यगतं यत्तेजो जगदखिलं भासयते प्रकाशयति, यच्चन्द्रमसि तेजो जगदाप्यायनादिना भासयते, यच्च अग्नौ हुतादिना तोषजननेन हृदयं प्रकाशयति, तत् तेजो मामकं विद्धि जानीहि। स्वतेजस्त्वोक्त्या स्वेच्छां विना तेषामसाधकत्वं ज्ञापितम्। एतेन मत्क्रीडनेच्छया तद्रूपो भूत्वा जगत्प्रकाशयामीतिभावो बोधितः ॥ १२ ॥

**नी० टी०**—कथं तर्हि सूर्यादिनामपि भासकत्वं लोके दृश्यते तदपि मदावेशादेवेत्याह—**यदादित्येति**। अत्राप्यादित्यादिपदैः करणाधिष्ठात्र्यो देवतास्तदधिष्ठेयानि करणानि च तंत्रेणैव गृह्यंते यदादित्यादिषु बाह्यकारणाधिष्ठातृषु तत्तदधिष्ठेयेषु बाह्यकरणेषु च गतं विद्यमानं तेजो विषयप्रकाशनसामर्थ्यं सर्वं जगद्भासयते तत्तेजो मामकं मदीयं विद्धि। "येन सूर्यस्तपति तेजसेद्धः। येन चक्षूंषि पश्यंति"इत्यादिश्रुतिभ्यः। एवं मनश्चंद्रमसोर्यदांतरप्रपंचप्रकाशनसामर्थ्यं तदपि मामकमेव। तथा यद्वागग्न्योरव्याकृतादिविषयप्रकाशनसामर्थ्यं तदपि मामकमेवेत्यर्थः। अक्षरयोजना स्पष्टा ॥ १२ ॥

**गामाविश्य च भूतानि धारयाम्यहमोजसा ॥**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥**

**शां० भा०—किंच—गां पृथिवीमाविश्य प्रविश्य धारयामि भूतानि जगदहमोजसा बलेन यद्बलं कामरागविवर्जितमैश्वरं जगद्विधारणाय पृथिव्यां प्रविष्टं येन गुर्वी पृथिवी नाधःपतति न विदीर्यते च। तथा च मन्त्रवर्णः—"येन द्यौरुग्रा पृथिवी च दृढा" इति। "स दाधार पृथिवीम्" इत्यादिश्च। अतो गामाविश्य च भूतानि चराचराणि धारयामीति युक्तमुक्तम्। किंच पृथिव्यां जाता ओषधीः सर्वा व्रीहियवाद्याः पुष्णामि पुष्टिमतीः रसस्वादुमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमःसर्वरसात्मको रसस्वभावः सर्वरसानामाकरः सोमः स हि सर्वा ओषधीः स्वात्मरसानुप्रवेशेन पुष्णाति ॥ १३ ॥**

**शां० आ०**—इतश्च सर्वात्मत्वं प्रकृतपदस्य युक्तमित्याह—**किंचेति** । ईश्वरो हि पृथिवीदेवतारूपेण पृथिवीं प्रविश्य भूतशब्दितं जगदैश्वरेणैव बलेन बिभर्ति ततो गुर्व्यपि पृथिवी विदीर्य नाधो निपततीत्यत्र प्रमाणमाह—**तथा चेति** । परस्यैव हिरण्यगर्भात्मनाऽवस्थानान्न मन्त्रयोरन्यपरतेति भावः । देवतात्मना द्यावापृथिव्योरुग्रत्वमुद्धरणसामर्थ्यं तथाऽपीश्वरायत्तमेव स्वरूपधारणं तदपेक्षया दुर्बलत्वादिति द्रष्टव्यम् । ईश्वरस्य सर्वात्मत्वे हेत्वन्तरमाह—**किंचेति** । रसात्मकसोमरूपतापत्तावपि कथमोषधीरीश्वरः सर्वाः पुष्णातीत्याशङ्क्याऽऽह—**सर्वेति** ॥ १३ ॥

**आ० भा०—गां भूमिम्** ॥ १३ ॥

**आ० ज०**—धेनोरावेशेन भूतधारणे कारणमित्यत आह—**गामिति** ॥ १३ ॥

**रा० भा०—पृथिवीव्याश्च भूतधारिण्या धारकत्वशक्तिर्मदीयेत्याह । अहं पृथिवीमाविश्य सर्वाणि भूतान्योजसा ममाप्रतिहतसामर्थ्येन धारयामि पुष्णामीति । तथाहममृतरसमयः सोमो भूत्वा सर्वौषधीः पुष्णामि ॥ १३ ॥**

**अ० टी०**—एवमेव सर्वरूपो भूत्वा सर्वं करोमीत्याह—**गामाविश्येति** । गां पृथ्वीम् ओजसा बलेन आविश्य अहं भूतानि धारयामि । अहमेव सोमः अमृतमयरसात्मको रसमयो भूत्वा औषधीः सर्वा व्रीह्यादिकाः भूतानां पृथ्वीरूपेण धृतानां रसपोषार्थं पुष्णामि पुष्टाः करोमि वर्धयामीत्यर्थः ॥ १३ ॥

**नी० टी०**—न केवलमादित्यादिगतप्रकाशनसामर्थ्यं मामकमपि तु पृथिव्यादिगतं भूतधारणव्यापनसामर्थ्यमपि मदीयमेवेत्याह—**गामिति** । गां पृथिवीमाविश्य तां पृथिवीं दृढां कृत्वा भूतान्यहमेव धारयामि ओजसा बलेन अन्यथा पृथिवी सिकतामुष्टिवद्विशीर्येत तथा च मंत्रवर्णः । "येन द्यौरुग्रा पृथिवी च दृढा" इति । "स दाधार पृथिवीम्" इति च।तथाऽहमेव सोमो रसात्मको जलात्मकः । 'रसो जलं रसो हर्ष' इत्यनेकार्थमंजरी। जलमयो भूत्वा सर्वा ओषधीः पुष्णामि च रसवतीः पुष्टाश्च करोमि सोमो हि स्वात्मरसानुप्रवेशेन सर्वा ओषधीः पुष्णातीति प्रसिद्धम् ॥ १३ ॥

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

**शां० भा०—किंच—अहमेव वैश्वानर उदरस्थोऽग्निर्भूत्वा "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते" इत्यादिश्रुतेर्वैश्वानरः सन्प्राणिनां प्राणवतां देहमाश्रितः प्रविष्टः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पक्तिं करोमि चतुर्विधं चतुष्प्रकारमन्नमशनं भोज्यं भक्ष्यं चोष्यं लेह्यं च भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेतदुभयमग्नीषोमौ सर्वमिति पश्यतोऽन्नदोषलेपो न भवति ॥ १४ ॥**

**शां० आ०**—भगवतः सर्वात्मत्वे हेत्वन्तरमाह—**किंचेति** । अहमेवेत्यहंशब्देन परो लक्ष्यते, भूत्वा पचामीति संबन्धः । परस्यैव जाठरात्मना स्थितौ श्रुतिं प्रमाणयति—**अयमिति** । बाह्यं भौममग्निं व्यावर्तयति—**योऽयमिति** । देहान्तरारम्भकं तृतीयं भूतं व्यवच्छिनत्ति—**येनेति** । जाठरात्मना परः स्थितश्चेत्तस्य देहाश्रितत्वं सिद्धमिति न पृथग्वक्तव्यमित्याशङ्क्य "पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद" इति श्रुतिमाश्रित्याऽऽह—**प्रविष्ट इति** । परस्य जाठरात्मनोऽन्नपाके सहकारिकारणमाह—**प्राणेति**। संयुक्तत्वं संधुक्षितत्वम् । अन्नस्य चातुर्विध्यं प्रकटयति—**भोज्यमिति** । भोक्तारि वैश्वानरदृष्टिर्भोज्ये सोमदृष्टिरेवं भोक्तृभोज्यरूपं सर्वं जगदग्नीषोमात्मना भुक्तिकाले ध्यायतो भोक्तुरन्नकृतो दोषो नेति प्रासङ्गिकं सफलं ध्यानं दर्शयति—**भोक्तेति** ॥ १४॥

**आ० भा०**—॥ १४ ॥

**आ० ज०**—॥ १४ ॥

**रा० भा०**—अहं वैश्वानरो जाठरानलो भूत्वा सर्वेषां प्राणिनां देहमाश्रितः तैर्भुक्तं खाद्यचोष्यलेह्यपेयात्मकं चतुर्विधमन्नं प्राणापानवृत्तिभेदसमायुक्तः पचामि ॥ १४ ॥

**अ० टी०**—ततस्तेषां पोषार्थमेव तद्भक्षितमन्नं पचामीत्याह—**अहमिति**। अहं वैश्वानरो जाठराग्निरूपो भूत्वा प्राणिनां देहमाश्रितोऽन्तःप्रविष्टः सन् प्राणापानाभ्यां तदुद्दीपकाभ्यां युक्तश्चतुर्विधमन्नं भुक्तं भक्ष्यं भोज्यं लेह्यं चोष्यं पचामि ॥ १४ ॥

**नी० टी०**—अहं वैश्वानरसंज्ञ उदरस्थोऽग्निर्भूत्वा प्राणिनां सर्वेषां देहमाश्रितः सन् प्राणापानाभ्यां वायुभ्यां समायुक्तः समुद्दीपितश्चतुर्विधमन्नमदनीयं भक्ष्यं दंतव्यापारापेक्षमपूपादि । भोज्यं तदनपेक्षं पायसादि । लेह्यं गुडशर्करादि । चोष्यं निश्चोष्य त्यज्यमानमिक्षुदंडादि । एतेन सर्वत्र सर्वा शक्तिर्या दृश्यते सा मदीयैवेति भावः। तदेवं भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेवमुभयमग्नीषोमौ सर्वमिति पश्यतोऽन्नदोषलेपो न भवतीत्यपि द्रष्टव्यम् ॥ १४ ॥

**सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ॥**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

**शां० भा०**—किंच—सर्वस्य प्राणिजातस्याहमात्मा सन्हृदि बुद्धौ संनिविष्टोऽतो मत्त आत्मनः सर्वप्राणिनां स्मृतिर्ज्ञानं तदपोहनं च । येषां पुण्यकर्मिणां पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतस्तथा पापकर्मिणां पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहनं चापायनमपगमनं च । वेदैश्च सर्वैरहमेव परमात्मा वेद्यो वेदितव्यो वेदान्तकृद्वेदान्तार्थसंप्रदायकृदित्यर्थः। वेदविद्वेदार्थविदेव चाहम् ॥ १५ ॥

**शां० आ०**—इतश्च सर्वात्मत्वेन सर्वव्यवहारास्पदत्वमीश्वरस्येत्याह—**किंचेति**। प्राणिजातं ब्रह्मादिपुत्तिकान्तम् । आत्मतया बुद्धौ संनिविष्टत्वं तद्गुणदोषाणामशेषेण द्रष्टृत्वम् । अतो बुद्धिमध्यस्थस्य गुणदोषद्रष्टृत्वादिति यावत् । मत्तः सर्वकर्माध्यक्षाज्जगद्यन्त्रसूत्रधारादित्यर्थः । प्राणिनां स्मृतिज्ञानयोस्तदुपायस्य च भगवदधीनत्वे भगवतो वैषम्यं स्यादित्याशङ्क्याऽऽह—**येषामिति**। स्मृतिर्जन्मान्तरादावनुभूतस्य परामर्शः । देशकालस्वभावविप्रकृष्टस्यापि ज्ञानमनुभवः । धर्माधर्माभ्यां विचित्रं कुर्वतो नेश्वरस्य वैषम्यमिति भावः । वेदवेद्यं परं ब्रह्म भगवतोऽन्यदिति शङ्कां वारयति—**वेदैरिति**। वेदान्तानां पौरुषेयत्वं परिहरति—**वेदेति** । तदर्थसंप्रदायप्रवर्तकत्वार्थं तदर्थयाथातथ्यज्ञानवत्त्वमाह—**वेदार्थेति** ॥ १५ ॥

**आ० भा०**—वेदनिर्णयात्मिका मीमांसा वेदांताः । तथा च सामवेदे प्राचीनशालाश्रुतिः । "स वेदांतकृत्सकालकः" इति "स ह्येव युक्तिसूत्रकृत्सकालक" इति ॥ १५ ॥

**आ० ज०**—वेदांतकृदित्युपनिषदां कर्तेत्यन्यथाप्रतीतिनिरासार्थमाह—**वेदेति**। वेदो वेदार्थः तस्यांतो निर्णयस्तदात्मिका तादर्थ्यात्ताच्छब्द्यं मीमांसा ब्राह्मी तस्याः कर्तेति शेषः । कुत एतदित्यत आह—**तथाचेति** । युक्तिसूत्रकृद्वेदार्थनिर्णयार्थयुक्तिसूचकवाक्यकृत् । स कालक इति द्वितीयेन कलधातोर्ज्ञानाद्यर्थतया प्रसिद्धत्वान्निगदव्याख्यानमेतदित्याचष्टे ॥ १५ ॥

**रा० भा०**—अत्र परमपुरुषविभूतिभूतौ सोमवैश्वानरौ अहं सोमो भूत्वा वैश्वानरो भूत्वेति तत्सामानाधिकरण्येन निर्दिष्टौ । तयोश्च सर्वस्य भूतजातस्य च परमपुरुषसामानाधिकरण्यनिर्देशे हेतुमाह । तयोः सोमवैश्वानरयोः सर्वस्य भूतजातस्य च सकलप्रवृत्तिनिवृत्तिमूलज्ञानोदयदेशे हृदि सर्वं मत्सं-

कल्पेन नियच्छन् अहमात्मतया सन्निविष्टः । तथाहुः श्रुतयः । "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा । यः पृथिव्यां तिष्ठन्य आत्मनि तिष्ठन्नात्मनोन्तरो यमयति । पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् । अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" इत्याद्याः । स्मृतयश्च । 'शास्ता विष्णुरशेषस्य जगतो यो जगन्मयः । प्रशासितारं सर्वेषामणीयांसमणीयसाम् । यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः ।' इत्याद्याः । अतो मत्त एव सर्वेषां स्मृतिर्जायते स्मृतिः पूर्वानुभूतविषयमनुभवसंस्कारमात्रजं ज्ञानम् इन्द्रियलिङ्गागमयोगजो वस्तुनिश्चयः सोऽपि मत्तः अपोहनं च अपोहनं ज्ञाननिवृत्तिः 'अपोहनमूहनं वा ऊहनं ऊहवाव च ।' इति स्मृतेः । ऊहो नाम इदं प्रमाणमित्थं प्रवर्तितुमर्हतीति प्रमाणः प्रवृत्तार्हताविषयं सामग्र्यादिनिरूपणजन्यं प्रमाणानुग्राहकं ज्ञानम् ऊहो नाम वितर्कः स च मत्त एव वेदैश्च सर्वैरहमेव वेद्यः । अतोऽग्निवायुसूर्यसोमेन्द्रादीनां मदन्तर्यामिकत्वेन मदात्मकत्वात्तत्प्रतिपादनपरैरपि सर्वैर्वेदैरहमेव वेद्यः देवमनुष्यादिशब्दैर्जीवात्मैव वेदान्तकृत् वेदानाम् "इन्द्रं यजेत वरुणं यजेत" इत्येवमादीनामन्तः फलं फले हि ते सर्वे वेदाः पर्यवस्यन्ति अन्तकृत् फलकृत् वेदोदितफलस्य प्रदाता चाहमेवेत्यर्थः । तदुक्तं पूर्वमेव । 'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।' इत्यारभ्य 'लभते च ततः कामान्मयैव विहितान्हितान् । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥' इति । वेदविदेव चाहं वेदविचाहमेव एवं मदभिधायिनं वेदम् अहमेव वेद । इतोऽन्यथा यो वेदार्थं ब्रूते न स वेदविदित्यभिप्रायः ॥ १९ ॥

**अ० टी०**—नन्वेवं प्राणिमात्रस्य भगवद्रूपाग्निपाचितान्नपोषात् केषांचिद्भगवत्स्मरणं केषांचिदस्मरणादिकं च कथमित्यत आह—**सर्वस्य चेति** । चकारोऽपिशब्दार्थे । सर्वस्यापि अहं हृदि प्रेरकत्वेनेश्वररूपेण प्रविष्टः तिष्ठामीत्यर्थः । ततः किमत आह । मत्तः प्रविष्टात्मकत्वान्माद्विचित्रेच्छया स्मृतिः पूर्वानुभूतमस्वरूपस्मरणपुष्टया तदुद्धारार्थम् । तथैव मुक्तिदानेच्छया ज्ञानम् । च पुनः । मोहोत्पादनेन नरकादियातनेच्छया अपोहनं स्मृतिज्ञानयोः प्रमोषो विस्मरणमित्यर्थः । भवतीति शेषः । ननु वेदास्तु शब्दात्मकास्तदध्ययनेन सूत्रैः गुरूक्तप्रकारेण च कथं न ज्ञानोदय इत्यत आह । सर्वैः काण्डत्रयात्मकैर्वेदैरहमेव वेद्यः ज्ञेयः । अतो मदिच्छयैव वेदशब्दानां मद्वाक्यरूपाणामलौकिकानामर्थप्रकाशो नान्यथेत्यर्थः । वेदान्तकृत् सूत्रप्रदर्शनेन संप्रदायप्रवर्तको व्यासादिरूपो गुरुरहमेवेत्यर्थः । च पुनः अहमेव वेदवित् तदुक्तप्रकारेण शिष्यादिहृदयस्थो ज्ञानप्रकाशेन ज्ञानवानित्यर्थः । अतो न वेदादिभिरपि ज्ञानमिति भावः ॥ १९ ॥

**नी० टी०**—किंच सर्वस्य प्राणिजातस्याहं हृदि सन्निविष्ट आत्मेत्यर्थः । अतो मत्त आत्मनस्तेषां स्मृतिर्ज्ञानं च पुण्यवतां । पापिनां तु तयोरपोहनं विस्मरणमज्ञानं च भवति । तथा च सैर्ववेदैः कर्मोपास्तिज्ञानकांडात्मकैरहमेव परमात्मा वेद्यो वेदांतकृत् वेदांतोक्तविद्यासंप्रदायकृत् वेदवित् वेदार्थविचाहमेव । एतेन वेदांतविद्वेदविच्च स्वविभूतिरित्युक्तं भवति ॥ १९ ॥

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥**

**शां०भा०**—भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतो यदादित्यगतं तेज इत्यादिना, अथाधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य स्वरूप-

निर्दिधारयिषयोत्तरश्लोका आरभ्यन्ते। तत्र सर्वमेवातीतानागतानन्तराध्यायार्थजातं त्रिया राशीकृत्याऽऽह—द्वाविमौ पृथग्राशीकृतौ पुरुषावित्युच्येते लोके संसारे। क्षरश्च क्षरतीति क्षरो विनाश्येको राशिरपरः पुरुषोऽक्षरस्तद्विपरीतो भगवतो मायाशक्तिः क्षराख्यस्य पुरुषस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयोऽक्षरः पुरुष उच्यते। कौ तौ पुरुषावित्याह स्वयमेव भगवान्क्षरः सर्वाणि भूतानि समस्तं विकारजातमित्यर्थः। कूटस्थः कूटो राशी राशिरिव स्थितः, अथवा कूटो माया वञ्चना जिह्मता कुटिलतेति पर्यायाः, अनेकमायादिप्रकारेण स्थितः कूटस्थः संसारबीजानन्त्यान्न क्षरतीत्यक्षर उच्यते ॥ १६ ॥

**शां० आ०**—उत्तरश्लोकानां तात्पर्यं वक्तुं वृत्तं कीर्तयति—**भगवत इति**। विशिष्टोपाधिरादित्यादिः। संप्रत्यध्यायसमाप्तेरुत्तरसंदर्भस्य तात्पर्यमाह—**अथेति**। न केवलं निरुपाधिकात्मस्वरूपनिर्धारणायोत्तरग्रन्थः किंतु सर्वस्यैव गीताशास्त्रस्यार्थनिर्णयार्थमित्याह—**तत्रेति**। क्षराक्षरोपाधिभ्यां परमात्मना च राशित्रयमुक्तेन सर्वात्मत्वेनाशुद्ध्यादिदोषप्रसक्तावुक्तं—**द्वाविमाविति**। पुरुषोपाधित्वात्पुरुषत्वं न साक्षादिति विवक्षित्वाऽऽह—**पुरुषाविति**। परं पुरुषं व्यावर्तयति—**भगवत इति**। तत्र कार्यलिङ्गकमनुमानं सूचयति—**क्षराख्यस्येति**। मायाशक्तिं विना भोक्तॄणां कर्मादिसंस्कारादेवोक्तकार्योत्पत्तिरित्याशङ्क्य तस्य निमित्तत्वेऽपि मायाशक्तिरुपादानमिति मत्वाऽऽह—**अनेकेति**। कामकर्मादीत्यादिशब्देन ज्ञानं गृह्यते। प्रकृतिं पुरुषं चैवेति प्रकृतयोरिह ग्रहणमिति शङ्कामाकाङ्क्षाद्वारा वारयति—**कौ ताविति**। कूटशब्दार्थमुक्त्वा तेन स्थितस्य कूटस्थतेति संपिण्डितमर्थमाह—**अनेकेति**। तस्य कथमक्षरत्वं विना ब्रह्मज्ञानमनाशादित्याह—**संसारेति** ॥ १६ ॥

**आ० भा०**—क्षरभूतानि ब्रह्मादीनि। कूटस्था प्रकृतिः। तथा च शार्कराक्षश्रुतिः। "प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम्। तदुत्तमं चान्यमुदाहरंति जालाजालं मातरिश्वानमेकम्" इति ॥ १६ ॥

**आ० ज०**—क्षराक्षरशब्दौ जडजीवार्थावित्यपव्याख्याननिरासार्थमाह—**क्षरेति**। भूतग्रहणं युक्तिसूचनार्थम्। न हि जडमात्रे भूतशब्दो रूढः किं तु जीवेष्वपि। पुरुषशब्दस्य चैतदुपलक्षणम्। प्रकृतिश्चेतना। अक्षरं इति वक्तव्ये कूटस्थ इति वचनमपि युक्तिसूचनार्थमेव। न हि जीवानां कूटस्थत्वमस्ति सुखादिमत्त्वेन विकारित्वात्। श्रुतिसंमत्याऽयमेवार्थ इत्याह—**तथा चेति**। क्षर इत्यनुवादेन प्रजापतीत्यादि व्याख्यानम्। अन्यं परमात्मानम्। क्षरांतर्भूतोऽपि मातरिश्वा विवक्षाविशेषेणाक्षरोऽपि भवतीत्युच्यते—**जालेति**। जालं संसारबंधः सोऽस्यास्तीति जालः अर्शादिभ्योऽच् तद्रहितश्चाजालः अभिमानाभावात् ॥ १६ ॥

**रा० भा०**—अतो मत्त एव सर्ववेदानां सारमर्थं शृणु। क्षरश्चाक्षर एव चेति द्वाविमौ लोके पुरुषौ प्रथितौ तत्र क्षरशब्दनिर्दिष्टः पुरुषो जीवशब्दाभिलपनीयब्रह्मादिस्तम्बपर्यन्तक्षरणस्वभावाचित्संसृष्टसर्वभूतानि अत्राचित्सङ्गरूपैकोपाधिना पुरुष इत्येकत्वनिर्देशः अक्षरशब्दनिर्दिष्टः कूटस्थः अचित्संसर्गवियुक्तः स्वेन रूपेणावस्थितो मुक्तात्मा सत्त्वचित्संसर्गाभावात् अचित्परिणामविशेषब्रह्मादिदेहासाधारणो न भवतीति कूटस्थ इत्युच्यते। अत्राप्येकत्वनिर्देशोऽचिद्वियोगरूपैकोपाधिनाभिहितः न हीतः पूर्वमनादौ काले मुक्त एक एव। यथोक्तम्। 'बहवो ज्ञानतपसा पूता मद्भावमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति ॥ १६ ॥

**अ० टी०**—अथ स्वज्ञापितस्वरूपज्ञानार्थं सपरिकं स्वस्वरूपमाह—**द्वाविमाविति त्रिभिः**। लोके प्रपञ्चस्थिते सर्वत्र द्वाविमावेव पुरुषौ सर्वपदार्थभोक्तारौ आधिभौतिकाध्यात्मरूपौ क्षरः अक्षरश्च। उभयोः स्वरूपमाह—क्षरः पुरुषः सर्वाणि भूतानि ब्रह्मादिस्थावरान्तानि शरीराणि नानाविधानि लीलौपयिकलीलात्मकत्वे-

नानेकरूपाणि, क्षरशब्दवाच्यः पुरुषांशरूपः पुरुष इत्यर्थः । कूटः शिलासमूहः पर्वतस्तद्वत्सर्वपदार्थेषु शरीरादिषु विनश्यत्स्वपि तत्समूहस्थः अविनाशी भोक्ता मच्चरणात्मको यः सः, अक्षरः पुरुष इत्यर्थः ॥१६॥

नी० टी०—सर्वशास्त्रहृदयं संगृह्णाति—द्वाविति । लोके प्रसिद्धौ इमौ द्वावेव पुरुषौ क्षरो विनाशी स च सर्वाणि भूतानि प्राणवंति कर्मक्षये सुप्तिप्रलयकैवल्यादावुपाधिनाशमनु विनाशशीलो जीवो ब्रह्मप्रतिबिंबभूतो जलार्कोपमः । "प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति श्रुतेः । कूटस्थो निर्विकारो मायोपाधिरक्षरः तदुपाधेरकर्मजत्वेन नाशासंभवात् उपाधिदोषेणावशीकृतत्वाच्चासौ न क्षरति स्वरूपान्न च्यवत इत्यक्षरः ॥ १६ ॥

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥**

**शां० भा०—आभ्यां क्षराक्षराभ्यां विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः—उत्तम उत्कृष्टतमः पुरुषस्त्वन्योऽत्यन्तविलक्षण आभ्यां परमात्मेति परमश्चासौ देहाद्यविद्याकृतात्मभ्य आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः परमात्मेत्युदाहृत उक्तो वेदान्तेषु । स एव विशेष्यते यो लोकत्रयं भूर्भुवःस्वराख्यं स्वकीयया चैतन्यबलशक्त्याऽऽविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण बिभर्ति धारयत्यव्ययो नास्य व्ययो विद्यत इत्यव्यय ईश्वरः सर्वज्ञो नारायणाख्य ईशनशीलः ॥ १७ ॥**

**शां० आ०**—कार्यकारणाख्यौ राशी दर्शयित्वा राश्यन्तरं दर्शयति—**आभ्यामिति** । वैलक्षण्यफलमाह—**क्षरेति** । उपाधिद्वयकृतगुणदोषास्पर्शो फलितमाह—**नित्येति** । आभ्यां क्षराक्षराभ्यामिति यावत् । उत्तमोऽन्य इति पदद्वयं वस्तुतः सर्वथैव क्षराक्षरात्मत्वाभावदृष्ट्यर्थम् । जडवर्गस्यान्यत्वकृतं स्वातन्त्र्यं निरस्यति— **स एवेति** । लोकत्रयमित्युपलक्षणं सर्वं जगदपि विवक्षितम् । चैतन्यमेव बलं तत्र शक्तिर्माया तयेति यावत् । जगद्धारणे परस्य व्यापारान्तरं वारयति—**स्वरूपेति** । न चास्यान्यो धारयिता स्वतोऽचलत्वादित्याह—**अव्यय इति** । "संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः" इति श्रुत्यर्थं गृहीत्वाऽऽह—**ईश्वर इति** ॥ १७ ॥

**आ०भा०—॥ १७ ॥**

**आ० ज०**—॥ १७ ॥

**रा० भा०—उत्तमः पुरुषस्तु ताभ्यां क्षराक्षरशब्दनिर्दिष्टाभ्यां बद्धमुक्तपुरुषाभ्यामन्यः अर्थान्तरभूतः परमात्मेत्युदाहृतः सर्वासु श्रुतिषु परमात्मेति निर्देशादेव ह्युत्तमः पुरुषो बद्धमुक्तपुरुषाभ्यामर्थान्तरभूत इत्यवगम्यते । कथं, यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । लोक्यत इति लोकः तत्रयं लोकत्रयम् अचेतनं तत्संसृष्टचेतनो मुक्तश्चेति प्रमाणावगम्यमेतत्त्रयं य आत्मतयाऽऽविश्य बिभर्ति स तस्माद्व्याप्याद्भर्तव्याच्चार्थान्तरभूतः इतश्चोक्ताल्लोकत्रयादर्थान्तरभूतः । यतः सोऽव्यय ईश्वरश्च अव्ययस्वभावो हि व्ययस्वभावादचेतनभूतात् तत्संबन्धेन तदनुसारिणश्च चेतनात् अचित्संबन्धयोग्यतया पूर्वसंबन्धिनोऽमुक्ताच्चार्थान्तरभूत एव तथैतस्य लोकत्रयस्येश्वर ईशितव्यात्तस्मादर्थान्तरभूतः ॥ १७ ॥**

**अ० टी०**—पुरुषोत्तमज्ञानार्थमेतौ निरूपिताविति तदाह—**उत्तम इति** । तुशब्द एव तत्समत्वव्यावर्तनार्थः । उत्तमः पुरुषः अन्यः सर्वाज्ञातः सर्वव्यतिरिक्त इत्यर्थः । कीदृश इत्याकाङ्क्षायामाह परमात्मेत्युदाहृतः

परमश्चासावात्मेति परमः सर्वोत्कृष्ट आत्मा अविकृतः इति अमुना प्रकारेण श्रुत्यादिभिरुदाहृतः कथितो यो लोकत्रयं तत्तद्रसानुभवार्थम् आविर्भवति धारयति पोषयति च। एवंचेन्न्यूनाधिक्यं भविष्यतीत्याशङ्क्याह—**अव्यय इति**। निर्विकार इत्यर्थः। तर्हि धारणमनुपपन्नमित्यत आह—**ईश्वर इति**। कर्तुमन्यथाकर्तुं च समर्थः। अतस्तथेत्यर्थः ॥ १७ ॥

**नी० टी०**—एताभ्यां कार्यकारणोपाधिभ्यामन्यो निरुपाधिरुत्तमः पुरुषः योऽसौ परमात्मेत्युदाहृतः शास्त्रे। योऽसौ मायया ईश्वरो भूत्वा लोकत्रयमुत्तममध्यमाधमशरीररूपमाविश्य प्रविश्य धारयति शरीरत्रयम्। अथापि अव्ययः सर्वज्ञत्वेन ईश्वरधर्मेण अल्पज्ञत्वेन जीवधर्मेण वा न व्येति वर्धते क्षीयते वेत्यर्थः ॥ १७ ॥

**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥**

**शां० भा०—यथाव्याख्यातस्येश्वरस्य पुरुषोत्तम इत्येतन्नाम प्रसिद्धं तस्य नामनिर्वचनप्रसिद्ध्याऽर्थवत्त्वं नाम्नो दर्शयन्निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान्—यस्मात्क्षरमतीतोऽहं संसारमायावृक्षमश्वत्थाख्यमतिक्रान्तोऽहमक्षरादपि संसारवृक्षबीजभूतादपि चोत्तम उत्कृष्टतम ऊर्ध्वतमो वाऽतः क्षराक्षराभ्यामुत्तमत्वादस्मि भवामि लोके वेदे च प्रथितः प्रख्यातः पुरुषोत्तम इत्येवं मां भक्तजना विदुः कवयः काव्यादिषु चेदं नाम निबध्नन्ति पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति॥१८**

**शां० आ०**—किंच लोकवेदयोर्भगवतो नामप्रसिद्ध्या सिद्धमप्रपञ्चत्वमित्याह—**यथेति**। अश्वकर्णादिवदस्य नाम्नो रूढत्वादर्थविशेषाभावाद्भगवतोऽपि लौकिकेश्वरवदीश्वरत्वं सातिशयमिति नेत्याह—**तस्येति**। यस्मादित्यस्यापेक्षितं निक्षिपति—**अत इति**। उत्तमः पुरुष इति वाक्यशेषः ॥ १८ ॥

**आ० भा०—॥ १८ ॥**

**आ० ज०**—॥ १८ ॥

**रा० भा०—यस्मादेवमुक्तैः स्वभावैः क्षरं पुरुषमतीतोऽहम् अक्षरान्मुक्तादप्युक्तैर्हेतुभिरुत्कृष्टतमः अतोऽहं लोके वेदे च पुरुषोत्तम इति प्रथितोऽस्मि। वेदार्थावलोकनाल्लोक इति स्मृतिरिहोच्यते श्रुतौ स्मृतौ चेत्यर्थः। श्रुतौ तावत् "परं ज्योतिरूपं संपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इत्यादौ। स्मृतावपि 'अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः।' इत्यादौ ॥ १८ ॥**

**अ० टी०**—तद्रूपश्चाऽयमेवातः सोऽहमेवेत्याह—**यस्मादिति**। यस्मात्क्षरं जडादिदेहधर्मम् अतीतोऽतिक्रान्तः अहं परिदृश्यमान आनन्दरूपः। अक्षरादपि कूटस्थचेतनाऽऽत्मकादपि उत्तमोऽस्मि, अतो लोके चतुर्दशभुवनात्मके, वेदे, चकारेण सूत्रस्मृत्यादिष्वपि पुरुषोत्तमः प्रथितः कथितो विख्यात इति भावः ॥ १८ ॥

**नी० टी०—यस्मादिति**। क्षरमुपाधिमक्षरं चोपाधिमतीतोऽतिक्रम्य स्थितोऽहमतोऽक्षरादपि चेति चशब्दात् क्षरादपि उत्तमः उत्कृष्टतमः। जडात्क्षररूपादुपाधेरुत्कृष्टस्तदुपहितो जीवश्चेतनत्वात्। ततोऽप्युत्कृष्टतरो मायोपाधिः स्वतंत्रत्वात् ततोऽप्युत्कृष्टतमोऽनुपाधिरनागंतुकरूपत्वात्। अक्षरार्थः स्पष्टः ॥ १८ ॥

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ॥**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥**

**शां० भा०**—अथेदानीं यथानिरुक्तमात्मानं यो वेद तस्येदं फलमुच्यते—यो मामीश्वरं यथोक्तविशेषणमेवं यथोक्तेन प्रकारेणासंमूढः संमोहवर्जितः सञ्ज्ञानात्ययमहमस्मीति पुरुषोत्तमं स सर्ववित्सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मचित्ततया हे भारत ॥ १९ ॥

**शां० आ०**—आत्मनोऽप्रपञ्चत्वं ज्ञानफलोक्त्या स्तौति—**अथेति** । यथोक्तविशेषणं सर्वात्मत्वादिविशेषणोपेतमिति यावत् । क्षराक्षरातीतत्वं यथोक्तप्रकारः । संमोहवर्जितः संमोहेन देहादिष्वात्मात्मीयत्वबुद्ध्या रहित इत्यर्थः । भगवन्तं जानतः सर्ववित्त्वं तस्यैव सर्वात्मनामेयत्वादित्याह—**स सर्वविदिति** । सर्वात्मनि मय्येवाऽऽसक्तचित्तत्वेनेत्यर्थः ॥ १९ ॥

**आ० भा०**—॥ १९ ॥
**आ० ज०**—॥ १९ ॥

**रा० भा०**—यः एवमुक्तेन प्रकारेण पुरुषोत्तमं मामसंमूढो जानाति क्षराक्षरपुरुषाभ्यामन्ययस्वभावतया व्यापनभरणैश्वर्यादियोगेन च विसजातीयं जानाति स सर्ववित् मत्प्राप्त्युपायतया यद्वेदितव्यं तत्सर्वं वेद । भजति मां सर्वभावेन ये च मत्प्राप्त्युपायतया मद्भजनप्रकारा निर्दिष्टास्तैश्च सर्वैर्भजनप्रकारैर्मां भजते सर्वैर्मद्विषयैर्वेदनैर्मम या प्रीतिर्या च मम सर्वैर्मद्विषयैर्भजनैरुभयविधा सा प्रीतिरनेन वेदनेन मम जायत इत्येतत् पुरुषोत्तमत्ववेदनं पूजयति ॥ १९ ॥

**अ० टी०**—यतोऽहं पुरुषोत्तमः, अतो मज्ज्ञानवान् सर्वज्ञः सोऽन्यभजनरहितो मां भजतीत्याह—**योमामिति** । यो दुर्लभो मामसंमूढो मोहादिदोषराहितो व्यवसितमतिरेवं पूर्वोक्तप्रकारेण पुरुषोत्तमं जानाति स सर्ववित् सर्वज्ञ इत्यर्थः, सर्वविद्भवतीति वा । सर्वज्ञत्वलक्षणमाह । मां सर्वभावेन भजति । भारतेतिविश्वासाय॥१९॥

**नी० टी०**—एतद्विज्ञानफलमपि भक्तिरेवेत्याह—**यो मामिति** । असंमूढः मम पुरुषोत्तमत्वे संशयविपर्यासादिहीनः स एव सर्ववित् यतो मां पुरुषोत्तमं जानाति तत्फलं च मां सर्वभावेन सर्वात्मना सर्वैः प्रकारैर्भजति ॥ १९ ॥

**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ॥**
**एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगोनाम पंचदशोऽध्यायः ॥ १५ ॥

**शां० भा०**—अस्मिन्नध्याये भगवत्तत्त्वज्ञानं मोक्षफलमुक्त्वाऽथेदानीं तत्स्तौति—इत्येतद्गुह्यतमं गोप्यतममत्यन्तरहस्यमित्येतत् । किं तच्छास्त्रम् । यद्यपि गीताख्यं समस्तं शास्त्रमुच्यते तथाऽप्ययमेवाध्याय इह शास्त्रमित्युच्यते स्तुत्यर्थं प्रकरणात् । सर्वो हि गीताशास्त्रार्थोऽस्मिन्नध्याये समासेनोक्तो न केवलं, सर्वश्च वेदार्थ इह परिसमाप्तो 'यस्तं वेद स वेदवित्' 'वेदैश्च सर्वैरहमेव वेद्यः' इति चोक्तम् । इदमुक्तं कथितं मया हेऽनघापाप ! एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान्स्याद्भवेन्नान्यथा कृतकृत्यश्च भारत कृतं कृत्यं कर्तव्यं येन स कृतकृत्यो विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः । न चान्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः ।

' सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ' इति चोक्तम् । ' एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः । प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ' इति च मानवं वचनम् । यत एतत्परमार्थतत्त्वं मत्तः श्रुतवानसि ततः कृतार्थस्त्वं भारतेति ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

**शां० आ०**—अध्यायार्थमनूद्योपसंहारश्लोकमवतारयति—**अस्मिन्निति** । सर्वस्यां गीतायां शास्त्रशब्दे वक्तव्ये कथमस्मिन्नध्याये तत्प्रयोगः स्यादित्याशङ्क्याऽऽह—**यद्यपीति** । संनिहितमध्यायं स्तोतुमपि कुतस्तत्र शास्त्रशब्दस्तदर्थाभावात्तत्राऽऽह—**सर्वो हीति** । गीताशास्त्रार्थस्य सर्वस्यात्र संक्षिप्तत्वादेव केवलं शास्त्रशब्दो न भवति किं तु वेदार्थस्यापि सर्वस्यात्र समाप्तेर्युक्तं शास्त्रपदमित्याह—**नेति** । तत्र गमकमाह—**यस्तमिति** । भगवत्तत्त्वज्ञाने कृतकृत्यतेत्येतदुपपादयति—**विशिष्टेति** । नान्यथेत्युक्तं प्रपञ्चयति—**न चेति** । सत्यपि तत्त्वज्ञाने कर्मणां कर्तव्यत्वान्न कर्तव्यसमाप्तिरित्याशङ्क्याऽऽह—**सर्वमिति** । तत्त्वज्ञाने कृतार्थतेत्यत्र मनोरपि संमतिमाह—**एतद्धीति** । भारतेतिसंबोधनतात्पर्यमाह—**यत इति** । तदनेनाऽऽत्मनो देहाद्यतिरिक्तत्वं चिद्रूपत्वं सर्वात्मत्वं कार्यकारणविनिर्मुक्तत्वेनाप्रपञ्चत्वं तस्याखण्डैकरसब्रह्मात्मत्वज्ञानादशेषपुरुषार्थपरिसमाप्तिरित्युक्तम् ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने पंचदशोऽध्यायः ॥ १५ ॥

**आ० भा०**—॥ २० ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये पंचदशोऽध्यायः ॥ १५ ॥

**आ० ज०**—॥ २० ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पंचदशोऽध्यायः ॥ १५ ॥

**रा० भा०**—इत्थं परमपुरुषोत्तमत्वप्रतिपादनं सर्वेषां गुह्यानां गुह्यतममिदं शास्त्रं त्वमनघतया योग्यतम इति कृत्वा मया तवोक्तम् एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च मां प्रेप्सुना उपादेया या बुद्धिः सा सर्वोपात्ता स्यात् यच्च तेन कर्तव्यं तच्च सर्वं कृतं स्यादित्यर्थः । अनेन श्लोकेनानन्तरोक्तं पुरुषोत्तमविषयं ज्ञानं शास्त्रजन्यमेवैतत्सर्वं करोति नतु साक्षात्काररूपमित्युच्यते ॥ २० ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते गीताभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

**अ० टी०**—उपसंहरति—**इतीति** । इति अमुना प्रकारेण गुह्यतमम् अतिगुप्तरहस्यं शास्त्रं शासनधर्मरूप हे अनघ निष्पाप ! कुतर्काद्यनुपहतमते । इदं प्रत्यक्षं मया कृपालुनेत्यर्थः उक्तं कथितमित्यर्थः । प्रयोजनमाह—**एतदिति** । बुद्धिमान् कुशल एतद्बुद्ध्वा कृतं कृत्यम् एतत्सेवारूपं येन तादृशो भवेदित्यर्थः । यद्वा बुद्धिमान् स्यात् कृतकृत्य इत्यर्थः । अनेन सर्वेषां दैवजीवानां स्वरूपज्ञानार्थं प्रकटितमिति भावः । भारतेतिसंबोधनेन साहजिकबुद्धिमतो येन कृतकृत्यता स्यात्तत्र वंशोद्भवे त्वयि किं वक्तव्यमितिभावो व्यञ्जितः ॥ २० ॥

' कृष्णः पञ्चदशेऽध्याये लोकानां हितकाम्यया । पुरुषोत्तमयोगं हि पार्थाय कृपयाऽऽदिशत ॥'

इति श्रीभगवद्गीताऽमृततरङ्गिण्यां पञ्चदशोऽध्यायः ॥ १५ ॥

**नी० टी०**—अस्मिन्नध्याये भगवत्तत्त्वज्ञानस्य मोक्षफलत्वमुक्त्वाऽथेदानीं तत्स्तौति—**इतीति** । इति एतद्गुह्यतममत्यंतरहस्यं शास्त्रं यद्यपि इयमष्टादशाध्यायी कृत्स्ना शास्त्रं तथाऽप्यस्मिन्नध्याये कृत्स्नस्य शास्त्रार्थस्य प्रदर्शनादयमपि शास्त्रं । अत्र हि कार्यकारणविभागः संसारवृक्षस्यानित्यत्वं भगवतो विभूतयो 'यस्तं वेद स वेदवित् । वेदैश्च सर्वैरहमेव वेद्यो ।' इत्यादिना सर्वः शास्त्रार्थो दर्शितोऽस्ति । इदं मयोक्तं हेअनघ निर्व्यसन ! एतद् रहस्यं बुद्ध्वा बुद्धिमान् ज्ञानी स्यात् आत्मविद्भवेत् तावता कृतकृत्यः । सर्वं हि कृत्यं परमात्मावगतिपर्यंतं तत्रैव कृत्स्नपुरुषार्थसमाप्तेः । चात्प्राप्तप्रापणीयश्च स्यात् भवति नातःपरं कर्त्तव्यमवशिष्यते इत्यर्थः ॥ २० ॥

इति भीष्मपर्वणि नैलकंठीये भारतभावदीपे पंचदशोऽध्यायः ॥ १९ ॥

( श्लोकानामादितः समष्ट्यङ्काः—५२१ )



## ॥ अथ षोडशोऽध्यायः ॥ १६ ॥

**श्रीभगवानुवाच—अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**

**शां० भा०—दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचितास्तासां विस्तरेण प्रदर्शनायाभयं सत्त्वसंशुद्धिरित्यादिरध्याय आरभ्यते, तत्र संसारमोक्षाय दैवी प्रकृतिर्निबन्धनायाऽऽसुरी राक्षसी चेति दैव्या आदानाय प्रदर्शनं क्रियत इतरयोः परिवर्जनाय—अभयमभीरुता सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संव्यवहारेषु परवञ्चनमायानृतादिपरिवर्जनं शुद्धभावेन व्यवहार इत्यर्थः । ज्ञानयोगव्यवस्थितिर्ज्ञानं शास्त्रत आचार्यतश्चाऽऽत्मादिपदार्थानामवगमोऽवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्मसंवेद्यतापादनं योगस्तयोर्ज्ञानयोगयोर्व्यवस्थितिर्व्यवस्थानं तन्निष्ठतैषा प्रधाना दैवी सात्त्विकी संपत् । यत्र च येषामधिकृतानां या प्रकृतिः संभवति सात्त्विकी सोच्यते । दानं यथाशक्ति संविभागोऽन्नादीनां, दमश्च बाह्यकरणानामुपशमोऽन्तःकरणस्योपशमं शान्तिं वक्ष्यति, यज्ञश्च श्रौतोऽग्निहोत्रादिः, स्मार्तश्च देवयज्ञादिः, स्वाध्याय ऋग्वेदाद्यध्ययनमदृष्टार्थं, तपो वक्ष्यमाणं शारीरादि, आर्जवमृजुत्वं सर्वदा ॥ १ ॥**

**शां० आ०**—व्यवहितेन संबन्धं वदन्नध्यायान्तरमवतारयति—**दैवीति** । दैवी सूचिता राक्षसीमासुरीं चैवं प्रकृतिं मोहिनीमित्यादाविति शेषः । प्रकृतीनां विस्तरेण दर्शनं कुत्रोपयोगीत्याशङ्क्य विभज्योपयोगमाह—**संसारेति** । अतीते चाध्याये कर्मानुबन्धीन्यधश्च मूलान्यनुसंततानीत्यत्र कर्मव्यङ्ग्या वासनाः संसारस्यावान्तरमूलत्वेनोक्तास्ता मनुष्यदेहे प्राग्भवीयकर्मानुसारेण व्यज्यमानाः सात्त्विकादिभेन दैव्यादिप्रकृतित्रयत्वेन विभक्ताविस्तितीर्षुर्भगवानुक्तवानित्याह—**श्रीभगवानिति** । अभीरुता शास्त्रोपदिष्टेऽर्थे संदेहं हित्वाऽनुष्ठाननिष्ठत्वं, परवञ्चना परस्य व्याजेन वशीकरणम्, माया हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणम्, अनृतमयथादृष्टकथनमादिपदेन विप्रलम्भादिग्रहः । उक्तमर्थं संक्षिप्याऽऽह—**शुद्धेति** । एषेत्यभयाद्या ज्ञानादिस्थित्यन्ता त्रिधोक्तेति यावत् । तामेव सात्त्विकीं प्रकृतिं प्रकटयति—**यत्रेति** । ज्ञाने कर्मणि वाऽधिकृतानामभीरुताद्या या प्रकृतिः सा तेषां तत्र सात्त्विकी संपदित्यर्थः । महाभाग्यानामत्युत्तमा दैवी संपदुक्ता संप्रति सर्वेषां यथासंभवं संपदं व्यपदिशति—**दानमिति** । बाह्यकरणविशेषे कारणमाह—**अन्तःकरणस्येति** । देवयज्ञादिरित्यादिशब्देन पितृयज्ञो भूतयज्ञोमनुष्ययज्ञश्चेति त्रयमुक्तम् । ब्रह्मयज्ञस्य स्वाध्यायेन पृथक्करणात् ॥ १ ॥

**आ० भा०—ॐ साधनविघ्नहर्त्रे नमः ॥ ॐ ॥ पुमर्थसाधनविरोधीन्यनेनाध्यायेन दर्शयति तपो ब्रह्मचर्यादि । 'ब्रह्मचर्यादिकं तपः' इत्यभिधानम् ॥ १ ॥**

**आ० ज०**—अध्यायप्रतिपाद्यं दर्शयति—**पुमर्थेति** । यद्यपि पूर्वयोरध्याययोः साधनप्रतिपादन एव तात्पर्यं तथाऽपि तन्न प्रपंचितम् । किं नाम बंधस्वरूपम् । साधनमनुतिष्ठता च तद्विरोधिनां त्यागोऽवश्यं करणीयः । पूर्वाध्याये च निर्मानेत्यादिना पुमर्थयोर्ज्ञानमोक्षयोः साधनं 'यतंतोऽव्यक्तृतात्मान' इत्यादिना तद्विरोधि च संक्षेपेणोक्तम् तदुभयमिदानीं प्रपंचनीयम् । सुरासुर-लक्षणं च तथेति तदनेनाध्यायेन दर्शयतीत्यर्थः । तपो वक्ष्यमाणमिति कश्चित् तदसत् । देवद्विजेत्यादिनोक्तस्यात्र ग्रहणे शौचादेरपि तपोग्रहणेन गृहीतत्वात्पुनरुक्तिप्रसंगात् । अतो वक्ष्यमाणांतर्गतं यदत्र पृथगुच्यते तद्व्यतिरिक्तमेव । तच्च प्रधानस्यै-वोपलक्षणत्वोपपत्तेः नोपवासादीतिभावेन सप्रमाणकमाह—**तप इति** ॥ १ ॥

**रा०भा०—अतीतेनाध्यायत्रयेण प्रकृतिपुरुषयोर्विविक्तयोः संसृष्टयोश्च याथात्म्यं तत्संसर्गवियो-गयोश्च गुणसङ्गतद्विपर्ययहेतुकत्वं सर्वप्रकारेणावस्थितयोः प्रकृतिपुरुषयोर्भगवद्विभूतित्वं विभूतिमतो भगवतो विभूतिभूतादचिद्वस्तुनः चिद्वस्तुनश्च बद्धमुक्तोभयरूपादव्ययत्वव्यापनभरणस्वाम्यैरर्थान्तरतया पुरुषोत्तमत्वेन याथात्म्यं च वर्णितम् । अनन्तरमुक्तस्यार्थस्य स्थेम्ने शास्त्रवश्यतां वक्तुं शास्त्रवश्य-तद्विपरीतयोर्देवासुरसर्गयोर्विभागम् । इष्टानिष्टवियोगसंयोगरूपस्य दुःखस्य हेतुदर्शनजं दुःखं भयं तन्निवृत्तिरभयम् । सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य रजस्तमोभ्यामसपृष्टत्वम् । ज्ञानयोगव्यव-स्थितिः प्रकृतिवियुक्तात्मस्वरूपविवेकनिष्ठा । दानं न्यायार्जितधनस्य पात्रे प्रतिपादनम् । दमो मनसो विषयौन्मुख्यनिवृत्तिसंशीलनम् । यज्ञः फलाभिसंधिरहितभगवदाराधनरूपमहायज्ञाद्यनुष्ठानम् । स्वाध्यायः सविभूतेर्भगवतस्तदाराधनप्रकारस्य च प्रतिपादकः कृत्स्नो वेद इत्यनुसंधाय वेदाभ्यास-निष्ठा । तपः कृच्छ्रचान्द्रायणद्वादश्युपवासादेर्भगवत्प्रीणनकर्मयोग्यतापादनस्य करणम् । आर्जवं मनोवाक्कायकर्मवृत्तीनामेकनिष्ठता ॥ १ ॥**

**अ० टी०**—श्रीकृष्णाय नमः ॥ 'विमुक्तिबन्धज्ञानार्थं दैवीसम्पत्तथाऽऽसुरी ॥ सलक्षणा सकार्या च षोडशे विनिरूप्यते ॥ १ ॥ ' पूर्वाध्यायान्ते एतद्बुद्ध्वा बुधिमान् कृतकृत्यः स्यादित्युक्तम् । तत्र सृष्टौ बहव एव बुद्धिमन्तो दृश्यन्ते ते कथं नैतज्ज्ञानार्थं यतन्ते यतमानेष्वपि कथं न सर्वे एव ज्ञात्वा भजनेन कृतकृत्या भव-न्तीत्याशङ्क्याऽत्र दैवजीवा दैव्यामेव संपदि जाता अधिकारिणो यतमानाः कृतकृत्या भवन्तीतिज्ञापनाय दैवीसंपत्स्वरूपमाह—**अभयमित्यादित्रयेण** । अभयं भयाभावः कालादिसर्वनियामकत्वेनेश्वरज्ञानात्, सत्त्वस्य चित्तस्य सम्यक् शुद्धिः गुरूपसत्त्यादिना प्राप्तभगवन्नामावृत्त्या भगवत्परत्वम्, ज्ञानयोगव्यवस्थितिः ज्ञानयोगे भगवज्ज्ञानोपाये व्यवस्थितिरेकाग्रतया स्थितिः, दानं यथाशक्त्यनभिलाषेण भगवत्प्रीत्यर्थमन्नादिविभागः, दम इन्द्रियनिग्रहः, यज्ञो यथाशक्ति यथाविधि यथाऽधिकारमग्निहोत्रादिकरणम् । चकारेण भगवद्विभू-तिज्ञानेन नान्यथेत्युच्यते । स्वाध्यायो ब्रह्मयज्ञादिः, तपो भगवदर्थं देहादिक्लेशः, आर्जवं कौटि-ल्यराहित्यम् ॥ १ ॥

**नी० टी०**—नवमाध्याये राक्षसी आसुरी दैवी चेति तिस्रः संपद उक्तास्तासु राक्षसीमासुर्यामेवांतर्भाव्य द्वे एव संपदावत्र व्युत्पाद्येते । "द्वया ह प्राजापत्या देवाश्चासुराश्च" इति श्रुतौ अभयसत्वशुद्ध्यादिधीवृत्तयो देवाः दंभदर्पादिधीवृत्तयोऽसुरा इति द्वैराश्यस्यैव दर्शनात् । पूर्वाध्यायांते इदमुक्तं मयाऽनघेत्यर्जुनं संबो-धयताऽनघत्वं दैवसंपत्तिमत्त्वं तद्विपर्ययस्त्वासुरीसंपदिति दर्शयितुं श्रीभगवानुवाच—**अभयमिति** । अभयं

स्वोच्छेदबुद्ध्यभावः । सत्वसंशुद्धिश्चित्तनैर्मल्यं । ज्ञानं श्रवणादिजन्यं योगो ज्ञातेऽर्थे चित्तप्रणिधानं तयोर्व्यवस्थितिर्निष्ठा । एषा मुख्या दैवीसंपत् दानं यथाशक्ति संविभागोऽन्नादीनां । दमो बाह्येंद्रियनियमः । यज्ञः श्रौतस्मार्तादिः । स्वाध्यायो वेदाध्ययनं । तपो वक्ष्यमाणलक्षणं शारीरादि त्रिविधं । आर्जवमृजुत्वं सर्वदा ॥ १ ॥

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ॥**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥**

**शां० भा०—किंच—अहिंसाऽहिंसनं प्राणिनां पीडावर्जनं, सत्यमप्रियानृतवर्जितं यथाभूतार्थवचनम्, अक्रोधः परैराक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनं, त्यागः संन्यासः पूर्वं दानस्योक्तत्वात्, शान्तिरन्तःकरणस्योपशमः, अपैशुनमपिशुनता परस्मै पररन्ध्रप्रकटीकरणं पैशुनं तदभावोऽपैशुनं, दया कृपा भूतेषु दुःखितेषु, अलोलुप्त्वमिन्द्रियाणां विषयसंनिधावविक्रिया, मार्दवं मृदुताऽक्रौर्यं ह्रीर्लज्जा, अचापलमसति प्रयोजने वाक्पाणिपादादीनामव्यापारयितृत्वम् ॥ २ ॥**

**शां० आ०**—दैवीं संपदमभिजातस्य विशेषणान्तराणि दर्शयति—**किंचेति** । त्यागशब्देन दानं कस्मान्नोच्यते तत्राऽऽह—**पूर्वमिति** । लज्जाऽकार्यानुवृत्तिहेतुगर्हानिमित्ता मनोवृत्तिः ॥ २ ॥

**आ० भा०—पैशुनं परोपद्रवनिमित्तदोषाणां राजादेः कथनम् । 'परोपद्रवहेतूनां दोषाणां पैशुनं वचः । राजादेस्तु मदाद्भीतेरदृष्टिर्दर्प उच्यते ' इत्यभिधानात् । लौल्यं रागः । 'रागो लौल्यं तथा रक्तिः' इत्यभिधानात् । अचापलं स्थैर्यम् । 'चपलश्चंचलोऽस्थिरः' इत्यभिधानात् ॥ २ ॥**

**आ० ज०**—पैशुनाभावोऽपैशुनं च परस्यापराधवचनमितितदसत् । शिष्यादिदोषानुवादस्य शिक्षार्थस्यापि तत्त्वप्राप्तेरित्याशयेनाह—**पैशुनमिति** । राजादेस्तच्छ्रावणम् । परोपद्रवनिमित्तेतिदोषेषूपचारः । अनेन परोपद्रवायेति सूचयति वचःकथनम् । मदात्कारणात् । भीतेरदृष्टिरनुत्पत्तिरिति यावत् । भीतेर्भीतिकारणस्य तत्त्रात्वेनादृष्टिरिति वा । बालादीनां भीतेरदर्शनं व्यावर्तयितुं मदादित्युक्तम् । अनेन धात्वर्थोऽप्यनुगतः । एतेनासुरलक्षणं दर्पोऽपि व्याख्यातः । अलोलुप्त्वाचापलत्वयोर्भेदं क्रमेण सप्रमाणकं दर्शयति—**लौल्यमिति** । लोलुप्त्वपर्यायोऽयमिति अतएवमुक्तम् ॥ २ ॥

**रा० भा०—परेषु अहिंसा परपीडावर्जनम् । सत्यं यथादृष्टार्थगोचरभूतहितवाक्यम् । अक्रोधः परपीडाफलचित्तविकाररहितत्वम् । त्यागः आत्महितप्रत्यनीकपरिग्रहविमोचनम् । शांतिरिन्द्रियाणां विषयप्रावण्यनिरोधसंशीलनम् । अपैशुनं परानर्थकरवाक्यानिवेदनाकरणम् । दया भूतेषु सर्वेषु दुःखासहिष्णुत्वम् । अलोलुप्त्वम् अलोलुत्वमिति वा पाठः । विषयेषु निःस्पृहत्वमित्यर्थः । मार्दवम् अकाठिन्यम् साधुजनसंश्लेषार्हतेत्यर्थः । ह्रीः अकार्यकरणे लज्जा । अचापलं स्पृहणीयविषयसन्निधावचपलत्वम् ॥ २ ॥**

**अ० टी०**—अहिंसा परपीडाराहित्यं, सत्यं स्वार्थपरार्थलोभादिराहित्येन यथार्थभाषणम् अक्रोधो निष्कारणताडनादिभिरपि क्षोभाऽभावः, त्यागः अनासक्तिः, शान्तिः चित्तस्थैर्यम्, अपैशुनं सर्वत्र भगवदात्मबुद्ध्या परापवादराहित्यम्, भूतेषु दया जीवेषु भगवद्वियुक्तत्वेन दया तत्स्मरणोपदेशादिरूपा, अलोलुप्त्वं

भोगेच्छया मनोधावनत्वाऽभावः, मार्दवं मृदुत्वं परदुःखाभिज्ञत्वम्, ह्रीः लज्जा प्रभुविप्रयोगजीवने सेवाद्यकरणेन लौकिकप्रवृत्तौ च, अचापलं लौकिकक्रियाऽऽसक्त्या भगवत्क्रियादिषु शैघ्र्याऽभावः ॥ २ ॥

**नी० टी०**—किंच अहिंसा प्राणिपीडावर्जनं । सत्यमप्रियानृतवर्जनं यथाभूतार्थभाषणं । अक्रोधः परैराकुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनं । त्यागः सर्वकर्मसंन्यासः । पूर्वं दानस्योक्तत्वात् शांतिरंतःकरणस्योपरमः । पैशुनं परदोषप्रकाशनं अपैशुनं तद्वर्जनं । दया दुःखितेषु भूतेषु कृपा । अलोलुप्त्वमिंद्रियाणां विषयसंनिधावप्यविक्रिया । मार्दवं मृदुता । ह्रीर्लज्जा । अचापलं असति प्रयोजने वाक्पाणिपादादीनामव्यापारयितृत्वम् ॥ २ ॥

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ॥**
**भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥**

**शां० भा०**—किंच—तेजः प्रागल्भ्यं न त्वग्गता दीप्तिः,क्षमाऽऽक्रुष्टस्य ताडितस्य वाऽन्तर्विक्रियानुत्पत्तिरुत्पन्नायां विक्रियायां प्रशमनमक्रोध इत्यवोचाम, इत्थं क्षमाया अक्रोधस्य च विशेषः, धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणवृत्तिविशेषो येनोत्तम्भितानि करणानि देहश्च नावसीदन्ति, शौचं द्विविधं मृज्जलकृतं बाह्यमाभ्यन्तरं च मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभाव एवं द्विविधं शौचम्, अद्रोहः परजिघांसाभावोऽहिंसनं, नातिमानिताऽत्यर्थं मानोऽतिमानः स यस्य विद्यते सोऽतिमानी तद्भावोऽतिमानिता तदभावो नातिमानिताऽऽत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः । भवन्त्यभयादीन्येतदन्तानि संपदमभिजातस्य । किंविशिष्टां संपदं दैवीं देवानां संपदमभिलक्ष्य जातस्य दैवविभूत्यर्हस्य भाविकल्याणस्येत्यर्थो हे भारत ॥ ३ ॥

**शां० आ०**—दैवीं संपदं प्राप्तस्य विशेषणान्तराण्यपि सन्तीत्याह—**किंचेति** । व्यावर्त्य कीर्तयति—**नेति** । अध्यात्माधिकारादिति शेषः । क्षमाक्रोधयोरेकार्थत्वेन पौनरुक्त्यमाशङ्क्य परिहरति—**उत्पन्नायामिति** । तयोरेवं विशेषादपौनरुक्त्यं फलतीत्याह—**इत्थमिति** । वृत्तिविशेषमेव विशदयति— **येनेति** । शौचस्य द्वैविध्यमेव प्रकटयति—**मृज्जलेत्यादिना** । नैर्मल्यमेव स्फोरयति—**मायेति** । उक्तमुपसंहरति—**एवमिति** । अतिमानित्वाभावमेव व्यनक्ति—**आत्मन इति** । कस्यैतानि विशेषणानीत्यपेक्षायामाह—**भवन्तीति** । साधकस्य मनुष्यदेहस्थस्यैव कथं दैवीं संपदमभिलक्ष्य जातत्वमित्याशङ्क्याऽऽह—**दैवेति** ॥ ३ ॥

**आ० भा०**—क्षमा तु क्रोधाभावेन सहापकर्तुरनपकारः । 'अक्रोधो दोषकृच्छत्रोः क्षमावान्सनिगद्यते' इत्यभिधानात् ॥ ३ ॥

**आ० ज०**—अक्रोध इत्युक्तत्वात् क्षमेतिपुनरुक्तिरित्यत आह—**क्षमा त्विति** । क्रोधं दोषं अपकारं च न करोतीत्यक्रोधदोषकृत् । शत्रोरपकर्तुः ॥ ३ ॥

**रा० भा०**—तेजः दुर्जनैः अनभिभवनीयत्वम् । क्षमा परनिमित्तपीडानुभवेऽपि परेषु तं प्रति चित्तविकाररहितता । धृतिः महत्यामप्यापदि कृत्यकर्तव्यतावधारणम् । शौचं बाह्यान्तःकरणानां कृत्ययोग्यता शास्त्रीया । अद्रोहः परेष्वनुपरोधः । परेषु स्वच्छन्दवृत्तिनिरोधरहितत्वमित्यर्थः । नातिमानिता स्थाने गर्वोऽतिमानित्वं तद्राहितता । एते गुणा दैवीं संपदमभिजातस्य भवन्ति ।

**देवसंबान्धिनी संपत् दैवी देवा भगवदाज्ञानुवृत्तिशीलाः तेषां संपत्सा च भगवदाज्ञानुवृत्तिरेव तामभिजातस्य तामभिमुखीकृत्य जातस्य तामभिर्वतयितुं जातस्य भवन्तीत्यर्थः ॥ ३ ॥**

**अ० टी०**—तेजो भगवत्कृपाप्रागल्भ्येनाधृष्यत्वम्, क्षमा विद्यमाने सामर्थ्ये परिभवादिषु क्रोधानुत्पत्तिः, धृतिः लौकिकालौकिकदुःखादिषु चित्तस्थैर्यम्, शौचं स्नानादिभगवत्स्मरणादिना च बाह्याभ्यन्तरशुद्धिः, अद्रोहः पराऽनिष्टाचिन्तनाऽभावः अतिमानिता आत्मनि सर्वाधिक्यज्ञानं तदभावो नातिमानिता । एतानि सर्वाणि दैवीं भगवत्क्रीडौपयिकीं सात्त्विकीं संपदम् अभिजातस्य भगवदाभिमुख्येन भगवत्कृपया तस्य भवन्ति । एतद्धर्मवत्त्वे भगवदाभिमुख्यं ज्ञेयमितिभावः । भारतेति विश्वासार्थं संबोधनम् ॥ ३ ॥

**नी० टी०**—किंच तेजः प्रागल्भ्यं न तूग्रता । क्षमा आक्रुष्टस्य ताडितस्य वांतर्विक्रियानुत्पत्तिः । उत्पन्नाया विक्रियायाः प्रशमनमक्रोध इत्युक्तं । धृतिर्देहेंद्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोंऽतःकरणवृत्तिविशेषो येनोत्तंभितानि देहादीनि नावसीदंति । शौचं द्विविधं मृज्जलाभ्यां बाह्यमांतरं मनोबुद्ध्योर्नैर्मल्यं । माया रागादिकालुष्याभावः । अद्रोहः पराजिघांसाया अभावः । नातिमानिता अत्यंतं मानराहित्यं । एतानि अभयादीनि दैवीं सत्वप्रधानां संपदमभिलक्ष्य जातस्य स्वभावतो भवंति हेभारत ॥ ३ ॥

## दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ॥
## अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥

**शां० भा०—अथेदानीमासुरी संपदुच्यते—दम्भो धर्मध्वजित्वम्, दर्पो धनस्वजनादिनिमित्त उत्सेकोऽतिमानः पूर्वोक्तः क्रोधश्च, पारुष्यमेव च पुरुषवचनं यथा काणं चक्षुष्मान्, विरूपं रूपवान्, हीनाभिजनमुत्तमाभिजन इत्यादि । अज्ञानं चाविवेकज्ञानं मिथ्याप्रत्ययः कर्तव्याकर्तव्यादिविषयमभिजातस्य पार्थ । किमभिजातस्येत्याह—असुराणां संपदासुरी तामभिजातस्येत्यर्थः ॥ ४ ॥**

**शां० आ०**—आदेयत्वेन दैवीं संपदमुक्त्वा हेयत्वेनाऽऽसुरीं संपदमाह—**अथेति** । उत्सेको मदो महदवधीरणाहेतुः, आत्मन्युत्कृष्टत्वाध्यारोपोऽतिमानः क्रोधस्तु कोपापरपर्यायः स्वपरापकारप्रवृत्तिहेतुर्नेत्रादिविकारलिङ्गोऽन्तःकरणवृत्तिविशेषः । परुषो निष्ठुरः प्रत्यक्षरूक्षवाक्तस्य भावः पारुष्यं, तदुदाहरति—**यथेति**। तामभिजातस्य दम्भादीन्यज्ञानान्तानि भवन्तीत्यनुषज्यते॥४॥

**आ० भा०**—॥ ४ ॥

**आ० ज०**—॥ ४ ॥

**रा० भा०—दम्भो धार्मिकत्वख्यापनाय धर्मानुष्ठानम् । दर्पः कृत्याकृत्याविवेककरो विषयानुभवनिमित्तो हर्षः । अतिमानश्च स्वविद्याभिजनानुगुणोऽभिमानः क्रोधः परपीडाफलचित्तविकारः । पारुष्यं साधूनामुद्वेगकरः स्वभावः । अज्ञानं परावरतत्त्वकृत्याकृत्याविवेकः । एते स्वभावाः आसुरीं संपदमभिजातस्य भवन्ति आसुरा भगवदाज्ञातिवृत्तिशीलाः ॥ ४ ॥**

**अ० टी०**—एवं सलक्षणां दैवीं संपदमुक्त्वा आसुरीमाह—**दम्भइति** । दम्भो धर्मध्वजित्वम् अन्तस्तदभावेन बहिर्धर्मप्रकटनम्, दर्पो विद्यामदेन स्वात्मविस्मरणेन सर्वोपमर्दतयाऽऽधिक्येन स्थितिः क्रोधः स्वबलाधिक्यभावनया निष्ठुरवाक्यताऽनिष्टचिन्तनं च, पारुष्यं कार्कश्यं परदुःखानभिज्ञता । एवकारेण क्वचिदपि कदाचिदप्यपारुष्यमितिज्ञापितम् । च पुनः । अज्ञानं सर्वस्वरूपानभिज्ञता । आसुरीं संपदमभिजातस्य मदिच्छया जातस्यैतानि लक्षणानि भवन्तीत्यर्थः ॥ ४ ॥

नी० टी०—अथेदानीं रजस्तमोमयी आसुरी संपदुच्यते—दंभ इति । दंभो धर्मध्वजित्वं । दर्पः धनाभिजनानिमित्त उत्सेकः । अभिमान आत्मनि पूज्यताबुद्धिः । क्रोधः प्रसिद्धः । पारुष्यं निष्ठुरभाषणं । अज्ञानमविवेकजनितो मिथ्याप्रत्ययः । एते आसुरीं संपदमभिलक्ष्य जातस्य भवंति हे पार्थ ॥ ४ ॥

**दैवी संपद्विमोक्षाय निबन्धायाऽऽसुरी मता ॥**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

**शां० भा०—अनयोः संपदोः कार्यमुच्यते—दैवी संपद्या सा विमोक्षाय संसारबन्धनात्, निबन्धाय नियतो बन्धो निबन्धस्तदर्थमासुरी संपन्मताऽभिप्रेता तथा राक्षसी । तत्रैवमुक्तेऽर्जुनस्यान्तर्गतं भावं किमहमासुरसंपद्युक्तः किं वा दैवसंपद्युक्त इत्येवमालोचनारूपमालक्ष्याऽऽह भगवान्मा शुचः शोकं मा कार्षीः संपदं दैवीमभिजातोऽस्यभिलक्ष्य जातोऽसि भाविकल्याणस्त्वमसीत्यर्थो हे पाण्डव ॥ ५ ॥**

शां० आ०—कार्यं फलविभागः । आसुरीत्युपलक्षणं राक्षसी चेति द्रष्टव्यमित्याह—**तथेति** । फलविभागे संपदोरेवमुक्ते प्रतीत्यार्जुनस्याभिप्रायं भगवतो वचनमित्याह—**तत्रेति** । तत्राऽऽभिजात्यं हेतुं करोति—हे **पाण्डवेति** ॥ ५ ॥

**आ० भा०—दैवीं संपदमभिजातः प्रतिजातः ॥ ५ ॥**

आ० ज०—संपदं दैवीमभिजातोऽसीत्यत्राभिजात उत्तमजन्मा । नायं धातुः सकर्मकः तत्कथं द्वितीयेत्याशंक्य अभिलक्ष्य जात इति केचिद्व्याचक्षते तदसत् । अर्जुनस्य देवत्वेन देवत्वमुद्दिश्य जन्मायोगादित्याशयवानाह—**दैवीमिति** । अनेनैतदाचष्टे । नायमभिरुपसर्गः येन तस्य जनिसंबंधे द्वितीयाऽनुपपत्तिर्लक्षिसंबंधे चोक्तानुपपत्तिः स्यात् किं तु प्रत्यर्थे लक्षण कर्मप्रवचनीयः । तथा च कर्मप्रवचनीययुक्ते द्वितीयोपपद्यते । तथा वृक्षमभिवृक्षं प्रति विद्योतते इत्यत्र वृक्षो विद्योतनस्य लक्षणमित्यर्थः । एवं दैवी संपज्जातस्य तव लक्षणमित्यर्थः । संपद्यते तथाचार्जुनस्य प्राप्तदेवत्वविरोध इति । अत एव संपदं दैवीमभिजातस्य पार्थसंपदमासुरीमित्येतद्विहायेदं व्याख्यातम् । अर्जुनस्य देवत्वप्रसिद्धेः एतत्साहचर्यात्तत्राऽप्येतदर्थत्वोपपत्तेः ॥ ५ ॥

**रा० भा०—दैवी मदाज्ञानुवृत्तिरूपा संपद्विमोक्षाय बन्धान्मुक्तये भवति क्रमेण मत्प्राप्तये भवतीत्यर्थः । आसुरी मदाज्ञातिवृत्तिरूपा संपन्निबन्धाय भवति अधोगतिप्राप्तये भवतीत्यर्थः । एतच्छ्रुत्वा स्वप्रकृत्यनिर्धारणादतिभीतायार्जुनायैवमाह शोकं मा कृथाः । त्वं तु दैवीं संपदमभिजातोऽसि । हे पाण्डव धार्मिकाग्रेसरस्य हि पाण्डोस्तनयस्त्वमित्यभिप्रायः ॥ ५ ॥**

अ० टी०—उभयोः संपदोः कार्यमाह—**दैवीसंपदिति** । दैवीसंपत् विमोक्षाय विशेषेण मोक्षाय पुष्टिमर्यादाभेदेन मता मत्संमतेत्यर्थः । आसुरी निबन्धाय नितरां बन्धाय पुनः संसारपर्यावर्तनेनान्ते अन्धंतमःप्रवेशाय मता संमतेत्यर्थः । एतच्छ्रवणेन युद्धोपस्थितौ कौरवादिषु क्रोधोत्पत्त्या शोचन्तमर्जुनमाश्वासयति—**मा शुच इति** । हे पाण्डव ! क्षत्रियात्मजत्वेन शोकानर्ह ! दैवीं संपदमभिजातोऽसि मदिच्छयाऽतो मा शुचः शोचं मा कार्षीः ॥ ५ ॥

नी० टी०—अनयोः संपदोः कार्यमाह—**दैवीति** । दैवी पूर्वोक्ता अर्जुनस्य शंका किमहमासुर्यां संपदि जातोऽस्मीति तामपनुदति—**मा शुच इति** ॥ ५ ॥

**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ॥**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥**

**शां० भा०**—द्वौ भूतेति । द्वौ द्विसंख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ सृज्यंते इति सर्गौ भूतान्येव सृज्यमानानि दैवासुरसंपद्युक्तानि द्वौ भूतसर्गावित्युच्येते "द्वया ह प्राजापत्या देवाश्चासुराश्च" इति श्रुतेः । लोकेऽस्मिन्संसार इत्यर्थः । सर्वेषां द्वैविध्योपपत्तेः । कौ तौ भूतसर्गावित्युच्येते प्रकृतावेव दैव आसुर एव च । उक्तयोरेव पुनरनुवादे प्रयोजनमाह दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशोविस्तरप्रकारैः प्रोक्तः कथितो न त्वासुरो विस्तरशोऽतस्तत्परिवर्जनार्थमासुरं पार्थ मे मम वचनादुच्यमानं विस्तरशः शृण्ववधारय ॥ ६ ॥

**शां० आ०**—निर्दयानां रक्षसां संपत्तृतीयाऽस्ति सा कस्मान्नोक्तेत्याशङ्कयाऽऽसुर्यामन्तर्भावादित्याह—**द्वाविति** । भूतानां द्वैविध्ये मानत्वेनोद्गीथब्राह्मणमुदाहरति—**द्वयाहेति** । संपद्द्वययुतेभ्योऽतिरिक्तानामपि प्राणिभेदानां संभवात्कुतो भूतानां द्वित्वनियतिरित्याशङ्कयाऽऽह—**सर्वेषामिति** ॥ ६ ॥

**आ० भा०**—॥ ६ ॥

आ० ज०—॥ ६ ॥

**रा० भा०**—अस्मिन् कर्मलोके कर्मकराणां भूतानां सर्गौ द्वौ द्विविधौ दैवश्च आसुरश्चेति । सर्गः उत्पत्तिः प्राचीनपुण्यपापरूपकर्मवशाद्भगवदाज्ञानुवृत्तितद्विपरीतकरणायोत्पत्तिकाल एव विभागेन भूतान्युत्पद्यन्त इत्यर्थः । तत्र दैवसर्गो विस्तरशः प्रोक्तः । देवानां मदाज्ञानुवर्तिशीलानाम् उत्पत्तिः यदाचारकरणार्थः स आचारः कर्मयोगज्ञानयोगभक्तियोगरूपो विस्तरशः प्रोक्तः । आसुराणां सर्गश्च यदाचारकरणार्थस्तमाचारं मे शृणु मत्सकाशाच्छृणु ॥ ६ ॥

**अ० टी०**—ननु दैव्यां संपदि जातस्य मम कथं क्रोधोत्पत्तिर्मनसि जायत इत्याशङ्क्य नैकदोषेणैवाऽऽसुरत्वं तदुत्पत्तिरस्तु संगदोषजेति तत्त्यागार्थं विस्तरेण सर्वलक्षणपूर्वकमासुरीं संपदं प्रपञ्चयितुं प्रतिजानीते—**द्वाविति** । अस्मिँल्लोके भूतसर्गौ जीवसर्गौ द्वौ एको देवो द्वितीय आसुरएव । चकारेण राक्षसादिरपि गृहीतः । तत्र दैवो विस्तरशो विस्तारपूर्वकः पूर्वं प्रोक्तः प्रकर्षेण फलादिसहितो मे मया उक्तः कथितः । हे पार्थ! कृपापात्र ! आसुरः पूर्वं संक्षेपेणोक्तोऽतो मे मत्तो विस्तरेणोच्यमानमासुरं सर्गं शृणु ॥ ६ ॥

**नी० टी०**—द्वौ द्विसंख्यौ भूतसर्गौ भूतानां स्वभावौ मे मद्वचनाच्छृणु ॥ ६ ॥

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ॥**
**न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥ ७ ॥**

**शां० भा०**—आऽध्यायपरिसमाप्तेरासुरी संपत्प्राणिविशेषणत्वेन प्रदर्श्यते प्रत्यक्षीकरणेन च शक्यतेऽस्याः परिवर्जनं कर्तुमिति—प्रवृत्तिं च प्रवर्तनं यस्मिन्पुरुषार्थसाधने कर्तव्ये प्रवृत्तिस्तां निवृत्तिं च तद्विपरीतां यस्मादनर्थहेतोर्निवर्तितव्यं सा निवृत्तिस्तां च जना आसुरा न विदुर्न जानन्ति । न केवलं प्रवृत्तिनिवृत्ती एव न विदुर्न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते । अशौचा अनाचारा मायाविनोऽनृतवादिनो ह्यासुराः ॥ ७ ॥

**शां० आ०**—नन्वध्यायशेषेणाऽऽसुरसंपद्दर्शनमयुक्तं तस्यास्त्याज्यत्वेन पङ्कप्रक्षालनन्यायावतारादित्याशङ्कयाऽऽह—**प्रत्यक्षीकरणेनेति** । वर्जनीयामासुरीं संपदं विवृणोति—**प्रवृत्तिं चेति** । तां विहितां प्रवृत्तिं न जानन्तीत्यर्थः । तां च निषिद्धां क्रियां न जानन्तीति संबन्धः । न शौचमित्यादेस्तात्पर्यमाह—**अनाचारा इति** । शौचसत्ययोराचारान्तर्भावेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुपादानम् ॥ ७ ॥

आ० भा०—॥ ७ ॥

आ० ज०—॥ ७ ॥

रा० भा०—प्रवृत्तिं निवृत्तिं चाभ्युदयसाधनं मोक्षसाधनं च वैदिकं धर्ममासुरा न विदुः न जानन्ति । न च शौचं वैदिककर्मयोग्यत्वं शास्त्रसिद्धं तत् बाह्यमाभ्यन्तरं चासुरेषु न विद्यते नापि चाचारः तद्बाह्याभ्यन्तरशौचं येन संध्यावन्दनादिना आचारेण जायते सोऽपि आचारस्तेषु न विद्यते। यथोक्तम् । 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ' इति । तथा सत्यं च तेषु न विद्यते सत्यं यथार्थज्ञानं भूतहितरूपभाषणं तेषु न विद्यते ॥ ७ ॥

अ० टी०—एवं प्रतिज्ञाय विस्तरेणाऽऽह द्वादशभिः—प्रवृत्तिमित्यादिभिः । आसुरा जीवा आसुरसर्ग एवोत्पन्नाः प्रवृत्तिं मदिच्छया मत्सेवानुकूलधर्मपदार्थादिषु प्रवृत्तिम् तथैव तदननुकूलेषु च निवृत्तिं न विदुः न जानन्तीत्यर्थः । अज्ञाने निदर्शनमाह—न शौचमिति । बाह्याभ्यन्तरभेदेन शौचं मत्सेवानुकूलदेहशुद्धिस्तेषु न, नापि च आचारः, आचरणं न च, न सत्यं असत्यं तेषु विद्यते सत्यं नास्तीत्यर्थः ॥ ७ ॥

नी० टी०—प्रवृत्तिं विधिवाक्यं निवृत्तिं निषेधवाक्यं न विदुः धर्माधर्मयोरिष्टानिष्टहेतुत्वज्ञानरहिता इत्यर्थः ॥ ७ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

शां० भा०—किंच—असत्यं यथा वयमनृतप्रायास्तथेदं जगत्सर्वमसत्यमप्रतिष्ठं च नास्य धर्माधर्मौ प्रतिष्ठाऽतोऽप्रतिष्ठं चेति त आसुरा जना जगदाहुरनीश्वरं न च धर्माधर्मसव्यपेक्षकोऽस्य शासितेश्वरो विद्यत इत्यतोऽनीश्वरं जगदाहुः । किं चापरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत्सर्वं संभूतम् । किमन्यत्कामहैतुकं कामहेतुकमेव कामहैतुकं किमन्यज्जगतः कारणं न किंचिददृष्टं धर्माधर्मादि कारणान्तरं विद्यते जगतः काम एव प्राणिनां कारणमिति लोकायतिकदृष्टिरियम् ॥८॥

शां० आ०—आसुराणां जनानां विशेषणान्तराण्यपि सन्तीत्याह—किंचेति । विद्यत इत्याहुरिति पूर्वेण संबन्धः । शास्त्रैकगम्यमदृष्टं निमित्तीकृत्य प्रकृत्यधिष्ठात्रात्मकेन ब्रह्मणा रहितं जगदिष्यते चेत्कथं तदुत्पत्तिरित्याशङ्क्याऽऽह—किंचेति । किमन्यदित्यादेराक्षेपस्य तात्पर्यमाह—न किंचिदिति ॥ ८ ॥

आ० भा०—जगतः सत्यं प्रतिष्ठा ईश्वरश्च विष्णुस्तद्वैपरीत्येनाहुः । "तस्योपनिषत्सत्यस्य सत्यम्" इति ॥ "प्राणा वै सत्यं तेषामेष सत्यम्" इति हि श्रुतिः । "द्वे वा व ब्रह्मणो रूपे मूर्तं चामूर्तं च स्थितं च यच्च सच्च त्यच्चेति" ॥ "तस्योपनिषत्सत्यस्य सत्यम्" इति "एष ह्येवैतत्सादयति यामयति चेति" इति प्राचीनशालाश्रुतिः । परस्परसंभवो ह्युक्तः अन्नाद्भवंति भूतानीत्यादिना ॥ ८॥

आ० ज०—न केवलं जगतो मिथ्यात्वादिवदतामसुरत्वमसत्यमप्रतिष्ठं त इत्यनेनोच्यते किं तु जगज्जन्मादिकारणं विष्णुं ये न मन्यंते तेषां सर्वेषामपीति भावेनाह—जगत इति । तद्वैपरीत्येनेति । न विद्यते सत्यमस्येत्यादि जगतः सत्यं विष्णुरित्यत्र श्रुतिमाह—तस्येति । तस्य विष्णोः सत्यस्य सत्यमिति । उपनिषद्रहस्यं नाम । कथम् प्राणा मूर्तामूर्तं जगदिति यावत् । सत्यमित्युच्यते । तेषां प्राणानामेष विष्णुः सत्यमित्यर्थः । एवं चेज्जगतो मुख्यं सत्यत्वं न भवेत् । अन्यथा निर्धारणायोगादित्यतो मूर्तामूर्तात्मकस्य जगतः सत्यत्वं तावदन्यथा श्रुत्यैव व्याचष्टे—द्वे वा चेति । रूपे प्रतिमे तत्र मूर्तं स्थितमिति

सदितिचोच्यते । अमूर्तं तु यदिति त्यदिति चोच्यत इत्यर्थः । तथा च सच त्यच सत्त्यमित्युक्तं भवति । इदानीं जगतः सत्यत्वं विष्णोः श्रुत्या व्याचष्टे—**तस्येति** । सादयति विशरणादिकं प्रापयतीति सत् । यामयति नियच्छतीति यं सच तद्यम् च सत्त्य-मित्यर्थः । प्रतिष्ठेश्वरश्चेति प्रसिद्धमेव । अपरस्परसंभूतमित्यस्यापरं परस्मात् संभूतमिति व्याख्यानमसत् । प्रतिषेधप्रकरणात् । अतः परस्परसंभूतं न भवतीत्याहुरित्येव व्याख्येयम् । स्यादेवं । यदि परस्परसंभवो भगवतोऽभिमतः स्यात् इत्यत आह—**परस्परेति** । यद्वानेन परव्याख्यानासाधुत्वमुपपादयति । भगवता परस्परसंभवस्योक्तत्वात् तद्वचनं कथमासुरमिति । ईश्वराक्षेपे तात्पर्यमिति चेत् न पुनरुक्तिप्रसंगात् ॥ ८ ॥

**रा० भा०—**किंच असत्यं जगदेतत्सत्शब्दनिर्दिष्टब्रह्मकार्यं तथा ब्रह्मात्मकमिति नाहुः । अप्रतिष्ठं तथा ब्रह्मणि प्रतिष्ठितमिति न वदन्ति । ब्रह्मणानन्तेन धृता पृथिवी सर्वांल्लोकान् बिभर्ति यथोक्तं 'तेनेयं नागवर्येण शिरसा विधृता मही । बिभर्ति मालां लोकानां सदेवासुरमानुषाम् ॥' इति । अनीश्वरं सत्यसंकल्पेन परब्रह्मणा सर्वेश्वरेण मयैतत् नियमितमिति च न वदन्ति । 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ।' इत्युक्तम् । वदन्ति चैवम् । अपरस्परसंभूतं किमन्यत् योषित्पुरुषयोः परस्परसंबन्धेन जातमिदं मनुष्यपश्वादिकमुपलभ्यते । अनेवंभूतं किमन्यदुपलभ्यते किंचिदपि नोपलभ्यत इत्यर्थः । अतः सर्वमिदं जगत्कामहेतुकमिति ॥ ८ ॥

**अ० टी०—**किंच । असत्यं वेदपुराणाद्यप्रमाणम् अप्रतिष्ठम् अव्यवस्थितम्, अनीश्वरं न विद्यते ईश्वरः कर्ता यस्य तादृशं जगत् ते असुरा आहुः वदन्ति । ननु कर्त्रभावेन कथमुत्पत्तिं वदन्तीत्यत आह—**अपरस्परेति** । अपरश्च परश्चेत्यपरस्परं स्त्रीपुरुषसंयोगस्ततो जातं कामहैतुकं स्त्रीपुरुषयोः काम एव हेतुर्यस्य तादृशम् । अन्यत्—एतदतिरिक्तं किं कारणं, न किमपीत्यर्थः ॥ ८ ॥

**नी० टी०—**असत्यं सत्यवर्जितं जगत्प्राणिजातं । तथाऽप्रतिष्ठं धर्माधर्माख्या प्रतिष्ठा आश्रयस्तच्छून्यं । अनीश्वरमनियंतृकं आहुः । अपरस्परसंभूतं "अपरस्पराः क्रियासातत्ये" इति सुट् बीजांकुरवत् परस्परकारणीभूतानां धर्माधर्मतद्वासनानां यत्सातत्यं तस्मात्संभूतं किमन्यल्लोकेऽस्ति न किंचिदपि धर्माद्यपेक्षया उत्पद्यते किंतु सर्वं कामहैतुकं स्त्रीपुंसयोर्मिथुनीभावः कामस्तदुत्थमेव स्वभावादेव जंतुर्जायते न त्वदृष्टादित्यर्थः ॥ ८ ॥

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥**

**शां० भा०—**एतामिति । एतां दृष्टिमवष्टभ्याऽऽश्रित्य नष्टात्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधना अल्पबुद्धयो विषयाविषयाऽल्पैव बुद्धिर्येषां तेऽल्पबुद्धयः प्रभवन्त्युद्भवन्त्युग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः क्षयाय जगतः प्रभवन्तीति संबन्धः । जगतोऽहिताः शत्रव इत्यर्थः ॥ ९ ॥

**शां० आ०—**यथोक्ता दृष्टिर्ब्रह्मदृष्टिवदिष्टैवेत्याशङ्क्याऽऽह—**एतामिति** । प्रागुपदिष्टामेतां लोकायतिकदृष्टिमवलम्ब्येति यावत् । नष्टस्वभावत्वमेव स्पष्टयति—**विभ्रष्टेति** । विषयबुद्धेरल्पत्वं दृष्टमात्रोद्देशेन प्रवृत्तत्वं, जगतः प्राणिजातस्येति यावत् ॥ ९ ॥

**आ० भा०—**॥ ९ ॥

आ० ज०—॥ ९ ॥

**रा० भा०—**एतां दृष्टिमवष्टभ्यावलम्ब्य नष्टात्मानः अदृष्टदेहातिरिक्तात्मानः । अल्पबुद्धयः घटादिवज्ज्ञेयभूते देहे ज्ञातृत्वेन देहव्यतिरिक्त आत्मोपलभ्यत इति विवेकाकुशलाः । उग्रकर्माणः सर्वेषां हिंसकाः । जगतः क्षयाय प्रभवन्ति ॥ ९ ॥

**अ० टी०**—किंच—**एतामिति**। एतां कामहैतुकरूपां लौकिकीं दृष्टिं दर्शनम् अवष्टभ्य आश्रित्य नष्टाऽऽत्मानः अदृष्टाऽऽत्मस्वरूपाः, अल्पबुद्धयः प्रत्यक्षमतयः, उग्रकर्माणः उग्रं हिंसाप्रधानं कर्म येषां ते अहिताः शत्रुरूपाः जगतः सर्वलोकस्य क्षयाय नरकादिपातनार्थं प्रभवन्ति उत्पद्यन्त इत्यर्थः ॥ ९ ॥

**नी० टी०**—एतामनुपदोक्तां लौकायतिकानामभिप्रेतां दृष्टिमवष्टभ्य तामाश्रित्य नष्टात्मानः कामादिवशेन नष्टधैर्याः। यतोऽल्पे क्षुद्रे दृष्टसुखे एव बुद्धिर्येषां तेऽल्पबुद्धयः। अहिता हिंस्राः ॥ ९ ॥

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ॥**
**मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥**

**शां० भा०—ते च—काममिच्छाविशेषमाश्रित्यावष्टभ्य दुष्पूरमशक्यपूरणं दम्भमानमदान्विता दम्भश्च मानश्च मदश्च दम्भमानमदास्तैरन्विता दम्भमानमदान्विता मोहादविवेकतो गृहीत्वोपादायासद्ग्राहानशुभनिश्चयान्प्रवर्तन्ते लोकेऽशुचिव्रता अशुचीनि व्रतानि येषां तेऽशुचिव्रताः ॥ १० ॥**

**शां० आ०**—तानेव दुराचारानासुरान्प्रकारान्तरेण विशिनष्टि—**ते चेति** ॥ १० ॥

**आ० भा०—दुष्पूरो हि कामः। 'पाताल इव दुष्पूरो मा हि क्लेशयते सदा' इति मोक्षधर्मे॥१०॥**

**आ० ज०**—काममाश्रित्य दुष्पूरमिति कामस्य दुष्पूरत्वं किं विशेषणम्। नेति ब्रूमः। किं तर्हि कामस्य प्रवृत्तिहेतुत्वे हेतुरयमुच्यत इति भावेनाह—**दुष्पूरो हीति**। विशेषणमेव किं न स्यात्। कामस्य दुष्पूरत्वाव्यभिचारादिति भावेनाह—**पातालइवेति** ॥ १० ॥

**रा० भा०—दुष्पूरं दुष्प्रापविषयं काममाश्रित्य तत्सिषाधयिषया मोहादज्ञानात असद्ग्राहान् अन्यायगृहीतपरिग्रहान् गृहीत्वा अशुचिव्रताः अशास्त्रविहितव्रतयुक्ताः। दम्भमानमदान्विताः प्रवर्तन्ते ॥ १० ॥**

**अ० टी०**—किंच—**काममाश्रित्येति**। दुष्पूरं दुःखेनापि पूरयितुमशक्यं कामम् आश्रित्य दम्भः पारलौकिकवेषधारणेन धार्मिकज्ञापनं, मानं लोकपूज्यत्वम्, मदः स्वरूपविस्मरणेन कामैकपरत्वम्, एतैरन्विताः युक्ताः असद्ग्राहान् क्षुद्रदेवमन्त्रान् मोहात् भ्रमात् सकलकार्यसाधकान् ज्ञात्वा गृहीत्वा स्वीकृत्य अशुचिव्रताः अपेयपानादिरताः सन्तस्तदाराधनादौ प्रवर्तन्ते ॥ १० ॥

**नी० टी०**—असद्ग्राहान् वश्याकर्षणनिध्यंजनकायसिद्ध्यादिसाधनेषु असत्सु असमीचीनेषु ग्राहा निर्बंधा अत्यन्ताभिनिवेशास्तान् गृहीत्वा अशुचीनि मद्यमांसादिसापेक्षाणि व्रतानि नियमविशेषा येषां ते तथाभूताः संतः कुमार्गप्रवर्तनेन प्रवर्तंते जगतः क्षयायेति संबंधः ॥ १० ॥

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ॥**
**कामोपभोगपरमा एतावदितिनिश्चिताः ॥ ११ ॥**

**शां० भा०—किंच—चिन्तामपरिमेयां च न परिमातुं शक्यते यस्याश्चिन्ताया इयत्तासाऽपरिमेया तामपरिमेयां प्रलयान्तां मरणान्तामुपाश्रिताः सदा चिन्तापरा इत्यर्थः। कामोपभोगपरमाः, काम्यन्त**

इति कामाः शब्दादयस्तदुपभोगपरमाः, अयमेव परमः पुरुषार्थो यः कामोपभोग इत्येवंनिश्चितात्मान एतावदितिनिश्चिताः ॥ ११ ॥

**शां० आ०**—तानेव विधान्तरेण विशिनष्टि—**किंचेति**। चिन्तामात्मीययोगक्षेमोपायालोचनात्मिकामपरिमेयाविषयत्वात्परिमातुमशक्यामाश्रिता इति संबन्धः। एष कामोपभोगः परमयनं सुखस्यंत्येतावत्पारत्रिकं तु नास्ति सुखमितिनिश्चयवन्त इत्याह—**एतावदितीति** ॥ ११ ॥

**आ० भा०**—॥ ११ ॥

**आ० ज०**—॥ ११ ॥

**रा० भा०**—अद्य श्वो वा मुमूर्षवः चिन्तामपरिमेयामपरिच्छेद्यां प्रलयान्तां प्राकृतप्रलयावधिकसाध्यविषयामुपाश्रिताः। तथा कामोपभोगपरमाः कामोपभोग एव परमपुरुषार्थ इति मन्वानाः। एतावादिति निश्चिताः इतोऽधिकः पुरुषार्थो न विद्यत इति जातनिश्चयाः ॥ ११ ॥

**अ० टी०**—किंच—**चिन्तामिति**। अपरिमेयां परिमातुमशक्यां प्रलयान्तां मरणान्तां चिन्ताम् उपाश्रिताः अहर्निशं चिन्तापरा इत्यर्थः। कामोपभोग एव परमः फलरूपो येषाम् एतावत्पुरुषार्थकामोपभोग एवेति निश्चिताः कृतनिश्चयाः ॥ ११ ॥

**नी० टी०**—चिंतां योगक्षेमविषयां प्रलयांतां मरणावधिं एतावत् देहएवात्मा कामभोग एव पुरुषार्थ इतोऽन्यन्नास्तीति निश्चिताः निश्चयवंतः। तथा च बार्हस्पत्यं सूत्रं। "चैतन्यविशिष्टः कामः पुरुषः"। काम एवैकः पुरुषार्थ इति च ॥ ११ ॥

## आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ॥
## ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥

**शां० भा०**—आशापाशेति। आशापाशशतैराशा एव पाशास्तच्छतैराशापाशशतैर्बद्धा नियन्त्रिताः सन्तः सर्वत आकृष्यमाणाः कामक्रोधपरायणाः, कामक्रोधौ परमयनं पर आश्रयो येषां ते कामक्रोधपरायणाः, ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थमन्यायेनार्थसंचयानर्थप्रचयानन्यायेन परस्वापहरणादिनेत्यर्थः ॥ १२ ॥

**शां० आ०**—आसुरानेव पुनर्विशिनष्टि—**आशेति**। अशक्योपायार्थविषया अनवगतोपायार्थविषया वा प्रार्थना आशास्ताः पाशा इव पाशास्तेषां शतैर्बद्धा इव श्रेयसः प्रच्याव्येतस्ततो नीयमाना इत्याह—**आशा एवेति** ॥ १२ ॥

**आ० भा०**—॥ १२ ॥

**आ० ज०**—॥ १२ ॥

**रा० भा०**—आशापाशशतैः आशाख्यपाशशतैर्बद्धाः कामक्रोधपरायणाः कामक्रोधैकनिष्ठाः। कामभोगार्थमन्यायेनार्थसंचयान् प्रतीहन्ते ॥ १२ ॥

**अ० टी०**—तदर्थमेव आशा एव पाशास्तेषां शतानि तैर्बद्धास्तद्वशेनाऽनेकतुच्छदैवाद्याश्रयणशीलाः, कामक्रोधावेव परम् अयनं मूलम् आश्रयणं येषां तादृशाः। कामोपभोगस्य कृतपुरुषार्थनिश्चयत्वेन कामभोगार्थम् अन्यायेन चौर्यापहारहिंसादिना अर्थसंचयान् ईहन्ते इच्छन्ति ॥ १२ ॥

नी० टी०—अन्यायेन परवंचनादिना अर्थसंचयान् धनराशीन् ईहंते लिप्संते ॥ १२ ॥

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ॥
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

शां० भा०—ईदृशश्च तेषामभिप्रायः—इदं द्रव्यमद्येदानीं मया लब्धमिदमन्यत्प्राप्स्ये मनोरथं मनस्तुष्टिकरमिदं चास्तीदमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धनं तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥

शां० आ०—तेषामभिप्रायोऽपि विवेकविरोधीत्याह—ईदृशश्चेति। द्रव्यं गोहिरण्यादि। इदमन्यद्बुद्धौ प्रार्थ्यमानत्वे विपरिवर्तमानामित्येतत् ॥ १३ ॥

आ० भा०—॥ १३ ॥

आ० ज०—॥ १३ ॥

रा० भा०—इदं क्षेत्रपुत्रादिकं सर्वं मया मत्सामर्थ्येनैव लब्धं नादृष्टादिना। इमं च मनोरथमहमेव प्राप्स्ये नादृष्टादिसहितः इदं धनं मत्सामर्थ्येन लब्धं मेऽस्ति। इदमपि पुनर्मे मत्सामर्थ्येनैव भविष्यति ॥ १३ ॥

अ० टी०—एवं तेषां कर्मादिलक्षणमुक्त्वा मनसोऽसदर्थाभिनिवेशान्नरकप्रातिमाह—इदमद्येति। मया कृतयत्नेन इदम् अद्य लब्धं नतु यदृच्छयेतिजानन्ति, एवमेव यत्नं कुर्वाण इदं मनोरथं मनस इष्टं प्राप्स्ये प्राप्स्यामि इदं भोगाद्यर्थं धनं मे अस्ति मदिच्छया स्थास्यति, गमिष्यतीति, न जानन्ति। इदमपि धनं मे पुनः भविष्यति ॥ १३ ॥

नी० टी०—आशापाशान् विवृणोति—इदमद्येति ॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ॥
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥

शां० भा०—असौ मयेति। असौ देवदत्तनामा मया हतो दुर्जयः शत्रुः, हनिष्ये चान्यान्वराकानपरानपि किमेते करिष्यन्ति तपस्विनः सर्वथाऽपि नास्ति मत्तुल्य ईश्वरोऽहमहं भोगी सर्वप्रकारेण च सिद्धोऽहं संपन्नः पुत्रैः पौत्रैर्नप्तृभिर्न केवलं मानुषोऽहं बलवान्सुखी चाहमेवान्ये तु भूमिभारायावतीर्णाः ॥ १४ ॥

शां० आ०—यथोक्ते मदभिप्राये प्रतिबन्धकः शत्रुरपि न संभवतीत्याह—असाविति। त्वत्तोविहीनानां त्वया परिभवेऽपि त्वत्तुल्यानां शत्रूणां परिभवो निश्चितो न भवतीत्याशङ्क्याऽऽह—सर्वथेति। ऐश्वर्यातिरेकेऽपि कुतस्ते भोगसामर्थ्यमित्याशङ्क्याऽऽह—अहमिति। सिद्धत्वमेव स्फुटयति—संपन्न इति। बलवानोजस्वी, सुखी रोगरहितः ॥ १४ ॥

आ० भा०—॥ १४ ॥

आ० ज०—॥ १४ ॥

रा० भा०—असौ मया बलवता हतः शत्रुः। अपरानपि शत्रून् अहं शूरो धीरश्च हनिष्ये।

किमत्र मन्दधीभिः दुर्बलैः परिकल्पितेनादृष्टादिपरिकरेण । तथा च ईश्वरोऽहं स्वाधीनोऽहमन्येषां चाहमेव नियन्ता । स्वत एव अहं भोगी नादृष्टादिभिः । सिद्धोऽहम् । स्वतः सिद्धोऽहं न कस्माच्च दृष्टादेः । तथा स्वत एव बलवान् स्वत एव सुखी ॥ १४ ॥

**अ० टी०**—असौ अयं मम शत्रुः मया हतः अपरानपि तादृशान् हनिष्ये, भगवदिच्छया विपरीतं न जानन्ति । ईश्वरोऽहं सर्वकरणसमर्थः, अहं भोगी भोगसाधनवान् कर्त्ता च, सिद्धोऽहं कृतकृत्यः, बलवान् परोपकारमर्दनसमर्थः, सुखी सिद्धेष्टसाधनः ॥ १४ ॥

**नी० टी०**—क्रोधपरायणत्वं कामपरायणत्वं च पूर्वोत्तराभ्यामर्धाभ्यामाह—**असाविति** ईश्वरः । समर्थः सर्वेषां निग्रहे । सिद्धः लब्धाखिलभोगसाधनः । बलवान् विषयोपभोगे समर्थः अत एव सुखी ॥ १४ ॥

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥**

**शां० भा०**—आढ्य इति । आढ्यो धनेनाभिजनेनाभिजनवान्सप्तपुरुषं श्रोत्रियत्वादिसंपन्नस्तेनापि न मम तुल्योऽस्ति कश्चित्कोऽन्योस्ति सदृशस्तुल्यो मया किंच यक्ष्ये यागेनाप्यन्यानभिभविष्यामि दास्यामि नटादिभ्यो मोदिष्ये हर्षं चातिशयं प्राप्स्यामीत्येवमज्ञानेन विमोहिता अज्ञानविमोहिता विविधमविवेकभावमापन्नाः ॥ १५ ॥

**शां० आ०**—विद्यावृत्तधनाभिजनैर्मत्तुल्यो नास्तीत्याह—**आढ्य इति** । तथाऽपि यागदानाभ्यां तत्फलेन वा कश्चिदधिको भविष्यतीत्याशङ्क्याऽऽह—**किंचेति** । न च तेषामेषोऽभिप्रायः साधीयानित्याह—**इत्यवेमिति** ॥ १५ ॥

**आ० भा०**—॥ १५ ॥

**आ० ज०**—॥ १५ ॥

**रा० भा०**—अहं स्वतश्च आढ्योऽस्मि । अभिजनवानस्मि स्वत एवोत्तमकुले प्रसूतोऽस्मि । अस्मिँल्लोके मया सदृशः कोऽन्यः स्वसामर्थ्यलब्धसर्वविभवो विद्यते । अहं स्वयमेव यक्ष्ये दास्यामि मोदिष्ये इति अज्ञानविमोहिताः ईश्वरानुग्रहनिरपेक्षेण स्वेनैव यागदानादिकं कर्तुं शक्यमित्यज्ञानविमोहिता मन्यन्ते ॥ १५ ॥

**अ० टी०**—किंच । आढ्यो विपुलधनवान्, अभिजनवान् सत्कुलोत्पन्नः मया सदृशः समः अन्यः कोऽस्ति न कोपीत्यर्थः । तथापि यक्ष्ये यज्ञादिभिः प्रतिष्ठार्थमित्यर्थः, दास्यामि अधमेभ्योऽनुवर्तिभ्यः, मोदिष्ये हर्षमाप्स्यामि, इति अमुना प्रकारेण अज्ञानेन विमोहिताः पूर्वोक्तधर्मेष्वभिनिविष्टा भवन्तीत्यर्थः ॥ १५ ॥

**नी० टी०**—आढ्यो धनी । अभिजनवान् कुलीनः । अज्ञानेन अविवेकेन मोहिताः विविधं भ्रमं प्रापिताः ॥ १५ ॥

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥**

**शां० भा०**—अनेकेति । अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ता अनेकचित्तविभ्रान्ता मोहजालसमावृता मोहोऽविवेकोऽज्ञानं तदेव जालमिवाऽऽवरणात्मकत्वात्तेन समावृतः

प्रसक्ताः कामभोगेषु तत्रैव निषण्णाः सन्तस्तेनोपचितकल्मषाः पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥ १६ ॥

शां० आ०—उक्तप्रकारविपर्ययेण कृत्याकृत्यविवेकविकलानां किं स्यादित्यपेक्षायामाह—अनेकेति। कामा विषयास्तेषां भोगेषु तत्प्रयुक्तेषूपभोगेष्विति यावत् ॥ १६ ॥

आ० भा०—॥ १६ ॥

आ० ज०—॥ १६ ॥

रा० भा०—अदृष्टेश्वरादिसहकारमृते स्वेनैव सर्वं कर्तुं शक्यमिति कृत्वा एवं कुर्यामेतच्च कुर्यामन्यच्च कुर्यामित्यनेकाचित्तविभ्रान्ताः। एवंरूपेण मोहजालेन समावृताः। कामभोगेषु प्रकर्षेण सक्ताः। मध्ये मृताः अशुचौ नरके पतन्ति ॥ १६ ॥

अ० टी०—एवमभिनिविष्टानां फलमाह—अनेकेति। अनेकेषु क्षुद्रादिदेवेषु मनोरथेषु वा व्याप्तं चित्तं तेन विभ्रान्ताः विशेषेण भ्रान्ताः विक्षिप्ताः। तेनैव भ्रान्तिपरिकल्पितेन मोहमयेन जालेन समावृताः सम्यगावृताः शकुन्ता इव सूत्रजाले ततो निःसरणाऽसमर्थाः तत्राऽपि चेन्मत्स्मरणादिकं कुर्युस्तदा तु न पतेरन् किंतु खगादिवत् स्वकुटुम्बचिन्तनपराः कामभोगेषु पूर्वोक्तरीत्या प्रसक्ताः सन्तः अशुचौ पापाऽऽत्मके परमदुःखनिधाने नरके विषयसुखात्मके आसक्त्युत्पादके पतन्ति। पतनोक्त्या वैवश्यं ज्ञापितम् ॥ १६ ॥

नी० टी०—अनेकं नास्ति एकं चिंतनीयं यस्य तत् अनेकं बहुषु विषयेषु पूर्वोक्तेषु लग्नं चित्तं येषां ते अनेकचित्तास्ते च ते विभ्रांताश्च किमिदमादौ साधनीयमिदमादौ साधनीयमिति विशेषेण भ्रांत्याकुला अनेकचित्तविभ्रांताः। मोहः असत्स्वपि सद्बुद्धिस्तदेव जालं तेन सम्यगावृताः। प्रसक्ताः प्रकर्षेण लग्नाः। अशुचौ विण्मूत्रादिमये ॥ १६ ॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ॥
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

शां० भा०—आत्मेति। आत्मसंभाविताः सर्वगुणविशिष्टतयाऽऽत्मनैव संभाविता आत्मसंभाविता न साधुभिः, स्तब्धा अप्रणतात्मानो धनमानमदान्विता धननिमित्तो मानो मदश्च ताभ्यां धनमानमदाभ्यामन्विता यजन्ते नामयज्ञैर्नाममात्रैर्यज्ञैस्ते दम्भेन धर्मध्वजितयाऽविधिपूर्वकं विहिताङ्गेतिकर्तव्यतारहितैः ॥ १७ ॥

शां० आ०—ननु तेषामपि केषांचिद्वैदिके कर्मणि यागदानादौ प्रवृत्तिप्रतिपत्तेरयुक्तं वैतरण्यादौ पतनमिति चेत्तत्राऽऽह—आत्मेति ॥ १७ ॥

आ० भा०—॥ १७ ॥

आ० ज०—॥ १७ ॥

रा० भा०—आत्मनैव संभाविताः आत्मनैवात्मानं संभावयन्तीत्यर्थः। स्तब्धाः परिपूर्णं मन्यमाना न किंचित्कुर्वाणाः। कथं धनमानमदान्विताः धनेन विद्याभिजनाभिमानेन च जनितमदान्विताः। नामयज्ञैर्नामप्रयोजनैर्यष्टेति नाममात्रप्रयोजनैर्यज्ञैर्यजन्ते। तदपि दम्भेन हेतुना यष्टृत्वख्यापनाय अविधिपूर्वकम् अयथाचोदनं यजन्ते ॥ १७ ॥

अ० टी०—तत्र संसारविषयात्मके सुखे पतित्वा यत्कुर्वन्ति तेन च यत्फलमनुभवन्ति तदाह—आत्मेत्यादि चतुर्भिः। आत्मना स्वेनैव संभाविताः स्वधर्माविष्कारेण लोकेषु उत्तमतां पूज्यतां नीताः नतु भगवदीयैः।

अतएव स्तब्धाः अनम्राः स्थाणुप्रायाः । किंच धनेन यो मानो मदश्च ताभ्याम् अन्विताः युक्ताः यद्वा धनमानमदैरन्विताः तादृशाः सन्तः नामयज्ञैः शब्दात्मकैः प्रतिष्ठार्थम् अविधिपूर्वकं मदंशादिज्ञानाभावेन मद्भजनराहित्येन ते पूर्वोक्ता आसुरा यज्ञादिकं कुर्वन्ति ॥ १७ ॥

**नी० टी०**—आत्मनैवात्मानं महांतं मन्यंते ते आत्मसंभाविताः । स्तब्धाः अप्रणताः । धननिमित्तो मानो गर्वो मद उन्मत्तता ताभ्यामन्विताः धनमानमदान्विताः । नामयज्ञैर्नाममात्रैर्यज्ञैः दंभेन धर्मध्वजितया अविधिपूर्वकं यथोक्तधनज्ञानस्वयमृत्विक्पत्न्यादिशुद्धिरहितं यजंते ॥ १७ ॥

**अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ॥**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

**शां० भा०**—अहमिति । अहंकारमहंकरणमहंकारो विद्यमानैरविद्यमानैश्च गुणैरात्मन्यध्यारोपितैर्विशिष्टमात्मानमहमिति मन्यते सोऽहंकारोऽविद्याख्यः कष्टतमः सर्वदोषाणां मूलं सर्वानर्थप्रवृत्तीनां च तथा बलं पराभिभवनिमित्तं कामरागान्वितं दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामति सोऽयमन्तःकरणाश्रयो दोषविशेषः कामं स्त्र्यादिविषयं क्रोधमनिष्टविषयमेतानन्यांश्च महतो दोषान्संश्रिताः । किंच ते मामीश्वरमात्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षिभूतं मां प्रद्विषन्तो मच्छासनातिवर्तित्वं प्रद्वेषस्तं कुर्वन्तोऽभ्यसूयकाः सन्मार्गस्थानां गुणेष्वसहमानाः ॥ १८ ॥

**शां० आ०**—आसुरीं संपदमभिजातैरधर्मजातमेव संचीयते प्रवृत्तैरपि वैदिके वर्त्मनि नैव पुण्यमित्युक्तम् । ब्रह्मज्ञानात्पुनरासुरा दूरादेवोद्विजन्त इत्याह—**अहंकारमिति** । अहंकारमेव स्फोरयति—**विद्यमानैरिति** । अध्यारोपितवैशिष्ट्यविषयत्वादहंकारस्याविद्यामूलत्वेनाविद्यात्वमाह—**अविद्याख्य इति** । विवेकिभिस्तस्यातियत्नादवहेयत्वं सूचयति—**कष्टतम इति** । तदेव स्पष्टयति—**सर्वेति** । तं संश्रिता इति संबन्धः । कार्यकरणसामर्थ्यमुक्तविशेषणं बलम् । अहंकार एव महदवधीरणापर्यन्तत्वेन परिणतो दर्पस्तं व्याकरोति—**दर्पो नामेत्यादिना** । अन्यांश्च दोषान्मात्सर्यादीन् । न केवलमुक्तमेव तेषां विशेषणं किंतु कष्टतममस्ति विशेषणान्तरमित्याह—**किंचेति** । यद्यपीश्वरं प्रति द्वेषस्तेषां संभाव्यते तथाऽपि कथं स्वदेहे परदेहेषु च तं प्रति द्वेषो न हि तत्र भोक्तारमन्तरेणेश्वरस्यावस्थानमित्याशङ्क्याऽऽह—**तद्बुद्धीति** । तेषामीश्वरं प्रति द्वेषमेव प्रकटयति—**मच्छासनेति** । ईश्वरस्य शासनं श्रुतिस्मृतिरूपं तदतिवर्तित्वं तदुक्तार्थज्ञानानुष्ठानपराङ्मुखत्वम् ॥ १८ ॥

**आ० भा०**—मामात्मपरदेहेष्विति न कस्यचिद्विष्णुः कारयिता । यदि स्यान्मामपीदानीं कारयत्वित्यादि ईश्वरो यदि सर्वस्य कारकः कारयीत माम् । "अद्येति वादिनं ब्रूयात्सदाऽधो यास्यसि" इति सामवेदे यास्कश्रुतिः ॥ १८ ॥

**आ० ज०**—भगवद्द्वेषस्यात्मपरदेहाधिकरणत्वं कथमित्यत आह—**मामिति** । कुतो न कारयिता यदि स्यात्तर्हीदानीमकुर्वाणं मामपि कारयतु कुर्वाणं च निवारयतु इत्यर्थः । सदाधो नित्यनरकम् ॥ १८ ॥

**रा० भा०**—ते चेदंभूता यजन्त इत्याह—अनन्यापेक्षोऽहमेव सर्वं करोमीत्येवंरूपमहंकारमाश्रिताः । तथा सर्वस्य करणे मद्बलमेव पर्याप्तमिति च बलम् । अतो मत्सदृशो न कश्चिदस्तीति च दर्पम् । एवंभूतस्य मम काममात्रेण सर्वं संपत्स्यत इति कामम् । मम येऽनिष्टकारिणस्तान्सर्वान्हनिष्यामीति च क्रोधम् । एवमेतान् संश्रिताः । स्वदेहेषु परदेहेषु चावस्थितं सर्वस्य कारयितारं पुरुषोत्तमं माम् अभ्यसूयकाः प्रद्विषन्तः कुयुक्तिभिः मत्स्थितौ दोषमाविष्कुर्वन्तो मामसहमानाः । अहंकारादिकान्संश्रिताः । यागादिकं सर्वं क्रियाजातं कुर्वत इत्यर्थः ॥ १८ ॥

अ० टी०—अविधिपूर्वकं यजनं पूर्वं विवेचयति—**अहंकारमिति** । अहंकारं सत्त्वाभिमानं, बलं स्वसामर्थ्यं, दर्पं गर्वं, कामं मनोऽभिलाषं, क्रोधं व्यर्थं हृदयक्लेशं, चकारेण हर्षोद्वेगादयः संगृहीताः, तान् संश्रिताः सन्तः, आत्मपरदेहेषु 'मयि ते तेषु चाप्यहम्'इत्युक्तरीत्या स्थितं मां प्रद्विषन्तः प्रकर्षेण द्वेषं कुर्वन्तो मद्भजनादिनिन्दां कुर्वन्तः, अभ्यसूयकाः दोषरहितेषु दोषारोपकाः सन्तो यजन्त इति पूर्वेणैव संबन्धः ॥ १८ ॥

नी० टी०—अहंकारोऽहमेव सर्वश्रेष्ठ इति बुद्धिः । बलं शारीरं धनाभिजननिमित्तं च । दर्पं परावज्ञां । कामं क्रोधं च संश्रिताः मां सर्वदेहेषु प्रविष्टं आत्मदेहे स्वदेहशोषणेन कर्षयंतः शरीरस्थं भूतग्राममचेतसः 'मां चैवांतः शरीरस्थं तान्विद्ध्यासुरनिश्चयान्'इति वक्ष्यमाणदिशा परदेहे च हिंसादिना प्रद्विषंतः । अभ्यसूयकाः सर्वत्र गुणेषु वेदोक्तेषु शमादिषु अशक्तत्वादिलक्षणं दोषमारोपयंतः ॥ १८ ॥

**तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥**

**शां० भा०—तानहमिति । तानहं सर्वान्सन्मार्गप्रतिपक्षभूतान्साधुद्वेषिणो द्विषतश्च मां क्रूरान्संसारेष्वेव नरकसंसरणमार्गेषु नराधमानधर्मदोषवत्त्वात्क्षिपामि प्रक्षिपाम्यजस्रं संततमशुभानशुभकर्मकारिण आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु क्षिपामीत्यनेन संबन्धः ॥ १९ ॥**

शां० आ०—तेषामुक्तविशेषणवतामासुराणां किं स्यादिति तदाह—**तानिति** । भगवतो नैर्घृण्यप्रसङ्गं प्रत्यादिशति—**अधर्मेति** ॥ १९ ॥

**आ० भा०—॥ १९ ॥**

आ० ज०—॥ १९ ॥

**रा० भा०—य एवं मां द्विषन्ति तान् क्रूराननराधमान् अशुभानहमजस्रं संसारेषु जन्मजरामरणादिरूपेण परिवर्तमानेषु संतानेषु तत्राप्यासुरीष्वेव योनिषु क्षिपामि मदानुकूल्यप्रत्यनीकेष्वेव जन्मसु क्षिपामि । तत्तज्जन्मप्राप्त्यनुगुणप्रवृत्तिहेतुभूतबुद्धिषु क्रूरास्वहमेव संयोजयामीत्यर्थः ॥ १९ ॥**

अ० टी०—सर्वफलदाता च स्वयमेवातः स्वभक्तद्वेषिणां फलं न प्रयच्छामीत्याह—**तानहमिति** । अहं तान् द्विषतः क्रूरान् कठिनान् नराधमान् तामसान् संसारेषु अहंममाप्तरूपेषु जन्ममरणादिरूपेषु वा तेष्वप्यासुरीष्वेव मत्प्रतिपक्षरूपासु योनिषु अजस्रं निरन्तरं क्षिपामि पातयामीत्यर्थः । क्षिपामीत्युक्त्या क्रोधः सूचितः॥ १९॥

नी० टी०—तेषां फलमाह–**तानिति** । सर्वभूतसमोऽप्यहं तान् वेदोक्तशासनातिगान् भूतद्रोहकर्तॄन् अहमंतरात्मा न तु तटस्थो येन मम वैषम्यं स्यात् । पूर्वसंस्कारात्ते तथैव पापं कुर्वंति तदनुरूपं फलं च प्राप्नुवंतीत्यर्थः ॥ १९ ॥

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥**

**शां० भा०—आसुरीमिति । आसुरीं योनिमापन्नाः प्रतिपन्ना मूढा जन्मनि जन्मन्यविवेकिनः प्रतिजन्म तमोबहुलास्वेव योनिषु जायमाना अधो गच्छन्तो मूढा मामीश्वरमप्राप्यानासाद्यैव हे कौन्तेय ! ततस्तस्मादपि यान्त्यधमां निकृष्टतमां गतिम् । मामप्राप्यैवेति न मत्प्राप्तौ काचिदप्याशङ्काऽस्त्यतो मच्छिष्टसाधुमार्गमप्राप्येत्यर्थः ॥ २० ॥**

**शां० आ०**—ननु तेषामपि क्रमेण बहूनां जन्मनामन्ते श्रेयो भविष्यति नेत्याह—**आसुरीमिति** । तेषामीश्वरप्राप्तिशङ्काभावे कथं तन्निषेधः स्यादित्याशङ्क्याऽऽह—**मामित्यादिना** । यस्मादासुरी संपदनर्थपरम्परया सर्वपुरुषार्थपरिपन्थिनी तस्माद्यावत्पुरुषः स्वतन्त्रो न कांचित्पारवश्यकरीं योनिमापन्नस्तावदेव तेनासौ परिहरणीयेति समुदायार्थः ॥ २० ॥

**आ० भा०**—॥ २० ॥

आ० ज०—॥ २० ॥

**रा० भा०**—मदानुकूल्यप्रत्यनीकजन्मापन्नाः । पुनरपि जन्मनि जन्मनि मूढा मद्विपरीतज्ञानाः । मामप्राप्यैव अस्ति भगवान् वासुदेवः सर्वेश्वर इति ज्ञानमप्राप्य ततस्ततो जन्मनोऽधमामेव गतिं यान्ति ॥ २० ॥

**अ० टी०**—तद्योनिप्राप्तानां फलमाह—**आसुरीमिति** । जन्मनि जन्मनि, तथात्वज्ञापनाय वीप्सा । हे कौन्तेय ! आसुरीं योनिं मद्धर्माचरणप्रतिकूलां योनिं प्राप्य मत्प्राप्तिसाधनाऽभावात् माम् अप्राप्यैव ततो जन्मसमाप्तौ अधमां गतिम् अन्धंतमःप्रवेशरूपां यान्ति प्राप्नुवन्तीत्यर्थः । एवकारेणाऽवतारदशायां सर्वदर्शनयोग्यायामपि स्वरूपाऽज्ञानान्मद्दर्शनमप्राप्य गच्छन्तीतिज्ञापितम् । कौन्तेयेति संबोधनाद्भक्तगृहजन्मप्राप्त्या स्वप्राप्तियोग्यत्वं ज्ञापितम् ॥ २० ॥

**नी० टी०**—आसुरयोनिप्राप्तेरपि फलमाह—**आसुरीमिति** । अधमां नारकीं तिर्यक्स्थावरादिरूपां वा ॥ २० ॥

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥**

**शां० भा०**—सर्वस्या आसुर्याः संपदः संक्षेपोऽयमुच्यते, यस्मिंस्त्रिविधे सर्व आसुरसंपद्भेदोऽनन्तोऽप्यन्तर्भवति, यत्परिहारेण परिहृतश्च भवति, यन्मूलं सर्वस्यानर्थस्य तदेतदुच्यते—त्रिविधं त्रिप्रकारं नरकस्य प्राप्ताविदं द्वारं नाशनमात्मनो यद्द्वारं प्रविशन्नेव नश्यत्यात्मा कस्मैचित्पुरुषार्थाय योग्यो न भवतीत्येतदत उच्यते द्वारं नाशनमात्मन इति । किं तत्कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् । यत एतद्द्वारं नाशनमात्मनस्तस्मात्कामादित्रयमेतत्त्यजेत्त्यागस्तुतिरियम् ॥ २१ ॥

**शां० आ०**—कथमासुरी संपदनन्तभेदवती पुरुषायुषेणापि परिहर्तुं शक्येतेत्याशङ्क्याऽऽह—**सर्वस्या इति** । संक्षेपोक्तिफलमाह—**यस्मिन्निति** । कामादौ त्रिविधे सर्वस्याऽऽसुरसंपद्भेदस्यान्तर्भावेऽपि कथमसौ परिह्रियते तत्राऽऽह—**यत्परिहारेणेति** । कामादिपरिहारेणाऽऽसुरसंपद्भेदपरिहारेऽपि कथं सर्वानर्थपरिवर्जनमित्याशङ्क्याऽऽह—**यन्मूलमिति** । कथमात्मनो नित्यस्य नाशाशङ्केति तत्राऽऽह—**कस्मैचिदिति** । त्रिविधमपि सामान्यतो दर्शितमाकाङ्क्षाद्वारा विशेषतो दर्शयति— **किं तदिति** । तस्मादिति व्याचष्टे—**यत इति** । कामादित्यागे सत्यनर्थावरणश्रेयःप्रतिबन्धनिवृत्ती स्यातामिति भावः ॥ २१ ॥

**आ० भा०**—॥ २१ ॥

आ० ज०—॥ २१ ॥

**रा० भा०**—अस्यासुरस्वभावस्यात्मनाशस्य मूलहेतुमाह—अस्यासुरस्वभावरूपस्य नरकस्यैतत्त्रिविधं द्वारं तच्चात्मनो नाशनम् । कामः क्रोधः लोभ इति त्रयाणां स्वरूपं पूर्वमेव व्याख्यातम् । द्वारं मार्गो हेतुरित्यर्थः । तस्मादेतत्त्रयं त्यज । तस्मादतिघोरनरकहेतुत्वात्कामक्रोधलोभानामेतत्त्रितयं दूरतः परित्यज ॥ २१ ॥

**अ० टी०**—तेषु तदभावात्तथा उक्ताऽसुरसंगात्तन्मुख्यधर्मत्रयोत्पत्तिः स्यात्तच्च नरकद्वारं तत्र गमनसाधनरूपमतस्तत्संगत्यागमाह—**त्रिविधमिति** । इदम् अग्रे वक्ष्यमाणं त्रिविधं नरकस्य द्वारं प्रवेशसाधनमित्यर्थः ।

कीदृशं द्वारम् आत्मनो जीवस्य नाशनं विनाशकर्तृ संसारपातनात् । तद्विवेचयति ! कामः क्रोधस्तथा लोभ इति कामः स्वरमणानन्देच्छारूपः, क्रोधः अकारणहृत्तापरूपः, लोभः सर्वगुणनाशकपरस्वप्राप्तीच्छारूपः तस्मात् असुरादेतत्त्रितयं स्यादतस्त्यजेत् तत्संगमितिशेषः ॥ २१ ॥

नी० टी०—संक्षेपमासुर्याः संपत्तेराह—त्रिविधमिति ॥ २१ ॥

**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ॥**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥**

**शां० भा०—एतैरिति । एतैर्विमुक्तः कौन्तेय तमोद्वारैस्तमसो नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयस्तैरेतैस्त्रिभिर्विमुक्तो नर आचरत्यनुतिष्ठति । किमात्मनः श्रेयो यत्प्रतिबद्धः पूर्वं नाऽऽचरति तदपगमादाचरति ततस्तदाचरणाद्याति परां गतिं मोक्षमपीति ॥ २२ ॥**

शां० आ०—न केवलं श्रेयः समाचरन्नासुरीं च संपदं वर्जयन्मोक्षमेव सम्यग्धीद्वारा लभते किंतु लौकिकमपि सुखमित्यपेरर्थः ॥ २२ ॥

**आ० भा०—॥ २२ ॥**

आ० ज०—॥ २२ ॥

**रा० भा०—एतैः कामक्रोधलोभैस्तमोद्वारैर्मद्विपरीतज्ञानहेतुभिर्विमुक्तः नर आत्मनः श्रेय आचरति । लब्धमद्विषयज्ञानो मदानुकूल्ये प्रयतते ततो मामेव परां गतिं याति ॥ २२ ॥**

अ० टी०—तत्संगत्यागेन तत्त्रितयरहितः स्यादित्याह—**एतैरिति** । कौन्तेय ! सत्संगगुणसंपन्न ! तत्तत्संगत्यागे एतैस्त्रिभिस्तमोद्वारैर्विमुक्तो नरः आत्मनः श्रेयो भजनादिकम् आचरति ततस्तेन परां गतिं याति प्राप्नोति ॥ २२ ॥

नी० टी०—कामादित्रयत्यागे किं स्यादत आह—**एतैरिति** । तमोद्वारैः तमसो नरकस्य दुःखमोहात्मकस्य द्वारभूतैर्विमुक्तः सन् आत्मनः श्रेयः कल्याणं भगवदाराधनादिकं आचरति । ततः परां गतिं मोक्षं याति तस्मात्कामादित्रयं त्यजेदिति ॥ २२ ॥

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥**

**शां० भा०—सर्वस्यैतस्याऽऽसुरसंपत्परिवर्जनस्य श्रेयआचरणस्य च शास्त्रं कारणं शास्त्रप्रमाणादुभयं शक्यं कर्तुं नान्यथाऽतः—यः शास्त्रविधिं कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यमुत्सृज्य त्यक्त्वा वर्तते कामकारतः कामप्रयुक्तः सन्न स सिद्धिं पुरुषार्थयोग्यतामाप्नोति। नाप्यस्मिँल्लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥ २३ ॥**

शां० आ०—आसुर्याः संपदो वर्जने श्रेयसश्च करणे किं कारणं तदाह—**सर्वस्येति** । तस्य कारणत्वं साधयति—**शास्त्रेति** । उक्तमुपजीव्यानन्तरश्लोकं प्रवर्तयति—**अत इति** । शिष्यतेऽनुशिष्यते बोध्यतेऽनेनापूर्वोऽर्थ इति शास्त्रं तच्च विधिनिषेधात्मकमित्युपेत्य व्याचष्टे—**कर्तव्येति** । कामस्य करणं कामकारस्तस्माद्धेतोरित्युपेत्य कामाधीना शास्त्रविमुखस्य प्रवृत्तिरित्याह—**कामेति** । कामाधीनप्रवृत्तेः सदा पुमर्थायोग्यस्य सर्वपुरुषार्थासिद्धिरित्याह—**नापीति** ॥ २३ ॥

**आ० भा०—॥ २३ ॥**

आ० ज०—॥ २३ ॥

**रा० भा०**—शास्त्रानादरोऽस्य नरकस्य प्रधानहेतुरित्याह—शास्त्रं वेदाः । विधिरनुशासनं वेदाख्यं मदनुशासनमुत्सृज्य यः कामकारतो वर्तते स्वच्छन्दानुगुणमार्गेण वर्तते । न स सिद्धिमवाप्नोति न काममप्यामुष्मिकीं सिद्धिमवाप्नोति । ऐहिकमपि न सुखं किंचिदवाप्नोति । न परां गतिं कुतः परां गतिं प्राप्नोतीत्यर्थः ॥ २३ ॥

**अ० टी०**—किंच—असुराश्च अशास्त्रविहिताः असत्कर्मणि निरता अतो यश्चैतत्संगत्यागी न किन्तु तद्भक्तोऽशास्त्रं कर्म करोति न स मुक्तिं प्राप्नोतीत्याह—**यः शास्त्रेति** । आसुरसंगात्तु यः शास्त्रविधिमुत्सृज्य अवगणय्य कामकारतः स्वेच्छातः अशास्त्रेषु वर्तते स न सिद्धिं स्वमनोभिलाषं, न सुखं मनोनिर्वृतिं, न परां गतिं मोक्षं प्राप्नोतीत्यर्थः ॥ २३ ॥

**नी० टी०**—न केवलं काष्ठतपस्विवत् कामादित्यागमात्रेणोच्छास्त्रवर्ती सिद्ध्यतीत्याह—**य इति** । शास्त्रविधिं शास्त्रेण इष्टसाधनतयाऽनिष्टसाधनतया च ज्ञापितं । "ब्राह्मणो यजेत । न सुरां पिबेत्"इत्यादिना विहितं निषिद्धं च उत्सृज्य विहितमकरणेन निषिद्धमाचरणेन च उत्सृज्य यो वर्तते कामकारत इच्छया सः सिद्धिं चित्तशुद्धिं सुखं वैराग्यादिजनितां तृप्तिं परां गतिं मोक्षं च नावाप्नोति ॥ २३ ॥

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे देवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

**शां० भा०**—तस्मादिति । तस्माच्छास्त्रं प्रमाणं ज्ञानसाधनं ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायामतो ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं विधिर्विधानं शास्त्रेण विधानं शास्त्रविधानं कुर्यान्न कुर्यादित्येवंलक्षणं तेनोक्तं स्वकर्म यत्तत्कर्तुमिहार्हसि । इहेति कर्माधिकारभूमिप्रदर्शनार्थमिति ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये संपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

**शां० आ०**—शास्त्रादृते कर्मणो निष्फलत्वे फलितमाह—**तस्मादिति**। कर्तव्याकर्तव्यौ धर्माधर्मौ तत्र शास्त्रस्य प्रमाणत्वेऽपि मम किं कर्तव्यमित्याशङ्क्याऽऽह—**अत इति** । स्वकर्म क्षत्रियस्य युद्धादि, इतिशब्दोऽध्यायसमाप्त्यर्थः । तदनेनाध्यायेन प्राग्भवीयकर्मवासनानुसारेणाभिव्यज्यमानसात्त्विकादिप्रकृतित्रयविभागेन दैव्यासुरीतिसंपद्द्वयमादानहानाभ्यामुपदिश्य कामक्रोधलोभानपहाय पुरुषार्थिना शास्त्रप्रवणेन तदुक्तकारिणा भवितव्यमिति निर्धारितम् ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने षोडशोऽध्यायः ॥ १६ ॥

**आ० भा०**—॥ २४ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये षोडशोऽध्यायः ॥ १६ ॥

आ० ज०—॥ २४ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां शोडशोऽध्यायः ॥ १६ ॥

रा० भा०—तस्मात्कार्याकार्यव्यवस्थितौ उपादेयानुपादेयव्यवस्थायां शास्त्रमेव तव प्रमाणं धर्मशास्त्रेतिहासपुराणाद्युपबृंहिता वेदा यदेव पुरुषोत्तमाख्यं परं तत्त्वं तत्प्रीणनरूपं तत्प्राप्त्युपायभूतं च कर्मावबोधयन्ति । तच्छास्त्रविधानोक्तं तत्त्वं कर्म च ज्ञात्वा यथावद् न्यूनातिरिक्तं विज्ञाय कर्तुं त्वमर्हसि तदेवोपादातुमर्हसि ॥ २४ ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते गीताभाष्ये षोडशोऽध्यायः ॥ १६ ॥

अ० टी०—तस्मादिति । तस्मात् कारणात्ते तव दैव्यां संपदि जातस्य कार्याकार्यव्यवस्थितौ इदं कार्यम् इदमकार्यम् एतयोर्व्यवस्थितौ व्यवस्थायां शास्त्रं प्रमाणमतः शास्त्रं विधानोक्तं ज्ञात्वैतत्संगेन त्वं कर्म कर्तुमिह प्रपञ्चे अर्हसि ॥ २४ ॥

'दैवासुरीयसंपत्तिविवेकेन तु षोडशे ॥ संगत्यागविभागेन बन्धमोक्षौ विवेचितौ ॥१॥'

इति श्रीभगवद्गीताऽमृतरङ्गिण्यां षोडशोऽध्यायः ॥ १६ ॥

नी० टी०—यस्माच्छास्त्रातिगः शुद्ध्यादिकं त्रयं नाप्नोति तस्मात्ते तव शुद्ध्यादिकामस्य शास्त्रमेव प्रमाणं किं कार्यं किं न कार्यमित्यस्यां व्यवस्थायां । एवं ज्ञात्वा शास्त्रं इदं कर्तव्यमिदं न कर्तव्यमिति शासनं वेदाज्ञारूपं । विधानं च तदुल्लंघने प्रतिसमाधानं । अग्निहोत्राद्यकरणेऽयं दोषस्तत्परिहारार्थमिदं कृच्छ्रादिकं प्रायश्चित्तं । ब्रह्महत्यादिकरणेऽयं दोषस्तत्परिहारार्थमिदमश्वमेधादि अन्यद्वा प्रायश्चित्तं । शास्त्रं च विधानं च ताभ्यामुक्तं कर्म इह मनुष्यलोके कर्तुमर्हसि । लोकांतरे कर्मस्वनधिकारं दर्शयितुमिहेत्युक्तं । तदेवं शास्त्रानुवर्तिन एव चित्तशुद्ध्यादिकं नान्यस्येति सिद्धम् ॥ २४ ॥

इति भीष्मपर्वणि नैलकंठीये भारतभावदीपे षोडशोऽध्यायः ॥ १६ ॥

( श्लोकानामादितः समष्ट्यङ्काः—५६५ )



## ॥ अथ सप्तदशोऽध्यायः ॥ १७ ॥

**अर्जुन उवाच—ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ॥**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

शां० भा०—तस्माच्छास्त्रं प्रमाणं त इति भगवद्वाक्याल्लब्धप्रश्नबीजः—ये केचिदविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन्पूजयन्ति श्रद्धयाऽऽस्तिक्यबुद्ध्याऽन्विताः संयुक्ताः सन्तः श्रुतिलक्षणं स्मृतिलक्षणं वा कंचिच्छास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शनादेव श्रद्दधानतया ये देवादीन्पूजयन्ति त इह ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विता इत्येवं गृह्यन्ते । ये पुनः कंचिच्छास्त्रविधिमुपलभमाना एव तमुत्सृज्यायथाविधि देवादीन्पूज-

यन्ति त इह 'ये शास्त्रविधिमुत्सृज्य यजन्ते' इति न परिगृह्यन्ते । कस्माच्छ्रद्धयान्वितत्वविशेषणात् । देवादिपूजाविधिपरं किंचिच्छास्त्रं पश्यन्त एव तदुत्सृज्याश्रद्दधानतया तद्विहितायां देवादिपूजायां श्रद्धयान्विताः प्रवर्तन्त इति न शक्यं कल्पयितुं यस्मात्तस्मात्पूर्वोक्ता एव 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः' इत्यत्र गृह्यन्ते । तेषामेवंभूतानां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः किं सत्त्वं निष्ठाऽवस्थानमाहोस्विद्रजोऽथ वा तमः । एतदुक्तं भवति या तेषां देवादिविषया पूजा सा किं सात्त्विक्याहोस्विद्राजस्युत तामसीति ॥ १ ॥

**शां० आ०**—आस्तिकानां नास्तिकानां च शास्त्रैकचक्षुषां गतिरुक्ता संप्रत्यास्तिकानामेव शास्त्रानभिज्ञानां गतिजिज्ञासया पृच्छतीत्याह—**तस्मादिति** । यजन्त इति योगग्रहणं दानादेरुपलक्षणम् । यदि वेदोक्तं विधिमपश्यन्तस्तमुत्सृजन्ति कथं तर्हि श्रद्धाना यागादि कुर्वन्ति न हि मानं विना श्रद्धया यागादि कर्तुं शक्यमित्याशङ्क्याऽऽह—**श्रुतीति** । ननु शास्त्रीयं विधिं पश्यन्तोऽपि केचित्तमुपेक्ष्य स्वोत्प्रेक्षया यागादि कुर्वन्तो दृश्यन्ते तेषामिह 'ये शास्त्रविधिमुत्सृज्य' इति ग्रहो भविष्यति नेत्याह—**ये पुनरिति** । तेषामत्रापरिग्रहे प्रश्नपूर्वकं हेतुमाह—**कस्मादिति** । शास्त्रज्ञानां तदुपेक्षावतां ग्रहेऽपि विशेषणमविरुद्धमित्याशङ्क्य व्याघातान्मैवमित्याह—**देवादीति** । अश्रद्दधानतया तदुत्सृज्येति संबन्धः । शास्त्रोक्तं विधिमधिगच्छतामपि तमवधीर्य स्वेच्छया देवपूजादौ प्रवृत्तानामासुरेष्वेवान्तर्भावो यस्मादनन्तराध्याये सिद्धस्तस्मादास्तिकाधिकारे तेषां प्रसङ्गो नास्तीत्युपसंहरति—**यस्मादिति** । पूर्वोक्ताः शास्त्रानभिज्ञा वृद्धव्यवहारानुसारिण इति यावत् । तैः श्रद्धया क्रियमाणं कर्म कुत्र पर्यवस्यतीति पृच्छति—**तेषामिति** । का निष्ठेत्येतद्विवृणोति—**सत्त्वमिति** । कार्याणां कारणैर्व्यपदेशमाश्रित्य तात्पर्यमाह—**एतदिति** ॥ १ ॥

**आ० भा०**—सर्वगुणपूर्णाय नमः ॥ ॐ श्रीः गुणभेदान् प्रपंचयत्यनेनाध्यायेन । शास्त्रविधिमुत्सृज्य अज्ञात्वा । 'वेदः कृत्स्नोऽधिगंतव्यः सरहस्यो द्विजन्मना' इति विधिरुत्सृष्टो हि तैः । "ये वै वेदं न पठंते न चार्थं वेदोज्ज्ञांस्तान्विद्धि सानूनबुद्धीन्" इति माधुच्छंदसश्रुतिः । अन्यथा तामसा इत्येवोच्येत । न तु विभज्य । यदि सात्त्विकास्तर्हि नोत्सृष्टशास्त्राः । न हि वेदविरुद्धो धर्मः । 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्' इति हि स्मृतिः । 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः' इति च भागवते ॥ १ ॥

**आ० ज०**—अध्यायार्थमाह—**गुणेति** । गुणनिमित्ताः श्रद्धादीनां भेदाः । नान्यं गुणेभ्यः कर्तारमित्युक्तत्वात् प्रपंचयतीत्युक्तम् । सात्विकानां पुमर्थसाधनत्वादनुष्ठेयत्वमन्येषां तद्विरुद्धत्वाभावः । त्याज्यत्वं च ज्ञापयितुमिति शेषः । शास्त्रविधिमुत्सृज्येत्यस्य वेदविधानमप्रामाण्यबुद्ध्या परित्यज्येत्यर्थप्रतीतिं निवारयितुमाह—**शास्त्रेति** । अज्ञानमेवात्रोत्सर्गो न त्वप्रामाण्यबुद्ध्या त्याग इत्यर्थः । ननु प्राप्तपरित्याग उत्सर्गः । एवं च प्रतीतार्थ एव युक्तो न ज्ञात्वेति तत्राह—**वेद इति** । अर्थज्ञानपर्यंतोऽयं विधिः । अयं च सर्वान्द्विजन्मनः प्राप्तस्तैरज्ञानिभिरुत्सृष्टश्च अतोऽज्ञात्वेति युक्तमित्यर्थः । अत्र श्रुतिसंमतिं चाह—**य इति** । न चार्थमाधिगच्छंति । सहानूनया वेदतदर्थाधिगतियोग्यया बुद्ध्या वर्तमानान् सानूनबुद्ध्योऽपि ये वेदं न पठंत इति योज्यम् । अप्रामाण्यबुद्ध्या परित्यज्येत्येवार्थः किं न स्यादित्यत आह—**अन्यथेति** । यद्यत्र वेदविरोधिनां बौद्धादीनां निष्ठा पृच्छ्येत तदा ते तामसा इत्येवोत्तरमुच्येत । तदीयतामसत्वस्याविकल्पितत्वादिति भावः । न केवलं वक्तव्यानुक्तिरेव दोषः किं तु तद्विरुद्धोक्तिश्च स्यादिति भावेनाह—**न त्विति** । त्रिविधा भवति श्रद्धेत्यादिना श्रद्धां विभज्योत्तरं नोच्येत इत्यर्थः । एवमुत्तरवचनेऽपि किं स्यादिति चेत् वेदाप्रामाण्यवादिनामपि पाक्षिकं सात्विकत्वं स्यात् । तथा च वक्ष्यामः । तदपि स्यादिति चेत् न । सात्विकत्ववेदविरोधित्वयोः सहानवस्थानादित्याह—**यदीति** । सहानवस्थानमपि कुतो निश्चेयमिति चेत् । सात्विका हि धर्ममाचरंति । 'सत्वाद्धर्मो भवेत्पुंसाम्' इति वचनात् । तथा च वेदविरोधिनो धर्मिणश्चेत्युक्तं भवति । एवं च वेदविरोधी धर्म इत्यापद्येत । तच्चानुपपन्नमित्याह—**न हीति** । कुतो नेत्यत आह—**वेद इति** ॥ १ ॥

**रा० भा०**—दैवासुरविभागोक्तिमुखेन प्राप्यतत्त्वज्ञानं तत्प्राप्त्युपायज्ञानं च वेदैकमूलमित्युक्तम् । इदानीमशास्त्रविहितस्यासुरत्वेनाफलत्वं शास्त्रविहितस्य च गुणतस्त्रैविध्यं शास्त्रसिद्धस्य लक्षणं चो-

च्यते। तत्राशास्त्रविहितस्य निष्फलत्वमजानन्नशास्त्रविहिते श्रद्धासंयुक्ते यागादौ सत्त्वादिनिमित्त-फलभेदबुभुत्सयार्जुनः पृच्छति—शास्त्रविधिमुत्सृज्य श्रद्धयान्विता ये यजन्ते तेषां निष्ठा का किं सत्त्वमाहोस्वित् रजः अथ तमः। निष्ठा स्थितिः स्थीयतेऽस्मिन्निति स्थितिः सत्त्वादिरेव निष्ठेत्यु-च्यते तेषां किं सत्त्वे स्थितिः किं वा रजसि किं वा तमसीत्यर्थः॥ १॥

अ० टी०—श्रीकृष्णाय नमः॥ 'शास्त्रविध्ययुता श्रद्धा निर्गुणैवोत्तमा मता॥ इति दर्शयितुं श्रद्धा त्रि-विधाऽत्र निरुप्यते ॥ १॥' पूर्वाध्याये शास्त्रविधिरहितकामकारतः कर्मसु वर्त्तमानस्य न फलमित्युक्तं तत्र कामकाराऽभावे शास्त्रविधिरहितस्य श्रद्धया वर्त्तमानानामग्रे सात्त्विकत्वाद्याश्रयेण किमपि ज्ञानादिकं सत्फलं भवति नवेतिजिज्ञासुरर्जुनः पृच्छति—**येशास्त्रेति**। ये सर्वत्यागादनन्यत्वादिशास्त्रविधिं दुस्तरत्वेनोत्सृज्य परंपराऽऽचा-रप्रवाहप्रवृत्तभजनादिषु श्रद्धया आदरेण युक्ताः यजन्ते देवादिपूजनं कुर्वन्ति, हे कृष्ण! तेषां का निष्ठा क आश्रयः सत्त्वम् आहो रजः तमो वा। अयं भावः। पूर्वंचेत् सत्त्वाश्रयस्तदा तत एव ज्ञानोदयः पूर्वं चेद्रजस्तदा तथा कुर्वतोऽग्रे सात्त्विकत्वं, पूर्वं चेत्तमस्तदाऽग्रे राजसत्त्वं ततस्तथा कुर्वतोऽग्रे सात्त्विकत्वं ततो ज्ञानोदयस्ततो निर्गुणत्वेन त्वत्प्राप्तिः। फलात्मकनामसंबोधनेन फलाभावे तत्कारणं व्यर्थमेव तदाचारादिप्रामाण्यं निष्प्रयोजन-कमतस्तेषामाश्रयस्वरूपं वक्तव्यमितिभावो व्यञ्जितः॥ १॥

नी० टी०—तस्माच्छास्त्रं प्रमाणं त इति प्रश्नबीजमुपलभ्यार्जुन उवाच—**य इति**। ये पुरुषाः शास्त्रविधिं शास्त्रपदेनात्र श्रुतिसदाचारकुलाचारा गृह्यंते सर्वेषां तेषां धर्मे प्रमाणत्वात्। तत्र योऽधिगतो विधिर्विधेयं तदुत्सृज्य सर्वात्मना परित्यज्य यजंते पूजयंति तातकूपादीन् मत्पित्रा कृतोऽयं कूपो गंगाशतादप्यधिकोऽत्रैव स्नानपानावगाहनपरिचर्याप्रदक्षिणप्रक्रमणरूपादेतत्सेवनादहमिष्टं फलमवश्यं प्राप्स्यामीति तत्र दृढतरया श्रद्धयाऽ-न्विताः संतस्तेषां निष्ठा इयं का कीदृशी। किं सत्वं सात्विकी वा पित्र्ये कूपे श्रद्धाधिक्यदर्शनात्। किं रजः राजसी वा तेषां निष्ठा शास्त्रातिक्रमेण कामकाररूपत्वात्। आहो इति प्रश्ने किं तमः तामसी वा सा निष्ठा रंगे रजतधीरिवाशास्त्रीयाया अल्पे महत्त्वबुद्धेर्विपर्यासरूपाया दर्शनात्। यदपि तु भाष्ये वृद्धव्यवहारदर्शनादेव श्रद्दधानतया देवादीन्यजंत इत्युक्तं तत्राप्यविगीत एव वृद्धव्यवहारो ग्राह्यः अविगीतेऽस्मिंस्तामसत्वा-दिशंकायाअयोगात्॥ १॥

**श्रीभगवानुवाच-त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा॥**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु॥ २॥**

**शां० भा०—सामान्यविषयोऽयं प्रश्नो नाभविभज्य प्रतिवचनमर्हतीति—त्रिविधा त्रिप्रकारा भवति श्रद्धा। यस्यां निष्ठायां त्वं पृच्छसि देहिनां सा स्वभावजा। जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते ततो जाता स्वभावजा। सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिवि-षया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषयैवं त्रिविधा तामुच्यमानां श्रद्धां शृणु॥ २॥**

**शां० आ०**—विशेषनिष्ठमुत्तरं सामान्येन वक्तुं न शक्यमित्याशयेन परिहरति—**सामान्येति**। किमिति श्रद्धात्रैविध्यं प्रश्नानुपयुक्तमुच्यते तत्राऽऽह—**यस्यामिति**। श्रद्धापूर्विकायां क्रियायामिति यावत्। श्रद्धात्रैविध्ये हेतुमाह—**सा स्वभा-वजेति**। स्वभावशब्दार्थं प्रकृतोपयोगितया कथयति—**जन्मान्तरेति**। कथं त्रिविधेत्यपेक्षायामाह—**सात्त्विकीत्यादिना**। कथमुक्ता श्रद्धा स्वभावजेति तत्राऽऽह—**तामिति**॥ २॥

**आ० भा०—अतो विभज्याह—त्रिविधेत्यादिना ॥ २ ॥**

**आ० ज०**—ननु तेषां निष्ठा तु केति पृष्टे सात्विकत्वादिकं वक्तव्यम्। त्रिविधेत्यादिकं तु किमर्थमुच्यत इत्यत आह—**अत इति**। यतएवमर्जुनेन वेदविधिमजानतां निष्ठा पृष्टा अज्ञानं च भेदकं त्रयाणामपि संभवात्। न चाज्ञानस्य प्रभेदाः संति अतः श्रद्धयान्विता इति तद्विशेषणत्वेनोक्तां श्रद्धां सात्विकत्वादिना विभज्य तदाश्रयेण तेषां स्वरूपमाहेत्यर्थः ॥ २ ॥

**रा० भा०—एवं पृष्टः भगवान् अशास्त्रविहितश्रद्धायाः तत्पूर्वकस्य च यागादेर्निष्फलत्वं हृदि निधाय शास्त्रीयस्यैव यागादेर्गुणतस्त्रैविध्यं प्रतिपादयितुं शास्त्रीयश्रद्धात्रैविध्यं तावदाह—सर्वेषां देहिनां श्रद्धा त्रिविधा भवति सा च स्वभावजा। स्वभावः स्वासाधारणो भावः प्राचीनवासनानिमित्तस्तत्तद्रुचिविशेषः। यत्र रुचिस्तत्र श्रद्धा जायते श्रद्धा हि स्वाभिमतं साधयत्येतदिति विश्वासपूर्विका साधने त्वरा वासना रुचिश्च। श्रद्धा चात्मधर्माः गुणसंसर्गजाः तेषामात्मधर्माणां वासनादीनां जनकाः देहेन्द्रियान्तःकरणविषयगताः धर्माः कार्यैकनिरूपणीयाः सत्त्वादयो गुणाः सत्वादिगुणयुक्तदेहाद्यनुभव इत्यर्थः। ततश्चेयं श्रद्धा सात्विकी राजसी तामसी चेति त्रिविधा तामिमां श्रद्धां शृणु। सा श्रद्धा यत्स्वभावा तं स्वभावं शृण्वित्यर्थः ॥ २ ॥**

**अ० टी०**—अत्रोत्तरमाह श्रीकृष्णः—**त्रिविधेति**। देहिनां देहाभिमानवतां लौकिकानां श्रद्धा त्रिविधा भवति सात्त्विकी, च पुनः राजस्येव, तथा तामसी चेत्यमुना प्रकारेण त्रिविधा। साच स्वभावजा स्वस्यौत्पत्तिकगुणजा नतु निर्गुणा। तथाचायं भावः। शास्त्रोक्तविद्ध्युक्तमद्भजनश्रद्धातो लौकिकादिगुणज्ञानोदयो भवति निर्गुणत्वाज्जीवस्यापि निर्गुणत्वेन सत्त्वसंगाभावान्मत्प्राप्तिफला श्रद्धैकरूपैव भिन्ना गुणस्वभावजा त्रिविधा च भिन्ना न तत्फलसाधिकेति भिन्नत्वज्ञापनाय तां त्रिविधां मयोच्यमानां शृणु, तच्छ्रवणादेव त्वत्संदेहनिवृत्तिर्भविष्यतीति ॥ २ ॥

**नी० टी०**—एवं सामान्यतः पृष्टे सामान्यमेवोत्तरं श्रीभगवानुवाच—**त्रिविधेति**। स्वभावः प्राग्भवीयौ धर्माधर्मौ ततो जाता स्वभावजा यदि प्राग्भवे सात्विको देवतापूजादिधर्मोऽनेनानुष्ठितस्तर्हि तस्य शुद्धसात्विक्येव श्रद्धा भवति। यदि राजसो यक्षादिपूजारूपस्तर्हि राजस्येव। यदि तामसो भूतप्रेतादिपूजारूपस्तर्हि तामसी श्रद्धा भवति। एवं त्रिविधा श्रद्धा देहिनां देहाभिमानवतां भवति तां मया व्याख्यास्यमानां शृणु ॥ २ ॥

## सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ॥
## श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

**शां० भा०—सैवं त्रिविधा भवति—सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति भारत। यद्येवं ततः किं स्यादित्युच्यते श्रद्धामयः श्रद्धाप्रायोऽयं पुरुषः संसारी जीवः। कथं यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स यच्छ्रद्धः स एव तच्छ्रद्धानुरूप एव स जीवः ॥ ३ ॥**

**शां० आ०**—प्राचीनकर्मोद्बोधिता त्रिविधा वासना स्वभावशब्दिता त्रिविधायाः श्रद्धाया निमित्तमित्युक्तमिदानीमुपादानं तस्या दर्शयति—**सैवमिति**। विशिष्टचित्तोपादाना श्रद्धा तत्त्रैविध्ये त्रिविधेति पूर्वार्धस्यार्थः। कथं निष्ठायाः सत्त्वादिप्रकारप्रश्नद्वारा श्रद्धायास्त्रैविध्यनिरूपणमुपयुक्तमिति मन्वानः शङ्कते—**यद्येवमिति**। श्रद्धेयं विषयमभिध्यायंस्तया तत्रैव प्रवर्तत इति मन्वानः परिहरति—**उच्यत इति**। श्रद्धामयत्वं प्रश्नपूर्वकं कथयति—**कथमिति**। श्रद्धा खल्वधिकृते पुरुषे प्राचुर्येण प्रकृतेति तस्य श्रद्धामयत्वसिद्धिरित्यर्थः ॥ ३ ॥

**आ० भा०—सत्वानुरूपा चित्तानुरूपा । यो यच्छ्रद्धः स एव सः सात्विकश्रद्धः । सात्विकइत्यादि ॥ ३ ॥**

**आ० ज०**—सात्विकत्वादिभेदेन श्रद्धा त्रिविधेत्युक्ता पुनः सत्त्वानुरूपा सर्वस्य श्रद्धा भवतीति वचनं कथं न व्याहतमित्यत आह—**सत्त्वेति** । चित्तं चैतन्यम् जीव इति यावत् । ननु श्रद्धास्वरूपमेव निरूपितम् । न तु तदाश्रित्यजीवस्वरूपमतो न संगतमुत्तरमित्यतो येन तदुच्यते तत्पठित्वा व्याचष्टे—**य इति** । इत्यादिज्ञातव्यमिति शेषः । राजसश्रद्धो राजसः । तामसश्रद्धस्तामस इत्यर्थः ॥ ३ ॥

**रा० भा०—सत्वमन्तःकरणं सर्वस्य पुरुषस्यान्तःकरणानुरूपा श्रद्धा भवति । अन्तःकरणं यादृशगुणयुक्तं तद्विषया श्रद्धा जायत इत्यर्थः । सत्वशब्दः पूर्वोक्तानां देहेन्द्रियादीनां प्रदर्शनार्थः । श्रद्धामयोऽयं पुरुषः श्रद्धामयः श्रद्धापरिणामः । यो यच्छ्रद्धः यः पुरुषो यादृश्या श्रद्धया युक्तः स एव सः स तादृशश्रद्धापरिणामः पुण्यकर्मविषये श्रद्धायुक्तश्चेत् पुण्यकर्मफलसंयुक्तो भवतीति श्रद्धाप्रधानः फलसंयोग इत्युक्तं भवतीति ॥ ३ ॥**

**अ० टी०**—एवं श्रोतारं श्रवणे सावधानतयाऽभिमुखीकृत्याऽऽह श्रद्धास्वरूपम्—**सत्त्वानुरूपेति** । हे भारत ! सत्त्वानुरूपा मूलसत्त्वस्य अनुरूपा सदृशा अन्यधर्मास्फूर्तिपूर्वकसर्वसामर्थ्यस्फुरणाऽऽसक्त्युत्पत्तिप्रसरणाऽऽदररूपा श्रद्धा सर्वस्य सात्विकादित्रयस्य भवति । भारतेतिसंबोधनं तथात्वज्ञानाधिकारित्वबोधनाय । तर्हि त्रिविधत्वं कथमित्यत आह—**श्रद्धामय इति** । अयं पुरुषः मदंशोऽपि नरात्मकः श्रद्धामयः श्रद्धाप्रचुरः सतु यः सात्त्विकादिभेदेन यच्छ्रद्धः यस्य श्रद्धायुक्तो भवति सः स एव तद्रूप एव भवतीत्यर्थः ॥ ३ ॥

**नी० टी०**—ननु श्रद्धान्वितो भूत्वाऽत्मन्येवात्मानं पश्येदिति श्रद्धाया आत्मदर्शने साधनेष्वंतरंगत्वमुच्यते कथं तस्या राजसत्वं तामसत्वं चोच्यत इत्यत आह—**सत्वेति** । प्राक् कर्मसंस्कारोपेतं यादृशं बुद्धिसत्वं सात्विकं राजसं वा तदनुरूपैव सात्विक्यादिरूपा देवतादिपूजासु फलावश्यंभावनिश्चयात्मिका श्रद्धाऽपि भवति । तथाऽयं पुरुषोऽपि श्रद्धामयः श्रद्धाप्रधानो यो यच्छ्रद्धो यो यया श्रद्धयोपेतः स एव स इति सात्विक्या श्रद्धया उपेतः सात्विक एव राजस्या राजसस्तामस्या तामसइति एवं सति यदि तातकूपभक्तः पूर्वपुण्यवशात्तातं देववन्मन्यते तर्हि तं सात्विकं पुंडलिकमिव देवा अनुगृह्णंति नित्यकर्मत्यागनिमित्तमपि दोषमस्यापनुदंति । यदि त्वेनं मंत्रादिना सिद्धं पूर्ववासनावशाद्यक्षादिरूपं मन्यते तदा तं राजसं राजसा यक्षा एवानुगृह्णंति । नास्य कामकारवतो नित्यकर्मत्यागजं दोषमपनेतुमर्हंति । नहि देवतापराधी यक्षैस्त्रातुं शक्यते । यदि त्वयं प्रेतः पिता मत्कुटुंबं माबाधिष्टेति सर्वं धर्मं त्यक्त्वा एनमस्य प्रियं कूपं पूजयामीति मन्यते तदा तं पितरि प्रेतत्वबुद्धियोगाद्विपर्यस्तं तामसं प्रेता एवानुगृह्णंति क्षुद्रभोगैर्देवाश्च नरके पातयंति ॥ ३ ॥

**यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ॥**
**प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥**

**शां० भा०—ततश्च कार्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठाऽनुमेयेत्याह—यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठा देवान्, यक्षरक्षांसि राजसाः, प्रेतान्भूतगणांश्च सप्तमातृकादींश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥**

**शां० आ०**—तथाऽपि कथं सत्त्वादिनिष्ठा यथोक्तस्य पुरुषस्य ज्ञातुं शक्येत्याशङ्क्याऽऽह—**ततश्चेति** । अधिकृतस्य पुरुषस्य श्रद्धाप्रधानत्वादिति यावत्, देवा वस्वादयो, यक्षाः कुबेरादयो, रक्षांसि नैर्ऋतादयः, स्वधर्मात्प्रच्युता विप्रादयो देहपाताद्धूर्ध्वं वायुदेहमापन्नाः प्रेताः । एभ्यश्च यथायथमाराध्यदेवादयः सात्त्विकराजसतामसान्फ्रकामान्प्रयच्छन्तीति सामर्थ्यादवगन्तव्यम् ॥४॥

**आ० भा०—कः सात्विकश्रद्ध इत्यादि विभज्याह—यजंत इत्यादिना ॥ ४ ॥**

आ० ज०—तां शृण्विति प्रतिज्ञातं नोच्यते । यजंते सात्विका इत्यप्रस्तुतं चोच्यत इत्यत आह—**क इति** । इत्यादि जिज्ञासायामिति शेषः । विभज्य श्रद्धास्वरूपम् । प्रतिज्ञातं श्रद्धात्रैविध्यमेवोच्यते । अतो नासंगतिरिति भावः । एतेन सात्विका इत्यादेः सात्विकश्रद्धा इत्यादिरर्थ उक्तो भवति ॥ ४ ॥

**रा० भा०—तदेव विवृणोति—सत्त्वगुणप्रचुराः सात्त्विकश्रद्धायुक्ता देवान्यजन्ते । दुःखाऽसंभिन्नोत्कृष्टसुखहेतुभूतदेवयागविषया श्रद्धा सात्त्विकीत्युक्ता भवति । राजसा जना यक्षरक्षांसि यजन्ते । अन्ये तामसा जनाः प्रेतान्भूतगणान्यजन्ते । दुःखसंभिन्नाल्पसुखजननी राजसी श्रद्धा दुःखप्रायात्यल्पसुखजननी तामसीत्यर्थः ॥ ४ ॥**

अ० टी०—तदेव प्रपञ्चयति—**यजन्त इति** । सात्त्विका जना देवान् सूर्येन्द्रादीन् यजन्ते पूजयन्ति, राजसाः पुनः यक्षान् धनदाधिष्ठितराक्षसान् यजन्ते । अन्ये सत्त्वसंबन्धरहितास्तामसा जनाः प्रेतान् भूतगणांश्च यजन्ते । तत्तत्पूजारुच्यैव ते तद्रूपा ज्ञातव्या इत्यर्थः ॥ ४ ॥

नी० टी०—कुत एतदेवं कल्प्यते यस्मात्सात्विकादयो देवादीनेव यजन्ते इत्याह—**यजंत इति** । यजंते पूजयंति ॥ ४ ॥

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ॥**
**दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥**

**शां० भा०—एवं कार्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे तत्र कश्चिदेव सहस्रेषु देवपूजादितत्परः सत्त्वनिष्ठो भवति बाहुल्येन तु रजोनिष्ठास्तमोनिष्ठाश्चैव प्राणिनो भवन्ति, कथम्—अशास्त्रविहितं न शास्त्रविहितमशास्त्रविहितं घोरं पीडाकरं प्राणिनामात्मनश्च तपस्तप्यन्ते निर्वर्तयन्ति ये तपो जनास्ते च दम्भाहंकारसंयुक्ता दम्भश्चाहंकारश्च दम्भाहंकारौ ताभ्यां संयुक्ता दम्भाहंकारसंयुक्ताः कामरागबलान्विताः कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलं तेनान्विताः कामरागबलैर्वाऽन्विताः ॥ ५ ॥**

शां० आ०—ननु सत्त्वादिनिष्ठाः शास्त्रेण ज्ञातुं शक्यन्ते कृतं कार्यलिङ्गकानुमानेनेति तत्राऽऽह—**एवमिति** । सत्त्वादिनिष्ठानां जन्तूनामवान्तरविशेषं प्रचुरत्वाप्रचुरत्वरूपं दर्शयति—**तत्रेत्यादिना** । राजसानां तामसानां च प्राचुर्यं प्रश्नद्वारा विवृणोति—**कथमित्यादिना** । कामश्च काम्यमानविषयो रागश्च तद्विषयभोगाभिलाषस्तत्कृतं तत्प्रयुक्तं तन्निमित्तमितियावत् ॥ ५ ॥

**आ० भा०—॥ ५ ॥**

आ० ज०—॥ ५ ॥

**रा० भा०—एवं शास्त्रीयेष्वेव यागादिषु श्रद्धायुक्तेषु गुणतः फलविशेषः । अशास्त्रीयेषु तपोयागप्रभृतिषु मदनुशासनविपरीतत्वेन न कश्चिदपि सुखलवः । अपि त्वनर्थ एवेति हृदि निहितं व्यञ्जयन्नाह—अशास्त्रविहितमतिघोरमपि तपो ये जनास्तप्यन्ते प्रदर्शनार्थमिदम् । अशास्त्रविहितं बह्वायासं यागादिकं ये कुर्वते दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥**

अ० टी०—अथ सात्त्विकानामपि देवादिपूजननिश्चयोऽप्यासुर एव अनुक्तत्वादित्याह द्वयेन—**अशास्त्रेति** । ये जनाः जननादिक्लेशेन अज्ञाः अशास्त्रविहितम् अन्धपारंपर्यागतं शास्त्रनिषिद्धं वा दम्भाहंकारसंयुक्ताः परप्रतार-

णस्योत्तमत्वख्यापनाऽज्ञानाभ्यां देवताप्रसादार्थं सात्त्विकवदाभासमानं निश्चयेन तपः देहक्लेशम् अभोजनादिना ये तप्यन्ते कुर्वन्ति। ये च घोरं यक्षादिप्रसादरूपं राज्यधनाद्यपेक्षार्थं तपः कुर्वन्ति। कामरागबलान्विताः कामो विषयाभिलाषः, रागो भोगासक्तिः, बलमाग्रहस्तैरन्विताः प्रेरिताः सन्तः ॥ ५ ॥

**नी० टी०**—सात्विकानां दौर्लभ्यमभिप्रेत्याह—**अशास्त्रेति**। शास्त्रं वेदादि तद्विरोधिना कौलिकाद्यागमेन विहितं घोरं स्वमांसहोमेन ब्राह्मणलोहितादिना वा देवतासंतर्पणाद्यात्मकं ये जनास्तपस्तप्यंते तानासुरनिश्चया-न्विद्धीति द्वयोः संबंधः। दंभो धर्मध्वजित्वं अहंकारः स्वस्मिन् पूज्यताबुद्धिस्ताभ्यां संयुक्ताः। कामरागो विष-याभिलाषः बलं साहसेनापि विषयसाधने उत्साहस्ताभ्यामन्विताः ॥ ५ ॥

**कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ॥**
**मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥**

**शां० भा०—कर्शयन्त इति। कर्शयन्तः कृशीकुर्वन्तः शरीरस्थं भूतग्रामं करणसमुदायमचे-तसोऽविवेकिनो मां चैव तत्कर्मबुद्धिसाक्षिभूतमन्तःशरीरस्थं कर्शयन्तो मदनुशासनाकरणमेव मत्कर्शनं तान्विद्ध्यासुरनिश्चयानासुरो निश्चयो येषां त आसुरनिश्चयास्तान्परिहरणार्थं विद्धीत्युपदेशः ॥ ६ ॥**

**शां० आ०**—रजोनिष्ठान्प्राधान्येन प्रदर्श्य तमोनिष्ठान्प्राधान्येन दर्शयति—**कर्शयन्त इति**। कथं शरीरादिसाक्षिणमीश्वरं प्रति कृशीकरणं प्राणिनां प्रकल्प्यते तत्राऽऽह—**मदनुशासनेति**। तेषां विपर्यासनिश्चयवतां परिज्ञा[न] कुत्रोपयुज्यते तत्राऽऽह—**परिहरणार्थमिति** ॥ ६ ॥

**आ० भा०—भगवत्कर्शनं नामाल्पदृष्टिरेव। "यो वै महांतं परमं पुमांसं नैवं द्रष्टा कर्शकः सोऽतिपापी" इत्यनभिम्लानश्रुतिः। आसुरो निश्चयो येषां त आसुरनिश्चयाः। "देवास्तु सात्विकाः प्रोक्ता दैत्या राजसतामसाः" इत्याग्निवेश्यश्रुतिः ॥ ६ ॥**

**आ० ज०**--ननु निर्विकारस्य भगवतः कथं मां चैवांतःशरीरस्थं कर्शयंत इति कर्शनमुच्यत इत्यत आह—**भगवदिति**। 'प्रातिपदिकाद्धात्वर्थे बहुलम्' इति वचनात् दृष्टिरपि णेरर्थ इति भावः। मां चैव जीवरूपेणांतःशरीरस्थमिति व्याख्यानं तु सम्यग्व्याख्यानेनैव परास्तम्। जीवरूपत्वदर्शनस्यैव कृशीकरणत्वात्। मदनुशासनाकरणमेव मत्कर्शनमिति व्याख्याननिरासार्थ-मेवेत्युक्तम्। अशाब्दत्वात्। उक्तव्याख्याने श्रुतिसंमतिं चाह—**यइति**। नैवं महत्त्वविरुद्धम्। द्रष्टेति तृन्नंतम्। कर्शकस्तस्यो-च्यत इतिशेषः। कर्मधारयत्वशंकानिरासार्थमाह—**आसुर इति**। निश्चयः श्रद्धा। कर्मधारयपक्षे हि सामानाधिकरण्यं गौणमिति कल्प्यम्। मत्वर्थीयप्रत्ययो वा तथा च गौरवमिति भावः। ननु प्रकरणात्तामसनिश्चयानिति वक्तव्यम्। आसुरनिश्चयानिति कथमुक्तमित्यत आह—**देवास्त्विति**। सात्विकाः देवाः देवपर्यायवाच्याः प्रोक्ताः। राजसास्तामसाश्च दैत्याः दैत्यपर्यायवाच्याः प्रोक्ता इत्यर्थः ॥ ६ ॥

**रा० भा०—शरीरस्थं पृथिव्यादिभूतसमूहं कर्शयन्तो मदंशभूतं जीवं चान्तःशरीरस्थं कर्शयन्तो ये तप्यन्ते यागादिकं च कुर्वते तानासुरनिश्चयान् विद्धि। असुराणां निश्चयः आसुरो निश्चयः असुरा हि मदाज्ञाविपरीतकारिणः मदाज्ञाविपरीतकारित्वात्तेषां सुखलवसंबन्धो न विद्यते। अपि त्वनर्थव्राते पतन्तीति पूर्वमेवोक्तम्। "पतन्ति नरकेऽशुचौ" इति ॥ ६ ॥**

**अ० टी०**—किंच—**कर्षयन्त इति**। भूतग्रामं पृथिव्यादिसमूहं शरीरस्थं भगवत्क्रीडार्थमास्थितं देहे कर्षयन्तः भगवत्तोषादिरहितवृथोपवासादिभिः कृशं कुर्वन्तः, अचेतसः ज्ञानशून्याः मां च स्वलीलार्थं प्रेरकत्वेन अन्तःशरीरस्थं शरीरमध्ये स्थितं भजनादिरूपमदाज्ञोल्लङ्घनेन मदंशं कर्षयन्तः क्लेशयन्तः पूर्वोक्तरीत्या ये तपः

कुर्वन्ति तान् आसुरनिश्चयान् आसुरो मत्प्रतिपक्षरूपो निश्चयो येषां तादृशान् विद्धि जानीहि । एतेन ये मत्संबन्धरहिततपस्यादिधर्मानपि कुर्वन्ति ते त्याज्या एवेतिज्ञापितम् ॥ ६ ॥

**नी० टी०**—कर्शयंतः कृशं कुर्वंतः भूतग्रामं करणसमूहं अचेतसो मूढाः मां चांतःशरीरस्थं भोक्तृरूपेण शरीरांतःस्थं मां परमेश्वरं वा भोग्यस्य शरीरस्य कृशीकरणेन मदाज्ञालंघनेन वा कृशीकुर्वन्तः तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ॥**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥**

**शां० भा०**—आहाराणां च रस्यस्निग्धादिवर्गत्रयरूपेण भिन्नानां यथाक्रमं सात्त्विकराजसतामसपुरुषप्रियत्वदर्शनमिह क्रियते रस्यस्निग्धादिष्वाहारविशेषेष्वात्मनः प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्वं राजसत्वं तामसत्वं च बुद्ध्वा रजस्तमोलिङ्गानामाहाराणां परिवर्जनार्थं सत्त्वलिङ्गानां चोपादानार्थं तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनमिह राजसतामसान्बुद्ध्वा कथं नु नाम परित्यजेत्सात्त्विकानेवानुतिष्ठेदित्येवमर्थम्—आहारस्त्वपि सर्वस्य भोक्तुस्त्रिविधो भवति प्रिय इष्टस्तथा यज्ञस्तथा तपस्तथा दानं तेषामाहारादीनां भेदमिमं वक्ष्यमाणं शृणु ॥ ७ ॥

**शां० आ०**—उत्तरश्लोकपूर्वार्धतात्पर्यमाह—**आहाराणामिति**। रस्यादिवर्गस्य सात्त्विकपुरुषप्रियत्वं कट्वादिवर्गस्य राजसप्रियत्वं यातयामादिवर्गस्य तामसप्रियत्वमिति दर्शनं कुत्रोपयुज्यते तत्राऽऽह—**रस्येति**। श्लोकोत्तरार्धतात्पर्यमाह—**तथेति**। आहारत्रैविध्यवदिति यावत् । कथमेतेषां प्रत्येकं त्रैविध्यं तत्राऽऽह—**तेषामिति** ॥ ७ ॥

**आ० भा०**—॥ ७ ॥

**आ० ज०**—॥ ७ ॥

**रा० भा०**—अथ प्रकृतमेव शास्त्रीयेषु यागादिषु गुणतो विशेषं प्रपञ्चयति । तत्राप्याहारमूलत्वात् सत्त्वादिवृद्धेराहारत्रैविध्यं प्रथममुच्यते । "अन्नमयं हि सोम्य मनः, आहारशुद्धौ सत्त्वसिद्धिः" इति हि श्रूयते—आहारोऽपि सर्वस्य प्राणिजातस्य सत्त्वादिगुणत्रयान्वयेन त्रिविधः प्रियो भवति । तथैव यज्ञोऽपि त्रिविधः तथा तपो दानं च । तेषां भेदमिमं शृणु तेषामाहारयज्ञतपोदानानां सत्त्वादिभेदेनेममुच्यमानं भेदं शृणु ॥ ७ ॥

**अ० टी०**—एवं धर्मभेदानुक्त्वा आहारादिभेदेनापि तद्भेदज्ञानमाह—**आहारस्त्वित्याद्यैः** । तु पुनः आहारोऽपि सर्वस्य त्रिविधस्य लोकस्य त्रिविधः सात्त्विकादिरूपः प्रियो भवति । यथा यज्ञो यजनं, तपः देहादिक्लेशः, दानं तेषां भेदम् अग्रे मया प्रोच्यमानम् इमं शृणु ॥ ७ ॥

**नी० टी०**—अत्र सात्विकानां श्रद्धाराध्याहारयज्ञतपोदानानां परिग्रहार्थं राजसतामसानां वर्जनार्थं च तेषां प्रत्येकं त्रैविध्यं विधीयते । तत्रापि श्रद्धात्रैविध्यमाराध्यत्रैविध्यं च प्रागेवोक्तं । आहारादीनां त्रैविध्यं प्रतिज्ञापूर्वकमाह—**आहारस्त्विति** । आह्रियत इत्याहारोऽन्नं अतःपरं प्रायेण पदार्थः स्पष्टः तथापि क्वचित्क्वचित्किंचिद्व्याख्यायते ॥ ७ ॥

**आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ॥**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥**

**शां० भा०—**आयुरिति। आयुश्च सत्त्वं च बलं चाऽऽरोग्यं च सुखं च प्रीतिश्च तासां विवर्धना आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनास्ते च रस्या रसोपेताः स्निग्धाः स्नेहवन्तः स्थिराश्चिरकालस्थायिनो देहे, हृद्या हृदयप्रिया आहाराः सात्त्विकप्रियाः सात्त्विकस्येष्टाः ॥ ८ ॥

**शां० आ०—**सात्त्विकप्रीतिविषयमाहारविशेषमुदाहरति—**आयुरिति।** आयुर्ज्योग्जीवनं, सत्त्वं चित्तस्थैर्यं वीर्यं वा। बलं कार्यकरणसामर्थ्यम्, आरोग्यं नीरोगता, सुखमन्तराह्लादः, प्रीतिः परेषामपि संपन्नानां दर्शनात्परमो हर्षस्तासां विवर्धना विवर्धयन्तीति व्युत्पत्तेः। रसोपेता रसयितव्याः सरसाः। देहे चिरकालस्थायित्वं चिरतरं शरीरोपकारहेतुत्वम् ॥ ८ ॥

**आ० भा०—**प्रीतिरानंतरिका। हृद्यत्वं दर्शने। स्थिराश्च न तदैव पक्का भवंति। तथा ह्याज्यादयः ॥ ८ ॥

**आ० ज०—**प्रीतिविवर्धनाः हृद्या इत्येतयोरर्थभेदमाह—**प्रीतिरिति। आनंतरिकेति।** ठन्प्रत्ययांतं सेवाव्यवहितकाल इत्यर्थः। प्रियं तत्कालसौख्यदमिदमिति वचनात्। दर्शनेऽनुभवे सति पश्चादपि यन्मनोहारित्वं तद्धृद्यत्वम्। हृद्यं पश्चान्मनोहारीति वचनादित्यर्थः। आहाराणां क्षणिकानामभावात्कथं स्थिरा इति विशेषणमित्यत आह—**स्थिराश्चेति।** चस्त्वर्थः। प्रसिद्धं स्थैर्यं व्यावर्तयति। तदैवाचिरकाल एव पक्वा निर्वृतपाकाश्चिरकालं देहे गुणप्रदा इत्यर्थः। असंभवपरिहाराय तानुदाहरति। **तथा हीति** ॥ ८ ॥

**रा० भा०—**सत्त्वगुणोपेतस्य सत्त्वमया आहाराः प्रिया भवन्ति। सत्त्वमयाश्चाहारा आयुर्विवर्द्धनाः पुनरपि सत्त्वस्य विवर्द्धनाः। सत्त्वमन्तःकरणम् अन्तःकरणकार्यम्। ज्ञानमिह सत्वशब्देनोच्यते। "सत्वात्संजायते ज्ञानम्" इति सत्वस्य ज्ञानविवृद्धिहेतुत्वात्। आहारोऽपि सत्वमयो ज्ञानविवृद्धिहेतुः। तथा बलारोग्ययोरपि विवर्द्धनाः सुखप्रीत्योरपि विवर्द्धनाः। परिणामकाले स्वयमेव सुखस्य विवर्द्धनाः तथा प्रीतिहेतुभूतकर्मारम्भद्वारेण प्रीतिवर्द्धनाः। रस्या मधुररसोपेताः। स्निग्धाः स्नेहयुक्ताः। स्थिराः स्थिरपरिणामाः। हृद्याः रमणीयवेषाः। एवंविधा सत्वमया आहाराः सात्विकस्य पुरुषस्य प्रियाः ॥ ८ ॥

**अ० टी०—**एवं सावधानं कृत्वाह—**आयुरिति।** आयुर्जीवितं, सत्त्वं हृदयं शुद्धम्, बलं सामर्थ्यम्, आरोग्यं रोगाभावः, सुखं मनस्तोषः, प्रीतिः स्नेहः, एतेषां विवर्द्धनाः, विशेषेण सफलतया धर्माद्यर्थोपयोगित्वेन वृद्धिकराः। तत्र आयुर्वृद्धिकरः पर्वयज्ञावशेषः, सत्त्वसाधको गुर्वाद्युच्छिष्टरूपः, बलकरः पितृदेवादिशेषः, आरोग्यकरो जनन्याद्युपस्कृतः, सुखकरः सन्मार्गोपार्जितः, प्रीतिकरो मित्रादिगृहस्थः। ते च स्वरूपतोऽप्येतादृशाः रस्याः रसयुक्ताः स्निग्धाः स्नेहयुक्ताः स्थिराः चिरकालावस्थायित्वाद्देहपोषकाः हृद्याः हृष्टा एव हृदयाऽऽनन्दकर्त्तारः। एतादृशा आहाराः सात्विकानां प्रिया भवन्तीतिशेषः। एवमाहारकर्तारः सात्विका ज्ञेया इत्यर्थः ॥ ८ ॥

**नी० टी०—**आयुर्जीवनं। सत्वमुत्साहः। बलं शक्तिः। आरोग्यं रोगराहित्यं। सुखं चित्तप्रसादः। प्रीतिः अभिरुचिः। एतेषां विवर्धनाः वृद्धिकराः ते आयुःसत्वबलारोग्यसुखप्रीतिविवर्धनाः। रस्याः रसोपेताः। स्निग्धाः स्नेहवंतः। स्थिराः देहे रसांशेन चिरकालस्थायिनः। हृद्याः दृष्टमात्रा एव हृदयप्रियाः। आहाराः घृतक्षीरसितादयः सात्त्विकप्रियाः ॥ ८ ॥

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ॥**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥**

**शां० भा०—कट्विति ।** कटुरम्लो लवणोऽत्युष्णोऽतिशब्दः कट्वादिषु सर्वत्र योज्योऽतिकटुरतितीक्ष्ण इत्येवं कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन आहारा राजसस्येष्टा दुःखशोकामयप्रदा दुःखं च शोकं चाऽऽमयं च प्रयच्छन्तीति दुःखशोकामयप्रदाः ॥ ९ ॥

**शां० आ०**—राजसप्रीतिविषयमाहारविशेषं दर्शयति—**कट्विति** । कटुस्तिक्तः कटुकस्य तीक्ष्णशब्देनोक्तत्वात्, रूक्षो विस्नेहः, विदाही संतापकः । अतिशब्दस्य सर्वत्र योजनामेवाभिनयति—**अतिकटुरिति** । दुःखं तात्कालिकी पीडा, इष्टवियोगजं दुःखं शोकः, आमयो रोगः ॥ ९ ॥

**आ० भा०—॥ ९ ॥**

**आ० ज०**—॥ ९ ॥

**रा० भा०—कटुरसा अम्लरसाः लवणोत्कटाः अत्युष्णाः अतितीक्ष्णाः रूक्षा विदाहिनश्चेति कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः अतिशैत्यातितैक्ष्ण्यादिना दुरुपयोगास्तीक्ष्णाः शोषकराः । रूक्षास्तापकराः । विदाहिनः दाहकराः । एवंविधाः आहारा राजसस्येष्टाः । ते च रजोमयत्वात् दुःखशोकामयवर्द्धना रजोवर्द्धनाश्च ॥ ९ ॥**

**अ० टी०**—राजसानाह—**कट्विति** । अतिशब्दः सर्वत्रानुसंबद्ध्यते । कट्वादिषु अतिकटुः कारवेल्लादिः । अत्यम्लः आम्रातकादिः । अतिलवणः क्षारबहुलरोचकशाकादिः । अत्युष्णः सबाष्पपक्वान्नादिः । अतितीक्ष्णो मरिचादिः । अतिरूक्षश्चणकमसूरकोद्रवादिः । अतिविदाही राजकादिः । एवमेतेऽतिकट्वादयः पञ्चयज्ञादिरहिताः स्वार्थकृता आहारा राजसस्येष्टाः प्रियाः । दुःखशोकाऽमयप्रदाः दुःखं भक्षणसमय एव रसनाविकारादिरूपं, शोको भक्षणानन्तरमजीर्णोद्गारादिना भक्षितपश्चात्तापादिरूपः, आमयो रोगो ज्वरादिः । एतानि सर्वाणि प्रददति यच्छन्तीति तथा । एतादृगाहारकर्त्तारो राजसा ज्ञेया इत्यर्थः ॥ ९ ॥

**नी० टी०—कट्विति ।** अतिशब्दः सर्वत्र संबध्यते अतिकटु निंबादि । अत्यम्लातिलवणात्युष्णाः प्रसिद्धाः । अतितीक्ष्णोमरिचादि । अतिरूक्षः स्नेहशून्यः कंगुकोद्रवादिः । अतिविदाही राजिकादिः । दुःखं तात्कालिकी पीडा । शोकः पश्चाद्भावि दौर्मनस्यं । आमयो धातुवैषम्यापादनेन रोगस्तत्प्रदाः ॥ ९ ॥

**यातयामं गतरसं पूति पर्युषितं च यत् ॥**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥**

**शां० भा०—यातयाममिति । यातयामं मन्दपक्वं निर्वीर्यस्य गतरसेनोक्तत्वाद्गतरसं रसवियुक्तं पूति दुर्गन्धं पर्युषितं च पक्वं सद्रात्र्यन्तरितं च यदुच्छिष्टमपि च भुक्तशिष्टमप्यमेध्यमयज्ञार्हं भोजनमीदृशं तामसप्रियम् ॥ १० ॥**

**शां० आ०**—तामसप्रियमाहारमुदाहरति—**यातयाममिति** । ननु निर्वीर्यं यातयाममुच्यते न पुनः सामिपक्वमिति नेत्याह—**निर्वीर्यस्येति** ॥ १० ॥

**आ० भा०—॥ १० ॥**

**आ० ज०**—॥ १० ॥

**रा० भा०—यातयामं चिरकालावस्थितम् । गतरसं त्यक्तस्वाभाविकरसम् । पूति दुर्गन्धोपेतम् । पर्युषितं कालान्तरापत्त्या रसान्तरापन्नम् । उच्छिष्टं गुर्वादिभ्योऽन्येषां भुक्तशिष्टम् । अमेध्यमयज्ञार्हम् । अयज्ञाशिष्टमित्यर्थः । एवंविधं तमोमयं भोजनं तामसस्य प्रियं भवति । भुज्यत इत्याहार एव भोजनं पुनश्च तमसो वर्द्धनम् । अतो हितैषिभिः सत्ववृद्धये सात्त्विकाहारा एव सेव्याः ॥ १० ॥**

अ० टी०—अथ तामसमाह—**यातयाममिति**। यातो व्यतीतो यामः प्रहरो यस्य तादृशं पक्वान्नकृषिरादिकं शैत्यादिना भक्षणायोग्यमित्यर्थः। गतरसं शुष्कं, पूति दुर्गन्धं, पर्युषितं व्यतीतरात्रम्, उच्छिष्टम् अन्यभुक्तावशिष्टम्, अमेध्यं कलिङ्गमूलकबिम्बादिकम् एतादृशं भोजनं तामसानां प्रियम्। एतस्य फलकीर्तनं स्वरूपत एव दुष्टत्वात्। एवंभोजनप्रियो तामसो ज्ञेय इत्यर्थः। निर्गुणाहारकैर्मदुच्छिष्टभोक्तृभिः पूर्वोक्तत्रिविधमभोजनं तद्भोजिनश्च त्याज्या इत्यर्थश्चैतन्निरूपणेन ज्ञापितः॥ १०॥

नी० टी०—यातयामं प्रहरात्प्राक्कृतं शीतलतां गतमित्यर्थः। यातयामं अर्धपक्वं निर्वीर्यस्य गतरसेनैवोक्तत्वात् इति भाष्यं गतरसं रसविमुक्तं। पूति दुर्गंधि। पर्युषितं पक्वं सद्रात्र्यंतरितं। उच्छिष्टं भुक्तावशिष्टं। अमेध्यं यज्ञानर्हं। भोजनमन्नं तामसप्रियम्॥ १०॥

**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते॥**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः॥ ११॥**

**शां० भा०—अथेदानीं यज्ञस्त्रिविध उच्यते—अफलाकाङ्क्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टः शास्त्रचोदनादृष्टो यो यज्ञ इज्यते निर्वर्त्यते यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यमिति मनः समाधाय नानेन पुरुषार्थो मम कर्तव्य इत्येवं निश्चित्य स सात्त्विको यज्ञ उच्यते॥ ११॥**

शां० आ०—हानादानार्थमाहारत्रैविध्यमेवं विभज्य क्रमप्राप्तं यज्ञत्रैविध्यं कथयाति—**अथेति**। तत्र सात्त्विकं यज्ञं ज्ञापयाति—**अफलेति**। फलाभिसंधिं विना यज्ञस्वरूपमेव भाव्यमिति बुद्ध्या शास्त्रतोऽनुष्ठीयमानो यज्ञः सात्त्विक इत्यर्थः॥ ११॥

**आ० भा०—॥ ११॥**

आ० ज०—॥ ११॥

**रा० भा०—फलाकाङ्क्षारहितैः पुरुषैः विधिदृष्टः शास्त्रदृष्टः मन्त्रद्रव्यक्रियादिभिर्युक्तः। यष्टव्यमेवेति भगवदाराधनत्वेन स्वयंप्रयोजनतया यष्टव्यमिति मनः समाधाय यो यज्ञ इज्यते स सात्त्विकः॥ ११॥**

अ० टी०—आहारानन्तरं यज्ञस्य प्रतिज्ञातत्वात् त्रिविधयज्ञरूपमाह—**अफलेति**। न विद्यतेऽन्यत्फलं यस्मात्तादृशः स्वयमेव फलरूपो भगवत्प्रसादस्तदाकाङ्क्षिभिः पुरुषैः विधिना अवश्यकर्त्तव्यत्वेन दृष्टो बोधितो यो यज्ञो भगवदाज्ञप्तत्वाद्यष्टव्यमेव नतु फलानुसंधानेनेति मनः समाधाय निश्चलं कृत्वा इज्यते अनुष्ठीयते स यज्ञः सात्त्विक इत्यर्थः। एतादृग्यज्ञकर्ता सात्त्विको ज्ञेयः॥ ११॥

नी० टी—यज्ञत्रैविध्यमाह—**अफलेति**। विधिदृष्टः आवश्यकतया विहितः यष्टव्यमेव नतु यज्ञाद्दृष्टमदृष्टं वा फलं प्राप्तव्यमिति मनः समाधाय समाहितं कृत्वा यो यज्ञ इज्यते स सात्त्विकः॥ ११॥

**अभिसंधाय तु फलं दम्भार्थमपि चैव यत्॥**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्॥ १२॥**

**शां० भा०—अभिसंधायेति। अभिसंधायोद्दिश्य फलं दम्भार्थमपि चैव यदिज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्॥ १२॥**

शां० आ०—राजसं यज्ञं हानार्थं दर्शयति—**अभिसंधायेति**। स्वर्गाद्युद्दिश्य धार्मिकत्वख्यापनार्थं च यद्यजनं क्रियते तं यज्ञं रजसा निर्वृत्तं त्याज्यमवगच्छेत्यर्थः॥ १२॥

आ० भा०—॥ १२ ॥

आ० ज०—॥ १२ ॥

रा० भा०—फलाभिसंधियुक्तैर्दम्भगर्भो यशःफलश्च यो यज्ञ इज्यते तं यज्ञं राजसं विद्धि॥१२॥

अ० टी०—राजसमाह—अभिसंधायेति । तु पुनः फलं स्वर्गादिकम् अभिसंधाय उद्दिश्य दम्भार्थं लोके स्वख्यापनार्थं चाप्येव यत्तु इज्यते अनुष्ठीयते तं यज्ञं राजसं विद्धि । तत्कर्त्तारश्च राजसा ज्ञेयाः ॥१२॥

नी० टी०—राजसं यज्ञमाह—अभिसंधायेति ॥ १२ ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ॥
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

शां० भा०—विधिहीनमिति । विधिहीनं यथाचोदितविपरीतम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न दत्तमन्नं यस्मिन्यज्ञे सोऽसृष्टान्नस्तमसृष्टान्नम्, मन्त्रहीनं मन्त्रतः स्वरतो वर्णतश्च वियुक्तं मन्त्रहीनम्, अदक्षिणमुक्तदक्षिणारहितं श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १३ ॥

शां० आ०—तामसं यज्ञं हानार्थमेवोदाहरति—विधीति ॥ १३ ॥

आ० भा०—॥ १३ ॥

आ० ज०—॥ १३ ॥

रा० भा०—विधिहीनं ब्राह्मणोक्तिहीनं सदाचारयुक्तैर्विद्वद्भिर्ब्राह्मणैर्यजस्वेत्युक्तिहीनमित्यर्थः । असृष्टान्नम् अचोदितद्रव्यम् । मन्त्रहीनम् अदक्षिणं श्रद्धाविरहितं च यज्ञं तामसं परिचक्षते ॥ १३ ॥

अ० टी०—तामसमाह—विधिहीनमिति । वेदोक्तविधिरहितम्, असृष्टान्नं पात्रान्नरहितं मन्त्रैर्देवताह्वानादिरूपैर्हीनं शून्यम् अदक्षिणं वैधदक्षिणारहितं, श्रद्धया आदरेण विरहितं शून्यं यज्ञं तामसं परिचक्षते कथयन्ति महान्त इतिशेषः ॥ १३ ॥

नी० टी०—विधिहीनं शास्त्रोक्तविधिहीनं असृष्टं न दत्तमन्नं यस्मिन् तं असृष्टान्नम् ॥ १३ ॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

शां० भा०—अथेदानीं तपस्त्रिविधमुच्यते—देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञास्तेषां पूजनं देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवमृजुत्वं ब्रह्मचर्यमहिंसा च शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकरणैः कर्त्रादिभिः साध्यं शारीरं तप उच्यते । पञ्चैते तस्य हेतव इति हि वक्ष्यति ॥१४

शां० आ०—सात्त्विकादिभावं निरूपयितुं सर्वस्य तपसः स्वरूपं निरूपयति—अथेति । तत्र शारीरं तपो निर्दिशति—देवेति । देवा ब्रह्मविष्णुशिवादयः, द्विजाः पूज्यपूज्यत्वाद्द्विजोत्तमाः, गुरवः पित्रादयः, प्राज्ञाः पण्डिता विदितवेदितव्यास्तेषां पूजनं प्रणामशुश्रूषादि । शौचं मृज्जलाभ्यां शरीरशोधनम्, आर्जवमृजुत्वं विहितप्रतिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तिमत्त्वम्, ब्रह्मचर्यं मैथुनासमाचरणम्, अहिंसा प्राणिनामपीडनम् । शरीरमात्रनिर्वर्त्यत्वमस्य तपसो न संभवतीति मत्वा विशिनष्टि—शारीरेति । कथं कर्त्रादिसाध्यत्वे तपसः शारीरत्वं शारीरत्वे वा कथं कर्त्रादिसाध्यत्वमित्याशङ्क्याऽऽह—पञ्चेति ॥ १४ ॥

आ० भा०—॥ १४ ॥

आ० ज०—॥ १४ ॥

**रा० भा०**—अथ तपसो गुणतस्त्रैविध्यं वक्तुं तस्य शरीरवाङ्मनोभिर्निष्पाद्यतया तत्स्वरूपभेदं तावदाह—देवद्विजगुरुप्राज्ञानां पूजनम्। शौचं तीर्थस्नानादिकम्। आर्जवं यथा मनःशारीरवृत्तम्। ब्रह्मचर्यं योषित्सु भोग्यताबुद्धियुक्तेक्षणारहितत्वम्। अहिंसा अप्राणिपीडा एतच्छारीरं तप उच्यते॥१४

**अ० टी०**—अथ यज्ञानन्तरं तपसः प्रतिज्ञातत्वात्तपसस्त्रैविध्यं वक्तुं तस्य च शरीरवाङ्मनोभेदेन त्रिविधत्वात्तत्त्रितयनिरूपणपूर्वकं त्रैविध्यकथनार्थं शारीरादिकत्रयमाह—**देवद्विजेति त्रयेण**। देवाः ब्रह्माद्याः, द्विजाः वेदैकनिष्ठाः, गुरवः सरहस्यमन्त्रोपदेष्टारः, प्राज्ञाः पाण्डिताः शास्त्रपरिनिष्ठितबुद्धयः तेषां पूजनं यथाविधि। शौचं मृदादिना, आर्जवं ऋजुता, ब्रह्मचर्यम् इन्द्रियनिग्रहः, अहिंसा परद्रोहराहित्यं, चकारेणेर्ष्यादयः। एतत्सर्वं शारीरं शरीरसंबन्धि तप उच्यते कथ्यते इत्यर्थः॥ १४॥

**नी० टी०**—देवाः विष्ण्वाद्याः। द्विजा ब्राह्मणाः। गुरवो मातृपित्राचार्यादयः। प्राज्ञाः ब्रह्मनिष्ठाः तेषां पूजनं। आर्जवमकौटिल्यम्॥ १४॥

## अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्॥
## स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥ १५॥

**शां० भा०**—अनुद्वेगेति। अनुद्वेगकरं प्राणिनामदुःखकरं वाक्यं सत्यं प्रियहितं च यत्प्रियहिते दृष्टादृष्टार्थे। अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशेष्यते। विशेषणधर्मसमुच्चयार्थश्चशब्दः। परप्रत्यायनार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियहितानुद्वेगकरत्वानामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद्यदि न तद्वाङ्मयं तपः। तथा सत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनतायां न वाङ्मयतपस्त्वम्। तथा प्रियवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनस्य न वाङ्मयतपस्त्वम्। तथा हितवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा वियुक्तस्य न वाङ्मयतपस्त्वम्। किं पुनस्तत्तपो यत्सत्यं वाक्यमनुद्वेगकरं प्रियहितं च यत्तत्परमं तपो वाङ्मयम्। यथा शान्तो भव वत्स स्वाध्यायं योगं चानुतिष्ठ तथा ते श्रेयो भविष्यति। स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तप उच्यते॥१५॥

**शां० आ०**—संप्रति वाङ्मयं तपो व्यपदिशति—**अनुद्वेगकरमिति**। सत्यं यथादृष्टार्थवचनं, प्रियं श्रुतिसुखं हितं परिणामपथ्यम्। प्रियहितयोर्विधान्तरेण विभागमाह—**प्रियेति**। कथमत्र विशेषणविशेष्यत्वं तदाह—**अनुद्वेगेति**। विशेषणानां धर्माणामनुद्वेगकरत्वादीनां विशेष्येण वाक्येन समुदितानां परस्परमपि समुच्चयद्योती चकार इत्याह—**विशेषणेति**। किमिति वाक्यमेतैर्विशेष्यते किमिति वा तेषां मिथः समुच्चयस्तत्राऽऽह—**परेति**। यद्यपि वाक्यमात्रस्याविशेषितस्य वाङ्मयतपस्त्वानुपपत्तिस्तथाऽपि सत्यवाक्यस्य विशेषणान्तराभावेऽपि वाङ्मयतपस्त्वमित्याशङ्क्याऽऽह—**तथेति**। तथाऽपि प्रियवाक्यमात्रस्य तथात्वं स्यादित्याशङ्क्याऽऽह—**तथा प्रियेति**। तथाऽपि परिणामपथ्यं तथा भविष्यति नेत्याह—**तथा हितेति**। कीदृक्तर्हि तपो वाङ्मयमिति प्रश्नपूर्वकं विशदयति—**किं पुनरिति**। विशिष्टे वाङ्मये तपसि दृष्टान्तमाह—**यथेति**। प्राङ्मुखत्वं पवित्रपाणित्वमित्यादिविधानमनतिक्रम्य स्वाध्यायस्याऽऽवर्तनमपि वाङ्मये तपस्यन्तर्भवतीत्याह—**स्वाध्यायेति**। वाक्प्राचुर्येण प्रस्तुताऽस्मिन्निति वाङ्मयं वाक्प्रधानमित्यर्थः॥ १५॥

**आ० भा०**—॥ १५॥

**आ० ज०**—॥ १५॥

**रा० भा०**—परेषामनुद्वेगकरं सत्यं प्रियहितं च यद्वाक्यं स्वाध्यायाभ्यसनं चेत्येतद्वाङ्मयं तप उच्यते॥ १५॥

**अ० टी०**—वाचिकमाह—**अनुद्वेगेति**। उद्वेगं भयं नोत्पादयति कस्यापि तादृशं वाक्यं, सत्यं लोभादिराहित्येन यथार्थभाषणरूपं यत् प्रियं परलोकसाधकं हितं लौकिकादिसाधकं। चकारेण लौकिकस्यानावश्य-

कत्वेपि वक्तव्यता सूचिता । स्वाध्यायस्य वेदस्य अभ्यसनम् अभ्यासः । चकारेण स्मृतीनामपि । एवकारेण वेदाविरोधेन स्मृत्याद्यभ्यासः । एतत्सर्वं वाङ्मय वाचः संबन्धि तप उच्यते ॥ १९ ॥

**नी० टी०**—प्रियं च तत् हितं च प्रियहितं श्रवणकाले परिणामे च सुखदमित्यर्थः ॥ १९ ॥

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

**शां० भा०**—मन इति । मनःप्रसादो मनसः प्रशान्तिः स्वच्छतापादनं मनसः प्रसादः । सौम्यत्वं यत्सौमनस्यमाहुर्मुखादिप्रसादकार्योऽन्तःकरणस्य वृत्तिः, मौनं वाक्संयमोऽपि मनःसंयमपूर्वको भवतीति कार्येण कारणमुच्यते मनःसंयमो मौनमिति । आत्मविनिग्रहो मनोनिरोधः सर्वतः सामान्यरूप आत्मविनिग्रहो वाग्विषयस्यैव मनसः संयमो मौनमिति विशेषः । भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वं भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

**शां० आ०**—मानसं तपः संक्षिपति—**मन इति** । प्रशान्तिफलमेव व्यनक्ति—**स्वच्छतेति** । मनसः स्वाच्छ्यमनाकुलता नैश्चिन्त्यामित्यर्थः । सौमनस्यं सर्वेभ्यो हितैषित्वमहिताचिन्तनं च । तत्कथं गम्यते तत्राऽऽह—**मुखादीति** । तस्य स्वरूपमाह—**अन्तःकरणस्येति** । ननु मौनं वाङ्नियमनं वाङ्मये तपस्यन्तर्भवति तत्कथं मानसे तपसि व्यपदिश्यते तत्र वाचः संयमस्य कार्यत्वान्मनःसंयमस्य कारणत्वात्कार्येण कारणग्रहणान्मानसे तपसि मौनमुक्तमित्याह—**वागिति** । यद्वा मौनं मुनिभावो मननमात्मनो मनसो विनिग्रहो निरोधः । नन्वेवं मौनस्य मनोनिग्रहस्य च मनःसंयमत्वेनैकत्वात्पौनरुक्त्यं नेत्याह—**सर्वत इति** । भावस्य हृदयस्य संशुद्धी रागादिमलविकलतेति व्याचष्टे—**परैरिति** । मानसं मनसा प्रधानेन निर्वर्त्यमित्यर्थः ॥ १६ ॥

**आ० भा०**—सौम्यत्वमक्रौर्यम् । 'अक्रूरः सौम्य उच्यते' इत्यभिधानम् । मौनं मननशीलत्वम् । "बाल्यं च पांडित्यं च निर्विद्याथ मुनिः" इति हि श्रुतिः "एतेन हीदं सर्वं मतं यदनेन हीदं सर्वं मतं तस्मान्मुनिस्तस्मान्मुनिरित्याचक्षते" इति भाल्लवेयश्रुतिः । कथं चान्यथा मानसं तपः स्यात् ॥ १६ ॥

**आ० ज०**—नन्वंगसौष्ठवं सौम्यत्वम् । तत्कथं मानसं तप उच्यत इत्यत आह—**सौम्यत्वमिति** । मौनं वाङ्नियमनमित्यन्यथाप्रतीतिनिरासार्थमाह—**मौनमिति** । कुत एतदित्यत आह—**बाल्यमिति** । युक्तिबलोपेतत्वं बाल्यम् । आगमज्ञत्वं पांडित्यम् । अथ मुनिर्मननशीलो भवतीत्यर्थः । एतेनहीदमित्युक्तमर्थं यदनेनेति हेतुत्वेनोपादत्ते । यस्मादेवं मुनिस्तस्मात्तं मुनिरित्याचक्षते । मनज्ञान इत्यत इकारप्रत्ययः उपाधाया उकारश्च मुनेर्भावश्च मौनम् तच्च मननशीलत्वाख्यमागमार्थस्य युक्तिभिरनुसंधानम् । उक्तार्थानंगीकारे बाधकमाह—**कथमिति** । मौनमितिशेषः । वाङ्नियम एव न मौनं किंत्वत्र तत्कारणमनोनियमो लक्ष्यत इति कश्चित् तदसत् आत्मविनिग्रह इति पुनरुक्तिदोषात् । कथंचित् तत्परिहारेऽपि मुख्यार्थसंभवे लक्षणाश्रयणस्यैव दोषत्वात् ॥ १६ ॥

**रा० भा०**—मनःप्रसादः मनसः क्रोधादिरहितत्वम् । सौम्यत्वं मनसः परेषामभ्युदयप्रावण्यम् । मौनं मनसा वाक्प्रवृत्तिनियमनम् । आत्मविनिग्रहः मनोवृत्तेर्ध्येयविषयेऽवस्थापनम् । भावसंशुद्धिरात्मव्यतिरिक्तविषयचिन्तारहितत्वम् । एतन्मानसं तपः ॥ १६ ॥

**अ० टी०**— मानसमाह—मनः प्रसाद इति । मनःप्रसादः मनःस्वच्छतया सत्परिचिन्तनं, सौम्यत्वम् अक्रूरता, मौनं मननम् आत्मविनिग्रहः आत्मनो विषयेभ्य आकर्षणं, भावसंशुद्धिः स्नेहादिविषयेषु कापट्याभावः । इति अमुना प्रकारेणैतत्सर्वं मानसं मनःसंबन्धि तप उच्यते ॥ १६ ॥

नी० टी०—मनःप्रसादः रागद्वेषादिराहित्यं। सौम्यत्वं परहितैषित्वं। मौनं वाक्संयमः। आत्मविनिग्रहो मनोनिरोधः। भावशुद्धिः परैर्व्यवहारकाले मायाराहित्यं इति एवंप्रकारं अन्यद्दयादिकं एतन्मानसं तप उच्यते॥ १६॥

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः॥**
**अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते॥ १७॥**

शां० भा०—यथोक्तं कायिकं वाचिकं मानसं च तपस्तप्तं नरैः सत्त्वादिभेदेन कथं त्रिविधं भवतीत्युच्यते—श्रद्धयाऽऽस्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठितं तपस्तत्प्रकृतं त्रिविधं त्रिप्रकारमधिष्ठानं नरैरनुष्ठातृभिरफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैर्युक्तैः समाहितैर्यदीदृशं तपस्तत्सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः॥ १७॥

शां० आ०—त्रिविधस्य तपसो यथासंभवं सात्त्विकादिभावेन त्रैविध्यमाकाङ्क्षाद्वारा निक्षिपति—यथोक्तमिति। अधिष्ठानं देहवाङ्मनोनिर्वर्त्यमित्यर्थः। समाहितैः सिद्ध्यसिद्ध्योर्निर्विकारैरिति यावत्॥ १७॥

आ० भा०—॥ १७॥

आ० ज०—॥ १७॥

रा० भा०—अफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैः। युक्तैः परमपुरुषाराधनरूपमिदमिति चिन्तायुक्तैः नरैः। परया श्रद्धया यत्त्रिविधं तपः कायवाङ्मनोभिस्तप्तं तत्सात्त्विकं परिचक्षते॥ १७॥

अ० टी०—एवं शारीरादित्रैविध्यं तपस उक्त्वा सात्त्विकादिभेदत्रैविध्यमाह—श्रद्धयेति। तत्तपः त्रिविधं शारीरादिकं, परया श्रद्धया अनन्यादरेण, अफलाकाङ्क्षिभिः फलापेक्षारहितैः युक्तैः शास्त्राज्ञाकारिभिः तप्तं सात्त्विकं परिचक्षते कथयन्ति॥ १७॥

नी० टी०—त्रिविधं कायिकवाचिकमानसभेदेन युक्तैः अवहितैः॥ १७॥

**सत्कारमानपूजार्थं तपो दम्भेन चैव यत्॥**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम्॥ १८॥**

शां० भा०—सत्कारेति। सत्कारमानपूजार्थं सत्कारः साधुकारः साधुरयं तपस्वी ब्राह्मण इत्येवमर्थं मानो माननं प्रत्युत्थानाभिवादनादिस्तदर्थं पूजा पादप्रक्षालनार्चनाशयितृत्वादिस्तदर्थं च तपः सत्कारमानपूजार्थं दम्भेन चैव यत्क्रियते तपस्तदिह प्रोक्तं कथितं राजसं चलं कादाचित्कफलत्वेनाध्रुवम्॥ १८॥

शां० आ०—राजसं तपो निर्दिशति—सत्कारेति। साधुकारमेव स्फोरयति—साधुरिति। दम्भेन चैव नास्तिक्येन केवलधर्मध्वजित्वेनेत्यर्थः। तदिह प्रोक्तमस्मिन्नेव लोके फलप्रदमित्यर्थः। कादाचित्कफलवत्त्वमध्रुवमनियतमनैकान्तिकफलमिति यावत्॥ १८॥

आ० भा०—॥ १८॥

आ० ज०—॥ १८॥

रा० भा०—मनसादरः सत्कारः। वाचा प्रशंसा मानम्। शारीरो नमस्कारादिः पूजा। फलाभिसंधिपूर्वकं सत्काराद्यर्थं च दम्भेन हेतुना यत् तपः क्रियते तदिह राजसं प्रोक्तं स्वर्गादिफलसाधनत्वेनास्थिरत्वाच्चलमध्रुवं चलत्वं पातभयेन चलनहेतुत्वम्। अध्रुवत्वं क्षयिष्णुत्वम्॥ १८॥

अ० टी०—राजसमाह—सत्कारेति । तत् त्रिविधं तपः इह लोकेषु सत्कारः साधुत्वादिशब्दः, मानः उत्तमत्वेन सभादिषूच्चोपवेशनादिरूपः पूजालाभः । एतदर्थं दम्भेनैव च परप्रतारणरूपेण यत्क्रियते तु चलं पूर्वोक्ताभावे अध्रुवं परलोकादिसाधनरहितं तत्तपः राजसं प्रोक्तं शास्त्रेषु कथितमित्यर्थः ॥ १८ ॥

नी० टी०—सत्कारः लोके साधुरयमिति वाक्पूजा । मानः अभ्युत्थानाभिवादनादिकायिकी पूजा पूजालाभादि एतदर्थं दंभेन च यत्तपः क्रियते तद्राजसं चलं विनाशि अध्रुवं अनिश्चितफलम् ॥ १८ ॥

**मूढग्राहेणाऽऽत्मनो यत्पीडया क्रियते तपः ॥**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥**

**शां० भा०—मूढेति । मूढग्राहेणाविवेकनिश्चयेनाऽऽत्मनः पीडया क्रियते यत्तपः परस्योत्सादनार्थं विनाशार्थं वा तत्तामसं तप उदाहृतम् ॥ १९ ॥**

**शां० आ०**—तामसं तपः संगृह्णाति—**मूढेति** । मूढोऽत्यन्ताविवेकी तस्य ग्राहो नामाऽऽग्रहोऽभिनिवेशस्तेनेत्याह—**अविवेकेति** । आत्मनः स्वस्य देहादेरित्यर्थः ॥ १९ ॥

**आ० भा०—॥ १९ ॥**

**आ० ज०**—॥ १९ ॥

**रा० भा०—मूढाः अविवेकिनः मूढग्राहेण मूढैः कृतेनाभिनिवेशेन आत्मनः शक्त्यादिकमपरीक्ष्यात्मपीडया यत्तपः क्रियते परस्योत्सादनार्थं च यत् क्रियते तत्तामसमुदाहृतम् ॥ १९ ॥**

अ० टी०—तामसमाह—मूढेति । मूढग्राहेण मूर्खताजनितदुराग्रहेण आत्मना जीवस्य पीडया यत्तपः क्रियते, वा परस्योत्सादनार्थम् अन्यस्य विनाशार्थं तत्तामसम् उदाहृतं सम्यक् न युक्तमित्यर्थः ॥ १९ ॥

नी० टी०—मूढग्राहेण अविवेककृतेन दुराग्रहेण आत्मनः शरीरस्य उत्सादनार्थं विनाशार्थम् ॥ १९ ॥

**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ॥**
**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

**शां० भा०—इदानीं दानभेद उच्यते—दातव्यमित्येवं मनः कृत्वा यद्दानं दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय समर्थायापि निरपेक्षं दीयते देशे पुण्ये कुरुक्षेत्रादौ काले संक्रान्त्यादौ पात्रे च षडङ्गविद्वेदपारग इत्यादौ तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

**शां० आ०**—क्रमप्राप्तं दानस्य गुणानिमित्तं भेदमाह—**इदानीमिति** । दातव्यमित्येवं मनः कृत्वा दानमेव मया भाव्यं न फलमित्यभिसंधायेत्यर्थः ॥ २० ॥

**आ० भा०—॥ २० ॥**

**आ० ज०**—॥ २० ॥

**रा० भा०—फलाभिसंधिरहितं दातव्यमिति देशे काले पात्रे चानुपकारिणे यद्दानं दीयते तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

अ० टी०—अथ पूर्वप्रतिज्ञातदानत्रैविध्यमाह—दातव्यमिति । धनं मूलमनर्थानामित्यादिवाक्यैः, संचिताऽनर्थकारित्वज्ञानपूर्वकदत्तेष्टभक्त्यादिसाधकत्वज्ञानेन दातव्यमिति ज्ञात्वा अनुपकारिणे प्रत्युपकारासमर्थाय दीनाय 'सीदत्कुटुंबेभ्यः' इत्याद्युक्तधर्मविशिष्टाय यद्दानं दीयते, देशे कुरुक्षेत्रादौ ग्रहणादौ चकारेण अकाले विवाहाद्युपस्थितौ याचमानाय पात्रे वेदविशारदाय चकारेण अपात्रे बुभुक्षिताय यत्तद्दानं सात्त्विकं स्मृतं प्रसिद्धमित्यर्थः ॥ २० ॥

नी० टी०—दातव्यमेवेति बुद्ध्या यद्दानं प्रदेयद्रव्यं दीयते नतु फलमुद्दिश्य दीयते कस्मै अनुपकारिणे प्रत्युपकारासमर्थाय देशे कुरुक्षेत्रादौ । काले संक्रांत्यादौ यद्दीयते तत्सात्विकमिति संबंधः यच्च पात्रे दानं समर्पणं तदपि सात्विकमिति योजना । अत्र आद्यो दानशब्दः कर्मणि व्युत्पन्नः प्रदेयद्रव्यवाची कर्मभूतः तत्संयोगात्संप्रदाने चतुर्थ्यपेक्षा । द्वितीयस्तु भावव्युत्पन्नस्त्यागमात्रवाची तेन तत्र पात्रभूते पुंसि न चतुर्थ्यपेक्षा। "कर्मणाऽयमभिप्रैति ससंप्रदानम्" इति हि पारिभाषिक्याः संप्रदानसंज्ञाया अत्र कर्मविभक्त्यभावेनाप्रवृत्तेः तेन पात्रे इति चतुर्थ्यर्थे सप्तमीति वा पात्तृशब्दस्य चतुर्थीयमिति वा कल्पनं व्यर्थमेव दानशब्दस्यावृत्त्याच देशकालानुपकारित्वविशिष्टे दानमित्येका कोटिः । पात्रेदानमित्यपरा । उभयसमुच्चये तु महान्गुण इति भावः ॥ २० ॥

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ॥**
**दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥**

**शां० भा०—यत्त्विति । यत्तु दानं प्रत्युपकारार्थं काले त्वयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वाऽस्य दानस्य मे भविष्यत्यदृष्टमिति तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं तद्राजसं स्मृतम् ॥ २१ ॥**

शां० आ०—राजसदानविभजनं स्पष्टार्थम् ॥ २१ ॥

**आ० भा०—॥ २१ ॥**

आ० ज०—॥ २१ ॥

**रा० भा०—प्रत्युपकारकटाक्षगर्भं फलमुद्दिश्य च परिक्लिष्टम् अकल्याणद्रव्यकं यद्दानं दीयते तद्राजसमुदाहृतम् ॥ २१ ॥**

अ० टी०—यत्त्विति । तुशब्देन तादृग्दानस्यानुचितत्वं ज्ञाप्यते । यत्तु प्रत्युपकारार्थं महाराजकृपापात्रब्राह्मणाय अग्रे स्वोपकारकादित्वोद्देशेन दानं, वा पुनः फलधर्मादिचतुष्टयमुद्दिश्य परिक्लिष्टं चित्तक्लेशयुक्तं फलोपकारासंदेहेन दीयते तत् दानं राजसम् उदाहृतं कथितमित्यर्थः ॥ २१ ॥

नी० टी०—परिक्लिष्टं कथमेतावद्द्रव्यव्ययः कर्तव्य इत्याकुलतायुक्तं यथा स्यात्तथा दीयते इति क्रियाविशेषणम् ॥ २१ ॥

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ॥**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥**

**शां० भा०—अदेशेति । अदेशकालेऽपुण्ये देशे म्लेच्छाशुच्यादिसंकीर्णेऽकाले पुण्यहेतुत्वेनाप्रख्याते संक्रान्त्यादिविशेषरहितेऽपात्रेभ्यश्च मूर्खतस्कारादिभ्यो देशादिसंपत्तौ चासत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तं यद्दानं तत्तामसमुदाहृतम् ॥ २२ ॥**

शां० आ०—तामसदानविभजनं स्पष्टार्थम् ॥ २२ ॥

**आ० भा०—॥ २२ ॥**

आ० ज०—॥ २२ ॥

**रा० भा०—अदेशकाले अपात्रेभ्यश्च यद्दानं दीयते । असत्कृतं पादप्रक्षालनादिगौरवरहितम् । अवज्ञातं सावज्ञम् । अनुपचारयुक्तं यद्दीयते तत्तामसमुदाहृतम् ॥ २२ ॥**

अ० टी०—तामसमाह—अदेश इति । अदेशे कीकटादौ म्लेच्छादिसन्निधाने वा, अकाले अश्रद्धावस्थायामाशौचादौ अपात्रेभ्यः गणिकाचारणबन्दिभ्यो यद्दानं दीयते तत्तामसं फलादिरहितम् उदाहृतं ।

च पुनः देशादिसंपत्तौ पात्रेभ्योऽपि यत् असत्कृतं सत्कारपूजादिरहितम् अवज्ञातं स्वरूपज्ञानपूर्वकतिरस्कारं यद्दीयते तदपि तथेत्यर्थः । एवं यज्ञादीनां त्रैविध्यनिरूपणेनैतत्त्रैविध्यरहितं निर्गुणमेव तत्सर्वं यज्ञादिकं कर्तव्यमितिज्ञापितम् । तथाहि भगवदिच्छायां सत्यां तज्ज्ञानपूर्वकं भगवद्विभूतियागो भक्त्यङ्गत्वेन कार्यो युधिष्ठिरवत् ' यक्ष्ये विभूतीर्भवत ' इत्यादिविज्ञापनपूर्वकम् । तपोऽपि भगवदर्थकसर्वसुखपरित्यागपूर्वकक्लेशादिसहनरूपं ज्ञानरूपं वा कार्यम् । दानं च भक्तिसिद्ध्यर्थं भगवद्भक्ताय वेदविदे ब्राह्मणाय दातव्यम् ॥ २२ ॥

नी० टी०—असत्कृतं प्रियभाषणपादप्रक्षालनादिपूजासत्कारस्तद्रहितं । अवज्ञातं पात्रपरिभवयुक्तं दानं प्रदेयं हिरण्यादि ॥ २२ ॥

**ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥**

**शां० भा०—यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते—ओं तत्सदित्येष निर्देशो निर्दिश्यतेऽनेनेति निर्देशस्त्रिविधो नामनिर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्मिताः पुरा पूर्वमिति निर्देशस्तुत्यर्थमुच्यते ॥ २३ ॥**

**शां० आ०**—विहितानां कर्मणां प्रमादयुक्ते वैगुण्ये कथं परिहारः स्यादित्याशङ्क्याऽऽह—**यज्ञेति** । " ओमिति ब्रह्म " इत्यादिश्रुतेरोमिति तावद्ब्रह्मणो नामनिर्देशः, " तत्त्वमसि " इति श्रुतेस्तदित्यपि ब्रह्मणो नामनिर्देशः, " सदेव सोम्येदम् " इति श्रुतेः सदित्यपि तस्य नामेति मत्वाऽऽह—**ओमिति** । कथं निर्देशेन तेषां विधानमित्याशङ्क्याऽऽह—**निर्दिश्यत इति** । यज्ञादीनां वैगुण्यप्रतीतिकाले यथोक्तनाम्नामन्यतमोच्चारणादवैगुण्यं सिध्यतीति भावः । कर्मसाद्गुण्यकारणं त्रिविधं नाम स्तौति—**ब्राह्मणा इति** । पूर्वं सर्गादौ निर्माणं च प्रजापतिकर्तृकम् ॥ २३ ॥

**आ० भा०—पुनश्च कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह—ॐतत्सदित्यादिना । "परस्य ब्रह्मणो ह्येतानि नामानि । ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च । सर्वैः शुभैश्चाभियुतो न चान्यैः ॐतत्सदित्येतमतो वदंति" इति हि ऋग्वेदखिलेषु । द्वितीयपादस्तच्छब्दार्थः । सदेव सौम्येदमग्र आसीदिति च । ॐमिति ब्रह्मेति च । तेन ब्रह्मणा आत्मपूजार्थं वेदविधिर्व्यंजनम् । मा तूक्ता पुरस्तात् ॥ २३ ॥**

**आ० ज०**—ओमित्यादिकं तु प्रकृतासंगतं कथमुच्यत इत्यत आह—**पुनश्चेति** । कर्मेति यज्ञ उच्यते आदिपदेन तपोदाने । इतिकर्तव्यतेत्यर्थभावः । विधानार्थं प्रतिपादनार्थम् । अफलाकांक्षिभिरित्यादिनोक्तत्वात्पुनश्चेत्युक्तम् । यज्ञतपोदानानां सात्विकत्वादिहेतवोऽसाधारणा धर्माः प्रागुक्ताः साधारणांस्तु वक्तुं पुराकल्पादिरूपमर्थवादमाहेत्यर्थः । ब्रह्मशब्दस्य हिरण्यगर्भार्थतां निर्देशशब्दस्य च भावार्थतां वारयितुं व्याख्याति—**परस्येति** । निर्दिश्यतेऽनेनेति निर्देशोनाम कुत एतदित्यतो हीत्युक्तम् । भावार्थत्वे ओम् तत्सदित्येतैः सामानाधिकरण्यानुपपत्तेर्नामार्थत्वमेवांगीकार्यम् । ओमादिकं च परब्रह्मनामत्वेन प्रसिद्धमित्यर्थः । तामेव प्रसिद्धिं दर्शयति—**ओतमिति** । ओतं प्रविष्टम् । आश्रितं यत्र परमेश्वरे यः स्वयं च जगत्योतः प्रविष्टः पूर्णः अनुपचारतो मुख्यया वृत्त्या अत्रौतं जगद्यत्रेत्यादिना ओंशब्दस्य निमित्तद्वयेन भगवति वृत्तिर्दर्शिता । अवतेष्टिलोपश्चेति वचनात् । सर्वैरित्यनेन सच्छब्दस्य । साधुभावे चेति वक्ष्यमाणत्वात् । तच्छब्दस्यतु न केनापि । अत ओं तत्सदित्येतमित्ययुक्तमित्यत आह—**द्वितीयेति** । वेदोक्तेति द्वितीयपादस्तच्छब्दार्थव्याख्यानपरः । तदिति हि नित्यपरोक्षत्वमुच्यते । न चेश्वरस्वरूपमनुमातुं शक्यम् अतो वेदैकवेद्यत्वात्तदित्युच्यतइति भावः । सदोंशब्दयोः परब्रह्मनामत्वे श्रुत्यंतरं चाह—**सदेवेति** । तेनेति निर्देशपरामर्शइति कश्चित् । तदसदिति भावेनाह—**तेनेति** । कुत एतन्निर्देशस्य ब्राह्मणादिविधानायोगात् । निर्देशस्तुत्यर्थमिदमुच्यत इति चेत् न भूतोक्तिसंभवेन तदयोगात् । ब्रह्मणोऽपि ब्राह्मणादिविधानानुपपत्तिः । प्रयोजनाभावादित्यतआह—**आत्मेति** । आत्मपूजया

प्राणिनां सुखार्थं ब्राह्मणादयो विहिता इति संबंधः। ब्राह्मणादिवद्वेदानामपि विधानं निर्माणमेवेति प्रतीतिनिरासार्थमाह—**वेदेति** । व्यंजनमेव विधानं न निर्माणमित्यर्थः । सकृच्छ्रुतस्य विहितशब्दस्य द्विधाऽर्थकल्पनं कुत इति चेत् । वेदापौरुषेयत्वस्य प्रमितत्वात् । किं तत्प्रमाणमित्यत आह—**मा त्विति** । परमेश्वरस्य वेदव्यंजनं नाध्यापकवत् । किं तु स्वातंत्र्यमप्यस्तीति ज्ञापयितुं विधिग्रहणं कृतम् । वेदोहि विध्यात्माऽस्ति विधिः प्रेरणं नियोग इति चार्थांतरम् । न च नियोक्तारमंतरेण नियोगः संभवति । न च शब्दादीनां नियोक्तृत्वं संभवति । लोकविरोधात् । न चोच्चारक एव नियोक्ता मामुपासीतेत्यादावव्यवस्थापातात् । तस्मात्स्वतंत्रेण वक्त्रा भाव्यम् । न चैवं पौरुषेयत्वापत्तिः । अनादिसिद्धेनैव शब्दार्थसंबंधेन तस्य नियोक्तृत्वाभ्युपगमादिति ॥ २३ ॥

**रा० भा०**—एवं वैदिकानां यज्ञतपोदानानां सत्त्वादिगुणभेदेन भेद उक्तः । इदानीं तस्यैव वैदिकस्य यागादेः प्रणवसंयोगेन तत्सच्छब्दव्यपदेश्यतया च लक्षणमुच्यते—ॐ तत्सादिति त्रिविधोऽयं निर्देशः शब्दः ब्रह्मणः स्मृतः ब्रह्मणोन्वयी भवति ब्रह्म च वेदः वेदशब्देन वैदिकं कर्मोच्यते । वैदिकं यज्ञादिकम् । यज्ञादिकं कर्म ॐतत्सदिति शब्दान्वितं भवति । ओमितिशब्दस्यान्वयो वैदिककर्माङ्गत्वेन प्रयोगादौ प्रयुज्यमानतया तत्सदिति शब्दयोरन्वयः पूज्यत्वाय वाचकतया तेन त्रिविधेन शब्देनान्विता ब्राह्मणा वेदान्वयिनस्त्रैवर्णिकाः वेदाश्च यज्ञाश्च पुरा विहिताः पुरा मयैव निर्मिता इत्यर्थः॥२३॥

**अ० टी०**—ननु देशकालाद्यभावकृतानां यज्ञानां यदि तामसत्वं तदा निर्गुणेष्वपि समः समाधिरित्याशङ्क्य तेषां देशकालादिसंपत्त्यभावेऽपि तत्संपत्तिर्भवतीत्याशयेनाह—**ओंतत्सदिति** । ओंतत्सदित्येवरूपो ब्रह्मणः पुरुषोत्तमस्य त्रिविधो निर्देशो नामव्यपदेशः स्मृतो भक्तैः तत्र ओमित्येकाक्षरं ब्रह्मेत्यादिभिरोमिति ब्रह्मणः संज्ञा नामेति । यतो वाचो निवर्तन्ते आनन्दमात्रमिति यदित्यारभ्य ततो न ज्ञायते तु तदित्यन्तादिवाक्येभ्यस्तदित्यपि ब्रह्मण एव नाम । मूलसत्तावाचकत्वेन सच्छब्दोऽपि ब्रह्मवाचक एव । एतत्त्रिविधमपि ब्रह्मणो नाम । स्वरूपज्ञानपूर्वकं सर्वत्र यज्ञादिक्रियासु आदौ विनियुक्तं सर्वदेशादिसंपत्तिसाधकमितिज्ञापनाय पूर्वसिद्धं तथात्वमाह—**ब्राह्मणा इति** । येन त्रिविधनिर्देशेन ब्राह्मणा ब्रह्मज्ञा ब्रह्मप्रापका वा वेदाः ब्रह्मस्वरूपास्तज्ज्ञा वा चकारेण सशब्दार्थाः । यज्ञाः यजनात्मकाः, चकारेण साधिदैवाः । पुरा सृष्ट्यादौ विहिता विधात्रा निर्मिताः, अतः पूर्वमेतदुदाहरणात्सर्वं संपद्यत इतिभावः । अथवा तेन ब्रह्मणोऽयं त्रिविधो निर्देशस्तेन ब्रह्मणा पूर्वमेते निर्मिताः स्वार्थं, ततस्तत्स्वरूपं ज्ञानपूर्वकनामत्रयोदाहरणसंसूचनात्मकेन निर्गुणानां सर्वं संपत्स्यत इतिभावः ॥ २३ ॥

**नी० टी०**—अदृष्टार्थानां यज्ञदानतपःप्रभृतीनां वैकल्यशंकायां साद्गुण्यसिद्ध्यर्थं प्रायश्चित्तमुपदिश्यते—**ओंतत्सदिति** । ओमिति तदिति सदिति च त्रिविधस्त्रिप्रकारोऽयं ब्रह्मणो निर्देशो नाम्नां पाठः । यथा सहस्रनाम्न पाठे सहस्रं नामानि एवमस्मिन्नपि नामपाठे त्रीण्येव नामानीत्यर्थः । "ओमिति ब्रह्मेति" तैत्तिरीयके । "तदिति वा एतस्य महतो भूतस्य नाम भवति" इत्यैतरेयके । "सदेव सोम्येदमग्र आसीद्" इति छांदोग्ये च एतेषां शब्दानां ब्रह्मनामत्वप्रसिद्धेः । तेन नामत्रयेण ब्राह्मणादयो विहिताः पुरा सर्गादौ ब्राह्मणाः एतन्नामत्रयोच्चारणसामर्थ्येनैव विधात्रा विप्रादयो विहिताः प्रकाशिता इत्यर्थः ॥ २३ ॥

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ॥**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥**

**शां० भा०**—तस्मादोमित्युदाहृत्योच्चार्य यज्ञदानतपःक्रिया यज्ञादिस्वरूपाः क्रियाः प्रवर्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम् ॥ २४ ॥

**शां० आ०**—यस्माद्ब्राह्मणादीनां कारणं यस्माच्च ब्रह्मणो निर्देशस्तस्मादित्युपसंहरति—**तस्मादिति** । ब्रह्मवादिनामित्यत्र ब्रह्म वेदः ॥ २४ ॥

**आ० भा०**—॥ २४ ॥

**आ० ज०**—॥ २४ ॥

**रा० भा०**—त्रयाणाम् ॐतत्सदितिशब्दानामन्वयप्रकारो वर्ण्यते । प्रथमम् ॐमितिशब्दस्यान्वयप्रकारमाह—तस्माद्ब्रह्मवादिनां वेदवादिनां त्रैवर्णिकानां यज्ञदानतपःक्रियाः विधानोक्ताः वेदविधानोक्ताः आदावोमित्युदाहृत्य सततं सर्वदा प्रवर्तन्ते । वेदाश्चोमित्युदाहृत्यारभ्यन्ते । एवं वेदानां वैदिकाना च यज्ञादीनां कर्मणामोमिति शब्दान्वयो वर्णितः । ओमितिशब्दान्वितवेदधारणात्तदन्वितयज्ञादिकर्मकरणाच्च ब्राह्मणशब्दनिर्दिष्टाना त्रैवर्णिकानामप्योमिति शब्दान्वयो वर्णितः ॥ २४ ॥

**अ० टी०**—यत एतदुदाहरणेन सर्वं संपद्यते तत्तस्मात् त्रिगुणानां भक्तानां मुमुक्षुणां च लौकिके सतां चैतन्नामत्रितयं साधकमित्याह—**तस्मादिति** । तस्मात्कारणाद्ब्रह्मवादिनां भगवद्भक्तानां यज्ञदानतपःक्रियाः भगवदर्थिकाःओमित्युदाहृत्य ताः सततं निरन्तरं विधानोक्ताः भगवत्प्रीत्यर्थं प्रवर्त्तन्ते प्रकर्षेण वर्त्तन्ते भवन्तीत्यर्थः॥२४॥

**नी० टी०**—यस्मादेतन्नामत्रयपूर्वकं एतेषां विधानं सर्गादौ दृष्टं तस्मात्त्रिष्वेतेषु नामसु ओमित्येकमेव नाम उदाहृत्य ब्रह्मबादिनां वैदिकानां विधानोक्ताः वेदोक्ताः यज्ञादयः क्रियाः सततं प्रवर्तंते तथा श्रुतिः । "ओमिति ब्रह्मा प्रसौति । ओमिति शस्त्राणि शंसंति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति।ओमिति सामानि गायंति"इति यज्ञं सर्वेषामृत्विजां क्रिया ओंकारपूर्विकाइत्येतद्दर्शयति ॥ २४ ॥

**तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ॥**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥**

**शां० भा०**—तदिति । तदित्यनभिसंधाय तदिति ब्रह्माभिधानमुच्चार्यानभिसंधाय च कर्मणः फलं यज्ञतपःक्रिया यज्ञक्रियाश्च तपःक्रियाश्च यज्ञतपःक्रिया दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकाङ्क्षिभिर्मोक्षार्थिभिर्मुमुक्षुभिः ॥ २५ ॥

**शां० आ०**—ओंशब्दस्य विनियोगमुक्त्वा तच्छब्दस्य विनियोगमाह-**तदित्यादिना** ॥ २५ ॥

**आ० भा०**—तत्फलं मे स्यादित्यनभिसंधाय ॥ २५ ॥

**आ० ज०**—तदित्यनभिसंधायेति वाक्यं ब्रह्मणीव यज्ञादावपि तच्छब्दस्य प्रवृत्तिं प्रतिपादयतीति ज्ञापयितुं योजयति—**तदिति** । वेदोक्तं स्वर्गादिकम् ॥ २५ ॥

**रा० भा०**—अथैतेषां तदितिशब्दान्वयप्रकारमाह—फलमनभिसंधाय वेदाध्ययनयज्ञतपोधानक्रियामोक्षकाङ्क्षिभिः त्रैवर्णिकैः याः क्रियन्ते ताः ब्रह्मप्राप्त्युपायतया ब्रह्मवाचिना तदितिशब्देन निर्देश्याः । 'स वः कः किं यत्तत्पदमनुत्तमम्' इति । तच्छब्दो हि ब्रह्मवाची प्रसिद्धः एवं वेदाध्ययनयज्ञादीनां मोक्षसाधनभूतानां तच्छब्दनिर्देश्यतया तदितिशब्दान्वय उक्तः । त्रैवर्णिकानामपि तथाविधवेदाध्ययनाद्यनुष्ठानादेव तच्छब्दान्वय उपपन्नः ॥ २५ ॥

**अ० टी०**—भक्तानामुक्त्वा ज्ञानिनां द्वितीयनामसंबन्धिफलमाह—**तदिति** । तत् इति उदाहृत्य तद्ब्रह्मस्वाज्ञापरिपालनेन प्रीयादित्युदाहृत्य फलं स्वर्गादिसुखरूपम् अनभिसंधाय फलाभिलाषं मनस्यऽकृत्वा मोक्षकाङ्क्षिभि-

निर्दोषैर्यज्ञतपःक्रियाः यज्ञः अग्निहोत्रादिः, तपः कृच्छ्रादि, तदादयः क्रियाः क्रियन्ते । तच्छब्दोदाहरणात्ताश्च संपन्ना भूत्वा मोक्षसंपादिका भवन्तीत्यर्थः ॥ २५ ॥

**नी० टी०**—ओमितिनाम्नः काम्याकाम्यकर्मसाधारण्येन यज्ञादौ विनियोगमुक्त्वा तदिति नाम्नो निष्कामेषु मुमुक्षुकर्मसु विनियोगं दर्शयति—**तदिति** । मोक्षकांक्षिभिः फलं अनभिसंधाय विविधाः यज्ञतपःक्रियाः दानक्रियाश्च क्रियंते इति योजना । ननु फलं चेन्नाभिसंधीयते तर्हि किमभिसंधाय क्रियंते इत्याकांक्षायामाह—**तदिति । क्रियन्ते इति** । सर्वाः क्रियास्तदिति ब्रह्मेति क्रियंते । यथा ब्रह्मवादिभिः 'ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतं॥ ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना'इत्युक्तदिशा सर्वाः ससाधनफलाः क्रियाः ब्रह्मैवेदं सर्वमिति बुद्ध्या क्रियंते तथा मुमुक्षुभिरपीत्यर्थः । यदेव हि मुक्तानां स्वाभाविकं शीलं तदेव मुमुक्षूणां शास्त्रेण विधीयत इति प्रसिद्धेः । फलमनभिसंधायेति सान्निध्यात्तदितीत्यत्रापि सामर्थ्यादभिसंधायेति लभ्यते तेन फलमनभिसंधाय तदित्यभिसंधाय क्रियाः प्रवर्तंत इत्यन्वयोऽपि सुलभ एव । तदिति ब्रह्माभिधानमुच्चार्येति भाष्येऽपि उदाहृत्येति पूर्वश्लोकोक्तक्रियानुवृत्त्या योजनमस्मदुक्ताभिप्रायेणैव व्याख्येयं उच्चारणस्यापि ब्रह्मानुसंधानार्थत्वादिति दिक् ॥ २५ ॥

**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ॥**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥**

**शां० भा०—ओंतच्छब्दयोर्विनियोग उक्तोऽथेदानीं सच्छब्दस्य विनियोगः कथ्यते—सद्भावेऽसतः सद्भावे तथाऽविद्यमानस्य पुत्रस्य जन्मनि तथा साधुभावेऽसद्वृत्तस्यासाधोः सद्वृत्तता साधुभावस्तस्मिन्साधुभावे च सदित्येतदभिधानं ब्रह्मणः प्रयुज्यते तत्रोच्यतेऽभिधीयते प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यत इत्येतत् ॥ २६ ॥**

**शां० आ०**—वृत्तमनूद्यानन्तरश्लोकतात्पर्यमाह—**ओंतच्छब्दयोरिति** ॥ २६ ॥

**भा० भा०—सद्भावशब्देन प्रजननं सूचितम् । ॐमित्युक्त्वाऽनभिसंधाय फलं यज्ञदानतपआदिकृतामतिप्रीतेर्नामसाम्याद्ब्रह्मैव निष्पादितं भवतीत्याशयः ॥ २६ ॥**

प्रजननं प्रागसतः सत्तापादनम् । यद्यपि सद्भाव-
**आ० ज०**—सद्भावे सत्तायामिति प्रतीतिनिरासार्थमाह—**सद्भावेति** । शब्दः सत्तामात्रवाची तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात्सत्ताविशेषप्रजननपर इति ज्ञायत इति प्रतिपादयितुं सूचितमित्युक्तम् । नन्वनेन यज्ञादीनां केतिकर्तव्यता प्रतिपादिता भवतीत्यत आह—**ओमिति** । उक्तोंकारार्थज्ञानपूर्वकं अनभिसंधाय फलं ब्रह्माभिसंधाय च ब्रह्मज्ञानभक्तिपूर्वकं तद्विषयत्वेन निष्ठया वेदोक्तप्रकारेण ब्राह्मणैः सहेत्यपि ग्राह्यम् । आदिपदेन जपादिग्रहणम् । षष्ठी तृतीयार्थे । नामसाम्यात् । नामसाम्येनावगतात्तत्प्रतिमात्वात् । घटादीनामपि ब्रह्मप्रतिमात्वसाम्यात्को विशेषोयज्ञादेरित्यत उक्तमतिप्रीतेरिति । ब्रह्मणः यज्ञादिषु निष्पादितं प्रतिष्ठापितम् । अतएवं क्रियमाणे यज्ञादिकं सात्विकमन्यद्राजसं तामसं वेत्येवमितिकर्तव्यता प्रतिपादितेतिवाक्यशेषः । अत्र हि ओं तत्सदित्यनेन ब्रह्मणो यन्नामत्रयं तद्यज्ञादेरपि वाचकमिति प्रतिपादितम् । तेन यज्ञादेर्ब्रह्मप्रतिमात्वं सूचितम् । ब्राह्मणा इत्यादिनोंकारं ब्रह्मणि यज्ञादौ च व्युत्पाद्य तदुच्चारणाचारउक्तः । तेनार्थस्मरणपूर्वकमोंकारमुच्चार्य वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञादिकं कार्यमिति सूचितम् । तदित्यनेन तच्छब्दो यज्ञादौ ब्रह्मणि च व्युत्पादितः । तेन फलमनभिसंधाय ब्रह्माभिसंधाय चेति लब्धम् । सद्भाव इत्यनेन सच्छब्दो ब्रह्मणि व्याख्यातः । तेन ब्रह्मज्ञानपूर्वकमितिलभ्यते ॥ २६ ॥

**रा० भा०—अथैषां सच्छब्दान्वयप्रकारं वक्तुं लोके सच्छब्दस्य व्युत्पत्तिप्रकारमाह—सद्भावे विद्यमानतायां साधुभावे कल्याणभावे च सर्ववस्तुषु सदित्येतत्पदं प्रयुज्यते लोकवेदयोः । तथा येन केनचित् पुरुषेणानुष्ठिते लौकिके प्रशस्ते कल्याणे कर्मणि सत्कर्मेदमिति सच्छब्दो युज्यते प्रयुज्यत इत्यर्थः॥२६**

**अ० टी०**—लौकिकसत्सु सदितिनाम तत्संपादकं भवतीत्याह—**सद्भाव इति** । सद्भावे आस्तिक्यभावे साधुभावे उत्तमत्वभावे च सदित्येतन्नाम प्रयुज्यते तथा प्रशस्ते कर्मणि भगवदर्थके कर्मणि हे पार्थ! सदितिशब्दः युज्यते युक्तो भवतीतिभावः ॥ २६ ॥

**नी० टी०**—ओंतच्छब्दयोर्विनियोगमुक्त्वा सच्छब्दस्य विनियोगमाह द्वाभ्यां—**सद्भावे इति**।सद्भावे अस्तित्वे साधुभावे समीचीनत्वे सच्छब्दः सदिदं कर्मेति प्रशस्ते कर्माणि सत्सत्त्वं वेदोक्तत्वादस्त्येवेति सच्छब्दः प्रयुज्यते आस्तिकैः ॥ २६ ॥

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ॥**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥**

**शां० भा०—यज्ञे यज्ञकर्मणि या स्थितिस्तपसि च या स्थितिर्दाने च या स्थितिः सा च सदित्युच्यते विद्वद्भिः, कर्म चैव तदर्थीयमथ वा यस्याभिधानत्रयं प्रकृतं तदर्थीयं यज्ञदानतपोर्थीयमीश्वरार्थीयमित्येतत् । सदित्येवाभिधीयते । तदेतद्यज्ञतपआदिकर्मासात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति ॥ २७ ॥**

**शां० आ०**—प्रकारान्तरेण सच्छब्दस्य विनियोगमाह—**यज्ञ इति** । नामत्रयोच्चारणेन साद्गुण्यं सिध्यतीति प्रकरणार्थमुपसंहरति—**तदेतदिति** ॥ २७ ॥

**आ० भा०—॥ २७ ॥**

**आ० ज०**—यज्ञे तपसि कर्म चैवेत्यनेन यज्ञादिषु सच्छब्दो व्याख्यातः । तेन ब्रह्मविषयत्वेन निष्ठया चेति लब्धम् ॥ २७ ॥

**रा० भा०—अतो वैदिकानां त्रैवर्णिकानां यज्ञे तपसि दाने च स्थितिः कल्याणतया सदित्युच्यते । कर्म च तदर्थीयं त्रैवर्णिकार्थीयं यज्ञदानादिकं सदित्येवाभिधीयते । तस्माद्वेदा वैदिकानि कर्माणि ब्राह्मणशब्दनिर्दिष्टास्त्रैवर्णिकाश्च ओंतत्सदितिशब्दान्वयरूपलक्षणेन अवेदेभ्यश्चावैदिकेभ्यश्च व्यावृत्ता वेदितव्याः ॥ २७ ॥**

**अ० टी०**—अथ भगवत्परत्वं सर्वत्रैव सच्छब्दे एवोच्यते इत्याह—**यज्ञे तपसीति** । यज्ञे अग्निहोत्रादौ, तपसि कृच्छ्रादौ, दाने तुलापुरुषादौ या स्थितिः भगवदेकनिष्ठतया करणं तद्रूपा च सा सदिति उच्यते । च पुनः। तदर्थीयमेव कर्म यस्यैतन्नामत्रयं तस्य भगवत एव अर्थीयं सेवादिसामग्रीसंपादनरूपं सदित्येव अभिधीयते॥२७॥

**नी० टी०**—किंच यज्ञादौ स्थितिर्निष्ठा सदिति समीचीनेति उच्यते तदर्थः सच्छब्दार्थो ब्रह्म तदर्थीयं तदर्थं कृतं तदर्थीयं परमेश्वरप्राप्त्यर्थं कृतं कर्म सदित्येव समीचीनमित्येवाभिधीयते लोके । तदेवं असात्विकं विगुणं वा यज्ञादिकं श्रद्धापूर्वकं ब्रह्मणोभिधानत्रयोच्चारणेन सात्विकं सद्गुणं च संपादितं भवति ॥ २७ ॥

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

**शां० भा०**—तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात्तस्मात्—अश्रद्धया हुतं हवनं कृतं दत्तं च ब्राह्मणेभ्योऽश्रद्धया, तपस्तप्तमनुष्ठितमश्रद्धया, तथाऽश्रद्धयैव कृतं यत्स्तुतिनमस्कारादि तत्सर्वमसदित्युच्यते मत्प्राप्तिसाधनमार्गबाह्यत्वात्पार्थ। न च तद्बह्वायासमपि प्रेत्य फलाय नो अपीहार्थं साधुभिर्निन्दितत्वादिति ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

**शां० आ०**—अश्रद्धान्वितस्यापि कर्मणो नामत्रयोच्चारणादवैगुण्ये श्रद्धाप्राधान्यं न स्यादित्याशङ्क्याऽऽह—**तत्र चेति**। सप्तमीभ्यां प्रकृतं यज्ञादि गृह्यते। सर्वं यज्ञादि सगुणमिति शेषः। तस्यासत्त्वं साधयति—**मत्प्राप्तीति**। ऐहिकमामुष्मिकं वा फलमश्रद्धितेनापि कर्मणा संपत्स्यते कुतोऽस्यासत्त्वमित्याशङ्क्याऽऽह—**न चेति**। तस्योभयविधफलाहेतुत्वे हेतुमाह—**साधुभिरिति**। निन्दति हि साधवः श्रद्धारहितं कर्मातो नैतदुभयफलौपयिकमित्यर्थः। तदनेन शास्त्रानभिज्ञानामपि श्रद्धावतां श्रद्धया सात्त्विकत्वादित्रैविध्यभाजां राजसतामसाहारादित्यागेन सात्विकाहारादिसेवया सत्त्वैकशरणानां प्राप्तमपि यज्ञादिवैगुण्यं ब्रह्मनामनिर्देशेन परिहरतां परिशुद्धबुद्धीनां श्रवणादिसामग्रीसंजाततत्त्वसाक्षात्कारवतां मोक्षोपपत्तिरिति स्थितम् ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्याने सप्तदशोऽध्यायः ॥ १७ ॥

**आ० भा०**—तथा च ऋग्वेदखिलेषु। "ॐयज्ञाद्या निष्फलं कर्म तत्स्यात्सद्वै तदर्थं कर्मेति वदंति देवाः॥ तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेस्तद्रूपत्वाज्जनितं ब्रह्म तस्य"इति ॥ २८ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

**आ० ज०**—अश्रद्धयेत्यनेन ब्रह्मभक्तिरपीति अत्र श्रुतिसंमतिमाह—**तथा चेति**। ओं यज्ञाद्याः वेदाद्योतत्वात्। निष्फलं फलोद्देशरहितत्वात्तदर्थं ब्रह्मविषयम्। एवं तच्छब्दानां ब्रह्मशब्दानाम्। यज्ञादिषु संनिधेरवगततद्रूपत्वात्तत्प्रतिमात्वात् तस्योक्तप्रकारेण यज्ञादीनामनुष्ठातुः ॥ २८ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्य गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां सप्तदशोऽध्यायः ॥ १७ ॥

**रा० भा०**—अश्रद्धया कृतं शास्त्रीयमपि होमादिकम् असदित्युच्यते। कुतः न च तत्प्रेत्य नो इह न मोक्षाय न सांसारिकाय च फलायेति ॥ २८ ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते गीताभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

**अ० टी०**—अथैतदतिरिक्तं श्रद्धाविहीनमेतदपि असदित्युच्यत इत्याह—**अश्रद्धयेति**। अश्रद्धया श्रद्धां विना हुतं हवनादिकं, दत्तं दानादि, तप्तं तपः। च पुनः यत्किंचित् कृतं कर्म यागतीर्थस्नानादिकं, हे पार्थ! मद्भक्त! तत्सर्वम् असदित्युच्यते, तच्च प्रेत्य परलोके न फलति मत्संबन्धाभावात्, इहलोके न फलं सदनाहतत्वात्। अतो मत्संबन्ध्येव लौकिकालौकिकं फलतीति तदेवकर्त्तव्यमितिनिरूपितम् ॥ २८ ॥

'निष्फलं त्रिगुणं कर्म सश्रद्धमपि यत्कृतम्। सफलं निर्गुणं चातः कर्त्तव्यमिति रूपितम् ॥'

इति श्रीभगवद्गीताऽमृततरङ्गिण्यां सप्तदशोऽध्यायः ॥ १७ ॥

**नी० टी०**—सर्वत्र श्रद्धैव साद्गुण्यहेतुरिति व्यतिरेकमुखेनाह—**अश्रद्धयेति**। हुतं होमः दत्तं दानं तपस्तप्तमनुष्ठितं कृतमश्रद्धया विहितं भगवन्नामस्मरणमपि यच्चान्यत्तत्सर्वमसत् अभावभूतमित्युच्यते। पार्थ अत एव तत् प्रेत्य मृत्वा परलोके नोपयुज्यते इहास्मिन् लोके वा नो नैवोपयुज्यते। तस्मात् श्रद्धैव सात्विकी मातेव सुखकामैः शरणीकरणीयेति भावः ॥ २८ ॥

इति भीष्मपर्वणि नैलकंठीये भारतभावदीपे सप्तदशोऽध्यायः ॥ १७ ॥

( श्लोकानामादितः समष्ट्यंकाः—६२२ )

॥ अथाष्टादशोऽध्यायः ॥ १८ ॥



**अर्जुन उवाच—संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ॥
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

**शां० भा०**—सर्वस्यैव गीताशास्त्रस्यार्थोऽस्मिन्नध्याय उपसंहृत्य सर्वश्च वेदार्थो वक्तव्यइत्येवमर्थोऽयमध्याय आरभ्यते। सर्वेषु ह्यतीतेष्वध्यायेषूक्तोऽर्थोऽस्मिन्नध्यायेऽवगम्यते । अर्जुनस्तु संन्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुरुवाच—संन्यासस्य संन्यासशब्दार्थस्येत्येतद्धे महाबाहो तत्त्वं तस्य भावस्तत्त्वं याथात्म्यमित्येतदिच्छामि वेदितुं ज्ञातुं त्यागस्य च त्यागशब्दार्थस्येत्येतद्धृषीकेश पृथगितरेतरविभागतः । केशिनिषूदन केशिनामा हयच्छद्माऽसुरस्तं निषूदितवान्भगवान्वासुदेवस्तेन तन्नाम्ना संबोध्यतेऽर्जुनेन ॥ १ ॥

**शां० आ०**—पूर्वैरध्यायैर्विस्तरेण यतस्ततो विक्षिप्ततयोक्तमर्थं सुखप्रतिपत्त्यर्थं संक्षेपेणोपसंहृत्याभिधातुमध्यायान्तरमवतारयति—**सर्वस्यैवेति**। उपसंहृत्य वक्तव्य इति संबन्धः। किंचोपनिषत्सु यतस्ततो विस्तृतस्यार्थस्य बुद्धिसौकर्यार्थमस्मिन्नध्याये संक्षिप्ताभिधानं कर्तव्यमुपनिषदां गीतानां चैकार्थत्वादित्याह—**सर्वश्चेति**। कथं सर्वोऽपि शास्त्रार्थोऽस्मिन्नध्याये संक्षिप्योपसंह्रियते तत्राऽऽह—**सर्वेषु हीति**। ननु वेदार्थश्चेदशेषतोऽत्रोपसंजिहीर्षितस्तर्हि किमिति त्यागेनैके संन्यासयोगादिति च वेदार्थैकदेशविषयं प्रश्नप्रतिवचनं तत्राऽऽह—**अर्जुनस्त्विति**। पृथगनयोस्तत्त्वं वेदितुमिच्छामीति विशेषणादपृथगर्थस्तयोरस्तीति गम्यते। बुभुत्सितस्य प्रष्टव्यत्वादेकदेशे तद्भावादुक्तप्रश्नोपपत्तिरिति भावः ॥ १ ॥

**आ० भा०**—अनंतगुणपूर्णायनमः। ॐपूर्वोक्तं साधनं सर्वं संक्षिप्योपसंहरत्यनेनाध्यायेन॥१॥

**आ० ज०**—अध्यायप्रतिपाद्यमाह—**पूर्वोक्तमिति**। साधनं ज्ञानसाधनम्। उक्तस्योक्तिर्व्यर्थेत्याशंकानिरासाय संक्षिप्योपसंहरतीत्युक्तम्। अनुक्तं त्रैगुण्यं च वक्तीत्यपि ग्राह्यम् ॥ १ ॥

**रा० भा०**—अतीतेनाध्यायद्वयेनाभ्युदयनिश्रेयसः साधनभूतं वैदिकमेव यज्ञतपोदानादिकं कर्म नान्यत् वैदिकस्य च कर्मणः सामान्यलक्षणं प्रणवान्वयः। तत्र मोक्षाभ्युदयसाधनयोर्भेदस्तत्सच्छब्दनिर्देश्यत्वेन मोक्षसाधनं च कर्मफलाभिसंधिरहितं यज्ञादिकं तदारम्भश्च सत्त्वोद्रेकात् भवति । सत्त्ववृद्धिश्च सात्त्विकाहारसेवयेत्युक्तम्। अनन्तरं मोक्षसाधनतया निर्दिष्टयोस्त्यागसंन्यासयोरैक्यं त्यागस्य संन्यासस्य च स्वरूपं भगवति सर्वेश्वरे च सर्वकर्मणां कर्तृत्वानुसंधानं सत्त्वरजस्तमसां कार्यवर्णनेन सत्वगुणस्यावश्योपादेयत्वं स्ववर्णोचितानां कर्मणां परमपुरुषाराधनभूतानां परमपुरुषप्राप्तिनिर्वर्तनप्रकारः कृत्स्नस्य गीताशास्त्रस्य सारार्थो भक्तियोग इत्येते प्रतिपाद्यन्ते । तत्र तावत्त्यागसंन्यासयोः पृथक्त्वैकत्वेन निर्णयाय स्वरूपनिर्णयाय चार्जुनः पृच्छति—त्यागसंन्यासौ हि मोक्षसाधनतया विहितौ। "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे।" इत्यादिषु । अस्य संन्यासस्य त्यागस्य च तत्त्वं याथात्म्यं पृथक् वेदितुमिच्छामि । अयमभिप्रायः। किमेतौ संन्यासत्यागशब्दौ पृथगर्थौ उत एकार्थावेव । यदा पृथगर्थौ तदानयोः पृथक्त्वेन स्वरूपं वेदितुमिच्छामि एकत्वेऽपि तस्य रूपं वक्तव्यमिति ॥ १ ॥

अ० टी०—श्रीकृष्णाय नमः 'अष्टादशानां विद्यानां फलमेतद्यतो मतम् ॥ सर्वत्यागेन कर्त्तव्यो ह्याश्रयः सर्वभावतः ॥ १ ॥ अतः पार्थाय सुप्रीतः प्राहाष्टादशसंज्ञके ॥ अध्याये स्वाश्रयं श्रीमत्कृष्णो देवकीनन्दनः ॥ २ ॥' अत्र सप्तदशाऽध्यायैर्भगवद्वाक्यतरणिकिरणविपाटितहृदयमोहान्धकारोऽर्जुनः संन्यासकर्मफलत्यागयोरेव भगवत्प्राप्तिहेतुत्वनिश्चयप्रकाशितहृत्सरोरुहः स्वबुद्धिनिश्चयेन संन्यासोत्तमज्ञानोऽपि भगवदुक्तस्वमुख्यत्वज्ञानेन तल्लिप्साधयिषुस्तयोस्तत्त्वं पृच्छति—**संन्यासस्येति**। हे हृषीकेश ! एतत्तत्त्वज्ञानार्थं मदिन्द्रियप्रेरक 'सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी। संन्यासयोगयुक्ताऽऽत्मा विमुक्तो मामुपैष्यसि' इत्यादिना संन्यासस्य स्वप्राप्तिरुक्ता, तत्र तस्य तत्त्वं यादृशेन त्वत्प्राप्तिर्भवति तादृक् तत्त्वं, हे महाबाहो ! अहं वेदितुं ज्ञातुम् इच्छामि तज्ज्ञापयेत्यर्थः। महत् क्रियाशक्तिमत्स्वोद्धारणसमर्थ ! त्वत्संबन्धेनैतत्तत्त्वोपदेशेन मामुद्धरेत्युक्तं भवति। च पुनः हे केशिनिषूदन ! दैत्यनिवारक ! दैत्याऽऽवेशेन कायक्लेशादिककृतत्यागात् पृथक् त्यागस्य त्वत्सेवार्थकृतत्यागस्य तत्त्वं मुख्यरूपं वेदितुं ज्ञातुम् इच्छामि ॥ १ ॥

नी० टी०—अस्यामष्टादशाध्याय्यां प्रथमे उपोद्घातितानां द्वितीये सूत्रितानां शेषैर्व्युत्पादितानामर्थानां कात्स्न्येनोपसंहारार्थोऽयमंतिमोऽध्याय आरभ्यते तत्र पूर्वाध्यायांतेऽश्रद्धया कृतं सर्वं व्यर्थमित्युक्तं तत्र फलावश्यंभावनिश्चयः श्रद्धा सा च फलवतां कर्मणामेवांगं नतु कर्मविरहरूपस्य संन्यासस्य भावरूपफलवर्जितस्य अभावाद्भावोत्पत्तेरयोगात्। तस्माच्छ्रद्धासापेक्षकर्मापेक्षया श्रद्धानपेक्षः संन्यासः श्रेयान् न चास्यैवंरूपस्य श्रद्धात्रैविध्यप्रयुक्तं सात्विकादिभेदेन त्रैविधं संभवति येन फले तारतम्यं स्यात् तत्फलस्य दृष्टविक्षेपनिवृत्तिरूपस्य सर्वत्र तुल्यत्वात्। स च संन्यासो यदि कर्मत्याग एव तर्हि सिद्धं नः समीहितं। यदि तु तौ भिन्नौ तर्हि तयोर्वैलक्षण्यं विचार्यमित्याशयेनार्जुन उवाच—**संन्यासस्येति**। हेमहाबाहो हेहृषीकेश हेकेशिनिषूदनेति बहुकृत्वः संबोधयन् जिज्ञासितेर्थेऽत्यादरं दर्शयति। संन्यासस्य तत्त्वं याथात्म्यं त्यागात्पृथग्भूतं वेदितुमिच्छामि त्यागस्य याथात्म्यं संन्यासात्पृथग्भूतं वेदितुमिच्छामीति चकारेणानुवर्त्यते ॥ १ ॥

**श्रीभगवानुवाच—काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

**शां० भा०—तत्र तत्र निर्दिष्टौ संन्यासत्यागशब्दौ न निर्लुण्ठितार्थौ पूर्वेष्वध्यायेष्वतोऽर्जुनाय पृष्टवते तन्निर्णयाय—काम्यानामश्वमेधादीनां कर्मणां न्यासं परित्यागं संन्यासं संन्यासशब्दार्थमनुष्ठेयत्वेन प्राप्तस्याननुष्ठानं कवयः पण्डिताः केचिद्विदुर्विजानन्ति। नित्यनैमित्तिकानामनुष्ठीयमानानां सर्वकर्मणामात्मसंबन्धितया प्राप्तस्य फलस्य परित्यागः सर्वकर्मफलत्यागस्तं प्राहुः कथयन्ति त्यागं त्यागशब्दार्थं विचक्षणाः पण्डिताः। यदि काम्यकर्मपरित्यागः फलपरित्यागो वाऽर्थो वक्तव्यः सर्वथाऽपि त्यागमात्रं संन्यासत्यागशब्दयोरेकोऽर्थो न घटपटशब्दाविव जात्यन्तरभूतार्थौ। ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्तीत्याहुः कथमुच्यते तेषां फलत्याग इति। यथा वन्ध्यायाः पुत्रत्यागः। नैष दोषः, नित्यानामपि कर्मणां भगवता फलवत्त्वस्येष्टत्वात्। वक्ष्यति हि भगवाननिष्टमिष्टमिति न तु संन्यासिनामिति च। संन्यासिनामेव हि केवलं कर्मफलासंबन्धं दर्शयन्नसंन्यासिनां नित्यकर्मफलप्राप्तिं 'भवत्यत्यागिनां प्रेत्य' इति दर्शयति ॥ २ ॥**

शां० आ०—ननु पूर्वेष्वध्यायेषु तत्र तत्र संन्यासत्यागयोरुक्तत्वात्किमिति पुनस्तौ पृच्छ्येते ज्ञाते तदयोगात्तत्राऽऽह—**तत्र तत्रेति**। न निर्लुण्ठितार्थौ न निष्कृष्टार्थौ न विविक्तार्थावित्यर्थः। बुभुत्सया प्रश्नस्य प्रवृत्तत्वात्प्रष्टुरभिप्रायं प्रश्नेन प्रति-

पद्य भगवानुत्तरमुक्तवानित्याह—**अत इति** । पक्षद्वयोपन्यासेन संन्यासत्यागशब्दयोरर्थभेदं कथयति—**काम्यानामिति** । तत्किमिदानीं संन्यासत्यागशब्दयोरात्यन्तिकं भिन्नार्थत्वं तथा प्रसिद्धिविरोधः स्यादित्याशङ्क्यावान्तरभेदेऽपि नाऽऽत्यन्तिकभेदोऽस्तीत्याह—**यदीति** । पुत्राभावाद्वन्ध्यायास्तत्त्यागायोगवन्नित्यनैमित्तिककर्मणामफलानां फलत्यागानुपपत्तेरुक्तस्त्यागशब्दार्थो न सिध्यतीति शङ्कते—**नन्विति** । नित्यनैमित्तिककर्मफलस्यवन्ध्यापुत्रसादृश्याभावात्तत्त्यागसंभवादुक्तस्त्यागशब्दार्थः संभवतीति समाधत्ते—**नैष दोष इति** । भगवता तेषां फलवत्त्वमिष्टमित्यत्र वाक्यशेषमनुकूलयति—**वक्ष्यतीति** । तर्हि संन्यासिनामसंन्यासिनां च नित्याद्यनुष्ठायिनामविशेषेण तत्फलं स्यादिति चेन्नैवेत्याह—**न त्विति** । वक्ष्यतीत्यनुकर्षणं चकारार्थः । प्रसक्तस्य वचसोऽर्थं प्रकृतोपयोगित्वेन संगृह्य स्मारयति—**संन्यासिनामिति** ॥ २ ॥

**आ० भा०—फलानिच्छयाऽकरणेन वा काम्यकर्मणो न्यासः संन्यासः । त्यागस्तु फलत्याग एव । तथा हि प्राचीनशालश्रुतिः।"अनिच्छयाऽकर्मणा वाऽपि काम्यकर्मन्यासो न्यासः फलत्यागस्तु त्यागः" इति ॥ २ ॥**

**आ० ज०—**काम्यानां कर्मणामित्येतं श्लोकं केचिद्व्याचक्षते । काम्यानां कर्मणामश्वमेधादीनां स्वरूपेण त्यागः संन्यासः । नित्यनैमित्तिकादिसर्वकर्मफलत्यागस्त्याग इति । तदसदिति भावेनाह—**फलेति** । वैकल्पिककाम्यानां स्वर्गादिफलानिच्छया विशेषणत्यागेन त्यागो नियतकाम्यानां स्वरूपाकरणेन त्यागः संन्यासः काम्यकर्मणामेव फलत्यागस्तु त्यागः करणाकरणे तु न विवक्षित इत्यर्थः । कुतएतदित्यत आह—**तथा हीति** । अकर्मणा अकरणेन जनकाश्वपत्यादिभिर्मुमुक्षुभिरश्वमेधादीनामनुद्दिष्टफलानामनुष्ठानात्र काम्यानां स्वरूपपरित्याग एव नित्यनैमित्तिकफलस्यांतःकरणशुद्धेः सर्वापेक्षितत्वेन तत्त्यागो न युक्तः ॥ २ ॥

**रा० भा०—अथानयोरेकमेव स्वरूपं तच्चेदृशम् इति निर्णेतुं वादिविप्रतिपत्तिं दर्शयन्—केचन विद्वांसः काम्यानां कर्मणां न्यासं स्वरूपत्यागं संन्यासं विदुः । केचिच्च विचक्षणाः नित्यानां नैमित्तिकानां काम्यानां च सर्वेषां कर्मणां फलत्याग एव मोक्षशास्त्रेषु त्यागशब्दार्थः इति प्राहुः । तत्र शास्त्रीयस्त्यागः काम्यकर्मस्वरूपाविषयः सर्वकर्मफलविषय इति विवादं प्रदर्शयन्नेकत्र संन्यासशब्दमितरत्र त्यागशब्दं प्रयुक्तवान् । अतस्त्यागसंन्यासशब्दयोरेकार्थत्वमङ्गीकृतम् इति ज्ञायते । तथा 'निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।' इति त्यागशब्देनैव निर्णयवचनात् 'नियतस्य तु संन्यासात्कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥ अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्॥' इति परस्परपर्यायतादर्शनाच्च तयोरेकार्थत्वं प्रतीयत इति निश्चीयते ॥ २ ॥**

**अ० टी०—**अस्योत्तरमाह श्रीभगवान्—**काम्यानामिति** । काम्यानां "ज्योतिष्टोमेन स्वर्गकामो यजेत । सर्वपाप्मानं तरति ब्रह्महत्यां तरति योऽश्वमेधेन यजते" इत्यादिकर्मणां न्यासं परित्यागं कवयो निर्दुष्टशब्दरसिकाः संन्यासं विदुः जानन्तीत्यर्थः । अत्रायं भावः।संन्यासशब्देन सम्यक् प्रकारेण न्यासं स्थापनं तच्च काम्यानां कामितफलपरित्यागेन भवदर्थफलार्थस्थापनरूपं शब्दार्थज्ञानेन ते जानन्ति । एतेन तेषामपि शब्दार्थज्ञानवत्त्वमेवोक्तं नतु तत्त्वज्ञानवत्त्वमितिभावः। किंच। ये विचक्षणा विशेषेण व्याख्यानसमर्थाः चातुर्यादियुक्ताः सर्वकर्मणां नित्यनैमित्तिकानामपि फलत्यागं त्यागं प्राहुः । यद्यपि नित्यकर्मसु फलं न श्रूयते। "अहरहः संध्यामुपासीत। यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिषु तथापि प्रत्यवायपरिहार एव फलमिति कल्पयन्ति । एतदेव विचक्षणत्वेनोक्तम् । तेऽपि तत्त्वं न जानन्तीत्यर्थः ॥ २ ॥

**नी० टी०—**अत्रोत्तरं श्रीभगवानुवाच—**काम्यानामिति**। काम्यानां रागतः प्राप्तानां पुत्रकामेष्ट्यादीनां । ननु फलस्य कामनाविषयत्वात् सर्वस्य कर्मणः फलवत्त्वनियमात् सर्वं कर्म काम्यमेवेति नित्यादीनामपि मुमुक्षोस्त्यागः

स्यादिति सिद्धं नः समीहितमित्याशंक्याह—सर्वेति । सर्वेषां नित्यनैमित्तिककाम्यानां कर्मणां फलत्यागमेव त्यागं विचक्षणाः प्राहुर्न स्वरूपतस्त्यागं प्राहुः अतो न त्वदिष्टः संन्यासः सिद्ध्यतीत्यर्थः । अयमाशयः । यद्यपि संन्यासत्यागशब्दौ निवृत्तिमेव ब्रूतः तथापि सा वैराग्याद्वा कायक्लेशभयाद्वा मौढ्याद्वा भवतीति तत्कारणानां सात्विकादिभेदेन भिन्नत्वात्तस्या अपि सात्विकराजसतामसभेदेन त्रैविध्यं त्रिविधश्रद्धाप्रधानत्वं च दुर्वारं । न चाविरक्तो श्रद्धानश्च त्यक्तकर्माऽपि दृष्टविक्षेपहीनो दृश्यते यथोक्तं वार्त्तिकाचार्यैः । 'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ॥ संन्यासिनोऽपि दृश्यंते दैवसंदूषिताशया'इति । तस्मादविरक्तकृतसंन्यासापेक्षया निष्कामकर्माचरणमेव श्रेय इत्याशयेन भगवता काम्यकर्मत्यागः संन्यासत्वेन नित्यादिकर्मणां फलानभिसंधानं च त्यागत्वेन स्तूयत इति तस्मादश्रद्धया कृतः संन्यासोऽप्यसन्नेवेति संन्यासाद्ब्रह्मणः स्थानमिति स्मृतं स्वफलं दातुं न समर्थ इति युक्तमुक्तं भगवता अश्रद्धया कृतं सर्वं व्यर्थमिति । यत्तु नित्यानामेव विविदिषायोगात्काम्यानां स्वरूपतोऽपि त्यागः इति पूर्वार्द्धस्यार्थः । सर्वेषां कर्मणां फलतस्त्याग इत्युत्तरार्द्धार्थ इति व्याख्यानं पक्षद्वयप्रदर्शनपरं तदग्रिमेण श्लोकेन पौनरुक्त्यमावहतीत्युपेक्षितम् ॥ २ ॥

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥**
**यज्ञदानतपः कर्म न त्याज्यमिति चापरे ॥ ३ ॥**

**शां० भा०**—त्याज्यं दोषेति । त्याज्यं त्यक्तव्यं दोषवद्दोषोऽस्यास्तीति दोषवत् । किं तत्कर्म बन्धहेतुत्वात्सर्वमेव । अथवा दोषो यथा रागादिस्त्यज्यते तथा त्याज्यमित्येके प्राहुर्मनीषिणः पण्डिताः सांख्यादिदृष्टिमाश्रिता अधिकृतानां कर्मिणामपीति । तत्रैव यज्ञदानतपः कर्म न त्याज्यमिति चापरे । कर्मिण एवाधिकृतानपेक्ष्यैते विकल्पा न तु ज्ञाननिष्ठान्व्युत्थायिनः संन्यासिनोऽपेक्ष्य । ज्ञानयोगेन सांख्यानां निष्ठा मया पुरा प्रोक्तेति कर्माधिकारादपोद्धृता ये न तान्प्रति चिन्ता । ननु कर्मयोगेन योगिनामित्यधिकृताः पूर्वं विभक्तनिष्ठा अपीह सर्वशास्त्रोपसंहारप्रकरणे यथा विचार्यन्ते तथा सांख्या अपि ज्ञाननिष्ठा विचार्यन्तामिति । न, तेषां मोहदुःखनिमित्तत्यागानुपपत्तेः । न कायक्लेशनिमित्तानि दुःखानि सांख्या आत्मनि पश्यन्तीच्छादीनां क्षेत्रधर्मत्वेनैवदर्शितत्वात् । अतस्ते न कायक्लेशदुःखभयात्कर्म परित्यजन्ति नापि ते कर्माण्यात्मनि पश्यन्ति । येन नियतं कर्म मोहात्परित्यजेयुः । गुणानां कर्म नैव किंचित्करोमीति हि ते संन्यस्यन्ति । सर्वकर्माणि मनसा संन्यस्येत्यादिभिर्हि तत्त्वविदः संन्यासप्रकार उक्तः । तस्माद्येऽन्येऽधिकृताः कर्मण्यनात्मविदो येषां च मोहात्त्यागः संभवति कायक्लेशभयाच्च त एव तामसास्त्यागिनो राजसाश्चेति निन्द्यन्ते कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थम् । सर्वारम्भपरित्यागी मौनी संतुष्टो येन केनचिदनिकेतः स्थिरमतिरिति गुणातीतलक्षणे च परमार्थसंन्यासिनो विशेषितत्वात् । वक्ष्यति च ज्ञानस्य या परा निष्ठेति । तस्माज्ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिताः । कर्मफलत्याग एव सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया संन्यास उच्यते न मुख्यः सर्वकर्मसंन्यासः । सर्वकर्मसंन्यासासंभवे च नहि देहभृतेति हेतुवचनान्मुख्य एवेति चेत् । न, हेतुवचनस्य स्तुत्यर्थत्वात् । यथा त्यागाच्छान्तिरनन्तरमिति कर्मफलत्यागस्तुतिरेव यथोक्तानेकपक्षानुष्ठानाशक्तिमन्तमर्जुनमज्ञं प्रति विधानात्तथेदमपि न हि देहभृता शक्यमिति कर्मफलत्यागस्तुत्यर्थं वचनम् । न सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्त-

नी० टी०—तान्येव पंच गणयति—**अधिष्ठानमिति** । अधिष्ठानमिच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयो देहः तस्यानात्मत्वं चार्वाकव्यतिरिक्तसमस्तवादिसिद्धं । तथा कर्ता बुद्धिविशिष्टश्चिदाभासः प्रमाता नामाहंप्रत्ययविषयोऽहंकारस्तथेत्यनेन तद्वदेवानात्मत्वेन ज्ञेय इत्युक्तं देहस्यैव सृष्टौ प्रलये च तस्याव्युत्पत्तिविनाशयोर्दर्शनात् । एतच्च विशेषणनाशाद्विशिष्टनाशं विशेषणोत्पत्त्या च विशिष्टोत्पत्तिमभिप्रेत्य श्रूयते । "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यतीति । यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमेतस्मादात्मनः सर्व एत आत्मानो व्युच्चरंति"इति च विशिष्टस्य चानातिरेकादर्शनादनात्मत्वं सिद्धं करणं च शब्दाद्युपलब्धिसाधनं पृथग्विधं द्वादशविधं पंच कर्मेंद्रियाणि पंच ज्ञानेंद्रियाणि मनो बुद्धिश्च । तथा विविधाश्च पृथक्चेष्टा वायवीयाः प्राणनादिरूपाः । दैवं पुण्यपापरूपं तत्तत्करणानुग्राहकसूर्यादिदेवतारूपं पंचमं पंचानां पूरणम्॥१४॥

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ॥**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**

**शां० भा०—**शरीरेति । शरीरवाङ्मनोभिर्यत्कर्म त्रिभिरेतैः प्रारभते निर्वर्तयति नरो न्याय्यं वा धर्म्यं शास्त्रीयं, विपरीतं वाऽशास्त्रीयमधर्म्यम् । यच्चापि निमिषितचेष्टादि जीवनहेतुस्तदपि पूर्वकृतधर्माधर्मयोरेव कार्यमिति न्याय्यविपरीतयोरेव ग्रहणेन गृहीतम् । पञ्चैते यथोक्तास्तस्य सर्वस्यैव कर्मणो हेतवः कारणानि । नन्वधिष्ठानादीनि सर्वकर्मणां कारणानि, कथमुच्यते शरीरवाङ्मनोभिः कर्म प्रारभत इति । नैष दोषः, विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरादित्रयप्रधानं तदङ्गतया दर्शनश्रवणादि च जीवनलक्षणं त्रिधैव राशीकृतमुच्यते शरीरादिभिरारभत इति फलकालेऽपि तत्प्रधानैर्भुज्यत इति पञ्चानामेव हेतुत्वं न विरुध्यते ॥ १५ ॥

**शां० आ०—**पञ्चानामधिष्ठानादीनामुक्तानां सर्वकर्मसिद्ध्यर्थत्वं स्फुटयति—**शरीरेति** । ननु जीवनकृतं निमेषोन्मेषादिकर्मान्तरं साधारणमस्ति तत्कथं राशिद्वयकरणमिति तत्राऽऽह—**यच्चेति** । अधिष्ठानादीनां कर्ममात्रहेतुत्वं प्रतिज्ञाय शरीरादित्रिविधकर्महेतुत्वोक्तिरयुक्तेति शङ्कते—**नन्विति** । पूर्वापरविरोधं परिहरति—**नैष दोष इति** । ननु जीवनकृतानि स्वाभाविकानि कर्माणि दर्शनादीनि विधिनिषेधबाह्यत्वान्न देहादिनिर्वर्त्यानीत्याशङ्क्याऽऽह—**तदङ्गतयेति** । तस्य देहादित्रयस्य प्रधानस्याङ्गं चक्षुरादि तन्निष्पाद्यत्वेन जीवनकृतं दर्शनादि प्रधानकर्मण्यन्तर्भूतमिति त्रैविध्यमविरुद्धमित्यर्थः । देहाद्यारभ्ये त्रिविधे कर्मणि सर्वकर्मान्तर्भावेऽपि कथं पञ्चानामेवाधिष्ठानादीनां तत्र हेतुत्वं फलोपभोगकाले कारणान्तरापेक्षासंभवादित्याशङ्क्य जन्मकालभाविनो भोगकालभाविनश्च सर्वस्य कारणस्य तेष्वेवान्तर्भावान्नैवमित्याह—**फलेति** ॥ १५ ॥

**आ० भा०—॥ १५ ॥**

**आ० ज०—॥ १५ ॥**

**रा० भा०—** नन्वेवं परमात्मायत्ते जीवात्मनः कर्तृत्वे जीवात्मा कर्मण्यनियोज्यो भवतीति विधिनिषेधशास्त्राण्यनर्थकानि स्युः । इदमपि चोद्यं सूत्रकारेणैव परिहृतम् । "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः" इति । एतदुक्तं भवति । परमात्मना दत्तैस्तदाधारैश्च करणकलेवरादिभिः तदाहितशक्तिभिः स्वयं च जीवात्मा तदाधारस्तदाहितशक्तिः सन् कर्मनिष्पत्तये स्वेच्छया करणाद्यधिष्ठानाकारं प्रयत्नं चारभते । तदन्तरवस्थितः परमात्मा स्वानुमतिदानेन तं प्रवर्तयतीति जीवस्यापि स्वबुद्ध्यैव प्रवृत्तिहेतुत्वमस्ति । यथा गुरुतरशिलामहीरुहादिचलनादिफलप्रवृत्तिषु बहुपुरुषसाध्यासु बहूनां हेतुत्वं विधिनिषेधभाक्त्वं चेति ॥ १५ ॥

**अ० टी०**—पञ्चानामेव सर्वकर्महेतुत्वमाह—**शरीरेति**। कर्म त्रिविधं शारीरं, वाचनिकं, मानसिकम्। अतः शरीरवाङ्मनोभिर्यत्कर्म नरो मनुष्यः प्रारभते न्याय्यं वा मदाज्ञया मदिच्छारूपं, विपरीतं स्वफलभोगारूपं विपरीतमन्याय्यं वा प्रारभते तस्यैते पूर्वोक्ता पञ्चहेतवः कारणरूपा इत्यर्थः। विकल्पवाचकवाशब्दद्वयेन मदिच्छाज्ञानाभावे न्याय्यस्य वेदोक्तत्वेनावश्यप्राप्तस्याऽपि विपरीतत्वं, तज्ज्ञाने विपरीतस्याऽपि न्याय्यत्वमितिज्ञापितम्॥ १५॥

**नी० टी०**—**शरीरेति**। न्याय्यं धर्म्यं शास्त्रीयं विपरीतमन्याय्यमधर्म्यमशास्त्रीयं। ननु शरीरादिभिस्त्रिभिरारभ्यते पंचैते तस्य हेतव इति च विप्रतिषिद्धमुच्यते नैष दोषः अत्रापि शरीरपदेनाधिष्ठानस्य नरपदेन कर्तुर्वाङ्मन इति करणस्यारभत इति चेष्टानां न्याय्यमिति धर्माधर्मरूपस्य दैवस्य च संग्रहात्। सर्वेषु कर्मसु पंचानां समानेऽप्युपयोगे विधिप्रतिषेधलक्षणं त्रिविधमेव कर्म शास्त्रे प्रसिद्धमिति। इदं शारीरं कर्मेदं मानसमिदं वाचिकमिति व्यपदेशो देहादीनां प्राधान्यापेक्ष इति न कश्चिद्विरोधः॥ १५॥

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः॥**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥ १६॥**

**शां० भा०—तत्रेति। तत्रेति प्रकृतेन संबध्यते, एवं सति, एवं यथोक्तैः पञ्चभिर्हेतुभिर्निर्वर्त्ये सति कर्मणि। तत्रैवं सतीति दुर्मतित्वस्य हेतुत्वेन संबध्यते। तत्र तेष्वात्मानमनन्यत्वेनाविद्यया परिकल्प्य तैः क्रियमाणस्य कर्मणोऽहमेव कर्तेति कर्तारमात्मानं केवलं शुद्धं तु यः पश्यत्यविद्वान्कस्माद्वेदान्ताचार्योपदेशन्यायैरकृतबुद्धित्वादसंस्कृतबुद्धित्वाद्यो ऽपि देहादिव्यतिरिक्तात्मवाद्यन्यमात्मानमेव केवलं कर्तारं पश्यत्यसावप्यकृतबुद्धिरेवातोऽकृतबुद्धित्वान्न स पश्यत्यात्मनस्तत्त्वं कर्मणो वेत्यर्थोऽतो दुर्मतिः कुत्सिता विपरीता दुष्टाऽजस्रं जननमरणप्रतिपत्तिहेतुभूता मतिरस्येति दुर्मतिः स पश्यन्नपि न पश्यति, यथा तैमिरिकोऽनेकं चन्द्रं, यथा वाऽभ्रेषु धावत्सु चन्द्रं धावन्तं, यथा वा वाहन उपविष्टोऽन्येषु धावत्स्वात्मानं धावन्तम्॥ १६॥**

**शां० आ०**—क्रियाकर्तृत्वमधिष्ठानादीनामापाद्याविदुषस्तेष्वात्मत्वदृष्टिमनुवदति—**तत्रेति**। तत्पदपरामर्शयोग्यं प्रकृतं सर्वं कर्म। प्रतीकमादाय पूर्वेण सहाक्षरार्थं कथयति—**एवमिति**। अधिष्ठानादीनामुक्तरीत्या कर्तृत्वे सत्यन्यगतं कर्तृत्वमात्मनो यतोऽध्यारोप्य पश्यति अतो दुर्मतिरित्यात्मनि कर्तृत्वं पश्यन्नित्याह—**तत्रैवमिति**। कर्तारमित्यादि व्याचष्टे—**तत्रेत्यादिना**। तेष्वधिष्ठानादिषु तैरधिष्ठानादिभिरारोपितात्मभावैरित्यर्थः। अकर्तारमात्मानं कर्तारं पश्यतीत्यत्र प्रश्नद्वारा हेतुमाह—**कस्मादिति**। ननु शास्त्रसंस्कृतबुद्धिरेवातिरिक्तात्मवादी कर्तृत्वं तस्यानुमन्यते नासौ कर्तृत्वमात्मनि पश्यन्नपि भवत्यकृतबुद्धिस्तत्राऽऽह—**योऽपीति**। तस्यापि शास्त्रपूर्वकमाचार्योपदेशेन तदनुसारिन्यायैश्चानाहितबुद्धित्वादकृतबुद्धित्वं सिद्धमित्यर्थः। कौटस्थ्यमात्मनस्तत्त्वं याथात्म्यं कर्मणोऽपि तत्त्वमविद्याकृताधिष्ठानादिकृतत्वेनाऽऽत्मास्पर्शित्वमात्मकर्मणोस्तत्त्वदर्शनाभावोऽतःशब्दार्थः। दुष्टत्वं स्पष्टीकर्तुं दुर्मतित्वं विवृणोति—**जननेति**। अहं कर्तेत्यात्मदर्शनवतोऽपि नाविदुषस्तद्दर्शनमस्तीत्यत्र दृष्टान्तमाह—**यथेति**। तिमिरोपहतचक्षुरनेकं चन्द्रं पश्यन्नपि तत्त्वतो न तं पश्यत्येवमविद्वानात्मानं कर्तारं पश्यन्नपि तत्त्वतो न तं पश्यतीत्यर्थः। अधिष्ठानादिष्वविद्यया संबद्धात्मनः स्वात्मनि तद्गतक्रियारोपे दृष्टान्तमाह—**यथा वेति**। अन्येषु वाहकेषु पुरुषेषु धावनकर्तृषु वाहने स्थितः स्वात्मानं प्रधावनकर्तारमविवेकादभिमन्यते तथाऽधिष्ठानादिषु क्रियाकर्तृषु तद्गतं स्वात्मानं कर्तारं मन्यमानो दुर्मतिरित्यर्थः॥ १६॥

**आ० भा०—केवलं निष्क्रियम्। एनं केवलमात्मानं निष्क्रियत्वाद्ददंति हीति तत्रैव॥ १६॥**

**आ० ज०**—नचैवं जीवस्य कर्मकारणेष्वनंतर्भावे व्याख्यायमाने तत्रैवंसतीत्युत्तरवाक्ये केवलमिति न युज्यते। एकाकिनमात्मानं करणत्वेन मन्यमानस्य निंदयाऽस्य सहायस्य कारणत्वप्रतीतेरित्यत आह—**केवलमिति**। नात्र केवलशब्द एकाकि-

वचनः किंतु निष्क्रियत्ववाची। तदुक्तिश्च निर्दोषपादनार्थेति भावः। केवलशब्दस्य निष्क्रियार्थत्वं कुत इत्यत आह—**एनमिति।** तत्रैवायास्यश्रुतावेवोक्तम् ॥ १६ ॥

**रा० भा०—एवं वस्तुतः परमात्मानुमतिपूर्वके जीवात्मनः कर्तृत्वे सति तत्र तत्र कर्मणि केवलमात्मानमेव कर्त्तारं यः पश्यति स दुर्मतिः विपरीतमतिः। अकृतबुद्धित्वात् अनिष्पन्नयथावस्थितवस्तुबुद्धित्वान्न पश्यति न यथावस्थितं कर्तारं पश्यति ॥ १६ ॥**

**अ० टी०**—किमतो यद्येवमत आह—**तत्रेति**। तत्र सर्वकर्मसु पञ्चहेतवो मत्प्रेरिता इत्येवं सति स केवलम् एकम् आत्मानं जीवं, तुशब्देन अकर्तारं यः अकृतबुद्धित्वात् गुरूपदेशप्राप्तविवेकाभावात् दुर्मतिः दुर्बुद्धिः स्वमौढ्येन पश्यति स न पश्यति आत्मानं मां चेतिभावः। एवं यः कर्म करोति तस्य तत्फलतीतिभावः ॥ १६ ॥

**नी० टी०**—एतत्प्रतिपादनफलं कर्तृत्वस्यारोपितत्वसिद्धिरकर्तृत्वस्य स्वाभाविकत्वसिद्धिश्चेति द्वाभ्यां श्लोकाभ्यां दर्शयति—**तत्रेति**। तत्र तस्मिन्कर्मणि एवमुक्तरीत्या पंचभिर्निर्वर्त्ये सति केवलं त्वकर्तारमप्यात्मानं चेतनं। "साक्षी चेता केवलो निर्गुणश्च" इति श्रुतेः अधिष्ठानादिपंचकप्रचारदर्शिनमुदासिनमपि यः कर्तारं कर्तृत्वाश्रयं पश्यति स दुर्मतिः पापाभिभूतमतिर्न पश्यत्यंध एव सः। अदर्शने हेतुः अकृतबुद्धित्वादिति शास्त्राचार्योपदेशशमदमादिसंस्कृता बुद्धिर्यस्य स कृतबुद्धिस्तद्विपरीतोऽकृतबुद्धिस्तस्य भावस्तत्त्वं तस्मात्। यथा स्वमुखस्योदपात्रसंसर्गिकत्वं पश्यता जलचांचल्यमपि तत्रारोप्यत एवमात्मनो बुद्धिसंसृष्टत्वं पश्यता बुद्धिधर्मः कर्तृत्वादिरप्यात्मन्यारोप्यत इति भावः ॥ १६ ॥

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥**
**हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥**

**शां० भा०—कः पुनः सुमतिर्यः सम्यक्पश्यतीत्युच्यते—यस्य शास्त्राचार्योपदेशन्यायसंस्कृतात्मनो न भवत्यहंकृतोऽहं कर्तेत्येवं लक्षणो भावो भावना प्रत्यय एत एव पञ्चाधिष्ठानादयोऽविद्ययाऽऽत्मनि कल्पिताः सर्वकर्मणां कर्तारो नाहमहं तु तद्व्यापाराणां साक्षिभूतोऽप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः परः केवलोऽविक्रिय इत्येवं पश्यतीत्येतत्। बुद्धिरन्तःकरणं यस्याऽऽत्मन उपाधिभूता न लिप्यते नानुशायिनी भवतीदमहमकार्षं तेनाहं नरकं गमिष्यामीत्येवं यस्य बुद्धिर्न लिप्यते स सुमतिः स पश्यति। हत्वाऽपि स इमाँल्लोकान्सर्वान्प्राणिन इत्यर्थः। न हन्ति हननक्रियां न करोति न निबध्यते नापि तत्कार्येणाधर्मफलेन संबध्यते। ननु हत्वाऽपि न हन्तीति विप्रतिषिद्धमुच्यते यद्यपि स्तुतिः। नैष दोषः, लौकिकपारमार्थिकदृष्ट्यपेक्षया तदुपपत्तेः। देहाद्यात्मबुद्ध्या हन्ताऽहमिति लौकिकीं दृष्टिमाश्रित्य हत्वाऽपीत्याह यथादर्शितां पारमार्थिकीं दृष्टिमाश्रित्य न हन्ति न निबध्यत इति तदुभयमुपपद्यत एव। नन्वधिष्ठानादिभिः संभूय करोत्येवाऽऽत्मा कर्तारमात्मानं केवलं त्विति केवलशब्दप्रयोगात्। नैषदोष आत्मनोऽविक्रियस्वभावत्वेऽधिष्ठानादिभिः संहतत्वानुपपत्तेः। विक्रियावतो ह्यन्यैः संहननं संभवति संहत्य वा कर्तृत्वं स्यान्न त्वविक्रियस्याऽऽत्मनः केनचित्संहननमस्तीति न संभूय कर्तृत्वमुपपद्यते। अतः केवलत्वमात्मनः स्वाभाविकमिति केवलशब्दोऽनुवादमात्रम्।**

**शां० आ०**—विपरीतदृष्टेर्दुर्मतित्वं शिष्ट्वा सम्यग्दृष्टेः सुमतित्वं प्रश्नपूर्वकमाह—**कः पुनरित्यादिना**। अहं कर्तेत्यात्मनि कर्तृत्वप्रत्ययाभावे कुत्र कर्तृत्वधीरित्याशङ्क्याऽऽह—**एत इति**। कथं तर्हि कर्तृत्वधीरात्मनीत्याशङ्क्याधिष्ठानादीनां तद्व्यापाराणां च साक्षित्वादित्याह—**अहं त्विति**। आत्मनो न स्वतोऽस्ति क्रियाशक्तिमत्त्वमित्यत्र प्रमाणमाह—**अप्राणो हीति**।

नापि तस्य स्वतो ज्ञानशक्तिमत्त्वमित्याह—**अमना इति** । उपाधिद्वयासंबन्धे शुद्धत्वं फलितमाह—**शुभ्र इति** । कारणसंबन्धादशुद्धिमाशङ्क्योक्तम्—**अक्षरादिति** । कार्यकारणयोरात्मास्पर्शित्वेन पार्थक्ये सद्वितीयत्वमाशङ्क्य तयोरवस्तुत्वान्मैवमित्याह—**केवल इति** । जन्मादिसर्वविक्रियारहितत्वेन कौटस्थ्यमाह—**अविक्रिय इति** । बुद्धिर्यस्येत्यादि व्याचष्टे—**बुद्धिरिति** । नानुशायिनी नानुशयवती न क्लेशशालिनीत्यर्थः । द्वितीयपादस्याक्षरार्थमुक्त्वा वाक्यार्थमाह—**इदमिति** । पापं कर्मेदमा परामृश्यते । लोकानां प्राणसंबन्धाभावे कुतो हिंसेत्याशङ्क्याऽऽह—**प्राणिन इति** । विरुद्धार्थोक्त्या स्तुतिरपि न युक्तेति शङ्कते—**नन्विति** । विरोधं परिहरति—**नैष दोष इति** । लौकिकदृष्टिमवष्टभ्य हत्वाऽपीति निर्देशं विशदयति—**देहादीति** । तात्त्विकीं दृष्टिमास्थाय न हन्तीत्यादिनिर्देशमुपपादयति—**यथेति** । नाहं कर्ता किंतु कर्तृतद्व्यापारयोः साक्षी क्रियाज्ञानशक्तिमदुपाधिद्वयविनिर्मुक्तः शुद्धः सन्कार्यकारणासंबन्धोऽद्वितीयोऽविक्रिय इत्येवं पारमार्थिकदृष्ट्यैथादर्शितत्वं द्रष्टव्यम् । हत्वाऽपीत्येतन्न हन्तीत्यादि चोभयं दृष्टिद्वयावष्टम्भादुपपन्नमित्युपसंहराति—**तदुभयमिति** । केवलमेवाऽऽत्मानं कर्तारं पश्यन्दुर्मतिरित्यत्राऽऽत्मविशेषणसमर्पककेवलशब्दसामर्थ्यादात्मनो विशिष्टस्य कर्तृत्वमिति शङ्कते—**नन्विति** । आत्मनो वैशिष्ट्यायोगान्न विशिष्टस्यापि कर्तृत्वमिति दूषयति—**नैष दोष इति** । अविक्रियस्वाभाव्येऽपि कथमात्मनोऽसंहतत्वमित्याशङ्क्याऽऽह—**विक्रियेति** । अधिष्ठानादिभिरात्मनः संहननेऽपि न कर्तृत्वमविक्रियस्य क्रियान्वयव्याघातादित्याह—**संहत्येति** । संहतत्वानुपपत्तिं व्यक्तीकरोति—**नत्विति** । असंहतत्वे फलितमाह—**इति नेति** कथं तर्हि केवलत्वमात्मनि केवलशब्दादुक्तं तदाह—**अत इति** ।

**अविक्रियत्वं चाऽऽत्मनः श्रुतिस्मृतिन्यायप्रसिद्धम् । 'अविकार्योऽयमुच्यते' 'गुणैरेव कर्माणि क्रियन्ते' शरीरस्थोऽपि न करोतीत्याद्यसकृदुपपादितं गीतास्वेव तावत् । श्रुतिषु च "ध्यायतीव लेलायतीव" इत्येवमाद्यासु । न्यायतश्च निरवयवमपरतन्त्रमविक्रियमात्मतत्त्वमिति राजमार्गः । विक्रियावत्त्वाभ्युपगमेऽप्यात्मनः स्वकीयैव विक्रिया स्वस्य भवितुमर्हति । नाधिष्ठानादीनां कर्माण्यात्मकर्तृकाणि स्युः । नहि परस्य कर्म परेणाकृतमागन्तुमर्हति । यत्त्वविद्यया गमितं न तत्तस्य । यथा रजतत्वं न शुक्तिकाया यथा वा तलमलवत्त्वं बालैर्गमितमविद्यया नाऽऽकाशस्य तथाऽधिष्ठानादिविक्रियाऽपि तेषामेवेति नाऽऽत्मनः । तस्माद्युक्तमुक्तमहंकृतत्वबुद्धिलेपाभावाद्विद्वान्न हन्ति न निबध्यत इति । नायं हन्ति न हन्यत इति प्रतिज्ञाय न जायत इत्यादिहेतुवचनेनाविक्रियत्वमात्मन उक्त्वा वेदाविनाशिनमिति विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ संक्षेपत उक्त्वा मध्ये प्रसारितां च तत्र तत्र प्रसङ्गं कृत्वेहोपसंहरति शास्त्रार्थपिण्डीकरणाय विद्वान्न हन्ति न निबध्यत इति । एवं च सति देहभृत्त्वाभिमानानुपपत्तावविद्याकृताशेषकर्मसंन्यासोपपत्तेः संन्यासिनामनिष्टादि त्रिविधं कर्मणः फलं न भवतीत्युपपन्नं तद्विपर्ययाच्चेतरेषां भवतीत्येतच्चापरिहार्यमित्येष गीताशास्त्रस्यार्थ उपसंहृतः । स एष सर्ववेदार्थसारो निपुणमतिभिः पण्डितैर्विचार्य प्रतिपत्तव्य इति तत्र तत्र प्रकरणविभागेन दर्शितोऽस्माभिः शास्त्रन्यायानुसारेण ॥ १७ ॥**

कर्तृत्वमात्मनोऽभ्युपपन्नं नास्याविक्रियत्वमुपैतीत्याशङ्क्याऽऽह—**अविक्रियत्वं चेति** । तत्र स्मृतिवाक्यान्युदाहरति—**अविकार्योऽयमिति** । नायं हन्ति न हन्यत इत्यादिवाक्यमादिशब्दार्थः । उक्तवाक्यानामात्माविक्रियत्वे तात्पर्यं सूचयति—**असकृदिति** । निष्कलं निष्क्रियं शान्तमित्यादि वाक्यं श्रुतावादिशब्दार्थः,यानि वाक्यानि तैरात्मनोऽविक्रियत्वं दर्शितमिति योजना, न्यायतश्च तद्दर्शितमिति पूर्वेण संबन्धः।न्यायमेव दर्शयति—**निरवयवमिति**।न तावदात्मा स्वतो विक्रियते निरवयवत्वादाकाशवन्नापि परतोऽसङ्गस्याकार्यस्य पराधीनत्वायोगादित्यर्थः । किंचाऽऽत्मनः स्वनिष्ठा वा विक्रियाऽधिष्ठानादिनिष्ठा वा,नाऽऽद्यः स्वनिष्ठविक्रियानुपपत्तेरात्मनो दर्शितत्वादित्याशयेनाऽऽह—**विक्रियावत्त्वेति**।सा चायुक्तेत्युक्तमिति शेषः । द्वितीयं दूषयति—**नेत्यादिना**। अधिष्ठानादिकृतमपि कर्म तद्योगादात्मन्यागच्छतीत्याशङ्क्य तदागमनं वास्तवमाविद्यं वेति विकल्प्याऽऽद्यं दूषयति—**न हीति** । द्वितीयं निरस्यति—**यत्त्विति** । आत्मन्यविद्याप्रापितं कर्म नाऽऽत्मीयमित्येतद्दृष्टान्ताभ्यामुपपादयति—**यथेत्यादिना** । आत्मनोऽविक्रियत्वेन कर्तृत्वाभावे फलितमाह—**तस्मादिति** । ननु प्रागेवाऽऽत्मनोऽविक्रियत्वं प्रतिपादितं तदिह कस्मादुच्यते तत्राऽऽह—**नायमिति** । शास्त्रादौ प्रतिज्ञातं हेतुपूर्वकं संक्षिप्योक्त्वा मध्ये तत्र तत्र प्रसङ्गं कृत्वा प्रसारितां कर्माधिकारनिवृत्ति-

मिहोपसंहरतीति संबन्धः। प्रतिज्ञातस्य हेतुनोपपादितस्यान्ते निगमनं किमर्थमित्याशङ्क्याऽऽह—**शास्त्रार्थेति**। कर्माधिकारो विदुषो नेति स्थिते तस्य देहाभिमानाभावे सत्यविद्योत्थसर्वकर्मत्यागसिद्धेरनिष्टमिष्टं मिश्रं चेति त्रिविधं कर्मफलं संन्यासिनां नेति प्रागुक्तं युक्तमेवेति परमप्रकृतमुपसंहरति—**एवं चेति**। ये पुनरविद्वांसो देहाभिमानिनस्तेषां त्रिविधं कर्मफलं भवत्येवेति हेतुवचनसिद्धमर्थं निगमयति—**तद्विपर्ययाच्चेति**। अधिष्ठानादिकृतं कर्म नाऽऽत्मकृतमविदुषामेव कर्माधिकारो देहाभिमानित्वेन तत्त्यागायोगाद्देहाभिमानाभावात्तु विदुषां कर्माधिकारनिवृत्तिरित्युपसंहृतमर्थं संक्षिप्याऽऽह—**इत्येष इति**। उक्तश्च गीतार्थो वेदार्थत्वादुपादेय इत्याह—**स एष इति**। कथमयमर्थो वेदार्थोऽपि प्रतिपत्तुं शक्यते तत्राऽऽह—**निपुणेति**। भाष्यकृता मानयुक्तिभ्यां विभज्यानुक्तत्वान्नास्यार्थस्योपादेयत्वमित्याशङ्क्याऽऽह—**तत्रेति** ॥ १७ ॥

**आ० भा०—तज्ज्ञानं स्तौति—यस्येति। यस्त्वीषद्बध्यते स ईषदहंकारी च ॥ १७ ॥**

**आ० ज०**—अवश्यं चैतदेवं यावतोत्तरश्लोके स्वात्मानमकारणं जानतः स्तुतिः क्रियते। अन्यथा सहायस्य कारणत्वं जानतः स्तुतिः क्रियेतेति भावेनाह—**तदिति**। स्वात्मनो निष्क्रियत्वज्ञानम्। ननु निरहंकारस्यापि इंद्रादेर्वृत्रवधादिनेषत्बंधो दृश्यते तत्कथमेतदित्यत आह—**यस्त्विति**। इयं च कल्पना वक्तुराप्तत्वादिना युज्यते ॥ १७ ॥

**रा० भा०—परमपुरुषकर्तृत्वानुसंधानेन यस्य भावः कर्तृत्वविषयो मनोवृत्तिविशेषो नाहंकृतो नाहमभिमानकृतः। अहं करोमीति ज्ञानं यस्य न विद्यत इत्यर्थः। बुद्धिर्यस्य न लिप्यते अस्मिन्कर्मणि मम कर्तृत्वाभावादेतत्फलं न मया संबध्यते न च मदीयमिदं कर्मेति यस्य बुद्धिर्जायते इत्यर्थः। स इमाँल्लोकान् युद्धे हत्वापि तान् न निहन्ति न केवलं भीष्मादीनित्यर्थः। ततस्तेन युद्धाख्येन कर्मणा न निबध्यते तत्फलं नानुभवतीत्यर्थः ॥ १७ ॥**

**अ० टी०**—अथ गुरूपदेशकृतबुद्धेर्मदाज्ञयाऽवश्यकर्तव्यत्वेन मदिच्छया जायमानत्वेन चाहंकाररहितस्य कर्मफलाभावं कैमुतिकन्यायेन प्रदर्शयन्नाह—**यस्येति**। अहंकृतः अहं कर्तेत्येतादृशो मिथ्याऽभिनिवेशरूपो भावो यस्य नास्ति। किंच यस्य बुद्धिर्मदिच्छया ज्ञातसुखदुःखफलेषु कृतकर्मजज्ञाने न लिप्यते, न सज्जते स इमाँल्लोकानासुरान् मदिच्छया हत्वापि लोकैर्हन्तृत्वेन परिदृश्यमानोऽपि न हन्ति किंतु मदिच्छयैव हन्ति अतएव तेन कर्मणा न निबध्यते बन्धनं न प्राप्नोतीत्यर्थः। यत्र विपरीतकर्मबन्धनाभावस्तत्र विहितकर्मणा मत्सेवादिप्रतिबन्धकफलाप्रतिबन्धे किं वाच्यमितिभावः ॥ १७ ॥

**नी० टी०**—द्वितीयं प्रयोजनमाह—**यस्येति**। यस्य प्रमातुर्भावः प्रत्ययमात्रस्वरूप आत्मा नाहंकृतः अहमिव कृतोऽहंकारतादात्म्यं प्रापितोऽहंकृतस्तथा न। यस्य बुद्धिर्न लिप्यते आत्मभावेन रंजिता न भवति यस्य बुद्धेर्व्यतिरिक्तमात्मानं पश्यतो बुद्धिधर्माः कर्तृत्वादयो नात्मनि प्रतीयंते इति कर्त्रात्मवादितार्किकनिरासः। यस्य च आत्मधर्माश्चैतन्यादयो बुद्धौ न संसृज्यंत इति बुद्धिमेव चेतनां वदतो बौद्धस्य निरासः। चिदचितोरन्योन्यस्मिन्नन्योन्यधर्माध्यासो बाध्यत इति दुःखादिसंसर्गनिषेधेन भोक्तृत्वाभावो दर्शितः।हत्वाऽपि स इमाँल्लोकान्न हंति न निबध्यते इति तु स्तुतिमात्रं कर्तृत्वस्यैव बाधेन हंतृत्वायोगात्। दग्धपटवत्कर्तृत्वानुवृत्तावपि हननक्रियायां प्रवर्तकस्य रागद्वेषादेरभावाच्च। एतेनात्मनस्तात्विकमकर्तृत्वं भावयता कृतं कर्माताात्विककर्तृत्वाभिमाननिमित्तं स्वफलं प्रस्तोतुं नार्हतीति दर्शितं। न हि रज्जुसर्पे रज्जुबुद्धिं कृत्वा प्रहरतः सर्पक्षोभजं दंशनादिफलं भवति। सर्पे तु तथाकुर्वतस्तद्भवत्येव तद्वदिदमपि ज्ञेयम् ॥ १७ ॥

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ॥**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥**

**शां० भा०**—अथेदानीं कर्मणा प्रवर्तकमुच्यते—ज्ञानं ज्ञायतेऽनेनेति सर्वविषयमविशेषेणोच्यते तथा ज्ञेयं ज्ञातव्यं तदपि सामान्येनैव सर्वमुच्यते। तथा परिज्ञातोपाधिलक्षणोऽविद्याकल्पितो भोक्ता, इत्येतत्त्रयमेषामविशेषेण सर्वकर्मणां प्रवर्तिका त्रिविधा त्रिप्रकारा कर्मचोदना। ज्ञानादीनां हि त्रयाणां संनिपाते हानोपादानादिप्रयोजनः सर्वकर्मारम्भः स्यात्ततः पंचभिरधिष्ठानादिभिरारब्धं वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यत इत्येतदुच्यते। करणं क्रियतेऽनेनेति बाह्यं श्रोत्रादि, अन्तस्थं बुद्ध्यादि कर्मेप्सिततमं कर्तुः क्रियया व्याप्यमानं, कर्ता करणानां व्यापारयितोपाधिलक्षण इति त्रिविधस्त्रिप्रकारः कर्मसंग्रहः संगृह्यतेऽस्मिन्निति संग्रहः कर्मणः संग्रहः कर्मसंग्रहः। कर्मेषु हि त्रिषु समवैति तेनायं त्रिविधः कर्मसंग्रहः ॥ १८ ॥

**शां० आ०**—शास्त्रार्थोपसंहारानन्तर्यमथेत्युक्तमिदानीमिति प्रवर्तकोपदेशापेक्षावस्थोक्ता। कर्मणां येषु विदुषां नाधिकारोऽविदुषां चाधिकारस्तेषामित्यर्थः। ज्ञानशब्दस्य करणव्युत्पत्त्याज्ञानमात्रार्थत्वमाह—**ज्ञानमिति**। ज्ञेयशब्दस्यापि तद्वदेव ज्ञातव्यमात्रार्थत्वमाह—**तथेति**। उपाधिलक्षणत्वं तत्प्रधानत्वमुपहितत्वं तस्यावस्तुत्वार्थमविद्याकल्पितविशेषणम्। एतदेव त्रयं सर्वकर्मप्रवर्तकमित्याह—**इत्येतदिति**। सर्वकर्मणां प्रवर्तकमित्यध्याहर्तव्यम्। चोदनेति क्रियायाः प्रवर्तकं वचनमितिभाष्यानुसारेण चोदनाशब्दार्थमाह—**प्रवर्तिकेति**। सर्वकर्मणामिति पूर्वेण संबन्धः, त्रैविध्यं ज्ञानादिना प्रागुक्तं, कर्मणां चोदनेति विग्रहः। तेषां सर्वकर्मप्रवर्तकत्वमनुभवेन साधयति—**ज्ञानादीनामिति**। हानोपादानादीत्यादिपदेनोपेक्षा विवक्षिता। करणमित्यादेस्तात्पर्यमाह—**तत इति**। ज्ञानादीनां प्रवर्तकत्वादित्यर्थः। उक्तेऽर्थे श्लोकभागमवतारयति—**इत्येतदिति**। बाह्यमन्तस्थं च द्विविधं करणं करणव्युत्पत्त्या कथयति—**करणमिति**। उक्तलक्षणं कर्मैव स्फुटयति—**कर्तुरिति**। स्वतन्त्रो हि कर्ता स्वातन्त्र्यं च कारकाप्रयोज्यस्य तत्प्रयोक्तृत्वमित्याह—**कर्तेति**। कथमुक्ते त्रिविधे कर्म संगृह्यते तत्राऽऽह—**कर्मेति**। कर्मणो हि प्रसिद्धं कारकाश्रयत्वमिति भावः ॥ १८ ॥

**आ० भा०**—एवं तर्हि न पुरुषमपेक्ष्य विधिः। अकर्तृत्वादित्यत आह—ज्ञानमिति। त्रिविधा कर्मचोदना एतत्त्रिविधमपेक्ष्य कर्मविधिरिति त्रिविधेत्युच्यते। कारणानि संक्षिप्याह—करणमिति। कर्मसंग्रहः कर्मकारणसंग्रहः। अधिष्ठानादिः कारण एवांतर्भूतः। तथा ह्यृग्वेदखिलेषु। "ज्ञानं ज्ञेयं ज्ञानिनं च ह्यपेक्ष्य विधिरुत्थितः॥ करणं चैव कर्ता च कर्मकारणसंग्रह" इति। अकर्तृत्वेऽपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति। ईश्वराधीनत्वेऽपि विधिद्वारा नियतस्तेनैव। यदि चेच्छादिर्जायते तर्हि कारितमेवेश्वरेण। फलं च नियतम्। वस्तुतोऽकर्तृत्वेऽपि आभिमानिकं कर्तृत्वं तस्यैव। स्वातंत्र्यं च जडमपेक्ष्यैवेति न प्रवृत्तिविधिवैयर्थ्यम्। सर्वं चैतदनुभवोक्तप्रमाणसिद्धमिति न पृथक् प्रमाणमुच्यते ॥ १८ ॥

**आ० ज०**—यदि न जीवस्य कारणत्वं कथं तर्हि तज्ज्ञानादेरुत्तरवाक्ये कर्मणां मूलकारणत्वमुच्यते। ज्ञानादित्रयं कर्मणां प्रवर्त्तकमितीत्याशंक्य तस्यार्थांतरं विवक्षुस्तन्निवर्त्यामाशंकामाह—**एवंतर्हीति**। यदि जीवो न कर्मणां कारणमित्यर्थः। विधिःश्रौतः स्मार्तश्च। न प्रवर्तेत ततश्च तद्वैयर्थ्यप्रसंगइतिशेषः। एवंतर्हीत्युक्तस्यैव विवरणम्। **अकर्तृत्वादीति**। जीवस्य घटवदितिशेषः। ननु ज्ञानादिरूपेण कर्मचोदनायास्त्रैविध्यमयुक्तं। अनुपयुक्तं च कथमुच्यते नियोक्तुः प्रेरणं हि विधिः नच तज्ज्ञानादित्रयरूपम्। नचानेनोक्तशंकानिवृत्तिरित्यतआह—**त्रिविधेति**। स्पष्टप्रतीत्यर्थोऽनुवादः इत्यत्रेतिशेषः। एतत्ज्ञानादिकम्। कर्मविधिः प्रवर्तते जीवंप्रतीतिशेषः। इतिशब्दो हेतौ। त्रिविधेत्युच्यते कर्मचोदना निमित्तनैमित्तिकभावेनाभेदोपचारइत्यर्थः। कर्मकारणानामुक्तत्वात्किमिदं पुनरुच्यतइत्यतआह—**कारणानीति**। तर्हि कर्मसंग्रह इति कथं कारणसंग्रह इति वक्तव्यत्वादित्यतआह—**कर्मेति**। कर्मशब्देन तत्कारणानि लक्ष्यंतइत्यर्थः। यदि पंचानां कारणानामयं संग्रहस्तर्हि कस्य कुत्रांतर्भावइत्यतआह—**अधिष्ठानादीति**। आदिपदेन दैवपदोक्तमदृष्टं गृह्यते। कांस्यपात्र्या भुंक्ते दैवेन कृतमन्यथेत्यादिवत्साधकतमत्वेन विवक्षितत्वात्। विवक्षातः कारकाणि भवंतीति वचनात्। न चादिपदेन चेष्टायाः संग्रहः। तत्र कारकांतर्भावस्यैवौचित्यात् कर्मेति पृथग्ग्रहणाच्च। न च कर्मादृष्टम्। कर्म चेष्टेत्यन्यत्र व्याख्यातत्वात्। "कर्तुरीप्सिततमं कर्म" इति कश्चित्।

तदसत्। पंचसु कारणेषु तस्याग्रहीतत्वात्। श्लोकार्थे श्रुतिसंमतिं चाह—**तथा हीति**। कर्मेत्यावर्तनीयम्। तत्रैकं व्यस्तम् परं समस्तम्। ननु ज्ञानं ज्ञेयमित्यनेन कथमुक्तशंकानिरास इत्यतआह—**अकर्तृत्वेऽपीति**। अपराधीनकर्तृत्वाभावेऽपि जीवस्य न तं प्रति विधिवैयर्थ्यम्। कुत इति हेतोरित्यन्वयः विधिशब्देन तत् ज्ञानमुपलक्ष्यते इच्छेत्यनेन प्रयत्नोऽपि। उक्तकारणैरधिष्ठानादिभिः।अनेन ज्ञानं विधिविषयं चेच्छाप्रयत्नलक्षणमधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च परिज्ञाता सर्वज्ञ ईश्वरश्च सर्वप्रेरको जीवे सन्निहितोऽस्ति। अतस्तं प्रति कर्मचोदनेत्यर्थः सूचितो भवति।एतदुक्तं भवति।नापराधीनकर्तृत्वं विधिविषयत्वे प्रयोजकं येन जीवंप्रति कर्मविधिवैयर्थ्यं स्यात्। तथा सतीश्वरस्यापि विधिविषयत्वापातात्। किं तु यस्य स्वसंबंधितया विधिज्ञानं कर्म तत्फलं चोद्दिश्येच्छा तदनुगुणश्च प्रयत्नोऽधिष्ठानादिसन्निधानं कर्मसंबंधः फलभाक्त्वं चास्ति। तंप्रति कर्मविधयः प्रवर्तंते। अस्ति चेदं समस्त परमेश्वरप्रसादायत्तं जीव इति कथं न तं प्रति कर्मविधयः स्युरिति। एतत्संग्रहवाक्यमुत्तरवाक्यैर्विव्रीयते। नन्वीश्वरश्चेत्प्रेरकोजीवशरीरेऽभ्युपगतस्तदा तत्प्रसादादेवेच्छाप्रयत्नयोरुत्पादनात्।किं तु विधिज्ञानमंगीक्रियत इत्यत आह—**ईश्वरेति**। इच्छति प्रयतते चेति शेषः। अनेन विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्येतद्विवृतं भवति। उक्तकारणैः कर्म भवतीत्युक्तम् तेनाधिष्ठानादीनां स्वव्यापारे स्वातंत्र्यं प्राप्तं तन्निरासार्थमाह—**यदि चेति**। ईश्वरेणैव कर्म अधिष्ठानादीनि निमित्तमात्राणि कृत्वा कारितं भवति। अत्र णिचं प्रयुंजानस्य स्वातंत्र्यं चेति वक्ष्यमाणाभिप्रायः। कर्मद्वारा पुरुषार्थो भवतीति पुरुषार्थसाधने कर्मणां प्राधान्यं प्राप्तमत आह—**फलं चेति**। ईश्वरेणैवेति वर्तते यद्वा यदि चेत्यादिना वाक्यद्वयेन विधिविषयतासिद्धये कर्मफलसंबंधस्य काकतालीयता निराक्रियते। इदं च नेश्वरमुक्तजडेषु विध्यविषयेष्वस्ति किं तु संसारिष्वेवेति भवति प्रयोजकम्। एवमेकं गीतोक्तं कारणमुक्त्वा भाष्यकारः कारणांतरं चाह—**वस्तुत इति**। वस्तुतः परमार्थतः। अभिमानिकमहंकारकारितं भ्रांतिप्रतीतम्। तस्य जीवस्यैवेत्यवधारणेनास्य जीवं प्रति विधिप्रवृत्तौ प्रयोजकत्वं समर्थयते। परमेश्वरकृतासु क्रियासु स्वस्य स्वातंत्र्यं मन्यमानस्यापराधिनो विधिबंधलक्षणो दंड इति भावः। प्रकारांतरमाह—**स्वातंत्र्यं चेति**। तस्येति वर्तते। स्यादिदंविधिप्रवृत्ति ( प्रवृत्तिविधि इतिपाठः कृष्णाचार्याणाम् ) वैयर्थ्यम् यदि जीवस्य क्रियास्वातन्त्र्यलक्षणं कर्तृत्वं सर्वथा न स्यात्। नचैवम्। ईश्वरायत्तस्य तस्यांगीकारात्। अपराधीनापेक्षया तदभावोक्तेः। न चैवं जडतौल्यमित्यत आह—**जडमपेक्ष्येति**। अधिकमिति शेषः। जडं हि तदा परकृतेन नोदनादिना क्रियावद्भवति। नत्वागंतुककारणमंतरेण स्वेच्छया जीवस्त्वनादिसिद्धया परमेश्वरप्रसादायत्तया सत्तातुल्यया क्रियाशक्त्या कर्तेति युक्तस्तं प्रति कर्मविधिरिति। नन्वेतत्सर्वं कुतः प्रमाणात्प्रतिपत्तव्यमित्यत आह—**सर्वं चेति**। अनुभवेनोक्तप्रमाणैश्च विधिज्ञाने सतीच्छोत्पत्तिरित्यादिकं अनुभवसिद्धम्। ईश्वरप्रसादादित्यादिकं तु यथानियुक्तोऽस्मीत्याद्युदाहृतागमासिद्धम्। पृथक् पुनः ॥ १८ ॥

**रा० भा०**—सर्वमिदमकर्तृत्वाद्यनुसंधानं सत्त्वगुणवृद्धचैव च भवतीति सत्त्वस्योपादेयताज्ञापनाय कर्मणि सत्त्वादिगुणकृतं वैषम्यं प्रपञ्चयिष्यन् कर्मचोदनाप्रकारं तावदाह—ज्ञानं कर्त्तव्यकर्मविषयं ज्ञानं ज्ञेयं च कर्तव्यं कर्म। परिज्ञाता तस्य बोद्धेति त्रिविधा कर्मचोदना बोधबोद्धव्यबोद्धृयुक्तो ज्योतिष्टोमादिकर्मविधिरित्यर्थः। तत्र बोद्धव्यरूपं कर्म त्रिविधं संगृह्यते करणं कर्म कर्तेति। करणं साधनभूतं द्रव्यादिकम्। कर्म योगादि। कर्त्तानुष्ठातेति ॥ १८ ॥

**अ० टी०**—किंच। कर्मप्रेरणमपि त्रिगुणात्मकं तत्फलं च त्रिगुणं त्रिगुणानामेव कर्तॄणां भवति, निर्गुणस्य च फलाननुसंधानेन मदाज्ञया करणात्तत्तत्फलानधिकारित्वादपि बन्धो नास्तीत्याह—**ज्ञानमिति**। ज्ञानं फलस्वरूपावबोधपूर्वकाऽऽत्माधीनत्वेनाऽवबोधः, ज्ञेयं फलसाधकं कर्म, परिज्ञाता ज्ञानज्ञेययोः स्वरूपज्ञस्तदाश्रयभूतो जीवः। एवं ज्ञानादित्रयमधिकृत्य कर्मचोदना कर्मप्रेरणा त्रिविधा। एवं करणं साधकं, कर्म तत्फलकक्रिया, कर्त्ता क्रियाप्रवृत्तिमान् इति अमुना प्रकारेण कर्मसंग्रहः कर्म संगृह्यतेऽस्मिन्निति कर्मसंग्रहः। करणादित्रयमपि कारकं, क्रियाश्रयात्मकः सोऽपि त्रिविधः। अनेन निर्गुणानधिकारित्वं निरूपितम् ॥ १८ ॥

**नी० टी०**—समाप्तः सात्विकत्यागोपपादनोपयोगी आत्मनोऽकर्तृत्वोपपादनप्रकारः अत्राह सांख्यः। यदुक्तं पंचैते तस्य हेतव इति यच्चोक्तं न हंतीति तन्मृष्यामहे न ह्यपरिणामी चेतनः परिस्पंदात्मकस्य कायिकादिभेदेन त्रिविधस्य कर्मणः कर्ता भवतीति वक्तुं युज्यते। यत्तु न निबध्यत इति भोक्तृत्वमुक्तमपि प्रत्याख्यातं

तन्नमृष्यामहे।नहि कुलालादयः स्वप्रयुक्ता एव घटादीन्निर्वर्तयंति किंतु भोक्तृपुरुषप्रयुक्ताः। अन्यथा भोक्तृणामभावे व्यर्थैव तत्प्रवृत्तिरित्यापतति । एवं प्रधानमात्रभूताः कर्त्रादयः पुरुषस्य भोगापवर्गसाधनप्रयुक्ताः सर्वाणि कर्माणि निर्वर्तयंति तस्मात्पुरुषस्य भोक्तृस्वभावत्वादकर्तृत्वानुसंधानपूर्वकमपि कृतं कर्म भोक्राऽवश्यमेव भोक्तव्यमिति सात्विकत्यागेऽपि कर्मालेपवचनमसंगतमिति । अत्र प्रतिविधत्ते ज्ञानं ज्ञेयमिति ज्ञानं ज्ञायते प्रकाश्यते वस्तुतत्त्वमनेनेति प्रत्यक्षादिप्रमाणजन्यो घटादिप्रकाशः स च वर्तमानोऽतीतो वा। ज्ञेयं बोधविषयो घटादिः । परिज्ञाता विषयी साभासधीरूपो यो भोक्तेत्युच्यते । एवं रूपप्रकारत्रयवती त्रिविधा कर्मणां चोदना । त्रयं समुचितं सत्कर्मणि प्रवर्तकमित्यर्थः । सत्यपि ज्ञेये ज्ञातरि वा ज्ञाने प्रवृत्त्यनुपपत्तेः ज्ञाने ज्ञातरि च सति देशकालव्यवहिते ज्ञेये प्रवृत्त्यनुपपत्तेः । सत्यपि संस्कारात्मके ज्ञाने ज्ञेये च सन्निहिते तथाऽपि सुषुप्तौ प्रमात्रभावात् प्रवृत्त्यदर्शनादेतत्त्रयं त्रिदंडविष्टं भवदन्योन्यापेक्षं सत् हानोपादानोपेक्षाबुद्धिरूपं कार्यं जनयित्वा हानाद्यनुकूले व्यापारे प्रवर्तयतीति कर्तृपदाभिधेयमित्यर्थः । चोदनेति कर्तरि नंद्यादिल्युप्रत्ययांतत्वेन चोदनाशब्दः कर्तृवाची । लिंगं त्वविवक्षितं लिंगमशिष्यं लोकाश्रयत्वाल्लिंगस्येति वा तथा करणमिंद्रियं । कर्म तेन यत्क्रियमाणं विषयग्रहणं कर्ता पूर्वोक्त एव परिज्ञाता एतत्त्रयं समुदितं सत् कर्मसंग्रहः कर्मण ईप्सिततमस्य भोगस्य संग्रहः संगृह्यतेऽस्मिन्निति संश्लेषस्थानं भोक्तेत्यर्थः । सत्यपि भोक्तरि करणे च क्रियां विना भोगासंभवात् क्रियायाश्चाश्रयं विना स्वरूपालाभादाश्रयस्य करणं विना भोक्तृत्वांगकर्तृत्वानुपपत्तेश्चैतत्त्रयं मिलितं सत् भोक्तेत्युच्यत इत्यर्थः । तथा च श्रुतिः।"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति इंद्रियं प्रसिद्धं। मन इत्यनेन बुद्धिरेव गृह्यते युक्तमिंद्रियद्वारा मतेर्भोगेन सह संबंधक्रिया । इंद्रियं च मनश्च युक्तं चेति विग्रहे इंद्रियमनोयुक्तमिति द्वंद्वैकवद्भावः । एतत्त्रयं भोक्ता आत्मेत्याहुर्मनीषिण इति श्रुत्यर्थः । एवं हि श्रुतिस्मृत्योर्व्याख्याने तयोर्मूलमूलिभावो युज्यते नान्यथा । तथा च कर्तृवत् भोक्तुरप्यनात्मगणपतितत्त्वाद्भोक्तृत्वं भोगकर्तृत्वमिति निर्वचनाद्यः कर्ता स एव भोक्तेति प्रतिपादनादहमकर्ताऽभोक्तेति चानुसंधानपूर्वकं कर्माणि कुर्वतः कर्तृत्वभोक्तृत्वकृतः कर्मलेपो नास्तीति सिद्धं । भाष्यस्य चायमेवार्थः येतु करणं क्रियायाः साधकतमं दशविधं बाह्यं मनोबुद्धिरूपमांतरं कर्म कर्तुरीप्सिततमं क्रियया व्याप्यमानमुत्पाद्यमाप्यं विकार्यं संस्कार्यं चेति चतुर्विधं । कर्ता कारकांतरप्रयोजकश्चिदचिद्ग्रंथिः । एतत्त्रयं कर्मसंग्रहः कर्माश्रयः कर्तेत्यर्थः । तथा ज्ञानं विषयप्रकाशनशक्तिः । ज्ञेयं विषयः । परिज्ञाता ज्ञानाश्रयो भोक्ता एतत्त्रयं कर्मणि प्रवर्तकमिति व्याचक्षते । तेषामप्यात्मा न कर्ता नापि सांख्यानामिव भोक्तृत्वेन प्रकृतेः प्रवर्तक इत्येवाशयः । तथापि क्रियया व्याप्यमानस्य वक्ष्यमाणसात्विकादिभेदानर्हस्य घटादिरूपस्य कर्मणः कर्तृकोटौ प्रवेशायोगः । तस्य क्रियाश्रयत्वमात्रविवक्षायां प्रकृते तत्कथनानुपयोगश्च स्पष्टः । तथाऽस्माकं तु घटादिव्यापकक्रियायाः कर्मशब्दवाच्यत्वं मुख्यं । कर्तृकोटिप्रवेशश्च क्रियाक्रियावतोर्धर्मधर्मिणोरभेदापेक्षया युज्यते । तथा ज्ञानं प्रकाशनःक्रियेति मते क्रियारूपेऽस्मिन् प्रवर्तकज्ञानांतरस्यापेक्षेति तत्रतत्रान्यस्यान्यस्यापेक्षेत्यनवस्था दुर्निवारा ॥ १८ ॥

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ॥**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥**

**शां० भा०**—अथेदानीं क्रियाकारकफलानां सर्वेषां गुणात्मकत्वात्सत्त्वरजस्तमोगुणभेदतस्त्रिविधो भेदो वक्तव्य इत्यारभ्यते—ज्ञानं कर्म च, कर्म क्रिया, न कारकं पारिभाषिकमीप्सिततमं कर्म, कर्ता च निर्वर्तकः क्रियाणां त्रिधैवावधारणं गुणव्यतिरिक्तजात्यन्तराभावप्रदर्शनार्थं गुणभेदतः सत्त्वादिभेदेनेत्यर्थः प्रोच्यते कथ्यते गुणसंख्याने कापिले शास्त्रे तदपि गुणसंख्यानं शास्त्रं गुणभोक्तृविषये

प्रमाणमेव परमार्थब्रह्मैकत्वविषये यद्यपि विरुध्यते । ते हि कापिला गुणगौणव्यापारनिरूपणेऽभियुक्ता इति तच्छास्त्रमपि वक्ष्यमाणार्थस्तुत्यर्थत्वेनोपादीयत इति न विरोधः । यथावद्यथान्यायं यथाशास्त्रं शृणु तान्यपि ज्ञानादीनि तद्भेदजातानि गुणभेदकृतानि शृणु वक्ष्यमाणेऽर्थे मनःसमाधिं कुर्वित्यर्थः ॥ १९ ॥

**शां० आ०**—अनन्तरश्लोकदशकतात्पर्यमाह—**अथेति** । ज्ञानादिप्रस्तावानन्तर्यमथशब्दार्थः । इदानीं प्रस्तुतज्ञानाद्यवान्तरभेदापेक्षायामित्यर्थः । तेषां गुणभेदात्त्रैविध्ये हेतुमाह—**गुणात्मकत्वादिति** । वक्तव्यो वक्ष्यमाणश्लोकनवकेनेति शेषः । एवं स्थिते प्रथममवान्तरभेदप्रतिज्ञा क्रियत इत्याह—**इत्यारभ्यत इति** । कर्तुरीप्सिततमं कर्मेति यत्परिभाष्यते तन्नात्र कर्मशब्दवाच्यमित्याह—**नेति** । गुणातिरेकेण विधान्तरं ज्ञानादिषु नेति निर्धारयितुमवधारणमित्याह—**गुणेति** । ज्ञानादीनां प्रत्येकं गुणभेदप्रयुक्ते त्रैविध्ये प्रमाणमाह—**प्रोच्यत इति** । ननु कापिलं पातञ्जलमित्यादि शास्त्रं विरुद्धार्थत्वादप्रमाणं कथमिह प्रमाणी क्रियते तत्राऽऽह—**तदपीति** । विषयविशेष विरोधेऽपि प्रकृतेऽर्थे प्रामाण्यमविरुद्धमित्यर्थः । यद्यपि कापिलादयो गुणवृत्तिविचारे गौणव्यापारस्य भोगादेर्निरूपणे च निपुणास्तथाऽपि कथं तदीयं शास्त्रमत्र प्रमाणीकृतमित्याशङ्क्याऽऽह—**ते हीति** । ज्ञानादिषु प्रत्येकमवान्तरभेदो वक्ष्यमाणोऽर्थस्तस्य तन्त्रान्तरेऽपि प्रसिद्धिकथनं स्तुतिस्तादर्थ्येन कापिलादिमतोपादानमिहोपयोगीत्यर्थः । तृतीयपादस्याविरुद्धार्थत्वं निगमयति—**नेति** । यथावदित्यादि व्याचष्टे—**यथान्यायमिति** ॥ १९ ॥

**आ० भा०**—पुनः साधनप्रथनाय गुणभेदानाह—ज्ञानमित्यादिना । गुणसंख्याने गुणगणनप्रकरणे ॥ १९ ॥

**आ० ज०**—ज्ञानं कर्मेत्यादेः प्रकृतोपयोगाप्रतीतेस्तं दर्शयन्नाह—**पुनरिति** । मोक्षसाधनम् प्रागपि गुणभेदानामुक्तत्वात्पुनरित्युक्तम् । गुणसंख्यानशब्देन कापिलं शास्त्रमुच्यत इतिभावेनाह—**गुणेति** । तच्च वैदिकमभिप्रेतम् ॥ १९ ॥

**रा० भा०**—कर्तव्यकर्मविषयं ज्ञानम् अनुष्ठीयमानं च कर्म तस्यानुष्ठाता च सत्वादिगुणभेदेन तथैव प्रोच्यते । गुणसंख्याने गुणकार्य्यगणने यथावत् शृणु । तान्यपि तानि गुणतो भिन्नानि ज्ञानादीनि यथावत् शृणु ॥ १९ ॥

**अ० टी०**—अथ ज्ञानादित्रयमपि त्रिगुणभेदेन प्रत्येकं त्रिविधमस्तीत्याह—**ज्ञानमिति** । ज्ञानं साधनं, कर्म क्रिया, कर्त्ता पुरुष एतत्त्रयमपि गुणभेदेन सात्त्विकादिभेदतस्त्रिधैव । गुणसंख्याने गुणाः कार्यभेदेन संख्यायन्ते निरूप्यन्ते गण्यन्ते वा अस्मिन्निति सांख्यशास्त्रे प्रोच्यन्ते तान्यपि तत्रोक्तानि यथावत् मदुक्तानि शृणु । सांख्यप्रोक्तानि तान्यपि शृण्वित्युक्त्या सप्तदशाऽध्याये स्वोक्तत्रैविध्यस्य निर्गुणाधिकारसंपादकानि कर्माणि भवन्ति नत्वेतानीति स्वरूपवैजात्यज्ञानार्थं श्रोतव्यानीतिज्ञापितम् ॥ १९ ॥

**नी० टी०**—पूर्वश्लोकोक्ते ज्ञानादिषट्के परिज्ञाता कर्ता चैक एवेति परिशिष्टाः पंच तेषां सर्वेषां प्राकृतत्वेन त्रिगुणात्मत्वे प्राप्ते ज्ञेयकरणयोर्जडयोर्घटकुठारकल्पयोः परिसंख्यार्थं त्रयाणामेव प्रत्येकं त्रिविधत्वं विवरीतुं प्रतिजानीते—**ज्ञानमिति** । ज्ञानं कर्म कर्ता चेति त्रयमेव गुणभेदतस्त्रिधा नतु ज्ञेयकरणे । गुणसंख्याने कापिले शास्त्रे यद्यपि तत्रैकस्यां प्रमदायां भर्तुः सुखं जायते तं प्रति तस्याः सत्त्वोद्भूतत्वात् । तामविंदतश्चैत्रस्य दुःखं जायते तं प्रति तस्या रजउद्भूतत्वात् । तस्यामेव सपत्न्या द्वेषस्तांप्रति तस्यास्तमउद्भूतत्वात् । प्रमदयैव सर्वे भावा व्याख्याता इति कापिलानां ज्ञेयकरणयोरपि त्रैविध्यं प्रसिद्धं । तथापि प्रमदादय एकस्यैव पुंसो निमित्तभेदेन प्रीतिदुःखद्वेषविषया अपि भवंतीति पूर्वोक्तव्यवस्थाया निर्मूलत्वात् । प्रीत्यादीनां कर्तृसमवायितया प्रतीयमानानामालंबनभूतायाः प्रमदायाः प्रीत्याद्यात्मकत्वं कल्पयितुं न शक्यत इति न भगवता तयोस्त्रिविधत्वं व्याख्यायते अक्षरार्थः स्पष्टः ॥ १९ ॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥

**शां० भा०**—ज्ञानस्य तु तावत्त्रिविधत्वमुच्यते—सर्वभूतेष्वव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेनैकं भावं वस्तु भावशब्दो वस्तुवाच्येकमात्मवस्त्वित्यर्थः । अव्ययं न व्येति स्वात्मना धर्मैर्वा कूटस्थनित्यमित्यर्थः । ईक्षते येन ज्ञानेन पश्यति तं च भावमविभक्तं प्रतिदेहं विभक्तेषु देहभेदेषु न विभक्तं तदात्मवस्तु व्योमवन्निरन्तरमित्यर्थः । तज्ज्ञानमद्वैतात्मदर्शनं सात्त्विकं सम्यग्दर्शनं विद्धीति। यानि द्वैतदर्शनान्यसम्यग्भूतानि राजसानि तामसानि चेति न साक्षात्संसारोच्छित्तये भवन्ति ॥२०॥

**शां० आ०**—ज्ञानादीनां प्रत्येकं त्रैविध्यं ज्ञातव्यं प्रतिज्ञाय ज्ञानत्रैविध्यार्थं श्लोकत्रयमवतारयति—**ज्ञानस्येति** । तत्र सात्त्विकं ज्ञानमुपन्यस्यति—**सर्वेति** । भूतानि कार्यकारणात्मकान्युपाधिजातानि । अद्वितीयमखण्डैकरसं प्रत्यगात्मभूतमबाधितं तत्त्वं ज्ञेयत्वेन विवक्षितमित्याह—**एकमिति** । विवक्षितमव्ययत्वं संक्षिपति—**कूटस्थेति** । प्रतिदेहमविभक्तमित्युक्तं व्यनक्ति—**विभक्तेष्विति** । तज्ज्ञानमित्यादि व्याकरोति—**अद्वैतेति** । द्वैतदर्शनान्यपि कानिचिद्भवन्ति सत्त्वनिर्वृत्तानि सम्यञ्चीत्याशङ्क्याऽऽह—**यानीति** । तेषामसम्यक्त्वे हेतुमाह—**राजसानीति** ॥ २० ॥

**आ० भा०**—एकं भावं विष्णुम् ॥ २० ॥

**आ० ज०**—एकं भावमिति सामान्येनोक्तं । कोसावेको भाव इत्याकांक्षायामाह—**एकमिति** ॥ २० ॥

**रा० भा०**—ब्राह्मणक्षत्रियब्रह्मचारिगृहस्थादिरूपेण विभक्तेषु सर्वेषु भूतेषु कर्माधिकारिषु येन ज्ञानेनैकमात्माख्यं भावं तत्राप्यविभक्तं ब्राह्मणत्वाद्यनेकाकारेष्वपि भूतेषु सितदीर्घादिविभागवत्सु ज्ञानाकारात्मनि विभागरहितम् । अव्ययं व्ययस्वभावेष्वपि ब्राह्मणादिशरीरेष्वव्ययम् । अविकृतं फलादिसङ्गानर्हं च कर्माधिकारवेलायामीक्षते तज्ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

**अ० टी०**—एवं कथनं प्रतिज्ञाय पूर्वं ज्ञानत्रैविध्यमाह । तत्र प्रथमं सात्त्विकत्वं ज्ञानस्याह—**सर्वभूतेष्विति** । येन ज्ञानेन सर्वेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु वैचित्र्यार्थं नानारूपैः परस्परं भिन्नेषु अविभक्तम् अनुस्यूतम् एकं भावं भगवत्क्रीडारूपम् अतएव अव्ययं निर्विकारम् ईक्षते आलोचनाऽऽत्मकतया पश्यति तज्ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

**नी० टी०**—एवं ज्ञानादित्रयस्य त्रैविध्यं वक्तुं प्रतिज्ञाय ज्ञानत्रैविध्यं तावदाह—**सर्वभूतेष्विति** । यथा कटककुंडलादिषु व्यावर्तमानेषु तत्त्वविदेकं कांचनमेवेदमिति पश्यति । एवं येन ज्ञानेन सर्वभूतेषु विभक्तेषु नानानामरूपभेदभिन्नेष्वव्ययमपरिणामिनमेकं भावं चिन्मात्ररूपमीक्षते सर्वं ब्रह्मैवेदमिति पश्यति तज्ज्ञानं सात्त्विकं विद्धि ऐकात्म्यज्ञानमेव सात्त्विकमित्यर्थः ॥ २० ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ॥
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥

**शां० भा०**—पृथक्त्वेनेति । पृथक्त्वेन तु भेदेन प्रतिशरीरमन्यत्वेन यज्ज्ञानं नानाभावान्भिन्नानात्मनः पृथग्विधान्पृथक्प्रकारान्भिन्नलक्षणानित्यर्थः । वेत्ति विजानाति यज्ज्ञानं सर्वेषु भूतेषु ज्ञानस्य कर्तृत्वासंभवाद्येन ज्ञानेन वेत्तीत्यर्थः । तज्ज्ञानं विद्धि राजसं रजोनिर्वृत्तम् ॥ २१ ॥

प्रतिदेहमन्यत्वेन भिन्नात्मनो येन ज्ञानेन जानाति तज्ज्ञानं राजसमिति व्याचष्टे—**भेदेनेति** । पृथक्त्वं पृथ-
**शां० आ०**—प्रतिदेहमन्यत्वेन भिन्नात्मनो येन ज्ञानेन जानाति हेतुहेतुमत्त्वेन विभागं विवक्षित्वाऽऽह—**भिन्नेति** । ज्ञानस्य ज्ञानकर्तृत्वमयुक्तमित्या-
ग्विधत्वं च पुनरुक्तमित्याशङ्क्य हेतुहेतुमत्त्वेन विभागं विवक्षित्वाऽऽह—**भिन्नेति** ।
शङ्क्याऽऽह—**येनेति** ॥ २१ ॥

**आ० भा०**—॥ २१ ॥

**आ० ज०**—॥ २१ ॥

**रा० भा०**—सर्वेषु भूतेषु ब्राह्मणादिषु ब्राह्मणाद्याकारपृथक्त्वेनात्माख्यानपि भावान् नाना-
भूतान् सितदीर्घादिपृथक्त्वेन च पृथग्विधान् फलादिसंयोगयोग्यान्कर्माधिकारवेलायां यत् ज्ञानं वेत्ति
तज्ज्ञानं राजसं विद्धि ॥ २१ ॥

**अ० टी०**—राजसमाह—**पृथक्त्वेनेति** । ज्ञानस्य सात्त्विकात्मकत्वाद्वक्ष्यमाणज्ञानस्य शब्दमात्रसाम्यज्ञा-
पनाय तुशब्दः । पृथक्त्वेन क्रीडामयैकराहित्येन तु नानाभावान् अनेकान् जीवान् पृथग्विधान् नानाभिलाषरू-
पान् सुखिदुःखीत्यादिपशुपक्षिमनुजतृणस्तंबादीन् सर्वेषु भूतेषु येन पश्यति तज्ज्ञानं राजसं विक्षिप्तमान-
सात्मकं विद्धि ॥ २१ ॥ यत्पृथक्त्वेन भिन्नत्वेन ज्ञानं तद्राजसमिति संबंधः । पृथ-

**नी० टी०**—भेदज्ञाने राजसत्वमाह—**पृथक्त्वेनेति** । सर्वेषु भूतेषु पांचभौतिकत्वेनाविशिष्टेषु नानाभावान् सुरनरतिर्यक्स्थावरत्वभेदेन नानात्वानि
क्त्वेनेत्येतद्विवृणोति सर्वेषु भूतेषु पांचभौतिकत्वेनाविशिष्टेषु नानाभावान् एकजातीयेष्वपि नरादिषु प्रत्येकं विभिन्नप्रकारान् यज्ज्ञानं वेत्ति विष-
बहुवचनमत्यंतभेदप्रदर्शनार्थं पृथग्विधान् एकजातीयेष्वपि नरादिषु प्रत्येकं विभिन्नप्रकारान् यज्ज्ञानं वेत्तीति करणे कर्तृत्वोपचारो बोध्यः ।
यीकरोतीति । येन ज्ञानेन वेत्तीति वक्तव्ये एधांसि पचंतीतिवत् यज्ज्ञानं वेत्तीति करणे कर्तृत्वोपचारो बोध्यः । इत्यनौपाधिकभेदपंचकज्ञानं कुतार्कि-
तेनात्मनां परस्परभेदस्तेषामीश्वराद्भेदस्तेभ्य ईश्वरादन्योन्यतश्च जडवर्गस्य भेद इत्यनौपाधिकभेदपंचकज्ञानं कुतार्कि-
काणां राजसमेवेत्यभिप्रायः ॥ २१ ॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहेतुकम् ॥
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

**शां० भा०**—यत्त्विति । यत्तु ज्ञानं कृत्स्नवत्समस्तवत्सर्वविषयमिवैकस्मिन्कार्ये देहे बहिर्वा प्रति-
मादौ सक्तमेतावानेवाऽऽत्मेश्वरो वा नातः परमस्तीति यथा नग्नक्षपणकादीनां शरीरानुवर्ती देहपरि-
माणो जीव ईश्वरो वा पाषाणदार्वादिमात्र इत्येवमेकस्मिन्कार्ये सक्तमहेतुकं हेतुवर्जितं निर्युक्तिकमत-
त्त्वार्थवद्यथाभूतोऽर्थस्तत्त्वार्थः सोऽस्य ज्ञेयभूतोऽस्तीति तत्त्वार्थवन्न तत्त्वार्थवदतत्त्वार्थवदहेतुकत्वादेवाल्पं
चाल्पविषयत्वादल्पफलत्वाद्वा तत्तामसमुदाहृतम् । तामसानां हि प्राणिनामविवेकिनामीदृशं ज्ञानं
दृश्यते ॥ २२ ॥ एकस्मिन्कार्ये ज्ञानस्य सक्तत्वमेव दृष्टान्तेन साधयति—**यथेत्या-**

**शां० आ०**—सक्तत्वमेव व्यनक्ति—**एतावानीति** । यन्निर्युक्तिकत्वं तदेव ज्ञानस्याऽऽभासत्वे कारणमित्याह—**अहेतुकत्वादिति** । स्वरूपतो विषयतश्चाऽऽभासत्वं फलतो
**दिना** । यन्निर्युक्तिकत्वं तदेव ज्ञानस्याऽऽभासत्वे कारणमित्यत्रानुभवं प्रमाणयति—**तामसानां इति** ॥ २२ ॥
वेत्याह—**अल्पेति** । तामसं ज्ञानमुक्तलक्षणमित्यत्रानुभवं प्रमाणयति—**तामसानां इति** ॥ २२ ॥

**आ० भा०**—॥ २२ ॥

**आ० ज०**—॥ २२ ॥

**रा० भा०**—यत्तु ज्ञानमेकस्मिन्कार्ये एकस्मिन्कर्तव्ये कर्मणि प्रेतभूतगणाद्याराधनरूपेऽत्यल्पफले
कृत्स्नफलवत्सक्तमहेतुकं वस्तुतस्त्वकृत्स्नफलवत्तया तथाविधसङ्गहेतुरहितम् । अतत्त्वार्थवत् पूर्ववदेवा-
त्मनि पृथक्त्वादियुक्ततया मिथ्याभूतार्थविषयम् । अत्यल्पफलं च प्रेताद्याराधनविषयत्वादल्पं च
तत् ज्ञानं तामसमुदाहृतम् ॥ २२ ॥

अ० टी०—मानसं ज्ञानमाह—यत्त्विति। यत् एकस्मिन् कार्ये भक्ते लीलास्वरूपे वा कृत्स्नवत् पूर्णवत् नतु सर्वलीलासामग्र्यादिविशिष्टाविर्भूतभगवदनुभवानन्दभगवद्रूपत्वेन सक्तम्, असक्तम्, अहैतुकं भगवदाकारत्वेन तत्स्मारकानन्दानुभवोपपत्तिरहितम्, अतत्त्वार्थवत् भगवदाविर्भावावियुक्तम् अल्पं परिच्छिन्नं स्वरूपतः फलतश्च तज्ज्ञानं तामसं निष्फलं विपरीतफलं वा उदाहृतम् ॥ २२ ॥

नी० टी०—यत्तु ज्ञानमेकस्मिन्कार्ये देहे प्रतिमादौ वा कृत्स्नवत्परिपूर्णवदेतावानेवात्मा ईश्वरो वेति सक्तमभिनिवेशयुक्तं। अहैतुकं निरुपपत्तिकं। अतत्त्वार्थवत् परमार्थावलंबनशून्यं। अल्पं तुच्छविषयत्वादल्पफलत्वाच्च। यदेवंभूतं ज्ञानं तत्तामसमुदाहृतम् ॥ २२ ॥

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ॥**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥**

शां० भा०—अथ कर्मणस्त्रैविध्यमुच्यते—नियतं नित्यं सङ्गरहितमासक्तिवर्जितमरागद्वेषतः कृतं रागप्रयुक्तेन द्वेषप्रयुक्तेन च कृतं रागद्वेषतः कृतं तद्विपरीतं कृतमरागद्वेषतः कृतमफलप्रेप्सुना फलं प्रेप्सतीति फलप्रेप्सुः फलतृष्णस्तद्विपरीतेनाफलप्रेप्सुना कर्त्रा कृतं कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

शां० आ०—त्रिविधं कर्म वक्तुमनन्तरश्लोकत्रयमित्याह—अथेति। तत्र सात्त्विकं कर्म निरूपयति—नियतमिति॥ २३॥

आ० भा०—॥ २३ ॥

आ० ज०—॥ २३ ॥

रा० भा०—एवं कर्तव्यकर्मविषयज्ञानस्याधिकारवेलायामधिकार्यंशेन गुणतस्त्रैविध्यमुक्त्वानुष्ठेयस्य कर्मणो गुणतस्त्रैविध्यमाह—नियतं स्ववर्णाश्रमोचितं सङ्गरहितं कर्तृत्वादिसङ्गरहितम्। अरागद्वेषतः कृतं कीर्तिरागादकीर्तिद्वेषाच्च न कृतम्। अदम्भेन कृतमित्यर्थः। अफलप्रेप्सुना अफलाभिसंधिना कार्यमित्येव कृतं यत् कर्म तत्सात्त्विकमुच्यते ॥ २३ ॥

अ० टी०—एवं ज्ञानस्वरूपमुक्त्वा त्रिविधकर्मरूपमाह—नियतमिति। नियतं नित्यं, संगरहितम् अज्ञानासक्तिरहितम्, अरागद्वेषतः कृतं संसारानुरागेण शत्रुमारणाद्यर्थं द्वेषेण रहितम्, अफलप्रेप्सुना फलानभिलाषेण भगवत्तोषहेतुत्वेन कृतं कर्म तत् सात्त्विकम् उच्यते ॥ २३ ॥

नी० टी०—अथ कर्मत्रैविध्यमाह—नियतमित्यादिना। नियतं नित्यं संगरहितमभिमानवर्जितं राग इष्टे प्रीतिर्द्वेषोऽनिष्टेऽप्रीतिस्ताभ्यां कृतमिष्टानिष्टप्राप्तिपरिहारार्थं कृतं रागद्वेषतः कृतं तदन्यदरागद्वेषतः कृतं निष्काममित्यर्थः। फल्गु च लीयते चेति फलं क्रियया प्राप्यमनात्मवस्तु तदन्यदफलमनागंतुकं परिपूर्णमविनाशि आत्मतत्त्वं तत्प्रेप्सुना कृतं विविदिषंति यज्ञेनेति श्रुत्या आत्मलाभार्थं यज्ञादेर्विनियोगात् तत्कर्म सात्विकमुच्यते ॥ २३ ॥

**यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ॥**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥**

शां० भा०—यत्त्विति। यत्तु कामेप्सुना फलप्रेप्सुनेत्यर्थः। कर्म साहंकारेण वा साहंकारेणेति न तत्त्वज्ञानापेक्षया किं तर्हि लौकिकश्रोत्रियनिरहंकारापेक्षया। यो हि परमार्थनिरहंकार आत्मवित्र तस्य कामेप्सुत्वबहुलायासकर्तृत्वप्राप्तिरस्ति। सात्त्विकस्यापि कर्मणोऽनात्मवित्साहंकारः

कर्ता किमुत राजसतामसयोः। लोकेऽनात्मविदपि श्रोत्रियो निरहंकार उच्यते निरहंकारोऽयं ब्राह्मण इति। तस्मात्तदपेक्षयैव साहंकारेण वेत्युक्तम्। पुनःशब्दः पादपूरणार्थः। क्रियते बहुलायासं कर्त्रा महताऽऽयासेन निर्वर्त्यते तत्कर्म राजसमुदाहृतम् ॥ २४ ॥

**शां० आ०**—राजसं कर्म निर्दिशति—**यत्त्विति**। फलप्रेप्सुना कर्त्रा यत्कर्म क्रियते तद्राजसमित्युत्तरत्र संबन्धः। तत्त्वज्ञानवता निरहंकारेण साहंकारेण त्वज्ञेन क्रियते कर्मेति विवक्षां वारयति—**साहंकारेणेति**। तत्त्वज्ञानवता निरहंकारेण कृतं कर्मापेक्ष्य साहंकारेणाज्ञेन कृतमेतत्कर्मेति न विवक्ष्यते चेत्तर्हि किमत्र विवक्षितमिति पृच्छति—**किं तर्हीति**। यो हि दुरितरहितः श्रोत्रियो लोकादनपेतस्तस्य यदहंकारवर्जितं कर्म तदपेक्षयेदं साहंकारेण कृतं कर्मेत्युक्तमित्याह—**लौकिकेति**। ननु तत्त्वज्ञानवतो निरहंकारस्य कर्मकर्तृत्वमपेक्ष्य साहंकारेणेत्यादि किं नेष्यते तत्राऽऽह—**यो हीति**। विशेषणान्तरवशादेव तत्त्वविदो निवारितत्वान्न तदपेक्षमिदं विशेषणमित्यर्थः। साहंकारस्यैव राजसे कर्मणि कर्तृत्वमित्येतत्कैमुतिकन्यायेन साधयति—**सात्त्विकस्येति**। नन्वात्मविदोऽन्यस्य निरहंकारत्वायोगात्कथं तदपेक्षया साहंकारेणेत्युक्तं तत्राऽऽह—**लोक इति** ॥ २४ ॥

**आ० भा०**—॥ २४ ॥

**आ० ज०**—॥ २४ ॥

**रा० भा०**—यत्तु पुनः कामेप्सुना फलप्रेप्सुना साहंकारेण वा। वाशब्दश्चार्थे। कर्तृत्वाभिमानयुक्तेन च बहुलायासं यत्कर्म क्रियते तद्राजसं बहुलायासमिदं कर्म मयैव क्रियत इत्येवंरूपाभिमानयुक्तेन यत्कर्म क्रियते तद्राजसमित्यर्थः ॥ २४ ॥

**अ० टी०**—राजसं कर्माह—**यत्त्विति**। यत् पुनः कर्म कामेप्सुना फलप्राप्त्यभिलाषेण वा, फलाभिलाषरहितेन साहंकारेण लोकेषु स्वमहत्त्वख्यापनाय पुनः बहुलाऽऽयासम् अतिक्लेशयुक्तं शारीरोपद्रवसहितं क्रियते तत् कर्म राजसमुदाहृतम् ॥ २४ ॥

**नी० टी०**—यत्तु कामेप्सुना फलार्थिना साहंकारेण यद्यपि सात्त्विकोऽप्यनात्मवित्साहंकारस्तथाप्यहमेव कर्मकुशलो महान् श्रोत्रिय इत्यभिमानोहंकारस्तद्वता साहंकारेण वाशब्दश्चार्थे क्रियते बहुलायासमतिश्रमकरं तत्कर्म राजसमुदाहृतम् ॥ २४ ॥

**अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ॥**
**मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥**

**शां० भा०**—अनुबन्धमिति। अनुबन्धं पश्चाद्भावि यद्वस्तु सोऽनुबन्ध उच्यते तं चानुबन्धं, क्षयं यस्मिन्कर्मणि क्रियमाणे शक्तिक्षयोऽर्थक्षयो वा स्यात्तं क्षयं, हिंसां प्राणिपीडामनपेक्ष्य च पौरुषं पुरुषकारं शक्नोमीदं कर्म समापयितुमित्येवमात्मसामर्थ्यम्, इत्येतान्यनुबन्धादीन्यनपेक्ष्य पौरुषान्तानि मोहादविवेकत आरभ्यते कर्म यत्तत्तामसं तमोनिर्वृत्तमुच्यते ॥ २५ ॥

**शां० आ०**—संप्रति तामसं कर्मोदाहरति—**अनुबन्धमित्यादीना** ॥ २५ ॥

**आ० भा०**—॥ २५ ॥

**आ० ज०**—॥ २५ ॥

**रा० भा०**—कृते कर्मण्यनुबद्ध्यमानं दुःखमनुबन्धः क्षयः कर्मणि क्रियमाणेऽर्थविनाशः। हिंसा तत्र प्राणिपीडा। पौरुषमात्मनः कर्मसमापनसामर्थ्यम्। एतान्यनवेक्ष्य अविमृश्य मोहात्परमपुरुषकर्तृत्वाज्ञानाद्यत्कर्म आरभ्यते तत्तामसमुच्यते ॥ २५ ॥

अ० टी०—तामसं कर्माह—अनुबन्धमिति । अनुबन्धम् अनु—कर्मकरणानन्तरं बन्धस्तज्जनितशुभाशुभफलरूपत्वं, क्षयं व्यर्थदेहात्मकमोक्षसाधनव्ययं, हिंसाम् आत्मनः संसारपातनरूपां, पौरुषं पुरुषार्थमोक्षं चकारेण धर्ममपि अनवेक्ष्य अपर्यालोच्य मोहात् स्वसुखभोगभ्रमात् कर्म तामसं विपरीतफलात्मकमुदाहृतम् ॥ २९ ॥

नी० टी०—अनुबध्यतेऽनेनेत्यनुबंधः फलं । क्षयं शक्तेरर्थानां च नाशं । हिंसां परपीडां । पौरुषं स्वसामर्थ्यं । अनपेक्ष्यानालोच्य केवलं मोहादविवेकतो यदारभ्यते कर्म तत्तामसमुदाहृतम् ॥ २९ ॥

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ॥**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥**

शां० भा०—मुक्तेति । मुक्तसङ्गो मुक्तः परित्यक्तः सङ्गो येन स मुक्तसङ्गोऽनहंवादी नाहंवदनशीलो धृत्युत्साहसमन्वितो धृतिर्धारणमुत्साह उद्यमस्ताभ्यां समन्वितः संयुक्तो धृत्युत्साहसमन्वितः, सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धावसिद्धौ च सिद्ध्यसिद्ध्योर्निर्विकारः केवलं शास्त्रप्रमाणप्रयुक्तो न फलरागादिनाऽयुक्तो यः स निर्विकार उच्यते । एवंभूतः कर्ता यः स सात्त्विक उच्यते ॥ २६ ॥

शां० आ०—इदानीं कर्तृत्रैविध्यं ब्रुवन्नादौ सात्त्विकं कर्तारं दर्शयति—मुक्तेति । सङ्गो नाम फलाभिसंधिर्वा कर्तृत्वाभिमानो वा, नाहंवदनशीलः कर्ताऽहमिति वदनशीलो न भवतीत्यर्थः, धारणं धैर्यम् । क्रियमाणस्य कर्मणो यदि फलानभिसंधिस्तर्हि नानुष्ठानविश्रम्भः संभवेदित्याशङ्क्याऽऽह—केवलमिति । फलरागादिनेत्यादिशब्देन कर्मरागो गृह्यते । अयुक्त इति च्छेदः॥२६॥

आ० भा०—॥ २६ ॥
आ० ज०—॥ २६ ॥

रा० भा०—मुक्तसङ्गः फलसङ्गरहितः अनहंवादी कर्तृत्वाभिमानरहितः धृत्युत्साहसमन्वितः आरब्धे कर्मणि यावत्कर्मसमाप्त्यवर्जनीयदुःखधारणं धृतिः । उत्साहः उद्युक्तचेतस्त्वम् । ताभ्यां समन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः युद्धादौ कर्मणि तदुपकरणभूतद्रव्यार्जनादिषु च सिद्ध्यसिद्ध्योरविकृतचित्तः । कर्ता सात्त्विक उच्यते ॥ २६ ॥

अ० टी०—कर्म निरूप्य कर्तारं त्रिविधमाह—मुक्तसंग इति । मुक्तसंगः त्यक्तासक्तिः, अनहंवादी साभिमानोक्तिशून्यः, धृत्युत्साहसमन्वितः धृतिर्धैर्यं दुःखादिसहनरूपम् उत्साहः उत्तमत्वज्ञानेनोद्यमस्ताभ्यां समन्वितो युक्तः, सिद्ध्यसिद्ध्योः कृतकर्मफलाफलयोर्निर्विकारः हर्षविषादरहितः । एतादृशः कर्ता सात्त्विक उच्यते ॥ २६ ॥

नी० टी०—कर्तृत्रैविध्यमाह—मुक्तेत्यादिना । मुक्तसंगस्त्यक्ताभिनिवेशः । अनहंवादी पूर्वोक्ताहंकारोक्तिरहितः । धृतिः धैर्यं । उत्साहः साधयिष्याम्येवेति बुद्धिनिश्चयः । ताभ्यां समन्वितः सिद्ध्यसिद्ध्योः कर्मण आरब्धस्येति शेषः । निर्विकारो हर्षविषादशून्यः कर्ता सात्त्विक उच्यते ॥ २६ ॥

**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ॥**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥**

शां० भा०—रागीति । रागी रागोऽस्यास्तीति रागी, कर्मफलप्रेप्सुः कर्मफलार्थी, लुब्धः परद्रव्येषु संजाततृष्णस्तीर्थादौ च स्वद्रव्यापरित्यागी, हिंसात्मकः परपीडास्वभावोऽशुचिर्बाह्यान्तःशौच-

वर्जितो हर्षशोकान्वित इष्टप्राप्तौ हर्षोऽनिष्टप्राप्ताविष्टवियोगे च शोकस्ताभ्यां हर्षशोकाभ्यामन्वितः संयुक्तस्तस्यैव च कर्मणः संपत्तिविपत्त्योर्हर्षशोकौ स्यातां ताभ्यां संयुक्तो यः कर्ता स राजसः परिकीर्तितः२७

शां० आ०—राजसं कर्तारं कथयति—**रागीति**। कर्मविषयो रागः कर्मफलप्रेप्सुरिति फलरागस्य पृथक्कथनात्। स्वाभिप्रायाप्रकटीकरणपूर्वकं परपीडनं परविच्छेदनं तेन स्वार्थपर इत्यर्थः ॥ २७ ॥

**आ० भा०—॥ २७ ॥**

आ० ज०—॥ २७ ॥

**रा० भा०—रागी यशोर्थी। कर्मफलप्रेप्सुः कर्मफलार्थी। लुब्धः कर्मापेक्षितद्रव्यव्ययस्वभावरहितः। हिंसात्मकः परान्पीडयित्वा तैः कर्म कुर्वाणः। अशुचिः कर्मापेक्षितशुद्धिरहितः। हर्षशोकान्वितः युद्धादौ कर्मणि विजयादिसिद्ध्यसिद्ध्योर्हर्षशोकान्वितः। कर्त्ता राजसः परिकीर्तितः॥ २७॥**

अ० टी०—राजसमाह—**रागीति**। रागी स्वसंबन्धित्वज्ञानभ्रमेण तदर्थप्रयत्नेन लौकिकाऽऽसक्तः, कर्मफलप्रेप्सुः कर्मफलाभिलाषप्रवृत्तिमान्, लुब्धः बहुफलाऽल्पकर्म श्रुतप्रामाण्यविधृतसर्वाभिलाषप्रवृत्तः, हिंसात्मकः परपीडनस्वभावः,अशुचिः स्नानाऽऽचमनादिशौचविहीनः, हर्षशोकान्वितः फलसिद्धौ हर्षः, असिद्धौ शोकस्ताभ्यामन्वित एतादृशः कर्त्ता राजसः विक्षिप्तस्वभावः परिकीर्तितः ॥ २७ ॥

नी० टी०—रागी विषयलोलुपः। अत एव कर्मणः फलं प्रेप्सतीति कर्मफलप्रेप्सुः। लुब्धः परद्रव्यादौ संजाततृष्णस्तीर्थादौ वा द्रव्यापरित्यागी। हिंसात्मकः परपीडाकरस्वभावः। अशुचिर्बाह्यांतःशौचवर्जित इष्टानिष्टप्राप्तौ हर्षशोकान्वितश्च यः कर्ता स राजसः परिकीर्तितः ॥ २७ ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ॥
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

**शां० भा०—अयुक्त इति। अयुक्तोऽसमाहितः प्राकृतोऽत्यन्तासंस्कृतबुद्धिर्बालसमः, स्तब्धो दण्डवन्न नमति कस्मैचित्, शठो मायावी शक्तिगूहनकारी, नैष्कृतिकः परवृत्तिच्छेदनपरोऽलसोऽप्रवृत्तिशीलः कर्तव्येष्वपि, विषादी सर्वदाऽवसन्नस्वभावो दीर्घसूत्री च कर्तव्यानां दीर्घप्रसारणो यदद्य श्वो वा कर्तव्यं तन्मासेनापि न करोति, यश्चैवंभूतः कर्ता स तामस उच्यते ॥ २८ ॥**

शां० आ०—दीर्घं सूत्रयितुं शीलमस्येति व्युत्पत्तिं गृहीत्वा विवक्षितमर्थमाह—**कर्तव्यानामिति**। एवं क्रियमाणे सत्यनिष्टमिदं कथंचिदापद्येत यदा पुनरेवं क्रियते तदा त्वनिष्टमेव संभावनोपनीतमिति चिन्तापरम्परया मन्थरप्रवृत्तिरित्यर्थः तदेव स्पष्टयति—**यदद्येति** ॥ २८ ॥

**आ० भा०—परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री। 'परेण यः कृतो दोषो दीर्घकालकृतोपि वा ॥ यस्तस्य सूचको दोषादीर्घसूत्री स उच्यते' इत्यभिधानात् ॥२८॥**

आ० ज०—दीर्घसूत्रित्वं कथं तामसत्वे हेतुरित्यतः सप्रमाणकं व्याचष्टे—**परेति**। दीर्घकालकृतं चिरातीतकालकृतम्। अनुचितं वचनायोग्यं परोपद्रवहेतुत्वात्। दोषान्मात्सर्यादेः ॥ २८ ॥

**रा० भा०—अयुक्तः शास्त्रीयकर्मायोग्यः। प्राकृतः अनधिगतविद्यः। स्तब्धः अनारम्भशीलः। शठः अभिचारादिकर्मरुचिः। नैकृतिकः वञ्चनपरः। अलसः आरब्धेष्वपि कर्मसु मन्दप्रवृत्तिः। विषादी अतिमात्रावसादशीलः। दीर्घसूत्री अभिचारादिकर्म कुर्वन्नितरेषु दीर्घकालवर्त्यनर्थपर्यालोचनशीलः। एवंभूतो यः कर्ता स तामसः ॥ २८॥**

अ० टी०—तामसमाह—अयुक्त इति । अयुक्तः पूर्वापरानुसंधानरहितः, प्राकृतः प्रकृतिजन्यसद्भावरहितः, स्तब्धः अनम्रः, शठो धूर्तः, नैकृतिकः सर्वावमानी कृतावमानी वा, अलसः अनुद्यमी, विषादी अकार्यशोचनस्वभावः, दीर्घसूत्री क्षणसाध्यकार्यस्य माससंपादनशील एतादृशः कर्त्ता तामस उच्यते ॥ २८ ॥

नी० टी०—अयुक्तोऽनवहितः । प्राकृतोऽत्यंतमसंस्कृतबुद्धिर्बालसमः । स्तब्धोदंडवन्न नमति कस्मैचित् । शठः शक्तिगूहनकारी । नैकृतिको वंचकः परावमानी वा । अलसः अप्रवृत्तिशीलः कर्तव्येष्वपि । विषादी सर्वदा अवसन्नस्वभावः । दीर्घसूत्री चिरकारी एकाहसाध्यं कार्यं मासेनापि न करोतीत्यर्थः । य एवंभूतः स कर्ता तामस उच्यते ॥ २८ ॥

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ॥**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥**

शां० भा०—बुद्धेर्भेदमिति । बुद्धेर्भेदं धृतेश्चैव भेदं गुणतः सत्त्वादिगुणतस्त्रिविधं शृण्विति सूत्रोपन्यासः । प्रोच्यमानं कथ्यमानमशेषेण निरवशेषतो यथावत्पृथक्त्वेन विवेकतो धनंजय । दिग्विजये मानुषं दैवं च प्रभूतं धनमजयत्तेनासौ धनंजयोऽर्जुनः ॥ २९ ॥

शां० आ०—ज्ञानादीनां प्रत्येकं त्रैविध्यमुक्त्वा वृत्तिमत्या बुद्धेरतद्‌वृत्तेश्च धृत्याख्यायास्त्रैविध्यं सूचयति—**बुद्धेरिति** । सूत्रविवरणं प्रतिजानिते—**प्रोच्यमानमिति** । अर्जुनस्य धनंजयत्वं व्युत्पादयति—**दिगिति** ॥ २९ ॥

आ० भा०—॥ २९ ॥
आ० ज०—॥ २९ ॥

रा० भा०—एवं कर्त्तव्यकर्मविषयज्ञाने कर्त्तव्ये च कर्मणि अनुष्ठातरि च गुणतस्त्रैविध्यमुक्तम् । इदानीं सर्वतत्त्वसर्वपुरुषार्थनिश्चयरूपाया बुद्धेर्धृतेश्च गुणतस्त्रैविध्यमाह—बुद्धिर्विवेकपूर्वकं निश्चयरूपं ज्ञानम् । धृतिरारब्धायाः क्रियायाः विघ्नोपनिपाते विधारणम् । तयोः सत्त्वादिगुणतस्त्रिविधभेदं पृथक्त्वेन प्रोच्यमानं यथावच्छृणु ॥ २९ ॥

अ० टी०—ज्ञानं ज्ञेयमित्यत्र ज्ञेयपरिज्ञात्रोश्चोल्लेखः कृतः सोऽत्र कर्तृत्रैविध्ये परिज्ञातुः प्रवेशः कर्मत्रैविध्ये च ज्ञेयस्य । करणस्य निरूपणार्थं बुद्धेर्धृतेश्च त्रैविध्ये प्रतिजानीते—**बुद्धेरिति** । बुद्धेरिन्द्रियात्मिकाया धृतेश्चैव गुणतस्त्रिविधं भेदं पृथक्त्वेन भिन्नत्वेन, मयेतिशेषः प्रोच्यमानम् अशेषेण हे धनञ्जय ! सर्वत्रोत्कर्षयुक्त ! शृणु ॥ २९ ॥

नी० टी०—बुद्धिधृती त्रैविध्येन व्याख्यातुमाह—बुद्धेरिति। तत्र बुद्धिविशिष्टश्चिदाभासः कर्ता ज्ञानं च प्रागुक्तं। अत्र तु केवला बुद्धिर्वृत्तिमती तदीयवृत्त्यंतरोपलक्षणार्थं तद्वृत्तिविशेषो धृतिश्च त्रैविध्येन कथ्यत इत्यर्थः ॥ २९ ॥

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ॥**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥**

शां० भा०—प्रवृत्तिं चेति । प्रवृत्तिं च प्रवृत्तिः प्रवर्तनं बन्धहेतुः कर्ममार्गः, निवृत्तिं च निवृत्तिमोक्षहेतुः संन्यासमार्गः, बन्धमोक्षसमानवाक्यत्वात्प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गावित्यवगम्यते । कार्याकार्ये विहितप्रतिषिद्धे कर्तव्याकर्तव्ये करणाकरणे इत्येतत्, कस्य देशकालाद्यपेक्षया दृष्टादृष्टार्थानां

कर्मणाम्। भयाभये बिभेत्यस्मादिति भयं तद्विपरीतमभयं भयं चाभयं च भयाभये दृष्टादृष्टविषययोर्भयाभययोः कारणे इत्यर्थः। बन्धं सहेतुकं मोक्षं च सहेतुकं या वेत्ति विजानाति बुद्धिः सा पार्थ सात्त्विकी। तत्र ज्ञानं बुद्धेर्वृत्तिर्बुद्धिस्तु वृत्तिमती। धृतिरपि वृत्तिविशेष एव बुद्धेः॥ ३०॥

**शां० आ०**—तत्राऽऽदौ सात्त्विकीं बुद्धिं निर्दिशति—**प्रवृत्तिं चेति**। प्रवृत्तिराचरणमात्रमनाचरणमात्रं च निवृत्तिरिति किं नेष्यते तत्राऽऽह—**बन्धेति**। यस्मिन्वाक्ये बन्धमोक्षावुच्येते तस्मिन्नेव प्रवृत्तिनिवृत्त्योरुक्तत्वात्कर्ममार्गस्य बन्धहेतुत्वान्मोक्षहेतुत्वाच्च संन्यासमार्गस्य तावेवात्र ग्राह्यावित्यर्थः। करणाकरणयोर्निर्विषयत्वायोगाद्विषयापेक्षामवतार्य योग्यं विषयं निर्दिशति—**कस्येति**। अनिष्टसाधनं भयमिष्टसाधनमभयमिति विभजते—**भयेति**। बन्धादिमात्रज्ञानस्य बुद्ध्यन्तरेऽपि संभवाद्विशेषणम्। ननु बुद्धिशब्दितस्य ज्ञानस्य प्रागेव त्रैविध्यप्रतिपादनात्किमिति बुद्धेरिदानीं त्रैविध्यं प्रतिज्ञाय व्युत्पाद्यते तत्राऽऽह—**ज्ञानमिति**। तर्हि ज्ञानेन गतत्वान्न पुनर्धृतिर्व्युत्पादनीयेत्याशङ्क्याऽऽह—**धृतिरपीति**। विशेषशब्देन ज्ञानाद्व्यावृत्तिरिष्टा॥ ३०॥

**आ० भा०**—॥ ३०॥

**आ० ज०**—॥ ३०॥

**रा० भा०**—प्रवृत्तिरभ्युदयसाधनभूतो धर्मः। निवृत्तिः मोक्षसाधनभूतो धर्मः। तावुभौ यथावस्थितौ या बुद्धिर्वेत्ति कार्य्याकार्य्ये सर्ववर्णानां प्रवृत्तिनिवृत्तिधर्मयोरन्यतरनिष्ठानां देशकालावस्थाविशेषेषु इदं कार्यमिदमकार्यमिति च या वेत्ति भयाभये शास्त्रातिवृत्तिर्भयस्थानं तदनुवृत्तिरभयस्थानं बन्धं मोक्षं च संसारयाथात्म्यं तद्विगमयाथात्म्यं च या वेत्ति सा सात्त्विकी बुद्धिः॥ ३०॥

**अ० टी०**—एवं सावधानं कृत्वा बुद्धित्रैविध्यमाह—**प्रवृत्तिमिति** त्रयेण। प्रवृत्तिं भगवदिङ्गितधर्मे, निवृत्तिं तदभावरूपे अधर्मे। कार्याकार्ये सत्परिपंथ्यभावे देशे भजनं कार्यम् अतथाभूते वा भजनातिरिक्तं सर्वमेवाकार्यम्। तथा भगवत्संबन्धरहितसंबन्धे भयं भगवद्विस्मरणात्मकमृत्युरूपं, तत्संबन्धिन्यभयं भयाभावं, बन्धं भगवत्सेवाज्ञाभावकर्मणि, मोक्षं सेवादिकर्मणि इति या बुद्धिर्वेत्ति जानाति, हे पार्थ तथाज्ञानयोग्य! सा बुद्धिः सात्त्विकी सत्त्वसंबन्धिनी ज्ञातव्येतिशेषः॥ ३०॥

**नी० टी०**—प्रवृत्तिनिवृत्ती शास्त्रविहितप्रतिषिद्धविषये यजेत स्वर्गकामो न सुरां पिबेदित्यादिरूपे। कार्यं कृतिसाध्यं स्वर्गादि। अकार्यं नित्यसिद्धं तेन नित्यानित्यवस्तुनी उक्ते। भयाभये कार्याकार्यनिमित्ते। बंधं मोक्षं च या वेत्ति यया वेत्तीति पूर्ववत् करणे कर्तृत्वोपचारः बुद्धिः सा पार्थ सात्विकी॥ ३०॥

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च॥**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी॥ ३१॥**

**शां० भा०**—**ययेति**। यया धर्मं शास्त्रचोदितमधर्मं च तत्प्रतिषिद्धं कार्यं चाकार्यमेव च पूर्वोक्ते एव कार्याकार्ये अयथावन्न यथावत्सर्वतो निर्णयेन न प्रजानाति बुद्धिः सा पार्थ राजसी॥ ३१॥

**शां० आ०**—कार्याकार्ययोर्धर्माधर्माभ्यां पौनरुक्त्यं परिहरति—**पूर्वोक्त इति**। पूर्वश्लोके कार्याकार्यशब्दाभ्यां दृष्टादृष्टार्थानां कर्मणां करणाकरणे निर्दिष्टे तयोरेवात्रापि ग्रहान् धर्माधर्माभ्यामपूर्वपर्यायाभ्यां गतार्थतेत्यर्थः। या सा बुद्धिर्यया बुद्ध्या बोद्धा निर्णयेन न जानातीत्यर्थः॥ ३१॥

**आ० भा०**—यथार्थत्वानियमाभावे राजस्याः। अन्यथा तामस्याः। भेदाभावात्॥ ३१॥

**आ० ज०**—यया धर्ममधर्मं चेति राजस्या बुद्धेर्धर्मादिविषयायाः अयथार्थज्ञानहेतुत्वमुच्यत इत्यन्यथाप्रतीतिनिरासार्थमाह—**यथार्थत्वेति**। अयथावत्प्रजानातीत्यस्य यथार्थज्ञानजननियमाभावे तात्पर्यमित्यर्थः। प्रतीत एवार्थः किं न स्यादित्यत आह—**अन्यथेति**। राजस्या इति षष्ठ्यंतमनुवर्तते। तामस्या इति पंचमी। भेदाभावाद्भेदाभावप्रसंगात्॥ ३१॥

रा० भा०—यया पूर्वोक्तं द्विविधं धर्मं तद्विपरीतं च तन्निष्ठानां देशकालावस्थादिषु कार्यं चाकार्यं च यथावन्न जानाति सा राजसी बुद्धिः ॥ ३१ ॥

अ० टी०—राजसीमाह—ययेति। यया बुद्धया धर्मं भगवदिच्छारूपम्, अधर्मम् अनिच्छात्मकं कार्यं भगवद्भजनम्, अकार्यं तदतिरिक्तं कर्म, अयथावत् संदिग्धम् अन्यथा वा प्रजानाति, हे पार्थ! सा बुद्धिः राजसी ॥ ३१ ॥

नी० टी०—अयथावत् संदेहास्पदत्वेन। स्पष्टमन्यत् ॥ ३१ ॥

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ॥
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥

शां० भा०—अधर्ममिति। अधर्मं प्रतिषिद्धं धर्मं विहितमिति या मन्यते जानाति तमसाऽऽवृता सती सर्वार्थान्सर्वानेव ज्ञेयपदार्थान्विपरीतांश्च विपरीतानेव विजानाति बुद्धिः सा पार्थ तामसी ३२

शां० आ०—धर्मशब्दो नपुंसकलिङ्गोऽपीत्यभिप्रेत्य धर्ममित्युक्तम्। तमसाऽऽवृताऽविवेकेन वेष्टितेत्यर्थः। कार्याकार्यादीनुक्तानुक्तांश्च संग्रहीतुं सर्वार्थानित्युक्तं तद्व्याचष्टे—सर्वानेवेति। विपरीतांश्चेति चकारमवधारणे गृहीत्वा विपरीतानेवेत्युक्तम् ३२

आ० भा०—॥ ३२ ॥

आ० ज०—॥ ३२ ॥

रा० भा०—तामसी तु बुद्धिः तमसावृता सती सर्वार्थान् विपरीतान्मन्यते अधर्मं धर्मं धर्मं चाधर्मं सन्तं चार्थम् असन्तम् असन्तं चार्थं सन्तं परं च तत्त्वमपरम् अपरं च तत्त्वं परम् एवं सर्वं विपरीतं मन्यत इत्यर्थः ॥ ३२ ॥

अ० टी०—तामसीमाह—अधर्ममिति। या तमसा अज्ञानेनाऽऽवृता सती अधर्मं भगवदिच्छाऽननुरूपम् अकर्तव्यं धर्मं फलदातृ कर्तव्यम् इति मन्यते, च पुनः सर्वार्थान् अकार्यकार्याऽभयभयादीन् विपरीतान् मन्यते, हे पार्थ! सा बुद्धिस्तामसी मन्तव्येत्यर्थः ॥ ३२ ॥

नी० टी०—अधर्ममिति। विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः ॥ ३२ ॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ॥
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

शां० भा०—धृत्येति। धृत्या ययाऽव्यभिचारिण्येति व्यवहितेन संबन्धः, धारयते किं मनःप्राणेन्द्रियक्रिया मनश्च प्राणाश्चेन्द्रियाणि च मनःप्राणेन्द्रियाणि तेषां क्रियाश्चेष्टास्ता उच्छास्त्रमार्गप्रवृत्तेर्धारयति। धृत्या हि धार्यमाणा उच्छास्त्रविषया न भवन्ति। योगेन समाधिनाऽव्यभिचारिण्या नित्यसमाध्यनुगतयेत्यर्थः। एतदुक्तं भवत्यव्यभिचारिण्या धृत्या मनःप्राणेन्द्रियक्रिया धारयमाणो योगेन धारयतीति। यैवंलक्षणा धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

शां० आ०—इदानीं धृतित्रैविध्यं व्युत्पिपादयिषुरादौ सात्त्विकीं धृतिं व्युत्पादयति—धृत्येति। निर्दिष्टानां चेष्टानां कथं धृत्या धारणं तत्राऽऽह—ता इति। तदेवानुभवेन साधयति—धृत्या हीति। ध्रियतेऽनयेति धृतिर्यत्नविशेषस्तया धृत्या धार्यमाणा यथोपदिष्टाश्चेष्टाः शास्त्रमतिक्रम्य नार्थान्तरावगाहिन्यो भवन्तीत्यर्थः। धृतिमेव समाध्यविनाभूतत्वेन विशिनष्टि—योगेनेति। ननु धृतेर्नियमेन समाध्यनुगतत्वं कथमुक्तक्रियाधारणोपयोगीत्याशङ्क्याऽऽह—एतदिति। उक्तक्रिया धारयमाणो

योगेन ब्रह्मणि समाधानेनैकाग्र्येणाव्यभिचारिण्याऽविनाभूतया धृत्या धारयत्यन्यथा तदविनाभावाभवे नियमेन तद्धारणा-सिद्धेरित्यर्थः ॥ ३३ ॥

**आ० भा०**—॥ ३३ ॥

आ० ज०—॥ ३३ ॥

**रा० भा०—यया धृत्या योगेनाव्यभिचारिण्या मनःप्राणेन्द्रियाणां क्रियाः पुरुषो धारयते। योगो मोक्षसाधनभूतं भगवदुपासनं योगेन प्रयोजनभूतेनाव्यभिचारिण्या योगोद्देशेन प्रवृत्तास्तत्साध-नभूता मनःप्रभृतीनां क्रियाः। यया धृत्या धारयते सा सात्त्विकीत्यर्थः ॥ ३३ ॥**

**अ० टी०**—अथ धृतेस्त्रैविध्यमाह—धृत्येति। यया अव्यभिचारिण्या विषयान्तराऽभिलाषरहितया धृत्या, योगेन सर्वतो मनःसंगनिवृत्तिपूर्वकभगवदेकपरचित्तेन मनःप्राणेन्द्रियक्रियाः मनसश्चाञ्चल्यरूपाः, प्राणस्य क्षुदुद्बोधरूपाः, इन्द्रियाणां विषयाभिलाषरूपाः, क्रियाः धारयते नियच्छति, हे पार्थ! सा धृतिः सात्त्विकी उच्यत इत्यर्थः ॥ ३३ ॥

**नी० टी०**—यया धृत्या अव्यभिचारिण्या समाध्यनुगतया मनःप्राणेन्द्रियाणां क्रियाश्चेष्टाः संकल्पं श्वासा-प्रश्वासौ शब्दादिग्रहणं च योगेन चित्तवृत्तिनिरोधेन ऐकाग्र्येण वा संयत्तास्तास्तथैव निरोधावस्थायामैकाग्र्याव-स्थायां वा धारयते चिरमवस्थापयति सा धृतिः पार्थ सात्विकी ॥ ३३ ॥

**यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ॥**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥**

**शां० भा०—ययेति। यया तु धर्मकामार्थान्धर्मश्च कामश्चार्थश्च धर्मकामार्थास्तान्धर्मकामार्था-न्धृत्या यया धारयते मनसि नित्यकर्तव्यरूपानवधारयते हेऽर्जुन! प्रसङ्गेन यस्य यस्य धर्मादेर्धा-रणप्रसङ्गस्तेन तेन प्रसङ्गेन फलाकाङ्क्षी च भवति यः पुरुषस्तस्य धृतिर्या सा पार्थ! राजसी ॥३४॥**

**शां० आ०**—राजसीं धृतिं दर्शयति—**यया त्विति**। तेषां धारणप्रकारमभिनयति—**मनसीति**। फलाकाङ्क्षीति कस्य विशेषणं तत्राऽऽह—**यः पुरुष इति** ॥ ३४ ॥

**आ० भा०**—॥ ३४ ॥

आ० ज०—॥ ३४ ॥

**रा० भा०—फलाकाङ्क्षी पुरुषः प्रकृष्टसङ्गेन धर्मकामार्थान् यया धृत्या धारयते सा राजसी। धर्मकामार्थशब्देन तत्साधनभूता मनःप्राणेन्द्रियक्रिया लक्ष्यन्ते। फलाकाङ्क्षीत्यत्रापि फलशब्देन राजसत्वात् धर्मकामार्था एव विवक्षिताः अतो धर्मकामार्थापेक्षया मनःप्रभृतीनां क्रियाः यया धृत्या धारयते सा राजसीत्युक्तं भवति ॥ ३४ ॥**

**अ० टी०**—राजसीमाह—**ययेति**। तु पुनः, हे अर्जुन! नाम्नैव मुक्त्यधिकारिन्! यया धृत्या फलाकाङ्क्षी फलाभिलाषयुक्तः सन् प्रसंगेन फलप्रसंगेन नतु मद्भजनौपयिकत्वेन धर्मार्थकामान् धारयते पोषयति तद्बुद्ध्युक्त-साधनैः हे पार्थ! सा धृतिः राजसी रजःसंबन्धिस्वभोगादिरूपफला उच्यत इत्यर्थः ॥ ३४ ॥

**नी० टी०**—यया धृत्या धर्मादीन् धारयतेऽनुरोध्यतया निश्चिनोति प्रसंगेन धर्मादेः संबंधेन फलाकांक्षी च भवति पुरुषो धृतिः सा पार्थ राजसी ॥ ३४ ॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ॥
न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ॥ ३५ ॥

**शां० भा०**—ययेति । यया स्वप्नं निद्रां भयं त्रासं शोकं विषादमवसादं विषण्णतां मदं विषयसेवामात्मनो बहु मन्यमानो मत्त इव मदमेव च मनसि नित्यमेव कर्तव्यरूपतया कुर्वन्न विमुञ्चति धारयत्येव दुर्मेधा कुत्सितमेधाः पुरुषो यस्तस्य धृतिर्या सा तामसी मता ॥ ३५ ॥

**शां० आ०**—तामसीं धृतिं व्याचष्टे—**ययेति** । शोकं प्रियवियोगनिमित्तं संतापं विषण्णतामिन्द्रियाणां ग्लानिं विषयसेवा कुमार्गप्रवृत्तेरुपलक्षणमुक्तं स्वप्नादिमदान्तं सर्वमेव कर्तव्यतयाऽऽत्मनो बहु मन्यमानो मनसि नित्यमेव कुर्वन्दुर्मेधा न विमुञ्चति किं तु धारयत्येवेति योजना ॥ ३५ ॥

**आ० भा०**—॥ ३५ ॥

**आ० ज०**—॥ ३५ ॥

**रा० भा०**—यया धृत्या स्वप्नं निद्रां मदं विषयानुभवजनितं मदं स्वप्नमदावुद्दिश्य प्रवृत्ता मनःप्राणादीनां क्रिया दुर्मेधा न विमुञ्चति धारयति । भयशोकविषादशब्दाश्च भयशोकादिदायिविषयपरास्तत्साधनभूताश्च मनःप्राणादिक्रियाः यया धारयते सा धृतिस्तामसी ॥ ३५ ॥

**अ० टी०**— तामसीमाह—**ययेति** । दुर्मेधाः दुर्बुद्धिः यया आग्रहरूपया स्वप्नं निद्रां मोहरूपां, भयं भगवदिच्छाऽज्ञानेन शत्रुचौरादिभ्यो मृत्युतो वा, शोकं भगवत्कृतार्थस्यासमीचीनज्ञानेन चिन्तनं, विषादं सखेदं, मदं स्वाज्ञानरूपम् एवकारेण मांसादिभक्षणं च न विमुञ्चति विशेषेण सदोषत्वज्ञानाभावेनापि करणम् एवं या न त्यजति हे पार्थ ! सा धृतिस्तामसी निष्फलेत्यर्थः ॥ ३५ ॥

**नी० टी०**—स्वप्नं निद्रां । भयं त्रासं । शोकं प्रसिद्धं । विषादं विषण्णतां । मदमशास्त्रीयविषयसेवयाचित्तस्य विवशत्वं । एतान्न विमुंचति धारयत्येव यया धृत्या सा धृतिः पार्थ तामसी[1] ॥ ३५ ॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ॥
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

**शां० भा०**—गुणभेदेन क्रियाणां कारकाणां च त्रिधा भेद उक्तोऽथेदानीं फलस्य च सुखस्य त्रिधा भेद उच्यते—सुखं त्विदानीं त्रिविधं शृणु समाधानं कुर्वित्येतन्मे मम भरतर्षभ । अभ्यासात्परिचयादावृत्ते रमते रतिं प्रतिपद्यते यत्र यस्मिन्सुखानुभवे दुःखान्तं च दुःखावसानं दुःखोपशमं च निगच्छति निश्चयेन प्राप्नोति ॥ ३६ ॥

**शां० आ०**—वृत्तमनूद्यानन्तरश्लोकतात्पर्यमाह—**गुणेत्यादिना** । क्रियाकारकाणां गुणतस्त्रैविध्योक्त्यनन्तरं फलस्य सुखस्य त्रैविध्योक्त्यवसरे सतीत्याह—**इदानीमिति** । हेयोपादेयभेदार्थं त्रैविध्यं समाधानमैकाग्र्यं मम वचनादिति शेषः । यत्रेत्युभयत्र संबध्यते । तत्त्रिविधं सुखमिति पूर्वेण संबन्धः ॥ ३६ ॥

**आ० भा०**—॥ ३६ ॥

**आ० ज०**—॥ ३६ ॥

**रा० भा०**—पूर्वोक्ताः सर्वे ज्ञानकर्मकर्त्रादयो यच्छेषभूताः तच्च सुखं गुणतस्त्रिविधम् इदानीं

---

१ सा पार्थ तामसीति पाठः ।

शृणु। यस्मिन् सुखे चिरकालाभ्यासात् क्रमेण निरतिशयां रतिं प्राप्नोति दुःखान्तं च निगच्छति निखिलस्य सांसारिकस्य दुःखस्यान्तं निगच्छति ॥ ३६ ॥

अ० टी०—एवं धृतित्रैविध्यमुक्त्वा तस्याः सुखफलात्मकत्वात् सुखत्रैविध्यकथनं प्रतिजानीते—**सुखमिति।** इदानीं धृतिज्ञानानन्तरं सुखं पुनस्त्रिविधं, हे भरतर्षभ ! सुखश्रवणयोग्य! मे मत्तः शृणु। एवं प्रतिज्ञाय तत्त्रैविध्यमाह—**अभ्यासादिति।** अभ्यासात् निरन्तरानुशीलनाद् यत्र यस्मिन् रमते आनन्दानुभवं प्राप्नोति नत्वाऽऽपाततो विषयसुख इव क्षणमात्रानुभवमाप्नोति, च पुनः यदनुशीलने दुःखान्तं संसारान्तं नितरां गच्छति॥ ३६

नी० टी०—गुणभेदेन क्रियाणां कारकाणां च त्रैविध्यमुक्तं तत्फलस्य सुखस्य त्रैविध्यमाह—**सुखं त्विस्यादिना।** अभ्यासात्पौनःपुन्येन सेवनात् यत्र सात्त्विके राजसे तामसे वा सुखे रमते रतिं प्राप्नोति। यया रत्या दुःखस्य पुत्रशोकादेरप्यंतमवसानं निगच्छति निश्चयेन प्राप्नोति। तत्सुखं त्रिविधं शृणु यदात्वयमप्यर्थः सात्विकसुखस्यैव लक्षणार्थस्तदा यत्र समाधिसुखे अभ्यासाद्रमते नतु विषयसुख इव रागात् दुःखांतं मोक्षं च निगच्छतीत्यर्थः ॥ ३६ ॥

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ॥**
**तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥**

**शां० भा०**—यदिति। यत्तत्सुखमग्रे पूर्वं प्रथमसंनिपाते ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासपूर्वकत्वाद्विषमिव दुःखात्मकं भवति, परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखममृतोपमं तत्सुखं सात्त्विकं प्रोक्तं विद्वद्भिरात्मनो बुद्धिरात्मबुद्धिरात्मबुद्धेः प्रसादो नैर्मल्यं सलिलवत्स्वच्छता ततो जातमात्मबुद्धिप्रसादजमात्मविषया वाऽऽत्मालम्बना वा बुद्धिरात्मबुद्धिस्तत्प्रसादप्रकर्षाद्वा जातमित्येतत्तस्मात्सात्त्विकं तत् ॥ ३७ ॥

**शां० आ०**—तत्र सात्त्विकं सुखमादेयत्वेन दर्शयति—**यत्तदिति।** प्रथमसंनिपातं विभजते—**ज्ञानेति।** कुतस्तस्य दुःखात्मकत्वं तत्राऽऽह—**अत्यन्तेति।** दुःखात्मकत्वे दृष्टान्तमाह—**विषमिवेति।** ज्ञानादिपरिपाकावस्था परिणामस्तस्मिन्सति ततो जातमिति योजना। तत्रैव हेत्वन्तरमाह—**आत्मन इति।** आत्मबुद्धिशब्दस्यार्थान्तरमाह—**आत्मविषयेति।** अन्तःकरणनैर्मल्याद्वा सम्यग्ज्ञानप्रकर्षाद्वा जातत्वादिति तच्छब्दार्थः ॥ ३७ ॥

**आ० भा०**—॥ ३७ ॥
आ० ज०—॥ ३७ ॥

**रा० भा०**—तदेव विशिनष्टि—**यत्तत्सुखम्** अग्रे योगोपक्रमवेलायां बह्वायाससाध्यत्वाद्विविक्तस्वरूपस्याननुभूतत्वाच्च विषमिव दुःखमिव भवति परिणामेऽमृतोपमं परिणामे विपाके अभ्यासबलेन विविक्तस्वरूपाविर्भावे अमृतोपमं भवति तच्चात्मबुद्धिप्रसादजम् आत्मविषया बुद्धिरात्मबुद्धिस्तस्याः निवृत्तसकलेतरविषयत्वं प्रसादः निवृत्तसकलेतरविषयबुद्ध्या विविक्तस्वभावात्मानुभवजनितं सुखम् अमृतोपमं भवति तत्सुखं सात्त्विकं प्रोक्तम् ॥ ३७ ॥

अ० टी०—किंच। यत्तत् वक्तुमशक्यमनुभवैकवेद्यम् अग्रे प्रथमं विषमिव लौकिकसुखपरित्यागे जीवितहरणवत् कटुतया परिभाति परिणामे फलपरिपाकदशायाम् अमृतोपमम् अतिमधुरं मोक्षतुल्यं वा, आत्मबुद्धिप्रसादजम् आत्मसंबन्धिनी मदंशसंबन्धिनी या बुद्धिस्तत्प्रसादो नाम रजस्तमोजविकारराहित्येन शुद्धत्वं तज्जं तत्सुखं सात्त्विकं सत्त्वसंबन्धजं प्रोक्तं तज्ज्ञैरितिशेषः ॥ ३७ ॥

नी० टी०—यत्तत्प्रसिद्धं सर्वप्राणिप्रेमास्पदं अग्रे समारंभकाले मनः प्राणेंद्रियस्पंदनिरोधेन यज्ञे संज्ञप्यमानस्य पशोरिव जायमानं । विषमिवातितीव्रवेदनाकरं । परिणामे सात्विक्या धृत्या निरुद्धासु मनआदिक्रियासु अमृतोपममत्याह्लादकरं । आत्मनः स्वस्यैव बुद्धेः प्रसादो नैर्मल्यं रजस्तमोमलराहित्यं तस्मादाविर्भूतं न तु विषयसंगजं निद्रालस्यादिजं वा तत्सुखं सात्विकं प्रोक्तम् ॥ ३७ ॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ॥
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

**शां० भा०—विषयेति । विषयेन्द्रियसंयोगाद्यत्तत्सुखं जायतेऽग्रे प्रथमक्षणेऽमृतोपमममृतसमं परिणामे विषमिव बलवीर्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वादधर्मतज्जनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगविपरिणामान्ते विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥**

शां० आ०—राजसं सुखं हेयत्वाय कथयति—**विषयेति** । बलं संघातसामर्थ्यं, वीर्यं पराक्रमकृतं यशः, रूपं शरीरसौन्दर्यं, प्रज्ञा श्रुतार्थग्रहणसामर्थ्यं, मेधा गृहीतार्थस्याविस्मरणेन धारणशक्तिः, धनं गोहिरण्यादि, उत्साहस्तु कार्ये प्रत्युपक्रमादिः, एतेषां नाशकत्वाद्वैषयिकं सुखं विषसममित्यर्थः । तत्रैव हेत्वन्तरमाह—**अधर्मेति** ॥ ३८ ॥

**आ० भा०—॥ ३८ ॥**

आ० ज०—॥ ३८ ॥

**रा० भा०—अग्रेऽनुभववेलायां विषयेन्द्रियसंयोगाद्यत्तदमृतमिव भवति परिणामे विपाके विषयाणां सुखतानिमित्तक्षुधादौ निवृत्ते तस्य च सुखस्य निरयादिनिमित्तत्वाद्विषमिव पीतं भवति तत्सुखं राजसं स्मृतम् ॥ ३८ ॥**

अ० टी०—राजसमाह—**विषयेन्द्रियेति** । विषयाणाम् इन्द्रियाणां च संयोगात् तत् प्रसिद्धं स्रग्गन्धवस्त्राऽऽभरणस्त्रीसंगादिरूपं भगवत्संबन्धरहितसुखम् अग्रे प्रथमम् आपाततः अमृतोपमम् अतिमिष्टतमं परिणामे फलदशायां विषमिव भगवद्विस्मृतिकारकत्वेन जीवहरणैकस्वभावं तत्सुखं राजसं स्मृतं प्रसिद्धमित्यर्थः ॥ ३८ ॥

नी० टी०—राजसं सुखमाह—**विषयेति** । अग्रे भोगकाले परिणामे विषमिव वियोगकाले इहामुत्र च दुःखप्रदत्वात् ॥ ३८ ॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ॥
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

**शां० भा०—यदग्रे चेति । यदग्रे चानुबन्धे चावसानोत्तरकाले सुखं मोहनं मोहकरमात्मनो निद्रालस्यप्रमादोत्थं निद्रा चाऽऽलस्यं च प्रमादश्चेत्येतेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥**

शां० आ०—तामसं सुखं त्यागार्थमेवोदाहरति—**यदग्रे चेति** । अनुबन्धशब्दार्थमाह—**अवसानेति** । मोहनं मोहकरम् । तदुत्पत्तिहेतुमाह—**निद्रेति** ॥ ३९ ॥

**आ० भा०—॥ ३९ ॥**

आ० ज०—॥ ३९ ॥

**रा० भा०—यत्सुखमग्रे चानुबन्धे चानुभववेलायां विपाके चात्मनो मोहनं मोहहेतुर्भवति मोहोऽत्र यथावस्थितवस्त्वप्रकाशोऽभिमतः निद्रालस्यप्रमादोत्थं निद्रालस्यप्रमादजनितं निद्रादयो ह्यनु-**

भववेलायामपि मोहहेतवः निद्राया मोहहेतुत्वं स्पष्टम् आलस्यमिन्द्रियव्यापारमान्द्यम् इन्द्रियव्यापारमान्द्ये च ज्ञानमान्द्यं भवत्येव प्रमादः कृत्यानवधानरूप इति तत्रापि ज्ञानमान्द्यं भवति ततश्च तयोरपि मोहहेतुत्वं तत्सुखं तामसमुदाहृतम् अतो मुमुक्षुणा रजस्तमसी अभिभूय सत्त्वमेवोपादेयमित्युक्तं भवति ॥ ३९ ॥

अ० टी०—तामसमाह—यदग्र इति। यत् अग्रे प्रथमं च पुनः अनुबन्धे पश्चात् परिणामदशायां च निद्राऽऽलस्यप्रमादोत्थं निद्रा इन्द्रियापटुत्वेन सुखदुःखाभावात्मकानन्ददशात्मिका, आलस्यं क्रियाऽकरणेन शैथिल्येन स्थितिः, सुखाभिमानः प्रमादः कर्त्तव्यपूजाध्ययनकर्मानवधाने तूष्णींस्थितिरूपाज्ञानस्यानन्दभ्रमः। एतेभ्य उत्थितम् आत्मनो जीवस्य मोहनं मोहकारकं भगवद्विस्मरणकारकं सुखं तामसं निष्फलं समुदाहृतं सम्यक्प्रकारेण उदाहृतं ज्ञानिभिरितिशेषः ॥ ३९ ॥

नी० टी०—अग्रे आरंभे अनुबंधे परिणामे मोहनं मोहकरं आत्मनो बुद्धेः यतो निद्रादिजम् ॥ ३९ ॥

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ॥
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥

शां० भा०—अथेदानीं प्रकरणोपसंहारार्थः श्लोक आरभ्यते—न तदस्ति तन्नास्ति पृथिव्यां वा मनुष्यादि सत्त्वं प्राणिजातमन्यद्वाऽप्राणिजातं दिवि देवेषु वा पुनः सत्त्वं प्रकृतिजैः प्रकृतितो जातैरेभिस्त्रिभिर्गुणैः सत्त्वादिभिर्मुक्तं परित्यक्तं यत्स्याद्भवेन्न तदस्तीति पूर्वेण संबन्धः ॥ ४० ॥

शां० आ०—क्रियाकारकफलात्मनः संसारस्य प्रत्येकं सात्त्विकादिभेदेन त्रैविध्यमुक्त्वा संसारान्तर्भूतमेव किंचिद्गुणत्रयास्पृष्टमपि क्वचिद्भविष्यतीत्याशङ्कयाऽऽह—अथेति। संसारस्य सर्वस्यैव गुणत्रयस्पृष्टत्वं प्रकरणम्। अन्यद्वाऽप्राणीत्यत्राप्राणिशब्देन प्रसिद्ध्या स्थावरादि गृह्यते ॥ ४० ॥

आ० भा०—॥ ४० ॥

आ० ज०—॥ ४० ॥

रा० भा०—पृथिव्यां मनुष्यादिषु दिवि देवेषु वा प्रकृतिसंसृष्टेषु ब्रह्मादिस्थावरान्तेषु प्रकृतिजैरेभिस्त्रिभिर्गुणैर्मुक्तं यत्सत्त्वं प्राणिजातं न तदस्ति ॥ ४० ॥

अ० टी०—एवं यज्ञादीनां सर्वेषां त्रिविधरूपमुक्त्वाप्यथ स्वसंबन्धातिरिक्तस्य त्रिगुणात्मकतां सर्वस्याह—न तदस्तीति। एभिः प्रकृतिजैः प्रकृत्युद्भवैस्त्रिभिः सात्त्विकादिभिर्गुणैर्मुक्तं रहितं सत्त्वं प्राणिजातं यत्स्थावरादिकमन्यद्वा पृथिव्यां मनुष्येषु, वाशब्देन नागादिलोकेषु च दिवि देवलोके वा पुनः देवेषु स्यात् तत् नास्तीत्यर्थः। सात्त्विकादिष्वपि त्रैविध्यमस्तीति वापुनरित्यनेन केवलसात्त्विकत्वाद्देवेष्वसंभावितत्वादस्त्येवेति निर्धारितम् ॥ ४० ॥

नी० टी०—प्रकरणार्थमुपसंहरत्यनुक्तमपि संगृह्णन्—न तदस्तीति। सत्त्वं प्राणिजातं इदमुपलक्षणं जडस्यापि सर्वस्य त्रिगुणविकारत्वात् प्रकृतिजैर्जन्मांतरीयधर्माधर्मसंस्कारजैर्मायाप्रभवैर्वा शेषं स्पष्टम् ॥ ४० ॥

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ॥
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

**शां० भा०**—सर्वः संसारः क्रियाकारकफललक्षणः सत्त्वरजस्तमोगुणात्मकोऽविद्यापरिकल्पितः समूलोऽनर्थ उक्तो वृक्षरूपकल्पनया चोर्ध्वमूलमित्यादिना, तं चासङ्गशस्त्रेण दृढेन छित्त्वा ततः पदं तत्परिमार्गितव्यमिति चोक्तं, तत्र च सर्वस्य त्रिगुणात्मकत्वात्संसारकारणनिवृत्त्यनुपपत्तौ प्राप्तायां यथा तन्निवृत्तिः स्यात्तथा वक्तव्यं, सर्वश्च गीताशास्त्रार्थ उपसंहर्तव्य एतावानेव च सर्वो वेदस्मृत्यर्थः पुरुषार्थमिच्छद्भिरनुष्ठेय इत्येवमर्थं च ब्राह्मणक्षत्रियविशामित्यादिरारभ्यते—ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशस्तेषां ब्राह्मणक्षत्रियाविशां शूद्राणां च शूद्राणामसमासकरणमेकजातित्वे सति वेदेऽनाधिकारात्, हे परंतप! कर्माणि प्रविभक्तानीतरेतरविभागेन व्यवस्थापितानि, केन स्वभावप्रभवैर्गुणैः स्वभाव ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका माया सा प्रभवो येषां गुणानां ते स्वभावप्रभवास्तैः। शमादीनि कर्माणि प्रविभक्तानि ब्राह्मणादीनाम्। अथवा ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणं, तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तमउपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः प्रशान्त्यैश्वर्येहामूढतास्वभावदर्शनाच्चतुर्णाम्। अथवा जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तः स्वभावः स प्रभवो येषां गुणानां ते स्वभावप्रभवा गुणाः। गुणप्रादुर्भावस्य निष्कारणत्वानुपपत्तेः स्वभावः कारणमिति कारणविशेषोपादानम्। एवं स्वभावप्रभवैः प्रकृतिप्रभवैः सत्त्वरजस्तमोभिर्गुणैः स्वकार्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि। ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणादीनां शमादीनि कर्माणि कथमुच्यते सत्वादिगुणप्रविभक्तानीति। नैष दोषः शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि न गुणानपेक्षयैवेति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानीत्युच्यन्ते॥ ४१॥

**शां० आ०**—प्रकरणार्थमुपसंहृत मनुवदति—**सर्व इति**। तस्यानेकात्मकत्वेन हेयत्वं सूचयति—**क्रियेति**। निर्गुणादात्मनो वैलक्षण्याच्च तस्य हेयतेत्याह—**सत्त्वेति**। अनर्थत्वाच्च तस्य त्याज्यत्वमनर्थत्वं चाविद्याकल्पितत्वेनावस्तुनो वस्तुवद्भानादित्याह—**अविद्येति**। न केवलमष्टादशे संसारो दर्शितः, किं तु पञ्चदशेऽपीत्याह—**वृक्षेति**। चकारादुक्तः संसार इत्यनुकृष्यते। संसारध्वस्तिसाधनं सम्यग्ज्ञानं च तत्रैवोक्तमित्याह—**असङ्गेति**। वृत्तमनूद्यानन्तरसंदर्भतात्पर्यमाह—**तत्र चेति**। उक्तो निविवर्तयिषितः संसारः सतिसप्तम्या परामृश्यते, सर्वो हि संसारो गुणत्रयात्मकः। न च गुणानां प्रकृत्यात्मकानां संसारकारणीभूतानां निवृत्तिर्युक्ता प्रकृतेर्नित्यत्वादित्याशङ्कायां स्वधर्मानुष्ठानात्तत्त्वज्ञानोत्पत्त्या गुणानामज्ञानात्मकानां निवृत्तिर्यथा भवति तथा स्वधर्मजातं वक्तव्यमित्युत्तरग्रन्थप्रवृत्तिरित्यर्थः। तत्तद्वर्णप्रयुक्तधर्मजातानुपदेशे चोपसंहारप्रकरणप्रकोपः स्यादित्याह—**सर्वश्चेति**। उपसंहृते गीताशास्त्रार्थे यद्यपि सर्वो वेदार्थः स्मृत्यर्थश्च सर्व उपसंहृतस्तथाऽपि मुमुक्षुभिरनुष्ठेयमस्ति वक्तव्यमवशिष्टमित्याशङ्क्याऽऽह—**एतावानिति**। अनुष्ठेयपरिमाणनिर्धारणवदुक्तशङ्कानिवर्तनं शास्त्रार्थोपसंहारश्चेत्येतदुभयं चकारार्थः। संप्रति वर्णचतुष्टयस्यानुष्ठेयं धर्मजातमसंकीर्णमिति सूत्रमुपन्यस्यति—**ब्राह्मणेति**। उपनयनसंस्कारवत्त्वे सति वेदाधिकारित्वं समानमिति त्रयाणां समासकरणम्। इतरेषामसमासे हेतुमाह—**शूद्राणामिति**। एकजातित्वमुपनयनवर्जितत्वम्। कर्मणामसंकीर्णत्वेन व्यवस्थापकं प्रश्नपूर्वकं प्रकटयति—**केनेत्यादिना**। स्वभावप्रभवैर्गुणैरित्यस्यार्थान्तरमाह—**अथ वेति**। उक्तव्यवस्थायां कार्यदर्शनं प्रमाणयति—**प्रशान्तीति**। स्वभावशब्दस्यार्थान्तरमाह—**अथ वेति**। किमिति गुणाभिव्यक्तेरुक्तवासनाधीनत्वं तत्राऽऽह—**गुणेति**। ननु नास्ति गुणप्रादुर्भावस्य निष्कारणत्वं प्रकृतिजैर्गुणैरिति प्रकृतेर्गुणकारणत्वाभिधानादत आह—**स्वभाव इति**। वासना कारणमिति गुणव्यक्तेर्निमित्तकारणत्वं विवक्षितं प्रकृतिस्तूपादानामिति भावः। उक्तमुपसंहरति—**एवमिति**। स्वभावप्रभवैः सत्त्वादिर्गुणैर्ब्राह्मणादीनां कर्माणि प्रविभक्तानीत्युक्तमाक्षिपति—**नन्विति**। शास्त्रस्य धर्मविभागहेतोः सत्त्वादिविशेषापेक्षयैव विभागज्ञापकत्वादुभयत्र विभागहेतुत्वोक्तिरविरुद्धेति परिहरति—**नैष दोष इति**॥ ४१॥

**आ० भा०**—॥ ४१॥

**आ० ज०**—॥ ४१॥

**शा० भा०**—"त्यागेनैकेन अमृतत्वमानशुः" इत्यादिषु मोक्षसाधनतया निर्दिष्टस्त्यागः संन्यास-
शब्दार्थादनन्यः स च क्रियमाणेष्वेव कर्मसु कर्तृत्वत्यागमूलः फलकर्मणोस्त्यागः कर्तृत्वत्यागश्च परमपु-
रुषे कर्तृत्वानुसंधानेनेत्युक्तम्। एतत्सर्वं सत्वगुणवृद्धिकार्यमिति सत्वोपादेयताज्ञापनाय सत्त्वरजस्तमसां
कार्यभेदाः प्रपञ्चिताः इदानीमेवंभूतस्य मोक्षसाधनतया क्रियमाणस्य कर्मणः परमपुरुषाराधनवेषतां
तथानुष्ठितस्य च कर्मणस्तत्प्राप्तिलक्षणं फलं प्रतिपादयितुं ब्राह्मणाद्यधिकारिणां स्वभावानुबन्धिस-
त्वादिगुणभेदभिन्नं वृत्त्या सह कर्त्तव्यकर्मस्वरूपमाह—ब्राह्मणक्षत्रियविशां स्वकीयो भावः स्वभावः
ब्राह्मणादिजन्महेतुभूतं प्राचीनकर्मेत्यर्थः। तत्प्रभवाः सत्त्वादयो गुणाः ब्राह्मणस्य स्वभावप्रभवो
रजस्तमोभिभवेनोद्भूतः सत्त्वगुणः। क्षत्रियस्य स्वभावप्रभवः सत्त्वतमसोरभिभवेनोद्भूतो रजोगुणः।
वैश्यस्य स्वभावप्रभवः सत्वरजोभिभवेनाल्पोद्रिक्तस्तमोगुणः शूद्रस्य स्वभावप्रभवस्तु रजःसत्त्वाभिभ-
वेनात्युद्रिक्तस्तमोगुणः एभिः स्वभावप्रभवैर्गुणैः सह प्रविभक्तानि कर्माणि शास्त्रैः प्रतिपादितानि
ब्राह्मणादय एवंगुणकास्तेषां चैतानि कर्माणि वृत्तयश्चैता इति हि विभज्य प्रतिपादयन्ति शास्त्राणि ४१

**अ० टी०**—नन्वेवं चेत्सर्वं त्रिगुणात्मकमेव तदा गुणात्मकस्य जीवस्य त्रिगुणात्मकबन्धकक्रियादिकरणा-
त्कथं मोक्ष इत्याशङ्क्य शास्त्रद्वारा जीवोद्धारं कर्तुं शास्त्रस्वरूपज्ञानार्थं प्रसंगादर्जुनाय गीतामाहात्म्यतः पूर्वोक्त-
मुपसंहरन् मोक्षप्रकरणमारभते—**ब्राह्मणेत्यादि**। यावदध्यायसमाप्ति। हे परन्तप परम् उत्कृष्टं तपो यस्ये-
त्यनेन श्रवणयोग्यतोक्ता। ब्राह्मणक्षत्रियविशां त्रैवर्णिकानां च पुनः शूद्राणां, वेदानधिकृतत्वाच्छूद्राणां भिन्न-
तया कथनम् स्वभावः स्वस्य मम यो भावः सात्त्विकादिभेदेन विचित्रदर्शनेच्छा तेन प्रभव उत्पत्तिर्येषां तैरेता-
दृशैर्गुणैः कर्माणि प्रविभक्तानि प्रकर्षेण विभागतः सात्विकादेर्विहितानीत्यर्थः॥ ४१॥

**नी० टी०**—एवं पंचदशे संसाराश्वत्थमसंगशस्त्रेण छित्त्वा परं पदं मार्गितव्यमित्युक्तं तत्रात्मनोऽसंगत्वोप-
पादनाय क्रियाकारकफललक्षणस्य कृत्स्नस्य संसारस्य त्रिगुणात्मकत्वमुक्तं। न ह्यात्मानात्मनोर्गुणातीतगुणात्म-
कयोः संगः संभवति न ह्याकाशांतर्वर्त्तिपृथिव्यादिगुणेन गंधादिनाऽऽकाशः संसृज्यते तद्वदित्युक्तं समाप्तः शा-
स्त्रार्थः। अथेदानीं सर्वगीताशास्त्रार्थमुपसंहर्तुमसंगशस्त्राद्युपायं च प्रदर्शयितुं प्रकरणांतरमारभते—**ब्राह्मणेत्यादिना।**
शूद्राणामसमासकरणं वेदानधिकारात् प्रविभक्तान्यसंकीर्णानि। तत्र हेतुमाह स्वभावप्रभवैर्गुणैः स्वभाव ईश्वरस्य
प्रकृतिस्त्रिगुणात्मिका सैव प्रभावो हेतुर्येषां गुणानां ते स्वभावप्रभवास्तैः। यद्वा ब्राह्मणस्वभावस्य सत्त्वगुण एव
प्रभवः शांतत्वात्। क्षत्रियस्वभावस्य सत्वोपसर्जनं रजः ईश्वरस्वभावत्वात्। वैश्यस्वभावस्य तमउपसर्जनं रजः
कृष्यादिस्वभावत्वात्। शूद्रस्वभावस्य रजउपसर्जनं तमः शुश्रूषास्वभावत्वात्। अथवा स्वभावः प्राग्भवीयः संस्का-
रस्तत्प्रभवैर्ननु जातिमात्रप्रभवैः पक्षिणामाकाशगमनवत्। अत एव जात्यंतरव्यावृत्तानां धर्माणां शमादिषु पाठो
न दृश्यते। नाहि शूद्राद्व्यावृत्तं त्रैवर्णिकानामध्ययनादिकं वा इतरद्वयाद्व्यावृत्तं ब्राह्मणानामध्यापनादिकं वेह पठ्यते
किंतु सर्वे सर्वजातीयानां साधारणा धर्माः शमादयो दृश्यंते। यथा हि द्रोणादिषु ब्राह्मणेष्वपि शौर्यादिकं
भरतादिषु क्षत्रियेष्वपि शमादिकं दृष्टं एवमितरत्र। तस्माद्यस्मिन्कस्मिंश्चिद्वर्णे शमादयो दृश्यंते स शूद्रोऽप्येतैर्ल-
क्षणैर्ब्राह्मण एव ज्ञातव्यः। यत्र च ब्राह्मणेऽपि शूद्रधर्मा दृश्यंते स शूद्र एव। तथा चारण्यके सर्पभूतं नहुषं
प्रति युधिष्ठिरवाक्यं 'सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा॥ दृश्यंते यत्र नागेंद्र स ब्राह्मण इति स्मृतः'
तथा 'यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः॥ यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत्' इति जातिधर्मास्तु
मनुना दर्शिताः। 'अध्यापनं चाध्ययनं यजनं याजनं तथा॥ दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्॥ प्रजानां

रक्षणं दानमिज्याध्ययनमेव च ॥ विषयेष्वप्रसक्तिं च क्षत्रियस्य समादिशत् ॥ पशूनां रक्षणं दानमिज्याध्ययनमेव च ॥ वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत ॥ एतेषामेव वर्णानां शुश्रूषामनसूयया' इति । तस्मात् शमादयो यत्राब्राह्मणे ब्राह्मणे वा दृश्यंते स एव ब्राह्मण इत्यत्र विवक्षितं। स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते परामित्यत्र तु मनूक्तान्यध्यापनादीन्येव स्वकर्माणि ग्राह्याणि न तु शमदमादीनि। नहि ज्ञानवतोऽन्या संसिद्धिर्लब्धव्याऽस्ति।तस्माच्छमदमादयो ब्रह्मिष्ठस्यैव ब्राह्मणस्य लक्षणमिति दिक्॥४१॥

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ॥**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥**

**शां० भा०**—कानि पुनस्तानि कर्माणीत्युच्यन्ते—शमो दमश्च यथाव्याख्यातार्थौ, तपो यथोक्तं शारीरादि, शौचं व्याख्यातं, क्षान्तिः क्षमा, आर्जवमृजुतैव च, ज्ञानं विज्ञानम्, आस्तिक्यमस्तिभावः श्रद्दधानताऽऽगमार्थेषु, ब्रह्मकर्म ब्राह्मणजातेः कर्म ब्रह्मकर्म स्वभावजम् । यदुक्तं स्वभावप्रभवैर्गुणैः प्रविभक्तानीति तदेवोक्तं स्वभावजमिति ॥ ४२ ॥

**शां० आ०**—प्रविभक्तानि कर्माण्येव प्रश्नद्वारा विविच्य दर्शयति—**कानीत्यादिना** । अन्तःकरणोपशमः शमो दमो बाह्यकरणोपरतिरित्युक्तं स्मारयति—**यथेति** । त्रिविधं तपः सप्तदशे दर्शितमित्याह —**तप इति** । शौचमपि बाह्यान्तरभेदेन प्रागेवोक्तमित्याह—**शौचमिति** । क्षमा नामाऽऽक्रुष्टस्य ताडितस्य वा मनसि विकाराराहित्यं, ज्ञानं शास्त्रीयपदार्थज्ञानं, विज्ञानं शास्त्रार्थस्य स्वानुभवायत्तत्वापादनम् । त्रिधा व्याख्यातं स्वभावशब्दार्थमुपेत्याऽऽह—**यदुक्तमिति** ॥ ४२ ॥

**आ० भा०**—॥ ४२ ॥

**आ० ज०**—॥ ४२ ॥

**रा० भा०**—शमो बाह्येन्द्रियनियमनम् । दमोऽन्तःकरणनियमनम् । तपो भोगनियमनरूपः शास्त्रसिद्धः कायक्लेशः । शौचं शास्त्रीयकर्मयोग्यता । क्षान्तिः परैः पीड्यमानस्यापि अविकृतचित्तता । आर्जवं परेषु मनोनुरूपं बाह्यचेष्टाप्रकाशनम् । ज्ञानं परावरतत्त्वयाथात्म्यज्ञानम् । विज्ञानं परतत्त्वगतासाधारणविशेषविषयं ज्ञानम् । आस्तिक्यं वैदिकार्थस्य कृत्स्नस्य सत्यतानिश्चयः । प्रकृष्टः केनापि हेतुना चालयितुमशक्य इत्यर्थः । भगवान्पुरुषोत्तमो वासुदेवः परब्रह्मशब्दाभिधेयो निरस्तनिखिलदोषगन्धः स्वाभाविकानवधिकातिशयज्ञानशक्त्याद्यसंख्येयकल्याणगुणगणो निखिलवेदवेदान्तवेद्यः स एव निखिलजगदेककारणं निखिलजगदाधारभूतो निखिलस्य स एव प्रवर्त्तयिता तदाराधनभूतं च कृत्स्नं वैदिकं कर्म तैस्तैराराधितो धर्मार्थकाममोक्षाख्यं फलं प्रयच्छति इत्यस्यार्थस्य सत्यतानिश्चयः । आस्तिक्यम् 'वेदैश्च सर्वैरहमेव वेद्यः । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । मयि सर्वमिदं प्रोतम् । भोक्तारं यज्ञतपसां ज्ञात्वा मां शान्तिमृच्छति। मत्तः परतरं नान्यत्किंचिदस्ति धनंजय । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । ' इति ह्युच्यते । तदेतत् ब्राह्मणस्य स्वभावजं कर्म ॥ ४२ ॥

**अ० टी०**—तत्र प्रथमं ब्राह्मणस्य स्वाभाविकानि कर्माण्याह—**शम इति** । शमःशान्तिः मत्परैकचित्तत्वं, दम इन्द्रियोपसंयमः, तपःशरीरक्लेशः, शौचं बाह्याभ्यन्तरभेदेन द्विविधं शान्तिः क्षमा, आर्जवं सरलता । एवकारेण कुटिलेष्वपि चेत्यर्थः। ज्ञानं शास्त्रीयं, विज्ञानम् अनुभवः, आस्तिक्यं प्रमाणोक्तफलोत्कर्षे अस्तीति निश्चयबुद्धिः एवमेतत्सर्वं ब्राह्मणस्य स्वभावजं स्वभावाजातं कर्म ॥ ४२ ॥

नी० टी०—ब्राह्मणकर्माण्याह—शम इति। अंतःकरणनिग्रहः शमः। बाह्येंद्रियनिग्रहो दमः। तपः पूर्वोक्तं शारीरादिभेदेन त्रिविधं। शौचं बाह्यं मृजलाभ्यामाभ्यंतरं भावशुद्धिः। क्षांतिः क्षमा। आर्जवमकौटिल्यं। ज्ञानं शास्त्रीयं कर्म ब्रह्मविषयं। विज्ञानं तदनुष्ठानानुभवात्मकं। आस्तिक्यं श्रद्धा एतन्नवकं ब्रह्मकर्म ब्राह्मणत्वजात्यभिव्यंजकं कर्म स्वभावजं प्राचीनधर्मसंस्कारजम् ॥ ४२ ॥

## शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥
## दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम् ॥ ४३ ॥

शां० भा०—शौर्यमिति। शौर्यं शूरस्य भावः। तेजः प्रागल्भ्यम्। धृतिर्धारणं सर्वावस्थास्व-
नवसादो भवति यया धृत्योत्तम्भितस्य। दाक्ष्यं दक्षस्य भावः सहसा प्रत्युत्पन्नेषु कार्येष्वव्यामोहेन
प्रवृत्तिः। युद्धे चाप्यपलायनमपराङ्मुखीभावः शत्रुभ्यः। दानं देयेषु मुक्तहस्तता। ईश्वरभावश्चे-
श्वरस्य भावः प्रभुशक्तिप्रकटीकरणमीशितव्यान्प्रति। क्षत्रकर्म क्षत्रियजातेर्विहितं कर्म क्षत्रकर्म
स्वभावजम् ॥ ४३ ॥

शां० आ०—शूरस्य भावो विक्रमो बलवत्तरानपि प्रहर्तुं प्रवृत्तिः, प्रागल्भ्यं परैरधर्षणीयत्वम्। महत्यामपि विपदि देहेन्द्रि-
योत्तम्भनी चित्तवृत्तिर्धृतिरिति व्याचष्टे—सर्वावस्थास्विति। दक्षस्य भावमेव विभजते—सहसेति। स्वभावस्तु
पूर्ववत् ॥ ४३ ॥

आ० भा०—॥ ४३ ॥

आ० ज०—॥ ४३ ॥

रा० भा०—शौर्यं युद्धे निर्भयप्रवेशसामर्थ्यम्। तेजः परैरनभिभवनीयता। धृतिरारब्धे कर्मणि
विघ्नोपनिपातेऽपि तत्समापनसामर्थ्यम्। दाक्ष्यं सर्वक्रियानिर्वृत्तिसामर्थ्यम्। युद्धे चाप्यपलायनं युद्धे
च आत्ममरणनिश्चयेऽप्यनिवर्तनम्। दानमात्मीयद्रव्यस्य परस्वत्वापादानपर्यन्तस्त्यागः। ईश्वरभावः
स्वव्यतिरिक्तसकलजननियमनसामर्थ्यम्। एतत् क्षत्रियस्य स्वभावजं कर्म ॥ ४३ ॥

अ० टी०—क्षत्रियस्याह—शौर्यमिति। शौर्यं पराक्रमः, तेजः प्रगल्भता, धृतिर्धैर्यं, दाक्ष्यं सर्वकर्मकौ-
शलं, युद्धेचापि अपलायनम् अपराङ्मुखता। अपिशब्देन सर्वत्राऽपलायनत्वं चकारेण द्यूतादपीति दानं दानशी-
लता, च पुनः ईश्वरभावः नियमनैकस्वभावत्वम् एतत् क्षात्रं कर्म क्षत्रियस्य स्वभावजं स्वस्वभावाजातं कर्म॥ ४३॥

नी० टी०—शौर्यं पराक्रमः तेजः प्रागल्भ्यं। धृतिर्धैर्यं। दाक्ष्यं युद्धे कौशलमुत्साहो वा। दानमौदार्यं।
ईश्वरभावः उन्मार्गवर्तिनां नियमनशक्तिः। एतत्क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

## कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ॥
## परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

शां० भा०—कृषीति। कृषिगौरक्ष्यवाणिज्यं कृषिश्च गौरक्ष्यं च वाणिज्यं च कृषिगौरक्ष्यवा-
णिज्यं कृषिर्भूमेर्विलेखनं गौरक्ष्यं गा रक्षतीति गोरक्षस्तद्भावो गौरक्ष्यं पाशुपाल्यं वाणिज्यं वणिक्कर्म
क्रयविक्रयादिलक्षणं वैश्यकर्म वैश्यजातेः कर्म वैश्यकर्म स्वभावजम्। परिचर्यात्मकं शुश्रूषास्वभावं
कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

शां० आ०—॥ ४४

**आ० भा०—॥ ४४ ॥**

आ० ज०—॥ ४४ ॥

**रा० भा०**—कृषिः सस्योत्पादनकर्षणम् । गौरक्ष्यं पशुपालनमित्यर्थः । वाणिज्यं धनसंचयहेतुभूतं क्रयविक्रयात्मकं कर्म । एतद्वैश्यस्य स्वभावजं कर्म । पूर्ववर्णत्रयपरिचर्यारूपं शूद्रस्य स्वभावजं कर्म । तदेतच्चतुर्णां वर्णानां वृत्तिभिः सह कर्तव्यानां शास्त्रविहितानां यज्ञादिकर्मणां प्रदर्शनार्थमुक्तम् । यज्ञादयोहि त्रयाणां वर्णानां साधारणा शमदमादयोऽपि त्रयाणां वर्णानां मुमुक्षूणां साधारणाः । ब्राह्मणस्य तु सत्वोद्रेकस्य स्वाभाविकत्वेन शमदमादयः सुखोपादाना इति कृत्वा तस्य शमदमादयः स्वभावजं कर्मेत्युक्तम् । क्षत्रियवैश्ययोस्तु स्वतो रजस्तमःप्रधानत्वेन शमदमादयो दुःखोपादाना इति कृत्वा न तत्कर्मेत्युक्तम् । ब्राह्मणस्य तु वृत्तिर्याजनाध्यापनप्रतिग्रहाः । क्षत्रियस्य जनपदपरिपालनम् । वैश्यस्य कृष्यादयो यथोक्ताः । शूद्रस्य तु कर्त्तव्यं वृत्तिश्च पूर्ववर्णत्रयपरिचर्यैव ॥ ४४ ॥

**अ० टी०**—वैश्यस्याह—**कृषीति** । कृषिः कर्षणं, गोरक्ष्यं पशुपालनं, वाणिज्यं क्रयविक्रयात्मकम् एतत् वैश्यस्य स्वभावाज्जातं कर्म । शूद्रस्याह—**परिचर्यात्मकमिति** । त्रैवर्णिकसेवनात्मकं शूद्रस्यापि स्वभावजं स्वभावाज्जातं कर्म यद्वा मत्परिचर्यात्मकं कर्म सर्वेषां पूर्वोक्तानां शूद्रस्यापीत्यर्थः ॥ ४४ ॥

**नी० टी०**—वैश्यशूद्रयोः कर्माण्याह—**कृषीति** । स्पष्टार्थः श्लोकः ॥ ४४ ॥

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

**शां० भा०**—एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतो वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्त इत्यादिस्मृतिभ्यः पुराणे च वर्णिनामाश्रमिणां च लोकफलभेदविशेषस्मरणात् । कारणान्तरात्त्विदं वक्ष्यमाणं फलम्—स्वे स्वे यथोक्तलक्षणभेदे कर्मण्यभिरतस्तत्परः संसिद्धिं स्वकर्मानुष्ठानादशुद्धिक्षये सति कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां लभते प्राप्नोति नरोऽधिकृतः पुरुषः । किं स्वकर्मानुष्ठानत एव साक्षात्संसिद्धिः । न, कथं तर्हि स्वकर्मनिरतः सिद्धिं यथा येन प्रकारेण विन्दति तच्छृणु ॥ ४५ ॥

**शां० आ०**—शमादिपरिचर्यान्तकर्मणां विभज्योक्तानामभ्युदयं फलमादावुपन्यस्यति—**एतेषामिति** । स्वभावतो विहितत्वादेव मोक्षापेक्षामन्तरेणानुष्ठानादित्यर्थः । तत्र प्रमाणमाह—**वर्णा इति** । शेषशब्देन भुक्तकर्मणोऽतिरिक्तं कर्मानुशयशब्दितमुच्यते, प्रत्येकं देशादिभिर्विशिष्टशब्दः संबध्यते, आदिशब्देन "तद्यथाऽऽम्रे फलार्थे निर्मिते छायागन्धावनूत्पद्यत एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते न धर्महानिर्भवति" इति स्मृतिर्गृह्यते । इतश्चोक्तानां कर्मणां स्वर्गफलत्वं युक्तमित्याह—**पुराणे चेति** । उक्तं हि—'यस्तु सम्यक्करोत्येवं गृहस्थः परमं विधिम् । तद्वर्णबन्धमुक्तोऽसौ लोकानाप्नोत्यनुत्तमान्' इति ॥ 'यस्त्वेतां नियतश्चर्यां वानप्रस्थश्चरेन्मुनिः । स दहत्यग्निवद्दोषाञ्जयेल्लोकांश्च शाश्वतान्' इति ॥ 'मोक्षाश्रमो यश्चरते यथोक्तं शुचिः सुसंकल्पितबुद्धियुक्तः । अनिन्धनज्योतिरिव प्रशान्तं स ब्रह्मलोकं श्रयते द्विजातिः' इति च "सर्व एते पुण्यलोका भवन्ति" इति श्रुतिश्चकारार्थः । यदि पुनर्मोक्षापेक्षयोक्तानि कर्माण्यनुष्ठीयेरंस्तदा मोक्षफलत्वं तेषां सेत्स्यतीत्याह—**कारणान्तरादिति** । तदेव कारणान्तरं यन्मोक्षापेक्षया तेषामनुष्ठानम् । मोक्षोपायेषु शमादिषु सात्त्विकेषु ब्राह्मणधर्मेषु क्षत्रियादीनामनधिकाराद्ब्राह्मणानामेव मोक्षो न क्षत्रियादीनामित्याशङ्क्याऽऽह—**स्वे स्व इति** । यथास्वे कर्मण्यभिरतस्य बुद्धिशुद्धिद्वारा ज्ञाननिष्ठायोग्यता तया प्राप्तज्ञानस्य मोक्षोपपत्तेर्ब्राह्मणातिरिक्तस्यापि ज्ञानवतो मुक्तिरिति मत्वा पूर्वार्धं

व्याचष्टे—**स्वे स्व इत्यादिना** । संसिद्धिशब्दस्य मोक्षार्थत्वं गृहीत्वा स्वधर्मनिष्ठत्वमात्रेण तल्लाभे तादर्थ्येन संन्यासादिविधानानर्थक्यमिति मन्वानः शङ्कते—**किमिति** । न तावन्मात्रेण साक्षान्मोक्षो ज्ञाननिष्ठायोग्यता वेति परिहरति—**नेति** । तर्हि कथं स्वधर्मनिष्ठस्य संसिद्धिरिति पृच्छति—**कथं तर्हीति** । उत्तरार्धेनोत्तरमाह—**स्वकर्मेति** । तच्छृणु तं प्रकारमेकाग्रचेता भूत्वा श्रुत्वाऽवधारयेत्यर्थः ॥ ४५ ॥

**आ० भा०—॥ ४५ ॥**

आ० ज०—॥ ४५ ॥

**रा० भा०—स्वे स्वे यथोदिते कर्मण्यभिरतो नरः संसिद्धिं परमपदप्राप्तिं लभते । स्वकर्मनिरतो यथा सिद्धिं विन्दति परमं पदं प्राप्नोति तथा शृणु ॥ ४५ ॥**

अ० टी०—यदर्थं कर्म निरूपितं तदाह—**स्वे स्वे इति** । स्वे स्वे स्वस्वविहिते कर्मणि अभिरतः प्रीतियुक्तो नरो मनुष्यः संसिद्धिं सम्यक् सिद्धिं मत्प्रसादात्मिकां लभते प्राप्नोति । ननु प्रीतिमात्रेण कथं सिद्धिरित्यत आह—**स्वकर्मेति सार्द्धेन** । स्वकर्मनिरतः स्वविहितकर्मनिष्ठो यथा येन प्रकारेण सिद्धिं विन्दति जानाति तं प्रकारं शृणु ॥ ४५ ॥

नी० टी०—कर्मप्रविभागफलमाह—**स्वे स्वे इति** । स्वे स्वे मन्वादिभिरुक्तेऽध्यापनादावसाधारणे शमदमादौ साधारणे च कर्मण्यभिरतो निष्ठावान् संसिद्धिं ज्ञानयोग्यतां लभते नरः । एतदेव विवरीतुं प्रतिजानीते—**स्वेति** । सिद्धिं वक्ष्यमाणां मुख्यसंन्यासलक्षणनैष्कर्म्यसिद्धिं यथा येन प्रकारेण ॥ ४५ ॥

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥**

**शां० भा०—यत इति । यतो यस्मात्प्रवृत्तिरुत्पत्तिश्चेष्टा वा यस्मादन्तर्यामिण ईश्वराद्भूतानां प्राणिनां स्याद्येनेश्वरेण सर्वमिदं जगत्ततं व्याप्तं स्वकर्मणा पूर्वोक्तेन प्रतिवर्णं तमीश्वरमभ्यर्च्य पूजयित्वाऽऽराध्य केवलं ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं विन्दति मानवो मनुष्यः ॥ ४६ ॥**

शां० आ०—तमेव प्रकारं स्फुटयति—**यत इति** । यतःशब्दार्थं यस्मादित्युक्तं व्यक्ती करोति—**यस्मादिति** । प्राणिनामुत्पत्तिर्यस्मादीश्वरात्तेषां चेष्टा च यस्मादन्तर्यामिणो येन च सर्वं व्याप्तं मृदेव घटादि कार्यस्य कारणातिरिक्तस्वरूपाभावात्तं स्वकर्मणाऽभ्यर्च्य मानवः संसिद्धिं विन्दतीति संबन्धः । न हि ब्राह्मणादीनां यथोक्तधर्मनिष्ठया साक्षान्मोक्षो लभ्यते तस्य ज्ञानैकलभ्यत्वात्किंतु तन्निष्ठानां शुद्धबुद्धीनां कर्मसु फलमपश्यतामीश्वरप्रसादासादितविवेकवैराग्यवतां संन्यासिनां ज्ञाननिष्ठायोग्यतावतां ज्ञानप्राप्त्या मुक्तिरित्यभिप्रेत्याऽऽह—**केवलमिति** ॥ ४६ ॥

**आ० भा०—॥ ४६ ॥**

आ० ज०—॥ ४६ ॥

**रा० भा०—यतो भूतानामुत्पत्त्यादिका प्रवृत्तिः येन च सर्वमिदं ततं स्वकर्मणा तं मामिन्द्राद्यन्तरात्मतयावस्थितमभ्यर्च्य मत्प्रसादान्मत्प्राप्तिरूपां सिद्धिं विन्दति मानवः । मत्त एव सर्वमुत्पद्यते मया च सर्वमिदं ततमिति पूर्वमेवोक्तम् । 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥ मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥ अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।' इत्यादिषु ॥ ४६ ॥**

अ० टी०—तं प्रकारमेवाह—**यत इति** । यतो भगवतः भूतानां प्राणिनां प्रवृत्तिः उत्पत्तिर्भवति । सर्वकर्मसु वा यतः प्रवृत्तिः प्रकर्षेण वर्तनमनुसरणं भवति । येन कारणरूपेण इदं सर्वं विश्वं ततं व्याप्तं तं भगवन्तं स्वकर्मणा आत्मकर्मणा भक्त्या अभ्यर्च्य संपूज्य मानवः मनोर्जातो मनुष्यः सद्धर्मरूपः सिद्धिं विन्दति लभत इत्यर्थः ॥ ४६ ॥

नी० टी०—तमेव प्रकारमाह—यत इति । प्रवृत्तिः कायवाङ्मनोनिर्वर्त्या चेष्टा यतो हेतोरंतर्यामिणः।"येन वागभ्युद्यत" इत्यादिश्रुतेः येन इदं सर्वं दृश्यं ततं व्याप्तमुपादानत्वात् स्वकर्मणा तमभ्यर्च्य संतर्प्य सिद्धिं मोक्षं विंदति लभते मानवः । मनुष्याधिकारिकत्वाच्छास्त्रस्य परमेश्वरे नित्यकर्मणामर्पणमेव मोक्षद्वारमित्यर्थः ॥ ४६ ॥

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥**
**स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम् ॥ ४७ ॥**

**शां० भा०**—यत एवमतः—श्रेयान्प्रशस्यतरः स्वो धर्मः स्वधर्मो विगुणोऽपीत्यपिशब्दो द्रष्टव्यः, परधर्मात्स्वनुष्ठितात्स्वभावनियतं स्वभावेन नियतं, यदुक्तं स्वभावजमिति तदेवोक्तं स्वभावनियतमिति, यथा विषजातस्येव कृमेर्विषं न दोषकरं तथा स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्बिषं पापम् ॥ ४७ ॥

शां० आ०—स्वधर्मानुष्ठानस्य बुद्धिशुद्ध्यादिद्वारा मोक्षावसायित्वात्तदनुष्ठानमावश्यकमित्याह—**यत इति** । ननु युद्धादिलक्षणं स्वधर्मं कुर्वन्नपि हिंसाधीनं पापं प्राप्नोति तत्कथं स्वधर्मः श्रेयानिति तत्राऽऽह—**स्वभावेति** । स्वकीयं वर्णाश्रमं निमित्तीकृत्य विहितं स्वभावजमित्यधस्तादुक्तमित्याह—**यदुक्तमिति** । विग्रहात्मकमपि विहितं कर्म कुर्वन्पापं नाऽऽप्नोतीत्यत्र दृष्टान्तमाह—**तथेति** ॥ ४७ ॥

**आ० भा०—॥ ४७ ॥**

आ० ज०—॥ ४७ ॥

**रा० भा०—एवं त्यक्तकर्तृत्वादिको मदाराधनरूपः स्वधर्मः स्वेनैवोपादातुं योग्यो धर्मः । प्रकृतिसंसृष्टेन हि पुरुषेणेन्द्रियव्यापाररूपः कर्मयोगात्मको धर्मः सुकरो भवति । अतः कर्मयोगाख्यः स्वधर्मो विगुणोऽपि परधर्मादिन्द्रियजयनिपुणपुरुषधर्मात् ज्ञानयोगात्सकलेन्द्रियनियमनरूपतया सप्रमादात् कदाचित्स्वनुष्ठिताच्छ्रेयान् । तदेवोपपादयति—प्रकृतिसंसृष्टस्य पुरुषस्येन्द्रियव्यापाररूपतया स्वभावत एव नियतत्वात् कर्मणः कर्म कुर्वन् किल्बिषं संसारं नाप्नोति अप्रमादत्वात् कर्मणः ज्ञानयोगस्य सकलेन्द्रियनियमनसाध्यतया सप्रमादत्वात् तन्निष्ठस्तु प्रमादात् । किल्बिष प्रतिपद्येतापि ॥ ४७ ॥**

अ० टी०—स्वकर्मार्चने विशेषमाह—**श्रेयानिति** । स्वनुष्ठितात् सुष्ठु अनुष्ठितात् परधर्मात् कर्ममार्गीयात् विगुणोऽपि स्वधर्मः श्रेयान् श्रेष्ठ इत्यर्थः । ननु विगुणत्वात् कथं श्रेष्ठत्वमित्यत आह । स्वभावनियतं भगवद्भावनियमोक्तं कर्म कुर्वन् वैगुण्यजमन्यत्यागजं च किल्बिषं न आप्नोति ॥ ४७ ॥

नी० टी०—स्वकर्मणेति विशेषणस्य फलमाह-**श्रेयानिति** । स्वधर्मो विगुणः किंचिदंगहीनोऽपि श्रेयान् प्रशस्यतरः किमपेक्ष्य श्रेयान् परधर्मात्स्वनुष्ठितात् सम्यग्विहितादपि उक्तं च । 'स्वधर्मे निधनं श्रेयः परधर्मो भयावह' इति । स्वभावनियतं पूर्वोक्तत्रिविधस्वभावाजातं कर्म कुर्वन् किल्बिषं दोषं नाप्नोति विषकृमेर्विषमिव न दोषकरं। तस्मात्तव भैक्ष्यं हिंसाशून्यमपि न युक्तं किंतु हिंसायुक्तोऽपि स्वधर्म एव प्रशस्यतरः।धर्मत्वेन विहितेऽस्मिन्नग्नीषोमीयपश्वालंभे इव कृतेसति न किल्बिषप्रसंगोऽस्तीत्यर्थः ॥ ४७ ॥

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ॥**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः ॥ ४८ ॥**

**शां० भा०**—स्वभावनियतं कर्म कुर्वाणो विषजात इव कृमिः किल्बिषं नाऽऽप्नोतीत्युक्तम्। परधर्मश्च भयावह इति। अनात्मज्ञश्च न हि कश्चित्क्षणमप्यकर्मकृत्तिष्ठतीति, अतः—सहजं सह जन्मनैवोत्पन्नं सहजं किं तत्कर्म कौन्तेय सदोषमपि त्रिगुणत्वान्न त्यजेत्सर्वारम्भा आरभ्यन्त इत्यारम्भाः सर्वकर्माणीत्येतत्प्रकरणात्। ये केचिदारम्भाः स्वधर्माः परधर्माश्च ते सर्वे हि यस्मात्त्रिगुणात्मकत्वमत्र हेतुस्त्रिगुणात्मकत्वाद्दोषेण धूमेन सहजेनाग्निरिवाऽऽवृताः। सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषान्नैव मुच्यते, भयावहश्च परधर्मः। न च शक्यतेऽशेषतस्त्यक्तुमज्ञेन कर्म त्यजेदित्यर्थः। किमशेषतस्त्यक्तुमशक्यं कर्मेति न त्यजेत्किं वा सहजस्य कर्मणस्त्यागे दोषो भवतीति।

**शां० आ०**—इतश्च विहितं कर्म दोषवदपि कर्तव्यं प्रकारान्तरासंभवादित्युक्तानुवादपूर्वकं कथयति—**स्वभावेत्यादिना**। न हि कृमिर्विषजो विषनिमित्तं मरणं प्रतिपद्यते तथाऽयमधिकृतः पुरुषो दोषवदपि विहितं कर्म कुर्वन्पापं नाऽऽप्नोतीत्युक्तमित्यर्थः। तर्हि दोषरहितमेव भिक्षाटनादि सर्वैरनुष्ठीयतामतो न पापप्राप्त्याशङ्केत्याशङ्क्याऽऽह—**परेति**। उक्तमित्यनुवर्तते। तर्हि पापप्राप्तिशङ्कां परिहर्तुमकर्मनिष्ठत्वमेव सर्वेषां स्यादित्याशङ्क्य ज्ञानाभावान्नैवमित्याह—**अनात्मज्ञ इति**। पूर्ववदत्रापि संबन्धः। प्रकारान्तरासंभवकृतं फलमाह—**अत इति**। सह जायत इति सहजं स्वभावनियतं नित्यं कर्म तद्विहितत्वान्निर्दोषमपि हिंसात्मकतया सदोषमित्यत्र हेतुमाह—**त्रिगुणेति**। सत्त्वादिगुणत्रयारब्धतया हिंसादिदोषवदपि कर्म विहितमत्याज्यमित्यर्थः। कर्मणां दोषवत्त्वं प्रपञ्चयति—**सर्वेति**। आरम्भशब्दस्य कर्मव्युत्पत्त्या स्वपरसर्वकर्मार्थत्वे कर्मणां प्रकृतत्वं हेतुमाह—**प्रकरणादिति**। दोषेणेत्यादि व्याचष्टे—**ये केचिदिति**। ते सर्वे दोषेणाऽऽवृता इति संबन्धः। सर्वकर्मणां दोषावृतत्वे हिशब्दोपात्तं यस्मादित्युक्तं हेतुमेवाभिनयति—**त्रिगुणात्मकत्वमिति**। स्वभावनियतस्य कर्मणो दोषवत्त्वात्तत्त्यागद्वारा परधर्ममातिष्ठमानस्यापि नैव दोषाद्विमोकः संभवति। न च परधर्मोऽनुष्ठातुं शक्यते भयावहत्वान्न च तर्हि कर्मणोऽशेषतोऽननुष्ठानमेवाज्ञस्याशेषकर्मत्यागायोगादतः सहजं कर्म सदोषमपि न त्याज्यमिति वाक्यार्थमाह—**सहजस्येति**। सहजं कर्म सदोषमपि न त्यजेदित्यत्र विचारमवतारयति—**किमिति**। न हि कश्चिदिति न्यायादिति शेषः। दोषो विहितनित्यत्यागे प्रत्यवायः।

**शां० भा०**—किंचातो यदि तावदशेषतस्त्यक्तुमशक्यमिति न त्याज्यं सहजं कर्मैवं तर्ह्यशेषतस्त्यागे गुण एव स्यादिति सिद्धं भवति। सत्यमेवमशेषतस्त्याग एव नोपपद्यत इति चेत्, किं नित्यप्रचलितात्मकः पुरुषो यथा सांख्यानां गुणाः किंवा क्रियैव कारकं यथा बौद्धानां पञ्च स्कन्धाः क्षणप्रध्वंसिनः, उभयथाऽपि कर्मणोऽशेषतस्त्यागो न भवति। अथ तृतीयोऽपि पक्षो यदा करोति तदा सक्रियं वस्तु यदा न करोति तदा निष्क्रियं वस्तु तदेव। तत्रैवं सति शक्यं कर्माशेषतस्त्यक्तुम्। अयं त्वस्मिंस्तृतीये पक्षे विशेषो न नित्यप्रचलितं वस्तु नापि क्रियैव कारकं किं तर्हि व्यवस्थिते द्रव्येऽविद्यमाना क्रियोत्पद्यते विद्यमाना च विनश्यति।

**शां० आ०**—संदिग्धस्य प्रयोजनस्य विचार्यत्वादुक्ते संदेहे प्रयोजनं पृच्छति—**किंचात इति**। तत्राऽऽद्यमनूद्य फलं दर्शयति—**यदीति**। अशक्यार्थानुष्ठानस्य गुणत्वेन प्रसिद्धत्वात्प्रसिद्धं हि महोदधिमगस्त्यस्य चुलुकीकृत्य पिबतो गुणवत्त्वं तदाह—**एवं तर्हीति**। अशेषकर्मत्यागस्य गुणवत्त्वेऽपि प्रागुक्तन्यायेन तदयोगात्तस्याशक्यानुष्ठानतेति शङ्कते—**सत्यमिति**। चोद्यमेव वितृण्वन्नाद्यं विभजते—**किमिति**। सत्त्वादिगुणवदात्मनो नित्यप्रचलितत्वेनाशेषतस्तेन न कर्म त्यक्तुं शक्यं नापि रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञानां क्षणध्वंसिनां स्कन्धानामिव क्रियाकारकभेदाभावात्कारकस्यैवाऽऽत्मनः क्रियात्वमित्युक्ते कर्माशेषतस्त्यक्तुं शक्यमुभयत्रापि स्वभावभङ्गादित्याह—**उभयथेति**। पक्षद्वयानुरोधेनाशेषकर्मत्यागायोगे वैशेषिकश्चोदयति—**अथेति**। कदाचिदात्मा सक्रियो निष्क्रियश्च कदाचिदिति स्थिते फलितमाह—**तत्रेति**। उक्तमेव पक्षं पूर्वोक्तपक्षद्वयाद्विशेषदर्शनेन विशदयति—**अयं त्विति**।

**शां० भा०**—शुद्धं द्रव्यं शक्तिमदवतिष्ठत इत्येवमाहुः काणादास्तदेव च कारकमित्यस्मिन्पक्षे को दोष इति, अयमेव तु दोषो यतस्त्वभागवतं मतमिदम्। कथं ज्ञायते, यत आह भगवान्नासतो विद्यते भाव

इत्यादि । काणादानां ह्यसतो भावः सतश्चाभाव इतीदं मतम् । अभागवतत्वेऽपि न्यायवच्चेत्को दोष इति चेत् । उच्यते, दोषवत्त्विदं सर्वप्रमाणविरोधात् । कथं, यदि तावद्द्व्यणुकादि द्रव्यं प्रागुत्पत्ते-रत्यन्तमेवासदुत्पन्नं च स्थितं कंचित्कालं पुनरत्यन्तमेवासत्त्वमापद्यते । तथा च सत्यसदेव सज्जायतेऽभावो भावो भवति भावश्चाभाव इति ।

**शां० आ०**—आगमापायित्वे क्रियायास्तद्वतो द्रव्यस्य कथं स्थायितेत्याशङ्क्याऽऽह—**शुद्धमिति** । क्रियाशक्तिमत्त्वेऽपि क्रियावत्त्वाभावे कथं कारकत्वं क्रियां कुर्वत्कारणं कारकमित्यभ्युपगमादित्याशङ्क्याऽऽह—**तदेवेति** । क्रियाशक्तिमदेव कारकं न क्रियाधिकरणं परस्पराश्रयादित्यर्थः । वैशेषिकपक्षे दोषाभावादस्ति सर्वैः स्वीकार्यतेत्युपसंहरति—**इत्यस्मिन्निति** । भगवन्मतानुसारित्वाभावादस्य पक्षस्य त्याज्यतेति दूषयति—**अयमेवेति** । भगवन्मताननुसारित्वमस्याप्रामाणिकमिति शङ्कते—**कथमिति** । भगवद्वचनमुदाहरन्परपक्षस्य तदनुगुणत्वाभावमाह—**यत इति** । परेषामपि मतमेतदनुगुणमेव किं न स्यादित्याशङ्क्याऽऽह—**काणादानां हीति** । भगवन्मतानुगुणत्वाभावेऽपि न्यायानुगुणत्वेन दोषरहितं काणादानां मतमुपादेयमेव तर्हि काणादमतविरोधादुपेक्ष्यते भगवन्मतमिति शङ्कते—**अभागवतत्वेऽपीति** । न्यायवत्त्वमसिद्धमिति दूषयति—**उच्यत इति** । सर्वप्रमाणानुसारिणो मतस्य न तद्विराधितेत्याक्षिपति—**कथमिति** । वैशेषिकमतस्य सर्वप्रमाणविरोधं प्रकटयन्नादौ तन्मतमनुवदति—**यदीति** । असतो जन्म सतश्च नाश इति स्थिते फलितमाह—**तथा चेति** । उक्तमेव वाक्यं व्याकरोति—**अभाव इति** । सदेवासत्त्वमापद्यत इत्युक्तं व्याचष्टे—**भावश्चेति** । इति मतमिति शेषः ।

**शां० भा०**—तत्राभावो जायमानः प्रागुत्पत्तेः शशविषाणकल्पः समवाय्यसमवायिनिमित्ताख्यं कारणमपेक्ष्य जायत इति । न चैवमभाव उत्पद्यते कारणं वाऽपेक्षत इति शक्यं वक्तुमसतां शशविषाणादीनामदर्शनात् । भावात्मकाश्चेद्घटादय उत्पद्यमानाः किंचिदभिव्यक्तिमात्रकारणमपेक्ष्योत्पद्यन्त इति शक्यं प्रतिपत्तुम् । किंचासतश्च सद्भावे सतश्चासद्भावे न क्वचित्प्रमाणप्रमेयव्यवहारे विश्वासः कस्यचित्स्यात् । सत्सदेवासदसदेवेतिनिश्चयानुपपत्तेः ।

**शां० आ०**—तत्रैवाभ्युपगमान्तरमाह—**तत्रेति** । प्रकृतं मतं सप्तम्यर्थः । इत्यभ्युपगम्यत इति शेषः । परकीयमभ्युपगमं दूषयति—**न चेति** । एवमिति परपरिभाषानुसारेणेत्यर्थः । अदर्शनादुत्पत्तेरपेक्षायाश्चेति शेषः । कथं तर्हि त्वन्मतेऽपि घटादीनां कारणापेक्षाणामुत्पत्तिर्न हि भावानां कारणापेक्षोत्पत्तिर्वा युक्तेति तत्राऽऽह—**भावेति** । घटादीनामस्मत्पक्षे प्रागपि कारणात्मना सतामेवाव्यक्तनामरूपाणामभिव्यक्तिसामग्रीमपेक्ष्य पृथगभिव्यक्तिसंभवान्न किंचिदवद्यमित्यर्थः । असत्कार्यवादे दोषान्तरमाह—**किंचेति** । परमते मानमेयव्यवहारे क्वचिदपि विश्वासो न कस्यचिदित्यत्र हेतुमाह—**सत्सदेवेति** । न हि सत्तथैवेति निश्चितं तस्यैव पुनरसत्त्वप्राप्तेरिष्टत्वान्न चासत्तथैवेति निश्चयस्तस्यैव सत्वप्राप्तेरुपगमादतो यन्मानेन सदसद्वा निर्णीतं तत्तथेतिविश्वासाभावान्मानवैफल्यमित्यर्थः ।

**शां० भा०**—किंचोत्पद्यत इति द्व्यणुकादेर्द्रव्यस्य स्वकारणसत्तासंबन्धमाहुः । प्रागुत्पत्तेश्चासत्पश्चात्स्वकारणव्यापारमपेक्ष्य स्वकारणैः परमाणुभिः सत्तया च समवायलक्षणेन संबन्धेन संबध्यते संबद्धं सत्कारणसमवेतं सद्भवति । तत्र वक्तव्यं कथमसतः सत्कारणं भवेत्संबन्धो वा केनचित् । नहि वन्ध्यापुत्रस्य सता संबन्धो वा कारणं वा केनचित्प्रमाणतः कल्पयितुं शक्यम् । ननु नैव वैशेषिकैरभावस्य संबन्धः कल्प्यते द्व्यणुकादीनां हि द्रव्याणां स्वकारणेन समवायलक्षणः संबन्धः सतामेवोच्यत इति । न संबन्धात्प्राक्सत्त्वानभ्युपगमात् । नहि वैशेषिकैः कुलालदण्डचक्रादिव्यापारात्प्राग्घटादीनामस्तित्वमिष्यते ।

**शां० आ०**—इतश्चासत्कार्यवादो न युक्तिमानित्याह—**किंचेति** । तदेव हेत्वन्तरं स्फोरयितुं परमतमनुवदति—**उत्पद्यत इतीति** । परकीयं वचनमेव व्याचष्टे—**प्रागिति** । संबद्धं सदित्यनेन कारणसंबन्धे सति कार्यस्य सत्तासंबन्धो भवतीत्युक्तं तदेव स्फुटयति—**कारणेति** । परमतमेवमनुभाष्य दूषयति—**तत्रेति** । कार्यस्यासतोऽपि कारणं संभवति तस्य च कार्येण

